## * नारदः

व्यवहारस्वरूपम्—

व्यवहारोत्पत्तिस्तत्प्रयोजनं च ३,४. सोत्तरानुत्तरव्यवहारौ ११. व्यवहारसंबन्धिविविधविभागाः; निर्णयपादाः; सामाद्युपायाः; वर्णाश्रमहितकारी व्यवहारः १२. व्यवहारसंबन्धिजनाः; व्यवहारफलानि; अष्टाङ्गानि व्यवहारस्य १३. व्यवहारपदानि; अष्टादशपदावान्तरभेदाः १४,१५. व्यवहारयोनित्रयम्; अभियोगौ द्विधा; व्यवहारपक्षद्वयम् १६.

सभा—

कुलश्रेणिगणाधिकृतनृपाणां व्यवहारनिर्णयेऽधिकारतारतम्यम् ४२. प्राड्विवाकलक्षणं, प्राड्विवाकपदनिरुक्तिश्च; राज्ञा कीदृशाः सभ्या नियोज्याः ४३. व्यवहारनिर्णये कति सभ्या नियोज्याः; नियुक्तेनानियुक्तेनापि वा सभ्येन शास्त्रोक्तमेव वक्तव्यम् ४४. अयुक्तोक्तौ द्वेषदोषभाग् भवति सभ्यः; सभ्यैः सहैव व्यवहारो निर्णेयो राज्ञा; व्यवहारशुद्धौ सभ्यशुद्धिः ४५,४६. अधर्म्यनिर्णये दोषभागिनः; धर्म्यनिर्णये फलम् ४६. अयथार्थवादिसभ्यनिन्दा; अपक्षपाती एव निर्णयः कार्यः; रागाज्ञानलोभैर्दुष्टे व्यवहारनिर्णये सभ्यदण्डः ४७. प्राड्विवाकेन विवादशल्यमुद्धरणीयम्; सभ्यानां मतभेदाभेदकृतौ सशल्यवादनिःशल्यवादौ; सत्सभालक्षणम् ४८.

दर्शनविधिः—

धर्म्यनिर्णयफलम् ८८. राज्ञो यमव्रतम्—समभावः; अप्रमादेन व्यवहारो द्रष्टव्यः; धर्मशास्त्रानुसारेण प्राड्विवाकसंमत्या कार्यं द्रष्टव्यम्; दर्शनस्य चत्वारो भागाः ८९. धर्मशास्त्रार्थशास्त्रे अविरुद्धे प्रमाणम्; शास्त्रविरुद्धं भूताहितं च निवर्तनीयम्; अन्यराजकृतमन्याय्यं निवर्तनीयम्; अर्थशास्त्रधर्मशास्त्रद्वैधे व्यवस्था ९०. धर्मशास्त्रलोकव्यवहारद्वैधे व्यवस्था; धर्मव्यवहारचरित्रराजशासनानि व्यवहारप्रमाणानि, तेषां तारतम्यं च ९१,९२. कार्यदर्शने प्रत्यक्षं सहकारि; कार्यदर्शने तर्क उपायः ९३,९४. भूतानुसारी छलानुसारी च व्यवहारः; छलं निरस्य भूतमनुसरणीयम् ९४,९५. साक्षिलेख्यविवेकः ९६. कार्यदर्शनफलम् ९७.

दर्शनोपक्रमः—

राज्ञा व्यवहारः स्वयं नोत्पाद्यः; राज्ञा न स्वयमुत्पाद्यो व्यवहार इत्यस्यापवादः; वादिनोर्मध्ये भाषावादी कः ११३. अनादेयवादः ११४. अनादेयवादापवादः; अनादेयवादः ११५. नियुक्तप्रतिनिधिजयपराजयौ नियोजकस्यैव; अनियुक्तपरार्थवादी दण्ड्यः; वादे विभक्ता एव प्रतिभूत्वमर्हन्ति; आसेधविधिः ११६. चतुर्विध आसेधः; आसेद्धव्यानि द्रव्याणि ११७. आसेधमोक्षः; मिथ्यासेधदोषः; आसेधातिक्रमे दोषापवादः; आसेधातिक्रमदोषः; आसेद्धृदण्डः ११८. आह्वानासेधानर्हाः ११९. आह्वाननिषेधप्रतिप्रसवः; कार्योत्तरमासेधनिषेधः १२०.

प्रतिज्ञा—

प्रतिज्ञाप्रशंसा १३९. प्रतिज्ञालेखविधिः; वाद्युक्तं फलकादिषु प्रथमं लेखनीयम्; फलकलिखितं वाद्यनुज्ञातं चाधिकं पुनः लिखेत् १४०. भाषालेखनावधिः; भाषाशोधनावधिः १४१,१४२. प्रतिज्ञादोषाः १४२-१४४.

उत्तरम्—

उत्तरदानकालः उत्तरस्वरूपं च; उत्तरदाने कालावधिविचारः; प्रतिज्ञा तु सद्य एव लेख्या १६१, १६२. सदुत्तरस्वरूपम् १६२. चतुर्विधमुत्तरम् १६३, १६४. चतुर्विधं मिथ्योत्तरम्; प्रत्यवस्कन्दनलक्षणम् १६४.

वादहानिः—

विविधानि वादहानिकारणानि २०१-२०३. अर्थविवादेषु वादहानिकारणापवादः २०३. वादहानिकारणानि २०४.

क्रिया—

प्रमाणोपन्याससमयः; निर्णयसाधनानि २१७. प्रमाणबलाबलविचारः; मानुषदैविकभेदौ; दैवमानुषप्रमाणयोर्विषयभेदेन व्यवस्था २१८, २१९. वादिनोर्मध्ये कतरस्य प्रमाणोपन्यासः २१९-२२१. सत्पक्षोऽपि

* दिव्यप्रकरणे श्लोकभिन्नत्वात् 'नारदः' 'नारदीयमनुसंहिता' इति पृथङ् निर्दिश्य वचनसंग्रहः कृतः। अत्र तु विषयाणामभिन्नत्वात् न पृथङ् निर्देशः।

प्रमाणोपन्यासेन विना न सिध्यति २२१. लेख्यसाक्षिणोरभावे प्रमाणम्; प्रमाणोपन्यासावधिः २२२,२२३.

साक्षी—

विवादे साक्षिभ्यो निर्णयः; साक्षिनिरुक्तिः २९६. एकादशप्रकाराः साक्षिणो भवन्ति; पञ्च कृतसाक्षिणः; षड् अकृतसाक्षिणः २९७. कीदृशाः कियन्तश्च साक्षिणो भवन्ति २९८. वर्णादिभेदेन साक्षिभेदः; उत्तरसाक्षिणः कदा प्रमाणम्; लिखितसाक्षिणो विशेषः २९९. साक्षिविशेषाणां भद्रत्वकालमर्यादा ३००. पञ्चविधा असाक्षिणः ३०१. वचनादसाक्षिणः ३०२. दोषादसाक्षिणः; भेदादसाक्षिणः; स्वयमुक्तेरसाक्षी ३०३. मृतान्तरोऽसाक्षी ३०४,३०५. मुमूर्षुश्रावितस्य साक्षित्वम् ३०५. कीदृशाः साक्षित्वं नार्हन्ति ३०६-३१०. विषयविशेषे उक्तासाक्षित्वप्रतिप्रसवः; उक्तविषयविशेषे बालादीनां तु नैव साक्षित्वम् ३११,३१२. उभयानुमत एकोऽपि साक्षित्वमर्हति; कौटसाक्ष्यलिङ्गानि ३१२,३१३. पूर्वं साक्षित्वमभ्युपगम्य पुनर्निह्नवे दोषः ३१३. साक्षिणो भेदे वादहानिः; साक्षिप्रश्नविधिः ३१४,३१५. अनृतोक्तिफलम् ३१५,३१६. विषयविशेषेणानृतोक्तिदोषतारतम्यम् ३१६. सत्योक्तिप्रशंसाऽनृतोक्तिनिन्दा च ३१७-३२०. साक्षिसाक्ष्यशोधनक्रमः; साक्षिद्वैधे बहुत्वगुणाधिक्यादि निर्णायकम्; विरुद्धसाक्षिसाम्ये साक्ष्यमप्रमाणम् ३२०. साक्षिरहितो वादी पराजीयते; साक्ष्यस्य परीक्षा ३२१-३२३.

लेख्यम्—

लेख्यप्रकाराः तल्लक्षणानि च ३५६,३५७. प्रमाणमप्रमाणं च लेख्यम् ३५७-३५९. लेख्यपरीक्षा ३५९-३६२.

भुक्तिः—

साक्षिलेख्यभुक्तीनां प्रामाण्यस्वरूपं प्राबल्यदौर्बल्यविचारश्च ४०१. भुक्तेर्लेख्यसाक्ष्यनुग्राहकत्वम्; भुक्तिविशेषः स्वत्वहेतुः ४०३,४०४. आध्यादिभोगः न स्वत्वहेतुः ४०४,४०५. भोगागमयोः सहकार्यप्राबल्यदौर्बल्यविचारः ४०६,४०७-४१०. पञ्चाङ्गभोगः स्वत्वप्रमाणम् ४०६. षड्विध आगमः ४०७.

युक्तिः—

युक्तिः ४२५-४२७.

दिव्यम्—

शपथः ४४०,४४१. दिव्यशपथयोर्विषयाः ४४९, ४५०. दिव्यप्रकाराः; दिव्यविशेषाणां देशकालजात्याद्यधिकारिविशेषनियमाः ४५०-४५३. दिव्यकर्तारः शीर्षकवर्तनं च ४५३,४५४. दिव्याध्यक्षः. दिव्यविषयः पञ्चदिव्यप्रकाराश्च ४५४. घटविधिः ४७३-४७९. अग्निविधिः ४८९-४९४. जलविधिः ५०१,५०२. विषविधिः ५०७-५०९. कोशविधिः ५१३-५१५. तण्डुलविधिः ५१८. तप्तमाषविधिः ५२०. संकीर्णदिव्यविधिः ५२५.

मानसंज्ञाः—

मानसंज्ञाः ५३२.

निर्णयकृत्यम्—

एकदेशविभावितन्यायः; सोत्तरपराजितदण्डादि ५४२. जयपत्रदानम्; छलपराजयविषयः; त्रिविधपराजयनिर्णयक्रमः ५४३. व्यवहारमातृकाप्रशंसा ५४४.

पुनर्न्यायः—

न्याय्यनिर्णयेऽपि पुनर्न्यायवादिनः पणः; कुनिर्णयिनां दण्डः ५४८. पुनर्न्यायार्हो व्यवहारः ५४९.

कृतनिवर्तनम्—

निवर्तनीयो व्यवहारः ५५८,५५९. उक्तनिवर्तनापवादः; निवर्तनीया व्यवहाराः ५५९,५६०. स्वतन्त्रास्वतन्त्रविचारः ५६१,५६२.

दण्डमातृका—

दण्डप्रयोजनम्; धर्म्यदण्डः राज्ञा कर्तव्यः ५८६, ५८७. राजशासनप्रामाण्यम् ५८७. कार्यविशेषेण देवताविशेषरूपत्वं राज्ञः; ब्रह्मक्षत्रसहकार्यम्; दण्डसंज्ञाः ५८८,५८९. दश दण्डस्थानानि; अपराधाद्यनुसारेण दण्डतारतम्यम् ५८९-५९०. ब्राह्मणस्य वधभिन्नो दण्डः; कारुशिल्पिप्रभृतीनां वृत्तिसाधनानि न हरणीयानि ५९०. ब्राह्मणस्य विशेषार्हतास्थानानि ५९१.

## परिशिष्टानि

व्यवहारस्वरूपम्—

व्यवहारशास्त्रोत्पत्तिः प.१५.

## बृहस्पतिः

व्यवहारस्वरूपम्—

व्यवहारोत्पत्तिः ४. व्यवहारपादाः; व्यवहारपदानि १७.

सभा—

सभासंनिवेशः; राज्ञः सभाप्रवेशविधिः; राजसभ्यादीनां सभाङ्गानां स्थाननिर्देशः; प्रतिष्ठिताप्रतिष्ठितमुद्रितशासिताश्चतस्रः सभाः ४९. सभाया दशाङ्गानि; दशाङ्गानां कार्याणि ५०. राज्ञः ब्राह्मणस्य च प्राड्विवाकस्य व्यवहारनिर्णये कार्याणि; राजप्राड्विवाकपदयोर्निरुक्तिः ५१. त्रैवर्णिकानामेव प्राड्विवाकत्वेऽधिकारः; ब्राह्मणब्रुवपदार्थः; सभ्यसंख्या; यज्ञसदृशी सभा ५२,५३. कीदृशाः सभ्या राज्ञा नियोज्याः; नियुक्तेनानियुक्तेनापि वा सभ्येन धर्म्य एव निर्णयो वक्तव्यः; धर्म्यनिर्णयप्रशंसा; अधर्म्यनिर्णयदोषः; अन्यायवादिविश्वासघातकोत्कोचजीविसभ्यदण्डः ५३. व्यवहारनिर्णयेऽनधिकारिणः; कुलश्रेणिगणादीनां साहसभिन्नपदेषु निर्णयाधिकारः;अरण्यचरसैनिकवणिजां न्यायस्थानम्; कुलश्रेणिगणनियुक्ताध्यक्षराज्ञामुत्तरोत्तरं प्रामाण्ये बलवत्वम् ५४. तपस्विमायायोगविदां कार्यनिर्णायकाः; गणकलेखकौ सभायां नियोज्यौ; आह्वानार्थे पुरुषो नियोज्यः ५५.

दर्शनविधिः—

पुराणधर्मशास्त्राण्यालोच्यानि; दर्शनविधिः ९७. समत्वबुद्ध्या दर्शनं कार्यम्; धर्मशास्त्रार्थशास्त्रद्वैधे व्यवस्था; व्यवहारनिर्णये युक्तिः प्रमाणम्; धर्मव्यवहारचरित्रराजशासनानां प्रामाण्यम्, तत्स्वरूपम्, तत्प्रामाण्यतारतम्यं च ९८-१००. शास्त्रमर्यादाभङ्गिनां वर्गाणां दण्डः; नैगमादीनां प्रमाणभूतलेख्यविधिः १०१.

दर्शनोपक्रमः—

परनिवेदित एव वादो ग्राह्यः; राज्ञा स्वयंग्राह्यवादस्थानानि; आत्मकृतप्राड्विवाकनिवेदितवादो न द्रष्टव्यः किं तु परनिवेदितवादो द्रष्टव्य एव ११०. अनेककार्ययौगपद्ये वादक्रमः; अनादेयवादः; आह्वानविधिः १२१, आह्वानातिक्रमदोषः; आह्वानासेधानर्हाः; असमर्थानां वादप्रतिनिधिर्ग्राह्यः १२२,१२३.

प्रतिज्ञा—

प्रतिज्ञालेखविधिः; सत्प्रतिज्ञास्वरूपम् १४४-१४७. प्रतिज्ञायाः फलकादा प्रथमलेखः, तदुत्तरं पत्रलेखः; प्रतिज्ञालेखशोधनावधिः १४७,१४८. अप्रगल्भवादिने कालो देयः; अप्रगल्भवादिनः प्रतिज्ञा सभ्यैः शोध्या; वादे कालो देयः; पक्षप्रतिपक्षनिर्णयप्रकाराः; प्रतिज्ञादोषाः १४८,१४९. अनादेयपक्षाः; आदेयपक्षः १५०.

उत्तरम्—

उत्तरलेखकालः; उत्तरदापनोपायाः; उत्तरानुक्तौ दण्डः; उत्तरानुक्तौ अदण्ड्याः; उत्तरदाने कालावधिविचारः १६५. सद्योविवादविषयाः; सदुत्तरस्वरूपम्; चतुर्विधमुत्तरम्; मिथ्योत्तरम्; संप्रतिपत्त्युत्तरम्; प्रत्यवस्कन्दनोत्तरम् १६६. प्राङ्न्यायोत्तरम् १६९. उत्तरचतुष्टयलेखविधिः; अनादेयोत्तरम् १७०.

वादहानिः—

वादहानिकारणानि २०४,२०५. वादहानिकारणापवादः २०५,२०६.

संधिः—

संधिः २०९,२१०.

क्रिया—

वादिप्रतिवादिनोर्मध्ये कदा केन प्रमाणोपन्यासः कर्तव्यः २२३,२२४. निर्णयसाधनानि, तेषां दैवमानुषभेदौ, तयोरवान्तरभेदाश्च २२४, २२५. प्रमाणानां विषयभेदेनावतारः; दैवमानुषप्रमाणविषयव्यवस्था २२५, २२६.

साक्षी—

द्वादशविधाः साक्षिणः ३२३-३२५. कियन्तः साक्षिणो ग्राह्याः ३२५,३२६. कीदृशाः साक्षित्वमर्हन्ति, कीदृशाश्च नार्हन्ति ३२६,३२७. साक्षिसाक्ष्यशोधनक्रमः; लेख्यसाक्षिशुद्धावेव कार्यसिद्धिः ३२७,३२८. साक्ष्याप्रदाने दण्डविधिः; साक्षिप्रश्नविधिः; सत्यप्रशंसा; अनृतनिन्दा; साक्ष्योक्तिविधिः ३२८. सत्योक्त्यपवादः;

कीदृशसाक्ष्योक्तौ जयः; साक्षिद्वैधे बहुत्वगुणाधिक्यादिना निर्णयः ३२९.

लेख्यम्—

लेख्यप्रकाराः तल्लक्षणानि च ३६३-३६६. लेख्यपरीक्षा ३६६,३६७.

भुक्तिः—

युक्तिसाक्षिलेख्यभुक्तिप्राबल्यदौर्बल्यविचारः ४१०. भोगविशेषः स्वत्वहेतुः ४११. स्वत्वहानिकारणानि ४१२,४१३. भोगागमयोः सहकार्यं, प्राबल्यदौर्बल्ये, त्रिपुरुषभुक्तिप्रामाण्यं च ४१३,४१४. स्त्रीधनादिभोगो न स्वत्वहेतुः ४१४,४१५. आंशिकभोगप्रामाण्यम्; विच्छिन्नभोगे निर्णयोपायः ४१५.

युक्तिः—

युक्तिः ४२८.

दिव्यम्—

शपथः ४४१. नव दिव्यप्रकाराः ४५४. दिव्यपदनिरुक्तिः; अपराधानुसारेण दिव्यविशेषाः ४५५-४५७. घटविधिः ४७९. जलविधिः ५०३. विषविधिः ५१०. कोशविधिः ५१५. तण्डुलविधिः ५१८. तप्तमाषविधिः ५२०. फालविधिः ५२२. धर्मजविधिः ५२३.

मानसंज्ञाः—

मानसंज्ञाः ५३३.

निर्णयफलम्—

सम्यङ्निर्णयपर्यवसानं जयपत्रदानं दण्डश्च ५४४.

पुनर्न्यायः—

पुनर्न्यायार्हो व्यवहारः, कुनिर्णयिनां दण्डः ५४९.

कृतनिवर्तनम्—

उक्तनिवर्तनापवादः ५६२, ५६३.

दण्डमातृका—

राज्ञः सर्वे दण्ड्याः; दण्डसंज्ञाः ५९१. अपराधजात्यादिनिमित्ततारतम्येन दण्डतारतम्यम्; चतुर्दश दण्डस्थानानि; ब्राह्मणस्य वधभिन्नो दण्डः ५९२,५९३. शारीरदण्डप्रत्याम्नायद्रव्यम्, दासस्य नार्थदण्डः, धनदण्डादाने निर्वासनदण्डः ५९३.

## भृगुः

सभा—

पञ्चदश व्यवहारसभाः ५५.

प्रतिज्ञा—

अनादेयपक्षः १५०.

दिव्यम्—

दिव्याधिकारिणः ४५७.

## कात्यायनः

व्यवहारस्वरूपम्—

व्यवहारलक्षणम्; व्यवहारपदनिरुक्तिः ५. व्यवहारोत्पत्तिः (वृक्षरूपकम्) ६. व्यवहारपदावान्तरभेदाः; व्यवहारपादाः १८.

सभा—

व्यवहारसभालक्षणम् ५६. कीदृशाः सभ्या राज्ञा नियोज्याः ५६-५८. वणिजां व्यवहारसभायां नियोजनम्; गणकलेखकराजपूरुषनियोजनम्; राज्ञा स्वस्थाने ब्राह्मणः प्राड्विवाको नियोज्यः; ब्राह्मणाभावे क्षत्रियवैश्यौ नियोज्यौ, न शूद्रः ५७,५८. प्राड्विवाकपदनिरुक्तिः; असम्यङ्निर्णये सभ्यदण्डः ५८,५९. सभ्यैर्धर्मार्थसहितं वचो वक्तव्यम्; अन्यायप्रवृत्तो राजा सभ्यैर्बोधनीयः नोपेक्ष्यः; निर्णयात्प्राक् रहः वादिसंभाषणं वर्ज्यम् ५९. राज्ञाऽनधिकृतानां व्यवहारनिर्णये नाधिकारः; धर्म्यनिर्णयफलम्; पाषण्डसंघव्रजपुञ्जश्रेणिजातिपदार्थाः ६०. ग्रामश्रेणिगणादीनां कार्यनिर्णेतारस्तेषामेव शिष्टाः; कुलश्रेणिगणाधिकृतनृपाणामुत्तरोत्तरं प्रामाण्यमधिकम् ६१.

दर्शनविधिः—

दर्शनविधिः कार्यदर्शनकालश्च १०१. कालनियमं विहाय द्रष्टव्यानि कार्याणि; शास्त्रानुसारेणैव निर्णयः कार्यः; धर्मविरुद्धं निवर्तनीयम्; धर्मव्यवहारचरित्रराजशासनजन्यनिर्णयस्वरूपम्, तत्तारतम्यं च १०२. धर्मशास्त्रमेव मुख्यं प्रमाणम्, तदभावे देशदृष्टधर्मः प्रमाणम् १०३. गणादिभिः स्वसामयिकधर्मानुसारेण स्वनिर्णयः कार्यः, अन्यैर्विरोधे शास्त्रमनुसृत्य निर्णयम्; नैगमादीनां आगमरूपलेख्यविधिः; श्रुतिस्मृत्युक्तं प्रवर्त-

नीयं, विपरीतं निवर्तनीयम् १०४. तीरितः अनुशिष्टश्चेति निर्णयो द्विविधः; नृपतिकृतोऽधर्म्यनिर्णयः सभ्यैर्निवर्तनीयः; ब्राह्मणैः सहैव निर्णयः कार्यः १०५.

दर्शनोपक्रमः—

राज्ञा स्वयं नोत्पाद्यो व्यवहारः; स्तोभकसूचकयोर्भेदः; गृहीतग्रहणो न्यायो न प्रवर्तते १२३. वादे स्थितानामुक्तिक्रमः; अनेककार्ययौगपद्ये वादक्रमः; अविनीतवादिदण्डः १२४. कार्यार्थी प्रष्टव्यः; आह्वानविधिः; आह्वानानर्हाः १२५,१२६. आह्वानानर्हापवादः १२६. आह्वानावमाने दण्डः; आसेधविधिः; आसेधोल्क्रमे अनासेध्यासेधे च दण्डः १२७,१२८. अनासेध्याः; आह्वायकवेतनविधिः; वादे प्रतिभूर्ग्राह्यः; प्रतिभुवोऽलाभे बन्धविधिः १२८,१२९. प्रातिभाव्यानर्हाः; वादे प्रतिनिधिः १२९. प्रतिनिधिजयपराजयौ नियोजकस्यैव; अनियुक्तपरार्थवादी दण्ड्यः; असभ्यवादे प्रतिनिधिर्न ग्राह्यः १३०.

प्रतिज्ञा—

प्रतिज्ञालेखविधिः १५०. स्थावरवादे प्रतिज्ञालेखविशेषविधिः १५१. न्यूनाधिकोहापोहपूर्वकं प्रथमं भूम्यादौ लिखेत्; प्रथमं फलकादौ, अनन्तरं पत्रे लिखेत्; लेखकप्रमादे दण्डः; वाद्युक्तं सर्वं लेख्यम्; सत्प्रतिज्ञास्वरूपम् १५२. वादिभ्यः कालदानविचारः; अनादेयपक्षः १५३-१५५. प्रतिज्ञादोषाः १५५.

उत्तरम्—

उत्तरदाने कालावधिविचारः १७०. सद्योविवादविषयाः; सद्योविवादकालान्तरविवादविषयव्यवस्था १७१,१७२. नियतकालातिपातकृद्वादिदोषापवादविचारः; उत्तरदापनोपायाः १७२. प्रतिज्ञोत्तरलेखोत्तरमपि उभयवाद्युक्तविशेषो विचारकाले अवधार्यः; भाषोत्तरलेखोत्तरवाद्युक्तिविचारः; उत्तरलेखविधिः; चतुर्विधमुत्तरम् १७३,१७४. प्रतिपत्त्युत्तरम्; मिथ्योत्तरम् १७४. मिथ्योत्तरचातुर्विध्यम्; कारणोत्तरम्; प्राङ्न्यायोत्तरम्; प्राङ्न्यायत्रैविध्यम्; उत्तरदोषाः १७६-१७८. उत्तरसंकरविचारः क्रियाद्वयविचारश्च १७९.

वादहानिः—

अभियोगस्य प्रत्यभियोगेन न निराकरणम्, अस्यापवादश्च; अप्रतिवचने अभियुक्तस्य दण्ड्यत्वम्; दुष्टत्वलिङ्गानि २०६. विविधानि वादहानिकारणानि २०६, २०७,२०८. वादहानिदोषदुष्टानां दण्डः २०७. वादहानावपि वादोद्धारविवेकः २०८.

संधिः—

नृपाननुमत्या संधिकरणे दण्डः २१०.

क्रिया—

वादिप्रतिवादिनोर्मध्ये कदा केन प्रमाणोपन्यासः कर्तव्यः २२६,२२७. निर्णयसाधनानि; प्रमाणानां प्राबल्यदौर्बल्यम्; दैवमानुषप्रमाणभेदौ; प्रमाणोपन्यासावधिः २२८. प्रमाणप्राबल्यदौर्बल्ये दैवमानुषतारतम्यम्; प्रमाणानां विषयव्यवस्था २२९-२३२.

साक्षी—

साक्षिप्रकाराः, तल्लक्षणानि; साक्षिविशेषविषयाः ३३०-३३२. असाक्षित्वनिमित्तानि ३३३,३३४. साक्षिणः कुत्र परीक्ष्याः कुत्र न; साक्ष्यादिप्रमाणपरीक्षा ३३५,३३६. साक्षिणः सद्यः प्रष्टव्याः; साक्षिभ्यः कालो देयः; साक्षिप्रश्नविधिः; सत्यप्रशंसाऽनृतनिन्दा च ३३६, ३३७. समवायसाक्षित्वं पृथक् साक्षित्वं च; देशकालादिनियमयुक्तः साक्ष्योक्तिविधिः, साक्ष्यविषयश्च ३३७, ३३८. साक्ष्युक्तिपरीक्षा ३३८-३४१. दुष्टसाक्षिदण्डः; कूटसाक्षिलिङ्गम् ३४१,३४२.

लेख्यम्—

लेखविधिः, लेख्यप्रकाराः, तल्लक्षणानि च ३६७-३६९. लेख्यपरीक्षा ३६९-३७३.

भुक्तिः—

लेख्यसाक्षिभुक्तिप्राबल्यदौर्बल्यविचारः ४१५,४१६. भोगागमयोः सहकार्ये, प्राबल्यदौर्बल्ये, त्रिपुरुषादिभुक्तिप्रामाण्यं, पञ्चाङ्गभोगश्च ४१६-४१८. स्त्रीधनादिभोगः न स्वत्वहेतुः ४१८,४१९.

युक्तिः—

युक्तिः ४२८.

दिव्यम्—

शपथः ४४१. दिव्याधिकारिणः; दिव्यविषयः; शीर्षकवर्तनाभावः कुत्र; दिव्यविशेषविषयाः ४५७, ४५८. अपराधानुसारेण दिव्यविशेषाः ४५८,४५९.

जात्यादिविशेषेण दिव्यविशेषः; दिव्यानधिकारिणः ४५९, ४६०. दिव्याधिकारिणः; दिव्यदेशः ४६०,४६१. अवैधत्वसंदेहे पुनर्दिव्यं देयम्; दिव्याङ्गस्नानादिविधिः ४६१. घटविधिः ४७९. अग्निविधिः ४९४. जलविधिः ५०३. विषविधिः ५१०. कोशविधिः ५१५,५१६. तण्डुलविधिः ५१८. संकीर्णदिव्यविधिः ५२५.

मानसंज्ञाः—

मानसंज्ञाः ५३३.

निर्णयकृत्यम्—

सम्यङ्निर्णयपर्यवसानं जयपत्रदानं दण्डश्च ५४४, ५४५.

पुनर्न्यायः—

पुनर्न्यायार्हो व्यवहारः ५४९.

कृतनिवर्तनम्—

निवर्तनीया व्यवहाराः; उक्तानिर्वतनापवादः; स्वतन्त्रकृतोऽपि कश्चिद् व्यवहारो निवर्तनीयः ५६३.

दण्डमातृका—

दण्डयस्यादण्डने अदण्ड्यस्य दण्डने च दोषः; आचार्यादिदण्ड्यविचारः; दण्डप्रायश्चित्तयोर्विकल्पः; दण्डसंज्ञाः ५९३,५९४. दण्डकर्तारं पापहेतुं च विचार्यैव दण्डः कल्प्यः; अपराधोपक्रम-मध्य-समाप्त्यादिकं विचार्य दण्डतारतम्यम् ५९४,५९५. संहत्यापराधे दण्डः; वर्णादिभेदेन दण्डभेदः; दासादिदण्डः; ब्राह्मणस्य वधातिरिक्तो दण्डः ५९५,५९६. अन्यायार्जितं वित्तं वर्ज्यम्; दण्डधनं विप्रेभ्यो दद्यात् ५९६.

## पितामहः

व्यवहारस्वरूपम्—

सोत्तरानुत्तरव्यवहारौ १८.

सभा—

अष्टाङ्गकरणम्, तत्र कार्यदर्शनम्; कुलादिकृतनिर्णयः नृपस्थाने परिवर्तनमर्हति ६१, ६२. बहुभिरेव निर्णयम् ६२.

दर्शनविधिः—

चरितं नाम; चरित्रेण निर्णयो व्यवहारः; सामयिकधर्मेण निर्णयो व्यवहारः; राजशासनेन निर्णयो व्यवहारः; वर्णाश्रमबाह्या अष्टादश प्रकृतयः; युक्त्या व्यवहारो विवेक्तव्यः १०५.

दर्शनोपक्रमः—

राज्ञा व्यवहारः स्वयं नोत्पाद्यः; राज्ञा स्वयमुत्पाद्या व्यवहाराः १३१–१३३.

प्रतिज्ञा—

भाषादोषः; आवेदनविधिः १५५.

उत्तरम्—

विषयविशेषे उत्तरदाने कालावधिविचारः १८४.

क्रिया—

प्रमाणानां विषयव्यवस्था; दैवमानुषतारतम्यम् २३२, २३३.

साक्षी—

साक्षिणः साक्ष्यं च परीक्ष्यम्; अनृतोक्तिफलम् ३४२.

लेख्यम्—

प्रमाणलेख्यं क्रयपत्रं च ३७३.

भुक्तिः—

पञ्चाङ्गभोगः, भोगागमसहकार्यं, त्रिपुरुषभुक्तिप्रामाण्यं च ४१९.

दिव्यम्—

दिव्यविषयः; दिव्यनिरुक्तिः ४६१. नव दिव्यप्रकाराः; शीर्षकवर्तनं; अपराधशंकानिश्चयाद्यनुसारेण दिव्यविशेषाः ४६२, ४६३. जातिकर्माद्यधिकारिविशेषणानुसारेण दिव्यविवेकः ४६३, ४६४. दिव्यविशेषेषु कालविशेषनियमः ४६४. दिव्याध्यक्षः; सर्वदिव्येषु देवतावाहनार्घ्यमन्त्रादिविधिः ४६५–४६९. घटविधिः ४७९–४८४. अग्निविधिः ४९४–४९८. जलविधिः ५०३–५०५. विषविधिः ५१०, ५११. कोशविधिः ५१६–५१८. तण्डुलविधिः ५१९, ५२०. तप्तमाषविधिः ५२०–५२२. फालविधिः ५२३. धर्मजविधिः ५२३, ५२४.

## उशना

व्यवहारस्वरूपम्—

व्यवहारपदानि १८.

दर्शनोपक्रमः—

अविनीतवादिदण्डः १३३.

साक्षी—

साहसादौ असाक्ष्यपवादः ३४२. अनृतोक्तिफलम् ३४३.

भुक्तिः—

दशवर्षभूभोगः न प्रमाणम् ४१९.

दिव्यम्—

जलविधिः ५०५.

मानसंज्ञाः—

मानसंज्ञाः ५३३.

दण्डमातृका—

महापापेषु ब्राह्मणदण्डः ५९६.

## प्रजापतिः

सभा—

अभिषिक्तः क्षत्रियो राजा ब्राह्मणो वा प्राड्विवाकः; सामन्तक्षत्रियाः प्राड्विवाका भवन्ति; अक्षत्रियराज्ञां ब्राह्मणा एव; स्ववर्गे वर्गीयास्त्रयो निर्णेतारः ६२.

प्रतिज्ञा—

प्रतिज्ञालेखनविधिः; प्रतिज्ञालेखपूर्वमावेदनविधिः १५५. अनादेयवादः १५६.

उत्तरम्—

विषयविशेषे उत्तरदाने कालावधिविचारः; सदुत्तरस्वरूपम्; उत्तरचतुष्टयस्वरूपम् १८४.

क्रिया—

प्रमाणानां विषयव्यवस्था २३३.

साक्षी—

साक्षिप्रकाराः; असाक्षिणः ३४३.

लेख्यम्—

लेख्यप्रकाराः तल्लक्षणानि च; लेख्यपरीक्षा; लेखकूटत्वे सति दिव्यं प्रमाणम् ३७३, ३७४.

भुक्तिः—

भुक्तिविशेषः स्वत्वहेतुः ४१९.

युक्तिः—

युक्तिः ४२८.

दिव्यम्—

दिव्यकालः ४६९.

## हारीतः

व्यवहारस्वरूपम्—

व्यवहारलक्षणम्; व्यवहारस्वरूपम् (वृक्षरूपकम्) ६.

सभा—

प्राड्विवाकेन शल्यमुद्धरणीयम्; मिथ्यादर्शननिन्दा ६२. अधर्म्यनिर्णयदोषभागिनः; धर्म्यनिर्णयशुभफलम् ६३.

दर्शनविधिः—

शास्त्रजातिधर्माद्यालोच्य निर्णयः १०५. धर्म्यनिर्णयस्वरूपम्; धर्मव्यवहारचरित्रराजशासनानि प्रमाणानि, तेषां तारतम्यम् १०६.

दर्शनोपक्रमः—

वर्णानुक्रमेण वादो ग्राह्यः; आह्वानानर्हाः १३३. आह्वानानर्हा अपि कदाचिदाह्वयनीयाः १३४.

प्रतिज्ञा—

प्रतिज्ञालेखविधिः; प्रतिज्ञादोषः १५६.

उत्तरम्—

उत्तरदानकालः; उत्तरानर्हविषयः; उत्तरदानविधिः १८४. उत्तरदाने कालावधिविचारः; उत्तरदापनोपायाः; सदुत्तरस्वरूपम्; प्राङ्न्यायोत्तरम्; अनेकविधोत्तरयौगपद्ये ग्राह्यमुत्तरम् १८५.

वादहानिः—

वादहानिकारणानि २०८.

क्रिया—

वादिप्रतिवादिनोर्मध्ये केन प्रमाणोपन्यासः कर्तव्यः २३३.

साक्षी—

साक्षित्वयोग्यतायाः कालमर्यादा ३४३.

लेख्यम्—

संधिपत्रलक्षणम्; लेख्यपरीक्षा. ३७४.

भुक्तिः—

भोगागमयोः सहकार्यं, त्रिपुरुषभुक्तिप्रामाण्यं च ४१९, ४२०.

दिव्यम्—

शपथः ४४२. जातिकर्माद्यधिकारिविशेषणानुसारेण दिव्यविवेकः ४६९. अग्निविधिः ४९८. विषविधिः ५११. कोशविधिः ५१८.

कृतनिवर्तनम्—

निवर्तनीया व्यवहाराः. ५६४.

दण्डमातृका—

परिषद् राजा च दण्डकरः; ब्राह्मणोऽवध्यः ५६८.

**परिशिष्टानि**

दण्डसंज्ञाः—

ब्राह्मणदण्डविचारः प ९.

## व्यासः

सभा—

पुरोहितः प्राड्विवाको भवति; प्राड्विवाकलक्षणं, प्राड्विवाकपदनिरुक्तिश्च; ब्राह्मण एव प्राड्विवाकः न त्वन्ये वर्णाः ६३. शूद्रस्य श्रौतस्मार्तधर्मोक्तिनिषेधः; प्रशस्तसभ्यः; गणकलेखकसाध्यपालाः; गुरुस्वामिकुटुम्बिपिताज्येष्ठबन्धुपितामहकुलग्रामश्रेणिगणराजाधिकृतानां स्वस्वविषये निर्णयाधिकारः ६४.

दर्शनविधिः—

अष्टप्रमाणजन्योऽष्टविधो निर्णयः १०६.

दर्शनोपक्रमः—

अनेककार्ययौगपद्ये वादक्रमः; आसेधविधिः; आह्वानासेधानर्हाः; उक्तापवादः; वादे प्रतिनिधिर्ग्राह्यः १३४.

प्रतिज्ञा—

प्रतिज्ञालेखविधिः; फलकादिलेखोत्तरं पत्रलेखः १५६.

उत्तरम्—

उत्तरदाने कालातिपातदोषापवादविचारः १८६. उत्तरचतुष्टयस्वरूपम् १८७. अनेकविधोत्तरयौगपद्ये ग्राह्यमुत्तरम् १८८.

क्रिया—

वादिप्रतिवादिनोर्मध्ये केन कदा प्रमाणोपन्यासः कर्तव्यः २३४. निर्णयसाधनानि, प्रमाणानां दैवमानुषभेदौ, तयोर्विषयव्यवस्था २३५.

साक्षी—

साक्षिणः कीदृशा भवन्ति; साहसादौ असाक्षित्वापवादः; साक्षिप्रकाराः; दिव्यापेक्षया साक्षिणः वरीयस्त्वम्; साक्षिपरीक्षा ३४४-३४६. साक्षिप्रश्नविधिः; सत्यप्रशंसा; अनृतानिन्दा; कीदृशं साक्ष्यं साध्यपर्याप्तम् ३४६.

लेख्यम्—

लेख्यप्रकाराः तल्लक्षणानि च ३७४-३७६. लेख्यपरीक्षा ३७६, ३७७.

भुक्तिः—

लेख्यसाक्षिभुक्तिप्रामाण्यतारतम्यं पञ्चाङ्गभोगश्च ४२०. भुक्तिविशेषः स्वत्वहेतुः; स्वजनादिभुक्तिर्न स्वत्वहेतुः; त्रिपुरुषभुक्तिप्रामाण्यम् ४२१, ४२२.

दिव्यम्—

पञ्चदिव्यप्रकाराः ४६९. घटविधिः ४८४.

मानसंज्ञाः—

मानसंज्ञाः ५३३.

निर्णयकृत्यम्—

जयपराजयफलम् ५४५.

दण्डमातृका—

अल्पदण्डविषयः ५९६.

## संवर्तः

दर्शनविधिः—

दर्शनविधिः; दर्शने निषिद्धः कालः १०६.

दर्शनोपक्रमः—

राज्ञा स्वयमुत्पाद्या व्यवहाराः १३४, १३५.

लेख्यम्—

लेख्यस्य प्रमाणान्तरतः प्राबल्यं लेख्यपरीक्षा च ३७७, ३७८.

भुक्तिः—

भुक्तिविशेषः स्वत्वहेतुः ४२१.

## मरीचिः

दर्शनोपक्रमः—

कन्या अनाह्वयनीया; अनाह्वयनीयापवादः १३५.

लेख्यम्—

लेख्यप्रमाणविषयः ३७८.

भुक्तिः—

भुक्तिविशेषः स्वत्वहेतुः ४२३.

## यमः

दर्शनविधिः—

दर्शनविधिः; यमव्रतम्—समभावः; शास्त्रभूतहितविरोधि निवर्तनीयम् १०६.

दिव्यम्—

शपथः ४४२.

कृतनिवर्तनम्—

निवर्तनीया व्यवहाराः ५६४.

दण्डमातृका—

राज्ञः सर्वे दण्ड्याः; ब्राह्मणस्य वधातिरिक्तो दण्डः; महापापेषु ब्राह्मणदण्डः; पतितदण्डः परिषदि देयः; सर्वस्वदण्डे जीवनमवशेषणीयम् ५९६,५९७.

## अङ्गिराः

दण्डमातृका—

दण्डधराः, आत्महन्तृदण्डः ५९७.

## शातातपः

दिव्यम्—

कोशविधिः ५१८.

## वृद्धशातातपः

उत्तरम्—

चतुर्विधमुत्तरम्; षड्विधमुत्तरम् १८९.

## वृद्धवसिष्ठः

उत्तरम्—

चतुर्विधमुत्तरम् १८९.

लेख्यम्—

जयपत्रलक्षणम् ३७८.

दण्डमातृका—

महापापेषु ब्राह्मणदण्डः ५९७.

## अत्रिः

दिव्यम्—

दिव्यपराजयलिङ्गानि ४६९.

## वृद्धहारीतः

दिव्यम्—

दिव्यविषयः ४६९.

परिशिष्टानि

दण्डसंज्ञाः—

न्यायदण्डः; दण्डप्रकाराः; दण्डविवेकः, ब्राह्मणदण्डविचारः प.११.

## बृहद्यमः

उत्तरम्—

चतुर्विधमुत्तरम् १८९.

दिव्यम्—

दिव्यविषयः ४६९.

परिशिष्टानि—

क्रिया—

वादिनोर्मध्ये कदा कतरेण प्रमाणोपन्यासः कर्तव्यः प.१७.

## उतथ्यः

साक्षी—

अनृतनिन्दा ३४७.

## कण्वः

साक्षी—

कूटसाक्षिलिङ्गम् ३४७.

## माण्डव्यः

दिव्यम्—

शपथः ४४२.

## भारद्वाजः

मानसंज्ञाः—

मानसंज्ञाः ५३४.

## स्मृत्यन्तरम्

व्यवहारस्वरूपम्—

व्यवहारपादाः १८.

सभा—

राज्ञा प्राड्विवाको नियोज्यः; ब्राह्मणसभायां हस्तव्यापाररीतिः ६५.

दर्शनोपक्रमः—

अनेककार्ययौगपद्ये वादक्रमः; कालातिपाते वादो न ग्राह्यः १३५.

क्रिया—

प्रमाणोपन्यासः केन कर्तव्यः २३६.

साक्षी—

विषयविशेषे साक्षिणः; कूटसाक्षिलिङ्गम् ३४७.

लेख्यम्—
लेख्यप्रकाराः तल्लक्षणानि च; लेख्यपरीक्षा ३७८, ३७९.
भुक्तिः—
पौरुषभोगनिरुक्तिः ४२३.
दिव्यम्—
शपथः ४४२. घटविधिः ४८४. अग्निविधिः ४९८. जलविधिः ५०५. कोशविधिः ५१८.
मानसंज्ञाः—
मानसंज्ञाः ५३४.
पुनर्न्यायः—
निवर्तनीयं कार्यम् ५४९.
कृतनिवर्तनम्—
अनिवर्तनीयौ दानविक्रयौ ५६४.
दण्डमातृका—
निमित्तभेदेन दण्डतारतम्यविचारः; ब्राह्मणोऽवध्यः; महापापेषु ब्राह्मणदण्डः ५९७.

## अनिर्दिष्टकर्तृकवचनम्

सभा—
शूद्रो निर्णये नाधिकारी; तत्तद्वर्गे तद्वर्गीयशिष्टाः प्रमाणम्; सभ्येन अधर्म्यदर्शनं न कर्तव्यम् ६५.
दर्शनविधिः—
देशधर्मप्रामाण्यम् १०६.
प्रतिज्ञा—
प्रतिज्ञापक्षपदयोरर्थः १५७.
क्रिया—
दैवमानुषप्रमाणविषयव्यवस्था २३६.
साक्षी—
असाक्षिणः ३४७.
लेख्यम्—
स्वहस्तलेख्यं प्रबलम् ३७९.
भुक्तिः—
उपेक्षाहेतवः ४२३.
दिव्यम्—
शपथः ४४२. दिव्यविषयः; दिव्याधिकारविचारः ४६९, ४७०. घटविधिः ४८४. कोशविधिः ५१८.
मानसंज्ञाः—
मानसंज्ञाः ५३४.

## अग्निपुराणम्*

व्यवहारस्वरूपम्—
व्यवहारपदानि १९.
सभा—
राजा प्राड्विवाकः, तत्सहकारिणः ब्राह्मणाः, राज्ञा स्वस्थाने ब्राह्मणो वा नियोज्यः ६५.
मानसंज्ञाः—
मानसंज्ञाः ५३४.
दण्डमातृका—
दण्डप्रकाराः ५९७.

## स्कन्दपुराणम्, भविष्यपुराणम्, विष्णुधर्मोत्तरम्, वराहपुराणम्

मानसंज्ञाः—
मानसंज्ञाः ५३४, ५३५.

## पद्मपुराणम्

दिव्यम्—
विवाद्यद्रव्यस्य मूल्यानुसारेण दिव्यकल्पना ४७०.

## कालिकापुराणम्

वादहानिः—
दुष्टत्वलिङ्गानि २०८.
दिव्यम्—
दिव्यविषयः शिरोवर्तनं च; जातिभेदेन दिव्यभेदः ४७०. घटविधिः ४८४. अग्निविधिः ४९८. जलविधिः ५०६. तप्तमाषविधिः ५२२.
मानसंज्ञाः—
मानसंज्ञाः ५३५.

## पुराणम्, चरकसंहिता, वैखानससंहिता, कापिलपञ्चरात्रम्

मानसंज्ञाः—
मानसंज्ञाः ५३५.

* नारदयाज्ञवल्क्यश्लोका एव प्रायशः अग्निपुराणे समुपलभ्यन्ते। तत्तत्स्मृतिवचनपादटिप्पण्यां एतत्पुराणस्थलनिर्देशः कृतः। ये श्लोकाः पादटिप्पण्यामुद्धृताः तेषां विषया नात्रोद्धृताः। किंतु तत्स्मृत्यनर्भूतश्लोकविषया एवात्र दत्ताः।

## त्रैराज्यसूत्रम्

दर्शनोपक्रमः—

आह्वानातिक्रमे दण्डः १३५.

## शुक्रनीतिः*

व्यवहारस्वरूपम्—

व्यवहारलक्षणम् ६. व्यवहारपादाः; अभियोगो द्विधा १९.

सभा—

सर्ववर्णीयो राजा प्राड्विवाकः, सभ्यास्तद्वर्णजाः प्रशस्ताः, तद्वर्णजो वा प्राड्विवाकः; सर्वजातीयाः सभ्या भवितुमर्हन्ति; अपक्षपातेन निर्णयः कार्यः ६५.

दर्शनविधिः—

दर्शनविधिः १०६.

दर्शनोपक्रमः—

अर्थी कार्यं निवेदयेत्; अविनीतवादी दण्ड्यः; आसेधविधिः; वादे प्रतिनिधिर्न देयः; वादे प्रातिभाव्यविधिः १३५, १३६. प्रतिभुवस्त्वभावे वादनिर्णयपर्यन्तं वादिबन्धः १३६.

प्रतिज्ञा—

प्रतिज्ञालेखविधिः; आवेदनप्रतिज्ञयोर्भेदः; प्रतिज्ञालेखादौ ऊहापोहौ; प्रतिज्ञादोषाः १५७.

उत्तरम्—

सद्योविवादविषयाः; प्रतिपत्त्युत्तरम्; प्राङ्न्यायत्रैविध्यम्; प्रतिज्ञोत्तराविचारणे सभ्यदण्डः १८९.

क्रिया—

निर्णयसाधनानि, दैवमानुषभेदौ, तयोर्विषयव्यवस्था २३६.

साक्षी—

साक्षिनिरुक्तिः; साक्षिभेदाः; असाक्षिणः; साक्षित्वानङ्गीकारे दण्डः; साक्षिप्रश्नविधिः ३४७.

लेख्यम्—

लेख्यप्रकाराः तल्लक्षणानि च ३७९, ३८०.


*नारदबृहस्पतिकात्यायनादीनां श्लोकसदृशा बहवः श्लोका शुक्रनीतौ समुपलभ्यन्ते। तत्तस्मृतिवचनपादटिप्पण्यां शुक्रनीतिश्लोकानां स्थलनिर्देशः कृतः। ये श्लोकाः पादटिप्पण्यामुध्दृताः तेषां विषया नात्रोध्दृताः। किंतु तत्तत्स्मृत्यनर्भूतश्लोकाविषया एवात्र दत्ताः।


भुक्तिः—

लेख्यसाक्षिभुक्तिप्रामाण्यतारतम्यम् ४२३.

युक्तिः—

युक्तिः ४२८.

दिव्यम्—

दिव्यकर्तव्यता; दिव्यप्रकाराः; दिव्यस्वरूपविधिः; अपराधानुसारेण दिव्यविशेषाः ४७०, ४७१.

मानसंज्ञाः—

मानसंज्ञाः ५३५, ५३६.

दण्डमातृका—

दण्डप्रयोजनम्; दण्डप्रयोगविवेकः; दण्डप्रकाराः; कालविशेषेण दण्डविशेषः; राज्ञा सामबुद्ध्या दण्डः प्रणेयः ५९७, ५९८. अपराधप्रकाराः, तत्तारतम्येन दण्डविधिः; प्राणहरणदण्डस्य सर्वथा निषेधः ५९८.

## षट्त्रिंशन्मतम्

सभा—

पाषण्डनैगमादिसंज्ञा ६५.

## संग्रहकारः

व्यवहारस्वरूपम्—

व्यवहारलक्षणम् ६.

प्रतिज्ञा—

सत्प्रतिज्ञास्वरूपम् १५७. प्रतिज्ञालेखावधिः १५८.

उत्तरम्—

उत्तरलेखकालः १८९.

साक्षी—

कियन्तः साक्षिणः कर्तव्याः; असाक्षिभेदाः; असाक्षित्वापवादः ३४७.

लेख्यम्—

लेख्यप्रकाराः तल्लक्षणानि च ३८०.

भुक्तिः—

भोगनिर्णायकम्; लिखितादित्रयप्रमेयम् ४२३. भोगागमयोः सहकार्ये प्राबल्यदौर्बल्ये त्रिपुरुषभुक्तिप्रामाण्यं च ४२४.

दिव्यम्—

अपराधानुसारेण दिव्यविशेषाः ४७१.

निर्णयकृत्यम्—

जयिपराजयिस्वरूपम् ५४५.

दण्डमातृका—

दण्डप्रकरणव्यवस्था ५९८.

## भास्कराचार्यः, ज्योतिःशास्त्रम्, शारदातिलकम्, बालभूषणम्

मानसंज्ञाः—

मानसंज्ञाः ५३६.

## मानसोल्लासः

व्यवहारस्वरूपम्—

व्यवहारपदानि; अभियोगो द्विधा १९.

सभा—

राजा प्राड्विवाकः, तत्सहकारिणो ब्राह्मणाः; अपक्षपातेन निर्णयम् ६५. राज्ञा कीदृशाः सभ्या नियोज्याः; सभ्यसंख्या; नियुक्तेनानियुक्तेनापि वा धर्म्यमेव वक्तव्यम्; वैश्याः सभ्यत्वेन नियोज्याः; राज्ञा स्वस्थाने ब्राह्मणो नियोज्यः, तदभावे क्षत्रियः, तदभावे वैश्यः, न तु कदापि शूद्रः; प्राड्विवाकपदनिरुक्तिः; शास्त्रविरोधिनिर्णये सभ्यदण्डः ६६.

दर्शनोपक्रमः—

व्यवहारोपक्रमोध्दृतस्मृतिसारसंग्रहः १३६.

क्रिया—

निर्णयसाधनानि, दैवमानुषभेदौ, तयोर्विषयव्यवस्था २३६.

## मयमतम्, शिल्परत्नम्

### परिशिष्टानि

मानसंज्ञाः—

देशमानसाधनम्.

# * अविद्यमानस्मृतीनां संग्रहः

१ शङ्खः
२ शङ्खलिखितौ
३ बृहस्पतिः
४ भृगुः
५ कात्यायनः
६ पितामहः
७ उशना
८ प्रजापतिः
९ हारीतः
१० व्यासः
११ संवर्तः
१२ मरीचिः
१३ यमः
१४ अङ्गिराः
१५ शातातपः
१६ वृद्धशातातपः
१७ वृद्धवसिष्ठः
१८ अत्रिः
१९ उतथ्यः
२० कण्वः
२१ माण्डव्यः
२२ भारद्वाजः
२३ संग्रहकारः

§ स्मृत्यन्तरम् | § अनिर्दिष्टकर्तृकवचनम्

---

* येषां वचनानि निबन्धेषूपलभ्यन्ते, मनुयाज्ञवल्क्यादिवच्च स्मृतिर्नोपलभ्यते तेषामत्र निर्देशः ।

§ निबन्धग्रन्थेषु यानि वचनानि ऋषिनिर्देशं विना समागतानि तेषामत्र संग्रहः ।

# धर्मकोशः

## व्यवहारकाण्डम्

### व्यवहारस्वरूपम्

व्यवहारधर्मोत्पत्तिः । व्यवहारोत्पत्तिः । व्यवहारप्रयोजनम् । व्यवहारलक्षणम् । व्यवहारपदनिरुक्तिः । निबन्धकाराणां व्यवहारलक्षणम् ।

#### वेदाः

व्यवहारधर्मोत्पत्तिः

[1]ब्रह्म वा इदमग्र आसीदेकमेव, तदेकँ सन्न व्यभवत् । तच्छ्रेयोरूपमत्यसृजत क्षत्रं, यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति । तस्मात् क्षत्रात्परं नास्ति । तस्माद् ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये । क्षत्र एव तद्यशो दधाति । सैषा क्षत्रस्य योनिर्यद् ब्रह्म । तस्माद्यद्यपि राजा परमतां गच्छति, ब्रह्मैवान्तत उपनिश्रयति स्वां योनिम् । य उ एनँ हिनस्ति, स्वाँ स योनिमृच्छति, स पापीयान् भवति, यथा श्रेयाँसँ हिँसित्वा ॥ स नैव व्यभवत्स विशमसृजत, यान्येतानि देवजातानि गणश आख्यायन्ते, वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति ॥ स नैव व्यभवत्स शौद्रं वर्णमसृजत पूषणमियं वै पूषेयँ हीदँ सर्वं पुष्यति यदिदं किं च ॥ स नैव व्यभवत् तच्छ्रेयोरूपमत्यसृजत धर्मं,तदेतत्क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्त्यथो अबलीयान्बलीयाँसमाशँसते धर्मेण, यथा राज्ञैवं, यो वै स धर्मः सत्यं वै तत्तस्मात्सत्यं वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्तँ सत्यं वदतीत्येतद्ध्येवैतदुभयं भवति ॥ तदेतद् ब्रह्म क्षत्रं विट् शूद्रस्तदग्निनैव देवेषु ब्रह्माभवद् ब्राह्मणो मनुष्येषु, क्षत्रियेण क्षत्रियो, वैश्येन वैश्यः, शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्ते, ब्राह्मणे मनुष्येष्वेताभ्याँ हि रूपाभ्यां ब्रह्माभवत् ।

(१) शब्रा.१४।४।२।२३-२७; बृउ.१।४।११-१५.

स चतुरः सृष्ट्वाऽपि वर्णान्नैव व्यभवदुग्रत्वात् क्षत्रस्यानियताशङ्कया, तच्छ्रेयोरूपमत्यसृजत किं तद्धर्मं तदेतच्छ्रेयोरूपं सृष्टं क्षत्रस्य क्षत्रं क्षत्रस्यापि नियन्तृ । उग्रादप्युग्रम् । यद्धर्मो यो धर्मस्तस्मात् क्षत्रस्यापि नियन्तृत्वाद्धर्मात्परं नास्ति । तेन हि नियम्यन्ते सर्वे । तत् कथमिति । उच्यते । अथो अप्यबलीयान् दुर्बलतरो, बलीयांसमात्मनो बलवत्तरमप्याशंसते कामयते जेतुं, धर्मेण बलेन । यथा लोके राज्ञा सर्वबलवत्तमेनापि कुटुम्बिक एवं, तस्मात्सिद्धं धर्मस्य सर्वबलवत्तरत्वात्सर्वनियन्तृत्वम् । यो वै स धर्मो व्यवहारलक्षणो लौकिकैर्व्यवह्रियमाणः, सत्यं वै तत्सत्यमिति यथाशास्त्रार्थता, स एवानुष्ठीयमानो धर्मनामा भवति । शास्त्रार्थत्वेन ज्ञायमानस्तु सत्यं भवति । यस्मादेवं तस्मात्सत्यं यथाशास्त्रं वदन्तं व्यवहारकाल आहुः समीपस्था उभयविवेकज्ञा धर्मं वदतीति प्रसिद्धं लौकिकं न्यायं वदतीति । तथा विपर्ययेण धर्मं वा लौकिकं व्यवहारं वदन्तमाहुः, सत्यं वदति शास्त्रादनपेतं वदतीति । एतद्यदुक्तमुभयं ज्ञायमानमनुष्ठीयमानं चैतद्धर्म एव भवति । तस्मात्स धर्मो ज्ञानानुष्ठानलक्षणः शास्त्रज्ञानितरांश्च सर्वानेव नियमयति । तस्मात्स क्षत्रस्यापि क्षत्रमतस्तदभिमानोऽविद्वांस्तद्विशेषानुष्ठानाय ब्रह्मक्षत्रविट्शूद्रनिमित्तविशेषमभिमन्यते । तानि च निसर्गत एव कर्माधिकारनिमित्तानि ॥ *बृशांभा.

#### गौतमः

व्यवहारोत्पत्तिः

[1]**द्विरुत्थानतो द्विगतिः ।**

व्यवहार इत्यनुषज्यते । तत्र निबन्धनकारेणोक्तम्—

*प्रकृतोपयोगि एव भाष्यमत्रोद्धृतम् ।

(१) सवि.५१. गौतमधर्मसूत्रे नोपलभ्यते ।

"ऋणादानादिदायविभागान्तानां देयनिबन्धनत्वं,साहसादिपञ्चकस्य दण्डनिबन्धनत्वमिति द्विरुत्थानतेत्यर्थः"।
सवि. ५१

## विष्णुः

**व्यवहारो द्विरुत्थानः ।**

व्यवहारकारणद्वयं कथितम् । सवि. ५१

## महाभारतम्

व्यवहारलक्षणप्रयोजनस्वरूपाणि

**भीष्म उवाच—**

**शृणु कौरव्य यो दण्डो व्यवहारो यथा च सः ।**
**यस्मिन् हि सर्वमायत्तं स दण्ड इह केवलः ॥**
**धर्मसंख्या महाराज व्यवहार इतीष्यते ।**
**तस्य लोपः कथं न स्याल्लोकेष्ववहितात्मनः ॥**
**इत्येवं व्यवहारस्य व्यवहारत्वमिष्यते ।**
**अपि चैतत्पुरा राजन् मनुना प्रोक्तमादितः ॥**
**सुप्रणीतेन दण्डेन प्रियाप्रियसमात्मना ।**
**प्रजा रक्षति यः सम्यग्धर्म एव स केवलः ॥**
**दण्डे त्रिवर्गः सततं सुप्रणीते प्रवर्तते ।**
**दैवं हि परमो दण्डो रूपतोऽग्निरिवोत्थितः॥**
**नीलोत्पलदलश्यामश्चतुर्दंष्ट्रश्चतुर्भुजः ।**
**अष्टपान्नैकनयनः शङ्कुकर्णोर्ध्वरोमवान् ॥**
**जटी द्विजिह्वस्ताम्रास्यो मृगराजतनुच्छदः ।**
**एतद्रूपं बिभर्त्युग्रं दण्डो नित्यं दुराधरः ॥**

चतस्रो दंष्ट्रा इव प्राणिनां वधसाधनानि यत्र सः। तथा हि, केचित् मानभङ्गेन, केचिद्धनहरणेन, केचिदङ्गवैकल्येन, केचित्प्राणव्यापादनेन च वध्यन्तेऽतस्तान्येव तद्दंष्ट्राः। चत्वारो भुजाः अर्थादानकर्तारो यस्य सः। तथा हि प्रजाभ्यः सामन्तेभ्यश्च करादानं, अनृतादर्थिनोऽर्थ्यमानद्रव्याद् द्विगुणधनादानं, अनृतात्प्रत्यर्थिनस्तत्समं द्रव्यादानं, धनवतः कदर्याद्विप्रात्सर्वस्वादानं चेति । आवेदनं, भाषा, संप्रतिपत्तिः, मिथ्योत्तरं, कारणोत्तरं, प्राङ्न्यायः, प्रतिभूः, क्रियाफलसिद्धिश्चेत्यष्टौ पादाः। एतैर्हि निमित्तैर्दण्डश्चरति नान्यथेत्येतेषां पादत्वम्। तत्र आवेदनं—अर्थिना सभ्यान्प्रति गत्वा, देवदत्तो मदीयं शतं सुवर्णानां अमुकस्मिन्देशे काले साक्षिणि च गृहीत्वा, न ददातीति तद्धस्तेन लेखनम्। पुनरपि प्रत्यर्थिनमाहूय तत्समक्षं तथैव लेखनं भाषा। तत्र प्रत्यर्थिनाऽहमेतस्य धारयामीत्युक्ते न कस्यापि दण्ड इति। तदिदं संप्रतिपत्तिरूपमुत्तरं न दण्डपादत्वेन गण्यते। नाऽहमेतस्य धारयामीति मिथ्योत्तरम्। मया गृहीतमासीत्तत्पुनः परावृत्य दत्तमिति कारणोत्तरम्। अस्मिन्नर्थेऽनेन पूर्वमहमभियुक्तस्तत्र पराजितो मयेति प्राङ्न्यायोत्तरम्। त्रिविधेऽप्यस्मिन्नुत्तरे अर्थिप्रत्यर्थिभ्यां प्रतिभूर्देयः, अहमेतस्मिन्पराजित इदं द्रव्यं दास्यामीति। क्रिया स्वमतसाधकानां साक्षिपत्रभोगशपथादीनां प्रदर्शनम्। ततोऽन्यवने तस्य जय इति। अष्टभ्यः पादेभ्योऽनन्तरं अपराधी दण्ड्यते, इत्येते दण्डस्य पादाः। यदाह याज्ञवल्क्यः—'निह्नवे भावितं दद्याद्धनं राज्ञे च तत्समम्। मिथ्याभियोगी द्विगुणमभियोगाद्धनं वहेत्' इति ॥ (यास्मृ. २।११) नैकनयनः नैकानि बहूनि नयनस्थानीयानि राजाऽमात्यपुरोहितपर्षदाख्यानि दर्शनसाधनानि यस्मिन्। **नीटी.**

दण्डप्रशंसा। व्यवहारोत्पत्तिः

**असिर्विशसनो धर्मस्तीक्ष्णवर्मा दुराधरः ।**
**श्रीगर्भो विजयः शास्ता व्यवहारः सनातनः ॥**
**शास्त्रं ब्राह्मणमन्त्राश्च शास्ता प्राग्वदतां वरः ।**
**धर्मपालोऽक्षरो देवः सत्यगो नित्यगोऽग्रजः ॥**
**असङ्गो रुद्रतनयो मनुर्ज्येष्ठः शिवङ्करः ।**
**नामान्येतानि दण्डस्य कीर्तितानि युधिष्ठिर ॥**
**ईश्वरः पुरुषः प्राणः सत्त्वं चित्तं प्रजापतिः ।**
**भूतात्मा जीव इत्येवं नामभिः प्रोच्यतेऽष्टभिः ॥**
**भर्तृप्रत्यय उत्पन्नो व्यवहारस्तथाऽपरः ।**
**तस्माद्यः सहितो दृष्टो भर्तृप्रत्ययलक्षणः ॥**
**व्यवहारस्तु वेदात्मा वेदप्रत्यय उच्यते ।**
**मौलश्च नरशार्दूल शास्त्रोक्तश्च तथाऽपरः ॥**
**उक्तो यश्चापि दण्डोऽसौ भर्तृप्रत्ययलक्षणः ।**
**ज्ञेयो नः स नरेन्द्रस्थो दण्डः प्रत्यय एव च ॥**
**दण्डप्रत्ययदृष्टोऽपि व्यवहारात्मकः स्मृतः ।**

---

(१) **सवि.**५१, ४५०. विष्णुसंहितायां नोपलभ्यते।
(२) **भा.**१२।१२१।८-११. (३) **भा.**१२।१२१।१४-१६.

(१) **भा.**१२।१२१।२०-२२. (२) **भा.**१२।१२१।४१.
(३) **भा.**१२।१२१।५०-६०.

व्यवहारः स्मृतो यश्च स वेदविषयात्मकः ॥
यश्च वेदप्रसूतात्मा स धर्मो गुणदर्शनः ।
धर्मप्रत्यय उद्दिष्टो यथाधर्मं कृतात्मभिः ॥
व्यवहारः प्रजागोप्ता ब्रह्मदिष्टो युधिष्ठिर ।
त्रीन् धारयति लोकान्वै सत्यात्मा भूतिवर्धनः ॥
यश्च दण्डः स दृष्टो नो व्यवहारः सनातनः ।
व्यवहारश्च दृष्टो यः स वेद इति निश्चितम् ॥
यश्च वेदः स वै धर्मो यश्च धर्मः स सत्पथः ।
ब्रह्मा पितामहः पूर्वं बभूवाथ प्रजापतिः ॥
लोकानां स हि सर्वेषां ससुरासुररक्षसाम् ।
स मनुष्योरगवतां कर्ता चैव स भूतकृत् ॥
ततो नो व्यवहारोऽयं भर्तृप्रत्ययलक्षणः ।
तस्मादिदमथोवाच व्यवहारनिदर्शनम् ॥
माता पिता च भ्राता च भार्या चैव पुरोहितः ।
नादण्ड्यो विद्यते राज्ञो यः स्वधर्मेण तिष्ठति ॥

भर्तृप्रत्ययः भर्तारौ द्वौ विवदमानौ प्रत्ययः कारणं यस्य सः, तथा वादिप्रतिवादिभ्यां प्रवर्तितो व्यवहारः तयोरन्यतरस्य प्रत्ययोऽभ्युपगमो लक्षणं यस्य स भर्तृप्रत्ययलक्षणः । अन्यतरपराजयादित्यर्थः । सहितो हितं इष्टं तेन युक्तः सहितः । अन्यतरजयावह इत्यर्थः ॥ वेदात्मा वेदोक्तो दोषः पारदार्यादिः तन्निवृत्त्यर्थं पर्षदं प्रति गतश्चेत्तत्र प्रायश्चित्तात्मको वेदहेतुक एव दण्डः । मौलः कुलाचारप्रयुक्तो यो व्यवहारस्तत्रापि शास्त्रोक्तो दण्डः । यथा शूद्रस्य सुरापाने प्रायश्चित्तं नास्ति अथापि कस्मिंश्चिच्छूद्रकुले एवं नियमो 'योऽस्माकं मध्ये सुरां पिबति स ज्ञातिबाह्य इति' तस्योल्लङ्घने शूद्रस्य सुरापानोक्तं प्रायश्चित्तं भवति, तथा च शास्त्रविदामनुक्रमणं धर्मज्ञानां समयः प्रमाणं वेदाश्चेति ॥ तेषां त्रयाणां दण्डानां मध्ये आद्यः क्षत्रियाधीन इत्याह—उक्त इति । नः अस्माभिः क्षत्रियैर्दण्डोऽपि ज्ञेयः तत्र प्रत्ययोऽपि ज्ञेयः ॥ अस्यापि वेदमूलत्वमाह—दण्ड इति । विविधोऽवहारः अन्योन्यं परपक्षक्षेपेण स्वपक्षसाधनं व्यवहारः तदात्मको न्यायः स यद्यपि दण्डः प्रत्ययदृष्टस्तथापि स व्यवहारपदार्थो मन्वादिभिः स्मृतोऽस्ति अतः सोऽपि वैदिकप्रणीतत्वाद्वेदविषयात्मको वेदार्थगोचरोऽस्तीत्यर्थः ॥ इतरौ द्वौ व्यवहारौ वेदमूलत्वाद्धर्मरूपावित्याह—यश्चेति द्वाभ्याम् । यथाधर्मं उद्दिष्टः मम पारदार्यजेनाधर्मेण धर्मलोपो मा भूदिति पश्चात्तापवति उद्दिष्टः प्रायश्चित्तरूपो दण्डो धर्म एवेत्यर्थः ॥ प्रजागोप्ता प्रजाकृतस्य नियमस्य रक्षिता, शूद्रस्यापि सुरापानप्रायश्चित्तादिरूपः सोऽपि धर्म एवेत्यर्थः ॥ दण्डव्यवहारधर्मवेदसत्पथप्रजापतीनामैकात्म्यमाह द्वाभ्यां—य इति ॥ यतः प्रजापतिर्भूतकृत् ततो हेतोः अयमस्मदीयो भर्तृप्रत्ययलक्षणो व्यवहारः प्रवृत्तस्तस्मादस्मिन्विषये स इदं निदर्शनं वाक्यं उवाच ॥ तदेव वाक्यं पठति—मातेति । यो राजा स्वधर्मेण तिष्ठति तस्य राज्ञ इति संबन्धः ॥ नीटी.

## नारदः

व्यवहारोत्पत्तिस्तत्प्रयोजनं च

लोकसंरक्षणार्थाय धर्मसंस्थापनाय च ।
राज्ञां दोषहरश्चैव व्यवहारः प्रकीर्तितः ॥
मनुः[2] प्रजापतिर्यस्मिन् काले राज्यमबूभुजत् ।
धर्मैकतानाः पुरुषास्तदासन् सत्यवादिनः ॥
धर्मैकतानाः[3] पुरुषा यदासन् सत्यवादिनः ।
तदा न व्यवहारोऽभून्न द्वेषो नापि मत्सरः ॥

(१) तत्र धर्मः श्रुतिस्मृत्युदितः शिष्टाचारलक्षणश्च । धर्मः एकतानः येषां ते धर्मैकतानाः । तानशब्दो बलवाची प्रधानवाची च । तेन धर्मैकबला धर्मैकप्रधानाश्च पुरुषा यदासन् इति यदा अभवन्, तदा न व्यवहारोऽभून्न द्वेषो नाऽपि मत्सरः । तस्मिन्काले एषां त्रयाणामपि असंभवहेतुः अयमेव प्रथमः । धर्मस्य व्यवहारद्वेषमत्सरैः सह छायातपविरोधः, यत्रातपस्तत्र न छाया, यत्र छाया तत्र नातपः । यदा धर्मस्तदा न व्यवहारद्वेषमत्सराः । यदा पुनरिमे तदा न धर्म इत्येतदर्थमेवेदमभिहितं भगवता नारदेन । *अभा. २

---

* व्यनि. अभागतम् ।

(१) Vulg. **नास्मृ**.१।१ इत्यस्य प्रागयं श्लोकः।

(२) **नासं**.१।१; **पमा**.७; **व्यनि**.(मनुप्रजापतौ यस्मिन्काले राज्यं प्रशासति); **व्यप्र**.४; **व्यउ**.३; **प्रका**.१; **समु**.२. कल्याणभट्टीये 'असहायभाष्ये' नायं श्लोकः समुपलभ्यते।

(३) **नास्मृ**.१।१; **अभा**.२ द्वेषो (क्रोधो); **विश्व**.२।१९; **व्यमा**.२७८; **स्मृच**.१; **पमा**.७ उत्त.; **व्यचि**.१ नापि (न च); **व्यनि**. उत्त.; **व्यप्र**.४ उत्त.; **व्यउ**.३ उत्त.; **प्रका**.१उत्त.; **समु**.२. कल्याणभट्टीये 'असहायभाष्ये' अयमाद्यः श्लोकः।

(२) अधर्मप्राधान्यं व्यवहारेष्वित्यर्थः। विश्व.२।१९

(३) सत्यादिषु युगेषु यदा पुरुषा आसन् तदा व्यवहारो विवादो न भूतः। व्यमा. २७८

**नष्टे धर्मे मनुष्याणां व्यवहारः प्रवर्तते।**
**द्रष्टा च व्यवहाराणां राजा दण्डधरः स्मृतः॥**

(१) अत्र युगसामर्थ्यात् नष्टे धर्मे मनुष्याणां धर्मस्य प्रतिपक्षे प्रबलीभूते, रविचन्द्राऽनलोद्योताऽभावे बहलतमोराशिरिव, व्यवहारः प्रवृत्तः। द्वेषमत्सरावपि तथैव, इति प्रकटार्थमिदमेकं व्याख्यानम्। पूर्वपक्षप्रायं चैतत्। यतो मुनिमतान्तर्गतभावार्थसिद्धान्तव्याख्यानं द्वितीयमिदम्—नष्टे धर्मे मनुष्याणां तस्यैव धर्मस्याऽभ्युद्धरणार्थं व्यवहारः प्रवर्तितः प्रजापतिना। न धर्मप्रतिपक्षभूतः। तथा हि कामक्रोधलोभान्धयोर्वादिप्रतिवादिनोरितरेतरप्रणिधानरूपं बुध्यतोर्यदा राज्ञा धर्माधिकरणसहितेन स्वयमग्रतः समुपवेशितविनीतवेषयोस्तयोरेकः परिमिताक्षरां साध्यार्थमात्रां अष्टभाषादोषविरहितां आदेयभाषां कार्यते। द्वितीयोऽपि परिमिताक्षरमेव पूर्वपक्षार्थबद्धं अनाकुलं असंकीर्णं चोत्तरं दाप्यते। तदनन्तरं च द्वितीयपादे यथासंभवावसरप्राप्तसाक्षिलिखितदिव्यैः प्रमाणैर्निजपरीक्षापरिशुद्धैः यः सत्यं प्रतिष्ठते, स जयपत्रं लभते। यः पुनरसत्यः कूटः शठः, स दद्याद्द्विगुणं दण्डं पणं धनमुपक्षयं चेति। एवमेतन्मुनिमतान्तर्गतभावार्थसिद्धान्तव्याख्यानमिदं द्वितीयमुक्तम्। एवमनेनार्थेन, नष्टे धर्मे मनुष्याणां धर्मस्यैवाऽभ्युद्धरणार्थं व्यवहारः प्रवर्तितः, न तु प्रतिपक्षभूतः, इति प्रतिपादितमिदम्। यथोक्तं 'राजा दण्डधरः स्मृतः' तदप्येतदर्थमेव। उक्तं च 'दुर्बलानामनाथानां बालवृद्धतपस्विनाम्। अनार्यैः परिभूतानां सर्वेषां पार्थिवो गतिः'॥ दण्डधरश्चैतदर्थम्। यतः— 'यदि नैताः प्रजा राजा दण्डेनातोद्य पालयेत्। ततोऽन्योन्यमभिघ्नन्त्यो विनश्येयुः परस्परम्॥ सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः। दण्डस्य हि भयात्सर्वं जगद्भोगाय कल्पते॥ अपि भ्राता सुतो वाऽपि श्वशुरो मातुलोऽपि वा। नाऽदण्ड्यो नाम राज्ञोऽस्ति धर्माद्विचलितः स्वकात्' इति॥ अभा. ३

(२) संप्रति तु कलौ युगे यथा तदाह— 'धर्मे नष्टे' इति। नष्टे पराजयिनि, यस्माद्राज्ञा स्वधर्मरक्षणार्थं दण्डः कार्यस्तस्मात् स्वयमेव वादिप्रतिवादिनोरन्यतरस्य न्यायान्यायं च (न्यायमन्यायं च) निरूपयितुं युक्तमिति कृत्वा दण्डधर इत्युक्तम्। व्यमा. २७८

(३) कलियुगे कालदोषान्मनुष्याणां अधर्मप्राधान्यात् तन्निबन्धनाऽन्यायनिवृत्त्यर्थं मन्वादिभिः शिष्टैः व्यवहारादिन्यायः प्रवर्तितः प्रदर्शितः। तस्य न्यायस्य द्रष्टा अन्यायद्रष्टॄणां च दण्डयिता मन्वादिभिः राजा कृतः। व्यनि.

(४) अन्यायप्रवृत्तानां दण्डस्य धारयिता, सामर्थ्यात् स्वधर्मस्थानामनुग्राहकश्च कृतः। *नाभा.१।२

## बृहस्पतिः

व्यवहारोत्पत्तिः

**धर्मप्रधानाः पुरुषाः पूर्वमासन्नहिंसकाः।**
**लोभद्वेषाभिभूतानां व्यवहारः प्रकीर्तितः॥**
**द्विपदो व्यवहारः स्याद्धनहिंसासमुद्भवः।**
**द्विसप्तकोऽर्थमूलस्तु हिंसामूलश्चतुर्विधः॥**
**हिंसां वा कुरुते कश्चिद्देयं वा न प्रयच्छति।**
**द्वे हि स्थाने विवादस्य तयोर्बहुतरा गतिः॥**
**प्रयच्छेच्चेत् भृतिं स्वामी भृत्यानां कर्म कुर्वताम्।**

(१) **नासं.**१।२ ष्याणां (ष्येषु) वर्तते (कल्पितः) स्मृ(कृ); **नास्मृ.**१।२; **अभा.**३ द्रष्टा (स्रष्टा); **विश्व.**२।१९ ष्याणां (ष्येषु) र्तते (र्तितः) स्मृ (कृ); **व्यमा.**२७८ (धर्मे नष्टे मनुष्याणां राजा दण्डधरः स्मृतः) एतावदेव; **स्मृच.**१ वर्तते (कीर्तितः) पू.; **पमा.**७ ष्याणां (ष्येषु) पू.; **व्यचि.**१ वर्त (कीर्त्य) स्मृतः (स्वयं); **व्यनि.** पूर्वार्धं विश्ववत्, (द्रष्टा च तस्य न्यायस्य राजा कारयिता कृतः); **नृप्र.**२ उत्त.; **व्यप्र.** ४ पमावत्, पू.; **व्यउ.**३ पमावत्, पू.; **विता.**३१ पमावत्, पू.; **प्रका.**१ पूर्वार्धं विश्ववत्, (द्रष्टा च तस्य न्यायस्य राजा धारयिता कृतः); **समु.**३ पूर्वार्धं स्मृचवत्, उत्तरार्धं प्रकावत्.

*शेषं व्यनिगतम्।

(१) **स्मृच.**१; **पमा.**७ प्रकी (प्रव); **व्यप्र.**४ कीर्तितः (वर्तते); **व्यउ.**३ व्यप्रवत्; **प्रका.**१; **समु.**२.

(२) **व्यमा.**२८७ रः स्यात् (रश्च) को (धा) लस्तु (लश्च); **पमा.**२०; **समु.**४; **विव्य.**२ को (धा).

(३) **स्मृच.**२; **प्रका.**२; **समु.**२. (४) **स्मृच.**१; **प्रका.**२; **समु.**३.

**न कुर्वन्ति प्रभृत्याश्चेत्तत्र वादः प्रवर्तते ॥**

## कात्यायनः

व्यवहारलक्षणम्

**[1]शिष्यं क्रोधेन हन्याच्चेदाचार्यो लतया विना ।**
**येनात्यन्तं भवेत्पीडा वादः स्याच्छिष्यतः पितुः ॥**
**[2]प्रयत्नसाध्ये विच्छिन्ने धर्माख्ये न्यायविस्तरे ।**
**साध्यमूलस्तु यो वादो व्यवहारः स उच्यते ॥**

(१) धर्ममाख्यातीति धर्माख्यः। न्यायविस्तारो न्यायप्रपञ्चः। तस्मिन्विच्छिन्ने प्रतिवादिना विलोपिते। ततश्च लिखितसाक्ष्यादिप्रमाणोपन्यासरूपप्रयत्नसाध्ये सति यो वादिनोर्वादः स व्यवहार इति । अप.२।१

(२) सत्यभाषणाहिंसननिष्ठत्वादिप्रयत्नसाध्ये धर्माख्ये पदार्थे लोभद्वेषादिवशात् विच्छिन्ने सति यत्र ऋणादानादौ स्वधनप्राप्त्यर्थं समयधर्मादौ च परधर्मवर्जनार्थं न्यायविस्तरणं क्रियते तत्र साध्यमूलो यो मनुष्याणां विवादः स व्यवहार इत्युच्यत इति । *स्मृच.१

(३) तत्र रूढिः कात्यायनेन निरूपिता । न्यायः शिष्टसंप्रतिपन्नं लौकिकमाचरणं तस्य विस्तरः 'इदं मदीयं धनमन्येनापहृतम्' 'तत् क्षेत्रधनादिकं एतस्य युक्तं नान्यस्य' इत्युपपत्तिपुरःसरो निर्णयः। तस्मिन् न्यायविस्तरे विषयीभूते सति । तत्प्रवर्तकोऽर्थिप्रत्यर्थिनोर्यो विवादः स व्यवहार उच्यते । 'मदीयं धनमन्येनापहृतं तत्पुनर्मया साधनीयम्' इत्यर्थी यदुद्दिश्य प्रवर्तते तद्धनं साध्यम्। तच्च मूलं यस्य विवादस्य सोऽयं साध्यमूलः। अयं च कदा संपद्यत इत्यपेक्षायामुक्तम्— 'प्रयत्नसाध्ये विच्छिन्ने' इत्यादि। 'सत्यं ब्रूयात् प्रियं ब्रूयान्न स्तेनः स्यान्न वार्धुषिः'। इत्यादिविधिनिषेधावुपलभ्य विहितानुष्ठाने प्रतिषिद्धवर्जने चोत्पन्न उत्साहः प्रयत्नस्तेन साध्यो धर्मनामकः पदार्थो यदा विच्छिन्नो भवति तदानीमयं विवाद उपपद्यते। असति तु धर्मविच्छेदे नास्ति व्यवहारस्यावकाशः । अत एव नारदः— 'मनुः प्रजापतिः' इति, 'तदा न व्यवहारोऽभूत्' इति। बृहस्पतिस्तु द्वेषलोभादिदुष्टस्यैव व्यवहारकर्तृत्वमाह— 'धर्मप्रधानाः पुरुषाः पूर्वमासन्नहिंसकाः । लोभद्वेषाभिभूतानां व्यवहारः प्रवर्तितः' इति ॥ तस्माद्धर्मे विच्छिन्ने सति साध्यमूलो न्यायनिर्णयफलो विवादो व्यवहारशब्देन रूढ्याऽभिधीयते । पमा.६–७

(४) एतच्च व्यवहारहेतुव्यवहारस्वरूपोक्तिपरतया माधवीयपारिजातादिष्वेवं व्याख्यातम् । विहिताचरणनिषिद्धवर्जनादिप्रयत्नसाध्ये धर्माख्ये वस्तुनि विच्छिन्ने विप्लुते सतीति व्यवहारहेतुरुक्तः। धर्माधर्मविप्लवस्यैव व्यवहारहेतुत्वात्

मदनरत्ने तु न्यायः प्रमाणं तस्य विस्तरः प्रवृत्तिर्यस्मिन् विषय इति। साध्यमूल इत्यादि तुल्यम् ।

मदनरत्नरत्नाकरस्मृतिचन्द्रिकाकल्पतरुकारैः सर्वमेवेदं वचनं व्यवहारस्वरूपपरतयापि व्याख्यातमित्थम्—प्रयत्नसाध्ये कष्टसाध्ये पराभिभवेन स्वेच्छया भोक्तुमशक्ये गृहक्षेत्रादौ सति, न्यायः प्रमाणं, विस्तार्यते प्रपञ्च्यते यस्मिन् तस्मिन् धर्माधिकरणे सदसि, साध्यमूल इत्यादि पूर्ववत्। तेनापि प्रागुक्तमेव विवक्षितमतस्तत्रत्यपदकृत्ये नातीव यतितव्यम् ।

वयं तु सर्वसप्तम्यन्तसामानाधिकरण्येन व्याचक्ष्महे । विहितानुष्ठानादिगोचरप्रयत्नसाध्ये धर्माख्ये न्यायविस्तरे, नीयते अर्थोऽनेनेति न्यायः प्रमाणं श्रुतिस्मृत्यादि, विस्तार्यते प्रवर्ततेऽस्मिन् श्रुत्यादिप्रमेय इत्यर्थः । विच्छिन्ने विविधच्छिन्ने प्रमाणापरिज्ञानतात्पर्यानवधारणादिना दुर्ज्ञेये सति । यद्वा धर्म आख्यायतेऽनेनेति धर्माख्यो धर्मप्रतिपादक इति यावत्। न्यायविस्तरे प्रमाणसमूहे श्रुतिस्मृत्यादौ प्रमादादिना विच्छिन्ने लुप्तप्राये सति । साध्यमूल इत्यादि गतार्थमिति । *व्यप्र.३–४

व्यवहारपदनिरुक्तिः

**वि[1] नानाथऽव संदेहे हरणं हार उच्यते ।**
**नानासंदेहहरणाद्व्यवहार इति स्मृतः ॥**

---

*सवि. (पृ. ४७) स्मृचवत्। व्यवहारप्रकाशे व्यवहारोद्योते च यः स्मृतिचन्द्रिकानुवादः स स्मृतिचन्द्रिकायां नोपलभ्यते ।

(१) **स्मृच**.१; **प्रका**.१; **समु**.३ न्तं (र्थं).

(२) अप.२।१ लस्तु (लोऽत्र); **व्यक**.१६; **स्मृच**.१; **पमा**.६; **नृप्र**.१; **व्यसौ**.११; **व्यप्र**.३; **व्यउ**.२; **प्रका**.१. **समु**.३.

*व्यवहारोद्योते परमतानुवादः व्यप्रवत्।

(१) **व्यमा**.२८३ स्मृतः (स्थितिः); **व्यक**.१६; **ममु**.८।१; **पमा**.७; **दीक**.३१; **व्यचि**.७; **व्यनि**.; **स्मृचि**.१ संदेहे (संदेहो); **नृप्र**.१; **व्यत**.१९८ व्यमावत्; **मच**.८।१ इति

(१) ऋणादानाद्यष्टादशविवादे विरुद्धार्थार्थिप्रत्यर्थिवाक्यजनितसंदेहहारी विचार एव व्यवहारः। तदाह कात्यायनः— 'वि नानार्थेव' इत्यादि। ममु.८।१

(२) व्यवहारशब्दस्य यौगिकमर्थं कात्यायन आह— 'वि नानार्थेव' इत्यादि। व्यवहार इत्यत्र 'वि'शब्दो नानेत्यस्मिन्नर्थ वर्तते। 'अव'शब्दश्च संदेहे वर्तते। तानेतानेवंविधानेकसंदेहहारिणो व्यवहारानर्थ्यादिगतरागद्वेषवशात् प्राप्तान् राजा सम्यग् विचारयेत्। तद्विचारश्च राज्ञो गुणधर्मरूप आचारः। पमा.७–८

(३) नानाविवादविषयः संशयो ऽह्रियतेऽनेन इति व्यवहारः। भाषोत्तरक्रियानिर्णायकत्वं व्यवहारत्वम्। व्यत.१९८

व्यवहारोत्पत्तिः [ वृक्षरूपकम् ]

**[१]साध्यं वादस्य मूलं स्याद्वादिना यन्निवेदितम्।**
**देयाप्रदानं हिंसा चाभ्युत्थानद्वयमुच्यते ॥**
**धर्मशास्त्रार्थशास्त्रे तु स्कन्धद्वयमुदाहृतम्।**
**जयश्चैवावसायश्च द्वे फले समुदाहृते ॥**

अवसायः पराजयः। स्मृच.१३

## हारीतः

व्यवहारलक्षणम्

**[३]स्वधनस्य यथा प्राप्तिः परधर्मस्य वर्जनम्।**
**न्यायेन यत्र क्रियते व्यवहारः स उच्यते ॥**

(१) धनापह्नवविवादः, पाषण्डादीनां स्वधर्मव्यत्ययविवादोऽपि व्यवहार इत्यर्थः। न चैवं चौर्यपारुष्यादिविवादो न व्यवहार इति शङ्कनीयम्। स्मृच.१

(२) न्यायेन प्रमाणेन। व्यप्र.५

व्यवहारस्वरूपम् [ वृक्षरूपकम् ]

**[४]एकमूलो द्विरुत्थानो द्विस्कन्धो द्विफलस्तथा।**

स्मृतः (स उच्यते); **व्यसौ**.११; **वीमि**.२।१; **व्यप्र**.५; **व्यउ**.३; **बाल**.२।१; **प्रका**.२ कार्ष्णाजिनिः; **समु**.३; **विव्य**.२ उक्त.

(१) **स्मृच**.१३; **प्रका**.४ भ्यु (प्यु); **समु**.४ दानं (धानं) भ्यु (प्यु). (२) **स्मृच**.१३; **प्रका**.४; **समु**.४.

(३) **स्मृच**.१; **पमा**.७ धन(धर्म)यत्र क्रियते (क्रियते यत्तु); **व्यप्र**.५ धन (धर्म) यत्र क्रियते (क्रियते तत्तु); **प्रका**.१; **समु**.३ यत्र क्रियते (क्रियते यत्र).

(४) **स्मृच**.१३; **प्रका**.४; **समु**.४.

## शुक्रनीतिः

व्यवहारलक्षणम्

**[१]स्वप्रजाधर्मसंस्थानं सदसत्प्रविचारतः।**
**जायते चार्थसंसिद्धिर्व्यवहारस्तु येन सः ॥**

## संग्रहकारः

व्यवहारलक्षणम्

**[२]परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु।**
**वाक्यन्यायाद्व्यवस्थानं व्यवहार उदाहृतः ॥**

निबन्धकाराणां व्यवहारलक्षणम्

(१) व्यवहारश्चात्र वादिप्रतिवादिनोरितरेतराशनोद्धाराय वृत्तिरुच्यते। अथवा ऋणादानादयः पदार्था एव विप्रतिपत्तिविषयाः सन्तो विचारगोचरसमर्थतया कर्तव्या इति। मेधा.८।१

(२)अन्यविरोधेन स्वात्मसंबन्धितया कथनं व्यवहारः। यथा, कश्चिदिदं क्षेत्रादि मदीयमिति कथयति, अन्योऽपि तद्विरोधेन मदीयमिति।

धर्मशास्त्रसमयाचारविरुद्धेन मार्गेण परैराधर्षितोऽभिभूतो यद्राज्ञे प्राड्विवाकाय वा आवेदयति विज्ञापयति चेद्यदि तदा आवेद्यमानं व्यवहारपदं प्रतिज्ञोत्तरसंशयहेतुपरामर्शप्रमाणनिर्णयप्रयोजनात्मको व्यवहारस्तस्य पदं विषयः, तस्य चेदं सामान्यलक्षणम्। मिता.२।१,२।५

(३) यद्यपि सभ्यसभापतिव्यापारोऽपि व्यवहारशब्देनोच्यते— 'चतुष्पाद्व्यवहारोऽयं विवादेषूपदिश्यते' इत्यत्र भाषोत्तरप्रमाणनिर्णयात्मकाश्चत्वारो व्यवहारपादा वक्ष्यन्ते। तत्र निर्णयपादः सभ्यसभापतिव्यवहार इति प्रसिद्धम्। तथाऽपि नृपं प्रति द्रष्टव्यतया वादिप्रतिवादिव्यापार एव [शक्यो विधातुं,नृपव्यापारस्तु न द्रष्टव्यः किंतु कार्यः। तस्मादत्र व्यवहारशब्देन वादिप्रतिवादिव्यापार एव] वक्तव्यः। अथवा निर्णयपादोऽपि सभ्यकर्तृको भवति नृपस्य परीक्षकतया दृश्य इति पादचतुष्टयाभिप्रायेणापि व्यवहारपदव्याख्यानं नायुक्तम्। अप.२।१

(४) ऋणादानाद्यष्टादशविवादे विरुद्धार्थार्थिप्रत्यर्थिवाक्यजनितसंदेहहारी विचार एव व्यवहारः। ममु.८।१

(१) **शुनी**.४।५०५. (२) **मिता**.२।८; **स्मृच**.१३ वाक्यन्यायात् (वाक्यान्याय); **स्मृचि**.१ (=) स्मृचवत्; **व्यप्र**.४४; **विता**.५१ नारदः; **प्रका**.४ स्मृचवत्; **समु**.३ स्मृचवत्.

(५) अत्र (यास्मृ. २।१) व्यवहारशब्दो रूढियोगाभ्यां निर्णयफलकमर्थिप्रत्यर्थिविवादमाचष्टे। पमा.६

(६) भाषोत्तरक्रियानिर्णायकत्वं व्यवहारत्वम्। व्यत.१९८

(७) अष्टादशविधविषयाणां अन्यतमविषयको विवादो व्यवहारः। सवि.४७

(८) अथ कोऽयं व्यवहारः। प्रमाणतर्कोपष्टब्धः पक्षप्रतिपक्षपरिग्रह इति चेत्, न। वादादेरपि तत्त्वापत्तेः। लिखितादिप्रमाणविशेषः परिगृह्यत इति चेत्, न। तत्रापि तत्प्रवृत्त्यविरोधात्। अनुमानाद्यबहिर्भावाच्च तेषामव्यावर्तकत्वात्। अत एवान्यविरोधेन स्वसंबन्धितया कथनमित्यपि परास्तम्। प्रमाणान्तर्भावेण स्वरूपनिरूपणानौचित्याच्च। कथनादेर्व्यवहारपदवाच्यत्वे 'व्यवहारान्नृपः पश्येत्' इत्याद्यनन्वयाच्च।

उच्यते। ऋणादानादिलौकिककार्थविषया कथैव व्यवहारः। कथाव्यपदेशाभावस्तु शास्त्रीयपदार्थाविषयकत्वात्। अधिकरणादिव्यपदेशो यथा वैदिकार्थविषयककथायां तथात्र व्यवहारव्यपदेशः। अत एव यथायथं हेत्वाभासनिग्रहस्थानादियोजनमपि युक्तम्। तच्च तत्र तत्र प्रदर्शयिष्यते। चतुष्पात्त्वमपि तस्य तदविरोधि एव इत्यपि उपपादयिष्यते। यत्तु गोपालेन तत्त्वनिर्णिनीषुकथात्वाद्वादत्वमेव अस्य इति मिश्रमतत्वेनोपन्यस्य जयभङ्गफलकत्वात् स्थापनावसानत्वाच्च जल्प एवायमिति तन्निरस्तम्, तत् द्वयमप्ययुक्तम्। शङ्कातत्त्वाभियोगभेदेन उभयरूपत्वस्यैव युक्तत्वात्। वैतण्डिकस्य व्यवहारायोग्यत्वादस्य वितण्डात्वं परं असंभवि। अन्यविरोधेन स्वसंबन्धितया कथनमिति विज्ञानयोगिवचोऽप्येवं सति नायुक्तम्। न च पश्येदित्यनन्वयः। निर्णयार्थकथनतया सर्वनिबन्धृभिस्तद्व्याख्यानात्। 'स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः। आवेदयति चेद्राज्ञे व्यवहारपदं हि तत्' ॥ (यास्मृ. २।५) इति याज्ञवल्क्यवचनं यद्यपि व्यवहारपदान्यृणादानादीनि सामान्येन लक्षयति तथापि व्यवहारसामान्यलक्षणमपि समानसंवित्संवेद्यतया ततः प्रतीयते। तस्य ह्ययमर्थः। स्मृत्याचारादिधर्मप्रमाणातिक्रान्तरीत्यान्यैरभिभूतः पुरुषो राजादिभ्यो व्यवहारदर्शिभ्यो यद्यावेदयति तर्हि तदावेद्यमानं चतुष्पाद्व्यवहारस्य पदं विषयः। हीति। प्रसिद्धमृणादानादि लक्ष्यत्वेन मन्वाद्युक्तमुपक्षिप्तमिति। एवञ्चाधर्षितस्यार्थित्वमाधर्षकस्य प्रत्यर्थित्वं तयोर्विवादश्च व्यवहार इति प्रतीयते। इदमेव च मिताक्षरायामन्यविरोधेनेत्यादिना निष्कृष्टमुक्तम्। अन्यविरोधेनेत्यनुक्ते प्रश्नोत्तरादिरूपेण स्वसंबन्धिकथनमपि व्यवहारः स्यात्। स्वसंबन्धितयेत्यनुक्ते एकसंबन्धितया साक्षिणां कथनमन्यविरोधि भवत्येवेत्यस्याप्यर्थित्वापत्तिरतः स्वसंबन्धितयेति। इदं चोत्तरचतुष्टयेऽप्यनुगतम्। न च संप्रतिपत्तावव्याप्तिः। तत्रापि साध्यतया वादिना निर्दिष्टस्य सिद्धतया निर्देशे तद्विरोधपर्यवसानात्। अन्यथोत्तरत्वभङ्गप्रसङ्गात्। यत्रापि द्वावपि भाषावादिनौ तत्रापि परस्परविरोधावश्यम्भावान्नाव्याप्तिः। इदं चाग्रे व्यक्तीभविष्यति। व्यप्र. २-३

(९) विप्रतिपद्यमाननरान्तरगताऽज्ञाताऽधर्मज्ञापनानुकूलो व्यापारो व्यवहारः। वादिप्रतिवादिकर्तृकः संभवद्बोगसाक्षिप्रमाणको विरोधिकोटिव्यवस्थापनानुकूलो वा व्यापारः सः। संप्रतिप्रत्युत्तरे तु व्यवहारपदप्रयोगो भाक्त इति मदनरत्ने। वादवितण्डादिव्यावृत्त्यर्थमुत्तरदलम्। व्यम.१

---

## व्यवहारसंबन्धिविविधविभागसंकलनम्।

व्यवहारपदानि। अष्टादशपदावान्तरभेदाः। सोत्तरानुत्तरव्यवहारौ। व्यवहारपादाः। व्यवहारनिर्णयपादाः। सामादय उपायाः। वर्णाश्रमहितकारी व्यवहारः। व्यवहारसंबन्धिजनाः। व्यवहारफलानि। व्यवहारस्य अष्टाङ्गानि। व्यवहारयोनित्रयम्। अभियोगो द्विधा। व्यवहारपक्षद्वयम्। भूतानुसारी छलानुसारी च व्यवहारः।

### कौटिलीयमर्थशास्त्रम्

व्यवहारपदानि

**१ व्यवहारस्थापना। २ विवादपदनिबन्धः। ३ विवाहसंयुक्तम्। ४ दायविभागः। ५ वास्तुकम्। ६ समयस्यानपाकर्म। ७ ऋणादानम्। ८ औपनिधिकम्। ९ दासकर्मकरकल्पः। १० संभूयसमुत्थानम्। ११ विक्रीतक्रीतानुशयः।**

(१) कौ. १।१.

**१२ दत्तस्यानपाकर्म। १३ अस्वामिविक्रयः। १४ स्वस्वामिसंबन्धः। १५ साहसम्। १६ वाक्पारुष्यम्। १७ दण्डपारुष्यम्। १८ द्यूतसमाह्वयम्। १९ प्रकीर्णकानि। इति धर्मस्थीयं तृतीयमधिकरणम्।**

१ अथ धर्मस्थीयं तृतीयमधिकरणम्। धर्मस्था नाम धर्मशास्त्रज्ञाः धर्मशास्त्रानुसारेण व्यहारनिर्णयकर्मण्यधिकृताः। तेषामिदं धर्मस्थीयं तन्निर्णेयव्यवहारपदप्रतिपादकमित्यर्थः। तत्र प्रथमं सूत्रम्—व्यवहारस्थापना इति। कीदृशो व्यवहारः सिध्यति कीदृशो न सिध्यतीति व्यवस्थापनमिति सूत्रार्थः।

२ विवादपदनिबन्धः, इति सूत्रम्। विवादपदस्य निबन्धः पूर्वोत्तरपक्षात्मना पत्रे आरोपणं, तत्पूर्वकं चिन्तनमित्यर्थः।

३ विवाहसंयुक्तम्, इति सूत्रम्। विवाहा अष्टविधाः ब्राह्मादयः, तत्संबद्धो व्यवहार इत्यर्थः। एतच्च प्रकरणं त्रिभिरध्यायैर्वितन्यते।

४ दायविभागः, इति सूत्रम्। दायः पितृपितृव्यादिधनं तस्य विभागः, अयमपि त्रिभिरध्यायैर्वितन्यते।

५ वास्तुकम्, इति सूत्रम्। वस्तु गृहारामक्षेत्रादि तत्संबद्धं वास्तुकम्। इदमध्यायत्रयेण वितन्यते। तत्र तृतीयाध्याये उत्तरमपि प्रकरणं प्रवेशितम्।

६ समयस्यानपाकर्म, इति सूत्रम्। इदमहं करिष्यामीत्यभ्युपगमात्मा संकेतः, इदमनेन कर्तव्यमिति बहुभिः संभूय कृतो वा संकेतः समयः। तस्य अनपाकर्म त्यागाभावः, इति सूत्रार्थः। इदं प्रकरणं वास्तुकप्रकरणीयविवीतक्षेत्रपथहिंसाव्युत्पादनाध्याये व्युत्पादितम्।

७ ऋणादानम्, इति सूत्रम्। ऋणग्रहणनिर्यातनसंबद्धो व्यवहार इत्यर्थः।

८ औपनिधिकम्, इति सूत्रम्। उपनिधिर्निक्षेपः तत्संबद्धमनुष्ठानमौपनिधिकम्।

९ दासकर्मकरकल्पः, इति सूत्रम्। अत्यन्तपारार्थ्यमासाद्य शुश्रूषका दासाः, भृत्यर्थं शुश्रूषकाः कर्मकराः तेषां कल्पः तत्संबन्धी विधिः।

१० संभूयसमुत्थानम्, इति सूत्रम्। वाणिजकैरन्यैर्वा समुदेत्यारभ्यमाणं कार्यं संभूयसमुत्थानम्।

११ विक्रीतक्रीतानुशयः, इति सूत्रम्। विक्रीतं मूल्यमादाय दत्तं पण्यं, क्रीतं मूल्यं दत्वा गृहीतं, तयोर्विषये अनुशयः विक्रयविषयः क्रयविषयश्च पश्चात्ताप इत्यर्थः।

१२ दत्तस्यानपाकर्म, इति सूत्रम्। दत्तस्य धर्माद्यर्थं वाचा दत्तस्य अनपाकर्म अप्रदानम्। एतच्च विषयविशेषे पुनर्हरणस्याप्युपलक्षणम्।

१३ अस्वामिविक्रयः इति सूत्रम्। अस्वामी परद्रव्यव्यवहर्ता तेन कृतो विक्रयः अस्वामिविक्रयः।

१४ स्वस्वामिसंबन्धः, इति सूत्रम्। स्पष्टार्थम्।

१५ साहसम्, इति सूत्रम्। सहसा कृतं कर्म साहसं प्रसभकर्म।

१६ वाक्पारुष्यम्, इति सूत्रम्। वाचा कुत्सनभर्त्सनादिकमित्यर्थः।

१७ दण्डपारुष्यम्, इति सूत्रम्। दण्डेन करणेन पारुष्यं परुषकर्म द्रोहो दण्डपारुष्यम्।

१८ द्यूतसमाह्वयम्, इति सूत्रम्। द्यूतं अक्षक्रीडा, समाह्वयः अजकुक्कुटादिप्राणिदेवनं, तयोः समाहारः द्यूतसमाह्वयं, तत्संबद्धो व्यवहारः प्रकरणेऽस्मिन्नभिधीयत इत्यर्थः।

१९ प्रकीर्णकानि, इति सूत्रम्। उक्तविवादपदानन्तर्गतानि याचितकाद्यदानादिनिमित्तानि विवादपदानि प्रकीर्णकानि तान्यत्राभिधीयन्ते इत्यर्थः।

इति धर्मस्थीयमित्यादि। एवमेकोनविंशतिप्रकरणं धर्मस्थीयमधिकरणं तृतीयं समुद्दिष्टमित्यर्थः॥ श्रीमू.

## मनुः

व्यवहारपदानि

**हिंसां[1] यः कुरुते कश्चिद्देयं वा न प्रयच्छति।**
**स्थाने ते द्वे विवादस्य भिन्नोऽष्टादशधा पुनः॥**
**तेषा[2]माद्यमृणादानं निक्षेपोऽस्वामिविक्रयः।**
**संभूय च समुत्थानं दत्तस्यानपकर्म च॥**

---

(१) मस्मृ.८।३ इत्यत्र प्रक्षिप्तश्लोकोऽयम्; व्यमा.२८५ ते द्वे (स्वे तु) भिन्नोऽष्टादशधा पुनः (तयोर्बहुविधा गतिः). स्मृतिचन्द्रिकायां (पृ. २) तु बृहस्पतिः।

(२) मस्मृ.८।४; विश्व.२।१; मिता.२।५; अप.२।१; व्यक.१७; दीक.३१; विचि.१; स्मृचि.२; दवि.३२५; नृप्र.३; सवि.४८,५२,४५०; व्यसौ.१३; वीमि.२।५;

वेतनस्यैव चादानं संविदश्च व्यतिक्रमः ।
क्रयविक्रयानुशयो विवादः स्वामिपालयोः ॥
सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके ।
स्तेयं च साहसं चैव स्त्रीसंग्रहणमेव च ॥
स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च ।
पदान्यष्टादशैतानि व्यवहारस्थिताविह ॥

(१) पाठक्रमापेक्षमृणादानस्याद्यत्वं प्राथम्यम् । अथवा मुख्यमाद्यम् । अनेन हि वनवासिनोऽपि स्पृश्यन्ते । ऋणादानानुषक्तमनृणादानमेव च । यथा ऋणं ते मया दत्तं शुद्धिलेख्यं प्रयच्छेत्यादि । नैतदृणादानं अनुक्तं तु तत्रेति तद्व्यपदेश्यम् । पारुष्ये दण्डवाचिके इति । दण्डश्च वाक् च दण्डवाचं 'द्वन्द्वाच्चुदषहान्तादिति' समासान्तः, तदस्यास्तीति "अत इति ठनाविति" ठन् । स्त्रीपुंधर्म इति । स्त्रीसहितः पुमानिति शाकपार्थिवादिवत्समासः । स्त्री च पुमांश्चेति विग्रहे स्त्रीपुंसधर्म इति स्यात् । मेधा.

(२) तेषां अष्टादशानां आदावधमर्णगृहीतस्य ऋणस्यादानमिह विचार्यते । ततः क्रमेण निक्षेपः । अस्वामिना च यः क्रियते विक्रयादिः । एकीभूय धनार्जनेहा । यागाद्यर्थे दत्तस्य प्रतिश्रुतस्य वा यागाद्यकरणे सति अप्रदानम् । भृतेरदानम् । ग्रामादिकृतव्यवस्थाव्यतिक्रमः । क्रये विक्रये वा सति पश्चात्तापः । स्वामिपालयोर्विप्रतिपत्तिः । ग्रामादिसीमाविवादव्यवस्था । वाक्पारुष्यं आक्रोशादि । दण्डपारुष्यं ताडनादि । चौर्यम् । प्रधृष्याऽपहरणादि साहसम् । स्त्रियाश्च परपुरुषसंपर्कः रमणम् । स्त्रीसहितस्य पुंसो भर्तुर्व्यवस्था । पैतृकादिधनविभागः । अक्षादिक्रीडाव्यवस्थापनम् । पशुपक्ष्यादियोधनम् । इत्येवमष्टादशैतानि व्यवहारोत्पत्तौ लोके स्थानानि । *गोरा.

(३) एतान्यपि साध्यभेदेन पुनर्बहुत्वं गतानि । यथाह नारदः—'एषामेव' इत्यादि । मिता. २।५

(४) आद्यं प्रधानं बहुविषयं, ऋणस्य न दानमदानम् । संविदः नियमस्य । दण्डवाचिके दण्डकृतवाक्पारुष्य इत्येकम् । स्त्रीपुंधर्मः अन्योन्यवृत्तिनियमस्तयोः । व्यवहारस्य विवादस्य । स्थितौ निर्णये । ×मवि.

(५) स्वधनस्यान्यस्मिन्नर्पणरूपो निक्षेपः । दत्तस्य धनस्य अपात्रबुद्ध्या क्रोधादिना वा ग्रहणम् । क्रयविक्रये च कृते पश्चात्तापाद्विप्रतिपत्तिः । अक्षादिक्रीडा, पणव्यवस्थापनपूर्वकं पक्षिमेषादिप्राणियोधनम् । इत्येवमष्टादश । एतानि व्यवहारप्रवृत्तेः स्थानानि । समाह्वयस्य प्राणिद्यूतरूपत्वेन द्यूतावान्तरविशेषत्वादष्टादशसंख्योपपत्तिः । ×ममु.

(६) निक्षेपः धनस्यान्यस्मिन्नर्पणं यथा तथादानं च, 'यथा दायस्तथा ग्रह' इति वक्ष्यते । अस्वामिविक्रयः । सोऽपि द्विविधः प्रकाशाप्रकाशभेदेन । सीम्नि यो विवादस्तस्य धर्मो मर्यादानिर्णयः । साहसं सहो बलं तत्कृतं प्रसह्य धनहरणम् । पदानि स्थानानि विषयाः विचारस्येति शेषः । ×मच.

(७) एवं लौकिकालौकिकेषु प्रमाणेषु निरूपितेषु प्रमेयाणि व्यवहारपदानि निरूप्यन्ते तृतीये प्रकरणे । तेषां चोद्देशो व्यवहारभेदप्रदर्शनप्रस्तावे 'ऋणादानं ह्युपनिधिः' इत्यादिनारदवचनेन दर्शितः । मनुरपि तेषामाद्यमित्यादि ।

*भाच. गोरावत् । पारुष्यद्वयमेकं पदमित्याह ।
×अवशिष्टपदव्याख्या गोरावत् ।

व्यप्र.२२२; व्यउ.४; व्यम.१; विता.३३ मरीचिमनुः; राकौ.३८४; सेतु.१; प्रका.२; समु.३; विव्य.२०.

(१) मस्मृ.८१५; मिता.२।५; अप.२।१; व्यक.१७; दीक.३१; विचि.१; स्मृचि.२; दवि.३२५; नृप्र.३; सवि.५२, ४५० यो (यौ); व्यसौ.१३; वीमि.२।५; व्यप्र. २२२; व्यउ.४; व्यम.१; विता.३३ सविवत्, मरीचिमनुः; राकौ.३८४; सेतु.१; प्रका.२; समु.३; विव्य.२०.

(२) मस्मृ.८।६; मिता.२।५; अप.२।१; व्यक.१७-१८; दीक.३१; विचि.१; स्मृचि.२; दवि.३२५; नृप्र.३; सवि.५२ वाद (भाग): ४५०; व्यसौ.१३; वीमि.२।५ मेव (एव); व्यप्र.२२२; व्यउ.४; व्यम.१; विता.३३ मरीचिमनुः; राकौ.३८५; सेतु.१ धर्म (धर्मा); प्रका.२; समु.३; विव्य.२०.

(३) मस्मृ.८।७; मिता.२।५; अप.२।१ (स्त्रीपुंधर्मविभागश्च द्यूतमाह्वानमेव च); व्यक.१८; मवि. आह्व इति पाठान्तरम्; दीक.३१ धर्मो (सयोः); विचि.१ दीकवत्; स्मृचि. २; दवि.३२५ भाग (वाद); नृप्र.३; सवि.५२,४५० पुं (पु) रस्थिताविह (रे विदुर्बुधाः); व्यसौ.१३ दीकवत्; वीमि.२।५; व्यप्र.२२२; व्यउ.४ विह (विति); व्यम.१; विता.३३ मरीचिमनुः; राकौ.३८५; सेतु.१; प्रका.२; समु.३; विव्य.२०; नन्द. आह्वानमिति पाठः

यद्यपि नारदवचने 'द्यूतं प्रकीर्णकं चैव' इत्यष्टादशपदान्युक्तानि। तथापि प्रकीर्णकपदेनोपयुक्तशेषाभिधानाद्राज्ञैव स्वाज्ञातिक्रमादौ परेण कृते प्रतिवादित्वमास्थाय निर्णेतव्यम्। यच्च ऋणादिषु पूर्वोक्तव्यवहारपदेषु नोक्तं तत्सर्वं प्रकीर्णकमिति नारदेनैव तल्लक्षणकरणाद्व्यवहर्तृसंबन्धनियमाभावान् मनुना प्रकीर्णकस्य व्यवहारपदत्वानुक्तिरिति ध्येयम्। द्यूताह्वययोस्तु अप्राणिपाशादिकृतत्वप्राणिमल्लमेषादिकृतत्वमात्रभेदादेकपदत्वविवक्षयाऽष्टादशसङ्ख्योपपादनीया। अन्यथोनविंशतिसङ्ख्यत्वापत्तेः। यथा सपणक्रीडत्वेन तयोरभेदविवक्षयैक्यमुक्तं तथा पारुष्यरूपेण वाग्दण्डपारुष्ययोरप्यैक्यविवक्षा संभवति तथापि तन्न विवक्षितम्। स्वतन्त्रेच्छस्य पर्यनुयोगानर्हत्वात्। मनुना द्विवचनप्रयोगान्नारदादिनिबन्धनेषु पृथङ्निर्देशाच्च।

ननु पारुष्यद्वयस्य वक्ष्यमाणसाहसविशेषत्वात्पदान्तरत्वोक्तिरयुक्ता। सत्यम्। बलावष्टम्भेन क्रियमाणस्य तस्य साहसत्वं छलकृतस्य तु साहसलक्षणाभावात् पदान्तरत्वम्। तथा चाह नारदः—'तस्यैव भेदः स्तेयं स्याद्विशेषस्तत्र तूच्यते। आधिः साहसमाक्रम्य स्तेयमाधिश्छलेन तु' ॥ तस्येति पूर्वोक्तं साहसं परामृष्टम्। आधिरर्थाहरणद्वारा क्रियमाणः परस्य मानसः क्लेशः। 'पुंस्याधिर्मानसी व्यथा' इति कोशात्। स आक्रम्य बलावष्टम्भेन विधीयमानः साहसमित्युच्यते। छलेन तु विधीयमान आधिः स्तेयमित्युच्यत इत्यर्थः। नन्वनेन स्तेयस्य साहसाद्भेद उपपादितो न पारुष्यद्वयस्य। सत्यम्। नारदेन स्वयं व्यवहारपदेन पृथगनुद्दिष्टस्यापि स्तेयस्य साहसादुपपादिते भेदे पृथगुद्दिष्टस्य पारुष्यद्वयस्य सुतरां ततः स उन्नेतुं शक्य इत्यभिप्रायो नारदस्य।

तदुक्तं सङ्ग्रहकारेणापि—'मनुष्यमारणादीनि कृतानि प्रसभं यदि। साहसानीति कथ्यन्ते यथाख्यान्यन्यथा पुनः' ॥ अन्यथा पुनः यद्यप्रसभं कृतानि तदा यथाख्यानि स्वस्वाख्यानि स्तेयस्त्रीसङ्ग्रहणवाक्पारुष्यदण्डपारुष्यसंज्ञकानि भवन्तीत्यर्थः। अत एव मनुना स्तेयस्त्रीसङ्ग्रहणे अपि व्यवहारपदत्वेन साहसात् पृथगुद्दिष्टे। नारदेन तु तयोः प्रायेण लोके छलेनैव क्रियमाणत्वात् पदान्तरत्वं स्फुटमित्यनुक्त्वा साहसत्वमस्फुटमिति तदेवोक्तम्। वाक्पारुष्यदण्डपारुष्ययोस्तु विपरीतम्। प्रायेण ते प्रसभमेव क्रियमाणे लोके दृश्येते। छलेन तु तयोः करणं साहसभेदापादकं स्फुटमिति तद्व्यक्तीकरणाय ते एव साहसात् पृथगुपदिष्टे। अत एव तेनाप्राणिप्राणिकृतत्वविशेषापुरस्कारेण समाह्वयोऽपि द्यूतत्वेनैवोद्दिष्ट इति ध्येयम्। यद्यप्युपनिधिनिक्षेपयोरपि तत्प्रकरणवक्ष्यमाणरीत्यावान्तरभेदोऽस्ति तथापि तमविवक्षित्वा मनुनारदाभ्यां पर्यायत्वेनैव द्वयं विवक्षितम्। एतयैव दिशा स्मृत्यन्तरयोरप्यविरोध उन्नेयः। एवं व्यवहारपदानां प्रातिस्विकानि लक्षणानि तदवान्तरभेदाश्च तत्तत्स्थाने व्यक्तीकरिष्यामः। व्यप्र. २२२-२२३

(८) तेषां कार्याणाम्। निक्षेपः निक्षेपापहरणम्। ग्रामनगरादिवासिनां समयः संवित्। स्त्रीपुंधर्मौ दम्पतिभ्यामन्योन्यस्मिन्कर्तव्यो धर्मः। ×नन्द.

**एषु स्थानेषु भूयिष्ठं विवादं चरतां नृणाम्।**
**धर्मं शाश्वतमाश्रित्य कुर्यात्कार्यविनिर्णयम् ॥**

(१) भूयिष्ठग्रहणं प्राधान्यख्यापनार्थम्। अन्येऽपि व्यवहारहेतवः सन्ति। यथा निवसनार्थं त्वया मे वेश्म दत्तं, तत्र किमित्यर्वाग्वत्सरादन्यस्मै ददासीति। न चेदं दत्ताऽनपकर्म, न ह्यत्र स्वत्वनिवृत्तिरस्ति, भोगानुज्ञामात्रं वसतः। तथा मदीयस्थण्डिलाभिमुखं त्वया वेश्मनि गवाक्षं कृतमिति। धर्मं शाश्वतमाश्रित्येति। अर्थकामावशाश्वतौ। अथवा शाश्वतो धर्मः अनिदम्प्रथमतो या व्यवस्था तामनुपालयेत्। यात्विदानीन्तनैः प्रवर्तिता साऽशाश्वतत्वादनादरणीया। मेधा.

(२) एष्वष्टादशसु स्थानेषु व्यवस्थानेषु बाहुल्येन मनुष्याणां विवादं कुर्वतां अनादिपारम्पर्यायातां व्यवस्थामाश्रित्य व्यवहारनिर्णयं कुर्यात्। भूयिष्ठवचनादन्यान्यपि सन्ति। यथोक्तं नारदेन— 'तेषामेव प्रभेदोऽन्यः शतमष्टोत्तरं स्मृतम्'। गोरा.

(३) भूयिष्ठशब्देनाऽन्यान्यपि विवादपदानि सन्तीति

---

× अवशिष्टपदव्याख्या गोरावत्। द्यूतं समाह्वयं च द्यूतसमाह्वयौ इत्येकं पद मन्वर्थमुक्तावल्यनुसारेणाह।

(१) **मस्मृ.**८।८; **अप.**२।१ यं (यें); **व्यक.**१८ धर्मं शाश्वत (धर्मशास्त्रं स); **स्मृच.**१४ यत्कार्य (युस्तेषां); **व्यसौ.**१३ व्यकवत्; **प्रका.**२; **समु.**५ स्मृचवत्.

सूचयति। तानि च प्रकीर्णकशब्देन नारदाद्युक्तानि। अत एव नारदः— 'न दृष्टं यच्च पूर्वेषु सर्वं तत्स्यात्प्रकीर्णकम्' इति। *ममु.

(४) भूयिष्ठमित्युक्तिः अष्टादशातिरिक्तसूचनार्थं, तेन प्रतिज्ञादिग्रहः। *मच.

## याज्ञवल्क्यः

व्यवहारपादाः

**चतुष्पाद्व्यवहारोऽयं विवादेषूपदर्शितः।**

(१) न्यायागमाभ्यामिति शेषः। प्रतिज्ञा, उत्तरं, साधनं, निर्णयश्चेत्येवं चतुष्पात्। अन्यथा तु न स्यात्। तस्मात् प्रतिज्ञाक्रमेणैव विवादक्रियेत्यभिप्रायः। विश्व.

(२) 'व्यवहारान्नृपः पश्येत्' इत्युक्तो व्यवहारः, सोऽयमित्थं चतुष्पात्, चतुरंशकल्पनया विवादेषु ऋणादानादिषु उपदर्शितो वर्णितः। तत्र 'प्रत्यर्थिनोऽग्रतो लेख्यं' इति भाषापादः प्रथमः। 'श्रुतार्थस्योत्तरं लेख्यं' इत्युत्तरपादो द्वितीयः। 'ततोऽर्थी लेखयेत्सद्य' इति क्रियापादस्तृतीयः। 'तत्सिद्धौ सिद्धिमाप्नोति' इति साध्यसिद्धिपादश्चतुर्थः। संप्रतिप्रत्युत्तरे तु साधनाऽनिर्देशात् भाषार्थस्याऽसाध्यत्वाच्च न साध्यसिद्धिलक्षणः पादोऽस्तीति द्विपात्त्वमेव। उत्तराभिधानानन्तरं सभ्यानामर्थिप्रत्यर्थिनोः कस्य क्रिया स्यादितिपरामर्शलक्षणस्य प्रत्याकलितस्य योगीश्वरेण व्यवहारपादत्वेनाऽनभिधानात् व्यवहर्तुः संबन्धाभावाच्च न व्यवहारपादत्वमिति स्थितम्। मिता.

(३) अयमस्माभिश्चतुष्पात् चतुर्भागो व्यवहारो व्यापारः सर्वविवादेषूक्तः। अत्र च सिद्धिशब्देन सभ्यानामर्थिप्रत्यर्थिविषयजयपराजयावधारणोपायभूतं प्रमाणमस्येदं शास्त्रतः प्राप्नोतीति विचारकाणां परामर्शः प्रत्याकलितादिशब्दवाच्य उच्यते, सिद्धिफलत्वात्। अत एवाह कात्यायनः— 'पूर्वपक्षश्चोत्तरं च प्रत्याकलितमेव च। क्रियापादश्च तेनायं चतुष्पात्समुदाहृतः'॥ अत एव बृहस्पतिः—'पूर्वपक्षः स्मृतः पादो द्वितीयस्तूत्तरस्तथा। क्रियापादस्तथा वाच्यश्चतुर्थो निर्णयस्तथा'॥ *अप.

(४) विवादेषु ऋणादानादिषु विचारविषयेषु। वीमि.

## नारदः

सोत्तरानुत्तरव्यवहारौ

**सोत्तरोऽनुत्तरश्चैव स विज्ञेयो द्विलक्षणः।**
**सोत्तरोऽभ्यधिको यत्र विलेखापूर्वकः पणः॥**

(१) अस्य भाष्यम्। व्यवहार इत्यनुवर्तते। व्यवहार एकः सोत्तरोऽपरोऽनुत्तर इति द्विलक्षणो ज्ञेयः। सोत्तरलक्षणं चाऽस्यैव श्लोकस्योत्तरार्धेन व्याख्यातम्। अत्र च व्यवहारस्य सोत्तरत्वे पणाधिक्यं केचिदपरिज्ञानादेव ब्रुवते। यत्किल लभ्यद्रव्यादधिकः पणो यत्र भवति, स एव सोत्तर उच्यते। यत्पुनर्लभ्यद्रव्यादधिकपणो न भवति, सोऽनुत्तर इति। तदिदमसमञ्जसं वचनं मनागपि न घटते। यतः येन व्यावहारिकेण परिपूर्णविभवतया कस्यचित् ऋणिकस्योपरि...पत्रलिखितपूर्वाणि द्रम्माणां दशसहस्राणि प्रयुक्तानि। तस्मिंश्च व्यावहारिके स्वर्गते तदीयपुत्रो विधिविलसितवशाद्दरिद्रो जातः। तत्पत्रमादाय द्रव्योद्ग्रहणाय ऋणिकपार्श्वमागतः। ऋणिकेनापि साध्याद्धर्माधिकरणाऽग्रे मिथ्यावादितया निराकृतः। तदा यस्यैकदिनभोजनोपायो नाऽस्ति, तस्य द्विगुणीभूतद्रम्मविंशतिसहस्राणां अधिकपणकरणसामर्थ्यं कुतः संभवतु। ततश्च अधिकपणकरणेन विना व्यवहारस्य सोत्तरत्वगौरवं कथमापद्यताम्। अतोऽर्थापत्त्यैव ज्ञायते, न हि मुनिमतानीदृशानि भवन्ति। येष्वशक्यसाधनोपायमुपन्यस्य सदर्थसाधने भाषाया एव तावदनुष्ठानाऽसंभवः संपद्यते। किं

---

*वाक्यार्थो गोरावत्।

(१) **यास्मृ.**२।८; **अपु.**२५३।३८; **विश्व.**२।८; **मिता.**; **अप.**२।८: २।१ दर्शितः (दिश्यते); **पमा.**१६; **व्यनि.**; **नृप्र.**१,७; **वीमि.**; **व्यम.**९; **विता.**५१ रोऽयं (रस्तु); **प्रका.**४; **समु.**२५.

* शेषं मितागतम्।

(१) **नासं.**१।४; **नास्मृ.**१।४; **अभा.**४; **व्यमा.**२८३ विज्ञे (च ज्ञे) भ्य (ह्य) विलेख्यपूर्वक इति पाठे एषैवेत्यादि। विलेखात्पूर्वत इति भोजदेवेन लिखितम्; **अप.**२।११ भ्य (त्य) खा (खात्); **व्यक.**१६ खा (ख्यात्); **स्मृच.**१० श्चैव(श्चेति) खापूर्वकः (खात्पूर्वतः); **पमा.**८ श्चैव (श्चेति); **व्यचि.**७ यत्र (ह्यत्र) खा (खात्); **व्यसौ.**१२ पू.; **वीमि.**२।१ खा (खात्); **व्यप्र.**५ श्चैव (श्चेति) खा (खात्); **व्यउ.**३ पमावत्; **प्रका.**३ स्मृचवत्; **समु.**३ स्मृचवत्.

तर्हि, अत्र मुनिनारदान्तर्गतभावार्थोऽयमेव एष्वेवाक्षरेषु लक्ष्यते । यदेकं तावल्लभ्यद्रव्यं व्यवहारसंदेह एव स्थितं तिष्ठत्येव । द्वितीयं पुनरिदं, यदमर्षितो वादी प्रतिवादी वा एवंविधप्रभूतद्रव्यव्यवहारेऽपि शतद्वयमात्रं शतैकमात्रं वाऽर्धशतमात्रमपि यावन्निजविभवानुसारेण द्रव्यमुपन्यस्यति, स एवाऽभ्यधिकः पणो दरिद्रस्य, अतः पणाधिक्यमेतत् द्वितीयद्रव्योपन्यास एव द्रष्टव्यम् । न पुनरनवस्थाप्रसंगो द्रव्याधिक्यविषय इति । तथाचोक्तमेवान्यैरपि च—'वादी वा प्रतिवादी वा यः समर्थः स्वतारणे । द्रव्यं वित्तानुसारेण करोति स पणः स्मृतः' इति ॥ अथवा किमन्येन अयमभ्यधिकः पणशब्दः प्रशंसायामेव संबध्यते । यथा— समस्तयुक्तव्यवहाराणां मध्ये स एवाभ्यधिको व्यवहारः यत्र 'विलेखापूर्वकः पण' इति यथोक्तं, सोऽपि पणो यदि विलेखापूर्वको भवति तदा सोत्तरो व्यवहार उच्यते । अन्यथा पुनरनुत्तर एव । अस्य निगमः । लेखा लेखनम् । विशेषेण लेखा विलेखा तत्पूर्वकः पणः कर्तव्य इति । अत्रापि मुनिभावार्थोऽयम् । यदि विलेखापूर्वकः लिखिताक्षरनिबन्धपूर्वः पणो भवति तदा सोत्तरो व्यवहारोऽसौ । यदि पुनर्वाङ्मात्र एवानिबद्धाक्षरो मुक्तवचनैर्जल्पित एव, न त्वक्षरैर्निबद्धस्तदा सपणः कृतोऽपि अकृतवद्द्रष्टव्यः । यतोऽनक्षरैर्निबद्धः पणो निर्णयकाले व्यभिचरत्येवेति । *अभा.४-५

(२) भाषादिविलेखात्पूर्वं यत्र वादिनोऽन्योऽन्यं पणो भवति, योऽत्र जीयते, स जेत्रे शतमधिकं ददाति, असौ सोत्तरव्यवहारः । विलेखापूर्वक इति पाठे तु, लिख्यते इति लेखः, शास्त्रविहितो दण्डः, स विगतो यस्यामिच्छायां सा विलेखा इच्छा, तत्पूर्वस्ततोऽधिकः पण इच्छातः शास्त्रनिरपेक्ष इत्यर्थः । विलेख्यपूर्वक इति पाठे एषैव व्याख्या । विलेखात् पूर्वत इति भोजदेवेन लिखितम् । तत्र सोत्तरपणे विवादे जितः पणं दाप्यो दण्डनीयश्च । व्यमा.२८३-२८४

(३) भाषालेखात्पूर्वत्र विवादविषयाद्धनादधिकः पणो यत्रोपेयते स सोत्तरो व्यवहारः । अप.२।११

(४) प्रतिज्ञाविलेखनात्पूर्वं यत्र व्यवहारे दण्डादभ्यधिकः पण उभाभ्यामुपेयते अन्यतरेण वा स सोत्तरो व्यवहारः । +स्मृच. १०

(५) 'अहं यदि पराजयेयं तदा शास्त्रप्रापितादण्डद्रव्यादधिकमेव द्रव्यं राज्ञे तुभ्यं च दास्यामि' इति पत्रं लिखित्वा यदभिभाषणं तदुत्तरं तेन सह वर्तत इति सोत्तरः । तद्रहितोऽनुत्तरः । ×पमा.९

व्यवहारसंबन्धिविविधविभागाः

**[१]स चतुष्पाच्चतुःस्थानश्चतुःसाधन एव च ।**
**चतुर्हितश्चतुर्व्यापी चतुष्कारी च कीर्त्यते ॥**

अत्र अनेन श्लोकद्वयेनाऽपि व्यवहारस्य संख्यापूर्वकः संज्ञासूत्रोपन्यास एव कृतः । सविस्तरार्थप्रतिपत्तिविवरणं वक्ष्यमाणमुपरितनश्लोकैः शास्त्रकार एव करिष्यति । अभा.६

**[२]अष्टाङ्गोऽष्टादशपदः शतशाखस्तथैव च ।**
**त्रियोनिर्द्व्यभियोगश्च द्विद्वारो द्विगतिस्तथा ॥**

निर्णयपादाः

***धर्मश्च व्यवहारश्च चरित्रं राजशासनम् ।**
**चतुष्पाद्व्यवहारोऽयमुत्तरः पूर्वबाधकः ॥**
***तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिषु ।**
**चरित्रं पुस्तकरणे राजाज्ञायां तु शासनम् ॥**

सामाद्युपायाः । वर्णाश्रमहितकारी व्यवहारः ।

**[३]सामाद्युपायसाध्यत्वाच्चतुःसाधन उच्यते ।**

---

* नाभा. अभागतं व्यमागतं च ।

+वीमि. स्मृचवत् । ×व्यप्र., व्यउ. पमावत् ।

*व्याख्यासंग्रहः स्थलादिनिर्देशश्च दर्शनविधौ द्रष्टव्यः ।

(१) **नासं**.१।८ री च (रीति); **नास्मृ**.१।८; **अपु**.२५३।१-२ एव च (उच्यते); **अभा**.६; **विश्व**.२।१; **अप**.२।१ नासंवत्; **व्यक**.१६ र्त्यते (र्तितः); **स्मृच**.१०; **पमा**.९ स चतुष्पाच्च (चतुष्पादश्च) र्त्यते (र्तितः); **नृप्र**.३; **व्यसौ**.१२ र्व्यापी (र्वादी); **व्यप्र**.५ स चतुष्पाच्च (चतुष्पाच्च च) र्त्यते (र्तितः); **व्यउ**.३ व्यप्रवत्; **विता**.३४ ष्पा (स्या) र्हित(र्दिन) री च (रीति); **प्रका**.३ पूर्वार्धं व्यप्रवत्; **समु**.३.

(२) **नासं**.१।९ द्वा (द्वौ); **नास्मृ**.१।९; **अपु**.२५३।२-३; **अप**.२।१; **व्यक**.१६ नासंवत्; **स्मृच**.१०; **पमा**.१०; **नृप्र**.३; **व्यसौ**.१२; **व्यप्र**.५; **व्यउ**.३ नासंवत्; **विता**.३५ त्रि (द्वि) द्वा (द्वौ); **प्रका**.३; **समु**.३. व्यवहारकल्पतरुपराशरमाधवादिग्रन्थेषु श्लोकार्धौ व्यत्यासेन पठितौ ।

(३) **नासं**. १।१२; **नास्मृ**.१।१२ द्यु (भ्यु); **अपु**.२५३।५-६; **अप**.२।१; **व्यक**.१७ माश्रमाणां च (मपि वर्णानां);

चतुर्णामाश्रमाणां च रक्षणात्स चतुर्हितः ॥

(१) सामभेदोपप्रदानदण्डैश्चतुर्भिरपि साधनोपायैर्यथावसरप्रयुक्तैः साध्यते, तेन चतुःसाधन उक्तः। एवं चायमस्खलितप्रवर्तमानो व्यवहारः परमसमृद्धया चतुर्णामपि वर्णानामाश्रमाणां च रक्षणात् परिपालनात् चतुर्हितो भवतीति। अभा. ७

(२) विप्रतिपन्नाऽर्थिप्रत्यर्थिनोः सामाद्युपायसाध्यत्वात् इत्यभिप्रायः। आश्रमग्रहणं वर्णानामपि प्रदर्शनार्थम्। स्मृच. १२

(३) सामभेददानदण्डैश्चतुर्भिर्दोषकारिणो दोषनिवारणात् चतुःसाधनत्वम्। पमा. १९

(४) इदानीं चतुःसाधनत्वं चतुर्हितत्वं चोच्यते। सामदानभेददण्डैः साध्यत इति चतुःसाधनः। सामसाधनः 'सत्यं ब्रूहि, विद्वत्कुलजोऽसि, शुभास्ते लोका भविष्यन्ति' इति। दानेन किञ्चिद् दत्त्वैकदेशमोक्षेण अभयदानेन वा। भेदेन तर्जनादिना। दण्डेन ताडनधनादानादिना। नाभा. १।१२

व्यवहारसंबन्धिजनाः

[१]कर्तॄनथो साक्षिणश्च सभ्यान् राजानमेव च।
व्याप्नोति पादशो यस्माच्चतुर्व्यापी ततः स्मृतः॥

(१) स च यदि सुदृष्टो भवति, ततश्चतुरोऽप्येतान् पादशो धर्मरूपेण व्याप्नोति। अथ कुदृष्टो भवति, ततस्तानेव पापरूपेण व्याप्नोति इति चतुर्व्यापीति। *अभा. ७

(२) धर्माधर्मफलेन कर्तृप्रभृतीन् पादशो व्याप्नोति सम्यगसम्यग्दृष्टतया। ×अप. २।१

*नाभा. अभावत्। +स्मृच. अपवत्।

**स्मृच**.१२ च (तु) त्स (च); **पमा**.११त्स (च) शेषं व्यकवत्; **नृप्र**.३; **व्यसौ**.१२ पमावत्; **व्यप्र**.५ पमावत्; **व्यउ**.३ पमावत्; **प्रका**.३ स्मृचवत्; **समु**.३ स्मृचवत्.

(१) **नासं**.१।१३; **नास्मृ**.१।१३; **अपु**.२५३।६-७ कर्तॄ...श्च (कर्तारं साक्षिणश्चैव); **अभा**.७; **अप**.२।१; **व्यक**.१७; **स्मृच**.१२ कर्तॄनथो (कर्तॄंस्तथा); **पमा**.११; **नृप्र**.३; **व्यसौ**.१२; **व्यप्र**.५ पाद (याद्व); **व्यउ**.३; **प्रका**.३ कर्तॄनथो साक्षिणश्च (कर्तॄंश्च साक्षिणश्चैव); **समु**.३ स्मृचवत्.

व्यवहारफलानि

[१]धर्मस्यार्थस्य यशसो लोकपक्तेस्तथैव च।
चतुर्णां करणादेषां चतुष्कारीति चोच्यते॥

(१) लोकपक्तिर्जनानुरागः। शेषं प्रसिद्धम्। एतेषां चतुर्णामपि करणात् चतुष्कारीति उच्यते। अभा.७

(२) धर्मादीनां चतुर्णां करणाच्चतुष्कारी। धर्मः सम्यग्दर्शनात् साध्वसाधूनां शिष्टपरिपालननिमित्तः। अर्थश्च पराजितदण्डादानात्। सम्यक्करणादलोभाच्च कीर्तिः। लोकपक्तिरनुरागः। अनुरागादपहृतमपि ददाति, परचक्रादिषु साहाय्यमपि करोति। नाभा.१।१४

अष्टाङ्गानि व्यवहारस्य

[२]राजा सत्पुरुषः सभ्याः शास्त्रं गणकलेखकौ।
हिरण्यमग्निरुदकमष्टाङ्गः समुदाहृतः॥

(१) तत्र राजा सत्पुरुषः दुष्टावकोटनार्थम्। तस्यानवसरे राजकीयचक्षुर्भूतो राजनियुक्तः प्राड्विवाकः। पुरुषः स उभयात्मकः सत्यश्च राजपुरुषश्च। तथा सभ्या उपरि वक्ष्यमाणलक्षणाः। तथा शास्त्रं मनुनारदविश्वरूपात्मकं सत्यासनं (सच्छासनं) शतभेदव्यवहारदण्डनियमसंदेहविच्छेदकारकम्। तथा गणकः वणिक्। तथा लेखकः स्थानप्रतिबद्धः भाषोत्तरक्रियाजयपत्रादिलेखनोपयोगी। हिरण्यमग्निरुदकमिति एतान्यपि त्रीणि प्रत्यक्षदेवतास्वरूपाणि एतान्यष्टावप्यङ्गानि यदा सभायां संनिहितानि भवन्ति, तदा दिव्यादिष्वपि धर्मः साक्षा-

(१) **नासं**.१।१४ ति चोच्यते (प्रकीर्तितः); **नास्मृ**.१।१४; **अपु**.२५३।७-८ पक्ते (पङ्क्ते) षां (ष) ति चोच्यते (प्रकीर्तितः); **अभा**.७ पक्ते (पङ्क्ते); **अप**.२।१ पक्ते (पङ्क्ते) शेषं नासंवत्; **व्यक**.१७ नासंवत्; **स्मृच**.१२ पक्ते(पत्ते)ति चोच्यते(प्रकीर्त्यते); **पमा**.११ देषां (देष), शेषं नासंवत्; **नृप्र**.३; **व्यसौ**.१२ नासंवत्; **व्यप्र**.५-६ पक्ते (पङ्क्ते) देषां (देव) ति चोच्यते (प्रकीर्तितः); **व्यउ**.३-४ पक्ते (पङ्क्ते) शेषं पमावत्; **प्रका**.३ पक्ते (पत्ते) शेषं पमावत्; **समु**.३ स्मृचवत्.

(२) **नासं**.१।१५ सत्पु(सपु)समु(स उ);**नास्मृ**.१।१५;**अपु**.२५३।८-९ सत्पु (सपु); **अभा**.७; **अप**.२।१ सत्पु (स्वपु)भ्याः (भ्यः); **व्यक**.१७ नासंवत्; **स्मृच**.१२ सत्पु (सपु); **पमा**.१३ नासंवत्; **नृप्र**.३; **व्यसौ**.१२ अपवत्; **व्यप्र**.६ स्मृचवत्; **व्यउ**.४ स्मृचवत्; **प्रका**.३ स्मृचवत्; **समु**.३ सत्पु (सपु) दाह (दीरि).

द्वैवावतीर्य सत्यासत्ययोर्विभक्तिं परिस्फुटीकरोति। अभा.७-८

(२) गणकस्य विवादविषयीभूतधनसंख्याने, लेखकस्य भाषोल्लेखने, अग्न्यादीनां च शपथेऽत्युपयोग इति व्यवहाराङ्गता। अप. २।१

(३) अष्टाङ्गेषु सपुरुषो राजेत्येतदेकमङ्गम्। अतो नास्ति नवत्वसंख्याप्रसक्तिः। पमा. २०

(४) राजा, सह पुरुषैः सपुरुषः, अङ्गम्। तदधीनत्वात् पुरुषानयनधारणादिषु व्याप्रियन्ते पुरुषाः। सभ्याः युक्तिविचारशीलिनः। शास्त्रं, अनुमानगम्येऽर्थे कर्तव्यताप्रतिपादनेन। गणकः संख्याविषये। लेखकः पूर्वपक्षोत्तरपक्षाक्षरविन्यासे। हिरण्याग्न्युदकानि समयादौ। एवमष्टाङ्गः। नाभा. १।१५

व्यवहारपदानि

**[१]ऋणादानं ह्युपनिधिः संभूयोत्थानमेव च।**
**दत्तस्य पुनरादानमशुश्रूषाऽभ्युपेत्य च॥**
**[२]वेतनस्यानपाकर्म तथैवास्वामिविक्रयः।**
**विक्रीयाऽसंप्रदानं च क्रीत्वाऽनुशय एव च॥**
**[३]संमयस्यानपाकर्म विवादः क्षेत्रजस्तथा।**
**स्त्रीपुंसयोश्च संबन्धो दायभागोऽथ साहसम्॥**
**[४]वाक्पारुष्यं तथैवोक्तं दण्डपारुष्यमेव च।**
**द्यूतं प्रकीर्णकं चैवेत्यष्टादशपदः स्मृतः॥**

(१) **नासं**.१।१६; **नास्मृ**.१।१६; **अभा**.८; **व्यमा**.२७७ दानम (दानं) ऽभ्यु (मभ्यु); **व्यक**.१७; **स्मृच**.२; **पमा**.१३-१४; **नृप्र**.३; **सवि**.५२,४५१; **व्यसौ**.१२; **व्यप्र**.६; **व्यउ**.४; **प्रका**.२; **विव्य**.२०.

(२) **नासं**.१।१७; **नास्मृ**.१।१७; **अभा**.८ विक्री (विक्र); **व्यमा**.२७७ क्रीत्वा (क्रीता); **व्यक**.१७; **स्मृच**.२; **पमा**.१४; **नृप्र**.३; **सवि**.५२,४५१; **व्यसौ**.१२; **व्यप्र**.६ एव (मेव); **व्यउ**.४; **प्रका**.२; **विव्य**.२०.

(३) **नासं**.१।१८; **नास्मृ**.१।१८ स्यान (स्य नान); **अभा**.८; **व्यमा**.२७७; **व्यक**.१७; **स्मृच**.२ श्च (स्तु); **पमा**.१५; **नृप्र**.३; **सवि**.५२,४५१; **व्यसौ**.१२; **व्यप्र**.६; **व्यउ**.४; **प्रका**.२ स्मृचवत्; **विव्य**.२०.

(४) **नासं**.१।१९; **नास्मृ**.१।१९; **अभा**.८; **व्यमा**.२७७; **व्यक**.१७ पदः (विधिः); **स्मृच**.२; **पमा**.१५; **नृप्र**.३; **सवि**.५२ थैवो (था प्रो) (द्यूतं समाह्वयश्चैवमष्टादशपदानि च):४५१ थैवो (था प्रो) चतुर्थपादं विना; **व्यसौ**.१२; **व्यप्र**.६; **व्यउ**.४; **प्रका**.२; **समु**.३ उत्त.; **विव्य**.२०.

(१) अथ अष्टादशपदमुच्यते तस्य सूत्रं ऋणादानमित्यादि। अभा. ८

(२) न च वाच्यं निक्षेपादिपदान्तरस्मरणादष्टादशपद इत्येतद्विरुद्धमिति। यत आह स एव— 'एषामेव प्रभेदोऽन्यः शतमष्टोत्तरं स्मृतम्। क्रियाभेदान्मनुष्याणां शतशाखो निगद्यते' इति॥ स्मृच. २

(३) ऋणादानादिदायविभागान्तानां देयनिबन्धनत्वेन प्रतिपादनं, साहसादिपञ्चकस्य दण्डनिबन्धनत्वमिति प्रकरणभेदं सूचयितुं 'दायभागोऽथ साहसम्'। इत्यथशब्दः प्रयुक्तः। सवि. ५३

अष्टादशपदावान्तरभेदाः

**[१]एषामेव प्रभेदोऽन्यो द्वात्रिंशदधिकं शतम्।**
**क्रियाभेदान्मनुष्याणां शतशाखो निगद्यते॥**

(१) एवं चैषामष्टादशव्यवहारपदानां मध्ये यस्य यस्य पदस्य ये ये निरूपणीया व्यवहारभेदा मुनिना दृष्टास्तस्य तस्यैव ते ते संख्यापूर्वकाः संयोज्य संततप्रकरणस्थिता एव द्वात्रिंशन्मात्रा (?) अपि सविस्तरमभिहिताः एष सकलशास्त्रार्थसंग्रहः। तेषां च यथाक्रमस्थितिभेदसहितानामष्टादशव्यवहारपदानामनुलग्ना एव निर्णया भविष्यन्ति। तेन व्यवहारभेदा अपि द्वात्रिंशदधिकशतप्रमाणाः शाखोपशाखावस्थिताः संक्षेपविस्तरसंख्योपलक्षिता इहापि लिख्यन्ते। तत्र तावत्संक्षेपसंख्येयम्। अभा.८

(२) एषामृणादानादीनामवान्तरभेदविवक्षयाऽष्टोत्तरं शतं भवतीत्याह। अप.२।१

(३) एतेषामष्टादशपदानां मध्ये एकैकस्य पदस्यावान्तरक्रियाभेदादनन्तभेदभिन्नत्वं शतशाखत्वम्। पमा.२०

(४) एषामेव प्रभेदो वक्ष्यमाणः शतमष्टोत्तरम्।

(१) **नासं**.१।२०(एषामेव प्रभेदोऽन्यः शतमष्टोत्तरं स्मृतः); **नास्मृ**.१।२०; **अपु**.२५३।३१ उत्त.; **अभा**.८; **मिता**.२।५ (एषामेव प्रभेदोन्यः शतमष्टोत्तरं भवेत्); **अप**.२।१ (एषामेव प्रभेदोऽन्यः शतमष्टोत्तरं स्मृतम्); **स्मृच**.२ अपवत्; **पमा**.१५; **व्यसौ**.१२ अपवत्; **व्यप्र**.६ उत्त.: २२३ अपवत्; **व्यउ**.४; **विता**.३३ अपवत्, मरीचिमनुः; **प्रका**.२ अपवत्; **समु**.४ अपवत्. [अस्य स्मृचव्याख्यानं 'द्विपदे' इति कात्यायनवचने द्रष्टव्यम्].

यथा ऋणादानादौ देयमदेयमित्यादि । क्रियाभेदात् मनुष्याणां चेष्टाप्रत्ययभेदात् शतशाखो बहुशाख उच्यते ।

नाभा.१।२०

ऋणादाने पञ्चविंशतिः षडौपनिधिके स्मृताः ।
संभूयोत्थे त्रयो भेदाश्चतुर्दत्ताप्रदानिके ॥
नवभेदा अशुश्रूषा वेतनं स्याच्चतुर्विधम् ।
अस्वामिविक्रये तु द्वौ विक्रीयादानमेकधा ॥
क्रीत्वा मुक्तं चतुर्भेदं समयाकार्यमेकधा ।
क्षेत्रवादो द्वादशधा स्त्रीपुंसोर्भेदविंशतिः ॥
दायभागे तु एकोना भेदा द्वादश साहसे ।
वाग्दण्डपारुष्ययोस्तु द्वयोर्भेदास्त्रयः स्मृताः ॥
द्यूताह्वयं चैकभेदं षड्भेदं तु प्रकीर्णकम् ।
एवमेषां प्रभेदानां द्वात्रिंशच्छतमेव वै ॥

* इदानीमियमेव भेदसंख्या प्रत्येकनामोद्दिष्टव्यवहारपदशाखाभेदैः सविस्तराऽभिलिख्यते। तत्र ऋणादाने देयादेयादिभेदाः कृताः । ऋणभेदः, धनभेदः, आपद्ब्राह्मणवृत्तिः, प्रमाणभेदः, कुसीदवार्धुषिकभेदौ, प्रतिभूभेदः, आधिभेदः,लेख्यभेदः,असाक्षिभेदः,पूर्वोत्तरसाक्षिनियमः, षड्विवादपदकसाक्षिनिन्दा, साक्षिप्रत्युद्धारः, कूटसाक्षिकम्,साक्ष्यधिश्रावणा,साक्षिबलाबलम् , लेख्यसाक्ष्यभावविधिः, घटविधिः, अग्निविधिः, उदकविधिः, विषविधिः, कोशविधिः, इति पञ्चविंशतिभेदमृणादानं भवेत् ।

तथा औपनिधिके—न्यासः, औपनिधिकम्, याचितकम्, अन्वाहितकम्, शिल्पिहस्तगतम्, पोगण्डधनमिति भेदाः षट् । संभूयसमुत्थाने—सामवायिकम्, ऋत्विग्याज्यम्, शौल्किकम् चेति भेदत्रयम् । दत्ताप्रदानिके—देयमदेयं दत्तमदत्तं चेति भेदचतुष्टयम् । अशुश्रूषाभ्युपगमे—शुश्रूषाभेदः, अशुभकर्मभेदः, शिष्यवृत्तम्, अन्तेवासिवृत्तम्, अधिककर्मकृद्वृत्तम्, स्वामिप्रसादाद्दास्यविमोक्षश्चेति भेदा नव । वेतनस्यानपाकर्मणि—भृतकवेतनम्, गोपालादिकम्, पण्यस्त्रीशुल्कविधानम्, भाटकविकल्पश्चेति भेदचतुष्टयम् ।

अस्वामिविक्रये—अस्वामिविक्रयो निधिलाभश्चेति भेदद्वयम् । विक्रीयासंप्रदानम्—एकभेदम् । क्रीत्वानुशये—कालभेदः, परिभुक्तवासोनियमः, धातुक्षयभेदः, तान्तवसंस्कारश्चेति भेदचतुष्टयम्। समयस्यानपाकर्म—एकभेदम्। तथा क्षेत्रजे—क्षेत्रवादः, गृहवादः, उद्यानवादः, निपानवादः, आयतनवादः, ग्रामवादः, चतुष्पथादिभूषणप्रतिषेधः, सेतुविधानम्, खिलविषयः, सस्यरक्षा, सस्यवृद्धिहेतुविधानम् ।

(स्त्रीपुंसयोः संबन्धे)—पुंस्त्वपरीक्षा, कन्यादाननियमः, ऋत्विग्व्यतिक्रमदोषः, कन्यादानकालः, कन्यावरयोरदुष्टदूषणापराधः, विवाहविधिः, स्वैरिण्यादिविधानम्, अपत्यताविवेकः, संग्रहणविधानम्, स्त्रीव्यतिक्रमदण्डः, गुरुतल्पलक्षणम्, पश्वादिगमनदोषः, पत्न्यभावेऽपत्यविधिः, जारजातविधानम्, नियुक्ताऽनियुक्तापरगमनविधिः, दुष्टस्त्रीपुरुषविधानम्, प्रोषितभर्तृकानिर्णयः, संकेतलक्षणं चेत्येवं विंशतिभेदाः ।

दायभागे—रिक्थभागविवेकः, तद्भागनिरूपणा, अविभाज्यनियमः, स्त्रीधननिरूपणा, स्त्रिया अभावे स्त्रीधननिरूपणा, भ्रातृद्रव्यविधिः, मातापितृपुत्रविभागः, अज्ञातपितृपुत्रिकादिविधिः, अनियुक्तपितृविधानम्,दीर्घतीव्रामयादिपुत्रांशविधिः, संसृष्टिपुत्रविभागः, प्रेतादिभ्रातृद्रव्यलब्धविधिः, कुटुम्बार्थे युक्तायासादिविधिः, विभागसंदेहनिर्णयः, पुत्रसंख्यानियमश्चेति भेदानामेकोनविंशतिः ।

साहसे—साहसलक्षणम्, साहसदण्डविधानम्, आधिच्छलस्तेयम्, क्षुद्रद्रव्यमध्यमोत्तमविधानम्,द्विविधं तस्करलक्षणम्, तस्करस्य व्यवकर्षणम्, भक्तावकाशदानादि, चौरविधिः, साहसस्तेयदण्डः, पदेन चौरान्वेषणविधिः, चोराभावे चौरादिद्रव्यापनयनं चेति द्वादश भेदाः ।

वाक्पारुष्ये—तद्भेदः, दण्डपारुष्ये—तद्भेदः, उभयोर्दण्डलक्षणं चेति भेदत्रयम् । द्यूतसमाह्वयम्—एकभेदम् । प्रकीर्णके—राज्ञा स्वयं वर्णाश्रमपालनम्, राजोपवर्णनम्, राजब्राह्मणवृत्तिः, स्वद्रव्यदाने राज्ञोऽभ्यनुज्ञा, ब्राह्मणकर्मवृत्तिनिरूपणा, अष्टमङ्गलकविधानमितिषड्भेदाः। एवमेतेष्वष्टादशप्रधानव्यवहारपदेष्वन्तर्गतव्यवहारपदभेदाः द्वात्रिंशदधिकशतम् ।

अभा.८–१०

---

*संख्यावाचकपदानि संख्येयविषये विसंवादीनि ।

(१) नास्मृ.१।२१–२५; अभा.८. एतत् श्लोकपञ्चकं अशुद्धिबहुलं वृत्तदुष्टं च.

व्यवहारयोनित्रयम्

**कामात्क्रोधाच्च लोभाच्च त्रिभ्यो यस्मात्प्रवर्तते ।**
**त्रियोनिः कीर्त्यते तेन त्रयमेतद्विवादकृत् ॥**

(१) कामादयस्त्रयोऽपि यस्मात् प्रवर्तन्ते तस्मात् त्रियोनिरेव व्यवहार उच्यते । अभा.१०

(२) यथासंभवं, सर्वत्रेति शेषः । स्मृच.१२

(३) कामादिभ्यस्त्रिभ्यः प्रवर्तनात् त्रियोनिः । यस्मादेतत् त्रयमपि निह्नवाभियोगवाग्दण्डपारुष्यादिद्वारेण विवादस्य कारणम् । नाभा.१।२१

अभियोगो द्विधा

**द्व्यभियोगस्तु विज्ञेयः शङ्कातत्त्वाभियोगतः ।**
**शङ्काऽसतां तु संसर्गात्तत्त्वं होढादिदर्शनात् ॥**

(१) तत्र द्विप्रकार एव अभियोगो भवति । एकः शङ्काभियोगो द्वितीयस्तत्त्वाभियोगश्च । एतयोश्च द्वयोरपि लक्षणमेतस्यैव श्लोकस्यार्धेनाभिहितम् । शङ्का सदाऽसत्संसर्गादिति । असन्तो ये प्रसिद्धाश्चौरकर्मप्रभृतयः, तथा वेश्याद्यूतव्यसनं चासत् । एतेषु यस्य सदा अत्यासक्तिर्दृश्यते, तस्यगृहभेदजस्योपरि नाष्टिकस्य पुरुषस्य महती शङ्का समुत्पद्यते । तेनार्थचलेन तस्यासत्सङ्गिनः नाष्टिकोऽभियोगं यं ददाति, स शङ्काभियोग उच्यते । यस्तु तत्त्वाभियोगः स होढादिदर्शनात् भवति । स्वकीयं द्रव्यं यन्नष्टं तद् होढमुच्यते चोरितं च । तद् दृष्ट्वा योऽभियोगः परस्य दीयते, स तत्त्वाभियोग उच्यते । तत्र शङ्काभियोगस्य देवकुलं निर्णयस्थानम् । तत्त्वाभियोगस्य राजकुलमिति । अभा.१०

(२) होढा लोप्त्रं, लिङ्गमिति यावत् । तेन दर्शनं साक्षाद्वा दर्शनं होढाभिदर्शनं तस्मात् । तत्त्वाभियोगोऽपि द्विविधः । प्रतिषेधात्मको विध्यात्मकश्चेति । यथा मत्तो हिरण्यादिकं गृहीत्वा न प्रयच्छति । क्षेत्रादिकं ममायमपहरतीति वा । मिता.२।५

(३) होढा लोप्त्रं, तत्साहचर्यात् शङ्काभियोगः चौर्यादिविषयः । असतां संसर्गादिति हेत्वभिधानाच्च । ऋणादिविवादेषु तु तत्त्वाभियोग एव, निःसंदिग्धनिराकुल इति वक्ष्यमाणात् । व्यमा.२८९

(४) असतामसाधूनां व्यवहारकर्तृत्वसंभवाद्भवति शङ्का संदेहः । होढाभिदर्शनं लोप्त्रादेर्लिङ्गस्य दर्शनं प्रत्यक्षदर्शनं वा । एवं च ऋणादानादौ प्रमाणपूर्वकः संशयपूर्वकश्चाभियोगः संभवतीति भवति द्व्यभियोगत्वम् । अभियोग आक्षेपः । अप.२।१

(५) कितवस्तेनाद्यसद्भिः संसर्गात्साधावपि स्तेयादिशङ्का भवति । होढादिदर्शनमपहृतैकदेशादिलिङ्गोपलम्भः प्रत्यक्षदर्शनं वा । उदाहरणमात्रमसतां संसर्गः, सतामप्याढ्यानां संसर्गे सति निक्षेपादिशङ्कासंभवात् । अतो नैतल्लक्षणं शङ्काभियोगस्य । *स्मृच.१२

(६) अभियुज्यत इत्यभियोगः । द्वाभ्यामभियोगो द्व्यभियोगः । द्वावभियोगौ यस्येति वा । नाभा.१।२२

व्यवहारपक्षद्वयम् ।

**पक्षद्वयाभिसंबन्धाद् द्विद्वारः समुदाहृतः ।**
**पूर्ववादस्तयोः पक्षः प्रतिपक्षस्तदुत्तरम् ॥**

(१) पूर्वपक्षरूपं प्रथमं द्वारं तेन द्वारेण व्यवहारः प्रविशति । द्वितीयं द्वारं प्रतिपक्षस्थित उत्तरवादी यानि वदति तेन द्वारेण प्रविशतीति । अभा.१०

(२) द्वारं कार्यारम्भप्रवृत्तिः । +अप.२।१

(३) अर्थिप्रत्यर्थिनोर्यौ पूर्वोत्तरपक्षौ तौ व्यवहारस्य

---

(१) **नासं**.१।२१; **नास्मृ**.१।२६; **अपु**.२५३।९-१०; **अभा**.१०; **अप**.२।१; **व्यक**.१७; **स्मृच**.१२; **पमा**.११तेन (तस्मात्); **स्मृचि**.२; **नृप्र**.३; **व्यसौ**.१२; **व्यप्र**.६; **व्यउ**.४; **राकौ**.३८४ उत्त.; **प्रका**.३; **समु**.३.

(२) **नासं**.१।२२; **नास्मृ**.१।२७; **अपु**.२५३।१०-११ ऽसतां(सद्भिः)होढादि (षोढाभि); **अभा**.१० सतां तु (सदाऽसत्); **मिता**.२।५ द्व्य (अ) ढादि (ढाभि); **व्यमा**.२८९ द्व्यभियोगस्तु (अभियोगः स) (संसर्गादसतां शङ्का तत्त्वं द्रोढाभिदर्शनात्); **अप**.२।१ ढादि (ढाभि); **व्यक**.१७; **स्मृच**.१२; **पमा**.१२; **व्यनि**.; **स्मृचि**.२ ढादि (डाभि); **नृप्र**.३; **व्यसौ**.१२ अपवत्; **व्यप्र**.६ स्मृचिवत्; **व्यउ**.४ स्मृचिवत्; **विता**.३२ अपवत्; **सकौ**.३८४ उत्त.; **प्रका**.३; **समु**.३.

*पराशरमाधवे (पृ.२०) व्यवहाराद्योते च वाक्यार्थः स्मृचवत् ।

\+ स्मृच. अपवत् ।

(१) **नासं**.१।२३ द्वा (द्वा) समु (स उ) त्तरम् (त्तरः); **नास्मृ**.१।२८; **अपु**.२५३।११-१२ स्तदुत्तरम्(स्त्वनन्तरः); **अप**.२।१ (पूर्वस्तु भाषया पक्षः प्रतिपक्षं तदुत्तरम्); **स्मृच**.१२ दुत्तरम् (थोत्तरः); **पमा**.१२ प्रतिपक्ष (प्रतिवाद), शेषं नासंवत्; **नृप्र**.३; **व्यसौ**.१२ स्तयोः(स्तु यः)त्तरम्(त्तरः); **व्यउ**.४ नासंवत्; **प्रका**.३ पक्षस्तदुत्तरम् (वादस्तदुत्तरः); **समु**.३ व्यप्रवत्.

प्रवर्तकौ तस्माद् द्विद्वारत्वम् । पमा.२०

***भूतच्छलानुसारित्वाद् द्विगतिः स उदाहृतः ।**
**भूतं तत्त्वार्थसंयुक्तं प्रमादाभिहितं छलम् ॥**
***तत्र शिष्टं छलं राजा मर्षयेद्धर्मसाधनः ।**
**भूतमेव प्रपद्येत धर्ममूला यतः श्रियः ॥**

## बृहस्पतिः

व्यवहारपादाः

**भाषापादोत्तरपादौ क्रियापादस्तथैव च ।**
**प्रत्याकलितपादश्च व्यवहारश्चतुष्पदः ॥**
**पूर्वपक्षः स्मृतः पादो द्वितीयश्चोत्तरः स्मृतः ।**
**क्रियापादस्तृतीयस्तु चतुर्थो निर्णयः स्मृतः ॥**

(१) अत्र च निर्णयफलको न्यायपरामर्शः निर्णयशब्देन लक्ष्यते । अप.२।८

(२) योऽयं निर्णयाख्यश्चतुर्थः पादोऽभिहितः, स धर्मादिभिश्चतुर्भिर्निष्पद्यते । पमा.१६

**मिथ्योक्तौ च चतुष्पात्स्यात् प्रत्यवस्कन्दने तथा ।**
**प्राङ्न्याये च स विज्ञेयो द्विपात्संप्रतिपत्तिषु ॥**

(१) सम्यग्रूपभाषोत्तरे सति इति बोद्धव्यम् । यत्र तु भाषैव उत्तरानर्हा, तत्रार्थिवादो निर्णयश्चेति पादद्वयम् । यत्र उत्तरस्य आभासत्वं तत्र पादत्रयं बोद्धव्यम् । ननु सत्योत्तरे भाषोत्तरे निर्णयश्चेति पादत्रयमेव । नैतत् । उत्तरवादिना भाषार्थस्याङ्गीकृतत्वात् निर्णीतस्याभावात् स्वोक्तेनेतरस्य पराजितत्वात् । *व्यमा.२८४

(२) भाषा, उत्तरं, प्रमाणं, निर्णयः इति व्यवहारस्य चत्वारः पादाः । संप्रतिपत्तौ तु भाषोत्तरात्मकौ द्वावेव पादौ । अप.२।७

(३) संप्रतिपत्तिव्यवहारो न चतुष्पादः, भाषोत्तरमात्रेण व्यवहारपर्यवसानात् । स्मृसा.९३

(४) यद्यपि संप्रतिपत्तावपि निर्णयोऽस्ति तथापि उत्तरवादिनैव भाषार्थस्याङ्गीकृतत्वेन क्रियासाध्यो न भवति इति द्विपादतोक्ता । +व्यत.२०३

व्यवहारपदानि

**कुसीदनिधिदेयाद्यं संभूयोत्थानमेव च ।**
**भृत्यदानमशुश्रूषा भूवादोऽस्वामिविक्रयः ॥**
**क्रयविक्रयानुशयः समयातिक्रमस्तथा ।**
**स्त्रीपुंसयोगः स्तेयं च दायभागोऽक्षदेवनम् ॥**
**एतान्यर्थसमुत्थानि पदानि तु चतुर्दश ।**
**पुनरेव प्रभिन्नानि क्रियाभेदादनेकधा ॥**
**पारुष्ये द्वे साहसं च परस्त्रीसंग्रहस्तथा ।**
**हिंसोद्भवपदान्येवं चत्वार्याह बृहस्पतिः ॥**
**हीनमध्योत्तमत्वेन प्रभिन्नानि पृथक्पृथक् ।**
**विशेष एषां निर्दिष्टश्चतुर्णामप्यनुक्रमात् ॥**
**पदान्यष्टादशैतानि धर्मशास्त्रोदितानि तु ।**
**मूलं सर्वविवादानां ये विदुस्ते परीक्षकाः ॥**

---

* व्याख्यासंग्रहः स्थलादिनिर्देशश्च दर्शनविधौ द्रष्टव्यः ।

(१) **व्यचि**.११; **व्यप्र**.४४.

(२) **व्यमा**.२८४ स्तृतीयस्तु (स्तथा चाऽन्यः); **अप**.२।८ श्चोत्तरः स्मृतः (स्तूत्तरस्तथा) स्तृतीयस्तु (स्तथा वाच्यः) स्मृतः (तथा); **व्यक**.१८ रः स्मृतः (रस्तथा) शेषं व्यमावत्; **पमा**.१६; **व्यचि**.७ स्मृतः (त्वाद्य) रः स्मृतः (रो मतः) शेषं व्यमावत्; **नृप्र**.२; **व्यत**.२०३ द्वितीय (द्विपाद) शेषं व्यमावत्; **व्यसौ**.१३ व्यकवत्; **व्यप्र**.४५ रः स्मृतः (रस्तथा) स्मृतः (तथा); **व्यउ**.३२ व्यप्रवत्; **समु**.४ रः स्मृतः (रस्तथा); **विव्य**.३ व्यमावत्.

(३) **व्यमा**.२८४; **अप**.२।७ क्तौ च (त्तरे) त्स्यात् (त्स) प्राङ्न्याये च स (व्यवहारस्तु); **व्यक**.१८च (तु) ये च स (यः स तु); **स्मृसा**.९३ थ्योक्तौ (थ्यायां) ष्पात्स्यात् (ष्पादः) स वि (परि) द्विपात् (द्विधा); **व्यचि**.७ च चतुष्पात्स्यात् (स चतुष्पादः) : १८ पूर्वार्धं स्मृसावत्; **व्यनि**. क्तौ च (क्तौ तु); **व्यत**.२०३; **चन्द्र**.११६ पूर्वार्धं स्मृसावत्; **व्यसौ**. १३-१४ व्यनिवत्; **वीमि**.२।८ च चतुष्पात्स्यात् (स चतुष्पादः); **व्यप्र**. ४४ मिथ्योक्तौ च चतुष्पात्स्यात् (मिथ्यायां चतुरः पादाः) विज्ञे (तु ज्ञे); **व्यउ**.३२ व्यप्रवत्; **व्यम**.९ अपवत्; **विव्य**.३ मिथ्योक्तौ च (लेख्योक्तौ तु).

*व्यचि. व्यमावत् । +वीमि. व्यतवत् ।

(१) **स्मृच**.९ निधि (निध्य) यं (य); **पमा**.२१; **प्रका**.२ निधि (निध्य); **समु**.४ प्रकावत्.

(२) **स्मृच**.९; **पमा**.२१; **प्रका**.२; **समु**.४.

(३) **स्मृच**.९; **पमा**.२१ तान्यर्थ (वं सम्यक्) त्थानि (त्थानं) तु (च) दाद (दैर); **प्रका**.२; **समु**.४.

(४) **स्मृच**.९ द्वे साहसं च (तु वधश्चैव) (हिंसोद्भवानि चत्वारि पदान्याह बृहस्पतिः); **पमा**.२१; **प्रका**.२ स्मृचवत्; **समु**.५ स्मृचवत्. (५) **प्रका**.५; **समु**.५.

(६) **स्मृच**.९; **पमा**.२१; **व्यप्र**.२२३; **प्रका**.२; **समु**.५.

## कात्यायनः

व्यवहारपदावान्तरभेदाः

**द्विपदे[1] साध्यभेदात्तु पदाष्टादशतां गते ।**
**अष्टादश क्रियाभेदात् भिन्नान्यथ सहस्रधा ॥**

(१) क्रियाभेदात्साध्यभेदादित्यर्थः । अनेन व्यवहारा अप्यष्टसहस्रशो भिन्ना इत्यर्थादुक्तम् । 'शतमष्टोत्तरं' 'सहस्रशः' इत्येतयोर्बहुत्वप्रतिपादनमात्रपरत्वादविरोधः । स्मृच.२

(२) एतानष्टादशपदानवान्तरानन्तभेदभिन्नान् प्रकारान्तरेण द्वेधा उपसंगृह्णाति कात्यायनः—'द्विपदे साध्यभेदात्तु' इत्यादि । पमा.२०

(३) सहस्रशो बहुश इत्यर्थः । व्यनि.

व्यवहारपादाः

**पूर्वपक्षश्चोत्तरश्च[2] प्रत्याकलितमेव च ।**
**क्रियापादश्च तेनायं चतुष्पात्समुदाहृतः ॥**

(१) प्रत्याकलितम्—उत्तरस्वीकारानन्तरं विवदमानयोः कस्यात्र क्रियोपन्यसनं न्याय्यमिति प्राड्विवाकादीनां विमर्शनम् । क्रिया लिखितादिप्रमाणं तन्निर्देशः क्रियापादः। विवादात्मकव्यवहारपर्यवसानभागतया प्रत्याकलितक्रिययोरपि व्यवहारत्वात्'चतुष्पात्समुदाहृत'इत्युक्तम्।अत एव संग्रहकारेणापि पर्यवसानभागस्यापि व्यवहारत्वमुक्तम्— 'परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु । वाक्यन्यायव्यवस्थानं व्यवहार उदाहृतः' इति ॥ केचित् उपन्यस्ते प्रमाणे प्रमाणाभासशङ्कापनोदकं जयापजयनिर्णयफलकं विमर्शनं प्रत्याकलितमाहुः । तन्मते पादसंख्यैव विवक्षिता न तु क्रमः । प्रत्याकलितपादस्य तुरीयत्वापातात् । यत्तु याज्ञवल्क्येनोक्तम् (यास्मृ. २।८) 'तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा' इति । तत्रापि सिद्धिशब्देन सिद्धिफलकं प्रत्याकलितमुच्यते। न पुनर्जयपराजयावधारणरूपं, तस्य संप्रतिप्रत्युत्तरेऽपि सत्त्वात्, द्विपात्संप्रतिपत्तिष्विति वचनविरोधप्रसङ्गात् । तस्मात्कात्यायनवचनसमानार्थतैव याज्ञवल्कीयस्यापि वचनस्य । अन्ये पुनरस्य वचनस्य 'भाषोत्तरक्रियासाध्यसिद्धिभिः क्रमवृत्तिभिः । आक्षिप्तचतुरंशस्तु चतुष्पादभिधीयते ॥' इति स्मृत्यन्तरवचनेन समानार्थत्वं वर्णयन्ति। संप्रतिप्रत्युत्तरे तु साधनानिर्देशात् प्रतिज्ञार्थस्यासाध्यत्वाच्च न साध्यसिद्धिलक्षणः पादोऽस्तीति द्विपात् संप्रतिपत्तिष्विति वचनविरोधोऽपि नास्तीति च वदन्ति । अत्र मते पादक्रमोऽपि स्मृत्यन्तरे दर्शितः— 'भाषापादस्तु तत्राद्यो द्वितीयश्चोत्तरं तथा। क्रियापादस्तथा चान्यश्चतुर्थो निर्णयः स्मृतः' इति ॥ स्मृच.१३

(२) प्रत्याकलितरूपस्तृतीय उक्तः । सभापतिसभ्यादिविचारः प्रत्याकलितम् । न च तस्य व्यवहर्तृवादिप्रतिवादिनिष्ठत्वाभावेन व्यवहारांशत्वाभाव इति वाच्यम् । विषयतासंबन्धेन तन्निष्ठत्वोपपत्तेः । व्यउ.३२

**मिथ्योक्तौ[1] स चतुष्पात्स्यात् प्रत्यवस्कन्दने तथा।**
**प्राङ्न्याये च स विज्ञेयो द्विपात्संप्रतिपत्तिषु ॥**

## पितामहः

**सोत्तरानुत्तरत्वेन[2] व्यवहारो द्विधा मतः ॥**

## उशना

व्यवहारपदानि

**कार्यमुद्दिश्य[3] यत्किञ्चिद्यः कश्चिद्राज्ञि वेदयेत् ।**
**पदं तदष्टादशधा विवादानां प्रकीर्तितम् ॥**

## स्मृत्यन्तरम्

व्यवहारपादाः

**भाषोत्तरक्रियासाध्यसिद्धिभिः[4] क्रमवृत्तिभिः ।**
**आक्षिप्तचतुरंशस्तु चतुष्पादभिधीयते ॥**
**भाषापादस्तु[5] तत्राद्यो द्वितीयश्चोत्तरं तथा ।**
**क्रियापादस्तथा चान्यश्चतुर्थो निर्णयः स्मृतः ॥**

---

(१) **स्मृच.**२ न्यथ (न्यष्ट) धा (शः) उत्त.; **पमा.**२०; **व्यनि.** द्वि (द्वे) शेषं स्मृचवत्; **व्यप्र.**२२३ स्मृचवत्, उत्त.; **प्रका.**२व्यनिवत्; **समु.**४ व्यनिवत्.

(२) **अप.**२।८ रश्च ( रं च); **व्यक.**१८ अपवत्; **स्मृच.** १३; **दीक.**३२; **व्यनि.** पक्षश्चोत्तरश्च (पक्षोत्तरश्चैव) तेनायं (विज्ञेयः); **व्यसौ.**१३ रश्च ( रं च) त्समु (द उ); **व्यप्र.**४४ अपवत्; **व्यउ.**३२ पक्षश्चोत्तरश्च (पक्षोत्तरं चैव); **प्रका.**४; **समु.**४ अपवत्.

(१) **स्मृच.**५३; **सवि.**१०८त्स्यात् (त्तु); **प्रका.**३३-३४; **समु.**२६. (२) **सवि.**३१९. (३) **व्यक.**१९ यत्किञ्चित् (पीडां स्वां); **स्मृच.**२; **नृप्र.**३; **प्रका.**२; **समु.**३.

(४) **मिता.**२।८; **स्मृच.**१३; **स्मृचि.**१ (=); **व्यप्र.**४४; **व्यम.**९; **विता.**५१ नारदः; **प्रका.**५; **समु.**४.

(५) **स्मृच.**१३; **सवि.**६२; **प्रका.**५; **समु.**४.

## अग्निपुराणम्

व्यवहारपदानि

[1]व्यवहारं प्रवक्ष्यामि नयानयविवेकदम् ।
[2]व्यवहारोऽष्टादशपदस्तेषां भेदोऽथ वै शतम् ॥

## शुक्रनीतिः

[3]पूर्वपक्षः स्मृतः पादो द्वितीयश्चोत्तरात्मकः ।
क्रियापादस्तृतीयस्तु चतुर्थो निर्णयाभिधः ॥

अभियोगो द्विधा

[4]शङ्काऽसतां तु संसर्गादनुभूतकृतेस्तथा ।
होढाभिदर्शनात्तत्त्वं विज्ञास्यति विचक्षणः ॥

## मानसोल्लासः

व्यवहारपदानि

[5]प्रथमं स्यादृणादानं निक्षेपस्तदनन्तरम् ।
अस्वामिविक्रयश्चैव तृतीयं परिकीर्तितम् ॥
संभूय च समुत्थानं चतुर्थं परिभाषितम् ।
पञ्चमं दत्तमाख्यातं षष्ठं दत्तापहारकम् ॥
सप्तमं वेतनादानं संविल्लङ्घनमष्टमम् ।
क्रयविक्रयानुशयौ नवमं दशमं तथा ॥
एकादशं तथा प्रोक्तं विवादः स्वामिपालयोः ।
स्वामिभृत्यविवादश्च द्वादशं समुदाहृतम् ॥
त्रयोदशं समाख्यातं सीमाविवदनं बुधैः ।
निरूपितं बुधैरत्र वाक्पारुष्यं चतुर्दशम् ॥
उक्तं पञ्चदशं तज्ज्ञैर्दण्डपारुष्यसंज्ञितम् ।
स्तेयं षोडशमाख्यातमृषिभिस्तत्त्वदर्शिभिः ॥
पदं सप्तदशं नाम साहसं सद्भिरीरितम् ।
अष्टादशं समादिष्टं स्त्रीसङ्ग्रहणसंज्ञकम् ॥
एकोनविंशं संप्रोक्तं स्त्रीपुंधर्मो विचारकैः ।
दायभागाभिधानं च तत्स्याद् विंशतिमं पदम् ॥
एकविंशं तथा द्यूतं द्वाविंशं तु समाह्वयम् ।
व्यवहारपदान्येतान्याह सोमेश्वरो नृपः ॥

अभियोगो द्विधा

अभियोगो द्विधा ज्ञेयः शङ्कया प्रत्ययेन वा ।
असत्संसर्गतः शङ्का प्रत्ययोऽन्याङ्गदर्शनात् ॥

---

(१) अपु. २५३।१. (२) अपु. २५३।३१. (३) शुनी. ४।६५०. (४) शुनी. ४।५९८. (५) मासो. २।२०।१२६५-१२७३, १२६४.

# सभा

## वेदाः

व्यवहारसभा

**[1]अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानाम्।**
**जायेव पत्य उशती सुवासा उषा हस्रेव नि रिणीते अप्सः ॥**

(१) अभ्रातृकेव पुंसः पितनेत्यभिमुखी सन्तानकर्मणे पिण्डदानाय न पतिम्। गर्तारोहिणीव धनलाभाय दाक्षिणाजी। गर्तः सभास्थाणुर्गृणातेः। सत्यसंगरो भवति। तं तत्र याऽपुत्रा याऽपतिका सारोहति। तां तत्राक्षैराघ्नन्ति सा रिक्थं लभते। नि. ३।५

(२) अभ्रातेव भ्रातृरहितेव, पुंसः पित्रादीन् प्रति, प्रतीची स्वकीयस्थानात् प्रतिनिवृत्तमुखी सती, एति गच्छति। यथा लोके भ्रातृरहिता योषित् स्वोचितवासोऽलङ्कारादिलाभाय पितॄन् एति। सति भ्रातरि स एव उचितप्रदानादिना सम्यक् तोषयति। तदभावात् पितरमेव प्राप्नोति। तथा धनानां सनये गर्तारुगिव इत्यपरो दृष्टान्तः। गर्त इति गृहनाम 'कृदरो गर्तः' (नि.३।४।३) इति तन्नामसु पाठात्। अत्रौचित्येन राजपुरुषैः न्यायनिर्णेतृभिश्च अधिष्ठितं स्थानमुच्यते तदारोहतीति गर्तारुक्। यथा लोके, काचित् गतभर्तृका योषित्, धनानां स्वकीयरिक्थानां, सनये लाभाय, गर्तमागच्छति। तां तु सभ्याः विचार्य यदीयं रिक्थं लभते चेत् अक्षैः संताड्य तदीयं धनं वितरन्ति। ऋसा.

राजा प्राड्विवाकः

**[2]यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यन् जनानाम्।**

(१) वरुणो, यासामपां, राजा स्वामी, मध्ये मध्यमलोके, याति गच्छति। किं कुर्वन्। जनानां प्रजानां, सत्यानृते सत्यं चानृतं चावपश्यन् जानन्नित्यर्थः। ऋसा.

(२) राजा राजमानो वरुणः एतत्सञ्ज्ञः पापिनां निग्रहकर्ता देवः, यासां अपां, मध्ये मध्यभागे, समुद्रमध्य इति यावत्। तत्र स्थित्वा जनानां सत्यानृते सत्यं यथार्थभाषणं तद्विपरीतमनृतं, उभे अवपश्यन् तत्कर्तुर्निग्रहार्थं अवयुत्य परस्परसांकर्यपरिहारेण जानन्, याति गच्छति पाशहस्तस्तत्रतत्र सन्निधत्ते। असा.

**[3]सुप्रणीतिश्चिकितुषो न शासुः।**

अयमग्निः, चिकितुषो न विदुषो धर्मशास्त्राभिज्ञस्य, शासुः शासनमिव, सुप्रणीतिः सुखेन प्रणेतव्यः। यथा विद्वच्छासनं सर्वेष्वनुष्ठेयेषु तत्संशयनिर्णयाय नीयते तद्वत्। ऋसा.

**[2]अन्तः पश्यन्ति वृजिनोत साधु सर्वं राजभ्यः परमा चिदन्ति।**

आदित्या अन्तः मध्ये प्राणिनां हृदि, प्रेरकतया वर्तमानाः सन्तो, वृजिना वृजिनानि पापानि, उत अपि च, साधु साधूनि पुण्यानि च प्राणिभिः कृतानि, पश्यन्ति जानन्ति। परमा चित् परमाणि दूरदेशावस्थितान्यपि, सर्वा सर्वाणि दृश्यमानानि, राजभ्यो राज्ञामीश्वराणामादित्यानामात्यन्तिके समीपे वर्तत इति शेषः। ऋसा.

**[3]यो राजभ्य ऋतनिभ्यो ददाश।**

यो राजभ्यो राजमानेभ्यः ऋतनिभ्य ऋतस्य सत्यस्य वा नेतृभ्यः आदित्येभ्यो, ददाश ददाति। ऋसा.

**[4]विशां राजानमद्भुतमध्यक्षं धर्मणामिमम्।**
**अग्निमीळे स उ श्रवत्।**

विशां प्रजानां, राजानमीश्वरं, अद्भुतं महान्तं, धर्मणां कर्मणां, अध्यक्षं अनुसंधातारं, इममग्निं, ईळे स्तौमि। स उ स एवाग्निः, श्रवत् अस्मदीयां श्रुतिं शृणोतु। ऋसा.

सभा

**[5]नमः सभाभ्यः सभापतिभ्यश्च वो नमः।**

---

(१) ऋसं.१।१२४।७. (२) ऋसं.७।४९।३; असं.१।३३।२.

(१) ऋसं.१।७३।१. (२) ऋसं.२।२७।३. (३) ऋसं.२।२७।१२. (४) ऋसं.८।४३।२४. (५) तैसं.४।५।३; कासं. १७।१३; कसं.२७।३; मैसं.२।९।४; शुमा.१६।२४; शुका.१७।३.

(१) नमः सभाभ्यः । सभादिभ्यो रुद्रदृष्टिः कर्तव्येति तात्पर्यार्थः । शुउ.

(२) सभारूपेभ्यो रुद्रेभ्यो नमः । सभायाः पतिभ्यो नमः । *शुम.

गणाः व्राताश्च

[१]नमो गणेभ्यो गणपतिभ्यश्च वो नमः ।
नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमः ।

(१) गणः समूहः । व्रातमर्हन्ति ते व्राताः गणविशेषाः । शुउ.

(२) देवानुचरा भूतविशेषा गणास्तेभ्यो नमः । गणानां पालका गणपतयस्तेभ्यो नमः । व्राता नानाजातीयानां संघास्तेभ्यो नमः । व्रातपालकाः व्रातपतयस्तेभ्यो वो नमः । ×शुम.

वादिप्रतिवादिनौ

[२]यथा वा आयतां प्रतीक्षते ।

यथा लोके पृच्छन्तं वादिनं प्रत्याभिमुख्येन नियतां वाचं वक्तुं प्रतिवादी सावधानः प्रतीक्षते । तैसा.

प्राड्विवाकः

[३]यास्त आतस्थुरात्मानं या आविविशुः परुः परुः ।
तास्ते यक्ष्मं विबाधन्तामुग्रो मध्यमशीरिव ॥

तत्र दृष्टान्तः—मध्यमशीरिव, मध्यमेन स्वकीयपरकीयपक्षपातरहितेन शास्त्रीयमार्गेण शेते वर्तत इति मध्यमशीः, तादृशो राजा दुष्टान् प्रत्युग्रो भूत्वा यथा विनाशयति तद्वत् । तैसा.

सभा

[४]यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये ।
यच्छूद्रे यदर्य एनश्चकृमा वयम् ।
यदेकस्याधिधर्मणि तस्यावयजनमसि स्वाहा ॥
[५]यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये ।
यदेनश्चकृमा वयं यदप्सश्चकृमा वयम् ।
यदेकस्यापि धर्मण्येतत्तदवयजामहे स्वाहा ॥

[१]निरिन्द्रिया स्त्री पुमानिन्द्रियवाँस्तस्मात्पुमाँसः सभां यन्ति न स्त्रियः ।
[२]यद्ग्रामे यदरण्ये यत्सभायाँ यदिन्द्रिये ।
यदेनश्चकृमा वयँ यदप्सश्चकृमा वयम् ।
तदेकस्यापि चेतसि तदेकस्यापि धर्मणि ।
तस्य सर्वस्याँहसोऽवयजनमसि ॥

व्यवहारसभा

[३]धर्माय सभाचरम् ।

(१) सभायां चरतीति तम् । शुम.

(२) धर्माभिमानिने सभायां नित्यं चरन्तं धर्मस्य प्रवक्तारम् । तैब्रासा.

प्राड्विवाकः

[४]मर्यादायै प्रश्नविवाकम् ।

(१) कृतान् प्रश्नान्यो विविनक्ति ब्रूते, स प्रश्नविवाकः, तम् । शुम.

(२) मर्यादायै शास्त्रार्थव्यवस्थाभिमानिन्यै, प्रश्नविवाकं परकीयप्रश्नं सम्यग्विविच्योत्तरस्य वक्तारम् । तैब्रासा.

व्यवहारसभा

[५]यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये ।
यच्छूद्रे यदर्ये यदेनश्चकृमा वयम् ।
यदेकस्याधिधर्मणि तस्यावयजनमसि ॥

सभायां पक्षपातादि । शुम.

वादिप्रतिवादिनौ

[६]नेच्छत्रुः प्राशं जयाति सहमानाभिभूरसि ।
प्राशं प्रतिप्राशो जह्यरसान् कृण्वोषधे ॥
सुपर्णस्त्वान्वविन्दत् सूकरस्त्वाखनन्नसा ।
प्राशं प्रतिप्राशो जह्यरसान् कृण्वोषधे ॥
इन्द्रो ह चक्रे त्वा बाहावसुरेभ्यस्तरीतवे ।
प्राशं प्रतिप्राशो जह्यरसान् कृण्वोषधे ॥
पाठामिन्द्रो व्याश्नादसुरेभ्यस्तरीतवे ।
प्राशं प्रतिप्राशो जह्यरसान् कृण्वोषधे ॥
तयाहं शत्रून् साक्ष इन्द्रः सालावृकाँ इव ।
प्राशं प्रतिप्राशो जह्यरसान् कृण्वोषधे ॥

---

* शुसा. शुमवत् । × तैसा. शुसा. शुमवत् ।

(१) तैसं.४।५।४; कासं.१७।१३; कसं.२७।३; मैसं.२।९।५; शुमा.१६।२५; शुका.१७।३. (२) तैसं.३।२।९. (३) तैसं.४।२।६. (४) तैसं.१।८।३. (५) कसं.९।४.

(१) मैसं.४।७।४. (२) मैसं.१।१०।२. (३) शुमा.३०।६; तैब्रा.३।४।२. (४) शुमा.३०।१०; तैब्रा.३।४।६. (५) शुमा.२०।१७. (६) असं.२।२७।१-७.

**रुद्र जलाषभेषज नीलशिखण्ड कर्मकृत् ।**
**प्राशं प्रतिप्राशो जह्यरसान् कृण्वोषधे ॥**
**तस्य प्राशं त्वं जहि यो न इन्द्राभिदासति ।**
**अधि नो ब्रूहि शक्तिभिः प्राशि मामुत्तरं कृधि ॥**

हे पाठाख्ये ओषधे, शत्रुः प्रतिवादी, प्राशं प्रष्टारं वादिनं त्वत्सेवकं मां, नेत् जयाति नैव जयतु । यतस्त्वं सहमाना शत्रुसहनस्वभावा, अतः अभिभूरसि प्रतिवादिनः शत्रोरभिभवित्री भवसि । एवं अतिशयितवीर्ययुक्तायास्तव सेवया मां शत्रुर्न जयतु इत्यर्थः । प्राशं प्रष्टारं वादिनं मां उद्दिश्य, प्रतिप्राशः प्रतिकूलप्रश्नकर्तॄन् प्रतिवादिनो, जहि पराजितान् कुरु । (१)

हे इन्द्र, यः प्रतिवादी, नः अस्मान्, अभिदासति उपक्षपयति युक्तिभिस्तिरस्करोति । तस्य उपक्षपयितुः, प्राशं प्रतिकूलप्रश्नरूपं वाक्यं, त्वं जहि नाशय । तथा शक्तिभिस्त्वदीयैः सामर्थ्यविशेषैः, नः अस्मान्, अधि ब्रूहि अधिकवचनयुक्तान् ग्राह्यवाचः कुरु । फलितमाह । प्राशं प्रष्टारं वादिनं मां, उत्तरं प्रतिवादिनोऽप्युत्कृष्टतरं, कृधि कुरु । (७) *असा.

व्यवहारसभा

**[१]सभा च मा समितिश्चावतां प्रजापतेर्दुहितरौ संविदाने ।**
**येना संगच्छा उप मा स शिक्षाच्चारु वदानि पितरः संगतेषु ॥**

(१) प्रजापतिः प्रजानां पाता वा पालयिता वा । नि.१०।४२

(२) सभा विदुषां समाजः । समितिः संयन्ति संगच्छन्ते युद्धाय अत्रेति समितिः संग्रामः । सांग्रामीणजनसभेत्यर्थः । ते उभे अपि, मा मां वादिनं, अवतां रक्षताम् । कीदृश्यौ । प्रजापतेः सर्वजगत्स्रष्टुर्दुहितरौ पुत्र्यौ । विद्वत्संघस्य सभात्वात् तदुक्तेश्च सर्वशास्त्रनिर्णीतधर्मरूपत्वात् प्रजापतिपुत्रीत्वव्यपदेशः । ते च सभे संविदाने अस्मद्रक्षणविषयं ऐकमत्यं प्राप्ते । किं च येन वादिना, संगच्छै वक्तुं संगतो भवानि । स विद्वान्, मा मां संगतं, उप शिक्षात् उपेत्य शिक्षयतु । समीचीनं वादयत्वित्यर्थः । अयमर्थः । येन सह अहं विवदे, स स्वयं मदुक्तवचनविघटनपटूनि वाक्यानि अभाषमाणः प्रत्युत मामेव स्ववचनतिरस्कारकवाक्यवादिनं करोत्विति । अपि च, हे पितरः पालकाः, मदुक्तं वाक्यं साधु साध्विति अनुमोदमानाः पितृभूता वा हे सभासदो जनाः, संगतेषु मया सह वक्तुं मिलितेषु वादिषु, चारु न्यायोपेतं सदुत्तरं, वदामि यथा सम्यग् वदामि तथा अनुगृण्हीतेत्यर्थः । असा.

**[२]विद्म ते सभे नाम नरिष्टा नाम वा असि ।**
**ये ते के च सभासदस्ते मे सन्तु सवाचसः ॥**

हे सभे, ते तव, नाम नामधेयं, विद्म जानीमः । तन्नाम दर्शयति । हे सभे नाम नाम्नेति यावत् । नरिष्टा अहिंसिता परैरनभिभाव्या । एतन्नामिका असि वै भवसि खलु । अंतस्ते तव संबन्धिनः ये के च सभासदः सभायां सीदन्तो विद्वांसः, ते सर्वे, मे मम, सवाचसः समानवाक्याः, सन्तु भवन्तु । न हि सभा सर्वा संभूय एकं प्रति ब्रूते अपि तु तत्रत्याः कतिपये । तेऽपि मद्विषये अनुकूलवाक्या भवन्तु इति प्राथ्र्यते । असा.

**[३]एषामहं समासीनानां वर्चो विज्ञानमा ददे ।**
**अस्याः सर्वस्याः संसदो मामिन्द्र भगिनं कृणु ॥**

समासीनानां सभायां अवतिष्ठमानानां, एषां पुरोवर्तिनां वादिनां, वर्चः तेजो वैदुष्यजनितप्रभावविशेषं, विज्ञानं वेदशास्त्रार्थविषयं ज्ञानं च । विज्ञानं शिल्पशास्त्रयोरिति तद्विदः । तद् अहं आददे स्वीकरोमि अपहरामीत्यर्थः । किंबहुना हे इन्द्र, इन्द्रस्यैव वागनुशासनकर्तृत्वात् सभाजयकर्मणि तस्यैव प्रार्थनम् । तादृशेन्द्र, अस्याः पुरः स्थितायाः, सर्वस्याः संसदः सभायाः, भगिनं–भगो भाग्यं वैदुष्यलक्षणं जयलक्षणं वा–तद्वन्तं मां कृणु कुरु । सर्वामपि सभां मदेकवाक्यश्रवणपरां कुर्वित्यर्थः । असा.

**[४]यद् वो मनः परागतं यद् बद्धमिह वेह वा ।**
**तद् व आ वर्तयामसि मयि वो रमतां मनः ॥**

हे सभासदः, वः युष्माकं, यन्मनः मानसं, परागतं अस्मत्तः परागत्य अन्यत्र गतं, अस्मदनभिमुखमित्यर्थः ।

---

*द्वितीयादिषष्ठान्तमन्त्रव्याख्या प्रकृतानुपयुक्तत्वात् न समुद्धृता ।

(१) **असं**.७।१३।१.

(१) **असं**.७।१३।२. (२) **असं**.७।१३।३. (३) **असं**.७।१३।४.

यच्च मनः, इह वा अस्मिन् वा विषये बद्धं संसक्तम्। मनसो विषयासङ्गेन अनवस्थानात्। तत्संबन्धार्हान् सर्वान् पदार्थान् अभिनयेन दर्शयति। इह वा इह वेति।अस्मद्व्यतिरिक्तसर्वविषयेषु संसक्तं वर्तते। तत् तादृशं, वः युष्माकं, मनः, आ वर्तयामसि अस्मदभिमुखं कुर्मः। आवर्तितं च वो मनः मयि रमतां मदनुकूलार्थचिन्तापरं भवत्वित्यर्थः। असा.

व्यवहारसभाया उत्पत्तिः

[1]विराड् वा इदमग्र आसीत्।
तस्या जातायाःसर्वमबिभेदियमेवेदं भविष्यतीति॥
सोदक्रामत् सा गार्हपत्ये न्यक्रामत्॥
गृहमेधी गृहपतिर्भवति य एवं वेद॥
सोदक्रामत् सा सभायां न्यक्रामत्॥
यन्त्यस्य सभां, सभ्यो भवति य एवं वेद॥
सोदक्रामत् सा समितौ न्यक्रामत्॥
यन्त्यस्य समितिं सामित्यो भवति य एवं वेद॥
सोदक्रामत्, सामन्त्रणे न्यक्रामत्॥
यन्त्यस्यामन्त्रणमामन्त्रणीयो भवति य एवं वेद॥

व्यवहारसभा

ये [2]ग्रामा यदरण्यं याः सभा अधि भूम्याम्।
ये संग्रामाः समितयस्तेषु चारु वदेम ते॥
[3]स विशोऽनुव्यचलत्। तं सभा च समितिश्च
सेना च सुरा चानुव्यचलत्॥
सभायाश्च वै स समितेश्च सेनायाश्च सुरायाश्च
प्रियं धाम भवति य एवं वेद॥
[4]आविक्षितस्य कामप्रेर्विश्वेदेवाः सभासदः॥
[5]सप्रथ सभां मे गोपाय। ये च सभ्याः सभासदः॥
तानिन्द्रियावतः कुरु। सर्वमायुरुपासताम्॥

प्राड्विवाकः

[6]निषसाद धृतव्रत इति धृतव्रतो वै राजा न वा एष सर्वस्मा इव वदनाय न सर्वस्मा इव कर्मणे यदेव साधु वदेद्यत्साधु कुर्यात्तस्मै वा एष च श्रोत्रियश्चैतौ ह वै द्वौ मनुष्येषु धृतव्रतौ।

(१) असं.८।१०।१-३,८-१३. (२) असं.१२।१।५६. (३) असं.१५।९।१-३. (४) ऐब्रा.३९।७. (५) तैब्रा.१।२।१. (६) शब्रा.५।४।४।५.

व्यवहारसभा

[1]अप्रतिवाद्येनं भ्रातृव्यो भवति य एवं वेद। [2]वर्चां मधुकमित्येते आस्येऽवधायापाम्फेनेनेत्येतं मनसानुद्रुत्य अन्ते स्वाहाकारेण निगीर्य राजन्वानहमराजकस्त्वमसीत्युक्त्वा विवदेत् पर्षदि राजनि चोत्तरवादी भवति।

अथ पर्षदादिराजसभायां केनचिद्विवादे सति, अभयजयहेतुप्रयोगमाह– वर्चामिति। वर्चां मधुकमित्येते आस्ये, अवधाय स्थापयित्वा, 'अपाम्फेनेन नमुचेः शिर' इत्येतत् साम मनसा अनुद्रुत्य उच्चार्य, अन्ते मन्त्रान्ते, स्वाहाकारेण निगीर्य निगरणं कृत्वा, आत्मानं राजन्वानहं इत्युक्त्वा, अराजकस्त्वमसीति प्रतिवादिनं उक्त्वा, विवदेत् तेन सह विवादं कुर्यात्। तथा सति स वक्ता परिषदि राजनि चोत्तरवादी भवति इति। सासा.

[3]अथातो वाग्रसो यस्यां संसद्यधीयानो वा भाषमाणो वा न विरुरुचुषेत तत्रैतामृचं जपेत्।

अथ वीणोपास्तिकथनानन्तरं,यतः कारणात् फलोक्तिप्रसंगेन सभारञ्जनहेतुर्मन्त्रो बुद्धिस्थोऽतः कारणावाग्रसो वाचः सारभूतो मन्त्रोऽभिधीयत इति शेषः। यस्यां संसदि विद्वत्सभायां, अधीयानो वेदशास्त्रगोष्ठीं कुर्वाणः पुरुषो राजसभायां वा लौकिकान्युचितवाक्यानि भाषमाणो वा, न विरुरुचुषेत विशेषेण रुचिकरः सर्वजनानां रञ्जको यदि न भवेत्,तत्र तस्यां सभायां,रञ्जकत्वसिध्यर्थमेतां वक्ष्यमाणामृचं जपेत् तन्मन्त्रपुरश्चरणादिकं कुर्यात्। * ऐआसा.

[4]ओष्ठापिधाना न कुलीदन्तैः परिवृता पविः।
सर्वस्यै वाच ईशाना चारु मामिह वादयेदिति वाग्रसः॥

सर्वस्यै वाचो वेदशास्त्रलौकिकोक्तिरूपस्य सर्वस्यापि वचनजातस्य, ईशाना स्वामिरूपा वाग्देवता, मां सभारञ्जकोक्तिकामं, इहास्यां विद्वत्सभायां राजसभायां वा, चारु शोभनं सर्वरञ्जकं यथा भवति तथा, वादयेत् संभाषकोक्तिं प्रेरयतु। कीदृशी वाग्देवता। ओष्ठापिधाना न। उपमार्थो नकारः। ओष्ठद्वयमपिधानं वस्त्रवदाच्छादनं यस्या जिह्वादिस्थानगताया वाग्देवतायाः सेयमोष्ठापिधा-

(१) ताब्रा.१०।७।३. (२) साब्रा.२।७।५. (३) ऐआ.३।२।५. (४) ऐआ.३।२।५.

ना। ओष्ठयोराच्छादकवस्त्रसादृश्यमेव न तु मुख्यमाच्छादकत्वमित्यभिप्रेत्योपमार्थो नकारः पठितः। कुलीदन्तैर्वज्रवद्घनीभूतैरन्तरालच्छिद्ररहितैर्दन्तैः, परिवृता परितो वेष्टिता वाग्देवता। दन्तानां विरलत्वे सत्युच्चार्यमाणा वर्णा आभासा भवन्ति। पविर्वज्रवत्तीक्ष्णशब्दोच्चारणेऽत्यन्तं पट्वी देवतेत्यर्थः। इत्येवमुक्तो यो मन्त्रः सोऽयं वाग्रसः सर्वस्याः वाचः सारभूतोऽवगन्तव्यः। ऐआसा.

## गौतमः

समाङ्गानि

**[1]नृपश्च पुरुषसभ्यगणकलेखकहेमाग्न्यम्बुप्राड्विवाकादिसाधनसंपन्नो व्यवहारं पश्येत्।**

प्राड्विवाकः

**[2]राजा प्राड्विवाको ब्राह्मणो वा शास्त्रवित्।**

(१) उक्ताः साक्षिणः केन प्रष्टव्या इत्यत आह राजेति। पृच्छतीति प्राट्, पृष्टं विवेक्तीति विवाकः। पृच्छति वा असौ विवादिनं साक्षिणो वा, तदुक्तं च विचारयतीति प्राड्विवाकः। स राजैव भवेत्, श्रान्ते तस्मिन्नन्यकर्मप्रवृत्ते, ब्राह्मणो वा शास्त्रवित् बहुश्रुत इत्यर्थः। मभा.

(२) विविच्य वक्तीति विवाकः। *गौमि.

**[3]द्वौ लोके धृतव्रतौ राजा ब्राह्मणश्च बहुश्रुतः।**

अथ यद्यपद्विहिते कर्मणि कश्चिद्दोषापरिज्ञानाल्लोभाद्वा प्रसज्येत ततोऽसौ केन निवार्यः? राजब्राह्मणाभ्यामुपदेशदण्डाभ्याम्। यतस्तावेव-द्वाविति। द्वाविति प्रकर्षवाची न संख्यानिर्देशः द्विवचननिर्देशादेव द्वित्वसिद्धेः। अस्ति चातिशयार्थः संख्यानिर्देशः। यथा—'अस्मिन् ग्रामे द्वावेव ब्राह्मणौ' इति। तत्र गम्यते, अन्येऽपि ब्राह्मणाः सन्ति, द्वावेवाऽनुष्ठानपराविति। अत्रापि राजब्राह्मणयोरतिशयेन धृतव्रतत्वार्थं, नान्येषां प्रतिषेधार्थम्। लोकग्रहणं वीप्सार्थं, लोकसंघाते लोके राष्ट्र इत्यर्थः। अन्यथा सर्वकर्मणां लोकाधिकारत्वादनर्थकमेवैतत् स्यादिति। एवं च यथा प्रतिराष्ट्रं राज्ञा भवितव्यं तथा बहुश्रुतेनापि भवितव्यमिति गम्यते। धृतव्रतौ व्रतानां कर्मणां धारयितारौ। राजा क्षत्रियः,स चाऽभिषेकादिगुणयुक्तः 'स मूर्धाभिषिक्तो राजा भवति' इति शङ्खवचनात्। ब्राह्मणश्च बहुश्रुतः। सत्यपि ब्राह्मणस्य प्राधान्ये राज्ञः पूर्वनिर्देशो बहुश्रुतत्वस्य ब्राह्मणविशेषणार्थम्। राज्ञोऽपि बहुश्रुतत्वानुकर्षणार्थश्चकारः। ततश्च राज्ञोऽपि बहुश्रुतत्वेन भवितव्यम्। ब्राह्मणस्य विशेषेणेति द्रष्टव्यम्। बहुश्रुतः बहुनेन श्रुतमिति। राजब्राह्मणौ बहुश्रुताविति वक्तव्ये विसमासनिर्देशो राज्ञोऽप्यतिशयेन शौर्यादिगुणयोगार्थः। ततश्च तौ धृतव्रतौ स्यातामिति शेषः। +मभा.

कीदृशः प्राड्विवाको न्यायेऽधिकृतः

**[1]स एष बहुश्रुतो भवति। लोकवेदवेदाङ्गवित्। वाकोवाक्येतिहासपुराणकुशलः। तदपेक्षस्तद्वृत्तिः। चत्वारिंशत्संस्कारैः संस्कृतः। त्रिषु कर्मस्वभिरतः। षट्सु वा। सामयाचारिकेष्वभिविनीतः।**

(१) स एष इति परोक्षप्रत्यक्षोपदेशः। बहुश्रुतो भवति संपद्यत इत्यर्थः। भवतिग्रहणं च यद्यप्येषां लोकादीनामीषद्विज्ञानं भवति किंचिदन्यदपि श्रुतं तथापि भवत्येवेत्येवमर्थं, अन्यथा स एष बहुश्रुत इत्येव सिद्धत्वात्। लोकेति। लोकशब्देन लोकव्यवहाराः ग्राममर्यादादय उच्यन्ते। वेदशब्देन उपवेदाः आयुर्वेदधनुर्वेदादय उच्यन्ते। द्वितीयेन वेदशब्देन चत्वारो वेदा उच्यन्ते। अङ्गशब्देन व्याकरणशिक्षाछन्दोविचितिकल्पसूत्रज्योतिषनिरुक्तान्युच्यन्ते। विच्छब्दः प्रत्येकमभिसंबध्यते। वेदविदित्यनेनैव वेदपाठोऽपि द्रष्टव्यः। स्मृत्यन्तरे अनधीतवेदस्यान्यविद्याप्रतिषेधात्। यथाह मनुः—'योऽन-

---

*शेषं मभागतम्।

(१) सवि.६४. गौतमधर्मसूत्रे नोपलभ्यते। (२) **गौध.**१३।२६; **व्यक.**४ (ब्राह्मणो वा शास्त्रवित् ०); **मभा.**; **गौमि.** १३।२६. (३) **गौध.**८।१; **मेधा.**८।३३७; **मभा.**; **गौमि.** ८।१; **विर.**६२५.

+गौमि. मभागतम्।

(१) **गौध.**८।४-११; **मभा.** शत् (शता); **गौमि.**८।४-१२ एष (एव) व्याख्यायामेष इति; **स्मृच.**१२६ मभावत्; **विर.**६३२ एष (एव) लोकवेदवेदाङ्ग (वेदवेदाङ्गविद्या) राण (राणेषु) सु वा (सु) साम (सम) रिके (रे); **पमा.**२०७ दपेक्ष (दवेक्ष) साम (सम) भिविनीतः (भिनिविष्टः विनीतः); **दवि.** ४४ एष (एव) (लोक०) चत्वा (चाष्टाचत्वा) शत् (शता) सु वा (सु) साम...नीतः (सदाचारेषु विनीतः); **विता.**२८ एष (एव) चत्वा (चाष्टाचत्वा) कर्मस्वभिरतः (कर्मस्वीज्याध्ययनदानष्वेभिनिरतः) षट्सु वा (प्रतिग्रहयाजनाध्यापनसहितेषु षट्सु वा); **प्रका.**८०; **समु.**६ मभावत्.

धीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् । स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ' ॥ (मस्मृ.२।१६८)

वाकोवाक्येति । वाकोवाक्यमुक्तिप्रत्युक्तिरूपं तर्कशास्त्रमित्यर्थः । तथा च मनुः—'यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः' इति । इतिहासो भारतरामायणम् । पुराणं, यत्र सृष्टिस्थितिसंहारा उच्यन्ते तत्पुराणं ब्रह्माण्डादि । एतेष्वपि कुशलः निपुणः अर्थेष्वेव, न पूर्वेष्विव ग्रन्थार्थयोः, क्रियापदान्तरारम्भात् । एवं च न केवलं वेद एव पठितव्यः अङ्गं च । तथा च स्मृत्यन्तरम्—'साङ्गो वेदोऽध्येतव्य' इति । तदपेक्ष इति । तदपेक्षःवेदप्रसिद्धार्थानुवचनशीलः । तद्वृत्तिः तदभिहितकर्मानुष्ठानपरः । चत्वारिंशतेति । ते च वक्ष्यमाणाः गर्भाधानादयः, तैश्चोपेतः । वक्ष्यमाणत्वादेव सिद्धे संख्यानिर्देशः समुच्चयार्थो मा भूदिति, बहुवचनस्य प्रयोगात् त्रिप्रभृतिषु कृतार्थतेति । 'यस्य तु खलु संस्काराणामेकदेशोऽपि' इत्यत्रापिशब्दात्समुच्चयोऽपि गम्यत इति चेत् न, एकदेशशब्दस्य संस्कारावयववाचित्वेनापि कृतार्थत्वप्रसङ्गात् । अत इह समुच्चयाभिधानात्तत्र एकदेशग्रहणेन कतिपयसंस्कारग्रहणसिद्धिः । त्रिष्विति । तानि साङ्गाध्ययनदानेज्यालक्षणानि । तेष्वभिरतः सततानुष्ठानशीलः । तद्वृत्तिरित्यनेनैवानुष्ठाने सिद्धे विशेषार्थः पुनरारम्भः।विशेषश्च अतिशयेन तत्सेवनं, अदृष्टार्थत्वज्ञापनं वा । षट्स्विति । याजनाध्यापनप्रतिग्रहैः सह षड्भवन्ति । एषामप्यदृष्टार्थत्वज्ञापनार्थः पुनरारम्भः । सामेति । सामयिकाः स्मार्ताः उपनिबद्धाः । आचारिकाः शिष्टाचरिताः पदार्थाः अनुपनिबद्धाः । तेषूभयविधेषु कर्मस्वभिविनीतः ज्ञात्वाऽनुष्ठानरतः । मभा.

(२) स एष इति वक्ष्यमाणनिर्देशः । लोकशब्देन लोकव्यवहारसिद्धा जनपदादिधर्मा उच्यन्ते, तेषां वेदाश्चत्वार ऋग्यजुःसामाथर्वाणः । अङ्गानि षट् । तेषां वेत्ता पाठतोऽर्थतश्च। वेदशास्त्रोपयोगीनि तर्कोक्तिप्रत्युक्तिरूपाणि वाक्यानि, यथा महाभारते—'कःस्विदेकाकी चरति सूर्य एकाकी चरति ' इत्यादीनि वाकोवाक्यम् । तदपेक्षः यान्येतानि लोकादीन्युक्तानि तान्यपेक्षत इति । तद्वृत्तिः तदभिहितानां कर्मणामनुष्ठाता । षट्स्विति । याजनाध्यापनप्रतिग्रहैः सह षट् कर्माणि तेष्वभिरतः । वाशब्देन पूर्वोक्तेषु नियमः । सामयेति । पौरुषेयी व्यवस्था समयः । तन्मूला आचाराः समयाचाराः तेषु भवाः सामयाचारिकाः स्मार्ता धर्माः, तेषु अभिविनीतः पित्रादिभिः सम्यक् शिक्षितः । +गौमि.

**[२]प्राड्विवाकमध्याभवेत् ।**

अधिरुपरिभाव ऐश्वर्ये वा । आङ् आगमनार्थे । एवमुक्तलक्षणं प्राड्विवाकमुपर्यासीनमधस्थितश्चिरं वा गुणभूतः सन्नागच्छेत् कार्यार्थी । न तु प्राड्विवाकः स्वयं कार्यमुत्पाद्य आव्हयेदिति । तथा च मनुः—'नोत्पादयेत्स्वयं कार्यम् ' इति । गौमि.

**सर्वधर्मेभ्यो गरीयः प्राड्विवाके सत्यवचनम् ।**

सर्वधर्मेभ्यः श्रुतिस्मृत्युपदिष्टेभ्यो धर्मसाधनेभ्यो गुरुतरं प्राड्विवाके व्यवहारद्रष्टरि यथाभूतार्थदर्शित्वमित्यर्थः। प्राड्विवाके वा सन्निहिते साक्ष्यादीनां यत्सत्यवचनमिति । *मभा.

## आपस्तम्बः

बहवो न्यायनिर्णेतारः

**[३]विवादे विद्याभिजनसंपन्ना वृद्धा मेधाविनो धर्मेष्वविनिपातिनः ।**

अर्थिप्रत्यर्थिनोर्विप्रतिषिद्धो वादो विवादः । तत्र विद्यादिगुणसंयुक्ता निर्णेतारः स्युरिति वाक्यशेषः । विद्या अध्ययनसंपत्, अध्ययनसहितं शास्त्रज्ञानं वा । अभिजनः कुलशुद्धिः । वृद्धाः परिणतवयसः । मेधाविनः ऊहापोहकुशलाः । धर्मेषु वर्णाश्रमप्रयुक्तेषु, अविनिपातिनः विनिपातः प्रमादः तद्रहिताः । उ.

## वसिष्ठः

राजमन्त्री प्राड्विवाको भवति । तस्य अपक्षपातितादिविधिः

**[४]अथ व्यवहाराः । राजमन्त्री सदःकार्याणि कुर्यात् । द्वयोर्विवदमानयोर्न पक्षान्तरं गच्छेत् ।**

---

\+ शेषपदार्थाः मभावत् ।

*गौमि. मस्करिभाष्यस्य द्वितीयकल्पानुसारिणी व्याख्या ।

(१) **गौध.**१३।२७; **व्यक.**१९; **मभा.**; **गौमि.**१३।२७; **व्यसौ.**१४. (२) **गौध.**१३।३१; **अप.**२।३; **व्यक.**१०; **मभा.**; **गौमि.**१३।३१; **दवि.**१५. (३) **आध.**२।२९।५; **हिध.**२।२०.

(४) **वस्मृ.**१६।१-५ (ख) न पक्षान्तरं (अत्र पक्षान्तरं न) धान (धान्त).

**यथासनमपराधो ह्यन्ते नापराधः (?)। समः सर्वेषु भूतेषु ह्याद्यवर्णयोर्विधानतः संपन्नतामाचरेत् ।**

नियुक्तानियुक्तसभ्यैर्धर्मनिर्णयः शास्त्रानुसारेण वक्तव्यः

**[1]नियुक्तो वाऽनियुक्तो वा धर्मज्ञो वक्तुमर्हति ।**
**दैवीं वाचं स वदति यः शास्त्रमुपजीवति ॥**
**[2]यत्पुण्यमुध्दृते विप्रे म्रियमाणे जलाशयात् ।**
**तत्पुण्यं संशयारूढे व्यवहारात्समुध्दृते ॥**

म्रियमाण इति दार्ष्टान्तिकेऽप्यनुषज्यते । स्मृच. २१

## विष्णुः

राजा ब्राह्मणो वा प्राड्विवाको भवति

**[3]स्वयमेव व्यवहारान् पश्येद्विद्वद्भिर्ब्राह्मणैः सार्धम् । [4]व्यवहारदर्शने ब्राह्मणं वा नियुञ्ज्यात् ।**

कीदृशाः सभ्या नियोज्याः

**[5]जन्मकर्मव्रतोपेताश्च राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः कामक्रोधभयलोभादिभिः कार्यार्थिभिरनाहार्याः ।**

उत्कोचजीविसभ्यदण्डः

**[6]कूटसाक्षिणां सर्वस्वापहारः कार्यः । उत्कोचजीविनां सभ्यानां च ॥**

उत्कोचग्रहणं प्रदर्शनार्थम् । अप. २।४

---

(१) **शुनी.**४।५२८ नियुक्तो वाऽ (अनियुक्तो); **स्मृच.** १४; **व्यप्र.**२८ शुनीवत्; **व्यउ.**१७ शुनीवत्; **प्रका.**७; **समु.**६. मूलस्मृतौ नोपलभ्यते ।

(२) **स्मृच.**२१; **प्रका.**११; **समु.**८. मूलस्मृतौ नोपलभ्यते । (३) **विस्मृ.** ३।५०.

(४) **विस्मृ.**३।५१; **स्मृच.**१६; **प्रका.**७; **समु.**५.

(५) **विस्मृ.**३।५२; **व्यक.**११ (जन्मकर्मश्रुतोपेताश्चतुरो वेदवित्तमाः । राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः । कामक्रोधभयलोभादिभिरुपायैः कार्यार्थिभिरन्वहार्याः ); **व्यसौ.**८ ( कर्मधर्मश्रुतोपेता विप्रा राज्ञां सभासदः । कार्यार्थिभिरनाहार्या रिपौ मित्रे च ये समाः ॥ ) इति पद्यरुपेण.

(६) **विस्मृ.**५।१७५-१७६ त्कोच (त्कोचोप); **अप.**२।४ (कार्यः०); **व्यक.**१६; **गौमि.**१३।२३ (कार्यः०) उत्कोच (उत्कश्चोप) (सभ्यानाम्०); **स्मृच.**२२ अपवत्; **व्याचि.**७ कार्यः (कर्तव्यः) सभ्यानां च (च सभ्यानाम्); **दवि.**१०६-१०७; **व्यसौ.**११; **प्रका.**१३ (कार्यः०); **समु.**३८ णां+(तु).

## शंखः

सभाया दिगादिनियमः

**[1]धर्मस्थानं प्राच्यां दिशि तच्चाग्न्युदकैः समवेतं कुर्यात् ।**

प्राच्यां दिशि राजमन्दिरादिति शेषः । *स्मृच.१९

## शंखलिखितौ

गणादीनां न्यायनिर्णेतारः

**[2]गणसमयश्रेणीपूगचरणव्यवहारनिष्ठा स्वामिनः परिज्ञातारोऽन्यत्र राजाभिद्रोहात् ,नगरनिवासिनां विप्रेतराणामपि परिग्रहा अनपराधाः ।**

गणो ब्राह्मणसमुदायः, समयः पाषण्डादीनां, श्रेणी शिल्पिसमूहः, पूगो वणिजादिसमूहः, गणादीनां चरणमाचारः, व्यवहारो विवादः तत्र निष्ठा निर्णयः। स्वामिनः तत्र प्रधानभूताः, परिज्ञातारः स्वे स्वे वृत्ते आचारव्यवहारप्रवर्तकत्वेन लक्षणपरिज्ञातारः। अन्यत्र राजाभिद्रोहाद्गणाभ्यन्तरेष्वपि राजद्रोहकारिषु न ते प्रभवः, किन्तु राजैव, तेन राजद्रोहादन्यत्र नगरवासिगणादिषु मुख्यानां स्वातन्त्र्येणाचारविवादपरिच्छेदो न दण्डायेत्यर्थः ।

विर.६६२

## महाभारतम्

बहवो न्यायनिर्णेतारो नियोज्या नैक एव

**[3]आददानस्य विजयं विग्रहं च युधिष्ठिर ।**
**समानधर्मकुशलाः स्थापयन्ति नरेश्वर ॥**
**[4]व्यवहारेषु धर्मेषु योक्तव्याश्च बहुश्रुताः ।**
**गुणयुक्तेऽपि नैकस्मिन् विश्वसेत विचक्षणः ॥**

**युधिष्ठिर उवाच—**

**[5]कथंस्विदिह राजेन्द्र पालयन् पार्थिवः प्रजाः ।**
**प्रीतिं धर्मविशेषेण कीर्तिमाप्नोति शाश्वतीम् ॥**

**भीष्म उवाच—**

**व्यवहारेण शुद्धेन प्रजापालनतत्परः ।**
**प्राप्य धर्मं च कीर्तिं च लोकावाप्नोत्युभौ शुचिः॥**

---

* सवि. स्मृचवत्.

(१) **स्मृच.**१९ कुर्यात् (स्यात्); **सवि.**६३ (तच्च०); **प्रका.**१० स्मृचवत्; **समु.**७ स्मृचवत्.

(२) **विर.**६६२. (३) **भा.**१२।२४।१०. (४) **भा.**१२।२४।१८. (५) **भा.**१२।८५।१-२.

युधिष्ठिर उवाच—

कीदृशैर्व्यवहारैस्तु कैश्च व्यवहरेन्नृपः ।
एतत्पृष्टो महाप्राज्ञ यथावद्वक्तुमर्हसि ॥
ये चैव पूर्वकथिता गुणास्ते पुरुषं प्रति ।
नैकस्मिन् पुरुषे ह्येते विद्यन्त इति मे मतिः ॥

भीष्म उवाच—

एवमेतन्महाप्राज्ञ यथा वदसि बुद्धिमन् ।
दुर्लभः पुरुषः कश्चिदेभिर्युक्तो गुणैः शुभैः ॥
किन्तु संक्षेपतः शीलं प्रयत्नेनेह दुर्लभम् ।
वक्ष्यामि तु यथामात्यान् यादृशांश्च करिष्यसि ॥
चतुरो ब्राह्मणान्वैद्यान् प्रगल्भान् स्नातकान् शुचीन् ।
क्षत्रियांश्च तथा चाष्टौ बलिनः शस्त्रपाणिनः ॥
वैश्यान्वित्तेन संपन्नानेकविंशतिसंख्यया ।
त्रींश्च शूद्रान्विनीतांश्च शुचीन्कर्मणि पूर्वके ॥
अष्टाभिश्च गुणैर्युक्तं सूतं पौराणिकं तथा ।
पञ्चाशद्वर्षवयसं प्रगल्भमनसूयकम् ॥
श्रुतिस्मृतिसमायुक्तं विनीतं समदर्शिनम् ।
कार्ये विवदमानानां शक्तमर्थेष्वलोलुपम् ॥
वर्जितं चैव व्यसनैः सुघोरैः सप्तभिर्भृशम् ।
अष्टानां मन्त्रिणां मध्ये मन्त्रं राजोपधारयेत् ॥
ततः संप्रेषयेद्राष्ट्रे राष्ट्रीयाय च दर्शयेत् ।
अनेन व्यवहारेण द्रष्टव्यास्ते प्रजाः सदा ॥
अथ योऽधर्मतः पाति राजाऽमात्योऽथवाऽत्मजः ।
धर्मासने सन्नियुक्तो धर्ममूले नरर्षभ ॥
कार्येष्वधिकृताः सम्यगकुर्वन्तो नृपानुगाः ।
आत्मानं पुरतः कृत्वा यान्त्यधः सहपार्थिवाः ॥

सत्सभालक्षणम्

न सा सभा यत्र न सन्ति वृद्धाः ।
वृद्धा न ते ये न वदन्ति धर्मम् ॥
नासौ धर्मो यत्र न सत्यमस्ति ।
न तत्सत्यं यच्छलेनानुविद्धम् ॥

## कौटिलीयमर्थशास्त्रम् ।

उच्चावचेषु जनपदस्थानेषु न्यायनिर्णेतारस्त्रयस्त्रयोऽमात्याः

धर्मस्थीयं—तृतीयमधिकरणम् ।

(१) भा.१२।८५।३–१२. (२) भा.१२।८५।१६-१७.
(३) पमा.३५; सवि.७० वृद्धा न ते (न ते वृद्धा); प्रका. १३ सविवत्; समु.९ सविवत्. (४) कौ.३।१.

**व्यवहारस्थापना । विवादपदनिबन्धः ।**

**धर्मस्थास्त्रयस्त्रयोऽमात्या जनपदसन्धिसंग्रहण-द्रोणमुखस्थानीयेषु व्यावहारिकानर्थान् कुर्युः ।**

अथ धर्मस्थीयं नाम तृतीयमधिकरणम् । धर्मेषु वर्णाश्रमजातिसंबन्धिषु तिष्ठन्ति तान् विदन्ति अनुवर्तन्ते चेति धर्मस्थाः तानधिकृत्य प्रवृत्तं धर्मस्थीयम् । 'धर्मोपधाशुद्धान् धर्मस्थीयकण्टकशोधनेषु स्थापयेत्' इति प्रथमाधिकरणस्य दशमाध्याये, 'द्वितीये भागे पौरजानपदानां कार्याणि पश्येत्' इति एकोनविंशाध्याये चोक्तम् । के कति वा कार्यद्रष्टारः कुत्र स्थित्वा कार्यं पश्येयुरित्यादिकं वक्तुमिदमधिकरणमारभ्यते ।

तत्र व्यवहारस्थापना इति प्रथमं सूत्रम् । विवादपदनिबन्धः इति द्वितीयम् । तदुभयमेकस्मिन्नध्याये प्रतिपाद्यते । व्यवहारा नाम,विवाहसंयुक्तं दायभागः इत्यादयो द्वादश वक्ष्यमाणाः, तेषां स्थापना ग्राह्याग्राह्यत्वनिरूपणं इति पूर्वसूत्रास्यार्थः । विवादपदानां पूर्ववाद्युत्तरवादिवचनानां निबन्धः व्युष्टदेशजात्यादिक्रमेण पत्रलेखनमित्युत्तरसूत्रस्य।

प्रथमसूत्रं व्याचष्टे–धर्मस्था इत्यादि । धर्मस्थास्त्रयस्त्रयः, अमात्याः सहावस्थिताः, जनपदसन्ध्यादिषु जनपदसन्धावन्तपालदुर्गे, संग्रहणे दशग्रामीप्रधानाधिष्ठाने, चतुःशतग्रामीप्रधाने द्रोणमुखेऽष्टशतग्रामीप्रधानाधिष्ठाने स्थानीये चेत्येतेषु, व्यावहारिकान् अर्थान् कार्याणि कुर्युः । श्रीमू.

प्राड्विवाकसभ्यलेखकप्रमादेषु दण्डविधिः

**धर्मस्थश्चेद् विवदमानं पुरुषं तर्जयति, भर्त्सयत्यपसारयति, अभिग्रसते वा, पूर्वमस्मै साहसदण्डं कुर्यात् । वाक्पारुष्ये द्विगुणम् ।**

**पृच्छ्यं न पृच्छति, अपृच्छ्यं पृच्छति, पृष्ट्वा वा विसृजति, शिक्षयति, स्मारयति, पूर्वं ददाति वेति, मध्यममस्मै साहसदण्डं कुर्यात् । देयं देशं न पृच्छति, अदेयं देशं पृच्छति, कार्यमदेशेनातिवाहयति, छलेनातिहरति, कालहरणेन श्रान्तमपवाहयति, मार्गापन्नं वाक्यमुत्क्रमयति, मतिसाहाय्यं साक्षिभ्यो ददाति, तारितानुशिष्टं कार्यं पुनरपि गृह्णाति, उत्तममस्मै साहसदण्डं कुर्यात् । पुनरप-**

(१) कौ. ४।९.

**राधे द्विगुणं, स्थानाद् व्यवरोपणं च ।**

**लेखकश्चेदुक्तं न लिखति अनुक्तं लिखति, दुरुक्तमुपलिखति, सूक्तमुल्लिखति, अर्थोत्पत्तिं वा विकल्पयतीति, पूर्वमस्मै साहसदण्डं कुर्यात्, यथापराधं वा ।**

**धर्मस्थः प्रदेष्टा वा हैरण्यमदण्ड्यं क्षिपति, क्षेपद्विगुणमस्मै दण्डं कुर्यात् । हीनातिरिक्ताष्टगुणं वा । शारीरदण्डं क्षिपति, शारीरमेव दण्डं भजेत । निष्क्रयद्विगुणं वा । यं वा भूतमर्थं नाशयत्यभूतमर्थं करोति तदष्टगुणं दण्डं दद्यात् ।**

धर्मस्थशोधनमाह—धर्मस्थश्चेदित्यादि। तर्जयति शिरःकम्पनतर्जनीनिर्देशादिना भीषयति । भर्त्सयति वचनेन भीषयति । अपसारयति अपसरन्तं प्रयोजयति । अभिग्रसते भक्षयति उपजीवतीत्यर्थः । पूर्वं साहसदण्डं प्रथमसाहसम् । वाक्पारुष्ये द्विगुणमिति । विवदमानं प्रति परुषवाक्प्रयोगे उक्तद्विगुणं दण्डं कुर्यात् ।

भूयो धर्मस्थापराधानुल्लिखति पृच्छ्यमिति । पृच्छार्हं साक्षिणं, इह दण्डादित्वाद् यत् । न पृच्छति । प्रच्छन्नमित्यपि पाठः । अपृच्छ्यं पृच्छानर्हं विवादिबन्ध्वादिकं, पृच्छति । पृष्ट्वा वा विसृजति अदत्तोत्तरमेवोपेक्षते । शिक्षयति वक्तव्यमध्यापयति । स्मारयति वक्तव्यं विस्मृतमभिज्ञापयति पूर्वं ददाति वा वाक्यस्य वक्तव्यस्य पूर्वांशं शेषपूरणानुगुणं सूचयति वा । इति एवं, चेष्टमानायेति शेषः, अस्मै धर्मस्थाय, मध्यमं साहसदण्डं कुर्यात् । देयं देशं न पृच्छतीति । विभाव्यवस्तुविभावनायावश्यापेक्ष्यं साक्षिणं न पृच्छति । अदेयं देशं तद्विपरीतं साक्षिणं, न पृच्छति । कार्यं, अदेशेन अतिवाहयति साक्षिणं विनैव निर्णयति । छलेन अतिहरति सत्यवादिनमपि साक्षिणं छलवाक्येन अपराधयति । कालहरणेन श्रान्तं, कृत्वेति शेषः, अपवाहयति परावर्तयति । मार्गापन्नं वाक्यं अपरित्यक्तक्रमं साक्षिवाक्यम्, उत्क्रमयति त्यक्तक्रममिति आचष्टे । मतिसाहाय्यं साक्षिभ्यो ददाति । तारितानुशिष्टं विचारितनिर्णीतं, कार्यं, पुनरपि गृह्णाति विचारणार्थम् । अस्मै एवं चेष्टमानाय धर्मस्थाय, उत्तमं साहसदण्डं कुर्यात् । पुनरपराधे कृते, द्विगुणं अर्थाद् दण्डनम् । स्थानाद् व्यवरोपणं च निरसनं च ।

लेखकशोधनमाह—लेखकश्चेदित्यादि । दुरुक्तमुपलिखति उक्तमसाधु साधूकृत्य लिखति । सूक्तं उल्लिखति सुश्रूक्तमसाधूकृत्य लिखति । अर्थोत्पत्तिं वा विकल्पयति साध्यसिद्धिं वान्यथयति । शेषं सुगमम् ।

धर्मस्थ इति । धर्मस्थः, प्रदेष्टा वा, अदण्ड्यं, हैरण्यं क्षिपति हिरण्यं दण्डयति चेत्, अस्मै दण्डयित्रे, क्षेपद्विगुणं क्षिप्तदण्डद्विगुणं, दण्डं कुर्यात् । हीनातिरिक्ताष्टगुणं वेति । न्याय्यदण्डाद्धीनदण्डकरणे न्याय्यदण्डातिरिक्तदण्डकरणे च हीनदण्डादधिकदण्डाच्च अष्टगुणं दण्डं कुर्यात् । शारीरदण्डं क्षिपति हस्तच्छेदादिरूपं दण्डं अदण्ड्ये यदि प्रयुङ्क्ते, शारीरमेव दण्डं हस्तच्छेदादिरूपं तमेव, भजेत । निष्क्रयद्विगुणं वा तत्तच्छारीरदण्डस्थानीयधनदण्डद्विगुणं वा दण्डं भजेत । न्याय्यार्थनाशने अन्याय्यार्थसाधने च नाशितसाधितार्थाष्टगुणं दण्डं दद्यादित्याह यं वा भूतमर्थमित्यादि । श्रीमू.

## मनुः

प्राड्विवाकः सर्ववर्णीयो राजा भवति । तत्सहकारिणो मन्त्रिणः ब्राह्मणाश्च भवन्ति । राज्ञा सविनयेन सभाप्रवेशः कर्तव्यः ।

**व्यवहारान् दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः ।**
**मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीतः प्रविशेत्सभाम् ॥**

(१) प्रजानां पालनं राज्ञो वृत्तिर्विहिता, सा चात्र 'शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्पशुकृषीर्विशः । आजीवनार्थं शूद्रस्य द्विजातीनां निषेवणम्' ॥ (मस्मृ. १०।७९) 'एवं नृपो वर्तमानो लोकानाप्नोत्यनुत्तमान्' इति । तथा धर्मो वर्धते लोके । अन्येषामपि वर्णानां क्षत्रियवृत्त्या जीविनामस्त्येव राज्याधिकारः । 'यः कश्चित्सर्वलोकानां पालकश्च नृपः स्मृतः । कर्मनिष्ठा च विहिता लोकसाधारणे हिते' ॥ परिपालनं च पीडापहारः । द्वयी च पीडा दृष्टाऽदृष्टा च ।

---

(१) **मस्मृ.**८।१; **शुनी.**४।५४४; **अप.**२।१; **व्यक.**३ चैव (सार्धं); **मभा.**११।२३ रान् (रं) पू. : ११।२७ उत्त.; **स्मृच.**१४,१९; **पमा.**२३; **व्यनि.**; **स्मृचि.**२; **दवि.**७ पू.; **नृप्र.**१-२ व्यकवत्; **सवि.**६४ ब्राह्मणैः सह पार्थिवः : (नृपतिर्ब्राह्मणैः सह); **व्यसौ.**१; **व्यप्र.**९; **व्यउ.**५-६; **विता.**२; **व्यम.**२; **राकौ.**३८२; **बाल.**२।१ व्यकवत्; **प्रका.**६; **समु.**९.

तत्र दुर्बलस्य बलीयसा धनहरणादिना बाध्यमानस्य[3] दृष्टा पीडा। इतरस्य तु विध्यतिक्रमजनितेन प्रत्यवायेनामुत्रिकदुःखोत्पादनमदृष्टपीडा। प्रजा हि द्वेषमत्सरादिभिरितरेतरमयथावदाचरन्ति, कुपथेन यान्त्यदृष्टदोषेण बाध्येरन्। अतश्च राज्यनाशः। प्रजैश्वर्यं हि राज्यमुच्यते। तासु विनश्यन्तीषु कस्य राज्यं स्यात्। व्यवहारादयोऽतः। शास्त्रदण्डेन व्यवस्थाप्यमाना न भयात्पृथक् प्रचलन्ति तथा चोभयथाऽपि रक्षिता भवन्ति। धनदण्डश्च राज्ञः करः[2] शुल्कादि वा। एतदन्या (अन्यथा) धर्मिष्ठजीविका न भवतीति वृत्तिपरिक्षयादपि राज्यावसादः। अतो राज्यस्थित्यर्थं व्यवहारदर्शनं कर्तव्यम्। तदिदानीमुच्यते।

व्यवहारश्चात्र वादिप्रतिवादिनोरितरेतराशनोद्धाराय[3] वृत्तिरुच्यते। अथवा ऋणादानादयः पदार्था एव विप्रतिपत्तिविषयाः सन्तो विचारगोचरसमर्थतया कर्तव्या इति। दिदृक्षुरित्युक्त्वा 'पश्येत्कार्याणीति' सामानाधिकरण्यम्। पुनश्च प्रत्यवमर्शः 'तेषामाद्यमृणादानमिति' (मस्मृ.८।४) तान् पदार्थान्विचारयेदिति संबन्धः। वक्ष्यमाणाधिकृतपुरुषाधिष्ठितः प्रदेशः सभा। प्रवेशस्तदभ्यन्तरभावः। किमेक एव प्रविशेत्[4], न इत्याह, ब्राह्मणैः सहेति। अथ मन्त्रज्ञैरिति कस्य विशेषणं, न तावन्मन्त्रिणो,मन्त्रित्वादेव सिद्धेः। न हि मन्त्रमजानानो मन्त्रीति शक्यते वक्तुम्। नापि ब्राह्मणानां, व्यवहारदर्शनेऽधिकृतानां तत्परिज्ञानमदृष्टाय[5] स्यात्। अत्रोच्यते। ब्राह्मणविशेषणमेवैतत्। ते हि[6] मन्त्रज्ञा भूत्वा निरपेक्षमवधारयन्तः स्युः। अन्यथा राज्ञोऽनर्थमावहेयुः। तथा हि महामात्याश्रितः कश्चिज्जनपदेन व्यवहरन् सहसा जितो यदि न दण्ड्यते, धनं वाऽवष्टभ्य न दाप्यते, तदा समत्वेन व्यवहारदर्शनं न कृतं स्यात्, पक्षपातमशक्तिं वाऽस्य जनपदा मन्येरन्। अथ दण्ड्यते, महामात्यक्षोभादपि प्रकृतिविकृतं स्यात्। मन्त्रज्ञास्तु सन्तः संशयितारो यदि निर्णेतव्यस्य केनचिदपदेशेन प्रसङ्गरोधं कृत्वा रहसि राजानं परिबोधयन्ति 'अनयोर्विवादिनोरयं जीयतेऽयं जयतीति, व्यवहारस्त्वस्माभिर्न तदानीमेव निर्णीत इति स्वामी प्रमाणं' तत्र राजा एवं विदित्वा महामात्यमादेशयति, 'त्वदीयो मनुष्यो जीयते मम हनिर्मा भूदिति संप्रति निर्णयोऽवधीरितः। त्वमेव तथा कुरु, यथैष मनुष्यः संधीयते, बाधाऽस्य व्यपनीयते'। ते मन्त्रिणो वा आदेयवाक्या मनुष्याणां सर्वेषां अनर्थ्यां च प्रवृत्तिं प्रतिबध्नन्ति।

अन्ये तु काकाक्षिवदुभयविशेषणमर्थभेदेन मन्त्रज्ञपदं मन्यन्ते। यदा मन्त्रिणो विशेष्यन्ते तदा[1] तत्तद्धेतुतत्परिज्ञानं मन्त्रज्ञानम्। ब्राह्मणपक्षे तु कार्यार्थज्ञानं[2] समभावश्च। मन्त्रिब्राह्मणानां न प्रवेशमात्रमेव, किन्तर्हि, निर्णयः 'पश्येत्' इत्युत्तर[3]वाक्यात् यथायोग्यं, इतरथा अदृष्टाय प्रवेशः स्यात्। अतो नैकाकी निर्णयं कुर्यात्। किन्तर्हि, तैः सह निरूप्येति। विनीतो वाक्पाणिपादचापलरहितः। वेपतो ह्यनर्थः स्यात्। पार्थिवग्रहणात् न क्षत्रियस्यैवायमुपदेशः, किन्तर्हि,अन्यस्यापि पृथिव्यामधिपतेर्देशेश्वरस्य, न हि अन्य[4]था राज्यमविचलितं भवतीति। **मेधा.**

(२) अर्थिप्रत्यर्थिनोः ऋणादानादिविषयाणि इतरेतरविरुद्धावहरणरूपाणि कार्याणि, द्रष्टुमिच्छन् राजा वक्ष्यमाणलक्षणैर्मन्त्रिभिश्चोक्तषड्गुणमन्त्रज्ञैः ब्राह्मणैश्च सह चापलादिरहितो वक्ष्यमाणसभां प्रविशेत्। **गोरा.**

(३) मन्त्रज्ञा अर्थशास्त्रज्ञाः। तेन धर्मशास्त्राविरुद्धमर्थशास्त्रं व्यवहारं पश्यता अनुसरणीयम्। अप.२।१

(४) मन्त्रज्ञैरिति विशेषणोपादानं कार्यदर्शनोपयोगिमन्त्रालोचकत्वेन तेषामस्त्यत्रोपयोग इति प्रतिपादयितुम्। तथा ब्राह्मणेऽपि बहुत्वमुक्तं तेनैव—'व्यवहारान् दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः' इति पूर्वार्धेन। ब्राह्मणैः विद्वद्भिरिति शेषः।

चशब्दोऽत्र प्राड्विवाकपुरोहितसभ्यवणिग्गणकलेखकसाध्यपालहिरण्यधर्मशास्त्रैरपि सह इति ज्ञापनार्थः। तेषामपि ब्राह्मणादिवत् दर्शनोपयोगित्वात्। तत्र केषाञ्चिदुपयोगो निर्णेतृनिर्णये दर्शितः। *स्मृच.१४,१९

(५) एवंविधविपक्षमहीक्षिद्भ्यः प्रजानां रक्षणादवाप्तवृत्तिः तासामेवेतरेतरविवादजपीडापरिहारार्थं, ऋणा-

१ ना. २ करशुल्कादिर्वैतदन्यध. ३ धारा. ४ शेच्च इ. ५ ष्टं न. ६ ह्य.

*सरस्वतीविलासे चशब्दः स्मृतिचन्द्रिकावन्निरूपितः।

१ तत्तद्धा तु तत्परिज्ञानम. २ (०). ३ रत्र वाक्यानि. ४ नथा.

दानाद्यष्टादशविवादे विरुद्धार्थार्थिप्रत्यर्थिवाक्यजनित-संदेहहारी विचार एव व्यवहारः। तदाह कात्यायनः—'वि-नानार्थेऽव संदेहे हरणं हार उच्यते। नानासंदेहहरणा-द्व्यवहार इति स्मृतः'॥ तान् व्यवहारान् द्रष्टुमिच्छन् पृथि-वीपतिः वक्ष्यमाणलक्षणलक्षितैर्ब्राह्मणैरमात्यैश्च सप्तमा-ध्यायोक्तपञ्चाङ्गमन्त्रज्ञैः सह, विनीतो वाक्पाणिपादचापल-विरहादनुद्धतः। अविनीते हि नृपे वादिप्रतिवादिनां प्रतिभाक्षयादसम्यगभिधाने तत्त्वनिर्णयो न स्यात्। तादृशो वक्ष्यमाणां सभां प्रविशेत्। व्यवहारदर्शनं चेदं प्रजानां इतरेतरपीडायां तत्त्वनिर्णयेन रक्षणार्थं वक्ष्यमा-णदृष्टादृष्टार्थैककरणफलेनैव फलवत्। ममु.

(६) मन्त्रज्ञैः पूर्वाध्यायोक्तपञ्चाङ्गमन्त्रज्ञैः, नीति-शास्त्रज्ञैः कापटिकादिभिः प्रतिज्ञाहेतूदाहरणोपनयनिगम-नज्ञैर्वा, मन्त्रिभिश्चामात्यैः। *मच.

(७) पार्थिवोऽभिषिक्तक्षत्रियः। तमेवाधिकृत्य प्रजा-पालनव्यवहारदर्शनादिविधानात्। 'यथावृत्तो भवेन्नृपः' इत्यादिषु नृपग्रहणात्तु अन्यस्यापि तत्स्थानापन्नस्य प्रजा-पालनौपयिकं धर्मजातं भवतीति गम्यते। व्यप्र.९

(८) अत्र ब्राह्मणाः सभ्या असभ्याश्च, याज्ञवल्क्येन—'व्यवहारान्नृपः पश्येत् सभ्यैः परिवृतोऽन्वहम्' (यास्मृ. १। ३६०) इत्युक्त्वा, 'व्यवहारान्नृपः पश्येत् विद्वद्भिः' (यास्मृ.२।१) इत्यादिना पृथक् ब्राह्मणोक्तेः। व्यवहारद-र्शनस्य फलं दुष्टादुष्टपरिज्ञानद्वारा प्रजापरिपालनम्। याज्ञ-वल्क्येन (कात्यायनः) तु—'सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः। ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः'॥ इति स्वर्गोऽपि फलमुक्तः। 'विप्रो धर्मद्रुमस्यादिः' इत्यादिभिः बृहस्पतिना अनुषङ्गीणि फलान्तराण्यप्यु-क्तानि। व्यउ.६

(९) व्यवहारान् अर्थिप्रत्यर्थिनोर्विवादविषयोक्तीः। पार्थिवः पृथिवीपतिः, क्षत्रियादन्योऽपि। मन्त्रज्ञैः देशका-लाद्युचितकार्याकार्यनिरूपणाभिज्ञैः एतच्च ब्राह्मणैरित्यस्य विशेषणम्। +बाल.२।१

(१०) कीदृशैर्ब्राह्मणैः, मन्त्रज्ञैः वेदव्याकरणधर्म-शास्त्राभिज्ञैः। भाच.

*शेषं ममुगतम्। +शेषं मेधागतम्।

कार्यदर्शनकाले आसनपाणिव्यापारादिनियमः

**तत्रासीनः[1] स्थितो वाऽपि पाणिमुद्यम्य दक्षिणम्।**
**विनीतवेषाभरणः पश्येत्कार्याणि कार्यिणाम्॥**
*** प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः।**
**अष्टादशसु मार्गेषु निबद्धानि पृथक्पृथक्॥**

(१) आसीनो धर्मासनोपविष्टः। स्थितो निषिद्धगति-रनुपविष्ट एव। स्थानासनयोश्च व्यवस्थितो विकल्पः कार्यविशेषापेक्षः। गरीयसि कार्ये बहुवक्तव्य उपविष्ट आसीनः, लघीयसि स्वल्पवक्तव्ये स्थितः। क्रममाणस्य सर्वथा प्रतिषेधः। स हि मार्गावलोकनपरो नार्थिप्रत्य-र्थिनोर्निपुणतो वचनमवधारयेत्। अन्ये त्वदृष्टार्थं तथा मन्यन्ते। तपस्विवद्ब्राह्मणादिषु विवादिषु स्थितेषु स्थितः, आसीनेषु आसीनः। पाणिमुद्यम्येति। उत्तरी-यादुध्दृत्य उत्थानं कृत्वेत्यर्थः। सूत्रकृतोऽयं व्यतिक्रमः(?) सर्वदा विहितत्वाद्वसनोपव्यानमेतत्। तेनायमर्थः—हस्त उत्क्षेप्तव्यो न पुनः समीपवर्तिनि संलग्नः कर्तव्यः। प्रश्ननिषेधावसरे च तेनाभिनेतव्यं न तु प्रव्याणादिना। अनेन व्यवहारदर्शनेन तात्पर्यं ख्यापितं भवति। प्रायेण हि पुरुषाः[2] कार्येषु प्रयत्नवन्तो हस्तमुद्यच्छन्ति। यथा-सुखोपविष्टं बध्नाति कर्तारं ततश्च परिजने तदेतद्राजा' चित्तं[3] न ददाति सभ्यैर्निर्भयैर्वयं जिता इति (?) पाणि-ग्रहणं बाहूपलक्षणार्थम्। केवलस्य हि हस्तस्य यावद्व्य-वहारदर्शनं व्यापारणं पीडाकरम्। न चायमदृष्टार्थ उप-देशः।

विनीतवेषाभरण इति। पूर्वश्लोके बाह्याभ्यन्तरेन्द्रिय-विषयावधानार्थोऽभिहितः। स्वगणानां[4] शालीनतया सुखोपसर्पणार्थम्। उद्धतवेषे[5] हि राजनि प्रतिलक्ष्य तथा-विधानामप्रतिपत्तिः स्यात्। अत उद्धतवेषाभरणं न कथंचित् केशवसनविन्यासादिविशेषः। आभरणं कर्णि-

*व्याख्यासङ्ग्रहः स्थलादिनिर्देशश्च दर्शनविधौ द्रष्टव्यः।

(१) **मस्मृ**.८।२; **अप**.२।१; **व्यक**.३; **स्मृच**.२३; **पमा**. २३; **व्यनि**.; **स्मृचि**.२ कार्यि (कर्मि); **नृप्र**.२; **व्यसौ**.१; **व्यप्र**.९; **व्यउ**.६; **व्यम**.२ उत्त.; **विता**.२ स्मृचिवत्; **राकौ**. ३८२; **बाल**.२।१ पाणि (पार्श्वं); **प्रका**.६; **समु**.९.

१ त्तरपाणिम्मु. २ पुरुष. ३ वित्तं. ४ श्वग. ५ उद्धतवेषे हि रजोनिवृत्तिलक्षणया.

कादि । तत्र उद्धतवेष ऊर्ध्ववस्त्रो जवनरक्ताम्बरधारिते-त्यादि । उद्धताभरणो दीप्तिमद्बहुरत्नालङ्कारो बह्वाहारश्च, स ह्यादित्य इव दुर्निरीक्ष्यः सामान्यजनानां विशेषतोऽभियुक्तानाम् । पश्येदिति । सभाप्रवेशस्य प्रयोजनमाह । पश्येद्विचक्षणः ।

अयं च राज्ञो दर्शनोपदेशो दण्डप्रणयने यथास्थानार्थप्रतिपादनपर्यन्तो भविष्यति । तावत्पर्यन्तं[1] तस्यैव रक्षाधिकारः प्रयुक्तः स्यात् । ईदृशस्य च दर्शनस्य अन्येषामसंभावनादनधिकारः । सर्वेषां संशयच्छेदमात्र[2]फलं तु व्यवहारदर्शनं प्रायश्चित्तोपदेशवद्विदुषो ब्राह्मणस्यास्त्येव । उक्तं हि 'धर्मसंकटेषु ब्रूयादिति' । तथैकवर्ग्याणां वाणिज्यकर्षकपशुपालप्रभृतीनां स्ववर्गसामयिकार्थविप्रतिपत्तौ अन्यस्यां वोत्कृष्टनिर्णयात्पूर्तिरिति[3] तथाविधव्यवहारदर्शने नियोगः । कार्यो विप्रतिपत्तिनिरासोऽर्थिनां, विप्रतिपन्नयोर्हि साम्यं व्यवहारदर्शने राज्ञा कर्तव्यम् । नो चेत् संविदाने को राज्ञः स्वाधिगमे निरोधः । कायकशुद्धौ हि श्वानिरोधवानिति वक्ष्यामः (?)। मेधा.

(२) तस्यां सभायां गुरुकार्यापेक्षयोपविष्टोऽन्यथा उत्थितः, दक्षिणबाहुं वासस उध्दृत्य अनुद्धतवेषालङ्कारः कार्यार्थिनां व्यवहारं नियमतो विचारयेत् । *गोरा.

(३) उद्यम्य उत्तरीयोपरि कृत्वा । विनीतो योग्यो वेषो देहावैकृतरूपमाभरणं च यस्य । अनुद्धतिव्यञ्जकं तदुभयं कुर्यादित्यर्थः । मवि.

(४) अयं चासनस्थित्योर्विकल्पः शयनचङ्क्रमणनिषेधार्थः । दक्षिणं पाणिमुद्यम्येति प्रावरणार्थं वस्त्रमप्युपवीतवदेव ब्राह्मणसभायां धार्यमिति नियमार्थम् । स्मृच.२३

(५) कार्याणि व्यवहारेऽनुष्ठेयानि । कार्यिणां अर्थिप्रत्यर्थिनाम् । मच.

(६) दक्षिणपाण्युद्यमनं कार्यिणामवधानबोधनार्थम् । विनीतवेषाभरणत्वं अभीषणवेषाभरणत्वं तेषामप्रतिभानिवृत्त्यर्थमुपात्तम् । व्यप्र.९

(७) हस्तोद्यमनं अभयप्रदर्शनार्थम् । व्यउ.६

(८) दक्षिणं पाणिमुद्यम्य अप्रावृतदक्षिण इति यावत् । यज्ञोपवीतीत्यन्ये । नन्द.

---

*ममु. गोरावत् ।

१ तात्पर्यं. २ मात्रम् । ३ वोत्सुकनिर्णयादूतिरिति.

राज्ञा स्वस्थाने ब्राह्मणः प्राड्विवाको नियोज्यः

**यदा स्वयं न कुर्यात्तु नृपतिः कार्यदर्शनम् ।**
**तदा नियुञ्ज्याद्विद्वांसं ब्राह्मणं कार्यदर्शने ॥**

(१) 'अष्टादशपदाभिज्ञं प्राड्विवाकेति संज्ञितम् । आन्वीक्षिक्यां च कुशलं श्रुतिस्मृतिपरायणम्' ॥ कुतश्चिदतिपातिकार्यान्तरव्यासङ्गादपाटवाद्वा, यदि स्वयं न पश्येत्तदा विद्वान् ब्राह्मणो नियोज्यः । विद्वत्ता च या व्यवहारविषया सा तदधिकारत एव अर्थगृहीता । न हि यो यत्र जानाति स तत्राधिकारमर्हति । धर्मशास्त्रपरिज्ञानं तु रागद्वेषदोषेण विपरीतार्थावधारणनिवृत्त्यर्थमुपयुज्यते । धर्मज्ञस्तु सतोरपि रागद्वेषयोः शास्त्रभयेन न विपर्येति[1] इत्युपयोगवद्धर्मशास्त्रपरिज्ञानम् । व्यवहारदर्शनं तु तदर्थगृहीतम् । येन विना न शक्यते व्यवहारनिर्णयः कर्तुं, तद्विज्ञानं तदधिकाराक्षिप्तम् । यत्तु ज्ञात्वाऽन्यथा क्रियते तन्निवृत्तिरुपदेशान्तरविषया, वक्ष्यति चैवमर्थं यत्नान्तरमपि 'वेदविदस्त्रयः, राज्ञश्च प्रकृत्तो विद्वान्' इति । शास्त्रान्तरपरिज्ञानं तु व्यवहारेऽधिक्रियमाणस्य अदृष्टाय स्यात् । नियोज्यो विद्वान्स्यात् इति पठितव्यम् । नियुञ्ज्यादिति, नियुञ्जीत स्वराज्यतः । उपसृष्टादिति हि कातीया आत्मनेपदं स्मरन्ति । *मेधा.

(२) ब्राह्मणमेव नियुञ्ज्यान्नान्यमिति नियमः । मच.

न्यायदर्शने सहकारिणस्त्रयः सभ्याः

**सोऽस्य कार्याणि संपश्येत्सभ्यैरेव त्रिभिर्वृतः ।**
**सभामेव प्रविश्याग्र्यामासीनः स्थित एव वा ॥**

(१) सभ्यैरिति जातिविशेषानुपादानेऽपि, उत्तरत्र विप्रग्रहणात्, ब्राह्मणैः सह इति च पूर्वत्र ब्राह्मणग्रहणात्, ब्राह्मणा एव विज्ञायन्ते । त्रिग्रहणं तु एकद्वयोः प्रतिषे-

---

* गोरा., ममु. वाक्यार्थौ मेधावत् ।

(१) **मस्मृ**.८।९; **व्यक**.१० द्वांसं ब्राह्मणं (द्वान् ब्राह्मणः); **मभा**.१३।२६ दर्शने (दर्शिनम्); **गौमि**.१३।२६ यदा(यद्वा) दर्शन (निर्णय) दर्शने (निर्णये); **स्मृच**.१६; **पमा**.२७; **व्यनि**.; **स्मृचि**.२; **व्यसौ**.७; **व्यप्र**.२४; **व्यउ**.१५; **विता**.१२; **प्रका**.७ र्शने (र्शिने); **समु**.५.

(२) **मस्मृ**.८।१०; **व्यक**.१०; **स्मृच**.१६; **रार**.१९ संपश्येत् (पश्येत); **पमा**.२७; **व्यनि**.; **स्मृचि**.२ पू.; **दवि**.१५ पू.; **व्यप्र**.२४ वा (सः); **व्यउ**.१५; **प्रका**.७; **समु**.५

१ विपर्येत्यु.

धार्थम् । त्रिप्रभृतयस्तु इष्यन्ते एव । साक्षिप्रकरणे चैतद्वक्ष्यामः । सभामेव प्रविश्याग्र्यामिति । राजस्थानापत्या सभाप्रवेशस्थानासनेषु तद्धर्मेषु पुनर्वचनं प्रदर्शनार्थं धर्मान्तरनिवृत्त्यर्थं वा । तेन राजस्थाने नोपविशति। मेधा.

(२) स ब्राह्मणः, सभायां साधुभिर्धार्मिकैर्ब्राह्मणैर्युक्तः तामेव राजसभां श्रेष्ठां प्रविश्य, उपविष्टः स्थितो वा, अस्य राज्ञो द्रष्टव्यान् व्यवहारान् संपश्येत् । +गोरा.

(३) सभां राज्ञः प्रविश्यैव न बहिरपि । मवि.

(४) सभ्यैरेवेत्यवधारणा अन्यनिवृत्त्यर्था । त्रिभिरिति च पञ्चसप्तसंख्यानिवृत्त्यर्थम् । स्मृच.१७

(५) तत्तु (स्मृतिचन्द्रिकाकारमतं तु) अदृष्टार्थत्वप्रसङ्गादयुक्तमित्युपलक्षणत्वमेव न्याय्यम् । व्यप्र.२४

(६) न चाऽयं प्राड्विवाकाद्भिन्न इति शङ्कनीयम्। आग्नेय्यधिकरणन्यायेन (पूमी. १।४।७) सिद्धव्यवहारदर्शनसंबन्धस्यैव द्वारान्तरसंबन्धमात्रबोधने लाघवात् । अयं च प्राड्विवाकः द्विज एव न शूद्रः, 'यत्र विप्रो न विद्वान् स्यात्' इत्यादि मनूक्तेः । ×व्यउ.१५

विहितसभास्तुतिः

**यस्मिन् देशे निषीदन्ति विप्रा वेदविदस्त्रयः ।**
**राज्ञश्च प्रकृतो विद्वान् ब्रह्मणस्तां सभां विदुः ॥**

(१) उक्तं सभां प्रविश्य व्यवहारान् पश्येदिति । सभाशब्दश्च लोके गृहप्रासादविशेषे वर्तते 'मयेन निर्मिता दिव्या सभा हेमपरिष्कृता' इति । क्वचित्पुरुषविशेषसंघटिता सभा इति तन्निवृत्त्यर्थं सभाया लक्षणमाह । यत्र त्रयो ब्राह्मणा वेदविदः सन्निधीयन्ते । राज्ञश्च संबन्धी प्रकृतोऽधिकृतो विद्वानिति । अथवा प्रकृतोऽनन्तरश्लोके सन्निहितः । सा इह सभा अभिप्रेता । ब्रह्मग्रहणं स्तुत्यर्थम् । यथा ब्रह्मणः सभा निरवद्यैवमियमपीति ।[1] मेधा.

(२) यस्मिन् स्थाने ऋग्यजुःसामपारगास्त्रयोऽपि ब्राह्मणा राजाऽधिकृतश्च विद्वानवतिष्ठते, हिरण्यगर्भमिव तां सभां मन्यन्ते । *गोरा.

(३) त्रयो वेदविदो वेदार्थविदः । एकैकवेदस्य एकैकेनाध्ययनात् । प्रकृतोऽधिकृतः । सभां निर्णययोग्याम् । मवि.

(४) प्रकृतः अधिकृतः प्राड्विवाकः । स्मृच.२०

(५) त्रय इत्युपलक्षणम् । अधिकानामपि स्मृतत्वात् । तच्च वक्ष्यते । अधिकृतो विद्वान् प्राड्विवाकः। अत्र 'प्रविशेत्सभाम्' 'सभामेव प्रविशेत्' इत्यादिवचनात्, सभा मुख्यं व्यवहारदर्शनस्थानम् । अन्यानि अपि अमुख्यानि व्यवहारदर्शनस्थानानि भृगुवचनादवगन्तव्यानि । व्यप्र.८

(६) इदं सर्वसाधारणं स्थानम् । +व्यउ. ५

(७) राज्ञः संमतो राज्ञः स्वभावानुकारी । भाच.

शूद्रो न्यायनिर्णये नाधिकारी, किन्तु क्षत्रियादयो द्विजा एव

**जातिमात्रोपजीवी वा कामं स्याद् ब्राह्मणब्रुवः ।**
**धर्मप्रवक्ता नृपतेर्न तु शूद्रः कथञ्चन ॥**

(१) उक्तं ब्राह्मणैः सह धर्मनिर्णयं कुर्यात्, मन्त्रिभिश्च मन्त्रज्ञैः, तत्र मन्त्रिणां जातेरविशेषितत्वात् शूद्रा अपि सभां प्रविष्टा मन्त्रित्वादनुज्ञातव्यवहारनिर्णयास्तद्गतां धर्मव्यवस्थां कथंचित्संस्कृतबुद्धयो ब्रूयुः । न च सर्वत्र व्यवहारे स्मृतिशास्त्रपरिज्ञानमुपयुज्यते, येन तदभावादर्थलुप्तत्वादनर्थकः शूद्रप्रतिषेध आशङ्क्येत । तथा हि जयपराजयकारणानि लौकिकप्रमाणवेद्यान्येव साक्ष्यादीनि, अयं साक्षी धार्मिको, न चैतस्य केनचित्संबन्धेन संबन्धी । अयं त्वसाक्षी असकृद्दृष्टव्यभिचारत्वादित्येवमादि शक्यते व्युत्पन्नबुद्धिना स्वयमुत्प्रेक्षितुं, न स्मृतिशास्त्रैकगोचरः । अतः प्राप्तस्य प्रतिषे-

+ मसु., मच. गोरावत् । × शेषं स्मृचवत् ।

(१) **मस्मृ.**८।११ क., ख., ग., घ. पुस्तकेषु 'राज्ञश्चाधिकृतो' इति पाठः । मेधातिथेस्तु उपरिनिर्दिष्ट एव सम्मतः पाठः। **मिता.**२।२ पू.; **व्यक.**११; **स्मृच.**२०; **रार.**२१ श्चप्र (श्चाधि) ब्रह्म (ब्राह्म); **व्यनि.** (राजा च प्रकृतो विद्वान् सा यज्ञसदृशी सभा); **स्मृचि.**३; **नृप्र.**४ पू.; **व्यत.**१९९ ज्ञश्च प्र (ज्ञः प्रति); **व्यसौ.**८ श्च प्र (श्चाधि); **वीमि.**२।२ पू.; **व्यप्र.**८ रारवत् : २७ पू.; **व्यउ.**५ व्यसौवत् : १६ पू.; **विता.**३ व्यसौवत्; **प्रका.** ११; **समु.**८.

१ सभां प्रविश्य.

* मसु., मच. गोरावत् । + शेषं व्यप्रवत् ।

(१) **मस्मृ.**८।२० ; **व्यमा.**२८० तु शूद्रः (शूद्रः स्यात्); **अप.**२।२ कामं (वरं); **व्यक.**१२; **स्मृच.**१७; **पमा.**२९; **दीक.** ३१ कथं (कदा); **व्यनि.**; **स्मृचि.**२-३; **व्यत.**१९८ दिकवत्;

१ निरवद्यैवेयमपीति.

धोऽयम् । न च मन्त्रित्वे पुरोहितवज्जातिनियमः । तथा हि 'तैः सार्धं चिन्तयेत्' इत्युक्त्वा ततो ब्राह्मणेन सह चिन्तयेदिति । तेनायमर्थो, यद्यपि कथंचिच्छूद्रो न्यायलेशान्[1] समधिगच्छेत्तथापि राजाधिकरणे विवदतो मन्त्री निग्रहाधिकृतो वा न किञ्चित् प्रब्रूयात् । पूर्वश्लोकार्धः[2] प्रतिषेधशेषतया व्याख्येयः । न हि जातिमात्रोपजीविनो वैदुष्यादिगुणरहितस्य धर्मप्रवक्तृत्वनियोगः शक्यो वक्तुं तस्यैव रूपपरीक्षायां तस्माद्विषं भक्षय मा चास्य गृहे भुङ्क्था इतिवत्प्रतिषेधशेषभूतमिदमनुज्ञानं न पुनरनुज्ञानमेव । अत एव काममित्याह । कामशब्दप्रयोगे हि विधित्वं व्याहन्यते । अन्ये तु ब्रुवते, ब्राह्मणस्य प्रवक्तृत्वविधानात् तदा नियोज्यो विद्वान् स्याद् ब्राह्मण इति क्षत्रियादयस्त्रयोऽपि वर्णा निषिद्धाः तत्रेह पुनः शूद्रप्रतिषेधो विद्वद्ब्राह्मणाभावे क्षत्रियवैश्ययोरभ्यनुज्ञानार्थ इति । शेषं समानम् । जातिमात्रमुपजीवतीति मात्रशब्दोऽवधारणे । ब्राह्मणजातिमेव केवलामुपाश्रित्य जीवति, नाध्ययनादीन् गुणविशेषान्निर्गुणत्वात् । ब्रुवशब्दः कुत्सायाम् । *मेधा.

(२) केवलं ब्राह्मणजातिमात्रं यस्य, न ब्राह्मणो धर्माऽनुसरणेन, स तु ब्राह्मणोऽस्य राज्ञः विद्वद्ब्राह्मणाऽभावे व्यवस्थापने धर्मस्य प्रवक्ताऽधिकृतः स्यात्, न कदाचिच्छूद्र इति । 'तदा नियुञ्ज्याद्विद्वांसं ब्राह्मणम्' इत्यनेनैव सिद्धे शूद्रप्रतिषेधे, पुनर्वचनं क्षत्रियवैश्यनियोजनाच्छूद्रनियोजनस्य दुष्टत्वख्यापनार्थम् । गोरा.

(३) जातिमात्रोपजीवी—जात्या ब्राह्मणः संस्काररहितः । स एव संस्कृतोऽनध्येता ब्राह्मणब्रुवः । न तु शूद्र इति ब्राह्मणब्रुवस्याप्यसंभवे क्षत्रियवैश्यावपि स्यातामित्येतदर्थम् । ×मवि.

(४) जातिमात्रोपजीवी न तु विद्यावृत्तोपजीवी । स्मृच.१७

(५) ब्राह्मणजातिमात्रं यस्य विद्यते न तु ब्राह्मणकर्मानुष्ठानं, वणिगादिवत्साक्ष्यादिद्वारेण स्फुटन्यायानिरूपणक्षमः । +ममु.

(६) विद्वत्क्षत्रियवैश्याऽसंभवे मनुराह—जातीत्यादि । व्यनि.

(७) जातिसंदेहेऽपि ब्राह्मणोऽहमिति ब्रवीतीति ब्राह्मणब्रुवः । +मच.

(८) कथंचन आपद्यपि । नन्द.

**यस्य शूद्रस्तु कुरुते राज्ञो धर्मविवेचनम् ।**
**तस्य सीदति तद्राष्ट्रं पङ्के गौरिव पश्यतः ॥**

(१) पूर्वविधिशेषोऽयमर्थवादः । यस्य राज्ञः शूद्रो धर्मविवेचनं धर्मनिर्णयं करोति, तस्य सीदति नश्यति, राष्ट्रं प्रजाः, कर्दमे गौरिव । *मेधा.

(२) तेन धर्मशास्त्रज्ञक्षत्रियवैश्ययोरलाभेऽपि शूद्रो वर्ज्यः । स्मृच.१७

(३) पश्यतो राज्ञः रक्षकस्यापीत्यनादरे षष्ठी । मच.

**यद्राष्ट्रं शूद्रभूयिष्ठं नास्तिकाक्रान्तमद्विजम् ।**
**विनश्यत्याशु तत्कृत्स्नं दुर्भिक्षव्याधिपीडितम् ॥**

(१) अयमपि पूर्ववदर्थवाद एव । प्रकरणाच्च शूद्रभूयिष्ठता विवादनिर्णये तु शूद्रविषया द्रष्टव्या । यत्र शूद्रा भूयांसो विवादनिर्णयकारास्तद्राष्ट्रमाशु विनश्यति दुर्भिक्षव्याधिपीडाभिः । राष्ट्रनाशे च राष्ट्रपतेर्नाश इत्युक्तं भवति । नास्तिकाक्रान्तमिति दृष्टान्तः । यथा नास्तिकैः परलोकापवादिभिः लोकायतिकाद्यैः, आक्रान्तमधिष्ठितमतश्चाद्विजम् । न हि नास्तिकानां ब्राह्मणादिभेदो यथार्थः, संकीर्णत्वात् । तदुक्तं वैद्यवणिग्व्यपदेशादिवत् ब्राह्मणादयः । यत्र वा धर्मसंकटे तु न द्विजाः प्रमाणीक्रियन्ते तदद्विजम् । मेधा.

* व्यमा. तात्पर्यं मेधावत् । × भाच. मविवत् ।

+ शेषं मेधातिथिरन्यपक्षवत् । सेतु. ममुवत्.

* गोरा., ममु. मेधागतम् ।

व्यप्र. २५; व्यउ. १६ व्यास इत्याह; विता. १३ णमुवः (णो भ्रुवम्) कथं (कदा); सेतु.९४ कामं स्याद् (कायस्थो); प्रका.८; समु.६.

(१) मस्मृ.८।२१; व्यमा.२८० शूद्र (राज्ञ) राज्ञो (शूद्रो); अप.२।२व्यमावत्; व्यक.१२शूद्रस्तु (राज्ञश्च) राज्ञो (शूद्रो) ष्ट्रं (ज्यं); स्मृच.१७ व्यमावत्; रार.२३ व्यमावत्; पमा. २९; स्मृसा.८३-८४व्यमावत्, याज्ञवल्क्यः; व्यचि.३ व्यमावत्, कात्यायनः; स्मृचि.३; दवि.१४ (यस्य राष्ट्रे प्रकुरुते शूद्रो धर्मविवेचनम्); सवि.६६ व्यमावत्; व्यसौ.८ व्यमावत्; व्यप्र.२५ व्यमावत्; व्यउ.१६ यस्य (यत्र) व्यमावत्; विता.१३ ष्ट्रं (ज्यं); प्रका.८ व्यमावत्; समु. ६ व्यमावत्.

(२) मस्मृ.८।२२; स्मृचि.३; समु.५.

[1] शात्. [2] श्लोकार्थप्रतिषेधः शेषतया.

(२) यद्राष्ट्रं शूद्रबहुलं पर (?) लोकायतिकाक्रान्तमविद्यमानद्विजं तत्सर्वं दुर्भिक्षव्याधिपीडितं भूत्वा विनश्यति। 'अग्नौप्रास्ता' इत्येतदभावात् शान्त्यर्थयागाद्यभावाच्च। *गोरा.

(३) न केवलं व्यवहारदर्शन एव शूद्राधिकाराद्राष्ट्रावसादः। किन्तु अन्यत्रापि तदधिकारप्राधान्यादिति प्रसङ्गादाह—यद्राष्ट्रमिति। शूद्रभूयिष्ठं शूद्राधिकारप्रधानं, अत एव नास्तिकाक्रान्तमत एवाऽद्विजम्। नन्द.

प्राड्विवाकसभ्यैर्धर्म्य एव निर्णयः कार्यः

**धर्मो विद्धस्त्वधर्मेण सभां यत्रोपतिष्ठते।**
**शल्यं चाऽस्य न कृन्तन्ति विद्धास्तत्र सभासदः॥**

(१) धर्मः शास्त्रव्यवस्था। अधर्मेणाऽव्यवस्थया पीडितः सभामुपतिष्ठते यत्रावस्थानं कुरुते, सभ्याश्च ब्राह्मणास्तस्य धर्मस्य शल्यमिव शल्यं अधर्माख्यं नोद्धरन्ति, तत्र तेनाधर्मशल्येन सभ्या विद्धा भवन्ति। गोरा.

(२) कथकान् कांश्चित् सभ्याननादृत्य धर्मनिर्णये सभ्यानामपि दोषस्तेनैव दर्शितः—धर्मो विद्धस्त्विति। शल्याऽनिकर्तनं संमत्यभावेऽपि निश्चयः। स्मृच.२१

(३) भाः प्रकाशः, तया सह वर्तत इति विद्वत्संहतिरेवात्र सभाशब्देनाभिमता। यत्र देशे सभां विद्वत्संहतिरूपां, धर्मः सत्याभिधानजन्योऽनृताभिधानजन्येनाधर्मेण पीडित आगच्छति। आर्थिप्रत्यर्थिनोर्मध्ये एकस्य सत्याभिधानादपरस्य मृषावादात् ते च सभासदोऽस्य धर्मस्य पीडाकरत्वात् शल्यमिवाऽधर्मं नोद्धरन्ति, तदा ते एव तेनाधर्मशल्येन विद्धा भवन्ति। +ममु.

सभायां तूष्णींभावे विपरीतोक्तौ वा दोषः

**सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम्।**
**अब्रुवन्विब्रुवन् वाऽपि नरो भवति किल्बिषी॥**

(१) अनेनार्थेन द्वयं विप्रतिषिध्यते। प्रतिपन्नाधिकारेण मिथ्यादर्शनं न कर्तव्यमन्येन च क्रियमाणं नोपेक्षणीयम्। तत्रोभयथा दोषः। अब्रुवन् अन्येन विपरीतेऽनुष्ठीयमाने तूष्णीमासीनो हस्तक्षेपेण वा शास्त्राज्ञाविरुद्धं ब्रुवन् किल्बीषी पापभाग्भवति। तेन नैषा प्रत्याशा कर्तव्या। द्वितीयः, प्राड्विवाको मिथ्या पश्यति, स एव योजयति (?) अहं तूष्णींभूत उदासीनः किमित्येनसा योक्ष्ये इति। सभाप्रवेशनिषेधेन चात्र व्यवहारदर्शनाधिकारप्रतिपत्तिः प्रतिषिध्यते। 'सभा वा न प्रवेष्टव्या' इति। व्यवहारदर्शनाधिकारो न प्रतिपादनीय इत्यर्थः। प्रतिपन्नश्चेत् समञ्जसं वक्तव्यम्। अनेन तु अनधिकृतस्यापि यदृच्छया सन्निहितस्य मिथ्या पश्यत्सु सभ्येषु विदुषस्तूष्णींभावं नेच्छन्ति। तथा च नारदः—'नियुक्तो वाऽनियुक्तो वा धर्मज्ञो वक्तुमर्हति'। अथ राजपुरुषपर्यनुयोग आशङ्क्यते किमित्यनधिकृतो ब्रवीति, ततश्च तत्प्रदेशादपसर्तव्यम्। तदिदमुक्तम्—'दुर्बलहिंसायां चाविमोचने शक्तश्चेत्' इति (गौध. २१।१९)। मेधा.

(२) यत्पुनस्तेनोक्तम्—'सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियं' इति (मस्मृ. ४।१३८) तन्निर्णेतृव्यतिरिक्तविषयम्। तत्राऽपक्षपातेन अप्रियोक्तिरपि कार्यैवेत्युक्तत्वात्। स्मृच. २२

(३) सभामवगम्य व्यवहारार्थं तत्प्रवेशो न कर्तव्यः। पृष्टश्चेत्तदा सत्यमेव वक्तव्यम्। मेधातिथिना तु 'सभा वा न प्रवेष्टव्या' इति ऋज्वेव पठितम्। *ममु.

(४) नियुक्तेषु 'सभा वा न प्रवेष्टव्या' इत्यसङ्गतेः नियोगस्वीकारे सभाप्रवेशस्यावश्यकत्वादनियुक्तविषयमेवैतन्मनुवचनम्। ×व्यप्र. २८

अधर्म्यनिर्णये दोषः

**यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च।**

---

*ममु. गोरावत्। +मवि. पदार्थो ममुवत्। मच. ममुगतम्।

(१) मस्मृ.८।१२; व्यक.१५; स्मृच.२१ ते (ति) विद्धा (हता); व्यनि. ते (ति) न (नि); व्यसौ.१०; व्यप्र.११: १४ धर्मो विद्धस्त्व (विद्धो धर्मो ह्य) न (नि); व्यउ.६ पूर्वार्धं व्यप्रवत्; प्रका.१२ स्मृचवत्; समु.८ स्मृचवत्.

(२) मस्मृ.८।१३ क., ग., घ. पुस्तकेषु 'सभां वा न प्रवेष्टव्यं' इति पाठः; शुनी.४।५२९; मिता.२।२,२।८३ उत्त.; अप.२।४; व्यक.१४ भा (मां) व्या (व्यं) समञ्जसम् (समं वचः); मभा.१३।७; स्मृच.१५,२२; सुबो.२।१; स्मृसा.८४ भा (मां) व्या (व्यं); व्यनि.; स्मृचि.४ सभा वा (सभायां) कात्यायनः; दवि.१७ स्मृसावत्; राकौ.३८३; व्यसौ.१० स्मृसावत्; चन्द्र.१०५ (सभायां न प्रवेष्टव्यं वक्तव्यं वा यथोचितम्); व्यप्र.२८; व्यउ.१७ वसिष्ठः: ५१ अब्रुवन्वि (साक्षिणाम) उत्त.; विता.७; प्रका.७; समु.८.

* मच. ममुवत्। × व्यउ. व्यप्रवत्।

(१) मस्मृ.८।१४; अप.२।४ कात्यायनः; व्यक.१५;

**हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः ॥**

(१) धर्मः शास्त्रन्यायदेशनियता व्यवस्था। सा चेद-धर्मेण तद्व्यतिक्रमरूपेण हन्यते विनाश्यतेऽर्थिना प्रत्यर्थिना वा, तथा सत्यमनृतेन साक्षिभिर्हन्यते, प्राड्विवाकादयश्च प्रेक्षन्ते न तत्त्वमुद्धरन्ति, ततस्ते हताः शवतुल्या भवन्तीति निन्द्यते। तस्मान्नार्थिप्रत्यर्थिनौ विपरीतमाचरन्तौ सभासद्भिरुपेक्ष्यौ। साक्षिणश्च। धर्माधर्मग्रहणेन सत्यानृतग्रहणेन वा सिद्धौ श्लोकपूरणमुभयोरुपादानम्। अतो विषयभेदेन व्याख्यातम्। मेधा.

(२) यस्यां सभायां समवस्थितानां प्राड्विवाकादीनां प्रेक्षमाणानां वादिना प्रतिवादिना वा धर्मो बाध्यते यत्र च साक्षिभिः सत्यमनृतेन बाध्यते तत्र ते प्राड्विवाकादयः सभासदः पापेन हता भवन्ति। तस्मान्न वादिप्रतिवादिनां साक्षिकृतो वा व्यतिक्रम उपेक्षणीयः। *गोरा.

(३) यत एव सत्यमनृतेन हन्यतेऽत एव धर्मोऽधर्मरूपेण तत्र हन्यते। मवि.

(४) प्रेक्षमाणानामिति अनादरे षष्ठी। स्मृच. २१

धर्ममहिमा

**धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः।**
**तस्माद्धर्मो न हन्तव्यो मा नो धर्मो हतो वधीत् ॥**

(१) न भयादन्यथा दर्शनं कर्तव्यं यतो धर्मो व्यतिक्रान्तः सन् हन्ति। नोऽर्थी तत्सहायो राजा वा। तथा धर्म एव पालितः सर्वतो भयमपनुदति। नापकर्तुं अर्थ्यादयः क्रुद्धाः शक्नुवन्ति। तस्मादेवं जानता सुखदुःखे धर्माधीने इति धर्मो न हन्तव्यः। यदि वयं धर्मं हन्मः तदा सोऽस्मान् सर्प इव रोषितः प्रतिहन्तीत्यतो धर्मो हतः सन् माऽस्मान् वधीदित्यात्मपरित्राणार्थं धर्मो रक्षितव्यः। मेधा.

(२) तस्माद्धर्मो व्यतिक्रान्तो दृष्टादृष्टाभ्यां नाशयति, नार्थिप्रत्यर्थ्यादि। स एव चानतिक्रान्ततया रक्षति। तस्माद्धर्मो नातिक्रमणीयः। 'माऽस्माकं त्वत्सहितानां धर्मो व्यतिक्रान्तो दृष्टादृष्टार्थनाशं कार्षीत्' इति सभ्यैः असत्प्रवृत्तः प्राड्विवाकः संबोधनीयः। +गोरा.

(३) अथवा नो निषेधेऽव्ययं, नो हतो धर्मो मा वधीत् न हन्त्येवेत्यभिप्रायः। ×ममु.

(४) हे महर्षयः ! मा नोऽस्मान् धर्मो वधीत्। नन्द.

**वृषो हि भगवान्धर्मस्तस्य यः कुरुते ह्यलम्।**
**वृषलं तं विदुर्देवास्तस्माद्धर्मं न लोपयेत् ॥÷**

(१) वृषलशब्दनिर्वचनेन मिथ्यादर्शी निन्द्यते न जातिवृषलो वृषलः। किं तर्हि यो वृषस्य कामवर्षिणो धर्मस्यालङ्कुरुते। निवृत्तिवचनोऽलंशब्दः, स वृषल इत्येतमर्थं देवाः प्रतिपन्नाः। मनुष्यास्तु यदि जातिशब्दमेव मन्यन्ते कामं मन्यन्ताम्, प्रमाणतरास्तु देवाः। ते चानेन प्रवृत्तिनिमित्तेन वृषलशब्दप्रयोगं मन्यन्ते। देवग्रहणमर्थवादः। तस्मात् श्राद्धकाले वृषलैर्न प्राशव्यम्। 'हन्तव्यो वृषलश्चौरः' इत्याद्यासु क्रियासु मिथ्यादर्शी ब्राह्मण एव वृषलशब्देन ग्रहीतव्य इति। अतो वृषलत्वं मा प्रापमिति धर्मं न लोपयेत् न नाशयेदिति वृषलत्वाध्यारोपो निन्दा। मेधा.

(२) तस्मात्सकलकामवर्षणात् वृषशब्देन धर्म उच्यते। तस्य वारणं कुरुते तं देवा वृषलं मन्यन्ते न जातिवृषलम्। तस्माद्धर्मं नोच्छिन्द्यादिति धर्मव्यतिक्रमपरिहारार्थं वृषलवचनम्। *गोरा.

(३) अलं व्यर्थत्वं निषेधं वा। मवि.

(४) वृषः प्रवर्षति अर्थकाममोक्षानिति। अलंशब्दो वारणार्थः। वृषलं शूद्रं गवाशिचण्डालं वा। मच.

---

*ममु., मच., नन्द., भाच. गोरागतम्।

**स्मृच.**२१ यत्रा (चैवा) हन्यते (हन्येत); **स्मृसा.**८४; **चन्द्र.** १०५ तत्र (तस्य); **प्रका.**१२ यत्रा (चैवा); **समु.**८प्रकावत्, कात्यायनः.

(१) **मस्मृ.**८।१५; **व्यक.**१५; **स्मृच.**२१; **रार.**२५; **व्यसौ.**११; **प्रका.**१२; **समु.**८.

१ धर्म. २ (०). ३ सिद्धं. ४ तस्मान्न चापि प्रतिवादिना साक्षिकृतो व्यतिक्रमो रक्षणीयः। ५ र्थम्. ६ अर्थादयः, मिथ्यारयः. ७ जानः, जानानः.

+मच. गोरावत्। × प्रथमकल्पस्तु गोरावत्।

÷ vulg. 'वृषो हि भगवान्' तथा 'एक एव सुहृद्' (मस्मृ.८।१६,१७) इति श्लोकद्वयं 'तत्प्रतिष्ठः स्मृतो धर्मो' नास्मृ. ३।६ इति श्लोकानन्तरं दृश्यते।

* ममु. गोरावत्।

(१) **मस्मृ.**८।१६ ख. पुस्तके तु 'त्वलम्' इति पाठः; **व्यक.** १५; **स्मृच.**२१ ह्य (त्व); **व्यसौ.**११ ह्य (त्व) धर्मं (तं तु); **प्रका.**१२ स्मृचवत्; **समु.**८ स्मृचवत्.

**एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः ।**
**शरीरेण समं नाशं सर्वमन्यद्धि गच्छति ॥**

भयाद्धर्मातिक्रमो न कर्तव्य इत्येतत् 'धर्म एव हतो हन्ति' इत्यनेनोपदिष्टम् । स्नेहतो न कर्तव्य इत्यनेनोपदिश्यते । यत एकः सुहृद्धर्मस्तत्र स्नेहो भावनीयः । अन्यो हि मनुष्यः सुहृत् [धर्मः निधनेऽप्यनुयान् ?] कार्यमपेक्ष्य जहाति जीवनं, योऽपि स्यादत्यन्तमित्रं तस्यापि सौहार्दं आ निधनात् । धर्मस्तु मृतमपि पुरुषमन्वेति अतो न सुहृदपेक्षया मिथ्यादर्शनमुपेक्षा वा कर्तव्या ।

'भार्या पुत्रो मित्रमर्थाश्च रिक्थम् । नश्यन्त्येते देहनाशे नरस्य ॥ धर्मस्त्वेको नैनमुज्झत्यजस्रम् । तस्माज्जह्यात्पुत्रदारान् न धर्मम् ॥' यदन्यद् धर्माद्भार्यादि, तत्सर्वं शरीरेण समं सह नाशं गच्छति । धर्मादन्यो मृतं न परित्रातुं कश्चित्समर्थ इत्यतः सुहृद्बान्धवानुरोधादपि धर्मो न हातव्यः । *मेधा.

अधर्म्यनिर्णये दोषभागिनः

**पादोऽधर्मस्य कर्तारं पादः साक्षिणमृच्छति ।**
**पादः सभासदः सर्वान् पादो राजानमृच्छति ॥**

(१) न चैषा मनीषा कर्तव्या 'अर्थिना प्रत्यर्थिना वाऽन्यतरस्य भूम्याद्यपह्रियते स एव भूम्यपहारदोषभाग्भविष्यति । वयं तु तदकारिणः किमिति दोषवन्तः स्याम' यतस्तस्य अयं चतुर्धा विभज्यते । अर्थवादश्चायम् । न ह्यन्यकृतस्यैनसोऽन्यत्र गमनमस्ति । तेषामपि मिथ्यादर्शननिषेधातिक्रमादुत्पद्यते पापं मिथ्यालम्बनम् । राज्ञः स्वयमपश्यतोऽपि अधिकृतराजस्थानीयादिदोषादोषवत्त्वम् । यदि राजाधिकृतो मिथ्याचरितेन ज्ञापितः, पराजितं दुष्टं न गृण्हीते न च पुनः सम्यक् निर्णयं करोति, ततः सोऽपि पापभाग्भवति । अधिकृतोपलक्षणार्थं वा राजग्रहणम् । यदा राजा स्वयं मिथ्या पश्यति तदा दुष्यति । यदा राजस्थानीयस्तदा तस्य दोष इत्यर्थः । मेधा.

(२) तद्व्यवहारतोऽधर्मसंबन्धी । चतुर्थो भागोऽर्थिनं प्रत्यर्थिनं वादिसंप्रवृत्तं गच्छति, अन्यश्चतुर्थभागोऽसत्यवादिनं साक्षिणं च, अन्यः परः सर्वान् सभास्थितान् प्रेक्षमाणान्, परश्चान्यः राजानं प्रयातीति सर्वेषामधर्मसंबन्धो भवतीत्येतत्प्रतिपादनपरमेतत् । *गोरा.

(३) कर्तृपापस्य पाद इत्यर्थः । अनेनैव सभ्यानां प्रत्यवायं वदता सभोपविष्टानां ब्राह्मणानां सभासदां च भेद उक्तः । व्यउ.६

धर्म्यनिर्णये शुभफलम्

**राजा भवत्यनेनास्तु मुच्यन्ते च सभासदः ।**
**एनो गच्छति कर्तारं निन्दार्हो यत्र निन्द्यते ॥**

(१) एष एवार्थो विपर्ययेणोच्यते । यत्र दोषवान् दोषं गोपायितुं न लभते प्रकटीक्रियते तदीयो दोषः, तत्र सर्वं साधु संपद्यत इति । 'यत्र धर्म' (८।१४) इत्यत आरभ्य मिथ्यादर्शनोपेक्षणप्रतिषेधार्थं निन्दाप्रशंसाभ्यां शुभाशुभफलदर्शनार्थो अर्थवादाः । मेधा.

(२) यत्र पुनः सभायां असद्वादित्वादर्थी प्रत्यर्थी वा सम्यग्दर्शनेन कुत्स्यते तत्र राजाऽपापो भवति, सभासदश्च पापेन न संबध्यन्ते, अर्थ्यादिकर्तारमेव गच्छति । +गोरा.

(३) मुच्यन्ते चेति चकारात्साक्षिणोऽपि । मवि.

(४) राजपदं विवेचकपरम् । व्यत.२००

(५) यत्र शिक्षणीयस्य शिक्षा क्रियत इत्यर्थः । व्यउ.७

---

* अन्येषां व्याख्याकाराणां न विशेषः ।

(१) **मस्मृ.**८।१७; **व्यक.**१५ हि(तु); **व्यनि.**; **व्यसौ.**११; **प्रका.**१२; **समु.**८.

(२) **मस्मृ.**८।१८; **अप.**२।३०४; **व्यक.**१५ मनुनारदहारीतबौधायनाः; **पमा.**१९ साक्षिणमृच्छति(गच्छति साक्षिणम्); **व्याचि.**६; **व्यनि.**; **दवि.**१७ मनुनारदहारीतबौधायनाः; **व्यत.**२०० मनुनारदहारीतबौधायनाः; **व्यसौ.**१०; **व्यप्र.**११; **व्यउ.**६,१६५; **विता.**२७; **सेतु.**९६ मनुनारदहारीतबौधायनाः; **प्रका.**१२; **समु.**८ धर्मस्य (गच्छति).

१ ऽपि. २(०).

*ममु., सेतु. गोरागतम् । +ममु. गोरावत् ।

(१) **मस्मृ.**८।१९; **अप.**२।४ यत्र (यदि); **व्यक.**१४ च (तु); **स्मृच.**२२; **रार.**२५ वत्र (वेद); **पमा.**३३; **व्यनि.**; **दवि.**१८; **नृप्र.**५; **व्यत.**२०० मनुनारदबौधायनहारीताः; **व्यसौ.**१०; **व्यप्र.**११; **व्यउ.**७ निन्द्यते (तिष्ठति); **सेतु.**९६ मनुनारदहारीतबौधायनाः; **प्रका.**१२; **समु.**८.

१ परित्यज्य.

(६) कर्तारं वादिनं प्रतिवादिनं वा। सेतु.९६

आश्रमिद्विजानां कार्याणि तच्छिष्टैर्निर्णेयानि, तत्संमतौ राज्ञा

**आश्रमेषु द्विजातीनां कार्ये विवदतां मिथः ।**
**न विब्रूयान्नृपो धर्मं चिकीर्षन् हितमात्मनः ॥**

(१) वानप्रस्थादीनामरण्याश्रमवासिनामाश्रमेषु, कार्ये धर्मसङ्कटरूपम् 'अयं शास्त्रार्थो, नायमि'ति इतरेतरं विवदमानानां न धर्मव्यवस्थां सहसा विब्रूयात्प्रभुतया निर्णयमन्येषामिव न कुर्यात्। कथं तर्हि? वक्ष्यमाणेन प्रकारेण। एवमात्मने हितं कृतं भवति। शास्त्रार्थत्यागो न भवतीत्यर्थः। गृहस्थानां चाश्रमित्वेऽपि यथोक्त एव निर्णयप्रकारः। कार्ये धर्मसंशयात्मकविवादपदम्। आश्रमग्रहणाच्च विशिष्टविषयता व्याख्यायते। मेधा.

(२) द्विजानां गृहस्थानाम्, आश्रमविषये शास्त्रार्थोऽयं नेत्येवं परस्परं विवदमानानां राजा आत्मने दृष्टाऽदृष्टहितं कर्तुमिच्छन् अयं शास्त्रार्थ इति सहसा न विशेषेण ब्रूयात्। *गोरा.

(३) अस्यार्थः—त्रिदण्डैर्दण्डाश्रमविवादेषु स्वयं निरूपयेत्। ब्राह्मणैरित्युपादानात् तैरपि निरूपणीयम्। मिथोऽन्योन्यम्। द्विजातीनामित्युपादानात् पाषण्डैः सह आश्रमविवादेषु तु ब्रूयादेव धर्ममित्यर्थः। शेषं सुगमम्। +व्यमा.२८१

(४) आश्रमेषु ब्रह्मचर्यादिषु न विब्रूयात्, जयपराजयावधारणं न कुर्यादित्यर्थः। व्यक.१३

(५) आश्रमेषु आश्रममध्ये कार्ये कर्तव्ये आश्रमधर्मे इत्यर्थः। न विब्रूयात् न धर्मविपरीतमर्थं स्वापेक्षया स्थापयेत्। मवि.

(६) आश्रमेषु तपोवनेषु, द्विजातीनां वानप्रस्थानाम्। नन्द.

(७) आश्रमेषु चतुर्षु द्विजातीनां विवदतां सतामात्मनो हितं चिकीर्षन् नृपो न विब्रूयाद् विपरीतं न वदेत्। भाच.

**यथार्हमेतानभ्यर्च्य ब्राह्मणैः सह पार्थिवः ।**
**सान्त्वेन प्रशमय्यादौ स्वधर्मं प्रतिपादयेत् ॥**

(१) यथा तत्कर्तव्यं तथेदानीमाह—यो यादृशीं पूजामर्हति गुणानुरूपेण तं तथैवाभ्यर्च्य ब्राह्मणैर्मन्त्रिपुरोहितादिभिः अर्चायां[1] साहित्यं धर्मप्रवचने वा। तदा च ब्राह्मणाः सभ्या[2] विज्ञेयाः तैः सह स्वधर्मं[3] न्याय्यमर्थं बोधयेत्। सिद्धे सहत्वे[4] तस्य उपदेशः प्राधान्यार्थस्तान्पुरस्कुर्यात्। तथा हि न राज्ञः क्रुध्यन्ति। सान्त्वेन[5] प्रीतिस्तुतिवचनैः प्रथमं प्रशमय्य[6] व्यपनीतक्रोधान्कृत्वा ततो ब्रूयात्। मेधा.

(२) किं तर्हि यथार्हमिति। यादृशीं यः पूजामर्हति तं तथा पूजयित्वा अन्यैर्ब्राह्मणैः सह राजा प्रथमं सान्त्वेन अपगतक्रोधान् कृत्वा ततस्तेषां यः स्वधर्मस्तं बोधयेत्। *गोरा.

(३) ब्राह्मणैः स्वकीयधर्मासनस्थैः। सान्त्वेन प्रशमय्य विवादं त्याजयित्वा। स्वधर्मं तैरेव विचारं कारयित्वा प्रतिपादयेत् ज्ञापयेत्। मवि.

(४) सान्त्वनेन प्रियवचनेन। प्रशमय्य कोपादिकं शमयित्वा। व्यक.१३

(५) एतान् वानप्रस्थान् ब्राह्मणैः स्वपुरोहितादिभिः, सान्त्वेन प्रशमय्य न दण्डेन, स्वधर्ममविवादम्, अविवादो हि तेषां स्वधर्मः। नन्द.

(६) सः पार्थिवः, एतान् आश्रमादीन्, ब्राह्मणैः सह सान्त्वयन् अभ्यर्च्य प्रशमय्य आदौ, स्वधर्मं स्वस्वधर्मं प्रतिपादयेत् स्वस्वाश्रमधर्मे स्थापयेत्। भाच.

---

*ममु., मच. वाक्यार्थः आश्रमपदार्थश्च गोरावत्।

+आश्रमेष्विति यथार्हमिति च श्लोकद्वयं समुच्चित्येयं व्याख्या। व्यचि. व्यमावत्।

(१) **मस्मृ**.८।३९०; **शुनी**.४।५२०-५२१ मं (में) र्षन् (षुः); **व्यमा**.२८१; **व्यक**.१३; **व्यचि**.५; **स्मृचि**.६; **व्यसौ**.९ जातीनां (जानान्तु); **व्यप्र**.२३ र्षन् (र्षुः); **व्यउ**.१४; **व्यम**.४; **समु**.११ विव (षु व).

* ममु., मच. गोरावत्।

(१) **मस्मृ**.८।३९१; **शुनी**.४।५५६; **व्यमा**.२८१ सह पार्थिवः (पार्थिवः स्वयम्) सान्त्वे (सत्वे); **व्यक**.१३; **व्यचि**.५; **स्मृचि**.६; **व्यसौ**.९ प्रश (प्रण); **व्यप्र**.२३; **व्यउ**.१४; **समु**.११.

[1] आचार्यसाहित्ये. [2] सत्या. [3] धर्म. [4] **महत्वे**. [5] शास्त्रेण. [6] प्रथममप्य.

## वाल्मीकिरामायणम्

सत्सभालक्षणम्

न सा सभा यत्र न सन्ति वृद्धाः ।
न ते वृद्धा ये न वदन्ति धर्मम् ॥
नासौ धर्मो यत्र न सत्यमस्ति ।
न तत्सत्यं यच्छलेनानुविद्धम् ॥
ये तु सभ्याः सदा ज्ञात्वा तूष्णीं ध्यायन्त आसते ।
यथाप्राप्तं न ब्रुवते ते सर्वेऽनृतवादिनः ॥

## याज्ञवल्क्यः

राजा प्राड्विवाकः । ब्राह्मणाःसहकारिणः । धर्मशास्त्रानुसारी व्यवहारनिर्णयःकर्तव्यः । राज्ञा कीदृशाः कति च सभ्या नियोज्याः ।

*व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह ।
धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥
श्रुताध्ययनसंपन्ना धर्मज्ञाः सत्यवादिनः ।
राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः ॥

(१) यतश्च धर्मशास्त्रप्राधान्यं व्यवहारदृष्टौ, अतः श्रुताध्ययनेति । निगदोक्तः श्लोकः । विश्व.

(२) किञ्च श्रुताध्ययनसंपन्नाः श्रुतेन मीमांसाव्याकरणादिश्रवणेन अध्ययनेन च वेदाध्ययनेन संपन्नाः । धर्मज्ञाः धर्मशास्त्रज्ञाः । सत्यवादिनः सत्यवचनशीलाः । रिपौ मित्रे च ये समाः रागद्वेषादिरहिताः । एवंभूताः सभासदः सभायां संसदि यथा सीदन्ति उपविशन्ति तथा दानमानसत्कारे राज्ञा कर्तव्याः । यद्यपि श्रुताध्ययनसंपन्ना इत्यविशेषेणोक्तं तथापि ब्राह्मणा एव । यथाह कात्यायनः—'स तु सभ्यैः स्थिरैर्युक्तःप्राज्ञैर्मौलैर्द्विजोत्तमैः । धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैः' इति ॥ ते च त्रयः कर्तव्याः बहुवचनस्यार्थवत्वात्—'यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रयः' इति मनुस्मरणाच्च (८।११) । बृहस्पतिस्तु सप्त पञ्च त्रयो वा सभासदो भवन्तीत्याह—'लोकवेदज्ञधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा । यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा' इति ॥ न च ब्राह्मणैः सहेति पूर्वश्लोकोक्तानां ब्राह्मणानां श्रुताध्ययनसंपन्नाः इत्यादि विशेषणमिति मन्तव्यम् । तृतीयाप्रथमान्तनिर्दिष्टानां विशेषणविशेष्यभावाऽसंभवात् । विद्वद्भिरित्यनेन पुनरुक्तिप्रसङ्गाच्च । तथा च कात्यायनेन ब्राह्मणानां सभासदां च स्पष्टं भेदो दर्शितः—'सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः । ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः' इति ॥ तत्र ब्राह्मणा अनियुक्ताः सभासदस्तु नियुक्ता इति भेदः । अत एवोक्तम्—'नियुक्तो वाऽनियुक्तो वा धर्मज्ञो वक्तुमर्हति' इति । तत्र नियुक्तानां यथावस्थितार्थकथनेऽपि यदि राजाऽन्यथा करोति तदासौ निवारणीयोऽन्यथा दोषः । उक्तं च कात्यायनेन—'अन्यायेनापि तं यान्तं येऽनुयान्ति सभासदः । तेऽपि तद्भागिनस्तस्माद्बोधनीयः स तैर्नृपः' इति ॥ अनियुक्तानां पुनरन्यथाभिधानेऽनभिधाने वा दोषो न तु राज्ञोऽनिवारणे—'सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् । अब्रुवन्विब्रुवन्वापि नरो भवति किल्बिषी' ॥ इति मनुस्मरणात् (८।१३) । रिपौ मित्रे चेति चकारात् लोकरञ्जनार्थं कतिपयैर्वणिग्भिरप्यधिष्ठितं सदः कर्तव्यम् । यथाह कात्यायनः—'कुलशीलवयोवृत्तवित्तवद्भिरमत्सरैः । वणिग्भिः स्यात्कतिपयैः कुलभूतैरधिष्ठितम्' इति ॥ ×मिता.

(३) ततश्च यद्गुणकास्ते कार्यास्तानाह श्रुताध्ययनेति । श्रुतं वेदवाक्यार्थज्ञानोपयोगि मीमांसाया वेदाङ्गानां च कल्पनिरुक्तव्याकरणानामाचार्यादर्थज्ञानम् । धर्मशास्त्राण्याह पितामहः—'वेदाः साङ्गास्तु चत्वारो मीमांसा स्मृतयस्तथा । एतानि धर्मशास्त्राणि पुराणं न्यायदर्शनम्' ॥ मित्रामित्रयो रागद्वेषाभावेन समोपदेशकर्तारो राज्ञा सभासदः कार्या मानदानाभ्यामापाद्याः । सभायां सीदन्तीति सभासदः । एते बहुशास्त्रज्ञा ब्राह्मणास्तदलाभे तादृशाः क्षत्रियास्तदलाभे तादृशा एव वैश्याः । +अप.

*व्याख्यासंग्रहः स्थलादिनिर्देशश्च दर्शनविधौ द्रष्टव्यः ।

(१) वारा. ७।५९ (प्रक्षिप्तेषु ३।३४-३५).

(२) **यास्मृ.** २।२; **विश्व.** २।२ धर्मज्ञाः (कुलीनाः); **मिता.**; **अप.**; **स्मृच.** १५; **पमा.** २६; **व्यनि.** विश्ववत्; **व्यत.** १९९ धर्मज्ञाः (कुलीनाः) रिपौ (शत्रौ); **वीमि.**; **व्यप्र.** २६; **व्यउ.** १६; **व्यम.** २; **विता.** ३; **सेतु.** ९५ व्यप्रवत्; **प्रका.** ७; **समु.** ६.

×व्यवहारनिर्णये 'सभ्यासभ्यब्राह्मणभेदो' मितावत् । वीरमित्रोदये (यास्मृ.टीका) तु पूर्वश्लोकोक्तब्राह्मणविशेषणपरः श्लोकोऽयमिति प्रथमं समर्थयित्वा, वस्तुतस्तु इत्यादिना मिताक्षरावत् नियुक्तसभ्यपरत्वं समर्थितम् । विता. मितावत् ।

+शेषं मितावत् ।

(४) कुलीनाः संकरादिदोषशून्यमातापितृपरम्पराकाः। व्यत.१९९

(५) राज्ञा कर्तव्याः। सभ्यत्वेन वरीतव्या इत्यर्थः। अतस्तेषामुपादेयत्वात् 'स्वाध्यायोऽध्येतव्यः' 'यूपं छिनत्ति' 'पुरोहितस्तं प्रकुर्वीत' इत्यादिवत् सत्यपि कर्मत्वेऽनुद्देश्यत्वात् तद्गतैकत्ववत् बहुत्वं विवक्षितम्। तच्च यद्यपि कपिञ्जलनयेन ( पूमी. ११।१।८ ) त्रित्वमात्रेणापि चरितार्थं तथापि स्मृत्यन्तरोक्तबहुत्वविकल्पपरम्। *व्यप्र.२६

राज्ञा स्वस्थाने ब्राह्मणः प्राड्विवाको नियोज्यः

**अपश्यता कार्यवशात् व्यवहारान् नृपेण तु।**
**सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित्॥**

(१) दृष्टमूलत्वाच्च राज्ञः स्वयं व्यवहारदर्शनस्मृतेरदृष्टार्थत्वेऽपि च प्रयोजनानुसारात् कार्याणां गुरुलघुत्वे समीक्ष्य- अपश्यतेति । सोऽपि राजस्थानीयत्वात् क्रोधादिरहित एव स्यात्। विश्व.

(२) व्यवहारान्नृपः पश्येदित्युक्तं तत्रानुकल्पमाह— अपश्यतेति। कार्यान्तरव्याकुलतया व्यवहारानपश्यता नृपेण पूर्वोक्तैः सभ्यैः सह, सर्वधर्मवित् सर्वान्धर्मशास्त्रोक्तान्सामयिकांश्च धर्मान्वेत्ति विचारयतीति सर्वधर्मवित् ब्राह्मणो न क्षत्रियादिर्नियोक्तव्यो व्यवहारदर्शने। तं च कात्यायनोक्तगुणविशिष्टं कुर्यात्। मिता.

(३) स्वयं च प्राड्विवाकसंज्ञकब्राह्मणो राजन्येऽपि व्यवहारान्पश्यति नियोक्तव्य एव। यदाह नारदः— 'धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः। समाहितमतिः पश्येद्व्यवहाराननुक्रमात्'॥ राजा चेद्व्यवहारान् पश्यति प्राड्विवाकोऽनुमन्ता, अन्यदा तु व्यवहारद्रष्टा। ×अप.

(४) व्यवहारदर्शनात् गुरुतरकार्यान्तरव्यग्रत्वेन व्यवहारानपश्यता नृपेण सभ्यैः त्रिभिरेव सह नियोक्तव्यः प्राड्विवाको नाऽमात्यादिभिः सहेत्यर्थः। स्मृच.१६

(५) राज्ञः प्रतिनिधिमाह—अपश्यतेति। पमा.२७

(६) मिता.टीका—योगीश्वरोक्तमनुकल्पमेव मुख्यं मन्यते नारद इत्याह। नारदेन त्वयमेवेति। राज्ञां बहुकार्यव्याकुलत्वेनावकाशाभावात् स्वप्रतिरूपकपूर्वोक्तपुरुषान्तरद्वारेणैव व्यवहारदर्शनस्योचितत्वादसावेव पक्षो मुख्यो ज्यायानित्यर्थः। *सुबो.

(७) देशजात्यादिसकलधर्मज्ञः सर्वधर्मवित्। दीक.

शास्त्रविरुद्धनिर्णेतृसभ्यदण्डः

**रागाल्लोभाद्भयाद्वापि स्मृत्यपेतादिकारिणः।**
**सभ्याः पृथक्पृथग् दण्ड्या विवादाद्द्विगुणं दमम्॥**

(१) स्मृत्युक्तार्थान्यथाकारिणो रागादिभिस्तद्द्विगुणं धनमेकैकशो दण्ड्याः। आदिग्रहणात् स्मृत्यर्थं चान्यथानिनीषव इत्यभिप्रायः। सर्वसभ्यदण्डाद् द्विगुणं च राजा तत्स्थानीयो वा दण्ड्यः, तदधीनत्वान्निर्णयस्य। अत एव च पृथक् पृथगिति वीप्सा। सभ्याः पृथक् पृथक् विवादद्विगुणं, तद्द्विगुणं च राजा। तथा च वक्ष्यति। विश्व.

(२) प्राड्विवाकादयः सभ्या यदि रागादिना स्मृत्यपेतं व्यवहारं विचारयन्ति तदा राज्ञा किं कर्तव्यमित्यत आह— रागादिति। अपि च पूर्वोक्ताः सभ्या रजसो निरङ्कुशत्वेन तदभिभूता रागात् स्नेहातिशयात्, लोभात् लिप्सातिशयात्, भयात् संत्रासात्, स्मृत्यपेतं स्मृतिविरुद्धम्, आदिशब्दादाचारापेतं कुर्वन्तः, पृथक्पृथगेकैकशो, विवादात् विवादपराजयनिमित्ताद् दमाद् द्विगुणं दमं दण्ड्याः, न पुनर्विवादास्पदीभूताद्द्रव्यात्। तथा सति स्त्रीसंग्रहणादिषु दण्डाभावप्रसङ्गः। रागलोभभयानामुपादानं रागादिष्वेव द्विगुणो दमो नाज्ञानमोहादिष्विति नियमार्थम्। न च 'राजा सर्वस्येष्टे ब्राह्मणवर्जम्' इति

---

*पदार्थो मितावत्। व्यउ. व्यप्रवत्।

×भावार्थो मितावत्। वीमि., व्यउ. अपवत्।

(१) **यास्मृ.** २।३; **विश्व.** २।३; **मिता.**; **अप.**; **स्मृच.** १६; **पमा.** २७; **स्मृसा.** ८३; **स्मृचि.** ३; **नृप्र.** ४-५; **वीमि.**; **व्यप्र.** २४ कार्य (ह्यर्थ); **व्यउ.** १५; **व्यम.** ३; **विता.** ११; **राकौ.** ३८४; **समु.** ५.

*बाल. सुबोवत्।

(१) **यास्मृ.** २।४; **अपु.** २५३।३३-३४ **स्मृ** (श्रु) णं **दमम्** (णो दमः); **विश्व.** २।४ लोभा (द्वेषा) वादाद् (वाद) दम (धन); **मिता.**; **अप.**: २।३०४ उत्त.; **स्मृच.** २२; **पमा.** ३४; **सुबो.**: २।३०५; **व्यनि.** तादि (ताधि); **दवि.** ३७ नारदः; **नृप्र.** ५; **सवि.** ६९ तादि (तार्थ) वादाद् (वाद); **वीमि.**; **विता.** २७; **प्रका.** १३; **समु.** ९.

(गौध.१११) गौतमवचनान्न ब्राह्मणा दण्ड्या इति मन्तव्यम्। तस्य प्रशंसार्थत्वात्। यत्तु 'षड्भिः परिहार्यो राज्ञाऽवध्यश्चाबन्ध्यश्चादण्ड्यश्चाबहिष्कार्यश्चापरिवाद्यश्चापरिहार्यश्च' इति (गौध. ८।१२) तदपि 'स एष बहुश्रुतो भवति, लोकवेदवेदाङ्गवित्, वाकोवाक्येतिहासपुराणकुशलः, तदपेक्षस्तद्वृत्तिः, चाष्टचत्वारिंशत्संस्कारैः संस्कृतः, त्रिषु कर्मस्वभिरतः, षट्सु वा, समयाचारिकेष्वभिविनीतः' (गौध.८।४-११) इति प्रतिपादितबहुश्रुतविषयं न ब्राह्मणमात्रविषयम्। *मिता.

(३) उक्ताः सभ्यास्ते यदि रागादिवशात्स्मृतिशास्त्रविरुद्धं विवादेऽपि निर्णयं कुर्वन्ति तदा विवादाद् विवादविषयीभूताद्धनाद् द्विगुणं दण्डं प्रत्येकं दण्डनीयाः। अत्र आदिशब्देन सदाचारन्यायापेतस्य ग्रहणम्। रागादिग्रहणं चेह दण्डनीयत्वनिमित्तस्य स्मृत्यपेतादिकारित्वस्य न विशेषणं, वाक्यभेदप्रसङ्गात्। यथोभयत्वं हविरादेः। ततश्च प्रदर्शनार्थत्वे मोहादिहेतुकस्यापि स्मृतिविरुद्धकारित्वस्य दण्डविशेषनिमित्तता भवति। अत एव भृशदण्डनिमित्तेन लोभादिना तुल्यमज्ञानमाह नारदः—'रागादज्ञानतो वाऽपि लोभाद्वा योऽन्यथा वदेत्। सभ्योऽसभ्यः स विज्ञेयस्तं पापं विनयेद्भृशम्' इति॥ एतच्च दण्डविधानं धनविषयविवादे। वादान्तरे तु पारुष्यादिविषये दण्डान्तरं वेदितव्यम्। अत एवाऽह विष्णुः—'कूटसाक्षिणां सर्वस्वापहारः। उत्कोचजीविनां सभ्यानां च'। (विस्मृ. ५।१७५-१७६) अत्राप्युत्कोचग्रहणं प्रदर्शनार्थम्। अत एव वृद्धबृहस्पतिः—अन्यायवाचिनः सभ्यास्तथैवोत्कोचजीविनः। विश्वस्तवञ्चकश्चैव निर्वास्याः सर्व एव ते'॥ यत्तु—'लोभात्सहस्रं दण्ड्यः स्यान्मोहात्पूर्वं तु साहसम्'। इत्यादि लोभमोहयोरतुल्यदण्डनिमित्तत्ववचनं तत्साक्षिविषयं न सभ्यविषयम्। अत एव कात्यायनः सम्यग्ज्ञानरहितस्य सभ्यस्य द्विगुणं दण्डमाह—'कार्यस्य निर्णयं सम्यग्ज्ञात्वा सभ्यस्ततो वदेत्। अन्यथा नैव वक्तव्यं वक्ता द्विगुणदण्डभाक्'॥ तथा रागापरपर्यायेण स्नेहेन लोभेन च सभ्यदण्डं प्रत्यज्ञानस्य तुल्यं निमित्तत्वमाह—'स्नेहादज्ञानतो वाऽपि मोहाद्वा लोभतोऽपि वा। अत्र सभ्योऽन्यथावादी दण्ड्योऽसभ्यस्तु स स्मृतः॥ सभ्यदोषात्तु यन्नष्टं देयं सभ्येन तत्तदा। कार्ये तु कार्यिणामेवं निश्चितं न विचारयेत्'॥ अप.

(४) मिता. टीका—अज्ञानभ्रान्त्यादिव्यतिरिक्तै रागद्वेषादिभिरुपाधिभिर्धर्मशास्त्रविरुद्धमाचरन्तः सभ्याः तत्र व्यवहारपराजयनिमित्तदण्डद्विगुणदण्डेन प्रत्येकं दण्ड्या इत्याह अपि च रागादित्यादिना। सभ्या इति नियुक्ताभिधानम्। अत एवानियुक्तानां नियुक्तापेक्षया न्यूनदण्डः परिकल्पनीयः। नियुक्तानामभियुक्तत्वे सति धर्मशास्त्रविरुद्धाचरणादधिकापराधः। अनियुक्तानां तु तदभावादल्पापराध इति युक्तमेवैतत्। तथा हि नियुक्तेषु स्मृत्युल्लङ्घनं नृपाज्ञाभङ्गश्च। अनियुक्तेषु स्मृत्युल्लङ्घनमेवेति। *सुबो.

(५) अपिकारेण अज्ञानसमुच्चयः। तदाह कात्यायनः—'कार्यस्य निर्णयम्' इत्यादि। +वीमि.

कुलश्रेणिपूगनृपाधिकृतानां व्यवहारनिर्णयेऽधिकारतारतम्यम्

**नृपेणाधिकृताः पूगाः श्रेणयोऽथ कुलानि च।**
**पूर्वं पूर्वं गुरु ज्ञेयं व्यवहारविधौ नृणाम्॥**

(१) यदि तु दुष्टेऽपि लेख्यादौ तत्कर्ता न दोषानपाकुर्यात्, तदा कथं स्यात्। उक्तं तादृशे विषये राजावेदनं 'स्मृत्याचारव्यपेतेन मार्गेण' इत्यत्र। अत एव च—नृपेणेति। नृपो हि बलवान् व्यवहारं कारयितुं समर्थ इति व्यवहारविधौ स एव ज्यायान्। इतरेऽपि सामर्थ्यापेक्षया दुर्बला बलीयांसश्च भवन्ति। अतश्च कुलादिक्रमेणैव व्यवहाराणां राजगामिता द्रष्टव्या। ब्राह्मणादिसमूहाः पूगाः। स्पष्टमन्यत्। ×विश्व. २।३१

(२) नृपेण राज्ञा अधिकृताः व्यवहारदर्शने नियुक्ताः 'राज्ञा सभासदः कार्याः' इत्यादिनोक्ताः। पूगाः समूहाः।

---

*स्मृच., सवि. मितावत्।

* बाल. सुबोवत्।

+ वाक्यार्थो मितावत्। उध्दृतांशोऽपि अपवत्।

× 'नृपोऽर्थाधिकृताः' इति ग्रन्थे पाठः, ग्रन्थकारसंमतस्तु 'नृपोऽथाधिकृता' इत्येव स्यात्।

(१) यास्मृ.२।३०; विश्व.२।३१ पेण (पोऽर्था); मिता.; अप.; व्यनि. नृपेणाधिकृताः पूगाः (नृपोऽधिकृतपूगाश्च); नृप्र. ८; वीमि.; व्यप्र.२८; व्यउ.१९; विता. १७; व्यम.३; प्रका.९; समु.७.

भिन्नजातीनां भिन्नवृत्तीनां एकस्थाननिवासिनां यथा ग्रामनगरादयः। श्रेणयो नानाजातीनामेकजातीयकर्मोपजीविनां संघाताः। यथा हेडाबुकादीनां ताम्बूलिककुविन्दचर्मकारादीनां च। कुलानि ज्ञातिसंबन्धिबन्धूनां समूहाः। एतेषां नृपाधिकृतादीनां चतुर्णां पूर्वं पूर्वं यद्यत्पूर्वं पठितं तत्तद्गुरु बलवज्ज्ञेयं वेदितव्यम्। नृणां व्यवहर्तृणां व्यवहारविधौ व्यवहारदर्शनकार्ये एतदुक्तं भवति। नृपाधिकृतैर्निर्णीते व्यवहारे पराजितस्य यद्यप्यसंतोषः कुदृष्टिबुद्ध्या भवति तथापि न पूगादिषु पुनर्व्यवहारो भवति। एवं पूगनिर्णीतेऽपि न श्रेण्यादिगमनम्। तथा श्रेणिनिर्णीते कुलगमनं न भवति। कुलनिर्णीते तु श्रेण्यादिगमनं भवति। श्रेणिनिर्णीते पूगादिगमनम्। पूगनिर्णीते नृपाधिकृतगमनं भवतीति। नारदेन पुनर्नृपाधिकृतैर्निर्णीतेऽपि व्यवहारे नृपगमनं भवतीत्युक्तम्—'कुलानि श्रेणयश्चैव पूगाश्चाधिकृता नृपः। प्रतिष्ठा व्यवहाराणां गुर्वेषामुत्तरोत्तरम्' इति॥ तत्र च नृपगमने सोत्तरसभ्येन राज्ञा पूर्वैः सभ्यैः सपणे व्यवहारे निर्णीयमाने यद्यसौ कुदृष्टवादी पराजितस्तदासौ दण्ड्यः। अथासौ जयति तदाऽधिकृताः सभ्या दण्ड्याः। मिता.

(३) कुलानि कृषीवलाः। *अप.

(४) मिता.टीका—यथा हेडाबुकादीनामिति। देशाद्देशान्तरं गत्वा प्रस्थाप्य येऽश्वविक्रेतारो हेडाबुका इति, गुर्जरे प्रसिद्धोऽयं शब्दः। गणाश्चाधिकृता इति। गणाः पूगाः। सोत्तरसभ्येनेति। अधिकसभायुक्तेनेत्यर्थः। सुबो.

(५) कुलं सजातीयसमूहः। एतच्च पुनर्न्याये बलवत्पूगेन दृष्टे न श्रेण्या द्रष्टव्यमित्येतदर्थम्। दीक.

(६) अथशब्देन सर्वेषां राजनि सत्वपरत्वेन राज्ञः सर्वतो गुरुत्वं दर्शितम्। चशब्देन सभ्येभ्यः प्राड्विवाको गुरुरिति समुच्चीयते। *वीमि.

(७) ननु पूगादीनां व्यवहारद्रष्टृत्वमेव असंभवि। कुतस्त्यं बलाबलम्। तथा हि राजनियोगेन वा व्यवहारद्रष्टृत्वं तेषां स्वातन्त्र्येण वा। नाद्यः। सहायत्वेन प्रतिनिधित्वेन च प्राड्विवाकस्य, पुरोहितामात्यसभ्यानां च सहायत्वेनैव नियोगविधानात्। न द्वितीयः। प्रजापालनाधिकृतानामेव व्यवहारदर्शनाधिकारबोधनादन्येषां स्वातन्त्र्यासंभवात्।

अथ पूर्वोपन्यस्तैः 'वणिक्शिल्पिप्रभृतिषु' इत्यादिभिर्व्यासबृहस्पत्यादिवचनैः पूर्वोपपादितरीत्या सहायत्वेन नियोगावगमात् वणिगादिव्यवहारद्रष्टृत्वं पूगादीनां राजनियोगेनैवेति मतं, तन्न। तथा सति राजप्राड्विवाकभिन्नानां तन्नैरपेक्ष्येण द्रष्टृत्वाभावात् सर्वव्यवहारद्रष्टृत्वं 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायेन तयोरेवेति कुलादिदृष्टो व्यवहारः परावर्तेत इत्यनुपपन्नम्। तद्द्रष्टृत्वाभावात्। 'शूद्रं यत्नेन वर्जयेत्' इति निषेधात् पूगादीनां च प्रायः शूद्रतदधमप्रतिलोमरूपत्वेन प्रतिनिधितयापि केवलानां तद्द्रष्टृत्वाभावादिति।

अत्रोच्यते। मास्तु तेषां व्यवहारदर्शने कैवल्यम्। तथापि वणिगादिव्यवहारे तेषामभियोगाद्राजादीनामपि तत्र तत्प्रत्ययेन निर्णायकत्वात् तत्कृतप्राधान्यमादाय तत्कृतत्वव्यपदेशसंभवात् कुदृष्टबुद्ध्या परावृत्य पुनर्व्यवहारप्रवर्तनाय बलाबलं तेषामनेन वचनेनोच्यते। अन्यथाऽस्य वचनस्य निर्विषयता आपद्येत। वस्तुतस्तु 'शूद्रं यत्नेन वर्जयेत्' इत्यनेन प्रतिषिद्धप्रतिनिधिभावानामपि पूगादीनां पूगादिव्यवहारे प्रतिप्रसवः प्रतिनिधिभावस्य व्यासादिवचनैरभियोगाविशेषात् क्रियत इति प्राड्विवाकवत् कैवल्यमपि वक्तुं शक्यत इति न किञ्चिदनुपपन्नम्। बृहस्पतिस्त्वमुमेवार्थं स्फुटयति। *व्यप्र.२९–३०

(८) एतेषां व्यवहारदर्शनानधिकारेऽपि राजाज्ञयैव तदुपपत्तिः। अत एव नृपेणाधिकृत इत्यस्य तत्तद्व्यवहाराभिज्ञतया तत्तद्व्यवहारदर्शने प्राधान्येन आज्ञप्ता इत्यर्थः। एतेन तेषां शूद्रतया व्यवहारदर्शनानुपपत्तिशङ्का परास्ता। *व्यउ.१९

(९) पूगविपरीताश्च श्रेणयः। + व्यम.३

(१०) पूगाः एकग्रामनिवासिनो महाजनाः। ×विता.२

(११) मिता.टीका—मूले अथशब्दश्चार्थे। विशेषं स्वल्पमाह। नारदेनेति। पुनः तु। यद्यप्यत्र गणा इति पठितं, मूले च पूगा इति, अस्ति च तयोर्भेदः, तत्र

* शेषं मितागतम्।

* वाक्यार्थो मितावत्। + पदार्थो मितावत्।
× अवशिष्टपदार्थो मितावत्।

पूगस्वरूपमुक्तं सर्वेषां हीनवर्णानां संघातो गणः अत एव पूगश्रेणिगणादीनामिति प्राग् उक्तं, तथापि तत्स्थाने मुनिद्वयप्रामाण्यादुभयोर्विकल्पेन ग्रहणं, अत एव चतुर्णामिति व्याख्याकृदुक्तिसंगतिः। यद्वा गणाश्चेति चेन तदग्रे पूगानां समुच्चयः। मूले अथशब्दस्य चार्थस्य पूगा इत्यत्रान्वयेन तदग्रे तेन तेषां समुच्चय इति एकवाक्यतैव, नारदेन पुनरित्यादि वदता व्याख्याकृता प्रागुक्तचतुष्टयं नाभिमतमिति सूचितमेवेति बोध्यम्। सोत्तरेति। सभायां साधुः सभ्यः उत्तरश्चासौ सभ्यश्च तत्सहितेनेत्यर्थः। पूर्वसभ्यतो भिन्नोत्कृष्टसभ्ययुक्तेनेति यावत्। बाल.

## नारदः

कुलश्रेणिगणाधिकृतनृपाणां व्यवहारनिर्णयेऽधिकारतारतम्यम्

**कुलानि श्रेणयश्चैव गणाश्चाधिकृतो नृपः।**
**प्रतिष्ठा व्यवहाराणां गुर्वेभ्यस्तूत्तरोत्तरम्+॥**

(१) यदा व्यवहारप्रतिष्ठा अर्थिप्रत्यर्थिनोः परस्परं सुचिरमपि विवदतोर्न निर्णयो भवति, तदा कुलादयस्त्रयः पदार्था व्यवहारप्रतिष्ठाहेतवः। उत्तरोत्तरगरीयस्त्वेनैते समुद्दिष्टाः। तत्र कुलानि कतिचित्पुरुषगृहीतानि। श्रेणयः प्रधानवणिक्प्रतिबद्धाः प्रकृतयः। गणा ब्राह्मणादिसमूहाः। अधिकृतो धर्माधिकरणे नियुक्तः प्राड्विवाकः। नृपः स्वयमेव प्रजापालः। एतेषु स्थानेषु व्यवहाराणां निष्पत्तिः प्रतिष्ठामुखेनैव भवतीति। गुर्वेभ्यस्तूत्तरोत्तरमिति। एभ्यः स्थानेभ्य उत्तरोत्तरं व्यवहारनिष्पत्तिस्थानं गुरु प्रधानमित्यर्थः। अभा.६

(२) तथा हि पठितं कुलानीति। तत्र कुलानि बन्धुजनसमूहः। तैर्या व्यवस्था कृता ततो न विचलितव्यम्। अथ तत्र तस्याः विचलिताः स्युः तदैतेऽधिकतरं संबन्धिन इति वदद्भिस्तु ततः श्रेणिषु निवेदितव्यम्। श्रेणयः समानव्यवहारजीविनो वणिक्प्रभृतयः। तेषां बन्धुभ्योऽधिकगुरुत्वम्। बान्धवा [3]हि ज्ञातिधर्मभयाद्विचलितं न नियच्छन्ति। श्रेणयस्तु राजगमनेन, श्रेणिधर्मो राजपुरुषप्रवेशात् परिभवनीयत्वेन नश्यतीति अविचलनार्थं प्रतिभूग्रहणपूर्वकं विचारयन्ति य एतस्माद्विचलन्ति परिषदि दण्डो दातव्यश्चलितुं वाऽपि त्वया न देयमिति। गणा गणशश्चारिणो गृहप्रासादादिकरा मठब्राह्मणादयश्च। ते स्वगणिनां व्यवहारं च पश्येयुः। तत्राविचलार्था उपसदः कर्तव्याः। पूर्वे समानकर्मजीविनं एकाकिनोऽपि, इमे तु संभूयकारिण इति विशेषः। श्रेणिभ्यः संभूयकारितया विवादिनो भूमिज्ञत्वात्। अन्ये तु कुलानीति मध्यस्थपुरुषानाहुः। ते हि कार्याभ्यन्तरा अश्रेणिकृता एव निर्णेतारः। अधिकृतः त्रैविद्यो विद्वान् ब्राह्मणः तस्य हि धर्मसंकटेषु प्रवक्तृत्वं विहितम्। तस्य पूर्वेभ्यो गुरुत्वं वैदुष्यात्। नृपस्यापि गुरुत्वमतिशयशक्तित्वादतः स्वयं विदुषा नृपेण निर्णीते नास्त्येतत्। 'मन्येताजितोऽस्मीति यो न्यायेनापि पराजितः। द्विगुणं दण्डमास्थाय तत्कार्यं पुनरुद्धरेत्' इति॥ (यास्मृ. २।३०६) अन्येषु करणेष्वेतद्भवति। तत्र ह्यस्ति वचनावसरो नाधिकृतैः सम्यक् निर्णीतम्। राज्ञा तु विवेचिते किं वक्ष्यतीति। अर्थान्तरं, नृपैरधिकृतो राजस्थानीयब्राह्मणः। मेधा. ८।२

(३) दुर्बलेन व्यवहारे दृष्टे भग्नस्य पुनर्न्यायं प्रार्थयमानस्य न्यायो गुरुणा द्रष्टव्यः। न तु गुरुणा दृष्टे दुर्बलेन, राज्ञा दृष्टस्तु नान्यैः। किन्तु स्वयमेव विचारयेत्। भ्रमादिनिरासार्थमन्यो वा नृपतिस्तद्देशीयः। तत्तु प्रथमनिर्णयस्थानोक्तभाषोत्तरपरामर्शादेव भाषोत्तरं ग्राह्यम्। असम्यग्दर्शननिमित्तत्वात् स्थानान्तरग्रहणस्य। अन्यथा एकस्मिन्स्थाने मिथ्योत्तरेण भग्नस्य पुनः प्रत्य-

+अत्रत्या मिताक्षरा बालम्भट्टी च 'नृपेणाधिकृता' इति (यास्मृ. २।३०) याज्ञवल्क्यश्लोके द्रष्टव्या।

(१) **नास.**१।७ तो नृपः (ता नृपैः) णां (स्य) भ्यस्तू (षामु); **नास्मृ.**१।७; **अभा.**६; **मेधा.** (क) ८।२ गणा (गुणै); **मिता.**२।३० गणा (पूगा) गुर्वेभ्यस्तू (पूर्वेषामु) रम् (राम्); **व्यमा.**२८० णाश्चा (णस्त्व) मनुकात्यायनौ; **अप.**२।३० भ्यस्तू (षामु); **स्मृच.**१९ गुर्वेभ्यस्तू (सर्वेषामु); **पमा.**४२ स्मृचवत्; **व्यनि.** अपवत्; **दवि.**१६ श्चाधि (स्त्वधि); **नृप्र.** ८ कृतो (कृता) गुर्वेभ्यस्तू (पूर्वेषामु); **सवि.**६८ राणां गुर्वेभ्यस्तूत्तरोत्तरम् (रस्य पूर्वेभ्यश्चोत्तरोत्तरः); **व्यसौ.**९ श्चाधिकृतो नृपः (स्त्वाधिकृतास्तथा) स्तू (श्चो) रम् (रः); **व्यप्र.**२९ गणा (गण) कृतो (कृता) गुर्वेभ्यस्तू (पूर्वेषामु); **व्यउ.**१९ कृतो (कृता) गुर्वेभ्यस्तू (पुर्वेषामु); **विता.**१८ तो नृपः (ता नृप) भ्यस्तू (षामु); **प्रका.**९अपवत्; **समु.**७ अपवत्.

१ ताश्च. २ (०). ३ दि. ४ न. ५ (०).

वस्कन्दनमुत्तरं स्यात् । तदा च 'क्रियां बलवतीं मुक्त्वा दुर्बलां योऽवलम्बते । स जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात् क्रियाम्' ॥ इति कात्यायनवचनेन विरुध्येत । व्यमा. २८१

(४) कुलानि उभाभ्यामानीता नीतिज्ञाः । श्रेणयो वणिगादयः । अधिकृताश्च नृपैः, स्थानेषु राजभिः स्वामित्वेन नियुक्ताः । नृपा इति पाठे राजानश्च । प्रतितिष्ठन्त्यस्यां व्यवहारा इति प्रतिष्ठा । प्रतिष्ठाशब्दः प्रत्येकमभिसंबध्यते । एषामन्यतमेन वर्गेण शास्त्रोक्तेन विधिना स्वसमयेन वा निर्णीतो व्यवहारः सिध्यति । उत्तरोत्तरं पूर्वस्मात् पूर्वस्मात् गुरुतरं भवति प्रमाणतरं भवतीत्यर्थः । एवं ब्रुवतैतदुक्तं भवति—अर्वाक् पुनर्दर्शनप्रसङ्गोऽस्ति, नृपेण तु दृष्टे तत उत्तरस्य गुरुतरस्याभावात् पुनः प्रसङ्गो नास्तीति । नाभा. १।७

(५) अत्र नृपग्रहणं प्राड्विवाकोपलक्षणम् । नृपाधिकृतापेक्षया तस्याधिकत्वात् । तथा च नृपाधिकृतकृतः प्राड्विवाकसविधे, तत्कृतश्च नृपसविधे परावर्तेत इत्यर्थः । *व्यप्र. २९

प्राड्विवाकलक्षणं प्राड्विवाकपदनिरुक्तिश्च

**अष्टादशपदाभिज्ञः षड्भेदाष्टसहस्रवित् ।**
**आन्वीक्षिक्यादिकुशलः श्रुतिस्मृतिपरायणः ॥**
**विवादसंश्रितं धर्मं पृच्छति प्रकृतं मतम् ।**
**विवेचयति यस्तस्मात्प्राड्विवाकस्तु संस्मृतः ॥**

नारदेनापि ब्राह्मणे बहुश्रुतत्वं प्रपञ्चयता विधानान्तरेणेयं संज्ञा दर्शिता—अष्टादशेत्यादिना । एवमुभाभ्यामपि यौगिकाख्योक्त्या एव अर्थादस्य कार्यमप्युक्तम् । स्मृच. १४

* शेषं 'नृपेणाधिकृता' इति (यास्मृ. २।३०) श्लोकोद्धृतमितावत् ।

(१) **मेधा**.८।९ (अष्टादशपदाभिज्ञं प्राड्विवाकेति संज्ञितम् । आन्वीक्षिक्यां च कुशलं श्रुतिस्मृतिपरायणम् ॥); **स्मृच**.१४ षड्भे (तद्वे); **पमा**.२८; **प्रका**.६ स्मृचवत्; **समु**.५ स्मृचवत्.

(२) **स्मृच**.१४ तु सं (ततः); **पमा**.२८; **प्रका**.६ वाद (वादं) संस्मृ (स स्मृ); **समु**.५ संस्मृ (स स्मृ).

राज्ञा कीदृशाः सभ्या नियोज्याः

**राजा तु धार्मिकान्सभ्यान् नियुञ्ज्यात्सुपरीक्षितान् ।**
**व्यवहारधुरं वोढुं ये शक्ताः सद्गवा इव ॥**

(१) अत्र योऽयं व्यवहारभारः स दुर्विज्ञेयः । विषमपदधर्ममार्गे अजाताऽकृतस्कन्धैः बालवृषभकैरिव बालबुद्धिभिः निर्वाहयितुं न पार्यते । अतो व्यवहारधुरं वोढुं शक्ताः सद्गवा इव शास्त्राचारलोकाचारदृष्टपरम्पराः प्रौढमतयो ये, तान् धार्मिकान् राजा नियुञ्ज्यात्सुपरीक्षितान् कृत्वेति । अभा.२९

(२) सभ्यान् कुर्वीत व्यवहारदर्शनार्थं सभायां स्थितिं यथा न त्यजन्ति तथा अर्थदानमानप्रभृतिनोपायेन नियुञ्जीतेत्यर्थः । स्मृच.१५

(३) व्यवहारोऽत्र विचारः । रार.२२

(४) सुपरीक्षितान् सम्यगुपधाभिः शुद्धान् । नाभा.१।६८

(५) इति नारदीयसामान्योक्तिरपि उदाहृतवचनोक्तविशेषपरा । अत्र च नियुञ्ज्यादित्युक्तेः सभासदां नियोज्यत्वम् ।...तेनात्र पुरोहितप्राड्विवाकनियुक्तानियुक्तब्राह्मणपूगश्रेणिगणादीनां वणिजां धनिकानां च सभ्यत्वमिति ।...एतेषां सभ्यानां तु दण्डे नाधिकारः किन्तु निर्णयमात्रे । ×व्यउ.१७-१८

**धर्मशास्त्रार्थकुशलाः कुलीनाः सत्यवादिनः ।**
**समाः शत्रौ च मित्रे च नृपतेः स्युः सभासदः*॥**

(१) अत्र सभासल्लक्षणमभिहितम् । इह धर्मशास्त्रेषु

× नियुक्ताऽनियुक्तविषयः 'श्रुताध्ययनेति' (यास्मृ. २।२) याज्ञवल्क्यश्लोकीय मितावत् । तथा व्यवहारप्रकाशे विवादताण्डवे च नियुक्तानियुक्तविषयो मितावत् ।

* व्यवहारोद्योते अनियुक्तपर एष श्लोकः ।

(१) **नासं**.१।६८; **नास्मृ**.३।४; **शुनी**.४।५२५-५२६ द्गस (पुङ्ग); **अभा**.२९; **व्यक**.११; **स्मृच**.१५ नियुञ्ज्यात् (कुर्वीत); **रार**.२२ द्गवा (दुषा) ?; **व्यनि**.; **स्मृचि**.३ सद्गवा (पुङ्गवा); **व्यप्र**.२७ धुरं (धुरां) सद्गवा (पुंङ्गवा); 'पुंगवा इव' इति स्मृतिचन्द्रिकायां पाठः; **व्यउ**.१७ धुरं (धुरां); **विता**.८; **प्रका**.७ व्यउवत्; **समु**.६ स्मृचवत्.

(२) **नासं**.१।६९; **नास्मृ**.३।५; **अभा**.२९; **व्यमा**.२८०; **व्यक**.११; **रार**.२२; **व्यनि**.; **स्मृचि**.३; **दवि**.

स्मृतितन्त्रसांकेतिकशब्दगूढार्थदुःखबोधानि मुनिवचनानि बाहुल्येन भवन्ति । तेषु सूक्तप्रतिषिद्धपुनःसंभावितसापेक्षनिरपेक्षवचनार्थेषु अप्राप्तगुरुपारम्पर्यार्थविचारक्षोदकौशलाः मन्दमतयः न सम्यग्न्यायदण्डप्रमाणनिर्णयविदः सभासदः सभायोग्या न भवन्तीत्येतदर्थं सविशेषमिदमभिहितं धर्मशास्त्रार्थकुशला इति । कुलीनाः कुलमाहात्म्यात्पक्षपातविकृतिं न भजन्ते। सत्यवादिनः स्वभावादेवाऽनृतादुद्विजन्ते । समाः शत्रौ च मित्रे च, तस्मिन्काले परित्यक्तद्वेषस्नेहभावा एवंविधा नृपतेः सभासदः स्युरिति। अभा.२९

(२) मन्वादिधर्मशास्त्राणामर्थे कुशला इति प्राञ्चः। नव्यास्तु अत्र धर्मशास्त्रं मुनिप्रणीतधर्मप्रयोजकशास्त्रमात्रम् । तेन मीमांसादेरपि संग्रह इति । मन्मते उभयोरविरोधः । प्रथमे आदिपदोपादानात् । परन्तु धर्मशास्त्रं मन्वादिप्रणीतं, अर्थशास्त्रं राजनीत्यादि । 'यत्र विप्रतिपत्तिः स्याद्धर्मशास्त्रार्थशास्त्रयोः' इति नारदवचनादर्थशास्त्रस्यापि निर्णायकत्वावगमात् इति लक्ष्मीधरेणात्रैव व्याख्यातमिति युक्तम् । रार.२२

(३) धर्मशास्त्रार्थकुशलाः विवेकज्ञा इत्यर्थः ।कुलीनाः सर्व एव कुलजाः।तत्र कुलग्रहणात् प्रख्यातकुलजाता इति गम्यते । सभासदः नियुक्ताः, अन्येषामपि सभायामासनाविरोधात् । नाभा.१।६९

व्यवहारनिर्णये कति सभ्या नियोज्याः

**व्यवहारेषु सर्वेषु नियोक्तव्या बहुश्रुताः ।**
**गुणवत्यपि नैकस्मिन् विश्वसेद्धि विचक्षणः ॥**
**दश वा वेदशास्त्रज्ञास्त्रयो वा वेदपारगाः ।**
**यद्ब्रूयुः कार्यमुत्पन्नं स धर्मो धर्मसाधनम् ॥**
**धर्माणां संशयच्छेत्ता राजा च सुधराधिपः ।**
**तस्मान्न वाच्यमेकेन वचनं तु ससंशयम् ॥**
**[२]नानियुक्तेन वक्तव्यं व्यवहारे कथञ्चन ।**
**नियुक्तेन तु वक्तव्यमपक्षपतितं वचः ॥**

(१) इदानीं व्यवहारविधिरुच्यते । अत्र राजसभाव्यवहारकाले लोकाचारजन्यपक्षपक्षाश्रयस्थिता बहवो लोका वादिप्रतिवादिभ्यां सह धर्माधिकरणमागच्छन्ति। तत्र केचित् ज्ञानिनः, केचिदज्ञानिनः, केचित् ज्ञानाऽभिमानिनः, यदि साकोटनं निषिद्धा न भवन्ति, ततस्ते सभ्यानेवाऽनेकप्रमादवाक्यैर्विक्षोभ्य द्रावयन्ति । परस्परं च वादकलहकारिणो भवन्ति । ततोऽर्थनिगदमुच्यते । ये सभ्याः सभायां व्यवहारदर्शननियुक्ताः, तानेव केवलान् मुक्त्वा यः कश्चिदनियुक्तस्तटस्थितः कोऽपि किमपि वदति, स राज्ञा विनयं ग्राह्यः, 'नानियुक्तेन वक्तव्यम्' इत्यागमबलात् इति श्लोकपूर्वार्धेनाऽनियुक्तवक्तव्याकोटनाऽभिहिता । उत्तरार्धेन नियुक्तानामपि सैव दर्शिता यथा—'नियुक्तेनैव वक्तव्यमपक्षपतितं वचः' । नियुक्तेन तु सभ्येन धर्मासनस्थेन केवलं धर्ममूर्तिमेवावस्थापयता किमपि धर्मशास्त्रोक्तव्यवहारनिर्णयवचनं तदेव वक्तव्यम् । न पुनर्वादिनोरेकतमस्यापि पक्षपाताश्रितं वक्तव्यमिति । अभा.२८

(२) तद्यदृच्छया कार्यान्तरवशाद्वा आगताऽनियुक्तविषयम् । अन्यथा पूर्वोक्तवचनविरोधात् । ब्राह्मणानां सहायत्वनिर्वाहाय कार्यान्तराक्षेपापत्तेश्च । स्मृच.१४

(३) अपक्षपतितं वचः सत्यमित्यर्थः । अन्यथावचनेऽवचने च दोषः प्रत्यवायः । नाभा.१।६६

(४) तत्तु अनङ्गीकृतसभाप्रवेशो यदृच्छया कार्यान्तरवशाद्वा य आगतस्तादृशाऽनियुक्तविषयं बोध्यम् । अन्यथा मन्वादिवचनविरोधात् । व्यप्र.२८

नियुक्तेनानियुक्तेनापि वा सभ्येन शास्त्रोक्तमेव वक्तव्यम्

**[१]अनियुक्तो नियुक्तो वा शास्त्रज्ञो वक्तुमर्हति ।**
**दैवीं स वाचं वदति यः शास्त्रमनुजीवति ॥**

---

१४ उत्त.; **नृप्र.**४ धर्म...ला (श्रुताध्ययनसंपन्नाः); **व्यप्र.**२७ स्त्रार्थे ( स्त्रेषु ); **व्यउ.**१७ व्यप्रवत्; **प्रका.**७; **समु.**६.

(१) vulg.व्यवहारेष्वित्यादिश्लोकत्रयं 'अनियुक्तो नियुक्तो वा' (नास्मृ.३।२) इति श्लोकानन्तरं समुपलभ्यते ।

(२)**मास.**१।६६; **नास्मृ.**३।१; **अभा.**२८; **व्यमा.**२८२

तु (च) पक्ष (रक्षा); **अप.**२।४; **व्यक.**१४; **स्मृच.**१४; **व्यचि.**५; **व्यनि.** कथं (षु किं); **स्मृचि.**४; **नृप्र.**४ प्रथमपादः; **व्यप्र.**२८ व्यनिवत्; **व्यउ.**१७ व्यनिवत्; **प्रका.**७; **समु.**६.

(१) **नास्मृ.**३।२; **अभा.**२८ स वाचं (वाचं स) मनु (मुप); **मेधा.**८।१३ (नियुक्तो वाऽनियुक्तो वा धर्मज्ञो वक्तुमर्हति) पू.; **मिता.**२।२ मेधावत्, पू.; **अप.**२।४ अनियुक्तो नियुक्तो (नियुक्तो वाऽनियुक्तो) शेषं अभावत्; **व्यक.**१४ अपवत्; **व्यचि.**

(१) अस्यायमर्थः। यदि कथमपि सर्वेऽपि सभासदो बुद्धिक्षोभाच्छास्त्रार्थं विस्मृत्य, अथवा लोभादिना कारणेन शास्त्रोक्तं न्यायमार्गमुत्सृज्य व्यवहारस्य अन्याययुक्तं निर्णयं दातुं प्रवृत्ता भवन्ति। तत्र च प्रसङ्गागतः कश्चित्स्मृतितन्त्रव्यवहारमार्गज्ञो ब्राह्मणः प्रत्यक्षस्तिष्ठति, तेन शास्त्रोक्तवचनपाठपूर्वकं प्रतिषेधनीयाः सभासदः। एवं प्रबोधयतो वदतस्तस्य छलं नास्ति। अनियुक्तोऽपि शास्त्रज्ञो वक्तुमर्हति, यतः शास्त्रं नाम देवभाषा। अतः दैवीं वाचमिति। अभा. २८

(२) अनेन त्वनधिकृतस्यापि यदृच्छया सन्निहितस्य मिथ्यापश्यत्सु सभ्येषु विदुषस्तूष्णींभावं नेच्छन्ति, तथा च 'नियुक्तो वाऽनियुक्तो वा धर्मज्ञो वक्तुमर्हति' अथ राजपुरुषपर्यनुयोग आशङ्क्यते किमित्यनधिकृतो ब्रवीति ततश्च तत्प्रदेशादपसर्तव्यम्। मेधा. ८।१३

(३) दैवीं शास्त्रीयाम्। व्यचि. ५

(४) दैवीं देवतानुमताम्। सेतु. ९५

अयुक्तोक्तौ द्वेषदोषभाक् भवति सभ्यः

**युक्तरूपं ब्रुवन्सभ्यो नाप्नुयाद्द्वेषकिल्बिषे।**
**ब्रुवाणस्त्वन्यथा सद्यस्तद्देवोभयमाप्नुयात्॥**

शास्त्राचाराऽविरुद्धं यत् तद्युक्तरूपमुच्यते एवंविधं वाक्यं ब्रुवन्सभ्यो नाप्नुयाद् द्वेषकिल्बिषे ऐहिकामुष्मिकबाधे इत्यर्थः। युक्तवादी सभ्य इहलोकबाधाकरं लोकद्वेषं, परलोकबाधाकरं च किल्बिषं नाप्नुयात्। अन्यथा तु ब्रुवाणः सद्यस्तक्षणात्तद्देवोभयमाप्नुयात्। अभा. २८

सभ्यैः सहैव व्यवहारो निर्णेयो राज्ञा

**तत्प्रतिष्ठः स्मृतो धर्मो धर्ममूलश्च पार्थिवः।**
**सह सद्भिरतो राजा व्यवहारान् विशोधयेत्॥**

(१) तत्प्रतिष्ठ इति। एवंलक्षणोक्तसभ्यप्रतिष्ठितो धर्मो भवति। पार्थिवश्च धर्ममूलः। अतः कारणात्सह सद्भिः सभासद्भिर्व्यवहारविशोधनं कुर्यात्। यथा राज्ञः प्रत्यक्षस्य प्रमाणधर्ममार्गस्थिता व्यवहारा विशुध्यन्ति, तथा न परोक्षस्य। अतोऽत्यादरेणेदमुक्तं, सह सद्भिरिति। अभा. २९

(२) तत्प्रतिष्ठः साधुव्यवस्थितः। व्यक. ४

(३) विशिष्टनियोजने कारणमाह— तत्प्रतिष्ठः। तेषु सभ्येषु प्रतिष्ठित इति तत्प्रतिष्ठः। स्मृतः शास्त्रेषु धर्मस्तद्वशात् प्रवर्तते। धर्ममूलाश्च धर्मो मूलं निमित्तं येषां ते धर्ममूलाः। ते पूर्वकृता इह कृताः इहानुरागनिमित्ताः प्रेत्य च सद्गतेः। अतो धर्ममूला राजानः। तस्मात् सह सद्भिः व्यवहारान् विशोधयेत् तैर्विचार्य निर्दोषान् पश्येदित्यर्थः। नाभा. १।७०

व्यवहारशुद्धौ सभ्यशुद्धिः

**शुद्धेषु व्यवहारेषु शुद्धिं यान्ति सभासदः।**
**शुद्धिश्च तेषां धर्माद्धि धर्ममेव वदेत्ततः॥**

(१) यदा राजा व्यवहारान् विशोधयेत्तदा शुद्धेषु व्यवहारेषु सभासदः शुद्धिं प्राप्नुवन्ति। दुराराधोऽपि लोकः एवं ब्रवीति— यत्र राज्ञा प्रत्यक्षेणाऽयं व्यवहारो दृष्टः, तत्रावश्यं सभासदां कश्चिद्दोषो नास्तीति इत्येवं शुद्धिं यान्ति सभासद इति। अभा. २९

(२) तेषां व्यवहाराणाम्। स्मृच. २२

(३) सभ्यानामुपदेशाच्छुद्धेषु व्यवहारेषु न्यायेषु निर्णीतेषु शुद्धिं प्राप्नुवन्ति सभासदः। शुद्धिश्चामायया यस्मात् तेषां व्यवहाराणां धर्मात्, तस्माद् धर्ममेव वदेत् सभ्य इति। व्यवहारो धर्माच्छुध्यति, तच्छुद्धौ ते शुध्यन्ति। तस्मादात्मार्थं तैर्धर्मोऽवश्यं वक्तव्य इति संक्षेपः। नाभा. १।७१

---

५ अभावत्; **व्यनि.** अपवत्; **स्मृचि.**४ मेधावत्; **दवि.** ३४० अभावत्, पू.; **नृप्र.**४ अपवत्; **व्यत.** १९९ अभावत्; **व्यसौ.** ११ अपवत्, पू.; **व्यम.**२ मेधावत्, पू.; **विता.**६ मेधावत्, पू.; **राकौ.**३८३ मेधावत्, पू.; **सेतु.**९५ अभावत्; **विव्य.**२ अपवत्.

(१) **नासं.**१।६७ सद्य (सभ्य); **नास्मृ.** ३।३ ब्रुवन् (वदन्); **अभा.**२८; **व्यक.**१५ नासवत्; **दवि.**१८ षे (षौ) ब्रुवा (अनृ).

vulg. एतत्श्लोकानन्तरं 'वृषो हि भगवान् धर्मो' (मस्मृ. ८।१६–१७) इत्यादि श्लोकद्वयं पठितम्।

(२) **नासं.**१।७० मूल (मूला) वः (वाः); **नास्मृ.**३।६; **अभा.** २९; **व्यक.**४ तत् (सत्) लश्च पार्थिवः (लो नराधिपः); **नृप्र.** २ (सत्ये तिष्ठन् स्थितो धर्मो धर्ममूलो नराधिपः); **बाल.**२।३ व्यकवत्.

(१) **नासं.**१।७१ तेषां धर्माद्धि (धर्मात्तेषां हि) त्ततः (दतः); **नास्मृ.**३।७; **अभा.**२९; **व्यमा.**२८१; **व्यक.**१४; **स्मृच.** २२ तेषां धर्माद्धि (धर्मात्तेषां हि); **रार.**२४; **नृप्र.**४; **व्यसौ.** १०; **प्रका.**१२ स्मृचवत्; **समु.**८ स्मृचवत्.

**[1]रौति धर्मः सभामध्ये भिद्यमानोऽनृतेषुभिः ।**
**अधर्ममग्रतः कृत्वा वध्योऽप्येष दुरात्मभिः ॥**
**[2]यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च ।**
**हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः ॥**

(१) अत्र धर्मन्यायाचारस्य मूलं सभासद एव, प्रधानेऽप्रधाने च गुणदोषाः सज्यन्ते । तेन तान्प्रति पुनरिदमुक्तम् । यत्र धर्मोऽधर्मेण सत्यमनृतेन च, प्रेक्षमाणानां सर्वेषामेव हन्यते, तदा हतास्तत्र सभासद एव ये व्यवहारनियुक्तवादिनः । ये पुनरनियुक्तवादिनो निषिद्धवक्तव्यास्तेषां धर्मे सत्यघातकमपि दूरवर्तीति । अभा. २९

(२) हताः उभयोर्लोकयोस्तत्र सभासदः । वधश्च तेषामधर्मसंबन्धो धर्मनाशश्च । नाभा. १।७२

**[3]विद्धो धर्मो ह्यधर्मेण सभां यत्रोपतिष्ठते ।**
**न चास्य शल्यं कृन्तन्ति विद्धास्तत्र सभासदः ॥**

तत्र यथा लोकः शस्त्राऽभिघातपीडितो वैद्यपार्श्वमागच्छति । तत्र च ते सभासदस्तस्य तदवस्थधर्मस्य, अधर्मस्योद्धरणव्यापारनियुक्ताधिकारिणोऽपि यदा तत्पापशल्यं न कृन्तन्ति नापनयन्ति, तदा संक्रमणतन्त्रप्रयोगसंक्रामितवृश्चिकविषेणेव उपेक्षितपापशल्येन त एव सभासदो विद्धा भवन्ति । अतः कारणादित्युक्तम् । अभा. ३०

**[4]सभायां न प्रवेष्टव्यं वक्तव्यं वा समञ्जसम् ।**
**अब्रुवन्विब्रुवन्वापि नरो भवति किल्बिषी ॥**

(१) अत्र सभ्यैः सभायामेककालमेव न प्रवेष्टव्यम्, न पुनरधर्मन्याययुक्तमित्यर्थः । तथा तस्यां प्रविष्टः सभ्योऽब्रुवन् निर्णयप्राप्तावसरश्च विब्रुवन् धर्मन्यायविपरीतम् किल्बिषी भवति महापातकीत्यर्थः । अभा. ३०

(२) वाशब्दो वक्ष्यमाणेन सह विकल्पार्थः । श्रद्धेयवाक्येनाधिकारो वा न प्रतिपत्तव्यः । यदि प्रविशेन्नियोगं वा प्रतिपद्येत, वक्तव्यं वा समञ्जसम् अधिकृतेन सह संमन्त्र्य । तस्मान्निर्गन्तव्यं भूतं वा द्रष्टव्यमिति । नाभा. १।७३

(१) vulg. **नास्मृ**.३।७ एतस्यानन्तरं अयं श्लोको दृश्यते ।
(२) **नासं**.१।७२; **नास्मृ**.३।८; **अभा**.२९.
(३) **नास्मृ**.३।९; **अभा**.२९-३० समां (सभा). vulg. एतत् श्लोकानन्तरं 'धर्म एव हतो हन्ति' (मस्मृ.८।१५) इत्यादिश्लोको दृश्यते । (४) **नासं**. १।७३ यां (वा) व्यं (व्या); **नास्मृ**. ३।१०; **अभा**.३०; **दवि**.१७ सभायां (सभां वा).

**ये[1] तु सभ्याः सभां प्राप्य तूष्णीं ध्यायन्त आसते ।**
**यथाप्राप्तं न ब्रुवते सर्वे तेऽनृतवादिनः ॥**

(१) ये सभ्या अधर्मविच्छेदस्थानभूतां सभां प्राप्य, वादिप्रतिवादिनोः संदेहविच्छेदार्थिनोरपि अन्यकार्यव्यासक्ता इव किञ्चिदन्यदेव कार्यान्तरं ध्यायन्त इव तूष्णीं तथा आसते तिष्ठन्ति, एकस्य जयं द्वितीयस्य पराजयमवसरप्राप्तमपि न ब्रुवते, ततस्ते सर्वेऽपि अनृतवादिसमाना राज्ञा द्रष्टव्याः । अनृतवादिविनययोग्या इत्यर्थः । अभा.३०

(२) प्राप्तं युक्तमित्यर्थः । स्मृच.२३

अधर्म्यनिर्णये दोषभागिनः । धर्म्यनिर्णये फलम्

**[2]पादोऽधर्मस्य कर्तारं पादः साक्षिणमृच्छति ।**
**पादः सभासदः सर्वान्पादो राजानमृच्छति ॥**
**[3]राजा भवत्यनेनास्तु मुच्यन्ते च सभासदः ।**
**एनो गच्छति कर्तारं निन्दार्हो यत्र निन्द्यते ॥**

(१) एतत् श्लोकद्वयमपि संततार्थनिगमप्रतिबद्धत्वादेकत्रैवोक्तम् । यदत्र यौ वादिप्रतिवादिनौ व्यवहारमत्सरारूढौ धर्माधिकरणमुपस्थितौ, न तौ द्वावपि सत्यौ न चाऽपि द्वावप्यसत्यौ । तयोरवश्यमेकेन सत्येन भवितव्यम् । अपरेणाऽसत्येन । तत्र यदाऽसत्यस्यैव सभासदो जयं प्रयच्छन्ति पराजयं तु सत्यस्यैव, तदा तस्य कुदृष्टव्यवहारस्य यत्पापमेनःशब्देनोक्तम् । ततश्चतुर्भाग-

(१) **नास्मृ**. ३।११; **अभा**. ३०; **अप**. २१४ न ब्रुवते (च न ब्रूयुः) व्यासः; **व्यक**.१५ ब्रुवते (चेद् ब्रूयुः);**स्मृच**.२३ प्राप्य (गत्वा) ब्रुवते (चेद्ब्रुवुः); **रार**.२५ ब्रुवते (च ब्रूयुः); **व्यनि**. ये तु (यत्र) शेषं अपवत्; **स्मृचि**.४ व्यकवत्, कात्यायनः; **नृप्र**.४; **व्यसौ**.१० व्यकवत्; **प्रका**.१३ स्मृचवत्; **समु**.९ ब्रुवते (चेद्ब्रुवुः).

(२) **नासं**.१।७४; **नास्मृ**.३।१२; **अभा**.३०; **अप**.२।१ धर्मस्य (गच्छति); **व्यक**.१५ मनुनारदहारीतबौधायनाश्च; **दवि**.१७ मनुनारदहारीतबौधायनाः; **नृप्र**.४; **व्यत**.२०० मनुनारदबौधायनहारीताः; **सेतु**.९६ मनुनारदहारीतबौधायनाः.

(३) **नासं**.१।७५; **नास्मृ**.३।१३; **अभा**.३०; **नृप्र**.४; **व्यत**.२०० मनुनारदबौधायनहारीताः; **सेतु**.९६ मनुनारदहारीतबौधायनाः.

विभक्तं भवति । तस्य पापस्य पादो गच्छति कर्तारं, पादः साक्षिणः, पादः सभासदः सर्वान्, पादो राजानमृच्छति राजानं गच्छतीत्यर्थः । यदा पुनर्निन्दाऽर्ह एव निन्द्यते–असत्यस्य पराजयः क्रियत इत्यर्थः । तदा राजा भवत्यनेनाः अपापः । सभासदोऽपि तस्मात्पापाद्विमुच्यन्ते । तत्सर्वमेवैनः कर्तारमेवैकं प्रतिपद्यते । अन्यायकर्तारमित्यर्थः । अभा.३०

(२) कर्तारं वादिनं, राजपदं विवेचकपरं, अनेनाः निष्पापः । व्यत.२००

अयथार्थवादिसभ्यनिन्दा

**[१]अन्धो मत्स्यानिवाश्नाति निरपेक्षः सकण्टकान्।**
**परोक्षमर्थवैकल्याद्भाषते यः सभां गतः ॥**

(१) अत्र व्यवहारशास्त्राध्ययनस्याऽनध्ययनस्य माहात्म्यमुपवर्णितं किल । यस्य चक्षुरिन्द्रियं भवति निर्मलं च, स वक्त्रजिव्हाताल्वभेदिनो मत्स्यकण्टकानपनीय मत्स्यानेवाश्नाति । यः पुनरन्धः स कण्टकातिव्याप्तान् तदपनयनासमर्थः निरपेक्षः सकण्टकानेव मत्स्यानश्नाति । एवं शास्त्रचक्षुः । परोक्षमर्थवैकल्यात् अर्थासामर्थ्यात् भाषते यः सभां गत इति । अभा.३०

(२) अर्थवैकल्यात् अर्थतत्त्वानवगमात् । व्यक.१४

(३) यथाऽन्धो मत्स्यान् सकण्टकानश्नाति । अन्धग्रहणं चक्षुष्मान् कदाचित् वर्जयेत् । तदभावात् फलकाल एव चेतयते । एवं निरपेक्षो धर्मानपेक्षः परोक्षमनुपलब्धं प्रमाणैरपरिच्छिन्नं अर्थवैकल्यात् । अर्थवैकल्य तत्त्वानुपलब्धिः । अनुपलभ्य तत्त्वं रागादिना यथेष्टं भाषते सभागतः । यथान्धः सुखार्थे मांसे विद्यमाने कण्टकान् भक्षयन् दुःखमवाप्नोति सुखं च न लभते, एवमभूतं वदन् सुखहेतौ मांसस्थानीये भूते विद्यमाने कण्टकस्थानीयमभूतं वदन् दुःखेन युज्यते सुखेन च वियुज्यते । तस्मादभूतं वर्जयेदित्यभूतनिन्दा । नाभा.१।७६

**[२]तस्मात्सभ्यः सभां प्राप्य रागद्वेषविवर्जितः ।**
**वचस्तथाविधं ब्रूयाद्यथा न नरकं व्रजेत् ॥**

तस्मादेतत्सर्वमवधार्य सभ्यः सभास्थानं प्राप्य रागद्वेषविवर्जितो भूत्वा तादृशमपक्षपतितं वचो ब्रूयात्, यथा नरके न गच्छेत्परकीयदोषसमर्थनपातकादिति। अभा.३१

अपक्षपाती एव निर्णयः कार्यः

**[१]पक्षानुत्सार्य कार्यस्तु सभ्यैः कार्यविनिश्चयः ।**
**अनुत्सारितनिर्णिक्ते विरोधः प्रेत्य चेह च ॥**

यदा निर्णयकालो भवति लग्नः तदा वादिप्रतिवादिनोः पक्षैः सर्वैस्तत्क्षणसंबध्यमानकैः सह द्वावप्युत्सार्य सभ्यैः निर्णयः कर्तव्यः । यदा पुनः अनुत्सारितपक्षयोः प्रत्यक्षयोरेव सभ्याः निर्णयं पर्यालोचयित्वा प्रयच्छन्ति, तदा तयोर्य एवैकः प्राप्तावसन्नः तैः कर्तुमभिप्रेत एवाकृतप्रतिभूनिबद्ध एव किञ्चिदन्तरायमुत्पादयति राज्ञः कारणिकानां च । तेनैव विघ्नेनाऽर्थनाशादैहिकविरोधः दुष्टनिग्रहशिष्टप्रातिपाल्याच्च पारत्रिकविरोधः प्रपद्यत इति । अभा.२७

रागाज्ञानलोभैर्दुष्टे व्यवहारनिर्णये सभ्यदण्डः

**[२]दुर्दृष्टे व्यवहारे तु सभ्यास्तं दण्डमाप्नुयुः ।**
**न हि जातु विना दण्डं कश्चिन्मार्गेऽवतिष्ठते* ॥**
**[३]रागादज्ञानतो वाऽपि लोभाद्वा योऽन्यथा वदेत् ।**
**सभ्योऽसभ्यः स विज्ञेयस्तं पापं विनयेन्नृपः× ॥**

(१) रागात् पूर्वसंभूतक्रोधात् । अज्ञानतो मूर्खत्वात् । लोभादुपचारात् । यतस्ततो वा हेतोर्योऽन्यथा वदेत् । न्यायविपरीतमित्यर्थः । स सभ्योऽसभ्यो विज्ञेयः । सभायोग्यो न भवतीत्यर्थः । तं पापं विनयेन्नृपः इति । अयं च बहुमध्यादेक एवोक्तः । एकवचनं कथमुक्तम् । उच्यते समाधिः । यदि बहूनां मध्ये एक एवाहंकारी-

*व्याख्यासंग्रहः स्थलादिनिर्देशश्च पुनर्न्याये द्रष्टव्यः ।

× अस्य श्लोकस्य अपरार्कव्याख्यानं 'रागाल्लोभात्' ( यास्मृ. २।४) इत्यत्र अपरार्के (पृ.४०) द्रष्टव्यम् ।

(१) **नासं**.१।७६ सभां ( सभा ); **नास्मृ**.३।१४; **अभा**.३०; **व्यक**.१४,नारदहारीतौ. (२) **नासं**.१।७७ व्रजेत् (पतेत्); **नास्मृ**.३।१५; **अभा**.३१; **स्मृच**.२२ नासंवत्; **व्यसौ**.१० ब्रूया (कुर्या); **प्रका**.१२ नासंवत्; **समु**.८ नासंवत्.

(१) **नास्मृ**.२।४२ (पक्षानुत्सार्य तु सभ्यैः कार्यो विनिश्चयः सदा ); **अभा**.२७ चेह ( नेह ).

(२) **नास्मृ**.१।६६. (३) **नासं**.१।५८; न्नृपः (न्दृशम् ); **नास्मृ**.१।६७; **अभा**.१८; **अप**.२।४ नासंवत्; **स्मृच**.२२ लोभाद्वा यो (यो लोभाद) न्नृपः (न्दृशम् ); **पमा**.३३ स्मृचवत्; **व्यनि**. नासंवत्; **प्रका**.१३ स्मृचवत्; **समु**.९ स्मृचवत्.

भूत्वा शेषसभ्यान् स्वावष्टम्भेन निष्प्रभान् कृत्वा रागादिवशादन्यायवादिन एव पक्षपातात् जयं ददाति, ततस्तमेवैकं आत्मशुद्धिपरैः सभ्यैः सूचितं राजा विनयेत् । अथ सर्वेऽपि कृतकोशपानादिसमयस्था एकवाक्यतया अन्यायजयप्रदा भवन्ति, ततः सर्वेऽपि राज्ञा विनेयाः दण्डं ग्राह्याः । एकवचनमपि जात्याख्यायां बहुवचनवाचकमेव भवति । यथा संपन्नो यव इति । यथा पक्वो व्रीहिरित्युक्ते पक्वा व्रीहय इति संबध्यते । अभा.१८

(२) योऽन्यथा वदेत् तं पापमित्येव सिद्धे सभ्योऽसभ्य इति ब्रवीति । तस्यैतत्प्रयोजनम्—असभ्यार्हेण दण्डेन विनयेदिति । नाभा.१।५८

प्राड्विवाकेन विवादशल्यमुद्धरणीयम्

**यथा शल्यं भिषग्विद्वानुद्धरेद्यन्त्रयुक्तिभिः ।**
**प्राड्विवाकस्तथा शल्यमुद्धरेद्व्यवहारतः ॥**

(१) यथा नष्टशल्यमदृष्टमपि दुःखोद्धरणीयमपि भिषग्वैद्यः स च विद्वान् शल्योद्धरणप्रयोगकुशलः बहुप्रकारं यन्त्रतन्त्रप्रयोगयुक्तिभिः शल्यमुद्धरेत् । एवमेव प्राड्विवाकः पापशल्यं व्यवहारान्तर्गतमनुपलक्ष्यमपि व्यवहारयुक्तिभिरुद्धरेदिति । अभा.३१

(२) व्यवहारेण, वादिप्रतिवादिसाक्षिवचनयुक्तिभिः । नाभा.१।७८

(३) शल्यं च धर्मस्याधर्ममिश्रणम् । व्यप्र.२४

सभ्यानां मतभेदाभेदकृतौ सशल्यवादनिःशल्यवादौ

**यत्र सभ्यो जनः सर्वः साध्वेतदिति मन्यते ।**
**स निःशल्यो विवादः स्यात् सशल्यः स्यादतोऽन्यथा ॥**

(१) इत्यत्र व्यवहारदर्शनागतोऽपि लोकः सभ्यजनो जनशब्दादवगम्यते । अत्र व्यवहारे निष्पन्ने सर्वे सभ्याः तथा सर्वोऽपि सभ्यजनः साधु तदस्य लोकोऽपि साध्वेतदिति मन्यते जानाति, स एव व्यवहारो निःशल्यो ज्ञेयः । अतोऽन्यथा विपरीतस्वरूपः सशल्य एवाऽवमन्तव्यः । अभा. ३१

(२) सभासदां च परस्परानुमतिव्यतिरेकेण न व्यवहारो निःशल्यो भवति । यथाह नारदः—'यत्र सभ्यो जन' इति । मिता. २।९१

(३) सभ्यानां विप्रतिपत्तौ तु— 'द्वैधे बहूनां वचनं समेषु गुणिनां तथा । गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तराः' ॥ इति साक्ष्युक्तं ज्ञेयम् । विता. १२३

सत्सभालक्षणम्

**न सा सभा यत्र न सन्ति वृद्धाः ।**
**वृद्धा न ते ये न वदन्ति धर्मम् ॥**
**नासौ धर्मो यत्र नो सत्यमस्ति ।**
**न तत्सत्यं यच्छलेनानुविद्धम् ॥**

(१) एवमत्र क्रमाक्रमं तारतम्येन छलरहितस्य सत्यस्यैव प्रतिष्ठा दर्शिता इति । एतत्सभालक्षणमभिहितम् । अभा. ३१

(२) न सा सभा । सभामसभेति ब्रुवन् सभाकार्यं नास्तीति ब्रवीति । यथा पुत्रेऽपुत्राभिधानम् । न तत्र प्रवेष्टव्यं यस्यां न सन्ति वृद्धाः ज्ञानवृद्धाः, न पलितैः । न हि पलितैर्धर्मः शक्यः परिच्छेत्तुम् । तथा च न हायनैर्न पलितैरित्याद्युक्तम् । तथाभूता अपि नैते वृद्धा ये रागादिना न वदन्ति धर्मं न्याय्यम् । नासौ धर्मो यत्र सत्यं नास्ति । सत्याभावे, न भूतं नीयते । सत्यं च तन्न भवति यच्छलेन मिश्रम् । तस्माज्ज्ञानिभी रागादिरहितैः सत्येन धर्ममहिंसद्भिश्छलस्पर्शं वर्जयित्वा भूतं द्रष्टव्यमिति । नाभा. १।८०

---

(१) **नासं**.१।७८; **नास्मृ**.३।१६ युक्तिभिः ( शक्तितः ); **अभा**.३१ नास्मृवत्; **अप**.२।३ ग्विद्वानु (कायादु ) भिः (तः); **व्यक**.१० अपवत्, नारदहारीतौ; **स्मृच**.१४ ग्विद्वानु (कायादु); **पमा**.२८ अपवत् ; **स्मृचि**.३ युक्तिभिः (शक्तितः) स्तथा (स्ततः); **व्यप्र**.२४ अपवत् ; **प्रका**.६ अपवत् ; **समु**.५ अपवत्.

(२) **नासं**.१।७९; **नास्मृ**.३।१७; **अभा**.३१; **मिता**.२।९१ स्यादतोऽन्यथा (त्वन्यथा भवेत् ); **व्यक**.१५; **स्मृच**.२१ मितावत् ; **रार**.१९ वादः (चारः) दतो (दितो); **दवि**.१६ सभ्यो (सभ्य) दतो (दितो); **व्यसौ**.११; **व्यउ**.४४ सर्वः (सर्व) शेषं मितावत् ; **विता**.१२२ निःश (विश) शेषं मितावत् ; **प्रका**.१२ मितावत्; **समु**.८ मितावत्.

(१) **नासं**.१।८० वृद्धा न ते (न ते वृद्धा) नो(न); **नास्मृ**.३।१८; **अभा**.३१; **मभा**.१३।१४ नासंवत्; **अप**.२.४ न सा (नासौ) नो (न) व्यासः; **व्यक**.१५ नासौ धर्मो (धर्मः स नो) नो (न) (सत्यं न तद्यच्छलमभ्युपैति); **स्मृच**.२३ नासंवत्; **व्यनि**. नासंवत्; **व्यसौ**.११ व्यकवत्.

## बृहस्पतिः

सभासन्निवेशः

**[1]दुर्गमध्ये गृहं कुर्यात् जलवृक्षान्वितं पृथक् ।**
**प्राग्दिशि प्राङ्मुखीं तस्य लक्षण्यां कल्पयेत् सभाम् ॥**

(१) गृहं राजगृहम् । तस्य प्राग्दिशि धर्माधिकरणभूता सभा । सा च वास्तुशास्त्रलक्षणोपेता कर्तव्या । *पमा.२२

(२) आदित्यचन्द्रादिदेवतायुक्तां लोकपालयुक्तां कल्पयेदिति । व्यनि.

(३) सैव च धर्माधिकरणम् । व्यम.२

**[2]माल्यधूपासनोपेतां बीजरत्नसमन्विताम् ।**
**प्रतिमाऽऽलेख्यदेवैश्च युक्तामग्न्यम्बुना तथा ॥**

राज्ञः सभाप्रवेशविधिः

**[3]प्रातरुत्थाय नृपतिः शौचं कृत्वा समाहितः ।**
**गुरून् ज्योतिर्विदो वैद्यान् देवान् विप्रान् पुरोहितान् ॥**
**[4]यथार्हमेतान् संपूज्य सुपुष्पाभरणाम्बरैः ।**
**अभिवन्द्य च गुर्वादीन् सुमुखां प्रविशेत्सभाम् ॥**

(१) अत्र नृपतिः प्रविशेदित्यन्वयः । पुरोहितानिति बहुवचनं पाशानितिवत् कर्मत्वमात्रस्याभिधायकं न तु बहुत्वस्यापि । पुरोहितस्यैकत्वात् । नृपतिरपि ब्राह्मणादिसहितः प्रविशेत् । ×स्मृच.१९

(२) प्रविश्य च विद्वद्भिर्मन्त्रिभिः सह कार्याण्यनुसंदध्यात् । पमा.२२

राजसभ्यादीनां सभाङ्गानां स्थाननिर्देशः

**[1]पूर्वामुखस्तूपविशेद्राजा सभ्या उदङ्मुखाः ।**
**गणकः पश्चिमास्यस्तु लेखको दक्षिणामुखः ॥**

अन्येषां पुनर्यथासौकर्यमुपवेशनम्, नियमाभावात् । स्मृच.२०

**[2]हिरण्यमग्निरुदकं धर्मशास्त्राणि चैव हि ।**
**तन्मध्ये स्थापयेद्राजा पुण्यानि च हितानि च ॥**

प्रतिष्ठिताप्रतिष्ठितमुद्रितशासिताश्चतस्रः सभाः

**[3]प्रतिष्ठिताऽप्रतिष्ठिता मुद्रिता शासिता तथा ।**
**चतुर्विधा सभा प्रोक्ता सभ्याश्चैव तथाविधाः ॥**

आरण्यकादिस्थानत्रये या सभा साऽप्रतिष्ठिता, प्रायेण देशान्तरगमनयोग्यत्वात् । उभयवासिप्रभृतिषु दशसु स्थानेषु तदभावात् प्रतिष्ठिता । नियुक्तस्थाने पुनर्मुद्राहस्ताध्यक्षसाहित्यान्मुद्रिता । नृपस्थाने तु शास्तृनियन्तृकत्वात् शास्त्रिता । स्मृच.१८

**[4]प्रतिष्ठिता पुरे ग्रामे चलानामाऽप्रतिष्ठिता ।**
**मुद्रिताध्यक्षसंयुक्ता राजयुक्ता च शासिता ॥**

---

* व्यप्र. पमावत् ।

(१) **व्यक.**१८ दिशि (दिशः); **स्मृच.**१९ वृक्षान्वितं पृथक् (मध्योच्छ्रितं पृथु); **पमा.**२१ न्वितं (वृतं); **व्यनि.** लक्षण्यां (कल्याणीं); **स्मृचि.**३ कल्प (लक्ष); **व्यसौ.**१३ पृथक् (महान्); **व्यप्र.**८; **व्यउ.**५; **व्यम.**२ न्वितं (श्रितं); **राकौ.** ३८२; **विता.**१ न्वितं पृथक् (श्रितं नृपः) मदनरत्ने बृहस्पतिः; **प्रका.**१० स्मृचवत्; **समु.**७ स्मृचवत्.

(२) **व्यक.**१८ धूपा (धूमा); **स्मृच.**१९; **पमा.**२२ ग्न्यम्बु (त्राम्बु); **व्यनि.** तथा (तदा); **स्मृचि.**३; **व्यसौ.**१३; **व्यप्र.**८ देवै (दैवे); **विता.**२; **प्रका.**१०; **समु.**७.

(३) **स्मृच.**१६ समाहितः (विधानतः): १९; **पमा.**२२ गुरून् (गुरुं) विदो (विदं); **सवि.**६३ उत्त.: ६५ प्रान् (प्र) शेषं स्मृचवत्; **प्रका.**७ स्मृचवत्; **समु.**७ स्मृचवत्. पराशरमाधवे तु बृहस्पतेः कात्यायनस्य वेति सन्देहः, उभयसन्दर्भोत्।

(४) **स्मृच.**१६ सुमुखां (प्रमुखः): १९ मुखां (मुखः); **पमा.**२२; **सवि.** ६३,६५ रैः (रः) मुखां ( मुखः); **प्रका.** ७ मुखां (मुखः); **समु.**७ प्रकावत्.

× सवि. स्मृचवत् ।

(१) **स्मृच.**२०; **पमा.**३५; **नृप्र.**५ स्तूप (श्चोप); **व्यम.** ३; **विता.**१६ वां (वांभि); **प्रका.**११ वितावत्; **समु.**७.

(२) **स्मृच.**२०; **प्रका.**११; **समु.**७.

(३) **अप.**२।१ ऽप्रतिष्ठिता(ऽप्रतिष्ठा च); **व्यक.**१०; **स्मृच.** १८ सिता (स्त्रिता); **रार.**२० मुद्रिता (सुमुद्रिता) तथा (सभा) हारीतः; **पमा.** २४ स्मृचवत्; **व्यनि.**ऽप्रतिष्ठिता (चला चैव); **नृप्र.**४ सिता (स्त्रिता) तथाविधाः(चतुर्विधाः);**व्यसौ.**७ स्मृचवत्; **विता.**१३ अपवत्; **प्रका.**९ स्मृचवत्; **समु.**७ स्मृचवत्.

(४) **अप.**२।१; **व्यक.**१०; **स्मृच.**१८ शासि(शास्त्रि);**रार.** २० चलानामा (नानाग्रामे) हारीतः; **पमा.**२४ शासि (शास्त्रि); **व्यनि.**; **सवि.**६८ शासि (शास्त्रि)च (तु) स्मृतिः; **व्यसौ.** ७; **विता.**१३-१४ चलानामा (बलात्सा चा) ध्यक्ष (चार्थे); **प्रका.** ९ पमावत्; **समु.**७सविवत्.

(१) अध्यक्षः प्राड्विवाकः। व्यवहारदर्शनेऽधिकृतत्वात्। तस्य च हस्ते राज्ञा स्वमुद्रा प्रतिवाद्यानयनार्थं देयेत्यत एवागम्यते। तत्र प्रतिष्ठिता अप्रतिष्ठिता च सभा निर्णयार्थिभिरेव प्रार्थनार्थदानमानादिभिः कार्या, शास्त्रप्रयुक्त्या वा (?) सभासिध्यभावात्। मुद्रिता शास्त्रिता च स्वाधिकारवशात् राज्ञैव क्रियते। तेन तत्र निर्णयार्थिनां तत्समीपगमनमेव न तु सभाकरणम्।

*स्मृच. १८

(२) तथा चायमर्थः—या ग्रामे राजग्रामे परिकल्पितस्थले सभा सा प्रतिष्ठिता। यदा कुत्रापि ग्रामे साऽप्रतिष्ठिता। या अध्यक्षप्राड्विवाकाद्यधिष्ठिता सा मुद्रिता। या राज्ञाधिष्ठिता सा शासिता इति। पूर्वद्वये चापरद्वयं विशेषणम्। रार. २०

सभाया दशाङ्गानि

**[१]नृपोऽधिकृतसभ्याश्च स्मृतिर्गणकलेखकौ।**
**हेमाग्न्यम्बु स्वपुरुषाः साधनाङ्गानि वै दश॥**

(१) अधिकृतः प्राड्विवाकः। स्वपुरुषः साध्यपालः। स्मृच. २०

(२) गणकलेखकसाध्यपालाख्यराजपुरुषाणामपि सभावस्थानमाह कार्यकथनमुखेन बृहस्पतिः—नृपोऽधिकृतेति। अत्र अधिकृताध्यक्षशब्दाभ्यां प्राड्विवाको गृह्यते। ×व्यप्र. ३१

(३) साधनं च सभासदः। विता.१४

**[२]एतद्दशाङ्गं करणं यस्यामध्यास्य पार्थिवः।**
**न्यायान्पश्येत्कृतमतिः सा सभाऽध्वरसंमिता॥**

(१) राजादिभिः दशभिः व्यवहारसाधकाङ्गैः अध्यासिता सभा यज्ञसभा इत्याह। स्मृच.२०

(२) एतत्करणं सभारूपं शरीरं दशाङ्गमित्यर्थः। यस्यां सभायां शरीरतुल्यायां पार्थिवः क्षेत्रज्ञ इव अध्यास्य अधिष्ठानं कृत्वा। अनेन क्षेत्रज्ञः शरीरमिव साङ्गां सभां राजा अधिष्ठाय अन्तर्यामिवत् सर्वचरितानि पश्यन् तदनुरूपस्य फलस्य भोक्ता दाता च भवतीति सूचितम्। व्यप्र.३१

**[१]एषां मूर्धा नृपोऽङ्गानां मुखं चाधिकृतः स्मृतः।**
**बाहू सभ्याः स्मृतिर्हस्तौ जङ्घे गणकलेखकौ॥**
**हेमाग्न्यम्बु दृशौ हृच्च पादौ स्वपुरुषस्तथा।**

सभोपविष्टा नृपादयो यस्याङ्गानि तमङ्गिनं व्यवहारं पुरुषरूपेण परिकल्पयति स एव—एषामिति। पमा.३५

दशाङ्गानां कार्याणि

**[२]दशानामपि चैतेषां कर्म प्रोक्तं पृथक्पृथक्।**
**वक्ताध्यक्षो नृपः शास्ता सभ्याः कार्यपरीक्षकाः॥**
**[३]स्मृतिर्विनिर्णयं ब्रूते जयं दानं दमं तथा।**
**शपथार्थौ हिरण्याग्नी जलं तृषितक्षुब्धयोः॥**

---

* सवि. स्मृचवत्। × व्यउ. व्यप्रवत्।

(१) **शुनी.** ४।५३७-५३८; **अप.** २।१; **व्यक.** १०-११ पोऽधि (पाधि); **स्मृच.**२०; **रार.**२० व्यकवत्, हारीतः; **पमा.**३१ हेमाग्न्यम्बु स्व (सहेमाग्न्यम्बु); **व्यनि.**व्यकवत्; **दवि.** १२ व्यकवत्; **नृप्र.**४; **व्यसौ.**७ व्यकवत्; **व्यप्र.**३१; **व्यउ.** १८; **विता.**१४ नृपोऽधिकृतसभ्याश्च (नृपश्चाधिकृतःसभ्याः); **प्रका.**११ व्यकवत्; **समु.**७ व्यकवत्.

(२) **शुनी.**४।५३८-५३९ ङ्गं (ङ्ग) यान्पश्येत् (यान्याये) मिता (निभा); **अप.**२।१; **व्यक.**११; **स्मृच.**२०; **रार.** २१ ऽध्वर (पुंस); **पमा.**३१ ङ्गं (ङ्ग) यान् (यं); **व्यनि.** संमिता (सन्निभा); **व्यसौ.**८ (दशाङ्गं कारणं यस्यां सभामध्यास्य पार्थिवः); **व्यप्र.**३१; **व्यउ.**१८; **विता.**१५ (एतद्दशाङ्गकरणं सा सभाऽध्वरसंमिता); **प्रका.**११; **समु.**७ ङ्गं (ङ्ग).

(१) **व्यक.**११; **रार.**२० स्मृतः (कृतः) हृच (दृष्टं) पुरुष (पुरुषा) क्रमेण हारीतः; **पमा.**३५ (हेमाग्न्यम्ब्वन्नपुरुषाः पादौ च पुरुषस्य च); **व्यनि.** एषां (तेषां) मुखं (मुखः) स्मृतः (कृतः) षस्तथा (षास्तदा); **दवि.**१२ पुरुष (पुरुषा); **व्यसौ.**७-८ स्मृतः (कृतः) हृच (ऊरू); **व्यप्र.**३१; **व्यउ.**१८; **विता.**१४; **प्रका.**११; एषां (तेषां) स्मृतः (कृतः) हृच्च (तत्र); **समु.**७ प्रकावत्.

(२) **शुनी.**४।५३९-५४०; **अप.**२।१ भ्याः (भ्यः) काः (कः); **व्यक.**११; **स्मृच.**२०; **रार.**२० हारीतः; **पमा.**३१; **व्यनि.** कार्य (कार्याः); **दवि.**१२ उत्त.; **नृप्र.**४; **व्यसौ.** ८ चै (वै); **व्यप्र.**३१ उत्त.; **व्यउ.**१८; **व्यम.**३ उत्त.; **विता.**१४; **प्रका.**११; **समु.**७.

(३) **शुनी.**४।५४०-५४१ र्थौ (र्थे) जलं (अम्बु); **अप.** २।१ जयं (जय) र्थौ (र्थे) जलं (अम्बु) क्षुब्धयोः (जन्तुषु); **व्यक.** ११ जयं (जय) र्थौ (र्थे) जलं (अम्बु); **स्मृच.**२० (शपथार्थे हिरण्याग्नी तृषितक्षुब्धयोर्जलम्); **रार.**२०-२१ दमं (दमः) र्थौ (र्थे) जलं (अम्बु) हारीतः; **पमा.**३१ जयं (जय) दमं (धनं) क्षु (लु); **व्यनि.** स्मृचवत्; **दवि.**व्यकवत्; **नृप्र.**४; **व्यसौ.**

**गणको गणयेदर्थं लिखेन्न्यायं च लेखकः ।**
**प्रत्यर्थिसभ्यानयनं साक्षिणां च स्वपूरुषः ॥**
**कुर्यादलग्नकौ रक्षेदर्थिप्रत्यर्थिनौ सदा ॥**
**सकृदुक्तं गृहीतार्थो लघुहस्तो जिताक्षरः ।**
**सर्वशास्त्रसमालोकी एष शासनलेखकः ॥**

(१) आलग्नकौ प्रतिभुवौ । अप.२।१

(२) वक्ताऽध्यक्ष इत्येतत्प्रकर्षाभिप्रायेण । सभ्यादिनाऽपि 'धर्मज्ञेनावश्यं वक्तव्यमिति' वसिष्ठेनोक्तत्वात् । नृपः शास्तेत्येतदप्यर्थवधदण्डकारित्वाभिप्रायेण । वाग्दण्डधिग्दण्डाभ्यां 'शासनं प्राड्विवाकेनापि कार्यमिति तेनैवाभिधानात् । *स्मृच.२०

(३) अनग्नकौ अजातन्यायौ । रार.२१

राज्ञः ब्राह्मणस्य च प्राड्विवाकस्य व्यवहारनिर्णये कार्याणि

**एकस्त्वनेकधा प्रोक्तो व्यवहारो मनीषिभिः ।**
**तस्य निर्णयकृत् राजा ब्राह्मणश्च बहुश्रुतः ॥**

ब्राह्मणः प्राड्विवाकाख्यः ।... ... ब्राह्मणश्चेति चशब्दो निर्णेत्रन्तरसमुच्चयार्थः । स्मृच.१३

**वाग्दण्डश्चैव धिग्दण्डो विप्राधीनौ तु तावुभौ ।**
**अर्थदण्डवधावुक्तौ राजायत्तावुभावपि ॥**

प्रतिष्ठिताऽप्रतिष्ठितसभ्यानां तु धर्मस्थाने विशेषविध्यभावादनियम एव । शुभे स्थाने उपविश्य विनिर्णयमात्रं कृत्वा तैरुपरन्तव्यम् । दण्डदापनेऽर्थदापने वा तेषामधिकाराभावात् । साहसविवादे तु तैर्निर्णयमात्रमपि न कार्यम् । +स्मृच.२०

**राजा कार्याणि संपश्येत्प्राड्विवाकोऽथ वा द्विजः ।**
**न्यायाङ्गान्यग्रतः कृत्वा सभ्यशास्त्रमते स्थितः ॥**

(१) एतच्च पक्षान्तरं यदा नृपतिः स्वयं न पश्यति तदैव । स्मृच.१६

(२) न्यायाङ्गानि वह्निजलादीनि, तान्यग्रतः कृत्वेति स्वरसाद्दण्डादिरपि इति लक्ष्मीधरः । वस्तुतस्तु यथा नृपाज्ञा तथा कुर्यादिति व्यवहारोऽपि तथैव । रार.१८

राजप्राड्विवाकपदयोर्निरुक्तिः

**बलेन चतुरङ्गेण यतो रञ्जयते प्रजाः ।**
**दीप्यमानः स्ववपुषा तेन राजाऽभिधीयते ॥**
**विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैव च ।**
**प्रियपूर्वं प्राड् वदति प्राड्विवाकोऽभिधीयते ॥**

(१) पूर्वोत्तरपक्षौ पृच्छतीति प्राट्, निर्णयं च विशेषेण वक्तीति विवाक इति यौगिकी तस्य संज्ञेत्यर्थः । *स्मृच.१४

---

* व्यप्र., व्यउ. स्मृचगतम् ।

८ र्णयं (र्णये) जयं (जय) र्थौं (र्थे) जलं (अम्बु) क्षु (लु); **व्यप्र.** ३१ व्यकवत्; **व्यउ.** १८ र्थौं (य) जलं (अम्बु) श्वयोः (द्वतोः); **विता.**१४-१५ (शपथार्थे हिरण्याग्नी अम्बु त्रुट्क्षुधिते तयोः); **प्रका.**११ स्मृचवत्; **समु.**७ स्मृचवत्.

(१) **शुनी.**४।५४१ पू.; **अप.**२।१ णां (णं); **व्यक.**११; **स्मृच.**२० यं (य्यं); **रार.**२१ न्न्यायं (दर्थं) हारीतः; **पमा.**३२ स्व (स); **व्यनि.**; **दवि.**१२-१३; **नृप्र.**४; **व्यसौ.**८; **व्यप्र.**३१; **व्यउ.**१८ न्न्यायं (त्पापं) पूरुषः (रूपतः); **व्यम.**३ पू.; **विता.**१५ स्मृचवत्; **प्रका.**११; **समु.**७.

(२) **अप.**२।१; **व्यक.**११; **स्मृच.**२०; **रार.**२१ दल (दन) हारीतः; **व्यनि.**; **दवि.**१३ कौ (कं) सदा (तथा); **व्यसौ.**८; **व्यप्र.**३१; **व्यउ.**१८ कौ (को); **विता.**१५ दल (दाल); **प्रका.**११; **समु.** ७

(३) **रार.**२१ हारीतः. हारीतो बृहस्पतिर्वा इति न निर्णयः ।

(४) **स्मृच.**१३; **नृप्र.**७ एकस्त्व (एवं सोऽ); **व्यप्र.**३२ तस्य (वाद) उत्त.; **प्रका.**६; **समु.** ५.

(५) **शुनी.**४।७६८-७६९ (धिग्दण्डस्त्वथ वाग्दण्डः सभ्यायत्तौ तु तावुभौ); **स्मृच.**२०,९७ (वाग्दण्डो धिग्दमश्चैव विप्रायत्तावुभौ स्मृतौ); **विर.**६३० धीनौ...भौ (यत्तावुभौ स्मृता); **पमा.**३२; **दवि.**६३ (वाग्दण्डो धिग्दण्डश्चैव विप्रायत्तावुभौ स्मृतौ); **नृप्र.**४-५; **सवि.**६८,१६८ स्मृचवत्: ४७० (धिग्दण्डो वाग्दमश्चैव विप्रायत्तावुभाविमौ) पू.; **व्यप्र.**३२ (धिग्दण्डस्त्वथ वाग्दण्डो विप्रायत्तौ तु तौ स्मृतौ); **व्यउ.**१८ व्यप्रवत्; **प्रका.**११ स्मृचवत्; **समु.**८ धीनौ (यत्तौ).

\+ व्यप्र., व्यउ. स्मृचवत् ।

* सरस्वतीविलासे स्मृतिचन्द्रिकैव समुध्दृता ।

(१) **अप.**२।३ सभ्य (सत्य) वृद्धबृहस्पतिः; **व्यक.**१०ऽथ (ऽपि): १८ अपवत्; **स्मृच.**१६; **रार.**१८ संपश्येत् (पश्येत); **पमा.**२८; **व्यचि.**३ रारवत्; **स्मृचि.**३ पू.; **दवि.**१५ पू.; **नृप्र.**४ उत्त.; **व्यत.**१९७ पू.; **व्यसौ.**७ व्यचिवत्: १३; **विता.**१३ द्विजः (स्थितः) पू.; **सेतु.**९३ पू.; **प्रका.**८; **समु.**५.

(२) **पमा.**२८; **नृप्र.**४; **समु.**५.

(३) **अप.**२।३ ड्व (ग्व) कोऽभिधीयते (कस्ततः स्मृतः) वृद्धबृहस्पतिः; **व्यक.**१० ड्व (ग्व) कोऽभिधीयते (कस्तु संमतः);

(२) पृच्छति विविनक्ति च प्राड्विवाकः। विचारण-पर्यन्तमेव प्राड्विवाकधर्म इति पल्लवकारः। रार.१८

(३) गौतमेन तु बृहस्पतिवचोगार्थः प्राड्विवाक-शब्दस्य दर्शितः। विवादे वादिप्रतिवादिनौ पृच्छतीति प्राट् ताभ्यामुक्तं सभ्यैः सह विविच्य वक्तीति विवाक इति बृहस्पतिना, व्यासेन विचारयतीत्यभिधानाद्विविनक्ति इति विवाकशब्दस्य व्युत्पत्तिरुक्ता। विवक्तीति विवाक इति गौतमेन। नारदहारीतौ— 'यथा शल्यं भिषक्कायादुद्धरेद्यन्त्रयुक्तितः। प्राड्विवाकस्तथा शल्यमुद्धरेद्व्यवहारतः' इति॥ शल्यं च धर्मस्याधर्ममिश्रणम्। यथा च मनुः— 'विद्धो धर्मो ह्यधर्मेण सभां यत्रोपतिष्ठते। शल्यं चास्य निकृन्तन्ति विद्धास्तत्र सभासद' इति॥ (मस्मृ. ८।१२) अयं च राज्ञा स्वयं व्यवहारदर्शने क्रियमाणेऽस्य सहायः 'सप्राड्विवाक' इति स्मरणात्। यदा तु राजा कार्यान्तरव्यग्रतया स्वास्थ्याभावेन वा स्वयं व्यवहारदर्शनासमर्थस्तदा तत्प्रतिनिधिः। व्यप्र.२४

(४) प्राड्विवाको वादिप्रतिवादिनौ पृच्छतीति प्राट्। अत एव वक्तृत्वस्य विवेचकत्वस्य राज्ञि सत्त्वेऽपि प्रश्नपूर्वकत्वाभावान्नातिप्रसङ्गः। *व्यउ. १५

(५) प्राट् चासौ विवाकश्च, सभाध्यक्ष इत्यर्थः। विता.६

त्रैवर्णिकानामेव प्राड्विवाकत्वेऽधिकारः

**यत्र विप्रो न विद्वान्स्यात् क्षत्रियं तत्र योजयेत्।**
**वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत्॥**

* शेषं व्यप्रगतम्।

**स्मृच.**१४ कोऽभिधीयते (कस्ततः स्मृतः); **रार.**१८ अपवत्; **पमा.**२८ ड्व (ग्व); **व्यचि.**४ अपवत्; **व्यनि.** ड्व (ग्व) कोऽभिधीयते (कः स उच्यते); **स्मृचि.**३ अपवत्; **नृप्र.**४; **व्यत.**१९७-१९८ प्रातिप्रश्नं (प्रतिपन्नं) शेषं अपवत्; **दित.**५८३ व्यतवत्; **सवि.**६४ स्मृचवत्; **व्यसौ.**७ प्राड् व (वा व) शेषं स्मृचवत्; **व्यप्र.**२४ अपवत्; **व्यउ.**१५ अपवत्; **व्यम.**२ अपवत्; **विता.**६ अपवत्; **सेतु.**९३ व्यतवत्; **प्रका.**६ स्मृचवत्; **समु.**५.

(१) **पमा.**२९. पराशरमाधवे तु 'ब्राह्मणो यत्र न स्यात्' इति कात्यायनवचनमुद्धृत्य बृहस्पतिरपि इत्युक्त्वा 'यत्र विप्रो न' इत्यादि कात्यायनसमानार्थकं वचनमुद्धृतम्।

ब्राह्मणब्रुवपदार्थः

**धर्मकर्मविहीनस्तु ब्राह्मैर्लिङ्गैर्विवर्जितः।**
**ब्रवीति ब्राह्मणोऽस्मीति तमाहुर्ब्राह्मणब्रुवम्॥**

सभ्यसंख्या। यज्ञसदृशी सभा।

**लोकवेदाङ्गधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा।**
**यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा॥**

(१) भा दीप्तिः प्रकाशो ज्ञानमिति यावत्, तया सह वर्तते या भूमिः सा सभा। विद्वदधिष्ठानेन हि भूमिरपि प्रकाशसहितेति व्यपदिश्यते। विद्वत्समितिरेव या तथेति सभोच्यते। त्रयोऽपि वेत्यधमकोटिरियम्। व्यमा. २८०

(२) अत्र प्राड्विवाकादीनामर्थार्थितया ऋत्विग्वत्सहायत्वमात्रं नाधिकारः। अधिकारस्तु व्यवहारदर्शने राज्ञ एवेति मन्तव्यम्। अत एवात्र 'सप्राड्विवाक' इत्यादिना तस्यैव प्राधान्येन निर्देशो नेतरेषाम्। फलसंबन्धोऽपि तस्यैवोक्तो न त्वन्येषाम्। तथाऽकरणे दोषः स्मृतिबलान्नित्याधिकारोऽपि राज्ञ एव। 'अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्। अयशो महदाप्नोति नरकं चैव गच्छति'॥ इति मनुना राज्ञ एव दोषस्मरणात्। अत एव च राजेतरेषां सभाप्रवेशनियमः तेनैव दर्शितः— 'सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम्। अब्रुवन् विब्रुवन् वाऽपि नरो भवति किल्बिषी'॥ राज्ञः पुनः सभाप्रवेशनियमो बृहस्पतिना दर्शितः—'राजा कार्याणि संपश्येत्सभ्यैरेव त्रिभिर्वृतः। सभामेव प्रविश्याग्र्यामासीनः स्थित एव वा' इति॥ सभ्यैस्त्रिभिरेव वृतो न त्वेकेन द्वाभ्यां वा वृत इत्यर्थः। अतो न प्रागुक्तसभ्यसंख्याविरोधः। अतो राजसूय इव व्यवहारदर्शने राज्ञ एव

(१) **व्यमा.**२८०. (२) **शुनी.**४।५२६-५२७ दाङ्ग (दज्ञ); **मिता.**२।२ दाङ्ग (दज्ञ); **व्यमा.**२८० लोक (वेद) धर्म (तत्व) प्राः स्युः (प्राग्न्याः); **अप.**२।१ प्राः स्युः (प्राग्न्याः); **व्यक.**११ अपवत्; **स्मृच.**१५; **रार.**२१ विप्राः स्युः (धर्मज्ञाः); **पमा.**२६; **व्यनि.** अपवत्; **स्मृचि.**३ मितावत्; **नृप्र.**४; **व्यसौ.**८ अपवत्; **वीमि.**२।२; **व्यप्र.**२६; **व्यउ.**१६ मितावत्; **व्यम.**३ मितावत्; **विता.**४ दाङ्ग (दज्ञ) स्युः (च); **प्रका.**७; **समु.**६.

अधिकार इति सिद्धम् । स्मृच. १५

(३) मनुना तु त्रय एवोक्ताः—'यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रयः' इति । अत्र त्रिभ्योऽन्यूनाः सप्तभ्योऽधिकाश्च न कार्या इत्यत्र तात्पर्यम् । संख्यावैषम्ये तु 'भूयोऽल्पविरोधे भूयसां स्यात् स्वधर्मत्वम्' इति न्यायेन विप्रतिपत्तावधिकसंख्यावचनमादरणीयं गुणसाम्ये । तद्वैषम्ये तु 'शतमप्यन्धानां पन्थानं न पश्यति' इति न्यायेन गुणवत्तरवचनमेवेति प्रदर्शनार्थम् । यत्तु—'चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा । सा ब्रूते यं स धर्मः स्यादेको वाऽध्यात्मवित्तमः' ॥ (यास्मृ. १।९) इति योगीश्वरेण विषमसंख्यत्वमपि बहुत्वमपि चानादृतम् । तत्तु पूर्वोक्तानां धर्मकारकज्ञापकहेतूनां संदेहनिर्णयविषयं, प्रक्रमात् । व्यवहारविषये तु त्र्यवराणां विषमसंख्यानामेव सभ्यत्वं विशेषविधानादित्यवसेयम् । व्यप्र. २७

(४) 'एको वा' इत्यात्मज्ञानप्रशंसामात्रम् ।*व्यउ. १६

(५) मिता.टीका— बृहस्पतिस्त्विति । उत्तमादिभेदेनाह सप्तेति । वेदशब्दः शास्त्रस्याप्युपलक्षणम् । लोकशब्दो देशकालादिपरः । यद्वा स तदन्यसर्वपरः । धर्मशब्दः शास्त्रपरः । प्राधान्यात्तस्य पुनरुक्तिः । यत्र सभायाम् । यज्ञेति यज्ञसभासदृशीत्यर्थः । यदि तु एतदनुरोधेन मानवे त्रय इत्युपलक्षणं मध्यमपक्षपरं वा तदा एकवाक्यतैव न पक्षान्तरम् । अत्र पक्षे ते च त्रय इत्यपि तथेति न भेद इति बोध्यम् । परन्तु ते च त्रय इति बृहस्पतिस्त्विति च वदतो विज्ञानेश्वरस्य न संमतमिदमिति बोध्यम् । बाल. २।२

**[१]यज्ञे संपूज्यते विष्णुर्व्यवहारे महीपतिः ।**
**जयी तु यजमानोऽत्र जितः पशुरुदाहृतः ॥**
**[२]पूर्वपक्षोत्तरावाज्यं प्रतिज्ञा च हविः स्मृता ।**
**त्रयी शास्त्राणि सभ्यास्तु ऋत्विजो दक्षिणा दमः ॥**

कीदृशाः सभ्या राज्ञा नियोज्याः

**[३]साधुकर्मक्रियायुक्ताः सत्यधर्मपरायणाः ।**
**अक्रोधलोभाः शास्त्रज्ञाः सभ्याः कार्या महीभुजा ॥**

नियुक्तेनानियुक्तेनापि वा सभ्येन धर्म्य एव निर्णयो वक्तव्यः

**[१]नियुक्तो वाऽनियुक्तो वा शास्त्रज्ञो वक्तुमर्हति ।**
**यत्तेन सदसि प्रोक्तं स धर्मो नात्रसंशयः ॥**

धर्म्यनिर्णयप्रशंसा

**[२]अज्ञानतिमिरोपेतान् संदेहपटलान्वितान् ।**
**निरामयान् यः कुरुते शास्त्राञ्जनशलाकया ॥**
**[३]इह कीर्तिं राजपूजां लभते स्वर्गतिं च सः ।**
**तस्मात्संशयमूढानां कर्तव्यो हि विनिर्णयः ॥**
**[४]लोभद्वेषादिकं त्यक्त्वा यः कुर्यात्कार्यनिर्णयम् ।**
**शास्त्रोदितेन विधिना तस्य यज्ञफलं भवेत् ॥**

अधर्म्यनिर्णयदोषः

**[५]असत्यं निर्णये साक्षिसभ्याध्यक्षमहीभुजाम् ।**
**अप्रत्ययोदयश्चास्य नरके पतनं यथा ॥**

अन्यायवादिविश्वासघातकोत्कोचजीविसभ्यदण्डः

**[६]अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः ।**

---

* शेषं व्यप्रवत् ।

(१) **व्यमा.**२८४; **स्मृचि.**२ जयी तु यजमानोऽत्र (यजमानो जयी तत्र); **विव्य.**२ विष्णुः.

(२) **व्यमा.**२८४ ज्यं (ध्यं) स्मृता (स्मृतः) दमः (दन); **स्मृचि.**२. (३) **व्यक.**११; **रार.**२२; **व्यसौ.**८; **विता.**८-९.

(१) **अप.**२।४; **व्यक.**१४ सदसि (सदसत्) स धर्मो (कर्तव्यं) क्रमेण नारदः; **स्मृचि.**४ शास्त्र (धर्म).

(२) **व्यमा.**२८२ यः (यान्); **व्यक.**१३-१४; **स्मृच.** २१; **पमा.**३२; **व्यचि.**५; **स्मृचि.**४ तिमिरो (तमसो); **नृप्र.**५; **व्यत.**१९८ न्वि (दिं); **सवि.**६८; **सेतु.**९५ कात्यायनः; **प्रका.**३१; **समु.**८.

(३) **व्यमा.**२८२; **व्यक.**१४ कर्तव्यो हि (प्रकर्तव्यो); **स्मृच.**२१ पू.; **पमा.**३२ पू.; **व्यचि.**५ व्यकवत्; **स्मृचि.**४ लभते स्वर्गतिं (स्वर्गतिं लभते); **नृप्र.**५ पू.; **व्यत.**१९८ स्वर्ग (सद्ग) व्यो हि (व्यश्च); **सवि.**६८ राजपूजां (अवाप्नोति) पू.; **सेतु.**९५ व्यतवत्, कात्यायनः; **प्रका.**११ पू.; **समु.**८.

(४) **व्यमा.**२८२ कार्य (कर्म) यज्ञ (धर्म); **अप.**२।४ निर्ण (निश्च); **व्यक.**१४; **स्मृच.**२१; **पमा.**३२; **व्यचि.**५ भवेत् (लभेत्); **दवि.**१८; **नृप्र.**५; **सवि.**६९; **व्यसौ.**१०; **प्रका.**११-१२; **समु.**८. (५) **व्यक.**१५.

(६) **व्यमा.**२८३; **अप.**२।४ वादि (वाचि) कार्श्चै (कश्चै) वृद्धबृहस्पतिः; **व्यक.**१६; **स्मृच.**२२; **पमा.**३४ श्वस्त (श्वस्ते); **व्यचि.**६-७; **व्यनि.**; **स्मृचि.**४ सर्वं एव ते (सर्वथा वने) नारदः; **नृप्र.**५; **वीमि.**२।४ क्तो (क्तौ); **विता.** २८ निर्वा (विवा) अपरार्क विष्णुः; **प्रका.**१३; **समु.**९ अन्याय (अन्यथा).

**विश्वस्तवञ्चकाश्चैव निर्वास्याः सर्व एव ते ।।**

अज्ञानक्रोधवशादन्यथा वादिनस्तु विशेषोक्त्यभावात् सामान्येन सभ्यसंबन्धितया बृहस्पत्युक्तं तत्र व्यवतिष्ठते अन्यायेति । उत्कोचजीविन इत्येतत्सभ्येतरविषयम् । 'कूटसाक्षिणां सर्वस्वापहार उत्कोचजीविनां सभ्यानां च' इति विष्णुना सभ्यविषये सर्वस्वापहारस्योक्तत्वात् । यत्तु कैश्चिदन्यथावादे 'मोहात् सहस्रं दण्ड्यास्तु' इत्यादि मनुवचनोक्तद्विशतादिदण्डवैचित्र्यमुक्तं तद्याज्ञवल्क्यवचनतो 'रागादावेव द्विगुणो दम' इति नियमादज्ञानादौ दण्डान्तरं मृग्यमित्येवंपरं न पुनर्मनुवचनबलेन द्विशतादिदण्डप्रतिपादनार्थम् ।

'एतानाहुः कौटसाक्ष्ये प्रोक्तान् दण्डान् मनीषिणः' । इति उपसंहारतो मनुवचनस्य साक्ष्यपराधविषयत्वात् । तस्मादज्ञानादौ बार्हस्पत्यवचनविहितो दमः सभ्यविषयोऽनुसंधेयः । स्मृच.२२-२३

व्यवहारनिर्णयेऽनधिकारिणः

**[१]देशाचारानभिज्ञा ये नास्तिकाः शास्त्रवर्जिताः ।**
**उन्मत्तक्रुद्धलुब्धार्ता न प्रष्टव्या विनिर्णये ।।**

कुलश्रेणिगणादीनां साहसभिन्नपदेषु निर्णयाधिकारः

**[२]राज्ञो ये विदिताः सम्यक् कुलश्रेणिगणादयः ।**
**साहसन्यायवर्ज्यानि कुर्युः कार्याणि ते नृणाम् ।।**

अरण्यचरसैनिकवणिजां न्यायस्थानम्

**[३]ये त्वरण्यचरास्तेषां अरण्ये करणं भवेत् ।**
**सेनायां सैनिकानां तु सार्थेषु वणिजां तथा ।।**

करणं सभा । व्यक.१२

कुलश्रेणिगणनियुक्ताध्यक्षराज्ञामुत्तरोत्तरं प्रामाण्ये बलवत्त्वम्

**[१]कुलश्रेणिगणाध्यक्षाः प्रोक्ता निर्णयकारिणः ।**
**येषामग्रे निश्चितस्य प्रतिष्ठा तूत्तरोत्तरा ।।**
**[२]विचार्य श्रेणिभिः कार्यं कुलैर्यन्न विचारितम् ।**
**गणैश्च श्रेण्यविज्ञातं गणाज्ञातं नियुक्तकैः ।।**
**[३]कुलादिभ्योऽधिकाः सभ्यास्तेभ्योऽध्यक्षोऽधिकः कृतः ।**
**सर्वेषामधिको राजा धार्यं यत्नेन निश्चितम् ।।**
**[४]उत्तमाधममध्यानां विवादानां विचारणात् ।**
**उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः ।।**

(१) कुलं वादिनोर्वैश्याः । आदिपदात् श्रेणिः गणश्च । तत्र श्रेणिः वणिगादिसमूहः । गणो विप्रसमूहः । सभ्यः नियुक्तः साधुः । अध्यक्षः प्राड्विवाकः । एतेषां राजान्तानां निर्णयकरणे उत्तरोत्तरस्य बलवत्त्वं ज्ञानोत्कर्षादित्यर्थः । व्यचि.४

(२) कुलादिपदार्था व्याख्याताः । गणशब्दः पूगपर्यायः । आदिपदेन सभ्यादिग्रहणम् । नियुक्तकाः सभ्याः । साहसाख्यं व्यवहारपदम् । युक्तिश्चात्रेयम्— कुलादीनां ज्ञात्यादिरूपाणां दाक्षिण्यादिना अन्यथा दर्शनमपि संभाव्यते इति कुदृष्टत्वोद्भावकवचनेन राजादीनामसंभवः । श्रेणीनामुदासीनतया ततो बलवत्ता । पूगानां त्वेकस्थानवासमात्रसम्बन्धेऽपि भिन्नजातितया भिन्नवृत्तितया च ततोऽपि मिथोऽनपेक्षत्वादौदास्याद्बलवत्त्वम् । नृपाधिकृतानां तु ततोऽपि निःसंबन्धतया राज्ञा परीक्ष्या-

---

(१) अप.२१२; व्यक.१२; स्मृच.१५;रार.२४ क्रुद्धलुब्धा (लुब्धक्रुद्धा); पमा.२७ क्रुद्धलुब्धार्ता (लुब्धक्रुद्धाश्च); व्यनि. (उन्मत्ताः क्रुद्धभावाश्च न नियोज्या विनिर्णये) व्यासः; नृप्र.४ पमावत्; व्यसौ.९; विता.९; प्रका.७; समु.६.

(२) शुनी.४।५३० ज्ञो (ज्ञा) न्याय (स्तेय); व्यक.१२ ज्ञो (ज्ञा); स्मृच.२० व्यकवत्; पमा.३२ व्यकवत्; दीक.३४; दवि.१५ व्यकवत्; नृप्र.५ विदि(विहि); सवि.६८ज्ञो(ज्ञा)विदि (ऽभिहि); व्यसौ.९; व्यप्र.३०; व्यउ.१९; विता.१६; प्रका. ११; समु.८.

(३) व्यमा.२८१ ण्ये (ण्य) षु (तु); व्यक.१२; व्यचि.४ तु (च); दवि.१५; व्यसौ.९; व्यम.३ त्वर (चार); विता. १७ व्यमवत्; प्रका.९ व्यमावत्; समु.६ व्यमावत्.

(१) व्यक.१२श्रेणि (श्रेणी) रिणः (रकाः) येषा (एषा); दवि.१५ श्रेणि (श्रेणी) पू.; व्यप्र.३०; व्यउ.१९; विता.१६.

(२) शुनी.४।५३१; व्यक.१२ चारित (निश्चित); दवि.१५ चार्य (चार्यं); व्यसौ.१९ गणाज्ञातं (गणाज्ञानं)उत्त.; व्यप्र.३० विज्ञातं (विख्यातं); व्यउ.१९.

(३) शुनी.४।५३२ धार्य...तम् (धर्माधर्मनियोजकः); व्यक.१३ऽधिकः कृतः (स्मृतोऽधिकः) धार्यं (धर्म्यं); व्यचि.४ व्यकवत्; दवि.१६ व्यकवत्, पू.; व्यसौ.९व्यकवत्; वीमि. २।३०ऽधिकः कृतः (स्मृतोऽधिकः) धार्यं यत्नेन (धर्मो यत्तेन) कात्यायनः; व्यप्र.३० धार्यं (धर्मं); व्यउ.१९ कृतः (स्मृतः) धार्यं(धर्मं) तम् (तः).

(४) शुनी.४।५३३; व्यक.१३ बुद्धी (रङ्गा); व्यचि.४; व्यसौ.९पू.; वीमि.२।३०कात्यायनः;व्यप्र.३०;व्यउ.२०

धिकृतानां राजभयादपि पक्षपातदाक्षिण्याद्यसंभव इति पूगेभ्यो बलवत्तरत्वम् । प्राड्विवाकस्य पुरोहितामात्यानां च सुतरां प्रागुक्तहेतुद्वयादाधिक्यम् । नृपस्य साक्षादेव प्रजापालनाधिकाराद्विपक्षबाधकीभूतदोषाधिक्यात् 'अन्यायं कुरुते यदि पतिः कस्तं निरोद्धुं क्षम' इति न्यायेन प्रजाप्रक्षोभादिदृष्टस्पष्टदोषभयादवश्यमपक्षपातिता संभवतीति सर्वतो बलवत्तरत्वम् । बुद्धितारतम्यमपि बृहस्पतिवचने स्पष्टमिति । व्यप्र.३०

(३) साहसाख्यव्यवहारपदातिरिक्तदर्शनाधिकृतनिर्णीतव्यवहारः परावर्तेत इत्यर्थः । अत्र लोभादिशङ्कैव परावृत्तौ मूलम् । तत्र वादिनोरन्यतरस्य अन्यथादर्शनोद्भावकस्य द्विगुणो दण्डः । अन्यथादर्शने सभ्यानां स्मृत्युक्तो दण्ड इति । व्यउ.२०

तपस्विमायायोगविदां कार्यनिर्णायकाः

**[१]तपस्विनां तु कार्याणि त्रैविद्यैरेव कारयेत् ।**
**मायायोगविदां चैव न स्वयं कोपकारणात् ॥**

येषां कोपात्भयं भवति तेषां विचारः तज्जातीयद्वारैव कारयितव्यः । ×व्यचि.५

गणकलेखकौ सभायां नियोज्यौ

**[२]शब्दाभिज्ञानतत्त्वज्ञौ गणनाकुशलौ शुची ।**
**नानालिपिज्ञौ कर्तव्यौ राज्ञा गणकलेखकौ ॥**

(१) शब्दाभिधानं कोशः । गणको ज्योतिर्वित् । लेखको व्याकरणकोषवेत्ता । द्वावपि योगरूढौ । उभयत्र तयोरेव कुशलतेत्यर्थः । रार.२४

(२) शब्दो व्याकरणम् । अभिधानं कोशः । *व्यचि.४

आव्हानार्थं पुरुषो नियोज्यः

**[१]आकारणे रक्षणे च साक्ष्यर्थिप्रतिवादिनाम् ।**
**सभ्याधीनः सत्यवादी कर्तव्यस्तु स्वपूरुषः ॥**

(१) आकारणम् आव्हानम् । स्वपूरुषः क्रमायातो यः स सभ्याधीनः कर्तव्यो राज्ञा । स्मृच.१७

(२) स्वपूरुषः प्रेष्यः । व्यचि.४

(३) अयं च साध्यपालनामा शूद्र एव । +व्यप्र.३१

## भृगुः

पञ्चदश व्यवहारसभाः

**[२]दश स्थानानि वादानां पञ्च चैवाब्रवीद्भृगुः ।**
**निर्णयं येन गच्छन्ति विवादं प्राप्य वादिनः ॥**
**[३]आरण्यास्तु स्वकैः कुर्युः सार्थिकाः सार्थिकैस्तथा ।**
**सैनिकाः सैनिकैरेव ग्रामेऽप्युभयवासिभिः ॥**
**[४]उभयानुमतं चैव गृण्हते स्थानमीप्सितम् ।**
**कुलिकाः सार्थमुख्याश्च पुरग्रामनिवासिनः ॥**
**[५]ग्रामपौरगणश्रेण्यश्चातुर्विद्यश्च वर्गिणः ।**
**कुलानि कुलिकाश्चैव नियुक्ता नृपतिस्तथा ॥**

(१) एवमेते श्रेष्ठे निर्णयस्थाने मन्वादिभिरुक्ते । भृगुणा तु जघन्यान्यपि निर्णयस्थानान्युक्तानि । दशेति । तानि च पञ्चदश स्थानानि तेनैव दर्शितानि— आरण्यास्त्वित्यादिभिः । अत्राद्यानि पञ्चस्थानानि अरण्यादिजनविशेषाणामेव । ग्रामाकारेणावस्थितजनविवादे समीप-

× वीमि. व्यचिवत् ।

(१) **शुनी.**४।५२१-५२२; **व्यमा.**२८१ बृहस्पतिकात्यायनौ; **व्यक.**१३तु (च) बृहस्पतिकात्यायनौ; **व्यचि.**५;**व्यनि.** (मायायोगविदां चैवमात्मीयैरेव कारणम्); **दवि.**१६ बृहस्पतिकात्यायनौ; **व्यसौ.**९; **वीमि.**२।३ नारदः; **व्यप्र.**२३; **व्यउ.**१४;**विता.**२६ कारणात् ( येन्नृपः) क्रमेण तु व्यासः; **प्रका.**१० न स्वयं(नात्मीयं) णात् (णम् ); **समु.**११ प्रकावत्.

(२) **शुनी.**४।५४२ ज्ञान (धान); **अप.**२।२ क्रमेण मनुः; **व्यक.**१२ ज्ञान(धान); **स्मृच.**१७ व्यकवत् ; **रार.**२४ व्यकवत् ; **पमा.**३०; **व्यचि.**४ व्यकवत् ; **व्यनि.** शुची (शुभौ); **सवि.**६६ शुची (अपि) शेषं व्यकवत् ; **व्यसौ.**९ ज्ञौ कर्तव्यौ (विदौ कार्यौ); **वीमि.**२।२ व्यकवत् ; **व्यप्र.**३२ व्यकवत् ; **व्यउ.**१८; **व्यम.**३ राज्ञा (राजा); **विता.**९व्यकवत् ; **प्रका.**९ व्यकवत् ; **समु.**६.

* विता. व्यचिवत् । + व्यउ., व्यम., विता. व्यप्रवत् ।

(१) **अप.**२।२ क्रमेण मनुः; **व्यक.**१२; **स्मृच.**१७; **पमा.**३१ स्व (स); **व्यचि.**४ तु स्व (शुद्ध); **वीमि.**२।२ व्यचिवत् ; **व्यप्र.**३१; **व्यउ.**१८ षः (षैः); **व्यम.**३; **विता.**१०; **प्रका.**९; **समु.**६. (२) **स्मृच.**१८; **पमा.**२४ विवादं प्राप्य ( वादं प्राप्य च); **व्यप्र.**८; **व्यउ.**५; **प्रका.**९; **समु.**२५.

(३) **शुनी.**४।५२३-५२४ तथा (सह); **स्मृच.**१८; **पमा.**२४ सिभिः (सिनः); **व्यप्र.**८; **व्यउ.**५; **प्रका.**९; **समु.**६.

(४) **स्मृच.**१८; **पमा.**२४ ण्हते (ण्हन्ति); **व्यप्र.**८ ण्हते (ह्यते); **व्यउ.**५ मतं (मते); **प्रका.**९; **समु.**७.

(५) **स्मृच.**१८; **पमा.**२४ द्य (द्या); **व्यप्र.**९; **व्यउ.**५ पमावत्; **प्रका.** ९; **समु.**७.

वासिभिर्निर्णयः। अर्थिप्रत्यर्थिनोरननुशयानुमतं स्थानं कुलिकसार्थमुख्यपुरग्रामवासिनो गृह्णते । ग्रामादीनि दश स्थानानि साधारणानि । ग्रामो ग्रामाकारेणावस्थितो जनः। पौरः पुरवासिनां समूहः। गणः कुलानां समूहः। 'कुलानां हि समूहस्तु गणः संपरिकीर्तितः'। इति कात्यायनस्मरणात्। श्रेण्यो रजकाद्यष्टादशहीनजातयः। चातुर्विद्यः आन्वीक्षिक्यादिविद्याचतुष्टयोपेतः । चातुर्विद्यश्चेति चशब्दो विद्वद्भिः पुरुषान्तरैः सह चातुर्विद्यस्य समुच्चयार्थः । 'तस्मान्न वाच्यमेकेन विधिज्ञेनापि धर्मतः'। इति पितामहेनैकस्य धर्मकथननिषेधात्। वर्गिणो गणप्रभृतयः। 'गणाः पाषण्डपूगाश्च व्राताश्च श्रेणयस्तथा। समूहस्थाश्च ये चान्ये वर्ग्याख्यास्ते बृहस्पतिः'॥ इति कात्यायनस्मरणात्। बृहस्पतिग्रहणं गणादिविषयेयमाख्या पूर्वमेव प्रसिद्धेति दर्शयितुम्। आयुधधराणां समूहो व्रातः। 'नानायुधधरा व्राताः समवेतास्तु कीर्तिताः'। इति तेनैवोक्तत्वात्। कुलानि अर्थिप्रत्यर्थिनोः सगोत्राणि। कुलिकाः केचनार्थिप्रत्यर्थिगोत्रजाः वृद्धाः नियुक्ताः प्राड्विवाकसहितास्त्रयः सभ्याः। नृपतिर्ब्राह्मणादिसहितः। ×स्मृच.१८

(२) राजगृहसमीपवर्तिनः सभास्थानान्मुख्यादन्यान्यमुख्यानि स्थानान्याह भृगुः—दशेति। स्वकैरारण्यकैः। ग्रामेऽपीत्यादिशब्दात् ये तु अरण्यादौ ग्रामे च निवसन्ति ते ह्युभयवासिभिः ग्रामवासिभिः अरण्यवासिभिर्वा निर्णयं कुर्युः। उभयव्यवहाराभिज्ञत्वात्तेषाम्। कुलिकाः कुलश्रेष्ठिनः। सार्थिनो ग्रामयात्रादौ मिलितो जनसंघः। मुख्या ग्रामण्यादयः। पुरं मुख्यं नगरम्। तस्मादर्वाचीनो ग्रामः। पुरग्रामनिवासिनां भेदः। कुलिकादीनि पञ्च स्थानानि तानि चारण्यकादिजनविशेषाणामेव। *पमा.२४–२६

(३) आरण्यकादीनां पञ्चानामारण्यकसार्थिकसैनिकोभयानुमतसार्थमुख्या इति पञ्च स्थानानि। कुलानि अनेककुलसमुदायः। कुलिका एव कुलोत्पन्नाः। नियुक्ताः राजनियुक्ता ये केचित्। नृपतिश्चेति दश अत्रारण्याकादीनां पञ्चानां तत्तत्कलहनिर्णयस्थानत्वं, ग्रामादिदशानां तु सकलनिर्णयविवादस्थानत्वमिति। *व्यउ.५

× व्यप्र. स्मृचगतं पमागतं च। * शेषं स्मृचगतम्।

## कात्यायनः

व्यवहारसभालक्षणम्

**धर्मशास्त्रविचारेण मूलसारविवेचनम्।**
**यत्राधिक्रियते स्थाने धर्माधिकरणं हि तत्॥**

यत्र स्थाने मूलस्य आवेदितार्थस्य सारविवेचनं तत्वनिष्कर्षो धर्मशास्त्रविचारेण निर्णेतृभिरधिक्रियते प्रस्तूयते, तत्स्थानं धर्मशास्त्रैरधिक्रियते। मूलसारविवेचनमत्रेति व्युत्पत्त्या धर्माधिकरणम्। हिः प्रसिध्यर्थः। *स्मृच.१९

राजा प्राड्विवाकः। तत्सहकारिणो मन्त्रिणो ब्राह्मणाश्च।

**विनीतवेषो नृपतिः सभां गत्वा समाहितः।**
**आसीनः प्राङ्मुखो भूत्वा पश्येत्कार्याणि कार्यिणाम्॥**
**सह त्रैविद्यवृद्धैश्च मन्त्रज्ञैश्चैव मन्त्रिभिः।**

(१) विनीतवेषे हि नृपतौ प्रतिभाक्षयाभावात् यथातत्वं वादिप्रतिवादिनौ वक्तुमीशाते नान्यथेति। ×व्यमा.२७८

(२) अत्र आसनस्थित्योर्युगपत्कर्तुमशक्यत्वात् विकल्पः। स्मृच.२३

कीदृशाः सभ्या राज्ञा नियोज्याः

**स तु सभ्यैः स्थिरैर्युक्तः प्राज्ञैर्मौलैर्द्विजोत्तमैः।**
**धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैः॥**

(१) सभायै हिताः सभ्यास्तैः स्थिरैर्धर्मनिश्चलचित्तैरभेद्यैरित्यर्थः, धर्मशास्त्रार्थशास्त्रयोरविरोधेन न्यायदर्शनं

* पमा. स्मृचवत्। × व्यचि. व्यमावत्।

(१) **शुनी**.४।५४३ (धर्मशास्त्रानुसारेण अर्थशास्त्रविवेचनम्); **स्मृच**.१९; **पमा**.२२ सार (शास्त्र); **नृप्र**.४ चनम् (कतः); **व्यप्र**.८ (धर्मशास्त्रानुसारेण अर्थशास्त्रविवेचनम्); **व्यउ**.५ (धर्मशास्त्रानुरोधेन अर्थशास्त्रविवेचनम्); **व्यम**.२ मूल (सारा); **प्रका**.१०; **समु**.७. (२) **व्यमा**.२७८; **व्यक**.४; **स्मृच**.२३ खो भू (खः स्थि); **व्यचि**.१; **व्यनि**.; **नृप्र**.२; **वीमि**.२।१; **राकौ**.३८३; **बाल**.२।२; **प्रका**.६ स्मृचवत्; **समु**.९ स्मृचवत्. (३) **स्मृच**.२३; **प्रका**.६.

(४) **मिता**.२।२; **व्यमा**.२७८ स तु (सह) प्राज्ञैर्मौ (प्रज्ञामु); **व्यक**.४ प्राज्ञैर्मौलै (प्रज्ञामूर्ति); **स्मृच**.१५; **रार**.८७ उत्त.; **दीक**.३१ प्राज्ञैर्मौलै (प्रज्ञायुक्तै); **व्यचि**.१ प्राज्ञैर्मौ (प्रज्ञामू); **व्यनि**. स्थिरै (स्थितै) प्राज्ञैः (प्रज्ञा); **नृप्र**.२,४; **वीमि**.२।१ उत्त.; **व्यप्र**.२७; **व्यउ**.१६; **प्रका**.६; **समु**.९.

कार्य इत्युभयोरुपादानम् । असमाधेयविरोधे तु शास्त्रमेवादरणीयं, तस्य बलवत्त्वादिति वक्ष्यति । *व्यमा.२७८

(२) मिता.टीका— स राजा । मौलैः पितृपितामहागतैः । अर्थशास्त्रमौशनसादि । सुबो.२।२

वणिजां व्यवहारसभायां नियोजनम्

**कुलशीलवयोवृत्तवित्तवद्भिरमत्सरैः ।**
**वणिग्भिः स्यात्कतिपयैः कुलभूतैरधिष्ठितम् ॥**

(१) तथा राष्ट्ररञ्जनार्थं राज्ञा कतिपयैर्वणिग्भिरपि सह संसदि स्थातव्यमित्याह—कुलशीलेति । कुलभूतैः वृन्दभूतैरित्यर्थः । +स्मृच.१७

(२) करणमित्यन्वयः । करणं सभा । ×व्यचि.४

(३) कुलभूतैः वृद्धैरित्यर्थः । व्यप्र.३१

**श्रोतारो वणिजस्तत्र कर्तव्या न्यायदर्शिनः ॥**

तेषां कार्यमप्याह स एव—श्रोतार इति । स्मृच.१७

गणकलेखकराजपूरुषनियोजनम्

**संख्यानां ये विधेयाः स्युर्युक्तास्ते राजपूरुषाः ।**
**गणको लेखकश्चैव सर्वांस्तान् विनिवेशयेत् ॥**

राज्ञा स्वस्थाने ब्राह्मणः प्राड्विवाको नियोज्यः

**यदा न कुर्यान्नृपतिः स्वयं कार्यविनिर्णयम् ।**
**तदा तत्र नियुञ्जीत ब्राह्मणं शास्त्रपारगम् ॥**

**दान्तं कुलीनं मध्यस्थमनुद्वेगकरं स्थिरम् ।**
**परत्र भीरुं धर्मिष्ठमुद्युक्तं क्रोधवर्जितम् ॥**

(१) यदा कार्यान्तरवशादिति शेषः । स्मृच.१६

(२) कार्यवशात् राजकार्यान्तरवशात् । कार्यनिर्णयं भाषोत्तरादिकम् । विद्वांसं वेदाविरुद्धतर्कक्षुण्णमतिम् । वेदपारगं परिशीलितधर्मशास्त्रम् । दान्तं तपःक्लेशसहम् । कुलीनं संकरादिदोषशून्यमातापितृपरम्पराकम् । मध्यस्थं सर्वत्र समदृष्टिम् । अनुद्वेगकरं मत्सरपारुष्याद्यकर्तारम् । स्थिरं लोभाद्यनाक्रष्टम् । परत्र भीरुं सदा परलोकसशङ्कम् । धर्मिष्ठं स्ववर्णाश्रमविहितक्रियानिष्ठम् । उद्युक्तं निरलसम् । क्रोधवर्जितं तत्वविचारविरुद्धक्रोधहीनम् । व्यचि.३

**एकं शास्त्रमधीयानो न विद्यात्कार्यनिश्चयम् ।**
**तस्माद्बह्वागमः कार्यो विवादेषूत्तमो नृपैः ॥**

(१) बह्वागमो बहुशास्त्रज्ञः । व्यक.११

(२) बह्वागमग्रहणं गुणान्तरस्यापि प्रदर्शनार्थम् । स्मृच.१६

ब्राह्मणाभावे क्षत्रियवैश्यौ नियोज्यौ, न शूद्रः

**ब्राह्मणो यत्र न स्यात्तु क्षत्रियं तत्र योजयेत् ।**
**वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत् ॥**

(१) एवंभूतब्राह्मणाऽसंभवे क्षत्रियं वैश्यं वा नियुञ्जीत न शूद्रम् । यथाह कात्यायनः—ब्राह्मणो यत्रेति । मिता.२।३

---

*व्यचि. व्यमावत् । +पमा. स्मृचवत् । ×व्यत. व्यचिवत् ।

(१) **मिता**.२।२; **व्यक**.१२; **स्मृच**.१७ वृत्त (वृद्ध) वद्भि (विद्भि); **पमा**.३१; **व्यचि**.४; **व्यनि**.; **स्मृचि**.४; **व्यत**.१९९मत्सरैः (धिष्ठितम्) भूतै (वृद्धै); **व्यसौ**.९; **वीमि**.२।२; **व्यप्र**.३१; **व्यउ**.१७; **विता**.१०; **राकौ**.३८३; **प्रका**.९; **समु**.६.

(२) **शुनी**.४।५२७ न्यायदर्शिनः(सुविचक्षणाः); **स्मृच**.१७; **पमा**.३१; **सवि**.६६ श्रोता (चतु); **व्यप्र**.३१ न्याय (कार्य); **व्यम**.३; **विता**.१० न्यायदर्शिनः (नयदर्शिना); **प्रका**.८; **समु**.६.

(३) **व्यक**.१२; **स्मृचि**.४ र्यु (र्यु); **दवि**.१५ स्मृचिवत्.

(४) **शुनी**.४।५१३ शास्त्र (वेद); **व्यमा**.२७९ (यदि कार्यवशाद्राजा न पश्येत्कार्यनिर्णयम्) तत्र नियुञ्जीत (नियुञ्ज्यात् विद्वांसं) शास्त्र (वेद); **व्यक**.१०(यदा कार्यवशाद्राजा न पश्येत्कार्यनिर्णयम्); **स्मृच**.१६; **रार**.१८ व्यकवत् ; **व्यचि**.३ पूर्वार्धं व्यकवत्, उत्तरार्धं व्यमावत्; **दवि**.१४ व्यकवत्; **व्यत**.१९८ व्यचिवत्; **व्यसौ**.७ यदा (सोऽस्य) शेषं व्यकवत्, संदर्भेण मनुः; **व्यप्र**.२५; **व्यउ**.१५; **सेतु**.९४ व्यचिवत्; **प्रका**.८; **समु**.५; **विव्य**.२ व्यकवत्.

(१) **शुनी**.४।५१४; **मिता**.२।३; **व्यमा**.२७९; **व्यक**.१०; **स्मृच**.१६ दान्तं (दक्षं); **व्यचि**.३; **स्मृचि**.३; **व्यसौ**.७ मनुः; **वीमि**.२।३; **व्यप्र**.२५; **व्यउ**.१५; **प्रका**.८ स्मृचवत्; **समु**.५ स्मृचवत्.

(२) **शुनी**.४।५३४ निश्च (निर्ण); **अप**.२।२ यानो (ते यो); **व्यक**.११; **स्मृच**.१६ नृपैः (नृपः); **रार**.२३ एकं (एवं) निश्च (निर्ण) बह्वा (दुर्गा)षू (नो); **स्मृचि**.४; **व्यसौ**.८ निश्च (निर्ण); **व्यप्र**.२५ व्यसौवत्; **विता**.७ व्यसौवत्, मदनरत्ने कात्यायनः; **प्रका**.८; **समु**.५ व्यसौवत्.

(३) **मिता**.२।३; **स्मृच**.१७; **पमा**.२९; **स्मृचि**.३; **नृप्र**.२,४ सु (चेत्); **मच**.८।२०; **प्रका**.८; **समु**.५.

(२) ब्राह्मणो विद्वानिति शेषः। स्मृच.१७

(३) प्राड्विवाकस्य अनुकल्पमाह— ब्राह्मणो यत्रेति। पमा.२९

(४) मिता.टीका— यत्नेनेति, तस्य धर्मशास्त्रादावनधिकारादिति भावः। बाल.२।३

**[१]यत्र विप्रो न विद्वान्स्यात् क्षत्रियं तत्र योजयेत्।**
**[२]वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत्॥**

क्षत्रियमित्यत्र विद्वांसमिति विद्वद्ब्राह्मणस्थाने विधानाद्गम्यते। यत्नेनेति वदन्नवर्जने गुर्वी हानिर्भवति इति दर्शयति। स्मृच.१७

**[३]अतोऽन्यैर्यत्कृतं कार्यं अन्यायेन कृतं तु तत्।**
**नियुक्तैरपि विज्ञेयं दैवाद्यद्यपि शास्त्रतः॥**

अतोऽन्यैरित्यादि उक्तलक्षणरहितैरन्यैर्नियुक्तैरपि यदि दैवाच्छास्त्रार्थ एव निर्णीतस्तथाप्यन्याय एव स्यादवगन्तव्य इत्यर्थः। व्यक.१२

प्राड्विवाकपदनिरुक्तिः

**[३]व्यवहाराश्रितं प्रश्नं पृच्छति प्राडिति स्थितिः।**
**विवेचयति यस्तस्मिन् प्राड्विवाक इति स्मृतः॥**

अर्थिन् भाषा ते कीदृशी? प्रत्यर्थिन् तवापि कीदृशमुत्तरम्? इति पृच्छतीति प्राट्, श्रुत्वा च युक्तायुक्तं विविनक्तीति विवाकः। विचार्य वा जयपराजयरूपं विविधमर्थं वक्तीति विवाकः। प्राडित्यनेन सह प्राड्विवाकः। +व्यमा.२७९

कीदृशाः सभ्या राज्ञा नियोज्याः

**[१]अलुब्धा धनवन्तश्च धर्मज्ञाः सत्यवादिनः।**
**सर्वशास्त्रप्रवीणाश्च सभ्याः कार्या नृपैर्द्विजाः॥**

असम्यङ्निर्णये सभ्यदण्डः

**[२]कार्यस्य निर्णयं सम्यगज्ञात्वा सभ्यस्ततो वदेत्।**
**अन्यथा नैव वक्तव्यं वक्ता द्विगुणदण्डभाक्॥**

(१) सम्यग् ज्ञानरहितस्य सभ्यस्य द्विगुणं दण्डमाह कार्यस्येति। अप.२।४

(२) एवं मोहवशादप्यन्यथावादिनो दण्ड्या इत्याह —कार्यस्येति। स्मृच.२२

**[३]सभ्यदोषात्तु यन्नष्टं देयं सभ्येन तत्तथा।**
**कार्यं तु कार्यिणामेव निश्चितं न विचालयेत्॥**

(१) अन्यथादर्शिना सभ्येन निर्णीतं विचालयेत्। सम्यक् पुनर्विचारयेदित्यर्थः। *व्यमा.२८३

(२) निर्णयादूर्ध्वं सभ्यदोषपरिज्ञाने तु दमं दाप्य इत्याह स एव—सभ्येति। दुष्टसभ्येनापि निर्णीतं कार्यं न परावर्तयेत्। किन्तु दौष्ट्यान्नष्टं दापयेदित्यर्थः। +स्मृच.२३

**[४]न्यायशास्त्रमतिक्रम्य सभ्यैर्यत्र विनिश्चितम्।**

---

+ व्यत. व्यमागतम्।

(१) शुनी.४।५१५ यत्र(यदा) तत्र (तत्रि); व्यमा.२७९ यत्र (यदि); अप.२।२; व्यक.१२; स्मृच.१७; ममु.८।२०; रार.२३ विप्रो न विद्वान् (विद्वान्न विप्रः); दीक.३१ व्यमावत्; व्यचि.३ व्यमावत्; व्यनि.; दवि.१४ शूद्रं यत्नेन वर्जयेत् (न तु शूद्रं कदाचन); व्यत.१९८ व्यमावत्; व्यसौ.८ रारवत्; व्यप्र.२५; व्यउ.१६ मनुरित्याह; व्यम.२ रारवत्; विता.८ यत्र विप्रो न विद्वान् (यत्राविद्वांस्तु विप्रः); सेतु.९४ व्यमावत्; प्रका.८; समु ५; विव्य.२ व्यमावत्.

(२) अप.२।२; व्यक.१२; रार.२३ कृतं तु यत् (च यत्कृतं).

(३) व्यमा.२७८ क इति (कस्ततः); अप. २।३ स्थितिः (श्रुतिः) वेचयति (वदेत्तत्र) क इति (कस्तु स) वृद्धबृहस्पतिः; व्यत.१९८ यस्त (यत्त) शेषं व्यमावत्; दित.५८३ स्थितिः (स्मृतिः); व्यप्र.१९० स्थितिः (श्रुतिः) शेषं व्यतवत्.; सेतु.९४; विव्य.२ यस्त (यत्त).

* व्यचि., वीमि. व्यमागतम्। + सवि. स्मृचवत्।

(१) अप.२।२ नृपैर्द्विजाः(द्विजोत्तमाः); व्यक.११; रार.२३ ब्धा (ब्ध); व्यनि.; स्मृचि.३ शास्त्रप्रवीणाश्च (शास्त्रार्थनिपुणाः); व्यसौ.८ सर्व (धर्म); विता.७ पैर्द्विजाः (पेण तु); प्रका.७; समु.६.

(२) अप.२।४; व्यक.१५ ज्ञा (कृ) वक्त (कर्त); स्मृच.२२; व्यचि.६ ततो (तथा); दवि.३३८ ज्ञात्वा सभ्यः (कृत्वा सत्यं) नारदः; व्यसौ.११ सम्यग् (सद्यो); वीमि.२।४; प्रका.१३; समु.९.

(३) व्यमा.२८३ तु यन्न (श्रयं न) त्तथा (द्यथा) न (तु) नारदः; अप.२।४ था (दा) मेव (मेवं) चाल (चार); व्यक.१६ सभ्य (सभा) था (दा) मेव (मेवं); स्मृच.२३ था(दा); व्यचि.६ मेव (मेवं) न (तु); दवि. ३३८ मेव (मेवं); सवि.६९ स्मृचवत्; व्यसौ.११ सभ्य (सभा); वीमि.२।४ न (तु)चाल (चार); प्रका.१४ स्मृचवत्; समु.९ स्मृचवत्.

(४) अप.२।४; व्यक.१५; स्मृच.२१; पमा.३२; व्यनि.विनिश्चितम् (तु निश्चितः); नृप्र.५; प्रका.१२; समु.८.

**तत्र धर्मो ह्यधर्मेण हतो हन्ति न संशयः ॥**

ये पुनः शास्त्रोदितविधिमतिक्रम्य निर्णयं कुर्युः तेषां दोषमाह—न्यायेति । स्मृच.२१

**[1]स्नेहादज्ञानतो वाऽपि मोहाद्वा लोभतोऽपि वा ।**
**तत्र सभ्योऽन्यथावादी दण्ड्योऽसभ्यः स्मृतो हि सः ॥**

मोहो विपरीतज्ञानम् । स्मृच.२२

**[2]सम्यग्विज्ञाय सद्भावं गूढं कार्यस्य यत्र वै ।**
**निर्णयं त्वन्यथा कुर्युर्न यथा विहितं तु तत् ॥**
**यत्रानेन विधानेन क्रियते कार्यनिर्णयः ।**
**तत्र सत्यं हतं सभ्यैः नानृतैर्न दुरात्मभिः ॥**

सभ्यैर्धर्मार्थसहितं वचो वक्तव्यम्

**[3]सभ्येनावश्यवक्तव्यं धर्मार्थसहितं वचः ।**
**शृणोति यदि नो राजा स्यात्तु सभ्यस्ततोऽनघः ॥**

(१) अर्थसहितं अर्थशास्त्रोपेतम् । स्मृच.२२

(२) कार्याऽनिष्पत्तावपि यथाशास्त्रवादिनो नास्ति प्रत्यवाय इति स एवाह—सभ्येनेति । यदा तु राजा यथाशास्त्रं धर्मं श्रुत्वा दोषकारिणे पक्षपातं न करोति तदा निष्पापो भवति । पमा.३३

अन्यायप्रवृत्तो राजा सभ्यैर्बोधनीयः नोपेक्ष्यः

**[4]न्यायमार्गादपेतं तु ज्ञात्वा चित्तं महीपतेः ।**
**वक्तव्यं तत्प्रियं नात्र न सभ्यः किल्बिषी भवेत् ॥**

तत्प्रियं न वक्तव्यं राज्ञो मनोऽनुकूलमेव न वाच्यम् । किन्तु न्याय्यम् । एवं सति सभ्यो न किल्बिषी भवेदिति नञ्द्वयान्वयः । व्यप्र.११

**[1]अधर्मतः प्रवृत्तं तु नोपेक्षेरन्सभासदः ।**
**उपेक्षमाणाः सनृपा नरकं यान्त्यधोमुखाः ॥**
**[2]अन्यायेनापि तं यान्तं येऽनुयान्ति सभासदः ।**
**तेऽपि तद्भागिनस्तस्माद्बोधनीयः स तैर्नृपः ॥**

(१) शनैरिति वचनात् तदैव तत्प्रतिकूलबोधनं न पापभयात्कार्यं किन्तु कालान्तरे । स्मृच.२१

(२) अन्यायत इति । तथा चोत्पथगामिनो राज्ञोऽनुसरणे सभ्यस्यापि दोष इत्यर्थः । व्यचि.६

(३) अत्रापि सभ्यानामेव प्रत्यवायो न ब्राह्मणानाम् । *व्यउ.७

(४) मिता.टीका— तं राजानम् । तद्भागिनः राजसंबन्धिदोषभागिन इत्यर्थः । बाल.२।२

निर्णयात्प्राक् रहः वादिसंभाषणं वर्ज्यम्

**[3]अनिर्णीते तु यद्यर्थे संभाषेत रहोऽर्थिना ।**

---

(१) **अप**.२।४ तत्र (अत्र) स्मृतो हि सः (तु स स्मृतः); **व्यक**.१६ तत्र (यत्र)ऽसभ्यः (सभ्यः); **स्मृच**.२२; **पमा**.३३ मोहाद्वा लोभ (लोभाद्वा मोह); **स्मृचि**.४ व्यकवत्, नारदः; **दवि**.३३७ तत्र (यत्र) शेषं पमावत्; **सवि**.६९ हाद (हाच्चा) तत्र (यत्र); **व्यसौ**.११ पूर्वार्धं पमावत्, उत्तरार्धं व्यकवत्; **प्रका**.१३; **समु**.९. (२) **व्यक**.१५. (३) **व्यमा**.२८३ तोऽनघः (दा नृपः) नारदः; **व्यक**.१४ वक्त (कर्त) तु सभ्यस्ततोऽनघः (दसत्यस्ततो नृपः); **स्मृच**.२२; **रार**.२४ वक्त (कर्त) ऽनघः (नृपः); **पमा**.३३ वक्त (कर्त); **व्यचि**.६ व्यमावत्; **स्मृचि**.४ ऽनघः (ऽनृणः); **दवि**.१९ स्मृचिवत्; **नृप्र**.५नावश्य (न तावद्); **व्यत**.१९९ तोऽनघः(दाऽनृणः): २२६ पू.; **व्यसौ**.१० सभ्ये (सत्ये) ऽ नघः (नृपः); **सेतु**.९५ स्यात्तु सभ्यस्ततोऽनघः (स्यादसभ्यस्तदा नृणाम्); **प्रका**.१२; **समु**.८; **विच**.१४३.

(४) **व्यक**. १४ नात्र (तत्र) भवेत् (ततः); **स्मृच**.२१व्यकवत्; **रार**.२५ तत् (तु); **पमा**.३३ वक्त (कर्त) नात्र (तत्र); **व्यचि**.६ न (स); **दवि**.१९ पतेः (भुजः) शेषं व्यकवत्; **नृप्र**.५ चित्तं (कृत्यं); **सवि**.६९ व्यकवत्; **व्यसौ**१०; **व्यप्र**.११ नारदः; **व्यउ**.७ नारदः; **प्रका**. १२ व्यकवत्; **समु**.८व्यकवत्.

* विता. व्यउवत्.

(१) **शुनी**. ४।७६७-७६८ तु (तं); **व्यमा**. २८३ कं (के) नारदः; **अप**.२।४; **व्यक**. १४ सनृपा (ते सर्वे); **स्मृच**.२१; **रार**.२५; **पमा**.३३ अधर्मतः (अपन्याय); **व्यचि**.६ तु (हि); **स्मृचि**.४ रन् (युः); **दवि**.१९; **नृप्र**.५ (इमं न्यायं प्रवृत्तं तु नोपेक्षेत सभासदः । उपेक्षमाणः सनृपो नरकं यात्यधोमुखम् ॥); **सवि**.६९ सनृपा (ते भूपाः); **व्यसौ**.१०; **व्यप्र**.११; **व्यउ**.७ नारदः; **प्रका**.१२; **समु**.८.

(२) **मिता**.२।२; **व्यमा**.२८३ येनापि तं यान्तं (यतो यियासन्तं) पू., नारदः; **अप**.२।४ व्यमावत्; **व्यक**.१४; **स्मृच**.२१ स तै (शनै); **रार**.२५ व्यमावत्; **पमा**.३३; **व्यचि**.६व्यमावत्; **स्मृचि**.४ऽपि (च); **व्यसौ**.१० येनापि तं यान्तं (यतोऽपि यान्तं तं); **व्यप्र**.११ क्रमेण नारदः; **व्यउ**.७ नारदः; **विता**.६; **राकौ**.३८३; **प्रका**.१२स्मृचवत्; **समु**.८ स्मृचवत्.

(३) **व्यमा**.२८३ र्थिना (र्थिनम्) सभ्या (सभ्य); **अप**.२।४ सभ्या (सभ्य); **व्यक**.१६ अपवत्; **स्मृच**.२३; **पमा**.३५

**प्राड्विवाकोऽथ दण्डय: स्यात्सभ्याश्चैव न संशय: ॥**

(१) अर्थिपदेन प्रत्यर्थिनोऽप्युपादानम् । तस्यापि स्वापेक्षयार्थित्वात् । कूटकरणशङ्कायाश्चाऽविशेषात् । तस्माद्धर्मतो व्यवहारो द्रष्टव्यः । व्यमा.२८३

(२) प्राड्विवाकः सभ्या वा व्यवहारनिर्णयात्पूर्वं विजनेऽर्थिना सह संभाषणमात्रादपि दण्ड्या इत्याह— अनिर्णीते त्विति । *स्मृच.२३

राज्ञाऽनधिकृतानां व्यवहारनिर्णये नाधिकारः

**[1]प्राड्विवाकसदस्यानामुपजीव्यमतानि तु ।**
**तद्युक्तियोगाद्योऽर्थेषु निर्णयेत्स तु दण्डभाक् ॥**

यो राज्ञाऽनधिकृतः शूद्रादिः स्वयमज्ञः प्राड्विवाकोक्तयुक्त्या विवादविषयीभूतेष्वर्थेषु निर्णयं करोति स दण्ड्य इत्यर्थः । क्वचित् 'न स दण्डभाक्' इति पाठः । तत्र धर्मशास्त्राभिज्ञो ब्राह्मणः परोक्तयुक्त्याऽपि निर्णयं कुर्वाणो न दण्ड्य इत्यर्थः । तदाह नारदः—'नियुक्तो वाऽनियुक्तो वा' इति । व्यसौ.११

धर्म्यनिर्णयफलम्

**[2]सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः ।**
**ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः ॥**

(१) कात्यायनेन ब्राह्मणानां सभासदां च स्पष्टं भेदो दर्शितः । तत्र ब्राह्मणा अनियुक्ताः, सभासदस्तु नियुक्ता इति भेदः । +मिता.२।२

(२) ननु सर्वेऽपि व्यवहारदर्शनविधयो न तावत्केवलादृष्टार्थाः । प्रजापालनौपयिकदुष्टादुष्टपरिज्ञानस्य दृष्टस्यावश्यकत्वात् । न च तदेव फलमिति वाच्यम् । स्वर्गादिफलस्यादर्शनान्यथादर्शनयोः प्रत्यवायस्य च वचनान्तरैर्बोधनात् । तथा च कात्यायनः— सप्राड्विवाक इति । +व्यप्र.१०-११

**[1]गणाः पाखण्डपूगाश्च व्राताश्च श्रेणयस्तथा ।**
**समूहस्थाश्च ये चान्ये वर्ग्याख्यास्ते बृहस्पतिः॥**

बृहस्पतिग्रहणं गणादिविषयाख्या पूर्वमेवप्रसिद्धेति दर्शयितुम् । *स्मृच.१८

**[2]नानापौरसमूहस्तु नैगमाख्यः प्रकीर्तितः ।**
**नानायुधधरा व्राताः समवेताः प्रकीर्तिताः ॥**
**[3]समूहो वणिगादीनां पूगः स परिकीर्तितः ।**
**ब्राह्मणानां समूहस्तु गण इत्युच्यते बुधैः ॥**

आदिशब्दात् विजातीयलाभः तेन ग्रामनगरादि । गण एकक्रियार्थोद्यतः । व्यत.२२२

पाषण्डशिल्पिसंघव्रजपुञ्जश्रेणिजातिपदार्थाः

**[4]प्रव्रज्यावसिता ये तु पाषण्डाः परिकीर्तिताः ।**
**शिल्पोपजीविनो ये तु शिल्पिनः परिकीर्तिताः ॥**

---

* सवि. स्मृचवत् । + व्यनि., विता., व्यम. मितावत् । न संशयः (विशेषतः); **व्यचि**.७ पू.; **व्यनि**.; **दवि**.३३७ ऽथ (ऽपि) भ्या (भ्य); **नृप्र**.५ पमावत्; **सवि**.६९; **व्यसौ**.११ दविवत्; **प्रका**.१३; **समु**.९ पमावत्.

(१) **व्यक**.१६ (प्राड्विवाकः सदस्यानामुपजीव्यमतानि तु । न युक्तियोगाद्यर्थेषु निर्णयेत्तु स दण्डभाक् ॥); **दवि**. ३३९ त्स तु (त्तु स); **व्यसौ**.११.

(२) **शुनी**.४।५०६ पू.; **मिता**.२।२; **व्यमा**.२७८; **व्यक**.४; **स्मृच**.१४; **पमा**.३२; **दीक**.३१ स्वर्गे (धर्मे); **व्यचि**.१; **व्यनि**.; **स्मृचि**.२; **नृप्र**.२,५,७; **व्यत**.१९८ उत्तरार्धे (स्वयं स राजा चिनुयात् तेषां जयपराजयौ); **सवि**. ६४; **व्यप्र**.११; **व्यउ**.६ याज्ञवल्क्यः; **व्यम**.२; **विता**.४; **राकौ**.३८३; **सेतु**.९४ उत्तरार्धे (स्वयं स राजा तनुयात् तेषां जयपराजयौ); **प्रका**.६-७; **समु**.८; **विव्य**.२ सेतुवत्.

+ व्यउ. व्यप्रवत् । * सवि. स्मृचवत् ।

(१) **स्मृच**.१८; **विर**.६६९ ण्णाः (ण) र्ग्या (र्गा); **पमा**. २६ र्ग्याख्यास्ते (र्णाख्या ये); **दवि**.११ र्ग्या (र्गा); **सवि**. ६७; **प्रका**.९; **समु**.११ दविवत्.

(२) **स्मृच**.१८,२२३ प्र (तु) उत्त.; **विर**.६६८ माख्यः (मस्तु) रा (र); **पमा**.३५२ स्मृचवत्, उत्त.; **व्यनि**. माख्यः (मुख्यः); **दवि**.३१ माख्यः प्र (मः परि) धरा (भृतो) मवेताः प्र (मेताः परि); **व्यप्र**.३३३ स्मृचवत्, उत्त.; **व्यउ**.९१ स्मृचवत्, उत्त.; **प्रका**.९-१०; **समु**.११.

(३) **स्मृच**.१८,२२३ (कुलानां हि समूहस्तु गणः संपरिकीर्तितः) उत्त.; **विर**.६६९ स प (संप) गण ...बुधैः (गणः संपरिकीर्तितः); **पमा**.३५२ (कुलानां तु समुहो यो गणः स परिकीर्तितः) उत्त.; **दीक**.३४ पू.; **व्यनि**.; **दवि**.३१ विरवत्; **व्यत**.२२२ पू.; **वीमि**.२।३० पू.; **व्यप्र**. ३३३ स्मृचवत्, उत्त.; **व्यउ**.९१ स्मृचवत्, उत्त.; **प्रका**.१० स प (संप); **समु**. ११ 'कुलानां हि समूहस्तु गणः संपरिकीर्तितः' अयमपि पाठो ज्ञेयः. (४) **विर**.६६९; **दवि**.३१ ण्डाः ...ताः (ण्डास्तु उदाहृताः) तु (ते).

य: सौगताहॆतादीनां समूहः संघ उच्यते ।
चतुष्पदां गवादीनां समूहो व्रज उच्यते ॥
असच्छास्त्राधिगन्तॄणां समूहः पुञ्ज उच्यते ।
चण्डालश्वपचादीनां समूहो गुल्म उच्यते ॥
कारुशिल्पिप्रभृतीनां निवहः श्रेणिरुच्यते ॥
चातुर्वर्ण्यस्य या सूतिरसजात्यादिसंभवा ।
तस्या धर्माः समुद्दिष्टा जातिः सा परिकीर्तिता ॥

ग्रामश्रेणिगणादीनां कार्यनिर्णेतारस्तेषामेव शिष्टाः

ग्रामश्रेणिगणादीनां भवेयुः कार्यचिन्तकाः ॥
शुचयो वेदधर्मज्ञा दक्षा दान्ताः कुलोद्भवाः ।
सर्वकार्यप्रवीणाश्चाऽलुब्धा वृद्धा महत्तराः ॥
कर्तव्यं वचनं तेषां समूहहितवादिनाम् ।
पूगनैगमपाषण्डसंघानामप्ययं विधिः ॥
वणिक्शिल्पिप्रयोगेषु कृषिरङ्गोपजीविषु ।
अशक्यो निर्णयो ह्यत्र तत्वज्ञैरेव कारयेत्* ॥
तपस्विनां तु कार्याणि त्रैविद्यैरेव कारयेत् ।
मायायोगविदां चैव न स्वयं कोपकारणात् ॥
सम्यग्विज्ञानसंपन्नेनोपदेशं प्रकल्पयेत् ।
उत्कृष्टजातिशीलानां गुर्वाचार्यतपस्विनाम् ॥

सम्यग्विज्ञानसंपन्नेनेति तृतीयान्तं पदम् । तथा च तज्ज्ञानोत्कृष्टजातिशीलानां गुर्वाचार्यतपस्विनामुपदेशं प्रकल्पयेत् कारयेत् । न स्वयमुपदेशं तेषां कुर्यादित्यर्थः । तानि न सर्वथा राज्ञो व्यवहारप्रदर्शनप्रतिषेधपराणि । किन्तु तत्तत्कार्ये वणिगादीनामभियुक्तत्वात्तान्विहाय न व्यवहारनिर्णयः करणीय इत्येवंपराणि । यथाहुः—'अभियुक्ताश्च ये यत्र यन्निबन्धनियोजनाः । तत्रत्यगुणदोषाणां त एव हि विचारकाः इति' ॥ 'तत्र तत्त्वमभियोगविशेषात् स्यात्' (पूमी.१।३।२७) इति जैमिनिरपि साधुशब्दाधिकरणे सूत्रयामास । अत एव— 'चिकीर्षुर्हितमात्मनः' 'सान्त्वेन प्रशमय्य' 'कोपकारणात्' इत्यादि हेतुप्रदर्शनम् । यथा तत्त्वावधारणं स्वानिष्टनिवारणं च भवति तथा कौशलेन निर्वाहणीयमित्यत्र तात्पर्यम् ।

*व्यप्र.२३

कुलश्रेणिगणाधिकृतनृपाणामुत्तरोत्तरं प्रामाण्यमधिकम्

कुलानि श्रेणयश्चैव गणस्त्वधिकृतो नृपः ।
प्रतिष्ठा व्यवहाराणां गुर्वेभ्यस्तूत्तरोत्तरम्+ ॥
कुलैश्च यत्कृतं कार्यं विचार्यं तद्यथोत्तरम् ।
असंतुष्टस्य कर्तव्यं यावद्राजकृतं भृगुः ॥
अनिर्दिष्टाश्च ये कुर्युर्व्यवहारविनिश्चयम् ।
राजवृत्तिप्रवृत्तास्ते तेषां दण्डं प्रकल्पयेत् ॥

'अनिर्दिष्टाश्च' इति कात्यायनवचनमधार्मिकाशास्त्रज्ञविषयम् । येषां पुनरनियुक्तानामपि नाधर्मशङ्का, राज्ञाऽपि मत्कृत्यमेवैते कुर्वन्तीति सामान्यतो येऽनुमन्यन्ते अनुकम्प्या एते इत्युपेक्ष्यन्ते वा । तैरनियुक्तैरपि व्यवहारदर्शने प्रवर्तितव्यमेवेत्याहुः । दवि.३४०

## पितामहः

अष्टाङ्गकरणम् । तत्र कार्यदर्शनम्

लेखको गणकः शास्त्रं साध्यपालः सभासदः ।
हिरण्यमग्निरुदकमष्टाङ्गं करणं स्मृतम् ।
तदध्यास्यानिशं पश्येत्पौरैः कार्यं निवेदितम् ॥

पौरग्रहणं स्वराष्ट्रगताऽखिलजनोपलक्षणार्थम् । स्मृच.२७

कुलादिकृतनिर्णयः नृपस्थाने परिवर्तनमर्हति

पूर्वस्थानगता वादा धर्मतोऽधर्मतोऽपि वा ।

---

* व्याख्यासंग्रहः एतस्मिन्नेव व्यासवचने (पृ.६४) द्रष्टव्यः ।

(१) विर.६६९ यः ...दीनां (आर्हतसौगतानां तु) पू.; व्यनि.; दवि.३१ यः सौगताहॆता (अर्हतां सौगता) पू.; प्रका.१०; समु.११.

(२) विर.६६९ उत्त.; व्यनि.; दवि.३१ चण्डा (चाण्डा) उत्त.; प्रका.१०; समु.११. (३) व्यनि. वहः (वासः); प्रका.१०; समु.११. (४) विर.६६९. (५) व्यनि.; प्रका.१०; समु.११. (६) व्यनि.; प्रका.१०. (७) व्यनि.; प्रका.१०. (८) व्यक.१३ तत्वज्ञैरेव (तज्ज्ञैरेव तु); व्यसौ.९. (९) व्यमा.२८१ बृहस्पतिकात्यायनौ; व्यक.१३ तु (च) बृहस्पतिकात्यायनौ; दवि.१६ बृहस्पतिकात्यायनौ. (१०) शुर्नी. ४।५२२-५२३; व्यक.१३ कल्प (वर्त) गुर्वा (शुद्धा); व्यसौ. १० जाति (ज्ञाति); व्यप्र.२३; व्यउ.१४; विता.२६ ने (न्नो).

* व्यउ. व्यप्रवत् । + व्याख्यासंग्रहः स्थलादिनिर्देशश्च नारदे (पृ.४२ स्तम्भः १) द्रष्टव्यः ।

(१) व्यमा.२८० मनुकात्यायनौ. वस्तुतस्तु नारदस्य (नास्मृ. १।७). (२) व्यक.१३. (३) व्यक.१३ राज (राद्य); स्मृचि.४; दवि.३४० निश्च (निर्ण). (४) स्मृच.२७; सवि.७२-७३; प्रका.१६; समु.१२. (५) स्मृच.१८ ते (न); सवि.६८ नृप (राज); प्रका.९; समु.७.

**नृपस्थानं समाश्रित्य पूर्ववादं भजन्ति ते ॥**

शास्त्रितसभायाः सभान्तरेभ्यः प्राबल्यमाह पितामहः—पूर्वस्थानेति । पूर्ववादं पूर्वपक्षमित्यर्थः । नृपस्थानग्रहणं प्रबलस्थानोपलक्षणार्थम् । स्मृच.१८

**(३) कुलादिभिः कृतं कार्यं विचार्यं तद्यथोत्तरम् ।**
**असंतुष्टस्य कर्तव्यं यावद्राजकृतं भवेत् ॥**
**(४) ग्रामे दृष्टः पुरं यायात् पुरे दृष्टस्तु राजनि ।**
**राज्ञा दृष्टः कुदृष्टो वा नास्ति तस्य पुनर्भवः ॥**

यत्पुनः पितामहेनोक्तं 'ग्रामे दृष्ट' इत्यादि, तत् पूर्वसभातः प्रकृष्टसभान्तरालाभविषयम् । स्मृच.१२९

बहुभिरेव निर्णेयम्

**(३) तस्मान्न वाच्यमेकेन विधिज्ञेनापि धर्मतः ॥**

## प्रजापतिः

अभिषिक्तः क्षत्रियो राजा ब्राह्मणो वा प्राड्विवाकः

**(१) राजाऽभिषेकसंयुक्तो ब्राह्मणो वा बहुश्रुतः ।**
**धर्मासनगतः पश्येद्व्यवहाराननुल्बणः ॥**

(१) अनुल्बणोऽनुद्धत इत्यर्थः । एतदपि राज्ञोऽभिषिक्तस्य व्यवहारदर्शनं कर्तव्यमिति विधानार्थं न पुनरितरस्य प्रतिषेधार्थं तथात्वे परिसंख्यापत्तेः । अत एवानन्तरमेवोक्तं तेनैव एवमिति । स्मृच.१६

(२) अत्र राजशब्दोऽवेष्ट्यधिकरणन्यायेन (पूमी.२।३।२) क्षत्रियजातिवचनः । अभिषेकसंयुक्त इति वचनात् । स्मृत्यन्तरेऽप्यभिषिक्तक्षत्रियं प्रक्रम्य तदभिधानाच्चानभिषिक्तक्षत्रियस्य नाधिकारः । अतश्च तत्प्रयुक्तशुभाशुभफलयोस्तद्गामितैव । प्राड्विवाकादीनां तु प्राक् प्रदर्शितेभ्यः 'अन्यायेनापि तं यान्तम्' इत्यादिवाक्येभ्यो राज्ञोऽनिवारणे परं दृष्टादृष्टदोषभागिता । अनियुक्तानां तु न तत्रापीत्यादि मिताक्षरादौ व्यक्तम् । ब्राह्मणो वेत्यनुकल्पत्वाभिप्रायको वाशब्दो न तुल्यकक्षाधिकारपरः । अनुल्बणः अनुद्धतः । सभापतिश्च नृपतिरेव । 'दुर्गमध्ये गृहं कुर्यात्' इत्यादिना बृहस्पत्यादिभिः सभानिर्माणतद्रक्षणादेस्तत्र सभ्योपवेशनादेश्च तं प्रत्येव विधानात् । 'अदण्ड्यान्दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकं चैव गच्छति' ॥ मस्मृ. (८।१२८) 'अपि भ्राता सुतोऽर्घ्यो वा श्वशुरो मातुलोऽपि वा । नादण्ड्यो नाम राज्ञोऽस्ति धर्माद्विचलितः स्वकात्' ॥ (यास्मृ. १।३५८) इत्यादिभिर्नित्यकामाधिकारयोस्तस्यैव ग्रहणात् । प्रजापालनाधिकाराच्च । *व्यप्र.२५-२६

सामन्तक्षत्रियाः प्राड्विवाका भवन्ति, अक्षत्रियराज्ञां ब्राह्मणा एव

**(२) एवं क्षत्रियसामन्ताः स्वदेशेषु पृथक्पृथक् ।**
**इतरेषां नृपाणां तु कुर्याद् ब्राह्मणपुङ्गवः ॥**

धर्मासनगता अनुल्बणाः सन्तः क्षत्रियसामन्ता व्यवहारान्पश्येयुः । इतरे पुनर्नृपाः ब्राह्मणवैश्यादिजातीयाः स्वाधिकारसिद्धये ब्राह्मणश्रेष्ठमेव सदा व्यवहारद्रष्टारं कुर्युरित्यर्थः । यत्पुनस्तेन 'ब्राह्मणो वा बहुश्रुत' इति पक्षान्तरमुक्तं, तदपि न ब्राह्मणस्याधिकारप्रतिपादनपरं किन्तु विनाऽपि राजानं बहुश्रुतः प्राड्विवाको वा राजनियोगात्पश्येदित्येवंपरम् । ब्राह्मणस्य नास्त्यधिकारो व्यवहारदर्शन इति प्रागेव दर्शितत्वात् । स्मृच.१६

स्ववर्गे वर्गीयास्त्रयो निर्णेतारः

**(२) स्ववर्गे त्र्यवरा धर्मान्प्रब्रूयुः ।**

## हारीतः

प्राड्विवाकेन शल्यमुद्धरणीयम्

**(३) यथा शल्यं भिषक्कायादुद्धरेद्यन्त्रयुक्तिभिः ।**
**प्राड्विवाकस्तथा शल्यमुद्धरेद्व्यवहारतः+ ॥**

भिषक् वैद्यः । शल्यमत्र छलम् । रार.१९

मिथ्यादर्शननिन्दा

**(४) अन्धो मत्स्यानिवाश्नाति निरपेक्षः सकण्टकान् ।**
**परोक्षमर्थवैकल्याद्भाषते यः सभां गतः + ॥**

---

(१) **व्यनि.**; **प्रका**.९; **समु**.७. (२) **अभा**.७ पुरं यायात् (पुरे याति) तस्य पुनर्भवः (पौनर्भवो विधिः); **स्मृच**. १९,१२९; **पमा**.४२ पुरं (पुरे) भवः (भयम्); **प्रका**.९; **समु**.७. (३) **स्मृच**.१८; **सवि**.६७; **प्रका**.९; **समु**.८. (४) **स्मृच**.१६,२३; **पमा**.३६ णः (णम्); **नृप्र**.५; **व्यप्र**. २५; **व्यउ**.१२ पमावत्; **प्रका**.७; **समु**.५.

* व्यउ. व्यप्रवत् । +व्याख्यासंग्रहः नारदे (पृ.४७,४८)द्रष्टव्यः ।

(१) **स्मृच**.१६; **प्रका**.७; **समु**.५. (२) **मभा**.११।२४. (३) **व्यक**.१० यन्त्र (यत्न) भिः (तः) नारदहारीतौ; **रार**. १९ (यथा शल्यं भिषक्कार्यमुद्धरेन्मन्त्रशक्तितः); **व्यनि.**; **व्यप्र**. २४ भिः (तः) नारदहारीतौ; **व्यउ**.१५ व्यकवत्. (४) **व्यक**. १४ नारदहारीतौ; **स्मृच**.२१; **प्रका**.१२ भां (भा); **समु**.८.

हारीतस्तु वृषलस्य नरकमाह—अन्ध इति। स्मृच.२१

अधर्म्यनिर्णयदोषभागिनः

**पादोऽधर्मस्य कर्तारं पादः साक्षिणमृच्छति ।**
**पादः सभासदः सर्वान् पादो राजानमृच्छति* ।।**

धर्म्यनिर्णयशुभफलम्

**राजा भवत्यनेनास्तु मुच्यन्ते च सभासदः ।**
**एनो गच्छति कर्तारं निन्दार्हो यत्र निन्द्यते* ।।**

## व्यासः

पुरोहितः प्राड्विवाको भवति

**राजा पुरोहितं कुर्यादुदीर्णं ब्राह्मणं हितम् ।**
**श्रुताध्ययनसंपन्नमलुब्धं सत्यवादिनम् ।।**

(१) एकत्वमत्र विवक्षितम् । यूपं छिनत्तीतिवत् उत्पाद्यगतत्वात् । हितमिति वदन् राज्ञ उच्छृङ्खल प्रवृत्तिर्दण्ड्याऽदण्ड्येषु पुरोहितेन निवार्येति दर्शयति । अत एव वसिष्ठेन राज्ञो दण्डशास्त्रार्थाऽतिक्रमे पुरोहितस्यापि प्रायश्चित्तमुक्तम्—'दण्ड्योत्सर्गे राजैकरात्रमुपवसेत्, त्रिरात्रं पुरोहितः, कृच्छ्रमदण्ड्यदण्डने पुरोहितः, त्रिरात्रं राजेति'। स्मृच.१५

(२) शान्तिकपौष्टिकाद्यर्थमिव व्यवहारदर्शनार्थं पुरोहितोऽपि राज्ञाऽधिकर्तव्य इत्याह व्यासः—राजेति । उदीर्णं उद्युक्तम् । ×व्यप्र.२८

**सर्वशास्त्रार्थवेत्तारमलुब्धं न्यायभाषिणम् ।**
**विप्रं प्राज्ञं क्रमायातममात्यं स्थापयेद्द्विजम् ।।**

अमात्यस्य पुनर्लक्षणमुक्तं व्यासेन—सर्वशास्त्रेति । सत्यपि विप्रग्रहणे पुनर्द्विजग्रहणमुक्तलक्षणान्वितविप्राभावे तल्लक्षणं क्षत्रियं वैश्यं वाऽमात्यं स्थापयेत्, न शूद्रमपीति दर्शयितुम् । यत आह स एव—'द्विजान्विहाय यः पश्येत्कार्याणि वृषलैः सह । तस्य प्रक्षुभ्यते राष्ट्रं बलं कोशश्च नश्यति' ।। इति अमात्यमित्येकत्वमुपलक्षणमात्रं उद्देश्यगतत्वात् । *स्मृच. १४

प्राड्विवाकलक्षणं, प्राड्विवाकपदनिरुक्तिश्च

**दान्तः कुलीनो मध्यस्थो रागद्वेषविवर्जितः ।**
**सोऽस्य कार्याणि संपश्येत् सभ्यैरेव त्रिभिर्वृतः ।।**
**विवादानुगतं पृष्ट्वा ससभ्यस्तत् प्रयत्नतः ।**
**विचारयति येनासौ प्राड्विवाकस्ततः स्मृतः+ ।।**

इदं त्वस्य निरुक्तमात्रं, प्राड्विवाकत्वं तु व्यवहारक्षमतैव । व्यचि.४

ब्राह्मण एव प्राड्विवाकः न त्वन्ये वर्णाः

**जातिमात्रोपजीवी वा कामं स्याद् ब्राह्मणब्रुवः ।**
**धर्मप्रवक्ता नृपतेर्न तु वर्णास्त्रयोऽपरे ।।**

अविद्वत्क्षत्रियवैश्यविषयमिदम् । व्यनि.

**द्विजान्विहाय यः पश्येत्कार्याणि वृषलैः सह ।**
**तस्य प्रक्षुभ्यते राष्ट्रं बलं कोषश्च नश्यति ।।**

(१) व्यासस्तु अमात्यादिस्थानेऽपि शूद्रपरिग्रहे दोषमाह—द्विजानिति । अतस्तद्दोषपरिहाराय अमात्यादिस्थानेऽपि शूद्रान्वर्जयेदित्यभिप्रायः । स्मृच. १७

(२) एतेन विचारणे वृषलसहायताऽपि निरस्ता । व्यचि. ३

---

* व्याख्यासंग्रहः मनौ (पृ.३६) नारदे (पृ.४६) च द्रष्टव्यः ।

× शेषं स्मृचवत् ।

(१) **व्यक**.१५ मनुनारदहारीतबौधायनाः; **दवि**.१७ व्यकवत्; **व्यत**.२०० व्यकवत्; **सेतु**.९६ व्यकवत्.

(२) **व्यत**.२०० मनुनारदबौधायनहारीताः; **सेतु**.९६ मनुनारदहारीतबौधायनाः. (३) **स्मृच**.१५ र्णं (र्च्यं); **व्यप्र**.२८; **प्रका**.७; **समु**.६.

(४) **स्मृच**.१४; **नृप्र**.७; **व्यम**.२; **विता**.६ वेत्ता(वक्ता) विप्रं (विज्ञं) मदनरत्ने व्यासः; **प्रका**.७; **समु**.६.

* व्यम. स्मृचवत् । + 'विवादे पृच्छति' इति बृहस्पतिवचने व्यप्र. व्याख्यानं (पृ.५२ स्तम्भः १) द्रष्टव्यम् ।

(१) **व्यनि**.पू.; **प्रका**.८; **समु**.५.

(२) **मिता**.२।३; **व्यक**.१० गतं (मतं); **स्मृच**.१७स्तत् (स्तं); **रार**.१९ पृ (द्दृ) स्तत् (स्तु); **व्यचि**.४ विवादा (विचारा) पृ (क्तृ); **व्यनि**.गतं (मतं) स्तत् प्र (स्तत्र); **व्यनि**.(मयारामः) १-२ स्तत् (स्तान्); **व्यसौ**.७; **व्यप्र**.२४; **विता**.५ चार (वेच); **प्रका**.८स्मृचवत्; **समु**.५ स्तत् (स्तं) चार (वेच); **भाच**.८।७९ पृष्ट्वा सस (दृष्ट्वा समे): ९।२३४ (विवादानुगतं पृच्छेत् सभ्यांस्तान् प्रतिवर्तते ).

(३) **व्यनि**.उत्त.; **व्यउ**.१६ वर्णास्त्रयोऽपरे (शूद्रःकथञ्चन); **प्रका**.८; **समु**.५. (४) **व्यमा**.२८०; **अप**.२।२; **व्यक**.१२; **स्मृच**.१४,१७ षश्च (शं च); **रार**.२४ जान् (जं) षश्च (षं च); **पमा**.२९ संदर्भेण मनुः; **व्यचि**.३ षश्च (षं च); **व्यनि**.स्मृचवत्; **नृप्र**.७; **व्यत**.१९८ ष्ट्रं (ज्यं); **सवि**.६५; **व्यसौ**.८; **व्यप्र**.२५; **व्यउ**.१६; **सेतु**.९५ क्षुभ्यते (स्खलते) कात्यायनः; **प्रका**.७; **समु**.६.

(३) इदं वचनं स्मृतिचन्द्रिकायाममात्यादिस्थानेऽपि शूद्रं वर्जयेत् किमुत धर्मनिर्णय इत्येवंपरमुक्तं । दोषातिशयकीर्तनात् । कल्पतर्वादिषु तु प्रकरणाद्व्यवहारदर्शन एव शूद्रवर्जकत्वेन लिखितम् । अयं च प्रतिषेधोऽदृष्टार्थ एव । राष्ट्रक्षोभादेरदृष्टद्वारकफलस्यैव संकीर्तनात् । चण्डेश्वरेण तु शूद्रस्य धर्मज्ञानेऽपि वेदाऽविरोधप्रतिसंधानविरहात्तत्प्रतिसंधानस्य च सम्यङ्निर्णयोपायत्वात् त्याग इति युक्तिरप्युक्ता । सा वणिगादिष्वप्यतिप्रसक्तेत्यन्वाचयमात्रम् । *व्यप्र.२५

शूद्रस्य श्रौतस्मार्तधर्मोक्तिनिषेधः

**यः शूद्रो वैदिकं धर्मं स्मार्तं वा भाषते यदि ।**
**तस्य दण्डं द्वे सहस्रे सृक्किणी चैव भेदयेत् ॥**
**दुःशीलोऽपि द्विजः पूज्यो न शूद्रो विजितेन्द्रियः ।**
**दुष्टां गां कः परित्यज्यार्चयेत् शीलवतीं खरीम् ॥**

प्रशस्तसभ्यः

**अर्थिप्रत्यर्थिनौ सभ्यान् लेखकं प्रेक्षकांश्च यः ।**
**धर्मवाक्यै रञ्जयति स सभास्तारतामियात् ॥**

(१) सभ्येष्वप्यर्थ्यादिरञ्जकः सभास्तारोऽखिललोकश्लाघ्यो भवतीत्याह—अर्थीति । स्मृच.२०

**परस्परं विसंवादं सन्देहात्कुर्वतो नरान् ।**
**यस्तेषां संशयच्छेत्ता स सभ्यः प्राणदः स्मृतः ॥**

नरान् विवदतः, निवार्य इति शेषः । स्मृच. २१

गणकलेखकसाध्यपालाः

**त्रिस्कन्धज्योतिषाभिज्ञं स्फुटप्रत्ययकारकम् ।**
**श्रुताध्ययनसंपन्नं गणकं योजयेन्नृपः ॥**
**स्फुटलेखं नियुञ्जीत शाब्दलक्षणिकं शुचि ।**
**स्पष्टाक्षरं जितक्रोधमलुब्धं सत्यवादिनम् ॥**
**साध्यपालस्तु कर्तव्यो राज्ञा साध्यस्य साधकः ।**
**क्रमायातो दृढः शूद्रः सभ्यानां च मते स्थितः ॥**

त्रिस्कन्धज्यौतिषाभिज्ञं होरा, गणितं, संहितेति स्कन्धत्रयसहितज्योतिःशास्त्राभिज्ञमित्यर्थः । श्रुताध्ययनसंपन्नमिति विशेषणं गणकस्य द्विजातित्वख्यापनार्थम् । शूद्रादेस्तदसंभवात् । लेखकोऽपि तत्साहचर्यात् द्विज एव । अत एव साध्यपालस्य द्विजत्वपरिहारार्थं साध्यपाल इति । शूद्रग्रहणं तेनैव कृतम् । साध्यस्यार्थिप्रत्यर्थिसाक्ष्यादीनामाह्वानादिकार्यस्येत्यर्थः । ×स्मृच.१७

गुरुस्वामिकुटुम्बिपिताज्येष्ठबन्धुपितामहकुलग्रामश्रेणिगणराजाधिकृतानां स्वस्वविषये निर्णयाधिकारः

**कार्येष्वधिकृता राज्ञा ग्रामश्रेणिगणाः कुलम् ॥**
**गुरुः स्वामी कुटुम्बी च पिता ज्येष्ठः पितामहः ।**
**विवादानपि पश्येयुः स्वाधीने विषये नृणाम् ॥**
**वणिक्शिल्पिप्रभृतिषु कृषिरङ्गोपजीविषु ।**
**अशक्यो निर्णयो ह्यन्यैस्तज्ज्ञैरेव तु कारयेत् ॥**

(१) वणिगादिसमयेषु समयिभिरेव निर्णेतव्यम् । तदाह व्यासः—वणिगिति । पमा. ४१

(२) उपलक्षणं त्वेतत् । यो यत्र विज्ञस्तत्साहित्येन तन्निर्णेतव्यमित्यर्थः । *व्यचि. ५

(३) एतदुक्तं भवति, सर्वेषु समयेषु शास्त्रोक्तवर्गेण स्वसमयेन निर्णीतो व्यवहारः सिध्यति इति । तत्रोत्तरः पूर्वस्मात् पूर्वस्माद्गुरुः । तत आनृपाद्दर्शनं पुनर्युज्यते । नृपेण दृष्टे व्यवहारे उत्तरोत्तरस्याऽभावात् पुनः प्रसङ्गो नास्ति । व्यनि.

(४) [एतानि वचनानि] न सर्वथा राज्ञो व्यवहार-

---

* व्यउ. व्यप्रवत् ।

(१) व्यत.१९८. (२) शुनी.४।५३६-५३७; स्मृच.२० धर्मं (धर्म्यं) सभास्तार (सभ्यःश्लाघ्य); व्यप्र. ३२ कं (क); व्यउ.१९ व्यप्रवत्; प्रका.११; समु.८.

(३) स्मृच.२१; प्रका.११; समु.८.

(४) स्मृच.१७; पमा.३०; व्यप्र.३२ योज (कार); व्यउ.१८ स्फुट (स्फुटं) योज (कार); प्रका.८ स्फुट (स्फुटं); समु.६. (५) स्मृच.१७; पमा.३० ब्दलक्ष (ब्दं लाक्ष) चि (चिम्); व्यप्र.३२ शाब्दल (शब्दला) चि (चिम्); व्यउ.१८

× व्यप्र. स्मृचवत् । * वीमि. व्यचिवत् ।

शाब्दलक्षणिकं शुचि (शब्दान् लाक्षणिकान् शुचीन्) स्पष्टा (स्फुटा); प्रका.९; समु.६. (१) स्मृच.१७; पमा.३०; व्यप्र. ३१; व्यउ.१८; व्यम.३; विता.११; प्रका.९; समु.६. (२) व्यनि.; प्रका.१०; समु.११. (३) पमा.४२ दानपि (दं नैव); व्यनि.; प्रका.१०; समु.११ नपि (नथ).

(४) शुनी. ४।५२० उत्त.; पमा.४२; व्यचि.४-५ भृतिषु (योगे तु) न्यैस्तज्ज्ञैरेव तु (त्र तत्वज्ञैरेव) नारदः; व्यनि. वीमि.२१२ भृति (योगे) शेषं व्यचिवत्, मनुः; व्यप्र.२३ ज्ज्ञैरेव तु (दीयैरेव); व्यउ.१४; व्यम.४; विता.२६ ह्यन्यैस्तज्ज्ञैरेव तु (ह्येषु तदर्हैरेव) उत्त.; प्रका.१०; समु.११.

दर्शनप्रतिषेधपराणि किन्तु तत्तत्कार्ये वणिगादीनामभियुक्तत्वात्तान्विहाय न व्यवहारनिर्णयः करणीय इत्येवंपराणि । व्यप्र. २३

## स्मृत्यन्तरम्

राज्ञा प्राड्विवाको नियोज्यः

[1]अक्रूरो मधुरः स्निग्धः क्रमायातो विचक्षणः ।
उत्साहवानलुब्धश्च वादे योज्यो नृपेण तु ॥

ब्राह्मणसभायां हस्तव्यापाररीतिः

[2]ब्राह्मणानां तु सदसि दक्षिणं बाहुमुद्धरेत् ॥

## अनिर्दिष्टकर्तृकवचनम्

शूद्रो निर्णये नाधिकारी

[3]पण्डितस्यापि शूद्रस्य धर्मार्थनिरतस्य च ।
वचनं न प्रतिग्राह्यं शुनोच्छिष्टं हविर्यथा ॥

तत्तद्वर्गे तद्वर्गीयशिष्टाः प्रमाणम्

[4]अभियुक्ताश्च ये तत्र यन्निबन्धनियोजनाः ।
तत्रत्यगुणदोषाणां त एव हि विचारकाः ॥

सभ्येन अधर्म्यदर्शनं न कर्तव्यम्

[5]महादीक्षायुतो वाऽपि यो लोभादन्यथा वदेत् ।
सभ्योऽसभ्यः स विज्ञेयस्तत्पापं विन्दतेतराम् ॥

## अग्निपुराणम्

राजा प्राड्विवाकः । तत्सहकारिणः ब्राह्मणाः । राज्ञा स्वस्थाने ब्राह्मणो वा नियोज्यः ।

[6]व्यवहारान्नृपः पश्येत् ज्ञानिविप्रैरकोपनः ।
शत्रुमित्रसमाः सभ्या अलोभाः श्रुतिवेदिनः ।
अपश्यता कार्यवशात्सभ्यैर्विप्रं नियोजयेत् ॥

## शुक्रनीतिः

सर्ववर्णीयो राजा प्राड्विवाकः । सभ्यास्तद्वर्णजाः प्रशस्ताः । तद्वर्णजो वा प्राड्विवाकः । सर्वजातीयाः सभ्या भवितुमर्हन्ति । अपक्षपातेन निर्णयः कार्यः ।

[7]नैकः पश्येच्च कार्याणि वादिनोः शृणुयाद्वचः ॥
रहसि च नृपः प्राज्ञः सभ्याश्चैव कदाचन ।
पक्षपाताधिरोपस्य कारणानि च पञ्च वै ॥
रागलोभभयद्वेषाद्वादिनोश्च रहःश्रुतिः ॥
[1]यद्वर्णजो भवेद्राजा योज्यस्तद्वर्णजः सदा ।
तद्वर्णे एव गुणिनः प्रायशः संभवन्ति हि ॥
व्यवहारविदः प्राज्ञा वृत्तशीलगुणान्विताः ।
रिपौ मित्रे समा ये च धर्मज्ञाः सत्यवादिनः ॥
निरालसा जितक्रोधकामलोभाः प्रियंवदाः ।
राज्ञा नियोजितव्यास्ते सभ्याः सर्वासु जातिषु ॥
[2]अशोधयित्वा पक्षं ये ह्युत्तरं दापयन्ति तान् ॥
रागाल्लोभाद्भयाद्वाऽपि स्मृत्यपेतादिकारिणः ।
सभ्यादीन् दण्डयित्वा तु ह्यधिकारान्निवर्तयेत् ॥
[3]अन्योन्ययोः समक्षं तु वादिनोः पक्षमुत्तरम् ।
हिन गृण्हन्ति ये सभ्या दण्ड्यास्ते चौरवत्सदा ॥
[4]से ब्रूते यः स धर्मः स्यादेको वाऽध्यात्मचित्तकः ।
एकद्वित्रिचतुर्वारं व्यवहारानुचिन्तनम् ॥
कार्यं पृथक्पृथक् सभ्यैः राज्ञा श्रेष्ठोत्तरैः सह ॥

## षट्त्रिंशन्मतम्

पाषण्डनैगमादिसंज्ञा

[5]प्रामाण्यमेव ये वेदे न वदन्ति कुदृष्टयः ।
तेषां बौद्धार्हतादीनां पाषण्डाख्या प्रकीर्तिता ॥
[6]पौरुषेयतया वेदं प्रमाणं प्रवदन्ति ये (?)।
तेषां वैशेषिकादीनां नैगमाख्या प्रकीर्तिता ॥

## मानसोल्लासः

राजा प्राड्विवाकः, तत्सहकारिणो ब्राह्मणाः

[7]व्यवहारान्नृपः पश्येद् विप्रैर्विद्वद्वरैः सह ।
स्मृतिशास्त्रानुरोधेन रागद्वेषविवर्जितः ॥

अपक्षपातेन निर्णयम्

अदोषान् दूषयेद्राजा दोषयुक्तानदण्डयन् ।
अकीर्तिं महतीमेति दुर्गतिं चाधिगच्छति ॥
ऋत्विक्पुरोहितः पुत्रो भ्राता बन्धुस्तथा सुहृत् ।
अदण्ड्यो नृपतेर्नास्ति स्वधर्माच्चलितो नरः॥

---

(१) स्मृच.१६ ( = ) क्रूरो (क्रूरे); पमा.२९; प्रका.८ कात्यायनः; समु.५.
(२) स्मृच.२३; प्रका.६ बाहु (पाणि); समु.९.(३) स्मृचि.३.
(४) शुनी.४।५२४-५२५; व्यप्र.२३. (५) नृप्र.५.
(६) अपु.२५३।१२-१३. (७) शुनी.४।५०७-५०९.

(१) शुनी.४।५१६-५१८. (२) शुनी.४।५८९-५९०.
(३) शुनी.४।६४८. (४) शुनी.४।५३५-५३६.
(५) व्यनि. ख्या (ख्याः) र्तिता (र्तिताः); प्रका.१०; समु.११ व्यनिवत्. (६) व्यनि. माख्या (मुख्यः) र्तिता (र्तिते); प्रका.१०; समु.११ ख्या (ख्याः) र्तिता (र्तिताः).
(७) मासो.२।२०।१२४३-१२६२.

राज्ञा कीदृशाः सभ्या नियोज्याः

वेदशास्त्रार्थतत्त्वज्ञाः सत्यसन्धाश्च धार्मिकाः ।
सभ्या नृपतिना कार्या मित्रामित्रेषु वै समाः ॥
धीरैरलोलुपैर्मौलैर्लोकव्यापारकोविदैः ।
विप्रैः सह महीपालो गुणदोषौ विचारयेत् ॥

सभ्यसंख्या

विचारे यत्र तिष्ठन्ति विप्राः श्रुतिविदस्त्रयः ।
पञ्च वा सप्त वा सा स्याच्छतक्रतुसमा सभा ॥

नियुक्तेनानियुक्तेनापि वा धर्म्यमेव वक्तव्यम्

तस्यां सभायां यः कश्चिद् धर्मज्ञः श्रुतिकोविदः ।
निर्दिष्टो वाप्यनिर्दिष्टः स तत्त्वं वक्तुमर्हति ॥
न्याय्यं पन्थानमुत्सृज्य ये गतस्यानुयायिनः ।
सभ्यास्ते बोधनीयाः स्युर्मार्गं धर्मस्य शाश्वतम् ॥
अनिर्दिष्टश्च तत्सर्वं सत्यं ब्रूयात् समञ्जसम् ।
ज्ञात्वा वा न वदेत्तत्त्वं मिथ्यावादी च पापभाक् ॥

वैश्याः सभ्यत्वेन नियोज्याः

कुलीनाः शीलवन्तश्च धनिनो वयसाऽधिकाः ।
अमत्सरा विशः कार्याः कियन्तोऽपि सभासदः ॥

राज्ञा स्वस्थाने ब्राह्मणो नियोज्यः । तदभावे क्षत्रियः । तदभावे वैश्यः । न तु कदापि शूद्रः ।

अलोभं सत्यसन्धं च धर्मशीलं प्रियंवदम् ।
धर्मशास्त्रार्थकुशलं लोकयात्राविचक्षणम् ॥
विचारे पण्डितं दक्षं प्राड्विवाकतया युतम् ।
इङ्गिताकारतत्त्वज्ञमूहापोहविशारदम् ॥
ब्राह्मणं श्रुतसंपन्नं धर्मशास्त्रविशारदम् ।
आत्मनः प्रतिरूपं तु कुर्यादेकं महीपतिः ॥

प्राड्विवाकपदनिरुक्तिः

प्रागेव पृच्छति प्रायो वाक्यं वादार्थमागतौ ।
विचारयति यः सम्यक् प्राड्विवाकस्ततः स्मृतः ॥
व्यग्रस्य राजकार्येण देहजाड्येन वा स्वयम् ।
अपश्यतः प्रभोः कार्यं प्राड्विवाको विचारयेत् ॥
विप्रालाभे तु कर्तव्यः कुलीनो दमसंयुतः ।
परत्र भीरुर्धर्मज्ञः शूरः शान्तो विमत्सरः ॥
अनुद्वेगकरो नित्यं प्रजानां च हिते रतः ।
सदोद्युक्तः समर्थश्च क्षत्रियोऽपि सभापतिः ॥
दौर्लभ्यात् क्षत्रियस्यापि वैश्यं कुर्यात् सभापतिम् ।
गुणाधिकं च मध्यस्थं जनानां संमतं नृपः ॥
विप्रक्षत्रविशः कार्याः श्रेष्ठमध्याधमाः क्रमात् ।
सर्वथाऽपि न कर्तव्यः शूद्रः क्वापि विचारणे ॥

शास्त्रविरोधिनिर्णये सभ्यदण्डः

लोभाद्वापि भयाद्रागात् स्मृतिशास्त्रार्थनाशकाः ।
दण्डनीयाः पृथक्सभ्या विवादाद् द्विगुणं धनम् ॥

# दर्शनविधिः

## वेदाः

**सुनीतिभिर्नयसि त्रायसे जनम् ।**

हे बृहस्पते, सुनीतिभिः शोभनं नीतयो येषु ते सुनीतयः सन्मार्गाः तैः, जनं नयसि अपेक्षितफलं प्रापयसि । त्रायसे जनमापद्भ्यो रक्षसि च । ऋसा.

## गौतमः

व्यवहारप्रमाणं वेदादिरूप आम्नायः

**तस्य च व्यवहारो वेदो धर्मशास्त्राण्यङ्गान्युपवेदाः पुराणम् ।**

(१) व्यवह्रियते निर्णीयते येन वेदादिना प्रमाणेन स व्यवहारः । अप.२।१

(२) तस्य प्रजापालनाधिकृतस्य राज्ञो व्यवस्थासाधनान्येतानि वेदादीनि प्रसिद्धानि । वेदे 'गर्तारुगिव सनये धनानाम्' इत्यादिव्यवहारदर्शनात्, धर्मशास्त्रे वर्णाश्रमादिप्रतिपादनात्, अङ्गे शब्दादिव्यवस्थाप्रतिपादनात्, उपवेदे अस्त्रादिव्यवहारप्रतिपादनात्, पुराणे जगत्स्थितिविज्ञानात् । विसमासः पूर्वस्य पूर्वस्य बलीयस्त्वज्ञापनार्थः । ततश्च पूर्वोत्तरविरोधे पूर्वोक्तमेवाचरेत् । व्यवहारतत्वदर्शने वेदादीन्यङ्गानि भवन्तीति व्यवहारशब्देनोच्यन्ते । एतान्यालोच्य व्यवहारान् स्थापयेदित्यर्थः । मभा.

(३) व्यवहारो लोकमर्यादास्थापनम् । *गौमि.

आम्नायाविरोधिदेशादिधर्मा व्यवहारप्रमाणम्

**देशजातिकुलधर्माश्चाम्नायैरविरुद्धाः प्रमाणम् ।**

(१) देशधर्मः कौतुकमङ्गलादिः । जातिधर्मः आभीरादीनां दन्तरागाभावादिः (?) । कुलधर्मो दक्षिणतश्चूडा वासिष्ठानामित्यादिः । आम्नायैर्वेदधर्मशास्त्रादिभिः पूर्वोक्तैः, बहुवचनप्रयोगात्, अविरुद्धाः अबाधिताः प्रमाणम् । वक्ष्यमाणानां कर्षकादीनामप्याम्नायाविरुद्धत्वज्ञापनार्थश्चकारः । देशधर्मादीनपि सम्यक् ज्ञात्वा आम्नायाविरोधेन गृह्णीयात् । विरोधे त्यक्तव्या इत्येवमर्थमुपदेशः । मभा.

(२) देशधर्मेषु जातिधर्मेषु च प्रतिनियतमनुष्ठीयमानेषु यद्यपि वेदादि मूलभूतं नोपलभ्यते तथाऽपि यदि वेदादिभिर्विरोधो न भवति, तथैव ते परिपालनीया न तु मूलानियोगेन विहन्तव्या इति । तत्र देशधर्माः मेषस्थे सवितरि चौलेषु कुमार्यो नानावर्णैः रजोभिर्भूमावादित्यं सपरिवारमालिख्य सायंप्रातः पूजयन्ति । मार्गशीर्ष्यां चालङ्कृता ग्रामे पर्यट्य यल्लब्धं तद्देवाय निवेदयन्ते । कर्कटस्थे सवितरि पूर्वयोः फल्गुन्योर्भगवतीमुमामाराध्य यथाविभवमरुद्धय अङ्कुरितं मुद्गलवणं च प्रयच्छन्ति । मीनस्थे सवितर्युत्तरयोः फल्गुन्योर्गृहमेधिनः श्रियं देवीं पूजयन्ति । जातिधर्माः शूद्रा विवाहे मध्ये स्थूणां निखाय सहस्रवर्तीरिकस्यां स्थाल्यां निधाय प्रतिवर्ति दीपानारोप्य वधूं हस्ते गृहीत्वा प्रदक्षिणयन्ति । अन्यदप्येवंजातीयकं द्रष्टव्यम् । कुलधर्मो केचिन्मध्यशिखाः । केचित्पृष्ठशिखाः । प्रवचनादयस्तु कालभेदेनोभयतः शिखाः । संबन्धश्चैतैस्तैः स्ववर्गैरिति । ये त्वाम्नायविरुद्धा मातुलसुतापरिणयनं, अनधीत्य वेदानन्यत्र श्रम इत्यादयो देशधर्मा नेह प्रमाणम् । गौमि.

कर्षकवणिगादिषु तद्वर्गीयाः शिष्टाः प्रमाणम्

**कर्षकवणिक्पशुपालकुसीदिकारवः स्वे स्वे वर्गे ।**

(१) प्रमाणमिति वर्तते । राजनि प्रष्टुमशक्ये स्ववर्ग एव प्रष्टव्य इत्येवमर्थ उपदेशः । कर्षकाः कृषिजीविनः । वणिजः प्रसिद्धाः । पशुपाला गोपालाः । कुसीदिनो

---

* वाक्यार्थो मभावत् ।

(१) ऋसं.२।२३।४.

(२) **गौध**.११।२१; **अप**.२।१ (च ०) दाः (दः); **व्यक**.५; **मभा**.; **गौमि**.११।१९; **स्मृचि**.६; **व्यसौ**.४.

(३) **गौध**.११।२२; **व्यक**.८; **मभा**.; **गौमि**.११।२०; **ममु**.८।४१ विरुद्धाः (प्रतिषिद्धाः); **व्यनि**.; **मच**.८।४१ (आम्नायाविरुद्धा देशजातिकुलधर्माप्रतिषिद्धाः प्रमाणम् ); **व्यसौ**.५; **व्यप्र**.२२ आपस्तम्बः; **प्रका**.९; **समु**.१३.

(१) **गौध**.११।२३; **व्यक**.८ सीदि (सीद); **मभा**.; **गौमि**.११।२१; **व्यनि**. व्यकवत्; **व्यसौ**.५-६; **प्रका**.९; **समु**.१३.

वार्धुषिकाः। कारवः अयस्कारादयः। स्ववर्गे इति वक्तव्ये वीप्सावचनं न केवलं कर्षकादय एव स्ववर्गे प्रमाणं, किन्तु ब्राह्मणादयोऽपीति। तत्रापि स्मृत्यन्तरसामर्थ्यात् त्र्यवरा एव प्रष्टव्याः। 'स्ववर्गे त्र्यवरा धर्मान् प्रब्रूयुः' इति प्रजापतिवचनात्। 'आम्नायैरविरुद्धाः प्रमाणम्' इत्युक्तत्वात्। यदि ते तद्विरुद्धं ब्रूयुः तदा सर्वैर्ब्राह्मणसकाशं गन्तव्यं तेषामेव तदविरोधेन वक्तुं सामर्थ्यमिति। 'तस्य व्यवहार' इत्युक्तत्वात्। तत्राऽप्यपरितोषे राजसकाशं गन्तव्यं इति द्रष्टव्यम्। तत्र तेनाऽप्याम्नायाविरोधेन वक्तव्यत्वात्, एकस्यैव तदविरोधज्ञापनसामर्थ्याभावात्, तज्ज्ञैः ब्राह्मणैः सह ब्रूयादिति अर्थसिद्धम्। तथा च मनुः— 'व्यवहारं दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः' इत्यादि। मभा.

(२) एते स्वे स्वे वर्गे स्ववर्गसंवेदे प्रमाणम्। *गौमि.

तच्छिष्टानुसारेण राज्ञा तद्व्यवहारो निर्णेयः

**तेभ्यो[१] यथाऽधिकारमर्थान्प्रत्यवहृत्य धर्मव्यवस्था।**

(१) इदानीं यदि कर्षकादयो राजानमेव गच्छेयुः तदा कथं राजा परिछिनत्ति इत्याह—तेभ्य इत्यादि। तेभ्यः कर्षकादिभ्यः, यथाऽधिकारं यो यत्राधिकृतः प्रतिवर्गं स्थित इत्यर्थः, अर्थानाचारान् प्रत्यवहृत्य स्वयमेव सम्यक् पृथक् पृथग्विचार्येत्यर्थः। कुत एतत्? अवहृत्येति वक्तव्ये प्रत्यवहृत्येत्यारम्भात्। ततो धर्मव्यवस्था कर्तव्येति शेषः। तत्त्वपरिच्छेदः कर्तव्य इत्यभिप्रायः। ब्रूयादिति वक्तव्ये व्यवस्थाग्रहणं राज्ञा परिच्छिन्नस्य पुनर्निवृत्तिर्मा भूदिति। एवं चापरितोषेऽन्यत्र सिद्धस्यापि पुनः पुनः करणमस्तीति ज्ञापयति। धर्मबुद्ध्यैव व्यवस्थापयेत् नार्थाशयेति धर्मग्रहणम्। मभा.

(२) ततश्च कर्षकादिषु धर्मविप्रतिपत्तौ सत्यां—तेभ्यो यथेति। तेभ्यस्तत्तद्वर्गेभ्यो, यथाधिकारं ये यत्र वर्गे व्यवस्थापकत्वेनाधिकृताः,तेभ्योऽर्थानाचारप्रकारान्, प्रत्यवहृत्य श्रुत्वा अवधार्य, धर्मव्यवस्था कार्या। इत्थमस्माकं निकाम आचार इति तैरुक्ते तथैव व्यवस्थाप्यमिति। गौमि.

* पदतात्पर्यं मभावत्।

(१) **गौध**.११।२४; **व्यक**.८; **मभा**.; **गौमि**.११।२२; **व्यनि**.; **व्यसौ**.६; **प्रका**.९; **समु**.१३.

विवादार्थनिश्चये तर्क उपायः

**न्यायाधिगमे[१] तर्कोऽभ्युपायः। तेनाभ्यूह्य यथास्थानं गमयेत्।**

(१) न्याययुक्तस्याधिगमे अवधारणे तर्कः अनुमानमभ्युपायः। प्रथमोपाय इत्यर्थः। तथाह नारदः— 'यथा नयत्यसृक्पातैः' इत्यादि। तेनानुमानेनाऽभ्यूह्य, यथा मनुः—'आकारैरिङ्गितैः' इत्यादि। यथास्थानं यथातत्वं, गमयेत् प्रापयेत्। मभा.

(२) यथास्थानं, यत्र पक्षेऽर्थस्तत्र। *गौमि.

(३) न्यायाधिगमे धर्माधिगमे। स्मृच. २४

(४) मिता. टीका—न्यायज्ञाने तर्कः उपायः। तेन तर्केण न्यायमभ्यूह्य यस्मिन्विषये न्यायो योजनीयस्तत्स्थानं गमयेत्। अथवा यथास्थानं न्यूनातिरेकरहितं यथातथा गमयेदिति। ×सुबो. २।२०

निर्णयसहकारिणो वेदज्ञा ग्राह्याः

**विप्रतिपत्तौ[२] त्रैविद्यवृद्धेभ्यः प्रत्यवहृत्य निष्ठां गमयेत्।**

(१) विचारकाणामन्योन्यविप्रतिपत्तौ। निष्ठां समाप्तिं निर्णयम्। अप. २।१

(२) विप्रतिपत्तिः एकस्यैव तर्केणावधारणासामर्थ्ये, अतिसौक्ष्म्यात्कार्यस्य उभयथा लिङ्गदर्शनाच्च, तस्याम्। त्रैविद्यवृद्धाः सकलवेदत्रयपारगाः, तेभ्यः प्रत्यवहृत्य अवगम्य अस्येदं लिङ्गं अस्य परिच्छेदकं, पूर्वमस्येदं लिङ्गमिदानीं लिङ्गान्तरमिदं किं परिच्छिनत्तीत्येवमादि विचार्य तत्त्वं ज्ञात्वेत्यर्थः। आम्नायाद्यविरोधपरिज्ञापनार्थं ये सहाया उक्तास्त एवानूद्यन्ते त्रैविद्यलक्षणप्रापणार्थम्। यथाह मनुः—'मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीतः प्रविशेत्सभाम्' इति। तत्रैव वक्तव्यमिति चेन्नैष दोषः, आम्नायाविरुद्धविचारणायामेव न केवलं तैर्विचारः क्रियते किन्तु लिङ्ग-

* तात्पर्यं मभावत्। × बाल. सुबोवत्।

(१) **गौध**.११।२५-२६; **मिता**.२।२० भ्यूह्य (भ्युपेत्य); **अप**.२।१ पायः (पेयः) भ्यू (त्यू); **व्यक**.५; **मभा**.; **गौमि**.११।२३-२४; **स्मृच**.२४; **स्मृचि**.६; **व्यसौ**.४; **व्यप्र**.८८, १००; **विता**.१०७; **प्रका**.१४; **समु**.१०.

(२) **गौध**.११।२७; **अप**.२।१; **व्यक**.५; **मभा**.; **गौमि**.११।२५; **स्मृचि**.६; **व्यसौ**.४.

सन्देहेऽपि चेत्येवमर्थं इहोपदेश इति। असति लिङ्गसन्देहे विरोधे चासति राज्ञ एव परिच्छेदकत्वं द्रष्टव्यम्। सभायास्तदुभयार्थत्वादिति। लिङ्गसन्देहे त्रैविद्यवृद्धैरेव प्रापयेत् न स्वयम्, यथास्थानं गमयेदित्यधिकारादेव सिद्धे निष्ठां गमयेदिति पुनरारम्भात्। मभा.

(३) निष्ठां गमयेत् यत्र पक्षेऽर्थो निष्ठितस्तं गमयेत्। *गौमि.

**तथा ह्यस्य निःश्रेयसं भवति।**

(१) निःश्रेयसं शास्त्रोक्तं फलम्। उक्तं च नारदेन फलम्--धर्मेणेति। अप. २।१

(२) किमेवं कुर्वतो भवतीत्याह--तथा इति। तस्य निर्णयं कुर्वतः निःश्रेयसमुभयलोकविजयित्वं अमुत्र धर्मप्राप्त्या, इहापि जनानुरागादिति। इतिशब्दो हेत्वर्थः, यस्मादेवमिति। +मभा.

**ब्रह्म क्षत्रेण पृक्तं देवपितृमनुष्यान् धारयतीति विज्ञायते।**

एवं राज्ञो भवति, त्रैविद्यवृद्धानां तु सहायरूपेण स्थितानां किं भवतीति तदनुरूपां श्रुतिमुदाहरति ब्रह्मेत्यादि। ब्रह्म त्रैविद्यलक्षणं क्षत्रेण राज्ञा पृक्तं सहितं, राज्ञा सह धर्मविवेचनं कुर्वदित्यर्थः। निरुपद्रवकर्मानुष्ठानद्वारेण 'इतः प्रदानं देवा उपजीवन्ति' इत्येवं देवपितॄन् धारयति आहुत्यादिद्वारेण, अन्ननिष्पत्त्या मनुष्यान्। अतो राजसु प्रश्नविवेचनं धर्मायेति वक्तव्यम्। +मभा.

## महाभारतम्

शास्त्रानुसारिणी समदर्शिनी बुद्धिर्व्यवहारे प्रमाणम्

**कामक्रोधावनादृत्य पितेव समदर्शनः।**
**शास्त्रजां बुद्धिमास्थाय युज्यते नैनसा हि सः॥**
**व्यवहारेण शुद्धेन प्रजापालनतत्परः।**
**प्राप्य धर्मं च कीर्तिं च लोकावाप्नोत्युभौ शुचिः॥**

**अथ योऽधर्मतः पाति राजाऽमात्योऽथवात्मजः।**
**धर्मासने संनियुक्तो धर्ममूले नरर्षभ॥**
**कार्येष्वधिकृताः सम्यगकुर्वन्तो नृपानुगाः।**
**आत्मानं पुरतः कृत्वा यान्त्यधः सह पार्थिवाः॥**

साक्षिबलमनुमानं चार्थनिर्णये प्रमाणम्

**बलात्कृतानां बलिभिः कृपणं बहुजल्पताम्।**
**नाथो वै भूमिपो नित्यमनाथानां नृणां भवेत्॥**
**ततः साक्षिबलं साधु द्वैधवादकृतं भवेत्।**
**असाक्षिकमनाथं वा परीक्ष्य तद्विशेषतः॥**
**सर्वतः सत्कृतः सद्भिर्भूतिप्रवरकारणैः।**
**हृदयेनाभ्यनुज्ञातो यो धर्मस्तं व्यवस्यति॥**
**यश्चतुर्गुणसंपन्नं धर्मं ब्रूयात्स धर्मवित्।**
**अहेरिव हि धर्मस्य पदं दुःखं गवेषितुम्॥**
**यथा मृगस्य विद्धस्य पदमेकपदं नयेत्।**
**लक्षेद्रुधिरलेपेन तथा धर्मपदं नयेत्॥**
**अर्थिनामुपसन्नानां यस्तु नोपैति दर्शनम्।**
**सुखेषु सक्तो नृपतिः स तप्येत नृगो यथा॥**

यदि त्वादेयोऽपि वादो न दृश्यते तदा प्रत्यवायिता।
चन्द्र. १०४

राज्ञा स्वयं व्यवहारो द्रष्टव्यः

**अतथ्यान्यपि तथ्यानि दर्शयन्ति विचक्षणाः।**
**समे निम्नोन्नतानीव चित्रकर्मविदो जनाः॥**
**तस्मान्नित्यं यतेद्राजा व्यवहारेक्षणे स्वयम्॥**

## कौटिलीयमर्थशास्त्रम्

धर्मव्यवहारचरित्रराजशासनानि व्यवहारप्रमाणानि। तेषां प्रामाण्यतारतम्यव्यवस्था च।

**चतुर्वर्णाश्रमस्यायं लोकस्याचाररक्षणात्।**
**नश्यतां सर्वधर्माणां राजधर्मः प्रवर्तकः॥**
**धर्मश्च व्यवहारश्च चरित्रं राजशासनम्।**
**विवादार्थश्चतुष्पादः पश्चिमः पूर्वबाधकः॥**
**अत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिषु।**

---

* तात्पर्यं मभावत्। + गौमि. मभावत्।

(१) **गौध.**११।२८; **अप.**२।१ था ह्य (थेहा); **व्यक.**५ह्य (ह्य) ति (तीति); **मभा.**व्यकवत्; **गौमि.**११।२६; **स्मृचि.**६; **व्यसौ.**४ ह्य (चा).

(२) **गौध.**११।२९; **मभा.**; **गौमि.**११।२७पृक्तं (संपृक्तं).

(३) **भा.**१२।२४।१४. (४) **भा.**१२।८५।२.

(१) **भा.**१२।८५।१६-१९. (२) **भा.**१२।१३२।१९-२१. (३) **व्यक.**७ पस (पप); **दवि.**१३ षु (प्र); **चन्द्र.**१०४; **व्यसौ.**५व्यकवत्; **व्यप्र.**९२.

(४) **व्यक.**७; **स्मृचि.**७न्यपि (नि च); **व्यसौ.**५न्ति विचक्षणाः (न्त्यतिपेशलाः). (५) **व्यक.**७; **व्यसौ.**५. (६) **कौ.**३।१.

**चरित्रं संग्रहे पुंसां राज्ञामाज्ञा तु शासनम् ॥**
**राज्ञः स्वधर्मः स्वर्गाय प्रजा धर्मेण रक्षितुः ।**
**अरक्षितुर्वा क्षेप्तुर्वा मिथ्यादण्डमतोऽन्यथा ॥**
**दण्डो हि केवलो लोकं परं चेमं च रक्षति ।**
**राज्ञा पुत्रे च शत्रौ च यथादोषं समं धृतः ॥**
**अनुशासद्धि धर्मेण व्यवहारेण संस्थया ।**
**न्यायेन च चतुर्थेन चतुरन्तां महीं जयेत् ॥**
**संस्थया धर्मशास्त्रेण शास्त्रं वा व्यावहारिकम् ।**
**यस्मिन्नर्थे विरुध्येत धर्मेणार्थं विनिर्णयेत् ॥**
**शास्त्रं विप्रतिपद्येत धर्मन्यायेन केनचित् ।**
**न्यायस्तत्र प्रमाणं स्यात् तत्र पाठो हि नश्यति ॥**

सम्यग्व्यवहारदर्शनस्य सर्वलोकयोगक्षेमसाधकतां श्लोकैराह—चतुर्वर्णेत्यादि । अयं राजधर्मः सम्यग्व्यवहारदर्शनरूपः, चतुर्वर्णाश्रमस्य चत्वारो वर्णा ब्राह्मणादयः आश्रमाश्च ब्रह्मचर्यादयो यस्मिंस्तथाभूतस्य, लोकस्य, आचाररक्षणात् स्वस्वसमुदाचारपरिरक्षणाद्धेतोः, नश्यतां सर्वधर्माणां स्वतः क्षीयमाणानां सर्वेषां धर्माणां, प्रवर्तकः प्रोज्जीवकः ।

व्यवहारस्तावच्चतुष्पादः । तत्पादानां स्वरूपं बलाबलं चाह—धर्मश्चेति । धर्मो व्यवहारः चरित्रं राजशासनमिति चतुर्भिः पादैर्युक्तो, विवादार्थः विवादविषयोऽर्थः । पश्चिमः एषु पादेषु पश्चिमः चरमः पादः, पूर्वबाधकः पूर्वान् पादान् बाधते सर्वपादापेक्षया प्रबल इत्यर्थः ।

धर्मादीनां स्वरूपमाह—अत्रेति । अत्र धर्मादिषु मध्ये, सत्ये स्थितः प्रतिष्ठितः धर्मः अर्थयाथात्म्यं धर्मपदार्थ इत्यर्थः । व्यवहारस्तु साक्षिषु स्थितः साक्षिवाक्यविभावनीयो व्यवहारपदार्थ इत्यर्थः । चरित्रं लोकाचारः, संग्रहे ग्रामसमूहे दशग्राम्यादौ, पुंसां प्रतिष्ठितम् । राज्ञां आज्ञा तु इदमित्थमेवेति न्यायोपपत्तियुक्तो यथार्हदण्डप्रणयनादिर्नियोगस्तु शासनं राजशासनपदार्थः ।

राज्ञ इति । राज्ञः, स्वधर्मः शस्त्राजीवो भूतरक्षणं च, स्वर्गाय भवति । कथंभूतस्य, प्रजा धर्मेण रक्षितुः । अरक्षितुर्वा अरक्षकस्य वा, क्षेप्तुर्वा मिथ्यादण्डं अयथार्हदण्डं प्रणेतुर्वा, राज्ञः, अतोऽन्यथा उक्तादन्यः प्रकारः अर्थान्नरकः भवति । एवमदृष्टसाधकता सम्यग्व्यवहारदर्शनस्य दर्शिता ।

दण्डं प्रशंसति—दण्डो हीति । दण्डो हि, केवल एकोऽनितरसहायः, लोकं परं च इमं च रक्षति उभयलोकसुखभोगसौभाग्यं प्रयोक्तुः प्रयच्छति । कथंभूतोऽसौ, राज्ञा प्रयोक्त्रा, पुत्रे च शत्रौ च, यथादोषं अपराधानुरूप्येण, समं धृतः अविशेषेण प्रयुक्तः ।

सम्यग्व्यवहारदर्शनस्य परमं दृष्टफलमाह—अनुशासद्धीति । अनुशासत् लोकं न्याय्ये पथि स्थापयन्, कथं, धर्मेण धर्मानुसारेण, व्यवहारेण साक्षिवाक्यानुसारेण, संस्थया लोकाचारेण, न्यायेन च चतुर्थेन न्यायोपपन्नराजकीयनिर्णयलक्षणेन चतुर्थपादरूपेण, चतुरन्तां चतुःसागरपर्यन्तां, महीं जयेत् । यथोक्तप्रकारानुशासनमहिम्ना सार्वभौमत्वं राजा प्राप्नुयादित्यर्थः ।

धर्मादिषु 'पश्चिमः पूर्वबाधकः' इति यत् पूर्वमुक्तं, तस्यापवादमाह—संस्थयेति । संस्थया महाजनाचारेण, धर्मशास्त्रेण मानवादिना च सह, शास्त्रं वा व्यावहारिकं शास्त्रं राजशासनं वा व्यावहारिकं साक्षिवचनं वा, यस्मिन्नर्थे विरुध्येत, यच्छब्देन तच्छब्दाक्षेपात् तमर्थं, धर्मेण विनिर्णयेत् धर्मशास्त्रानुसारेण विनिश्चिनुयात् । न तु तथाविधे विषये राजवचनसाक्षिवचनयोः प्रामाण्यमित्यर्थः ।

क्वचित् धर्मशास्त्रमपि न्यायेन बाध्यत इत्याह—शास्त्रमिति । शास्त्रं मानवादिधर्मशास्त्रं, केनचित् धर्मन्यायेन सर्वप्रकारोपपन्नेन धर्मयुक्तेन लोकाचारेण, विप्रतिपद्येत अत्यन्तबाधितार्थविषयतया विरुध्येत, यत्रेति शेषः । तत्र, न्यायः, प्रमाणं अर्थनिर्णयहेतुः स्यात् । कुतः, तत्र पाठो हि नश्यति यस्मात् तादृशे विषये धर्मशास्त्रवचनं अदर्शनं प्राप्नोति, न प्रवर्तत इत्यर्थः । 'कुद्दालपाणिर्विज्ञेयः सेतुभेत्ता समीपगः' इति सत्यपि स्मृतिवचने सेतोर्भिन्नस्य समीपे कुद्दालहस्तं कमपि शिशुं तिष्ठन्तं दृष्ट्वा न कोऽप्यध्यवस्यति—अनेन शिशुना सेतुर्भिन्न इति । श्रीमू.

## मनुः

सभाप्रवेशः

**उत्थाय पश्चिमे यामे कृतशौचः समाहितः ।**

---

(१) **मस्मृ**.७।१४५; **शुनी**.४।५४६ पू.; **स्मृच**.१९ (हुत्वाऽग्नीन् ब्राह्मणानर्च्य प्रविशेद्वै शुभां सभाम्); **व्यनि**.

**हुताग्निर्ब्राह्मणांश्चार्च्य प्रविशेत्स शुभां सभाम् ॥**

(१) पश्चिमो यामो ब्राह्मो मुहूर्तः । यत आह—कृतशौचः समाहितः । हुताग्निरिति । न च ब्राह्मे मुहूर्ते होमविधानमस्ति । तदा हि चतुर्मुहूर्तशेषा रात्रिर्भवति । होमश्च व्युष्टायां रात्रौ समाप्य कार्य उषःकल्पत्यागेन । आर्च्य ब्राह्मणान् पूजयित्वा । सभां शुभां मङ्गलवतीम् । प्रविशेत् । **मेधा.**

(२) मुहूर्तमात्रावशिष्टायां रात्रावुत्थाय कृतावश्यकशौचः, संयतमनाः, कृताग्निहोत्रो ब्राह्मणान् पूजयित्वा वास्तुलक्षणोपेतां सभां अमात्यादिदर्शनवेश्म प्रविशेत् । **गोरा.**

(३) अत्र अर्च्य इति असमासेऽपि क्त्वाप्रत्ययस्य ल्यबादेशश्छान्दसत्वादविरुद्धः । प्रविशेत् नृपतिरिति शेषः । **स्मृच.१९**

(४) रात्रेः पश्चिमे यामे उत्थाय । कृताग्निहोत्रावसथ्यहोमः । **+ममु.**

देशदृष्टाः शास्त्रदृष्टाश्च हेतवो व्यवहारप्रमाणम्

***तत्रासीनः स्थितो वाऽपि पाणिमुद्यम्य दक्षिणम् ।**
**विनीतवेषाभरणः पश्येत्कार्याणि कार्यिणाम् ॥**
**प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः ।**
**अष्टादशसु मार्गेषु निबद्धानि पृथक् पृथक् ॥**

(१) पूर्वेणार्धेन निर्णयहेतवः कथ्यन्ते । उत्तरेण विवादपदसंख्यानिर्देशः । 'पश्येदिति' पूर्वश्लोकादनुषज्यते कार्याणीति च । प्रत्यहं पश्येत्कार्याणि प्रतिदिवसं[1] (गमनेन) व्यवहारनिर्णयः कर्तव्यः । हेतुभिरिति । हेतुर्निर्णयसाधनम् । स च द्विविधः । प्रमाणरूपो व्यवस्थारूपश्च । तत्र प्रमाणरूपः—अर्थनिर्णयहेतुः साक्ष्यादिः । व्यवस्थारूपः यतोऽसत्येवाऽर्थनिश्चये व्यवहारः संतिष्ठते । यथा सत्यशपथ उभयानुमतः एकः साक्षी यद्यर्थिप्रत्यर्थिभ्यामभ्युपगतप्रमाणभावः सभ्यैरपरीक्षितोऽपि निर्णयहेतुतां प्रतिपद्यते । न त्वपरीक्षितस्य पुंसो वचनादसत्यातत्त्ववेदनेऽर्थनिश्चयः । प्राश्निकानामभ्युपगमेऽपि व्यवस्था हेतुर्भवति । सा च व्यवस्था द्विविधा । साधारण्यसाधारणी च । देशभेदाश्रयभेदात्साऽपि द्विविधा । अविरुद्धा विरुद्धा च । अविरुद्धा यथा केषांचिद्दाक्षिणात्यानामपुत्रा स्त्री भर्तर्युपरते सभास्थाणुमुपारोहति । तमुपारूढा अधिकृतैरक्षपराहता कृतलक्षणा ततः[1] सैवानन्तरं सपिण्डेषु ऋक्थं[2] लभते । तथा उदीचां, लभ्यमानां कन्यां याचमानाय भोजनं यदि दीयते, तत इयं तुभ्यं दत्तेत्यनुक्तेऽपि प्रतिश्रुता भवति । विरुद्धा च, क्वचिद्देशे वसन्ते धान्यं युज्यते शरदि द्विगुणं प्रत्यादीयते । तथाऽनुज्ञातभोग आधिर्द्विगुणेऽपि तदुत्थधने प्रविष्ट आ मूलहिरण्यदानाद् भुज्यत एव । एषा हि 'अशीतिभागं गृह्णीयात्' 'कुसीदवृद्धिर्द्वैगुण्यं नात्येतीति' (मस्मृ. ८।१५१) विरुद्धा । तत्र भेदाश्रया देशदृष्टहेतुशब्देनाभिहिता । शास्त्रदृष्टास्तुहेतवः शास्त्रे पठितास्ते च केचन शास्त्रकारैः कल्पितव्यवस्थाः केचिद्यथावस्त्ववस्थिता अनूदिताः । तत्र कल्पितव्यवस्था यथा— लेख्यं, यथोपभोगः, साक्षिणश्च । अनुमानं तु वस्तुनियतं 'यथा नयत्यसृक्पातैर्मृगस्य मृगयुः पदम्' (मस्मृ. ८।४४) इति । यद्यपि सर्वं लौकिकं न शास्त्रकारवचनात्प्रमाणं[3] भवति । तथाऽपि[4] लौकिकमेव, तस्मिन् क्वचिच्छास्त्रमाश्रयितव्यम् । या च यदीदृशे चापराध इदं दिव्यं इयता च कालेन भोगः प्रमाणमिति । लौकिकमपि तच्छास्त्रदृष्टमित्युक्तम् । तस्यां च व्यवस्थायां शास्त्रकाराणां, मूले संभवति सा प्रमाणम् । या त्वसंभवतन्मूला सा नादरणीया । यथा लेख्यक्रमपाठः—'उभयाभ्यर्थितेनैवं मया ह्यमुकसूनुना । लिखितं ह्यमुकेनैव लेखकोऽन्ते ततो लिखेत् ॥' इति (यास्मृ. २।८८) यस्यादावेव लेखकः स्वनाम निवेशयेत्—इदंनामाऽहममुष्यपुत्रो लिखामीदमिति; न कश्चिद्दोषः स्यात् । स ह्येवमर्थं नाम निवेशयत्यनेनेदं लिखितमिति लेखक[5] उपलक्षितो यथा स्यात् । यदि ह्यसौ लेखकः प्रमाणान्तरेण प्रत्ययितो भवति ततस्तल्लिखितं प्रमाणम् ।

+शेषं गोरावत् । मच. ममुवत् । * व्याख्यासंग्रहः स्थलादिनिर्देशश्च सभाप्रकरणे (पृ. ३०) द्रष्टव्यः । स्मृचवत्; **प्रका.**११ स्मृचवत्; **समु.**७ स्मृचवत्.

(१) **मस्मृ.**८।३; **व्यक.**३; **स्मृच.**२५; **पमा.**२३,४०; **व्यनि.**निबद्धानि (व्यवहारान्); **स्मृचि.**२; **नृप्र.**२; **व्यप्र.**९; **व्यउ.** ६; **विता.**२३ स्त्र (स्त्रा) निबद्धानि (पश्येत्कार्यं); **राकौ.** १८२; **बाल.**२।१; **प्रका.**६; **समु.**१०.

१ सगमने.

१ ततू. २ कृच्छ्रं. ३ त्प्रामाण्यं. ४ (०). ५ लेख्यकमुपलिखितं.

यदि चासावात्मानं स्वगोत्रनाम्ना नोपलक्षयेत्ततः कस्य प्रत्ययितता प्रमाणान्तरादन्विष्यताम् । अथ तु लेख्यान्तरदर्शनेनान्येन वा हेतुना विशिष्टलेखक इति प्रत्यभिज्ञानं स्यादनुपलक्षणे[1]ऽपि न कश्चिद्दोषः । तत्र यदि लेखको न लिखेन्मयेदं लिखितमिति, भवेदेव तादृशं लेख्यं परिपूर्णलक्षणम् । एषा च लेखकपरीक्षा तत्रोपयुज्यते यत्र लेखकस्य साक्षित्वान्तर्भावोऽन्येषां साक्षिणामल्पत्वात् । यत्र त्वन्ये बहवः प्रत्ययिताः साक्षिणः स्वहस्तारूढाः सन्ति तत्र लेखकसंबन्धिनी प्रत्ययितता नोपयुज्यते । तथेयमपरा व्यवस्था 'लिखितं लिखितेनैव साक्षिमच्चैव साक्षिभिः । साक्षिभ्यो लिखितं श्रेयो लिखिते न तु साक्षिणः' ॥ (नास्मृ. ४।१४५) नास्यामपि व्यवस्थायां किञ्चिन्निबन्धनमस्ति । तथा हि द्विविधं लेख्यम्—स्वहस्तकृतं परहस्तकृतं च । परहस्तकृतमपि द्विविधम्—स्वहस्तलेखकलिखितमधिकृतलेखकलिखितं तदेतत्परहस्तकृतं सर्वप्रकारं साक्ष्यात्मकमेव । तत्र साक्षिभ्यो लिखितमिति भेदानुपपत्तेः । इदं हि तस्य लक्षणम्—'साक्षिणः स्वस्वहस्तेन पितृनामादिपूर्वकम् । तत्राहममुकः साक्षी लिखेयुरिति ते समम्' ॥ इति (यास्मृ. २।८७) । नाप्येकहस्तलिखितस्य प्रामाण्यमिष्यते । यथैकस्य साक्षित्वे । अथायं भेदहेतुः[2] साक्षिणो हस्तारूढास्त एव लेख्यमिति, नानेन विशेषेण श्रेयस्त्वं भवति । प्रत्ययितता हि श्रेयस्त्वे हेतुः । सा चोभयत्रापि परीक्ष्या । तस्मादीदृशे लेख्ये साक्षिद्वैध्यन्यायो बहुत्वं परिगृह्णीयादिति । अधिकृतत्वमपि न विशेषः । परीक्षितोऽधिक्रियत इत्येतत्तत्राधिक्यम् । न च सर्वे राजाधिकृताः सुपरीक्षिता भवन्ति । यदि तु निरुपधिस्तादृशश्चेदत्यन्तगुणयोगात्स्यादुपेयादेवासौ[3] एक एव संवादकत्वम् । तथा हि राजाग्रहारशासनान्येककायस्थहस्तलिखितान्येव प्रमाणीभवन्ति । दातुः स्वाहस्तक्यं स्वयमभ्युपगमः । इयदस्मान्मया गृहीतमिदं चास्मै दातव्यमिति । तत्र यदि पश्चाद् ब्रूते न गृहीतमिति तदा पूर्वनिबद्धं ब्रुवाणो जीयते । तत्र साक्षिणामवसर एव नास्ति ।

ननु च तदीयाल्लेख्यादभ्युपगतमेतदनेनेत्यवगम्यते, उत्तरकालं च स एवाह न गृहीतमिति । तत्रोभयोरभ्युपगमयोः केन हेतुना पूर्वेणोत्तरो[1] बाध्येत न पुनरुत्तरेण पूर्वः[2] । तुल्यत्वाद्विरुद्धत्वसंशयः । ततश्च प्रमाणान्तरव्यापारणमेव युक्तम् । भवेदेवं, यदि तुल्यता स्यात् । न गृहीतमिति ह्यभ्युपगमो लोभादिनाऽपि संभवति । न त्वगृहीत्वाऽनुन्मत्तो गृहीतमिति ब्रूयात् । तत्रापि यदि ब्रूयात्प्रतिदत्तमिति, लेख्यं तु न संपादितम्, असंनिधानात् प्रतिलेख्यं च न गृहीतं, लेखकासंनिधानात् कार्यान्तरेऽतिपातिनि त्वरावत्त्वात्, चात्रास्त्येव प्रमाणान्तरस्य साक्ष्यादेरवसरः । यदपि 'लिखितं लिखितेनेति' नैषा परिभाषा वस्तुसामर्थ्यायातामवगतिं बाधितुं शक्नोति । दृश्यन्ते हि धनिकहस्तगतलेख्यं[3] क्रमेण शोधयन्तः न च पृष्ठे संशोधितं धनमभिलिखन्ति—अद्य तावदिदं दत्तं, प्रातरन्यदानीयैकीकृत्योपर्यारोपयिष्यामि, सर्वं वा कतिपयैरहोभिः संशोध्य लेख्यं पाटयिष्यामीति । नान्यैर्वस्तुतोऽसंबन्धः । धनिकेन चोपरुद्धस्यासंभवति समूललाभधने संशुद्धिभागमात्रे दीयमाने कुत अयं तत्प्रभवति, न ददामि यावत्प्रतिलेख्यं न दत्तमिति । यदि चैषा परिभाषा 'लिखितं लिखितेनैवेति' तदा बलोपाधिकृतत्वं कथं विचार्यताम् ? न हि तत्र लेख्यान्तरसंभवः । तेन यथाऽत्र सत्येव लेख्ये तन्निश्चयार्थं प्रमाणान्तरं व्यापार्यते तद्वदन्यत्रापि व्यापारणीयम् । यथा कश्चिदावेदयेन्नास्य प्रत्ययं गत्वा लेख्यं मया कृतमनेनोक्तः सद्यः पुण्याहस्तु कारणं इमां च धनमात्रां गृहाण[5] श्वस्ते सर्वं दाताऽस्मीत्युक्त्वा सैव धनमात्रा दत्ता, परिशिष्टं न दत्तमिति तदाऽस्त्येव न्यायकारान्तरव्यापारणावसरः । तत्र यद्यधमर्णस्यास्मिन्प्रकारे साक्षिणः सन्ति तदाऽभिहिते लेख्य आभासीकृते[6] श्चोदानमुत्तमर्णेन साधनीयम् । अथ तयोरपि रहसि परिभाषेयमभूत्तदा दैव्याः क्रियाया अवसरः । अथ तु तस्यामपि व्यभिचारित्वादनाश्वासः सत्यशपथेन व्यवस्था कार्या ।

नन्वेवं सति स्वहस्तलेख्यं प्रमाणान्तरसंवादसापेक्षत्वादप्रमाणमेव । तत्र 'विनापि साक्षिभिः सिध्येत् स्वहस्तपरिचिह्नितम्' इति विरोधः । अनेनैव न्यायेन प्रत्यक्षं दीयमानं द्रव्यं न पश्यति, केवलं तत्समक्षं गृहीत्वा परिभाष्यते, इयदिदमस्मान्मया गृहीतमिति,

१ क्षितो. २ हेतु. ३ पा.

१ रा. २ वी. ३ ख्य. ४ ग्र. ५ णाश्च न सर्वदा. ६ साकृ. ७ वे.

तेऽपि साक्षिणः स्युः (?)। तत्रापि शक्यते वक्तुमस्य प्रत्ययं गत्वा प्रतिपन्नोऽहमिति। उक्तमत्र न स्मृतिविरोधाद्वस्तुस्थितिरपहन्तुं शक्यते। अपि च यत्रास्य वचनस्यावसरो नास्ति तत्प्रमाणं भविष्यति। क्वचिन्नास्ति। यत्र चिरकालं तिष्ठति धनिकहस्ते लेख्यं, यदि हि तेन न धनं दत्तं, तदा कथमनेन वा नाम न मार्गितं, लेख्यं न त्याजितमिति। न हि चिरकालमुपेक्षा वस्तुनीदृशेऽवश्यं संभवति। मिथ्यावादिता त्वस्यानुमीयते। तथा चोक्तम् 'सद्यस्त्र्यहाद्वा कार्येषु बलं राज्ञो निवेदयेदिति'। यत्र वा भोग्यबन्धो न च भोग आम्नातोऽपहारकालस्तत्र विप्रतिपत्तौ विनाऽपि साक्षिभिः, स्वहस्तलेख्ये, न ह्यधमर्णा वक्तुं लभन्ते, प्रीत्या त्वयैतदुक्तं, संप्रति त्यजेति। न च पूर्वोक्तस्य वचनस्यावसरः। कृतं लेख्यं ततो दास्यामीत्युक्त्वा न दत्तमिति। यदि न दत्तं कथं बन्धभोगो मर्षितः।

ननु चैवं सति लेख्यसहायो भोगः प्रमाणं स्यात्। केवलस्य तु भोगस्य प्रामाण्यमामनन्ति। 'लिखितं साक्षिणो भुक्तिरिति'। किमिदं ? प्रत्युक्तं पर्यनुयुज्यामहे। विशिष्टकालो भोगः प्रमाणं न भोगमात्रम्। एवं हि पठ्यते 'यत्किंचिद्दशवर्षाणि' तथा 'पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी' इति (यास्मृ. २।२४)। कस्तर्ह्यस्यार्थो 'लिखितं लिखितेनैवेति' व्याख्यातमन्यैः—कर्तृविशेषसंशयेऽनेनैतल्लिखितं न वेति; लिखितेन निश्चिततत्कर्तृकेण निश्चीयते। यत्तु साक्षिसमक्षं, तत्र कृताकृतसंदेहं साक्षिभिर्हरेत्। त एव तत्र प्रमाणम्। न तत्र तत्कृतलेख्यान्तरदर्शनमुपयुज्यते। बुद्धिपूर्वेषु च ऋणादानादिषु केवलेभ्यः साक्षिभ्यो लिखितं श्रेयः। साक्षिणो हि विस्मरेयुरन्यतरेण वा संबन्धं गच्छेयुरन्यद्वा पातकस्यासाक्षित्वे हेतुमासादयेयुः। लेख्यं त्वभियोगवत आत्माधीनतया सुरक्षमिति साक्षिभ्यः श्रेयस्त्वं तस्य। एतदेवाह—'लिखिते न तु साक्षिणः' इति। स्वहस्तप्रतिष्ठेन विस्मृतमप्यर्थं वृत्तमिति मन्यते। मृता वा साक्षिणस्तद्धस्तप्रत्यभिज्ञानेन प्रमाणीभवन्ति। व्याख्यानान्तराणि भर्तृयज्ञेनैव सम्यक् कृतानीति तत एवावगन्तव्यानि सर्वथा प्रमाणमूलानि। स्मृतिकारणव्यवस्थानुवर्तितव्येति। न च स्मृतेरेवं प्रामाण्यकल्पना युक्ता। न हि व्यवहारस्मृतिर्वेदमूला शक्यते वक्तुम्। सिद्धार्थरूपत्वात्प्रत्यक्षाद्यवगम्यत्वाज्जयपराजयप्रकाराणाम्। सिद्धो ह्ययमर्थः। एवं व्यवहारे जीयत इतरः, इतरो जयतीति। यदप्यत्र लिङ्गश्रुतिः साऽपि 'हरीतकीं भक्षयेदारोग्यकामः' इतिवदवसेया। ईदृशेषु विधिस्वरूपेषु प्रत्ययेषु द्रव्यशुद्धेः प्रसङ्गेनार्थो विवेचित इति न पुनः प्रयतामहे। अष्टादशसु मार्गेषु। मार्गो विषयो विवादस्य। एतानर्थानुद्दिश्य पुरुषाः प्रायेण विवदन्ते। निबद्धानि कार्याणि प्रयोजनानि, अर्थसिद्धय इति यावत्। तान्युत्तरत्र दर्शयिष्यामः। पृथक् पृथक्, प्राधान्यमेतेषामाह। एतानि प्रत्येकं प्रयोजनानि न पुनः परस्परमन्तर्भवन्ति। यथान्यान्यनुषङ्गादिष्वन्तर्भवन्ति। नैवमेतानि। अनुषक्तानि तु सहस्रशः सन्ति। मेधा.

(२) तांश्च व्यवहारान् अष्टादशव्यवहारस्थानेषु ऋणादानादिषु वक्ष्यमाणेषु, पृथक् पृथक् व्यवस्थितान् प्रतिनियतदेशव्यवस्थया वणिक्कर्षकादिगतया शास्त्राविरुद्धया शास्त्रगतया च साक्षिशपथाद्यनुमानात्मिकया प्रत्यहमालोकयेदेव। *गोरा

(३) कार्याणि ऋणादानादीनि। देशदृष्टहेतवः देशविशेषव्यवस्थानिर्णयसाधनानि। यथोदीच्यमध्यमानां कन्यां याचमानाय भोजनं यदि दीयते तुभ्यं देयेति ह्यनुक्तेऽपि प्रतिश्रुता भवतीति। शास्त्रदृष्टाः साक्षिप्रभृतयः। ×व्यक.४

(४) प्रत्यहं पश्येदित्यन्वयः। देशदृष्टैः शास्त्राऽविरुद्धैः देशाचारसिद्धैः हेतुभिः प्रमाणैः। शास्त्रदृष्टैः साक्ष्यादिभिः। अष्टादशस्वृणादानादिषु मार्गेषु कार्यनिर्गमोपायतया मार्गसदृशेषु निबद्धानि संबद्धानि कार्याणीत्यन्वयः। +मवि.

(५) तत्र शास्त्रदृष्टानामभावे देशदृष्टैर्द्रष्टव्यम्। स्मृच.२५

(६) देशाचारैः शास्त्रोक्तदिव्यादिभिश्चाष्टादशपद-

१ प्रप. २ (०). ३ (०). ४म. ५ चेति. ६ द्वस्तुप्र. ७ स्मृतिः.

* ममु., व्यनि. गोरागतम्।

× व्यप्र., बाल. व्यकगतम्। + भाच. मविगतम्।

१ तु कर्तव्येति. २ स्वे प्रमाण. ३ दाऽप्य. ४ (०). ५ न वि. ६ का. ७ वेति.

संबन्धीनि कार्याणि निर्णयेत् । तत्र देशाचारोऽनुकल्पः । पमा.४१

(७) देशदृष्टैः देशजातिकुलव्यवहारागतैः प्रत्यक्षैर्न्यायैर्हेतुभिर्वा । मच.

(८) देशदृष्टा हेतवो द्विविधाः—सर्वदेशव्याप्ताः, देशविशेषनियताश्चेति । शास्त्रदृष्टा हेतवः तप्तमाषादयः । नन्द.

कार्यदर्शनविधिः

**धर्मासनमधिष्ठाय संवीताङ्गः समाहितः ।**
**प्रणम्य लोकपालेभ्यः कार्यदर्शनमारभेत् ॥**

(१) धर्मः प्रधानः यस्मिन्नासने भवति तद्धर्मासनम् । राजासने हि राज्यस्थित्यानुगुण्येनार्थमेव प्रधानीकरोति न्यक्कृत्यापि धर्मम् । व्यवहारनिर्णये तु धर्ममेव प्रधानं आश्रयेत् इत्यर्थो न पुनराश्रयभेदोऽनेन ज्ञाप्यते । संवीताङ्गः वस्त्रादिना स्थगितशरीरः । प्रणम्य लोकपालेभ्यः इन्द्राद्यष्टौ लोकपालाः तान्नमस्कृत्य कार्यदर्शनमारभेतेत्यदृष्टार्थमेतद्द्वयं अङ्गसंवरणं लोकपालप्रणामश्च । समाहितः अनन्यचित्तः कार्यदर्शने । एवं हि दृष्टार्थं भवति । प्रणामविशेषणं वा । समाहितग्रहणं यद्यप्यत्र किञ्चिदुक्तमेव प्रतिभाति तथापि पद्यग्रन्थत्वान्नातीव पौनरुक्त्यम् । लोकपालेभ्य इति चतुर्थी संप्रदाने । कथम् ? क्रियाग्रहणं संप्रदानसूत्रे चोदितं 'श्राद्धाय निगृण्हते' 'पत्ये शेते' इत्याद्यर्थम्, न च क्रियाग्रहणं गृण्हात्यादिविषयमेव । भाष्येऽनुक्तत्वात् । मेधा.

(२) धर्मदर्शनार्थं आसने उपविश्य आच्छादितदेहोऽनन्यमना लोकपालान्नमस्कृत्य ततो व्यवहारेक्षणं राजा चरेत् । ÷गोरा.

(३) धर्मार्थमासनं धर्मासनम् । मवि.

(४) शास्त्रोक्तकाल इति शेषः । स्मृच.३१

(५) कार्यमुक्ताष्टादशाख्यं तस्य दर्शनं विचारः । मच.

राज्ञो यमव्रतम्—समभावः

**यथा यमः प्रियद्वेष्यौ प्राप्ते काले नियच्छति ।**
**तथा राज्ञा नियन्तव्याः प्रजास्तद्धि यमव्रतम् ॥**

(१) अपराधेन प्रियद्वेष्ययोर्निग्रहसमत्वेन वर्तितव्यम् । मेधा.

(२) यद्यपि यमस्य शत्रुमित्रे नस्तस्तथापि तन्निन्दकार्चकयोः शत्रुमित्रयोर्यथा यमः शत्रुमित्रमरणकाले तुल्यवन्नियमयति, राज्ञाऽपराधकाले रागद्वेषपरिहारेण प्रजाः प्रमापणीयाः । यस्मादेतदस्य याम्यं व्रतम् । ममु.

विवाद्यकार्यनिर्णये तर्क उपायः

**यथा नयत्यसृक्पातैर्मृगस्य मृगयुः पदम् ।**
**नयेत्तथाऽनुमानेन धर्मस्य नृपतिः पदम् * ॥**

(१) यदुक्तं न स्वयं दृष्ट्वापि राजा सहसा कश्चिदाक्रमेत वा निगृण्हीयाद्यतः नर्मणाऽप्येतत्संभवति । कथं पुनरेतदेव गन्तव्यम् ? किं परिहासकृतमेतदुत क्रोधाद्यनुबन्धकृतमिति । यत आह अनुमानेनैतज्ज्ञातव्यम् । यथा मृगयुर्मृगव्याधो विद्ध्वा मृगं नष्टं दृष्टिपथादपक्रान्तं छिद्रनिसृतैरसृक्पातैः स्रवद्भिः शोणितैः पदं मृगस्य नयत्यासादयति, एवं राजाऽनुमानेन परोक्षे प्रत्यक्षे वाऽर्थे कारणं निश्चिनुयात् । धर्मश्च कृतव्यवहारविषयस्तत्वावगमः । उक्तस्याप्यनुमानस्य पुनर्वचनं स्मृतिदार्ढ्यार्थम् । ×मेधा.

(२) यथा मृगस्य शस्त्रहतस्य रुधिरपातैः व्याधः पदं स्थानं प्राप्नोति । तथाऽनुमानेन इष्टप्रमाणेन वा धर्मस्य तत्वं निश्चिनुयात् । ममु.

(३) न केवलं साक्ष्यादिभिरर्थो निर्णेतव्यः । किन्त्व-

---

÷ ममु. गोरावत् ।

(१) मस्मृ.८।२३; शुनी.४।५४५ (धर्मासनमधिष्ठाय कार्यदर्शनमारभेत्); गोरा. रभे (चरे); व्यक.३; स्मृच. ३१; पमा.५२; व्यनि.; स्मृचि.२; दवि.१३ उत्त.; नृप्र. २,५; व्यत.२००; सवि.७७; व्यप्र.९; व्यउ.६; राकौ. ३८२ धर्मा (भद्रा) बृहस्पतिः; बाल.२।१ सन(श्रय) रभे (लभे); सेतु.९६; प्रका. १९; समु.१४.

* अत्रत्या मन्वर्थविवृतिः मण्डलिकमुद्रितग्रन्थस्याशुद्धिसंदेहान्नोध्दृता । × गोरा., मच. मेधागतम् ।

(१) मस्मृ.९।३०७; स्मृच.२४ नारदः; पमा.३७ बृहस्पतिः; प्रका.१३ नारदः; समु.९ नारदः.

(२) मस्मृ.८।४४; व्यक.६; मभा.११।२५ नयेत्तथाऽनुमानेन (तथाऽनुमानेन नयेत्) नारदः; स्मृच.२५; पमा. ३९; व्यनि.; स्मृचि.६; सवि.७१; व्यसौ.५; प्रका.१४; समु.१०.

नुमानेनापीत्याह– यथा नयत्यसृक्पातैः इति । पदं निर्णयम् । नन्द.

वस्त्वात्मसाक्षिदेशकालरूपाणि दर्शनसमयेऽवधार्याणि

**सत्यमर्थं च संपश्येद् आत्मानमथ साक्षिणः ।**
**देशं रूपं च कालं च व्यवहारविधौ स्थितः ॥**

(१) व्यवहारविधौ व्यवहारकर्मणि, स्थितः प्रवृत्तो, न केवलं व्यवहाराणि संपश्येत्, यावदेतदपरं सत्यादि(?) तत्र सत्यस्य दर्शनम् । यद्यप्यर्थिप्रत्यर्थिनोरन्यतरेण शालीनतया परिपूर्णाक्षरं नाभिहितं तथापि यदि राजा प्रमाणान्तरतः पूर्वोक्ताद्वाऽनुमानादेव कथञ्चिदीदृशोऽयमर्थ इति निश्चेतुं पारयेत् तदा तदाश्रयेन्नोपेक्षेत, अनेनैतन्न सर्वमुक्तमिति । तदुक्तं–'छलं निरस्य भूतेषु व्यवहारान्नयेन्नृप' इति (यास्मृ. २।१९) । अर्थस्य दर्शनम् । अर्थशब्दो धनवचनः प्रयोजनवचनो वा । तत्र यदि महान्तमर्थमासादयेत्तदा त्यक्त्वाऽप्यन्यानि राजकार्याणि नोद्विजेत् व्यवहारेक्षणं कुर्यादेव । अथ वा यदि कश्चिद् ब्रूयात्साक्षिभिरर्थं एतस्माद् गृहीतोऽन्येन वा सभ्येनै, तत्र निरूपयितव्यम् । यदेतद्व्यवहारपदं यदि स्वल्पं, न संभवति धनग्रहणम् । अथ गुरु सभ्याः साक्षिणश्च दैन्यं गतास्तदा संभावनीयम् । प्रमाणान्तराच्च निश्चेतव्यम् । एतच्चात्मानं साक्षिणं कृत्वा गवेषणीयम् । एतदुक्तं भवति । कण्टकशोधनन्यायेन चारैश्चारयेत् । अथवा आत्मानं संपश्येदात्मनोऽवस्थां संपश्येत् कोशक्षयं महाकोशतां वा । अस्मिन्पक्षे साक्षिण इति स्वतन्त्रं पदम् । देशस्य दर्शनम् । क्वचिदल्पोऽप्यर्थो महत्त्वमासादयति । महानपि योऽन्यत्र सैन् क्वचित् लघुर्भवतीति । एतद्देशस्य दर्शनम् । एवं कालोऽपि द्रष्टव्यः । रूपं व्यवहारवस्तुस्वभावः । तस्य गुरुलघुतां पश्येदिति ।

अन्यैस्तु व्याख्यातम्, सत्यार्थयोः सारफल्गुतां पश्येदात्मानं साक्षिणं कृत्वा । एतदुक्तं भवति–अर्थात्सत्यं गुरुत्वेन महाप्रयोजनत्वादुभयलोकसाधनरूपतया आश्रयितव्यम् । अर्थस्त्यक्तव्योऽसारत्वात् । देशः स्वर्गादिः सत्यसमाश्रयप्राप्यः । कालश्चिरं तत्र वासः । रूपं स्वरूपं सुन्दरं मनोहरम् । एतदेव विपरीतम्, सत्यत्यागेन केवलार्थसमाश्रयणात् । +मेधा.

(२) व्यवहारकर्मप्रवृत्तो राजा सत्यं दृष्टादृष्टसुखहेतुतया संपश्येत् । अर्थं च सारासारत्वेन, आत्मानं च सदसत्कर्मणा, देशं च समनन्तरराजान्तरविहारं, कालं च जीवितसंबन्धबलं, रूपं चेदं व्याधिजराभोज्यप्रायं लोभादिनाऽस्खलनार्थं संपश्येत् । *गोरा.

(३) अर्थं दण्डादिसिद्धम् । आत्मानं राजानं पश्येत् । ततो राजवृत्तमनुगच्छेत्तथा साक्षिणो देशादींश्च संपश्येत् प्रयत्नेनानुसंदध्यादित्यर्थः । देशं अत्रायमाचार इति । कालं अत्रैतद्योग्यमिति । रूपं अर्थिप्रभृतीनामाकारम् । मवि.

(४) व्यवहारदर्शनप्रवृत्तो राजा छलमपहाय सत्यं पश्येत् । तथार्थं च । अर्शआदित्वान्मत्वर्थीयोऽच् । अर्थवन्तं गोहिरण्यादिधनविषयस्थं व्यवहारं पश्येत्, 'न त्वहमनेनाक्षिनिकोचनेनोपहसित' इत्यादिस्वल्पापराधम्, आत्मानं च तत्त्वनिर्णये स्वर्गादिफलभागिनं, साक्षिणः सत्यवादिनः, देशं कालं च देशकालोचितं स्वरूपं व्यवहारस्वरूपं गुरुलघुतादिकं पश्येत् । ×ममु.

(५) सत्यं संपश्येत्, अस्मिन् व्यवहारेऽपवादिनोः किं प्रयोजनं भविष्यतीति पश्येत् । साक्षिणः पश्येत्, यथोक्तगुणानामपि साक्षिणां रागद्वेषौ पश्येत् । इङ्गितादिभिर्देशं कालं च पश्येत् । अस्मिन् देशे अस्मिन्कालेऽयमर्थो युज्यते न वेति पश्येत् । विवादविषयस्यार्थस्य रूपं च पश्येत् । नन्द.

धर्मशास्त्रं देशादिधर्माश्च व्यवहारप्रमाणम्

**स्मृतिशास्त्रे त्वविज्ञाते दुर्ज्ञाते वाऽविवेकतः ।**
**धर्मकार्ये महान्दोषः सभायां वदतः सदा ॥**
**जातिजानपदान्धर्मान् श्रेणीधर्मांश्च धर्मवित् ।**
**समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपादयेत् ॥**

(१) मस्मृ.८।४५ ख.पुस्तके साक्षिणम् इति पाठः; व्यक. ६; स्मृचि.६; व्यसौ.५ र्थं च (र्थेन) णः (णम्) रूपं च कालं (कालं च रूपं); समु.१०.

१ साक्षिरर्थ. २ सत्ये. ३ सत्कविर्. ४ फलतां.

+ व्यक. मेधावत् । * मेधातिथिभाष्योक्ताऽन्यकल्पानुसारिणीयं व्याख्या । × मच. ममुवत् ।

(१) अप.२१२. मनुस्मृतौ नोपलभ्यते ।

(२) मस्मृ.८।४१; शुनी.४।५४६-५४७ च धर्मवित्

(१) कुरुकापिशकाश्मीरादिदेशो नियतावधिः जनपदः। तत्र भवा धर्मा जानपदाः। किञ्च, तत्र भवन्ति ये, तद्देशव्यपदेशैरनुष्ठीयन्ते। अथवा तन्निवासिनो जनास्तावत् 'मञ्चाः क्रोशन्ति' इतिवत् जनपदशब्देनाभिधीयन्ते। तेषामनुष्ठेयाः जानपदाः। 'तस्येदमि'ति तद्धितः। जातेर्जानपदाः जातिजानपदा इति षष्ठीसमासः। जातिमात्रविषया देशधर्मा राज्ञा परिपालनीयाः। समीक्ष्य विचार्य किमाम्नायैर्विरुद्धा अथ न, तथा पीडाकराः कस्यचिदुत न, एवं विचार्य, येऽविरुद्धास्तान्प्रतिपादयेदनुष्ठापयेदित्यर्थः। तथा च वक्ष्यति 'सद्भिराचरितं यत्स्यात्' इति। अथवा जातयश्च ते जानपदाश्चेति विशेषणसमासः। जातिशब्देन च नित्यत्वं लक्ष्यते। प्रशंसामात्रं चैतत्। देशधर्मा अपि शास्त्राविरुद्धा नित्याः ते नित्यवदनुष्ठेयाः, दृष्टार्थाः गोप्रचारोदकरक्षणादयः। यथा ग्रामीणाः—'अत्र प्रदेशे गावो न चारणीया' इति समयमाश्रयन्ति कस्यचित् कार्यस्य सिद्ध्यर्थम्, तत्र यो व्यतिक्रामति स राज्ञा दण्ड्यः। अथवा जनपदे भवा जानपदाः देशनिवासिन उच्यन्ते। जात्या जानपदा जातिजानपदाः। जातिर्जन्मोत्पत्तिरिति यावत्। एतेन देशसंबन्धस्य पुरुषाणां नित्यता लक्ष्यते। ये तद्देशजास्तद्देशाभिजनास्तन्निवासिनश्च गृह्यन्ते तेषां सर्वविशेषणविशिष्टानामनिदंप्रथमतो जाता ये धर्मास्ते जातिजानपदशब्देनोच्यन्ते। 'वृद्धाच्छे' तद्धिते प्रसक्ते छान्दसत्वादणेव कृतः। अथवाऽभेदोपचारात्पुरुषशब्दस्तत्संबन्धिषु धर्मेषु प्रयुक्तः। एतेनायं देशनियमो धर्माणां स एवंविधात्पुरुषात् प्रतिद्रष्टव्यः। एते हि देशधर्मा देशानां न पुनरार्याणाम्। न हि तिर्यक्समानधर्माणोऽन्यत्रानधिकृताः स्वसमाचारप्रसिद्धं धर्ममनुतिष्ठन्तः मातृविवाहादि, सार्वभौमेन निवारणीयाः। स्वदेशाचारवतां तेषां जातिधर्मः, जननिवासबन्धेनाभ्यनुज्ञानात्, आम्नाये विरोधोऽप्यत्र नास्ति, अधिकृतानां विरोधात्, विरोधो न तिरश्चाम्।

ननु 'अहिंसा सत्यमक्रोधः शौचमिन्द्रियसंयमः' इति प्रतिलोमाधिकारेणैवोक्तम्। म्लेच्छाश्चाप्रतिलोमा एव, तत्र यदि मातृविवाहे मूत्रोत्सर्गे चोदकशुद्ध्यभावे न दुष्यति क इन्द्रियसंयमः कीदृशं वा शौचमिति। उक्तमेतत्। आर्यावर्तिनामेते धर्माः शौचादयः। चातुर्वर्ण्ये तु तद्देशनियमो धर्माणां नास्ति। केचिद्दृष्टार्था देशधर्मा इति वक्ष्यामः। एककार्यापन्ना वणिक्कारुकुसीदिचातुर्विद्यादयः, तेषां धर्माः श्रेणिधर्माः। यथा केचन वणिङ्महत्तरा वचनेन परिच्छिन्नं राज्ञो भागं प्रयच्छन्ति, इमां वाणिज्यां वयमुपजीवाम, एष ते राजभागोऽस्माकं यावल्लाभोऽस्तु न्यूनोऽधिको वा। तत्र राज्ञाऽभ्युपगते वाणिज्ये लाभातिशयार्थं राष्ट्राविरोधिनीं चेतरेतरव्यवस्थां कुर्वन्ति, इदं द्रव्यमियन्तं कालमविक्रेयमयं राजोपानयनार्थो दण्डः पतति देवतोत्सवार्थो वा, तत्र यदि कश्चिद् व्यतिक्रामति स एवं श्रेणीधर्मं व्यतिक्रामन् दण्ड्यः।

कुलधर्मा इति। कुलं वंशः। तत्र प्रख्यातमहिम्ना पूर्वजेन धर्मः प्रवर्तितो भवति योऽस्मद्वंशजः कुतश्चन धनं लभेत स नाद्दत्वा ब्राह्मणेभ्योऽन्यत्र विनियुञ्जीतेत्यादयो धर्माः। तथा, सति योग्यत्वे य एव पूर्वपुरुषाणां याजकः कन्यादिसंप्रदानभूतो वा स एव कार्यः। तदतिक्रामन् राज्ञाऽनुष्ठापयितव्यः। एतेषां च सामवायिकत्वादधर्मत्वशङ्कया पुनर्वचनम्। न चायं संविद्व्यतिक्रम इति वक्ष्यामः। मेधा.

(२) जातिधर्मान् अध्ययनादीन् जानपदांश्च नियतदेशव्यवहारान् अविरुद्धान् वणिक्कर्षकादिगतान् श्रेणीधर्मान् कुलधर्मांश्च प्रतिनियतकुलस्थितान् ज्ञात्वा यः स्वधर्मस्तं तथा तत्र स्थापयेत्। अतश्च तद्विरुद्धव्यवहारिषु वादिनं निगृह्णीयात्। गोरा.

(३) जातिर्ब्राह्मणादिः, जनपदोऽनेकग्रामसमुदायः तद्वासिनो जानपदाः तत्संगतान्। श्रेणी पाषण्डवणिगादिगणः। कुलं वसिष्ठकुलं इत्यादि तन्नियतान्धर्मान् समीक्ष्य निरूप्य। मवि.

(४) श्रेणिधर्माः वणिक्कारुकादीनां स्वे स्वे वर्गे इद-

(तथैव च) पाद (पाल); **गोरा.** जातिजानपदान्धर्मान् (जातिधर्मान् जानपदान्); **ममु., मच.** अनयोरपि गोरावत् पाठः; **व्यक.**८; **स्मृच.**२९ णी (णि) धर्मवित् (शाश्वतान्) स्वधर्मं (स्वे वर्गे); **पमा.**४६ पूर्वार्धं स्मृचवत्, स्वधर्मं (सवर्णे); **व्यनि.** पाद (पाल); **स्मृचि.**६ धर्मं (धर्मान्); **व्यसौ.**६ जाति (इति) प्रतिपाद (परिपाल); **व्यप्र.**२१ धर्मवित् (तथैव च) पाद (पाल); **व्यउ.**१३ व्यप्रवत्; **प्रका.**१७-१८ स्मृचवत्; **समु.** १३ पूर्वार्धं स्मृचवत्, प्रतिपाद (परिपाल).

१ कुरु. २ राज्ञो. ३ कार्यात्.

मस्मिन्नहनि विक्रेयं इदं चानयैव श्रेण्या विक्रेयमित्येव-मादयः। अस्मिन् कुले पञ्चमेऽह्नि पञ्चमे वाऽब्दे कर्णवेधः कर्तव्य इत्यादयः कुलधर्माः। प्रतिपादयेद् बोधयेत्। अकुर्वतश्चानापदि बलात्कारेण कारयेत्। स्मृच.२९

(५) जातिधर्मान् ब्राह्मणादिजातिनियतान्याजनादीन् जानपदांश्च नियतदेशव्यवस्थितान् आम्नायाविरुद्धान्, 'देशजातिकुलधर्माश्चाम्नायैरप्रतिषिद्धाः प्रमाणमि'ति (गौध. ११।२२) गौतमस्मरणात्। श्रेणीधर्मांश्च वणिगादिधर्मान् प्रतिनियतकुलव्यवस्थितान् ज्ञात्वा तदविरुद्धान् राजा व्यवहारेषु तत्तद्धर्मान् व्यवस्थापयेत्। ममु.

(६) कुलं वंशः ब्राह्मणादिर्मूर्धाभिषिक्तादिरिति वा। एतेषामेतदेव स्वधर्म इति वीक्ष्य परिपालयेद् राजा इति। *मच.

(७) स्वधर्मं राजप्रवर्तितं धर्मम्। मदनरत्ने तु स्वधर्मं दुष्टदण्डनरूपमिति व्याख्यातम्। तदनुवादमात्रत्वापत्तेर्हेयम्। व्यप्र.२१

(८) देशधर्मः यथा दाक्षिणात्यानां मातुलसुतापरिणयनम्। कुलधर्मः पूर्वशिखापरशिखादिनियमः। नन्द.

**स्वानि कर्माणि कुर्वाणा दूरे सन्तोऽपि मानवाः।**
**प्रिया भवन्ति लोकस्य स्वे स्वे कर्मण्यवस्थिताः ×॥**

(१) पूर्वोक्तस्य जानपदादेर्धर्मस्य दृष्टाऽदृष्टताऽनेन प्रदर्श्यते। स्वानि कर्माणि कुलस्थित्यनुरूपाणि ये कुर्वन्ति ते दूरस्था अपि प्रिया भवन्ति। सर्वस्यान्यो निकटवर्ती संसर्गातिशयात्प्रियो भवति। स्वकर्मकारी तु दूरस्थ एव प्रियः। स्वे स्वे कर्मण्यवस्थिता इत्यनेन परकर्माऽननुष्ठानमाह। ये न परकर्माणि कुर्वन्ति ते सर्वस्य प्रिया भवन्तीति श्लोकार्थः। मेधा.

(२) दूरे देशे देशान्तरे। अतो लोकाविरुद्धत्वात्स्वस्वजात्यादिधर्म एव ग्राह्यस्तेषामित्यर्थः। स्वे स्वे धर्म इति प्रियत्वे हेतुतया पुनरुक्तम्। मवि.

(३) यस्मात्, स्वानीत्यादि। जातिदेशकुलधर्मादीन्यात्मीयकर्माण्यनुतिष्ठन्तः स्वे स्वे च नित्यनैमित्तिकादौ कर्मणि वर्तमानाः, दूरेऽपि सन्तः सान्निध्यनिबन्धनस्नेहाऽभावेऽपि लोकस्य प्रिया भवन्ति। ममु.

द्विजातिशिष्टाचारः प्रमाणम्

**सद्भिराचरितं यत्स्याद्धार्मिकैश्च द्विजातिभिः।**
**तद्देशकुलजातीनामविरुद्धं प्रकल्पयेत्॥**

(१) सन्तः प्रतिषिद्धवर्जकाः। धार्मिका विहितानुष्ठायिनः। यद्यप्येक एव शब्द उभयमर्थं प्रतिपादयितुं शक्नोति, तथापि भेदोपादानाद्विषयविभागेनैवं व्याख्यायते। तैर्यदाचरितमनुपलभ्यमानश्रुतिस्मृतिवाक्यं तद्देशकुलजातीनां प्रकल्पयेदनुष्ठापयेत्। अविरुद्धं श्रुतिस्मृतिभिरुपलभ्यमानाभिः। यदुक्तं 'जातिजानपदान् धर्मान्' इत्यत्र (मस्मृ. ८।४१) श्लोके देशकुलाद्याचारस्य प्रामाण्यं, तस्यानेन विशेषः कथ्यते। आम्नायेनाविरोधेन तत् प्रमाणं न विरोधे तत्प्रमाणम्। तेन दृष्टार्थान्यपि ग्रामदेशराजकार्याणि शास्त्राऽविरुद्धान्यादरणीयानि। न विरुद्धानि। यथा क्वचिद्देशे ऋणिक आत्मानं विक्रय्य धनं दाप्यते। तच्च 'कर्मणाऽपि समम्' इत्यनेन विरुद्धं अन्यत्र श्लोकेन दर्शितम्। अन्यस्य त्वाचारस्य शिष्टसंबन्धितयैव प्रामाण्यमुक्तं 'आचारश्चैव साधूनाम्' इति। न च तद्विरुद्धार्थसमाचरणेन साधुत्वमुपपद्यते। तस्माच्च नाऽदृष्टाय। तद्विषयोऽयमुपदेशः।

अन्यस्त्वाह—देशान्तरे धार्मिकैः सद्भिर्द्विजैर्यद्वेदविरुद्धं श्रुत्वा स्मृत्यन्तरेण वा आचर्यते, तद्देशान्तरेऽपि राजा प्रकल्पयेत्। यथोदृवृषभयज्ञादय उदीच्येषु प्रसिद्धास्ते प्राच्यैर्दाक्षिणात्यैः प्रतीच्यैश्चानुष्ठेयाः। कुतः? आचाराद्धि स्मृतिरनुमातव्या। स्मृतेः श्रुतिः। सा च यद्येवमनुमीयते, उदीच्यैरेतत्कर्तव्यमिति, तत्र तद्धितस्य बहुष्वर्थेषु स्मरणात्तत्र जातस्तत्र भवस्तत आगतस्तमभिप्रस्थितः 'शेष' इति चैतस्य लक्षणाधिकारोभयरूपत्वादन्येष्वप्यर्थेषु प्रतिपदमनुपातिषु तद्धितस्मरणान्नास्त्यनुदीच्यो नाम य उदीच्यशब्देन निवर्त्येत। ततश्च

* शेषं गोरावत्। × गोरा., मच. व्याख्यानं मण्डलिकमुद्रितग्रन्थस्याशुद्धिसंदेहान्नोध्दृतम्।

(१) **मस्मृ.**८।४२; **व्यक.**८; **स्मृचि.**६; **व्यसौ.**६; **समु.**१३ कर्मण्य (धर्मे ऽय).

(१) **मस्मृ.**८।४६; **व्यक.**८; **व्यनि.**; **स्मृचि.**६; **व्यसौ.**६; **समु.**१३.

१ दि.

पुरुषमात्रेणैतत्कर्तव्यमित्यापतति । देशसमाख्याया नियतनिमित्तत्वाभावेन[1] अनियामकत्वात्। अथैवं वाक्यमनुमीयेत, उदीच्यां जातेन तद्देशवासिना वा। तदपि व्यभिचारि[2], तज्जातोऽपि नान्यत्र करोति, तन्निवास्यप्यन्यत्र जातो न करोत्येव। अथोदग्देशाभिजनस्तन्निवासी चेति अनित्यत्वादभिजननिवासयोस्तदपि न युक्तमेव। न हि जातिगुणगोत्राणीवाभिजननिवासौ नित्यौ। तस्मान्नित्यस्य च[3] कस्यचिदनुष्ठातृणामवच्छेदकस्यानुपपत्तेः सर्वविषया धर्माः। न देशधर्मा नाम केचन सन्ति। अनेनैव न्यायेन कुलधर्मा अपि। कथं तर्हि 'देशधर्माः कुलधर्मा' इति च स्मृतिकारैर्भेदेन व्यपदिश्यन्ते। उक्तं, दृष्टार्था नियता व्यवस्था तत्र धर्मस्तस्य च नियम उपपद्यते इति उक्तम्। कुलं च गोत्रैकदेशः। यस्तु कृत्स्नगोत्रधर्मो यथा न वासिष्ठा वैश्वामित्रमवधीरिति, स नित्यत्वाद्गोत्रव्यपदेशस्य नान्यस्येति विरम्यते(?)। *मेधा.

(२) विद्वद्भिर्धर्मप्रधानैर्द्विजातिभिः यच्छास्त्राविरुद्धमासेवितं तद्देशकुलजातीनामनुरूपं कल्पयेत्। इह च सद्भिराचरितमित्युपादानादिदं सदाचारविषयम्। जातिजानपदाद्येतत्पुनः सदाचारव्यतिरिक्तधर्मविषयम्। ×गोरा.

(३) सद्भिर्दोषरहितैर्देवादिभिः। तद्वस्तु प्रकल्पयेत् प्रकृष्टं व्यवहारेषु कल्पयेत्, यदि देशाद्यविरोधि। विरोधे तु तद्देशादिधर्म एव तद्देशजानाम्। एवं सामान्यतो राजधर्मा व्यवहाराऽनुगुणा उक्ताः। मवि.

(४) विद्वद्भिर्धर्मप्रधानैर्द्विजातिभिर्यद् दृश्यमानशास्त्रमनुष्ठितं तद्देशकुलजात्यविरुद्धमादाय व्यवहारनिर्णयं प्रकल्पयेत्। ममु.

(५) आचरितं शास्त्रदृष्टमप्यनुष्ठितम्। सद्भिरिति द्विजातीनां विशेषणं शूद्रव्यावृत्त्यर्थम्। धार्मिकैः प्रतिषिद्धवर्जनपुरःसरं धर्मानुष्ठातृभिः। तद्देशकुलजातीनामविरुद्धमेव प्रकल्पयेत् प्रमाणं कुर्यात् कुलधर्मांश्चेत्यत्रोक्तत्वात्। मच.

(६) तदनुरूपनिर्णयोपायपरिग्रहार्थमशास्त्रीयमपि सद्भिराचरितं धर्ममनुपालयेदित्याह—सद्भिराचरितं यत्स्यादिति। स्वधर्मनिरता अध्यात्मविदः सन्तः। अविरुद्धं विरुद्धं न चेत्। प्रकल्पयेदनुपालयेत्। नन्द.

(७) अविरुद्धं दण्डं प्रकल्पयेत्। भाच.

क्रुद्धवादिप्रतिवादिकृताधिक्षेपो राज्ञा क्षन्तव्यः

**क्षन्तव्यं प्रभुणा नित्यं क्षिपतां कार्यिणां नृणाम्।**
**बालवृद्धातुराणां च कुर्वता हितमात्मनः॥**

(१) कार्यिणोऽर्थिप्रत्यर्थिज्ञातिसुहृदः। कस्मिंश्चिद्धन्यमाने यदि तत्पिता तन्माता वा राजानं क्षिपेत्कुत्सयेत् अभिशपेद् वा तदा क्षमा कार्या। बालादीनां कार्यिणाम्। एवमात्मने हितं कृतं भवति क्षन्तव्यमित्येतद्विधेः फलमेवात्महितम्। मेधा.

(२) कार्यवतां क्षिपतां स्तेनहतबान्धवादीनां संतापेन आक्रोशतां बालवृद्धव्याधितानां च आक्रोशतां आत्मने वक्ष्यमाणमुपकारमिच्छता पार्थिवेन सर्वदा क्षमणीयम्। *गोरा.

(३) प्रभुणा शक्तेनापि। कार्यिणां कार्यासिद्धेः क्षिपतामप्रियं वदतां बालादीनामकार्यिणामपि। मवि.

(४) राज्ञः स्वतन्त्रस्यापि कार्यविशेषे अस्वातन्त्र्यं सार्थवादमाह—क्षन्तव्यमिति द्वाभ्याम्। मच.

(५) स्तेनापहृतद्रव्यैस्तद्द्रव्यप्रत्यानयनकालात्ययादिव तैर्जनैर्यत्पारुष्यमुच्यते तद्राज्ञा क्षन्तव्यमित्यभिप्रायेणाह—क्षन्तव्यं प्रभुणेति। प्रभुणा क्षिपतां तेषां निग्रहाय प्रभुणापि। नन्द.

**यः[2] क्षिप्तो मर्षयत्यार्तैस्तेन स्वर्गे महीयते।**
**यस्त्वैश्वर्यान्न क्षमते नरकं तेन गच्छति॥**

(१) आर्तैर्दण्ड्यमानतत्संबन्धिभिः अधिक्षिप्त

---

* व्यक. मेधावत्। × अत्रत्यो गोराग्रन्थः त्रुटितस्तथा श्लोकान्तरीयपङ्क्तिसंकरयुक्तः प्रकाशकदोषात्।

१ भावे. २ चारितवतोऽपि. ३ न.

---

* ममु. गोरावत्।

(१) **मस्मृ.** ८।३१२; **गोरा.** र्वता (र्वतां) त्मनः (त्मने); **व्यक.** १९ र्वता (र्वतां); **स्मृच.** २९ क्षिप (क्षिय); **स्मृचि.** ५ व्यकवत्; **दवि.** ३८ व्यकवत्; **व्यसौ.** १४ व्यकवत्; **प्रका.** १८ नारदः; **समु.** १३.

(२) **मस्मृ.** ८।३१३; **गोरा.** यः (यत्); **व्यक.** १९; **स्मृच.** २९ यः (यत्) त्यार्तै (त्पार्तै) यस्त्वै (यत्त्वै); **स्मृचि.** ५ यस्त्वै (यदै); **व्यसौ.** १४; **प्रका.** १८ नारदः; **समु.** १३.

आक्रुष्टो यत् मर्षयति न क्रुध्यति तेन क्षमणेन स्वर्गे महीयते । कण्ड्वादिरयम् । महत्त्वं प्राप्नोति स्वर्गेऽकोपेन । न तर्हि क्षमा कर्तव्या अकामिना अयथाकामिना । अत आह—यस्त्विति । प्रभुरहमित्यभिमानेन न सहते तेन नरकं प्राप्नोति । आर्तग्रहणं बालवृद्धयोरपि प्रदर्शनार्थं पूर्वशेषत्वादस्य । मेधा.

(२) संततैः आक्रुष्टो यत्तेषां क्षमते, तेन स्वर्गलोके महीयते महिमानं भजते । यत्पुनः प्रभुत्वदर्पान्न सहते तेन नरकं व्रजति । *गोरा.

(३) आर्तैः कार्यालाभाद्दुःखितैः । मवि.

अधर्म्यनिर्णयेऽशुभफलम्

**यस्त्वधर्मेण कार्याणि मोहात्कुर्यान्नराधिपः ।**
**अचिरात्तं दुरात्मानं वशे कुर्वन्ति शत्रवः ॥**

(१) अधर्मेण यः कार्याणि कुरुते स मोहादेवेह व्यामूढो धर्मं जह्यात् । तस्येदं अधर्मजं फलम् । विरक्तप्रकृतितया वशे कुर्वन्ति शत्रवः । विरक्ता हि प्रकृतयः क्रुद्धलुब्धभीतावमानिताः परैरुपजप्येरंस्ततश्च बहुकुल्य वशे कुर्वन्ति दण्डयन्ति बध्नन्ति घ्नन्ति राष्ट्रमपहरन्ति चेत्येष वशीकारः । मेधा.

(२) यः पुनर्नृपो लोभादिव्यामूढतया अधर्मेण व्यवहारदर्शनादीनि कार्याणि कुरुते तमधर्मपरप्रकृतित्वात् क्षिप्रमेव शत्रवश्चासादयन्ति । गोरा.

(३) मोहात् धर्मो नास्तीति भ्रमात् । मवि.

धर्म्यनिर्णये शुभफलम्

**कामक्रोधौ तु संयम्य योऽर्थान्धर्मेण पश्यति ।**
**प्रजास्तमनुवर्तन्ते समुद्रमिव सिन्धवः ॥**

(१) सिन्धवो नद्यो यथा समुद्रमाश्रयन्ति आश्रिताश्चानुरागिण्यस्तन्मय्यो वसन्ति न ततो निवर्तन्ते, एवं कामक्रोधजयाद्राजानं प्रजाः समयोगक्षेमास्तन्मय्यः संपद्यन्ते । मेधा.

(२) यश्च द्वेषपरित्यागेन यो राजा धर्मेण कार्याणि निवारयति तं नद्य इव समुद्रं, प्रजाः संभजन्ते तन्मनसश्च भवन्ति । गोरा.

(३) अर्थमर्थसाधनं व्यवहारादि । मवि.

## वाल्मीकिरामायणम्

राज्ञा कार्यदर्शनं नोपेक्षणीयम्

**पौरकार्यं तु यो राजा न करोति समास्थितः ।**
**व्यक्तं स नरके घोरे पच्यते नात्र संशयः ॥**

समास्थितः सुस्थितः । अनेन दुःस्थितस्यादर्शने न दोष इति सूचितम् । व्यप्र. ९२

## याज्ञवल्क्यः

राज्ञो व्यवहारदर्शनविधिः । धर्मशास्त्रावलम्बनम् । क्रोधलोभवर्जनम् ।

**व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह ।**
**धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥**

(१) श्रियः समुदयं प्राप्तुमिच्छता विजिगीषुणा समृद्धये राज्ञा प्रयत्नाद् अमित्रराज्यानि आच्छिद्य स्वराज्यं विविर्धनीयमित्युक्तम् । तत्रापि, कष्टतमाः खल्वरयः कापटिककुयन्त्रव्यवहारिणो दस्यवः । तेभ्योऽपि राष्ट्रं रक्षणीयमित्येतदप्युक्तम् । अथेदानीं तदुद्धरणप्रकारविवेकार्थं व्यवहारनिरूपणं प्रस्तौति—व्यवहारानिति । ननु चैतत् प्रागेवोक्तम्— 'इति संचिन्त्य नृपतिः' इत्यत्र । सत्यम् । गुणार्थस्त्वयमारम्भः, न कोशसंचिचीषयार्थप्रधानो भवेत् । धर्मशास्त्रानुसारेणैव व्यवहारान् नृपः पश्येदित्यर्थः । किञ्च विद्वद्भिर्ब्राह्मणैः सह । प्रवक्तृत्वेऽपि ब्राह्मणानां नृपसहायोपयोगितैव । द्रष्टा तु निग्रहानुग्रह-

* ममु.,मच.गोरावत्.

(१) **मस्मृ**.८।१७४; **शुनी**.४।५१०-५११; **व्यक**.७-८; **स्मृच**.१२३; **स्मृचि**.७; **नृप्र**.२; **व्यसौ**.५; **व्यप्र**.९२; **प्रका**.७७; **समु**.६७. (२) **मस्मृ**.८।१७५; **शुनी**.४।७७६-७७७; **व्यक**.५; **स्मृच**.१२३; **सवि**.५०३ र्थान् (र्थं); **व्यप्र**.९३; **प्रका**.७७; **समु**.६७.

१ धर्मे.

(१) **शुनी**.४।५०९-५१० यँ तु (र्याणि) समा (सुखे); **व्यक**.७ तु (हि); **स्मृचि**.७ व्यक्तं स (स राजा); **चन्द्र**.१०४ यँ तु (र्याणि) शेषं स्मृचिवत्; **व्यसौ**.५ समा(सभा) शेषं स्मृचिवत्; **व्यप्र**. ९२ व्यकवत्.

(२) **यास्मृ**.२।१; **शुनी**.४।५०६ उत्त.; **विश्व**.२।१; **मिता**.; **अप**.; **व्यक**.४; **स्मृच**.१४पू.:२४; **पमा**.६; **व्यनि**.; **स्मृचि**.२; **नृप्र**.२ सारे (रोधे): ५ पू.; **सवि**.१३,५४,६५; **व्यसौ**.१ रान् (रं); **वीमि**.; **व्यप्र**.१०:१४ उत्त.; **व्यउ**.६; **व्यम**.२; **विता**.३; **राकौ**.३८२; **प्रका**.६; **समु**.९.

सामर्थ्याद् राजैव। अत एवोक्तम्—क्रोधलोभविवर्जित इति। समर्थेनापि धर्मशास्त्रानुसारिणा भाव्यम्। न क्रोधादिवशेनान्यथा व्यवहर्तव्यमित्यर्थः। एकत्वेऽपि व्यवहारस्य स्वकीयविशेषापेक्षया बहुवचनम्। यथाह मनुः—'तेषामाद्यमृणादानम्' (मस्मृ. ८।४) इत्यादि। नारदश्च—'चतुष्पादश्चतुर्व्यापी' (नास्मृ. १।८) इत्यादि। विश्व.२।१

(२) अभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनं परमो धर्मः। तच्च दुष्टनिग्रहमन्तरेण न संभवति दुष्टपरिज्ञानं च न व्यवहारदर्शनमन्तरेण संभवति। तद्व्यवहारदर्शनमहरहः कर्तव्यमित्युक्तम् 'व्यवहारान्स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहम्' (यास्मृ. १।३६०) इति। स च व्यवहारः कीदृशः कतिविधः कथं चेतीतिकर्तव्यताकलापो नाभिहितस्तदभिधानाय द्वितीयोऽध्याय आरभ्यते—व्यवहारानिति। अन्यविरोधेन स्वात्मसंबन्धितया कथनं व्यवहारः। यथा, कश्चिदिदं क्षेत्रादि मदीयमिति कथयति, अन्योऽपि तद्विरोधेन मदीयमिति। तस्यानेकविधत्वं दर्शयति बहुवचनेन। नृप इति न क्षत्रियमात्रस्यायं धर्मः किन्तु प्रजापालनाधिकृतस्यान्यस्यापीति दर्शयति। पश्येदिति पूर्वोक्तस्यानुवादो धर्मविशेषविधानार्थः। विद्वद्भिर्वेदव्याकरणादिधर्मशास्त्राभिज्ञैः। ब्राह्मणैर्न क्षत्रियादिभिः। ब्राह्मणैः सहेति तृतीयानिर्देशादेषामप्राधान्यम्। 'सहयुक्तेऽप्रधाने' इति स्मरणात्। अतश्चादर्शनेऽन्यथादर्शने वा राज्ञो दोषो न ब्राह्मणानाम्। यथाह मनुः— 'अदण्ड्यान्दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्। अयशो महदाप्नोति नरकं चैव गच्छति' (८।१२८) इति। कथम्? धर्मशास्त्रानुसारेण नार्थशास्त्रानुसारेण। देशादिसमयधर्मस्यापि धर्मशास्त्राऽविरुद्धस्य धर्मशास्त्रविषयत्वान्न पृथगुपादानम्। तथा च वक्ष्यति —'निजधर्माविरोधेन यस्तु सामयिको भवेत्। सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः' इति (यास्मृ. २।१८६)। क्रोधलोभविवर्जित इति। धर्मशास्त्रानुसारेणेति सिद्धे क्रोधलोभविवर्जित इति वचनमादरार्थम्। क्रोधोऽमर्षः। लोभो लिप्सातिशयः। *मिता.

* टीक. अवतरणिका मितावत्। व्यम. नृपशब्दार्थो मितावत्।

(३) व्यवहारान् वादिप्रतिवादिनोर्भाषोत्तरक्रियात्मकान्विवादान् नृपो जनपदपरिपालको, विद्वद्भिर्व्यवहारशास्त्रार्थज्ञैर्विप्रैः सहितो लिखितसाक्ष्यादिप्रमाणपुरःसरतया क्रोधलोभादिविचारकदोषगणमपहाय पश्येत् परीक्षेत। यद्यपि धर्मशास्त्रानुसारितयैव क्रोधादिवर्जनं प्राप्तं, तथाऽपि प्राधान्येन क्रोधादिवर्जनस्य पृथगुपादानम्। न हि क्रोधादिमान् धर्मं शक्नोति व्यवस्थापयितुम्। अतो धर्मशास्त्रोक्तलिखितसाक्ष्यादिप्रमाणगण इव क्रोधादिविरहो नृपवर्ती धर्मव्यवस्थितौ प्रधानं साधनम्।

मूलश्लोके व्यवहारान्नृपः पश्येदिति ऋषिणा परीक्षापरपर्यायो व्यवहारो व्यवहारपदेनोच्यते। ब्राह्मणानां यद्यपि व्यवहारदर्शनकर्तृत्वं प्रतिपाद्यते तथाऽपि तेषां नाधिकारः किन्तु राज्ञामेव, तद्धर्मिफलस्मरणात्। तस्मादृत्विजां यथा यागे कर्तृत्वमेवं ब्राह्मणानां व्यवहारदर्शने धर्मशास्त्रानुसारेणेत्युक्तम्। अप.

(४) यद्यप्येषां विद्वत्तया, ब्राह्मणत्वबहुत्वाभ्यां, सभायां च साधुत्वेन सभ्येभ्यो न भेदः तथाप्यनियुक्तत्वेन तेभ्यो भेदो व्यवसेयः। ते हि नियुक्ताः।

धर्मशास्त्रानुसारेणेत्येतदौशनसाद्यर्थशास्त्रानुसारस्य निवृत्यर्थं न पुनर्धर्मशास्त्रान्तर्गतराजनीत्याद्यर्थशास्त्रानुसरणस्यापि। *स्मृच. १४,२४

(५) अत्र व्यवहारशब्दो रूढियोगाभ्यां निर्णयफलकमर्थिप्रत्यर्थिविवादमाचष्टे। पमा. ६

(६) मिता.टीका—तस्य व्यवहारस्य स्वरूपप्रकारेतिकर्तव्यताऽकाङ्क्षायामुत्तराध्याय आरभ्यते। अथ व्यवहारान्स्वयं पश्येदित्यादिना प्रयोगविधिना साङ्गोपाङ्गो व्यवहारः कर्तव्य इति विहितः पूर्वस्मिन्नध्याये। तत्राङ्गाकाङ्क्षायां तदर्थमुत्तरारम्भ इति। अयमभिप्रायः। अनयोरध्याययोर्हेतुहेतुमद्भावसंलक्षणः संबन्ध इति। व्यवहारान्स्वयं पश्येदित्यनेन पौनरुक्त्यं परिहरति। पश्येदिति। पूर्वोक्तस्यानुवाद इति। अत्रैषा वचनव्यक्तिः। व्यवहारान्स्वयं पश्येदिति यत्तद्वक्ष्यमाणधर्मेण सहेति। तमेव धर्मविशेषमाह—विद्वद्भिर्वेदव्याकरणधर्मशास्त्राभिज्ञैरिति। विद्वद्ब्राह्मणसाहित्यरूपधर्मविधानमित्यर्थः। स एव धर्म इतिकर्तव्यता नामाङ्गानुष्ठानप्रकारः। एवं च

* विता. स्मृच (पृ.१४) वत्।

द्वितीयाध्यायादिश्लोकस्यैव प्रपञ्चः सकलाध्यायशेष इति गम्यते। राज्ञः प्राधान्ये ब्राह्मणानां चोपसर्जनत्वे फलमाह—अतश्चादर्शन इति। अयमभिप्रायः, राज्ञः प्राधान्यादधिको दोषः। ब्राह्मणानां तु तादृशदोषाभावः। न तु सर्वात्मना दोषाभावः। तथा च 'सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम्। अब्रुवन्विब्रुवन्वापि नरो भवति किल्बिषी॥' (मस्मृ. ८।१३) इत्यनेन विरोधः स्यादिति। सुबो.

(७) अत्र 'व्यवहारान् नृपः पश्येत्' इति विधिः स्वापराधेन व्यवहारस्य समाप्तत्वात् स्ववागनुसरणरूपछलमेवालम्ब्यते। न तु प्रमाणान्तरगवेषणं विलम्बत्वाद्विधेरिति। सवि.५४

(८) अत्र यद्यपि व्यवहारदर्शनं पूर्वाध्याय एवोक्तं तथापि सकलाङ्गोपेतव्यवहारस्याऽत्रैव प्रदर्शनादयं व्यवहाराध्याय इति श्लोकैरुच्यते.। ब्राह्मणैरिति मुख्यः कल्पः। असम्भवे क्षत्रियैर्वैश्यैर्वा सह। धर्मशास्त्रस्य प्राधान्यं दर्शयितुं विशेषोपन्यासः। विचारेऽर्थशास्त्रस्याप्यनुसर्तव्यत्वात्। धर्मशास्त्रानुसार्यपि निर्णयो न वादिक्षोभकरपरुषभाषणपराजिताधिकदण्डादियुक्तः कार्य इति दर्शयितुं क्रोधलोभविवर्जितत्वमुक्तम्। धर्मशास्त्रानुसारेणेत्युक्तं तत्र धर्मशास्त्रस्थितिमाह संपूर्णाध्यायेन। वीमि.

(९) अत्र 'व्यवहारान्स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहम्'। (यास्मृ. १।३६०) इत्यनेनैव याज्ञवल्क्येन विहितस्य व्यवहारदर्शनस्यानुवादो ब्राह्मणसाहित्यादिविधानार्थः। न च क्रियानुवादेनानेकगुणविधाने वाक्यभेदः। दर्शनकर्तृतया वाक्यान्तरप्राप्ते तावद्विशेषणविशिष्टस्यैकार्थस्य बोधनात्तदनापत्तेः। पौरुषेयवाक्ये तात्पर्यानुरोधेन तस्यादोषत्वाच्च। ननु सर्वेऽपि व्यवहारदर्शनविधयो न तावत्केवलाऽदृष्टार्थाः। प्रजापालनौपयिकदुष्टादुष्टपरिज्ञानस्य दृष्टस्यावश्यकत्वात्। न च तदेव फलमिति वाच्यम्। स्वर्गादिफलस्य अदर्शनान्यथादर्शनयोः प्रत्यवायस्य च वचनान्तरैर्बोधनात्। तथा च कात्यायनः—'सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः। ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः' इति। किञ्च दुष्टादुष्टपरिज्ञानोपायेष्वनेकेषु प्राप्तेषु विधावस्मिन्नभ्युपगम्यमानेऽयं नियमविधिः स्वर्गादिफलप्रत्यवायपरिहारयोर्भव्यत्वे अपूर्वविधिरिति वैरूप्यं चापद्यते। व्यवहारदर्शनमात्रोपायकत्वं यदि दुष्टादुष्टपरिज्ञानस्य तर्हि तदर्थतयाऽननुष्ठानार्थता ज्ञानस्येति विधिर्व्यर्थः। अथ यथा भट्टसोमेश्वरेणानुष्ठानं विनाभूतस्यापि ज्ञानस्य विध्यधीनाङ्गत्वनिर्वाहाय 'यदेव विद्यया' इत्यादिवाक्येन कर्मार्थतया विधिरभ्युपगतो, यथा च मिश्रादिभिर्लिङ्गादेवाङ्गत्वं ज्ञानस्येत्युक्तम्। तथा व्यवहारदर्शनस्य तदविनाभावेऽपि विधिरभ्युपेयताम्। मैवम्। कर्मानुष्ठानस्यापूर्वसाधनत्वात्तत्पर्यवसायिज्ञानविधिरविनाभावेऽप्यस्तु। दुष्टादुष्टपरिज्ञानस्य तु तदभावान्नाङ्गापेक्षेति वैषम्यम्। न चास्यापि प्रजापालनमदृष्टार्थमुपकुर्वतः परम्परयास्त्येवापूर्वपर्यवसानमित्यस्त्वङ्गत्वार्थ एव विधिरिति वाच्यम्। एवमपूर्वपर्यवसायिविधिसंभवेऽपि श्रुत्याद्यभावेऽनारभ्यविधेरङ्गत्वाबोधकत्वात्। अन्यथाऽध्ययनाध्यापनयोरप्यङ्गत्वापत्तेः। ज्ञानस्य तु वाक्यादेवाङ्गत्वं 'यदेव करोति' इति श्रवणात्। येन कर्मणेच्छेत्तत्र जपेज्जुहुयात्। 'एवं विनायकं पूज्य ग्रहांश्चैव विधानतः। कर्मणां फलमाप्नोति... ......॥ (यास्मृ. १।२९३) इति च श्रवणाज्जपहोमविनायकस्नपनग्रहयज्ञानामिव। अत एवाध्ययनाधानयोरङ्गत्वाभावाज्ज्ञानाहवनीयादिफलमात्रपर्यवस्तिर्न प्रतिकर्मप्रयोगावसायित्वम्। सकृदेव त्वाधानाध्ययनानुष्ठाने तज्जनितज्ञानाग्निमतां त्रैवर्णिकानामुत्तरोत्तरकर्ममात्राधिकारितेति सिद्धान्तः। शूद्राद्यधिकारनिवृत्तिश्च। तद्विधिबोधिताध्ययनाधानोपायकज्ञानाग्निलाभः। उपायान्तरस्य ज्ञानाग्निद्वारकाक्षेपप्रतिक्षेपात्। प्रजापालनं परं ज्योतिष्टोमाद्यपूर्वमिव स्वफलापूर्वं जनयतीत्यन्यदेतत्।

अत्र ब्रूमः—व्यवहारदर्शनोत्पत्तावेव विधेस्तात्पर्यम्। अन्ये तु विधयस्तस्य निमित्तफलोपाधिभेदेनाधिकारविधयः। प्रयोगभेदश्च 'अग्निहोत्रं जुहोति' इत्युत्पन्नस्य 'यावज्जीवमग्निहोत्रं जुहुयात्' 'अग्निहोत्रं जुहुयात् स्वर्गकाम' इत्यत्रेव। अतो न वैरूप्यादिदोषः। दृष्टार्थतया तु न विधिरयं प्रमाणान्तरसिद्धत्वात्तस्य। यद्यपि व्यवहारशास्त्रे न्यायसिद्धानुवादका एव प्रायो विधय इत्येतस्यापि तथात्वे न बाधकं, तथापि विधित्वे सम्भवत्यनुवादत्वमङ्गीकर्तुमनर्हम्। यत्र तु तदसम्भवस्तत्र तदेवाश्रीयते, व्यवहारशास्त्रत्वादिति सकलनिबन्धस्वरसा-

यातः समाधिः । दुष्टादुष्टपरिज्ञाने तु यद्युपायान्तरप्राप्त्या व्यवहारदर्शनस्य पाक्षिकत्वं तदास्य नियमविधित्वमेवाध्यापनादिविधीनामिवार्जनोपायतया तद्वदेवोपायान्तरार्जने प्रत्यवायकल्पनवदुपायान्तरात् दुष्टादुष्टपरीक्षया प्रजापालनेऽपीत्यवसेयम् । स्मृत्यादीनां च त्रैवर्णिकचातुर्वर्ण्याधिकारिकत्वात् म्लेच्छादीनां यथाकथञ्चित् दुष्टादुष्टपरिज्ञानेन प्रजापालनेऽपि न क्षतिः । न चैवं प्रजापालनविधेरप्यभिषिक्तक्षत्रियाधिकारिकत्वादन्येषां तत्र फलाभावेनाप्रवृत्तिः । दृष्टद्रव्यादिलाभार्थे कथञ्चित् प्रवृत्तावपि तस्माद्धर्माभावप्रसङ्गोऽन्यथादर्शनादर्शनन्यायप्रवृत्त्यादिना प्रत्यवायाभावापत्तिश्चेति वक्तव्यम् । यतो दयाहिंसादिसाधारणधर्मान्तर्भावेन प्रजापालनस्य तेषामपि धर्मजनकत्वात् । नृपपदेन तत्संग्रहसंभवाच्च ।

तस्मादयमत्र निष्कर्षः । उत्सर्गापवादादिमूलभूतान्वयव्यतिरेकादिन्यायमूलकता यत्र संभवति तादृशव्यवहारशास्त्रस्य सर्वस्य न वेदमूलकता कल्प्यते । यदंशे तदसंभवस्तत्रादृष्टार्थकतया वेद एव मूलं कल्प्यते । वास्तुसामुद्रिकादिविषिषु ज्योतिःशास्त्रायुर्वेदप्रामाण्यव्यवस्थापकप्रसङ्गेनाचार्यैः स्मृत्यधिकरणे व्यक्तमेव एतत्प्रपञ्चितम् । अत एव 'अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः' (यास्मृ. २।२१) इत्युक्तम् । वचनविरोधे न्यायस्य बाध्यत्वादर्थशास्त्रस्य च तन्मूलकत्वात् ।

×व्यप्र.१०,१२,१३

(१०) मिता.टीका—नृप इति । यौगिकोऽयं न रूढ इति भावः । न्यूनतां परिहरति देशादीति । आदिना देवगृहादिपरिग्रहः । पारिभाषिकधर्मेण व्यवस्थानं समयस्तत्सिद्धदेशादिसंबन्धिधर्मस्येत्यर्थः । ※बाल.

धर्मशास्त्रद्वैधे व्यवस्था । धर्मशास्त्रार्थशास्त्रविरोधे व्यवस्था ।

**स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः ।**
**अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ॥**

(१) नन्वसौ तदनभिप्रेतत्वेऽप्यपराधित्वाद् दण्ड्य एव । एवमादीन्येव हि नृपस्यार्थोत्पत्तिस्थानानि । अन्यथा तु क्वचिदेव राज्ञो दण्डः स्यात् । मैवं—स्मृतेरिति । यद्यर्थशास्त्रानुसारिता स्यात्, ततः स्यादप्येवम् । यदा तु धर्मशास्त्रमेव बलवत्, तदा तदविरुद्ध एवार्थसंचयो ज्यायान् । नन्वेवं सति यत्रासत्येऽपि वस्तुनि सत्यताप्रतिभानं, तत्रापि राज्ञो दोषप्रसङ्गः । यथा माण्डव्यवधादौ, स्मृत्या हि सम्यगपराधिनामेव दण्डविधानात् । तत्र च न्यायतोऽपराधापादनेऽपि परमार्थतस्तदभावादपराधी नैव । न चान्यो व्यवहारनिर्णीतिहेतुः । अतः सङ्कटमेतत् । नात्र सङ्कटम् । स्मृतेर्विरोधे न्यायस्तु बलवान् । कस्माद् व्यवहारतः अन्यथा व्यवहारप्रवृत्त्यभावप्रसङ्ग इत्यर्थः । अथवा स्मृतिन्यायविरोधे स्मृतिरेव ज्यायसी, न तु न्यायः । व्यवहारतो हि न्यायप्रवृत्तेः । विविधमवहरणं व्यवहारः, व्याजभूयिष्ठ इत्यर्थः । न चासौ शास्त्रविरोध्यप्यङ्गीकर्तव्यः । यस्मादर्थशास्त्राद् धर्मशास्त्रस्यैव बलीयस्त्वमिति स्थितिः । अन्यस्त्वपरमार्थ इत्यर्थः । इयमेव च व्याख्या ज्यायसी । यथावस्तु प्रमाणप्रवृत्तिः, न प्रमाणप्रवृत्त्यनुरोधिता वस्तुनः । स्थिते वस्तुनि तदनुसारिणी प्रमाणावगतिरित्यनवद्यम् । अन्ये त्वन्यथेमं श्लोकं वर्णयन्ति, स्मृतिद्वयविरोधे न्यायो बलवान्, व्यवहारतस्तु प्रवृत्त्यानुगुण्यात् । यत्र त्वर्थशास्त्रधर्मशास्त्रयोर्विरोधः, तत्र धर्मशास्त्रं बलीयः । यथा अर्थशास्त्रे व्यवहारप्रकरणे उक्तम्—'नाततायिवधे दोषो हन्तुर्भवति कश्चन' इति । पुनर्धर्मशास्त्रे प्रायश्चित्तप्रकरणे—'कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते' इति । तत्र धर्मशास्त्रबलीयस्त्वादाततायिवधे दोषप्रसङ्ग इति । तत्पुनः प्रकृतानुपयोगान्निष्प्रमाणकत्वाच्च नातीव सम्यक् । विश्व.२।२१

(२) ननु निन्हुते लिखितं नैकमितीयं स्मृतिस्तथाऽनेकार्थाभियोगेऽपीतीयमपि स्मृतिरेव; तत्रानयोः स्मृत्योः परस्परविरोधे सतीतरेतरबाधनादप्रामाण्यं कस्मान्न भवति, विषयव्यवस्था किमित्याश्रीयते, इत्यत आह—स्मृत्योरिति । यत्र स्मृत्योः परस्परतो विरोधस्तत्र विरोधपरिहाराय विषयव्यवस्थापनादावुत्सर्गापवादादिलक्षणो न्यायो बलवान् समर्थः । स च न्यायः कुतः प्रत्येतव्य इत्यत आह व्यवहारत इति । व्यवहाराद् वृद्धव्यवहारादन्वयव्यतिरेकलक्षणादवगम्यते । अतश्च प्रकृतोदाहरणेऽपि विषयव्यव-

× व्यउ. व्यप्रवत् । ※ शेषं सुबोगतम् ।

(१) **यास्मृ.**२।२१; **अपु.**२५३।४९-५०; **विश्व.**२।२१ त्यो (ते); **मिता.**; **अप.**; **व्यक.**६; **स्मृच.**२४ पृ.; **पमा.** ३९पृ.; **सवि.**७०पृ.,१५३ उत्त.; **व्यसौ.**४; **वीमि.**; **व्यप्र.** १३,१०२; **व्यउ.**८; **व्यम.**४ पृ.; **विता.**२२; **विभ.**५५; **प्रका.**१४; **समु.**९.

स्यैव युक्ता एवमन्यत्राऽपि विषयव्यवस्थाविकल्पादि यथासंभवं योज्यम्। एवं सर्वत्र प्रसङ्गेऽपवादमाह— अर्थशास्त्रादिति।

'धर्मशास्त्रानुसारेण' इत्यनेनैवौशनसाद्यर्थशास्त्रस्य निरस्तत्वात् धर्मशास्त्रान्तर्गतमेव राजनीतिलक्षणमर्थशास्त्रमिह विवक्षितम्। अर्थशास्त्रधर्मशास्त्रस्मृत्योर्विरोधे अर्थशास्त्राद्धर्मशास्त्रं बलवदिति स्थितिर्मर्यादा। यद्यपि समानकर्तृकतया अर्थशास्त्रधर्मशास्त्रयोः स्वरूपगतो विशेषो नास्ति तथापि प्रमेयस्य धर्मस्य प्राधान्यादर्थस्य चाप्राधान्याद्धर्मशास्त्रं बलवदित्यभिप्रायः। धर्मस्य च प्राधान्यं शास्त्रादौ दर्शितम्। तस्माद्धर्मशास्त्रार्थशास्त्रयोर्विरोधेऽर्थशास्त्रस्य बाध एव, न विषयव्यवस्था नापि विकल्पः। किमत्रोदाहरणम्? न तावत् 'गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्। आततायिनमायान्तं हन्यादेवाविचारयन्॥ नाततायिवधे दोषो हन्तुर्भवति कश्चन। प्रच्छन्नं वा प्रकाशं वा मन्युस्तं मन्युमृच्छति'॥ (मस्मृ. ८।३५०-३५१) तथा—'आततायिनमायान्तमपि वेदान्तगं रणे। जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत्'॥ इत्याद्यर्थशास्त्रम्। 'इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम्। कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते'॥ (मस्मृ. ११।८९) इत्यादि धर्मशास्त्रं, तयोर्विरोधे धर्मशास्त्रं बलवदिति युक्तम्। अनयोरेकविषयत्वाऽसंभवेन विरोधाभावान्न बलाबलचिन्ताऽवतरति। तथा हि 'शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते' (मस्मृ. ८।३४८) इत्युपक्रम्य 'आत्मनश्च परित्राणे दक्षिणानां च सङ्करे। स्त्रीविप्राभ्युपपत्तौ च घ्नन्धर्मेण न दण्डभाक्'॥ (मस्मृ. ८।३४९) इत्यात्मरक्षणे दक्षिणादीनां यज्ञोपकरणानां च रक्षणे युद्धे च स्त्रीब्राह्मणहिंसायां च आततायिनमकूटशस्त्रेण घ्नन् न दण्डभाक् इत्युक्त्वा तस्यार्थवादार्थमिदमुच्यते—'गुरुं वा बालवृद्धौ वा' इत्यादि। गुर्वादीनत्यन्तावध्यानप्याततायिनो हन्यात्किमुतान्यानिति। वाशब्दश्रवणादपि वेदान्तगमित्यत्रापिशब्दश्रवणान्न गुर्वादीनां वध्यत्वप्रतीतिः। 'नाततायिवधे दोषोऽन्यत्र गोब्राह्मणवधात्' इति सुमन्तुवचनाच्च। 'आचार्यं च प्रवक्तारं मातरं पितरं गुरुम्। न हिंस्याद् ब्राह्मणान् गाश्च सर्वांश्चैव तपस्विनः'॥ इति मनुवचनाच्च (४।१६२)। आचार्यादीनामाततायिनां हिंसाप्रतिषेधेनेदं वचनमर्थवन्नान्यथा। हिंसामात्रप्रतिषेधस्य सामान्यशास्त्रेणैव सिद्धत्वात्। 'नाततायिवधे दोषो हन्तुर्भवति कश्चन' इत्येतदपि ब्राह्मणादिव्यतिरिक्तविषयमेव। यतः—'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्रदारहरश्चैव षडेते ह्याततायिनः'॥ तथा—'उद्यतासिर्विषाग्निश्च शापोद्यतकरस्तथा। आथर्वणेन हन्ता च पिशुनश्चापि राजनि॥ भार्यातिक्रमकारी च रन्ध्रान्वेषणतत्परः। एवमाद्यान्विजानीयात्सर्वानेवाततायिनः'॥ इति सामान्येनाततायिनो दर्शिताः। अतश्च ब्राह्मणादय आततायिनश्च आत्मादित्राणार्थे हिंसाऽनभिसन्धिना निवार्यमाणाः प्रमादाद्यदि विपद्येरंस्तत्र लघुप्रायश्चित्तं राजदण्डाभावश्चेति निश्चयः। तस्मादन्यदिहोदाहरणं वक्तव्यम्। उच्यते—हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यतः। अतो यतेत तत्प्राप्तौ......'॥ इत्यर्थशास्त्रम्। 'धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः' इति धर्मशास्त्रम्। तयोः क्वचिद्विषये विरोधो भवति। यथा चतुष्पाद्व्यवहारे वर्तमाने एकस्य जयेऽवधार्यमाणे मित्रलब्धिर्भवति न धर्मशास्त्रमनुसृतं भवति। अन्यस्य जयेऽवधार्यमाणे धर्मशास्त्रमनुसृतं भवति मित्रलब्धिर्विपरीता। तत्रार्थशास्त्राद्धर्मशास्त्रं बलवत्। अत एव 'धर्मार्थसन्निपाते अर्थग्राहिण एतदेव' इति प्रायश्चित्तस्य गुरुत्वं दर्शितमापस्तम्बेन। एतदेवेति द्वादशवार्षिकं प्रायश्चित्तं परामृश्यते। *मिता.

(३) प्रमाणान्तरदृष्टार्थविषया स्मृतिरर्थशास्त्रम्। वेदैकसमधिगम्यार्थविषया तु धर्मशास्त्रम्। तथा च भविष्यत्पुराणम्—'दृष्टार्था तु स्मृतिः काचिददृष्टार्था तथा परा। दृष्टादृष्टार्थरूपाऽन्या न्यायमूला तथा परा॥ अनुवादस्मृतिस्त्वन्या शिष्टैर्दृष्टा तु पञ्चमी। सर्वा एता वेदमूला दृष्टार्थं परिहृत्य तु॥' आसामुदाहरणान्यपि तत्रैव। यथा—'षाड्गुण्यस्य यथायोगं प्रयोगात्कार्यगौरवात्। सामादीनामुपायानां योगो व्याससमासतः॥ अध्यक्षाणां च निक्षेपः कण्टकानां निरूपणम्। दृष्टार्थेयं स्मृतिः प्रोक्ता ऋषिभिर्गरुडाग्रज॥ सन्ध्योपास्तिः सदा कार्या शुनो मांसं न भक्षयेत्। अदृष्टार्था स्मृतिः प्रोक्ता ऋषि-

* स्मृच., पमा; विता. मितावत्।

भिर्ज्ञानकोविदैः ॥ पालाशं धारयेद्दण्डमुभयार्थं विदुर्बुधाः। विरोधे तु विकल्पः स्याज्जपहोमश्रुतौ यथा ॥ श्रुतौ दृष्टं यथा कार्यं स्मृतौ न सदृशं यदि । अनूक्तवादिनी सा तु पारिव्राज्यं यथा गृहात्' ॥ जपहोमश्रुतौ यथेति । सूर्योदयावधिसावित्रीजपानुदितहोमविषया स्मृतिः । अनूक्तवादिनी, अनूद्यवादिनी यथा 'पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' इत्यनयोदितं ब्राह्मणः प्रव्रजेद् गृहादिति मनुस्मृतिर्वदति। तथा सति—'श्रुत्या सह विरोधे तु बाध्यते विषयं विना। व्यवस्थाया विरोधोऽतः कार्योऽन्यत्र परीक्षकैः ॥ स्मृत्यर्थेन विरोधे तु अर्थशास्त्रस्य बाधनम् । परस्परविरोधे तु न्याययुक्तं प्रमाणवत् ॥ अदृष्टार्थे विकल्पस्तु व्यवस्थासंभवे सति । स्मृतिशास्त्रविकल्पस्तु आकाङ्क्षापूरणे सति' ॥ अदृष्टार्थयोः स्मृत्योरन्योन्यनिरपेक्षत्वे सति विषयव्यवस्थापकन्यायाभावे च सत्यर्थयोर्विकल्पः । सापेक्षत्वे तु समुच्चयः । नैरपेक्ष्ये व्यवस्थापकन्यायसद्भावे व्यवस्थितविकल्पः तस्मिन्नसति त्वव्यवस्थित विकल्पो ग्राह्यः । तत्र च विषयव्यवस्थापकस्तावत्सामान्यविशेषन्यायो वृद्धव्यवहारे प्रसिद्धः, यथा ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेति । तेन न्यायेन स्मृतिविरोधः परिह्रियते । यथा—'न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम्' इति साधारणो ब्राह्मणवधनिषेधः । तस्य क्वचिद्विशेषोऽपवादः । यदाह मनुरेव—'गुरुं वा बालवृद्धौ वा श्रोत्रियं वा बहुश्रुतम्। आततायिमायान्तं हन्यादेवाविचारयन्' ॥ (८।३५०) इति । एवं च सामान्यविशेषन्यायेन कासांचित्स्मृतीनां विरोधः परिहरणीयः, कासांचित्तु कल्पनानर्थक्यप्रसङ्गादिना न्यायान्तरेणेति । मनुस्मृतितदन्यस्मृत्योर्विरोधे तु मनुस्मृतिः प्रशस्ता । अत एव बृहस्पतिः—'वेदार्थोपनिबन्धत्वात्प्राधान्यं तु मनुस्मृतौ । मन्वर्थविपरीता या स्मृतिः सा न प्रशस्यते' इति ॥ *अप.

(४) धर्मशास्त्रयोः परस्परविरोधे उत्सर्गापवादादिन्यायानुसारेण निर्णेतव्यमित्यर्थः । यथा—'अनागमं तु यद्भुक्तं पित्रा पूर्वतरैस्त्रिभिः । न तच्छक्यमपाकर्तुं क्रमात् त्रिपुरुषागतम् ॥ अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि । चौरदण्डेन तं राजा दण्डयेत्पृथिवीपतिः' ॥ इत्यनयोः स्मृत्योः । +व्यक.६

(५) मिता.टीका—नन्वेकविषये प्राप्तयोर्विरुद्धार्थयोर्हि स्मृत्योः परस्परं विरोधो न तु भिन्नविषययोरविरुद्धार्थयोर्वा । सति तु विरोधे प्रबलदुर्बलभावचिन्ता। एवं च पूर्वमेव धर्मशास्त्रानुसारेणैव व्यवहारदर्शनस्य विहितत्वादौशनसादि नीतिशास्त्रं न व्यवहारविषयं उपस्पृशति । अत एकविषयत्वाभावादर्थशास्त्रधर्मशास्त्रयोर्दूरे विरोधः । तथा चानयोः प्रबलदुर्बलभावचिन्तैव न घटत इत्यभिप्रायेणाक्षिप्य, सत्यमेवं, नात्रौशनसाद्यर्थशास्त्रधर्मशास्त्रयोः प्रबलदुर्बलभावचिन्ता । अपि तु धर्मशास्त्रान्तर्गतार्थशास्त्रस्य धर्मशास्त्रस्य च प्रबलदुर्बलकथनभावचिन्ता इति समाधत्ते—धर्मशास्त्रानुसारेणेत्यनेनैवेत्यादिना।अनयोरेकविषयत्वासंभवेनेति। 'गुरुं वा बालवृद्धौ वा' इत्यर्थवादत्वेन स्वार्थे प्रामाण्याभावादेकविषयताभावः। तेन विरोधाभावान्नोदाहरणत्वमित्यर्थः। किञ्च सुमन्तुमनुभ्यां गोब्राह्मणाचार्यादिव्यतिरिक्तानामेवाततायिनां वधे दोषाभावप्रतिपादनादाततायिनामपि गुर्वादीनां न वध्यत्वमित्याह—'नाततायिवधे दोषोऽन्यत्र' इत्यादिना।

आचार्यादीनामाततायिनां हिंसाप्रतिषेधेनेति । अयमभिप्रायः— हिंसामात्रप्रतिषेधस्य सामान्यवचनेनैव सिद्धत्वादस्मिन्वचने आचार्यादिपदानां स्वार्थाऽविवक्षाकारणाभावाद्धिंसाविशेषनिषेधेनैवैतद्वचनं संप्रयोजकम्। हिंसामात्रनिषेधपरत्वे वचनान्तरेणैतन्निषेधस्य प्राप्तत्वात्पुनरुक्तत्वेनास्य निष्प्रयोजकत्वमिति ।

ब्राह्मणादिव्यतिरिक्तविषयत्वमेव दर्शयति यतोऽग्निद इत्यादिना । एतदुक्तं भवति । सामान्येनैवाततायिनः प्रदर्शनादाततायिवधे दोष इत्यभिहितत्वात्सामान्यशास्त्रमिदम्। 'नाततायी'त्यादिकं विशेषशास्त्रस्य 'आचार्यं च प्रवक्तारम्' इत्यस्य विषयः । ब्राह्मणादिकं परिहृत्यैतद्व्यतिरिक्तविषये वर्तत इति । एवं सिद्धे आततायिनां ब्राह्मणादीनामवध्यत्वे प्रमादाद्यदि आततायिनां ब्राह्मणानां हननं स्यात्तदा प्रामादिकत्वाद्धननस्य सर्वात्मना हन्तुः किं दोषाभावः स्यादित्याशङ्क्य नेत्याह—'अतश्च ब्राह्मणादय' इत्यादिना । *सुबो.

* पदार्थवाक्यार्थौ मितावत् ।

+ दीक. व्यकवत् । * बाल. सुबोवत् ।

(६) यत्तु भवदेवेनोक्तम्—आततायिवधे दोषो नेत्यन्वयः। गोशब्देन गोः शृङ्गस्थानं, ब्राह्मणशब्देन ब्राह्मणरूपवेदवाक्यमित्युक्तम्, तत्तु सकलस्मृतिविरोधात्क्लिष्टकल्पनया हेयम्। यत्त्वपरार्केणोक्तम्—'उद्यतासिं च विषदं शापोद्यतकरं तथा' इत्याततायिलक्षणे उद्यतासिशापोद्यतकरपदद्वयसामर्थ्याद्वधे व्याप्रियमाणा ब्राह्मणा अप्याततायिनो वध्या इति तत्सकलविद्वदसम्मतत्वाद्धेयम्। *सवि. १५४

(७) व्यवहारतो व्यवहारे विषये स्मृत्योः धर्मशास्त्रयोः परस्परं विरोधे तु न्यायः तत्तद्विषयव्यवस्थापकस्तर्को बलवान् निर्णायकः। न्यायेन यस्मिन्नर्थे या स्मृतिर्व्यवस्थाप्यते तस्मिन्नर्थे सा स्मृतिः प्रमाणमिति यावत्। तुशब्देन श्रुतिविरोधे स्मृतेर्बलवत्त्वं व्यवच्छिद्यते। यदुक्तम्—'श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी। परस्परविरोधे तु योगयुक्तं प्रमाणवत्' ॥ स्मृत्योरिति समानजातीयमात्रोपलक्षणकं, तेन श्रुत्योरेवाऽर्थशास्त्रयोरेव वा परस्परं विरोधे न्यायो विनिगमक इति मन्तव्यम्। द्वितीयतुशब्देन पुराणव्यवच्छेदः, तेन पुराणाद्धर्मशास्त्रं स्मृत्यात्मकं न बलवत्। किन्तु स्मृत्योरिव स्मृतिपुराणयोः परस्परविरोधे न्यायाद्बलाबलमिति प्रतिज्ञातार्थसाधकमित्युक्तम्। वीमि.

(८) अयमाशयः। न्यायानुपष्टब्धस्मृत्यपेक्षया न्यायोपष्टब्धा स्मृतिर्बलवतीति न्यायानुपष्टब्धस्मृतेस्तात्पर्यान्तरकल्पना कार्येति। तस्य चोत्सर्गापवादविषयव्यवस्थाविकल्पादिरूपस्य न्यायस्य प्रत्यायकं हेतुमाह—व्यवहारत इति। वृद्धव्यवहारादन्वयव्यतिरेकादिरूपादनादिव्युत्पत्त्यपरपर्यायात् न्यायः प्रत्येतव्य इत्यर्थः। नारदोऽपि—'धर्मशास्त्रविरोधे तु युक्तियुक्तो विधिः स्मृतः' इति धर्मशास्त्रयोर्विरोधे युक्तिर्न्यायः। न्यायपर्यालोचनाभावे सोपपत्तिकं दोषमाह बृहस्पतिः—'केवलं शास्त्रमाश्रित्य न कर्तव्यो हि निर्णयः। युक्तिहीनविचारे हि धर्महानिः प्रजायते ॥ चौरोऽचौरः साध्वसाधुर्जायते व्यवहारतः। युक्तिं विना विचारेण माण्डव्यश्चोरतां गतः ॥ असत्याः सत्यसदृशाः सत्याश्चासत्यसन्निभाः। दृश्यन्ते भ्रान्तिजनकास्तस्माद्युक्त्या विचारयेत्' ॥ साध्वसाधुरिति छान्दसः सुलोपः। साधुरसाधुरित्यर्थः। व्यवहारतो निर्युक्तिकात्। ( उपर्युद्धृतमिताक्षरातात्पर्यमुपन्यस्योक्तम्— ) वस्तुतस्तु, 'शस्त्रं द्विजातिभिर्ग्राह्यम्' इत्यनेनोक्तस्याततायिवधे दोषाभावस्य प्रायश्चित्तराजदण्डाभावयोश्चाचार्यादिविषयेऽपवादार्थं मानवम्। आततायिवधे दोषाभावश्च पलायनादिना केनापि प्रकारान्तरेणात्मरक्षणासंभवे बोध्यः। अन्यथा वचनस्यादृष्टार्थत्वं हिंसादोषप्रतिपादकशास्त्रस्याततायिवधदोषेऽत्यन्तबाधश्चेत्युभयमप्यन्याय्यमापद्येत। गुर्वादिविषयकदोषाभावप्रतिपादकार्थवादस्य चाऽनाततायिगुर्वादिवधापेक्षया आततायितद्वधे दोषाल्पत्वप्रायश्चित्ताल्पत्वे राजदण्डाभावश्चेत्यालम्बनानि स्तुत्युपयोगिगुणवाद इति। अत्र भट्टभवदेवः—'स्वाध्यायिनं कुले जातं हन्यादेवाततायिनम्। न तेन ब्रह्महा स स्यान्मन्युस्तं मन्युमृच्छति' ॥ इति वसिष्ठवचनात्तदेकवाक्यतया वाशब्दादिश्रवणेऽपि गुर्वादिवाक्यानां प्रतिप्रसवविधित्वमेव न त्वर्थवादत्वम्। न च सुमन्तुवचनेन 'आततायिवधे न दोषोऽन्यत्र गोब्राह्मणात्' इत्यनेन विरोधः। सूत्रच्छेदापरिज्ञानात्। तथा हि सूत्रत्रयमिदं 'आततायिवधे न' इत्येकम्। 'दोषोऽन्यत्र' इत्यपरम्। 'गोब्राह्मणात् स्नातः प्रायश्चित्तं कुर्यात्' इत्यन्यत्। तत्र ब्रह्मवधप्रायश्चित्तमुक्त्वा यस्तैः संबन्धं कुर्यात्तस्याप्येतदेव प्रायश्चित्तमित्यभिधाय सुमन्तुराह—आततायिवधे नेति। आततायिनो ब्राह्मणस्य वधे कृते न प्रायश्चित्तमिति प्रथमस्य सूत्रस्यार्थः। दोषोन्यत्र आततायिव्यतिरिक्ते दोष इति द्वितीयस्य। गोब्राह्मणात् स्नातः प्रायश्चित्तं कुर्यादिति प्रायश्चित्ताङ्गस्नानविधायकम्। तत्र गोहेतुकं स्नानं व्यास आह—'श्रूयन्ते यानि तीर्थानि त्रिषु लोकेषु नित्यशः। अभिषेकः समस्तेषां गवां शृङ्गोदकस्य च' इति। ब्राह्मणशब्देनात्र विधायकं वाक्यमुच्यते। तद्धेतुकं स्नानमघमर्षणादिजपादिपूर्वकम्। द्वन्द्वैकवद्भावश्च गोब्राह्मणादिति। तेन गोहेतुकब्राह्मणहेतुकस्नानाभ्यां प्रायश्चित्ताधिकारी भवति न स्नानमात्रेणेति तृतीयस्येति। यदपि भविष्यपुराणवचनम्—'हत्वा तु प्रहरन्तं वै ब्राह्मणं वेदपारगम्। कामतोऽपि चरेद्वीर द्वादशाब्दाख्यमुत्तमम्' इति। तदपि नाततायिवधविषयम्। प्रहारशब्दस्य वधानभि-

* सवि. (पृ. ७०) मितावत्। अत्र लिखितांशं परित्यज्य (पृ. १५३-१५५) एषु पत्रेषु विद्यमानः शास्त्रार्थो मितावत्।

धायकत्वात्। तेनायमर्थः, यश्चक्षुराद्यवयवानां प्रकर्षेण हरणे प्रवृत्तस्तद्वधेऽपि कामतोऽपि द्वादशवार्षिकमेव प्रायश्चित्तमित्यर्थ इत्याह। तदयुक्तम्। 'आचार्यं च' इत्यस्य मानवस्योक्तयुक्तिबलादाततायाय्याचार्यादिवधे दोषप्रतिप्रसवार्थत्वस्योपपादितत्वात्तदेकमूलतया सुमन्तुवचनस्य मिताक्षरोक्तच्छेदेनैव व्याख्यातुमर्हत्वात्। त्वदुक्तच्छेदे दोषोऽन्यत्रेत्यस्य वैयर्थ्यापत्तेश्च। गोब्राह्मणादित्यस्य स्नानहेतुत्वे पञ्चमीति व्याख्याने गोशब्दस्यावयविवाचकस्याऽवयवशृङ्गलक्षणाद्वारा तदुदकलक्षणायां लक्षितलक्षणापत्तेश्च। गोः स्नानाहेतुत्वात्। ब्राह्मणस्य ज्ञापकहेतुत्वाद्गोश्च कारकहेतुत्वस्य क्लिष्टस्य ग्रहणाद्वैरूप्यादिदोषप्रसङ्गाच्च। यदपि भविष्यपुराणीयवचनव्याख्यानं तत्त्वत्यन्तबहिर्मुद्रम्। ताडनादिवधपर्यन्ते देहपीडने रूढस्य प्रहरतेश्चक्षुराद्यवयवप्रकर्षहरणे योगग्रहणस्य रथकारनयविपरीतत्वात् (पूमी.६।१।१२)। किञ्च, चक्षुराद्यवयवोद्धरणप्रवृत्तब्राह्मणवधे कामकृतेऽपि द्वादशाब्दमेव ब्राह्मणवधप्रायश्चित्तं न तु कामकृताऽन्यब्रह्मवधवत्प्रायश्चित्तद्वैगुण्यं मरणान्तिकं वेत्यस्यैतद्वचनादिसंहितस्य प्रायश्चित्तह्रासप्रयोजकदोषाल्पत्वस्याततायित्वमेव निमित्तं, अन्यासंभवात्, शस्त्रपाणित्वेनाततायित्वस्यैव सत्वाच्च। तथा च नाततायिविषयमिदमित्यसंबन्धम्। आततायिन्यदोषोऽन्यत्र गोब्राह्मणात्। गोब्राह्मणं यदा हन्यात् तदा प्रायश्चित्तं कुर्यात्। 'क्षिण्वानमपि गोविप्रं न हन्याद्वै कदाचन' इत्याभ्यां संवर्तभविष्यवचनाभ्यां विरोधस्य सर्वथा दुष्परिहरत्वाच्च। विध्यन्तरशेषभूतस्य विधिशक्तिप्रतिबन्धकापिशब्दादिमतो गुर्वादिवाक्यप्रतिप्रसवविधित्वस्याभ्युपगन्तुमशक्यत्वाच्च। न च विध्यशेषभूतानां वसिष्ठादिवचसामर्थवादत्वमसंभवीति 'गुरुं वा' इत्यादीनामपि नार्थवादत्वं विध्यन्तरशेषत्वात्, तेषामर्थवादत्वेऽपि वास्मदभिप्रेतार्थसिद्धेर्वचनान्तरैः परतन्त्रैरूरीकृतत्वान्न क्षतिरिति वाच्यम्। यतस्तेषामपि गोब्राह्मणाद्याततायिवधदोषप्रतिपादकबहुतरवचनान्तरविरोधाद्दोषाल्पत्वप्रतिपादकतैव तदेकमूलकतालाभायोचिता। अन्यथा दुष्परिहरत्वाद्विरोधस्येत्यस्तु विस्तरः। शूलपाणिस्तु—'नाततायिवधे हन्ता किल्बिषं प्राप्नुयात् क्वचित्। विनाशार्थिनमायान्तं घातयन्नापराध्नुयात्' ॥ इति बृहस्पतिवचनं आततायिवधस्यादोषताप्रमाणत्वेनोपन्यस्य, किल्बिषाभावः प्रायश्चित्तनिषेधार्थः अपराधाभावस्तु दण्डनिषेधार्थ इति च व्याख्याय यतः 'सर्वत आत्मानं गोपायेत्' इति श्रुतिमूलकमिदमतः पलायनादिनाप्यात्मरक्षणाऽसंभवपरमिति तत्तात्पर्यमुपवर्ण्य 'गुरुं वा' इत्यादिमन्वादिवचनान्यपि तदुपष्टम्भकतया प्रदर्श्य 'आततायिन्यदोष' इत्यादिसंवर्तवचनं 'क्षिण्वानं' इत्यादि भविष्यवचनं च पूर्वोक्तं तद्विरोधित्वेनाशङ्क्य व्यवस्थामेवमुक्तवान्। हन्त्रपेक्षया तपोविद्याजातिकुलैरुत्कृष्टो ब्राह्मणगुर्वादिराततायी न वध्यः। समोऽपकृष्टश्च वध्यः। तथा च कात्यायनः—'आततायिनि चोत्कृष्टे तपःस्वाध्यायजन्मतः। वधस्तत्र तु नैव स्यात् पापं हीनवधे तु न' इति। अत एव गीतायामुक्तम्—'पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः' इति। एतान् भीष्मादीनस्मत्तोऽत्यन्तोत्कृष्टानाततायिनोऽपि हत्वाऽस्मान् पापमाश्रयेदेवेत्यर्थः। उत्कृष्टाततायिहननान्निवृत्तौ फलमप्युक्तं बृहस्पतिना—'आततायिनमुत्कृष्टं वृत्तस्वाध्यायसंयुतम्। यो न हन्याद्वधप्राप्तं सोऽश्वमेधफलं लभेत्' इति। तेनोत्कृष्टाततायिवधनिवृत्तौ तद्वधप्रसक्तप्रत्यवायपरिहारोऽश्वमेधफलं च 'संयोगपृथक्त्वनयात् (पूमी. ४।३।३)। यद्यपि 'गुरुं बहुश्रुतं हन्यात्' इति श्रूयते गुरोश्च शिष्यापेक्षयोत्कृष्टत्वमेवेति तत्र व्यवस्थेयं दुरवस्था। तथापि, गुरोरपि सकाशात् कुलविद्यातपःप्रभृतिभिर्गुणैः शिष्यस्याप्युत्कर्षः संभवतीति सुस्थैव तत्रापि व्यवस्थेयम्। गौस्त्वाततय्यप्यविशेषेणावध्यो विरोधिवचनाभावात्। एतेषां चाततायिताप्रयोजकव्यापारगोचरवर्तमानप्रवृत्तिकानामेव हन्तव्यानामप्याततायिनां हनने दोषाभावो न तु निवृत्तव्यापारकाणामपि। 'उद्यतानां तु पापानां हन्तुर्दोषो न विद्यते। निवृत्तानां तथारम्भाद् ग्रहणं न वधः स्मृतः' ॥ इति कात्यायनवचनात्।

तदपि न क्षोदक्षमम्। तथा हि 'न हिंस्यात्' इति निषेधावधारितस्य दोषस्य 'शस्त्रं द्विजातिभिः' इत्यादिना आततायिविषयेऽपवादमभिधाय तदर्थवादत्वेन 'गुरुं वा' इत्याद्युक्त्वा मनुसुमन्तुसंवर्तभविष्यादिवचनैर्गोब्राह्मणादिविषये तं प्रतिप्रसूय चरितार्थेषु सर्ववचनेषु कात्यायनीयम् 'आततायिनि चोत्कृष्टे' इत्यादिवचोऽपि मन्वादिवचनोपा-

त्राचार्यत्वब्राह्मणत्वाद्युत्कर्षमेवादाय तदेकार्थकमेवोचितं न तु तेषामुत्कृष्टाचार्यादिविषयकतया संकोचकम्। 'तपःस्वाध्यायजन्मत' इत्यनेनापि ब्राह्मणत्वादिकृतोत्कर्षस्यैवोपलक्षणात्। किञ्चाततायिवधे दोषाभावस्य स्वोत्कर्षमात्रेणापवादस्तवाभिमतः, गीतास्थितस्य एतत्पदस्य तदुपष्टम्भकत्वमधमवर्णावध्यत्वमुत्तमवर्णाततायिनो वदतः। तथा च सामान्यतो ब्राह्मणत्वादिपुरस्कारेण तदपवादकवाक्यानामानर्थक्यमेव स्यात्। अस्योपसंहारविषयत्वात्। यत्र हि, मित्रविन्दावत् द्वयोरर्थवत्त्वं तत्र सामान्यस्य विशेष उपसंहारः स्वीक्रियते। अनुत्कृष्टतद्वधे त्वया दोषाभावस्यैवाभ्युपेतत्वात्। 'गुरुं वा' इत्यादिबहुवचसां प्रतिप्रसवविधित्वेन त्वयाभ्युपेतानां कात्यायनीयैकवचोऽनुरोधेनोत्कृष्टमात्रेणोपलक्षणत्वमानर्थक्यापर्याय एव। यद्वा गोत्वब्राह्मणत्वादिनिमित्तप्रतिप्रसवे कृते कात्यायनीयमुत्कर्षनिमित्तदोषातिशयप्रतिपादकं भविष्यतीति समस्तवचनसामञ्जस्यसंभवे वचनस्वरसभङ्गाङ्गीकरणं भङ्ग्या अङ्गीकरणमेव। उत्कृष्टवधनिवृत्तौ फलातिशयोऽप्यस्तु। संयोगपृथक्त्वात् (पूमी.४।३।३)। तत्राप्यश्वमेधपदमन्यानर्थक्यप्रसङ्गादविवक्षितमथवा तत्र श्रुतं ब्रह्महत्यातरणं तज्जन्यपापक्षयरूपमात्रवधनिवृत्तौ तज्जन्यपापानुत्पत्तितादात्म्येनोपचर्यते। फलपदं तु पक्षेऽस्मिन् न समञ्जसं निषिद्धनिवृत्तौ पापानुत्पत्तेः फलत्वाभावादिति प्राच्यमेव व्याख्यानं साधीयः। तारतम्येन वाश्वमेधफलमत्रापि भवतीति नान्यानर्थक्यमिति समाधेयम्। किञ्च आततायिब्राह्मणादिवधस्यादोषताप्रतिपादकतया तवाभिमतेषु कात्यायनदेवलादिवचनेषु 'अपि वेदान्तगं' 'भ्रूणमपि' इत्यादीनामुत्कर्षप्रतिपादकत्वात् कथमुत्कर्षदोषपरं कात्यायनीयं 'आततायिनि चोत्कृष्ट' इति वचस्तद्विरोधसमाधानसहं स्यात्। यच्च देवलवचनं भवतोदाहृतं—'उद्यम्य शस्त्रमायान्तं भ्रूणमप्याततायिनम्। निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत्' इति। भ्रूणः—उत्तमब्राह्मणविशेषः। दोषप्रदर्शनं नियमार्थमिति व्याख्यातं च। तदत्यसंबद्धम्। न ह्याततायिहनने दोषः कस्यापि संमतः। किन्तु तद्धनने दोषाभावमात्रम्। तस्मादन्यथात्मरक्षणासंभवे तदहनने स्वहत्यैव भ्रूणहत्या प्रसज्यत इत्यात्मरक्षणविधिप्राप्तानुवादमात्रमेतदिति व्याख्येयम्। तस्मात् 'आततायिनि चोत्कृष्ट' इत्यादिकात्यायनवचनमस्मदुक्तरीत्या सुमन्तुसंवर्तादिवचःसमानार्थतयोत्कर्षप्रयुक्तदोषातिशयपरतया वा वर्णनीयम्। न तु विरोधे व्यवस्थापकतयेत्यलमतिदूरं गत्वा।

मम तु प्रतिभाति। सत्यपि 'गुरुं वा' इत्यादीनां प्रतिप्रसवविधित्वे न तेषामर्थशास्त्रत्वम्। अदृष्टदोषाभावस्याप्यदृष्टत्वेन दृष्टार्थत्वाभावात्। न चात्मरक्षणमात्रार्थत्वेन। तथा सति प्रायश्चित्तप्रसङ्गात्। न चेष्टापत्तिः। 'न तेन ब्रह्महा भवेत्'। 'आततायिन्यदोषोऽन्यत्र गोब्राह्मणात्। गोब्राह्मणं यदा हन्यात् तदा प्रायश्चित्तं कुर्यात्' 'पापमेवाश्रयेदस्मान्' इत्यादिषु पापतदभावयोश्च स्पष्टमवगमात्। तस्मात् सर्वमतेऽप्यर्थधर्मशास्त्रविरोधोदाहरणमिदमित्यसंगतमेवेत्यलं प्रसक्तानुप्रसक्तविचारप्रपञ्चेन। +व्यप्र.१३–२१

अर्थनिश्चये तर्को लेख्यं च उपायः

**असाक्षिके हते चिन्हैर्युक्तिभिश्चागमेन च।**
**द्रष्टव्यो व्यवहारस्तु कूटचिन्हकृताद्भयात् ×॥**

छलव्यवहारभूतानुसारिव्यवहारविवेकः

**छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः।**
**भूतमप्यनुपन्यस्तं हीयते व्यवहारतः*॥**

(१) व्यवहारो हि नामानृतप्रभवो व्याजैकनिबन्धनः। तथा चोक्तं नारदेन— 'धर्मैकतानाः पुरुषा यदासन् सत्यवादिनः। तदा न व्यवहारोऽभून्न द्वेषो नापि मत्सरः॥ नष्टे धर्मे मनुष्येषु व्यवहारः प्रवर्तितः। द्रष्टा च व्यवहाराणां राजा दण्डधरः कृतः' इति। अधर्मप्राधान्यं व्यवहारेष्वित्यर्थः।

---

+व्यउ. व्यप्रवत्। ×व्याख्यासंग्रहः स्थलादिनिर्देशश्च दण्डपारुष्यप्रकरणे द्रष्टव्यः। *व्यवहारप्रकाशव्याख्यानं निर्णयपादे द्रष्टव्यम्।

(१) **यास्मृ.**२।१९; **अपु.**२५३।४७-४८; **विश्व.**२।१९; **मेधा.**८।४५ तेन (तेषु); **मिता.**:२।१९ पू.; **व्यमा.**२८९; **अप.**; **व्यक.**७; **स्मृच.**११ पू.,२५,६८पू., १२० पू.; **पमा.**४०; **स्मृसा.**८८ रान्नयेन्नृपः (रः प्रवर्तते); **व्याचि.**२३ पू.; **व्यत.** २०५; **स्मृचि.**६,३८ स्मृसावत्; **सवि.**५९ पू., १२७ पू., ४४३ पू.; **व्यसौ.**५ मेधावत्; **वीमि.**;**व्यप्र.**६६ पू.:९८,९९; **विता.**१०६; **प्रका.**१४; **समु.**१०.

यतश्चैतदेवं अतश्च भूतमिति । व्यवहारमार्गेणान्यथा क्रियते । तथाचोक्तम्—'अचोरश्चोरतां प्राप्तो माण्डव्यो व्यवहारत' इति । अतश्च प्रयत्नतो निराकृतच्छलादिः सत्यैकप्रवणो राजा व्यवहारेषु कृती स्यादित्यर्थः । विश्व.२।१९

(२) एतच्च अर्थव्यवहारे द्रष्टव्यम् । मन्युकृते तु व्यवहारे प्रमादाभिधाने प्रकृतादपि व्यवहाराद्धीयते एव ।

किञ्च छलं प्रमादाभिहितं निरस्य परित्यज्य भूतेन वस्तुतत्वानुसारेण व्यवहारान्नयेदन्तं नृपः । यस्माद्भूतमपि वस्तुतत्वमपि अनुपन्यस्तमनभिहितं हीयते हानिमुपगच्छति व्यवहारतो व्यवहारेण साक्ष्यादिभिः । तस्माद्भूतानुसरणं कर्तव्यम् । यथा अर्थिप्रत्यर्थिनौ सत्यमेव वदतस्तथा ससभ्येन सभापतिना यतितव्यं सामादिभिरुपायैः । तथा सति साक्ष्यादिनैरपेक्ष्येणैव निर्णयो भवति । अथ सर्वथाऽपि भूतानुसरणं न शक्यते कर्तुं तथा सति साक्ष्यादिभिर्निर्णयः कार्य इत्यनुकल्पः । यथोक्तम्— 'भूतच्छलानुसारित्वाद्द्विगतिः समुदाहृतः । भूतं तत्वार्थसंयुक्तं प्रमादाभिहितं छलम् ॥' इति । तत्र भूतानुसारी व्यवहारो मुख्यः छलानुसारी त्वनुकल्पः । साक्षिलेख्यादिभिर्व्यवहारनिर्णये कदाचिद्भूतस्यानुसरणं भवति कदाचिन्न भवति । साक्ष्यादीनां व्यभिचारस्यापि संभवात् । *मिता.२।९,२।१९

(३) वादिना प्रतिवादिना वाऽभिधीयमानं छलं प्रमादं वा परित्यज्य भूतेन तात्विकेनार्थेन विशिष्टान् व्यवहारान्नयेन्निर्णयेत् । यतो भूतमपि वस्तु वादिप्रतिवादिभ्यामनुपन्यस्तमनिवेदितं व्यवहारतो व्यवहारेण हीयते त्यज्यते । ×अप.

(४) भूतेन तत्वार्थसंबन्धेन सामादिभिरुपायैर्यथार्थवादिना दिनादिरूपेण स्वव्यापारेण परव्यापारेण वा छलरूपमुक्तं निरस्य नृपो व्यवहारान्नयेत् निर्णयरूपे स्वफले प्रापयेत् । क्वचित्तु छलानुसार्यपि व्यवहारो भवतीत्याह । भूतं तत्वार्थसंबन्धमपि साक्ष्यादिकं जयावधारणात्प्रागनुपन्यस्तं व्यवहारे कर्तव्ये हीयतेऽसाधकं भवति । तत्र च छलानुसार्येव व्यवहारः । भूतमप्यनुपन्यस्तमित्यनेन सर्वे भूतार्थाननुसारित्वेन शास्त्रलोकसिद्धाः व्यापारा उपलक्ष्यन्ते । तत्र शास्त्रसिद्धव्यापारो यथा—'क्रियां बलवतीं त्यक्त्वा दुर्बलां यः समाश्रयेत् । स जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात्क्रियाम् ॥' निर्णीतव्यवहारे तु प्रमाणमफलं भवेत् । लिखितं साक्षिणो भुक्तिः पूर्वमावेदितं न चेत् ॥ यथा पक्वेषु धान्येषु निष्फलाः प्रावृषो गुणाः । निर्णीतव्यवहाराभ्यां प्रमाणमफलं भवेत्' इति । लोकव्यवहारो यथा—'श्वश्चेदहं न यास्यामि तदा मम पराजयः' इति व्यवस्थादिरिति । वीमि.

(५) मिता.टीका—साक्ष्यादिभिरिति । तथा च साक्ष्यादिभिः क्रियमाणेन व्यवहारेण तद्धीयते इत्यर्थः । एतेन भूतमपि वस्तुतत्वमपि साक्ष्यादिभिरनुपन्यस्तं सद्व्यवहारतो हीयते इत्यन्वय इति व्याख्यानमपास्तम् । भ्रममूलकत्वात् । बाल.

* स्मृच., विता. मितावत् । × शेषं मितावत् ।

## नारदः

धर्म्यनिर्णयफलम्

**धर्मेणोद्धरतो राज्ञो व्यवहारान्कृतात्मनः ।**
**संभवन्ति गुणाः सप्त सप्त वन्हेरिवार्चिषः ॥**

(१) धर्मेण व्यवहारान्पश्यतो राज्ञो, यथा वह्नेः प्रतापिनः सप्तार्चिषः तथा तस्याऽपि प्रतापाङ्गभूताः सप्तगुणाः संभवन्ति । अभा.११

(२) उद्धरतः सम्यङ्निर्णयतः । व्यचि.२

(३) धर्मेण शास्त्रोक्तेन न्यायेन । कृतात्मत्वमनौदासीन्यम् । सम्यग्व्यवहारदर्शननिमित्तैर्गुणैः तस्य स्तुत्या कर्तव्यतोच्यते । नाभा.१।२६

**धर्मश्चार्थश्च कीर्तिश्च लोकपक्तिरुपग्रहः ।**
**प्रजाभ्यो बहुमानं च स्वर्गे स्थानं च शाश्वतम् ॥**

(१) अथ के के तदुच्यते । तत्र लोकपक्तिः जनानुरागः । उपग्रहः आश्रयणीयत्वम् । अन्यत्सर्वं प्रतीतम् ।

(१) **नासं**.१।२६; **नास्मृ**.१।३२; **अभा**. ११ द्धर (द्वह); **व्यमा**.२७९ संभव (संतन्व); **अप**.२।१; **स्मृच** २६; **व्यचि**. २; **प्रका**.१५; **समु**.११.

(२) **नासं**.१।२७ गें (र्गं); **नास्मृ**.१।३३; **अभा**.११; **व्यमा**.२७९; **अप**.२।१ पक्ति (पङ्क्ति) मानं च (मानश्च); **स्मृच**. २६ क्ति (त्ति) मानं च (मानश्च); **व्यचि**.२ मानं च (मानश्च) **प्रका**.१५ स्मृचवत्; **समु**.११ स्मृचवत्.

एते च वह्नेर्गुणा ह्यस्य संभवन्ति । *अभा.११

(२) उपग्रहः सहायलाभः । अप.२।१

(३) लोकपक्तिः लोके स्तोतव्यता । उपग्रहः अनुवर्तनीयत्वम् । व्यचि.२

(४) धर्मः शिष्टानुग्रहात्स्वधर्मानुष्ठानात् । अर्थस्तत एव निष्पद्यते । कीर्तिरपक्षपातात् साधुकारीति । लोकपक्तिर्दुष्टनिग्रहात् । उपग्रह आश्रयणीयत्वात्, अविसंवादाद् धर्मे सर्वहितत्वात् । प्रजाभ्यः पूजा च । स्वर्गवासश्च नित्यं 'राजभिर्धृतदण्डा' इत्यादिश्रवणात् दुष्टानामपि स्वर्गप्रापणात् शिष्टदुष्टानुग्रहनिमित्ताद् धर्मतः । नाभा.१।२७

राज्ञो यमव्रतम्—समभावः

**¹तस्माद्धर्मासनं प्राप्य राजा विगतमत्सरः ।**
**समः स्यात्सर्वभूतेषु बिभ्रद्वैवस्वतं व्रतम् ॥**

(१) तस्मादेवंविधमहार्थलाभाद्राज्ञा विगतमत्सरो रागद्वेषविवर्जितो वैवस्वतो यमो धर्मराजः, तस्य व्रतं लोकानां स्वकृतशुभाऽशुभफलदत्वं, बिभ्रद् धारयन्, धर्मासनं धर्माधिकरणं प्राप्य सर्वभूतेषु समः स्यादिति । अभा.११

(२) वैवस्वतं व्रतं सर्वभूतेषु समत्वम् । व्यचि.२

अप्रमादेन व्यवहारो द्रष्टव्यः

**²दिव्यान्यप्यप्रमाणानि नीयन्ते वाक्यवञ्चकैः ।**
**देशकालप्रमाणादावप्रमादो भवेदतः ॥**

धर्मशास्त्रानुसारेण प्राड्विवाकसंमत्या कार्यं द्रष्टव्यम्

**³धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः ।**
**समाहितमतिः पश्येद् व्यवहाराननुक्रमात् ॥**

(१) धर्मशास्त्रं पुरस्कृत्य यत्किमपि सभ्यैः प्राड्विवाकसहितैरवधारितं तदेव प्राड्विवाकमते स्थितः प्रमाणीकृत्य,समाहितमतिरेकचित्तः,तत्र स्थितः परिहृतगीतनृत्यक्रियासक्ती राजा व्यवहारान् पश्येत्। अनुक्रमादिति।भाषोत्तरक्रियानिर्णयचतुष्पादानुक्रमात् इत्यर्थः। ×अभा.११

(२) प्राड्विवाकमते स्थितो न स्वमते स्थितः। राजा चारचक्षुषा परसैन्यं पश्यतीतिवत् । तस्य चेयं यौगिकी संज्ञा । अर्थिप्रत्यर्थिनौ पृच्छतीति प्राट् तयोर्वचनं विरुद्धमविरुद्धं च सभ्यैः सह विविनक्ति विवेचयति वेति विवाकः । प्राट् चासौ विवाकश्च प्राड्विवाकः । +मिता.२।३

(३) राजा चेद् व्यवहारान् पश्यति प्राड्विवाकोऽनुमन्ता । अन्यदा तु व्यवहारद्रष्टा । *अप.२।३

(४) अनुक्रमात् अर्थिवचनश्रवणाद्यनुक्रमेणेत्यर्थः । स्मृच.२९

(५) धर्मशास्त्रं पुरस्कृत्येत्यत्र प्रस्तुतत्वाद्राजप्रयुक्तपुरुष एव व्यवहारदर्शनेऽधिकारीति गम्यते। प्राड्विवाकमते स्थित इति । धर्मशास्त्रानुसारेण कृतस्य प्राड्विवाकस्यानुकूलत्वेन, न तु नियन्तृत्वेन यथा कथञ्चित्स्वेच्छया नयनमित्यर्थः। सुबो.२।३

दर्शनस्य चत्वारो भागाः

**¹आगमः प्रथमं कार्यो व्यवहारपदं ततः ।**
**चिकित्सा निर्णयश्चेति दर्शनं स्याच्चतुर्विधम् ॥**

(१) आगमः संबन्धः । तत्तद्दणादानाद्यष्टादशपदानां मध्ये कतमदिदं व्यवहारपदं, तस्यापि मध्ये कतमोऽयं तदीयशाखाभेद इति व्यवहारस्य नाम करणीयम् । ततस्तस्य चतुष्पादक्रियानिर्वाहादिका व्याधेरिव चिकित्सा करणीया । ततः प्रमाणपरीक्षानुसारेण तस्य व्यव-

---

* स्मृतिचन्द्रिकायां पदार्थः अभावत् ।

(१) **नासं.**१।२८; **नास्मृ.**१।३४; **अभा.**११; **व्यमा.**२७९; **स्मृच.**२३ स्वतं (स्वत); **पमा.**३६; **व्यचि.**२; **व्यनि.** तस्मात् (तत्र); **नृप्र.**५; **प्रका.**१३; **समु.**९.

(२) **नास्मृ.**१।३०; **अभा.**१०. असहायभाष्ये समुध्दृतश्लोकोऽयं न नारदस्य प्रसङ्गागतत्वात् । जॉली तु नारदस्मृतावुद्धरति ।

(३) **नासं.**१।२९; **नास्मृ.**१।३५; **शुनी.**४।५०७ उत्त.; **अभा.**११ रान (रम); **मिता.**२।३; **अप.**२।३; **व्यक.**४ अभावत्; **स्मृच.**२९; **पमा.**४७ अभावत्; **व्यनि.**; **नृप्र.**२ अभावत्; **सवि.**७४; **वीमि.**२।३; **विता.**१२; **राकौ.**३८३; **प्रका.**१८; **समु.**१३.

× नाभा. तात्पर्यमभावत् । + विता. मितावत् ।
* वीमि. अपवत् ।

(१) **नासं.**१।३० मं (मः) चिकि (विवि); **नास्मृ.**१।३६ श्चेति (श्चैव); **अभा.**११ नास्मृवत्; **व्यक.**१८ मं (मः); **स्मृच.**२९ मं (मः) चिकित्सा (विचारो); **पमा.**४७ स्मृचवत्; **व्यनि.** व्यकवत्; **सवि.**७४ स्मृचवत्; **व्यसौ.**१३; **प्रका.**१८ स्मृचवत्; **समु.**१३ स्मृचवत्.

हारस्य निर्णयः कार्य इति व्यवहारदर्शनं स्याच्चतुर्विधमिति । अभा.११-१२

(२) आगमः भाषोत्तरयोः श्रुत्वा लेखनम् । व्यवहारपदं ऋणादानादिषु इदं पदमिति व्यवस्थापनम् । चिकित्सा विचारणा । व्यक.१८

(३) आगमोऽर्थिवचःश्रवणम् । तदादौ कर्तव्यम् । ततस्तद्वचनमृणादानाद्यन्यतमे पदेऽन्तर्भाव्यम् । ततः प्रतिज्ञोत्तरप्रमाणानां विचारः । ततः प्रमाणतो जयावधारणमेवं तदीयभाष्ये व्याख्यातम् । +स्मृच.२९

धर्मशास्त्रार्थशास्त्रे अविरुद्धे प्रमाणम्

**[१]धर्मशास्त्रार्थशास्त्राभ्यामविरोधेन यत्नतः ।**
**समीक्षमाणो निपुणं व्यवहारगतिं नयेत् ॥**

(१) किञ्चिद्धर्मशास्त्रोक्तं अर्थशास्त्रविरुद्धं भवति । किञ्चित्पुनरर्थशास्त्रोक्तं धर्मशास्त्रविरुद्धं भवति । तयोरितरेतरतारतम्यालोचनेन यथा लोकाचारविरुद्धं न भवति तथा ससभ्योऽपि राजा व्यवहारगतिं नयेत् । अनया रीत्या । यथा मृगस्येति । अभा.१२

(२) शास्त्रं च द्विविधं–धर्मशास्त्रं अर्थशास्त्रं च, तदुभयाविरोधेन व्यवहारदर्शनं कार्यम् । तदाह नारदः–धर्मशास्त्रेति । व्यमा.२८२

(३) धर्मशास्त्राविरुद्धमर्थशास्त्रं व्यवहारं पश्यता अनुसरणीयम् । तदाह नारदः–धर्मशास्त्रेति । अप.२।१

(४) धर्मशास्त्राणि पितामहेन दर्शितानि—'वेदाः साङ्गास्तु चत्वारो मीमांसा स्मृतयस्तथा । एतानि धर्मशास्त्राणि पुराणं न्यायदर्शनम्' ॥ प्रमाणान्तरदृष्टार्थविषया स्मृतिरर्थप्रधानत्वादर्थशास्त्रतयाऽभिप्रेता । सा च भविष्यत्पुराणे दर्शिता–'षाड्गुण्यस्य प्रयोगश्चाप्रयोगः कार्यगौरवात् । सामादीनामुपायानां योगो व्याससमासतः ॥ अध्यक्षाणां च निक्षेपः कण्टकानां निरूपणम् । दृष्टार्थेयं स्मृतिः प्रोक्ता ऋषिभिर्गरुडाग्रज' ॥ इति दृष्टार्थायाः स्मृतेरुदाहरणमात्रमेतत् । एवं च सन्धिविग्रहादिदृष्टार्थविषया स्मृतिरर्थशास्त्रमित्यर्थः । एतच्चोभयविधशास्त्रानुसरणं तयोर्मिथो विरोधाभाव एव । +स्मृच.२४

(५) विरोधे सति संभवे अर्थशास्त्रं हेयम् । स्मृसा.८४

शास्त्रविरुद्धं भूताहितं च निवर्तनीयम्

**[१]श्रुतिस्मृतिविरुद्धं च भूतानामहितं च यत् ।**
**न तत्प्रवर्तयेद्राजा प्रवृत्तं च निवर्तयेत् ॥**

अन्यराजकृतमन्याय्यं निवर्तनीयम्

**[२]न्यायापेतं यदन्येन राज्ञाऽज्ञानकृतं भवेत् ।**
**तदप्यन्यायविहितं पुनर्न्याये निवेशयेत् ॥**

अर्थशास्त्रधर्मशास्त्रद्वैधे व्यवस्था

**[३]यत्र विप्रतिपत्तिः स्यात् धर्मशास्त्रार्थशास्त्रयोः ।**
**अर्थशास्त्रोक्तमुत्सृज्य धर्मशास्त्रोक्तमाचरेत् ॥**

(१) यदा व्यवहारस्य निर्णयदानकाले तथा दण्डनिगमनावसरे सर्वशास्त्रोक्ता महती लघ्वी वा आकोटना दृश्यते । धर्मशास्त्रोक्ता चान्यादृशाकारा दृश्यते । तदा तयोः शास्त्रयोः परस्परं विप्रतिपत्तौ विसंवादे अर्थशास्त्रोक्तमुत्सृज्य धर्मशास्त्रोक्तमेवाचरेत् इति । अभा.१२

(२) अतो यत्र एकस्य जयेऽवधार्यमाणे अर्थशास्त्रोक्तमित्रलब्धिर्धर्मशास्त्रोक्तमार्गविरोधेन भवति तत्र मित्रलब्धिविरोधेनापरस्यैव जयावधारणं कार्यम् । ×स्मृच.२४

---

+ पमा., सवि., नाभा. स्मृचगतम् ।

(१) **नासं.**१।३१ यत्नतः (पार्थिवः) तिं नयेत् (तीर्धनाः); **नास्मृ.**१।३७ समीक्षमाणो(संपश्यमानो); **अभा.**१२ नास्मृवत्; **व्यमा.**२८२ यत्नतः (पार्थिवः) हार (हारं); **अप.**२।१ यत्न (मार्ग); **व्यक.**५ यत्न (मार्ग) णं (णां); **स्मृच.**२४ यत्नतः (पार्थिवः); **पमा.**३७ स्मृचवत्; **स्मृसा.**८४ यत्नतः (पार्थिवः) णं (णो); **व्यनि.**स्मृचवत्; **नृप्र.**५ स्मृचवत्; **प्रका.**१३ स्मृचवत्; **समु.**९ स्मृचवत्.

+ पमा. स्मृचगतम् ।　　× व्यत., विच. स्मृचगतम् ।

(१) **नासं.**१९।८ भूता (जना); **नास्मृ.**२०।८ च भू (यद्भू); **व्यमा.**२७९ नारदकात्यायनौ यमश्च; **व्यक.**५ च नि (चेन्नि) नारदकात्यायनौ यमश्च; **दवि.**१८ नारदयमकात्यायनाः.

(२) **नासं.**१९।९ भवेत् (च यत्); **नास्मृ.**२०।९; **व्यमा.**२७९ पेतं (द्गतं) प्यन्यायविहितं (प्याम्नाय विहिते) नारदकात्यायनौ; **व्यक.**५ हितं (हिते) नारदकात्यायनौ; **दवि.**१९ प्यन्यायविहितं (प्याम्नायविहिते) नारदयमकात्यायनाः.

(३) **नासं.**१।३३; **नास्मृ.**१।३९; **अभा.**१२,५५; **व्यमा.**२८२ स्त्रोक्त (स्त्रार्थ); **व्यक.**६; **स्मृच.**२४; **पमा.**३८; **दीक.**३३; **स्मृसा.**८४-८५; **नृप्र.**५; **व्यत.**२२६ व्यमावत्; **व्यसौ.**४; **व्यम.** ४; **विता.**२३ स्त्रोक्तमा (स्त्रैः समा) उत्त. **प्रका.**१४; **समु.**९; **विच.**१४२ व्यमावत्.

(३) अस्मिन्नप्यर्थशास्त्रे धर्मशास्त्राविरुद्धो योंऽशः स उपादेयः। इतरस्तु परित्याज्यः। तदाह नारदः—यत्रेति। +पमा.३८

धर्मशास्त्रलोकव्यवहारद्वैधे व्यवस्था

**धर्मशास्त्रविरोधे तु युक्तियुक्तो विधिः स्मृतः।**
**व्यवहारो हि बलवान् धर्मस्तेनावहीयते ॥**

(१) यत्र पुनरर्थापत्त्या विप्रतिपत्तिः स्याद्धर्मशास्त्रोक्तलोकव्यवहारयोः तत्र धर्मशास्त्रोक्तमुत्सृज्य लोकव्यवहारस्थमाचरेत्, यतः स एव बलवान्। तथा च धर्मशास्त्रोक्तम्—'अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया। सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात् ॥' तथा च 'नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ। पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥' इत्यादिकधर्मशास्त्रोक्तमपि लोकाचारव्यवहारे परित्यक्तम्। मातुलसंबन्धस्तु धर्मशास्त्रपरिवृतोऽपि दाक्षिणात्यकृतोऽपि परिहार्य एव, सर्वत्र न वर्तते। स्थानपानभोजनादिना सर्वलोकेऽप्यादृतः। अतोऽत्र युक्तियुक्तो विधिः स्मृतः। सर्वथा एवमेव वक्ष्यमाणम्। 'देशे देशे य आचारः पारम्पर्यक्रमागतः। स शास्त्रार्थबलान्नैव लङ्घनीयः कदाचन ॥' इति सोऽप्यनुवर्तनीय एवेति। अभा.१२

(२) धर्मशास्त्रयोरेव तु विप्रतिपत्तौ लोकस्य व्यवहार आदरणीयः। तदाह नारदः—धर्मशास्त्रेति। व्यमा.२८२

(३) युक्तियुक्तः प्रमाणोपपन्नः,......युक्तिं विना व्यवहारमात्रेण धर्मो हीयते। ततः प्रमाणमनुसरणीयमित्यर्थः। व्यक.६

(४) व्यवहारो युक्तिः। व्यचि.२

(५) अवहीयते अवगम्यते। हि गताविंत्यस्माद्धातोः। *व्यत.१९९

(६) धर्मशास्त्रार्थशास्त्रयोर्विरोधे धर्मशास्त्रोक्तमाचरेदित्युक्तं, धर्मशास्त्रयोरेव विरोधे उच्यते—युक्तियुक्तं अपयुक्तिमुक्तं गृह्णीयात्, इतरत्र तदनुरोधेन गौणं वा कल्प्यमप्रमाणं वा। यथा क्वचिदुक्तं हंसो भक्ष्य इति। अन्यत्र अभक्ष्य इत्युक्तम्। तत्रागृह्यमाणकारणत्वात् प्रतिषेधस्य न किञ्चिद् दृष्टं प्रयोजनमस्तीति प्रामाण्यमस्यावसीयते। इतरथोत्सर्गः। एवं सर्वत्र। तस्माद् युक्तियुक्तस्याश्रयणम्, इतरस्याश्रयणे यस्माद् धर्मो हीयते। कुतः व्यवहारो हि बलवान्। अन्यथादृष्टो, युक्तियुक्तापाश्रयणेनाऽबलवत्त्वादधर्ममुत्पादयति। तस्माद् युक्तियुक्ताश्रयणे प्रमाणद्वयसंनिधानान्न हास्यते धर्म इति। नाभा.१।३४

(७) युक्तिः न्यायः। व्यउ.८

धर्मव्यवहारचरित्रराजशासनानि व्यवहारप्रमाणानि।
तेषां तारतम्यं च

**धर्मश्च व्यवहारश्च चरित्रं राजशासनम्।**
**चतुष्पाद् व्यवहारोऽयमुत्तरः पूर्वबाधकः ॥**

(१) एवं चतुष्पादोऽयमभिहितो व्यवहारः। अस्य चैवं निर्दिष्टचतुष्पादस्य चतुर्णामपि पादानां विवरणश्लोकोऽयमनुगत एव भवति। अभा. ६

(२) ननु प्रतिज्ञोत्तरप्रमाणनिर्णयानां व्यवहारपादत्वं न धर्मादीनामिति किमिदमुक्तम्? उच्यते। निर्णयपादो धर्माद्यनुसारेण चतुर्विधः। तत्र यदनुसारेण यो निर्णयः स तच्छब्देन निर्दिश्यते। तेन धर्मादिभिरपि चतुष्पात्त्ववर्णनं युक्तमेव।

नन्वेवं तर्ह्युत्तरः पूर्वबाधक इति नारदवचनमसंबन्धम्। तत्त्वार्थानुगुण्यातिशयेन पूर्वस्यैवोत्तरबाधकत्वात्। 'छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः'(यास्मृ.२।१९) इति याज्ञवल्क्येनोक्तत्वाच्च। उच्यते। सत्यम्, उत्सर्गतः सर्वत्रैवम्। क्वचिद् विषये तूत्तरः पूर्वबाधको भवत्येव।

+ शेषं स्मृचवत्। * शेषं व्यमावत्।

(१) **नासं**.१।३४ विधिः स्मृ (ऽपि धर्म) वही (पची); **नास्मृ**.१।४०: vulg. 'धर्मशास्त्राविरोधेन युक्तियुक्तो विधिर्मतः।' इति पूर्वार्धपाठः; **अभा**.१२; **व्यमा**.२८२ तु (च): २९४ तु (च) हि (ऽपि); **व्यक**.६; **व्यचि**.२; **व्यत**.१९९; **व्यसौ**.४ स्तेनाव (शास्त्रेण); **व्यप्र**.१३ पू., ८८ पू.; **व्यउ**.८; **विता**.२३ युक्ति (न्याय) पू.

(१) **नासं**.१।१०; **नास्मृ**.१।१०; **अपु**.२५३।३-४ रोऽय (राणा) बाध (साध); **अभा**.६; **अप**.२।१; **व्यक**.१६ बाध (साध): १००; **स्मृच**.१०; **पमा**.१०; **व्यनि**.; **नृप्र**.(=) ३; **सवि**.४४४ स्मृतिः; **चन्द्र**.१६६ ष्पाद् (र्धा) उत्त.; **व्यसौ**.१२,९१; **व्यप्र**.५,८८ त्रं (तं); **व्यउ**.३; **विता**.३५,८०; **प्रका**.३; **समु**.३.

तद्विषयं च नारदवचनम् । तथा हि, यदा केनचिद् विशिष्टेन राजन्यादिना मोहात्कथञ्चिद्राजदारादेः स्पर्शनादिकं कृतम् । कृत्वा च स प्राणभयान्मिथ्या करोति, साक्षिणश्च सन्ति, ते च राज्ञा पृष्टाः सन्तो वधोऽस्य मा भूदिति नायमस्य कर्मणः कर्तेति मिथ्या साक्ष्यं ब्रूयुः, तदा दोषकारिणस्तत्कर्तृत्वाप्राप्ते धर्मो व्यवहारेण बाध्यते । युक्तं चात्र धर्मबाधनम् । 'वर्णिनां हि वधो यत्रे'ति साक्षिणां मिथ्याभिधानविधानात् । यदा पुनः परदाराभिगमनं कृतमनेन साक्षिणो विद्यन्ते इति कश्चिदाभीरादिः केनचिदभियुक्तो ब्रूते सत्यमेतत्साक्षिभाषितं तथापि नाहं दण्ड्यः चरित्रबलान्मयैतत्कृतं निवेशितं च पुस्तके राज्ञा तदिति तदा चरित्रेण व्यवहारो बाध्यते । व्यवहारतः प्राप्तस्य दण्डस्य चरित्रतो निवृत्तत्वात् । युक्तं चात्र चरित्रेण बाधनम् । 'ग्रामगोष्ठपुरश्रेणिसार्थसेनानिवासिनाम् । व्यवहारश्चरित्रेण निर्णेतव्यो बृहस्पतिः' इति वचनात् । चरित्रमपि क्वचिद्राजाज्ञया बाध्यते । यदा कुलगृहाभ्यन्तरे न केनचिद्राजपुरुषेण प्रवेष्टव्यमिति चरित्रमीदृशं कृतं ततो राज्ञा कश्चिदपराधी गृहं प्रविष्टो ज्ञातः । ततो राज्ञा कश्चित् राजपुरुष आज्ञप्तः, गृहाभ्यन्तरमपि प्रविश्य स दुष्ट आनेतव्य इति । तदा चरित्रमपि राजशासनेन बाध्यते । दुष्टनिग्रहस्यावश्यकत्वेन चरित्रतो राजशासनस्य बलीयस्त्वात् ।

स्मृच.१०-११

(३) चतुर्षु वर्णेषु यः कश्चिद्राजद्रोहं कृत्वा राज्ञा तर्जितः सन् अतिभीरुतया स्वापराधमङ्गीचकार तत्र समीपवर्तिनः साक्षिणो वर्णिवधं निवारयितुमिच्छन्तः सत्यमुल्लङ्घ्य 'तत्र साक्ष्यनृतं वदेत्' (मस्मृ. १०। १३०) इत्येतादृशं शास्त्रमेवाश्रित्य तदीयमपराधं पर्यहार्षुः । तत्र व्यवहारेण धर्मो बाध्यते । केरलदेशादौ वेश्यागमने साक्षिभिरापादितेऽपि देशाचारवशान्नायं राज्ञा दण्ड्यते । तत्र चरित्रेण व्यवहारस्य बाधः । सत्यपि तादृशे देशाचारे त्वयैवं न कर्तव्यमिति राजा चेदनुशास्ति तदा राजाज्ञया चरित्रस्य बाधः । य एते प्रोक्ता धर्मादयश्चत्वारः पादाः ते चतुर्षु सभ्यादिषु प्रतिष्ठिताः ।

*पमा.१८

* शेषं (पृ. १६) स्मृचगतम् ।

(४) निर्णयाख्यचतुर्थव्यवहारपादहेतुत्वेन गौणमेव व्यवहारपादत्वमेषामत्रोक्तम् । व्यवहारपदेन निर्णय एव वा लक्ष्यते । तद्धेतुत्वं तत्पादत्वमिति द्रष्टव्यम् । +व्यप्र.६

(५) वर्णिवधे साक्ष्यनृते वधधर्मो व्यवहारेण शास्त्रेण शोध्यः । चरित्रेण देशाचारेण साक्षिसिद्धेऽप्याभीरस्त्रीषु व्यभिचारदण्डो बाध्यः । 'विप्रगृहे राजकीयो न गच्छेत्' इत्याचारः 'तद्गतश्चौरो धार्य' इति राजपत्रेण बाध्य इत्यर्थः । व्यवहारस्तन्निर्णयः । विता.३५,८१

**तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिषु ।**
**चरित्रं पुस्तकरणे राजाज्ञायां तु शासनम् ॥**

(१) तत्र सत्ये स्थितो धर्म इति । यदा धनिकर्णिकयोरेकान्तव्यवहारेऽपि परस्परं सत्याच्चलनं नास्ति तदासौ सत्यव्यवहार उच्यते । तस्मिन् सत्यसंव्यवहारे साक्षाद्धर्म एव स्थितः । स च व्यवहारचरित्रराजशासनानामदत्तावकाशस्वरूपत्वेन स्वतो वर्तमानधर्म एवोच्यते । 'व्यवहारस्तु साक्षिष्विति'यदुक्तं तत्र धनिकर्णिकयोरेकतरदोषादपि सत्यधर्मचलनशङ्कोत्पत्तौ संजातायां साक्षिप्रत्ययो यः संव्यवहारः प्रवर्तते स व्यवहार इत्युच्यते । स चोत्तरः पूर्वस्य बाधयोत्पन्नस्तेन पूर्वबाधक इति । यच्च चरित्रं पुस्तकरण इत्युक्तं तच्चरित्रमिति—पत्रकभूर्जचीरकसंपुटिकादिषु साक्षिस्वहस्तसुनिबद्धं कृत्वा यो व्यवहारः प्रवर्तते, स चरित्रमित्युच्यते । स च पूर्ववाक्यादुत्तरः पूर्वबाधक इति । यस्तु राज्ञा समावेदितो व्यवहारः स राजशासनायत्तः सर्वेषामप्येतेषामधिकः सर्वोत्तरश्च । यत इत्युक्तम्—'ग्रामे दृष्टः पुरे याति पुरे दृष्टस्तु राजनि । राज्ञा दृष्टः कुदृष्टो वा नास्ति पौनर्भवो विधिः ॥' तदेवमयं चतुर्विभागरूपत्वाच्चतुष्पादो व्यवहारः । तथा चात्र लोकसंव्यवहारः संव्यवहार इत्युच्यते । स च द्विविधः प्रयोजनापेक्षया प्रव-

\+ शेषं स्मृचवत् ।

(१) **नासं.**१।११; **नास्मृ.**१।११; **अपु.**२५३।४-५ पुस्तकरणे (संग्रहे पुंसां) शास (साध); **अभा.**७; **अप.**२।१ सत्ये (सभ्ये); **व्यक.**१७ स्तु (श्च) : १००; **स्मृच.**१२; **पमा.**१० पुस्त (तु स्वी); **नृप्र.**३; **व्यसौ.**१२ व्यकवत्; **व्यप्र.**५ चण्डेश्वरेण तु 'चरित्रं पुस्तकरणं' इति पठितम्; **व्यउ.**३; **प्रका.**३; **समु.**३.

र्तितोऽपि देशकालवशात् । सामभेदोपप्रदानदण्डैः चतुर्भिरपि साधनोपायैः यथावसरप्रयुक्तैः साध्यते तेन चतुःसाधन उक्तः । एवं चायमस्खलितं प्रवर्तमानो व्यवहारः परमसमृद्ध्या चतुर्णामपि वर्णानामाश्रमाणां च रक्षणात् परिपालनात् चतुर्हितो भवतीति । अभा.७

(२) सभ्यैकप्रमाणत्वाद्धर्मः सभ्ये स्थित इत्युच्यते । व्यवहारश्च साक्ष्यधीनो निर्णय इति व्यवहारः साक्षिषु स्थित इत्युच्यते । चरित्रं देशकालकुलधर्मः, तत्पुस्तकरणे लिखितकरणे स्थितम् । लिखिताः खलु देशादिधर्माः प्रमाणम् । दुष्टनिग्रहः शासनम् । तद्राजाज्ञाधीनत्वात्तस्यां स्थितमित्युच्यते । एषां च धर्मादीनां परं बलीयः । तद्यथा——वर्णिषु कृतापराधेषु वधरूपे दण्डधर्मे सत्यात्साक्षिवचनात्प्राप्ते साक्षिभिः 'वर्णानां हि वधो यत्र' इतिवचनानुसारादनृतेऽभिहिते व्यवहारेण वधरूपो दण्डधर्मो निवर्तते । व्यवहारोऽपि चरित्रेण बाध्यते यथा——साक्षिभिः साधितेऽप्याभीरस्त्रियाः पुरुषान्तरोपभोगे तद्दण्डे च व्यवहारतः प्राप्तेऽपि राजकुलाधिगतलिखितान्निवर्तते । एवं हि तत्र लिखितम्—आभीरस्त्रीणां व्यभिचारेऽपि सति दण्डो न ग्राह्य इति । चरित्रमपि राजशासनेन बाध्यते । यथा—ब्राह्मणादिगृहे राजपुरुषेण न प्रवेष्टव्यमिति देशधर्मो लिखितोऽपि ब्राह्मणादिगृहे व्यवस्थितोऽपि चौरादी राजाज्ञया तद् गृहं प्रविश्य राजपुरुषेण नीयते । अप.२।१

(३) साक्षिग्रहणं धर्मशास्त्रस्य दिव्येतरप्रमाणस्य चोपलक्षणार्थम् । पुस्तकरणं लेख्यम् । स्मृच.१२

(४) दोषकारी स्वयमनृताद्भीतोऽप्यपराधोऽस्तीति सत्यं ब्रूते । अतो धर्मस्य सत्येऽवस्थानम् । प्रतिज्ञोत्तरयोः कृतयोः साक्षिणा यस्य पक्षोऽभ्युपगम्यते तस्य जयः । तेन व्यवहारस्य साक्षिण्यवस्थानम् । कर्नाटकदेशे बलात् मातुलसुताविवाहो न दोषाय । केरलदेशे कन्याया ऋतुमतीत्वं न दोषायेत्येवमादिकस्तद्देशसमयः तत्र तत्र पत्रादिशासनेऽवतिष्ठते । शिष्यत इति शासनम् । राजानुशासनेन प्रजानां वर्तनं तत्र राजाज्ञायां प्रतिष्ठितम् । पमा. १८-१९

(५) चरित्रं पुस्तकरण इति । लेख्येन निर्णीयते, तच्चरित्रम् । 'चरित्रं संग्रहः पुंसाम्' इति पाठान्तरम् । पारम्पर्याविच्छिन्नस्मृतिदेशाधिष्ठानगणधर्मः सत्पुरुषैः परिगृहीतः, तस्मिन्स्थित इति संबन्धः ।*नाभा.१।११

कार्यदर्शने प्रत्यक्षं सहकारि

**सूक्ष्मो हि भगवान्धर्मः परोक्षो दुर्विचारणः ।**
**अतः प्रत्यक्षमार्गेण व्यवहारगतिं नयेत् ॥**

(१) सौक्ष्म्यं कथं महतो धर्मस्य ? यस्मात् परोक्षो, दुर्विचारणः कथम् ? यस्मादागमानुमानप्रमाणपरिच्छेद्यः । तथा बहुधागमपरस्परविरोधात्संदेहः । तेन दुर्विचारणः, यत आगमेनाऽपि परिच्छेत्तुं न शक्यते । अतः प्रत्यक्षमार्गेण तस्य गतिं नयेत् । प्रत्यक्षोऽस्य मार्गः लैङ्गिकमनुमानम् । शुभाशुभात्मकं सुखदुःखमुपभुज्यत इति । समस्तागमसमर्थितमिदम् । अथवा प्रत्यक्षमार्गः विवेकिसाधुविशिष्टपूर्वप्राचां मार्गः । तेन धर्मगतिं नयेदिति । अभा. १३

(२) प्रत्यक्षमार्गेण दृढतरप्रत्यक्षादिप्रमाणद्वारेण । व्यक. ६

(३) सूक्ष्मो दुर्बोधो दुर्विचारः अनुमानादिभिरशक्यो विचारयितुं यथा च संप्रतिपत्तव्यः । अतीन्द्रियः परोक्षः चक्षुरादिभिरग्राह्यः । तस्मात् प्रत्यक्षमार्गेण प्रत्यक्षपूर्वकं लोप्त्रादिना व्यवहारं नयेत् । नाभा.१।३५

कार्यदर्शने तर्क उपायः

**यथा मृगस्य विद्धस्य व्याधो मृगपदं नयेत् ।**
**कक्षे शोणितपातेन तथा धर्मपदं नयेत् ॥**

कक्षं वनगहनम् । यथा तस्मिन्वनगहने स्थितो मृगः संग्रहं दुरानेयो भवति । एवं परमार्थधर्मोऽपि संग्रहं दुरानेयः । तस्य विद्धस्य व्याधो मृगलुब्धकः, प्रचुरतृणच्छन्नभूम्यां दुर्लभमपि तन्मार्गं प्रहारनिर्गमस्थानं संततशोणितपातेन पदं तावन्नयेत् यावदग्रतः पतितः

---

* शेषं अभागतम् ।

(१) **नासं.**१।३५ ( सूक्ष्मो हि बलवान् धर्मो दुर्विचारस्त्वतीन्द्रियः ); **नास्मृ.**१।४१; **अभा.**१३; **व्यक.**६; **स्मृच.**२५ र्मः परो ( र्मो दुष्प्रे ); **सवि.**७१ स्मृचवत्; **व्यसौ.**४; **प्रका.**१४ स्मृचवत्; **समु.**१० स्मृचवत्.

(२) **नासं.**१।३२ व्याधो मृग (मृगव्याधः) पाते (लेशे); **नास्मृ.**१।३८ पाते (पादे); **अभा.**१२; **व्यनि.** पाते (लेपे); **समु.**१० पाते (लेशे) कात्यायनः.

स एव मृगो दृष्टस्तेन। एवं राजाऽपि ससभ्यः क्रियामार्गानुसारेण तावद्धर्मपदं नयेत् यावत्परमार्थधर्म एव दृष्ट इति। +अभा.१२

**यात्यचौरोऽपि चौरत्वं चौरश्चायात्यचौरताम्।**
**अचौरश्चौरतां प्राप्तो माण्डव्यो व्यवहारतः॥**

(१) एवं भगवान्धर्मो दुर्विचारणः, येन चौरक्षिप्तरिक्थमात्रदर्शनात् अविज्ञातधर्मपरमार्थनृपतिपार्श्वादचौरोऽपि महर्षिर्माण्डव्यो मौनव्रततपःस्थितोऽदत्तोत्तरत्वाच्चौरतां प्राप्तः। अतः कारणात् पात्राऽपात्रपर्यालोचनाऽपि निपुणतया कर्तव्येति। +अभा.१३

(२) व्यवहारतो व्यवहाराख्यनिर्णयविशेषत इत्यर्थः। स्मृच.२५

भूतानुसारी छलानुसारी च व्यवहारः

**भूतच्छलानुसारित्वात् द्विगतिः स उदाहृतः।**
**भूतं तत्त्वार्थसंयुक्तं प्रमादाभिहितं छलम्॥**

(१) व्यवहारो यथा प्रवेशकाले द्विर्द्वारः, तथा निर्गमनकालेऽपि द्विर्गतिः। तत्र व्यवहारस्य एका गतिर्धर्मन्यायतत्वभूतार्थनिर्णयेन भवति। द्वितीया प्रमादाभिहितनिर्णयेन, यथा कथानकमस्ति अस्मिन् स्थाने वटपद्रके संव्यवहारो वृत्तः। तद्ग्रामनाम विस्मृत्य प्रमादात् वादी इति वदति—यथा संवाडुकग्रामस्थितस्य मम पार्श्वात् अनेन देवदत्तेन गृहीतद्रम्म ५०० शतवृद्ध्या तदद्य बहोः कालात् द्विगुणीभूतं द्रव्यमहं प्रार्थयामि। तत् श्रुत्वा देवदत्तेनोत्तरं दत्तं, यथाह संवाडुकग्रामस्थितस्य पार्श्वात् तिष्ठन्तु तावत् पञ्चशतानि। एकद्रम्ममपि न गृण्हामि। एतत्प्रादेशमिथ्योत्तरं दत्वा, तेनान्यग्रामनामछलकत्वात् द्रव्यं गृहीतम्। शुद्धश्चासौ देवदत्तः। इयं प्रमादाभिहितछलनिर्णयगतिर्द्वितीया। तथा चास्त्येवैतत्। 'दिव्यान्यप्यप्रमाणानि नीयन्ते वाक्यवञ्चकैः। देशकालप्रमाणादावप्रमादी भवेदतः'॥ यत्र चेयमीदृशी छलगतिर्वादिन एव प्रमाददोषात्संपद्यते। तत्र तस्य स्वचर्यावसितस्य वादिनः किं करोतु राजा किं सभ्याः। अभा.१०-११

(२) तत्र भूतानुसारी व्यवहारो मुख्यः, छलानुसारी त्वनुकल्पः। साक्षिलेख्यादिभिर्व्यवहारनिर्णये कदाचिद्वस्त्वनुसरणं भवति कदाचिन्न भवति। साक्ष्यादीनां व्यभिचारस्यापि संभवात्। मिता.२।१९

(३) सत्यम् ऋणादिवादेषु भूतानुसार एव। साहसादिषु, छलं यथा मदीयां भार्यामयमपहृतवानिति लेखयित्वा पश्चादुक्तं न हृता हर्तुमभिलषितेति। तथा पादेन मूर्ध्नि हतवानिति लेखयित्वा पश्चादुक्तं न हतोऽहं यथोक्तवान्। इत्यादि वाक्छलेनैव तस्य भङ्गः। अन्यत्र तु न तथा। व्यमा.२८९

(४) द्रव्यसंख्यादिकं याथातथ्येनान्यथा वा राजादीनामग्रे यदा ब्रूते तदा तस्योभयस्योपरि व्यवहारः प्रवर्तते ततो द्विगतित्वम्। पमा.२०

(५) व्यवहारस्य छलानुसरणं तत्त्वानुसरणं इति गतिद्वयमुक्तम्। तत्र तत्त्वानुसरणेन सप्तदश विवादपदान्यनुक्रान्तानि। छलानुसरणेन प्रकीर्णकाख्यं विवादपदमनुक्रान्तमिति। ×सवि.५३

(६) भूतं तयोरर्थतत्वं—यत्तत्वानुसारेणार्थनयनम्। प्रमादोक्तिपरिग्रहेणार्थनयनं छलम्। नाभा.१।२४

(७) प्रमादपदमिह भूतार्थाननुसारिव्यापारमात्रपरम्। वीमि.२।१९

छलं निरस्य भूतमनुसरणीयम्

**तत्र शिष्टं छलं राजा मर्षयेद्धर्मसाधनः।**

---

+ नाभा. अभावत्।

(१) **नासं**.१।३६; **नास्मृ**.१।४२; **अभा**.१३; **व्यक**.६ माण्ड (क्षन्त); **स्मृच**.२५,९५; **सवि**.१६०; **व्यसौ**.४; **प्रका**.१४; **समु**.१०.

(२) **नासं**.१।२४ संयुक्तं (युक्तं तत्); **नास्मृ**.१।२९; **अपु**.२५३।१२ स उ (समु); **अभा**.१०; **मिता**.२।१९ स उ (समु) संयुक्तं (युक्तं यत्); **व्यमा**. २८९ संयुक्तं (संबन्धं); **अप**.२।१; **व्यक** १७; **स्मृच**.१३ स उ (समु) लम् (लः): २५ स उ (समु) पू.; **पमा**.१३; **व्यत**.२०५ व्यमावत्, उत्त.; **स्मृचि**.२; **नृप्र**.३; **सवि**.५३ सारित्वात् (रोधेन) स उ (समु) पू.: ७१ सारि (रोधि) पू.: क्रमेण मनुः : ४४४, ५०१ पृ.५३वत्, पू.; **व्यसौ**.१२ स उदाहृतः (परिकीर्तितः); **वीमि**. २।१९ स उ (समु); **व्यप्र**.६ वीमिवत्: ९८ उत्त.; **व्यउ**.४; **विता**.१०६-१०७ मितावत्; **प्रका**.३ वीमिवत्; **समु**.३ वीमिवत्.

×सवि. (पृ.७१) मितावत्।

(१) **नासं** १।२५; **नास्मृ**.१।३१; **अभा**. ११; **व्यक**.७

**भूतमेव प्रपद्येत धर्ममूला यतः श्रियः ॥**

(१) यत्र पुनर्धनी साक्ष्योपन्यासकाले स्वकीयं साक्षिणं नवकम्बलं प्रावृतं दृष्ट्वा राजाधिष्ठितकरणस्याग्रे वदति । यथा अयं नवकम्बलो देवदत्तो मम तस्मिन्काले कार्ये च साक्षी । एतत् श्रुत्वा शठः प्रतिवादी यदि चाकुलं गृहीत्वा एवं वदति यथा कुतोऽस्य नवकम्बलाः । यदि नवकम्बला अस्य विद्यन्ते ततो वदतु साक्ष्यमन्यथा न प्रमाणं मम इत्यादिकं छलग्राहिणं प्रति तत्रेति । अत्र मुनिमतमिदम् । शिष्टो विशिष्टः । तस्य छलग्राहिणा प्रतिवादिना चाकुलमारोप्यते, तद्राजा मर्षयेत् न गृण्हीयादित्यर्थः । तथा यावद्व्यवहारस्य निर्णयो न भवति, तावत् यदि वादी स्वकीयं प्रमादाभिहितं वचनं ज्ञात्वा वटपद्रकग्रामं च सम्यक् स्मृत्वा तमेव वटपद्रकग्रामस्थितसंव्यवहारं कीर्तयति । तदा वादिना तत्स्वकीयं प्रमादाभिहितं छलं शिष्टं कथितमित्यर्थः । तं वादिशिष्टच्छलं राजा मर्षयेद्धर्मसाधनः । क्षमयेदित्यर्थः उत्तराक्रान्तभाषाछलेन भूतार्थनाशं न कुर्यात् । धर्मन्यायमेव प्रतिपद्येत । यतः कारणात् एवं व्यवहरतो राज्ञो धर्ममूलाश्च श्रियः । अभा.११

(२) शिष्टं हितम् । शिष्टं छलं वाक्छलं राजा मर्षयेद् धर्मसाधनः । 'कृत्यल्युटो बहुलम्' इति ल्युट् । बहुलवचनात् कर्मणि ल्युट् । धर्मः साधनो यस्य राज्ञः स राजा धर्मसाधनः । स वाक्छलं मर्षयेद्, भूतमेव प्रपद्येत न प्रमादाभिहितं परिगृण्हीयात् । धर्ममूलाः यतः श्रियः यस्माद् श्रियो धर्ममूलाः । बहुवचननिर्देशो धनराष्ट्रसाधनदृष्टादृष्टनिमित्तोपसंग्रहणार्थः । नाभा.१।२५

**अभूतमप्यभिहितं प्राप्तकालं परीक्षयेत् ।**
**यत्तु प्रमादान्नोच्येत तद्भूतमपि हीयते ॥**

प्राप्तावसरं यदुपन्यस्तं भवति, तत्प्रदुष्टसाक्षिकं परीक्ष्य परिहरेत् । यत्पुनरतिक्रान्तस्वकीयावसरं तद्भूतमप्युपन्यस्तं वादिप्रमादात्तस्य ग्रन्थिछुटितद्रव्यमिव तदेवापुण्यैरेव तद्भूतं प्रणष्टमिति । अतो वितर्क्यते । ननु प्रथममुक्तं तत्र शिष्टं छलं राजा मर्षयेत् । यथाभूतमेवार्थं प्रतिपद्येत इत्यादिकमुक्त्वा सांप्रतमेतदुक्तम् । अतिक्रान्तकालोपन्यासच्छलाद्भूतमपि हीयते तदयं स्ववचनविरोधः कथम् ? अत्रोच्यते । प्रवृत्तव्यवहारमध्ये वादिप्रतिवादिनोः स्वकीयस्वकीयावसरेषु वदतोर्यानि वा आकुलानि भवन्ति, तानि राज्ञा ग्रहीतव्यानि । तेष्वेव 'छलं निरस्य भूतेन व्यवहारान्नयेत्तु यः' । यत्पुनर्निर्णिक्तव्यवहाराणां प्रमाणं तद्यदि गृह्यते यथा निष्पन्नप्रासादस्यादिसूत्रस्थितएकपक्षेष्ववकाशात् सर्वध्वंसं कृत्वा मूलादारभ्य पुनः प्रारम्भो दुष्करो भवति । तथा व्यवहारस्यापि तेन, यत्तु प्रमादादवसरप्राप्तं नोच्यते । तस्यैव ग्रन्थिछुटितमिव नष्टं नात्र धर्माधिकरणस्य स दोषः । अत एवैतद्वक्ष्यति । सुनिश्चितबलाधानेन भवितव्यम् । अर्थिना साधनेनेत्यर्थः । अभा.१७

**किन्तु राज्ञा विशेषेण स्वधर्ममनुरक्षता ।**
**मनुष्यचित्तवैचित्र्यात्परीक्ष्या साध्वसाधुता ॥**

(१) अस्मिन् श्लोके महर्षिणा महती मतिः संपदः संपत् शुभाशुभनिमित्तभूता सर्वसाधारणत्वेन विशेषेण चोपन्यस्ता । यतः कारणात् सर्वोऽपि लोको दुर्जनकथितमात्रश्रुतग्राही अविचारकश्च । निर्दोषानपि साधुबन्धुकलत्रपुत्रमित्रान् दुर्जनभिन्नचित्तः सहसा परित्यजन् संपदा शुभेन च परित्यज्यते । असंपदाऽशुभेन च परिगृह्यते । यः पुनः प्रजापालो बहुपरिवार एव सृष्टः प्रजापालो बहुपरिग्रहपरिवार एव सृष्टः प्रजापतिना तेन स्वपरिग्रहपालनधर्ममनुरक्षता विशेषेण साध्वसाधुता परीक्ष्या, इयमेव साध्वसाधुपरीक्षा सम्यगनुष्ठिता तस्य महतोः श्रीशुभयोर्हेतुभूता भवति । सा च मनुष्यचित्तवैचित्र्यात्परीक्ष्या । अथवा परीक्ष्यमप्येतदेव यन्मनुष्यचित्तवैचित्र्यं चित्रविचित्रतावैचित्र्यमनेकप्रपञ्चरूपतेत्यर्थः ।

---

तत्र शि (न तु द्व) धर्म (भूत); **स्मृच**.२५ तत्र (ननु); **स्मृसा**.८८ तत्र (ननु) धर्म (भूत) याज्ञवल्क्यः; **व्यसौ**.५ शिष्टं (दृष्टं) साध (शास) श्रियः (स्थितिः); **प्रका**. १४ तत्र (न तु); **समु**.१० प्रकावत्.

(१) **नासं**.१।५५ क्षयेत् (क्ष्यते); **नास्मृ**.१।६४; **अभा**.१७; **व्यक**.७ यत्तु प्रमादान्नोच्येत (प्रमादान्नोच्यते यत्तु); **दीक**.३३ व्यकवत्, उत्त.

(१), **नासं**.१।५९ रक्ष (तिष्ठ) ष्य (ष्ये); **नास्मृ**.१।६८; **अभा**.१८; **अप**.२।१ मनुर (मभिर); **व्यक**.७ अपवत्; **दीक**.३३ रक्ष (तिष्ठ); **व्यत**.२०५ क्ष्या (क्षा) धुता (धु बा); **व्यसौ**.५ अपवत्.

तत्र तावत्प्रस्तुतार्थ उच्यते— महर्षिणा सभ्याकोटनमुक्त्वाऽनन्तरमेव किं तु शब्दं विकल्पवाचकमादौ प्रयुज्य अयं परीक्षादरश्लोकोऽभिहितः। तेनायमर्थः समर्थ्यते—यदि कश्चिद् दुष्टदुर्जनस्वभावतया चिरन्तनस्वकीयामर्षपूरितो राज्ञः कर्णे स्थित्वा निर्दोषाणामपि सभासदां दुष्टत्वं कथयति, ततस्तस्यैव राजाऽर्थविध्वंसकरणेन स्वार्थैकनिष्ठस्याननुकूलशास्त्रचित्तस्य साध्वसाधुता परीक्ष्या। पश्चात्सभ्यानां, यतः सभ्याः राजाङ्गभूताः। तेषां यस्य तस्यैव वचनात् छायाभङ्गे कृते धर्माधिकरणलाघवात् राज्ञ एव प्रतापलाघवं भवति। न केवलमत्रैव सर्वपरिग्रहस्याप्युपरि राज्ञा श्रुतमात्रग्राहिणा न भवितव्यम्। श्रुतविचारकेण गम्भीरमतिना च भवितव्यम्। अन्यथा 'बन्धुरपि भवति शत्रुः दुर्जनकृतगूढचक्रिकाभिन्नः। निजचित्तशङ्कयाऽपि च कल्पितया निरपराधोऽपि'॥ इत्यवधार्य न कार्यं कदाचिदविचार्य कार्यसद्भावं बन्धुसुहृद्भृत्यकलत्रपुत्रनिर्घातनं सहसा तेषां शङ्कादोषे संजातेऽपि शुभतः स्ववित्ताद्वा सपरिचरः कर्तव्यः प्रयत्नतस्तत्त्वनिर्वाद इति। अभा. १८-१९

(२) किन्तु कर्तव्यं राज्ञा स्वधर्मं न्यायप्रवर्तनमन्यायनिवृत्तिं च सम्यक् परिपालयता, साध्वसाधुता साधुश्चासाधुश्च साध्वसाधू तयोर्भावः साध्वसाधुता परीक्ष्या अनेकप्रकारम्। हेतुरुच्यते—मनुष्ये चित्तवैचित्र्यात्। वैचित्र्यं क्षणे क्षणेऽन्यथाभावः। अतो दुर्ज्ञानत्वात् साधुत्वस्य सर्वोपधाशुद्धान् नियुञ्जीतात्मनः प्रत्यवायपरिहारार्थम्। नाभा. १।५९

साक्षिलेख्यविवेकः

**[१]पुरुषाः सन्ति ये लोभात्प्रब्रूयुः साक्ष्यमन्यथा।**
**सन्ति चान्ये दुरात्मानः कूटलेख्यकृतो जनाः॥**
**[२]अतः परीक्ष्यमुभयमेतद्राज्ञा विशेषतः।**
**लेख्याचारेण लिखितं साक्ष्याचारेण साक्षिणः॥**

(१) इदानीं मनुष्यचित्तवैचित्र्यस्य व्याख्यामाह—पुरुषाः सन्तीति। अनेन श्लोकद्वयेन पुरुषचित्तवैचित्र्यं दर्शयित्वा साक्षिप्रमाणयोरपि परीक्षादरो दर्शितः। यथोक्तम्—'लेख्याचारेण लिखितं साक्ष्याचारेण साक्षिणः' इति। तदग्रतो लेख्याचारपरीक्षा साक्ष्याचारपरीक्षा च सविस्तरा भविष्यति। तेनोभयाकारप्रकरणे उभयमध्ये तत्परीक्ष्यमित्युक्तम्। तत्रैव वक्ष्याम इति। अभा. १९

(२) कूटाकूटविवेकधर्मे आचारः। अप. २।७५

(३) लेख्याचारेण प्रागुदितशुद्धिहेतुजातेनेत्यर्थः। यत्पुनस्तद्धेतुजातेन न शुद्धिमायाति लेख्यं तदप्रमाणमेव। स्मृच. ६५

(४) परीक्ष्यत्वे कारणमुच्यते पूर्वश्लोकेन। उत्तरः साध्यार्थः। अत इत्युत्तरत्र वचनात् पूर्वो हेतुः। यस्मात् मनुष्याः सन्ति तथाभूताः क्षुद्रा लोभमोहगृहीताः, ये कार्ये व्यवहारमन्यथा ब्रूयुः दृष्टलोभेन धर्मं पृष्ठतः कृत्वा। सन्ति चान्ये क्षुद्राः कूटलेख्यं कुर्वन्तीति कूटलेख्यकृतो जनाः अन्यथोच्यमानमन्यथा लिखन्ति भिन्नाः। अत एतस्मात् कारणात् परीक्ष्यं साधुत्वमसाधुत्वं च। असाधुत्वं निरासार्थं, साधुत्वं नियोगार्थं च। लेख्याचारेण लिखितं पत्रं कूटलेख्यपरिहारार्थम्। साक्ष्याचारेण साक्षिणः अन्यथानयनपरिहारार्थं वक्ष्यमाणसाक्षिन्यायेन साक्षिणश्च। नाभा. १।६०–६१

**[१]लेख्यमालेख्यवत्केचिल्लिखन्ति कुशला नराः।**
**अतो न लेखसामर्थ्यात्सिद्धिरैकान्तिकी मता॥**
**[२]असत्याः सत्यसंकाशाः सत्याश्चासत्यसंनिभाः।**
**दृश्यन्ते विविधा भावास्तस्माद्युक्तं परीक्षणम्॥**

(१) नासं. १।६० ये (ते) प्रब्रूयुः साक्ष्य (ये ब्रूयुः कार्य); नास्मृ. १।६९; अभा. १९; अप. २।७५ प्रब्रू (विब्रू) चान्ये (वान्ये) जनाः(नराः); स्मृच. ६५ (पुरुषाः सन्ति ते लोभात्कार्यं ये ब्रूयुरन्यथा); प्रका. ४३ स्मृचवत्; समु. ४५ (पुरुषाः सन्ति लोभाद्ये विब्रूयुः कार्यमन्यथा).

(२) नासं. १।६१; नास्मृ. १।७०; अभा. १९; अप. २।७५; स्मृच. ६५ (परीक्ष्यमेतदुभयं स्वयं राज्ञा विशेषतः); प्रका. ४३ स्मृचवत्; समु. ४५ स्मृचवत्, पू.

(१) vulg. नास्मृ. १।७० इत्यस्यानन्तरमयं श्लोकः।

(२) नासं. १।६२ संनिभाः (दर्शनाः); नास्मृ. १।७१; अभा. १९; मिता. २।२६८; अप. २।१ (असभ्याः सभ्यसंकाशाः सभ्याश्चासभ्यसंनिभाः) परीक्ष (विचार); व्यक. ७ भावा (कारा); पमा. ४३७; सवि. ४५९ सत्यश्चासत्य (तथ्याश्चातथ्य); व्यसौ. ५ पूर्वार्धं अपवत्, शेषं व्यकवत्; व्यप्र. ३८६; व्यउ. १२४; विता. ७९१.

तलवद् दृश्यते व्योम खद्योतो हव्यवाडिव ।
न तलं विद्यते व्योम्नि न खद्योते हुताशनः ॥
तस्मात्प्रत्यक्षदृष्टोऽपि युक्तमर्थः परीक्षितुम् ।
परीक्ष्य ज्ञापयन्नर्थान्न धर्मात्परिहीयते ॥

(१) अत्र यथा आकाशो भूतलवद् दृश्यते । परं दृश्यमानोऽपि तत्र भूतलं नास्ति । यथा च खद्योते वह्निस्फुलिङ्गसदृशेऽपि दृश्यमाने तत्र वह्निर्नास्ति ।तथा क्वचित्पुरुषवचनेऽपि सत्याभासे दृश्यमानेऽपि सत्यं न भवति । तस्मात्प्रत्यक्षदृष्टोऽप्यर्थस्तात्पर्यतः परीक्षितुं युक्तः, यत एव दृश्यन्ते विविधा भावास्तत एव परीक्ष्य ज्ञापयन्नर्थान् धर्मात् न परिहीयते । अभा.१९

(२) दुष्परीक्षत्वान्न्यायस्य पुनः परीक्षणे हेतुरुच्यते । तस्मादित्यन्ते निगमनात् पूर्वो हेतुरिति गम्यते । असत्याः पापाः । सत्यसंकाशाः प्रच्छन्नपापाः साधुवद् दृश्यन्ते । अनेकप्रकारा भावाः । भवन्तीति भावाः प्राणिनः । प्रकरणे भवतेरुपसंख्यानात् कर्तरि णः । तस्माद् युक्तं परीक्षणमर्थत एव । अथवा असत्याः सत्यसंकाशाः, यथा हि माण्डव्यस्य । सत्याश्चासत्यतुल्याः, यथा तस्यैव चोरत्वं दृश्यते । तेनानेकप्रकारा दृश्यन्तेऽर्थाः । तस्मात् परीक्षणं कर्तव्यमिति ।

+नाभा.१।६२

कार्यदर्शनफलम्

एवं पश्यन्सदा राजा व्यवहारान्समाहितः ।
वितत्येह यशो दीप्तं प्रेत्याप्नोति त्रिविष्टपम् ॥

एवमनेन प्रोक्तक्रमेण सह नित्यमेव यथार्थाधिकरणेन तात्पर्यतोऽर्थान्, तथा धर्माधिकरणे अधिकतरतात्पर्यतः एकचित्तो राजा व्यवहारान्पश्येत् । इह लोके यशो दीप्तमिति भुवनप्रकाशं वितत्य विस्तार्य । अनेन महता पुण्यसंचयेनोपार्जितं परलोकत्रिविष्टपं स्वर्गं स्थानं शाश्वतं प्राप्नोति । अभा.१९

## बृहस्पतिः

पुराणधर्मशास्त्राण्यालोच्यानि

पूर्वाह्णे तामधिष्ठाय वृद्धामात्यानुजीविभिः ।
पश्येत्पुराणधर्मार्थशास्त्राणि शृणुयात्तथा ॥

(१) तां उक्तलक्षणां सभामित्यर्थः । पूर्वाण्हेऽपि आद्यघटिकाचतुष्टयादूर्ध्वमेव, तस्याग्निहोत्राद्यर्थत्वात् । स्मृच.२७

(२) अर्थशास्त्रं नीतिशास्त्रम् । व्यम.४

दर्शनविधिः

राजा कार्याणि संपश्येत्सभ्यैरेव त्रिभिर्वृतः ।
सभामेव प्रविश्याग्र्यामासीनः स्थित एव वा ॥

सभ्यैस्त्रिभिरेव वृतो न त्वेकेन द्वाभ्यां वा वृत इत्यर्थः। अतो न प्रागुक्तसभ्यसंख्याविरोधः । अतो राजसूय इव व्यवहारदर्शने राज्ञ एवाधिकार इति सिद्धम् ।

राजशब्देन चात्र क्षत्रजातीयो वाऽन्यजातीयोऽभिषिक्तो नाभिषिक्तो वा प्रजापरिपालनादिराज्यकर्ता गौणवृत्त्या प्रतिपाद्यते । न पुनः राज्ञः कर्म राज्यमिति शाब्दस्मृतेः, बाहुजजातौ राजशब्दो मुख्य इत्यवेष्टिन्यायाद्राजा राजसूयेनेतिवत् क्षत्रिय एव । आर्याणां मन्वादीनां राजशब्दप्रयोगो राज्यकर्तरि गौण इत्यवेष्ट्यधिकरण एवोक्तत्वात् । अत एव बृहस्पतिना नृपतिमात्रस्य सभाप्रवेशो विहितः । 'प्रातरुत्थाय नृपतिः शौचं कृत्वा विधानतः । गुरून् ज्योतिर्विदो वैद्यान् देवान्विप्रान्पुरोहितान् ॥ यथार्हमेतान् संपूज्य सुपुष्पाभर-

---

+ शेषं अभावत् ।

(१) नासं.१।६३; नास्मृ.१।७२; अभा.१९; व्यक.७ (न तले विद्यते व्योम खद्योते न हुताशनः); स्मृच.२४,९५ द्योते (द्योतो); व्यसौ.५ म्नि (म) द्योते (द्योतो); प्रका.१४ स्मृचवत्; समु.१० विद्य (दृश्य).

(२) नासं.१।६४; नास्मृ.१।७३; अभा.१९; व्यक. ७ ष्टो (ष्टे) मर्थः (मर्थं); स्मृच.२५,९५ ष्टो (ष्टे) मर्थः (मर्थान्); व्यसौ.५ क्तम (क्तो ह्य); प्रका.१४ स्मृचवत्; समु.१० स्मृचवत्.

(३) नासं.१।६५ प्रेत्याप्नोति त्रि (ब्रह्मस्याप्नोति); नास्मृ. १।७४; अभा.१९; अप.२।१ सदा (स्वयं) प्रेत्याप्नोति त्रिविष्टपम् (शक्रस्यैति सलोकताम्); स्मृच.१२३ उत्तरार्धं अपवत्; व्यप्र.९३ पश्यन् (पश्येत्) दीप्तं (लोके); प्रका.७७ स्मृचवत्; समु.६७ स्मृचवत्.

(१) व्यक.१८; स्मृच.२६ भिः(नः); स्मृचि.३; व्यसौ.१३ स्मृचवत्; व्यम.४; विता.२१ णधर्मार्थ (णं धर्मार्थं); प्रका.१५; समु.११ स्मृचवत्.

(२) स्मृच.१५ : २७ राजा (राज्य) पू.; प्रका.१५; समु.११ पू.

णाम्बरैः। अभिवन्द्य च गुर्वादीन् सुमुखः प्रविशेत्सभाम्' इति। स्मृच.१५-१६

**धर्मशास्त्रानुसारेण सामात्यः सपुरोहितः।**
**व्यवहारान्नृपः पश्येत् प्रजासंरक्षणाय च।**
**क्रोधलोभविहीनस्तु सत्यवादी जितेन्द्रियः॥**

धर्मशास्त्रानुसारेणेत्यनेन क्रोधलोभविसर्जनस्य सिद्धत्वात् क्रोधलोभविसर्जनं राज्ञः स्वभावगुण इति प्रदर्शितम्। सवि.१७

समत्वबुध्या दर्शनं कार्यम्

**[2]लोभद्वेषादिकं त्यक्त्वा यः कुर्यात्कार्यनिश्चयम्।**
**शास्त्रोदितेन विधिना तस्य यज्ञफलं भवेत्॥**

शास्त्रं च द्विविधं धर्मशास्त्रं अर्थशास्त्रं च। व्यमा.२८२

**[3]सत्यं देवाः समासेन मनुष्यास्त्वनृतं विदुः।**
**इहैव तस्य देवत्वं यस्य सत्ये स्थिता मतिः॥**
**[4]विप्रो धर्मद्रुमस्यादिः स्कन्धशाखे महीपतिः।**
**सचिवाः पत्रपुष्पाणि फलं न्यायेन पालनम्॥**
**[5]यशो वित्तं फलरसो भोगोपग्रहपूजनम्।**
**अजेयत्वं लोकपक्तिः स्वर्गे स्थानं च शाश्वतम्॥**
**[6]विदित्वैतान्न्यायरसान् समो भूत्वा विवादिनाम्।**
**त्यक्त्वा लोभादिकं राजा धर्म्यं कुर्याद्विनिर्णयम्॥**

न्यायरसान् व्यवहारदर्शनफलानि। व्यउ.६

धर्मशास्त्रार्थशास्त्रद्वैधे व्यवस्था

**[7]धार्यं मन्वादिकं शास्त्रं नार्थशास्त्रं कथञ्चन।**
**द्वयोर्विरोधे कर्तव्यं धर्मशास्त्रोदितं वचः॥**

व्यवहारनिर्णये युक्तिः प्रमाणम्

**[8]केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिर्णयः।**
**युक्तिहीने विचारे तु धर्महानिः प्रजायते॥**

(१) युक्तिः लोकव्यवहारः। +व्यमा.२८२

(२) अतस्तर्कानुगृहीतमेव शास्त्रार्थमाश्रित्य निर्णेतव्यमित्यर्थादुक्तं भवति। स्मृच.२४

(३) न्यायपर्यालोचनाभावे सोपपत्तिकं दोषमाह बृहस्पतिः—केवलमिति। व्यप्र.१३

**चौरोऽचौरः साध्वसाधुर्जायते व्यवहारतः।**
**युक्तिं विना विचारेण माण्डव्यश्चोरतां गतः॥**

साध्वसाधुरिति छान्दसः सुलोपः। साधुरसाधुरित्यर्थः। व्यवहारतो निर्युक्तिकात्। व्यप्र.१४

**[2]असत्याः सत्यसदृशाः सत्याश्चासत्यसंनिभाः।**
**दृश्यन्ते भ्रान्तिजनकास्तस्माद्युक्त्या विचारयेत्॥**

धर्मव्यवहारचरित्रराजशासनानां प्रामाण्यम्। तत्स्वरूपम्। तत्प्रामाण्यतारतम्यं च।

**[3]धर्मेण व्यवहारेण चरित्रेण नृपाज्ञया।**
**चतुष्प्रकारोऽभिहितः सन्दिग्धेऽर्थे विनिर्णयः॥**
**[4]एकैको द्विविधः प्रोक्तः क्रियाभेदान्मनीषिभिः।**
**अपराधानुरूपं तु दण्डं च परिकल्पयेत्॥**

---

(१) सवि.१७. (२) व्यमा.२८२ कार्यनिश्च (कर्मनिर्णे) यज्ञ (धर्म); अप.२।४; व्यक.१४ निश्च (निर्णे); स्मृच.२१ व्यकवत्; पमा.३२ व्यकवत्; व्यचि.५ निश्च (निर्णे) भवेत् (लभेत्); दवि.१८ व्यकवत्; नृप्र.५ व्यकवत्; सवि.६९ व्यकवत्; व्यसौ.१० व्यकवत्; प्रका.११-१२ व्यकवत्; समु.८ व्यकवत्. (३) व्यक.१४; व्यनि. समासे (स्वमाने); व्यसौ.१०; प्रका.७. (४) व्यक.४; नृप्र.२; व्यप्र.११; व्यउ.६. (५) व्यक.४ रसो (रसौ) गोप (गाव) पक्तिः (पङ्क्तिः); नृप्र.२; व्यप्र.११ पक्तिः (पङ्क्तिः); व्यउ.६ गोप (गाव) पक्तिः (पङ्क्तिः). (६) व्यक.४; नृप्र.२; व्यप्र.११ दिनाम् (दने) त्वा (क्त); व्यउ.६. (७) व्यक.६. (८) व्यमा.२८२:२९४

+ व्यत. व्यमावत्।
हीने (हीन); अप.२।१; व्यक. ७ व्यमावत्; स्मृच.२४ त्रिर्शि (हि नि); पमा.३९; व्यचि. १२ व्यमावत्; विचि.५९ व्यमावत्; स्मृचि.७ हीने (हीन) तु (र्ण); व्यत.१९९ व्यमावत्; व्यप्र.१३,८८ विनि (हि नि) हीने (हीन) तु (हि); व्यउ.८ व्यप्रवत्; व्यम.४ स्मृचवत्; प्रका.१४ स्मृचवत्; समु.१० स्मृचवत्.

(१) अप.२।१; पमा.३९; स्मृचि.७; व्यप्र.१४; व्यउ.२८ जायते (ज्ञायते); प्रका.१४; समु.१०.

(२) पमा.३९; व्यप्र.१४; व्यउ.३; प्रका.१४ दृशाः (दृशः) निभाः (निभः); समु.१०.

(३) व्यक.९९; स्मृच.१०; पमा.१६,१९८; नृप्र.३, १६; चन्द्र.१६५ त्रेण (तेन) हितः (मतः); व्यसौ.९० र्थे वि (र्थेषु); व्यप्र.६,८७; व्यउ.४; प्रका.३; समु.४.

(४) व्यक.१०१ उत्त.; स्मृच.१० पू.; पमा.१९८; व्यचि.९६ (अपराधानुरोधश्च दण्डोऽत्र परिकल्पितः) उत्त.; नृप्र.१६ तु (च); चन्द्र.१६५ पू.; व्यसौ.९० (अपराधानुरूपश्च दण्डोऽत्र परिकल्पितः); व्यप्र.८७ पू.: ९२ व्यसौवत्, उत्त.; विता.८१ नीषि (हर्षि) पू.; प्रका.४ पू.; समु.४ रूपं तु (रूपेण) च (तु).

क्रियाभेदात् मानुषदैविकक्रियाभेदात् । व्यप्र.८७

**सम्यग्विचार्य कार्यं तु युक्त्या संपरिकल्पितम् ।**
**परीक्षितं च शपथैः स प्रोक्तो धर्मनिर्णयः ॥**
**प्रतिवादी प्रपद्येत स आद्यो धर्मनिर्णयः ।**
**दिव्यैर्विशोधितः सम्यग् द्वितीयः स उदाहृतः ॥**

(१) सह तत्वानुसारेण कृतः प्रथमो धर्माख्यनिर्णयः । विना तत्वानुसरणं सत्योत्तरेण वा दिव्यप्रमाणेन वा कृतो द्वितीय इत्यर्थः । स्मृच.११

(२) प्रतिवादी प्रपद्येतेत्यस्य काकाक्षिवदुभयत्र संबन्धः । यत्र प्रतिवादी युक्त्या सम्यग् विचार्य संपरिकल्पितं निर्धारितं पुनः शपथैः पुत्रशिरःस्पर्शादिभिः परीक्षितं कार्यं प्रपद्येत अङ्गीकुर्यात् स आद्यो धर्मनिर्णयः । दिव्यैर्धटादिभिर्विशोधितः प्रतिवादी यत्र कार्यं प्रपद्येत स द्वितीयो धर्माख्यो निर्णय इत्यर्थः । व्यप्र.८७

**प्रमाणनिश्चितो यस्तु व्यवहारः स उच्यते ।**
**वाक्छलानुत्तरत्वेन द्वितीयः परिकीर्तितः ॥**

(१) प्रमाणमत्र मानुषं विवक्षितम् । दिव्यनिश्चितस्य धर्मनिर्णयकोटित्वात् ।

प्रमाणनिश्चितो मानुषप्रमाणनिश्चितः । वाक्छलव्यवहारेण निरुत्तरत्वेन वा भग्नस्यापि वास्तवो व्यवहारो भवत्येव प्रमाणराहित्येन भोक्तुर्जयस्य शिथिलत्वात् । स्मृच.११,६८

(२) प्रमाणपदेनात्र साक्षिणो लिखितं च । व्यत्ययभिप्रायेण च बहुवचनम् । भुक्तेरनुमानत्वाद्दिव्यस्य धर्मनिर्णयान्तर्भावात् । वाक्छलानुत्तरत्वेन वाक्छलेनानुत्तरत्वेन च यो निश्चयो द्वितीयो व्यवहारः स इत्यर्थः । व्यप्र.८७

**अनुमानेन निर्णीतं चरित्रमिति कथ्यते ।**
**देशस्थित्या द्वितीयं तु शास्त्रविद्भिरुदाहृतम् ॥**

(१) अनुमानं उल्काहस्तादि लिङ्गम् । स्मृच.११

(२) अनुमानेन भुक्तियुक्तिस्वरूपेण यो निर्णयस्तदेकं चरित्रम् । देशस्थित्या यो निर्णयस्तद्द्वितीयं चरित्रमित्यर्थः । व्यप्र.८८

**प्रमाणरहितो यस्तु राजाज्ञा निर्णयस्तु सः ।**
**शास्त्रसभ्यविरोधे च तथान्यः परिकीर्तितः ॥**
**यत्रैवं वेत्ति नृपतिर्निर्णयन्तु बताध्वरम् ।**
**सोऽस्मिन् लोके यशः प्राप्य याति शक्रस्य लोकताम् ॥**

(१) प्रमाणरहित इत्यस्यार्थो व्यासेन प्रपञ्चितः— 'लिखितं साक्षिण' इत्यादिभिः । स्मृच.११

(२) प्रमाणसहिता राजाज्ञा आद्यो निर्णय इत्यन्वयः । शास्त्राणां सभ्यानां च विरोधे परस्परं विप्रतिपत्तौ या

---

(१) **स्मृच.**१०; **व्यचि.**९४ तु (च) स प्रोक्तो धर्म (ज्ञेयो धर्मवि); **व्यसौ.**९० सम्यग्विचार्य कार्यं (हेतुभिः संविचार्यं) प्रोक्तो (ज्ञेयो); **व्यप्र.**८७ च (तु) प्रोक्तो (ज्ञेयो); **विता.**८१ च (तु) प्रोक्तो (आद्यो) उत्त.; **प्रका.**४ प्रोक्तो (ज्ञेयो); **समु.**४ प्रकावत्.

(२) **व्यक.**९९ स आद्यो धर्म (यत्र धर्मः स) वि (वा) स उ (समु); **स्मृच** ११ स आद्यो धर्म (यत्र धर्मः स) वि (वा); **पमा.**१९८ पूर्वार्धं स्मृचवत्, द्वितीयः स उ (निर्णयः समु); **नृप्र.**१६ स आद्यो धर्म (यद्धर्मस्य वि) उत्तरार्धं पमावत्; **चन्द्र.**१६६ पूर्वार्धं स्मृचवत्, द्वितीयः स (स द्वितीय); **व्यसौ.** ९०; **व्यप्र.**८७ पूर्वार्धं स्मृचवत्; **विता.**८१ स उदाहृतः (धर्मनिर्णयः) उत्त.; **प्रका.**४ स्मृचवत्; **समु.**४ स्मृचवत्.

(३) **व्यक.**९९ निश्चि (लिखि); **स्मृच.**११ श्चितो (श्चयो): ६८; **पमा.**१९८; **नृप्र.**१६; **चन्द्र.**१६६ माण (माणैर्) कीर्ति (कल्पि); **व्यसौ.**९० णनिश्चि (णैर्लिखि); **व्यप्र.**८७ णनिश्चितो (णैर्निश्चयो); **विता.**८१ (साक्षिभिर्लिखिते नाद्यो व्यवहार उदाहृतः) इति पूर्वार्धम्; **प्रका.**४; **समु.**४.

(१) **व्यक.**९९ तं (तः) यं तु (यस्तु) हृतम् (हृतः); **स्मृच.** ११ यं तु (यस्तु) हृतम् (हृतः); **पमा.**१९८-१९९ चरि (चारि) द्वितीयं तु (तृतीयस्तु) हृतम् (हृतः); **नृप्र.**१६ द्वितीयं (तृतीयः) तम् (तः); **चन्द्र.**१६६ तं च (तश्च) मिति कथ्यते (इति कीर्त्यते) यं तु (यस्तु) तम् (तः); **व्यसौ.**९१; **व्यप्र.** ८७ कथ्यते (कीर्तितम्); **विता.**८१ अनुमानेन (भुक्त्या युक्त्या च); **प्रका.**४ स्मृचवत्; **समु.**४ स्मृचवत्.

(२) **व्यक.**१०० रहितो यस्तु (सहिताद्यस्तु); **स्मृच.**११ सभ्य (मिल्य) च (न); **पमा.**१९९ रहितो यस्तु (समतायां तु) तु सः (स्मृतः) सभ्य (सभ्या) च तथान्यः (न चतुर्थः); **नृप्र.** १६ पमावत्; **चन्द्र.**१६७ रहितो यस्तु (सहिताद्यस्तु) तु सः (स्मृतः) च (न); **व्यसौ.**९१ चन्द्रवत्; **व्यप्र.**८८ पूर्वार्धं चन्द्रवत्; **विता.**८१ रहितो यस्तु (युक्तस्त्वाद्यस्तु) तु सः(स्मृतः) भ्यविरोधे (भ्याविरोधी); **प्रका.**४ तु सः (स्मृतः) शेषं स्मृचवत्; **समु.**४ स्मृचवत्. (३) **व्यक.**१००.

राजाज्ञा, स द्वितीयो राजाज्ञारूपो निर्णय इत्यर्थः। ननु शास्त्राणां सभ्यानां च विरोध एवासंभवी स्मृत्यपेताधिकारिणां सभ्यानां दण्ड्यत्वात्। न च शास्त्राणां परस्परविरोधे सभ्यानां चेत्यर्थ इति वाच्यम्। सभ्यविरोधोपन्यासानर्थक्यात्। शास्त्रविरोधे न्यायोपलब्धशास्त्रानुसारेण निर्णयः कार्य इत्यस्यार्थस्य–'स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः। धर्मशास्त्रविरोधे तु युक्तियुक्तो विधिः स्मृतः॥ केवलं शास्त्रमाश्रित्य न कर्तव्यो हि निर्णयः। युक्तिहीनविचारे हि धर्महानिः प्रजायते'॥ 'न्यायाधिगमे तर्कोऽभ्युपायस्तेनाभ्यूह्य यथास्थानं गमयेत्' इत्यादियोगीश्वरनारदबृहस्पतिगौतमादिवचोभिर्निर्धारितत्वात्। तादृशि विषये राजाज्ञाऽनवसरात्। अनीदृशराजाज्ञाया निषिद्धत्वाच्चेति चेत् उच्यते। यत्र शास्त्रविरोधे बलवान् न्यायोऽन्यतरार्थविनिगमकः ससभ्यप्राड्विवाकस्य सभापतेर्न हृदयमारोहति चिरतरं मीमांसितोऽपि तादृशशास्त्रविरोधे तन्मूलके चासमाधेये सभ्यविरोधे राजकृतव्यवस्था वादिप्रतिवादिभ्यां मन्तव्येत्येतदर्थकमिदं वचनम्। अतः पितामहवचनं प्रागुलिखितम्—'निश्चेतुं ये न शक्याः स्युः' इत्यादि। व्यप्र.८८

**केवलं शास्त्रमाश्रित्य क्रियते यत्र निर्णयः।**
**व्यवहारः स विज्ञेयो धर्मस्तेनावहीयते॥**

(१) धर्मो धर्माख्यो निर्णयः। तेन व्यवहाराख्येन निर्णयेनावहीयते, तेन व्यवहाराख्येन बाध्यते इत्यर्थः। व्यचि.९५

(२) शास्त्रशब्देन शास्त्रोक्तं साक्ष्यादिप्रमाणम्। तेन यो निर्णयः क्रियते स व्यवहारः। तेन धर्मः शपथादिकृतो निर्णयोऽवहीयते बाध्यते। मानुषप्रमाणे सति दिव्यानवसरात्। व्यप्र.८८

**देशस्थित्यानुमानेन नैगमानुमतेन च।**

(१) **व्यक**.१०० केवलं शास्त्र (शास्त्रं केवल); **स्मृच**.११ केवलं शास्त्र (शास्त्रं केवल) नाव (नाप): १२१ नाव (नापि); **पमा**.१८ केवलं शास्त्र (शास्त्रं केवल) वहीय (पि वर्ध): २०३ नाव (नापि); **व्यचि**.९५ उत्त.; **नृप्र**.३ स्मृचवत्: १७ नाव (नाप); **चन्द्र**.१६६ व्यकवत्; **व्यसौ**.९१ व्यकवत्; **व्यप्र**.८८ व्यकवत्; **विता**.८१ केवलं शास्त्र (साक्ष्यं लिखित) स्तेनावहीयते (जस्तेन बाध्यते); **प्रका**.४ नाव (नापि); **समु**.४ प्रकावत्.

(२) **व्यक**.१००; **स्मृच**.१२; **पमा**.१८; **व्यचि**.९५;

**क्रियते निर्णयस्तत्र व्यवहारस्तु बाध्यते॥**

(१) नैगमाः पौरवणिजः, नैगमानुमतेनानुमानेनेति संबन्धः। अनेन चरित्राख्येन निर्णयेन सामान्यशास्त्रानुसारी व्यवहाराख्यो निर्णयो बाध्यत इत्यर्थः। व्यचि.९५

(२) वाशब्दो देशस्थित्यपेक्षः। *व्यप्र.८९

**विहाय चरिताचारं यत्र कुर्यात्पुनर्नृपः।**
**निर्णयं सा तु राजाज्ञा चरित्रं बाध्यते तया॥**

चरिताचारं पूर्वपूर्वाचरितमाचारम्। यद्यपि, 'तं धर्मं न विचालयेत्' इत्युक्तं अत्र तु 'विहाय चरिताचारं' इत्युच्यते, तेन विरोधः प्रतिभाति। तथापि, यदि तद्विचालने पुरराष्ट्रादिक्षोभो न भवति तदा स्मृत्यादिविरुद्धत्वात्तं दूरीकृत्य स्मृत्याद्यविरुद्धो राजाज्ञया निर्णयः कार्य इति तात्पर्यम्। अत एव पुरराष्ट्रविरुद्धस्य विवादस्यानादेयत्वमुक्तं पुरराष्ट्रक्षोभापादकतया, तदनापादकतया तु स्मृत्याद्यनुरोध एव कार्यो राज्ञेति। व्यप्र.८९

**कीनाशाः कारुकाः शिल्पिकुसीदिश्रेणिनर्तकाः।**
**लिङ्गिनः तस्कराः कुर्युः स्वेन धर्मेण निर्णयम्॥**

(१) येषां तु समयादेव बहुशो व्यवस्था तेषां समयज्ञैरेव व्यवहारस्य निर्णयः कर्तव्यः। यथा बृहस्पतिः– कीनाशा इति। कीनाशाः कृषीवलाः। कारुकः शिल्पी, उपलक्षणमेतत्। अन्योऽपि तद्व्यवहारज्ञो निर्णेता। तदभिज्ञत्वस्य हेतोरविशेषात्। व्यमा.२८१

(२) शिल्पिनः चित्रकाराद्याः। व्यक.१३

(३) स्वसमयसिद्धेन धर्मेण हेतुनेत्यर्थः। व्यनि.

(४) कारुकाः वर्धक्यादयः। कुसीदिनो वार्धुषिकाः।

* शेषं व्यचिवत्।

**व्यसौ**.९१; **व्यप्र**.८९ च (वा); **विता**.८१ त्यानु (त्यनु) स्तत्र (स्तेन); **प्रका**.४; **समु**. ४.

(१) **व्यक**.१००; **स्मृच**.१२ र्णयं (र्णं); **पमा**.१८; **स्मृचि**.५८; **चन्द्र**.१६७ रित्रं (रितं); **व्यसौ**.९१; **व्यप्र**. ८९; **विता**.८२ सा (स); **प्रका**.४; **समु**.४.

(२) **शुनी**.४।५१९; **व्यमा**.२८१ शिल्पिकुसीदि (मल्लाः कुसीद) कुर्युः (चैव) यम् (यः); **व्यक**.१३; **व्यनि**. (कीनाशः कारुकः शिल्पी कुसीदश्रेणिनर्तकाः); **व्यसौ**.९; **व्यप्र**.२३; **व्यउ**.१४ सीदि (सीद); **विता**.२५; **प्रका**.१० कीनाशाः कारुकाः शिल्पि (कीनाशः कारुकः शिल्पी); **समु**.११ प्रकावत्.

लिङ्गिनः पाशुपतप्रभृतयः । *व्यप्र.२३

प्रतिलोमप्रसूतानां तथा दुर्गनिवासिनाम् ॥
देशजातिकुलानां च ये धर्माः प्राक्प्रवर्तिताः ।
तथैव ते पालनीयाः प्रजा प्रक्षुभ्यतेऽन्यथा ।
जनापरक्तिर्भवति बलं कोशश्च नश्यति ॥
उदुह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः ।
मध्यदेशे कर्मकराः शिल्पिनश्च गवाशिनः ॥
मत्स्यादाश्च नराः पूर्वे व्यभिचाररताः स्त्रियः ।
उत्तरे मद्यपा नार्यः स्पृश्या नृणां रजस्वलाः ॥
खशजाताः प्रगृण्हन्ति भ्रातृभार्यामभर्तृकाम् ।
अनेन कर्मणा नैते प्रायश्चित्तदमार्हकाः ॥

(१) नैते प्रायश्चित्तदमार्हका इति । नैतैः प्रायश्चित्तं कर्तव्यं प्रायश्चित्ताऽनपनेयपापत्वात् । न च दण्डनीयाः प्रजाप्रक्षोभप्रसङ्गात् । व्यक.९

(२) सर्वे इत्यनेन स्मृतिविरोध उक्तः । पूर्वे इति कल्पतरौ पाठः । तत्र पूर्वदेश इत्यर्थः । दमो दण्डः । यत्तु स्मृत्यन्तरेष्वेतत्कर्मकरणे प्रायश्चित्तदण्डस्मरणं तदेतद्वचनानुपात्तदेशविषयमिति मदनरत्नाकरः । वयं तु प्रजाप्रक्षोभादिदृष्टदोषकथनाद्राज्ञा तत्र दण्डो न कार्य एव । प्रायश्चित्ताभावस्तु व्यवहारविषयः । परलोकशुद्ध्यर्थं प्रायश्चित्तं भवेदित्येवेति न स्मृत्यन्तरविरोधः । तत्तद्देशव्यापकश्रुतिस्मृतिविरुद्धाचरणे व्यवहारप्रतिबन्धिका शक्तिस्तज्जन्यपापस्य नास्ति नरकजनिकास्त्येव । उपक्रमपर्यालोचनादेतावदर्थकतयैव चैतद्वचनोपपत्तौ सर्वथा दोषाभावकल्पनस्यानुचितत्वात् । अत एव आपस्तम्बेनोक्तम्—'देशजातिकुलधर्माश्चाम्नायैरविरुद्धाः प्रमाणम्' इति । 'येषां परम्पराप्राप्ताः पूर्वजैरप्यनुष्ठिताः । त एव तैर्न दुष्येयुराचारा नेतरे पुनः' इति ॥ न दुष्येयुः अव्यवहार्या राजदण्ड्याश्च न भवेयुरित्यर्थः । अन्यथैतयोरेव वचनयोः परस्परविरोधो दुष्परिहरः स्यादिति ब्रूमः । *व्यप्र.२२

(३) अन्ये तु प्रायश्चित्तरूपो यो दम इति व्याचक्षाणा दण्डाभावमात्रं अन्यदेशे दण्डः प्रायश्चित्तं चेत्याहुः । +व्यम.४

शास्त्रमर्यादाभङ्गिनां वर्गाणां दण्डः

विहिताऽकरणान्नित्यं प्रतिषिद्धनिषेवणात् ।
भक्ताच्छादं प्रदायैषां शेषं गृण्हीत पार्थिवः ॥

विहिताऽकरणान्नित्यमित्यादि । विहितस्य वर्णाश्रमकर्मणामसकृत् प्रमादात् आपद्व्यतिरेकेणाऽननुष्ठानात् । तथा प्रतिषिद्धस्याभक्ष्यभक्षणादेर्नित्यमनुष्ठानात् । यावता भक्ताच्छादनं संपाद्यते तावत्परित्यज्य, शेषं धनं राजा गृण्हीयादित्यर्थः । तच्च देशाचारव्यतिरिक्तनिषिद्धाचरणादवगन्तव्यम् । न देशाचारकरणे, तत्र—'अनेन कर्मणा नैते प्रायश्चित्तदमार्हकाः' इत्युक्तत्वात् । व्यक.९

नैगमादीनां प्रमाणभूतलेख्यविधिः

समाः शुल्कोचितदमे मासषाण्मासिके करे ।
मर्यादा लेखिता कार्या नैगमाधिष्ठिता सदा ॥

नैगमाः वणिजः । व्यक.९

शास्त्रवद्यत्नतो रक्ष्या संदिग्धौ साधनं तु सा ।
तां दृष्ट्वा निर्णयं कुर्यात्प्राङ्निविष्टव्यवस्थया ॥

## कात्यायनः

दर्शनविधिः कार्यदर्शनकालश्च

सभास्थानेषु पूर्वाण्हे कार्याणां निर्णयं नृपः ।

---

* व्यउ., विता. व्यप्रवत् ।

(१) **व्यक.**८; **व्यसौ.**६. (२) **शुनी.**४।५४७-५४८ प्रथमार्धद्वयम्; **व्यक.**८ ; **व्यसौ.**६; **व्यप्र.**२२; **व्यउ.**१३; **व्यम.**४; **विता.**२४; **प्रका.**१४; **समु.**१३. (३) **शुनी.**४।५४८-५४९; **व्यक.**९ उदु (उद्वा); **व्यसौ.**६ व्यकवत् ; **व्यप्र.**२२; **व्यउ.**१३; **व्यम.**४ उदु (उदू); **विता.**२४ व्यमवत् ; **प्रका.**१४ व्यमवत् ; **समु.**१३. (४) **शुनी.**४।५४९-५५० पूर्वे (सर्वे); **व्यक.**९; **व्यसौ.**६ पूर्वे (सर्वे); **व्यप्र.**२२ व्यसौवत् ; **व्यउ.**१३ व्यसौवत् ; **व्यम.**४; **विता.**२४; **प्रका.**१४; **समु.**१३. (५) **शुनी.**४।५५०-५५१; **व्यक.**९; **व्यसौ.**६ भार्या (जाया); **व्यप्र.**२२; **व्यउ.**१३; **व्यम.**४ उत्त.; **विता.**२४ नैते ( नैव ) उत्त.; **प्रका.**१४ उत्त.; **समु.**१३ उत्त.

* व्यउ. व्यप्रवत् । + शेषं व्यप्रवत् ।

(१) **व्यक.**९; **दावि.**२६०. (२) **व्यक.**९ (भागशुल्कान्वितदमे समाः षाण्मासिकं करे) कार्या (धार्या); **व्यसौ.**७. (३) **व्यक.**९; **व्यसौ.**७ क्ष्या (क्षा). (४) **व्यमा.**२८४ नेषु (ने तु) णीते (माणे); **व्यक.**१८ षु पूर्वाण्हे(ष्वपूर्वाणां) निर्ण (निश्च) णीते (माणे); **व्यचि.**७ नेषु (ने तु); **व्यसौ.**१३ निर्ण (निश्च); **व्यप्र.**२१; **व्यउ.**१२ सभा (सम) र्षणः (र्शनः); **व्यम.**३ नेषु (ने तु)

कुर्यात् शास्त्रप्रणीतेन मार्गेणाऽमित्रकर्षणः ॥
[1]दिवसस्याष्टमं भागं मुक्त्वा भागत्रयं तु यत् ।
स कालो व्यवहाराणां शास्त्रदृष्टः परः स्मृतः ॥

(१) अष्टममिति प्रहरार्धप्रहरं त्यक्त्वा मध्याह्नं यावत् पश्येत् । व्यमा.२८४

(२) दिवसं अष्टधाकृत्वा प्रथमं भागमग्निहोत्राद्यर्थं मुक्त्वा अनन्तरं भागत्रयं व्यवहारकालः । +पमा.२३

(३) अष्टमं यामाद्यार्धप्रहरम् । भागत्रयं प्रहरद्वयपर्यन्तम् । *व्यत.२००

(४) अत्र सभास्थानेष्वित्यादिसर्वमनुवादः । कात्यायनेनैव वचनान्तरैर्विहितत्वात् । पूर्वाण्हमात्रं विधेयम् । तदपि दृष्टार्थम् । तदा बुद्धिप्रसादात् कार्यान्तराऽव्यापृतत्वाच्च । तत्र विशेषो 'दिवसस्याष्टमं भागम्' इत्यादिनोक्तः । अष्टमो भागः प्रथमप्रहरार्धम् । भागत्रयं तदुत्तरमावर्तनात् प्राक्तनम् । अन्यथा पूर्वाण्हविधिविरोधात् । प्रथमप्रहरार्धत्यागोऽपि नित्यहोमादिबाधपरिहारौपयिकतया दृष्टार्थ एव । ×व्यप्र.२१

कालनियमं विहाय द्रष्टव्यानि कार्याणि

[2]साक्षिलिङ्गादिनाशने साध्यनाशस्य संभवे ।
न कालनियमं पश्येत् व्यवहारस्य दर्शने ॥

शास्त्रानुसारेणैव निर्णयः कार्यः

[3]राजा वृत्तिर्विवादानां स्वयमेव प्रदर्शयेत् ।
शास्त्रदृष्टेन मार्गेण विद्वद्भिः सैव सेव्यते ॥

---

+ व्यनि. पमावत् । * सेतु. व्यतवत् ।
× व्यउ. व्यप्रवत् ।

र्षणः (र्शनः); विता.२० अपरार्के कात्यायनः; समु.११ व्यमवत्.

(१) व्यमा.२८४ मुक्त्वा (त्यक्त्वा); अप.२।१ (आद्यादह्नोऽष्टभागाद्यदूर्ध्वं भागत्रयं भवेत् । स कालो व्यवहारस्य शास्त्रे दृष्टो मनीषिभिः ॥); व्यक.१८; स्मृच.२७ (आद्यादष्टमभागाद्यदूर्ध्वं भागत्रयं भवेत्) इति पूर्वार्धम्; पमा.२३ भाग (काल); स्मृचि.३ बृहस्पतिः; व्यनि. पमावत्; नृप्र.४ भाग ··· यत् (कालं सुसंविशेत्); व्यत.२००; सवि.७२ पूर्वार्धं अपवत्; व्यसौ.१३ व्यमावत्; व्यप्र.२१; व्यउ.१२; व्यम.३; विता.२०; सेतु.९६ तु (च); प्रका.१५ स्मृचवत्; समु.१२; विव्य.३ यमः.

(२) पराशरमाधवे (पृ. २३) टिप्पण्यामयं श्लोकः ।

(३) व्यक.४-५; नृप्र. २ येत् (नम्).

तस्मान्न्यायेन राष्ट्रं तु सम्यग् यत्नेन पालयेत् ।
तस्मादर्थश्च धर्मश्च राज्यं च विपुलं भवेत् ॥

धर्मविरुद्धं निवर्तनीयम्

यत्नेनैव विरुद्धं तु शक्तो राजा निवर्तयेत् ।
अशक्तितो न दोषः स्यात् एष धर्मः स्मृतो बुधैः ॥

धर्मव्यवहारचरित्रराजशासनजन्यनिर्णयस्वरूपम् । तत्तारतम्यं च

[3]दोषकारी तु कर्तृत्वं धनस्वामी स्वकं धनम् ।
विवादे प्राप्नुयाद्यत्र धर्मेणैव स निर्णयः ॥

(१) दोषो हिंसादिः । कर्तृत्वं तत्कारित्वम् । स्मृच.१०

(२) दोषकारी वाक्पारुष्यादिकारी । यस्मिन्विवादे व्यवहारे चरित्रराजशासननैरपेक्ष्येण धर्माभिमुखः सन्धर्माद्भीतः स्वकीयं दोषकर्तृत्वं स्वयमेवाङ्गीकरोति यत्र धनस्वामी व्यवहारादिप्रयासमन्तरेणाधर्माभिमुखाद्धनापहारिणः स्वकीयं धनं प्राप्नोति तत्र दोषकारिणो धर्माभिमुख्यमेव निर्णयहेतुः । पमा.१६-१७

(३) तत्र उभयत्र संप्रतिपत्युत्तर इति यावत् । धर्मेणैव निर्णय इत्यर्थः । *व्यप्र.७

[4]स्मृतिशास्त्रं तु यत्किञ्चित्प्रथितं धर्मसाधकैः ।
कार्याणां निर्णयार्थे तु व्यवहारः स्मृतो हि सः ॥

(१) धर्मशास्त्रनिरूपितप्रतिज्ञोत्तराद्यनुसारेण निर्णयो व्यवहाराख्य इत्यर्थः । ×स्मृच.१०

(२) यत्र धर्मशास्त्रकुशलैर्विद्वद्भिरर्थिप्रत्यर्थिनोरग्रे निर्णयार्थं धर्मशास्त्रं प्रख्यापितं भवति स निर्णयो व्यवहारजन्यः । पमा.१७

(३) धर्मसाधकैः सभ्यैः स्मृतिशास्त्रं साक्ष्यादिक्रियाप्रत्यायकमर्थिप्रत्यर्थिनोः कार्यनिर्णयार्थं प्रथितं प्रख्यापितं यत्र चतुष्पाद्व्यवहारप्रवर्तनेन निर्णयकरणमिति यावत् । तत्र व्यवहारो निर्णयहेतुरित्यर्थः । अत एवो-

---

* शेषं पमावत् ।
× यद्यपि पमा., व्यप्र. स्मृचवत्, तथापि विवरणार्थं गृहीतम् ।

(१) व्यक.५; नृप्र.२ राष्ट्रं (राजा). (२) व्यक. ५.

(३) स्मृच.१०; पमा.१६ धर्मेणैव स (स धर्मेणैव); व्यप्र.७ स्वामी (हारी) शेषं पमावत्; प्रका.३; समु.४;

(४) व्यक.९३ स्त्रं (स्त्रे) तु (च); स्मृच.१०; पमा.१७; नृप्र.४; व्यप्र.७(=) निर्णयार्थे तु (नियमार्थेषु); प्रका.३- प्रथि (प्रापि); समु.४ प्रकावत्.

त्तम्—'व्यवहारस्तु साक्षिषु' इति। साक्षिग्रहणं प्रमाणोपलक्षणम्। व्यप्र.७

**[1]यद्यदाचर्यते येन धर्म्यं वाऽधर्म्यमेव वा।**
**देशस्याचरणान्नित्यं चरित्रं तद्धि कीर्तितम्॥**

(१) तदनुसारी निर्णयोऽपि तथैव प्रकीर्तित इत्यर्थः। स्मृच.१०

(२) शास्त्रोक्तधर्माऽनपेतं धर्म्यं तद्विपरीतमधर्म्यम्। तदुभयं देशाचारानुसारेण यत्र स्वीक्रियते तत्र चरित्रं निर्णयहेतुः। पमा.१७

**[2]न्यायशास्त्राऽविरोधेन देशदृष्टेस्तथैव च।**
**यं धर्मं स्थापयेद्राजा न्याय्यं तद्राजशासनम्॥**

(१) मानान्तराऽविरुद्धो राजबुद्धिमात्रपरिकल्पितो निर्णयो राजशासनमित्युच्यत इति। स्मृच.१०

(२) न्यायशास्त्रमिति व्यवहारप्रतिपादकस्मृतिशास्त्रम्। तस्य च देशाचारस्याऽविरोधेन राजा यमनुशास्ति स निर्णयो राजशासनजन्यः। *पमा.१७

**[3]संधिन्यायेन शक्यन्ते निश्चितं शास्त्रतो भृगुः।**
**तेषां नृपः प्रमाणं स्यात् सर्वस्य हि नृपः प्रभुः॥**
**[4]धर्मं च व्यवहारं च चरित्रं चापि(?) लोपयेत्।**
**स्थित्यैतत् स्थापयेद्राजा धर्म्यं तद्राजशासनम्॥**
**[5]युक्तियुक्तं तु कार्यं स्याद्दिव्यं यत्र विवर्जितम्।**
**धर्मस्तु व्यवहारेण बाध्यते तत्र नान्यथा॥**

अयोग्यदिव्याधीनो निर्णयो व्यवहारेण बाध्यत इत्यर्थः। व्यचि.९५

**[6]प्रतिलोमप्रसूतेषु तथा दुर्गनिवासिषु।**
**विरुद्धं नियतं प्राहुस्तं धर्मं न विचालयेत्॥**

स्मृतिविरुद्धमपि नियतत्वान्न विचालयेद्राजा। व्यप्र.८९

**[1]निर्णयन्तु यदा कुर्यात्तेन धर्मेण पार्थिवः।**
**व्यवहारश्चरित्रेण तदा तेनैव बाध्यते॥**
**[2]विरुद्धं न्यायतो यत्तु चरित्रं कल्प्यते नृपैः।**
**एवं तत्र निरस्येत चरित्रं तु नृपाज्ञया॥**

विरुद्धं न्यायत इति। न्यायतो विरुद्धं यच्चरितं नृपाज्ञया निरस्यमित्यर्थः। यद्वा न्यायत इति सार्वविभक्तिकस्तसिः, न्याययोः शास्त्रयोर्वा यत्र विरोधस्तत्रापि राजाज्ञया व्यवहार इत्यर्थः। ×व्यचि.९५

**[3]अनेन विधिना युक्तं बाधकं यद्यदुत्तरम्।**
**अन्यथा बाधनं यत्र तत्र धर्मो विहन्यते॥**

यथोक्तप्रकारातिरिक्तप्रकारेण एषां बाध्यबाधकताकल्पने दोषमाह—अनेनेति। व्यप्र.८९

**[4]अस्वर्ग्या लोकनाशाय परानीकभयावहा।**
**आयुर्वीर्यहरा राज्ञः सति वाक्ये स्वयंकृतिः॥**

परानीकभयावहा परसैन्यतो भीत्युत्पादिका। वाक्यं शास्त्रम्। स्मृच.२५

धर्मशास्त्रमेव मुख्यं प्रमाणम्। तदभावे देशदृष्टधर्मः प्रमाणम्।

**[5]तस्माच्छास्त्रानुसारेण राजा कार्याणि साधयेत्।**
**वाक्याभावे तु सर्वेषां देशदृष्टमतं नयेत्॥**

अत्र पूर्वार्धमनुवादः। उत्तरार्धं तु न्यायमूलकम्। व्यप्र.२१

---

* व्यप्र. पमावत्।

× व्यप्र. व्यचिप्रथमकल्पवत्।

(१) **व्यक**.९९ तद्धि (तत्प्र); **स्मृच**.१०; **पमा**.१७ वाऽ (चाऽ) रणान् (रणं); **स्मृसा**.११८ त्रं तद्धि (तं परि); **नृप्र**.४ रणान् (रणं); **व्यसौ**.९०-९१ यद्य (समु) धर्म्यं वाऽधर्म्यम् (धर्मो वाऽधर्म) रणान् (रणं) त्रं तद्धि (तं तत्प्र); **व्यप्र**.७ येन धर्म्यं वाऽधर्म्यं (यत्र धर्मं वाऽधर्मं) रणान् (रणे); **प्रका**.३; **समु**.४ तद्धि (तत्प्र). (२) **व्यक**.९९; **स्मृच**.१०; **पमा**.१७ यं (यद्);**व्यसौ**. ९१; **व्यप्र**.७; **प्रका**.३; **समु**.४.

(३) **व्यक**.१००. (४) **व्यक**.९९. (५) **व्यक**.१००; **व्यचि**.९५ कार्यं स्यात् (कार्यस्य) विव (तु व); **व्यप्र**.८९.

(६) **व्यक**.८ तेषु (तानां) सिषु (सिनां) (वर्णानां नियतं धर्मं न्यायोपेतं न चालयेत्) : १००; **व्यनि**.(प्रातिलोम्यप्रसूतानां तथा दुर्गनिवासिनाम्) उत्तरार्धं व्यकवत्; **व्यसौ**.९१; **व्यप्र**.८९; **समु**.१३ व्यनिवत्.

(१) **व्यक**.१००; **व्यसौ**.९१ तेन (येन); **व्यप्र**.८९. (२) **व्यक**.१००; **व्यचि**.९५ त्रं (तं) त्रं (तं);**स्मृचि**.५८ कल्प्य (कथ्य); **व्यसौ**.९१; **व्यप्र**.८९ नृपैः (बुधैः). (३) **व्यक**.१०१; **व्यचि**.९५ युक्तं (प्रोक्तं) यद्य (च य) **व्यप्र**.९० (४) **शुनी**.४।५११–५१२वीर्य⋯ ⋯सति (बीजहरी राज्ञां अस्ति); **अप**.२।१ वीर्यहरा राज्ञः (बीजहरी राज्ञां); **व्यक**.८अपवत्; **स्मृच**.२५; **व्यसौ**.५ वीर्य(बीज)राज्ञः (राज्ञां); **व्यप्र**.९२ हरा राज्ञः (हरी राज्ञां); **प्रका**. १५; **समु**.१०. (५) **शुनी**.४।५१२ पू.; **अप**.२।१ ष्टमतं (ष्टेन तत्); **व्यक**.८ अपवत्;**स्मृच**.२६;**पमा**.४१;**व्यसौ**.५ व्यकवत्; **व्यप्र**.२१:९२ व्यकवत्; **व्यउ**.१३ वाक्या (तद) संवर्तः; **प्रका**.१५; **समु**.१०.

**[१]यस्य देशस्य यो धर्मः प्रवृत्तः सार्वकालिकः ।**
**श्रुतिस्मृत्यविरोधेन देशदृष्टः स उच्यते ॥**

तत्तद्देशीयानां मिथो विवादे तद्देशदृष्टेन निर्णयः। पमा.४१

गणादिभिः स्वसामयिकधर्मानुसारेण स्वनिर्णयः कार्यः । अन्यैर्विरोधे शास्त्रमनुसृत्य निर्णयम् ।

**[२]नियुक्तो व्यवहारेण लोकवाक्यानुसारतः ।**
**पार्थिवश्च गणाश्चैव स्वधर्मेण नयेद्भृगुः ॥**
**[३]गोत्रस्थितिस्तु या येषां क्रमादायाति धर्मतः ।**
**कुलधर्मं तु तं प्राहुः पालयेत्तं तथैव तु ॥**
**[४]लिङ्गिनः श्रेणिपूगाश्च वणिग्व्रातास्तथापरे ।**
**स्वधर्मेणैव कार्याणां कुर्युस्ते निश्चयं सदा ॥**
**[५]देशपत्तनगोष्ठेषु पुरग्रामेषु वादिनाम् ।**
**तेषां स्वसमयैर्धर्मः शास्त्रतोऽन्येषु तैः सह ॥**

(१) यत्र तद्देशीयानामितरैः सह विवादः, तत्र शास्त्रतो निर्णयो न तु देशदृष्टतः । पमा.४१

(२) समयैः आचारैः । ×विता.२४

नैगमादीनां आगमरूपलेख्यविधिः

**[६]नैगमानुमतेनैव मुद्रितं राजमुद्रया ॥**
**[७]देशस्यानुमतेनैव व्यवस्था या निरूपिता ।**
**लिखिता तु सदा धार्या मुद्रिता राजमुद्रया ॥**
**[८]शास्त्रवद्यत्नतो रक्ष्या तां निरीक्ष्य विनिर्णयेत् ॥**
**[९]नैगमस्थैस्तु तत्कार्यं लिखितं यद्व्यवस्थितम् ।**
**अभावे शास्त्रदृष्टस्य देशदृष्टं नयेत्ततः ॥**

(१) नैगमस्थैः वणिग्भिः मध्यदेशवासिभिः कारुप्रभृतिभिः । व्यक.१०

(२) तामिति कुलाद्यनुमताया अपि व्यवस्थायाः प्रदर्शनार्थम् । स्मृच.२६

**[१]तस्मात्तत्संप्रवर्तेत नान्यथैव प्रवर्तयेत् ।**
**प्रमाणदेशदृष्टं तु यदेवमिति निश्चितम् ॥**

श्रुतिस्मृत्युक्तं प्रवर्तनीयं विपरीतं निवर्तनीयम्

**[२]अप्रवृत्तं कृतं यत्र श्रुतिस्मृत्यनुमोदितम् ।**
**नान्यथा तत्पुनः कार्यं न्यायापेतं विवर्जयेत् ॥**

अप्रवृत्तं, यथोदीच्यानां रजस्वलास्पर्शाऽवर्जनम् । श्रुतिस्मृत्यनुमोदितं, श्रुतिस्मृत्यनुगृहीतम् । नान्यथा तत्पुनः कार्यमित्यत्र हेतुः । न्यायापेतं विवर्जयेत् इदं यतोऽन्यायवदित्यर्थः । व्यक. ९

**[३]श्रुतिस्मृतिविरुद्धं च भूतानामहितं च यत् ।**
**न तत्प्रवर्तयेद्राजा प्रवृत्तं च निवर्तयेत् ॥**
**[४]न्यायापेतं यदन्येन राज्ञाऽज्ञानकृतं भवेत् ।**
**तदप्यन्यायविहितं पुनर्न्याये निवेशयेत् ॥**

(१) यत्पुनर्नृपान्तरेणापि न्यायापेतं कार्यं निर्वर्तितं तदपि सम्यक्परीक्षणेन धर्म्ये पथि स्थापनीयम् । मिता. २।३०६

(२) स्वयं वा अशास्त्रतो निरूपितं नृपत्यन्तरेण वा अज्ञानकृतं व्यवहारं शास्त्रविहितेन वर्त्मना पुनर्निरूपयेत् । व्यमा. २७९

(३) उत्तरसभया च पूर्वसभातो ज्यायस्या भवितव्यम् । सभ्यानां ज्यायस्त्वतारतम्यं निर्णेतृनिर्णयप्रकरणे दर्शितम् । नृपसभादृष्टस्य कुदृष्टत्वशङ्कायां तु प्रकृष्टनृपान्तरसभायां पुनर्न्यायः । तथा च स्मृत्यन्तरम्—न्यायापेतमिति । स्मृच. १२९

---

× शेषं पमावत् ।

(१) व्यक.८ दृष्टः (धर्मः); स्मृच.२६; पमा.४१; व्यनि.; व्यप्र.१० त्यवि (त्यनु); प्रका.१५; समु.१०. (२) व्यक. १३ लोकवाक्या (लोको लोका) स्वधर्मेण (धर्मेणैव); व्यसौ.१०. (३) व्यक.८ दायाति (याताऽपि); व्यनि. दायाति (याता च); व्यप्र.२२ येषां (तेषां); व्यउ.१३ थैव तु (थैव च); समु.१३ तिस्तु (तिश्च) दायाति (याता च). (४) व्यक.१३; व्यसौ.९ व्राता (जाता) निश्च (निर्ण). (५) पमा.४१; विता.२४. (६) व्यसौ.७. (७) व्यक.९-१०; स्मृच.२६; सवि.७२; व्यसौ.७ लिखि (लेखि) धार्या मुद्रिता (कार्या लेखिता); प्रका. १५; समु.१०. (८) स्मृच.२६; सवि.७२ रक्ष्या (राजा); व्यसौ.७ क्ष्या (क्षा); प्रका.१५; समु.१०.

(९) व्यक.१०; व्यसौ.७.

(१) व्यक.१० वर्तेत (वृत्ते तु); व्यसौ.७. (२) व्यक.९; व्यसौ.७. (३) व्यमा.२७९ नारदकात्यायनौ यमश्च; व्यक. ५ च नि (चेन्नि) नारदकात्यायनौ यमश्च; व्यनि. ध्दं च (ध्दं यत्); दवि.१८ नारदयमकात्यायनाः; प्रका.७; समु.१३.

(४) मिता.२।३०६ स्मरणम्; व्यमा.२७९ पेतं (द्गतं) प्यन्यायविहितं (प्याज्ञाय विहिते) नारदकात्यायनौ; व्यक.५ हितं (हिते) नारदकात्यायनौ; स्मृच.१२९ स्मृत्यन्तरम्; पमा. ५८२ स्मरणम्; दवि.१९ प्यन्यायविहितं (प्याम्नायविहिते) नारदयमकात्यायनाः; विता.९१ मिताक्षरायां स्मृतिः१८२, ८३०; प्रका.८२ स्मृत्यन्तरम्; समु.७१ स्मृत्यन्तरम्.

तीरितः अनुशिष्टश्चेति निर्णयो द्विविधः

[१] असत्सदिति यः पक्षः सभ्यैरेवावधार्यते ।
तीरितः सोऽनुशिष्टस्तु साक्षिवाक्यात्प्रकीर्तितः ॥

साक्षिवाक्यादवधारितोऽनुशिष्ट इत्यर्थः । स्मृच.१२९

नृपतिकृतोऽधर्म्यनिर्णयः सभ्यैर्निवर्तनीयः

[२] अधर्मज्ञो यदा राजा नियुञ्जीत विवादिनाम् ।
विज्ञाप्य नृपतिं सभ्यस्तदा कार्यं निवर्तयेत् ॥

ब्राह्मणैः सहैव निर्णयः कार्यः

[३] एवं धर्मासनस्थेन समेनैवाऽविवादिना ।
कार्याणां निर्णयो दृश्यो ब्राह्मणैः सह नान्यथा ॥

## पितामहः

चरितं नाम

[४] यद्यदाचरति श्रेष्ठो धर्म्यं वाऽधर्म्यमेव वा ।
कुलादिदेशाचरणात् चरितं तत्प्रकीर्तितम् ॥

चरित्रेण निर्णेयो व्यवहारः

[५] ग्रामगोष्ठपुरश्रेणिसार्थसेनानिवासिनाम् ।
व्यवहारश्चरित्रेण निर्णेतव्यो बृहस्पतिः ॥

ग्रामादिवासिनां मिथो विवादविषयमेतत् । अन्यैः सह तेषां विवादे तु शास्त्रदृष्टैरेव निर्णेतव्यम् । स्मृच.२६

सामयिकधर्मेण निर्णेयो व्यवहारः

[६] देशपत्तनगोष्ठेषु पुरग्रामेषु वासिनाम् ।
तेषां स्वसमयैर्धर्मशास्त्रतोऽन्येषु तैः सह+ ॥

राजशासनेन निर्णेयो व्यवहारः

[७] लेख्यं यत्र न विद्येत न भुक्तिर्न च साक्षिणः ।
न च दिव्यावतारोऽस्ति प्रमाणं तत्र पार्थिवः ॥

[१] निश्चेतुं ये न शक्याः स्युर्वादाः संदिग्धरूपिणः ।
तेषां नृपः प्रमाणं स्यात् स सर्वस्य प्रभुर्यतः ॥

(१) यत्र प्रमाणैर्निर्णयः कर्तुं न शक्यते तत्र राजेच्छया निर्णयः कार्यः । पमा. ९३

(२) यदा तु द्वयोरपि मानुषप्रमाणाभावो दिव्यानध्यवसायश्च तदा निर्णयोपायमाह—लेख्यमिति । तादृग् व्यवहारे नृपेणैवोभयापीडया स्वेच्छया काचन व्यवस्था कृत्वा देया । सा उभाभ्यां नातिक्रमणीयेत्यर्थः । व्यप्र.८६

वर्णाश्रमबाह्या अष्टादश प्रकृतयः

[२] रजकश्चर्मकारश्च नटो बुरुड एव च ।
कैवर्तकश्च विज्ञेयो म्लेच्छो भिल्लस्तथैव च ॥

[३] वेमरस्थिरवव्याधहस्तलाक्षद्रुघट्टिकाः ।
कोसेदिकाभीरपदा मातङ्गाण्डोपगोपकाः ॥

[४] एताः प्रकृतयः प्रोक्ता अष्टादश मनीषिभिः ।
वर्णानामाश्रमाणां च सर्वदा तु बहिःस्थिताः* ॥

युक्त्या व्यवहारो विवेक्तव्यः

[५] असत्याः सत्यसंकाशाः सत्याश्चासत्यसंनिभाः ।
दृश्यन्ते भ्रान्तिजनकास्तस्माद्युक्तं परीक्षणम् ॥

## हारीतः

शास्त्रजातिधर्माद्यालोच्य निर्णयः

[६] शास्त्राणि वर्णधर्मांस्तु प्रकृतीनां च भूपतिः ।

---

+ व्याख्या कात्यायनीये (पृ. १०४) द्रष्टव्या ।

(१) **स्मृच**.१२९; **पमा**.२१४ रेवा (राज्ञा); **व्यचि**.९८; **सवि**.५०० प्रकीर्तितः (प्रणीयते) मनुः; **प्रका**.८१ पमावत्; **समु**.७१ पमावत्, क्रमेण मनुः; **नन्द**. ९।२३३ भ्यै (द्भ्यो) वाक्यात् (भिर्यः). (२) **व्यमा**.२८२ नाम् (नः) कार्यं (सम्यक्) नारदः; **व्यक**.१४ कार्यं (सम्यक्); **रार**.२४ र्मज्ञो (र्माय); **व्यचि**.६ व्यकवत्; **दवि**.१९ र्मज्ञो (र्माज्ञां) नियु (प्रयु) कार्यं (सम्यक्); **व्यसौ**.१०. (३) **स्मृच**.१२३; **प्रका**.७७; **समु**.६७. (४) **स्मृच**.२६; **सवि**.७१ रितं (रित्रं); **प्रका**.१५ सविवत्; **समु**.१० सविवत्. (५) **स्मृच**.११,२६; **प्रका**.४ बृहस्पतिः; **समु**.१०. (६) **स्मृच**.२६; **सवि**.७२ (=) त्तन (द्रुण); **प्रका**.१५; **समु**.११. (७) **शुनी**.४।७६०-७६१; **स्मृच**.२६,५४; **पमा**.४१ क्रमेण कात्यायनः : ९३; **सवि**.७२ भुक्तिर्न च

* स्मृतिचन्द्रिकायां 'शास्त्राणि वर्णधर्मांस्तु प्रकृतीनां' इति हारीतवचनानन्तरं श्लोकत्रयेण दर्शिताः प्रकृतयः पितामहस्येत्येवोध्दृताः । अत्र प्रकरणे तु विशृङ्खलानि वचनानि ।

साक्षिणः (साक्षी न च भुक्तयः) न च दिव्यावतारोऽस्ति (प्रमाणानि न सन्त्येकं) बृहस्पतिः: १७०(=); **व्यप्र**.८६; **व्यम**.११; **प्रका**.१५; **समु**.२७. (१) **शुनी**.४।७६१-७६२ उत्तरार्धे (सीमाद्यास्तत्र नृपतिः प्रमाणं स्यात्प्रभुर्यतः); **स्मृच**.२६,५४; **पमा**.९३; **सवि**.७२ बृहस्पतिः; **व्यप्र**.८६; **व्यम**.११; **प्रका**.१५; **समु**.२७. (२) **स्मृच**.२९ म्लेच्छो भिल्लः (म्लेच्छभिल्लौ); **पमा**.४६; **प्रका**.१७ स्मृचवत्; **समु**.१३ स्मृचवत्. (३) **स्मृच**.२९; **पमा**.४६ ( मेथिकस्त्रिरवव्यालः हस्तलक्षदुघट्टिकाः ) दिका (दिक्का) भीर (भारु) गाण्डोप (गाः पद); **प्रका**.१७; **समु**.१३ डोप (डीर). (४) **स्मृच**.२९; **पमा**.४६; **सवि**.७४ च (तु) तु (च) उत्त.; **प्रका**.१७; **समु**.१३ च (तु). (५) **स्मृच**.२४; **सवि**.७१; **प्रका**.१४; **समु**.१०. (६) **स्मृच**.२९ कार्यं स (तत्सर्वं); **पमा**.४६; **सवि**.७४(=); **प्रका**.१७ स्मृचवत्; **समु**.१३.

व्यवहारस्वरूपं च ज्ञात्वा कार्यं समाचरेत् ॥

धर्म्यनिर्णयस्वरूपम्

धर्मशास्त्रार्थशास्त्रोक्तः शिष्टाचारादिलक्षणः ।
छलेन च व्यपेतो यो व्यवहारः स धार्मिकः ॥

धार्मिकः धर्मादनपेतः । स्मृच.२६

धर्मव्यवहारचरित्रराजशासनानि प्रमाणानि। तेषां तारतम्यम् ।

धर्मेण व्यवहारेण चरित्रेण नृपाज्ञया ।
चतुष्पाद्व्यवहारोऽयमुत्तरः पूर्वबाधकः× ॥

## व्यासः

अष्टप्रमाणजन्योऽष्टविधो निर्णयः

प्रमाणैर्हेतुचरितैः शपथेन नृपाज्ञया ।
वादिसंप्रतिपत्त्या वा निर्णयोऽष्टविधः स्मृतः॥
लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम्।
अनुमानं विदुर्हेतुस्तर्कश्चेति मनीषिणः ॥
देशस्थितिः पूर्वकृतां चरित्रं समुदाहृतम् ।
अर्थानुरूपाः शपथाः स्मृताः सत्यघटादयः ।
तेषामभावे राजाज्ञां निर्णयं तु विदुर्बुधाः+ ॥

## संवर्तः

दर्शनविधिः

लोकपालान्नमस्कृत्य प्रविश्य विपुलां सभाम् ।
प्रजानां रक्षणं कुर्यान्नृपतिः कार्यदर्शने ॥

निमित्तार्थे चेयं सप्तमी । कार्यदर्शनरूपनिमित्तेन प्रजानां रक्षणं कुर्यादित्यर्थः । निमित्तत्वं च तस्य प्रजारक्षणोपयोगिदुष्टपरिज्ञानहेतुत्वेन परम्परया द्रष्टव्यम् ।

स्मृच. २०

दर्शने निषिद्धः कालः

चतुर्दशी ह्यमावास्या पौर्णमासी तथाऽष्टमी ।
तिथिष्वासु न पश्येत्तु व्यवहारान्विचक्षणः ॥

(१) आभ्योऽन्यास्वपि तिथिषु आवर्तनात्पूर्वमेव ।

*स्मृच.२६

(२) एतत्प्रतिषेधस्त्वदृष्टार्थ एव, दृष्टाऽसंभवात् भोजनाश्रितदिगादिप्रतिषेधवत् । ×व्यप्र.२१

## यमः

दर्शनविधिः । यमव्रतम्—समभावः ।

राजा मन्त्रिसहायस्तु द्वयोर्विवदमानयोः ।
सम्यक्कार्याण्यवेक्षेत रागद्वेषविवर्जितः ॥
न तु पक्षान्तरं गच्छेद् बिभ्रद्वैवस्वतं व्रतम् ।
तस्मादवहितो राजा पश्येत्कार्याणि नित्यशः॥
प्रियद्वेष्यान् यथा प्राप्ते काले धर्मो नियच्छति ।
तथा राज्ञा नियन्तव्याः प्रजास्तद्धि यमव्रतम् ॥

शास्त्रभूतहितविरोधि निवर्तनीयम्

श्रुतिस्मृतिविरुद्धं च भूतानामहितं च यत् ।
न तत्प्रवर्तयेद्राजा प्रवृत्तं च निवर्तयेत् ॥

## अनिर्दिष्टकर्तृकवचनम्

देशधर्मप्रामाण्यम्

येषां परम्पराप्राप्ताः पूर्वजैरप्यनुष्ठिताः ।
त एव तैर्न दूष्येयुराचारा नेतरे पुनः ॥
प्रजारञ्जनशीलस्य नित्यं वृद्धोपजीविनः ।
आयुः प्रजा धनं कीर्तिः तस्य सिध्यन्त्यसंशयः ॥

## शुक्रनीतिः

पूर्वोत्तरसमो भूत्वा राजा पृच्छेद्विवादिने ॥
न्यायान् पश्येत्तु मध्यान्हे पूर्वाह्णे स्मृतिदर्शनम् ॥

---

× अस्य व्याख्या 'धर्मश्च व्यवहारश्च' (नास्मृ. १।१०) इत्यादिश्लोकस्थस्मृतिचन्द्रिकानुसारिणी (पृ.९१-९२) ।

\+ व्याख्यासंग्रहः स्थलादिनिर्देशश्च क्रियाप्रकरणे द्रष्टव्यः ।

(१) **स्मृच**.२६; **प्रका**.१५; **समु**.११. (२) **सवि**.५८. (३) **स्मृच**.१९; **प्रका**.११;**समु**.७. (४) **स्मृच**.२६रान्विचक्षणः (रांस्तु नित्यशः); **पमा**.२३ न्विचक्षणः (न्न नित्यशः); **नृप्र**.४ (तिथिष्वेतास्वतनुयाद्व्यवहारांस्तु नित्यशः); **सवि**.७२ ह्यमा (त्वमा) रान्विचक्षणः(रपदं नृपः) हारीतः; **व्यप्र**.२१ ह्यमा

* सवि. स्मृचवत् । × व्यउ. व्यप्रवत् ।

(त्वमा) रान् (रं); **व्यउ**.१२ ह्यमा (त्वमा); **व्यम**.३ तु(त); **विता**.२१ व्यमवत्; **प्रका**.१५ स्मृचवत्; **समु**.११स्मृचवत्. (१) **व्यमा**.२७९ नारदः; **अप**.२।१; **व्यचि**.२ मन्त्रि (धर्म) नारदः. (२) **व्यक**.५; **नृप्र**.२ तस्मा ⋯ ⋯ जा (समः सर्वेषु भूतेषु). (३) **सवि**.७०. (४) **व्यमा**.२७९ नारदकात्यायनौ यमश्च; **व्यक**.५ त्तं च (त्तं चेत्) नारदकात्यायनौ यमश्च;**व्यचि**.२; **दवि**.१८नारदयमकात्यायनाः. (५)**शुनी**.४।५५१-५५२; **व्यप्र**.२२; **व्यउ**.१४. (६) **सवि**.५०३.(७)**शुनी**.४।५४५. (८) **शुनी**.४।५५२.

## गौतमः

आसेधविचारः

**फलासेधः कौत्तिकवत् * ।**

## विष्णुः

**[1]आसिद्धमनासिद्धमेव ।**

अयमभिसन्धिः—अत्राक्रोशाभावविशिष्टा एव लिखितादयः प्रमाणपदवीमवगाहन्ते, नान्यथा । अत एवाह विष्णुः—आसिद्धमिति । एतद्याचष्टे भारुचिः—आसिद्धं सर्वं लिखितभुक्तिप्रभृति, अनासिद्धं आसमन्तात्सिद्धं न भवति, कदापि न भवतीत्यर्थः ।

यत्तु नारदेनोक्तम्—'वक्तव्येऽर्थे न तिष्ठन्तमुत्क्रामन्तं च तद्वचः । आसेधयेद्विवादार्थी यावदाह्वानदर्शनम्' इति ॥ एतद्याख्यातं चन्द्रिकाकारेण—संदिग्धार्थनिर्णय उदासीनं तन्निर्णयाय प्रवर्तितव्यमित्यादि चार्थिनो वचनमवमन्यमानं प्रत्यर्थिनं स्वयं चार्थी आसेधयेत् । राजाज्ञया व्यवहारदर्शनपर्यन्तं निरोधयेत् इति स्वरूपासेधनमुक्तम् । तत्तु प्रत्यर्थिगृहीतप्रत्यर्पणीयद्रव्यद्वारा स एवासेध्यत इति स्वरूपासेधमात्रपरं वेदितव्यम् । भारुचिस्तु—'वक्तव्येऽर्थे न तिष्ठन्तमुत्क्रामन्तं च तद्वचः । आसेधयेद्विवादार्थी वादी तत्प्रतिवादिनम्' ॥ सिषाधयिषितार्थविषये आसेधयेत्—तद्गृहीतं स्वं सिषाधयिषितार्थं राजाज्ञयाऽवरोधयेत् । तदभावे तद्ग्रहीतारं तन्नाशकं वाऽवरोधयेत् । इति मुख्यवृत्त्या द्रव्यासेधपरमिदं वचनमित्याह । अतो भारुचिव्याख्यानमेव सम्यक् । विष्णुवचनानुरोधित्वात् । नन्वेवमयुक्तं विष्णुवचनानुरोधाभावात् । तथा च विष्णुः—

**[3]आसेद्धुः फलमेवासेध्यः ।**

इति । मैवम्, भवता वैष्णववचनतात्पर्याऽपरिज्ञानात् । तत्तात्पर्यं तु लिखितासेधात्फलासेधनं बलवत् । सर्वेषां फलार्थमेव प्रवृत्तेः । फलासेधाकरणे तत्पूर्वकृताः लिखितादासेधाः अप्रयोजकाः एवेति तत्प्राबल्यज्ञापनार्थत्वात्तद्वचनस्य इति । तथा च गौतमसूत्रम्—'फलासेधः कौत्तिकवत्' इति । तस्यार्थो विवृतो निबन्धकारेण—अत्र द्वितीयार्थे वतिः, कौत्तिकः कुत्ताजीविकः, यथा आसेधविषयः । एवं सर्वत्र फलमेवासेधविषय इति । यथा कौत्तिकः कुत्ताकारेण गृहीतपारिभाषिकार्थातिरिक्तोपचितद्रव्यस्वीकारदशायामासेध्यः । एवं सर्वेषु व्यवहारेषु फलस्वीकारदशायामासेधः कर्तव्य इति । फलस्वीकारदशायां फलमेवासेध्यं न स्वरूपमिति तात्पर्यम् । कौत्तिकग्रहणं तु कुत्ताविषये इतरव्यवहारवत् पूर्वकालासेधाः न सन्ति, किन्तु कुत्तायां फलमेवासेधविषय इति तावन्मात्रविशेषज्ञापनार्थमित्यवगन्तव्यम् ।

नन्वासेधो नाम फलस्यावरोधः । मध्यस्थजनगोचरे विवादास्पदीभूतद्रव्यनिधापनमिति यावत् । फलानुत्पत्तौ तत्स्वीकारोद्योगोपरोधः । फलनाशकरणोद्योगे स्वरूपासेधो राजाज्ञया निरोधनम्—आसेधः । आक्रोशस्तु तादृशो न भवति । किन्तु फलं न भोक्तव्यम् । पत्रं न लेखनीयम् । साक्षिभिर्न भवितव्यम् । मया सार्धं न्यायनिर्णयायागन्तव्यम् । अन्यथा राजाज्ञामुल्लङ्घितवानित्याद्याकारकवाग्व्यापाररूपो न कायिकव्यवहाररूपः । अतश्चासेधादाक्रोशो दुर्बल एव । तत आसेध एव व्यवहारबीजं नाक्रोश इति चेत्, मैवम्, आक्रोशासेधयोः विषयभेदो न स्वरूपभेदः । दुर्बलेनार्थिना कृतोपरोध आक्रोशपदाभिलप्यः । बलवता तु कृत आसेधपदाभिधेय इति । तथा च विष्णुः—

**[1]दुर्बलप्रबलकृतावाक्रोशासेधौ ।**

इति । अयमर्थः—'दुर्बलस्य बलं राजा' इति राजपुरुषैर्दुर्बलेनापि कारित आसेध आक्रोशमूलोऽपि प्रबलकृतत्वादासेध एवेति । दुर्बलेनैवाक्रोश इति लक्षणं सुष्ठु, परन्तु आसेधादाक्रोशस्येयान्विशेषः—आक्रोशः काला-

* व्याख्यानं अनुपदमेव विष्णुव्याख्याने द्रष्टव्यम् ।

(१) सवि.१६१. गौतमधर्मसूत्रे नोपलभ्यते. (२) सवि. १६०. (३) सवि.१६१.

(१) सवि.१६२.

न्तरे धर्मनिर्णयानन्तरं फलगतमपि स्वत्वमाकर्षयति। आसेधस्त्वासेधसमय एव फलमप्युपरुणद्धीति। अत्राहुः—बलवता आसेध एव कर्तव्यो नाक्रोश इति भारुच्यादयः। अत्राक्रोशकर्तुः निरूपणं स्फुटत्वान्न कृतं अतश्चासेधसद्भावे तु तदभावविशिष्टत्वरूपधर्मोपमर्दनद्वारा विशिष्टं कृत्स्नं प्रमाणमुपमृद्नात्याक्रोश इति।

ननु लिखितादीनां प्रामाण्यमागमनिरूपणद्वारा, आगमाभावे तत्प्रामाण्यं प्रशिथिलमूलतया दृढं न भवति आगमास्तु केषाञ्चिन्मते सप्त। तथा च स्मृतिः—'सप्त वित्तागमा धर्म्याः' इति। गौतमादीनां मते तु 'रिक्थक्रमसंविभागपरिग्रहाधिगमप्रतिग्रहनिर्वेशादयोऽष्ट वित्तागमा' इति। भारद्वाजमते तु परिवृत्तेरपि वित्तागमरूपतया निगदितत्वात्तया सार्धं नव वित्तागमाः। एतेषां मध्ये कुत्ताकाराकारितपरिभाषितार्थस्यापरिगणनादागमप्रकारनिरूपणाशक्तौ कुत्तालेखस्य तदारूढसाक्षिणां च दौर्बल्यं प्राप्तम्।

'अनागमेन यो भुङ्क्ते बहून्यब्दशतान्यपि। चोरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः' इति स्मृतेः। आगमशून्याया भुक्तेः प्रमाणकोटिनिवेशाभावः प्रतीयते। यत्तु भोगागमयोः साम्यं बृहस्पतिवचनात्प्रतीयते; तत्तु केवलभुक्तेः दौर्बल्यज्ञापनपरतया न विरुद्धम्। तथा च बृहस्पतिः—'भुक्त्या केवलया नैव भूमिसिद्धिमवाप्नुयात्। आगमेनापि शुद्धेन द्वाभ्यां सिद्धिमवाप्नुयात्' ॥ तथा च व्यासः—'सागमो दीर्घकालश्चाऽविच्छेदोऽपरवोज्झितः। प्रत्यर्थिसन्निधानं च पञ्चाङ्गो भोग इष्यते' इति। अत्र 'पञ्चाङ्गो भोग इष्यते' इति वदन्नेकाङ्गवैकल्येऽप्यप्रामाण्यं भोगस्येति दर्शयतीत्युक्तं प्राक्, अतश्चागमनिरूपणे तदभावप्रतीतेः मूलशुद्ध्यभावात् तद्गमकप्रमाणदार्ढ्याभाव इति। अत्रोच्यते—क्वचित्परिभाषाऽपि वित्तागम एव, यथा—'आधिः प्रणश्येद्द्विगुणे धने यदि न मोक्ष्यते'। इत्यत्र धनद्वैगुण्यनिबन्धनपरिभाषा वित्तागममध्येऽपरिगणिताऽपि सोपाधिकं स्वत्वमवगमयतीति विज्ञानेश्वरः। चन्द्रिकाकारस्तु—धनद्वैगुण्यपरिभाषा परिवृत्तिरूपेण तिलव्रीहिविनिमयवत् स्वत्वापादिकेत्याह। विज्ञानेश्वरमतावलम्बनेन परिभाषाया वाचिकदानान्तर्गततया स्वत्वापादकत्वमस्ति। औपाधिकस्थलेऽप्युपाधिनिवृत्तौ स्वत्वस्य दृढत्वात्। तथा हि—क्षेत्रादेतस्मादेतावद्धनमस्मभ्यं दीयतां अवशिष्टं गृह्यताम्। यद्वा—एतावद्द्रव्यं गृहीत्वा तदृणं संशोध्यताम्, अवशिष्टं गृह्यतां इति परिभाषायामवशिष्टद्रव्ये स्वत्वनिवृत्तिः परस्वत्वापत्तिपर्यन्ता भवत्येवेति दृश्यते। अथवा भारुचिमतावलम्बनेन कुत्ताकारकारितापरिभाषावष्टम्भितमानसिकदानान्ततया स्वत्वापादकत्वं परिभाषायाः समस्ति। ननु संकल्पमात्रात् स्वत्वं नोत्पद्यते किन्तु संकल्पात् स्वत्वमपैति। स्वत्वोत्पत्तिस्त्वार्जनादेवेति धनार्जननयसिद्धत्वात्तद्याकोपो मानसिकदानान्ततया परिभाषायाः स्वत्वहेतुत्वोक्ताविति चेत्, मैवं, यदि धनार्जननयः स्वत्वापायहेतुमानसिकक्रियैवेति स्यात्तदाऽयं दोषः प्रादुःष्यात्, न च तथा, स्वत्वापायहेतुः क्वचित्संकल्पः क्वचिन्महापातकादिरित्युक्तम्। अतश्च तस्याप्यधिकरणस्य लौकिकव्यवहारानुरोधितया स्वत्वस्यापि लौकिकत्वाच्च। यथा लोके दृष्टं तथा स्वीकर्तव्यम्। कुत्तादिव्यवहारे मानसिकी क्रियैव स्वत्वहेतुरिति संमतं लौकिकानाम्। तथा च दृश्यते—बहुशो बहवः कायस्थाः क्षेत्रादिकं देशग्रामादिकं वा कुत्ताकारेण गृण्हन्तः पाक्षिकापचयभारसहिष्णवो दृश्यन्ते। तत्र ग्रामादिक्षेत्रादिदेशाद्युपचितपारिभाषिकद्रव्ये तेषां व्यवहाराणां स्वाम्यं विद्यत एव। स चागम साधीयानेव। ननु कुत्ताकारेण गृहीतद्रव्ये उपचयो विद्यते चेत्तमुपचयं कुत्ताप्रदातार उत्तमपदाभिलप्याः स्वीकुर्वन्ति परिदृश्यन्ते च, मैवं, यदि कौत्तिकस्त्वपचयभारसहिष्णुर्न भवेत्तदाऽप्युत्तमस्याप्युपचयापायसहिष्णुत्वं न स्यात्। कौत्तिकत्वप्रसिद्धिर्याम (दुग्ध) वरुद्धभोगप्रदानान्यथाकरणमूला। अत एवोक्तं विष्णुना—

[1]कौत्तिकोऽपचयभारसहिष्णुरुत्तमस्तूपचयापायसहिष्णुः।

इति। अत्र भारुचिः—कुत्तोपजीवी कौत्तिकः। कुत्ताप्रदातोत्तमः। कुत्तानाम गृहक्षेत्रारामग्रामदेशादिपदार्थसमृद्धफलप्राप्त्यर्थं यस्मै कस्मैचिद् व्यवहारिणे तद्गृहादिपदार्थजातसन्दानमिति। सन्दानं नाम—सम्यग्दानं न भवति, औपाधिकदानरूपत्वात् कुत्तायाः। अपि तु

(१) सवि. १६५.

सन्दानं बन्धनं उत्तमस्यापि उपचयानङ्गीकारेण कौत्तिक एव बन्धनरूपत्वात् सन्दानं कुत्तेत्युपचर्यते। सन्दानं नाम त्यागमात्रमिति केचित्। अत्रायं विशेषः—यद्यनयोः कौत्तिकोत्तमयोर्विद्यते समयः 'उपचयश्चेन्मयोत्तमेन सोढव्यः अपचयश्चेत्त्वया कौत्तिकेन सोढव्य' इति, तदा संविदनुसरणे उपचये विद्यमानेऽपि विष्णुवचनानुसारेण पादमात्रोपचय एव स्वाम्यं कौत्तिकस्य। तथा च विष्णुः—

**पादमात्रोपचये कौत्तिकस्य स्वाम्यम्।**

इति। अत्र भारुचिः—सोऽयमुपचयः कुत्तातः पादमात्रं चेत्तस्मिन्नेवोपचये उत्तमो मनसा 'इममुपचयं कौत्तिको गृह्णीत, अन्यदा आयनाशयोः स्वाम्यधीनत्वं न तु कौत्तिकस्य। पादाधिक्य एव स्वाम्यात्तस्य' इति स्मरति। तदा तस्मिन् पादमात्रोपचितद्रव्ये उत्तमस्य *स्वत्वनिवृत्तिः परस्वत्वापत्तिपर्यन्ता भवतीति तात्पर्य*-मिति। अयमाशयः—मानसिकमपि दानं त्यागात्मकं स्वत्वापादकमिति वैष्णवं मतमिति। उत्तमो मनसाऽयं कौत्तिक इममुपचयं गृह्णात्विति वदता भारुचिना यावत्युपचिते द्रव्ये उत्तमस्य मानसिकत्यागः तावत्यपि स्वत्वं वैष्णवं पादमिति मतम्। ततो न्यूनेन न भवितव्यमिति। अत्र केचिदाहुः—अनेनैव न्यायेन कुत्तायाः अपचये विद्यमानेऽपि पादमात्रमुत्तमेन सोढव्यम्। ततो न्यूनं दूरत एव, तत्राधिकमैच्छिकमिति विष्णुवचनस्य तात्पर्यार्थ इति। सवि. १६०-१६६

## कौटिलीयमर्थशास्त्रम्

अनावेदितकार्यविशेषा ग्राह्याः

[२]**देवब्राह्मणतपस्विस्त्रीबालवृद्धव्याधितानामनाथानामनभिसरतां धर्मस्थाः कार्याणि कुर्युः। न च देशकालभोगच्छलेनातिहरेयुः। पूज्या विद्याबुद्धिपौरुषाभिजनकर्मातिशयतश्च पुरुषाः।**

**एवं कार्याणि धर्मस्थाः कुर्युरच्छलदर्शिनः।**
**समाः सर्वेषु भावेषु विश्वास्या लोकसंप्रियाः॥**

देवब्राह्मणेत्यादि। देवादीनां सत्तानाम्, अनाथानां योगक्षेमचिन्तकरहितानां, अनभिसरतां स्वदुःखनिवेदनाय धर्मस्थमनभिगच्छतां, कार्याणि, धर्मस्थाः कुर्युः। देशकालभोगच्छलेन देशादिव्याजेन, न चातिहरेयुः अनाथद्रव्यं नातीव हरेयुः। साक्ष्यादिभावेनोपगच्छन्तः पुरुषास्तत्तद्विद्याबुद्धिपौरुषाभिजनकर्मणामतिशयानुरोधेन धर्मस्थैर्माननीया इत्याह—पूज्या इत्यादि। श्रीमू.

(१) सवि. १६६. पूर्वोक्तानि विष्णुवचनानि विष्णुस्मृतौ नोपलभ्यन्ते। (२) कौ. ३।२०.

## मनुः

राज्ञा व्यवहारः स्वयं नोत्पाद्यः। अन्योत्पादितो न निगरणीयः।

**नोत्पादयेत्स्वयं कार्यं राजा नाऽप्यस्य पूरुषः।**
**न च प्रापितमन्येन ग्रसेतार्थं कथञ्चन॥**

(१) अथ किं राजा स्वपुरुषैर्वान्विष्य कार्यिणो व्यवहारयितव्याः, न, प्रतिषेधात्। यथाह मनुः—नोत्पादयेदिति। विश्व. २।५

(२) कार्यं विवादवस्तु। तद्राजा स्वयं न प्रवर्तयेत्। कस्यचिद्द्वेष्यस्योपघातार्थं धनिनो वा धनग्रहणार्थं न *तदीयमृणिकमन्यं वाऽपराद्धमुद्देजयेत्। एष ते धारयति* किमिति ममाग्रतो नाकर्षसि? एतेन वा तावदपराद्धं यावदहमेनं निपातयामीत्येवं राज्ञा न कर्तव्यम्। सत्यपि द्वेषे धनलोभे वा। न च प्रापितमावेदितमन्येनार्थिना ग्रसेत निगिरेन्नोपेक्षेतेति यावत्। अवधीरणायां निगिरेदिति प्रयुज्यते। तत्समानार्थश्च ग्रसतिः। तथा च वक्तारो भवन्ति यावत्किञ्चिदस्योच्यते तत्सर्वं निगिरति न किञ्चिदयं प्रतिवक्ति।

अन्ये तूत्तरं श्लोकार्धमेवं व्याचक्षते। न च प्रापितं व्यवहारादन्येन प्रकारेणार्थं धनं ग्रसेत स्वीकुर्यात्। यदि हि राजा छललेशोद्देशिकया धनदण्डे प्रवर्तेत ततः परलोके दोषो द्रष्टव्यः। राज्ये चोपघातः स्यात्।

अथेदमपरं केषाञ्चिद्व्याख्यानम्। नोत्पादयेत्स्वयं

(१) **मस्मृ.** ८।४३ क., ग., घ. पुस्तकेषु 'ग्रसेदर्थं' इति पाठः; **शुनी.** ४।५६४ पू.; **विश्व.** २।५ पू.; **मिता.** २।५ नाऽप्य (वाऽप्य); **गोरा.** नाऽप्यस्य पूरुषः (नान्यस्य कस्यचित्); **व्यमा.** २९६ (स्वयं नोत्पादयेत् कार्यं राजा वा नाऽस्य पूरुषः) पू.; **अप.** २।५; **व्यक.** १९; **मभा.** १३।२७; **गौमि.** १३।२७ पू.; **स्मृच.** २७ च (चा); **सुबो.** २।५ 'न वाऽप्रापितमन्येन' इत्यपि पाठः; **व्यनि.** तार्थं (दर्थं); **स्मृचि.** ५; **व्यसौ.** १४; **वीमि.** २।५ व्यनिवत्; **व्यप्र.** ३५-३६ नाऽप्य (वाऽप्य) तार्थं (दर्थं); **व्यउ.** २२ पू.; **विता.** ३६ पू.; **प्रका.** १६ स्मृचवत्; **समु.** १२.

कार्यं राजा साक्षादुपलभ्याप्यैपकारिणं न स्वयं किञ्चिद् ब्रूयात् यस्यापराधी[2] तेन यावद्व्यवहारेण नाकृष्टः। येन व्यवहारदर्शनमेव पराजितस्य निग्रहाय भवति न राजा। एतच्च ऋणादानादि[3]ष्वेव द्रष्टव्यम्। ये तु स्तेनसाहसिकादयः कण्टकस्थानीयास्तान् राजा स्वयमेवावगम्य गृह्णीयात्। शेषं समानम्। नाप्यस्य पूरुष इति। अस्य राज्ञः, पुरुषोऽधिकारी मनुष्यः। मेधा.

(३) एवं धनप्रसङ्गेन प्रसक्तानुप्रसक्तिकयाभिधायाधुना प्रकृतमाह—नोत्पादयेदिति। यद्यपि पश्येत्कार्याणि कार्यिणामित्युक्तं भवति, तथापि तदाक्षेपान्तरेण ऋणादानादिषु राजकर्तव्यसाहसाधिरक्षणवर्जितेषु राजा स्वयमुपजापेन व्यवहारान्नोत्पादयेत्। नापि राजाधिकृतः स्वयमुत्पादयेत्, तथा प्रत्यर्थिनामपि तदा वेदितव्यं कार्यार्थे केनापि प्रकारेण रागद्वेषादिना नोपेक्षेत। *गोरा.

(४) कार्ये व्यवहारो विवाद इति यावत्। व्यवहारकाले च प्रापितं प्रामाणिकमर्थं न ग्रसेत नापलपयेत्। अप. २।५

(५) नोत्पादयेदिति। एतच्च ऋणादानादौ न तु साहसादावपि तत्र स्वयमप्यन्वेष्यत्वात्। प्रापितमन्येनेति स्वयमृणादि दत्तं ऋणिनाऽदीयमानं राज्ञे यदा निवेद्येत तदा न ग्रसेन्नोपेक्षेत। न वा प्रापितमित्यपरः पाठः। अन्येनान्यतरेण अप्रापितं न ग्रसेत् ग्रासयेदन्यतरस्मै दापयेत्। मवि.

(६) अविवादिनां नराणामिति शेषः। तथा च नारदः—'न तु राजा वशित्वेन धनलोभेन वा पुनः। उत्पादयेत्तु कार्याणि नराणामविवादिनाम्'॥ कार्याणि विवादानित्यर्थः। तथा च प्रजाभ्य एवोत्पन्नमपि कार्यं कार्यिणा तत्संबन्धिना वा अनिवेदितं कथञ्चिदवगम्य न ग्राह्यमित्याह मनुः— न चाप्रापितमिति। अप्रापितं अनावेदितम्। कथञ्चन रागादिनेत्यर्थः। स्मृच.२७

(७) मिता.टीका— न च प्रापितमन्येनेति। अन्यायेनान्येन प्रापितं न गृह्णीयात्। अथवा, अन्येन प्रापितं निवेदितं कार्यं न ग्रसेत् नोपेक्षेत। 'न वा प्रापितमन्येन' इत्यपि पाठः। तत्रायमर्थः— अन्येन विवदमानेन तत्संबन्धिना वा अप्रापितमनिवेदितं कथञ्चिदवगम्य रागादिना न ग्रसेत् न ग्राहयेदिति। *सुबो.२।५

(८) अन्येनोत्कोचादिना स्वयं वा ग्रसेत् प्राप्तं दत्तं वा गृह्णीयात्। अर्थं ग्रसित्वा कार्यार्थिनां कार्यं नोपेक्षेतेति। व्यवहारादन्येन प्रापितं वा न गृह्णीयात् राज्ञो यत्नात्प्राप्तनिध्यादेर्व्यवस्थोक्तेः। मच.

(९) अन्येन असंबद्धेन। अर्थं कार्यम्। ग्रसेत् स्ववशं कुर्यात्। व्यप्र.३६

अनेककार्ययौगपद्ये कार्यदर्शनक्रमः

**अर्थाऽनर्थावुभौ बुध्वा धर्माऽधर्मौ च केवलौ।**
**वर्णक्रमेण सर्वाणि पश्येत्कार्याणि कार्यिणाम्॥**

(१) धर्माधर्मावेव केवलावर्थानर्थौ न गोहिरण्यादिलाभोऽर्थस्तद्विपर्ययो वाऽनर्थः। किं तर्हि धर्म एवार्थोऽनर्थश्चाधर्म इति बुद्ध्वा हृदि निश्चित्य कार्याणि पश्येत्। अथवाऽर्थानर्थावपि बोद्धव्यौ धर्माधर्मावपि। धर्मस्य सारता बोद्धव्याऽर्थस्य फल्गुता। अथवा यत्र महाननर्थः स्वल्पश्चाधर्मस्तत्रानर्थं परिहरेत्। शक्यो हि महताऽर्थेनेषदधर्मो दानप्रायश्चित्तादिना निराकर्तुम्। संनिपाते च व्यवहारिणां बहूनां वर्णक्रम आश्रयितव्यः। एष च दर्शने क्रमो वर्णानां यदाऽर्थे तुल्यपीडा भवति। यदा त्ववरवर्णस्याप्यात्ययिकं कार्यं महद्वा तदा 'यस्य चात्ययिका पीडा' इत्यनेन न्यायेन तदेव प्रथमं पश्येत् न क्रममाद्रियेत। राजस्थित्यर्थो हि व्यवहारनिर्णय इत्युक्तमतो न यथाश्रुतमाश्रयणीयम्। मेधा.

(२) प्रकृतिसंप्रसादकोपात्मकान् तथाविधान् लोकगतानालोच्य, परलोकार्थं च धर्माधर्मावेव केवलमालोक्य यथा धर्महानिः अधर्मानर्थोत्पादश्च न भवति तथा सर्वान् व्यवहारान्पश्येत्। संनिपाते च वर्णानां ब्राह्मणादिक्रमेण पश्येत्। गोरा.

(३) यत्रानेकानि वादिप्रतिवादियुग्मानि युगपदुपस्थितानि स्युस्तत्र व्यवहारदर्शने क्रमनियममाह—

---

* ममु., नन्द., भाच. गोरागतम्।

१ स्य कार्यकारिणं. २ तस्य पराधीनेन. ३करणदा.

* बाल. (२।५) सुबोगतम्।

(१) **मस्मृ.**८।२४; **व्यमा.**२९०; **अप.**२।६; **व्यक.**२४; **स्मृच.**३५; **पमा.**६०; **व्यनि.**; **स्मृचि.**२; **सवि.**८४ वर्णक्रमेण (वर्णाश्रमौ च); **व्यसौ.**१९; **व्यप्र.**४५; **व्यउ.**३२; **प्रका.**२१; **समु.**१६; **विव्य.**४ उत्त.

अर्थेति। अप.२।६

(४) अर्थः प्रयोजनं यस्य तस्यार्थित्वम्, अनर्थोल्लाभो यस्य तस्य प्रत्यर्थित्वम्। मात्राधिको नात्रेति बुध्वा (?) धार्मिकस्य कार्यं प्रथमं द्रष्टव्यम्। अधर्मो धार्माभावमात्रम्। केवलौ असंकीर्णौ वर्णक्रमेणेति च ब्राह्मणस्य दृष्ट्वा ततो राजन्यस्येत्यादि, एतदभावे धार्मिकत्वेन व्यवस्था, तस्याप्यभावेऽर्थित्वेन। मवि.

(५) प्रजारक्षणोच्छेदाद्यात्मकावैहिकावर्थानर्थौ बुध्वा। *ममु.

(६) ब्राह्मणादीनां युगपद्धर्माधिकरणं प्राप्तानां वर्णानुक्रमेण ब्राह्मणस्यादौ ततः क्षत्रियस्येत्येवमादिक्रमेण चतुष्पाद्व्यवहारः प्रवर्तनीयो राज्ञा। पीडाधिक्यकार्यगौरवे चेदर्थिप्रत्यर्थिनोरन्यतरस्य तदा न पूर्वावेदनक्रमो नाऽपि वर्णक्रमः। यदा तु सर्वे सवर्णास्तदा आवेदनक्रमः। युगपदावेदने समानवर्णत्वे समानपीडत्वे च ससभ्यसभापतीच्छयेति निर्गलितोऽर्थः। +व्यप्र.२५-२६

(७) वर्णक्रमेण प्रथमं ब्राह्मणानां कार्यं पश्येत्। तेष्वप्यर्थानर्थौ प्रथमं सौम्ये (?) धर्माधर्मौ केवलौ कृत्स्नौ। ब्राह्मणकार्यदर्शनानन्तरं क्षत्रियादीनां कार्याणि क्रमेण पश्येत्। नन्द.

(८) केवलौ अर्थादिहीनौ। भाच.

## याज्ञवल्क्यः

**स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः।**
**आवेदयति चेद्राज्ञे व्यवहारपदं हि तत्×॥**

(१) अथ किं राज्ञा स्वपुरुषैर्वान्विष्य कार्यिणो व्यवहारयितव्याः। न। प्रतिषेधात्। यथाह मनुः—'नोत्पादयेत्स्वयं काय राजा नाप्यस्य पूरुषः' इति। कथं तर्हि व्यवहारप्रवृत्तिः? उच्यते—स्मृत्याचारेति। तदेव हि व्यवहारपदं,यत् स्मृत्याचारव्यपेतेन बाह्येन मार्गेणासंबद्धैः खलीकृत्य इत्येवं कश्चित् कथयेत्। न तु स्वयं कार्यारम्भक इत्यभिप्रायः। तथा च नारदः—'स्वनिश्चितबलाधानस्त्वर्थी स्वार्थप्रचोदितः। लेखयेत् पूर्ववादं तु कृतकार्यविनिश्चयः' इति॥ स्मृत्युक्तः आचारः स्मृत्याचारः। कुलधर्माद्यभिप्रायं वैतत्। परैरिति गुरुशिष्यवादनिवृत्यर्थम्। तथा च नारदः—गुरुशिष्यपितापुत्रदम्पत्योः स्वामिभृत्ययोः। एतेषां समवेतानां व्यवहारो न विद्यते॥ एकस्य बहुभिः साध स्त्रीणां प्रेष्यकरैस्तथा' इत्यादि। कात्यायनश्च—'यश्च राष्ट्रविरुद्धश्च यश्च राज्ञा विवर्जितः। अनेकपदसंकीर्णः पूर्वपक्षो न सिध्यति' इत्यादि॥ व्यवहारः पदनीयो निरूपणीयतयेत्यर्थः। विश्व.२।५

(२) धर्मशास्त्रसमयाचारविरुद्धेन मार्गेण परैराधर्षितोऽभिभूतो यद्राज्ञे प्राड्विवाकाय वा आवेदयति विज्ञापयति चेद्यदि, तदावेद्यमानं व्यवहारपदं प्रतिज्ञोत्तरसंशयहेतुपरामर्शप्रमाणनिर्णयप्रयोजनात्मको व्यवहारः तस्य पदं विषयस्तस्य चेदं सामान्यलक्षणम्। स च द्विविधः शङ्काभियोगस्तत्वाभियोगश्चेति। स पुनश्चाष्टादशधा भिद्यते। यथाह मनुः (८।४-७) 'तेषामाद्यमृणादानम्' इत्यादिश्लोकचतुष्टयेन।

एतान्यपि साध्यभेदेन पुनर्बहुत्वं गतानि। यथाह नारदः—'एषामेव प्रभेदोऽन्यः शतमष्टोत्तरं भवेत्। क्रियाभेदान्मनुष्याणां शतशाखो निगद्यते' इति॥ 'आवेदयति चेद्राज्ञे' इत्यनेन स्वयमेवागत्यावेदयति, न राजप्रेरितस्तत्पुरुषप्रेरितो वेति दर्शयति। यथाह मनुः—'नोत्पादयेत्स्वयं कार्यं राजा वाऽप्यस्य पूरुषः। न च प्रापितमन्येन ग्रसेतार्थं कथञ्चन' इति॥ परैरिति परेण पराभ्यां परैरित्येकस्य एकेन द्वाभ्यां बहुभिर्वा व्यवहारो भवतीति दर्शयति। यत्पुनः—'एकस्य बहुभिः सार्धं स्त्रीणां प्रेष्यजनस्य च। अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः'॥ इति नारदवचनं तद्भिन्नसाध्यद्वयविषयम्। 'आवेदयति चेद्राज्ञे' इत्यनेनैव राज्ञा पृष्टो विनीतवेष आवेदयेत्। आवेदितं च युक्तं चेन्मुद्रादिना प्रत्यर्थ्याह्वानमकल्पादीनां चानाह्वानमित्याद्यर्थसिद्धमिति नोक्तम्।

---

*शेषं गोरागतम्। मच. ममुगतम्। + व्यउ. व्यप्रवत्।

×अत्रत्यं व्यवहारप्रकाशव्याख्यानं व्यवहारलक्षणे (पृ.७)द्रष्टव्यम्।

(१) **यास्मृ.**२।५; **अपु.**२५३।३४-३५ चे (य); **शुनी.**४।५६३-५६४; **विश्व.**२।५; **मिता.**; **व्यमा.**२८५ ज्ञे (ज्ञि); **अप.**; **व्यक.**१९; **स्मृच.**१:३१; **पमा.**५२; **सुबो.**२।४१; **स्मृसा.**८३ चेद्रा (यद्रा); **व्यचि.**८ स्मृसावत्; **व्यनि.**; **स्मृचि.**२; **नृप्र.**३,५; **व्यत.**१९७ व्यमावत्, चेदित्यत्र यदिति मैथिलाः; **सवि.**७५; **व्यसौ.**१३; **वीमि.**यदिति पाठस्तु मिश्रादिसंमतः; **व्यप्र.**३,३५, २२४; **व्यउ.**१ स्मृसावत्; **व्यम.**१; **विता.**३१; **राकौ.**३८४ व्यपे (व्यपे); **सेतु.**९३ व्यमावत्; **प्रका.**२; **समु.**३,१४.

स्मृत्यन्तरे तु स्पष्टार्थमुक्तम् । *मिता.

(३) स्मृतिशास्त्रशिष्टाचाररहितेन मार्गेणोपायेन परैः राक्षितः सन् राज्ञे यद्यावेदयति अहमनेन विधिनाऽन्यायेन परिभूतोऽस्मीति यत्तन्निवेदनं व्यवहारपदम् । पदं स्थानं निमित्तमिति यावत् । +अप.

(४) न चैवं चौर्यपारुष्यादिविवादो न व्यवहार इति शङ्कनीयम् । यत आह याज्ञवल्क्यः—स्मृत्याचारेति ।

अनेन वादी परकृतमुपद्रवमावेदयेदित्यर्थादुक्तम् । चेच्छब्दोऽत्रावेदकरुच्यैवावेदनं कार्यं, न तु राजाज्ञयेति ज्ञापनार्थः । परैरिति बहुवचनमुपलक्षणार्थम् । अत एव कात्यायनेनापराधकर्तृप्रश्नः केनेत्येकवचनान्तेन दर्शितः । आधर्षितग्रहणं विवादेऽधिकारिणोऽभिधानार्थं न तु कर्तुः । ÷स्मृच.१,३१

(५) मिता.टीका—प्रत्यर्थिप्रतिकूलतया नृपादिषु कथनं व्यवहारः । 'आवेदयति चेद्राज्ञे' इत्यत्र राजशब्दः पूगश्रेण्यादीनामुपलक्षणार्थः । शङ्कारूपोऽभियोगो यस्मिन्विषये तत्वरूपोऽभियोगो यस्मिन् विषये इति विग्रहः । इत्याद्यर्थसिद्धमिति—अविनीतस्यावेदनमेव न घटते । उद्धतत्वेन राज्ञः परिसरमेव गन्तुमशक्यत्वात् । आवेदनानन्तरं च युक्तत्वे प्रत्यर्थिनोऽनाह्वाने आवेदनमेव निष्प्रयोजनमिति नकोऽप्यावेदयेत् । तथा च प्रजापरिपालनमेव न सिध्यतीत्यादिभिर्हेतुभिः पूर्वोक्तानां धर्माणामर्थसिद्धत्वमूह्यम् ।=सुबो.

(६) स्मृतिसदाचारबहिर्भूतेन वर्त्मना परैरर्थतः शरीरतो वा यद्राजानं निवेदयति तद्व्यवहारस्थानम् । दीक.

(७) हिशब्देन आवेदितस्याऽवश्यविचार्यत्वमभिप्रैति । ×वीमि.

वादे प्रातिभाव्यानधिकारिणः

**भ्रातृणामथ दम्पत्योः पितुः पुत्रस्य चैव हि ।**
**प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम् ‡ ॥**

* व्यमा., विता. मितागतम् । + मितागतम् ।
÷ सवि. स्मृचवत् ।
= व्यवहारतत्वं सुबोधिन्यादिग्रन्थेषु गतार्थम् । सेतौ च व्यवहारतत्वमेवोध्दृतम् । बाल. सुबोगतम् ।
× शेषं मितागतम् ।
‡ व्याख्यासंग्रहः स्थलादिनिर्देशश्च ऋणादानप्रकरणे द्रष्टव्यः ।

वादप्रतिभूविधिः

**उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये ।**
**प्रतिभुवस्त्वभावे तु राजा संरक्षिता तयोः ॥**

(१) सर्वविवादेषु च यदा न सद्य एव निर्णयः स्यात्, तत उभयोरपि कार्यिणोः प्रतिभूः कार्यनिर्णयक्षमो ग्राह्यः । विश्व.२।१०

(२) अर्थिप्रत्यर्थिनोर्विधिमुक्त्वा ससभ्यस्य सभापतेः कर्तव्यमाह—उभयोरिति । उभयोः अर्थिप्रत्यर्थिनोः । सर्वेषु विवादेषु निर्णयस्य कार्ये कार्यनिर्णयः । आहिताग्न्यादिषु पाठात्कार्यशब्दस्य पूर्वनिपातः । निर्णयस्य कार्ये च साधितधनदानं दण्डदानं च तस्मिन्समर्थः प्रतिभूः प्रतिभवति तत्कार्ये तद्वद्भवतीति प्रतिभूर्ग्राह्यः ससभ्येन सभापतिना । तस्यासंभवेऽर्थिप्रत्यर्थिनो रक्षणे पुरुषा नियोक्तव्याः । तेभ्यश्च ताभ्यां प्रतिदिनं वेतनं देयम् । तथाह कात्यायनः—'अथ चेत्प्रतिभूर्नास्ति कार्ययोगस्तु वादिनः । स रक्षितो दिनस्यान्ते दद्याद्भृत्याय वेतनम्' इति ॥ *मिता.

(३) न्यायार्थमुपस्थितयोश्च प्रतिभूर्ग्राह्यः । विनेयत्वादर्थिनोऽपि मन्दपक्षस्य पलायनसंभवात् । तदाह याज्ञवल्क्यः—उभयोरिति । ÷व्यमा.२८८

(४) साधितधनदण्डधनयोरनायासेन प्राप्तिः कार्यनिर्णयः । +स्मृच. ३५

(५) कार्यनिर्णये कार्यनिर्णयपर्यन्तम् । दीक.

(६) कार्यनिर्णये समर्थः दशबन्धदानयोग्यः । व्यनि.

(७) निर्णयस्य कार्ये समर्थः । यद्वा कार्ये कर्तव्ये निर्णये प्रतिभूर्ग्राह्यः । पाठिकक्रमेण प्रकृतनिर्णयानन्तरं

* अप., व्यत., विता. मितागतम् । ÷ व्यचि.व्यमागतम् ।
+ शेषं मितागतम् । सवि. स्मृचगतम् ।

(१) **यास्मृ**.२।१० उत्तरार्धस्तु मूलस्मृतौ नोपलभ्यते; **अपु**. २५३।४० पृ.; **शुनी**.४।६२३ पृ.; **विश्व**.२।२०; **मिता**.; **व्यमा**.२८८; **अप**.; **व्यक**.२४ पृ.; **स्मृच**.३४ पृ.; **पमा**.५७ पृ.; **व्यचि**.१० पृ.; **व्यनि**.पृ.; **दवि**.१३; **नृप्र**. ७पृ.; **व्यत**.२०२ तु राजा संरक्षिता (च राज्ञा संज्ञपनं); **सवि**. ८२ पृ.; **चन्द्र**.१०६ पृ.; **व्यसौ**.८,१८ पृ.; **वीमि**.; **व्यप्र**. ४३,२४८ पृ.; **व्यउ**.२७ पृ.; **व्यम**.९ पृ.; **विता**.७३,९४ पृ.; **सेतु**.९७ राजा संरक्षिता (न संज्ञा संज्ञपनं); **विव्य**.४ राजा संरक्षिता (संज्ञा संज्ञपनं); **प्रका**.२१ पृ.; **समु**.१६ पृ.

प्रतिभूग्रहणं मा प्रसाङ्क्षीदिति कार्यनिर्णय इत्युक्तमिति। अथवा कार्यस्य विवादास्पदीभूतस्य ऋणादानादेर्निर्णयार्थं प्रतिभूर्ग्राह्यः। वादिपलायने निर्णयासंभवादित्यर्थः। वीमि.

(८) 'नासिकास्तनयोर्ध्माधेटोः' इत्यादिसूत्रप्रयोगात्पूर्वनिपातशास्त्रानित्यत्वज्ञापनात्। 'तुल्यास्यप्रयत्नं सवर्णम्' इत्यादिसूत्रे प्रारम्भो यत्नस्य प्रयत्नं इति वदता श्रीमता भगवता महाभाष्यकारेण षष्ठीसमासे षष्ठ्यन्तस्यापि क्वचित् परनिपातज्ञापनाद्वा कार्यशब्दस्य परनिपातार्हस्याऽपि पूर्वनिपात इति मदनरत्नाकरः। तत्तु अनुशासनाभावे ज्ञापकानुसरणमन्यथातिप्रसङ्गादित्ययुक्तम्। व्यप्र.४३

(९) उभयग्रहणं विवादप्रयोगभेदेन। चतुर्थेऽहन्यहीनस्य गृह्यत इतिवत् उपपादनीयमित्यन्ये। व्यउ.३१-३२

## नारदः

राज्ञा व्यवहारः स्वयं नोत्पाद्यः

**न तु राजा वशित्वेन धनलोभेन वा पुनः।**
**उत्पादयेत्तु कार्याणि नराणामविवादिनाम्॥**

(१) कार्याणि विवादानित्यर्थः। स्मृच.२७

(२) एतेन स्वयमवगतोऽप्यर्थः परैरनावेदितो राज्ञा नोद्भावनीय इत्यपि सिद्धं भवति। व्यउ.२२

राज्ञा न स्वयमुत्पाद्यो व्यवहार इत्यस्यापवादः

**आज्ञालङ्घनकर्तारः स्त्रीवधो वर्णसंकरः।**
**परस्त्रीगमनं चौर्यं गर्भश्चैव पतिं विना॥**
**वाक्पारुष्यमवाच्यं यद्दण्डपारुष्यमेव च।**
**गर्भस्य पातनं चैवेत्यपराधा दशैव हि॥**

(१) एतांश्चावेदकान्विनाऽपि स्वयं राजा विचारयेदिति शेषः। स्मृच.२८

(२) विवादमन्तरेणापि दण्डनहेतुत्वादेतेषामपराधत्वम्। पमा.४४

वादिनोर्मध्ये भाषावादी कः

**आज्ञालेख्ये पट्टके शासने वा**
**आधौ पत्रे विक्रये वा क्रये वा।**
**राज्ञे कुर्यात्पूर्वमावेदनं यः**
**तस्य ज्ञेयः पूर्ववादो विधिज्ञैः॥**

(१) यो राज्ञे पूर्वमावेदयति तस्य पूर्वपक्षो ज्ञेयः। एतेन राजाज्ञा न गणिता। लेखः प्रभुसक्तलेखेनायं प्रारब्धः। पट्टकः अनेन दासी मदीयावष्टब्धा, पट्टकलिखितम्। शासनं अयं मदीयं शासनग्राममवष्टभ्य भुङ्क्ते, ममेदं शासनं तिष्ठति। आधिः अयमाधिः प्रथमं मम ऋणिकेन कृतः, तत्केन भोक्तव्यः। पत्रम्— एष मम पत्रलिखितगृहीतमपि द्रव्यं न प्रयच्छति। क्रयः अस्य हस्ताद्भाण्डं मया क्रीतं मूल्यद्रव्यं च दत्तं भाण्डं मम नार्पयति, इत्यादिकानि पूर्वपक्षस्य भाषावादिनो वा आवेदनोदाहरणानि उक्तानीति। अभा.२६

(२) आज्ञालेख इत्याज्ञालेखादिविषयं यो राज्ञे पूर्वमावेदनं करोति तस्य पूर्ववाद इत्यर्थः। व्यक.२४

(३) विवादे सर्वत्राभियोक्तुरेव प्रतिज्ञावादित्वमित्यर्थः। *स्मृच.३५

(४) पूर्ववादः प्रतिज्ञा। व्यप्र.४५

(५) तेन अनेकव्यवहारदर्शनप्रसक्तौ क्रमविधिरप्ययम्। व्यउ.३२

**यस्य वाऽभ्यधिका पीडा कार्यं वाऽभ्यधिकं भवेत्।**
**तस्यार्थिवादो दातव्यो न यः पूर्वं निवेदयेत्॥**

---

(१) **स्मृच**.२७; **स्मृसा**.८३ तु राजा वशित्वेन (राजा चरसिद्धेन) उत्पादयेत्तु कार्याणि (स्वयं कार्याणि कुर्वीत); **सवि**.७३; **व्यप्र**.३५; **व्यउ**.२२; **प्रका**.१७; **समु**.१२. (२) **शुनी**.४।५८० ज्ञाल (ज्ञोल्ल); **स्मृच**.२८; **पमा**.४४; **व्यप्र**.३७; **व्यउ**.२३; **प्रका**.१६; **समु**.१२. (३) **शुनी**.४।५८१ च्यं यत् (च्याय) हि (तु); **स्मृच**.२८ हि (तु); **पमा**.४४; **व्यप्र**.३७ शुनीवत्; **व्यउ**.२३ शुनीवत्; **प्रका**.१७ हि (तु); **समु**.१२ हि (तु).

* पमा. स्मृचगतम्।

(१) **नास्मृ**.२।३८ (आज्ञा लेखः पट्टकः शासनं वा। आधिः पत्रं विक्रयो वा क्रयो वा॥) वादो (पक्षो); **अभा**.२६ नास्मृवत्; **व्यक**.२४; **स्मृच**.३५; **पमा**.५८ (आधिः पत्रं विक्रयो वा क्रयो वा) वादो (पक्षो); **व्यसौ**.१९; **व्यप्र**.४५ तृतीयचतुर्थपादौ; **व्यउ**.३२ तृतीयचतुर्थपादौ; **विता**. ५० तृतीयचतुर्थपादौ; **प्रका**.२१; **समु**.१६.

(२) **शुनी**.४।६५३ (वर्णानुक्रमतो वाऽपि न यः पूर्वं विवादयेत्); **अप**.२।६ भ्यधिका (त्यधिका) भ्यधि (त्यधि) स्यार्थि (स्याग्र); **व्यक**.२४; **स्मृच**.३५; **पमा**.५९ वाऽभ्यधिका (स्यादधिका) र्थि (र्थं); **दीक**. ३१ वाऽभ्यधिका (चाप्यधिका)

(१) अर्थिवादः पूर्वपक्षः। स्मृच. ३५

(२) तेन प्रत्यभियोगकर्तुरेवाभियोगवादो दातव्यः न पूर्वाभियोक्तुः आयय्य (?) प्रत्यवस्कन्दनवच्च तस्याधर्यमुत्तरं प्रतिज्ञा चेति वक्तव्यम्। उत्तरत्वेन साध्यत्वं प्रतिज्ञातार्थस्यैव साध्यत्वात्। व्यनि.

(३) अत्रैव 'पूर्वपक्षो भवेत्तस्य' इति कात्यायनीये तृतीयपादः। न यः पूर्वं निवेदयेदिति तस्योत्तरः पक्ष इति शेषः। स यः पूर्वमिति पाठे यः प्रथमं निवेदयति स पूर्ववादीत्यर्थः। ×व्यत. २००

(४) अधिकं कार्यम्। अग्रे वादप्रतिबन्धिका देशान्तरगमनादिव्यावृत्तिः यत्र तत्रार्थिभाषितमप्रयोजकम्। चन्द्र. १०७

अनादेयवादः

**एकस्य बहुभिः सार्धं स्त्रीणां प्रेष्यजनस्य च।**
**अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः॥**

(१) यत्पुनः 'एकस्य' इति नारदवचनं तद्भिन्नसाध्यविषयम्। एकस्यापि—'गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः'। तथा—'एकं घ्नन्तं बहूनां च' इत्यादिस्मरणादेकार्थैर्बहुभिः सार्धं व्यवहार इष्यत एवेति। भिन्नार्थैर्बहुभिरेकस्य युगपद्व्यवहारो न भवतीति द्रष्टव्यम्। स्त्रीणामित्यपि गोपशौण्डिकादिस्त्रीणां स्वातन्त्र्याद्व्यवहारो भवत्येवेति। तदन्यासां कुलस्त्रीणां पतिषु जीवत्सु तत्पारतन्त्र्यादनादेयो व्यवहार इति व्याख्येयम्। प्रेष्यजनस्य चेत्येतदपि प्रेष्यजनस्य स्वामिपारतन्त्र्यात् स्वार्थव्यवहारेऽपि स्वाम्यनुज्ञयैव व्यवहारो नान्यथेति व्याख्येयम्। *मिता. २।५, २।३२

(२) मिता. टीका—तद्भिन्नसाध्यविषयमिति। भिन्नसाध्यानि पृथक्साध्यानि भिन्नव्यवहारविषये इति यावत्। एतदुक्तं भवति। यदा त्वेकेनैकः पुमानभियुक्तो मह्यमसौ धारयतीति, तदा तस्मिन्व्यवहारे निष्पन्ने अपरेणापरेण च पूर्वमभियुक्तो नाभियोज्य इत्येवमेकस्य बहुभिः सार्धं विवादाभावः। न त्वेवमेते मह्यं धारयन्ति शतमित्येवमेकस्य बहुभिर्विवादाभाव इति।

'गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः' इति। 'सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत्' इत्युत्तरार्धम्। 'एकं घ्नतां बहूनां च' इत्यादि। 'यथोक्ताद् द्विगुणो दमः' इति वचनशेषः। 'व्यवहार इष्यत एवेति' इति। गणद्रव्यहारिणः सर्वस्वहरणादिविधानम्। एकहन्तृणां बहूनां च द्विगुणदण्डविधानं च विद्यते। एतदुभयमपि व्यवहारमुखेन तादृशापराधवतामेव भवतीति व्यवहारोऽस्तीत्यर्थः। एकस्य बहुभिः सार्धमित्यस्य नारदवचनस्याभिप्रायमाह। भिन्नार्थैर्बहुभिरिति। पृथक्साध्यवद्भिर्बहुभिः सार्धमेकस्य युगपद्व्यवहारो न सिध्यति। अपि तु क्रमात् सिध्यतीत्यभिप्रायः। उपसंहरति। इति योजनीयमिति। अयं भावः, उन्मत्तादिव्यवहारः सर्वात्मना न सिध्यत्येव गुरुशिष्यादिकृतव्यवहारस्तु उक्तरीत्या सिध्यत्येवेति। +सुबो. २।५, २।३२

(३) प्रतिज्ञादोषा अपि वक्ष्यमाणास्तादृग्व्यवहारानादेयत्व एव पर्यवस्यन्ति। ×व्यप्र. ३५

**गुरुशिष्यौ पितापुत्रौ दम्पती स्वामिभृत्यकौ।**
**एतेषां समवेतानां व्यवहारो न सिध्यति॥**

---

× सेतु. व्यतवत्।

वाऽभ्य (चाप्य); **व्यनि.** वाऽभ्यधिका (वाप्यधिका); **स्मृचि.** ६० वाऽभ्य (चाप्य) वाऽभ्य (वाऽप्य) वादो (भावो); **व्यत.** २०० वाऽभ्य (चाभ्य) वाऽभ्य (वाऽप्य) वादो (भावो); **चन्द्र.** १०७ स्मृचिवत्; **व्यसौ.** १९ स्मृचिवत्; **व्यप्र.** ४५; **विता.** ५० र्थि (थ); **सेतु.** ९६ वादो (भावो) शेषं दीकवत्, 'स यः पूर्वं निवेदयेत्' इत्यपि पाठः; **प्रका.** २१; **समु.** १६.

(१) **विश्व.** २।५ जनस्य च (करैस्तथा) पू.; **मिता.** २।५, २।३२; **अप.** २।६ स्त्रीणां (स्त्रीभिः) जनस्य च (करैस्तथा) उदाहृतः (प्रकीर्तितः); **व्यक.** २१ पूर्वार्धं अपवत्, बृहस्पतिनारदौ; **स्मृसा.** ८५ पूर्वार्धं अपवत्, धर्मविद्भिरुदाहृतः (विद्वद्भिः परिकीर्तितः); **व्याचि.** ८ स्मृसावत्; **व्यनि.** विश्ववत्; **नृप्र.** ५; **चन्द्र.** १०४ पूर्वार्धं अपवत्, धर्मविद्भिरुदाहृतः (विद्वद्भिः संप्रकीर्तितः); **व्यसौ.** १६ पूर्वार्धं अपवत्; **वीमि.** २।५ स्त्रीणां (स्त्रीभिः) जनस्य च (करैःसह); **व्यप्र.** ३५; **व्यउ.** २१; **विता.** १९; **प्रका.** २४; **समु.** १८.

* व्यक., अप., व्यउ., विता. मितागतम्।

+ बाल. सुबोगतम्। × वाक्यार्थस्तु मितावत्।

(१) **विश्व.** २।५ (गुरुशिष्यपितापुत्रदम्पत्योः स्वामिभृत्ययोः) सिध्यति (विद्यते); **मिता.** २।३२ (गुरोः शिष्ये पितुः पुत्रे दम्पत्योः स्वामिभृत्ययोः। विरोधेऽपि मिथस्तेषां व्यवहारो न सिध्यति॥) स्मरणम्; **अप.** २।६ (गुरोः शिष्यैः पितुः पुत्रैर्दम्पत्योः

(१) एतदपि गुरुशिष्यादीनामात्यन्तिकव्यवहारप्रतिषेधपरं न भवति। तेषामपि कथंचिद्व्यवहारस्येष्टत्वात्। तथा हि—'शिष्यशिष्टिरवधेनाशक्तौ रज्जुवेणुविदलाभ्यां तनुभ्यामन्येन घ्नन् राज्ञा शास्यः' इति गौतमस्मरणात्। 'नोत्तमाङ्गे कथञ्चन' इति मनुस्मरणाच्च। यदि गुरुः कोपावेशवशान्महता दण्डेनोत्तमाङ्गे ताडयति तदा स्मृतिव्यपेतेन मार्गेणाधर्षितः शिष्यो यदि राज्ञे निवेदयति तदा भवत्येव व्यवहारपदम्। तथा—'भूर्या पितामहोपात्ता' इत्यादिवचनात् पितामहोपात्ते भूम्यादौ पितापुत्रयोः स्वाम्ये समाने यदि पिता विक्रयादिना पितामहोपात्तं भूम्यादि नाशयति तदा पुत्रो यदि धर्माधिकारिणं प्रविशति तदा पितापुत्रयोरपि भवत्येव व्यवहारः। तथा—'दुर्भिक्षे धर्मकार्ये च व्याधौ संप्रतिरोधके। गृहीतं स्त्रीधनं भर्ता नाकामो दातुमर्हति' ॥ इति स्मरणात्। दुर्भिक्षादिव्यतिरेकेण यदि स्त्रीधनं भर्ता व्ययीकृत्य विद्यमानधनोऽपि याच्यमानो न ददाति तदा दम्पत्योरपीष्यत एव व्यवहारः। तथा भक्तदासस्य स्वामिना सह व्यवहारं वक्ष्यति। गर्भदासस्यापि, गर्भदासादीनधिकृत्य 'यश्चैषां स्वामिनं कश्चिन्मोचयेत्प्राणसंशयात्। दासत्वात्स विमुच्येत पुत्रभागं लभेत च' ॥ इति नारदोक्तत्वात् तदमोचने पुत्रभागादाने च स्वामिना सह व्यवहारः केन वार्यते। तस्मात् दृष्टादृष्टयोः श्रेयस्करो न भवति गुर्वादिभिर्व्यवहार इति प्रथमं शिष्यादयो निवारणीयाः राज्ञा सभ्येनेति 'गुरोः शिष्ये' इत्यादिश्लोकस्य तात्पर्यार्थः। अत्यन्तनिर्बन्धे तु शिष्यादीनामप्युक्तरीत्या प्रवर्तनीयो व्यवहारः। *मिता.२।३२

(२) यथाशास्त्रं गुरुणा दण्डितेषु शिष्येषु तैः सह गुरोर्विवादो दण्डपारुष्ये नादेयः। एवं पुत्रादीनां पित्रादिभिः, तदुक्तं मनुना—'भार्या पुत्रश्च दासश्च शिष्यो भ्राता सहोदरः। प्राप्तापराधास्ताड्याः स्यू रज्वा वेणुदलेन वा ॥ पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कदाचन। अतोऽन्यथा तु प्रहरन्प्राप्तः स्याच्चौरकिल्बिषम्' ॥ किल्बिषं दण्डनिमित्तम्। तथा च दम्पत्योः साधारणधनत्वान्मध्यके धने विवादो नादेयः। 'तथा विवादं कुर्वीत सा भर्त्रा हीयते अपि'। इति शङ्कया विवादो नादेयः। अप.२।६

(३) तत्तु गुरुशिष्यादीनामन्योन्यमात्यन्तिकव्यवहारानुपादानपरं न भवति। तेषामपि धनिकाधमर्णत्वादिना व्यवहारनिर्वृत्तेरप्रत्यूहत्वात्। न च गुरुशिष्यत्वपितृपुत्रत्वादिप्रयुक्तव्यवहारानादेयतापरमिदमिति वाच्यम्। तादृशस्याप्यनादेयत्वे निर्णयाभावप्रसङ्गेन युक्तिविरोधात्। न चाप्रसक्त्यानुवादमात्रमनादेयत्वाभिधानमिति युक्तम्। प्रसक्तेः सत्त्वात्। (इत उत्तरं तथा हीत्यादिसंदर्भेण व्यवहारप्रकाशकारेणोपरिधृतमिताक्षरानुसारी विचार उपन्यस्तः) मदनरत्नकल्पतरुरत्नाकरेषु तु राजा यथाकथञ्चिदर्थमाकलय्य विवादोपशमं कुर्यात्, न तु प्रतिज्ञोत्तरलेखनपूर्वकं विचारं कुर्यादिति व्याख्यानम्। तदसत्। कथञ्चिदर्थानाकलने चतुष्पाद्व्यवहारप्रवर्तनस्यावश्यकत्वात्। पूर्वप्रदर्शिततात्पर्यवर्णनमन्तरा गत्यभावात्। ×व्यप्र.३३–३४

अनादेयवादापवादः

**[1]ईर्ष्यासूयासमुत्थे तु संरम्भे कामहेतुके।**
**दम्पती विवदेयातां स्वज्ञातिषु न राजनि ॥**

अनादेयवादः

**[2]पुरराष्ट्रविरुद्धश्च यश्च राज्ञा विवर्जितः।**
**अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः ॥**

इत्यस्याप्ययमर्थः। पुरराष्ट्रविरुद्धो यत्र नगरे राष्ट्रे च या व्यवस्था पुरातनी तद्विरोधापादको व्यवहारो नादेयः। पौरजानपदक्षोभापादकत्वात्। केनचिन्निमित्तेन प्राचीनोऽपि यो राज्ञा स्वराष्ट्रे प्रतिषिद्धः सोऽपि राजाज्ञाभङ्गप्रसङ्गान्नाङ्गीकर्तव्य इति। +व्यप्र.३३

---

* विता. मितागतम्।

स्वामिभृत्ययोः। एतेषु समवेतेषु व्यवहारो न विद्यते।); **स्मृसा.** ८५ (गुरुशिष्ये पितापुत्रे दम्पत्योः स्वामिभृत्ययोः); **व्यचि.** ८; **नृप्र.**८ ऽपि(तु) शेषं मितावत्; **व्यप्र.**३३ पूर्वार्धं मितावत्, उत्तरार्धे (विरोधे तु मिथस्तेषां व्यवहारो न सिध्यति) स्मरणम्; **व्यउ.**२०(=) व्यप्रवत्; **विता.**१८-१९ (=) व्यप्रवत्; **विभ.** १(=) मितावत्; **प्रका.**२४; **समु.**१८ : १९ व्यप्रवत्, मनुः.

× शेषं मितागतम्। + व्यउ. व्यप्रगतम्।

(१) **व्यक.**२१ रम्भे (रम्भं); **व्यसौ.**१६ त्थे तु (त्थेन); **विता.**२६-२७ तु (च). (२) **मिता.**२।३२ विव (विस) मनुः;

नियुक्तप्रतिनिधिजयपराजयौ नियोजकस्यैव

**अर्थिना संनियुक्तो वा प्रत्यर्थिप्रहितोऽपि वा ।**
**यो यस्यार्थे विवदते तयोर्जयपराजयौ ॥**

(१) यदि कदाचिच्छरीरापाटवाद्वा स्वयं वक्तुं निष्प्रभत्वाद्वा अर्थिना प्रत्यर्थिना वा अपटुशरीरेण करणाग्रे स्वयमेव नियुक्तो भवति । एवमुक्त्वा यथाऽस्य जयेन मम जयः, पराजयेन पराजयः । अथवा पटुशरीरेण गृहस्थितेनैव तस्यापि प्रधानपुरुषस्य हस्ते संदिश्य यः कोऽपि प्रहितो भवेत् । एवं तयोः अर्थिप्रतिहस्तकयोः करणाग्रे प्रतिष्ठतोर्यस्यार्थे विवदते तस्य जयपराजयाविति । अभा.२३

(२) नियुक्तजयपराजयौ मूलस्वामिनोरेव । *मिता.२।६

(३) स्वयमसंमर्थश्चेत् विवादकरणे अन्यद्वारेणापि कुर्यात्, तदा आहतुर्नारदकात्यायनौ–अर्थिनेति । व्यमा.२८७

(४) तयोः वादिप्रतिवादिनोः । व्यत.२००

अनियुक्तपरार्थवादी दण्ड्यः

[२]**यो न भ्राता न च पिता न पुत्रो न नियोगकृत् ।**
**परार्थवादी दण्ड्यः स्याद्व्यवहारेषु विब्रुवन् ॥**

(१) अनेके पुरुषाः कामक्रोधलोभग्रस्ताः परकीयार्थे एव संबध्यमाना अनियुक्ता अपि धनिकत्वं कृत्वा परान्विद्वेषयन्ति । तन्निवारणार्थं श्लोक इति । अभा.२४

(२) अकल्पादयः पुत्रादिकमन्यं वा सुहृदं प्रेषयेयुः न च ते परार्थवादिनः । मिता.२।५

(३) भ्रात्रादीतरस्य पक्षस्थितस्य दण्डनीयत्वमाह–यो नेति । *व्यत.२०१

(४) मिता.टीका–नियोगकृत् आज्ञाकारी । एतदन्यः परार्थवादी । स व्यवहारेषु विरुद्धं विविधं विशेषेण वा ब्रुवन् दण्ड्य इत्यर्थः । बाल.२।५

वादे विभक्ता एव प्रतिभूत्वमर्हन्ति

**साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च ।**
**विभक्ता भ्रातरः कुर्युर्नाविभक्ताः परस्परम्+ ॥**

आसेधविधिः

**वक्तव्येऽर्थे न तिष्ठन्तमुत्क्रामन्तं च तद्वचः ।**
**आसेधयेद्विवादार्थी यावदाह्वानदर्शनम् × ॥**

(१) आसेधव्यवस्थाऽप्यर्थसिद्धैव नारदेनोक्ता—'वक्तव्येर्थे' इत्यादिना । आसेधो राजाज्ञया अवरोधः । मिता.२।५

(२) आहूयतेऽनेनेति व्युत्पत्त्या राजपुरुष आह्वानः । अप. २।५

(३) वक्तव्ये सन्दिग्धे न तिष्ठन्तं निर्णयार्थमप्रवर्तमानं, न केवलं न प्रवर्तते तत्र एवोत्क्रामन्तं च यदि तद्वचस्तदा आसेधयेन्निरुन्ध्यात् । तथा यावदाह्वानदर्शनं राज्ञा यदाहूयत इत्यर्थः । ÷व्यक. २२

(४) संदिग्धेऽप्यर्थे निर्णयोदासीनं निर्णयाय प्रवर्ति-

---

* विता. मितागतम् ।

स्मृच.१२८; पमा.२१५; व्यप्र.३३ (=); व्यउ.२० (=).

(१) नास्मृ.२।२२; अभा.२३; मिता.२।६ स्मरणम्; व्यमा.२८७ नारदकात्यायनौ; व्यक.३२ कात्यायननारदौ; स्मृसा.८४ संनि (संप्र); व्यचि.९; व्यनि.; व्यत.२०० ऽपि (ऽथ); चन्द्र.३९ क्तो वा (क्तस्तु); व्यसौ.३० प्रहि (प्रेरि); वीमि.२।६ त्यर्थि (त्यर्थे); व्यम.६ व्यसौवत्; विता.५२; सेतु.९७.

(२) नास्मृ.२।२३ रेषु (रेऽपि); शुनी.४।६१३-६१४; अभा.२४ नास्मृवत्; मिता.२।५; व्यमा.२८८ न च पिता (पिता वापि) गकृत् (जितः) वादी (वादे) बृहस्पतिः; अप.२।५ (=) यो न (न च) : २।३२; व्यक.३२ नारदकात्यायनौ; स्मृच.३२; पमा.५४; स्मृसा.८४; व्यचि.१०; व्यनि. हारीतः; व्यत.२०१ न च पिता (पिता वाऽपि) गकृत् (जितः); सवि.७६; व्यसौ.३१; वीमि.२।६; व्यप्र.३६; व्यउ.२२; विता.४६; सेतु.९८ व्यतवत्; प्रका.२०; समु.१५.

* सेतु. व्यतवत् । + व्याख्यासंग्रहः स्थलादिनिर्देशश्च दायभागे द्रष्टव्यः ।

× अत्रत्यं सविव्याख्यानं पूर्वत्र 'आसिद्धमनासिद्धमेव' इति विष्णुव्याख्याने (पृ.१०७)द्रष्टव्यम् । ÷ नाभा. व्यकगतं व्यनिगतं च ।

(१) नासं.१।४१; नास्मृ.१।४७; शुनी.४।५९२-५९३ न (ह्य); अभा.१३; मिता.२।५ न (ह्य); अप.२।५ र्थी (र्थे); व्यक.२१–२२; स्मृच.२९ मितावत्; पमा.४७ व्येऽ(व्या); व्यचि.८ अपवत्; व्यनि.; स्मृचि.६ मितावत्; दवि.३३२ त्क्रा (त्क्राम); सवि.७७ मितावत्ः १६०–१६१ याव ··· दर्शनम् (वादी तत्प्रतिवादिनम्); चन्द्र.१०५; व्यसौ.१६ दविवत्; वीमि.२।६ अपवत्; व्यप्र.४१; व्यउ.२६; व्यम.५ मितावत्; विता.४३ व्येऽर्थे न (व्यार्थेष्व) र्थी (र्थे); प्रका.१८ मितावत्; समु.१३ मितावत्.

तव्यमित्यादि चार्थिनो वचनमवमन्यमाममासेधयेद्राजाज्ञया निरुन्ध्यात् व्यवहारदर्शनार्थाह्वानपर्यन्तं विवादनिर्णयार्थीत्यर्थः । *स्मृच.३०

(५) प्रथमं तावदर्थी प्रत्यर्थिनः अग्रे 'त्वयैतावन्मह्यं देयम्' इत्यादिकं कार्यं ब्रूयात् । तत्र यदि तदुक्तमनभ्युपगम्योत्क्रान्तुमिच्छेत् तदा स्वकार्यपर्यन्तं राजाज्ञया तं निरुन्ध्यात् । पमा.४७

(६) आहूयते तस्मिन्नित्याव्हानं व्यवहारः । अतो यावद्व्यवहारदर्शनमासेधः कर्तव्यः । ×व्यनि.

(७) वक्तव्ये निर्णीतव्ये । व्यप्र.४१

(८) आसेधो राजशपथः, 'दुहाई' इति प्रसिध्दः । विता.४३

चतुर्विध आसेधः

**स्थानासेधः कालकृतः प्रवासात्कर्मणस्तथा ।**
**चतुर्विधः स्यादासेधो नासिद्धस्तं विलङ्घयेत्॥**

(१) अस्मात्स्थानाद्यदि त्वमद्य गच्छसि ततस्तव राजकीयाज्ञा अयं स्थानासेध उच्यते । अस्मात्पत्तनादियन्तं कालं यावद्यदि गच्छसीत्ययं कालकृत आसेधः । यत उच्चलितस्तत्र यदि यास्यसीति प्रवासादासेधोऽयम् । अस्मिन्कर्मणि यदि लगिष्यसीति कर्मण आसेधोऽयम् । एवमयमासेधश्चतुर्विधो भवति । एतेषामेकेनाऽपि प्रकारेण आरम्भके आरब्धो य आसिद्धो न व्यतिक्रमेत्तमासेधम् । अन्यथा राजापराधपतितः संभवेदिति । +अभा.१४

(२) *स्थानासेधो यथा—नात्र गृहादौ स्थातव्यमिति ।* कालासेधस्त्वद्य त्वया न भोक्तव्यमित्यादि । प्रवासान्निषेधो यात्रानिवारणम् । कर्मणो निषेधः कृष्यादिवारणम् । अप.२।५

(३) स्थानासेधः—नास्मात्स्थानाच्चलितव्यमदत्वा यदि चलसि तदैतावान् दण्ड इति दण्डो भवति । एवं कालकृतः यददत्वा यदि भोक्ष्यसे तदैतावान्दण्ड इत्यादिरूपः । प्रवासात्—यद्यदत्वा ग्रामं गच्छसि तदायं दण्डस्तवेत्यादिरूपः । कर्मणः—यद्यदत्वाध्ययनादि करोषि तदायं ते दण्ड इत्यादिरूपः । +व्यक.२२

(४) स्थानासेधः—गृहदेवकुलादिस्थानान्न चलितव्यमित्यवरोधनम् । कालकृतः—पञ्चम्यादावात्मा दर्शयितव्यो नो चेद्राजाज्ञामुल्लङ्घितवानित्येवंविधः । प्रवासादासेधः—यात्रावारणम् । कर्मण आसेधः—पण्यप्रसारणादेः वारणम् । न पुनर्निरीक्षणादेः । ×स्मृच.३०

(५) मदीयद्रव्यप्रदाने दिनमेतन्नोल्लङ्घनीयमिति कालासेधः । अदत्वा न सन्ध्यावन्दनं कार्यमिति कर्मासेधः । सन्ध्यावन्दनादिवत् इन्द्रियनिरोधो नासेधार्हः । *पमा.४८

(६) कालकृतस्तु द्वित्रिभिरहोभिस्त्वं न करोषि तत इयान् दण्डो राज्ञे दातव्य इति । व्यनि.

(७) स्थानासेधो यावन्निर्णयमस्मात् स्थानात्पदमपि न चलितव्यमित्यादिरूपः । कालासेधः एतावन्तं कालं कार्यान्तरं न करणीयमनिर्णीयाऽमुं व्यवहारमितीदृशः । निर्णयावधि विदेशगमनं न कार्यं त्वयेत्येवंविधः प्रवासासेधः । देशकालावधिरहितो निर्णयमात्रावधिकः *स्नानादिककर्मनिरोधः कर्मासेधः ।* व्यप्र.४१

आसेद्धव्यानि द्रव्याणि

**क्षेत्रारामगृहादीनि धनधान्यादिकं तथा ।**
**अन्यायवादिनां चैतान्यासेद्धव्यानि वादिना ॥**

एतानि क्षेत्रादीनि विवादास्पदान्यासेद्धव्यानि, नान्यानि । न च क्षेत्रादिष्वपि द्रव्योत्पत्त्युपायभूतबीजावापादयो निरासेद्धव्याः । आसेध्यपराजये भोगदण्डयोर्दाप्यत्वश्रवणात्—'मिथ्याभोगे पुनर्दाप्यो भोगदण्डं

---

* सवि. (७७) स्मृचगतम् । × शेषं व्यकगतम् ।

+ अत्रत्या असहायव्याख्या जॉलिना 'अनावेद्य' (नास्मृ.१।४६) इत्यादिश्लोके नीता । सुबो.(२।५), बाल.(२।५) अभागतम् ।

(१) **नासं**.१।४२ (चतुर्विधः स्यादासेधस्तमासिद्धो न लङ्घयेत्); **नास्मृ**.१।४८; **शुनी**.४।५९४; **अभा**.१३; **मिता**.२।५; **अप**. २।५ विलङ्घयेत् (व्यतिक्रमेत्); **व्यक**.२२ नासंवत्; **स्मृच**.३० नासंवत्; **पमा**.४७ नासंवत्; **व्यनि**. नासंवत्; **स्मृचि**.६; **व्यसौ**.१६ नासंवत्; **व्यप्र**.४१;**व्यउ**. २६; **व्यम**.५ नासंवत्; **विता**.४३; **प्रका**.१८ नासंवत्; **समु**.१३.

+ नाभा.(१।४२) व्यकगतं व्यनिगतं च ।

× सवि. स्मृचगतम् । * शेषं स्मृचगतम् ।

(१) **व्यनि**. चैतान्यासेद्धव्यानि (चैव तान्यासेध्यानि); **प्रका**.१८; **समु**.१४.

च तत्समम्' इति। व्यनि.

आसेधमोक्षः

**[1]आसेद्धा तु स्वमासेधं स्वयमेवोत्सृजेद्यदि।**
**न त्वस्यातिक्रमाद्दोषो न च दण्डं प्रकल्पयेत्॥**
**[2]राज्ञो निवेदनादूर्ध्वमासेधं नोत्सृजेत्स्वयम्।**
**उत्सृजंश्च दमं दाप्य आसिद्धस्तं न लङ्घयेत्॥**

आसेधनस्य प्रागावेदनान्मोचयते आसेद्धा न दण्ड्यः, ऊर्ध्वं तूत्सृजेत् दण्ड्य एव। विवादपराजयप्राप्तमत्र दण्डशब्देनोच्यते। व्यनि.

मिथ्यासेधदोषः

**[3]मिथ्यासेधे पुनर्दाप्यो भोगदण्डं च तत्समम्॥**

आसेधातिक्रमे दोषापवादः

**[4]नदीसंतारकान्तारदुर्देशोपप्लवादिषु।**
**आसिद्धस्तं परासेधमुत्क्रामन्नापराध्नुयात्॥**

(१) नदीसंतारः पारगमनम्। कान्तारं भयानकं वनम्। दुर्देशः कुप्रदेशः। उपप्लवो देशभङ्गः शोकाद्युपप्लवो वा। ईदृशेषु प्रदेशेष्ववसरेषु च आसिद्ध आसेधं व्युत्क्रामन्नृपस्यापराधप्राप्तो न भवति। *अभा.१४

(२) कान्तारो दुर्गमो मार्गः। दुष्टचोरव्याघ्रादिदेशो दुर्देशः। उपप्लवः परबलादिभिर्व्याकुलता। स्मृच.३०

(३) संतितीर्षन् नासेध्यः साधनप्रतारकश्चेत्। पलायमानस्य नियमो नास्ति। उपप्लवादयोऽग्न्युदकमरणपरचक्रादयः। तेषु चासिद्धः,न कारणपूर्वं वारितः। परस्यासेधः परासेधः तमतीत्य गच्छन् न दण्ड्यः। नाभा.१।४३

(४) आसिद्धस्यापराधाभावमुखेन निषेध उक्तः। दुर्देशेति माधवीयपाठो दुर्दशा दुरवस्थेति तस्यार्थः। अत एवासेधानर्हासेध एव प्रत्युत दण्ड उक्तः कात्यायनेन—'आसेधयंस्त्वनासेध्यं राज्ञा शास्य इति स्थितिः' इति। *व्यप्र.४१

आसेधातिक्रमदोषः, आसेद्धृदण्डः

**[1]आसेधकाल आसिद्ध आसेधं यो व्यतिक्रमेत्।**
**स विनेयोऽन्यथा कुर्वन्नासेद्धा दण्डभाग्भवेत्॥**

(१) ये शास्त्रे निषिद्धा आसेधकालास्तैर्विना सुस्थकालस्थितो य आसिद्धः यथाप्रयोजनं संबध्यमानाऽर्थे य आसिद्धः। यस्तमासेधं न गणयति क्रामत्येव स राज्ञा स्वकीयप्रतापस्याखण्डनार्थं विनेयः विनयं ग्राह्यः। अथ कदाचिदासेधदाताऽपि च शास्त्रनिषिद्धकाले वा प्रयोजनसंबन्धरहितोऽपि वा एवमेव राजाज्ञया कस्यापि आसेधं करोति, तत एवमन्यथा कुर्वन् स एव आसेद्धा दण्डमर्हति। ÷अभा.१४

(२) विनेयो दण्ड्यः। अन्यथा कुर्वन्ननासेध्यमासेधयन्नित्यर्थः। +अप.२।५

(३) अन्यथा कुर्वन्नयोग्ये निशीथादिकाले तमासेधयन्। ×पमा.४८

(४) आसेद्धा विवादविमुखप्रत्यर्थिधर्ता अर्थी। व्यचि.८

(५) आसेध्ये वारणकाले आसिद्धः। पणपूर्वं निषिद्धो निषेधं योऽतीत्य वर्तते स दण्ड्यः। अकाले—प्रतिषिद्धे काले वारयन् वारयिता दण्ड्यः। नाभा.१।४४

---

* जॉलिना अत्रत्यं भाष्यं अन्यत्र (नास्मृ.१।४७) नीतम्।

(१) **व्यनि.** क्रमात् (क्रमे); **प्रका**.१८; **समु**.१४.

(२) **व्यनि.** सेधं (सेद्धा) स्तं (श्च); **समु**.१४.

(३) **व्यनि**.सेधे (भोगे);**प्रका**.१८ भोग (भोगं);**समु**.१४.

(४) **नासं**.१।४३; **नास्मृ**.१।४९; **शुनी**.४।६०४-६०५; **अभा**.१४; **मिता**.२।५; **अप**. २।५ राध्नु (राप्नु); **व्यक**.२२; **स्मृच**.३०; **पमा**.४८; **व्यचि**.८ तं परा(परमा); **व्यनि**.; **दवि**.३३३ तं (तु) त्काम (त्क्रोश); **चन्द्र**.१०५ पू.; **व्यसौ**.१७ उत्तरार्धे (आसेधयेदनासेधैः स दण्ड्यो न त्वतिक्रमी?); **वीमि**.२।६ व्यचिवत्; **व्यप्र**.४१'दुर्देशे'ति माधवीयपाठः; **व्यउ**.२६; **व्यम**.५; **विता**.४५; **प्रका**.१८; **समु**.१४.

* व्यउ. व्यप्रवत्।

÷ जॉलिना अत्रत्यं भाष्यं अन्यत्र (नास्मृ.१।४९)नीतम्।

\+ स्मृच., चन्द्र. अपवत्। ×सुबो.(२।५), व्यउ. पमावत्।

(१) **नासं**.१।४४ सेध (सेध्य) व्यतिक्रमेत् (ऽतिवर्तते); **नास्मृ**.१।५१; **शुनी**.४।५९६ व्यतिक्रमेत् (निवर्तते); **अभा**.१४; **मिता**.२।५ व्यतिक्रमेत्(ऽतिवर्तते); **अप**.२।५ मितावत्; **स्मृच**.३० मितावत्; **पमा**.४८ मितावत्; **व्यचि**. ८ भाग्भवेत् (मर्हति) शेषं मितावत्; **स्मृचि**.६ मितावत्, सरणम्; **दवि**.३३३ व्याचिवत्; **सवि**.७७स विने(तद्विने) शेषं मितावत्; **चन्द्र**.१०५व्याचिवत्; **वीमि**.२।६ योऽन्य(यस्त)शेषं व्याचिवत्; **व्यप्र**.४२ मितावत्; **व्यउ**.२६ व्यातिक्रमेत् (निवर्तते) कात्यायनः; **विता**.४३ मितावत्; **प्रका**.१८ मितावत्; **समु**.१४मितावत्.

(६) मिता.टीका—अन्यथा कुर्वन्निति। अनासेधकाले आसेधं कुर्वन्नासेधकर्ता दण्ड्यो भवेदित्यर्थः। यद्वा आसेद्धा आसिद्धं तं लोभादिना मुञ्चन्नित्याद्यर्थः। बाल.२।५

आह्वानासेधानर्हाः

[1]निर्वेष्टुकामो रोगार्तो यियक्षुर्व्यसने स्थितः।
अभियुक्तस्तथाऽन्येन राजकार्योद्यतस्तथा ॥
[2]गवां प्रचारे गोपालाः सस्यारम्भे कृषीवलाः।
शिल्पिनश्चापि तत्काल आयुधीयाश्च विग्रहे ॥
[3]अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती।
विषमस्थाश्च नासेध्या न चैतानाह्वयेन्नृपः* ॥

(१) निर्वेष्टुकामः परिणेतुमुद्यतः। तथा रोगार्तः। यियक्षुः यज्ञार्थमुद्यतः। व्यसनाऽभिभूतश्च यो भवति। तथाऽन्येन य आक्षिप्तः तथा गोषु गोप्रचारस्थिता गोपालाः। सस्यारम्भकाले कृषीवलाः। शिल्पिनश्च प्रतिष्ठाकाले। आयुधधारिणो विग्रहकाले।

अप्राप्तव्यवहारः पोगण्डः। दूतः राजकार्योद्यतः अन्यत्रेरितकार्यो दूतो वा। दानोन्मुखः पर्वनिमित्तकाले। व्रती निमित्तगृहीतव्रतस्थः। विषमस्थश्च तत्काले राजदैविकाऽभिभूतः। एते सर्वेऽपि एवंस्थिताः कार्यकर्त्रा बलेनाऽपि नासेधनीयाः। न च राजच्छलपतिता भवन्तीति। अथवा उक्ता बलेन आवेदिता भवन्ति। तत एवम्भूतान् राजाऽपि ज्ञात्वा नाह्वयेदिति। अभा.१४-१५

(२) अप्राप्तव्यवहारः आषोडशवयस्कः। सुव्यक्तमपरम्। एते तूर्णं मनुष्यादिना अनासेध्याः न विधारणीयाः। निवेदितेऽपि वादिना विवादे नाह्वयितव्याः। तत्तत्कार्यसमाप्तिपर्यन्तं, तत्तत्कार्यविरोधादेव। तदधिककार्यविरोधे विवादनिवेदकस्य वा तदा आसेद्धव्या एव राज्ञा चाह्वयितव्या न्यायमूलत्वाद्वचनानाम्। व्यमा.२८७

(३) निवेष्टुकाम इत्यादयस्त्रयः श्लोका एकवाक्यार्थाः। निवेष्टुकामो विवाहाभिमुखो नक्षत्राद्यतिपाताद् आतन्निवृत्तेर्नासेध्यः। रोगार्त आसिद्धो म्रियेत वारितो दौर्बल्यादिना भेषजातिक्रमेण वा। यियक्षुर्यष्टुकामः साधुत्वात् धर्मविरोधाच्च। व्यसने स्थितः स्वजनवियोगादौ दुःखितत्वात् साहाय्यकालत्वाच्च। अभियुक्तोऽन्येन व्यवहारेण लेखितस्तत्र बद्धत्वादस्वतन्त्र इति। राजकार्यार्थमुद्यतो राजकार्योद्यतः। बलवतावष्टब्धत्वादस्वतन्त्रत्वाच्च आ तन्निवृत्तेरिति द्रष्टव्यम्। गवां प्रचारे अटव्याम्। प्रचरन्ति यस्मिन्निति प्रचारः।

---

* 'निर्वेष्टुकामो रोगार्त' इत्यादिश्लोकत्रयस्य व्यचि., व्यत., सेतु.एषां व्याख्या पूर्वव्याख्यासु गतार्था।

(१) **नासं**.१।४५ निर्वे (निवे); **नास्मृ**.१।५२; **शुनी**.४।६०१-६०२; **अभा**.१४ नासंवत्; **मिता**.२।५; **व्यमा**.२८६; **अप**.२।५ नासंवत्; **स्मृच**.३१:३३ नासंवत्; **पमा**.४९ नासंवत्; **व्यचि**.९ कार्यो (कर्मो); **व्यनि**. नासंवत्; **स्मृचि**.६ नासंवत्; **दवि**.३३३; **व्यत**. २०१ व्यचिवत्; **चन्द्र**.१०५-१०६ यियक्षु (विबन्धु) राज (कार्या); **व्यसौ**.१८ नासंवत्; **वीमि**.२।६ (अभियुक्तस्तु न्यायेन बीजकर्मोद्यतस्तथा); **व्यप्र**.३९; **व्यउ**.२४ नासंवत्; **विता**.४५ नासंवत्; **सेतु**.९८ व्यचिवत्; **प्रका**.१९ नासंवत्; **समु**.१४ नासंवत्.

(२) **नासं**.१।४६ रम्भे (बन्धे); **नास्मृ**.१।५३ काल (कालं); **शुनी**.४।६०२-६०३ रम्भे (वापे) काल (कालं); **अभा**. १४ नास्मृवत्; **मिता**.२।५ रम्भे (वापे) काल (कालं); **व्यमा**.२८७ सस्यारम्भे (शस्यवृन्दे); **अप**.२।५ सस्यारम्भे (सस्यकाले); **व्यक**.२३; **स्मृच**.३१,३३ नास्मृवत्; **पमा**.४९ पालाः (पालः); **व्यचि**.९; **व्यनि**.; **स्मृचि**. ६ पूर्वार्धं मितावत्; **दवि**.३३३ सस्यारम्भे (शस्यबन्धे) काल (कालं); **व्यत**.२०१ सस्यारम्भे (शस्यबन्धे); **चन्द्र**.१०६ व्यतवत्; **व्यसौ**.१८ काल (कालं) शेषं व्यतवत्; **वीमि**.२।६ नासंवत्; **व्यप्र**.३९ मितावत्; **व्यउ**.२४ मितावत्; **विता**.४५ (गवां प्रचारण पालः सस्यपालः कृषीवलः) काल (कालं) च वि(स्ववि); **सेतु**.९८ नासंवत्; **प्रका**.१९ नास्मृवत्; **समु**.१४ नास्मृवत्.

(३) **नासं**.१।४७ स्था (स्थ) ताना(नाना); **नास्मृ**.१।५४ स्था (स्थ) ध्या (ध्यो); **शुनी**.४।६०३-६०४; **अभा**.१४; **मिता**.२।५०; **व्यमा**.२८७ न चैतानाह्व (नैतानावाह); **अप**.२।५ न चैतानाह्व (नैतानाह्वाय); **व्यक**.२३ न्मुखो (द्यतो); **स्मृच**.३१,३३; **पमा**.५०; **स्मृसा**.८५; **व्यचि**.९; **व्यनि**. नासंवत्; **स्मृचि**. ६ चै (वै) शेषं व्यकवत्; **दवि**. ३३४ स्था (स्थ); **व्यत**.२०१ ताना (तान्ना); **चन्द्र**.१०६ स्थाश्च (चापि) ध्या (ध्यो) चै (त्वे); **व्यसौ**.१८ व्यकवत्; **वीमि**.२।६ प्रा (वा) मस्थाश्च (यस्थाच्च); **व्यप्र**.३९,२६३; **व्यउ**.२४ दानो (देयो); **विता**.४५,५१२; **राकौ**.३९७; **सेतु**.९८ खो (खी); **प्रका**.१९; **समु**.१४ सेतुवत्.

तत्र गवां प्रमादभयात् गोपालो नासेध्य आग्रामप्रवेशात् । सस्याबन्धे कृषीवलाः । सस्यस्याबन्धः संग्रहः । आरम्भसंग्रहयोः आ फलप्रदानादित्यर्थः । तत्रासेधे सस्यनाशात् कुटुम्बनाशः राजार्थहानिश्च । तस्मात् तत्र कृषीवला नासेध्याः । शिल्पिनस्तक्षायस्कारतन्तुवायादयः । शिल्पकाले आजीवनहानिः । आयुधीयाश्चोपस्थिते युद्धे परचक्रतः प्राणभयात् साधारणप्रयोजनोपस्थानाच्च । अप्राप्तव्यवहार आ षोडशात् धर्षादज्ञानादनासेध्यः। धनिने च तद्धनं राज्ञा दाप्यः अन्यथा धनिनो धनहानिः स्यात् (?) अव्यवहार्यो दूतः राजकार्यगरीयस्त्वात् । दानोन्मुखः श्राद्धब्राह्मणभोजनाद्यभिमुखः, निमन्त्रितेषु ब्राह्मणेषु धर्मलोपात् । व्रती नियमस्थ आरब्धपारायणचान्द्रायणादिकसाधनः। तत्र संभाषणादिप्रतिषेधात् । विषमस्थश्च राजकुलचोरादिना आहृतसर्वस्वः दातुमशक्यत्वात् , दापयितुमपि निर्धनत्वात्, कर्मणा समीकरणेऽपि कुटुम्बविनाशात् । न चैनानाह्वयेद् राजा, एतेषां बलवदवष्टब्धत्वात् । उत्तरकाल आसेधाह्वाने कर्तव्ये । नाभा. १।४५–४७

(४) एते च कालान्तर आह्वातव्याः । यदा तु तत्कालाह्वानमावश्यकं तदा पुत्रादयस्तत्प्रतिनिधयः । व्यप्र. ३९

आह्वाननिषेधप्रतिप्रसवः

[1]**देशं कालं च विज्ञाय कार्याणां च बलाबलम् ।**
**अकल्पादीनपि शनैर्यानैराह्वानयेन्नृपः ॥**

(१) यानैः शिबिकादिभिः । अप. २।५

(२) यदा त्वकल्पादिप्रहितप्रतिनिधिना न कार्यनिष्पत्तिः, तदा अकल्पादीनामप्याह्वानं कार्यम्। स्मृच. ३३

(३) देवब्राह्मणराजद्रोहादकल्पबालस्थविरादीनां स्वरूपेणाव्हानमित्यर्थः । व्यनि.

कार्योत्तरमासेधनिषेधः

[1]**संभूतेऽर्थे य आसिद्धः प्रत्यासेधयते स तम्।**
**शास्यो भवेत्तदा दण्डयो ह्यसंभूते स एव तु ॥**

## बृहस्पतिः

परनिवेदित एव वादो ग्राह्यः

[2]**अष्टादशपदो वादो विचार्यो विनिवेदितः ।**

राज्ञा स्वयं ग्राह्यवादस्थानानि

**सन्त्यन्यानि पदान्यत्र तानि राजा विशेत्स्वयम्॥**
[3]**षड्भागकरशुल्कं च समयातिक्रमो निधिः ।**
**वधः संग्रहणं स्तेयमासेधाज्ञाव्यतिक्रमः ॥**

(१) एतानि पदानि राजैव विशेत् । राज्ञैव स्वयमनुसरणीयमिति । अष्टादशविवादास्त्वर्थिनिवेदिता एवानुसरणीयाः । 'स्वयं नोत्पादयेत्कार्यं राजा वा नाऽस्य पूरुषः' इत्यादिकमपि एतद्विषयम् । व्यमा. २९६

(२) अन्यानि करशुल्कादीनि, विशेत् अवेक्षेत । व्यक. १९

[4]**पीडितः स्वयमायातः शालीनोऽर्थी यदा भवेत्।**
**प्राड्विवाकस्तु तं पृच्छेत्पुरुषो वा शनैः शनैः॥**

(१) शालीनो निर्णयशालायां लीनः उपस्थित इत्यर्थः । पुरुषो राजवर्जितः । व्यमा. २८६

(२) शालीनः प्रगल्भः । व्यक. १९

आत्मकृतप्राड्विवाकनिवेदितवादो न द्रष्टव्यः किं तु परनिवेदितवादो द्रष्टव्य एव

[5]**आगतानां विवदतामसकृद्वादिनां नृपः ।**
**वादान् पश्येन्नात्मकृतान् न चाध्यक्षनिवेदितान्॥**
[6]**अर्थिनश्च वचः कार्यं वचः प्रत्यर्थिनस्तथा ।**
**परीक्ष्य पदमादद्यादन्यथा नरकं व्रजेत् ॥**

---

(१) **मिता.** २।५ देशं कालं (कालं देशं) बलम् (बले) स्मृत्यन्तरम्; **अप.** २।५ ह्वान (नाय); **स्मृच.** ३३ नये (पये) हारीतः; **पमा.** ५०; **व्यनि.** नये (येये) क्रमेण बृहस्पतिः; **स्मृचि.** ५-६ ह्वान (कार) कात्यायनः; **नृप्र.** ७ कालं (बलं) नये (येये); **व्यप्र.** ४० देशं कालं (कालं देशं) क्रमेण बृहस्पतिः; **व्यउ.** २५ क्रमेण बृहस्पतिः; **व्यम.** ५ पूर्वार्धं व्यप्रवत्, यानै (शनै); **प्रका.** १९ व्यनिवत्; **समु.** १५ व्यनिवत्.

(१) **व्यक.** २२ कात्यायनः; **व्यसौ.** १७. (२) **व्यमा.** २९६; **व्यक.** १९ तानि (यानि); **व्यसौ.** १४ व्यकवत्. (३) **व्यमा.** २९६ करशुल्कं च (हरणं शुध्दं) संग्रह (संहर); **व्यक.** १९; **व्यसौ.** १४ निधिः (निधेः).
(४) **व्यमा.** २८६ नोऽर्थी (नोऽथ) तं पृच्छेत् (पृच्छेत); **व्यक.** १९; **पमा.** ५२ शालीनो (शास्त्रेणा); **व्यसौ.** १४; **प्रका.** १९ शालीनो (शास्त्रेण); **समु.** १४ प्रकावत्. (५) **व्यमा.** २८६; **व्यक.** १९ तानां (मानां); **पमा.** ५२; **व्यसौ.** १४ व्यकवत्; **प्रका.** १९ न्ना (दा); **समु.** १४ न्नात्मकृ (दात्मग). (६) **व्यक.** २०; **व्यसौ.** १५.

पदं ऋणादानादि, आदद्यात् निर्णयत्वेन स्वीकुर्यात्। व्यक.२०

अनेककार्ययौगपद्ये वादक्रमः

[1]अहंपूर्विकया यातावर्थिप्रत्यर्थिनौ यदा।
वादो वर्णानुपूर्व्येण ग्राह्यः पीडामवेक्ष्य वा॥

(१) ब्राह्मणस्याऽप्यन्येन शूद्रस्याऽप्यन्येन विवादे वचनमिदम्। अर्थिप्रत्यर्थिनाविति अर्थिगणाविति ज्ञेयम्। अन्यथा वर्णानुपूर्व्येणेति न स्यात्, ब्राह्मणं प्रति शूद्रस्याप्युत्तमर्णस्यार्थिनः पूर्ववादावश्यम्भावात्। व्यमा.२९०

(२) यत्रोभयोरर्थित्वं प्रत्यर्थित्वं च साध्यभेदाद्भवति तत्र कोऽग्रवादीत्यपेक्षिते बृहस्पतिराह—अहमिति। अप.२।६

(३) समानवर्णत्वेऽपि पीडापेक्षया ग्राह्यः। +स्मृच.३५

(४) यत्र द्वावेव वदतः, प्रभो मद्वाक्यं शृणु इति तत्र ब्राह्मणादिक्रमेणाधिकपीडादर्शनेन वा वादो ग्राह्यः। व्यत.२००

(५) ग्राह्यपीडावेक्षणं समानवर्णयोरिति ध्येयम्। सवि.८३

अनादेयवादः

[2]गुरुशिष्यौ पितापुत्रौ दम्पती स्वामिभृत्यकौ।
एतेषां समवेतानां व्यवहारो न सिध्यति×॥

(१) एतच्चाल्पापराधविषयम्। यदि पुनराचार्योऽनुचितदण्डेन शिष्यं दण्डयति, पिता वा व्यसनाविष्टः सर्वस्वं वेश्याकिरातादिभ्यो दातुमिच्छति, एकपुत्रं एव वा पुत्रं विक्रेतुं दातुं वा इच्छति, पतिर्वा पतिव्रतां, परम्परागतं विनीतं दासं वा भृत्यर्थं विक्रेतुमिच्छति। एवमादिव्यवहारो द्रष्टव्य एव, अन्यथा अनुचितक्रियाप्रवृत्तस्य राज्ञोऽधर्मापत्तेः। अवश्यं ज्ञात्वा दण्डस्य कर्तव्यत्वात्। तथा यमः—'भार्या पुत्रश्च दासश्च दासी शिष्यश्च पञ्चमः। प्राप्तापराधास्ताड्याः स्यू रज्वा वेणुदलेन वा॥ अधस्तात्तु प्रहर्तव्यं नोत्तमाङ्गे कदाचन। अतोऽन्यथा प्रवृत्तस्तु यथोक्तं दण्डमर्हति'॥ तथा कात्यायनः—'न भर्ता नैव च सुतो न पिता भ्रातरो न च। आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः॥ यदि ह्येकतरो ह्येषां भक्षयेत्स्त्रीधनं बलात्। सवृद्धिं प्रतिदाप्यः स्यात् दण्डं चैव समाप्नुयात्'॥ तदेवमादयो विवादा द्रष्टव्या एव। कथमन्यथा तत्र दण्डविधानम्। व्यमा.२८५-२८६

(२) गुरुशिष्यादीनां विवादो भाषोत्तरश्रवणपूर्वकं राज्ञा न विचारणीयः। किन्तु केनापि प्रकारेण तमर्थं स्वयमवगम्य यथावस्तु व्यवस्थाप्य विवादमुपशमयेदित्यर्थः। व्यक.२१

(३) अनादेयवाददर्शने न पापं न वा न्यायगृहीतब्राह्मणादिप्राणत्यागे वधभागिता, अनादेयताप्रतिपादनात्। चन्द्र.१०४

[1]एकस्य बहुभिः सार्धं स्त्रीभिः प्रेष्यकैस्तथा।
अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः*॥
[2]एवं परीक्षितं सभ्यैः पूर्वपक्षे तु लेखयेत्।
अप्रसिद्धं पुरद्विष्टं विवादं न विचारयेत्॥

आह्वानविधिः

[3]यस्याभियोगं कुरुते तत्वेनाशङ्कयाऽथवा।
तमेवाह्वानयेद्राजा मुद्रया पुरुषेण वा॥

+ पमा. स्मृचवत्। × अत्रत्यं व्यवहारप्रकाशव्याख्यानं 'गुरुशिष्यौ' इत्यादिनारदश्लोके (पृ.११५) द्रष्टव्यम्।

(१) **व्यमा**.२९० व्ये (वें) वा (च); **अप**.२।६ वा (च); **व्यक**.२४; **स्मृच**.२५ व्ये (वें) वे (पे); **पमा**.५९; **स्मृचि**.३७ याता (जाता) वादो (वादी); **व्यत**.२०० व्ये (वें); **सवि**.८३ याताव (तावद); **चन्द्र**.१०५ व्यतवत्, उत्त.; **व्यसौ**.१९; **व्यप्र**.४५ यदा (तथा) वा (च): ६५ वा (च); **व्यउ**.३२ व्यमावत्; **व्यम**.६ पूर्व्ये (रूपे); **विता**.५० व्यमवत्, उत्त.; **प्रका**.२१; **समु**.१६.

(२) **व्यमा**.२८५; **व्यक**.२१ सिध्यति (विद्यते); **दीक**.३१; **चन्द्र**.१०४ ती (त्योः) कौ (योः) तेषां (षां तु); **व्यसौ**.१६ व्यकवत्; **वीमि**.२।५; **व्यप्र**.३४ व्यकवत्; **विव्य**.३ व्यकवत्.

* व्याख्यासंग्रहः 'एकस्य' इति नारदश्लोके (पृ.११४) द्रष्टव्यः।

(१) **व्यक**.२१ बृहस्पतिनारदौ; **चन्द्र**.१०४ धर्मविद्भिरुदाहृतः (विद्वद्भिः संप्रकीर्तितः); **व्यसौ**.१६; **वीमि**.२।५ तथा (सह) धर्मविद्भिरुदाहृतः (विद्वद्भिः परिकीर्तितः).

(२) **व्यक**.२१. (३) **शुनी**.४।५९७; **व्यमा**.२८६ तत्वेनाशङ्कयाऽथवा (तथ्येन शङ्कयाऽपि वा) वाह्वान (व चाल); **अप**.२।५ तत्वे (तथ्ये) थवा (पि वा) ह्वान (नाय); **व्यक**.२१ वाह्वान (व साध); **स्मृच**.३२ तत्वे (तथ्ये) ह्वान (नाय); **पमा**.५० तत्वे (सत्ये) ह्वान (नाय); **व्यनि**. पमावत्; **दवि**.

(१) उत्तरदाने तस्यैवाधिकारादित्यभिप्रायः।

स्मृच.३२

(२) तौ शङ्किताभियुक्तनिश्चिताभियुक्तावित्यर्थः। एवकारेण तत्प्रेषितपुरुषान्तरनिवृत्तिः। 'अधिकारोऽभियुक्तस्य नेतरस्यास्त्यसंगतेः' इति कात्यायनेन तस्यैवोत्तरदानेऽधिकारोक्तेः।

व्यउ.२४

आह्वानातिक्रमदोषः

**[1]आहूतो यस्तु नागच्छेद् दर्पाद्बन्धुबलान्वितः।**
**अभियोगानुरूपेण तस्य दण्डं प्रकल्पयेत्॥**

आह्वानासेधानर्हाः

**[2]सत्रोद्वाहोद्यतो रोगी शोकार्तोन्मत्तबालकाः।**
**मत्तो वृद्धोऽभियुक्तश्च नृपकार्योद्यतो व्रती॥**
**[3]आसन्ने सैनिकाः संख्ये कर्षको वापसंग्रहे।**
**विषमस्थाश्च नासेध्याः स्त्रीसनाथास्तथैव च॥**

(१) संख्ये संग्रामे। वापसंग्रहे अन्नादिशस्यसंबन्धे।

व्यक.२३

(२) वापसंग्रह इत्येकवद्भावो द्वन्द्वे। तथा च बीजवापे तत्संग्रहे चेत्यर्थः। स्त्रियः सनाथाश्चेत्ययमपि द्वन्द्वः। स्त्रियः कुलस्त्रियः। अन्यासामाह्वानवदासेधेऽप्यविरोधात्। सनाथाः परतन्त्राः भृत्यादयः स्वाम्याद्यनुमतिमन्तरेण नासेध्याः। स्त्रिया सह रहसि स्थिताः स्त्रीसनाथास्तत्काले नासेध्या इति तु पौरस्त्याः। आसेधस्य कालान्तरेऽपि संभवादनुचितदेशकालावस्थास्वासेधकृतासेध्यपीडातिशयप्रसक्तौ वा नासेधः कार्यस्तादृशासेधे चासेद्धा दण्ड्यो नासेध्यस्तदनतिक्रमकरणात्। यथोचितासेधे तदतिक्रमे स दण्ड्य इति सकलवचनतात्पर्यम्। अत एवार्थसिद्धानामपि केषाञ्चिदासेधानासेधनिमित्तानां प्रपञ्चनम्।

व्यप्र.४२

(३) आसेधः आह्वानपरोऽपि।

विता.४०

**[1]वणिग्विक्रीतपण्यस्तु सस्ये जाते कृषीवलः।**
**सत्रोद्वाहोद्यताश्चैव दापनीयाः कृतक्रियाः॥**

कदा तर्हि द्रव्यं दापनीयमित्याकाङ्क्षायां बृहस्पतिराह-वणिगिति।

पमा.५०

असमर्थानां वादप्रतिनिधिर्ग्राह्यः

**[2]अप्रगल्भजडोन्मत्तवृद्धस्त्रीबालरोगिणाम्।**
**पूर्वोत्तरं वदेद्बन्धुर्नियुक्तोऽन्योऽथवा नरः॥**

(१) पूर्वं चोत्तरं च पूर्वोत्तरं तेन नियुक्तोऽनियुक्तो वा तद्धितैषी संभायामुत्तरं वा ब्रूयात्। 'यो यस्यार्थे' इति तद्वचनात् अर्थवादविषयं चैतत् अन्यत्र प्रतिनिध्यपवादः।

व्यमा.२८७

(२) एतेषां भाषामुत्तरं च अनियुक्तो नियुक्तो वा हितो ब्रूयादित्यर्थः।

व्यचि.९

(३) बन्धुः पुत्रादिः, तस्य परार्थवादित्वाभावात्। नियुक्तश्च तत्त्वादेव।

व्यप्र.४०

---

१३२ तत्वे (तथ्ये) थवा (पि वा) ह्वान (सेध); **नृप्र.**७ तत्वे (सत्ये) ह्वान (नाय); **सवि.**७९ गं (गे) तत्वे (तथ्ये) थवा (पि वा) ह्वान (कार); **व्यसौ.**१६ अपवत्; **व्यप्र.**३९; **व्यउ.**२४ तमेवा (तावेवा); **विता.**३९ अपवत्; **प्रका.**१९ ऽथवा (तथा) शेषं पमावत्; **समु.**१५ पूर्वार्धे अपवत्, ह्वान (ह्वाय).

(१) **शुनी.**४।६१८-६१९ यस्तु (यत्र); **व्यमा.**२८६ दर्पाद्बन्धु (गच्छेद्दर्प) रूपे (पूर्वे); **स्मृच.**३४; **पमा.**५१; **नृप्र.**७ दर्पाद्बन्धु (दण्ड्यो बहु) पू.; **सवि.**८१; **व्यप्र.**४० यस्तु (यत्र); **व्यम.**५ यस्तु (यत्र) बला (कुला); **प्रका.**२०; **समु.**१५. (२) **व्यक.**२३ सत्रो (शास्त्रो) वृद्धोऽभियुक्तश्च (द्युक्तोऽतिवृद्धश्च); **स्मृच.**३० सत्रो (समु); **पमा.**४९ ऽभि (ऽनु); **व्यसौ.**१७ सत्रो (शास्त्रो); **व्यप्र.**४२ व्यसौवत्; **व्यउ.**२६ व्यसौवत्; **विता.**४० सत्रो (शाखो); **प्रका.**१९ स्मृचवत्; **समु.**१४ काः (कः) अभि (अनि). (३) **व्यक.** २३ सन्ने सैनिकाः (सन्नसैनिकः) सेध्याः (सेध्यः); **स्मृच.** ३१ काः (कः) वाप (वाऽप) ध्याः (ध्या) स्त्रीसनाथाः (स्त्री सनाथा); **पमा.**४९ काः (कः); **व्यसौ.**१७-१८ सन्ने (सन्नाः); काः (कः) **व्यप्र.**४२ पमावत्; **व्यउ.**२६ वा (ता); **विता.**४० न्ने (न्न) काः (कः) र्ष (र्षु); **प्रका.**१९ काः (कः) **समु.**१४ स्मृचवत्.

(१) **व्यक.**२३-२४ सत्रोद्वाहोद्यताश्चैव (शस्त्रोद्यताद्यास्तु तथा) नीयाः (नीयौ); **स्मृच.**३१ द्वाहोद्यता श्चैव(द्यताश्चापि तथा); **पमा.**५० स्मृचवत्; **स्मृचि.**१४ स्मृचवत्; **व्यसौ.** १८ श्चैव (श्चैते) दाप (पाल); **प्रका.**१९ स्मृचवत्.

(२) **शुनी.**४।६०८-६०९; **व्यमा.**२८७ नरः (परः); **अप.**२।३२; **व्यक.**३१; **स्मृच.**३३; **व्यचि.**९ बन्धुर्नियुक्तोऽन्यो (तद्वदनियुक्तो); **दवि.**३३६; **व्यसौ.**३०; **वीमि.**२।६ व्यचिवत्; **व्यप्र.**४०; **व्यउ.**२५ त्तरं (त्तरो) अन्योऽथवा नरः (वार्थवान्नरः); **व्यम.**६; **विता.**४७; **प्रका.**२०; **समु.** १५; **विव्य.**४.

(४) पूर्वः पित्रादिः । उत्तरः पुत्रादिः । अन्योऽर्थवान् धुरीण इत्यर्थः । व्यउ.२५

[१]ऋत्विग्वादे नियुक्तश्च समौ संपरिकीर्तितौ ।
यज्ञे स्वाम्याप्नुयात्पुण्यं हानिं वादेऽथवा जयम् ॥
[२]पूर्वोत्तरेऽभिलिखिते यत्र वादी प्रमीयते ।
प्रत्यर्थी वा सुतस्तस्य व्यवहारं विशोधयेत् ॥
[३]अनिर्णीते विवादे तु विप्रलब्धो भवेन्नरः ।
जयदानं समं न स्यात् तस्मात्कार्याणि निर्णयेत् ॥
[४]योऽदत्तव्यवहारत्वादनियुक्तः प्रवर्तते ।
वचनं तस्य न ग्राह्यं लिखितप्रेषिताद‍ृते ॥

अर्थवादेऽपि विशेषमाह बृहस्पतिः—योऽदत्तेति । लिखितं सम्यङ्निरूपितं, प्रेषितं मध्यस्थजनसन्निधौ । व्यमा.२८८

## कात्यायनः

राज्ञा स्वयं नोत्पाद्यो व्यवहारः

[५]न राजा तु वशित्वेन धनलोभेन वा पुनः ।
स्वयं कर्माणि कुर्वीत नराणामविवादिनाम् ॥

परेणाऽत्र पराजयावधारणात् राज्ञा च स्वयं विवादो नोत्थापनीयः । यदाह कात्यायनः—न राजेति । व्यमा.२८५

स्तोभकसूचकयोर्भेदः

[६]शास्त्रेण निन्दितं त्वर्थमुख्यो राज्ञाऽप्रचोदितः ।
आवेदयति यः पूर्वं स्तोभकः स उदाहृतः ॥
नृपेणैव नियुक्तो यः परदोषमवेक्षितुम् ।
नृपस्य सूचयेत् ज्ञात्वा सूचकः स उदाहृतः ॥

(१) अर्थमुख्यः अर्थप्रधान इत्यर्थः । स्मृच. २८

(२) शास्त्रेण निन्दितं छलादिकमर्थम् । मुख्यो धनलाभश्च प्रधानः । पमा.४५

(३) शास्त्रेण निन्दितं छलादिकम् । अर्थो मुख्यः प्रयोजनं यस्य धनलाभप्रयोजनक इति यावत् । राजनियोगानपेक्ष एव यः परापराधं राज्ञो निवेदयति स स्तोभकः । यस्तु तन्नियोगेन निवेदयति स सूचक इत्यनयोर्भेदः । व्यप्र.३८

गृहीतग्रहणो न्यायो न प्रवर्तते

[१]गृहीतग्रहणो न्यायो न प्रवर्त्यो महीभृता ।
तस्य वा तत्समर्प्यं स्यात्स्थापयेद्वा परस्य तत् ॥

(१) वादिनश्च गृहीतबन्धके राज्ञः कर्तव्यमाह कात्यायनः—गृहीतेति । ग्रहणं बन्धकं तत् तस्मिन्नेव समर्पणीयम् । यद्यसौ प्रत्ययितः । असत्यत्वे तु मध्यस्थे स्थापनीयम् । स्वयमेव चार्थिनः समुपस्थितत्वात् प्रत्यर्थिविषयत्वं गृहीतग्रहणो न्यायो न प्रवर्तेत इत्यस्य वचनस्य । यदा तु प्रतिवादी समयं कृत्वा रजतं बन्धकीकृत्य पञ्चकार्षापणीं गृहीतवान्, तस्मिन्नेव समये पञ्चकार्षापणीं दत्वा रजतं पुनर्गृहीतवान्, तस्मिन्नेव रजते प्रत्यक्षीकृते एवंविधो विवादो न प्रवर्तनीयो राज्ञेति वचनार्थः । व्यमा.२८७

(२) गृहीतग्रहण इत्यत्र अर्थिना यत्स्वकार्यसिध्यर्थं प्रत्यर्थिनो धनमाहृतं तद्ग्रहणमभिप्रेतम् । ×व्यक.२४

---

(१) **व्यमा**.२८७; **व्यक**.३२ स्वाम्या (स्वमा) हानिं (हीन); **व्यत**.२००; **व्यसौ**.३० कीर्ति (कल्पि); **सेतु**.९७; **विव्य**.४. (२) **व्यक**.३२ सुतस्तस्य (स्वतस्ताभ्यां); **स्मृचि**.४१; **व्यसौ**.३१ ऽभिलिखिते (अभिहिते) तस्य (ताभ्याम्); **विता**.४९ र्थी वा (र्थिना). (३) **व्यक**.३२ समं (दमो) कार्याणि नि (कार्यं विनि); **व्यसौ**.३१ नरः (नृपः); **स्मृचि**.४१ (तदा जनपदं गत्वा तस्मात्कार्यं विनिर्णयेत्). (४) **व्यमा**. २८८.

(५) **व्यमा**.२८५ लो (ला) नराणा (नवाग); **व्यक**.१९ वशित्वे (विशिष्टे) दिना (दता); **मनु**.८।४३; **स्मृचि**.५ वशित्वे (विशिष्टे); **व्यसौ**.१४ वशित्वे (विशिष्टे).

(६) **शुनी**.४।५६७-५६८ तं...ख्यो (तस्त्वर्थी नापि)ऽप्र (प्र) यः (यत्); **स्मृच**.२८ मुख्यो राज्ञा (मुख्यश्चार्थ); **पमा**.४५ त्वर्थमुख्यो राज्ञा (त्वर्थमुख्यश्चार्थः); **व्यप्र**.३८ यः (यत्); **व्यउ**.२३ स्तोभ (लोभ); **प्रका**.१७ स्मृचवत्; **समु**.१३ स्मृचवत्. (१) **शुनी**.४।५६८-५६९ (नृपेण विनियुक्तो यः परदोषानुवीक्षणे) परस्य (पं सं); **स्मृच**.२८; **पमा**.४५ सूचयेत् (समयं); **व्यप्र**.३८ णैव (ण वि) षमवेक्षितुम् (षानवेक्षणे); **व्यउ**.२३ णैव (णावि) षमवेक्षितुम् (षान्ववेक्षणे); **प्रका**.१६; **समु**.१३.

× स्मृसा. व्यकवत् ।

(२) **व्यमा**.२८७ वर्त्यो (वृत्या) भृता (भुजा) स्य वा (स्यैव) रस्य (रत्र); **व्यक**.२४ भृता (भुजा); **स्मृच**.३५ न्यायो (ऽ न्याये); **स्मृसा**.८८ भृता (भुजा) स्य वा (स्यैव); **व्यचि**.९ व्यकवत्; **व्यसौ**.१९ स्मृसावत्; **वीमि**. २।६ व्यचिवत्; **चन्द्र**.१०७ भृता (भुजा) स्थापयेद्वा (स्थाप्यं वापि); **प्रका**.२१ स्मृचवत्; **समु**.१६ स्मृचवत्.

(३) तथा परित्याजितगृहीतद्रव्य एव वादी न्याये प्रवर्त्य इत्याह स एव–गृहीतेति। परस्य मध्यस्थस्य समीप इति शेषः। स्मृच.३५

(४) ग्रहणं विवादपदं वस्तुतः प्रतीतिपक्षे प्रत्यर्थिनि। अन्यथा मध्यस्थे यावद्विचार (रं) धार्यम्। व्यचि.९

(५) अर्थिना प्रत्यर्थिसकाशाद्विवादपदमानीयते, तदा यावत्तत्प्रत्यर्थिनि मध्यस्थे वा न समर्प्यते तावद्विवादो न द्रष्टव्यः। गृहीतेति कात्यायनवचनात्। गृह्यत इति ग्रहणं विवादपदं, तद्गृहीतं यत्र स गृहीतग्रहणः। तस्य प्रत्यर्थिनः कृते तत्समर्थ्य परस्य मध्यस्थस्य स्थाने वा स्थाप्यमित्यर्थः। चन्द्र.१०७

वादे स्थितानामुक्तिक्रमः

**तत्राभियोक्ता प्राग्ब्रूयादभियुक्तस्त्वनन्तरम्।**
**तयोरुक्तौ सदस्यास्तु प्राड्विवाकस्त्वतःपरम्॥**

(१) भाषोत्तरक्रियानिर्णया एवाभियोक्त्रादिविषयविशिष्टा अत्रोक्ताः। अप.२।६

(२) प्राग् ब्रूयात् प्रतिज्ञां कुर्यादित्यर्थः। *स्मृच.३५

(३) सभ्यप्राड्विवाकयोरिदं पश्चादभिधानमनुयोगादिव्यतिरिक्तप्रत्याकलितादिविषयकवचनपरम्। अनुयोगादीनां प्रागेव तत्कर्तव्यत्वादित्यवधेयम्। प्राग् ब्रूयात् प्रतिज्ञां वदेदित्यर्थः। अभियुक्तस्त्वनन्तरमुत्तरं ब्रूयादिति। ×व्यप्र.४३

अनेककार्ययौगपद्ये वादक्रमः

**यस्य स्यादधिका पीडा कार्यं वाऽभ्यधिकं भवेत्।**
**पूर्वपक्षो भवेत्तस्य न यः पूर्वं निवेदयत्॥**

(१) द्विविधश्चाभियोक्ता धनार्थी संमानार्थी च। यथा मदीयं धनं गृहीत्वा तिष्ठतीति लगुडादिना हतवानिति द्वावप्यभ्यर्थ्यमान...स्वधनसंमानाभ्यामर्थिनौ प्रथमं वाचयितव्यौ, न तु राज्ञि पूर्वं निवेदनमात्रात्, यथा नाहं तस्यैवं धारयामि, न च तस्याऽहं दासः, न मया ब्रह्मवधादिकं कृतं, तथापि मामयमन्यायेन क्षिपतीति। पूर्वं निवेदकत्वेन नाऽस्यार्थिवादः, किन्तु तन्निवेदनाह्वानात् तस्यैव स हि प्रष्टव्यः कथं तव धारयतीति। कथं तव भृत्यः। कथं वाऽस्याऽभिशापं कुरुषे इति ब्रूहीति। तदाह कात्यायनः—यस्येति। नारदेन तस्यार्थिभावो दातव्य इति तृतीयपादे विशेषः। तथा शूद्रेणापि प्रथमं निवेदिते ब्राह्मणस्याऽग्रतो विवादो निरूपणीयः। कार्याणां वा गुरुलघुभावमालोक्य व्यवहारदर्शनं कार्यम्। व्यमा.२८९-९०

(२) एवंविधविषये अर्थिप्रत्यर्थिभावस्य वैपरीत्यं परीक्षकैः कार्यमित्यर्थः। अत्रोभयोरपि परस्परमर्थित्वं च साध्यभेदाद्युगपद्भवति। तत्रोत्कृष्टजातेर्बहुपीडस्य वाऽर्थिवादः पूर्वं द्रष्टव्यः। *स्मृच.३५

अविनीतवादिदण्डः

**सशस्त्रोऽनुत्तरीयो वा मुक्तकेशः सहासनः।**
**वामहस्तेन वा स्रग्वी वदन् दण्डमवाप्नुयात्॥**

(१) प्रणत एव ब्रूयात्, अन्यथाऽभिधाने दोषमाह—सशस्त्र इति। व्यमा.२८६

(२) स पृष्टः सन्यदि सशस्त्र उत्तरीयवस्त्रहीनो मुक्तकेश आसनोपविष्टो वामहस्तेन किञ्चिचालयन् शिरसा स्रजं वा धारयन्नुत्तरं वदति तदा दण्ड्य इति। अप.२।५

* पमा. स्मृचवत्। × व्यउ. व्यप्रवत्।

* पमा., सवि. स्मृचगतम्।

(१) शुनी.४।६३५ ब्रूयाद (पृष्टो ह्य) (प्राड्विवाकसदस्यार्चैर्दाप्यते ह्युत्तरं ततः); **व्यमा**.२८९ तः परम् (नन्तरम्); **अप**.२।६ क्तौ (क्ते); **व्यक**.२४ क्तौ (क्ते) स्त्वतः (स्ततः); **स्मृच**.३५ रुक्तौ (रन्ते) स्त्वतः (स्ततः); **पमा**.५८ स्मृचवत्; **व्यचि**.१० व्यकवत्; **सवि**.८३ (अभियोक्ता वदेत्पूर्वमभियुक्तस्त्वनन्तरम्) शेषं व्यकवत्; **व्यसौ**.१९ व्यकवत्; **व्यप्र**.४३ स्मृचवत्; **व्यउ**.२७ स्मृचवत्; **व्यम**.६ प्राग् (प्र), शेषं स्मृचवत्; **विता**.४९ प्राग् (प्र) तयोरुक्तौ (अनन्तरं) स्त्वतः (स्ततः); **प्रका**.२१ स्मृचवत्; **समु**.१६ स्मृचवत्; **विव्य**.४४ स्मृचवत्.

(२) **व्यमा**.२९१ स्याद (चाप्य) भ्यधि (प्यधि): २९१ (यस्य चाऽर्थगता पीडा शारीरी वाऽधिका भवेत्। तस्याऽर्थिवादो दातव्यो न यः पूर्वं निवेदयेत्॥); **स्मृच**.३५ भ्य (प्य); **पमा**.५९; **सवि**.८३ (यस्य वाऽप्यधिका पीडा अकार्यं वाऽधिकं भवेत्। तस्यार्थिवादो दातव्यो न यः पूर्वं निवेदयेत्॥); **सेतु**.९६ स्याद (चाप्य) वाऽभ्य (चाप्य) पूर्वपक्षो भवेत्तस्य (तस्यार्थिभावो दातव्यो); **प्रका**.२१; **समु**.१६; **विव्य**.४ स्याद (वाप्य) वेप (वे: प) न (स).

(१) **व्यमा**.२८६ केशः (कच्छः) स्रग्वी (वादं); **अप**.२।५ यो वा (यश्च); **विव्य**.३ केशः (कच्छः).

कार्यार्थी प्रष्टव्यः

**[1]काले कार्यार्थिनं पृच्छेत्प्रणतं पुरतः स्थितम् ।**
**किं कार्यं का च ते पीडा मा भैषीर्ब्रूहि मानव ॥**
**[2]केन कस्मिन्कदा कस्मात्पृच्छेदेवं सभागतम् ॥**

(१) केन पुरुषेण कस्मिन्देशे काले वा कस्मात्कारणादिति प्रणतं पृच्छेत् । अतः प्रणत एव ब्रूयात् । *व्यमा.२८६

(२) किं कार्यमिति देयाप्रदानस्य ज्ञानार्थं प्रश्नः । का च पीडेति हिंसायाः । तथा च तयोः कर्तृदेशकालकारणपरिज्ञानार्थं सभापतिमा प्रश्नचतुष्टयं कार्यमित्याह स एव—'केन कस्मिन्कदा कस्मात्पृच्छेदेवं सभां गतः'। इत्येवं पृष्टः कार्यार्थी ततस्तस्मै वक्तव्यजातं विज्ञापयेत् । +स्मृच.३१

(३) मिता.टीका-किं कार्यं का च पीडेति अर्थकृतो मन्युकृतश्च प्रश्नभेदः । सुबो.२।५

(४) अत्र कार्यार्थिनं स्वयमागतं पृच्छेदित्यनेन राजा स्वयमावेदको वा नोत्पादयेदित्यर्थः । व्यउ.२२

आह्वानविधिः

**[3]एवं पृष्टः स यद् ब्रूयात्तत्सभ्यैर्ब्राह्मणैः सह ।**
**विमृश्य कार्यं न्याय्यं चेदाह्वानार्थमतः परम् ।**
**मुद्रां वा निक्षिपेत्तस्मिन्पुरुषं वा समादिशेत् ॥**

(१) तच्च लिखितं जन्मान्तरे मयाऽस्मै धनं दत्तं तदसौ न प्रयच्छतीतिवद्विचारायोग्यं यदि न स्यात्तदा तत्प्रत्यर्थ्यानयनाय मुद्राप्रदानादिकं कुर्यात् । तथा च कात्यायनः—एवमिति । तस्मिन् आवेदके । पुरुषं साध्यपालम् । न्याय्यं योग्यम् । आह्वानार्थमभियुक्तस्येति शेषः । *स्मृच.३२

(२) मुद्राग्रहणं लेख्यस्याप्युपलक्षणम् । बाल.२।५

आह्वानानर्हाः

**[1]अकल्पबालस्थविरविषमस्थक्रियाकुलान् ।**
**कार्यातिपातिव्यसनिनृपकार्योत्सवाकुलान् ।**
**मत्तोन्मत्तप्रमत्तार्तभृत्यान्नाह्वानयेन्नृपः ॥**

(१) अकल्पो व्याधितः । विषमं दुर्गं निगडादि वा । क्रियाकुलो नित्यनैमित्तिककर्मकरणव्यग्रः । कार्यातिपाती यस्य तत्कालमागच्छतो गुरुतरकार्यविनाशः । व्यसनमिष्टवियोगादि । उत्सवः कौमुद्यादिः सार्वजनीनः । विवाहादिर्वा प्रातिस्विकः । ×अप.२।५

(२) विषमस्थ उत्पन्नसंकटः । मत्तो धत्तूरादिमदनीयद्रव्येण स्खलितबुद्धिः । उन्मत्तो ग्रहपित्तादिभिः । प्रमत्तः सर्वत्रावधानहीनः । आर्तो विषादिना दुःखितः । भृत्यग्रहणमस्वतन्त्रस्त्रीणामप्युपलक्षणार्थम् । +स्मृच.३३

(३) विषमस्थ उत्तमर्णैर्धृतः । विता.४१

---

* बाल.२।५ व्यमागतं सुबोगतं च । + सवि. स्मृचगतम् ।

(१) शुनी.४।५५७; **मिता**.२।५ नं (नः) प्रणतं (गृणन्तं) स्मृत्यन्तरम्; **व्यमा**.२८६ प्रणतं (पुरुषं) ब्रूहि मानव (याहि मानद); **अप**.२।५; **व्यक**.१९ णतं (णते); **स्मृच**.३१; **पमा**.५२; **व्यनि**.९; **स्मृचि**.४; **नृप्र**.५; **सवि**.७५; **व्यसौ**.१४; **व्यप्र**.३५; **व्यउ**.२२; **व्यम**.४; **विता**.३८; **राकौ**.३८५; **प्रका**.१९; **समु**.१४. (२) **शुनी**.४।५५८ पृच्छे... तम् (पीडितोऽसि दुरात्मना); **मिता**.२।५ स्मृत्यन्तरम्; **व्यमा**.२८६ देवं सभागतम् (देव सभां गतः); **अप**.२।५ भागतम् (भां गतः); **व्यक**.१९ अपवत्; **स्मृच**.३१; **पमा**.५२ दा (थं) वं (नं); **स्मृचि**.४; **नृप्र**.५; **सवि**.७५ (केन कस्मिन्कदा कस्मादेवं पृच्छेत्सभां गतः); **व्यसौ**.१४ वं (व); **व्यप्र**.३५; **व्यउ**.२२ दा (थं); **व्यम**.४; **विता**.३८; **राकौ**.३८५ गतः (गतम्); **प्रका**.१९; **समु**.१४ अपवत् .

(३) **शुनी**.४।५५८(एवं पृष्टः स्वभावोक्तं तस्य संश्रुणुयाद्वचः); **मिता**.२।५ तत् (स) स्मृत्यन्तरम्; **अप**.२।५ द्रां वा (द्रां च);

* व्यप्र. स्मृचगतम् । × व्यक. अपगतम् ।

+ शेषं अपगतम् । सुबो. (२।५), व्यउ. स्मृचगतम् ।

**व्यक**.२१ तत् (स) मृश्य (चार्य) तस्मिन् (तत्र); **स्मृच**.३२; **पमा**.५५; **व्यनि**. तत् (स) वा निक्षिपेत्तस्मिन् (दद्यात्तथा पत्रम्); **स्मृचि**.४ तत् (स); **नृप्र**.५ प्रथमार्धम्; **व्यसौ**.१६ स य (तु य) विमृश्य कार्यं (विचार्यमेव) तस्मिन् (तत्र) समा (विनिर्); **व्यप्र**.३८ व्यकवत्; **व्यउ**.२४ व्यकवत्; **व्यम**.५ तत् (स) मृश्य (चार्य); **विता**.३८ तत् (स); **राकौ**.३८५; **प्रका**.१९; **समु**.१५ वा निक्षिपेत्तस्मिन् (दद्यात्तथा पत्रम्).

(१) **शुनी**.४।५९९-६००; **मिता**.२।५ तं (तान्) स्मृत्यन्तरम्; **अप**.२।५ (धर्मोद्यतानभ्युदये पराधीनशठाकृतीन् । मत्तोन्मत्तप्रमत्तांश्च भृत्यान्नाह्वाययेन्नृपः ॥); **व्यक**.२३ तिपा (भिपा); **व्यनि**. त्सवा (धता) नाह्वान (नैवाह्व) स्मृत्यन्तरम्; **स्मृचि**.५; **दवि**.३३४ द्वितीयार्धः; **नृप्र**.७ द्वितीयार्धं नास्ति; **व्यसौ**.१८ नये (यये); **व्यप्र**.३९; **व्यउ**.२४; **व्यम**.५ नारदः; **विता**.४० द्वितीयार्धं नास्ति; **राकौ**.३८५.

(४) मिता.टीका—उन्मत्तः उन्मादेन पञ्चविधेन वातपित्तश्लेष्मसंनिपातग्रहसंभवेनोपसृष्टः । बाल.२।५

**धर्मोत्सुकानभ्युदये रोगिणोऽथ जडानपि ।**
**अस्वस्थमत्तोन्मत्तार्तस्त्रियो नाह्वाययेन्नृपः ॥**

स्त्रियोऽत्र परतन्त्रा विवक्षिताः । स्मृच.३३

**न हीनपक्षां युवतिं कुले जातां प्रसूतिकाम् ।**
**सर्ववर्णोत्तमां कन्यां ता ज्ञातिप्रभुकाः स्मृताः ॥**

(१) अत एव आसां ज्ञातय एवाह्वातव्या इत्यर्थः । अप.२।५

(२) हीनपक्षा मदाकुला । युवतिमिति तस्या एव विशेषणम् । कुले जाता सत्कुले जाता । सर्ववर्णोत्तमा वाद्यपेक्षयोत्तमवर्णा । ताः पूर्वोक्ताः । पञ्च ज्ञातिप्रभुकाः परतन्त्राः नेतराः । स्मृच.३३

(३) मिता.टीका—हीनपक्षामिति, अनाथां सर्वजनशोच्यामिति यावत् । सुबो.२।५

(४) हीनपक्षां भर्तृपितृपक्षहीनां कन्यां अनूढाम्, ज्ञातिप्रभुका इति ज्ञातेराह्वानम् । विता.४१

(५) मिता.टीका—सर्वेति । ब्राह्मणीम् । ताः हीनपक्षादयः ज्ञातिस्वामिका इत्यर्थः । बाल.२।५

आह्वानानर्हापवादः

**तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्च याः ।**
**निष्कुला याश्च पतितास्तासामाह्वानमिष्यते ॥**

(१) राजा कर्तुमिति शेषः । एतच्चोपलक्षणम् । तेन गोपशौण्डिकादिस्त्रीणामपि परिग्रहः । तासामपि व्यवहारप्रणेतृत्वात् । अप.२।५

(२) तदधीनकुटुम्बिन्यः गोपालशौण्डिकादिस्त्रियः । व्यक.२३

(३) तेन तदधीनकुटुम्बिन्यादीनामाह्वानमभीष्टमित्यर्थः । स्मृच.३३

(४) मिता.टीका—स्त्रीणामाह्वाने निषिद्धे प्रतिप्रसवमाह—तदधीनेति । सुबो.२।५

(५) मिता.टीका—तस्या अधीनं तादृशं यत्कुटुम्बं तद् यासामस्तीति इनिः । एकदेशीतिवत् प्रयोगः । स्वैरिण्यो व्यभिचाररताः । गणिका वेश्याः । निष्कुला हीनकुलाः । बाल.२।५

**कालं देशं च विज्ञाय कार्याणां च बलाबलम् ।**
**अकल्पादीनपि शनैर्यानैराह्वानयेन्नृपः ॥**
**ज्ञात्वाऽभियोगं येऽपि स्युर्वने प्रव्रजितादयः ।**
**तानप्याह्वाययेद्राजा गुरुकार्येष्वकोपयन् ॥**

(१) वनस्थादिव्यतिरेकेण यत्र न सिद्धिस्तत्र तानप्याह्वाययेत् । अप.२।५

(२) गुरुकार्येषु आह्वाययेदिति संबन्धः । निमित्तसप्तमी चेयम् । गुरुकार्यनिमित्तमाह्वाययेदित्यर्थः । अकोपयन् सान्त्वयन् । व्यप्र.४०

(३) मिता.टीका—वेषमाहात्म्यात् तत्रापि विशेषमाह अकोपेति । बाल.२।५

---

(१) **स्मृच**.३३ यये (पये); **पमा**.५१; **नृप्र**.७; **प्रका**.२० स्मृचवत्; **समु**.१५ स्मृचवत्.

(२) **शुनी**.४।६००-६०१ ता...ताः (नाज्ञातिप्रमुखाः स्त्रियः); **मिता**.२।५ स्मृत्यन्तरम्; **अप**.२।५ (=) (हीनपक्षा च युवतिः कुलजाता प्रसूतिका। सर्ववर्णोत्तमा कन्या ता ज्ञातिप्रभुकाः स्मृताः ॥); **व्यक**.२३; **स्मृच**. ३३ भुकाः (मुखाः); **पमा**.५१ उत्तरार्धे (स्वजातिप्रभुकां चैव तथा नाह्वानयेन्नृपः); **व्यनि**. काः स्मृताः (काः स्त्रियः) स्मृत्यन्तरम्; **स्मृचि**.५ ले जा (लोपे); **नृप्र**.७; **व्यसौ**.१८ मां (मा) न्यां (न्या) स्मृताः (स्त्रियः); **व्यप्र**.३९; **व्यउ**.२५ तिं (तीं) नारदः; **व्यम**.५३ नारदः; **विता**.४१ तिं (तीं); **राकौ**.३८५; **प्रका**.१९ वितावत्; **समु**.१५.

(३) **शुनी**.४।६१४-६१५; **मिता**.२।५ स्मृत्यन्तरम्; **अप**.२।५ (=) मिष्यते (मर्हति); **व्यक**.२३ अपवत्; **स्मृच**.३३; **पमा**.५१ मरीचिः; **व्यनि**. नारदः; **स्मृचि**५; **नृप्र**.७; **व्यसौ**.१८ बिन्यः (बाश्च) याश्च (श्चैव) मिष्यते (मर्हति); **व्यप्र**.३९; **व्यउ**.२५ याश्च (श्चैव) नारदः; **व्यम**.५ नारदः; **विता**.४२ (=) नारदः; **राकौ**.३८५श्च याः (स्तस्था); **प्रका**.१९ हारीतः; **समु**.१५.

(१) **शुनी**.४।६०५-६०६; **व्यक**.२३ नैर्या (नैः श); **व्यसौ**.१८ नैर्या (नैः श) नये (यये); **विता**.४२ (=); **राकौ**.३८६ लं देशं (लदेशौ) र्यानैराह्वा (र्यः पौरान् ह).

(२) **शुनी**.४।६०६-६०७; **मिता**.२।५ यये (नये) स्मृत्यन्तरम्; **अप**.२।५ (=) ष्वको (षु गो); **व्यक**.२३ मितावत्; **स्मृचि**.६ यये (पये); **व्यसौ**.१८ ष्वकोपयन् (षु कोपनः); **व्यप्र**.४० यये (पये) बृहस्पतिः; **व्यउ**.२५ बृहस्पतिः; **व्यम**.५ मितावत्, नारदः; **विता**.४२ (=) मितावत्; **राकौ**.३८६ ह्वा (वा) येष्वको (यैश्च गो).

आह्वानावमाने दण्डः

[1]आहूतस्त्ववमन्येत यः शक्तो राजशासनम् ।
तस्य कुर्यान्नृपो दण्डं विधिदृष्टेन कर्मणा ॥
[2]हीने कर्मणि पञ्चाशन्मध्यमे तु शतावरः ।
गुरुकार्येषु दण्डः स्यान्नित्यं पञ्चशतावरः ॥

(१) ताम्रिकपणाभिप्रायैषा संख्या । अप.२।५

(२) पणानां संख्येयम् । शक्त इति वचनादापदादिविषये न दण्डप्रकल्पनम् । किन्तु तन्निवृत्तौ पुनराह्वानं कार्यम् । स्मृच.३४

(३) एवं व्याख्यातृभिरुक्तम् । इदमुपलक्षणं दण्डपणतारतम्यस्य । तत्र सकृदनागमे तृतीयांशदण्डः । द्विरनागमेऽर्धम् । त्रिरनागमे पूर्णम् । एवमादिभिस्त्रिशद्राज्ञे । तदूर्ध्वं त्रिपक्षाद्वा दशबन्धार्थं गृहीत्वा हानिनिमित्तं जयपत्रं दद्यात् । एवं कृते प्रतिवादी यद्यागच्छति पुनरपि व्यवहारदर्शनं कर्तव्यमिति । सूत्रविशेषे त्रिरनागमे चतुरो दण्डाः पलायने चैवम् । पराजयश्चतुरः । कार्षापणादि दमपरद्रव्यावेदनविषयम् । व्यनि.९

(४) गुरुकार्येषु नित्यं पञ्चशतावर इति विशेषणादापन्नानागमने दण्डो नास्तीति कथितम् । व्यप्र.४१

आसेधविधिः

[3]उत्पादयति यो हिंसां देयं वा न प्रयच्छति ।
याचमानाय दौःशील्यादाकृष्योऽसौ नृपाज्ञया ॥
[4]आवेद्य तु नृपे कार्यमसंदिग्धे प्रतिश्रुते ।
तदासेधं प्रयुञ्जीत यावदाह्वानदर्शनम् ॥

(१) असंदिग्धे प्रतिश्रुते निवेदिते कार्ये राज्ञा निश्चिते विचार्यत्वेन प्रतिज्ञाते इत्यर्थः । तदासेधः तस्यासेधः । व्यक.२२

(२) आवेदनाय जिगमिषता कृतावेदनेन वा कार्यान्तरवैयग्र्यादिना राजाह्वानविलम्बे राजशपथादिना प्रतिवादिनः प्रतिरोधश्च आसेधापरपर्यायः कार्य इत्याह —उत्पादयतीति । व्यप्र.४१

[1]क्रियार्थिनाऽवरुद्धः सन्नासेधं चेद्विलङ्घयेत् ।
स्वहस्तेनाऽपि रोद्धव्यो यद्यसौ न विभावयेत् ॥

स्वहस्तेनापीति । यदाऽसावर्थिनो विवादनिमित्तां क्रियां लोके विभावयितुं न शक्नुयात्तदा स्वहस्तस्य व्यापारेणाऽपि उपारुन्ध्यादित्यर्थः । व्यक.२२

आसेधोत्क्रमे अनासेध्यासेधे च दण्डः

[2]आसेधयोग्य आसिद्ध उत्क्रामन् दण्डमर्हति ।
आसेधयंस्त्वनासेध्यं राजा शास्य इति स्थितिः ॥

आहूतस्याऽनागच्छत आह्वात्रा आसेधयोग्यस्यासेधो भोजनादिकार्यान्तरनिषेधः कार्यः । अप.२।५

[3]यस्त्विन्द्रियनिरोधेन व्याहारश्वसनादिभिः ।
आसेधयेदनासेध्यैः स दण्ड्यो न त्वतिक्रमी ॥

(१) अनासेधैः आसेधानर्हैरुच्छ्वासादिभिः । व्यक.२३

(२) इन्द्रियनिरोधादेः संकटत्वान्न तत्र राजाज्ञातिक्रमोऽपराधमावहतीत्यर्थः । स्मृच.३०

(३) एवमावश्यकशरीरव्यापारैः कुर्वन्न दण्ड्यः । व्यनि.

---

(१)अप.२।५; **व्यक**.२४; **स्मृच**.३४; **पमा**.५१;**व्यनि**. उत्तरार्धे (अभियोगानुसारेण तस्य दण्डं समर्पयेत्); **दवि**.३३५; **व्यसौ**.१८; **व्यप्र**.४०; **व्यउ**.२५; **विता**.३९; **प्रका**.२०; **समु**.१५. (२) **अप**.२।५ मे तु (मेन) वरः (वरम्) डः (ड्यः) वरः (वरम्); **व्यक**.२४ मध्यमे तु (तन्मध्ये द्वि); **स्मृच**.३४ तु(द्वि); **पमा**.५१; **व्यनि**. तु (द्वि) येषु (ये च); **दवि**.३३५ ध्यमे तु (ध्येऽपि स्यात्):३४४; **नृप्र**.७; **सवि**.८१ (=) ने (त); **व्यसौ**.१८-१९ मध्यमे तु (तन्मध्येऽपि); **व्यप्र**.४०; **व्यउ**.२५; **व्यम**.६; **विता**.३९; **प्रका**.२०; **समु**.१५. (३) **व्यमा**.२८५; **अप**.२।५; **व्यक**.२२; **स्मृचि**.५; **व्यसौ**.१६; **व्यप्र**.४१; **व्यउ**.२६. (४) **व्यक**.२२;**व्यसौ**. १७; **व्यप्र**.४१; **व्यउ**.२६.

(१) **व्यक**.२२; **व्यसौ**.१७.

(२) **अप**.२।५ (=) सिद्ध (सेधं) स्त्व (स्तु) नासे (नाऽऽसे); **व्यक**.२२ (आसेधयोग्य उत्क्रामन् दण्डमर्हति चोत्तमम् ।) स्य इ (स्यमि); **व्यसौ**.१७ क्रामन् (क्रोशन्);**व्यप्र**. ४१उत्त., ४२ पू.;**व्यम**.५; **विता**.४४ धयंस्त्व(धेद्यस्त्व) उत्त.. (३) **शुनी**.४।५९५ रश्व (रोच्छा) ध्यैः (धैः); **व्यक**.२२ रश्व (रोच्छ्व) सैध्यैः(सेधैः); **स्मृच**.३०; **पमा**.४८ व्याहारश्वसना (व्यवहारोत्सवा) क्रमी (क्रमात्); **व्यनि**. व्याहा (जाग) सेध्यैः (सेधैः); **व्यप्र**.४२ रश्व (रोच्छ्वा) ध्यैः (ध्यं) क्रमी (क्रमन्) नारदः; **व्यम**.५ रश्व (रोच्छ्व) क्रमी (क्रमात्) नारदः; **विता**.४४ व्याहारश्व (विहारोद्ध) ध्यैः (धैः) क्रमी (क्रमात्); **राकौ**.३३३ रश्व (रोच्छ्व) नारदकात्यायनौ; **प्रका**. १८; **समु**.१४ रश्व (रोच्छ्व).

**[1]संभूते च य आसिद्धः प्रत्यासेधयते च तम् ।**
**शास्यो भवेत्तदा दण्ड्यो ह्यसंभूते स एव तु ॥**
**आसेधयेतां यदि वै सन्दिग्धेऽर्थे परस्परम् ।**
**तयोरतिक्रमे धर्म्यं तत्र दण्डं प्रदापयेत् ॥**

संभूते यथाभूते । व्यक.२३

अनासेध्याः

**[2]वृक्षपर्वतमारूढा हस्त्यश्वरथनौस्थिताः ।**
**विषमस्थाश्च ते सर्वे नासेध्याः कार्यसाधकैः ॥**
**[3]व्याध्यार्ता व्यसनस्थाश्च यजमानास्तथैव च ।**
**अनुत्तीर्णाश्च नासेध्या मत्तोन्मत्तजडास्तथा ॥**
**[4]न कर्षको बीजकाले सेनाकाले तु सैनिकः ।**
**प्रतिज्ञाय प्रयातश्च कृतकालश्च नान्तरा ॥**
**[5]उद्युक्तः कर्षकः सस्ये तोयस्यागमने तथा ।**
**आरम्भात्संग्रहं यावत्तत्कालं न विवादयेत् ॥**

अनासेधकालत्वादित्यभिप्रायः । स्मृच.३०

**[6]अभियुक्तश्चावरुद्धश्च तिष्ठेद्यश्च नृपाज्ञया ।**
**न तस्यान्येन कर्तव्यमभियोगं विदुर्बुधाः ॥**

आह्वायकवेतनविधिः

**[7]एकद्वित्र्यहसापेक्षं देशकालाद्यपेक्षया ।**
**दूताय साधिते कार्ये नेता भक्तं प्रदापयेत् ॥**
**[1]देशकालवयःशक्त्याद्यपेक्षं भोजनं स्मृतम् ।**
**आकारकस्य सर्वत्र त्विति तत्त्वविदो विदुः ॥**

(१) नेता अह्वायकः । यावत्कार्यसिद्धिस्तावन्तं कालं दूताय वेतनमाह्वायको दद्यादिति । व्यनि.

(२) राजपुरुषाय च साध्यपालनामकायाह्वताह्वायकद्वारा भृतिर्दापनीया देशकालाद्यनुसारेणेत्याह कात्यायनः —एकाहेति । आकारकस्य आह्वानकर्तुः । *व्यप्र.४२-४३

वादे प्रतिभूर्ग्राह्यः

**[2]प्रतिभूश्च ग्रहीतव्यः प्राड्विवाकेन कार्यिणः ।**
**प्रत्यर्थिनि समायाते समुपस्थापनक्षमः ॥**

प्रतिभुवोऽलाभे बन्धविधिः

**[3]अथ चेत्प्रतिभूर्नास्ति कार्ययोग्यस्तु वादिनः ।**
**स रक्षितो दिनस्यान्ते दद्याद् भृत्याय वेतनम् ॥**

(१) राजवर्जितरक्षकाय रक्षितो वेतनं दद्यात् । व्यमा.२८९

---

(१) **व्यक**.२२-२३ च तम् (मतम्).

(२) **व्यक**.२२ नासेध्याः (न साध्याः); **स्मृच**.३०; **पमा**. ४८ स्थिताः (गताः); **व्यनि**.; **स्मृचि**.६ पमावत्; **व्यसौ**. १७; **व्यप्र**.४२; **व्यउ**.२६; **व्यम**.५; **विता**.४४ थनौ (थतः); **प्रका**.१८ मारूढा (संकाशा); **समु**.१४. (३) **स्मृच**.३० नुत्ती(नुती); **पमा**.४९; **व्यप्र**.४२ पू.; **व्यउ**. २६ नास्त (नस्त) पू.; **व्यम**.५ व्यउवत्, पू.; **विता**. ४४ व्यउवत्, पू.; **प्रका**. १८; **समु**.१४. (४) **व्यक**. २३ ज्ञाय (ष्ठाभि)उत्त.; **स्मृच**.३०; **पमा**.४९ तु (च) निकः (निकाः) तश्च (ताश्च); **व्यसौ**.१८ तश्च (ताश्च) उत्त.; **प्रका**.१८; **समु**.१४ तु (च).

(५) **व्यक**.२३स्या(स्य); **स्मृच**.३०; **पमा**. ४९ तोय(वाप) तथा (सदा); **दवि**. ३३४ उद्यु (तद्यु) लं (ले); **व्यसौ**.१८तथा (सदा) तत्कालं न वि (तावत्कालं न); **प्रका**.१९; **समु**.१४.

(६) **व्यक**.२३ अभियुक्तश्चाव (अनियुक्तश्च). योगं (युक्तं); **व्यसौ**.१८.

(७) **अप**.(=)२।५ उत्त.; **व्यक**.२४ (एकाहादिद्व्यहाद्यपेक्षं देशकालाद्यपेक्षतः) नेता (तेन); **व्यनि**. एकद्वित्र्यहसापेक्षं (एकाहं द्व्यहं त्र्यहं वा) नेता (तेन) प्रदापयेत् (प्रकल्पयेत्); **दवि**. १३ एकद्वित्र्यहसापेक्षं (एकाहद्व्यहाद्यपेक्षं) नेता (तेन); **व्यसौ**. १९ (एकाहद्व्यहाद्यपेक्षं देशकालाद्यपेक्षकम्) नेता (तेन); **व्यप्र**. ४३ दविवत्; **व्यउ**.२६ नेता (तेन); **समु**.१६ एकद्वित्र्यहसापेक्षं (एकाहं द्व्यहं त्र्यहं वा) प्रदापयेत् (प्रकल्पयेत्) स्मृत्यन्तरम्. (१) **अप**.२।५ (देशः कालो वयः शक्तिरपेक्ष्या भोजने तथा) तत्व (धर्म); **व्यक**.२४ त्विति (गतिः); **व्यसौ**. १९ त्विति (इति); **व्यप्र**.४३ व्यसौवत्. (२) **अप**.२।५ (=).

(३) **मिता**.२।१०; **व्यमा**.२८९ कार्ययोग्यस्तु (वादयोग्यश्च) भृत्या (दूता); **अप**.२।१० दिनः (दिनोः); **व्यक**.२४ कार्य (वाद) स्तु (स्य) भृत्या (दूता); **स्मृच**.३५ व्यकवत्; **पमा**.५८ स्तु (स्य); **दीक**.३२ कार्य (वाद); **व्यचि**.१० व्यकवत्; **व्यनि**. कार्य (वाद) स्तु (स्य); **दवि**.१३ स्तु(स्य) भृत्या (दूता); **नृप्र**.७ स रक्षितो (रक्षितोऽसौ); **व्यत**.२०२ व्यनिवत्; **सवि**.८३ कार्ययोग्यस्तु (सार्थयोर्यस्य) भृत्या (दूता); **व्यसौ**.१९ व्यकवत्; **वीमि**.२।१० व्यकवत्; **व्यप्र**.४४; **व्यउ**. ३१; **व्यम**.१० स्तु (स्य); **विता**.९४-९५; **सेतु**.९७ (=) कार्य (वाद) स्तु (श्च) नः (नोः); **प्रका**.२१ व्यकवत्; **समु**. १६ व्यकवत्; **विव्य**.८ कार्य (वाद) स्तु (स्य) वेतनम (जीवनम्), भृत्या (भृता).

* व्यउ. व्यप्रगतम् ।

(२) स पराजितो वादी । अप.२।१०

(३) दूताय साध्यपालाय । स्मृच.३५

(४) प्रतिभुवोरभावे द्वौ रक्षणीयौ । यदाह—अथेति । व्यचि.१०

(५) प्रतिभवति तत्कार्ये तद्वद्भवतीति प्रतिभूर्लग्नकः । वादयोग्यः विवादफलस्य साधितधनादिदानस्य दण्डदानस्य च क्षमः । वादिनोर्भाषावादिनः उत्तरवादिनश्च । *व्यत.२०२

(६) दूतः साध्यपालः । वेतनं भृतिः । सार्थद्वयं कोटिद्वयम् । एवं गृहीत्वा वादी न्याये प्रवर्त्यः । सवि.८३

(७) भृत्याय राजपुरुषाय रक्षकाय साध्यपालाख्याय । अत्रैकत्वमविवक्षितम् । वादिन इत्युपलक्षणं प्रतिवादिनोऽपि । व्यप्र.४४

**[१]द्विजातिः प्रतिभूहीनो रक्ष्यः स्याद्ब्राह्मचारिभिः ।**
**शूद्रादीन् प्रतिभूहीनान् बन्धयेन्निगडेन तु ॥**

प्रतिभूहीनस्य पराजये स एवाह—द्विजातिरिति । विता.९५

**[२]अतिक्रमेऽपयाते च दण्डयेत्तं पणाष्टकम् ।**
**नित्यकर्मोपरोधस्तु न कार्यः सर्ववर्णिनाम् ॥**

प्रातिभाव्यानर्हाः

**[३]न स्वामी न च वै शत्रुः स्वामिनाऽधिकृतस्तथा ।**
**विरुद्धो दण्डितश्चैव संशयस्थो न च क्वचित् ॥**
**[४]नैव रिक्थी न रिक्तश्च न चैवात्यन्तवासिनः ।**
**राजकार्यनियुक्तश्च ये च प्रव्रजिता नराः ॥**
**[१]नाशक्तो धनिने दातुं दण्डं राज्ञे च तत्समम् ॥**
**[२]जीवन्वाऽपि पिता यस्य तथैवेच्छाप्रवर्तकः ॥**
**[३]नाविज्ञातो ग्रहीतव्यः प्रतिभूत्वक्रियां प्रति ॥**

(१) संदिग्धोऽभिशस्तः । अत्यन्तवासिनो नैष्ठिकब्रह्मचारिणः । मिता.२।५७

(२) संशयस्था अभिशस्ताः । तत्समं विवादास्पदीभूतद्रव्यसमम् । विहितदण्डोपलक्षणार्थमेतत् । स्मृच.३५

(३) रिक्थी भ्रात्रादिः । रिक्तो निर्धनः । अत्यन्तवासिनो नैष्ठिकब्रह्मचारिण इति मिताक्षरादिषु । अन्यत्र वासिन इति पठित्वा देशान्तरवासिन इति मदनरत्ने व्याख्यातम् । अविज्ञातो विशेषतोऽपरिचितः । व्यप्र.४४

(४) निरुद्धो निगडादिबद्धः । संशयस्थो व्यसनी । रिक्थी पुत्रपौत्रादिर्द्रव्यग्रहणाधिकारी । अन्यत्र वासितो देशाद्बहिष्कृतः । व्यम.१०

वादे प्रतिनिधिः

**[४]अधिकारोऽभियुक्तस्य नेतरस्यास्त्यसंगतेः ।**
**इतरोऽप्यभियुक्तेन प्रतिरोधीकृतो मतः ॥**
**[५]समर्पितोऽर्थिना योऽन्यः परो धर्माधिकारिणि ।**
**प्रतिवादी स विज्ञेयः प्रतिपन्नश्च यः स्वयम् ॥**

(१) इतरोऽप्यसंबद्धोऽप्यभियुक्तेनोत्तरवादिना प्रहितोऽधिकृत उत्तरवादी कृतो मत उत्तरवादित्वेन संमतो मन्वादीनाम् ।

---

* सेतु. व्यतवत् ।

(१) **पमा**.५८; **व्यनि**.; **व्यम**.१०; **विता**.९५; **प्रका**.२१; **समु**.१६. (२) **पमा**.५८; **व्यनि**.ते(ने) र्मोपरो (र्मावबो); **विता**.९५ते (ने) त्त (त्तु); **प्रका**.२१ पयाते (च याने) त्तं (त्तु); **समु**.१६ ते (ने). (३) **मिता**.२।५७ वि (नि) संशयस्थो न च (संदिग्धश्चैव न); **स्मृच**.३५ वि (नि) स्थो न च (स्थाश्च न); **पमा**.५७ वि (नि) स्थो न च (स्थश्च न); **व्यप्र**.४३ च क्व (कुत्र); **व्यउ**.२७ वि (नि) च क्व (कुत्र); **व्यम**.१० वि (नि); **प्रका**.२१ वि (नि) स्थो न च (स्थाश्चैव न); **समु**.१६ पमावत्. (४) **मिता**.२।५७ रिक्तः (मित्रं); **स्मृच**.३५; **पमा**.५७ रिक्त (रिक्थ) युक्त (युक्ता); **व्यप्र**.४३ युक्त(युक्ता); **व्यउ**.२७ व्यप्रवत्; **व्यम**.१० त्यन्तवासिनः (न्यत्र वासितः); **प्रका**.२१; **समु**.१६ मितावत्.

(१) **मिता**.२।५७ नाश (न श); **स्मृच**.३५; **पमा**.५७ नाश (नाशा); **व्यप्र**.४३; **व्यउ**.२७; **व्यम**.१०; **प्रका**.२१; **समु**.१६. (२) **मिता**.२।५७; **व्यउ**.२७. (३) **मिता**.२।५७; **स्मृच**.३५; **पमा**.५७ भूत्व (भूस्तत्); **व्यप्र**.४३; **व्यउ**.२७ ज्ञातो (ज्ञाते) भूत्व (भूः स्व); **व्यम**.१०; **प्रका**.२१; **समु**.१६.

(४) **अप**.२।३२ स्त्य (प्य) प्रतिरोधी (प्रहितोऽधि); **व्यक**.३१ स्त्य (स्य) प्यभि (प्यति) प्रतिरोधी (प्रेरितोऽवि); **स्मृच**.३२; **स्मृचि**.४१ नेतरस्यास्त्यसंगतेः (न स्याद्यद्यन्यसंभवे); **सवि**.८०; **व्यसौ**.३० स्त्य (न्य) शेषं अपवत्; **व्यप्र**.३९ पू.; **व्यउ**.२४ पू.; **विता**.४७ प्रतिरोधी (प्रेरितोऽधि) उत्त.; **प्रका**.२०; **समु**.१५. (५) **अप**.२।३२ न्यः प (न्योऽप); **व्यक**.३१ परो धर्माधिकारिणि (विवादित्वेन नामतः) पू.; **स्मृच**.३२; **स्मृचि**.४१; **सवि**.८०; **व्यसौ**.३० परो (पुरो); **विता**.४७ अपवत्; **प्रका**.२०; **समु**.१५.

धर्माधिकारिणि प्राड्विवाके प्रतिपन्नः प्रतिवादित्वेन स्वयं वादिनाऽङ्गीकृतः । अप.२।३२

(२) इतरस्यानभियुक्तस्य तस्मिन् विवादे संबन्धाभावान्नास्त्युत्तरदानेऽधिकार इत्यर्थः । अतः इतरस्योत्तरवादित्वं न स्वतः । किन्तु अभियुक्तेन प्रतिवादित्वकरणात् प्राड्विवाके वा स्वकार्यकरत्वेन समर्पणादर्थिना वा स्वरुच्या प्रतिवादित्वाङ्गीकारान्नान्यथा । तदाह स एव–इतरोऽप्यभियुक्तेनेत्यादि । अयमर्थः । इतरोऽपि विवादासंबद्धोऽपि अभियुक्तेन प्रतिरोधीकृतः प्रतिवादीकृतः मन्वादीनामुत्तरवादित्वेन संमतः । तथाऽन्यो द्वितीयः प्रतिवादी स विज्ञेयः, यः परो विवादासंबन्धी धर्माधिकारिणि प्राड्विवाकेऽभियुक्तेन समर्पितः । अर्थिना वा स्वयमेव यः प्रतिपन्नः प्रतिवादित्वेनाङ्गीकृत इति । एतच्चानधिकारिणः प्रतिवादित्वमकल्पाद्यधिकारिविषये वेदितव्यम् । तत्राधिकारिणः साक्षात्कर्तृत्वस्य दुष्करत्वात् । *स्मृच.३२-३३

(३) इतरस्य अभियुक्ततदेकार्थभिन्नस्य । असंगतेः असंबन्धात् । व्यप्र.३९

प्रतिनिधिजयपराजयौ नियोजकस्यैव

**[१]अर्थिना संनियुक्तो वा प्रत्यर्थिप्रहितोऽपि वा ।**
**यो यस्यार्थे विवदते तयोर्जयपराजयौ ॥**

(१) कात्यायनेन विवादे नियुक्तस्यापि कर्तृत्वाभिधानान्नियुक्तग्रहणं तदीयानामपि उपलक्षणार्थम् । स्मृच.३२

(२) अर्थिनः प्रतिनिधिमभ्युपगच्छति कात्यायनः – अर्थिनेति । पमा.५३

**[२]दासाः कर्मकराः शिष्या नियुक्ता बान्धवास्तथा ।**
**वादिनो न च दण्ड्याः स्युर्यस्ततोऽन्यः स दण्डभाक् ॥**

* सवि. स्मृचवत् ।

(१) **व्यमा**.२८७ नारदकात्यायनौ; **अप**.२।३२; **व्यक**.३२ नारदकात्यायनौ; **स्मृच**.३१; **पमा**.५३; **सवि**.७६; **व्यसौ**.३०; **व्यप्र**.३६; **व्यउ**.२४ जयौ (जयम्); **प्रका**.२०; **समु**.१५. (२) **अप**.२।३२; **व्यक**.३२; **स्मृच**.३२ ततो (स्वतो); **पमा**.५४; **स्मृचि**.४१ दासाः (दास) वादिनो न च (विवादिनो न); **दवि**.३३६ नो न च (नस्ते न); **सवि**.७६ दासाः (दान); **व्यसौ**.३१ यस्ततोऽन्यः (स्ततोऽन्यो यः); **विता**.७६ न च (नैव); **प्रका**.२० स्ततो (स्त्वतो); **समु**.१५प्रकावत्.

अनियुक्तपरार्थवादी दण्ड्यः

**[१]यो न भ्राता न च पिता न पुत्रो न नियोगकृत् ।**
**परार्थवादी दण्ड्यः स्यात् व्यवहारेषु विब्रुवन् ॥**

इदमभियुक्तपरम् । व्यम.६

असभ्यवादे प्रतिनिधिर्न ग्राह्यः

**[२]ब्रह्महत्यासुरापाने स्तेये गुर्वङ्गनागमे ।**
**अन्येष्वसभ्यवादेषु प्रतिवादी न दीयते ॥**

(१) प्रतिनिधीभूय वदति प्रतिवादी । स ब्रह्महत्यादिषु न दाप्यः । व्यमा.२८८

(२) वादिप्रतिवादिनोः प्रतिनिधिः प्रतिवादी । अप.२।३२

(३) यदा तु गुरुतरकार्येष्वभियोगः तदाऽभियुक्तस्यैवाह्वानमावश्यकं तत्र प्रतिनिधेर्निषेधात् । तथा च कात्यायनः– ब्रह्महत्येत्यादि । स्मृच.३३

**[३]मनुष्यमारणे स्तेये परदाराभिमर्शने ।**
**अभक्ष्यभक्षणे चैव कन्याहरणदूषणे ॥**
**पारुष्यकूटकरणे नृपद्रोहे तथैव च ।**
**प्रतिवादी न दातव्यः कर्ता च विवदेत्स्वयम् ॥**

(१) **व्यक**.३२ नारदकात्यायनौ; **स्मृचि**.४१; **चन्द्र**.१०३ (=); **व्यसौ**.३१ दण्ड्यः (दाप्यः); **व्यम**.६ व्यसौवत्. (२) **व्यमा**.२८७ अन्येष्वसभ्य (अन्योऽन्यसङ्घ); **अप**.२।३२ सभ्य (सह्य); **व्यक**.३१ अपवत्; **स्मृच**.३४ ने स्तेये (नस्तेयं); **व्यचि**.९ सभ्यवादेषु (प्यभिशापेषु); **दवि**.३३६ पू.; **चन्द्र**.१०२ ने स्तेये (नस्तेय); ष्वसभ्य (षु लघु); **व्यसौ**.३० स्मृचवत्; **वीमि**.२१६ व्यचिवत्; **व्यप्र**.४० ष्वसभ्यवादेषु (षु चातिपातेषु); **व्यउ**.२५ ष्वसभ्यवादेषु (षु चाभिशापेषु); **व्यम**.६ पू.; **विता**.४८ सभ्य (शक्य); **प्रका**.२० स्मृचवत्; **समु**.१५ स्मृचवत्.

(३) **शुनी**.४।६१६-६१७; **व्यमा**.२८७ र्शने (र्षणे); **अप**.२।३२; **व्यक**.३१; **स्मृच**.३४; **व्यचि**.१० व्यमावत्; **दवि**.३३६; **व्यत**.२०० व्यमावत्; **व्यसौ**.३०; **वीमि**.२१६ मार (मर) र्शने (र्षणे); **व्यप्र**.४०; **व्यउ**.२५; **व्यम**.६; **विता**.४८; **सेतु**.९७; **प्रका**.२०; **समु**.१५.

(४) **शुनी**.४।६१७-६१८ तथैव च (साहसे) वादी (निधिः) च वि (तु वि); **व्यमा**.२८८ च वि (तु वि); **अप**.२।३२ व्य (व्ये) न दातव्यः (न दाप्यः स्यात्) च वि (तु वि); **व्यक**.३१ अपवत्; **स्मृच**.३४ व्य (व्ये) (प्रतिवादी न दाप्यः स्यादर्थिप्रत्यर्थिनोरपि ॥ ); **व्यचि**.१० कर (हर) र्ता च

(१) स्वयमेव कर्ता विवदेत् भाषोत्तरं वदेत्। व्यमा.२८८

(२) असभ्यवादानपि स एवाह—मनुष्येत्यादिना। वादिप्रतिवादिनोः प्रतिनिधिः प्रतिवादी। स सर्वदा गुरुकार्येष्वेवमादिषु न ग्राह्यः। स्मृच.३४

(३) पुनः स्तेयग्रहणं सर्वथा तत्र प्रतिनिधिप्रतिषेधार्थमिति मदनरत्नाकरः। पूर्वं (ब्रह्महत्यादिश्लोकस्थं) स्तेयग्रहणं ब्रह्महत्यादिसन्दंशात् सुवर्णस्तेयपरमिति तु वयम्। *व्यप्र.४०

(४) स्तेयान्येषु प्रतिनिध्यनुज्ञानार्था वीप्सेति कल्पतरुः। +व्यउ.२५

## पितामहः

राज्ञा व्यवहारः स्वयं नोत्पाद्यः

**[१]न तु पश्येत्समुत्प्रेक्ष्य स्वयं वा पुरुषेण वा ॥**

(१) पुरुषेण वेति राजप्रेरितपुरुषोत्प्रेक्षितस्य प्रतिषेधोऽयं न पुनः पुरुषमात्रोत्प्रेक्षितस्य। तथात्वे अर्थितत्संबन्धिपुरुषोत्प्रेक्षितस्यापि प्रतिषेधे व्यवहारदर्शनमेव प्रतिषिद्धं स्यात्। अत एव मनुना पुरुषो विशेषितः 'नोत्पादयेत्स्वयं कार्यं राजा नाप्यस्य पूरुषः' (मस्मृ. ८।४३) इति। स्मृच.२७

(२) समुत्प्रेक्ष्य कार्यमुत्पाद्येत्यर्थः। व्यउ.२२

**[२]न रागेण न लोभेन न क्रोधेन ग्रसेन्नृपः।**
**परैरप्रापितानर्थान्न चापि स्वमनीषया ॥**

(१) परैरावेदकैः। स्मृच.२७

(२) परैः कार्यितत्संबद्धैः। कार्यिसंबद्धाः पुत्रभ्रात्रादयः। व्यप्र.३६

(३) ग्रसेत् स्ववशे कुर्यात्। व्यउ.२२

राज्ञा स्वयमुत्पाद्या व्यवहाराः

**[१]छलानि चापराधांश्च पदानि नृपतेस्तथा।**
**स्वयमेतानि गृह्णीयान्नृपस्त्वावेदकैर्विना ॥**

(१) अत्रापवादमाह—छलानीति। स्मृच.२७

(२) अनिवेदितान्यपि छलादीनि राज्ञा लोभकसूचकादिद्वारा ज्ञातव्यानीत्याह कात्यायनः (?) छलानीति। व्यउ.२२

**[२]पथिभङ्गी कराक्षेपी प्राकारोपरिलङ्घकः।**
**निपानस्य विनाशी च तथा चायतनस्य च ॥**
**[३]परिखापूरकश्चैव राजच्छिद्रप्रकाशकः।**
**अन्तःपुरं वासगृहं भाण्डागारं महानसम् ॥**
**[४]प्रविशत्यनियुक्तो यो भोजनं च निरीक्षते।**
**विण्मूत्रश्लेष्मवातानां क्षेप्तुकामो नृपाग्रतः ॥**
**[५]पर्यङ्कासनबन्धी चाप्यग्रस्थाननिरोधकः।**
**राज्ञोऽतिरिक्तवेषश्च विधृतः प्रविशेत्तु यः ॥**
**[६]यश्चापचारेण विशेदवेलायां तथैव च।**
**शय्यासने पादुकयोः शयनासनरोहणम् ॥**

---

* शेषं स्मृचगतम्। + शेषं व्यप्रवत्।

(र्ता तु); **दवि**.३३६ अपवत्; **व्यत**.२०० णे नृ (णेऽनु) र्ता च (र्ता तु); **व्यसौ**.३० दातव्यः (दाप्यः स्यात्); **वीमि**.२।६ ष्य (ष्ये) र्ता च (र्ता तु); **व्यप्र**.४० वीमिवत्; **व्यउ**.२५ वीमिवत्; **व्यम**.६ अपवत्; **विता**.४८ ष्य (ष्ये) न दातव्यः कर्ता च (न दाप्यः स्यात् कर्तैव); **सेतु**.९८ ष्य (ष्ये); **प्रका**.२० स्मृचवत्; **समु**.१५ स्मृचवत्.

(१) **स्मृच**.२७; **व्यप्र**.३५; **व्यउ**.२२ समुत्प्रेक्ष्य (स्वयं प्रेक्ष्य); **प्रका**.१६; **समु**.१२. (२) **शुनी**.४।५६५; **स्मृच**.२७; **पमा**.४२ प्रापि (प्रार्थि); **सवि**.७३ (=) ग्रसेत् (गृह्णे);

**व्यप्र**.३६; **व्यउ**.२२; **प्रका**.१६; **समु**.१२. (१) **शुनी**.४।५६६; **स्मृच**.२७; **पमा**.४२ चा (वा) मेतानि (मेव नि) स्त्वा (स्त्री); **सवि**.७३ छलानि (पदानि) पदानि (छलानि); **व्यप्र**.३६; **व्यउ**.२२ कात्यायनः; **प्रका**.१६; **समु**.१२.

(२) **शुनी**.४।५६९-५७० करा (परा); **स्मृच**.२७; **पमा**.४३; **व्यप्र**.३६ भङ्गी करा (भग्नोपला); **व्यउ**.२२ करा (परा); **प्रका**.१६; **समु**.१२. (३) **शुनी**.४।५७०-५७१; **स्मृच**.२७ खा (घा); **पमा**.४३; **व्यप्र**.३६; **व्यउ**.२२; **प्रका**.१६ खा (घा); **समु**.१२ खा (घा). (४) **शुनी**.४।५७१-५७२ तुकामो (प्ता कामान्); **स्मृच**.२७; **पमा**.४३ त्यनि (त्यनु) वा (घा); **व्यप्र**.३६ क्षेप्तुकामो (क्षेप्ता कामान्); **व्यउ**.२२ क्षेप्तुकामो (क्षेप्ता कामी) क्रमेण कात्यायनः; **प्रका**.१६ शत्यनि (श्य ह्यनि); **समु**.१२.

(५) **शुनी**.४।५७२-५७३ नि (वि) राज्ञो (नृपा); **स्मृच**.२७ न्धी (न्धा); **पमा**.४३ न्धी (न्धः) विधृतः (श्वत्तः); **व्यप्र**.३६ षश्च (षं च); **व्यउ**.२३ धृतः (भृतः) क्रमेण कात्यायनः; **प्रका**.१६ स्मृचवत्; **समु**.१२ स्मृचवत्.

(६) **शुनी**.४।५७३-५७४ श्चापचा (श्चोपद्वा) कयोः (के च) णम् (णे); **स्मृच**.२७; **पमा**.४३ चारे (द्वारे) विशे (प्रविशे) कयोः (के च) हणम् (हणे); **व्यप्र**.३७ चारे (द्वारे) कयोः (के च) हणम् (हणे); **व्यउ**.२३ यश्चापचारेण (पश्चा-

१राजन्यासन्नशयने यस्तिष्ठति समीपतः ।
राज्ञो विद्विष्टसेवी चाप्यदत्तविहितासनः ॥
२वस्त्राभरणयोश्चैव सुवर्णपरिधायकः ।
स्वयं ग्राहेण ताम्बूलं गृहीत्वा भक्षयेत्तु यः ॥
३अनियुक्तप्रभाषी च नृपाक्रोशक एव च ।
एकवासास्तथाऽभुक्तो मुक्तकेशोऽवकुण्ठितः ॥
४विचित्रिताङ्गः स्रग्वी च परिधानविधूनकः ।
शिरःप्रच्छादनश्चैव छिद्रान्वेषणतत्परः ॥
५आसङ्गी मुक्तकेशश्च यश्च कर्णाक्षिकर्शकः ॥
६दन्तोल्लेखनकश्चैव कर्णनासाविशोधकः ।
छलान्येतानि पञ्चाशद्भवन्ति नृपसन्निधौ ॥

(१) राज्ञः शय्यायां शयनं, तदीयासने चोपवेशनं, तत्पादुकारोहणमिति त्रीणि छलानि । वस्त्राभरणयोश्चैवेत्यत्रादत्तग्राहक इति शेषो विज्ञेयः । मुक्तकेश इति द्विः पाठो मुण्डस्यापि संग्रहार्थः । अवशिष्टं व्यक्तार्थम् ।
स्मृच.२८

(२) वस्त्राभरणयोश्चैवेत्यत्रापि स्वयंग्राहेण परिधायक इति योज्यम् । परिधायकपदं समासान्तर्गतमपि बुद्ध्या निष्कर्षणीयम् । स्मृतिचन्द्रिकाकारस्तु वस्त्राभरणयोश्चेत्यत्रादत्तग्राहक इति शेषमाह । तद्धेयम् । पूर्वव्याख्यानेनोपपत्तौ शेषाध्याहारस्यायुक्तत्वात् । मुक्तकेश इति द्विः पाठोऽसंयतकेशमुण्डितकेशयोः समावेशार्थः ।
*व्यप्र.३७

१उत्कृत्ती शस्यघाती चाप्यग्निदश्च तथैव तु ।
विध्वंसकः कुमार्याश्च विधानस्योपभोजकः ॥
२सेतुकण्टकभेत्ता च क्षेत्रसंचारकस्तथा ।
आरामच्छेदकश्चैव गरदश्च तथैव च ॥
३राज्ञो द्रोहप्रकर्ता च तन्मुद्राभेदकस्तथा ।
तन्मन्त्रस्य प्रभेत्ता च बद्धस्य च विमोचकः ॥
४भोगदण्डौ च गृह्णाति दानं विक्रयमेव च ।
पटहाघोषणाच्छादी द्रव्यमस्वामिकं च यत् ॥
५राजावलीढं द्रव्यं च यच्चैवाङ्गविनाशनम् ।
द्वाविंशतिपदान्याहुर्नृपज्ञेयानि पण्डिताः ॥

(१) एवं छलादीनि साक्षाद्वा स्तोभकसूचकवचनाद्वा ज्ञात्वा राज्ञा द्रष्टव्यानि । अन्यानि पुनः कार्याणि कार्यिणां तत्संबन्धिनां वा सकाशात् ज्ञात्वा नान्यथेत्यवगन्तव्यम् ।
+स्मृच.२८

(२) यत्र छलादीनि राजा स्वयं द्रष्टुमशक्तः तत्र स्तोभकात् सूचकाच्च बोद्धव्यम् ।
पमा.४४

* शेषं स्मृचगतम् । + व्यप्र. स्मृचगतम् ।

द्द्वारे यो न) कयोः (के च) हणम् (हणे) क्रमेण कात्यायनः; **प्रका**.१६ विशेद (विवशेद); **समु**.१२.

(१) **शुनी**.४।५७४-५७५; **स्मृच**.२७; **पमा**.४३; **व्यप्र**.३७ दत्त (दत्ते); **व्यउ**.२३ क्रमेण कात्यायनः; **प्रका**.१६; **समु**.१२.

(२) **शुनी**.४।५७५-५७६ (अन्यवस्त्राभरणयोः स्वर्णस्य परिधायकः); **स्मृच**.२७; **पमा**.४३; **व्यप्र**.३७; **व्यउ**.२३; **प्रका**.१६; **समु**.१२. (३) **शुनी**.४।५७६-५७७ भु (भ्य); **स्मृच**.२७; **पमा**.४३ भुक्तो (भ्यक्तो) कुण्ठि (गुण्ठि); **व्यप्र**.३७ क्तप्र (क्तः प्र) शेषं पमावत्; **व्यउ**.२३ पमावत्; **प्रका**.१६ भुक्तो (भ्यक्तो); **समु**.१२.

(४) **शुनी**.४।५७७-५७८; **स्मृच**.२७; **पमा**.४४; **व्यप्र**.३७ दन (दक); **व्यउ**.२३ दन (दक) छिद्रान्वेषणतत्परः (कर्णनासाविशोधकः) क्रमेण कात्यायनः; **प्रका**.१६; **समु**.१२.

(५) **शुनी**.४।५७८ यश्च (प्राण) कर्श (दर्श); **स्मृच**.२८; **पमा**.४४ यश्च कर्णा (पक्षिपर्णा); **व्यप्र**.३७ शुनीवत्; **प्रका**.१६ कर्श (दर्श); **समु**.१२.

(६) **शुनी**.४।५७९ (राज्ञः समीपे पञ्चाशत् छलान्येतानि सन्ति हि); **स्मृच**.२८; **पमा**.४४; **व्यप्र**.३७; **व्यउ**.२३ उत्त.; **प्रका**.१६; **समु**.१२.

(१) **शुनी**.४।५८२ त्ती (ती) पू.; **स्मृच**.२८ त्कृत्ती (त्कर्ती) भोज (गोप); **पमा**.४५ त्कृत्ती (त्कृती) चाप्यग्नि (च अग्नि) तु (च) विध्वं (विवे) भोज (गोप); **व्यप्र**.३७; **व्यउ**.२३; **प्रका**.१७ तु (च) भोज (गोप) संवर्तः; **समु**.१२.

(२) **स्मृच**.२८; **पमा**.४५ त्ता च (त्तारः) संचा (संसा) च्छेदक (छन्दस); **व्यप्र**.३७ चार (चर); **व्यउ**.२३; **प्रका**.१७ संवर्तः; **समु**.१२.

(३) **शुनी**.४।५८२-५८३; **स्मृच**.२८ स्य च वि (स्यैव च); **व्यप्र**.३७; **व्यउ**.२३; **प्रका**.१७ स्मृचवत्, संवर्तः; **समु**.१२ स्य च (स्यैव).

(४) **शुनी**.४।५८३-५८४ (अस्वामिविक्रयं दानं भागं दण्डं विचिन्वति ?); **स्मृच**.२८ विक्रय (उत्सेक); **पमा**.४५ उत्त.; **व्यप्र**.३७; **व्यउ**.२३; **प्रका**.१७ स्मृचवत, संवर्तः; **समु**.१३ षणा (षिता) शेषं स्मृचवत्. (५) **शुनी**.४।५८४-५८५; **स्मृच**.२८ च (यत्); **पमा**.४५ लीढं (लीढ);

(३) एवं पञ्चाशत् छलानि, दशापराधाः, द्वाविंशति पदानि च। लोभकसूचकादिना ज्ञात्वा विचारयेत्। व्यउ.२३

[1] राजाज्ञा लङ्घिता येन तरणीया विशेषतः।
सप्ताङ्गस्य तु राज्यस्य द्रौह्यं तेन कृतं भवेत्॥
[2] पिता माता सुहृद्वाऽपि बन्धुः संबन्धिनोऽपि वा।
यदि कुर्युरुपस्थानं वादं तत्र प्रवर्तयेत्॥
[3] यः कश्चित्कारयेत् किञ्चिन्नियोगाद्येन केनचित्।
तत्तेनैव कृतं ज्ञेयं अनिवर्त्यं हि तत्स्मृतम्॥

(१) एवं चार्थिना वा तदीयेन वा पुरुषेणावेदनं कार्यं न त्वन्येनेत्यनुसंधेयम्। स्मृच.३२

(२) अन्तरेणापि नियोगं पित्रादयो विवादं कुर्युरित्याह पितामहः—पितेत्यादि। पमा.५३

[4] सभायाः पुरतः स्थाप्योऽभियोगी वादिना तथा।
ईप्सितेऽन्यत्र वा स्थाने प्रमाणं सोऽन्यथा न तु॥

(१) एवं येन केनापि उपायेनानीतमभियुक्तं अभियोक्त्रा सह सभायाः पुरतोऽन्यत्र वाऽपेक्षितस्थाने स्थापयेत्। तथा च पितामहः—सभाया इति। यत्र स्थिते दुष्टलक्षणप्रच्छादनमशक्यं तत्रावस्थाप्य इत्यर्थः। ततो राज्ञा पृष्टोऽभियोगी स्वोपयोगिवृत्तान्तमावेदयेत्। अभियोक्तृकृतावेदनमात्रतो भूतान्वेषणानुपपत्तेः। अत एव भूतान्वेषणविधावुक्तं मनुना 'स्वरवर्णेङ्गिताकारैश्चक्षुषा भाषितेन च' इति (८-२५)। छलव्यवहारेऽपि पूर्वपक्षलेखनादर्वाक् छलवादित्वावधारणायाभियुक्तस्य वृत्तान्तस्तन्मुखेनावगन्तव्यः। द्वयोः छलवादित्वे निश्चिते पश्चाच्छलानुसारेण दर्शनविधिः। तस्मादभियुक्तस्यापि वृत्तान्तावेदनमस्तीत्यवगन्तव्यम्। स्मृच.३४

(२) स्थापितस्य छलवादित्वं भूतवादित्वं वा लिङ्गैर्निश्चेयम्। पमा.५५

(३) तृतीया सहार्थे। व्यम.६

## उशना

अविनीतवादिदण्डः

[1] सशस्त्रोऽनुत्तरीयश्च मुक्तकेशः सहासनः।
वामहस्तेन च स्रग्वी वदन् दण्डमवाप्नुयात्॥

(१) आवेदनकर्ताऽपि आवेदनसमये अविनीतो वदन् दण्ड्य इत्याह उशना—सशस्त्र इति। अतो नैवम्भूतो वदेदित्यभिप्रायः। स्मृच.३२

(२) विनीतवेषो वदेदिति तात्पर्यम्। व्यप्र.३८

## हारीतः

[2] वर्णिनां सङ्करो यत्र ब्राह्मणादिक्रमेण तु।
व्यवहारस्तु निर्णेयो गौरवापेक्षया भवेत्॥

यत्र पुनः वादिप्रतिवादिनां त्रैवर्णिकत्वं तत्र वर्णानुक्रमेण गौरवापेक्षया व्यवहारो निर्णेतव्यः। तथा च हारीतः—वर्णिनामिति। गौरवापेक्षया ब्राह्मणादिक्रमेण, ब्राह्मणक्षत्रिययोर्विवादे ब्राह्मणस्याल्पतरं साध्यम्, क्षत्रियस्य बहुतरम्, तथाऽपि वर्णगौरवापेक्षया अल्पीयः साध्यमेव ग्राह्यमिति वचनार्थः। सवि.९७

आह्वानानर्हाः

[3] अकल्पबालस्थविरविषमस्थक्रियाकुलान्।
कार्यातिपातिव्यसनिनृपकार्योत्सवाकुलान्*॥
[4] मत्तोन्मत्तप्रमत्तार्तभृत्यान्नाह्वाययेन्नृपः*॥

---

व्यप्र.३९; व्यउ.२३; प्रका.१७ च (यत्) संवर्तः; समु.१३ च (यत्). (१) स्मृच.३० षतः (षितः); प्रका.१८; समु.१४ तर (कर).

(२) शुनी.४।६०९-६१० वापि बन्धुः (बन्धुर्भ्राता)ऽपि वा (ऽपि च); स्मृच.३२ माता (भ्राता) द्वापि (च्चापि); पमा.५३; सवि.७६ स्मृचवत्; व्यप्र.३६; व्यउ.२२; प्रका.२० स्मृचवत्; समु.१५ स्मृचवत्.

(३) शुनी.४।६१०-६११; स्मृच.३२; पमा.५४; सवि.७६; व्यप्र.३६; व्यउ.२२ ज्ञेयं (सर्वं); प्रका.२० नैव (नेव); समु.१५.

(४) स्मृच.३५; पमा.५५ ईप्सि (शंसि) न तु (तु न); व्यम.६ योगी (युक्तो) पू.; प्रका.२१; समु.१६.

---

* व्याख्यासंग्रहः कात्यायने (पृ. १२५-१२६) द्रष्टव्यः।

(१) व्यक.१९ च (वा); स्मृच.३२ हास (साध); पमा.५३ शस्त्रो (सखो) च (वा) केशः (कच्छः) दन् (देत्); स्मृचि.४; सवि. ७६ (=) न च (न वा); व्यसौ.१४ च (वा) केशः (कच्छः); व्यप्र.३८ वा ... च (वाहनस्थोऽथवा); व्यउ.२४ व्यप्रवत्; विता.३७ व्यसौवत्; प्रका.१९ स्मृचवत्; समु.१५ स्मृचवत्. (२) सवि.९७.

(३) अप.२।५; स्मृच.३३; पमा.५०; सवि.८०; प्रका.१९; समु.१५. (४) स्मृच.३३ यये (पये); पमा.५० (मत्तोन्मत्तप्रमत्तांश्च स्वजातिप्रभुकां स्त्रियम्। धर्मोत्सुकान् जडा-

आह्वानानर्हा अपि कदाचिदाह्वयनीयाः

[1]देशं कालं च विज्ञाय कार्याणां च बलाबलम् ।
अकल्पादीनपि शनैर्यानैराह्वाययेन्नृपः* ॥

[2]ज्ञात्वाभियोगं येऽपि स्युर्वने प्रव्रजितादयः ।
तानप्याह्वाययेद्राजा गुरुकार्येष्वकोपयन् ॥

अत्राकोपयन्निति वदन् प्राकृतजने निष्ठुरगिराऽप्याह्वानं कार्यमिति ज्ञापयति । स्मृच.३४

[3]राजिकं दैविकं कार्यमभियुक्तस्य तत्त्वतः ।
स्वस्थाने वाऽन्तराले वा यात्येवं तु न दोषभाक् ॥

तत्त्वतः परमार्थतः । अपरमार्थे चेद्दण्डयित्वा पश्चान्न्याये प्रवर्तयेत् । स्मृच.३४

[4]प्रतिष्ठाप्यस्तु यत्नेन सोऽन्यथा दण्डभाग्भवेत् ।
दण्डयित्वा पुनः पश्चाद्राजन्याये प्रवर्तयेत् ॥

## व्यासः

अनेककार्ययौगपद्ये वादक्रमः

[5]यस्य चाप्यधिका पीडा कार्यं चाप्यधिकं भवेत् ।
तस्यार्थिभावो दातव्यो न यः पूर्वं निवेदयेत् ॥

अर्थित्वं चाधिकपीडावशात् । सा च द्रव्यापचाराद्वा प्रारीप्सितकार्यभङ्गप्रसङ्गाद्वा न तु प्रथमनिवेदनमात्रेण तदाह व्यासः—यस्य चेति । व्यचि.८

[6]शूद्रविट्क्षत्रविप्राश्चेदहं पूर्वमिति स्थिताः ।
वादो वर्णानुपूर्व्येण ग्राह्यः पीडामवेक्ष्य च ॥

आसेधविधिः

[7]उत्पादयति यो हिंसां देयं वा न प्रयच्छति ।
याचमानाय दौःशील्यादाकृष्योऽसौ नृपाज्ञया ॥

यदा त्वकल्पादिप्रहितप्रतिनिधिना न कार्यनिष्पत्तिः, तदा अकल्पादीनामप्याह्वानं कार्यम् । महाभियोगेषु अभियुक्तस्यैवाह्वानस्यावश्यकत्वात् । महाभियोगास्तु मनुष्यमारणस्तेयपरदाराभिमर्शनापेयपानानि । असभ्यवादेष्वप्यकल्पादय आह्वातव्या एव । असभ्यवादास्तु अभक्ष्यभक्षणकन्यादूषणपारुष्यकूटकरणनृपद्रोहादीनि । एतेषु प्रतिनिधिर्न कार्यः । सवि.८१

[1]आसेधयोग्य आसिद्ध उत्क्रामन् दण्डमर्हति ॥
[2]आसेधयंस्त्वनासेध्यान् राज्ञा शास्य इति स्थितिः ॥

आह्वानासेधानर्हाः

[3]रोगी यियक्षुरुन्मत्तो धर्मार्थी व्यसनी व्रती ।
दानोन्मुखो नाभियोज्यो नासेध्यो नाह्वयेच्च तम् ॥

उक्तापवादः

[4]परानीकहते देशे दुर्भिक्षे व्याधिपीडिते ।
कुर्वीत पुनराह्वानं दण्डं न परिकल्पयेत् ॥

(१) आपन्नस्यानागमनेऽपि दण्डो नेत्याह व्यासः—परेति । पमा.५१

(२) आपन्मात्रमत्रागमनासंभवहेतुभूतं विवक्षितम् । व्यप्र.४१

वादे प्रतिनिधिर्ग्राह्यः

[5]कुलस्त्रीबालकोन्मत्तजडार्तानां च बान्धवाः ।
पूर्वपक्षोत्तरे ब्रूयुर्नियुक्तो भृतकस्तथा ॥

## संवर्तः

राज्ञा स्वयमुत्पाद्या व्यवहाराः

[6]आसेधं पथिभङ्गं च यश्च गर्भः पतिं विना ।

---

* व्याख्यासंग्रहः नारदे (पृ. १२०) द्रष्टव्यः । नार्तभृत्यान् नाह्वानयेन्नृपः ॥ ); **प्रका**.१९ र्तं (श्च); **समु**.१५.

(१) **स्मृच**.३३ यये (पये).

(२) **स्मृच**.३४ यये (पये); **प्रका**.२०; **समु**.१५.

(३) **स्मृच**.३४; **प्रका**.२१; **समु**.१६.

(४) **स्मृच**.३४; **सवि**.८२ (=) जन्याये (जा न्याय्ये); **प्रका**.२१ ज (जा) **समु**.१६ ज (जा). (५) **स्मृसा**.८५; **व्यचि**.८; **स्मृचि**.३७ चाप्य (वाप्य); **सेतु**.९६. (६) **स्मृसा**.८४. (७) **स्मृच**.३४; **सवि**.८१; **प्रका**.२६; **समु**.१५.

(१) **स्मृच**.३०; **व्यम**.५ नारदः; **प्रका**.१८; **समु**.१४.

(२) **स्मृच**.३०; **प्रका**.१८; **समु**.१४.

(३) **व्यक**. २३ रोगी यियक्षुः (योगी विपक्ष) ध्यो (ध्या); **स्मृच**.३१ खो (खी):३३; **स्मृचि**.५ रो (यो) र्थी (र्थ); **दवि**.३३४से(यो); **व्यसौ**.१७ रो (यो) दानोन्मुखो (दानार्थो); **विता**.४६; **प्रका**.१९ सनी (सन) खो (खो); **समु**.१४.

(४) **व्यक**.२४; **स्मृच**.३४; **पमा**.५१; **दवि**.३३५ दण्डं न परि (न तु दण्डं प्र); **नृप्र**.७; **व्यसौ**.१९ क्षे व्या (क्ष्व्या); **व्यप्र**.४१ व्यसौवत्; **व्यउ**.२५ व्यसौवत्; **विता**.४० न परि (तत्र न); **प्रका**.२१; **समु**.१६ व्यसौवत्.

(५) **स्मृसा**.८४ पूर्वपक्षोत्तरे ( वादे पूर्वोत्तरे ); **व्यत**.२०१; **चन्द्र**.१०२ पक्षो (वादो) ब्रूयु (कुर्यु); **सेतु**.९८.

(६) **स्मृच**.२८; **पमा**.४४ पथि (प्रति); **प्रका**.९७; **समु**.१२.

स्वयमन्वेषयेद्राजा विना चैव विवादिना ॥
[1]यस्य दृश्येत संपत्तिर्न दृश्येतागमः क्वचित् ।
स्वयमन्वेषयेद्राजा विना चैव विवादिना ॥
[2]सभाभङ्गं तरुच्छेदं सस्यव्याघातमेव च ।
स्वयमन्वेषयेद्राजा विना चैव विवादिना ॥
[3]कन्यापहारकं पापं विप्रं च पतितं तथा ।
परार्थवादसंयुक्तं स्वयं राजा विचारयेत् ॥
[4]षड्भागकरशुल्कार्थे मार्गभेदकमेव च ।
स्वराष्ट्रचौर्यभीतिं च परदाराभिमर्शनम् ॥
गोब्राह्मणनिहन्तारं सस्यानां चैव घातकम् ।
दशैतानपराधांश्च स्वयं राजा विचारयेत् ॥

एतानासेधादीन् दशापराधान् स्वयं राजा विचारयेदित्यर्थः । अत्र पथि भङ्गग्रहणं छलानां प्रदर्शनार्थम् । दशापराधान्तर्गतानां केषांश्चिद् ग्रहणं तेषां प्रदर्शनार्थम् । सस्यघातकग्रहणं तु पदानां प्रदर्शनार्थम् । स्मृच.२८

## मरीचिः

कन्या अनाह्वयनीया

[5]सर्ववर्णोत्तमा कन्या सा जातिप्रभुका स्मृता ।

अनाव्हयनीयापवादः

तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्च याः ।
निष्कुला याश्च पतितास्तासामाव्हानमिष्यते ॥

स्वजातिप्रभुका तु मरीचिना निरुक्ता—सर्वेति ।

पमा.५१

## स्मृत्यन्तरम्

अनेककार्ययौगपद्ये वादक्रमः

[7]यद्गुरुतरं कार्यं तत्तत्पूर्वं विशोधयेत् ।
वर्णक्रमेण वा पश्येद्गुणयोगेन वा पुनः ॥

कालातिपाते वादो न ग्राह्यः

[8]यत्र कार्ये भवेद्येन कृतोपेक्षा दशाब्दिकी ।
विवादस्तत्र नैव स्यात् साहसेषु विशेषतः ॥

## त्रैराज्यसूत्रम्

आव्हानातिक्रमे दण्डः

[1]त्रिरात्रानागमने चतुरः पणान् दण्ड्यः । पलायने चैवं, पराजये चतुरः कार्षापणान् ।

## शुक्रनीतिः

अर्थी कार्यं निवेदयेत्

[2]धर्मासनगतं दृष्ट्वा राजानं मन्त्रिभिः सह ।
गच्छेन्निवेद्यमानं यत्प्रतिरुद्धमधर्मतः ॥
यथासत्यं चिन्तयित्वा लिखित्वा वा समाहितः ।
नत्वा वा प्राञ्जलिः प्रव्हो ह्यर्थी कार्यं निवेदयेत् ॥
[3]सूचकस्तोभकाभ्यां वा श्रुत्वा चैतानि तत्वतः ॥

अविनीतवादी दण्ड्यः

[4]उद्धतः क्रूरवाग्वेषो गर्वितश्चण्ड एव हि ।
सहासनश्चातिमानी वादी दण्डमवाप्नुयात् ॥

आसेधविधिः

[5]ग्राह्याग्राह्यविवादं तु सुविमृश्य समाश्रयन् ॥
संजातपूर्वपक्षं तु वादिनं संनिरोधयेत् ।
राजाज्ञया सत्पुरुषैः सत्यवाग्भिर्मनोहरैः ॥
निरालसेङ्गितज्ञैश्च दृढशस्त्रास्त्रधारिभिः ॥
[6]प्रत्यर्थिनं तु शपथैराज्ञया वा नृपस्य च ॥

वादे प्रतिनिधिर्देयः

[7]व्यवहारानभिज्ञेन ह्यन्यकार्याकुलेन च ॥
प्रत्यर्थिनाऽर्थिना तज्ज्ञः कार्यः प्रतिनिधिस्तदा ॥
नियोगितस्यापि भृतिं विवादात्षोडशांशिकीम् ॥
अन्यथाभृतिगृह्णन्तं दण्डयेच्च नियोगिनम् ।
कार्यो नित्यो नियोगी न नृपेण स्वमनीषया ॥
लोभेन त्वन्यथा कुर्वन् नियोगी दण्डमर्हति ॥
[9]प्रवर्तयित्वा वादं तु वादिनौ तु मृतौ यदि ॥
तत्पुत्रो विवदेत ज्ञो ह्यन्यथा तु निवर्तयेत् ॥

वादे प्रातिभाव्यविधिः

[10]दूतेनाव्हानितं प्राप्ताधर्षकं प्रतिवादिनम् ॥

---

(१) **स्मृच**.२८ श्येत (श्यस्य); **प्रका**.१७ स्मृचवत्; **समु**.१२ स्मृचवत्. (२) **स्मृच**.२८; **प्रका**.१७; **समु**.१२. (३) **स्मृच**.२८; **पमा**.४४; **प्रका**.१७; **समु**.१२. (४) **स्मृच**.२८; **पमा**.४४ करशुल्का (कालं शुल्का) षट् ( षट्टे ); **प्रका**.१७; **समु**.१२.
(५) **स्मृच**.२८; **पमा**.४५; **प्रका**.१७; **समु**.१२. (६) **पमा**.५१. (७) **व्यनि**.; **प्रका**.२१; **समु**.१६. (८) **मेधा**. ८।१५४.

(१) **समु**.१५. (२) **शुनी**.४।५५४-५५५. (३) **शुनी**. ४।५६७. (४) **शुनी**.४।५८५-५८६. (५) **शुनी**.४।५९०-५९२. (६) **शुनी**.४।५९३. (७) **शुनी**.४।६०७-६०८. (८) **शुनी**.४।६११-६१३. (९) **शुनी**.४।६१५-६१६. (१०) **शुनी**.४।६१९–६२२.

दृष्ट्वा राज्ञा तयोश्चिन्त्यो यथार्हप्रतिभूस्त्वतः ।
दास्याम्यदत्तमेतेन दर्शयामि तवान्तिके ॥
एनमाधिं दापयिष्ये ह्यस्मात्ते न भयं क्वचित् ।
अकृतं च करिष्यामि ह्यनेनायं च वृत्तिवान् ॥
अस्तीति न च मिथ्यैतदङ्गीकुर्यादतन्द्रितः ।
प्रगल्भो बहुविश्वस्तश्चाधीनो विश्रुतो धनी ॥

प्रतिभुवस्त्वभावे वादनिर्णयपर्यन्तं वादिबन्धः

[1]विवादिनौ संनिरुध्य ततो वादं प्रवर्तयेत् ॥
स्वपुष्टौ राजपुष्टौ वा स्वभृत्या पुष्टरक्षकौ ।
ससाधनौ तत्त्वमिच्छुः कूटसाधनशङ्कया ॥

## मानसोल्लासः

व्यवहारोपक्रमोद्धृतस्मृतिसारसंग्रहः

[2]सतां मार्गं समुल्लङ्घ्य बाधितो यो बलीयसा ।
निवेदयेत यद् राज्ञे तद्विवादपदं स्मृतम् ॥
[3]स्वैयं नोत्पादयेत् कार्यं समर्थः पृथिवीपतिः ।

(१) शुनी.४।६२३-६२४. (२) मासो.२०।२।१२६३
(३) मासो.२०।२।१२७४.

नाददीत तथोत्कोचं दत्तं कार्यार्थिना नृपः ॥
[1]विवादायागतं पृच्छेत् सभायां पुरतः स्थितम् ।
किं कार्यं किं च दुःखं ते त्यक्तशङ्को निवेदय ॥
निरूपिते[2] पुनः पृच्छेत् केन कस्मिन् कुतः कथम् ।
तस्मात् तव कृतं ब्रूहि सत्यमेव सभागतः ॥
[3]सभ्यैः सह समालोच्य पदं न्याय्यं यथा भवेत् ।
प्रत्यर्थिनस्तथाऽऽह्वानं लेखैर्दूतैश्च कारयेत् ॥
[4]आहूतो यदि नागच्छेद् व्याधितो दुःखितोऽथवा ।
निरुद्धो विषमस्थो वा क्रियाव्यग्रो ज्वरन्नपि ॥
[5]स्वामिकार्यप्रदो वाऽपि नृपकार्यरतोऽथवा ।
मत्तो वाऽथ प्रमत्तो वा तथाप्येष न दुष्यति ॥
[6]कुलीना परभार्या च युवतिश्च प्रसूतिका ।
रजस्वला पक्षहीना नाव्हातव्या सभां प्रति ॥

(१) मासो.२०।२।१२७५.
(२) मासो.२०।२।१२७६. (३) मासो.२०।२।१२७७.
(४) मासो.२०।२।१२७८. (५) मासो.२०।२।१२७९.
(६) मासो.२०।२।१२८०.

## कौटिलीयमर्थशास्त्रम्

**संवत्सरमृतुं मासं पक्षं दिवसं करणमधिकरणमृणं वेदकावेदकयोः कृतसमर्थावस्थयोर्देशग्रामजातिगोत्रनामकर्माणि चाभिलिख्य वादिप्रतिवादिप्रश्नानर्थानुपूर्व्या निवेशयेत्। निविष्टांश्चावेक्षेत।**

संवत्सरमित्यादि। संवत्सरं राजवर्षोपलक्षितं कलिशकादिवर्षम्, ऋतुं वसन्तादिं, मासं चैत्रादिं, पक्षं मासार्धं, दिवसं तिथिं, करणं बवादिकं तिथ्यर्धम्, अधिकरणं स्थानीयद्रोणमुखादि, ऋणं वृद्ध्यर्थप्रयुक्तं धनं, वेदकावेदकयोः, वेदकः परोत्पादितपीडानुभवितृत्वात् तन्निवेदयितृत्वाद् वा अभियोक्ता, अवेदको वेदकविपरीतोऽभियोज्यः तयोः, कीदृशयोः, कृतसमर्थावस्थयोः समर्थावस्था संबद्धावस्था अधमर्णोत्तमर्णभावलक्षणः संबन्धः स कृतो याभ्यां तथाभूतयोः समर्था क्षमा उत्तमाधमर्णभावावस्था कृता याभ्यां तथाभूतयोर्वा, कृतसमस्थावस्थयोरिति पाठे समस्थशब्दस्य समानस्थितिकार्थतया कृतसमानस्थितिकसंबन्धयोरित्यर्थः। देशग्रामादीनि षट् च, अभिलिख्य, वादिप्रतिवादिप्रश्नान् अभियोक्त्रभियोज्यविषयाणि चोद्यानि अर्थानुपूर्व्या अर्थगुरुलघुभावक्रमेण, निवेशयेत् अभिलिखेत्। निविष्टांश्च, अवेक्षेत शोधयेद् अधिकोद्धापार्थं न्यूनप्रतिपूरणार्थं च। श्रीमू.

## मनुः

भाषादोषः

**सत्या न भाषा भवति यद्यपि स्यात्प्रतिष्ठिता।**
**बहिश्चेद्भाष्यते धर्मान्नियताद्व्यावहारिकात्* ॥**

## याज्ञवल्क्यः

प्रतिज्ञालेखविधिः

**प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना।**
**समामासतदर्धाहर्नामजात्यादिचिह्नितम् ॥**

(१) एवं चार्थिभिरावेदिते निर्व्याजं प्रत्यर्थिनं तदैवाहूय राज्ञाऽर्थिप्रत्यर्थिसभ्यानुमतेन लेखकेन—'प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना' इत्यादि। यथावेदितमित्यनुबन्धप्रयोजनादिविशिष्टापराधज्ञापनार्थम्। समा संवत्सरः। मासः स्पष्टः। तदर्धमर्धमासः। आदिग्रहणं स्मृत्यन्तरानुसारेण भाषाप्रपञ्चनिरूपणार्थम्। यथाह कात्यायनः—निवेश्येत्यादि। पूर्वं च भूमावालिख्य प्रतिज्ञां शोधयित्वा पश्चात् पत्रारोपणं कार्यम्। एवं पूर्ववाद्युक्तं पत्रारूढं श्रावयेत्। विश्व.२।६

(२) प्रत्यर्थिनि मुद्रालेख्यपुरुषाणामन्यतमेनानीते किं कुर्यादित्यत आह—प्रत्यर्थिन इति। अर्थ्यते इत्यर्थः साध्यः सोऽस्यास्तीत्यर्थी तत्प्रतिपक्षः प्रत्यर्थी। तस्याग्रतः पुरतो लेख्यं लेखनीयम्। यथा येन प्रकारेण पूर्वमावेदनकाले आवेदितं तथा। न पुनरन्यथा। अन्यथावादित्वेन व्यवहारस्य भङ्गप्रसङ्गात्। 'अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः। आहूतः प्रपलायी च हीनः पञ्चविधः स्मृतः' इति॥ आवेदनकाल एवार्थिवचनस्य लिखितत्वात्पुनर्लेखनमनर्थकमित्यत आह—समामासेत्यादि। संवत्सरमासपक्षतिथिवारादिना अर्थिप्रत्यर्थिनाम ब्राह्मणजात्यादिचिन्हितम्। आदिशब्देन द्रव्यतत्संख्यास्थानवेलाक्षमालिङ्गादीनि गृह्यन्ते।

आवेदनसमये कार्यमात्रं लिखितं प्रत्यर्थिनोऽग्रतः समामासादिविशिष्टं लिख्यत इति विशेषः। संवत्सरविशेषणं यद्यपि सर्वव्यवहारेषु नोपयुज्यते तथाप्यधि-

* व्याख्यासंग्रहः स्थलादिनिर्देशश्च कृतनिवर्तने द्रष्टव्यः।

(१) कौ.३।१. (२) **यास्मृ**.२।६; **अपु**.२५३।३५-३६; **विश्व**.२।६ हर्ना (होना); **मिता**.; **अप**.; **व्यक**.२५; **स्मृच**.३६; **पमा**.६०; **स्मृसा**.८५ विश्ववत्; **व्यनि**.; **स्मृचि**.३७; **नृप्र**.५ पू.; **सवि**.८४ : १०० यथा (यदा) पू.; **मच**.८।१६४ वेदि (चोदि) र्धाहर् (र्थाहो); **चन्द्र**.१०७ विश्ववत्; **व्यसौ**.२० यथा (पदा) हर्ना (होना); **वीमि**.; **व्यप्र**.४६; **व्यउ**.३२-३३; **व्यम**.६; **विता**.५२; **राकौ**.३८६; **प्रका**.२१-२२; **समु**.१६.

प्रतिग्रहक्रयेषु निर्णयार्थमुपयुज्यते । 'आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा' इति वचनात् ( यास्मृ. २।२३ ) । अर्थव्यवहारेऽपि एकस्मिन्संवत्सरे यत्संख्याकं यद्द्रव्यं यतो येन गृहीतं प्रत्यर्पितं च पुनरन्यस्मिन् वत्सरे तद्द्रव्यं तत्संख्याकं ततस्तेन गृहीतं याच्यमानो यदि ब्रूयात्सत्यं गृहीतं प्रत्यर्पितं चेति । वत्सरान्तरे गृहीतं प्रत्यर्पितं नास्मिन्वत्सरे इत्युपयुज्यते । एवं मासाद्यपि योज्यम् । देशस्थानादयः पुनः स्थावरेष्वेवोपयुज्यन्ते । एवं पक्षलक्षणे स्थिते पक्षलक्षणरहितानां पक्षवदवभासमानानां पक्षाभासत्वं सिद्धमेवेति योगीश्वरेण न पृथक् पक्षाभासा उक्ताः । अन्यैस्तु विस्पष्टार्थमुक्तम् ।

अर्थिग्रहणात्पुत्रपौत्रादिग्रहणं तेषामेकार्थत्वात् । नियुक्तस्याऽपि नियोगेनैव तदेकार्थत्वाक्षेपात् । 'अर्थिना संनियुक्तो वा प्रत्यर्थिप्रहितोऽपि वा । यो यस्यार्थे विवदते तयोर्जयपराजयौ' ॥ इति स्मरणात् । नियुक्तजयपराजयौ मूलस्वामिनोरेव । एतच्च भूमौ फलके वा पाण्डुलेखेन लिखित्वा आवापोद्धारेण विशोधितं पश्चात्पत्रे निवेशयेत् । शोधनं च यावदुत्तरदर्शनं कर्तव्यं नातः परम् । अनवस्थाप्रसङ्गात् । पूर्वपक्षमशोधयित्वा एव यदोत्तरं दापयन्ति सभ्यास्तदा रागाल्लोभादित्युक्तदण्डेन सभ्यान्दण्डयित्वा पुनः प्रतिज्ञापूर्वकं व्यवहारः प्रवर्तनीयो राज्ञेति । *मिता.

(३) अर्थिनाऽग्रवादिना धर्माधिकारे येन येन प्रकारेण कार्यमावेदितं तत्तेनैव प्रकारेण वर्षादिचिन्हितं प्रत्यर्थिनः पुरतो राज्ञा लेखयितव्यम् । तत्र आवेदनप्रकारो यथा— मदीयं सुवर्णमेतावदमुकवत्सरेऽमुकमासेऽमुकपक्षे अमुकतिथावमुकेनामुकजातीयेनाधमर्णेन गृहीतमिति । अथ वा विवादास्पदधनस्य नामजात्यादिचिन्हितम् । आदिशब्देन खण्डत्वमुण्डत्वसंख्यापरिमाणादि गृह्यते । अन्यथा संख्यादिरहितद्रव्यविषयविवादस्यानादेयता स्यात् । येषां मध्ये यानि साधकबाधकप्रमाणोपन्यासोपयोगीनि यत्र भवन्ति तत्र तान्येव लेख्यानि । न सर्वाणि । प्रयोजनाभावात् । तत्र समामासादीनां वृद्धिविवादे पूर्वोत्तरकालविवादे चास्त्युपयोगः । चौर्यादिविवादे नामजात्यादेः । एवमन्येष्वप्यूहनीयम् । +अप.

(४) यथावेदितमिति यत्साध्यमावेदितं तदेव लेख्यं न साध्यान्तरमिति प्रतिपादनार्थम् । न पुनर्यावदावेदितं तावदेव लेख्यमिति । यतो नावेदितस्यापि वत्सरादिविशेषस्येदानीं लेखनं कार्यमिति स एवाह—'समामासतदर्धाहर्नामजात्यादिचिन्हितम्' इति । समा संवत्सरः । स च धनप्रयोगादिकालीयो लेखनीयः । मासादिरपि तत्कालीन एव । स्मृच.३६

(५) मिता. टीका—क्षमालिङ्गादीनीति । प्रत्यर्थिविषये आसेधाद्यकरणं क्षमा सहिष्णुता । तत्र लिङ्गानि कारणानि बाल्यजडत्वादीनि । सुबो.

(६) यदावेदितमिति कृत्वा चन्द्रिकाकारेण यत्साध्यमिति व्याख्यातम् । विज्ञानयोगिना तु यथावेदितमिति पठित्वा यथा—येन प्रकारेण पूर्वमावेदनकाल एवावेदितं तथा न पुनरन्यथा, अन्यथावादित्वे तु भङ्गप्रसङ्गात् । 'अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः । आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः' इति । आवेदनकाले अर्थिवचनस्य लिखितत्वात्पुनर्लेखनमनर्थकमित्यत आह—समामासेत्यादि । यथेति थाल्प्रत्ययान्तं प्रकारवचनं कृत्वा व्याचक्षाणस्य विज्ञानेश्वरस्य आवेदनसमये यावल्लिखितं तावल्लेखनीयं, किन्तु साध्यमेव लेखनीयमित्याशयः । अन्यवादिवचनोदाहरणात् । अन्यवादित्वं नाम स्वसाध्यं विहाय साध्यान्तरस्वीकार इति । अतो विज्ञानयोगीन्द्रचन्द्रिकाकारयोर्व्याख्यानप्रकारभेद एव नार्थभेदः । यथारुचि स्वीकार्यम् । सवि.८४-८५

(७) एते भाषाधिकरणे कालनामजातयः प्रतिवादिनः स्वस्य च । +वीमि.

(८) लेख्यं लेखनीयं ससभ्येन सभापतिना । *व्यप्र.४६

(९) अत्र विज्ञानेश्वरः । अर्थ्यत इत्यर्थः । साध्यांशोऽस्येत्यर्थी तत्प्रतिपक्षः प्रत्यर्थीत्याह । तन्न । मिथ्योत्तराद्यधीनायाः साध्यसिद्धेर्भाषाकाले पूर्वमज्ञानात् । कारणोत्तराद्यधीनं हि साध्यं कथं पूर्वं ज्ञायेत । तेनात्र प्रतिवादिमात्रं प्रत्यर्थीत्यपरार्कः । तस्याऽग्रे सभ्यैरर्थिना लेखनीयम् । अशक्तौ पुत्राद्यैः । विता.५२

* व्यनि. मितागतम् । + शेषं मितागतम् ।

+ शेषं मिताक्षरापरार्कादिषु गतार्थम् । * शेषं मितागतम् ।

## नारदः

प्रतिज्ञाप्रशंसा

**सारस्तु व्यवहाराणां प्रतिज्ञा समुदाहृता ।**
**तद्धानौ हीयते वादी तरंस्तामुत्तरो भवेत् ॥**

(१) अत्र सर्वेषामपि व्यवहाराणां सारभूता प्रतिज्ञा समुदाहृता। सा च प्रतिज्ञा विचार्या। पण एव तावत्प्रतिज्ञा न भवति तस्य श्लोकद्वयेन निर्लोचितत्वात्। पुनरुक्तदोषसंभवाच्च। ततः प्रतिज्ञां केचिच्छरीरनिग्रहोपन्यासं वदन्ति। यस्य किल धनपणो न संभवति स व्यवहारे रोषान्धत्वादेवमपि वदति, यथा—यद्यहं हारयामि, तदा मम हस्तोऽपगच्छति पादो वा, मम प्रतिज्ञेयम्। तदिदमपि वचनं प्रतिज्ञा। यतोऽत्र श्लोके एतदुक्तम्—'तद्धानौ हीयते वादी तरंस्तामुत्तरो भवेत्'। तद्यदि हस्तखण्डनं न करोति हस्तखण्डनं प्रतिज्ञामुद्दिश्य न करोति न खण्डयति,, तत्किम्? तत्प्रतिज्ञातं हानौ हीयते वादी लभ्यद्रव्यं न लभते, किंवा हस्तखण्डने कृते तरंस्तामुत्तरो भवेदिति। अस्मादर्थात् प्रमाणक्रियाभिः अधरीकृतमपि द्रव्यमसौ लभते। यत एतदुभयथाप्यनर्थकम्। तत एवेयमपि प्रतिज्ञा न भवति। प्रतिज्ञा चाऽत्रेयम्। यद्धनिकस्य क्वचिदनागतमेव द्रव्यप्रार्थनां कुर्वतः ऋणिकेन स्वल्पद्रव्यभुक्तिरपि कृता। अथवा, कस्मिंश्चित्प्रदेशे स्थितेन वाचैव क्वचिदीदृशं प्रतिपन्नमासीत् यथा प्रयच्छामि, तच्च द्रव्यमहं यदि पालयित्वा गृह्णामि, इत्यादिद्रव्यसंप्रतिपत्यं चलं दर्शयित्वाऽपि यदा खरं गृहीतेन धर्माधिकरणाग्रे मिथ्या कृता भवति, धनिकोऽपि तदेव प्रदेशोद्देशपूर्वकं संप्रतिपत्यं चलं द्रव्यसिद्धेः प्रतिज्ञाय दिव्येनाऽधिष्ठितो भवति, तदा सैव संप्रतिपत्यचलत्वसिद्धिप्रतिज्ञा, दिव्येनावान्तरसाध्यमानवादिनो मूलिकलभ्यद्रव्यस्य साधका भवन्तीति। इयमीदृशोदाहरणा प्रतिज्ञा सर्वव्यवहाराणामपि सारभूता भवतीति। 'तद्धानौ हीयते वादी तरंस्तामुत्तरो भवेदि'त्यादिषु सार्विकमिदमिति। तथा चोक्तम्—'यत्र वादी क्रियाकाले सर्वसिद्धिमुदीरयेत्। दिव्येन तां खरीकुर्वन् सा प्रतिज्ञा प्रकीर्तिता'॥ अभा.५-६

(२) अत एव च यत्तार्किकैः प्रतिज्ञावचनस्यानङ्गत्वमुक्तं तदपि प्रत्युक्तम्। विश्व.२।८

(३) प्रतिज्ञामुत्तीर्णो भवेदित्यर्थः। अप.२।८

(४) तरन् निर्वाहयन्, उत्तरो विजयवान्। व्यक.३८

(५) प्रतिज्ञा तावत् 'त्वं मह्यं शतं धारयसि' इत्येवंरूपा, तस्या हानौ अपरिपूरणे हीयते भज्यते तां तरन् परिपूरयन् उत्तरः श्रेष्ठो भवतीत्यर्थः। व्यचि.१२

(६) प्रधानं व्यवहाराणां प्रतिज्ञोक्ता। तद्धानौ हानिरन्यथाभावः। अन्यथोक्तेऽन्यथाभावे पराजीयते। यथोक्तं 'प्रतिज्ञां निर्वहन् जयति, तस्मात् सुपरीक्ष्य प्रतिज्ञा कर्तव्या, तन्मूलत्वात् सर्वस्ये'ति। नाभा. १।६

(७) उत्तरः उत्कृष्टो विजयीति यावत्। यद्यपि न्यायाख्यपञ्चावयववाक्यान्तर्गतं प्रतिज्ञास्वरूपं साध्यधर्मविशिष्टधर्मिवचनमात्रं, तथाप्यत्र 'सत्कारणान्वितम्' इत्युक्तत्वात् सहेतुकसाध्यधर्मविशिष्टधर्मिवचनं प्रतिज्ञेति गम्यते। हेतोश्च पक्षभूताऽधमर्णादिनिष्ठत्वं तदनङ्गीकृतं क्रियापादेन सिध्यतीति ध्येयम्। तथा सति स्थापनानुमानप्रयोग एव प्रतिज्ञा। प्रतिस्थापनानुमानप्रयोग एव चोत्तरमत्र पर्यवस्यति। अत एव स्मृत्युक्ता उभयाभासा यथायथमर्थान्तरमप्यनुयोज्यानुयोगासिद्धयादिनिग्रहस्थानहेत्वाभासादिष्वेव पर्यवस्यन्ति। ततश्च त्वं शतं मह्यं धारयसि ऋणत्वेन मत्तो गृहीततावद्धनत्वादिति भाषाशरीरम्। न धारयामि अगृहीतत्वात् प्रतिदत्तत्वाद्वेत्याद्युत्तरशरीरम्। अत्र च न साधुशब्दनियमः तदनभिज्ञानामप्यर्थिप्रत्यर्थित्वदर्शनात्। बोधकैस्तु येषां ये शब्दाः प्रसिद्धास्तैरेव भाषादि लेखनीयम्। प्रतिवादिसभ्यादीनां तदनभिज्ञत्वे भाषाद्वयाद्यभिज्ञैस्ते बोधनीया इत्याद्यूह्यम्। अत एव विष्णुधर्मेऽध्यापनेऽपि साधुशब्दनियमानादर उक्तः। 'संस्कृतैः प्राकृतैर्वाक्यैर्यः शिष्यमनुरूपतः। देशभाषाद्युपायैश्च बोधयेत्स गुरुः स्मृतः' इति॥ व्यप्र.५४

---

(१) **नासं**.१।६; **नास्मृ**.१।६; **अभा**.५; **विश्व**.२।८; **व्यमा**.२९२; **अप**.२।८; **व्यक**.३८; **स्मृसा**.८५-८६; **व्यचि**.१२; **व्यनि**.; **स्मृचि**.४२; **व्यत**.२०४; **चन्द्र**.१०७; **व्यसौ**.३६; **व्यप्र**.५४,८६; **सेतु**.१०३; **प्रका**.२४ द्धानौ (द्धीनो); **समु**.१९ प्रकावत्; **विव्य**.५ तरंस्तामुत्तरो भवेत् (तस्यामेवोत्तरं वदेत्).

प्रतिज्ञालेखविधिः

**सुनिश्चितबलाधानस्त्वर्थी स्वार्थप्रचोदितः ।**
**लेखयेत्पूर्वपक्षं तु कृतकार्यविनिश्चयः ॥**

(१) अर्थी पूर्वपक्षं लेखयेत् । भाषामित्यर्थः । स्वार्थप्रचोदितः न राज्ञा प्रचोदितो न वैरिणा । स्वकीयेनैव अर्थेन प्रचोदितः । तथा कृतकार्यविनिश्चयः यावदिदं प्रारब्धप्रयोजनं मयान्तं न नीतं तावदन्यन्न करोमीति कृतनिश्चयः । एतदर्थिकर्तव्यमुक्तम् । अभा.२०

(२) स्वनिश्चितबलाधानत्वं कृतकार्यनिश्चयत्वं च हेतुगर्भविशेषणम् । व्यमा.२९०

वाद्युक्तं फलकादिषु प्रथमं लेखनीयम्

**निराकुलावबोधाय धर्मस्थैः सुविचारितम् ।**
**तस्मादन्यद्व्यपोह्यं स्याद्वादिनः फलकादिषु ॥**

तेषु फलकादिषु यत्किमपि वादिनः सक्तं प्रथममेव लिखितं, तस्माद्यदन्यदभ्यधिकं किमपि तद्धर्मज्ञैः सुविचारितं व्यपोह्यं अपनेतव्यमित्यर्थः । तच्च किमर्थं राजकुलावबोधार्थं वादिनश्चेति । अभा.२२

**रागादीनां यदेकेन कोपितः करणे वदेत् ।**
**तदोमिति लिखेत्सर्वं वादिनः फलकादिषु ॥**

(१) रागादीनां कामक्रोधलोभानां मध्ये येनैव भावेन कोपेन वादी करणमागत्य वदेत् तदेव, फलकादिष्विति फलकपत्रभूर्जसंपुटिकाकुड्येष्वपि यथासंभवं तत्क्षणमेव लेखको लिखेत् झटित्यक्षरनिबद्धं कुर्यात् । अभा.२२

(२) करणे राजादिसंनिधावित्यर्थः । स्मृच.३२

(३) करणे धर्माधिकरणे । पमा.५४

(४) ओमित्यनेन यथावेदितं तथैव लिखेदित्युक्तम्। व्यप्र.३८

(५) रागादिना कोपितः अधर्मेण धर्षितः कश्चिदित्यध्याहारः । व्यउ.२४

फलकलिखितं वाद्यनुज्ञातं चाधिकं पुनः लिखेत्

**वादिभ्यामभ्यनुज्ञातं शेषं च फलके स्थितम् ।**
**ससाक्षिकं लिखेयुस्ते प्रतिपत्तिं च वादिनोः ॥**

अयं श्लोको वादस्थानकप्रस्थानेन विवरणाय 'वादिभ्यामभ्यनुज्ञातम्' अयं श्लोको महर्षिणा कृतः स्पष्टान्धकं नाम । दुर्घटान्वयः सान्वयः । तत्र तावद्दुर्घटान्वय उच्यते । अस्मिन् श्लोके वाक्यचतुष्टयम् । तत्र 'वादिभ्यामभ्यनुज्ञातम्' इत्येकं वाक्यम् । 'शेषं च फलके स्थितम्' इति द्वितीयम् । 'ससाक्षिकं लिखेयुस्ते' इति तृतीयम् । 'प्रतिपत्तिं च वादिनोः' इति चतुर्थम् । एतत्पादचतुष्टयमपि अर्थतो दुरन्वयम् । वादिभ्यामभ्यनुज्ञातमिति यदुक्तम् । अत्र वादिनोः परस्परं विप्रतिपत्तिबद्धामर्षचित्तयोः खलकप्रविष्टयोरिव न्यायस्थानोपस्थितयोः, कुत आकाशान्निपत्य स्नेहः समागच्छतु, येन सस्नेहैकवाक्यतया ताभ्यां द्वाभ्यां वादिभ्यामभ्यनुज्ञातं किञ्चिद्वस्तु भविष्यति, तदवस्थयोर्न तादृशी भाषा संभाव्यते । नाप्युत्तरम् । तदभावे च किमन्यद्वस्तु तादृशं, यल्लिखेयुः कारणिकाः । एवं तावदिदं प्रथममेव वाक्यमिति दुर्घटान्वयम् । ततश्च 'शेषं च फलके स्थितमिति, यदुक्तं तत्राऽपि यत्कस्याऽपि वस्तुनः किञ्चिदुच्चरितं (न) भवति तच्छेषमुच्यते । अत्र च अनिर्दिष्टस्वरूपवस्तुनः कस्य शेषं उच्चरितं भवतु कीदृशं तावद्

---

(१) **नास्मृ**.२।१; Vulg. पक्षं (कार्यं) श्चयः (र्णयः); **अभा**.२० श्चयः (र्णयः); **विश्व**.२।५ सु (स्व) पक्षं (पादं); **मेधा**.८।५६ (सुनिश्चितबलाधानः पूर्वपक्षी भवेत्सदा । दशाहं द्वादशाहं वा स्वपक्षं परिशोधयेत्); **व्यमा**.२९० सु (स्व) पक्षं (वादं); **विव्य**.४ र्थं (त्म) पक्षं (पादं).

(२) **नास्मृ**.२।१९ निरा (राज); **अभा**.२२; **स्मृचि**.३८ सु (तु) (तस्माद्योज्यमनन्यार्थं वादिनोः प्रतिपादितम्); **व्यसौ**.२२ चारि (भावि) (तस्मादयोज्य (?) मल्पार्थं वादिनोः प्रतिपादितम्); **राकौ**.३८९ (तस्मादमोघ्यामन्यार्थवादिनः प्रतिवादिनम्) उत्त., कात्यायनः.

(३) **नास्मृ**.२।१८ रणे (रणं) दोमिति (दादौ तु); **अभा**.२२ दोमिति (दादौ तु); **व्यक**.१९-२० दीनां यदे (दिना यदै) नारदकात्यायनौ; **स्मृच**.३२ वादिनः (अर्थिनः); **पमा**.५४ व्यकवत्; **सवि**.७८ स्मृचवत्, गोभिलः; **व्यसौ**.१४ दीनां (दिना); **व्यप्र**.३८ दीनां यदे (दिना यदै) वादिनः (लेखकः); **व्यउ**.२४ व्यप्रवत्; **प्रका**.२० स्मृचवत्; **समु**.१५ स्मृचवत्.

(१) **नास्मृ**.२।२०; **अभा**.२२; **स्मृचि**.३८; **व्यसौ**.२२ शेषं च (अशेषं) युस्ते (त्पत्रे) त्तिं च (त्यात्तु); **राकौ**.३८९ शेषं च (अशेष) (सत्पाक्षिकं लिखेत्पुस्ते प्रतिपत्त्यानुवादिनोः) कात्यायनः.

भवतु यल्लिखेयुः । एवमनिर्दिष्टाङ्कितमूलरहितशेषस्यासंभवे शेषं च फलके स्थितं लिखेयुरिति द्वितीयमपि इदं वाक्यं दुर्घटान्वयमेव । यच्चोक्तं ससाक्षिकं, ततस्तस्यार्थस्योत्तरत्राऽव्यभिचारार्थं श्रोतारः साक्षिणो ये तत्र आनेतव्याः ते, किं तावत्कारणिकैरुत वादिना अथवा प्रतिवादिना । एवं च साक्ष्यानयनक (?) स्यापि असंभवे दृश्यमाने ससाक्षिकं लिखेयुरिति तृतीयमपीदं वाक्यं दुर्घटान्वयमेव । यच्च प्रतिपत्तिं च वादिनोर्लिखेयुरिति चतुर्थं वाक्यं, तदेतेषां त्रयाणामपि वाक्यानामर्थस्य लेखनक्रियार्थप्रसिद्धम् । तेषु त्रिष्वपि वाक्येषु निरर्थकेषु गतेषु सत्सु इदमपि चतुर्थं नैव सार्थेन सह याति । तत्प्रतिबद्धत्वात् । तत्प्रतिबद्धं हि यत्तन्निवृत्तौ तस्यापि निवृत्तिरिति । एवमयं चतुष्पादश्लोकोऽपि दुर्घटान्वयः । किन्तु स्मृतितन्त्रसांकेतिकशब्दार्था मुनिश्लोका दुर्बोधा एव भवन्ति । न पुनर्निरर्थकाः । तद्यदि पक्षेण वा मासेन वा सुचिरमपि विचिन्त्यास्य मुनिकृतस्पष्टान्धकश्लोकस्य सार्थकत्वकरणस्यापि वाञ्छाऽस्ति । ततस्तद्वचनात्पालयामस्तावत् । अथ तदापि वयमेव प्रष्टव्याः, ततोऽभिमानग्रस्ततामुत्सृज्य पृच्छत येन कथयामः । अथवा किमस्माभिरपि अवश्यमेवोद्धतता त्याजनीया । ...किं लिखेयुरिति क्रियाः, के लिखेयुः कारणिकाः । किं लिखेयुः यत्किमपि वादी भाषाप्रथमपादे स्थितो वदति ते फलकस्थितं लिखेयुः । यच्चोक्तं शेषं च लिखेयुरिति तदिह भाषा यावत्फलकेऽभिलिख्यते, यावच्च सोत्तरेणावष्टभ्यते तावत्सर्वोऽपि भाषावादिनामेव स्वकीयपादे स्थितो वादी यदि किमपि विस्मृत्य कुलेखितं प्रसाधयति, सुस्मृतं च सत्यं च लेखयति, तत इदं तस्य प्रत्याकलितमुच्यते पश्चादाकलितमित्यर्थः । तच्च कालप्रदेशधनिकर्णिकवित्तसंख्याफलोपाश्रयाणां षण्णामपि प्रधानवस्तूनां मध्ये यदभिप्रेतं तमच्छलग्राहिणो भूत्वा कारणिका लिखेयुरिति । तथा च प्रत्याकलितलक्षणम्—
'वादिभ्यां लिखिताच्छेषं यत्पुनर्वादिना स्मृतम् ।
तत्प्रत्याकलितं नाम स्वपादे तस्य लिख्यते' ॥
तत्र वादिभ्यामिति द्विवचननिर्देशः कृतस्तद्द्वितीयस्थोत्तरवादिनोऽपि प्रत्याकलितस्यायमेव विधिर्द्रष्टः । यच्च ससाक्षिकमुक्तं तच्च साक्षिनिर्देशकाले तृतीयपादेऽप्ययमेव विधिर्द्रष्टव्यः । यच्चानुज्ञातमित्युक्तं तद् द्वाभ्यामपि वादिभ्यां श्रुतधारिभ्यां द्वयोरपि यथासंभवं लिख्यत इति ।
*अभा. २२-२३

भाषालेखनावधिः

**[1]भाषाया उत्तरं यावत्प्रत्यर्थी न निवेशयेत् ।**
**अर्थी तु लेखयेत्तावद्यावद्वस्तु विवक्षितम् ॥**

(१) अर्थी भाषायां स्वकीयं विवक्षितं वस्तु तावदेव लेखयेत्, यावत् प्रत्यर्थी उत्तरं न निवेशयत् । उत्तराक्रान्तभाषायां तु तस्य विवक्षितवस्तुनोऽन्यस्याऽपि भूयो लेखनाधिकारो नास्ति । अभा. २१

(२) नात्र छलजात्यादीनामवसर इत्यभिप्रायः । विश्व. २।६

(३) केचिन्निविष्टेऽप्युत्तरे शोधनमिच्छन्ति तदनवस्थाप्रसङ्गात् पूर्वोक्तवचनविरोधाच्च हेयम् । स्मृच. ४०

भाषाशोधनावधिः

**[2]शोधयेत्पूर्ववादं तु यावन्नोत्तरदर्शनम् ।**
**अवष्टब्धस्योत्तरेण निवृत्तं शोधनं भवेत् ॥**

(१) शोधनं च यावदुत्तरदर्शनं कर्तव्यं नातःपरमनवस्थाप्रसङ्गात् । अत एव नारदेनोक्तम्—शोधयेदिति ।

---

* अत्र जॉलिना 'वादिभ्यां लिखिताच्छेषम्' इति श्लोको नारदीयत्वेन (नास्मृ. २।२१) स्वतन्त्रमुद्धृतः । किञ्च 'वादिभ्यां लिखिताच्छेषम्' इति श्लोकोत्तरं लिखितस्तत्र वादिभ्यामित्यादिग्रन्थः एतत् श्लोकव्याख्यात्वेनोद्धृतः जॉलिमहोदयेन । परन्तु 'वादिभ्यां लिखिताच्छेषमि'ति श्लोको नारदीयो न वेति संदेहः तदुत्तरो ग्रन्थसन्दर्भश्च 'वादिभ्यामभ्यनुज्ञात'मिति पूर्वश्लोकस्यैव व्याख्यारूपः ।

(१) **नास्मृ.** २।७ न (वि); **अभा.** २१; **विश्व.** २।६ षाया (षायां) तु लेख (विशोध); **व्यमा.** २९५ षाया (षायां) न निवेश (नाभिलेख); **अप.** २।६ वेश (वेद); **व्यक.** २६ व्यमावत्; **स्मृच.** ४०; **पमा.** ६६ न निवेश (नाभिलेख); **स्मृसा.** ८८ षाया (षायां) वेश (वेद); **व्यचि.** १३ वस्तु विवक्षितम् (नोत्तरदर्शनम्) शेषं व्यमावत्; **व्यनि.**; **स्मृचि.** ३८ (=) षाया (षायां); **व्यसौ.** २१ स्मृचिवत्; **वीमि.** २।६ व्यचिवत्; **व्यम.** ७; **प्रका.** २४; **समु.** १९.

(२) **मिता.** २।६; **व्यमा.** २९५; **स्मृच.** ४०; **पमा.** ६७ रेण (रणे); **स्मृसा.** ८८ वादं (पक्षं) अव ... ण (उत्तरेणावरुद्धस्य) कात्यायनः; **व्यचि.** १३ शोधनं (लेखनं) शेषं स्मृसावत्, उत्त.

पूर्वपक्षमशोधयित्वैव यदोत्तरं दापयन्ति सभ्यास्तदा रागाल्लोभादित्युक्तदण्डेन सभ्यान्दण्डयित्वा पुनः प्रतिज्ञापूर्वकं व्यवहारः प्रवर्तनीयो राज्ञेति। +मिता.२।६

(२) शोधनं चोत्तरयोग्यतावधि विधेयम्। न ततः परम्। अनवस्थापत्तेरदृष्टार्थतापाताच्च। अवष्टब्धस्य उत्तरयोग्यस्य। व्यप्र.५३

**[१]ततस्तद्वचनं सर्वं फलकादौ विलेखयेत्॥**

प्रतिज्ञादोषाः

**[२]अन्यार्थमर्थहीनं च प्रमाणागमवर्जितम्।**
**लेख्यं हीनाधिकं भ्रष्टं भाषादोषा ह्युदाहृताः॥**

(१) अत्र अन्यार्थादयो भाषादोषाः प्रोक्ताः। ते च प्रत्येकं प्रकाशार्थाः क्रियन्ते। अभा.२१

(२) लेख्यमिति विशेष्यपदं, भ्रष्टं पूर्वनिवेदितात् च्युतम्। व्यक.२५

**[३]लब्धव्यं येन यद्यस्मात् स तत् तस्मादवाप्नुयात्।**
**न त्वन्योन्यमथान्यस्मादित्यन्यार्थमिदं त्रिधा॥**

इत्यन्यार्थदोषस्वरूपं प्रथमम्। अथार्थहीनम्। अभा.२१

**[४]मनसाऽहमपि ध्यातस्त्वन्मित्रेणेह शत्रुवत्।**
**अतोऽन्यथा महाक्षान्त्या त्वमिहावेदितो मया॥**

इत्यर्थहीनदोषो द्वितीयः। प्रमाणवर्जितमुच्यते। अभा.२१

**[५]द्रव्यप्रमाणहीनं यत्फलोपाश्रयवर्जितम्।**
**प्रमाणवर्जितं नाम लेख्यदोषं तदुत्सृजेत्॥**

इति तृतीयम्। आगमवर्जितमुच्यते। अभा.२१

**[१]आगमे वर्जितं दोषं पूर्ववादे विवर्जयेत्।**
**एकस्य बहुभिः सार्धं पुरराष्ट्रविरोधकम्॥**

इति चतुर्थः। हीनाधिकमुच्यते। अभा.२१

**[२]बिन्दुमात्रविहीना वा पदवर्णविदुष्टा वा।**
**हीनाधिका भवेद्व्यर्था तां यत्नेन विवर्जयेत्॥**

अत्र दोषद्वयमुक्तम्। अभा.२१

**[३]भ्रष्टं तु दुःस्थितं यत्स्याज्जलतैलादिभिर्हतम्।**
**भाषायां तदपि स्पष्टं विस्पष्टार्थं विवर्जयेत्॥**

इत्येते सप्त भाषादोषाः। अष्टम उच्यते। अभा.२१

**[४]सत्या भाषा न भवति यद्यपि स्यात्प्रतिष्ठिता।**
**बहिश्चेद्भ्रश्यते धर्मान्नियताद्व्यावहारिकात्॥**

विवरणोदाहरणमिदम्। अभा.२१

**[५]गन्धमादनसंस्थस्य मयाऽस्यासीत्तदर्पितम्।**
**व्यावहारिकधर्मस्य बाह्यमेतन्न सिध्यति॥**

इत्यष्टमोऽयं भाषादोषः। एवमेतैरष्टभिरपि दोषैर्विवर्जिता भाषा आदेया भवतीति। अभा.२१

**[६]अन्याक्षरनिवेशेन अन्यार्थगमनेन च।**
**आकुलं च क्रियादानं क्रिया चैवाकुला भवेत्॥**

---

\+ व्यनि., विता. मितागतम्।

कात्यायनः; **व्यनि.**; **स्मृचि.**२८; **व्यत.**२०४ स्मृसावत्, कात्यायनः; **सवि.**९० (=) पू.; **चन्द्र.**११२ वादं (पक्षं); **व्यसौ.**२२ पूर्वं (प्रति); **व्यप्र.**५३; **व्यउ.**३६; **वीमि.**२।५ शोध (लेख) उत्त.; **व्यम.**७; **विता.**६१; **सेतु.**१०४ वादं (पक्षं) अव ... ण (उत्तरेणावबद्धस्य); **राकौ.**३८९ पू., कात्यायनः; **प्रका.**२४; **समु.**१९. (१) **सवि.**७९.

(२) **नास्मृ.**२।८ ह्यु (स्तू); **शुनी.**४।६२६ ख्यं (ख्य); **अभा.**२१ कं भ्र (कभ्र); **व्यक.**२५; **स्मृच.**३८ ख्यं ही (खही) ह्यु (उ); **पमा.**६३ लेख्यं हीनाधिकं (लेख्यस्थानादिभिः) ह्यु (उ); **व्यसौ.**२१ अन्या (अल्पा) ख्यं (ख्य); **व्यप्र.**४८ ह्यु (उ); **व्यउ.**३४ स्मृचवत्; **राकौ.**३८८ अन्या (अल्पा) भ्रष्टं (दुष्टं) ह्युदाहृताः (दुदाहृतम्); **प्रका.**२३ ख्यं ही (ख्यही) कं भ्र (कभ्र) ह्यु (उ); **समु.**१७ स्मृचवत्.

(३) **नास्मृ.**२।९; **अभा.**२१. (४) **नास्मृ.**२।१०; **अभा.**२१. (५) **नास्मृ.**२।११ फलोपा (पुलाका); **अभा.**२१ नाम (नामा).

(१) **नास्मृ.**२।१२ गमे (गम); **अभा.**२१ वादे (पादे).

(२) **नास्मृ.**२।१३; **अभा.**२१ (बिन्दुमात्रापदवर्णेषूनाधिका तु या?). (३) **नास्मृ.**२।१४ स्थि (खि); **अभा.**२१ र्थं (र्थो). (४) **नास्मृ.**२।१५; **अभा.**२१; **व्यक.**१०३ भ्रश्य (भाष्य) मनुनारदौ; **स्मृसा.**१२३ भाषा न (न भाषा) भ्रश्य (भाष) द्या (द्य) मनुनारदौ; **व्यचि.**१०१ ताद्या (तान्य) कात् (काः) शेषं स्मृसावत्; **चन्द्र.**१७० स्मृसावत्; **व्यसौ.**९३ भाषा न (न भाषा) भ्रश्य (भाष); **व्यप्र.**९३ भाषा न (न भाषा) भ्रश्य (भाष्य) मनुनारदौ. (५) **नास्मृ.**२।१६ व्याव (व्यव); **अभा.**२१.

(६) **नास्मृ.**२।१७; **अभा.**२१ र्थग (र्थाग); **व्यक.**२५-२६ न्याक्ष (ल्पाक्ष) अन्यार्थ (नान्यार्थ); **स्मृच.**३९ र्थग (र्थान) च क्रियादानं (तु भवेल्लेख्यं); **व्यसौ.**२१ न्याक्ष (ल्पाक्ष) अन्यार्थ (चाल्पार्थ) चै (वै); **व्यप्र.**५१ (=) च क्रियादानं (तु भवेल्लेख्यं); **व्यउ.**३५ (=) न्याक्ष (ल्पाक्ष) शेषं व्यप्रवत्; **प्रका.**२३ न्याक्ष (ल्पाक्ष) न्यार्थ (न्यार्थो) शेषं व्यप्रवत्; **समु.**१८ अन्यार्थं (ह्यन्यार्थं), शेषं व्यप्रवत्.

(१) यदा वादी अन्यादृशाऽर्थस्याक्षरनिवेशं कृत्वा व्यवहारकाले अन्यादृशमेव प्रभूततरार्थोत्पादकमर्थमुपन्यस्यति, तदा क्रियादानमाकुलं भवति—किं तावत्प्रथमनिवेशिताक्षरप्रधानव्यवहारस्य क्रियाः संचारयन्तु सभ्याः, किं वा प्रभूततरार्थोत्पादकप्रधानस्येति। एवं क्रियाया आदानमाकुलं भवति। यदा च प्रथमवादी द्वितीयेन द्वितीयश्च प्रथमेन सभ्याश्च द्वाभ्यामपि व्याकुलाः, तदाऽर्थापत्त्या क्रियाऽपि व्याकुला भवतीति। अभा.२१

(२) तथाऽपरानपि पक्षाभासानाह स एव—अन्याक्षरेति। स्मृच.३९

**[1]साधनं सह साध्येन निर्दिष्टं यत्र लेखयेत्।**
**उक्तिक्रमविहीनत्वात्सोऽपि पक्षो न सिध्यति॥**

क्रिया साध्यं, साधनं प्रमाणम्। स्मृच.३९

**[2]उपेक्षा यत्र साध्यस्य विंशतिं दश वा समाः।**
**शक्तेनापि कृता वादे तस्य पक्षो मृषा भवेत्॥**
**[3]अर्थे साधारणेऽप्येकोऽसंबन्धोऽथाऽनियुक्तकः।**
**लेखयेद्यस्तु भाषायामन्यार्थं तं विदुर्बुधाः॥**

एक एव गणी गणस्य कार्यमेकस्य वा कार्यमनियुक्तोऽसंबन्धी वा लेखयेद्यस्यां भाषायामित्यर्थः। *स्मृच.३८

**[4]ब्रह्महाऽयमिति द्वेषात्क्रोधाद्वाऽपि वदेत्तु यः।**
**साध्यं च मोचयेत्पश्चादर्थहीनां तु तां विदुः॥**

उक्तं साध्यं वादिना यस्यां त्यज्यते सा च भाषा अर्थहीनेत्यर्थः। ×स्मृच.३८

**[5]गणिते तुलिते मेये तथा क्षेत्रगृहादिके।**
**यत्र संख्या न निर्दिष्टा सा प्रमाणविवर्जिता॥**
**[1]विद्यया प्राप्तमाध्याप्तं लब्धं क्रीतं क्रमागतम्।**
**न त्वेवं लिख्यते यत्र सा भाषा स्यादनागमा॥**
**[2]समा मासस्तथा पक्षस्तिथिर्वारस्तथैव च।**
**यत्रैतानि न लिख्यन्ते लेख्यहीनां तु तां विदुः॥**

अवश्यं यद्यत्र पूर्वोक्तरीत्या लेख्यं तद्रहिता लेख्यहीनेत्यर्थः। व्यप्र.४९

**[3]लेखयित्वा तु यो भाषामनिर्दिष्टे तथोत्तरे।**
**निर्दिशेत् साक्षिणः पूर्वमधिकां तां विनिर्दिशेत्॥**

साक्षिण इति प्रमाणोपलक्षणम्। व्युत्क्रमादत्राधिक्यं तेनाप्राप्तकालता फलिता। व्यप्र.४९

**[4]यत्र स्यादुभयं सर्वं निर्दिष्टं पूर्ववादिना।**
**संदिग्धमिव लिख्येत भ्रष्टां भाषां तु तां विदुः॥**

यत्र पक्षद्वयमखिलं प्रतिज्ञावादिनैव निर्दिष्टं स्यादित्यर्थः। +स्मृच.३८

**[5]भिन्नक्रमो व्युत्क्रमार्थः प्रकीर्णार्थो निरर्थकः।**
**अतीतकालोद्दिष्टश्च पक्षोऽनादेय इष्यते॥**

---

* व्यप्र., व्यउ. स्मृचवत्। × व्यप्र. स्मृचवत्।

(१) **स्मृच**.३९; **व्यप्र**.५१ (=) उक्ति (उक्त); **व्यउ**.३५-३६ व्यप्रवत्; **प्रका**.२४; **समु**.१८ न सिध्यति (मृषा भवेत्). (२) **स्मृच**.३९; **प्रका**.२४; **समु**.१८.

(३) **स्मृच**.३८ संबन्धोऽथा (वाद्यर्थे वा) र्थं तं (र्थां तां); **पमा**.६३ अर्थे (दृष्टे) संबन्धोऽथा (यद्यर्थे वा) र्थं तं (र्थां तां); **व्यप्र**.४९; **व्यउ**.३४ बन्धोऽथा (बद्धोऽर्था) स्तु (त्तु) यामन्यार्थं तं (र्थमन्यार्थां तां); **प्रका**.२३ स्मृचवत्; **समु**.१७-१८ संबन्धो (परार्थो) र्थं तं (र्थां तां). (४) **स्मृच**.३८ द्वेषात्क्रोधाद्वापि (ज्ञेयो द्वेषान्मोहात्) पश्चादर्थ (तत्र द्रव्य); **व्यप्र**.४९; **व्यउ**.३४; **प्रका**.२३ स्मृचवत्; **समु**.१८ स्मृचवत्.

(५) **स्मृच**.३८ ते तुलिते (मे तुलिमे); **पमा**.६४; **स्मृचि**.३८ तुलिते मेये (नुमिते मेयं) कात्यायनः; **व्यप्र**.४९ दिके (दिषु); **व्यउ**.३४; **प्रका**.२३ उत्त.; **समु**.१८ स्मृचवत्.

+ व्यप्र., व्यउ. स्मृचवत्।

(१) **स्मृच**.३८; **पमा**.६४ उत्त.; **स्मृचि**.३८ कात्यायनः; **व्यप्र**.४९ माध्याप्तं (मर्थार्थं); **व्यउ**.३४ माध्याप्तं (मप्राप्तं); **प्रका**.२३; **समु**.१८ माध्या (मध्या).

(२) **शुनी**.४।६७४ ले ... दुः (हीन लेख्यं तदुच्यते) उत्त.; **स्मृच**.३८; **पमा**.६४; **स्मृचि**.३८ कात्यायनः; **व्यप्र**.४९; **व्यउ**.३४-३५; **प्रका**.२३; **समु**.१८.

(३) **स्मृच**.३८ निर्दिशेत् (उद्दिशेत्) णः (णम्); **पमा**.६४ अनिर्दिष्टे (निर्दिष्टे च) निर्दिशेत् (उद्दिष्टे); **व्यप्र**.४९ यो (तां); **व्यउ**.३५; **प्रका**.२३ स्मृचवत्; **समु**.१८ स्मृचवत्.

(४) **स्मृच**.३८; **पमा**.६४ ष्टां भा (ष्टभा); **व्यप्र**.४९ स्यादुभयं सर्वं (स्यात्तु यथापूर्वं) मिव लिख्येत (मेव लेख्येन); **व्यउ**.२५ यत्र (पत्रं) स्यादुभयं सर्वं (स्यान्न यथापूर्वं) लिख्येत (लेख्येन) नोभयमिति पाठः; **प्रका**.२३ स्मृचवत्; **समु**.१८ स्मृचवत्.

(५) **शुनी**.४।६७४-६७५ (भिन्नक्रमं व्युत्क्रमार्थं प्रकीर्णार्थं निरर्थकम्। अतीतकाललिखितं न स्यात्तत्साधनक्षमम्); **स्मृच**.३८; **पमा**.६४; **व्यप्र**.५१ (=) द्दिष्टश्च (विद्दिष्टः); **प्रका**.

यथास्थाननिवेशेन नैव पक्षार्थकल्पना ।
शस्यते न स पक्षस्तु भिन्नक्रम उदाहृतः ॥

व्यत्यस्ताक्षरसंस्थानो भिन्नक्रम इत्यर्थः । व्युत्क्रमार्थो व्यवहितान्वयेनार्थबोधकः, प्रकीर्णार्थः संकलितार्थः ।

स्मृच.३८

मूलमथ परित्यज्य तद्गुणो यत्र लिख्यते ।
निरर्थकः स वै पक्षो भूतसाधनवर्जितः ॥
भूतकालमतिक्रान्तं द्रव्यं यत्र विलिख्यते ।
अतीतकालः पक्षोऽसौ प्रमाणे सत्यपि स्मृतः ॥
यस्मिन्पक्षे द्विधा साध्यं भिन्नकालविमर्शनम् ।
विमृश्यते क्रियाभेदात्स पक्षोद्दिष्ट उच्यते ॥

(१) भूतसाधनं मूलभूतधनसाधनम् । भूतकालोऽवधिभूतः कालः । क्रियाभेदात् प्रमाणभेदात् । स्मृच.३९

(२) भूतकालः साध्यकालः । *व्यप्र.५१

## बृहस्पतिः

प्रतिज्ञालेखविधिः

उपास्थते ततस्तस्मिन्वादी पक्षं प्रकल्पयेत् ।
निरवद्यं सप्रतिज्ञं प्रमाणागमसंयुतम् ॥
देशस्थानसमामासपक्षाहोनामजातिभिः ।
द्रव्यसंख्योदयं पीडां क्षमालिङ्गं च लेखयेत् ॥

(१) आगमः ऋणग्रहणादिप्रमाणं साक्षिपत्रादिकम् । यद्यपि तृतीयपादे पत्रादिकीर्तनं तथाऽपि पक्षस्य संभावनार्थमस्मिन्नर्थे मम पत्रादिकमस्तीति सामान्येन निर्देश्यम् । उदयः पणिकादिवृद्धिः, प्रत्यासत्तौ कुतो मां न पीडयति इति तदर्थं पीडितो मयेति वक्तव्यम्, अपीडितत्वेऽपि क्षमाकारणं लेखनीयमिति । +व्यमा.२९४

(२) समीपस्थे प्रत्यर्थिनि पक्षं लेखयेदित्यर्थः ।

स्मृच.३६

(३) ततः प्रत्यर्थ्याह्वानानन्तरं, निरवद्यं पक्षदोषरहितम् । पमा.६१

सत्प्रतिज्ञास्वरूपम्

प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितम् ।
निश्चितं लोकसिद्धं च पक्षं पक्षविदो विदुः ॥
अल्पाक्षरः प्रभूतार्थो निःसन्दिग्धो निराकुलः ।
विरोधिकारणैर्मुक्तो विरोधिप्रतिषेधकः ॥

(१) ननु तदयुक्तं साध्यं हि ज्ञाप्यमुच्यते । तद्विशिष्टश्च धर्मी पक्षः तन्निर्देशवचनं च प्रतिज्ञा । तदुक्तम्—'वचनस्य प्रतिज्ञात्वं तदर्थस्य हि पक्षता । असंकरेण वक्तव्ये व्यवहारेषु वादिभिः' ॥ अतो मीमांस्यपरस्परभेदात् । कथं साध्यमेव पक्षं विदुरित्यभिधानं कथं च प्रतिज्ञादोषनिर्मुक्तत्वं साध्यस्योच्यते ?

---

* शेषं स्मृचवत् ।

+ व्यचि. व्यमागतम् ।

२३; **समु**.१८. (१) **स्मृच**.३८; **पमा**.६४ व (वं); **व्यप्र**.५१ (=) स्थान (स्थाना) न स पक्षस्तु (तेन पक्षः स); **व्यउ**.३५ (=) व्यप्रवत्; **प्रका**.२३ स्मृचवत्; **समु**.१८ स्मृचवत्.

(२) **स्मृच**.३८; **पमा**.६४; **व्यप्र**.५१ (=); **प्रका**.२३; **समु**.१८. (३) **स्मृच**.३८; **पमा**.६४ वि (हि); **व्यप्र**.५१ (=) पमावत्; **प्रका**.२३; **समु**.१८.

(४) **स्मृच**.३८; **पमा**.६५ क्षोद्दि (क्षो दि); **व्यप्र**.५१ (=) द्दिष्ट (द्विष्ट); **व्यउ**.३५ (=) व्यप्रवत्; **प्रका**.२३; **समु**.१८.

(५) **व्यमा**.२९४ सप्र (सत्प्र); **स्मृच**.३६; **पमा**.६१; **व्यचि**.१३; **प्रका**.२१ उत्त.; **समु**.१७.

(६) **व्यमा**.२९४ होनामजातिभिः (हर्जातिनाम च); **स्मृच**.३६ उत्त.; **पमा**.६१; **व्यचि**.१३ (=) (देशं कालं समां मासं पक्षाहोजातिनाम च); **प्रका**.२२ उत्त.; **समु**.१७ होनामजातिभिः (र्हनामजातिमत्).

(१) **शुनी**.४।६२५; **व्यमा**.२९१ कात्यायनबृहस्पती; **अप**.२।६; **व्यक**.२५ व्यमावत्; **स्मृच**.४० ध्यं सत् (ध्यतत्); **पमा**.६१; **दीक**.३१ तिज्ञा (तिभा); **स्मृसा**.८६ च (तु); **व्यचि**.११; **व्यत**.२०३ व्यमावत्; **सवि**.९०(=) निश्चि (लिखि); **व्यसौ**.२० व्यमावत्; **व्यप्र**.५२; **व्यउ**.३६ पक्षं (सिद्धं); **सेतु**.१०३ सत्का (यत्का) कात्यायनबृहस्पती; **प्रका**.२२,२४ स्मृचवत्; **समु**.१७ स्मृचवत्; **विव्य**.४ सत् (तत्)पू.

(२) **व्यमा**.२९१ अल्पा (स्वल्पा) कात्यायनबृहस्पती; **व्यक**.२५ ग्धो नि (ग्धस्त्व) (र्मुक्तो विरोधिकरणैर्विरोधप्रतिषेधकः) कात्यायनबृहस्पती; **स्मृच**.३६ ग्धो निरा (ग्धस्त्वना) विरोधिकारणैर्मुक्तो (युक्तो विरोधिकरणैः); **पमा**.६१ (अल्पाक्षरस्त्वसन्दिग्धो बह्वर्थश्चाप्यनाकुलः । युक्तो विरोधिकरणे विरोधिप्रतिषेधकः ॥); **दीक**.३१; **स्मृसा**.८६ (=); **व्यचि**.११ षेध (बन्ध); **स्मृचि**.३८; **व्यत**.२०३ षेध (रोध) कात्यायनबृहस्पती; **व्यसौ**.२०; **सेतु**.१०३ कात्यायनबृहस्पती; **प्रका**.२२ स्मृचवत्; **समु**.१७ स्मृचवत्; **विव्य**.४ (अल्पाक्षरं प्रभूतार्थं निःसन्दिग्धं निराकुलम्) पू.

अन्यस्य दोषविरहेऽन्यस्य निर्दोषत्वानुपपत्तेः । कीदृगल्पाक्षरत्वं कियत्तदल्पमिति विशेषस्यानिर्देशात् कथं चाल्पीयसामक्षराणां प्रभूतार्थत्वं प्रभूतानां पदानामेव परं तत्संभवात् । कियांश्च प्रभूतोऽर्थो भवतीति चाऽनिर्देशात् । उच्यते—अर्थिना च तावदर्थ्यमानं साध्यमवश्यं निर्देष्टव्यं अन्यथा अर्थित्वानुपपत्त्या व्यवहाराऽप्रसक्तेः । तन्निर्देशकमेव वचनं प्रतिज्ञा, तस्यैव विवक्षितार्थप्रतिपादकत्वेन प्रधानत्वात्, अत एव यत्र हेत्वभिधानं न भवति, तत्राऽपि प्रतिज्ञापुरस्कारेणैव व्यवहारो भवति, अतस्तत्र परस्परविरुद्धार्थप्रतिपादकपदप्रयोगादिदूषणेन साध्यस्यैवानवगतेः तन्निर्मुक्तौ तु सम्यक् साध्यमवगम्यते इति तथोक्तं, धर्मविशेषविशिष्टतया च धर्मिण एव साध्यत्वात् साध्यपक्षयोरप्यभेदाभिधानं, न स्वग्नित्वतद्व्यक्तितद्वर्णानां सामान्यतः साध्यत्वं, सर्वेषां संबन्धश्रवणकाल एवावगतत्वात् । किन्तु स्वरूपसिद्धयोरेव धर्मधर्मिणोरवगतो धर्मधर्मिभावः साध्यते ज्ञाप्यते । तत्प्रतिपादकनान्तरीयकतया च पर्वतसंबन्धिनोऽग्नित्वस्य तद्व्यक्तिविशेषस्य तद्वर्णविशेषस्य च प्रतिपादकमपि साध्यमुच्यते । धर्मिविशेषश्च पूर्वावगत एव साध्यधर्मविशिष्टतया च ज्ञाप्यः पक्षधर्म(?) इत्युच्यते । अत एव—'सिद्धधर्मिणमुद्दिश्य साध्यो धर्मोऽभिधीयते' । एतेन यत्तार्किकंमन्येन योग्लोकेनाभिहितं न च प्रतिपिपादयिषितधर्मा धर्मी पक्षः । स्वार्थानुमानविशेषे असुरभिगन्धानुमेये कुत्सितरसानुमाने प्रतिपित्साया अनुपपत्तेः । न चानवधारितेऽप्यग्निमत्वे पर्वतस्य बहुतरधर्मान्तरानवधारणात् धूमं प्रति पक्षताऽप्रसक्तेः । तस्मादनवधारितहेतुविषयधर्मा धर्मी पक्षः स्वयमेवास्य दोषस्य पूर्वदत्तस्यापत्तेः । नापि द्वितीयः इतरेतराश्रयापत्तेः । हेतुप्रयोगे सति तद्विषयपरिज्ञानात् पक्षनिर्देशः पक्षहेतुप्रयोगस्ततः सिद्ध इति सुव्यक्तमन्योऽन्याश्रयत्वम् । स्वार्थानुमाने च हेतोरहेतोश्चाप्रयोगात् पक्षस्याभावः स्यात् । किञ्च शब्दो नित्यः कृतकत्वादिति प्रयुक्तहेतुविषयत्वाभावात् शब्दो नित्यः इति पक्षाभावान्न स्यात् । न चैवं हेतोरेव हि तत्र साध्यविरुद्धसाधकतया विरुद्धभासता न तु पक्षस्य, किञ्च हेतुविषयता तदधीनसिद्धता साध्यतैव नामान्तरेणेति, तदा च साध्यपदं विहाय उन्नेयार्थाऽप्रसिद्धपदप्रयोगग्रहो निग्रह एव तस्य, तन्मास्तु तार्किकंमन्यनिरुक्तसाध्यपर्यालोचनं, किन्तु स्वपरार्थानुमानसाधारणं साध्यधर्मविशिष्टो धर्मी पक्षः, साध्यता च ज्ञाप्यता, सा च ज्ञातेऽपि धारावाहिकवदविरुद्धा, परार्थानुमानेषु तु अष्टादशविवादेषु प्रयोजनसिद्धये सिषाधयिषितधर्मविशिष्टधर्मी एव पक्षः । परार्थानुमानाभिप्रायेणैव चोक्तपक्षपदेन सिषाधयिषितधर्मविशिष्ट एव धर्मी पक्षः । प्रकृतमनुसरामः । तस्मात्—'प्रतिज्ञादोषनिर्मुक्तं साध्यं पक्षं विदुरिति' युक्तमुक्तम् । प्रतिज्ञादूषणानि च परस्परविरुद्धार्थपदप्रयोगप्रतिज्ञान्तरकरणप्रतिज्ञाहानिप्रतिज्ञासन्यासाश्रयासिद्धिधर्मिग्राहकप्रमाणविरोधविरोधिधर्मान्तरग्राहकप्रमाणबाधितत्वादीनि । 'प्रतिज्ञाहानिसन्यासतद्विरोधान्तराणि च । प्रतिज्ञादोषमध्ये किं वसन्त्येतानि नोऽचिरम्' इति ॥ एतैर्हीनं साध्यं निर्देश्यम् । अन्यथा तु हीयते, तदाह नारदः—'सारस्तु व्यवहाराणां प्रतिज्ञा समुदाहृता । तद्धानौ हीयते वादी तरंस्तामुत्तरो भवेत्' ॥ तथा बृहस्पतिः—'यञ्चार्थमभियुञ्जीत न तं विप्रकृतिं नयेत् । न च पक्षान्तरं गच्छेत् गच्छन् पूर्वात्स हीयते' ॥ प्रतिज्ञा धर्मविशेषे साध्यनिर्देशः । तदत्र को धर्मी किञ्च साध्यं, तत्र शतं मे धारयसीत्यादिधनविवादे धारणाविशिष्टं साध्यमिति शतमेव धर्मि; धार्यमाणत्वं तत्र साध्यमिति श्रीकरस्तदसंगतं, धान्यहिरण्यादेर्धर्मिणो गृहीतस्य व्ययादिना नाशात् आश्रयासिद्धत्वापत्तेः । अथान्यदेव हि प्रतिज्ञादेयतया यत् श्रुतं प्रतिज्ञातं, तदेव धर्मि भविष्यतीति चेन्न, तस्मिन्काले प्रतिज्ञादेयस्याऽप्यभावात् । अधमर्णस्य निर्धनत्वे • निराश्रयसाध्यनिर्देशाभावेन तस्यानृण्यापत्तेर्गृहीतत्वात् इति हेतोश्च तदनाश्रयत्वात् अपक्षधर्मतापत्तेः । तस्मात् प्रतिवाद्येव धारयसीत्यर्थविशिष्टः पक्षः । अयममुकनामा मह्यमेतावद्धनं धारयति मत्तो वृद्ध्यादिना गृहीतधनत्वे सति अद्ययावदकृतशोधनत्वात् ।

यत्तु तार्किकंमन्यस्याऽनुमानं प्रतिवादिनं धर्मितया निर्दिश्य शतं मे धारयसि प्रतिदानादिनिबन्धनपरिशोधनप्रकारासंभवे सति मत्तस्त्वया शतस्य गृहीतत्वादिति

तदसंबद्धम्। गृहीतत्वस्य धर्मस्य प्रतिवादिधर्मत्वाभावात् अपक्षधर्मत्वापत्तेः। त्वया गृहीतत्वादिति कर्मणि क्तप्रत्ययापत्तेः, कर्तरि क्तोत्पत्तौ त्वयेति न स्यादभिहिते कर्तरि प्रथमाविधानात्, अनभिहिते च तृतीयास्मरणात्। किञ्चाऽपरिशुद्धत्वे सतीति एतावतैव सिद्धे प्रतिदानादिनिबन्धनेत्यादिबहुतरानर्थपदप्रयोगेऽपि निग्रहः। किञ्च परिशोधनप्रकारासंभवे सति गृहीतत्वस्य हेतुत्वाभिधानात् परिशोधनाभावाद् ग्रहणस्य परभावोऽवगम्यते। न च तथा सति हि ग्रहणे शोधनमशोधनं वा? न चाऽपरिशोधनसामर्थ्यादेव ग्रहणभावावगमो वाच्यः। तद्विपरीतपौर्वापर्याभिधानेनापि वादिनिग्रहात्, तस्मादस्मदुक्तमेव युक्तम्। धारयतीत्यर्थे च सिद्धे तन्मम ददात्विति स्वकीयार्थिताव्यञ्जनाय वक्तव्यम्। शास्त्रकारैश्च साध्यहेतोरभिधानमुक्तं न दृष्टान्तस्य। तत्राऽयमभिप्रायः— व्याप्तिदर्शनार्थं हि तदभिधानं, निरूपकाश्च शास्त्रादेव हेतोः साध्यनियतत्वमवगतवन्तः इति वृथा तदभिधानम्। अनियतन्त्वभिहितमनर्थकम्। ऋणग्रहणं न वदन्तीति हेतुज्ञापनं कार्यम्। न च वादिना दृष्टान्तान्तरस्यानुपन्यस्तत्वात् तस्य भङ्गो वाच्यः, पुरुषशक्तिनिरूपणार्थत्वाभावात्, व्यवहारस्य भूतानुसरणार्थत्वात्, छलस्य च निरस्यत्वात् तस्माद् दृष्टान्ताभिधानमनर्थकम्। किञ्च कीनाशनर्तकादीनां शास्त्रमविदुषां शास्त्रविरुद्धभाषिकव्यवहारिणां तद्व्यवहारज्ञैरेव व्यवहारस्य दृष्टत्वात् दृष्टान्तवचनमपार्थकं व्यवहारानभिज्ञोऽपि न्यायदर्शी सामान्येनैतज्जानात्येव, यो येषां यादृशो व्यवहारः स तेषां साध्यसाधनमिति न प्रथममेव दृष्टान्ताद्यभिधानम्। किञ्च मह्यमयं धनं दातुमर्हति किम्? वादिरूपतया दायोचितव्यवहारानियमाश्रयत्वे सति अदत्तधनत्वादिभाषायां तादृग्व्यवहारापह्नतेनोत्तरे दत्ते क्रियाव्यवहारनियमो ज्ञाप्यः। यत्राऽपि शरीरादिपीडया भाषादानं तत्राऽप्ययं दण्डार्होऽनपराद्धे सति कृतपीडत्वादिति हेतुः। स च सद्रूपो निश्चयरूपो वक्तव्यो न सन्दिग्धरूपः सन्दिग्धत्वेन साध्यसिद्धेरभावात् तदिदमुक्तं 'सत्कारणान्वितं' हेत्वाभासनिराकरणार्थं सदिति तार्किकंमन्ययोग्लोकमतं तन्नादरणीयम्। आभासस्याकारणत्वात् कारणपदेनैव निरस्तत्वात्। निश्चितपदं च साध्यविशेषणम्। अतस्तन्निश्चितमेव वाच्यं न तु 'धारयति न वा' इति। तथा सति हेतुप्रयोगानुपपत्तेः लोकसिद्धं च तद्वाक्यम्। न तु—'तृणकाष्ठेष्टकासूत्रकिण्वचर्मास्थिवर्मणाम्। हेतिपुष्पफलानां च वृद्धिश्च न निवर्तते'॥ इतिबृहस्पतिवचनमवलम्ब्यालोकसिद्धा वृद्धिश्च साध्यतया निर्देश्या,अत एव बृहस्पतिः—'केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिश्चयः। युक्तिहीनविचारे तु धर्महानिः प्रजायते'॥ युक्तिर्लोकव्यवहारः। नारदोऽप्याह—'धर्मशास्त्रविरोधे च युक्तियुक्तो विधिः स्मृतः। व्यवहारोऽपि बलवान्धर्मस्तेनावहीयते'॥ तथान्यदप्येवं विजातीयमलोकसिद्धं साध्यमनिर्देश्यं यथा पौर्णमासीषु दक्षिणाद्वैगुण्यमित्यादिकम्। अल्पाक्षरवत्वं च यावद्भिरक्षरैर्द्धर्मिसाध्यहेतूनां तदनुगुणानां च देशकालानामुपलम्भो भवति तावन्मात्रस्य प्रयोगः। एतावानेव च प्रभूतोऽर्थ इति प्रभूतार्थत्वमुक्तम्। सर्वं चेदमनाकुलं वाच्यम्। आकुलवादे हानिं हृदयगतं भग्नत्वं प्रतिसंदधतां सभ्यानां मतिरपि तथैव चरतीति विरोधिप्रतिषेधक इत्युक्तम्। तथा हि न मया गृहीतमृणमित्यग्रहणाभिधानेन प्रतिषिध्यति, परिशुद्धमिति च परिशुद्धत्वाभिधानेन याच्यमानोऽपि धनं न ददाति न च मया सह न्यायं करोति महता प्रतियत्नेन इदानीं न्यायार्थमुपस्थित इति वृत्तत्वेऽपि वा न्यायस्य, तत्वतो न तन्निरूपितमिति सर्वमिदं वचनं प्राङ्न्यायोत्तरप्रतिषेधकं भवति। अथवा—'आढ्यस्य निकटस्थस्य यच्छक्तेन न याचितम्। शुद्धं तु शङ्कया तत्र पत्रं दुर्बलतामियात्'॥ इति वचनबलादुत्तरवचनस्य संभाव्यमानस्य प्रतिरोधकं यथा भवति तथा वक्तव्यम्। यन्मया चिरं देशान्तरस्थितत्वान्न प्रार्थितं, बहुजनाध्यक्षं वा निरन्तरं प्रार्थितम् मया तत्, पित्रा वा यदृणं दत्तं, एतावत्कालपर्यन्तं ज्ञातुः पुत्रस्य व्यवस्थानवज्ञानात् मया न याचितम् इदानीं तु पुत्रादिना ज्ञातं यदृणं, तेनायमर्थो भवति सर्वथा यावत्प्रकारमुत्तरं भवति तन्निषेधपक्षो निर्देश्य इति विरोधिप्रतिषेधक इत्युक्तम्।

व्यमा. २९१-२९४

(२) प्रतिज्ञादोषो यथा, प्रत्यक्षादिप्रमाणविरोधो यथा अनुष्णोऽग्निः। लोकविरोधो यथा अशशी चन्द्रः। स्ववचनविरोधो यथा माता मे वन्ध्या। पिता मे बाल-

ब्रह्मचारीत्यादयः । अप.२।६

(३) लोकसिद्धं व्यावहारिकधर्माविरुद्धमित्यर्थः । लोकप्रसिद्धमित्येवंविधार्थस्य प्रतिज्ञादोषनिर्मुक्तमित्यनेनैवार्थादुक्तत्वात् । ×स्मृच.४०

(४) प्रतिज्ञादोषनिर्मुक्तमिति—ये प्रतिज्ञादोषाः प्रतिज्ञाहानिप्रतिज्ञान्तरप्रतिज्ञान्यासादयस्तैर्मुक्तम् । साध्यमिति—न तथात्वेन वैपरीत्येन वा यस्य सिद्धिस्तथाभूतस्यासाध्यत्वात् । सत्कारणान्वितमिति—असिद्धत्वादिदोषरहितहेतुसहितम् । निश्चितमिति—यत्रोत्तराभिधानात् प्राक् निरूपकानां निश्चितप्रत्यय एव भवति । लोकसिद्धमिति—यत्र श्रवणादेव लोकानां प्रत्ययो न भवति स लोकविरुद्धः । यथा यस्य यत्र संभावनैव नास्ति, स यदि वदति लक्षं ममानेन गृहीतमिति स लोकविरुद्धः । एवं यो न भवति स लोकसिद्धः । अल्पाक्षर इति—यावद्भिरक्षरैः संक्षेपतः पक्षः प्रतिपादयितुं शक्यते तदधिकाक्षररहितः । निःसंदिग्ध इति—यथा ममायं धारयति न धारयति वा । निराकुल इति—साध्यविपरीतव्याप्तहेतुरहितः । विरोधिकारणैर्मुक्त इति । विरोधिकारणं यथा—यद्यप्यनेन समविभागोचितं संस्थाप्य तस्याधिकधनतया मम विभज्य दत्वा स्थितं तदस्माद्भावितपूर्वविभक्तत्वादेव विरोधिकारणान्तरोपात्तधने नाधिकारित्वमित्युत्तरानर्हत्वम् । यथैवं न भवति स विरोधिकारणमुक्तः । विरोधिप्रतिषेधक इति—उत्तरवाद्यभिमतार्थविपरीतो न तेन संकीर्णः । *स्मृसा.८६

(५) साध्यं साध्यस्य सिद्ध्यर्हस्य प्रत्यर्थिप्रत्याय्यधर्मविशिष्टस्य धर्मिणो वचनं पक्षं विदुरित्यर्थः । सत्कारणान्वितं अस्फुरद्दोषलिङ्गसंपन्नं, एवं च, त्वं मह्यं शतस्य धारयः (?) स तु ऋणत्वेन गृहीततावद्धनकत्वादिति भाषाशरीरमुक्तं भवति । अत्र देहीत्यर्थिताभिव्यञ्जकमात्रं न तु भाषान्तक्कृतमित्यवसेयम् । लोकसिद्धं लोकव्यवहाराविरुद्धार्थम् । एवं च, 'तृणकाष्ठेष्टकाकिण्वसूत्रचर्मास्थिवर्मणाम् । हेतिपुष्पफलानां च वृद्धिस्तु न निवर्तते' ॥ इति बृहस्पतिवचनमालम्ब्य लोकविरुद्धानां तु वृद्धिप्रार्थनमपि भाषेत्यपास्तम् । अत एव बृहस्पतिः—'केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिर्णयः । युक्तिहीनविचारे तु धर्महानिः प्रजायते' ॥ युक्तिर्व्यवहारः । भवदेवस्तु यत् श्रुतमात्र एव लोकानां संप्रत्ययस्तल्लोकसिद्धं, तेन निर्धनकृतो लक्षसंख्यस्वधनप्रयोगाक्षेपो बाधित इत्याह । अल्पाक्षरः यावद्भिरक्षरैर्विना विशिष्टहेतुप्रयुक्तसाध्योपहितं पक्षप्रतिपादनं न भवति तावन्मात्राक्षरकः । प्रभूतार्थः निरुक्तार्थक एव । निराकुलः पौर्वापर्यविपर्यासादिदोषरहितः तेन सुबोधो भवति । विरोधिकारणैः स्वसाध्यविपरीतव्याप्तैर्हेतुभिः शून्यः । यथा मद्विभक्तोऽप्ययं अर्जकत्वादिदानीमर्जितं मयि ददात्वित्यादिकं तद्व्यतिरिक्तः मत्पक्षः अत्र मद्विभक्तस्य पक्षविशेषणत्वे प्रतिज्ञाविरोधसंभवे प्रतिज्ञादोषनिर्मुक्तमित्यत एवैतल्लाभ इदं च प्रपञ्चनमात्रमिति द्रष्टव्यम् । विरोधप्रतिषेधक इति । यावत्प्रकारकमुत्तरं संभाव्यं तावत्प्रतिषेधको यथा भवति तथा पक्षनिर्देशः कार्य इत्यर्थः । व्यचि.११-१२

(६) प्रत्यर्थिप्रश्नप्रयोजकाकाङ्क्षाजनकाऽर्थिवाक्यं भाषा सैव प्रतिज्ञा । साध्यमिति न सिद्धं न वा बाधितमित्यर्थः । सत्कारणान्वितं व्याप्तिपक्षधर्मवत्तया ज्ञायमानम् । निश्चितमिति न साध्यवत्तया आपातत एव संदिह्यमानम् । लोकसिद्धमिति लोकैरनवधारितमिथ्यात्वम् । चन्द्र.१०८

**[१]यदा त्वेवंविधः पक्षः कल्पितः पूर्ववादिना ।**
**दद्यात्तत्पक्षसंबद्धं प्रतिवादी तदोत्तरम् ॥**
**[२]एवमादिगुणान् सम्यगालोच्य च सुनिश्चितः ।**
**पक्षः कृतः समादेयः पक्षाभासस्त्वतोऽन्यथा ॥**

प्रतिज्ञायाः फलकादौ प्रथमलेखः, तदुत्तरं पत्रलेखः

**[३]पाण्डुलेखेन फलके भूम्यां वा प्रथमं लिखेत् ।**
**न्यूनाधिकं तु संशोध्य पश्चात्पत्रे निवेशयेत् ॥**

प्रतिज्ञालेखशोधनावधिः

**[४]न्यूनाधिकं पूर्वपक्षे तावद्वादी विशोधयेत् ।**

---

× सवि. स्मृचगतम् ।

* व्यप्र. पदार्थः स्मृसावत् व्यचिवच्च ।

(१) **व्यक**.२५ तदो (तदु) कात्यायनबृहस्पती; **पमा**.६८; **व्यचि**.११; **व्यनि**. (=) कार्यस्यैवंविधः पक्षः विकल्प्यः पूर्ववादिना । दद्यात्पक्षस्य सबन्धं प्रतिवादी तथोत्तरम् ॥ ) **व्यत**.२०४-२०५ बद्धं (बन्धं) कात्यायनबृहस्पती; **व्यसौ**.२०; **सेतु**.१०३,१०५ कात्यायनबृहस्पती; **समु**.२०.

(२) **स्मृच**.३६; **प्रका**.२२; **समु**.१७. (३) **व्यमा**.२९७; **विव्य**.६ न्यू (ऊ) वेश (योज). (४) **व्यमा**.२९५ न्यूना

**न दद्यादुत्तरं यावत्प्रत्यर्थी सभ्यसन्निधौ ॥**

ऊनाधिकमिति वचनात् पूर्वोक्तादविरुद्धं न्यूनं पूरणीयं अधिकमपनेयं, न तु विरोधि । परस्परविरोधादेव भाषाया अनादेयत्वेन तस्य भग्नत्वात् । तदेवमुत्तरानन्तरं भाषाशोधननिषेधात् । व्यमा.२९५

**एकं[1] प्रत्यर्थिनो वाक्यं द्वे वाक्ये पूर्ववादिनः* ॥**

अप्रगल्भवादिने कालो देयः

**अभियोक्ता[2]ऽप्रगल्भत्वाद्वक्तुं नोत्सहते यदि ।**
**तस्य कालः प्रदातव्यः कार्यशक्त्यनुरूपतः ॥**

(१) अभियोक्ताऽग्रवादी । अप.२।६

(२) यदा त्वर्थी सपदि प्रतिज्ञां कर्तुमसमर्थस्तदा बृहस्पतिराह—अभियोक्तेति । स्मृच.४०

(३) अपवादमाह अभियोक्तेति । व्यत.२०३

अप्रगल्भवादिनः प्रतिज्ञा सभ्यैः शोध्या

**अभियोक्ता[3]ऽप्रगल्भत्वात् वक्तुं नोत्सहते यदा ।**
**सभ्यैस्तु शोधनं तस्य कार्यमर्थानुरूपतः ॥**

यस्त्वर्थी अप्रगल्भत्वात् पक्षदोषगुणहानादानाभ्यां शोधयितुमशक्तस्तस्य वक्तव्यार्थं निर्धार्य सभ्यैरेव संशोधनीयः । यथाह बृहस्पतिः—अभियोक्तेति । यदि भाषामशोधयित्वैवोत्तरं दापयन्ति सभ्यास्तदा 'रागाल्लोभाद्भयाद्वा' इत्याद्युक्तदण्डेन सभ्यान् दण्डयित्वा पुनः प्रतिज्ञालेखनपूर्वकं व्यवहारः प्रवर्तनीयो राज्ञेति तात्पर्यम् ।

व्यप्र.५३

वादे कालो देयः

**मतिर्नो[1]त्सहते यत्र विवादं कर्तुमिच्छतोः ।**
**दातव्यस्तत्र कालः स्यादर्थिप्रत्यर्थिनोरपि* ॥**

पक्षप्रतिपक्षनिर्णयप्रकाराः

**चतुर्विधः[2] पूर्वपक्षः प्रतिपक्षस्तथैव च ।**
**चतुर्धा निर्णयः प्रोक्तः कैश्चिदष्टविधः स्मृतः ॥**
**शङ्का[3]भियोगस्तत्त्वं च लब्धेऽर्थेऽभ्यर्थनं तथा ।**
**वृत्ते वादे पुनर्न्यायः पक्षो ज्ञेयश्चतुर्विधः ॥**
**[4]भ्रान्तिः शङ्का समुद्दिष्टा तत्त्वं नष्टार्थदर्शनम् ।**
**लब्धेऽर्थेऽभ्यर्थनं मोहस्तथावृत्ते पुनः क्रिया ॥**

प्रतिज्ञादोषाः

**देश[5]कालविहीनश्च द्रव्यसंख्याविवर्जितः ।**
**साध्यप्रमाणहीनश्च पक्षोऽनादेय इष्यते + ॥**
**अप्र[6]सिद्धं सदोषं च निरर्थं निष्प्रयोजनम् ।**
**असाध्यं वा विरुद्धं वा पक्षं राजा विवर्जयेत् ॥**
**न[7] केनचित्कृतो यस्तु सोऽप्रसिद्ध उदाहृतः ।**

---

* 'इति पठितमनाकरम्' इति व्यवहारमातृकायाम् ।

(ऊना) क्षे (क्षं) ताव (याव) रं या (रं ता); **व्यक**.२६ क्षे (क्षं); **पमा**.६५ न्यूना (ऊना); **व्याचि**.१४ क्षे (क्षं); **व्यत**.२०४ क्षे (क्षं); **व्यसौ**.२१ क्षे (क्षं); **राकौ**.३८८ क्षे (क्षं); **सेतु**.१०४ क्षे (क्षं); **समु**.१९ विशो (विरो); **विव्य**.५ क्षे (क्षं) नारदः. (१) **व्यमा**.२९५.

(२) **व्यमा**.२९० प्रगल्भ (प्रणन्त) दि (दा) तस्य (तदा); **अप**.२।६ दि (दा) कार्य (काल); **व्यक**.२६ दि (दा); **स्मृच**.४०; **पमा**.६६ दि (दा); **व्याचि**.११ तस्य (तदा); **व्यानि**. रूप (रोध); **व्यत**.२०३ स्य (दा); **सवि**.९० दि (दा); **चन्द्र**.११२; **व्यसौ**.२१; **वीमि**.२।७ स्य (दा); **राकौ**.३८८; **सेतु**.१०२ योक्ता (युक्तो) स्य (दा); **प्रका**.२५-२६ क्त्यनु (क्तिस्व); **समु**.१९. (३) **व्यप्र**.५३; **व्यउ**.३६ कात्यायनः.

*व्याख्यासंग्रहः नारदे उत्तरप्रकरणे द्रष्टव्यः । +व्याख्यासंग्रहः कात्यायने द्रष्टव्यः ।

(१) **चन्द्र**.११२; **व्यसौ**.२१; **राकौ**.३८८.

(२) **अप**.२।६ कै॰(क); **व्यक**.२४-२५; **स्मृच**.४३ पू.; **पमा**.६६; **व्यसौ**.२०; **व्यप्र**.५३; **व्यउ**.३७ प्रति (पर) पू.; **राकौ**.३८६ स्मृतः (पुनः); **प्रका**.२४; **समु**.१९.

(३) **अप**.२।६ त्त्वं (थ्यं) ब्धे (क्ष्ये); **व्यक**.२५ तत्त्वं च (तथ्यं वै); **स्मृच**.४० त्त्वं (थ्यं) ब्धे (भ्ये); **पमा**.६६ र्थं (र्थि); **स्मृचि**.३७ त्त्वं च (थ्यं वा) भ्यर्थ (प्रार्थ); **व्यसौ**.२० त्त्वं (थ्यं) र्थं (र्थि); **व्यप्र**.५३ ब्धे (भ्ये); **व्यउ**.३७ व्यप्रवत्; **राकौ**.३८६ त्त्वं (थ्यं); **प्रका**.२४ स्मृचवत्; **समु**.१९ व्यसौवत्.

(४) **व्यक**.२५ त्त्वं (थ्यं) नष्टा (दृष्टा); **पमा**.६६ तत्त्वं (वश्यं) र्थं (र्थि) या (याः); **स्मृचि**.३७ व्यकवत्; **व्यसौ**.२० त्त्वं (थ्यं) नष्टार्थ (दृष्टान्त); **व्यप्र**.५३ नष्टा (तत्वा) ब्धे (भ्ये); **राकौ**.३८६ त्त्वं न (थ्यं इ); **प्रका**.२४ र्थनं (र्थना) शेषं व्यसौवत्; **समु**.१९ त्त्वं (थ्यं) र्थनं (र्थना).

(५) **व्यानि**.; **व्यसौ**.२१ कात्यायनबृहस्पती.

(६) **व्यमा**.२९५; **व्यक**.१४; **व्याचि**.१४; **स्मृचि**.५ जनम् (जकम्); **व्यसौ**.१५; **वीमि**.२।६ पू.; **विव्य**.५.

(७) **शुनी**.४।६२८ कृतो यस्तु (श्रुतो दृष्टः) पू.; **व्यमम**.२९६; **व्यक**.२०; **स्मृच**.३७ पू.; **व्याचि**.१४; **व्यनि**.(=)

अन्यार्थः स्वार्थहीनश्च सदोषः परिकीर्तितः ॥
अल्पापराधश्चाल्पार्थो निरर्थक इति स्मृतः ।
कार्यबाधाविहीनश्च विज्ञेयो निष्प्रयोजनः ॥
ममानेन प्रदातव्यं शशशृङ्गकृतं धनुः ।
असंभाव्यमसाध्यं च पक्षमाहुर्मनीषिणः ॥
कुसीदाद्यैः पदैर्हीनो व्यवहारो निरर्थकः ।
वाक्पारुष्यादिभिश्चैव विज्ञेयो निष्प्रयोजनः ॥
यस्मिन्नावेदिते पक्षे प्राड्विवाकेऽथ राजनि ।
पुरे राष्ट्रे विरोधः स्याद्विरुद्धः सोऽभिधीयते ॥

(१) अप्रसिद्धनिराबाधमिति कात्यायने विशेषः । शेषं समानम् । तदेव स्वयमेव मुनिना अप्रसिद्धादेर्व्याहृतत्वात् यदन्यैः कल्पितं अप्रसिद्धमिति मदीयं शशविषाणमनेन गृहीतम् । निराबाधमस्मदीयगृहस्थितो दीपः प्रकाशमेतद्गृहे करोति । निरर्थकमनेन सस्मितं वीक्षितम् । निष्प्रयोजनमनेन देवदत्ताय प्रहृतम् । असाध्यमहमनेनाक्षि निकोच्य चोपहसितः । विरुद्धमहमनेन मूकेन शप्त इति । तत्रास्तां दूषणान्तरं किं तु शास्त्राद्यन्यथाकल्पनमशास्त्रदर्शित्वमेव तेषां कल्पयति । अप्रसिद्धमिति प्रतिपौर्णमास्याममावास्यायां च दक्षिणावृद्धिर्द्विगुणोक्ता काष्ठादीनां च क्षयवृद्धिस्तद्विवादो न केनचित् कृत इत्याद्यप्रसिद्धम् । कुसीदादिव्यवहाराश्चतुर्दशार्थविषयास्तैर्हीनो निरर्थकः । वाक्पारुष्यादिभिर्हीनार्थकैर्हीनो निष्प्रयोजनः । व्यक्तार्थपरमपरम् । तेन अप्रसिद्धादिकं विहायाऽष्टादशविधो विवादोऽर्थिना निर्देश्यो नान्यः । +व्यमा.२९६

(२) तत्राप्रसिद्धो बृहस्पतिना निरूपितः—न केनचित् इत्यादिना । तत्रोदाहरणं पलसहस्रकृतं स्थालं गृहीतमिति । निराबाधो निरुपद्रवः, यथा अस्मद्भवनस्थप्रदीपप्रभया स्वगृहे व्यवहरतीति । निरर्थनिष्प्रयोजनौ तु बृहस्पतिना दर्शितौ—स्वल्पापराध इत्यादिना । तत्र निरर्थकस्योदाहरणम्—अहमनेन सस्मितं निरीक्षतः, मामकी लाक्षाऽनेनापहृतेति वा । निष्प्रयोजनस्य तु यथा—यज्ञदत्तोऽस्मद्गृहसमीपे श्लाघ्यमानः पठतीति । प्रकारान्तरेणाऽप्येतौ तेनैव दर्शितौ—कुसीदाद्यैः इत्यादिना । ऋणादानाद्यष्टादशपदानन्तर्भूतो निरर्थकः । वाक्पारुष्यादिभिः साध्यसिध्यनुपयुक्तैः सहितः पक्षो निष्प्रयोजन इत्यर्थः । असाध्यविरुद्धावपि तेनैव दर्शितौ—ममानेनेत्यादिना । *स्मृच.३७-३८

(३) न केनचित्कृतो मदीयमिदं वस्त्रमनेन भक्षितमिति । अल्पापराधोऽहमनेन क्षणं सस्मितं निरीक्षितः । अल्पार्थो मदीयं व्रीहिबीजं अनेनापहृतमिति । कार्यबाधाविहीनो मदीययज्ञावभृथे अनेन स्नातमिति । असंभाव्यं खपुष्पं अनेनापहृतमिति एवंभूतप्रतिपादकं वाक्यम् । असाध्यं साधनासंभवादनादेयमिति । व्यनि.

(४) अप्रसिद्धमाह बृहस्पतिः— न केनचिदिति । यथा फालसहस्रकृष्टक्षेत्रमपहृतमिति । 'मदीयं शशविषाणं गृहीत्वा न प्रयच्छतीत्यादि अप्रसिद्धम्' इत्याह विज्ञानेश्वरः । बृहस्पतिना त्विदमसाध्योदाहरणमुक्तं तच्च वक्ष्यते । निराबाधं निरुपद्रवम्, अस्मन्मन्दिरे दीप्यमानदीपकप्रकाशेनायं स्वमन्दिरे व्यवहरतीति प्रभृति । निरर्थं अभिधेयहीनं मदीयं कचटतपं जबगडदशं गृहीत्वा

---

(अन्यार्थतश्च हीनश्च निराबाधः प्रकीर्तितः); **स्मृचि**.५; **सवि**. ८७ कृतो (स्मृतो) उदाहृतः (इति स्मृतः); **व्यसौ**.१५ अन्यार्थः स्वार्थ (अल्पार्थश्चार्थ); **व्यप्र**.४९ पू.; **व्यउ**.३५; **प्रका**.२२ पू.; **समु**.१७ स्वार्थ (चार्थ) सदोषः परि (निराबाधः प्र).

(१) **व्यमा**.२९६ इति स्मृतः (उदाहृतः); **व्यक**.२० नश्च (नस्तु); **स्मृच**.१४ अ (स्व) धश्चा (धः स्व) नश्च (नस्तु); **व्यचि**.१४; **व्यनि**. (=) व्यकवत्; **स्मृचि**.५ पू.; **सवि**. ८७ स्मृचवत्; **व्यसौ**.१५; **व्यप्र**.५० स्मृचवत्; **व्यउ**. ३५ स्मृचवत्; **प्रका**.२३ स्मृचवत्; **समु**.१७ स्मृचवत्.

(२) **व्यमा**.२९६; **व्यक**.२० ध्यं च (ध्यं तं); **स्मृच**. ३८ व्यकवत्; **व्यचि**.१४ कृतं (मयं) च (तु); **व्यनि**. (=) च (तत) उत्त.; **स्मृचि**.५ व्यकवत्; **सवि**.८८ ध्यं च (ध्यन्तु); **व्यसौ**.१५ सविवत्; **व्यप्र**.५० व्यकवत्; **व्यउ**. ३५ व्यकवत्, श्लोकार्धौ व्यत्यासेन पठितौ; **प्रका**.२३ व्यकवत्; **समु**.१७ व्यकवत्.

(३) **व्यमा**.२९६; **व्यक**.२०; **स्मृच**.३८; **व्यचि**.१४; **व्यसौ**.१५; **व्यप्र**.५०; **प्रका**.२३; **समु**.१७.

(४) **व्यमा**.२९६; **व्यक**.२०; **स्मृच**.३८; **व्यचि**.१४; **व्यनि**. थ (च) पुरे राष्ट्रे विरोधः (पुरग्रामे विरुद्धः); **स्मृचि**. ५ न्ना (न्नि); **सवि**.८८ पुरे राष्ट्रे विरोधः (पुरराष्ट्रविरुद्धः); **व्यसौ**.१५ पक्षे (ह्यर्थे); **व्यप्र**.५० पुरे (पुर); **व्यउ**.३५ रोधः (रुद्धः); **प्रका**.२६; **समु**.१७.

+ व्यक. व्यमागतम् । * सवि. स्मृचवत् ।

न ददातीत्यादि विज्ञानयोगी । बृहस्पतिवचनात्त्व-न्यथा निरर्थकपदार्थः प्रतीयते । यथाह स्वल्पेति । एतस्योदाहरणं स्मृतिचन्द्रिकायां– 'अहमनेन सस्मितमीक्षितः' । 'मामकी शिक्षा तेनापहृता' इत्यादि । निष्प्रयोजनम्–यथा अयं देवदत्तोऽस्मद् गृहसंनिधौ सुस्वरमधीते' इत्यादि मिताक्षरास्मृतिचन्द्रिकयोरुदाहृतम् । बृहस्पतिना तथैव लक्षितम् । कार्यबाधेत्यादि । स एव प्रकारान्तरेणापि निरर्थनिष्प्रयोजनौ लक्षितवान् । कुसीदेति । कुसीदमृणदानं तत्प्रभृतिभिश्चतुर्दशभिरर्थविषयव्यवहारैर्हीनो निरर्थकः । वाक्पारुष्यादिभिर्हिंसात्मकैश्चतुर्भिर्हीनो निष्प्रयोजन इत्यर्थः । अष्टादशपदाविषयः पक्षो दुष्ट इत्याशयः । असाध्यविरुद्धावाह स एव । ममेति । मिताक्षरायामसाध्यविरुद्धावन्यथोक्तौ । देवदत्तेनाहं सभ्रूभङ्गमुपहसित इत्याद्यसाध्यम् । साधनासंभवात् । अल्पकालत्वान्न साक्ष्यादिसंभवो, लिखितं दूरतः, अल्पत्वान्न दिव्यमिति । मुकेनाहं शप्त इत्यादि विरुद्धमिति । पुरराष्ट्रादिविरुद्धमपि विरुद्धपदेन व्याख्याय, 'राज्ञा विवर्जित' इत्यादि स्मृत्यन्तरं च तदर्थतयोदाहृतम् । तच्च पूर्वमस्माभिरनादेयव्यवहारनिरूपणे लिखितम् ।

व्यप्र.४९-५०

अनादेयपक्षाः

**[1]राज्ञाऽपवर्जितो यस्तु यश्च पौरविरोधकृत् ।**
**राष्ट्रस्य वा समस्तस्य प्रकृतीनां तथैव च ॥**
**[2]अन्ये वा ये पुरग्राममहाजनविरोधकाः ।**
**अनादेयास्तु ते सर्वे व्यवहाराः प्रकीर्तिताः ॥**
**[3]न्यायं वा नेच्छते कर्तुमन्यायं वा करोति यः ।**
**न लेखयति यस्त्वेवं तस्य पक्षो न सिध्यति ॥**
**[4]विरुद्धं चाविरुद्धं च द्वावप्यर्थौ निवेशितौ ।**
**एकस्मिन् यत्र दृश्येते तं पक्षं दूरतस्त्यजेत् ॥**

आदेयपक्षः

**[2]पक्षः प्रोक्तस्त्वनादेयो वादी चानुत्तरस्तथा ।**
**यादृग्वादी यश्च पक्षो ग्राह्यस्तत्कथयाम्यहम् ॥**
**[3]पीडातिशयमाश्रित्य यद्ब्रवीति विवक्षितम् ।**
**स्वार्थसिद्धिपरो वादी पूर्वपक्षः स उच्यते ॥**

## भृगुः

अनादेयपक्षः

**[4]उत्सृष्टं यत्र हीनेन कल्प्यं वाऽप्येकमेकतः ।**
**तत्र पक्षो न साध्यः स्याच्छास्त्रशिष्टविवर्जितः ॥**

हीनेन हीनवादिना । स्मृच.३९

**[5]विरुद्धश्चाविरुद्धश्च द्वावप्यर्थौ निवेशितौ ।**
**एकस्मिन् यत्र दृश्येते तं पक्षं दूरतस्त्यजेत् ॥**

## कात्यायनः

प्रतिज्ञालेखविधिः

**[6]निवेश्य कालं वर्षं च मासं पक्षं तिथिं तथा ।**
**वेलां प्रदेशं विषयं स्थानं जात्याकृती वयः ॥**

---

(१) **व्यक.**२० ऽपव (विव); **पमा.**६७; **स्मृसा.**८५ ऽपव (विव) वा (च) क्रमेण नारदः; **स्मृचि.**५ व्यकवत्; **व्यसौ.** १५ ऽपवर्जितो यस्तु यश्च (विसर्जितो यश्च तथा); **वीमि.** २१५ ऽपव (विव) यश्च (यस्तु); **समु.**१८ व्यकवत्.

(२) **मिता.**२१६ (=); **व्यक.**२० न्ये वा ये (न्यायेन); **पमा.**६७; **स्मृसा.**८५ न्ये वा (न्येषां) धकाः (धिनः) क्रमेण नारदः; **स्मृचि.**५ महाजन (प्रकृतीनां); **व्यसौ.**१५ न्ये वा ये (न्यायेन) व्यवहाराः (विवादाः); **वीमि.**२१५ न्ये वा (न्येऽपि) धकाः (धिनः); **समु.**१८.

(३) **व्यक.**२१ बृहस्पतिकात्यायनौ; **पमा.**६७; **व्यसौ.**१५.

(१) **व्यक.**२१ द्धं चा (द्धश्चा) द्धं च (द्धश्च) बृहस्पतिकात्यायनौ; **पमा.**६७; **व्यनि.** शितौ (दितौ) तं (तत्) कात्यायनः; **व्यसौ.**१५-१६ व्यकवत्; **प्रका.**२४ व्यकवत्, नारदः, स्मृतिचन्द्रिकायां भृगुः.

(२) **पमा.**६८; **प्रका.**२५ दी चा (दी वा) ह्यस्तत् (ह्यस्तं); **समु.**१८-१९ दी च्चा (दी वा) यादृग्वादी यश्च (यादृशो वादिनः) तत् (तं).

(३) **व्यमा.**२९१; **पमा.**६८; **प्रका.**२५; **समु.**१९; **विव्य.**४ स्वार्थ (अर्थ) वेप (वेः प).

(४) **स्मृच.**३९; **प्रका.**२४; **समु.**१८.

(५) **स्मृच.**३९; **व्यप्र.**५१ (=); **व्यउ.**३६ (=); **समु.**१८.

(६) **शुनी.**४।६७१; **विश्व.**२।६ वेश्य (वेद्य) वेलां (लेखा) नं जा (नजा) वयः (श्च याः); **व्यमा.**२९५; **अप.**२।६ देशं (देयं); **व्यक.**२५; **स्मृच.**३६ देशं (देश); **पमा.**६२ निवे (निर्दि) प्रदे (प्रवे); **व्यचि.**१३; **व्यसौ.**२०; **व्यप्र.** ४६; **व्यउ.**३३; **राकौ.**३८७; **प्रका.**२२ कालं व (कालव); **समु.**१६; **विव्य.**५ नारदः.

[1] **साध्यद्रव्यप्रमाणं च संख्या नाम तथात्मनः।**
**राज्ञां च क्रमशो नाम निवासं साध्यनाम च ॥**
[2] **क्रमात् पितॄणां नामानि पीडामाहर्तृदायकौ।**
**क्षमालिङ्गानि चान्यानि पक्षं संकीर्त्य कल्पयेत् ॥**

(१) एतानि च न्यायानुसारेणालोच्य व्यस्तानि समस्तानि वा लेखनीयानि। विश्व.२।६

(२) सर्वमेतद्विरोध्युत्तरनिराकरणार्थं वाच्यम्। अन्यथा साध्यहेतुप्रमाणानामेवोपन्यासः कार्यः, देशादिकीर्तनमनुपयुक्तं भवेत्। न चैतदुत्तरानन्तरं वाच्यम्। तदानीं तत्प्रतीकारस्याऽनवसरदुःस्थत्वात्। ×व्यमा.२९५

(३) येषां मध्ये यानि साधकबाधकप्रमाणोपन्यासोपयोगीनि यत्र भवन्ति तत्र तान्येव लेख्यानि। न सर्वाणि प्रयोजनाभावात्। तत्र समामासादीनां वृद्धिविवादे पूर्वोत्तरकालविवादे चास्त्युपयोगः। चौर्यादिविवादे नामजात्यादेः। एवमन्येष्वप्यूहनीयम्। अप.२।६

(४) कालो धनप्रयोगादिकालो वर्तमानेन राज्ञोपलक्षितः। वर्षं देववर्षमित्यादि। वेला भुज्यादिक्रियोपलक्षितः कालः। प्रदेशः साध्यक्षेत्रादेः स्थलविशेषः। विषयोऽन्तर्वेद्यादिदेशः। स्थानं विवादास्पदस्य गृहादेर्ग्रामादिः। आकृतिरवयवसंस्थानविशेषः। वयस्तारुण्यादि। प्रमाणं परिमाणं दण्डतुलाप्रस्थादिकम्। आत्मनोऽर्थिनः। राज्ञां क्षेत्रादिभुक्तिकालीनानाम्। निवासो वासस्थानं गृहगोष्ठादि। पितरोऽर्थिप्रत्यर्थिनोर्जनकादयः। पीडा प्रतिभुवि या धनिकेन कृता। आहर्ता प्रतिग्रहाद्यागमकर्ता। दायको दाता। क्षमालिङ्गानि आत्मीयधनादेः परोपभोगसहननिमित्तानि। अन्यानि प्रदर्शितेभ्योऽधिकान्यपि वृद्ध्यागमादीनि। स्मृच.३६

(५) वर्षे पत्रलिखनकालीनं, मासपक्षतिथ्योऽपि। *व्यप्र.४६

स्थावरवादे प्रतिज्ञालेखविशेषविधिः

[1] **देशः कालस्तथा स्थानं सन्निवेशस्तथैव च।**
**जातिः संज्ञाऽधिवासश्च प्रमाणं क्षेत्रनाम च ॥**
[2] **पितृपैतामहं चैव पूर्वराजानुकीर्तनम्।**
**स्थावरेषु विवादेषु दशैतानि निवेशयेत् ॥**

(१) देशस्थानादयः पुनः स्थावरेष्वेवोपयुज्यन्ते। देशो मध्यदेशादिः। स्थानं वाराणस्यादि। संनिवेशस्तत्रैव पूर्वापरदिग्विभागपरिच्छिन्नः सम्यङ्निविष्टो गृहक्षेत्रादिः। जातिरर्थिप्रत्यर्थिनोः ब्राह्मणत्वादिः। संज्ञा च देवदत्तादिः। अधिवासः समीपदेशे निवासी जनः। प्रमाणं निवर्तनादि भूपरिमाणम्। क्षेत्रनाम शालिक्षेत्रं क्रमुकक्षेत्रम्। कृष्णभूमिः पाण्डुभूमिः इति। पितुः पितामहस्य च नामार्थिप्रत्यर्थिनोः पूर्वेषां त्रयाणां राज्ञां

---

× व्यचि. व्यमावत्।

(१) **शुनी**.४।६७२ साध्य...णं (साध्यं प्रमाणं द्रव्यं); **विश्व**.२।६ साध्यद्रव्यप्रमाणं (साध्यार्थमानं द्रव्यं); **व्यमा**.२९५ साध्यद्रव्यप्रमाणं (साध्यप्रमाणं द्रव्यं) ज्ञां च (ज्ञश्च) नाम च (मेव च); **अप**.२।६ साध्यद्रव्यप्रमाणं (साध्यं प्रमाणं द्रव्यं) ख्या (ख्यां); **व्यक**.२५ अपवत्; **स्मृच**.३६ ख्या (ख्यां); **पमा**.६२ द्रव्यप्रमाणं (प्रमाणं द्रव्यं) वासं (वासः); **व्यचि**.१३ अपवत्; **व्यसौ**.२० च (तु) शेषं अपवत्; **वीमि**.२।६ साध्यद्रव्यप्रमाणं (साम्बन्ध्याप्रमाणं द्रव्यं); **व्यप्र**.४६ अपवत्; **व्यउ**.३३ साध्यद्रव्यप्रमाणं (साध्यं प्रमाणद्रव्यं); **राकौ**.३८७ अपवत्; **प्रका**.२२ स्मृचवत्; **समु**.१६-१७ स्मृचवत्; **विव्य**.५ साध्यद्रव्यप्रमाणं (साध्यं प्रमाणं द्रव्यं) क्रमशो (क्रमाय) नारदः.

(२) **शुनी**.४।६७३ पीडा...कौ (पितामहतृतीयकौ) पक्षं (पक्षे); **विश्व**.२।६ डामा (डां चा) नि चान्यानि (द्यादिकालं); **व्यमा**.२९५ यकौ (पकौ) कल्प (लेख); **अप**.२।६; **व्यक**.२५ कीर्त्य कल्प (कल्प्य कीर्त); **स्मृच**.३६; **पमा**.६२ चान्या (वाक्या); **व्यचि**.१३; **व्यसौ**.२० व्यकवत्; **वीमि**.२।६ पक्षं (पक्षे); **व्यप्र**.४६ व्यकवत्; **व्यउ**.३३ क्रमात् (तस्मात्) गानि (गादि) शेषं व्यकवत्; **राकौ**.३८७ उत्त.; **प्रका**.२२; **समु**.१७; **विव्य**.५ पक्षं (सर्वं).

* शेषं स्मृचवत्। व्यउ. व्यप्रवत्।

(१) **मिता**.२।६ कालः (चैव); **अप**.२।६; **व्यक**.२५ ऽधि (नि); **स्मृच**.३७ कालः (चैव) ऽधि (नि); **पमा**.६२ शः (शं) लः (लं) स्था (त्मा) वेशः (वेशं) सश्च (सांश्च); **व्यनि**.; **स्मृचि**.३८; **सवि**.८६ उत्त.; **व्यसौ**.२०; **व्यप्र**.४८ मितावत्; **व्यम**.६ मितावत्, स्मृत्यन्तरम्; **विता**.५६ मितावत्, स्मृत्यन्तरम्; **राकौ**.३८७ स्मृचवत्; **प्रका**.२२ व्यकवत्; **समु**.१७ देशः (देशं).

(२) **मिता**.२।६; **अप**.२।६; **व्यक**.२५ वं (वं) वादे (चारे) शये (दये); **स्मृच**.३७; **पमा**.६२ वेश (वेद); **व्यनि**.; **स्मृचि**.३८; **सवि**.८६ पमावत्; **व्यसौ**.२०; **व्यप्र**.४८; **व्यम**.६ निवे (प्रवे) स्मृत्यन्तरम्; **विता**.५६ निवेश (प्रयोज) स्मृत्यन्तरम्; **राकौ**.३८७; **प्रका**.२२ वं (वं); **समु**.१७.

नामकीर्तनं चेति । समामासादीनां यस्मिन्व्यवहारे यावदुपयुज्यते तत्र तावल्लेखनीयमिति तात्पर्यार्थः । +मिता.२।६

(२) देशो जनपदः । तेन विशेषणीयं विवादास्पदं स्थावरम् । एवमुत्तरत्रापि । क्रयविक्रयप्रतिग्रहादिकालोऽत्र कालः । स्थानं ग्रामादि, संनिवेशो वृत्तत्वदीर्घत्वादिः । जातिर्व्रीह्यादिजन्म, तयोपलक्षणीयं क्षेत्रादीत्यर्थः । अथ वा दायकादेर्जातिर्ब्राह्मणादिः । संज्ञा नाम चिह्नं वा वृक्षादि । अधिवासः समीपवर्तिक्षेत्रस्वामिवर्गः । प्रमाणं परिमाणं निवर्तनादि, आवटनादि वा प्रसिद्धमन्यत् । एवमुक्तरूपा भाषा लेखनीया विचारकैरुपादेया न विपरीता । तदुक्तम्—देशकालविहीनश्च द्रव्यसंख्याविवर्जितः । साध्यप्रमाणहीनश्च पक्षोऽनादेय इष्यते ॥ अनादेयस्त्याज्यः परीक्षकैः । अयमभिप्रायः—निर्णयप्रयोजनवान् विचारः प्रेक्षावतामुपादेयः । ऋणादानादिव्यवहारश्च धनप्राप्तिप्रयोजनः । न चोक्तविशेषेण रहितं धनं पराजितेनापि प्रतिवादिना शक्यं दातुमितरेण च ग्रहीतुम् । अप.२।६

(३) तेषां तत्रोपयोगित्वादित्यभिप्रायः । स्मृच.३७

(४) देशादीनां स्थावरविवादेषु पुनरभिधानं यत्र यावदुपयुज्यते तत्र तावदुपादेयम् । न तु सर्वं सर्वत्रेति प्रदर्शनार्थम् । *पमा.६२

न्यूनाधिकोहापोहपूर्वकं प्रथमं भूम्यादौ लिखेत्

**अधिकांश्छेदयेदर्थान् न्यूनांश्च परिपूरयेत् ।**
**भूमौ निवेशयेत्तावद्यावदर्थो न निश्चितः ॥**

(१) छेदयेदुद्धरेदित्यर्थः । भूमावित्युपलक्षणम् । स्मृच.४०

(२) शातयेत् उद्वपेत् । भूमाविति पाण्डुलेख्ययोग्याधारोपलक्षणम् । व्यप्र.५२

प्रथमं फलकादौ, अनन्तरं पत्रे लिखेत्

**पूर्वपक्षं स्वभावोक्तं प्राड्विवाकोऽभिलेखयेत् ।**
**पाण्डुलेखेन फलके ततः पत्रे विशोधितम् ॥**

(१) स्वभावो भयाद्युपाधिरहितत्वम् । अप.२।६

(२) विशोधितमन्यूनानतिरिक्तं अप्रसिद्धत्वादिदूषणरहितं च । ×स्मृच.४०

(३) स्वभावोक्तमकृत्रिमम् । व्यत.२०५

लेखकप्रमादे दण्डः

**अन्यदुक्तं लिखेद्योऽन्यदर्थिप्रत्यर्थिनां वचः ।**
**चौरवच्छासयेत्तं तु धार्मिकः पृथिवीपतिः ॥**

वाद्युक्तं सर्वं लेख्यम्

**रागादिना यदेकेन कोपितः करणे वदेत् ।**
**तदोमिति लिखेत्सर्वं वादिनः फलकादिषु* ॥**

सत्प्रतिज्ञास्वरूपम्

**प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितम् ।**

---

+विता. मितागतम् । * व्यनि. पमावत् ।

(१) **विश्व.**२।६ छेद (शोध) परि (प्रति) अर्थो न निश्चितः (पक्षः प्रतिष्ठितः); **अप.**२।६ छेद (छात) न्यू (ही) परि (प्रति) न निश्चितः (ऽभिवर्णितः); **स्मृच.**४०; **पमा.**६५ न्यू (ही) परिपूर (प्रतिपूज) न निश्चितः (ऽभिवर्णितः); **स्मृसा.**८८ छेद (छात) अर्थो न निश्चितः (सोऽर्थोऽभिकल्पयेत्) नारदः; **व्यनि.** न्यूनांश्च (अन्यांश्च) परि (प्रति) अर्थो (सोऽर्थो); **स्मृचि.**३८ छेद (छात) न निश्चितः (न वर्तितः) बृहस्पतिः; **चन्द्र.**११२ छेद (छात) अर्थो न निश्चितः (सार्थोऽभिवर्णितः) नारदः; **व्यसौ.**२१ छेदये (शोधये) परि (प्रति); **व्यप्र.**५२ छेद (छात) न नि (विनि); **व्यउ.**३६ छेद (छात); **प्रका.**२४ स्मृचवत्; **समु.**१९ स्मृचवत्.

× शेषं अपवत् । * व्याख्यासंग्रहः नारदे (पृ. १४०) द्रष्टव्यः ।

(१) **मिता.**२।६ धितम् (धयेत्); **अप.**२।६ खे (ख्ये); **स्मृच.**४० धितम् (धिनम्); **पमा.**६७; **दीक.**३२ भि (थ) खे (ख्ये); **व्यनि.** पत्रे (पत्रं) बृहस्पतिः; **स्मृचि.**३८ दीकवत्, बृहस्पतिः; **व्यत.**२०४ भि (थ) विशोधितम् (ऽभिलेखयेत्); **व्यसौ.**२१ भावो (भाषो) भि (थ) धितम् (धयेत्); **व्यप्र.**५२; **व्यउ.**२६ ऽभि (हि) क्रमेण बृहस्पतिः; **व्यम.**७; **विता.**६१ क्षं (क्षी) क्तं (क्तां); **राकौ.**३८९ भि (थ) धितम (धनम्); **प्रका.**२४ हारीतः; **समु.**१९.

(२) **शुनी.**४।५५९-५६० द्यो (द) उत्तरार्धे (चौरवत्त्रासयेद्राजा लेखकं द्रागतन्द्रितः); **व्यमा.**२९७ द्यो (द); **व्यचि.**१५ दर्थि (द्योऽर्थि); **व्यत.**२०४; **वीमि.**२।६ द्योन्यदर्थिप्रत्यर्थिनां (दन्यद्योऽर्थिनां×××); **व्यप्र.**५३ द्योन्यद (दन्यद्यो); **व्यउ.**३७ व्यमावत्; **सेतु.**१०४ व्यासः. (३) **व्यक.**१९-२० दे (दै) नारदकात्यायनौ; **व्यनि.**; **व्यसौ.**१४. (४) **विश्व.**२।६; **व्यमा.**२९१ कात्यायनबृहस्पती; **व्यक.**२५ कात्यायनबृहस्पती; **व्यत.**२०३ कात्यायनबृहस्पती; **चन्द्र.** १०८; **राकौ.**३८८; **सेतु.**१०३ सत्का (यत्का) कात्यायनबृहस्पती; **विव्य.**४ सत्का (तत्का) कात्यायनबृहस्पती.

निश्चितं लोकसिद्धं च पक्षं पक्षविदो विदुः ॥
[1]स्वल्पाक्षरः प्रभूतार्थो निःसंदिग्धो निराकुलः ।
विरोधिकारणैर्युक्तो विरोधिप्रतिषेधकः ॥
[2]यदा त्वेवंविधः पक्षः कल्पितः पूर्ववादिना ।
दद्यात्तत्पक्षसंबन्धं प्रतिवादी तदोत्तरम् * ॥

वादिभ्यः कालदानविचारः

[3]यस्मात्कार्यसमारम्भश्चिरात्तेन विनिश्चितः ।
तस्मान्न लभते कालमभियुक्तस्तु कालभाक् ॥
[4]मतिर्नोत्सहते यत्र विवादे वक्तुमिच्छतोः ।
दातव्यस्तत्र कालः स्यादर्थिप्रत्यर्थिनोरपि ॥
[5]श्वो लेखनं वा लभते त्र्यहं सप्ताहमेव वा ।
मतिरुत्पद्यते यावद्विवादे वक्तुमिच्छतः ॥

अनादेयपक्षः

[6]पुरराष्ट्रविरुद्धश्च यश्च राज्ञा विवर्जितः+ ।
अनेकपदसंकीर्णः पूर्वपक्षो न सिध्यति ॥

[1]बहुप्रतिज्ञं यत्कार्यं व्यवहारे सुनिश्चितम् ।
कामं तदपि गृह्णीयाद्राजा तत्वबुभुत्सया ॥

(१) यत्तु—अनेकेति, तत्र यद्यनेकवस्तुसंकीर्णं इत्युच्यते तदा न दोषः । मदीयमनेन हिरण्यं वासो रूपकादि वाऽपहृतमित्येवंविधस्यादुष्टत्वात् । ऋणादानादिपदसङ्करे पक्षाभास इति चेत्तदपि न । मदीया रूपका अनेन वृद्ध्या गृहीताः, सुवर्णं चास्य हस्ते निक्षिप्तम्, मदीयं क्षेत्रमयमपहरतीत्यादीनां पक्षत्वमिष्यत एव । किन्तु क्रियाभेदात्क्रमेण व्यवहारो, न युगपदित्येतावत् । यथाह कात्यायनः—'बहुप्रतिज्ञं यत्कार्यं व्यवहारे सुनिश्चितम् । कामं तदपि गृह्णीयाद् राजा तत्वबुभुत्सया' इति ॥ तस्मादनेकपदसंकीर्णः पूर्वपक्षो युगपन्न सिध्यतीति तस्यार्थः । *मिता.२।६

(२) प्रतिज्ञा यत्र भूयसी यथा चतुर्थे वत्सरे शतमृणत्वेन मत्तोऽनेन गृहीतं, तृतीयवत्सरे उद्धारतया पञ्चाशत्पुराणा गृहीताः । द्वितीयवत्सरे रजतपलद्वयं मया निक्षिप्तं, परवर्षे च मदीया भूमिरनेन बलाद् भुक्तेति । तत्र विभिन्नकालत्वात् विभिन्नक्रियात्वात् क्रियानिर्देशानां भेदात् एकस्मिंश्च विवादे अनेकक्रियानिषेधात् । यथा कात्यायनः—'न चैकस्मिन् विवादे तु क्रिया स्याद्वादिनोर्द्वयोः । न चार्थसिद्धिरुभयोर्न चैकत्र क्रियाद्वयम्' ॥ तस्मादनेको युगपत् पूर्वपक्षो निषिध्यते । न तु नानापक्षनिर्देशात्तस्य हानिरेव स्यात् । किन्तु तत्वप्रतिपत्तये लिखेत् । क्रमशो विलेखयितुं यत्र नानाद्रव्याण्येकहेतुसाध्यानि,यथा मम अनेन सुवर्णरजतधान्यानि बलाद्गृहीतानि, तत्र युगपदेव निर्णयः कार्यः । एकप्रमाणसाध्यतयैकत्वात् । ×व्यमा.२९७

(३) पुरराष्ट्रविरुद्धः पुरराष्ट्राचारविरुद्धः । राज्ञा

---

* प्रतिज्ञेत्यादिश्लोकव्याख्यानानि बृहस्पतौ द्रष्टव्यानि ।

\+ अत्रोद्धृताः सर्वे ग्रन्था: विहायापरार्कं मिताक्षरातात्पर्यमेवानुसरन्ति । तथापि वैशद्यार्थमत्रोद्धृताः ।

(१) **व्यमा**.२९१ र्युं (र्मु); **व्यक**.२५ स्व (अ) निरा (त्वना) (ह्युक्तो विरोधिकरणैः विरोधप्रतिषेधकः) कात्यायनबृहस्पती; **व्यत**.२०३ र्युं (र्मु) षेधकः (रोधकः) कात्यायनबृहस्पती; **चन्द्र**.१०८ षेधकः (रोधकः); **राकौ**.३८८ स्व (अ) विरोधिका (निरोधिक); **सेतु**.१०३ कात्यायनबृहस्पती.

(२) **व्यक**.२५; **व्यत**.२०४; **राकौ**.३८८ तदो (तथो); **सेतु**.१०३ संबन्धं (संबद्धं). (३) **व्यमा**.२९० रम्भश्चि (रम्भाच्चि) श्चितः (श्चयः); **व्यचि**.१०; **व्यत**.२०३; **वीमि**.२।७ रात्ते (रं ते); **सेतु**.१०२.

(४) **व्यमा**.२९० वक्तु (कार्य); **व्यक**.२६; **विव्य**.४ व्यमावत्. (५) **व्यक**.२६ श्वो ले (सोल्हे) पू., नारदः; **पमा**.६६ व्यकवत्; **व्यनि**.; **राकौ**.३८८ पू., बृहस्पतिः; **प्रका**.२६; **समु**. १९ बृहस्पतिः .

(६) **विश्व**.२।५ पुर (यश्च); **मिता**.२।६; **व्यमा**.२९६ पुरराष्ट्र (पुरुषाष्टा) ति (ते); **अप**.२।६; **व्यक**.२० ज्ञा (ज); **स्मृच**.३९; **पमा**.६५; **स्मृसा**.८७ (=) (अनेकपदसंकीर्णः पक्षो यः स न सिध्यति) उत्त.; **व्यचि**.१४ व्यकवत्; **व्यनि**. (=) उत्त.; **सवि**.८९ उत्त., पितामहः; **व्यसौ**.१५ यश्च राज्ञा (राजा कार्य); **व्यप्र**.५१ स्मरणम्; **व्यउ**.३६ (=) उत्त.; **विता**.२० (=) उत्त., ६० उत्त. नारदः; **समु**.१९.

* स्मृसा., सवि., चन्द्र., व्यप्र., विता. मितागतम् ।

× व्यक. व्यमागतम् ।

(१) **मिता**.२।६; **व्यमा**.२९६ सुनि (ष्वनि) तत्वं (कार्य); **अप**.२।६ रे सु (रेषु); **व्यक**.२० अपवत्; **स्मृच**.३९; **पमा**.६५ अपवत्; **स्मृसा**.८७ अपवत्; **व्यचि**.१४ अपवत्; **व्यनि**. (=); **सवि**.८९ अपवत्; **व्यसौ**.१५ अपवत्; **व्यप्र**.५१ अपवत्; **व्यउ**.३६ अपवत्; **व्यम**.७; **प्रका**.२४ तत्व (तत्र) हारीतः; **समु**.१९.

विवर्जितो निषिद्धो नास्मद्राष्ट्रे रूपकैर्व्यवहर्तव्यमित्यादि । ऋणादीनां व्यवहारपदानामनेकेषां यत्र पक्षे संकरः सोऽनेकपदसंकीर्णः, यथा—मदीयं सुवर्णमनेन गृहीतमेतद्धस्ते मया द्रम्मसहस्रं निक्षिप्तम् । अस्वामिना अनेन गौर्विक्रीता भासप्लवान् दण्डेन च ताडितवान् इति । यत्कार्यमेकमृणादानादिकं बहूनामर्थानां प्रतिज्ञया विना न सिध्यति तद्ग्राह्यं, तेन संकीर्णविषयत्वाभावादुपादेयमेव । यथा वाराणस्यामनेन मदीयं सुवर्णशतमृणरूपेण गृहीतम् । पुनर्वर्षान्तरे वस्त्राण्येतावन्ति गृहीतानि । अतोऽपि कालान्तरे स्थानान्तरेषु अजा गावो धान्यं च गृहीतमिति । अथवाऽयमर्थः—ऋणादाननिक्षेपास्वामिविक्रयादिव्यवहारविषया अनेकाः प्रतिज्ञा एकस्मिन्धनप्राप्तिरूपे कार्ये भवन्ति । तदपि कार्यं कामं राजोपाददीत । यदि प्रतिज्ञासु प्रत्येकं भेदेन प्रमाणोपन्यासं करोति । +अप.२।६

(४) पुरराष्ट्राचारविरुद्धो राजत्यक्तशुल्कशालादिविषयः सर्वथा न सिध्यति । यत्पुनस्तेनोक्तम्—बहुप्रतिज्ञमिति । तदनेकपदसंकीर्णस्य कालभेदेनोपादेयत्वप्रतिपादनार्थम् । अथवा ऋणादानाद्येकपदान्तर्गतानेकजातीयानां हिरण्यवस्त्रपशुधान्यादीनामेकजातीयानां वा संख्यापरिमाणदेशकालवृद्ध्यादिभेदेन गृहीतानां यथावृत्तकथनार्थं भेदेन प्रतिज्ञाय पुनस्तत्सर्वं प्रतिदेयमित्येककार्यतयोपसंहृतं ग्राह्यमित्येवं प्रतिपादनार्थम् । अतो न प्राचीनवचनेन विरोधः । *स्मृच.३९

(५) मिता.टीका—अप्रसिद्धादीनां पक्षाणां यथा पक्षाभासत्वं तथा अनेकपदसंकीर्णः पूर्वपक्षो न सिध्यतीत्यत्रापि प्रातीतिकार्थानुसारेणेदृशस्यापि पक्षस्य पक्षाभासत्वमेवेति प्रतीयते तन्निराकर्तुमुपपादयते । यत्त्वनेकपदेति । अनेकपदैः संकीर्णो यः पूर्वपक्षः प्रतिज्ञा सा न सिध्यति । आभासेति प्रातीतिकार्थः । तत्र पदशब्दः पद्यते ज्ञायते इति किं वस्तुपरः ? उत ऋणादानादिरूपव्यवहारविषयपरो वेति विकल्प्य न तावदाद्ये पक्षे पक्षाभासत्वमित्याह । तत्र यद्यनेकेति । अस्तु द्वितीय इत्याशङ्क्य परिहरति । ऋणादानादीति । अधुना अनेकपदसंकीर्ण इत्यस्य योऽभिप्रेतोऽर्थः तमर्थमाह । किन्तु क्रियाभेदादिति । तमेवार्थमुपसंहारव्याजेन द्रढयति । तस्मादनेकेति । तस्यार्थः तस्य वचनस्यार्थः । सुबो.२।६

(६) सुनिश्चितमेकेन साधनेन साधयितुं योग्यतया निश्चितमित्यर्थः । +व्यनि.

अनादेयपक्षः

**न्यायं[1] मे नेच्छते कर्तुमन्यायं वा करोति च ।**
**न लेखयति यस्त्वेवं तस्य पक्षो न सिध्यति ॥**

(१) तत्त्वाभियोगोऽपि द्विविधः । प्रतिषेधात्मको विध्यात्मकश्चेति । यथा मत्तो हिरण्यादिकं गृहीत्वा न प्रयच्छति । क्षेत्रादिकं ममायमपहरतीति वा । उक्तं च कात्यायनेन—न्याय्यमिति । *मिता.२।५

(२) न्यायं स्वमित्यनेन ममैतावद्धनमादाय न ददातीत्यादिप्रतिषेधमुखतोपलक्षिता । अन्यायं वेत्यनेन ममेदमपहरतीत्यादि विधिमुखता प्रदर्शिता । व्यप्र.५२

**दे[2]शकालविहीनश्च द्रव्यसंख्याविवर्जितः ।**
**क्रियाप्रमाणहीनश्च पक्षो नादेय इष्यते ॥**

(१) देशकालादिभिरेव यत्र निर्णयस्तत्र तदनुपन्यासात् पक्षाभासत्वं, न तु तेषामनुपयुक्तत्वेऽप्यदृष्टार्थत्वापत्तेः । ×व्यमा.२९७

(२) क्रियाप्रमाणं साध्यपरिमाणम् । स्मृच.३९

(३) अत्र देशकालाऽनिवेशेन लभ्येयत्तापरिच्छेद

+ पमा. अपगतम् । * शेषं मितागतम् ।

+ शेषं मितागतम् । * स्मृच., व्यनि., वीमि., विता. मितागतम् । × व्यचि., सवि. व्यमावत् ।

(१) **विश्व**.२।६; **मिता**.२।५ न्यायं (न्याय्यं) मे (स्वं) च (यः) पू.; **व्यक**.२१ मे (वा) च (यः) बृहस्पतिकात्यायनौ; **स्मृच**.३९ मे (वा) ति च (त्ययम्); **व्यनि**. स्त्वेवं (स्मै तं) शेषं स्मृचवत्; **वीमि**.२।५ मितावत्, पू.; **व्यप्र**.५२ मे ने (स्वं य) ति च (त्ययम्); **व्यउ**.३६ यं मे (य्यत्वं) ति च (त्ययम्); **विता**.३२ यं वा (य्यं वा), शेषं मितावत्; **प्रका**.२४ यं मे (य्यं वा) यं वा (य्यं वा) ति च (त्ययम्); **समु**.१९ स्मृचवत्.

(२) **व्यमा**.२९७ क्रिया (साध्य) नादे (न दे); **अप**.२।६ क्रिया (साध्य); **व्यक**.२५ अपवत्; **स्मृच**.३७; **पमा**.६१ अपवत्; **स्मृसा**.८७ उत्तरार्धे (साध्यहेतुविक्लिन्नश्च पक्षो नादेय उच्यते); **व्यचि**.१४-१५ अपवत्; **स्मृचि**.३८ अपवत्; **सवि**.८७; **चन्द्र**.१०८ (=) अपवत्; **व्यसौ**.२१ अपवत्; **व्यप्र**.४८ प्रमाण (मानवि); **विता**.५८ (=) कालवि (कालादि) क्रिया (साध्य); **प्रका**.२२; **समु**.१७.

एव न भवति । तत्तद्देशे तत्तत्काले च वृद्धिनैयत्याद्देशादिविशेषाऽनिगदे साक्षिणोऽपि निर्णयासंभवात् । तथा चैवंविधस्थले देशादिरपि निवेश्यः । न तु भाषामात्र एव अदृष्टार्थत्वापत्तेः । तदुक्तं स्मृतिसारे ' एतत्रत्र देशाद्युपन्यास एवोपयुक्तः, यथाऽमुकदेशे एतत्संख्याकं धनमनेन गृहीतं तेन तद्देशीयानां साक्षित्वं भवति न तु सर्वत्रेति द्रष्टव्यम् ' । रत्नाकरेऽपि त्रयाणामुत्तरोत्तरानादेयत्वेऽतिशयेन हेतुत्वं क्वचिद्देशाद्यनादानेऽपि निर्णयो द्रव्यसंख्यां विना बाहुल्येनानिर्णयः इयं गौर्मत्क्रीताऽनेनातिक्रम्य गृहीतेत्यादौ द्रव्यसंख्यां विनाऽपि भाषा साध्यप्रमाणं विना न क्वापीत्यर्थः । चन्द्र.१०९

(४) क्रिया प्रमाणम् । मानः साध्यपरिमाणम् । यद्यपि पूर्वोक्तपक्षलक्षणरहितानां पक्षाभासत्वमर्थसिद्धं तथापि नारदादिभिः स्पष्टार्थं प्रपञ्चितम् । व्यप्र.४८

**[१]अप्रसिद्धं निराबाधं निरर्थं निष्प्रयोजनम् ।**
**असाध्यं वा विरुद्धं वा पक्षं राजा विवर्जयेत्* ॥**

(१) अप्रसिद्धं मदीयं शशविषाणं गृहीत्वा न प्रयच्छतीत्यादि । निराबाधं अस्मद्गृहदीपप्रकाशेनायं स्वगृहे व्यवहरतीत्यादि । निरर्थं अभिधेयरहितं कचटतपगजडदबेत्यादि । निष्प्रयोजनं यथायं देवदत्तोऽस्मद्गृहसंनिधौ सुस्वरमधीत इत्यादि । असाध्यं यथाऽहं देवदत्तेन सभ्रूभङ्गमुपहसित इत्यादि । एतत्साधनासंभवादसाध्यम् । अल्पकालत्वान्न साक्षिसंभवो, लिखितं दुरतोऽस्त्वान्न दिव्यमिति । विरुद्धं यथाऽहं मूकेन शप्त इति । पुरराष्ट्रादिविरुद्धं वा । ×मिता.२।६

(२) निराबाधो निरुपद्रवः । असाध्योऽशक्यसाधनः । +अप.२।६

(३) विज्ञानयोगिना लोकप्रसिद्धिमपेक्ष्य हेत्वाभासा विवृताः । चन्द्रिकाकारेण तु वचनानुरोधेन व्याख्यातमितीयान् भेदः । +सवि.८८-८९

प्रतिज्ञादोषाः

**[१]आगमः परिभोगश्च व्युच्छित्तिः प्रार्थना तथा ।**
**एतच्चतुष्टयं प्राहुर्भाषादोषास्त्वकारणाः ॥**

आगमो धनागमननिमित्तं प्रतिग्रहादि । परिभोगो यथेष्टविनियोगानिवृत्तिः । व्युच्छित्तिः देशविप्लवादिना भोगविच्छित्तिः । प्रार्थना युक्तिभिर्भोगागमकीर्तनम् । एतदागमादिचतुष्टयं भाषागुणा इति प्राहुः । ये पुनरागमादयोऽकारणाः विना विशेषकारणं भाषायां निविष्टास्ते भाषादोषा इति प्राहुरित्यर्थः । स्मृच.३९

## पितामहः

भाषादोषः

**[२]परस्परविरुद्धानि यः पदानि निवेशयेत् ।**
**विरुद्धपदसंकीर्णा भाषा तस्य न सिध्यति ॥**

आवेदनविधिः

**[३]क्षमाकारणमादौ तु सोपपत्ति वदन् नरः ।**
**आवेदयेद्विवादार्थी सत्यं जल्पविवर्जितम् ॥**

## प्रजापतिः

प्रतिज्ञालेखनविधिः

**[४]प्रत्यर्थिनोऽग्रतः स्थित्वा वादी पक्षं प्रकल्पयेत् ॥**
**[५]निरवद्यं सप्रतिज्ञं प्रमाणागमसंयुतम् ।**
**अल्पाक्षरं प्रभूतार्थं निःसंदिग्धं निराकुलम् ।**
**द्रव्यसंख्योदयं वेलां क्षमालिङ्गं च लेखयेत् ॥**

प्रतिज्ञालेखपूर्वमावेदनविधिः

**[६]आवेदयेद्विवादार्थी परेणान्यायपीडितः ।**
**कमाकारकमादौ तु सोपपत्तिं वदन्नरः ॥**

---

* अत्रत्यं स्मृच., व्यप्र. व्याख्यानं बृहस्पतौ न केनचिदित्यादिश्लोके (पृ. १४९-१५०) द्रष्टव्यम् ।

× पमा., स्मृसा., चन्द्र., व्यम., विता. मितागतम् ।

+ शेषं मितागतम् ।

(१) **शुनी.**४।६२७ पक्षं राजा (पक्षाभासं); **विश्व.**२।६ निराबाधं (सदोषं च); **मिता.**२।६ पक्षं राजा (पक्षाभासं); **अप.**२।६ मितावत्; **स्मृच.**३७; **पमा.**६१ मितावत्, स्मृत्यन्तरम्; **स्मृसा.**८६ नारदः; **व्यनि.** विव (विस) शेषं मितावत्; **नृप्र.**५-६ मितावत्; **सवि.**८८ (=) मितावत्; **व्यसौ.**१५ अप्र (सुप्र) द्धं वा (द्धं च); **व्यप्र.**४९ मितावत्; **व्यउ.**३५ (=)मितावत्; **व्यम.**७ मितावत्, स्मृत्यन्तरम्; **विता.**५८ मितावत्, स्मृत्यन्तरम्; **प्रका.**२२; **समु.**१७.

(१) **स्मृच.**३९; **प्रका.**२४ व्युच्छित्तिः (व्युत्थितिः) हारीतः; **समु.**१९.

(२) **स्मृच.**३९; **व्यप्र.**५१(=); **व्यउ.**३६ (=) उत्त.; **प्रका.**२४ तस्य (तत्र); **समु.**१८. (३) **समु.**१७. (४)**व्यनि.** (५)**व्यनि.**; **समु.**१७ तृतीयार्धं नास्ति. (६) **व्यनि.**;

**आवेदयेद्विवादार्थी सत्यं जल्पविवर्जितम् ॥**

अनादेयवादः

**[1]पतितादिकृतश्चैव यश्च न प्रकृतिं गतः ।**
**अस्वतन्त्रकृतश्चैव पूर्वपक्षो न सिध्यति ॥**

## हारीतः

प्रतिज्ञालेखविधिः

**[2]आसनं शयनं यानं ताम्रं कांस्यमयोमयम् ।**
**धान्यमश्ममयं वस्त्रं द्विपदं च चतुष्पदम् ॥**
**[3]मणिमुक्ताप्रवालानि हीरकं रूप्यकाञ्चनम् ।**
**यदि द्रव्यसमूहः स्यात्संख्या कार्या तथैव च ॥**
**[4]यस्मिन्देशे च यद्द्रव्यं येन मानेन मीयते ।**
**तेन तस्मिंस्तथा संख्या कर्तव्या व्यवहारिभिः ॥**

(१) हीरकं वज्रम् । तेन मानेन मीत्वा संख्या कर्तव्येत्यर्थः । एवं च यत्र यदुपयुज्यते तत्र तदभावे साध्यसिद्धेः कर्तुमशक्यत्वादनादेय एवोपयोगविहीनः पक्षः । *स्मृच.३७

(२) मानसंख्याशब्दावत्रान्योन्योपलक्षणम् । अत्रैतावद्विवक्षितम् । यत्र यावदुपयुज्यते तत्र तावन्निवेश्यं भाषापत्रे । अन्यथा साध्यनिर्देशस्यापूर्वत्वात् पक्षाभासतापत्तेरधिकनिवेशाददृष्टार्थतापत्तेरिति । व्यप्र.४८

प्रतिज्ञादोषः

**[5]प्रक्रान्तसाधनोऽर्थस्तु द्विधा यस्मिन्निवेश्यते ।**
**स्वसाध्याद्वा विपन्नो वा सोऽपि पक्षो मृषा भवेत् ॥**

प्रक्रान्तसाधनः साधयितुं उपक्रान्तोऽर्थो द्विधा द्विप्रकारेण साध्यतयाऽथवा वेदितात्साध्याद्विधान्तरेण तद्विरोधितया वा यत्र पक्षे निवेश्यते सोऽपि पक्षाभास इत्यर्थः । स्मृच.३९

* सवि. स्मृचवत् ।

**समु**.१७ प्रथमार्ध एव. (१) **व्यनि**. तश्चै (तं चै) तन्त्रकृतः (तन्त्रं कृतं); **प्रका**. ६८; **समु**.१८.

(२) **स्मृच**.३७; **सवि**.८६ ताम्रं कांस्य (कांस्यताम्र); **व्यप्र**.४८ स्मयो (स्यं मनो) वस्त्रं (यच्च); **प्रका**.२२; **समु**.१७.

(३) **स्मृच**.३७; **सवि**.८६ प्रवाला (फलादी) रू (रौ); **व्यप्र**.४८ रकं (रका) तथैव च (तदैव तु); **प्रका**.२२; **समु**.१७ चनम् (चने). (४) **स्मृच**.३७; **सवि**.८६ द्रव्यं येन (संख्या मान); **व्यप्र**.४८ तथा (तदा); **प्रका**.२२; **समु**.१७. (५) **स्मृच**.३९; **प्रका**.२४; **समु**.१८.

## व्यासः

प्रतिज्ञालेखविधिः

**[1]अर्थार्थी पीडितो वाऽपि प्रमाणबलमास्थितः ।**
**निरवद्यं सत्प्रतिज्ञं पूर्वपक्षं प्रकल्पयेत् ॥**

स तु पक्षः सभ्यैर्लेखनीयः । व्यमा.२९७

फलकादिलेखोत्तरं पत्रलेखः

**[2]पाण्डुलेखेन फलके भूमौ वा प्रथमं लिखेत् ।**
**न्यूनाधिकं तु संशोध्य पश्चात्पत्रे निवेशयेत् ॥**

(१) तथा कात्यायनः—'पूर्वपक्षं स्वभावोक्तं अकृत्रिमम्' एतच्च स्वरविशेषादिना सुज्ञेयं, अधिकं यद्वानुगुणवचनविरोधि, विरोधिनोऽभिधानेन भाषायामनादेयत्वेन भग्नस्य वादिनः सभ्यगतदोषाभावनिराकरणार्थं विरोधिलिखनस्य कार्यत्वात् (?) न्यूनं यदुक्तार्थानुपपत्तिपरिकल्पितं तल्लेखनीयं न तु वादिनाऽनुक्तत्वान्न देयं, तद्विचारस्य तत्वनिर्णयार्थत्वात्, छलस्य च निषेधात् । भूमौ च कठिनीलिखितस्योद्धारारोपयोर्न्यूनाधिकशोधनार्थं सुकरत्वात् प्रथमं पाण्डुलिखनमुक्तं, शोधितं तु पत्रे लेखनीयं श्रुतोत्तरस्य भाषावादिनो 'नैवं मयोक्तम्' इति विप्रतिपत्तिनिरासार्थम् । अन्यथालिखने लेखकस्य दण्डमाह कात्यायनः—'अन्यदुक्तं लिखेदन्यदर्थिप्रत्यर्थिनां वचः। चौरवच्छासयेत् तं तु धार्मिकः पृथिवीपतिः' ॥ तदेवं निरवद्यपूर्वपक्षे वादिना ज्ञापिते ज्ञाततदर्थेन प्रतिवादिनोत्तरं देयम् । व्यमा.२९७

(२) फलकं काष्ठादिपट्टकम् । व्यचि.१५

**[3]भूमौ विलेखयेत्तावत् यावदर्थो न निश्चितः ।**
**ऊनाधिकं तु संशोध्य पश्चात्पत्रे निवेशयेत् ॥**

एतदुक्तं भवति आवेदनकाले यद्यपि न्यूनाधिकं वा रागादिना आवेदितं तथापि फलकादादाय भाषाकाले कोपाद्युपशमात्प्रतिवादिसन्निधौ विवक्षितमुपादाय हेयं त्यक्त्वा शुद्धं पत्रे निवेशयेत् । तन्न्यूनस्यान्यथाकरणे व्यवस्था स्यान्नाव्यवस्था, नारदेन व्यवस्थाया उक्तत्वात् । व्यनि.

(१) **व्यमा**.२९७. (२) **व्यमा**.२९७ भूमौ (भूम्यां); **व्यचि**.१५ न्यू (ऊ); **व्यत**.२०४; **वीमि**.२१६ वा प्रथमं (च फलके) न्यू (ऊ); **व्यप्र**.५३ न्यू (ऊ); **विव्य**.६ प्रथमं (फलके) न्यू(ऊ) निवेश (नियोज). (३) **व्यनि**.

## अनिर्दिष्टकर्तृकवचनम्

प्रतिज्ञापक्षपदयोरर्थः

(१) वचनस्य प्रतिज्ञात्वं तदर्थस्य हि पक्षता ।
असङ्करेण वक्तव्ये व्यवहारेषु वादिभिः ॥

## शुक्रनीतिः

प्रतिज्ञालेखविधिः

(२) प्रसिद्धलिपिभाषाभिस्तदुक्तं लेखको लिखेत् ॥
(३) लिखितं तादृशं सभ्या न विब्रूयुः कदाचन ॥
बलाद् गृह्णन्ति लिखितं दण्डयेत्तांस्तु चोरवत् ।
प्राड्विवाको नृपाभावे पृच्छेदेव सभागतम् ॥
वादिनौ पृच्छति प्राड् वा विवाको विविनक्त्यतः ।
विचारयति सभ्यैर्वा धर्माऽधर्मौ विवक्ति वा ॥
सभायां ये हिता योग्याः सभ्यास्ते चापि साधवः ॥

आवेदनप्रतिज्ञयोर्भेदः

(४) अर्थिना कथितं राज्ञे तदावेदनसंज्ञकम् ॥
कथितं प्राड्विवाकादौ सा भाषाऽखिलबोधिनी ।

प्रतिज्ञालेखादौ ऊहापोहौ

स पूर्वपक्षः सभ्यादिस्तं विमृश्य यथार्थतः ॥
अर्थितः पूरयेद्धीनं तत्साक्ष्यमधिकं त्यजेत् ।
वादिनश्चिह्नितं साक्ष्यं कृत्वा राजादि मुद्रयेत् ॥

प्रतिज्ञादोषाः

(५) अहं मूकेन संशप्तो वन्ध्यापुत्रेण ताडितः ।
अधीते सुस्वरं गाति स्वगेहे विहरत्ययम् ॥
धत्ते मार्गमुखद्वारं मम गेहसमीपतः ॥
इति ज्ञेयं निराबाधं निष्प्रयोजनमेव तत् ।
सदा मद्दत्तकन्यायां जामाता विहरत्ययम् ॥
(६) गर्भं धत्ते न वन्ध्येयं मृतोऽयं न प्रभाषते ।
किमर्थमिति तज्ज्ञेयमसाध्यं च विरुद्धकम् ॥
मद्दत्तदुःखसुखतो लोको दूषति नन्दति ।
निरर्थमिति वा ज्ञेयं निष्प्रयोजनमेव वा ॥

---

(१) व्यमा. २९१; व्यत.२०४ हि (च).

(२) शुनी.४।५५९.

(३) शुनी.४।५६०–५६३.

(४) शुनी.४।५८६–५८८.

(५) शुनी.४।६२८–६३०.

(६) शुनी.४।६३१- ६३२.

## संग्रहकारः

सत्प्रतिज्ञास्वरूपम

(१) अर्थवद्धर्मसंयुक्तं परिपूर्णमनाकुलम् ।
साध्यवद्वाचकपदं प्रकृतार्थानुबन्धि च ॥
प्रसिद्धमविरुद्धं च निश्चितं साधनक्षमम् ।
संक्षिप्तं निखिलार्थं च देशकालाविरोधि च ॥
वर्षर्तुमासपक्षाहर्वेलादेशप्रदेशवत् ।
स्थानावसथसाध्याख्याजात्याकारवयोयुतम् ॥
साध्यप्रमाणसंख्यावदात्मप्रत्यर्थिनामवत् ।
परात्मपूर्वजानेकराजनामभिरङ्कितम् ॥
क्षमालिङ्गात्मपीडावत्कथिताहर्तृदायकम् ।
यदावेद्यते राज्ञे तद्भाषेत्यभिधीयते ॥

(१) भाषा प्रतिज्ञा पक्ष इति नार्थान्तरम् । मिता.२।६

(२) अर्थवत् प्रयोजनवत् । धर्मसंयुक्तमल्पाक्षरत्व-प्रभूतार्थत्वादिगुणान्वितम् । परिपूर्णमध्याहारानपेक्षम् । अनाकुलमसंदिग्धाक्षरकम् । साध्यवत्सिषाधयिषितार्थाहीनम् । वाचकपदं गौणलाक्षणिकरहितम् । प्रकृतार्थानुबन्धि प्रागावेदितार्थाऽविरोधि । प्रसिद्धं लोकप्रसिद्धवस्तुविषयम् । अविरुद्धं पुरराष्ट्रप्राड्विवाकनृपाद्यविरुद्धम् । तथा पूर्वापराविरुद्धं प्रत्यक्षादिप्रमाणाविरुद्धं व्यावहारिकधर्माविरुद्धं च । निश्चितमर्थान्तरशङ्कारहितम् । साधनक्षमं साधनार्हम् । संक्षिप्तमनतिविस्तृतम् । निखिलार्थमनवशेषितवक्तव्यम् । देशकालाविरोधि मध्यदेशीयं क्रमुकक्षेत्रं, शरत्कालीनमाम्रफलसहस्रमपहृतमित्येवमादिरहितम् । 'परात्मपूर्वजानेकराजनामभिरङ्कितम्' । परः प्रतिवादी आत्मा वादी पूर्वजास्तयोः पित्रादयः । अनेके राजानो भुक्तिकालीनाः तेषां नामानि परात्मपूर्वजानेकराजनामानि । तैश्चिन्हितम् । शिष्टमुक्तार्थम् । अर्थवत्त्वादीनि देशकालाविरोधित्वान्तान्यर्थिप्रत्यर्थिनामसहितानि सर्वव्यवहारभाषोपयोगीनि, तेन तैः सर्वत्र भाषायामवश्यं भवितव्यम् । तैर्विना क्वचिदपि

---

(१) **मिता.**२।६ धन (धने) हर् (हो); **स्मृच**.३६; **पमा.** ६३ हर् (हो) प्रमाण (प्रमाप्य); **स्मृचि**.३८ कात्यायनः; **सवि.** ८५ (=) क्षमम् (क्रमम्) निखिलार्थं (अन्वितार्थं); **व्यप्र**.४७; **व्यउ**.३३ हर् (हो); **व्यम**.६ व्यउवत्,स्मृत्यन्तरम्; **विता**.५५ संनि (सनि) हर् (हो) जात्या (ज्ञात्या); **प्रका**.२२; **समु**.१७.

साध्यसिद्धेः सुखेन कर्तुमशक्यत्वात् । वर्षादीनि पुनर्विशेषाणि सर्वाणि न सर्वत्रोपयोगीनि। कतिपयैर्विनाऽपि तत्र तत्र साध्यसिद्धिसंभवात् । अतो यत्र येषामुपयोग स्तत्रैव तेषां निवेशनं कार्यम् । नेतरत्रापि । प्रयोजनाभावात्। तत्र वर्षादिकालानां वृद्धिमद्धनद्वैगुण्यादिविवादे प्रतिग्रहक्रयाध्यादीनां पौर्वापर्यविवादे चोपयोगः। देशप्रदेशस्थानानां तथा परात्मपूर्वजानेकराजनामधेयानामाहर्तृदायककथनस्य च स्थावरविवादेषूपयोगः। साध्याख्याजात्याकारवयसां चौर्यास्वामिविक्रयादावर्थविवादेऽप्युपयोगः प्रमाणसंख्ययोर्मेयतुलिमगणिमादिद्रव्यविवादे चौर्यादिविवादे चोपयोगः । क्षमालिङ्गानामुपेक्षितस्थानादिविवादेषूपयोगः । आत्मपीडाया ऋणिकलभ्रकविवादादावुपयोग इत्येषा दिक् । एवं चार्थवत्वादिभिः सह वर्षादीनां यथोपयोगं क्वचित् क्वचिन्निवेशनमिति मन्तव्यम् । *स्मृच.३६-३७

(३) मिता.टीका—धर्मो गुणः अल्पाक्षरत्वप्रभूतार्थत्वादिकः तेन संयुक्तम् । अहः प्रतिपदादिर्दिनं वा। वेला प्रातरादिः । देशो मध्यदेशादिः । प्रदेशः क्षेत्रादेः स्थलविशेषः । स्थानं वाराणस्यादि । आवसथो ग्रामादिः, हट्टादिरूपस्थलविशेषो वा । साध्याख्या विवादास्पदीभूतवस्तुनाम । जातिर्ब्राह्मणादिः । आकारो गवाश्वादिगतो वर्णविशेषः । गृहक्षेत्रादेः संस्थानविशेषश्च । वयः अश्वादेर्वयःप्रमाणम् । साध्यप्रमाणसंख्यावत् साध्यप्रमाणं क्षेत्रादेर्निर्वर्तनादिकम् । संख्या रूपकादीनाम् । आत्मप्रत्यर्थिनामवत् । स्पष्टम् । क्षमालिङ्गात्मपीडावत्। व्याख्यातानि क्षमालिङ्गानि । आहर्ता प्रतिग्रहादिना अधिगन्ता। दायको दाता। कथितावाहर्तृदायकौ यस्मिन्वचने तत्त्वीदृक् । अथवा कथिताहर्तृदायकमिति कथितप्रत्यार्थिसंबन्धमिति यावत् । ×सुबो.२।६

(४) संक्षिप्तं शब्दाडम्बरशून्यम् । +व्यप्र.४७

(५) धर्मो ग्रहणताडनादिः । निखिलः संपूर्णो न श्लेषध्वन्यादिगम्यार्थो यत्र । +विता.५६

प्रतिज्ञालेखावधिः

**भाषान्यूनातिरिक्तेषु सम्यक्सूक्तेषु कार्यिभिः ।**
**पुनः प्रतिसमाधाय शृणुयादुत्तरं ततः ॥**
**यस्मात्प्रत्यर्थिनारब्धे उत्तरेऽप्यर्थिभाषितम् ।**
**उपयोग्यपि नादेयं तस्यावसरवर्जनात् ॥**

आरब्धे दत्त इत्यर्थः । दीयमानेऽप्युत्तरे प्रतिसमाधानस्येष्टत्वात् । स्मृच.४०

* पमा., सवि., व्यउ., व्यम. स्मृचगतम् ।

× शेषं स्मृचगतम् । बाल. स्मृतिचन्द्रिकायां, सुबोधिन्यां च गतम् । + शेषं स्मृचगतम् ।

(१) स्मृच.४०; प्रका.२४; समु.१९ सूक्ते (सूत्रे).

(२) स्मृच.४०; प्रका.२४; समु.१९.

## उत्तरम्

### गौतमः

उत्तरे कालदानम्

**[1]संवत्सरं प्रतीक्षेताप्रतिभायाम् ।**

यदा अभियुक्तस्यार्थिनः साक्षिणो वाऽप्रतिभा भवति वक्तव्यं न प्रतिभाति, स्वयं जाड्याद्युपेतत्वादर्थस्य वा चिरनिर्वृत्तत्वादिना दुर्निरूप्यत्वात्तदा संवत्सरं प्रतीक्षेत। एतावता कालेन निरूप्य ब्रूहीति कालं दद्यात् ।*गौमि.

शीघ्रोत्तरस्थानानि

**[2]धेन्वनडुत्स्त्रीप्रजननसंयुक्ते च शीघ्रम् ।**

(१) संयुक्तशब्दः प्रत्येकं संबध्यते । धेन्वादिसंयुक्ते विवादे शीघ्रं विवादयेत् । प्रजननं विवाहस्तद्धेतुत्वात् । स्त्री दास्यादिः । तथाह कात्यायनः— 'धेनावनुडुहि क्षेत्रे स्त्रीषु प्रजनने तथा' । गौमि.

(२) 'संवत्सरमि'त्यस्यापवादः धेन्विति । धेन्वादिसंबन्धे व्यवहारे न सवत्सरं प्रतीक्षेत । कालक्षेपे धेन्वाद्युपभोगकालोऽतीतो भवतीति । धेनुः सक्षीरा गौः । अनड्वान् बलीवर्दः, असावपि संवत्सरभोगेन जीर्यतीति । स्त्रीप्रजननसंयुक्तेऽपि च संयुक्तग्रहणस्य प्रत्येकमभिसंबध्यमानत्वात् । स्त्रीप्रजननं कन्याविवाहः । संवत्सरप्रतीक्षणे तस्यापि कालातिक्रमो भवतीति। विवाह इति वक्तव्यमिति चेन्न, प्रजननयोग्यग्रहणार्थत्वात् । एवं चासमर्थायाः संवत्सरप्रतीक्षणेऽपि न दोषः । स्त्रीग्रहणं सवर्णजात्युपसंग्रहार्थम् । ततश्चासवर्णायां प्रतीक्षणं कर्तव्यमिति सूचयति । चकारः प्रत्येकमिति सूचनार्थः । धेनुसंयुक्ते अनडुत्संयुक्त इत्यादि मा भूत् समुदितानामेव विषय इति । शीघ्रग्रहणं नाडिकामात्रस्यापि प्रतीक्षणप्रतिषेधार्थम् । मभा.

**[3]आत्ययिके च ।**

(१) 'व्यपैति गौरवं यत्र विनाशस्त्याग एव च । कालं तत्र न कुर्वीत कार्यमात्ययिकं हि तत्' ॥ इति कात्यायनः । एवमादावात्ययिके कार्ये शीघ्रं विवादयेन्न कालं दद्यादिति । याज्ञवल्क्यः— साहसस्तेयपारुष्यगोऽभिशापात्यये स्त्रियाम् । विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः इति (२।१२) । गौमि.

(२) शीघ्रं निर्णयं कुर्यादित्यर्थः । अत्ययकर्म यथा सार्थमुक्तस्य सार्थो गच्छति, म्रियमाणावस्थो वाऽन्यतरो भवति, ग्रामोपप्लवो वा भवतीत्यादि । अत्ययवशात् धेन्वादियुक्तादपि पूर्वं विचारणीयमिति पृथक्करणम् । चशब्दः स्तेयसाहसदण्डपारुष्याद्युपसंग्रहणार्थः । मभा.

* मभा. गौमिगतम् ।

(१) गौध.१३।२८; मभा.; गौमि.१३।२८; स्मृच.४२ (अप्रतिभायाम्०); प्रका.२६ स्मृचवत्; समु.२०.

(२) गौध.१३।२९; मभा.; गौमि.१३।२९.

(३) गौध.१३।३०; मभा.; गौमि.१३।३०.

### वसिष्ठः

उत्तरदापनोपायाः

**[1]कौटिल्यं सामभेदौ च दण्डश्चेति चतुष्टयम् ।**
**मायोपेक्षेन्द्रजालानि सप्तोपायाः प्रकीर्तिताः ॥**
**[2]उपायैश्चोद्यमानस्तु न दद्यादुत्तरं तु यः ।**
**अतिक्रान्ते सप्तरात्रे जितोऽसौ दातुमर्हति ॥**

### याज्ञवल्क्यः

उत्तरलेखविधिः

**[3]श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसंनिधौ ।**

(१) श्रुतश्चासावर्थश्च श्रुतार्थः । तस्य यद्यनुरूपमुत्तरं भवति, ततो लेख्यम् । अन्यथा पराजय एवेत्यभिप्रायः। संनिधाविति सद्यो निर्णयार्थम् । एतच्चात्ययिककार्यविषयं द्रष्टव्यम्। विश्व.२।७

(२) श्रुतो भाषार्थो येन प्रत्यर्थिनाऽसौ श्रुतार्थः, तस्योत्तरं पूर्वपक्षादुत्तरत्र भवतीत्युत्तरं लेख्यं लेखनीयम्।

(१) स्मृच.४६; प्रका.२९; समु.२३. मूलस्मृतौ नोपलभ्यते। (२) स्मृच.४६; सवि.९९ हारीतः; प्रका.२९; समु.२३ नस्तु (नोऽपि). मूलस्मृतौ नोपलभ्यते ।

(३) यास्मृ.२।७; अपु.२५३।३६; शुनी.४।६३६; विश्व.२।७; मिता.; अप. वाँवे (वेवा); व्यक.२८; स्मृच.४१; पमा.६८; स्मृसा.८८; व्यचि.१५; व्यनि.; स्मृचि.३९; नृप्र.६; व्यत.२०६; चन्द्र.११३; व्यसौ.

पूर्वावेदकस्यार्थिनः संनिधौ समीपे । उत्तरं च यत्पुर्वोक्तस्य निराकरणं तदुच्यते । उत्तरमित्येकवचननिर्देशादुत्तराणां संकरो निरस्तः । ×मिता.

(३) परीक्षितपूर्वपक्षस्यैव प्रतिवादिनोत्तरं लेख्यमित्याह याज्ञवल्क्यः—श्रुतेति । स्मृच.४१

(४) लेख्यमिति वाक्यस्याप्युपलक्षणम् । व्यत.२०६

(५) तदेवं भाषास्वरूपे लिखिते च राज्ञा प्रतिवाद्युत्तररूपद्वितीयव्यवहारपादे राज्ञः कृत्यमाह—श्रुतेति । श्रुतो योग्यतयाऽवधारितोऽर्थः श्रुतार्थः, भाषावाक्यम् । तत्सम्बन्धि उत्तरं प्रत्यर्थिकृत्यं पुर्वावेदकस्याऽर्थिनः संनिधौ राज्ञा लेखनीयम् । श्रुतार्थस्येत्यभिधानाद्भाषाभासे मद्विभक्तोऽप्ययमर्जितं धनमर्जकत्वात् मह्यं ददात्वित्यादिरूपमुत्तरं विनैव जय इति द्रष्टव्यम् । वीमि.

(६) कर्तरि षष्ठी । तेन लेख्यमित्यर्थः । पूर्वावेदकोऽर्थी । पूर्वपक्षादुत्तरत्र उपन्यस्यत इत्युत्तरं पूर्वपक्षोपमर्दकमुच्यते । व्य .५५

(७) सभ्यैः प्रत्यर्थिना श्रुतस्य भाषार्थस्योत्तरं लेखनीयमित्यर्थः । विता.६२

उत्तरे कालदानं, सद्यो विवादविषयाः

**साहसस्तेयपारुष्यगोऽभिशापात्यये स्त्रियाम् ।**
**विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः ॥**

(१) किं पुनः सर्वत्रैव सद्यो व्यवहारनिर्णीतिः? सत्यम् । एवं युक्तम् । तथापि तु—साहसेत्यादि । निर्वहणमनिरूप्यैव स्वबलावष्टम्भेन सहसा प्रसह्य यत् क्रियते, तत् साहसम् । स्तेयं पारुष्यं च वक्ष्यति । गोवधाद्यभिशापो गोऽभिशापः । गोग्रहणमुदाहरणार्थं, सर्वपशूनां शृङ्गिणां वाऽभिशापः । अत्ययः कालप्रतीक्षणासमर्थं कार्यम् । स्त्रियश्च यत्राभियुज्यन्ते, तत्र कालप्रतीक्षणे विरोधात् सद्य एव विवादयेत् । विवादं समापयेदित्यर्थः । अन्यत्र त्वृणादानादौ कालप्रतीक्षणमपि कार्यम् । ध्रुवाधिकरणेच्छया वा भवति । यथाह नारदः—'गहनत्वाद्विवादानां क्षणिकत्वात् स्मृतेरपि । ऋणादिषु हरेत्कालं कामं तत्त्वबुभुत्सया' इति । विश्व.२।१२

(२) साहसादौ हि चिरमुपेक्ष्यमाणे[1] परमपराध्नुयात् । अतः सद्यो विवादो विधीयते । न चात्र स्मृत्यादयोऽनुत्तरहेतवः संभवन्ति । साहसादिकारणं हि तदानीमेव राजानं वेदयेत् । तीव्रसंवेगता हि तत्र भवति । वस्त्राद्युपहारेण तदुपेक्षायां नाशाशङ्का भवति । साक्षिणस्तत्र यदृच्छया संनिहिता अपि भवन्ति । ते हि देशान्तरं गता नामजात्यादिभिर्न विज्ञायन्ते । ततः स्वाभाविकप्रमाणाभावः ।

किं च ऋणादानादिषु कदाचिदितरेतरं संदधते । न तत्र राज्ञो हस्तप्रक्षेपः । क्रमेण च संशुद्धौ स्मृतिरुपयुज्यते तदा कियद्दत्तमिति । साहसकारी तु राज्ञाऽवश्यं निग्रहीतव्य इतरेण संधीयमानोऽपि । तस्मादृणादिषु कालहरणं, साहसादिषु सद्य इति स्थितम् । मेधा.८।५६

(३) 'ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्' इति वदतोत्तरपादलेखने कालप्रतीक्षणं दर्शितम् । तत्रापवादमाह साहसेति । साहसं विप्रशस्त्रादिनिमित्तं प्राणिव्यापादनादि । स्तेयं चौर्यम् । पारुष्यं वाग्दण्डपारुष्यं वक्ष्यमाणलक्षणम् । गौर्दोग्ध्री । अभिशापः पातकाभियोगः । अत्ययः प्राणधनातिपातस्तस्मिन् । द्वन्द्वैकवद्भावादेकवचनम् । स्त्रियां कुलस्त्रियां दास्यां च । कुलस्त्रियां चारित्र्यविवादे, दास्यां स्वत्वविवादे । विवादयेदुत्तरं दापयेत् सद्य एव न कालप्रतीक्षणं कुर्यात् । अन्यत्र विवादान्तरेषु । कालः उत्तरदानकालः । इच्छया अर्थिप्रत्यर्थिसभ्यसभापतीनाम् । स्मृतः उक्तः । *मिता.

(४) सहसा बलेन हठाज्जनसमक्षं यत्परहिंसादि क्रियते तत्साहसम् । पारुष्यं वचसा कायेन वा परस्य दुःखोत्पादनम् । गोशब्द उपजीव्यद्रव्योपलक्षणार्थः । अभिशापः पापाभिशंसनम् । तस्य पारुष्यान्तर्भावेऽपि

× अप. मितागतम् ।

२४; **वीमि.**; **व्यप्र.**५४; **व्यउ.**३७; **व्यम.**७; **विता.** ६२; **राकौ.**३९० पूर्वा (सर्वा); **प्रका.**२५; **समु.**१९.

(१) **यास्मृ.**२।१२; **अपु.**२५३।४१-४२ ष्यगो (ष्येष्व) याम् (याः) वाद (चार); **विश्व.**२।१२ याम् (यः) स्मृतः (भवेत्); **मेधा.**८।५६; **मिता.**; **व्यमा.**२९८ याम् (याः); **अप.**; **व्यक.**२७; **मभा.**१३।३०; **गौमि.**१३।३०; **स्मृच.** ४१; **पमा.**७१; **स्मृसा.**८५ व्यमावत्; **व्यचि.**१६; **व्यत.** २०२; **सवि.**९१; **चन्द्र.**१०६; **व्यसौ.**२३ न्यत्रेच्छया (ऽन्यत्र बुधैः): ३६; **वीमि.**; **व्यप्र.**८१,१०४; **विता.**७४;

**सेतु.**१०२; **प्रका.**२५; **समु.**२०; **विव्य.**६.

* विता. मितागतम् ।

१ णेऽप. २ नुत्तहे.

पृथक् वचनमादरार्थम् । अत्ययो विनाशः । एषु विषयेषु स्त्रीविषये च सद्यस्तदहरेव विवादयेद्व्यवहारं पश्येत् । उक्तविषयादन्यत्र यद्युत्तरवादी सद्यो नोत्तरं दातुमिच्छति किन्तु कालान्तरे तदा तदिच्छातोऽन्योऽप्युत्तरस्य कालो भवति । अप.

(५) अभिशापे उपपातकाभिशंसने । अत्यये विवादविषयवस्तुविनाशसंभवे । व्यक.२७

(६) गोत्वमुपलक्षणम् । यत्कालात्ययेन भोगादिक्षतिः तत्परम् । इदं च सद्योग्रहणमुपलक्षणम् । यत्कालातिपाते प्रतिकूलं तत्परम् । +व्यचि.१६

(७) अभिशापो महापातकादिः । ×व्यत.२०२

(८) विवादयेत् उत्तरदानादिनिर्णयोपयोगि सर्वं कारयेत् । इच्छया तत्वबुभुत्सया । अत्यये वादिप्रतिवादिनोरन्यतरस्य मरणे संभाव्यमाने, सति सप्तमी चेयम् । अन्यत्र च विषयतायामेव । वीमि.

(९) साहसादिषूत्तरकालदानविलम्बेऽन्यतरस्य क्षतिरवश्यम्भाविनीति सद्य एवोत्तरलेखनम् । ऋणादिषु विलम्बेऽपि न क्षतिस्तथेति सोऽप्यनुमतः । स चैकाहादिरूपेण प्रागुक्तवचनैर्विवेचितः । यत्र तु वाचनिकी व्यवस्था तत्रार्थ्यादीच्छयेति तात्पर्यम् ।

*व्यप्र.१०४

## नारदः

उत्तरदानकालः उत्तरस्वरूपं च

**यदा त्वेवंविधः पक्षः कल्पितः पूर्ववादिना ।**
**दद्यात्तत्पक्षसंबन्धं प्रतिवादी तदोत्तरम् ॥**
**पूर्वपक्षश्रुतार्थस्तु प्रत्यर्थी तदनन्तरम् ।**
**पूर्वपक्षार्थसंबन्धं प्रतिपक्षं निवेशयेत् ॥**

(१) तथा धनी अर्थीत्युक्तः । ऋणी प्रत्यर्थीत्यभिहितः । तथा भाषायाः पूर्वपक्षसंज्ञा । तदुत्तरस्य प्रतिपक्षसंज्ञा । अर्थिना लिखिते–'पूर्वपक्षश्रुतार्थस्तु प्रत्यर्थी तदनन्तरम् । पूर्वपक्षार्थसंबन्धं प्रतिपक्षं निवेशयेत्' ॥ उत्तरं दद्यादित्यर्थः । अभा.२०

(२) वादिनोक्तस्य साध्यस्य प्रतीपमर्थयतीति प्रत्यर्थी, न तु साध्यान्तरस्य । अत एव प्रतिपक्षं निवेदयेदित्याह । अतो यदि साध्यान्तरमप्यस्ति तथाऽपि नेदानीं वाच्यम् । व्यमा.२९९

उत्तरदाने कालावधिविचारः । प्रतिज्ञा तु सद्य एव लेख्या ।

**प्रत्यर्थी लभते कालं त्र्यहं सप्ताहमेव वा ।**
**अर्थी तु प्रार्थयन् कालं तत्क्षणादेव हीयते ॥**

प्रत्यर्थी तु यत्किञ्चित्कालं प्रार्थयते तदा स लभेत । अर्थी तु कालं प्रार्थयन् अर्थित्वमेव जह्यादिति । तेन कालो न प्रार्थनीयः । तदाह–प्रत्यर्थीति । ×स्मृसा.८५

**श्वो लेखनं वा स लभेद् त्र्यहं सप्ताहमेव वा ।**
**अर्थी तृतीयपादे तु युक्तं सद्यो ध्रुवं जयी ॥**

अत्र श्लोकेन पूर्वार्धेन उत्तरवादिनः कार्यमुक्तम् । उत्तरार्धेन पूर्ववादिनः । तद्यथा । अनन्तरोक्तः प्रत्यर्थी यद्युत्तरकालं प्रार्थयति, तत आगामिदिवस उच्यते । ततः श्वो लेखनं आगामिदिवसे लेखनं वा स लभेत् । अथवा त्र्यहं सप्ताहं वा उत्तरकालस्तस्य दातव्यः । अर्थी तृतीयपादे तूत्तरकालं न लभते । सद्यो ध्रुवं जयं लभते । तत्पूर्ववादिलिखितार्थस्य क्रियाद्वारेण खरीकरणसहितमिति । अभा.२०

**मतिर्नोत्सहते यस्य विवादे वक्तुमिच्छतः ।**
**दातव्य एव कालः स्यादर्थिप्रत्यर्थिनोरपि ॥**
**सद्यो वैकाहपञ्चाहौ त्र्यहं वा गुरुलाघवात् ।**
**लभेन्मासं त्रिपक्षं वा सप्ताहं वा ऋणादिषु ॥**

+शेषं मितागतम् । ×शेषं मितागतम् । सेतु. व्यतवत् ।
* वाक्यार्थो मितावत् ।

(१) अप.२१७ बन्धं(बद्धं); **स्मृच**.४१; **प्रका**.२५. श्लोकोऽयमत्रासङ्गतः, बृहस्पतिकात्यायनसंदर्भे तु संलगते ।

(२) **नास्मृ**.२१२ प्रत्य (धन्य); **अभा**.२०; **व्यमा**. २९९ वेश (वेद) नारदकात्यायनौ; **व्यक**.२८ व्यमावत्, नारदकात्यायनौ; **स्मृसा**.८९ व्यमावत्; **व्यचि**.१७ उत्त.; **स्मृचि**.३९ बन्धं (बद्धं); **व्यसौ**.२४ पक्ष (पक्षे) वेश (वेद); **सेतु**.१०५ स्मृचिवत्, उत्त.

× व्यत. स्मृसावत् ।

(१) **व्यमा**.२९० सप्ता (पञ्चा) प्रार्थयन् कालं (स्वार्थसंदेहात्); **स्मृसा**.८५ अर्थी तु ... कालं (अर्थित्वेऽर्थस्य संबन्धात्); **व्यचि**.११ पू.; **व्यत**.२०२; **चन्द्र**.१०६ सप्ता (पञ्चा) तु ...कालं (चार्थस्य संबन्धात्); **विव्य**.४. (२) **नास्मृ**.२१३; **अभा**.२० द्य (व्य); **व्यसौ**.२१.

(३) **स्मृच**.४२; **सवि**.९२ दात...दर्थि (तस्य कालः प्रदातव्यो ह्यर्थि); **प्रका**.२६; **समु**.२०. (४) vulg. काह (काहं) हौ त्र्य (हं द्व्य) न्मासं (तासौ); **स्मृच**.४२; **सवि**.९२ लभे

[1]गहनत्वाद्विवादानामसामर्थ्यात्स्मृतेरपि ।
ऋणादिषु हरेत्कालं कामं तत्वबुभुत्सया ॥

(१) विवादानां गहनत्वात्, लोकानां च व्यग्रतया चिरवृत्तप्रयोजनस्मरणस्य असामर्थ्यात्, ऋणादिषु व्यवहारेषु उत्तरवादिनः उत्तरकालं दद्यात् । काममेवमपि भवति । तत्वबुभुत्सया सद्भावबोधार्थं बोद्धुमिच्छा बुभुत्सा । ×अभा.१३

(२) यदा संकुलः पूर्वपक्षो भवति तदा गहनत्वान्न शक्यते ग्रहीतुमनाकुलो विलुप्तक्रमोऽपि ग्रहीतः प्रतिवचनकाले महत्त्वान्न शक्यते सर्वेण स्मर्तुमिति स्मृत्यन्तरस्यार्थः । मेधा.८।५६

(३) ऋणादिषु ऋणादानादिविवादपदेष्वित्यर्थः । स्मृच.४२

[2]शालीनत्वाद्भयार्तत्वात् प्रत्यर्थी स्मृतिविभ्रमात् ।
कालं प्रार्थयते यत्र तत्र तं लब्धुमर्हति ॥
[3]एकाहं त्र्यहपञ्चाहं सप्ताहं पक्षमेव वा ।
[4]मासं मासत्रयं वर्षं लभते शक्त्यपेक्षया ॥
[5]पञ्चाहं नववर्षे स्याद्दशाहं विंशतौ भवेत् ।
मासार्धं पञ्चविंशत्यां मासस्त्रिंशत्समास्वपि ॥
[5]त्रिपक्षं परतो देयं विवादे वदतां नृणाम् ॥
[6]समातीते दिनं देयं त्रिरात्रं तु षडब्दिके ।
द्व्यब्दे त्रिरात्रमेव स्यात् सप्ताहं द्वादशाब्दिके ॥

---

× नाभा. अभावत् ।

(भवे); चन्द्र.११३ (लभेतासौ द्विपक्षं वा मासं सार्धमथापि वा) उत्त.; प्रका.२६; समु.२०. (१) **नासं.** १।३८; **नास्मृ.**१।४४; **अभा.**१३; **विश्व.** २।१२ असामर्थ्यो (क्षणिकत्वा); **मेधा.**८।५६; **व्यमा.**२९८ कामं (काल); **गौमि.**१३।२८; **स्मृच.**४२; **पमा.**७१; **व्याचि.**१६; **व्यत.**२०५ त्स (क्ष); **वीमि.**२।१२ उत्त.; **व्यप्र.**१०४; **प्रका.**२६; **समु.**२०.

(२) **पमा.**७०; **व्यनि.** शा (का) र्तत्वात् (द्वापि) त्र तं (दैवं); **प्रका.**२६ र्तत्वात् (द्वापि); **समु.**२० प्रकावत्.

(३) **पमा.**७० मासत्रयं (चतुष्टयं); **व्यनि.** त्र्यह...पक्ष (द्व्यहं त्र्यहं पञ्च सप्ताह); **प्रका.**२६ एकाहं (एकाह);**समु.**२०.

(४) **व्यनि.**; **प्रका.**२६ मासः (मासं); **समु.**२० प्रकावत्. (५) **व्यनि.**; **प्रका.**२७ वादे (वादं); **समु.**२० प्रकावत्. (६) **व्यनि.**; **प्रका.**२६ तीते (नीते) त्रिरात्र (द्विरात्र) ब्दिके (ब्दके); **समु.**२०.

[1]गोभूहिरण्यस्त्रीस्तेयपारुष्यात्ययिकेषु च ।
साहसेष्वभिशापे च सद्य एव विवादयेत् ॥

(१) ऋणादिषु मध्यपतितत्वादेष्वपि कालहरणे प्राप्ते तदपवादः क्रियते । एतेषु पुनर्व्यवहारविशेषेषु सद्य एवोत्तरं दापयेदिति । अभा.१३

(२) अभिशापः पापाभिशंसनम् । तस्य पारुष्यभेदत्वेऽप्यादरार्थं पुनर्वचनम् । *स्मृच.४१

(३) अभिशापः वधानुशंसनम् । सवि.९१

(४) गवादिषु प्रत्यहं फलनिवृत्तेः । स्तेयादिषु महादोषत्वात् । आत्ययिकमतिपाति । अभिशापोऽभिशंसनम् । तयोरसंव्यवहार्यत्वात् 'पतितं पतिते'त्यादिना । अन्येषां च तत्संबन्धे प्रत्यवायात् तस्मिन्नेवाहन्युत्तरं दापयेत् । नाभा.१।३९

सदुत्तरस्वरूपम्

[2]पक्षस्य व्यापकं सारमसंदिग्धमनाकुलम् ।
अव्याख्यागम्यमित्येतदुत्तरं तद्विदो विदुः ॥

(१) पक्षस्य व्यापकं निराकरणसमर्थम् । सारं न्याय्यं न्यायादनपेतम् । असंदिग्धं सन्देहरहितम् । अनाकुलं पूर्वापराऽविरुद्धम् । अव्याख्यागम्यं अप्रसिद्धप्रदप्रयोगेण, दुःश्लिष्टविभक्तिसमासाध्याहाराभिधानेन वा अन्यदेशभाषाभिधानेन वा यत् व्याख्येयार्थं न भवति तत्सदुत्तरम् । ×मिता.२।७

(२) सारं दृढम् । असंदिग्धं असंकीर्णम् ।+अप.२।७

---

* व्यप्र. स्मृचवत् ।

× व्यक., विता. मितागतम् । + शेषं मितागतम् ।

(१) **नासं.**१।३९; **नास्मृ.**१।४५ पारुष्या (वाग्दण्डा); **अभा.**१३ पारुष्या (वाग्दण्डा) अभि (अधि); **व्यक.**२८; **स्मृच.**४१; **स्मृचि.**३९; **सवि.**९१; **व्यसौ.**२३ गोभू (भूगो) पारु...षु ( वाक्पारुष्यात्ययेषु ); **व्यप्र.**१०४; **प्रका.**२५; **समु.**२०.

(२) **शुनी.**४।६३६-६३७ दुत्त...दुः (न्निर्दुष्टं प्रतिवादिना); **मिता.**२।७; **व्यमा.**२९९ नारदबृहस्पती; **अप.**२।७; **व्यक.** २८ नारदप्रजापती; **स्मृसा.**८८ तदु (वमु); **व्यचि.**१७; **व्यनि.** अना (निरा) तदु (वमु); **स्मृचि.**३९; **नृप्र.**६; **व्यत.**२०६ तदु (वमु); **व्यसौ.**२४; **वीमि.**२।७ पक्ष (पत्र); **व्यप्र.**५५ नारदप्रजापती; **व्यउ.**३७; **व्यम.**७; **विता.**६२; **राकौ.**३९० क्रमेण याज्ञवल्क्यः; **सेतु.**१०५ व्यतवत्.

(३) मिता.टीका—अश्लिष्टविभक्तिसमासेति। श्लिष्टं संबद्धं युक्तमदुष्टमिति यावत्। अश्लिष्टं दुष्टं, विभक्तिश्च समासश्च विभक्तिसमासौ, अश्लिष्टौ च तौ विभक्तिसमासौ च। अध्याहारेण सह वर्तत इति साध्याहारम्। अश्लिष्टविभक्तिसमासाभ्यां साध्याहारेण च यदभिधानं तत्तादृशं तेनेति समासः। सुबो.२।७

(४) पक्षस्य व्यापकमिति। स्वपक्षव्यापकं यथा—मम सुवर्णं हिरण्यं रजतं धारयतीति। परेणोक्तं सुवर्णमात्रपरिशोधनेन त्रितयमपि न धारयामि इत्युत्तरं पक्षाव्यापकम्। त्रितयमपि परिशोधितमिति पक्षस्य व्यापकम्। सारमिति प्रकृतोपयोगि। न तु साधर्म्यवैधर्म्यमात्रेण प्रत्यवस्थानम्। असंदिग्धमिति। संदिग्धं लिखितं यथा—मयाऽस्य शतं गृहीतमेव, वा न तु गृहीतं, परिशोधितं वा। अनाकुलमिति, परस्परविरुद्धार्थपदजातरहितम्। अव्याख्यागम्यमिति व्यक्तार्थं, अनध्याहारेण गौण्या लक्षणया वा वृत्त्या अपेक्षितार्थप्रतिपादकम्। पूर्वपक्षस्य व्यापकमाच्छादकमिति कल्पतरुः। यच्च पक्षस्य पूर्वपक्षस्य व्यापकमिति व्याख्यानं तदयुक्तम्। उत्तरं नाम पूर्वपक्षहेतुदूषणम्। न च सकलपक्षव्यापकमेव परं दूषणं भवति। भागासिध्यादीनामदूषणत्वप्रसङ्गात्। किं च यदि सुवर्णवस्त्ररजतानि गृहीत्वा सुवर्णमात्रे परिशोधिते यदि त्रयमपि प्रार्थयति तदा किमुत्तरं दातव्यम्। न तावत्सकलपक्षव्यापकं कारणोत्तरं सकलस्यापरिशोधितत्वात्। नाऽपि मिथ्योत्तरं त्रितयस्यापि गृहीतत्वात्। तेनावश्यं सकलपूर्वपक्षव्यापकमेव कारणोत्तरं दातव्यम्। यत् त्रितयं गृहीतं किन्तु सुवर्णं न धारयामि, परिशोधितत्वात्। अतो यदि त्रितयं न धारयामीत्युक्त्वा सुवर्णपरिशोधनमात्रं कारणमुच्यते तदैव स्वपक्षस्य त्रितयसाधारणस्य सुवर्णमात्रपरिशोधनस्याव्यापकत्वादुत्तराभासत्वमिति। अत एव पूर्वपक्षसंबद्धमात्रमेवोत्तरं न तु व्यापकम्। तथा चोक्तम्—'पूर्वपक्षार्थसंबन्धं प्रतिपक्षं निवेदयेत्' इति कात्यायनेनापि प्रकृतार्थासंबन्धमात्रेणैव उत्तराभासत्वमुक्तम्। स्मृसा.८८-८९

(५) असदिग्धं उच्यमानं सत् निश्चीयमानम्। नव्यास्तु पक्षस्य स्वप्रतिज्ञातस्याधार्यमाणत्वादेर्व्यापकं साध्यमित्याहुः। पक्षस्य धार्यमाणत्वे साध्ये पक्षीकृतस्य शतस्य व्यापकमभिव्यापकं तथा चार्धमत्रागृहीतमर्धं च परिशोधितमित्यपि मिथ्याकारणघटितमुत्तरं पक्षाभिव्यापकत्वात् संगृह्यत एवेत्यन्ये। व्यचि.१७-१८

(६) पक्षस्य भाषार्थस्य व्यापकं आच्छादकम्। अभियोगप्रतिकूलमिति यावत्। अत एव—'पूर्वपक्षार्थसंबन्धं प्रतिपक्षं निवेदयेत्' इत्युक्तम्। न च विप्रतिपत्त्या न्यायार्थमागतस्य धारयसीत्यभियुक्तस्य धारयामीति संप्रतिपत्तेः कथमुत्तरत्वम्? अभियोगाऽप्रतिकूलत्वादिति वाच्यम्। भाषावादिनो मूर्खत्वेनापटुकरणतया वा कदाचिद्भाषाभिवादादेवायं हीयते इति भाषाविमर्षपर्यन्तं विप्रतिपन्नस्याप्युत्तरवादिनो भाषार्थं सम्यगवगम्य तन्निषेधार्थं सम्यगुत्तरासंभवात्। विद्वत्सभायां च असत्यवचनमत्यन्ताधर्मकारकम्। परोक्तिपराजये च दण्ड्यत्वं वादिना च वैरमित्यादि प्रतिसंदधतः संप्रतिपत्तेरुत्तरत्वं संभवत्येव। एवं एतेभ्य एवानिस्तारात् साध्यत्वेनोपदिष्टस्य पक्षस्य सिद्धत्वेनोपन्यासेन साध्यत्वे निवारणात् सिद्धसाधनेनापि वादिनः प्रत्यवस्थानाच्चोत्तरत्वं संप्रतिपत्तेः सिद्धमिति। सारं प्रकृतोपयोगि। व्यत.२०६

(७) अव्याख्यागम्यं अप्रसिद्धदेशभाषाभिधानेनाप्रसिद्धार्थपददुःश्लिष्टविभक्तिसमासव्यवहितयोजनाव्यवधारणकल्पनाविपरिणामसाध्याहाराभिधानेन वा यत् क्लिष्टव्याख्यानेन दुर्गमार्थं न भवति। +व्यप्र.५५

चतुर्विधमुत्तरम्

**[1]मिथ्या संप्रतिपत्तिश्च प्रत्यवस्कन्दनं तथा।**
**प्राङ्न्यायविधिसाध्यं वा उत्तरं स्याच्चतुर्विधम्॥**

+शेषं मितावत्। व्यउ. व्यप्रवत्।

(१) **नास्मृ**.२।४ (मिथ्या संप्रतिपत्तिर्वा प्रत्यवस्कन्दमेव वा); **अभा**.२० साध्यं (सिद्धया) शेषं नास्मृवत्; **व्यमा**.३०० त्तिश्च (त्या वा) नं तथा (नेन वा) साध्यं (सिद्धया) उत्त... विधम् (वाचनं प्रतिवादिनं); **अप**.२।७ नं तथा (नेन वा) त्तिश्च (त्या वा) साध्यं (सिद्धया) स्यात् (प्राक्); **स्मृच**.४३ त्तिश्च (त्या च) नं तथा (नेन च) साध्यं वा उ (सिद्धया चाप्यु); **पमा**.७२ (प्राङ्न्यायश्चोत्तराः प्रोक्ताश्चत्वारः शास्त्रवेदिभिः); **स्मृसा**.९२ त्तिश्च (त्तिभ्यां) नं तथा (नेन वा) साध्यं वा (सिध्या च); **व्यत**.२०६ त्तिश्च (त्तिर्वं) न्याय (न्यायाः) शेषं पमावत्; **चन्द्र**.११५ पमावत्; **सेतु**.१०६ पमावत्; **प्रका**.२७ स्मृचवत्; **समु**.२१ स्मृचवत्.

(१) तत्र मिथ्या अर्थिलिखितभाषार्थस्यापह्नवः। इयं च मिथ्याऽपि चतुर्विधा दृष्टा —'मिथ्यैतन्नाऽभिजानामि तदा तत्र न संनिधिः। अजातश्चास्मि तत्काले एवं मिथ्या चतुर्विधा'॥ संप्रतिपत्तिस्तु भाषार्थस्य कल्पसमर्थना। प्रत्यवस्कन्दनं वादिन एव सकारणं प्रत्यभियोगवादिनः। प्राङ्न्यायविधिसिद्धिः ममायं पूर्वमेवाऽस्मिन्नर्थेऽमुकामुककुलजस्याग्रे पराजित इति प्रतिवादिवचनम्। एवं चतुर्विधोत्तरलक्षणं दर्शितमिति। अभा.२०

(२) इत्थंभूतलक्षणे चेयं तृतीया। स्मृच.४३

**[१]मिथ्या च विपरीतं च पुनः शब्दसमागतम्।**
**पूर्वपक्षार्थसंबन्धमुत्तरं स्याच्चतुर्विधम्॥**

अथ परकीयश्लोकोऽत्रैव मूलग्रन्थे लिखितो दृष्टः। सोऽपि चतुर्विधोत्तरवादी, कष्टव्याख्यानश्च भविष्यति भावः। तथाऽपि लिख्यत इति। तत्र मिथ्या सूक्ता कृतैव। विपरीतमिति मिथ्याया विपरीतं संप्रतिपत्त्युत्तरं भवति। पुनरिति पुनरपि विपरीतं वादिन एव प्रत्यवस्कन्दनोत्तरमित्यर्थः। चतुर्थं चोत्तरं शब्दसमागममुक्तम्। तत्र वलिताभिप्रायेणाप्तोपदेशः शब्दसमागम उक्तः। तेन पुनराप्तोपदेशः शब्दसमागमः प्राङ्न्यायोत्तरमुक्तम्। एतेषां चतुर्णां यदि पूर्वपक्षार्थसंबद्धं भवति तत्तदुत्तरं प्रतिवादिना दातव्यमिति। अभा.२०-२१

चतुर्विधं मिथ्योत्तरम्

**[२]मिथ्यैतन्नाभिजानामि मम तत्र न संनिधिः।**
**अजातश्चास्मि तत्काल एवं मिथ्या चतुर्विधम्॥**

(१) मिथ्यैतदिति शब्दत इत्यस्योदाहरणम्। शिष्टं अर्थत इत्यस्य। ज्ञानसमर्थ एवाहं तत्काले न जानामि, तथा तत्काले तद्देशे स्थित एव न, कुतस्तद्देशे ग्रहणं, तथा तत्काले अहं न जातः, दूरं ग्रहणमिति। अर्थात् ग्रहणाभावप्रतिपादनं प्रकारत्रयेण। अत्र चतुर्विधस्यापि मिथ्यात्वे पूर्ववादिन एव क्रियानिर्देशः। तदुक्तं—मिथ्योत्तरे पूर्ववादिनः। तथा हि—असंनिधानजन्माभावौ अभावरूपौ, ग्रहणं च भावरूपं, भावाऽभावयोरभावस्य सुकरप्रतिपादनत्वात्। किं च असंनिधानजन्माभावाभ्यां व्यापकनिवृत्त्या व्याप्यग्रहणनिवृत्तिः। पूर्ववादिना च साक्षादेव ग्रहणं प्रतिपाद्यं अतस्तदेव युक्तम्। किं च यद्युत्तरवादिना असंनिधानजन्माभावौ प्रतिपादयितुं न शक्येते तथापि संदेहः। न हि तत्काले स्थितो जातो वा अवश्यं गृह्णाति। धर्मव्यवहारे छलं निरसनीयमिति पूर्ववादिन एव क्रियादानम्। स्मृसा.९२-९३

(२) मिथ्यैतदिति शब्दतो, नाभिजानामीत्यादिकमर्थतोऽपन्हवः। तथा च कात्यायनः—'श्रुत्वा भाषार्थमन्यस्तु यदि तं प्रतिषेधति। अर्थतः शब्दतो वाऽपि मिथ्या तज्ज्ञेयमुत्तरम्'॥ त्वं मह्यं धारयसीति प्रतिज्ञायां न गृहीतमिति शब्दतः। कालविशेषगर्भायां तस्यां सत्यां 'तदा नाहं जात' इति अर्थतः। देशकालविशेषगर्भायां 'तदा तत्र नाहमासम्' इत्यप्यर्थतः। देशादिमत्यां तच्छून्यायां वा न जानामीत्यर्थत एव, योग्यास्मरणेनार्थतस्तदग्रहणप्रतिपादनात्। अत्र चरमत्रयं ग्रहणावस्कन्दनमुखेन ग्रहणाभावप्रतिपादकं सापदेशमिथ्योत्तरमात्रम्। आद्यं मिथ्योत्तरमात्रम्।' *व्यत.२०७

प्रत्यवस्कन्दनलक्षणम्

**[१]अर्थिना लिखितो योऽर्थः प्रत्यर्थी यदि तं तथा।**
**प्रपद्य कारणं ब्रूयात्प्रत्यवस्कन्दनं स्मृतम्॥**
**[२]यथार्थमुत्तरं दद्याददद् दापयेन्नृपः।**
**सामभेदादिभिर्मार्गैर्यावत्सोऽर्थः समुद्धृतः×॥**

* सेतौ व्यवहारतत्वमेवोद्धृतम्।

× व्याख्यासंग्रहः बृहस्पतौ द्रष्टव्यः।

(१) **नास्मृ.**२।४ गतम् (गमम्); **अभा.**२०.

(२) **नास्मृ.**२।५; **अभा.**२० मम (तदा) धम् (धा); **स्मृसा.**९२ धम् (धा); **स्मृचि.**३९ जात (ज्ञात) धम् (धा); **व्यत.**२०७ ल एवं (ले इति) व्यासनारदौ; **सेतु.**१०६ धम् (धा) शेषं व्यतवत्, व्यासनारदौ.

(१) **शुनी.**४।६४५ योऽ(ह्य) स्मृतम् (हि तत्); **मिता.**२।७; **अप.**२।७; **व्यक.**२८ लि (ले) तं (तत्); **स्मृच.**४३; **स्मृसा.**९३ लिखि (भिहि); **व्यचि.**२९ लिखि (भिहि) प्रत्यवस्कन्दनं स्मृतम् (आथर्व भृगुरब्रवीत्); **व्यनि.** स्मृतम् (हि तत्) मनुः; **स्मृचि.**४०; **सवि.**९३ त्यर्थी यदि तं (प्रत्यर्थिगदितं); **व्यप्र.**५८ लि (ले); **व्यउ.**३९; **व्यम.**८; **प्रका.**२७. (२) **स्मृच.**४६; **सवि.**९८ ददद् (दथ तद्) पू. स्मृतिः; **प्रका.**२९; **समु.**२२.

## बृहस्पतिः

उत्तरलेखकालः

[1]विनिश्चिते पूर्वपक्षे ग्राह्याग्राह्यविशेषिते ।
प्रतिज्ञार्थे स्थिरीभूते लेखयेदुत्तरं ततः ॥

(१) यदि भाषाऽर्हा, अनर्हत्वे त्वभियोगासमुद्भवात्, किंविधार्थमुत्तरं वाच्यम् ? तदाह बृहस्पतिः–विनिश्चिते इति । व्यमा.२९८

(२) विनिश्चिते स्वरूपतोऽवधारिते । ग्राह्याग्राह्यविशेषित इति । उपादेयविशेषणोपादाने हेयविशेषणे ह्यनेन च पूर्वपक्षे विशिष्टत्वेन च ज्ञापिते सति प्रतिज्ञार्थे स्थिरे जाते उत्तरं लेखयेदित्यर्थः । व्यक.२६

(३) वादिना निश्चितस्यापि पक्षस्य पुनः प्राड्विवाकादिभिर्विचार्य कृतस्थैर्ये ततस्तत्पक्षस्योत्तरं प्रतिवादी लेखयेदित्यर्थः । स्मृच.४१

(४) लेखयेदिति वाचयेदित्यस्याप्युपलक्षणम् । वाचनपूर्वकत्वाल्लेखनस्य । व्यप्र.५४

[2]एककाले समातीते प्रत्यर्थी सभ्यसंनिधौ ।
पूर्वपक्षाक्षरसमं लेखयेदुत्तरं ततः ॥

एवं व्यवस्थापितान्यतमकाले संप्राप्ते पूर्वपक्षाक्षरार्थस्यान्यूनानतिरिक्तमुत्तरं लेख्यमित्याह बृहस्पतिः–एककाले इति । स्मृच.४२

उत्तरदापनोपायाः

[3]पूर्वपक्षे यथार्थे तु न दद्यात् उत्तरं तु यः ।
प्रत्यर्थी दापनीयः स्यात् सामादिभिरुपक्रमैः ॥
[4]प्रियपूर्वं वचः साम भेदस्तु भयदर्शनम् ।
अर्थापकर्षणं दण्डस्ताडनं बन्धनं तथा ॥

उत्तरानुक्तौ दण्डः

[1]उपायैश्चोद्यमानस्तु न दद्यादुत्तरं तु यः ।
अतिक्रान्ते सप्तरात्रे जितोऽसौ दण्डमर्हति ॥

उभयैरुपायैर्मृदुभिःखरैश्च । अप.२।७

उत्तरानुक्तौ अदण्ड्याः

[2]उन्मत्तमत्तनिर्धूता महापातकदूषिताः ।
जडान्धवृद्धस्त्रीबाला विज्ञेयाः स्युर्निरुत्तराः ॥

(१) अनुत्तराः व्यवहारायोग्यत्वेनाऽदाप्योत्तराः । व्यक.३१

(२) उन्मत्तादयस्तु सुज्ञपरद्वारेणोत्तरं दापयितव्या इत्यर्थः । व्यचि.२५

उत्तरदाने कालावधिविचारः

[3]शालीनत्वाद्भयार्तत्वात्प्रत्यर्थी स्मृतिविभ्रमात् ।
कालं प्रार्थयते यत्र तत्रेमं लब्धुमर्हति ॥
[4]एकाहत्र्यहपञ्चाहसप्ताहं पक्षमेव वा ।
मासं ऋतुत्रयं वर्षं लभते शक्त्यपेक्षया ॥

कार्यानुगुणां शक्तिं सम्यगालोक्य कालो दातव्य न तु प्रत्यर्थितामात्रेण प्रदेयः कालभेदविधानानुपपत्तेः व्यमा.२९८

---

(१) **शुनी**.४।६३४ शेषि (शोधि); **व्यमा**.२९८ शेषि (शोधि); **अप**.२।७ र्थे (ते): २।१२; **व्यक**.२६; **स्मृच**.४१; **पमा**.६८; **व्यचि**.१५ व्यमावत्; **स्मृचि**.३८-३९; **सवि**.९० र्थे (ते); **व्यसौ**.२२; **व्यप्र**.५४ व्यमावत्; **व्यउ**.३७ व्यमावत्; **प्रका**.२५; **समु**.१९; **विव्य**.६ व्यमावत्.

(२) **स्मृच**.४२; **प्रका**.२७; **समु**.२१ ती (या).

(३) **अप**.२।७ र्थे (र्थं) र्थी (क्षी); **व्यक**.३० र्थे (र्थं); **पमा**.६९; **व्यचि**.२५ र्थे (र्थं); **व्यनि**. र्थे (र्थं); **सवि**.९८ र्थे (र्थं) तु यः (यदा); **व्यसौ**.२८; **व्यप्र**.५५ र्थे (र्थं); **व्यउ**.३७ र्थे (र्थं).

(४) **अप**.२।७; **व्यक**.३० भेदस्तु (भेदनं) अर्थाप (अथोऽर्थ); **पमा**.६९; **व्यचि**.२५; **व्यनि**. दण्ड...तथा (दानं दण्डस्ताडनबन्धने); **चन्द्र**.११९ प्रिय (दया); **व्यसौ**.२८; **व्यप्र**.५६ स्तु (स्तू); **व्यउ**.३७ व्यप्रवत्.

(१) **अप**.२।७ उपायैश्चोद्यमानस्तु (उभयैश्चोद्यमानेऽपि); **व्यक**.३१; **व्यचि**.२५ चोद्य (देश्य); **व्यनि**.; **चन्द्र**.१२०; **व्यसौ**.२८; **व्यप्र**.५६ उपा (उभ); **व्यउ**.३७ व्यप्रवत्.

(२) **अप**.२।७ न्ध...ला (तिवृद्धबालाश्च) स्युः (तु); **व्यक**.३१ र्धूता (र्धूत) न्ध...ला (तिवृद्धबालाश्च) स्युः (ते); **पमा**.६८ न्ध...ला (तिवृद्धबालाश्च); **व्यचि**.२५ उत्तरार्धं व्यकवत्; **व्यनि**. स्युः (तु) कात्यायनः; **व्यसौ**.२८ न्ध...ला (पविद्धा बालाश्च) स्युः (ते); **प्रका**.२५ र्धूता (र्धूत) स्युः (च); **समु**.१८ निर्धूता (धूर्ताश्च) न्ध...ला (तिवृद्धबालाश्च) स्युः (तु): २२ र्धूता (र्धूत) कात्यायनः.

(३) **अप**.२।१२ र्तत्वात् (त्तद्वत्); **व्यक**.२६; **स्मृचि**.३९; **व्यसौ**.२२ र्तत्वात् (र्तो वा); **व्यप्र**..१०३.

(४) **व्यमा**.२९८ ऋतुत्रयं (चतुस्त्रयं); **व्यक**.२६ आह (आहं); **व्यचि**.१६ वर्षं (वापि); **स्मृचि**.३९ त्र्य (द्व्य); **व्यसौ**.२२ आह (आहं) वा (च); **व्यप्र**.१०३; **विव्य**.६ ऋतु(चतुं).

सद्योविवादविषयाः

**[1]साहसस्तेयपारुष्यगोऽभिशापे तथात्यये।**
**भूमौ विवादयेत् क्षिप्रमकालेऽपि बृहस्पतिः॥**

(१) अकालोऽत्र न विवादसमयो यथा कृषीवलानां बीजवपनसंग्रहणकालः। व्यक.२८

(२) अभिशापान्तो द्वन्द्वैकवद्भावः। अकाले रात्र्यादावपि। बृहस्पतिरिदमाहेत्यर्थः। व्यप्र.१०५

सदुत्तरस्वरूपम्

**[2]पक्षस्य व्यापकं सारमसंदिग्धमनाकुलम्।**
**अव्याख्यागम्यमित्येतदुत्तरं तद्विदो विदुः*॥**

चतुर्विधमुत्तरम्

**[3]मिथ्या संप्रतिपत्तिश्च प्रत्यवस्कन्दनं तथा।**
**प्राङ्न्यायश्चोत्तराः प्रोक्ताश्चत्वारः शास्त्रवेदिभिः॥**

मिथ्योत्तरम्

**[4]अभियुक्तोऽभियोगस्य यदि कुर्यादपह्नवम्।**
**मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः॥**

अभियुज्यते इत्यभियोगः सहेतुकं साध्यं, तस्यापन्हवमित्यर्थः। +व्यमा.३०१

संप्रतिपत्त्युत्तरम्

**[5]श्रुत्वाऽभियोगं प्रत्यर्थी यदि तं प्रतिपद्यते।**
**सा तु संप्रतिपत्तिः स्यात् शास्त्रविद्भिरुदाहृता॥**

(१) सम्यगुत्तरत्वेऽपि पराजयः स्वोक्तितो निर्विवादः। व्यमा.३००

(२) प्रतिपद्यते अङ्गीकरोति तं साध्यार्थं तथा। व्यत.२०७

प्रत्यवस्कन्दनोत्तरम्

**[1]अर्थिनाऽभिहितो योऽर्थः प्रत्यर्थी यदि तं तथा।**
**प्रपद्य कारणं ब्रूयात्प्रत्यवस्कन्दनं हि तत्॥**

(१) भाषार्थं तथाविधं प्रपद्याङ्गीकृत्य यदि तदवस्कन्दनं ब्रूयात् तदा प्रत्यवस्कन्दनं भवति। यथा सत्यं मया त्वत्तः शतमृणत्वेन गृहीतं किन्तु तत् शुद्धम्। तत्र ग्रहणस्य सिद्धत्वात् अपरिशोधनस्याग्रहणवत् ज्ञापयितुमशक्यत्वात् पूर्वपक्षस्याधानं उत्तरगतं तु परिशोधनमेव ज्ञाप्यमिति तदेव बलवद् अतः कथं कारणोत्तरमपरं भणसि? ननु प्रपद्येति कोऽर्थः, किं साध्यं प्रपद्य, हेतुं वा उभयं वा? न वा तत्साध्यं, साधारणाङ्गीकारे सत्योत्तरतापत्तेः। नापि हेतुं गृहीतधनत्वे सत्यपरिशुद्धधनत्वादिति विशिष्टं हेतुमङ्गीकृत्य परिशोधनाधानेन परस्परविरोधादाभासतापत्तेः। अत एवोभयं प्रपद्येति पराकृतम्। न च ऋणग्रहणं हेतोरेकदेशमङ्गीकृत्येति वाच्यम्। तदीयं तद्धनमित्युपगम्य न मया तत् गृहीतमित्यस्यापि प्रत्यवस्कन्दनापत्तेः तदीयधनस्याऽपि हेत्वैकदेशत्वात्, तस्मात् प्रपद्येति प्रतिपद्य भाषार्थं, यदभियोगनिस्ताराय कारणाभिधानं प्रत्यवस्कन्दनं, पूर्वपक्षावस्कन्दनात्। अत एव 'पूर्वपक्षश्रुतार्थस्तु' तथा 'श्रुत्वा भाषार्थमिति' प्रतिपत्तिमेव निर्दिशति। उच्यते। प्रपद्येति अभ्युपगम्य इत्येवार्थः। मदीयं धनमृणतया गृहीतं अपरिशुद्धं च त्वयेति ग्रहणमेव हि धारणोत्पत्तौ (?) केवलं धार्यमाणत्वस्य (?) तु परिशोधनं भवति न वा। न पुनरपरिशोधनादेव धार्यमाणता। न च ग्रहणस्य निरपेक्षस्य धारणकारणे सति कश्चिद्विरोधो, व्यभिचाराभावात्। उपपन्नस्य (?) धार्यमाणं परिशोधनाद्विनश्यति। अपरिशोधनं च तदनुपालयतीति ग्रहणकारणमभ्युपगम्योत्तरं भवति, प्रत्यवस्कन्दनमुत्तरमस्ति तृतीयं

---

* व्याख्यासंग्रहः नारदे (पृ. १६२) द्रष्टव्यः।

\+ सेतु. व्यमावत्।

(१) **व्यक**.२७ विवादयेत् (च पादपे) बृहस्पतिकात्यायनौ; **पमा**.७१; **व्यप्र**.१०५ बृहस्पतिकात्यायनौ.

(२) **व्यमा**.२९९ नारदबृहस्पती.

(३) **व्यक**.२८; **व्यसौ**.२४. (४) **व्यमा**.३०१ ह्नवम् (ह्नुतिम्); **व्यक**.२८ दप (त्तु नि); **पमा**.७२ व्यकवत्; **व्यत**.२०६ नारदः; **व्यसौ**.२४ तत्तु (तं तु); **सेतु**. १०६ नारदः; **समु**.२१.

(५) **व्यमा**.३००; **व्यक**.२८ त्वा (ता) तं प्रति (तत्वं प्र) स्यात् (तु); **पमा**.७२ तं (तत्) स्यात् (तु); **स्मृचि**.३९ तं प्रति (तत्वं प्र) स्यात् (तु) कात्यायनः; **व्यत**.२०७ पद्य (पाद्य); **व्यसौ**.२४ स्मृचिवत्; **सेतु**.१०६-१०७ पद्य (षेध); **प्रका**.२७ स्यात् (तु) नारदः; **समु**.२१ स्यात् (च).

(१) **व्यमा**.३०१; **पमा**.७२; **व्यचि**.२०; **व्यत**.२०७; **चन्द्र**.११६; **व्यसौ**.२४,२९ऽभिहि (लेखि); **वीमि**.२।७; **विता**.६५ हि तत् (स्मृतम्) कात्यायनः; **राकौ**.३९१ व्यसौवत्; **सेतु**.१०७; **प्रका**.२७ वितावत्; **समु**.२१ व्यसौवत्.

कारणं यदि ग्रहणमात्रं धारणे कारणं, तदा मत्तो गृहीतधनत्वात् इति हेतुर्वाच्यो न पुनरपरिशुद्धधनत्वमपीति। उच्यते। ग्रहणाभिधानेन धारणमुत्पन्नं ज्ञाप्यते । उत्पन्नं पुनरिदानीमप्यनुवर्तते इति अपरिशोधनाभिधानेनेति उत्पत्तिमविनाशं च ज्ञापयितुमुभयोः सहितयोः प्रयोगः। अत्रोच्यते—कारणविशेषो हि प्रत्यवस्कन्दनम् । कारणं त्वनभ्युपगम्याऽपीति सामान्यकारणं तृतीयमुत्तरम् । अत एव–'सत्यानृते कारणं च प्राङ्न्यायश्चोत्तरं पृथक्' । इति कारणमेव निर्दिशति । अत एव जितेन्द्रियेण प्रपद्येत्युपलक्षणं इत्युक्तम्। दीक्षितप्रभृतिभिस्तु प्रतिपाद्येति व्याख्यातम्। तथा व्यासः– 'कारणे स्यादवस्कन्दो मिथ्या स्यात्साध्यनिह्नुतिः' । बलवत्तरकारणोपन्यासादेवास्य दुर्बलकारणोत्तरत्वमेव । यथा मदीयेयं क्रमागता भूरिति भाषायां मदीयेयं क्रमागतेति तुल्यरूपं कारणोत्तरम्। तथा मदीयाधिकृता भूरिति चिरं चोपभुक्ता देशान्तरोपस्थिततया पञ्चवर्षाणि नोपभुक्तेति भाषायां मया पञ्चमे वर्षे अधिकृता भुक्ता तु पञ्चवर्षाणि इति दुर्बलं कारणम्। 'आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा' इति वचनात्। यत्तु दुर्बलोदाहरणं तार्किकंमन्यस्य योग्लोकस्य मदीयेयं क्रमागता भूरिति भाषायां 'मदीयेयं, दशवर्षभुज्यमानत्वात्' इति श्रीकरोदाहरणस्वीकरणं तदसंगतम् । दशवर्षभोगस्य भूमिगतस्वत्वोत्पत्तौ ज्ञप्तौ तु कारणत्वस्यैवाभावात् कथं दुर्बलकारणोदाहरणता । आधिग्रहणस्य तु कारणत्वे सत्येव दुर्बलत्वम्। पूर्वाधिविरोधेन कार्यशक्तिप्रतिबन्धः तस्मात् सर्वं तावद्युक्तम् । सहेतुकसाध्यापहारमात्रेणैव मिथ्योत्तरता पूर्ववाद्युक्तकारणमपह्नुत्याभ्युपगमाभियोगनिस्ताराय भावरूपकारणाभिधानात् कारणोत्तरता, तद्विशेषस्तु प्रत्यवस्कन्दनम् । सापदेशमिथ्याऽपि कारणमेव। ननु तर्हि प्राङ्न्यायोऽपि कारणं स्यात् उभयरूपकारणाभिधानात्। उच्यते । न जयः कारणमपधार्यमाणत्वे किन्तु ग्रहणं परिशोधनं वा। जयस्त्वेतयोरन्यतरधारणं प्रमाणमात्रं, तथा प्राङ्न्याये च पराजये च उत्तरं भवति । तथा स्त्रीसंग्रहणे पूर्वमभियुक्तस्य पुनरभियोगे पूर्वमेवाऽहमनेनाऽस्मिन् विषये अभियुक्तो जितो राजनि निवेद्य दण्डितश्चेत्यत्र दण्डदण्डिकाकबालश्च प्रमाणम् (?) अतः कथं पुनरपि मामभियुङ्क्त इति । तथा प्राङ्न्यायेऽपि भाषा दृश्यते, यथा गृहीतधनप्रार्थने ममानेन सह न्याये वृत्ते जितं मया जयपत्रं चेदम्। अगृहीतमृणं ददात्विति । कारणोत्तरन्तु नैवंरूपमिति। ततोऽतिभिन्न एवायं प्राङ्न्यायः ।

व्यमा. ३०१

(२) प्रपद्य कारणं ब्रूयादिति। अर्थिनोक्तमर्थं सत्यमेतदित्यभ्युपगम्य प्रत्यर्पितमित्यादिकारणाभिधानेन यदि पूर्वपक्षमवस्कन्दति प्रत्यर्थी तदा तदुत्तरं प्रत्यवस्कन्दनं भवतीत्यर्थः । व्यक. २९

(३) अयमर्थः—अर्थिना स्वसाध्यसिद्धौ यो हेतुरुक्तः, प्रत्यर्थी तं तथा प्रपद्य प्रतीत्य हेतोः सिद्धत्वमसिद्धत्वं वाऽनादृत्यान्यदेव साध्यविपरीतहेतुरूपं कारणं ब्रूयात्तत्कारणोत्तरं पूर्ववादिनः साध्यस्य प्रत्यवस्कन्दनात् प्रत्यवस्कन्दनं भवति। यत्तु प्रपद्य कारणमिति स्वीकृत्य कारणमिति व्याख्यातं तन्न; सकलकारणव्यापकत्वात्। न हि वक्ष्यमाणतुल्यबलहीनबलयोः कारणोत्तरयोः हेतुस्वीकारोऽस्ति । अतः साध्यविपरीतकारणाभिधानं कारणोत्तरमित्येव सकलकारणव्यापकलक्षणम्। अत एव सापदेशमिथ्योत्तरेणापि सह कारणोत्तर(स्य) साम्येऽपि भेदो बोद्धव्यः । ननु कतरत्पुनरिदं हेतुदूषणम्? उच्यते–नैकमिदं दूषणम्। कारणस्वरूपभेदेन दूषणभेदात्। तथा हि त्रिविधं कारणं भवति, बलवत्तुल्यबलं दुर्बलं च। यत्र शतं धारयति गृहीतत्वादित्युक्ते नाहं शतं धारयामि परिशोधितत्वादित्यभिधीयते तत्र बलवत्कारणोत्तरम् । इदं च विशेषणासिद्धिर्नाशहेतुदूषणमपरिशोधितविशेषणस्यानुक्तत्वेऽप्यर्थलभ्यत्वाद्भवति। तदसिद्धिः धारणस्य च विपरीतकारणं परिशोधनमेवेति भवति। कारणोत्तरं चेति। अत्र बलवत्कारणोत्तरवादिन एव क्रियानिर्देशः। तथा च नारदः—'आधर्ये पूर्वपक्षस्य यस्मिन्नर्थवशाद्भवेत् । विवादे साक्षिणस्तत्र प्रष्टव्याः प्रतिवादिनः'॥ तुल्यबलं च कारणोत्तरं यत्र मदीयेयं भूमिः क्रमागतत्वादित्युक्ते प्रतिवाद्यपि यदि तथैव वदति मदीयेयं भूमिः क्रमागतत्वादिति। अत्र विरुद्धव्यभिचारिहेतुद्वयोपनिपाते सति संशयादैकान्तिकनिर्णयाभावादनैकान्तिकं नाम हेतुदूषणम्। यस्य परैः प्रकरणसममित्यभिधानम् । अत्र

न्यायसाम्यात् विशेषाग्रहे यस्यैव गुणवन्तो वा कुलीनाः प्रत्यासन्ना वा बहवो वा साक्षिणः सन्ति तस्यैव प्रष्टव्याः। सर्वथा साम्ये तु पूर्ववादिन एव प्राथम्यात्। तथा च नारदः—'द्वयोर्विवदतोरर्थे द्वयोः सत्सु च साक्षिषु। पूर्वपक्षो भवेद्यस्य भवेयुस्तस्य साक्षिणः'॥ याज्ञवल्क्यः—'साक्षिषूभयतः सत्सु विज्ञेयाः पूर्ववादिनः। पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः'॥ दुर्बलं च कारणोत्तरं यथा—मदीयेयं भूमिः क्रमागतत्वादित्युक्ते मदीयेयं दशवर्षभुक्तत्वादित्युत्तरम्। अत्र हेतुत्वेनोपन्यस्तदशवर्षभुक्तेर्भूम्यतिरिक्तविषये प्रामाण्यं न भूमावपि। तथा च याज्ञवल्क्यः—'पश्यतोऽब्रुवतो हानिर्धनस्य दशवार्षिकी। परेण भुज्यमानाया भूमेर्विंशतिवार्षिकी'॥ अस्य च दुर्बलत्वे फलतः असदुत्तरत्वे उत्तरगणनया यावत्कालं भोगो न दृश्यते तेन दशवर्षभोगादुत्सर्गतः तावदस्येति प्राप्तम्। अतो यदि पूर्ववादिनः क्रमागतत्वे प्रमाणं भवति तदा पूर्ववादिन एव सा। प्रमाणाभावे तु दशवर्षभोगादुत्सर्गतः प्राप्तस्वत्वस्य अनपायादित्वात्? तदुत्तरवादिन एव क्रियेति निर्णयः। तेनात्र क्रियानिर्देशोऽपि पूर्ववादिन एवेति। तथा च कात्यायनः—'प्रपद्य कारणं पूर्वमन्यद्गुरुतरं यदि। प्रतिवाद्यगतं ब्रूयात्साध्यते तद्धि नेतरत्'॥ अस्यार्थः—यदि गुरुतरं कारणं ब्रूयात्तदैवोत्तरवादिना साध्यते। तद्धि नेतरत्, गुरुतरकारणं विना तुल्यबलहीनबलकारणयोः पूर्ववादिनोक्तं साध्यते इत्यर्थः। तथा च चिरन्तननिबन्धेऽपि लिखितम्—'गुरावभिहिते हेतौ प्रतिवादिक्रिया भवेत्। दुर्बले वादिनः प्रोक्ता तुल्ये पूर्वक्रियैव च' इति॥ *स्मृसा. ९३-९५

(४) प्रत्यवस्कन्दनं नाम 'सत्यं गृहीतं' परन्तु प्रतिदत्तं प्रतिग्रहलब्धं वा इत्यादि। यथाह नारदः—अर्थिनेति। प्रपद्य स्वीकृत्य। यद्यपि भाषार्थस्य न सर्वांशस्वीकारोऽत्र। संप्रतिपत्तित्वापत्तेः। कारणोक्त्यानर्थक्यापाताच्च। तथापि ग्रहणेन धारणं—तेन च प्रत्यर्पणीयत्वे साध्यत्वेन प्रतिज्ञातेन ग्रहणांशमभ्युपेत्य प्रतिदानेन प्रतिग्रहादिना वाऽधारणं प्रत्यर्पणीयत्वाभावं प्रत्यर्थी साधयति। मिथ्योत्तरादत एवास्य भेदः। तत्र भाषार्थस्य सर्वस्यापह्नवत्वादत्र त्वेकदेशानपह्नवात्। प्राङ्न्याये तु यथायथमुभयसंभव इति ततोऽपि भेदः। एतच्च तत्र विवक्ष्यामः। यत्तु प्राङ्न्यायो धार्यमाणत्वादिसामान्याभावज्ञापकः। कारणोत्तरं तु तद्ध्वंसज्ञापकमिति तयोर्भेद इति वाचस्पतिनोक्तम्। तत्तुच्छम्। प्राङ्न्यायेनापि कारणमुखेनोभयोरपि ज्ञापनसंभवात्। तस्मादस्मदुक्तमेव भेदकं ज्यायः। त्रिविधं चैतत्। स्थापनाधिकबलं तत्समबलवत् तदूनबलं चेति। उदाहृतमेवाधिकबलम्। तत्र हि मह्यमयं शतस्य धारयति प्रतिदेयतया मत्तो गृहीततावद्धनत्वादित्यादि भाषायां निर्यातनादिस्थले व्यभिचारवारणायेदानीन्तनधारणाद्यर्थापत्तिगम्यमपरिशोधितत्वादिविशेषणमर्थिनोऽवश्यं हृदिस्थमास्थेयम्। तथा च प्रतिदानाद्युपन्यासेन तदसिद्धिः प्रत्यर्थिनोक्ता भवतीति ध्येयम्। कात्यायनोऽपि स्पष्टमाचष्टे—'अर्थिनाऽभिहितो योऽर्थः प्रत्यर्थी यदि तं तथा। प्रपद्य कारणं ब्रूयादाधर्यं भृगुरब्रवीत्' इति॥ आधर्यं अधरत्वम्। दुर्बलत्वमिति यावत्। पूर्वपक्षस्येति शेषः। पूर्वपक्षदौर्बल्य उत्तरस्य प्राबल्यं अर्थत उक्तम्। अत एव नारदः—'आधर्यं पूर्वपक्षस्य यस्मिन्नर्थवशाद्भवेत्। विवादे साक्षिणस्तत्र प्रष्टव्याः पूर्ववादिनः'॥ अत्र साक्षिग्रहणं प्रमाणमात्रोपलक्षणम्।

प्रदीपकृतस्तु धार्यमाणत्वे कारणं गृहीतत्वं प्रपद्य ब्रूयात् परिशोधनादिकमिति शेषः। अपरिशोधितत्वादिकं च स्थापनाहेतुविशेषणं कण्ठरवेण ज्ञेयमित्याहुः। तन्न व्यवहितयोजनाध्याहारयोर्विना कारणमनुचितत्वात्। कारणं प्रपद्येत्यन्वये तमित्यस्य साकाङ्क्षत्वेनानन्वयप्रसंगाच्च। अन्ये तु प्रपद्य स्थापनाहेतुमभ्युपेत्य यत्तद्विपरीतवचनं तत्कारणोत्तरमिति त्रितयपरमेवेदं वचनमिति वदन्ति।

अत्राधिकसमबलकारणोत्तरयोः स्थापनाया आधर्यासंभवेनैतद्वाक्यस्य त्रितयविषयत्वायोग इति वाचस्पत्युक्तदूषणं कारणोत्तरस्य त्रैविध्यं तदुक्तं खण्डयद्भिरनुपदमेवोद्धरिष्यते। समबलम्—'इयं भूर्मदीया क्रमागतत्वात्' इत्येकेन भाषितेऽपरोऽपि तदेवोत्तरयति सत्प्रतिपक्षरीत्येति। दुर्बलं कारणोत्तरं तु ममेयं विंशतिवर्षावधि भूमिरमुकस्वामिनाहितत्वात्' इति भाषायां स्वामिनैव

---

* वीमि. स्मृसागतम्।

पञ्चवर्षावधि मय्याहितत्वान्मदीयेति सत्प्रतिपक्षरीत्योत्तरितम्। 'आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा' इति वचनादिदं दुर्बलम्। अत्र चाधिकबले प्रतिवादिनः प्रमाणोपन्यासाधिकारः प्रबलत्वसाधनाय। अन्ययोस्तु पूर्ववादिन एव। 'गुरावभिहिते हेतौ प्रतिवादिक्रिया भवेत्। दुर्बले वादिनः प्रोक्ता तुल्यैः पुर्वक्रियैव च' इति स्मरणात्। 'कारणात् पूर्वपक्षोऽपि उत्तरत्वं प्रपद्यते। अतः क्रिया सदा प्रोक्ता पूर्वपक्षप्रसाधिनी' इति॥ कारणात् बलवत्वात्। उत्तरत्वमुत्तमत्वम्। पूर्वपक्षबलवत्वहेतुकां पूर्ववादिनः क्रियां प्रतिपादयता कात्यायनेनोत्तरस्यापि बलवत्व उत्तरवादिनः क्रियेत्युक्तं भवति। इदं वाचस्पतिमिश्रोक्तं व्यवहारतत्वकाराभ्युपेतं च कारणोत्तरत्रैविध्यमयुक्तम्। वचनाऽनारूढत्वाद् युक्त्यभावाच्च। तथा हि 'अर्थिना लेखित' इत्यादिनारदवाक्यस्याधिकबलकारणोत्तरविषयत्वे न किञ्चिद्बीजमस्ति। प्रत्युत तस्य तन्मात्रविषयत्वे त्रितयसाधारणकारणोत्तरस्वरूपाभिधायकवचनात्तत्सामान्यस्वरूपाज्ञानप्रसङ्गः। भवताऽप्येतस्य त्रितयासाधारण्याभ्युपगमाच्च। यच्चोच्यते कात्यायनीये 'अर्थिनाऽभिहितो योऽर्थः प्रत्यर्थी यदि तं तथा। प्रपद्य कारणं......'॥ इत्यादिवाक्ये, नारदीये वा 'आधर्ये पूर्वपक्षस्य' इत्यादिवाक्ये तावदाधर्यशब्दोपादानात्समोनबलकारणोत्तरे विषयीभवितुमनर्हे। तदेकवाक्यतया 'अर्थिना लेखितो योऽर्थः प्रत्यर्थी' इत्यपि नारदवाक्यमधिकबलकारणोत्तरविषयमेवेति। तदबुद्धिपूर्वकम्। तथा सति नारदीयमेव वचनद्वयमनर्थकं प्रसज्यत इति सामान्यविशेषविषयत्वमेव तस्याभ्युपगन्तव्यम्। अस्त्वेवं तथा सति सामान्यलक्षणानभिधानदोषोऽपि प्रतिक्षिप्तः। आधर्येऽपि तव वचनयोस्तूक्तयुक्त्या ऊनबलमात्रविषयत्वम्। समबलातिबलयोस्त्वाधर्याभावात्तदाक्षिप्तं लक्षणान्तरमूह्यमिति सर्वं सुस्थमिति चेत्, न। आधर्यमुपमर्दकत्वं वाद्युपन्यस्तग्रहणाङ्गीकारेणाधारणादिकारणप्रतिदानाद्युपन्यासे तस्यैव साध्यत्वाविर्भावे तदुक्तग्रहणधारणयोः प्रमाणोपन्यासानपेक्षत्वमेव। इदमेवाभिप्रेत्य कल्पतरौ लक्ष्मीधरोऽप्याह—'आधर्यं प्रमाणानर्हत्वं पूर्वपक्षस्येत्यर्थः' इति। अत एव 'कारणे प्रतिवादिनि' इति सामान्यत एव कारणोत्तरे प्रतिवादिन एव क्रिया वक्ष्यते। तेन यत् त्रितयसाधारणत्वमस्य वचसोऽन्यमतमुपन्यस्याधर्योक्तिविरोधाद्दूषितम्। तदप्ययुक्तम्।

वस्तुतस्तु प्रमाणोपन्यासे तत्सामीचीन्यासामीचीन्यकृतं त्रैविध्यमुत्तरान्तरेऽपि पारमार्थिकं संभवत्येवेति कारणोत्तरमात्रे तदभिधानमनर्हम्। ततः पूर्वं तत्रापि दुर्ज्ञेयम्। स्वस्वाभिमानेन तु पक्षोत्तरयोः सार्वत्रिकमधिकबलवत्त्वमेव। अन्यथा विवादाप्रवृत्तिप्रसक्तेः। प्रमाणोक्तिप्रत्याकलितयोस्तद्विवेचनार्थयोरत एवोपयोगोऽन्यथाऽधिकबलकारणोत्तरे तयोरनुपयोगाद्द्विपात्वप्रसङ्गः संप्रतिपत्तिवत्। 'गुरावभिहिते हेतौ' इत्यादेस्तु स्मरणस्य न कारणोत्तरत्रैविध्येन क्रियाव्यवस्थापकत्वम्। 'कारणे प्रतिवादिनि' इति सामान्यवचनसंकोचस्य निर्युक्तिकस्य प्रसक्तेः। किन्तु मिथ्याद्युत्तरत्रैविध्येन। तथा हि—गुरौ पूर्वपक्षोक्तहेत्वभ्युपगमेन कारणोत्तरे कारणोपन्यासात् प्राङ्न्याये च तदुपन्यासात्तयोः साध्यत्वाविर्भावे वाद्युक्तसाध्ये साध्यत्वतिरोधानात् प्रतिवादिनः क्रिया। दुर्बले तूत्तरे मिथ्याख्येऽभावरूपत्वेन भावप्रमाणाभावमात्रेण सिद्धे साध्यत्वानर्हे वादिसाध्यस्य साध्यत्वातिरोधानात्तस्य क्रिया। तुल्ये द्वयोरपि भावसाधकयोरर्थिप्रत्यर्थिनोः पूर्वं ममेदमिति वदतोरन्यतरस्येत्यर्थः। इदं च 'साक्षिषूभयतः सत्सु' इत्यादिवचनं व्याचक्षाणा निपुणतरमुपपादयिष्यामः। 'कारणात् पूर्वपक्षोऽपि' इति कात्यायनीयं तु प्रामाणिकत्वनिबन्धनपूर्वपक्षस्योत्तमत्वं प्रतिपादयद् यत्र पूर्ववादिनः क्रिया वाक्यान्तरेणोक्ता तद्विषयत्वेनाप्युपपद्यते इति न किञ्चिदेतत्। अत एव मिताक्षराकल्पतरुरत्नाकरमदनरत्नस्मृतिचन्द्रिकाकारादिभिरिदमुपेक्षितम्। *व्यप्र.५८-६१

प्राङ्न्यायोत्तरम्

**आचारेणावसन्नोऽपि पुनर्लेखयते यदि।**
**सोऽभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते॥**

(१) आचारो व्यवहारः। अवसन्नो जितः। अप.२।७

---

* व्यउ. व्यप्रंगतम्।

(१) **अप**.२।७ सोऽभिधेयो (स विनेयो) नारदः; **व्यक**.२९ तु स (सम्यग्); **पमा**.७२ अपवत्; **व्यचि**.२२; **व्यनि**. हारीतः; **व्यत**.२०७; **चन्द्र**.११८ (सोऽवधेयोक्तितः पूर्वं प्राङ्न्यायः परिकीर्तितः); **व्यसौ**.२४; **वीमि**.२।७; **व्यप्र**.६१ स्तु (श्च) कात्यायनबृहस्पती; **सेतु**.१०८; **समु**.२१.

(२) आचारेण व्यवहारमार्गेण अवसन्नः अवसादं प्राप्तो भग्न इति यावत् । पुनर्लेखयेत् पुनरभियोगं कृत्वा स भाषान्तरे भाषां लेखयेत् । सोऽभिधेय इत्यादि । सोऽर्थी पूर्वस्मिन्व्यवहारे मया जितः इति यत्राभिधीयते स प्राङ्न्याय इत्यर्थः । व्यक.२९

(३) अत्र चोत्तरवादिन एव क्रिया तेनैव पूर्वजयस्य विभावनीयत्वात् । *व्यचि.२२

(४) प्राङ्न्यायो हि धार्यमाणत्वसामान्याभावज्ञापकः । ×व्यत.२०७

(५) अतः प्राङ्न्यायपदमन्वर्थम् । प्राङ्न्यायस्य च प्रागवस्थायां मिथ्याकारणान्यतरोत्तरोपादानेनैव व्यवहारप्रवृत्तिरिति प्राङ्न्यायसाधने तदेव सिद्धं भवति इति संभवति धार्यमाणत्वादिसामान्याभावतद्ध्वंसोभयज्ञापकता प्राङ्न्यायस्येति मिथ्याकारणोत्तराभ्याममस्य भेदः । व्यप्र.६१

उत्तरचतुष्टयलेखविधिः

**[1]तथ्ये तथ्यं प्रयुञ्जीत मिथ्या मिथ्या च लेखयेत् ।**
**कारणं कारणोपेते प्राङ्न्याये तु जयं तथा ॥**
**[2]भयदोषोद्भवा मिथ्या गर्हिता शास्त्रचोदिभिः ।**
**सत्ये संप्रतिपत्तिस्तु धर्म्या सा परिकीर्तिता ॥**
**[3]प्राङ्न्याये करणे तथ्यं श्लाघ्यं सद्भिरुदाहृतम् ।**
**विपरीतमधर्म्यं स्यात्प्रत्यर्थी हानिमाप्नुयात् ॥**

अनादेयोत्तरम्

**[4]प्रत्यर्थिविधिराख्यातः संगतार्थप्रपादने ।**
**चतुर्विधस्याप्यधुना यन्न ग्राह्यं तदुच्यते ॥**
**[5]प्रस्तुतादन्यदव्यक्तं न्यूनाधिकमसंगतम् ।**
**अव्याप्यसारं संदिग्धं प्रतिपक्षं न लेखयेत् ॥**

प्रस्तुतादन्यदर्थिलिखिताभियोगाऽपरिहारकम् । मध्यस्थं प्रतिपक्षभावरहितम् । असंगतं अभियोगाननुगतम् । स्मृच.४४

## कात्यायनः

उत्तरदाने कालावधिविचारः

**[1]श्रुत्वा लेख्यगतं चार्थं प्रत्यर्थी कारणाद्यदि ।**
**कालं विवादे याचेत तस्य देयो न संशयः ॥**

लेखयतः आर्थिन इति शेषः । अर्थं श्रुत्वेत्यन्वयः । कालो देयो राज्ञेति शेषः । *व्यक.२७

**[2]सद्यो वैकाहपञ्चाहौ त्र्यहं वा गुरुलाघवात् ।**
**लभेताऽसौ त्रिपक्षं वा सप्ताहं वा ऋणादिषु ॥**
**[3]कालं शक्तिं विदित्वा तु कार्याणां च बलाबलम् ।**
**अल्पं वा बहुकालं वा दद्यात्प्रत्यर्थिने प्रभुः ॥**

(१) प्रभुर्नृपतिः न्यायदर्शनोपलक्षणार्थः । त्रिरात्रसप्तरात्रयोः षडाब्दिकद्वादशाब्दिकगोचरतया दर्शितत्वादर्थात्तन्मध्ये नवाब्दिके पञ्चाहव्यवस्थितिः । कार्याणां बलाबलमिति वदता ऋतुत्रयं वर्षं वा दद्यादिति सूचितम् । व्यमा.२९८

(२) कालोऽर्थसंबन्धादेः । शक्तिः कार्याणां साध्य-

---

* शेषं व्यकगतम् ।

× शेषं व्यकगतं व्यचिगतं च । सेतु. व्यतवत् ।

(१) **व्यक**.२९ थ्ये (थ्या) तु जयं (तूभयं); **व्यनि**. तथ्ये तथ्यं (सत्ये सत्यं) थ्या च (थ्येति) प्राङ्न्याये (प्राग्जये); **व्यसौ**.२४ मिथ्या च (यां चाभि) प्राङ्न्याये तु (प्राग्जयेऽनु); **प्रका**.२८ कात्यायनः; **समु**.२१ कात्यायनः.

(२) **व्यक**.२९; **व्यसौ**.२४ दोषो (दृष्टो) चो (वे) त्ये (त्या). (३) **व्यक**.२९ ये (य) करणे (कारणं); **व्यसौ**.२४-२५ ये (य). (४) **अप**.२।७ र्थि (र्थे) यन्न (यत्तद्); **स्मृच**. ४३; **प्रका**.२८; **समु**.२२. (५) **व्यमा**.३०३ न्यद (ल्पम) लेख (लङ्घ) कात्यायनः; **अप**.२।७ दव्यक्तं (न्मध्यस्थं) व्याप्य (वाच्य) लेख (लक्ष); **व्यक**.३०; **स्मृच**.४३ दव्यक्तं (मध्यस्थ); **व्यसौ**.२६ प्रस्तु ... क्तं (प्रकृतार्थान्यमध्यस्थं); **प्रका**.२८ दव्यक्तं (मध्यस्थ) व्याप्य (ध्याप्य); **समु**.२२ स्मृचवत्.

* व्यप्र. व्यकवत् ।

(१) **व्यमा**.२९८ ख्यगतं (खयते) चा (द्य); **अप**.२।१२ व्यमावत्; **व्यक**.२६-२७ व्यमावत्; **स्मृच**.४२; **पमा**.६९ चा (त्व); **व्यचि**.१६ व्यमावत्; **व्यसौ**.२२ व्यमावत्; **वीमि**.२।७ गतं चा (यतोऽत्य) वादे (वादं); **व्यप्र**.१०३ व्यमावत्; **प्रका**.२६; **समु**.२०; **विव्य**.६ ख्यगतं (खयतो) चा (त्व). (२) **व्यमा**.२९८ हौ (ह); **व्यक**.२७; **स्मृसा**.८८; **व्यचि**.१६; **चन्द्र**.११३ त्रिपक्षं...दिषु (द्विपक्षं वा मासं सार्धमथापि वा); **व्यसौ**.२२; **वीमि**.२।७; **व्यप्र**.१०३. (३) **व्यमा**.२९८ कालं वा (वा कालं); **अप**.२।१२; **व्यक**.२७ कालं शक्तिं (कालशक्ती) णां च (णां तु); **स्मृच**.४२ व्यमावत्; **व्यचि**.१६; **व्यनि**. नारदः; **व्यसौ**.२२ तु (वै) प्रभुः (विभुः); **वीमि**.२।७; **व्यप्र**.१०३; **प्रका**.२६; **समु**.२० प्रभुः (भृगुः).

भूतार्थानाम्। श्लोकस्यार्थस्तु तेनैव प्रपञ्चितः। स्मृच.४२

(३) प्रभुरिह विचारकः। 　　　　　　　　व्यचि.१६

सद्योविवादविषयाः

**व्यपैति गौरवं यत्र विनाशस्त्याग एव वा।**
**कालं तत्र न कुर्वीत कार्यमात्ययिकं हि तत्॥**

विनाशे त्याग इति न सामानाधिकरण्यम्। किन्तु विनाशे सति यत्र त्याग एव संपद्यत इत्यर्थेनैक एव विषय इति कल्पतरुरत्नाकरौ। तन्न। सति सप्तम्यनुषङ्गयोः प्रतीतिविपरीतयोः कल्पनानुपपत्तेर्वाशब्दस्वरसाच्च पृथग्विषयताया एवौचित्यात्। वस्तुतस्तु विनाशस्त्याग एव वेति प्रथमान्त एव पाठः। तथा चायमर्थः — यत्रोत्तरदानविलम्बे सति गौरवं वस्तुनो मूल्यादिकृतं व्यपैति, वस्तुन एव वा विनाशो ध्वंसः त्यागः प्रच्यवो वा भवति, तत्रोत्तरदानकालमेकाहादिरूपं न कुर्वीत सद्य एवोत्तरं दापयेदित्यभिप्रायः।

व्यप्र.१०५

**धेन्वावनडुहि क्षेत्रे स्त्रीषु प्रजनने तथा।**
**न्यासे याचितके दत्ते तथैव क्रयविक्रये॥**
**कन्याया दूषणे स्तेये कलहे साहसे निधौ।**
**उपधौ कौटसाक्ष्ये च सद्य एव विवादयेत्॥**

(१) प्रजननमत्र विवाहः। उपधौ कूटगणकादिव्यवहाररूपच्छले। 　　　　　　　　*व्यक.२८

(२) उपधिर्भयादिवशादभ्युपगतम्। 　　स्मृच.४१

**साहसस्तेयपारुष्यगोऽभिशापे तथात्यये।**
**भूमौ विवादयेत्क्षिप्रमकालेऽपि बृहस्पतिः+॥**
**सद्यः कृतेषु कार्येषु सद्य एव विवादयेत्।**
**कालातीतेषु वा कालं दद्यात्प्रत्यर्थिने प्रभुः॥**

(१) सद्यः कृतेषु स्मृतिसंभवात् सद्य एवोत्तरदानमित्यभिप्रायः। 　　　　　　　　अप.२।१२

(२) प्रत्यर्थिन इत्युपलक्षणार्थम्। 　　÷स्मृच.४२

(३) वादिनोक्तस्य साध्यस्य प्रतीपमर्थयते इति प्रत्यर्थी। 　　　　　　　　व्यत.२०५

(४) प्रभुर्विचारकः। 　　　　　　　　व्यप्र.१०३

सद्योविवादकालान्तरविवादविषयव्यवस्था

**सद्यः कृते सद्यो वादः समातीते दिनं क्षिपेत्।**
**षडाब्दिके त्रिरात्रं तु सप्ताहं द्वादशाब्दिके॥**
**विंशत्यब्दे दशाहं तु मासार्धं वा लभेत सः।**
**मासं त्रिंशत्समातीते त्रिपक्षं परतो लभेत्॥**

* व्यप्र. व्यकवत्। + व्याख्यासंग्रहः बृहस्पतौ (पृ. १६६) द्रष्टव्यः। 　÷ सवि. स्मृचवत्।

(१) अप.२।१२ वा (च); **व्यक**.२८ शः (शे); **गौमि**. १३।३० अपवत्; **स्मृच**.४१; **व्यचि**.१६ र्वीत (र्वीत्त) यि (हि); **स्मृचि**.३९ त्य (त्या); **चन्द्र**.१०७ नाशः (चारे) पू.; **व्यसौ**.२३ शः (शे); **वीमि**.२।१२ र्वीत (र्यात्त); **व्यप्र**.१०४; **प्रका**.२५; **समु**.२०.

(२) **अप**.२।१२ धेनाव (धेन्वाम); **व्यक**.२८; **गौमि**. १३।२९ याचित (चारित्र); **स्मृच**.४१; **पमा**.७१; **व्यनि**. हारीतः; **स्मृचि**.३९ क्रयविक्रये (विक्रये क्रये); **चन्द्र**.१०६ दत्ते (चैव); **व्यसौ**.२३ चन्द्रवत्; **व्यप्र**.१०४; **प्रका**.२०; **समु**.२५.

(३) **अप**.२।१२ प (पा) कौ (कू); **व्यक**.२८ कौ (कू); **गौमि**.१३।२९ कौ (कू); **स्मृच**.४१; **पमा**.७२ कौ (कू); **व्यनि**. निधौ (षु च) कौ (कू) हारीतः; **स्मृचि**.३९ अपवत्; **चन्द्र**.१०६-१०७ उपधौ कौटसाक्ष्ये च (उपाधौ साहसे चैव); **व्यसौ**.२३ कौ (कू); **व्यप्र**.१०४ स्तेये (चैव); **प्रका**.२५ कौ (कू); **समु**.२०.

(१) **व्यक**.२७ विवादयेत् (च पादपे) बृहस्पतिकात्यायनौ; **स्मृचि**.३९; **व्यप्र**.१०५ बृहस्पतिकात्यायनौ.

(२) **अप**.२।१२ तीतेषु (तीते तु); **व्यक**.२६ सद्यःकृ (समं कृ); **स्मृच**.४२; **स्मृसा**.८८ कार्ये (वादे); **व्यनि**. क्रमेण नारदः; **स्मृचि**.३९ षु कार्येषु (तु तन्नित्यं); **व्यत**. २०५; **सवि**.९२ पितामहः; **चन्द्र**.११३ र्थिने (र्थिनि); **व्यसौ**.२२ कार्ये (वादे) विवादयेत् (परीक्षणम्) ने प्रभुः (नो विभुः); **व्यप्र**.१०३; **प्रका**.२६; **समु**.२०.

(३) **व्यमा**.२९८ रात्रं (वर्णं); **अप**.२।१२ द्यो वादः (द्य एव) डा (ड); **व्यक**.२७; **स्मृच**.४२ द्यो वादः (द्य एव) क्षिपेत् (भवेत्) डा (ड) तु (स्यात्); **पमा**.७० सद्यो (तदा) डा (ड) नारद; **व्यचि**.१६; **व्यसौ**.२२ सद्य...समातीते (वादः सद्यः कृते सद्यः समानीते); **वीमि**.२।७ वादः समातीते (वादसमानीते); **व्यप्र**.१०३ डा (ड); **प्रका**.२६ स्मृचवत्; **समु**.२० स्मृचवत्; **विव्य**.६ तु (स्यात्).

(४) **व्यमा**.२९८; **अप**.२।१२ शत्यब्दे (शात्परे) लभेत् (भवेत्); **व्यक**.२७ लभेत सः (लभते नरः) लभेत् (भवेत्); **स्मृच**.४२ लभेत् (भवेत्); **पमा**.७० स्मृचवत् नारदः; **व्यचि**.१६; **व्यसौ**.२२ शत्यब्दे (शाब्दे च); **वीमि**.२।७

संवत्सरादर्वाग्दिनादिनानापक्षास्त्रिपक्षान्ताः पूर्ववत् कार्याणां शक्त्यनुसरणतः सभापतिना व्यवस्थापनीयाः । स्मृच.४२

[1]अस्वतन्त्रजडोन्मत्तबालदीक्षितरोगिणाम् ।
कालं संवत्सरादर्वाक् स्वयमेव यथेप्सितम् ॥
[2]संवत्सरं जडोन्मत्तेऽमनस्के व्याधिपीडिते ।
दिगन्तरप्रपन्ने च अज्ञातार्थे च वस्तुनि ॥
[3]मूलं वा साक्षिणो वाऽथ परदेशे स्थिता यदा ।
तत्र कालो भवेत्पुंसामास्वदेशसमागमात् ॥
[4]दत्तेऽपि काले देयं स्यात्पुनः कार्यस्य गौरवात् ॥
[5]दिनं मासार्धमासौ वा ऋतुः संवत्सरोऽपि वा ।
क्रियास्थित्यनुरूपस्तु देयः कालः परेण तु ॥

(१) मूलं धनम् । साक्षिग्रहणं प्रमाणोपलक्षणार्थम् । येषां देशान्तरे धनं प्रमाणं वा साक्ष्यादि विद्यते तेषां पुंसां यावता कालेन तन्मूलधनाद्यानीयते तावत्कालस्तेषां दातुमर्हो भवतीत्यर्थः । अप.२।१२

(२) मूलं विवादास्पदीभूतं धनम् । व्यक.२७

(३) क्रियास्थितिः कार्यगुरुलाघवस्थितिः । स्मृच.४२

(४) मूलशब्देन विवादास्पदीभूतधनममुष्मात्पुरुषाल्लब्धमिति वादी यं कथयति स उच्यते । तत्र विषये पुंसां मूलभूतानां साक्षिणां वा । स्वदेशे आगमात् आगमनावधि । वक्तुं उत्तरं दातुं कालो देयो भवेत् दातव्य इत्यर्थः । व्यप्र.१०३

नियतकालातिपातकृद्वादिदोषापवादविचारः

[1]संवत्सरं प्रतीक्ष्योऽथ जडो व्याधिप्रपीडितः ।
दिगन्तरान् गच्छति चेद् वस्तुष्वकृतनिर्णयः ॥
[2]आचारद्रव्यदानेष्टकृत्योपस्थाननिर्णये ।
नोपस्थितो यदा कश्चित् छलं तत्र न कारयेत् ॥
[3]दैवराजकृतो दोषस्तस्मिन् काले यदा भवेत् ।
अवधित्यागमात्रेण न भवेत्स पराजितः ॥
[4]दैवराजकृतं दोषं साक्षिभिः प्रतिपादयेत् ।
जैह्म्येन वर्तमानस्य दण्डो दाप्यस्तु तद्धनम् ॥
[5]यो वा यस्मिन् समाचारः पारम्पर्यक्रमागतः ।
तं परीक्ष्य यथान्यायमुत्तरं दापयेन्नृपः ॥

यस्मिन् देशकुलादौ । ×व्यक.२७

उत्तरदापनोपायाः

[6]यथार्थमुत्तरं दद्यादयच्छन्तं च दापयेत् ।
सामभेदादिभिर्मार्गैर्यावत्सोऽर्थः समुत्थितः ॥

प्रतिज्ञोत्तरलेखोत्तरमपि उभयवाद्युक्तविशेषो विचारकालेऽवधार्यः

[7]मोहाद्वा यदि वा शाठ्याद्यन्नोक्तं पूर्ववादिना ।

---

तीते (नीतं); व्यप्र.१०३; प्रका.२६ स्मृचवत्; समु.२० स्मृचवत्; विव्य.६ शत्यब्दे (शाब्दिके).

(१) अप.२।१२ कालं (कालात्) स्वयमेव (त्वयमेषां) उत्त.; व्यक.२७; गौमि.१३।२८ लं (लः); स्मृच.४२ उत्त.; पमा.७० लं (लः) नारदः; चन्द्र.१०६ स्वतन्त्र (प्रगल्भ) त्तबाल (त्तास्वस्थ) रादर्वाक् (रं देयं) स्वयमेव (देयं चापि); व्यसौ.२२ दीक्षित (क्षुधित) लं (लः); प्रका.२६ उत्त.; समु.२० उत्त. (२) स्मृच.४२; पमा.७०; प्रका.२६ न्तर (न्तरे); समु.२०. (३) अप.२।१२ मास्वदे..त् (स्वदेशे दातुमासमात्); व्यक.२७ मास्वदे...त् (स्वदेशे वक्तुमागमात्); स्मृच.४२; पमा.७० देशे (देश); व्यसौ.२२ ऽथ (ऽपि) दा (दि); व्यप्र.१०३ (तत्कालो हि भवेत्पुंसां स्वदेशे वक्तुमागमात्); प्रका.२६ दा (दि); समु.२१.

(४) पमा.७१; व्यनि.; प्रका.२७ यं (यः); समु.२१ यं (यः) प्रजापतिः.

(५) अप.२।१२; व्यक.२७ मासौ (मासं); स्मृच.४२; व्यसौ.२२ दिनं (दिन) सौ वा (सौ तु) पि वा (थवा); व्यप्र.१०३ मासौ (मासं); प्रका.२६; समु.२१ रूपस्तु (रूपश्च) परेण (नृपेण).

× व्यप्र. व्यकवत्।

(१) व्यनि. (बालो वा ह्यमनस्को वा जाड्यो वा व्याधिपीडितः) चेद् (यो); व्यसौ.२३; प्रका.२७ प्रतीक्ष्योऽथ (वाऽमनस्को); समु २१ पूर्वार्धे प्रकावत्, निर्णयः (निश्चयः).

(२) व्यमा.२९९. (३) व्यमा.२९९ अवधि (अबाध).

(४) व्यमा.२९९; व्यत.२०३ (=) दैवराज (राजदैव) नस्य (नस्तु) ण्डो (ण्ड्यो); सेतु.१०२-१०३ प्यस्तु (प्यश्च) शेषं व्यतवत्.

(५) अप.२।१२; व्यक.२७; स्मृच.४२ यो वा (यावान्) परी (प्रती); सवि.९२ स्मृचवत्; व्यसौ.२२ परी (प्रती); व्यप्र.१०३ उत्तरं दापयेत् (दापयेदुत्तरं); प्रका.७९ स्मृचवत्; समु.२१ स्मृचवत्.

(६) अप.२।७; व्यप्र.५६ पू.; व्यउ.३७ पू.

(७) शुनी.४।६४० ऽपि...भ (तत्प्रश्नैर्ग्राह्यं द्); अप.३।७ वाऽपि (चाऽपि); व्यक.३१; स्मृच.४०; स्मृसा.८७; व्यचि,

**उत्तरान्तर्गतं वाऽपि तद्ग्राह्यमुभयोरपि ॥**

(१) यद्वा यदपि संमोहादिवशात्पूर्ववादिना नोक्तं उत्तरान्तर्गतं चाप्युत्तरे कथ्यमानेऽपि प्रोच्यमानं ग्राह्य-मुत्तरवादिनः क्रियापाद उत्तरम् । ×अप.२।७

(२) भाषालेखनसमये मोहात् साध्यत्वाय नोक्तं तद्विचारकालेऽपि यदि केनचित्प्रकारेण व्यक्तं भवति तदा तदपि भाषान्तर्गतकार्यमेवमुत्तरेऽपि वा बोद्धव्यम् । व्यक.३१

(३) उभयोरर्थिप्रत्यर्थिनोः । प्रत्यर्थिनस्तु क्रियापाद उत्तरम् । यदा पुनः पूर्वपक्षमशोधयित्वैव सभ्यैरुत्तरं गृहीतं तदा सभ्यदण्डनं कृत्वा पुनः प्रतिज्ञादिकं कार्यं द्रष्टव्यम् । स्मृच.४०

(४) शाठ्यं तत्कालिकवाक्स्तम्भादि, एवं च विचार-प्रवृत्तिपर्यन्तं भाषोत्तरयोः शोधने सिद्धे प्रतिज्ञां पूरयेत् । यावन्नोत्तरदर्शनमित्यत्रापि उत्तरपदं विचारारम्भपरमिति द्रष्टव्यम् । व्यचि.२६

(५) मोहादिवशात्पूर्ववादिना प्रागनुक्तमपि उत्तरा-न्तर्गतं उत्तराभिधानसमय एव प्रोच्यमानम् । उभयोः उत्तरवादिव्यवहारदर्शिनोः, ग्राह्यं ग्रहणार्हं भवतीत्यर्थः । उत्तरलेखनोत्तरं तु न ग्राह्यमित्यर्थसिद्धमपि स्पष्टार्थमाह । व्यप्र.५६

भाषोत्तरलेखोत्तरवाग्युक्तिविचारः

**पूर्वोत्तरे निविष्टे तु विचारे संप्रवेशिते ।**
**निर्णिक्तं तु तयोस्तत्र वचनं वादिनोर्भृगुः ॥**

पूर्वोत्तरे भाषायां उत्तरे च संवृत्ते विचारे प्रारब्धे वादिनोर्वचनं निर्णिक्तं शोधितं ग्राह्यम् । व्यचि.२६

**[2]उभयोर्लिखिते वाक्ये प्रारब्धे कार्यनिर्णये ।**
**अयुक्तं तत्र यो ब्रूयात्तस्मादर्थात् स हीयते ॥**

(१) उत्तरसमाप्तौ तु कात्यायन आह—उभयोरिति । अप.२।७

(२) तदर्थात् अनुक्तार्थात् । व्यक.३१

उत्तरलेखविधिः

**[1]श्रुतं च लिखितं चैव चिन्तितं तद्विशोधितम् ।**
**प्रथमेऽहनि तस्यैव विवादविधिरुच्यते ॥**
**[2]पूर्वपक्षश्रुतार्थस्तु प्रत्यर्थी तदनन्तरम् ।**
**पूर्वपक्षार्थसंबन्धं प्रतिपक्षं निवेदयेत् ॥**

चतुर्विधमुत्तरम्

**[3]मिथ्या संप्रतिपत्या वा प्रत्यवस्कन्दनेन वा ।**
**प्राङ्न्यायविधिसिद्ध्या वा उत्तरं स्याच्चतुर्विधम् ॥**
**[4]सत्यं मिथ्योत्तरं चैव प्रत्यवस्कन्दनं तथा ।**
**पूर्वन्यायविधिश्चैवमुत्तरं स्याच्चतुर्विधम् ॥**

(१) तत्र सत्योत्तरं यथा—रूपकशतं मह्यं धारयतीत्युक्तं सत्यं धारयामीति । मिथ्योत्तरं तु नाहं धारयामीति । प्रत्यवस्कन्दनं नाम सत्यं गृहीतं प्रतिदत्तं प्रतिग्रहेण लब्धमिति वा । प्राङ्न्यायोत्तरं तु यत्राभियुक्त एवं ब्रूयादस्मिन्नर्थे अनेनाहमभियुक्तस्तत्र चायं व्यवहारमार्गेण पराजित इति । मिता.२।७

× व्यप्र. अपवत् ।

२६ न्तर्गतं (नुक्तं); **व्यनि.** बृहस्पतिः; **स्मृचि.**३८; **सवि.**९० वा शाठ्यात् (शाठ्याद्वा); **व्यसौ.**२८; **वीमि.**२।६ अपवत्, बृहस्पतिः; **व्यप्र.**५६; **व्यउ.**३७-३८ अपवत्; **प्रका.**२५; **समु.**१९.

(१) **व्यक.**३१ र्णिक्तम् (र्णीतम्); **व्यचि.**२६; **व्यसौ.**२८; **वीमि.**२।६ बृहस्पतिः.

(२) **अप.**२।७ क्ये (च्ये) यु (नु); **व्यक.**३१ र्णये (श्चये) यु (नु) तस्मादर्थात्स (तदर्थात्स तु); **स्मृच.**४८ र्णये (श्चये) यु (नु); **पमा.**८४; **व्यचि.**२६ वाक्ये (कार्ये) कार्य (तत्व) तस्मादर्थात्स (स तदर्थात्तु); **व्यनि.** उभयोः (स्वभावात्) शेषं व्यकवत्; **स्मृचि.**४१ यु (नु) र्थात्स (र्थाच्च); **सवि.**९९; **व्यसौ.**२८ पूर्वार्धं व्यचिवत्, (अनुक्तं तत्र ये ब्रूयुर्दण्ड्याः स्युस्ते महीपतेः); **वीमि.**२।६ वाक्ये (कार्ये) कार्य (तत्त्व) तस्मादर्थात्स (स तदर्थात्त्र) बृहस्पतिः; **व्यप्र.**५६ क्ये (च्ये); **व्यउ.**३८ अपवत्; **विता.**७७ यु (नु) नारदः; **प्रका.**३० स्मृचवत्; **समु.**२३-२४ स्मृचवत्.

(१) **व्यक.**३१; **व्यचि.**२६ तद्विशोधितम् (तु विशोधनम्); **व्यसौ.**२८ लिखि (लेखि) चैव (वापि); **वीमि.**२।६ चिन्तितं तद्विशोधितम् (शोधितं च विचारितम्) पू. बृहस्पतिः.

(२) **व्यमा.**२९९ नारदकात्यायनौ; **व्यक.**२८ नारदकात्यायनौ; **चन्द्र.**११४ र्थस्तु (र्थस्य); **व्यसौ.**२४ पक्ष (पक्षे).

(३) **व्यनि.** विधि (नय); **व्यसौ.**२८ सं (वा); **व्यम.**७ विधिसि (प्रतिषि).

(४) **शुनी.**४।६४१; **मिता.**२।७; **व्यमा.**२९९ विधिश्चैवं (विदश्चैव) स्यात् (तत्); **सुबो.**२।९ श्चैवं (श्चैकं); **व्यचि.**१८ चैवं (चैव); **नृप्र.**६; **वीमि.**२।७; **व्यप्र.**५६; **व्यउ.**३८; **विता.**६५; **प्रका.**२७; **समु.**२१; **विव्य.**७.

(२) अत्राद्यं संप्रतिपत्तिरूपसिद्धसाधनापादकत्वेन सदुत्तरम्। न चैवं भाषितुर्निग्रहः, अस्मिन् तत्त्वनिर्णयार्थकविचारे तस्य निग्रहाप्रयोजकत्वात्। वीमि.२।७

(३) सत्यं संप्रतिपत्तिः। प्रत्यवस्कन्दनं कारणोत्तरम्। + व्यप्र.५६

(४) प्रतिपत्तिः संप्रतिपत्तिः, सत्योत्तरमित्यनर्थान्तरम्। बाल.२।७

**[१]साध्यस्य सत्यवचनं प्रतिपत्तिरुदाहृता ॥**

पूर्ववादिप्रतिज्ञा सत्येत्युत्तरं संप्रतिपत्तिः। संप्रतिपत्तावुत्तरान्त एव व्यवहारः। अत एव तत्र व्यवहारस्य द्विपात्त्वमाह बृहस्पतिः–'मिथ्योत्तरे चतुष्पात्स्यात् प्रत्यवस्कन्दने तथा। व्यवहारस्तु विज्ञेयो द्विपात्संप्रतिपत्तिषु' इति ॥ अप.२।७

प्रतिप्रत्युत्तरम्

**[२]अनुक्त्वा कारणं यत्र पक्षं वादी प्रपद्यते।**
**प्रतिपत्तिस्तु सा ज्ञेया कारणे दूषणं पृथक्* ॥**

कारणं परहेतुदूषणकारणम्। वादी प्रत्यर्थी। कारणे कारणोत्तरे। पृथक् दूषणं भवेदित्यर्थः। संप्रतिपत्तिश्च सिद्धसाधनमापादयन्ती सदुत्तरम्। न चैवं भाषितुर्निग्रहः, विचारस्यास्य निर्णयार्थकत्वात्, तत्र च सिद्धसाधनस्य अदोषत्वादिति। अत्र च न क्रियापादो नापि जयपराजयावधारणलक्षणप्रत्याकलितपाद इति द्विपादेव व्यवहारस्तत्र सूक्तं द्विपात्संप्रतिपत्तिष्विति। × व्यचि.१८

मिथ्योत्तरम्

**[१]अभियुक्तोऽभियोगस्य यदि कुर्यादपह्नवम्।**
**मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः ॥**

अभियोगोऽभियोगहेतुगृहीतत्वादिः। तेन हेत्वपलाप एव मिथ्योत्तरमिति सारम्। व्यचि.१९

**[२]श्रुत्वा भाषार्थमन्यस्तु यदि तं प्रतिषेधति।**
**अर्थतः शब्दतो वाऽपि मिथ्या तज्ज्ञेयमुत्तरम् ॥**

(१) भाषार्थो हि सहेतुकसाध्यं सहेतुकसाध्यस्य प्रतिषेधकं मिथ्योत्तरं, साध्यमात्रापह्नवस्योत्तरत्रयेऽप्यविशेषात्। तत्र 'नैतन्मया गृहीतमि'ति शब्देनैव क्वचित्, क्वचित्तदभावेऽपि 'न जानाम्येतत्' 'न तत्र देशे तदाहमासम्' 'न जातोऽस्मी'त्याद्यग्रहणनिमित्तकीर्तनेनार्थादग्रहीतत्वेन, सहेतुकस्यैव साध्यस्य साधनस्यापह्नवः। तत्र 'मिथ्यैतन्नाभिजानामि' इत्याद्यग्रहणाज्ञानयोरभाववरूपत्वेनापह्नवमात्ररूपत्वान्मिथ्योत्तरम्। असंनिहितत्वाजातत्वयोस्तु तदितरकालीनदेशान्तरावस्थानपरत्वं तत्परभाविजन्मपरत्वं च, तदा च तदवस्कन्दनकारणोपन्यासात् कारणोत्तरता न तु मिथ्योत्तरता। अत एव 'कारणं स्यादवस्कन्द' इत्याह। असंनिधानाजातत्वमात्रपरत्वे तु भाषारूपमिथ्योत्तरत्वमेव न तु कारणोत्तरता, तदवस्कन्दनकारणानुपन्यासात्। व्यमा.३०१

(२) भाषार्थं सहेतुसाध्यम्। अत्र च साध्यापह्नवोक्तिरुत्तरान्तरव्यवच्छेदद्वारा मिथ्योत्तरलक्षणोपयुक्ता हेत्वपह्नव एव स्वरूपासिद्धिर्नाम स्थापनादोष इति विवेक्तव्यम्। तत्र गृहीतत्वात् त्वं धारयसीति भाषायां

---

+ व्यउ. 'साध्यस्य सत्यवचनमि'ति व्यासश्लोकीयव्यप्रव्याख्याने गतार्थः।

*स्मृसाव्याख्यानं, 'साध्यस्य सत्यवचनमि' त्यत्रोद्धृतापरार्कानुसारि ज्ञेयम्।

× व्यप्र., व्यउ. पदार्थो व्यचिवत्।

(१) **मिता.**२।७; **अप.**२।७; **स्मृच.**४३; **नृप्र.**६; **सवि.**९२; **व्यम.**८ स्मृत्यन्तरम्; **विता.**६५; **राकौ.**३९०; **प्रका.**२७. वस्तुतः व्यासस्येदम्।

(२) **स्मृसा.**९३ यत्र (किंचित्) दूषणं (तूत्तरे); **व्यचि.**१८ बृहस्पतिः; **व्यनि.** पक्षं (पक्ष) दूषणं (ऽथोत्तरे); **चन्द्र.**११५ वादी प्र (हि प्रति) ज्ञेया (प्रोक्ता) णे (णं) दूषणं (तूत्तरं); **व्यप्र.**५६ सारणम्; **व्यउ.**३८ स्मृतिः; **समु.**२१ दूषणं (तूत्तरं).

(१) **मिता.**२।७; **स्मृच.**४३ दप (तु नि); **स्मृसा.**९२; **व्यचि.**१८-१९; **व्यनि.**; **स्मृचि.**३९; **नृप्र.**६; **सवि.**९२; **चन्द्र.**११५; **व्यसौ.**२९; **व्यप्र.**५७; **व्यउ.**३८; **व्यम.**७ योग (युक्त); **विता.**६५; **राकौ.**३९० स्मृचवत्; **प्रका.**२७ स्मृचवत्.

(२) **शुनी.**४।६४३; **व्यमा.**३०१; **अप.**२।७ दि(दा); **स्मृसा.**९२ दि (दा) धति (धयेत्) तो वाऽपि (तश्चापि); **व्यचि.**१९; **व्यनि.** स्तु यदि तं (स्तं यदा सं); **स्मृचि.**३९; **व्यत.**२०७; **चन्द्र.**११५ दि तं (दा तत्); **व्यसौ.**२९ दि (दा); **व्यप्र.**५७; **व्यउ.**३८; **सेतु.**१०६ तज्ज्ञे (तु ज्ञे); **प्रका.**२८; **समु.**२१; **विव्य.**७ (श्रुत्वा भावार्थमन्यस्य यदन्यः प्रतिषेधति).

मया न गृहीतमिति शब्दतः। कालविशेषगर्भायां तस्यां तदा नाहं जात इत्यर्थात् । देशकालविशेषगर्भायां तस्यां तदा तत्र नाहमासमित्यर्थतः । देशादिमत्यां तच्छून्यायां वा तस्यां न जानामीत्यर्थत एव । योग्यास्मरणेनार्थतस्तद्ग्रहणप्रतिपादनात् । अत्र च चरमत्रयं ग्रहणास्कन्दमुखेन ग्रहणाभावप्रतिपादकं सापदेशमिथ्योत्तरमित्युच्यते । आद्यं मिथ्योत्तरमात्रम् । न जानामीति तु सापदेशमिथ्योत्तरं अभिमानमात्रात्। शेषं तु द्वयोर्व्यासतया सम्यक् । न चैवं समीचोर्ग्रहणास्कन्दकयोरसंनिधानाऽजन्मनोरेव प्रतिपाद्यता स्यादिति वाच्यं, तस्याभावरूपतया ग्रहणापेक्षया प्रतिपादनगौरवात् । ताभ्यां चाग्रहणस्य व्यापकानुपलब्ध्या प्रत्यायनेऽपि गौरवात् । तत्प्रत्यायनशक्तावपि संशयतादवस्थ्याच्च । न हि तदा जातस्तत्र च सन्न गृह्णात्येवेति नियमः । धर्मव्यवहारे च छलमवश्यं निरस्यम्। तस्माच्चतुर्ष्वपि मिथ्योत्तरेषु स्थापकेनैव दृष्टेन ग्रहणं प्रमापणीयमिति । यत्तु पित्रादिगृहीतत्वभाषायां तद्ग्रहणाधिकरणत्वेनाभिमतकालापेक्षया चरमजातस्य तत्पुत्रस्य न जानामीत्यादिकं उत्तरं तदुत्तरप्रतिरूपकम्, अर्थतोऽपि स्थापितहेत्वपह्नवासंभवात् । न चैवमुत्तराभावादेव तत्र स्थापकस्य जय इति वाच्यम् । धर्मव्यवहारे छलस्य अवश्यनिरस्यत्वेन तत्र स्थापकेन ग्रहणस्य अवश्यप्रमापणीयत्वात् । अत एव प्रकाशक्रये नाष्टिकेनादत्तत्वादिकमपि प्रमापणीयमिति स्मरन्ति । अन्यथा दत्तत्वादेर्दूषकेनानुक्तत्वाददत्तत्वादिप्रतिपादनं तत्राधिकं स्यात् । तेन च दत्तत्वाभिधाने तेनैव तत्प्रतिपाद्यमित्यपि स्यात् । *व्यचि.१९-२०

(३) अत्र वाचस्पतिः—भाषार्थस्य सहेतुसाध्यस्य मिथ्योत्तरेण निह्नवेऽपि हेत्वपह्नवांश एव स्वरूपासिद्धिरूपस्थापनादोषः । साध्यापह्नवांशस्तु कारणोत्तरादिव्यवच्छेदकतया अत्रान्तर्भाव्यते । तथा हि । गृहीतत्वाद्धारणे भाषावादिना साध्य उपन्यस्ते कालदेशविशेषागर्भायां तस्यां 'मया न गृहीतम्' इति हेत्वभावः शब्देनैवोच्यते । कालविशेषगर्भायां तु 'तदा नाहं जात' इत्यर्थात् । देशविशेषगर्भायामपि 'तदा तत्राहं नासम्' इत्यर्थादेव । सर्वस्यामपि तस्यां 'न जानामि' इत्यनेनार्थादेव हेत्वभावप्रतिपादनम् । अत एव आर्थिकभाषाप्रतिषेधस्त्रिविधः सापदेशमिथ्योत्तरम्। आद्यस्तु केवलं मिथ्योत्तरमिति । न चैवं ग्रहणास्कन्दकयोरसंनिधानाजन्मनोरेव प्रतिपाद्यताऽस्तु, किमार्थिकाग्रहणपर्यन्ततात्पर्येणेति वाच्यम्। यद्यपि तदा जातस्तत्र संश्च तथापि न गृह्णाति तादृशां सर्वेषां ग्रहणाभावादतः संनिधानजन्ममात्रस्य ग्रहणाव्याप्यत्वाव्यापकत्वाभावात् व्याप्यग्रहणाभावासिद्धेः (?) तत्कालीनजन्माभावसंनिधानाभावयोरेव ग्रहणाभावसाधकता । न ह्यनुत्पन्नो गृह्णात्यसंनिहितो वेति संभवतीति तात्पर्यम् । तत्तात्पर्यावश्यसंभवात् । अत एव सर्वस्मिन्नपि मिथ्योत्तरे स्थापकस्य ग्रहणस्थापनाय क्रियोपन्यास इत्याह ।

तत्तुच्छम् । साध्यानालिङ्गितहेत्वभावमात्रोपन्यासेऽर्थान्तरत्वापातात् । हेतुत्वस्य साध्यनिरूपितत्वेन तदभावमुखेन साध्याभावव्यवस्थान एव स्थापनाद्दूषणासंभवात्। उत्तरान्तरव्यवच्छेदमात्रस्याऽदृष्टार्थतापत्तेश्च । यत्र तु पूर्ववादिनः पित्रर्णादिग्रहणहेतुकधारणादिप्रतिज्ञा तत्राज्ञानद्वारकः साक्षाद्वा तदपह्नवो मिथ्योत्तरम् । तत्कालाऽजन्मतद्देशाऽसंनिधानयोरेतदीययोस्तदीयग्रहणाभावासाधकत्वात् । अत एव प्रकाशाऽस्वामिक्रये नाष्टिकेनादत्तत्वादिकमपि प्रमापणीयमित्यभियुक्तस्मरणमपि संगच्छते । अन्यथा दूषणे दत्तत्वाद्यनुपन्यासाददत्तत्वादिप्रमापणमधिकं स्यात् । तेन तत्प्रतिपादने दत्तत्वादेर्नाष्टिकोक्ततत्स्वत्वास्कन्दकत्वादस्य प्रत्यवस्कन्दनरूपत्वात्तस्यैव तत्साधनापत्तौ 'मिथ्या क्रिया पूर्ववाद' इति विरुध्येत । इष्टापत्तावुच्यमानायां मिथ्योत्तरभेदत्वोक्तिविरोधात् । व्यप्र.५७-५८

(४) अत्र मिथ्यैवेत्युत्तरस्य गृहीत्वा न ददातीति हेतुविशिष्टसाध्यविषयस्यापि हेतुरूपग्रहणांशे स्वरूपासिद्धिरूपतया दोषत्वं अज्ञानाऽजन्मात्मसांनिध्याभाववाक्यानां संनिधिग्रहणरूपहेत्वभावसाधनद्वारा साध्याभावसाधनत्वमिति वाचस्पतिः । अत्र प्रथमं वित्तग्रहणविशिष्टसमर्पणीयत्वरूपसाध्यस्वरूपासिद्धिस्वरूपम् । द्वितीयं पित्रादिकृतर्णविशिष्टसाध्यतावच्छेदकस्वरूपासिद्धरूपम् । तृतीयचतुर्थे च साध्यतावच्छेदकस्वरूपासिद्धिरूपमिति

* व्यत. वाक्यार्थौ व्यचिवत्। सेतु. व्यचिवत्।

चतुर्विधस्यापि स्वरूपासिद्धिरूपतया दोषत्वमिति प्रदीपः। व्यउ.३८-३९

मिथ्योत्तरचातुर्विध्यम्

**[1]मिथ्यैतन्नाभिजानामि तदा तत्र न संनिधिः ।**
**अजातश्चास्मि तत्काल इति मिथ्या चतुर्विधम् ॥**

(१) नाभिजानामि न स्मरामीत्यर्थः । अप.२।७

(२) एवं संप्रतिपत्तेरपि गृहीतं सत्यं यथाऽयं वक्ति तथैवेत्येवमादयो भेदा यथासंभवमूहनीयाः । प्रत्यवस्कन्दनस्यापि गृहीतं प्रतिदत्तं प्रतिग्रहेण वा लब्धं इत्येवमादयो भेदा द्रष्टव्याः । स्मृच.४३

कारणोत्तरम्

**[2]योऽर्थिनार्थः समुद्दिष्टः प्रत्यर्थी यदि तं तथा ।**
**प्रपद्य कारणं ब्रूयादाधर्यं मनुरब्रवीत् ॥**

(१) पूर्वोक्तस्याधर्यमित्यर्थः। व्यमा.३०७

(२) आधर्यं प्रमाणान्वेषणानर्हत्वं पूर्वपक्षस्येत्यर्थः । व्यक.२९

(३) कारणं भाषितस्य बाधकारणम् । व्यचि.२९

(४) आधर्यमधरत्वं दुर्बलत्वमिति यावत् । पूर्वपक्षस्येति शेषः। पूर्वपक्षदौर्बल्ये उत्तरस्य प्राबल्यमर्थात उक्तम् । व्यप्र.५९

**[3]बाधिका तु क्रिया यत्र अभियुक्तेन कीर्तिता ।**
**आधर्यं तद्विजानीयात् पूर्वपक्षस्य नान्यथा ॥**

प्राङ्न्यायोत्तरम्

**[1]आचारेणावसन्नोऽपि पुनर्लेखयते यदि ।**
**सोऽभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते + ॥**

(१) अत्रोत्तरवादिन एव क्रियानिर्देशः । तेनैव पूर्वविजयस्य विभावनीयत्वात् । स्मृसा.९५

(२) आचारेणेति व्यवहारेण पराजितोऽपि। बाल.२।७

प्राङ्न्यायत्रैविध्यम्

**[2]विभावयामि कुलिकैः साक्षिभिर्लिखितेन वा ।**
**जितश्चैव मयाऽयं प्राक् प्राङ्न्यायस्त्रिप्रकारकः ॥**

(१) कुलिकैरिति प्रकृतव्यवहारद्रष्टॄणामुपलक्षणार्थम्। *स्मृच.४३

(२) कुलिकैः प्राक्तनव्यवहारदर्शिभिः । कुलिककृतः साक्षिकृतो लिखितकृतश्चेति प्राङ्न्यायस्त्रिविध इत्यर्थः । अस्य च प्राक्सिद्धमिथ्याकारणोत्तरज्ञापकतया दूषकतेति दिक् । व्यउ.४०

उत्तरदोषाः

**[3]संदिग्धमन्यत्प्रकृतादत्यल्पमतिभूरि च ।**

---

(१) **शुनी**.४।६४४; **मिता**.२।७; **अप**.२।७ तत्र न (मेऽभूद्) धम् (धः); **स्मृच**.४३ काल (कालं); **नृप्र**.६; **सवि**.९२ धम् (धा); **चन्द्र**.११५ तदा (मम) इति मिथ्या चतुर्विधम् (मिथ्यैवं स्याच्चतुर्विधा); **व्यम**.८ तत्र न ( मेऽभूद्); **विता**.६५ स्मृचवत्; **राकौ**.३९०; **प्रका**.२८; **समु**.२२.

(२) **व्यमा**.३०१ समुद्दिष्टः (प्रभाष्येत) ध (धा) : ३०७ धर्यं मनु (धार्यं गुरु) बृहस्पतिः; **व्यक**.२९ तं (तत्) धर्यं मनु (धार्यं भृगु); **व्यचि**.२१ व्यकवत्; **नृप्र**.६ यो...ष्टः (अर्थिना लेखितो योऽर्थः) आध...वीत् (प्रत्यवस्कन्दनं स्मृतम्); **व्यसौ**.२४; **व्यप्र**.५९ योऽर्थि...ष्टः (अर्थिनाभिहितो योऽर्थः) मनु (भृगु); **व्यउ**.३९ यो...ष्टः (अर्थिना लिखितो योऽर्थः) मनु (भृगु); **विता**.६५ नृप्रवत्.

(३) **व्यमा**.३०७ ध (धा) बृहत्कात्यायनः; **व्यनि**. बाधिका (व्यपेता) अभि (ह्यभि) आधर्यं (आयर्य्यं) वृद्धकात्यायनः; **प्रका**.२७ बाधिका (व्यपेता) अभि (ह्यभि) आधर्यं (आधरीयं) क्षस्य (क्षश्च) वृद्धशातातपः; **समु**.२१ बाधिका (व्यपेता) अभि (ह्यभि); **विव्य**.८.

+ अस्य श्लोकस्य व्याख्यानानि बृहस्पतावपि ( पृ. १६९–१७०) द्रष्टव्यानि । * व्यप्र. स्मृचवत् ।

(१) **मिता**.२।७; **स्मृसा**.९५ तु स उच्यते (स उदाहृतः); **व्यनि**. वृद्धवसिष्ठः; **स्मृचि**.४०; **नृप्र**.६ तु (च); **व्यप्र**.६१ तु (च) कात्यायनबृहस्पती; **व्यउ**.४० तु (च); **व्यम**.८; **विता**.६७ तु (च); **राकौ**.३९१; **प्रका**.२७ णाव (णापि) वृद्धवसिष्ठः.

(२) **स्मृच**.४३; **व्यप्र**.६१; **व्यउ**.४० खितेन (खनेन); **प्रका**.२७; **समु**.२१-२२.

(३) **शुनी**.४।६३७-६३८ शव्या...च्च (शे व्याप्यं यत्तु); **मिता**.२।७ प्येव तच्च (प्यन्यत्तथा) स्मृत्यन्तरम्; **व्यमा**.३०३ त्यल्पमति (ल्पमिति च) च (तु); **अप**.२।७ रि च (रि वा) श (शे) प्येव तच्च (प्यन्यत्तथा); **स्मृसा**.८९ सन्दि...ताद (प्रकृतेन त्वसंबन्धम); **व्यचि**.२५ स्मृसावत्; **व्यनि**. प्येव (प्यन्यत्) बृहस्पतिः; **स्मृचि**.४० मितावत् नारदः; **व्यत**.२०७ सन्दि...ताद (प्रकृतेन त्वसंबन्धम) देशव्याप्येव (देशं व्याप्यैवं); **चन्द्र**.११४ श (शं) प्येव (प्यैव) शेषं स्मृसावत्; **व्यसौ**.२७ दत्यल्प (दल्पार्थं) प्येव तच्च (पी च तत्तु); **व्यप्र**.६२ मितावत्; **व्यउ**.४० मितावत्; **व्यम**.८ मितावत्, स्मृत्यन्तरम्; **विता**.६२ मितावत्, स्मृत्यन्तरम्; **सेतु**.१०५ (प्रकृतेन त्वसंबद्धं नात्यल्पमतिभूरि च) प्येव (प्यं च); **समु**.२२.

**पक्षैकदेशव्याप्येव तच्च नैवोत्तरं भवेत् ॥**
**यद्व्यस्तपदमव्यापि निगूढार्थं तथाऽऽकुलम् ।**
**व्याख्यागम्यमसारं च नोत्तरं स्वार्थसिद्धये ॥**

(१) तत्र संदिग्धम्—सुवर्णशतमनेन गृहीतमित्युक्ते सत्यं गृहीतं सुवर्णशतं माषशतं वेति । प्रकृतादन्यत् सुवर्णशताभियोगे पणशतं धारयामीति । अत्यल्पम्—सुवर्णशताभियोगे पञ्च धारयामीति । अतिभूरि–सुवर्णशताभियोगे द्विशतं धारयामीति । पक्षैकदेशव्यापि—हिरण्यवस्त्राद्यभियोगे हिरण्यं गृहीतं नान्यदिति । व्यस्तपदम्–ऋणादानाभियोगे पदान्तरेणोत्तरम् । यथा, सुवर्णशताभियोगे अनेनाहं ताडित इति। अव्यापि—देशस्थानादिविशेषणाव्यापि । यथा, मध्यदेशे वाराणस्यां पूर्वस्यां दिशि क्षेत्रमनेनापहृतमिति पूर्वपक्षे लिखिते क्षेत्रमपहृतमिति। निगूढार्थं–यथा, सुवर्णशताभियोगे किमहमेवास्मै धारयामीत्यत्र ध्वनिना प्राड्विवाकः सभ्यो वा अर्थी वा अन्यस्मै धारयतीति सूचयतीति निगूढार्थम् । आकुलं–पूर्वापरविरुद्धम्, यथा, सुवर्णशताभियोगे कृते सत्यं गृहीतं न धारयामीति । व्याख्यागम्यं–दुःश्लिष्टविभक्तिसमासाध्याहाराभिधानेन व्याख्यागम्यं अदेशभाषाभिधानेन वा । यथा, सुवर्णशतविषये पितृऋणाभियोगे गृहीतशतवचनात् सुवर्णानां पितुर्न जानामीति । अत्र गृहीतशतस्य पितुर्वचनात् सुवर्णानां शतं गृहीतमिति न जानामीति । असारं–न्यायविरुद्धम्, सुवर्णशतमनेन वृद्धया गृहीतं वृद्धिरेव दत्ता न मूलमित्यभियोगे सत्यं वृद्धिर्दत्ता न मूलं गृहीतमिति। ÷ मिता.२।७

÷ व्यनि., व्यउ., विता. मितावत् ।

(१) **मिता**.२।७ स्मृत्यन्तरम्; **व्यमा**.३०३; **अप**.२।७ तथा (अना) गम्य (गम); **व्यक**.३० यद्व्यस्तपदमव्यापि (यस्यास्ति पदमन्यायि); **स्मृच**.४४ यद्व्यस्तपदमव्यापि (अव्यापकं व्यस्तपदं) स्वार्थसिद्धये (शस्यते बुधैः); **पमा**.७३; **स्मृसा**. ८९ यद्व्यस्तपदमव्यापि (असंबद्धपदव्यापि) स्वार्थसिद्धये (शस्यते बुधैः); **व्यचि**.२५ स्मृसावत्; **व्यनि**. स्वार्थसिद्धये (शस्यते बुधैः) हारीतः; **स्मृचि**.४० नारदः; **नृप्र**.६; **व्यत**.२०७ यद्व्यस्तपदमव्यापि (अस्तव्यस्तपदव्यापि) शेषं स्मृचवत्; **व्यसौ**. १७; **व्यप्र**.६२-६३; **व्यम**.८ स्मृत्यन्तरम्; **विता**.६२ स्मृत्यन्तरम्; **सेतु**.१०५ यद्व्यस्तपदमव्यापि (अस्तव्यस्तपदव्यापि) था (दा) स्वार्थसिद्धये (मन्यते बुधैः); **प्रका**.२७ स्मृचवत्; **समु**.२२ स्मृचवत्, हारीतः.

(२) प्रकृतादन्यद्यथा–सुवर्णशतं धारयसे त्वं मदीयमित्युक्तो नाहं त्वां ताडयामीति वदति। अथ वा चकारादिना निपातेनानेकविवक्षितार्थप्रतिपादनम्। अतिभूरि–स्वल्पेऽर्थे वक्तव्ये महावाक्यमसंग्राह्यार्थम् । व्यस्तपदं–व्यवहितान्वयम् । अव्यापि– देशविशेषेण कालविशेषेण वा विशिष्टं पूर्वपक्षं निराकरोति न स्वरूपेण । यथा, चैत्रमास्युज्जयिन्यां सुवर्णशतं मदीयमनेन गृहीतमित्यभियुक्तो ब्रूते, न मयोज्जयिन्यां चैत्रे गृहीतमिति । नैवमाचष्टे न मया गृहीतमिति । निगूढार्थम्–अप्रसिद्धार्थपदम्। यथा, अर्जुनीशब्देन गोरभिधानम्। काश्यपीशब्देन वा भूमेः। असारं–अदृढम् । यत्रोक्त एव नैतत्संभवतीति सर्वेषां बुद्धिर्जायते । ÷अप.२।७

(३) प्रकृतेन त्वसंबद्धमिति –प्रकृतभाषास्वरूपेणासंबद्धमिति। अत्यल्पमिति–हेतुशून्यप्रतिज्ञामात्रम्। अतिभूरि चेति–यत्र हेत्वादिद्वितयं त्रितयं वा। यथा, शताभियोगे वृत्ते यदि ब्रूते मयाऽस्य शतं गृहीतमेव किन्तु प्रसादेन ह्यनेन दत्तं किञ्चाहमस्य दायादः, तथा, ममाप्यनेन गृहीतं तेनैव मया परिशोधितमित्येवमादि भूरिकारणाभिधानेन विवेचकानां अनिरूपणात् उत्तराभासत्वम् । पक्षैकदेशव्याप्येवेति–व्याख्यातमेव*। अस्तव्यस्तपदव्यापीति–अनन्वितार्थपदव्याप्तम्। असारमिति जात्युत्तरम्। सर्वस्यास्य विवक्षिताऽप्रतिपादकत्वादनुत्तरत्वमिति वेदितव्यम् । ×स्मृसा.८९-९०

(४) अत्र क्वचित्पूर्वपक्षानिराकरणात्, क्वचिदसंबद्धार्थत्वात्, क्वापि विलम्बितार्थप्रत्यायकत्वाद्यथायथमनुत्तरत्वमवसेयम् । यद्यप्युदाहृतमसारं पूर्वापरविरोध एव पर्यवस्यति, तथापि क्वचित् साक्षात् क्वचिन्न्यायविरोधात् तथात्वमिति भेदकं द्रष्टव्यम् । स्मृतिचन्द्रिकाकारस्तु काकदन्तसद्भावोत्तरमिष्यत इति । कात्यायनवचनं च तत्र संवादितवान् । 'काकस्य दन्ता नो सन्ति सन्तीत्यादि यदुत्तरम् । असारमिति तत्तेन समं नोत्तरमिष्यते' इति ॥ +व्यप्र.६२-६३

÷ शेषं मितावत्।

* 'पक्षस्य व्यापकमि' ति नारदश्लोकव्याख्याने (पृ. १६२) द्रष्टव्यम्। ×शेषपदार्थः अपगतः। व्यचि. स्मृसावत्।

+ सर्वेषां पदानां व्याख्या मितावत्।

[1]अप्रसिद्धं विरुद्धं यदत्यल्पमतिभूरि च ।
संदिग्धासंभवाव्यक्तमन्यार्थं चातिदोषवत् ॥
[2]अव्यापकं व्यस्तपदं निगूढार्थं तथाऽऽकुलम् ।
व्याख्यागम्यमसारं च नोत्तरं शस्यते बुधैः ॥
[3]चिह्नाकारसहस्रं तु समयं चाविजानता ।
भाषान्तरेण वा प्रोक्तमप्रसिद्धं तदुत्तरम् ॥
[4]प्रतिदत्तं मया बाल्ये प्रतिदत्तं मया न हि ।
यदेवमाह विज्ञेयं विरुद्धं तदिहोत्तरम् ॥
[5]जितः पुरा मया चायमस्मिन्नर्थे विवक्षिते ।
पुरा मयाऽयमिति यत्तदूनं चोत्तरं स्मृतम् ॥
[6]गृहीतमिति वाच्ये तु कार्यं तेन कृतं मया ।
पुरा गृहीतं यद्द्रव्यमिति यच्चातिभूरि तत् ॥
[7]देयं मयेति वक्तव्ये मयाऽदेयमितीदृशम् ।
संदिग्धमुत्तरं ज्ञेयं व्यवहारे बुधैस्तथा ॥
[8]बलाबलेन चैतेन साहसं स्थापितं पुरा ।
अनुक्तमेतन्मन्यन्ते तदन्यार्थमितीरितम् ॥
[9]अस्मै दत्तं मया सार्धं सहस्रमिति भाषिते ।
प्रतिदत्तं तदर्धं यत्तदिहाऽव्यापकं स्मृतम् ॥
[10]पूर्ववादी क्रियां यावत्सम्यङ्नैव निवेशयेत् ।
मया गृहीतं पूर्वं नो तद्व्यस्तपदमुच्यते ॥
[1]तत्किं तामरसं कश्चिदगृहीतं प्रदास्यति ।
निगूढार्थं तु तज्ज्ञेयमुत्तरं व्यवहारतः ॥
[2]किं तेनैव सदा देयं मया देयं भवेदिति ।
एतदाकुलमित्युक्तमुत्तरं तद्विदो विदुः ॥
[3]काकस्य दन्ता नो सन्ति सन्तीत्यादि यदुत्तरम् ।
असारमिति तत्तेन सम्यङ् नोत्तरमिष्यते ॥

(१) अत्र आद्यान् प्रश्नोत्तराभासान् स एव व्याचष्टे चिह्नाकारेति । लाञ्छनावयवसंस्थानसंख्यासमयानभिज्ञोक्तम्, अदेशभाषयोक्तं चाप्रसिद्धमित्यर्थः । पूर्वापरविरुद्धाभिधानं विरुद्धोत्तरमित्यर्थः । अस्मिन्नर्थे पुराऽयं मया जित इति वक्तव्ये पुरामयेत्येतावन्मात्रं ऊनमुत्तरमित्यर्थः । गृहीतमित्येतावन्मात्रेण सत्योत्तरे वक्तव्ये कार्यं तेनेत्यादिकमुत्तरमतिभूरीत्यर्थः । मया देयमित्यत्र त्वकारप्रश्लेषसंभवाददेयमित्यप्यवगमात् संदिग्धमेवंविधमित्यर्थः । असंभवमस्माभिर्देयं धनं अस्मत्प्रपौत्रपुत्रेण दत्तमित्येवंविधमुत्तरम् । अव्यक्तमेतदुत्तरमिति सुखेनाभिधातुमशक्यम् । एतौ चोत्तराभासौ स्पष्टाविति न तेन व्याख्यातौ । अन्यार्थं व्याचष्टे—बलाबलेनेति । अर्थिनो यदसद्वृत्तकथन एव पर्यवसितं मिथो विरुद्धपदवच्च तदन्यार्थमित्यर्थः । अतिदोषवत् — अत्युक्त्या दोषवत्, शतं देयमित्युक्ते द्विशतं दत्तमित्यादि । अव्यापकादिचतुष्टयं तेनैव व्याख्यातम् । पूर्वपक्षनिश्चयादर्वाक् दीयमानं मिथ्याद्युत्तरं व्यस्तपदमित्यर्थः । अगृहीतं पद्ममतो न प्रददामीति उदाहृतोत्तराभासस्यार्थः । सार्वभौमप्रयोगासिद्धतामरसादिपदवद् वक्रोक्त्यादिमच्चोत्तरं निगूढार्थं विज्ञेयमिति श्लोकार्थः । अनन्वितानेकपदार्थपदमाकुलमित्यर्थः । व्याख्यागम्यं स्वतो दुरवबोधम् । असारं तेनोक्तम्—काकस्येत्यादिना । काकदन्तसमुद्भवोत्तरवन्निष्प्रयोजनमसारमित्यर्थः । *स्मृच.४४

(२) अत्र चिह्नेत्यादेरयमर्थः । विवादविषयस्य गो-

---

(१) **स्मृच**.४४; **पमा**.७३; **नृप्र**.६ वत् (कृत्); **व्यप्र**.६३; **प्रका**.२७; **समु**.२२.

(२) **स्मृच**.४४; **प्रका**.२७; **समु**.२२. (३) **स्मृच**.४४; **पमा**.७३ चा (वा); **व्यप्र**.६३; **प्रका**.२७; **समु**.२२. (४) **स्मृच**.४४; **पमा**.७३; **सवि**.९३ पू.; **प्रका**.२७; **समु**.२२. (५) **स्मृच**.४४ चायमस्मिन्नर्थे विवक्षिते (ऽयं तु अर्थेऽस्मिन्निति भाषितम्); **पमा**.७४ चाय...क्षिते (ऽयं तु अर्थेऽस्मिन्निति भाषिते) ऽयमिति यत्तदूनं चोत्तरं (च प्रमितमङ्गीकारोत्तरं); **व्यप्र**.६३; **प्रका**.२७ स्मृचवत्; **समु**.२२ स्मृचवत्. (६) **स्मृच**.४४ च्ये (र्चं); **पमा**.७४ यच्चाति (चेद्वक्ति); **व्यप्र**.६३ ति यच्चा (त्वेतद्) तत् (तु); **प्रका**.२७; **समु**.२२. (७) **स्मृच**.४४; **पमा**.७४ ये (मे); **सवि**.९४; **व्यप्र**.६३ तथा (सदा); **प्रका**.२७; **समु**.२२. (८) **स्मृच**.४४; **पमा**.७४; **व्यप्र**.६३; **प्रका**.२७; **समु**.२२.

(९) **स्मृच**.४४; **पमा**.७४ दर्धं (दर्थं); **सवि**.९४; **प्रका**.२७-२८; **समु**.२२. (१०) **स्मृच**.४४; **पमा**.७४ दी (द); **सवि**.९४ श (द); **समु**.२२.

*सवि. स्मृचवत् ।

(१) **स्मृच**.४४ कश्चि (किंचि); **पमा**.७४ कश्चि (किंचि) ज्ञेयं (प्रोक्तं); **सवि**.९४ प्र (न); **प्रका**.२८; **समु**.२२. (२) **स्मृच**.४४; **पमा**.७५; **सवि**.९४ पू.; **प्रका**.२८; **समु**.२२. (३) **स्मृच**.४४; **पमा**.७५ यदु (तदु) तत्तेन (तत्वेन); **व्यप्र**.६३ सम्यङ् (समं); **प्रका**.२८; **समु**.२२.

हिरण्यादिद्रव्यस्य वर्णविशेषादिकं चिह्नम् । दीर्घशृंगत्वादिराकारः । सहस्रादिः संख्या । समयः कालविशेषः संकेतविशेषो वा । तत् सर्वमजानता यत् प्रोक्तम्, जानता वा सभ्यानामपरिचितया भाषया यदुक्तं तदुभयमप्रसिद्धं । बाल्य एव मया सर्वं द्रव्यं प्रतिदत्तमित्युक्त्वा स पुनरपि विस्मृत्य वा प्रतिवादिबुद्धिं प्रच्छादयितुकामो वा न दत्तमिति यद्ब्रूयात्तद्विरुद्धम् । 'पुरा मयाऽयं जित' इति वक्तव्ये सति, जितशब्दं परित्यजति चेत् तदुभयम् । गृहीतमित्येतावत्येव वक्तव्ये सति प्रथमं तदनुक्त्वा तेन यत् कर्तव्यं तत् कार्यं मया कृतमित्येतादृशं प्रस्तुतानुपयोगि किञ्चिदुक्त्वा पश्चात् गृहीतमिति यत् ब्रूयात्तदुत्तरं भूरि । देयं मयेत्युक्ते सति संदेहमन्तरेण दातव्यनिश्चयो भवति तदनुक्त्वा मया देयमिति यद्ब्रूयात्तदानीमदेयमिति वा देयमिति वा पदस्य छेत्तुं शक्यत्वादुत्तरं संदिग्धं भवति । यदि षोडशवर्षः प्रतिवादी 'मत्पौत्रेण दत्तम्' इति ब्रूयात्तदसंभवम् । एकादशवस्त्राणि मया दत्तानीति वक्तव्ये सति रुद्राक्षनामकानि युष्मत् (अस्मत्?) प्रयोगशब्दवाच्येन विभागितानीत्येवमप्रसिद्धैः पदैरभिहितमुत्तरमव्यक्तम् । प्रकृतार्थस्योचितमुत्तरमनुक्त्वा अनुपयुक्तमेव किञ्चिद्ब्रूते, 'एतेन वादिना प्राबल्येन दौर्बल्येन वा किञ्चित्साहसं कृतम्' इत्यादि, तत्र प्रकृतस्यानुक्तत्वादुत्तरमन्यार्थं भवति । शतं देयमिति प्रतिज्ञा, तस्यार्थस्य शतद्वयं दत्तमित्युत्तरं दोषवत् । सार्द्धं सहस्रं मह्यं देयमिति प्रतिज्ञा, तस्य तदर्धं प्रत्यर्पितमित्युत्तरमव्यापकम् । वादिना स्वपक्षस्य सम्यग् लेखनात् पूर्वमेव मया न गृहीतमित्युत्तरं व्यस्तपदम् । मया दत्तमपि यदा न गृहीतमिति वक्तव्ये सति विस्पष्टं न वदति किन्तु लोके यः कोऽपि किमगृहीतं तामरसं प्रदास्यतीत्येवमप्रसिद्धेन शब्देन व्यतिरेकमुखेन काकस्वरेणाभिहितमुत्तरं निगूढम् । किं तेनैव सदा देयं मया देयमित्यत्रोभयोर्वाक्ययोरदेयं मया देयमिति पदच्छेदसंभवादर्थस्यानिश्चयात् किमिति काक्वा व्यज्यमानस्याप्यनिश्चयादिदमुत्तरं व्याकुलम् । त्वत्पित्रा सुवर्णशतं गृहीतमित्यभियोगे पितुर्वाक्यं जानामीति वक्तव्ये व्यत्यस्यान्वयेन दुर्बोधं वचो ब्रूते गृहीतं शतमिति वचनात् सुवर्णानां पितुर्न जानामीति तदिदमुत्तरं व्याख्यागम्यम् । काकदन्तादिविषयं निष्प्रयोजनम्—असारमिति ।                                पमा.७५-७७

(३) 'एतेन च बलेन प्राबल्येन, अबलेन दौर्बल्येन च पुरा, साहसं मनुष्यमारणादि, स्थापितं कृत्वा गोपितमिति यावत्' इत्यादि प्रकृतानुपयोगित्वादन्यार्थमित्यर्थः । व्यस्तपदं पदान्तरेणाभियोगे कृते पदान्तरसंक्रमेणोत्तरमिति सोदाहरणं मिताक्षरायां व्याख्यातम् । तत्प्रागेवोक्तम् । स्मृतिचन्द्रिकायां तु पूर्वपक्षनिश्चयात् प्रागुच्यमानं सर्वमेवोत्तरं व्यस्तपदमिति व्याख्यातम् । व्यस्तं पदं स्थानमुपन्यासावसरो यस्येति व्युत्पत्तेः । भवदेवेन तु 'यद्व्यस्तपदव्यापी'ति पाठं लिखित्वाऽनन्वितार्थपदव्याप्तमिति व्याख्यातं व्यवहारतिलके । तत्तु दोषान्तरसंकरादयुक्तमिति प्राच्यमेव व्याख्याद्वयमनुसंधेयम् ।                                *व्यप्र.६३

उत्तरसंकरविचारः क्रियाद्वयविचारश्च

**पक्षैकदेशे यत्सत्यमेकदेशे च कारणम् ।**
**मिथ्या चैवैकदेशे च संकरात्तदनुत्तरम् ॥**
**[२]न चैकस्मिन्विवादे तु क्रिया स्याद्वादिनोर्द्वयोः ।**
**न चार्थसिद्धिरुभयोर्न चैकत्र क्रियाद्वयम् ॥**

(१) अनुत्तरत्वे च कारणं तेनैवोक्तम्—न चेति । मिथ्याकारणोत्तरयोः संकरे आर्थिप्रत्यर्थिनोर्द्वयोरपि क्रिया प्राप्नोति । 'मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनि' इति स्मरणात् । तदुभयमेकस्मिन् व्यवहारे

---

* संदिग्धादिपदत्रयव्याख्या स्मृचवत् ।

(१) **मिता**.२१७; **व्यमा**.३०२ च सं (स्यात्सं); **अप**.२१७ व्यमावत्; **व्यक**.३०; **स्मृच**.४५; **पमा**.७७ च सं (यत्सं); **स्मृसा**.८९ पक्षैकदेशे (एकदेशे च); **व्यचि**.२३ व्यमावत्; **व्यनि**.; **नृप्र**.६; **स्मृचि**.४०; **व्यत**.२१० व्यमावत्; **सवि**.९५ नारदः; **चन्द्र**.११४ पक्षैकदेशे (एकदेशे च) संकरा (सांकर्या); **व्यसौ**.२७; **वीमि**.२१७ व्यमावत्; **व्यप्र**.६४; **व्यउ**.४१ च सं (तु सं); **व्यम**.८; **विता**.६७; **प्रका**.२८; **समु**.२२; **विव्य**.७ देशे च सं (देशः स्यात्सं).

(२) **शुनी**.४।६५५ पू.; **मिता**.२।७:२।८० पू.; **व्यमा**.२९७:३०३ तु (हि); **अप**.२।७:२।८० न चै (सा चै); **व्यक**.३०; **स्मृच**.४५,९४; **पमा**.७७; **सुबो**.२।८० पू.; **स्मृसा**.९१; **व्यचि**.१४,२३ कत्र (कस्मिन्); **व्यनि**. र्थे (त्र); **स्मृचि**.४० न चार्थ (नैवार्थ); **नृप्र**.६; **सवि**.९५ र्थे

विरुद्धम् । यथा सुवर्णं रूपकशतं चानेन गृहीतमित्यभियोगे सुवर्णं न गृहीतं रूपकशतं गृहीतं प्रतिदत्तं चेति । कारणप्राङ्न्यायसंकरे तु प्रत्यर्थिन एव क्रियाद्वयम्—'प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम्' इति । यथा सुवर्णं गृहीतं प्रतिदत्तं रूपके व्यवहारमार्गेण पराजित इति । अत्र च प्राङ्न्याये जयपत्रेण वा प्राङ्न्यायदर्शिभिर्वा भावयितव्यम् । कारणोक्तौ तु साक्षिलेख्यादिभिर्भावयितव्यमिति विशेषः । एवमुत्तरत्रयसंकरेऽपि द्रष्टव्यम् । यथा, अनेन सुवर्णं रूपकशतं वस्त्राणि च गृहीतानीत्यभियोगे सत्यं सुवर्णं गृहीतं प्रतिदत्तं, रूपकशतं न गृहीतं, वस्त्रविषये तु पूर्वन्यायेन पराजित इति । एवं चतुःसंकरेऽपि । एतेषां चानुत्तरत्वं यौगपद्येन तस्यांशस्य तेन तेन विनाऽसिद्धेः क्रमेणोत्तरत्वमेव । क्रमश्चार्थिनः प्रत्यर्थिनः सभ्यानां चेच्छया भवति । यत्र पुनरुभयोः संकरस्तत्र यस्य प्रभूतार्थविषयत्वं तत्क्रियोपादानेन पूर्वं व्यवहारः प्रवर्तयितव्यः पश्चादल्पविषयोत्तरोपादानेन च व्यवहारो द्रष्टव्यः । यत्र च संप्रतिपत्तेरुत्तरान्तरस्य च संकरस्तत्रोत्तरान्तरोपादानेन व्यवहारो द्रष्टव्यः । संप्रतिपत्तौ क्रियाभावात् । यथा हारीतेन—'मिथ्योत्तरं कारणं च स्यातामेकत्र चेदुभे । सत्यं वाऽपि सहान्येन तत्र ग्राह्यं किमुत्तरम्' ॥ इत्युक्त्वोक्तम्—'यत्प्रभूतार्थविषयं यत्र वा स्यात्क्रियाफलम् । उत्तरं तत्र तज्ज्ञेयमसंकीर्णमतोऽन्यथा' ॥ संकीर्णं भवतीति शेषः । शेषापेक्षया ऐच्छिकः क्रमो भवतीत्यर्थः । तत्र प्रभूतार्थे यथा, अनेन सुवर्णं रूपकशतं वस्त्राणि च गृहीतानीत्यभियोगे सुवर्णं रूपकशतं च न गृहीतं वस्त्राणि तु गृहीतानि प्रतिदत्तानि चेति । अत्र मिथ्योत्तरस्य प्रभूतविषयत्वादर्थिनः क्रियामादाय प्रथमं व्यवहारः प्रवर्तयितव्यः पश्चाद्वस्त्रविषयो व्यवहारः । एवं मिथ्याप्राङ्न्यायसंकरे कारणप्राङ्न्यायसंकरे च योजनीयम् । तथा तस्मिन्नेवाभियोगे सत्यं सुवर्णं रूपकशतं च गृहीतं प्रतिदास्यामि, वस्त्राणि तु न गृहीतानि गृहीतानि प्रतिदत्तानीति वा वस्त्रविषये पूर्वं पराजित इति चोत्तरे संप्रतिपत्तेर्भूरिविषयत्वेऽपि तत्र क्रियाभावान्मिथ्याद्युत्तरक्रियामादाय व्यवहारः प्रवर्तयितव्यः । यत्र तु मिथ्याकारणोत्तरयोः कृत्स्नपक्षव्यापित्वं, यथा—शृङ्गग्राहिकया कश्चिद्वदति, इयं गौर्मदीया अमुकस्मिन्काले नष्टा अद्यास्य गृहे दृष्टेति । अन्यस्तु मिथ्यैतत्, प्रदर्शितकालात्पूर्वमेवास्मद्गृहे स्थिता मम गृहे जाता चेति वदति । इदं तावत्पक्षनिराकरणसमर्थत्वान्नानुत्तरम् । नापि मिथ्यैव, कारणोपन्यासात् । नापि कारणम्, एकदेशस्याप्यभ्युपगमाभावात् । तस्मात्सकारणं मिथ्योत्तरमिदम् । अत्र च प्रतिवादिनः क्रिया, 'कारणे प्रतिवादिनि' इति वचनात् । ननु 'मिथ्या क्रिया पूर्ववादे' इति पूर्ववादिनः कस्मात्क्रिया न भवति । तस्य शुद्धमिथ्याविषयत्वात् । कारणे प्रतिवादिनीत्येतदपि कस्मात् शुद्धकारणविषयं न भवति । नैतत् । सर्वस्यापि कारणोत्तरस्य मिथ्यासहचरितरूपत्वाच्छुद्धकारणोत्तरस्याभावात् । प्रसिद्धकारणोत्तरे प्रतिज्ञातार्थैकदेशस्याभ्युपगमेन एकदेशस्य मिथ्यात्वम् । यथा, सत्यं रूपकशतं गृहीतं न धारयामि प्रतिदत्त्वादिति । प्रकृतोदाहरणे तु प्रतिज्ञातार्थैकदेशस्याप्यभ्युपगमो नास्तीति विशेषः । एतच्च हारीतेन स्पष्टमुक्तम्—'मिथ्याकारणयोर्वापि ग्राह्यं कारणमुत्तरम्' इति । यत्र मिथ्याप्राङ्न्याययोः पक्षव्यापित्वम्—यथा, रूपकशतं धारयतीत्यभियोगे मिथ्यैतदस्मिन्नर्थे पूर्वमयं पराजित इति । अत्रापि प्रतिवादिन एव क्रिया—'प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम्' इति वचनात् । शुद्धस्य प्राङ्न्यायस्याभावादनुत्तरत्वप्रसङ्गात् । संप्रतिपत्तेरपि साध्यत्वेनोपदिष्टस्य पक्षस्य सिद्धत्वोपन्यासेन साध्यत्वनिराकरणत्वादेवोत्तरत्वम् । यदा तु कारणप्राङ्न्यायसंकरः यथा शतमनेन गृहीतमित्यभियुक्तः प्रतिवदति सत्यं गृहीतं प्रतिदत्तं चेत्यस्मिन्नेवार्थे प्राङ्न्यायेनायं पराजित इति । तत्र प्रतिवादिनो यथारुचीति न कश्चिद्वादिप्रतिवादिनोरेक-

१ संप्रतिपत्तौ क्रियाभावाच्चतुःसंकरो नोदाहार्यः । संकरसंभवमात्रेण तु मिताक्षराकारेण 'एवं चतुःसंकरेऽपि' इत्युक्तम् । अत एवाग्रे 'यत्र संप्रतिपत्तेरुत्तरान्तरेण संकरः तत्रोत्तरान्तरोपादानेन व्यवहारः प्रवर्तनीयः । संप्रतिपत्तौ क्रियाभावात्' इति तेनैवोक्तम् । व्यप्र.६४

(त्र); **चन्द्र**.११९; **व्यसौ**.२७; **वीमि**.२।७; **व्यप्र**.६४: १३२ पू.; **व्यउ**.४१; **व्यम**.८; **विता**.६७-६८:१८१ पू.; **प्रका**.२८; **समु**.२२; **विव्य**.७ यमः.

रिमन्व्यवहारे क्रियाद्वयप्रसंग इति निर्णयः। *मिता.२।७

(२) यत् पुनः केचिद् आहुर्गृहीतशतपुराणे धारणाभियोगे, शतं न गृहीतं, किन्तु पञ्चाशत्, परिशुद्धं तत्राऽपि वा किञ्चिद्, अपरिशुद्धं किञ्चिद् धारयामि इत्यादिकं, तस्मिन् मिथ्याकारणाभ्यां मिथ्याकारणसत्यैर्वा संकीर्णत्वादसदुत्तरम्। तदाह कात्यायनः—पक्षैकदेश इति। हेतुमाह—न चेति। मिथ्यांशे पूर्ववादिनः क्रिया। कारणांशे चोत्तरवादिनः इति द्वयोरेव जयपराजयापत्तेरुत्तराभासत्वमिति। तदयुक्तम्। एवंविधस्यैवार्थस्य परमार्थत्वे कथमन्यथोत्तरदानम्। न चोत्तरमेव न देयं, अत एव भङ्गापत्तेः।

न चाऽन्यस्य गृहीतपरिशुद्धत्वेऽपि शतस्याऽगृहीतत्वान्न मया शतं गृहीतमिति मिथ्योत्तरं देयम्। यतो निरूपकैरुत्तरवाक्यार्थस्यावश्यं निरूपणीयत्वात्, तथा हि, किं ग्रहणमात्रनिषेधपरमिदम्? न, गृहीतमेव किञ्चिदिति। तन्निषेधाच्च शतस्याप्यग्रहणमिति शतपदमनुवादः। यद्वा शतनिषेधार्थमिदम्। ग्रहणं तदल्पस्य सिद्धमेव। उभयनिषेधार्थमेव वा। तत्र न तावत् ग्रहणनिषेधार्थम्, तन्निषेधादेकादेः परार्द्धपर्यन्तग्रहणस्य सिद्धत्वात् शतपदप्रयोगस्य आनर्थक्यापत्तेः, अत एव नोभयनिषेधार्थमपि। किञ्च एवमुत्तरदाने पञ्चाशतो गृहीतपरिशुद्धस्यापि दानमापद्येत। ग्रहणमात्रनिषेधपरत्वेन तत्प्रतिपादनेनैवोत्तरार्थस्य बाधितत्वात् निष्प्रतिपक्षस्य भाषार्थस्य सिद्धत्वात्। शतमेव न (वा?) देयं स्यात्। यत्रोत्तराभासे दत्ते क्रियानपेक्षेतरभाषार्थसिद्धिः सुतराम् तत्रैकदेशक्रियया तत्रैव वोत्तरस्याभासीकृतत्वात् विभावितैकदेशन्यायादेव, एतच्च विस्तारेण वक्ष्यामः। तस्मादित्थमुत्तरं न देयम्। यद् गृहीतमल्पं तदभ्यनुज्ञाय तदधिकस्य शतादेरग्रहणेन तद्यदि यदन्यद् गृहीतं तन्न परिशुद्धं तद्धारणमङ्गीकृत्य शतग्रहणनिषेधे सत्येन संकीर्णता। अथ परिशुद्धात्तदभिधानपूर्वकः शतनिषेधस्तदा प्रत्यवस्कन्दनेन सह संकीर्णतेति। पारमार्थिकैवंरूपे वस्तुनि नास्त्युत्तरवादिनो निस्तारः। संकीर्णोत्तरवादिनो निस्तारः संकीर्णोत्तरवादिमते।

तस्माद् यदेव परस्परविरुद्धाभिधानं यथा शतं मया न गृहीतं गृहीतं वा यद्वा स्तोकं धारयामीत्यादिकं तदुत्तराभासं, परस्परविरोधात्, एवमादिविषयत्वमेव च कात्यायनवचनानां यथा—'प्रस्तुतादल्पमव्यक्तं न्यूनाधिकमसंगतम्। अव्याप्यसारं सन्दिग्धं प्रतिपक्षं न लङ्घयेत्॥ सन्दिग्धमन्यत् प्रकृतादल्पमिति च भूरि च। पक्षैकदेशव्याप्येव तत्तु नैवोत्तरं भवेत्॥ यद्व्यस्तपदमव्यापि निगूढार्थं तथाऽऽकुलम्। व्याख्यागम्यमसारं च नोत्तरं स्वार्थसिद्धये॥ पक्षैकदेशे यत्सत्यमेकदेशे च कारणम्। मिथ्या चैवैकदेशे स्यात् संकरात्तदनुत्तरम्'॥ ननु अविरुद्धत्वेऽप्येकदेशे मिथ्यात्वादेकदेशे च कारणत्वात् न कस्यापि कृत्स्नव्यापितेति उत्तराभासत्वं कुतो न स्यात्। नैतत्, एकत्रैव संसृष्टोत्तरावयवी द्व्यवयवः अवयवाभ्यां पक्षस्यावयवौ व्याप्नुवन् कृत्स्नमेव पक्षं व्याप्नोति इति नाऽव्यापिता। पक्षैकदेशे यत्सत्यमित्यादिकस्य चायमर्थः—पक्षनिर्देशकवचनैकदेशे सत्यं मिथ्या कारणं चेति परस्परविरुद्धम्। तत्रैकस्य उत्तरावयविनोऽनारम्भादाभासता। अविरुद्धैस्तु तदारम्भान्नाभासता। यथावस्तूत्तरदानेऽपि वचनादुत्तराभासत्वे वचनमदृष्टार्थं स्यात्। न्यायस्यादर्शनाच्छलापत्तेश्च। तस्माच्छतं न गृहीतं, किन्तु पञ्चाशत् गृहीतास्ते च परिशुद्धा इति सदुत्तरमेव। अत्र पञ्चाशन्मात्रग्रहणोत्तरेण शतग्रहणस्य हेतोरसिद्धत्वमुक्तम्। पञ्चाशद्ग्रहणे परिशोधनेन चापरिशोधनस्याऽसिद्धिरुक्ता। तेनैतदेव शताभियोगे मिथ्या पञ्चाशत्परिशोधने च कारणोत्तरम्। *व्यमा.३०२-३०४

(३) मिथ्योत्तरादीनां परस्परविविक्तत्वे सत्युत्तरत्वं न तु मिश्राणाम्। तदाह कात्यायनः—पक्षैकदेशे इति। अनुत्तरत्वे हेतुमाह— न चेति। क्रिया साक्ष्यादिकं प्रमाणं, तत् मिथ्योत्तरे पूर्ववादिनः। प्रत्यवस्कन्दे चोत्तरवादिनः। तत्र यदि मिथ्यावस्कन्दयोः संकीर्णयोः सम्यगुत्तरत्वं स्यात्तदा द्वयोर्वादिनोः प्रमाणं प्राप्नोति। तच्च विरुद्धम्। तथा यदि मिथ्योत्तरं स्यात् तदा पूर्ववादिन एव प्रमाणं न तूत्तरवादिनः। तच्चैतदेकस्मिन् व्यवहारे विरुद्धम्। भवतु वा द्वयोः प्रमाणमविरुद्धम्, तथाऽपि द्वयोरर्थसिद्धिर्विरुध्यते। तथा हि, पूर्ववादिना स्वसाध्योऽर्थो

---

* पमा., सवि., व्यउ., व्यम., विता. मितागतम्। वीमि. मितागतं, व्यचिगतं च।

* स्मृसा. व्यमागतम्।

ममानेन सुवर्णशतं देयमित्यादि लिखितादिना साध्यते। परेणापि न देयमिति,तत्रोभयोर्नार्थसिद्धिरन्योन्यविरोधात्। किञ्च प्रत्यवस्कन्दोत्तरप्राङ्न्यायोत्तरयोः संकीर्णयोः सम्यगुत्तरत्वे प्रमाणद्वयमेकत्र वादिनि प्राप्नोति। तथा हि प्रत्यवस्कन्दवादित्वाद्गृहीतस्य दत्तत्वादौ कारणे काऽपि क्रिया कार्या। प्राङ्न्यायोत्तरत्वे तु जितपत्रादिका क्रिया। न च क्रियाद्वयस्य प्रामाण्यं, प्रमेयभेदात्। एकया हि क्रियया साध्यसिद्धौ व्यर्थाऽपरा। तस्मादसंकीर्णमेव सम्यगुत्तरम्।

ननु चैकस्मिन्व्यवहारे वादिप्रतिवादिनोः कथं साक्षिसंबन्धः, उक्तं हि—सा चेति। सत्यं, तुल्यवदुभयोर्नास्ति क्रियाप्राप्तिः। यदा यस्य क्रिया शास्त्रतः प्राप्ता तदा तस्य तां मिथ्याभूतां विदित्वा तस्या मिथ्यात्वख्यापनाय साक्ष्यन्तरमुपन्यसनीयमित्येतेनोच्यते। *अप.२।७,२।७९

(४) अयमर्थः। क्रिया लिखितादिप्रमाणं, तत्प्रत्यवस्कन्दने प्राङ्न्याये च प्रत्यर्थिन एव भवति। मिथ्योत्तरे त्वर्थिन एव। सत्ये तु न कस्यापीति वक्ष्यते। एवं च यत्र सत्येतरेषां त्रयाणां संकरस्तत्र प्रत्यर्थिनः प्रमाणद्वयमर्थिनश्चैकं प्रमाणं प्राप्नोति। यत्र सत्यमिथ्येतरयोस्तत्र प्रत्यर्थिन एव प्रमाणद्वयम्। यत्र पुनर्मिथ्याकारणयोर्मिथ्याप्राङ्न्याययोर्वा तत्रार्थिप्रत्यर्थिनोरेकैकं प्रमाणम्। न च यथा प्राप्तं तथैवास्त्विति वाच्यम्। प्रमाणं हि साध्यसिद्ध्यर्थं क्रियते। एकस्मिन्व्यवहारे चैकमेव साध्यमेकस्यैव वादिनस्तेन तत्र नोभयोः प्रमाणमेकस्य वा प्रमाणद्वयं भवितुमर्हति। उभयोः साध्याभावात्। एकस्य साध्यस्य चैकेन प्रमाणेन सिद्धावन्यस्य वैयर्थ्यात्। सत्यस्य तु इतरैः संकरे यद्यपि नायं दोषः, तथाऽप्येकस्मिन् व्यवहारे पादचतुष्टये तदर्धे च समाप्तिर्विरुद्धेति तत्राप्यनुत्तरत्वमेव। तस्माद्युक्तमुक्तम्—'संकरात्तदनुत्तरमिति'। एवं च सर्वत्र पक्षव्याप्येकमेवोत्तरं ग्राह्यम्। यत्र पुनः सर्वथा तथाविधमुत्तरं न लभ्यते किन्तु एकैकांशव्यापकमनेकमुत्तरं तत्रागत्योत्तरवशेन नानाप्रतिज्ञाः पक्षदोषपरिहाराय कृत्वा क्रमेणैकैकप्रतिज्ञाया एकैकमुत्तरं ग्राह्यम्। अन्यथा तत्र निर्णयाभाव एव स्यात्। अत एवोक्तम्-'संकरात्तदनुत्तरमि'ति उक्तविधया संकरे निराकृते स्यादेवोत्तरमित्यभिप्रायः। स्मृच.४५

(५) अत्र केचित्—यथा शतग्रहणे भाषिते पञ्चाशतं धारयाम्येव पञ्चविंशतिः परिशोधिताः पञ्चविंशतिर्न गृहीता इत्याद्युदाहरणम्। अत्र च कात्यायनवचनं बीजं तथा हि न चेति। एकत्र द्वयोर्वादिनोर्न क्रिया, द्वयी च न क्रिया, द्वयोश्च न जय इति वाक्यार्थः। यथोक्तसंकीर्णोत्तरस्य च ग्राह्यत्वे तत्सर्वं प्रसज्जेतेत्याहुः। तन्मन्दम्। न हीदृशो विषय एव न संभवति। बहुशो दर्शनात्। न चेदृशमुत्तरं न देयम्। यथावस्थितोत्तरदानस्य निषेद्धुमशक्यत्वात्। न च सकल एवाक्षेपे मिथ्योत्तरमेव कार्यं शतस्याग्रहीतत्वादिति वाच्यम्। न हि विज्ञा एव विवदन्ते किन्तु अज्ञा अपि, न च ते इत एव पर्यनुयोज्याः, किन्तु तत्वतो निरूप्याः। 'छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः' इत्यादिवचनात्। किञ्च न मदुत्तरान्तरमत्र संभवतीत्यत एवास्य हेयता, उपायस्योपायान्तरादूषकत्वात्। न च वचनादेवास्य हेयता। एतद्वचनस्यादृष्टार्थतापत्तेः। अपि च शतं न गृहीतमित्यस्य नाग्रहणमात्रमर्थः। शतपदानर्थक्यापत्तेः। नापि शताग्रहणम्। विशेषनिषेधे शताभ्यनुज्ञापत्तेः। नापि शतपदं पक्षप्राप्तानुवादः। एवमेकदेशस्य गृहीतस्य गृहीतत्वविभावनादेव स्थापको निरपवादमेव तावद्धनं लभेतेत्यनिष्टफलकमुत्तरं स्यात्। तस्माद् एकदेशे एकस्मिन्नेव देशे यदुत्तरं संकीर्यते तदनुत्तरम्। शेषं एकदेशपदद्वयं चानुवादः। तथा हि, मया शतं न गृहीतं, गृहीतं वा परिशोधितं धारयाम्येवेत्यादि। यत्तु भिन्नभिन्नावच्छेदेन कारणादिस्पर्शि तत् सदुत्तरमेव। अवच्छेदभेदेन सांकर्यस्यैवाभावात्। अत्रैव हारीतेनापि मीमांसितम्—'मिथ्योत्तरं कारणं तत्स्यातामेकत्र चेदुभे। सत्यं चापि सहानेन तत्र ग्राह्यं किमुत्तरम्॥ यत्प्रभूतार्थविषयं यत्र वा स्यात् क्रियाफलम्। उत्तरं तत्तु विज्ञेयमसंकीर्णमतोऽन्यथा'॥ यदिति। प्रभूतांशमादाय विचार उपक्रमणीयः तुल्यार्थकत्वे तु यत्र क्रियाया भुक्त्यादेः फलनिर्णयः शीघ्रं भवति, तदंशस्यैव प्रमाणं ग्राह्यम्। तदुक्तं 'यत्र वा स्यात्क्रियाफलमि'ति। इदं चोत्तरं असंकीर्णमेव। यत्तु इतोऽन्यथा तत्संकीर्णं हेयमिति। तदयं वर्णनार्थः शताभियोगे पञ्चाशत् परिशोधिताः पञ्चविंश-

* व्यक. अपवत्।

तिर्धार्यन्ते पञ्चविंशतिर्नैव गृहीता इत्युत्तरे कारणभाग आदौ विचार्यः, पश्चात्तु अपन्हुताः पञ्चविंशतिरपि अर्थिप्रमाणेन वा साध्याः, प्रत्यर्थिप्रमाणेन वा बाध्याः। न चैवं सत्येतद्वचनविरोध एव। न्यायवचनानामुत्सर्गतो न्यायमूलकत्वेनैव तद्वचनस्यापि लघुत्वप्रमाणपरिग्रहाबाधकत्वात्। सति निर्णयप्रमाणे च तदंशेऽपि प्रकरणारम्भकसंशयस्यावश्यनिरस्यत्वात्। न च 'यत्प्रभूतार्थविषयमि'त्यादिवचनबलाद् एव लघुत्वप्रमाणाग्राह्यता। तथा सत्येतत्स्मृतीनां श्रुतिमूलतापत्तेः। न चैतदिष्टमेव। असंभवन्मूलान्तरत्वस्य तत्रोपाधित्वात्, यूपहस्त्यादिस्मृतौ तथा सिद्धान्तात् आसां च न्यायमूलकत्वस्यैव संभवात्। 'मिथ्याकारणसंभेदे ग्राह्यं कारणमुत्तरम्' इत्यादि वचनमप्येवमेव नेयम्। तस्मात् यावत् प्रकरणारम्भकसंशयोऽनुवर्तते, निर्णायकं च प्रमाणं लभ्यते, तावद् विचारणीयमिति परमार्थः। भवदेवप्रदीपादयोप्येवम्। *व्यचि. २३-२५

(६) मिता. टीका—'एवं चतुःसंकरेऽपी'ति। 'अनेन सुवर्णं रूपकशतं वस्त्राणि धान्यं च गृहीतमि'त्यभियोगे, 'सुवर्णं धारयामि', 'रूपकशतं न गृहीतं,' 'वस्त्राणि प्रतिग्रहेण लब्धानि', 'धान्यविषये पूर्वं पराजित,' इत्येवं क्रमादुत्तरसंकरो द्रष्टव्यः।

तस्मिन्नेवाभियोग इति। अनेन 'सुवर्णं रूपकशतं वस्त्राणि च गृहीतानी'ति पूर्वोक्त एवाभियोग इत्यर्थः।

प्रत्याकलितस्येति। पौनःपुन्येन विचारणं प्रत्याकलितम्। सुबो. २।७

(७) (उपरिनिर्दिष्टवाचस्पतिमिश्रोक्तपक्षमुपन्यस्य खण्डनं प्रारभते व्यवहारप्रकाशकारः — )

तदेतद्वागाडम्बरमात्रान्नार्थक्षोदक्षमम्। तथा हि—मिताक्षराद्युक्तरीत्या दृष्टार्थतयैव सकलवचनस्वरसाभङ्गसंभवात्। 'न चैकस्मिन्' इत्यादिवचनपर्यालोचनया युगपदनुत्तरत्वस्यैवास्य वर्णितत्वात्। क्रमिकोत्तरत्वस्य सर्वैरपि इष्टत्वात्। न चायौगपद्यमेव निर्बीजम्। युगपद्व्यवहारासंभवस्यैतादृशि विषये उपपादितत्वात्। व्यवहारस्य चतुष्पात्त्वात्। क्रियारूपपादभेदे साध्यभेदेन भाषारूपपादभेदे चातद्धटिते व्यवहारभेदप्रसङ्गस्य सचेतसा दुरपह्नवत्वात्। किं च, भवदुक्तरीत्या न्यायाभासमूलकतया 'न चैकस्मिन्' इत्यादेरप्रामाण्यप्रसंगः। यच्चैकदेशपदस्यैकविषयपरत्ववर्णनमेकदेशपदद्वयस्य चानुवादत्वप्रतिपादनं, तदतिमन्दम्। एकदेशपदे रूढित्यागप्रसंगात्। संभवत्यस्मदर्थेनार्थवत्त्वे निरर्थकानुवादस्यानर्थक्यापरपर्यायस्याभ्युपगमानौचित्याच्च। यच्चैकविषयसंकर उदाहृतं, तदपि संदिग्धादिदोषसंकीर्णमसाधारण्येनैतद्वचनविषयतानर्हमिति समस्तवचनानर्थक्यम्। यदप्युक्तम्— 'असंभवन्मूलान्तरत्वस्य श्रुतिमूलकत्वे प्रयोजकत्वमि'ति, तदपि मीमांसानध्ययननिबन्धनम्। न ह्यसंभवन्मूलकत्वमष्टकादिस्मृतीनां श्रुतिमूलकत्वे प्रयोजकम्। तथा सति तुलापुरुषादिस्मृतीनां लोभादिमूलकत्वस्य सुतरां संभवात् श्रुतिमूलकत्वाभावप्रसंगः। यथाहुः वार्तिककाराः—'रागद्वेषमदोन्मादप्रमादालस्यलुब्धताः। क्व वा नोत्प्रेक्षितुं शक्याः स्मृत्यप्रामाण्यहेतवः'॥ यूपहस्त्यादिस्मृतिषु मुक्तकत्वेनाप्तप्रणीतत्वानवधारणान्मूलभूतश्रुत्यकल्पनम्। कर्तृसामान्याभावादिति भाष्याभिमताप्रामाण्ये मूलयुक्तिः। हेतुदर्शनं तदुपष्टम्भकमन्वाचयमात्रमिति तत्रैव व्याचक्षाणैः क्षुण्णमाकरे। वार्तिककाराणां तु दृढतरवैदिकं परिग्रहीतुं प्रामाण्यमेव तासामभिमतमित्यपि तदभियोगभाजां न दुर्लभम्। यदपि अपि चेत्याद्यसंभवदुक्तिकस्वकपोलकल्पितविकल्पजालमुद्भाव्य खण्डितं, तदपि प्रस्तुतप्रतीपम्। तादृशोत्तरस्य सर्वैरभ्युपगन्तव्यत्वात्। शतग्रहणाभावस्य तदर्थस्यादुष्टत्वाच्च। अयमत्र सकलवचनसंदर्भसमाधानान्निष्कृष्टोऽर्थः। क्रिया लिखितादिप्रमाणरूपा प्रत्यवस्कन्दने प्राङ्न्याये च प्रत्यर्थिन एव भवति। मिथ्योत्तरे चार्थिन एव। संप्रतिपत्तौ न कस्यापि इति व्युत्पादयिष्यते। एवं च सत्येन यत्रेतरेषां त्रयाणामुत्तराणां संकरस्तत्र प्रत्यर्थिनः कारणप्राङ्न्यायसाधनाय प्रमाणद्वयमर्थिनश्च स्वसाध्यसाधनायैकं प्रमाणं प्राप्नोति। यत्र कारणप्राङ्न्याययोस्तत्र प्रत्यर्थिनः प्रमाणद्वयम्। यत्र पुनर्मिथ्याकारणयोर्मिथ्याप्राङ्न्याययोर्वा तत्रार्थिप्रत्यर्थिनोरेकैकं प्रमाणम्। न च यथाप्राप्तमेवाऽस्त्विति वाच्यम्। प्रमाणं हि साध्यसिद्ध्यर्थम्। एकस्मिन्व्यवहारे चैकमेव साध्यमेकस्यैवोचितम्। तेन तत्र नोभयोः

---

* व्यत., चन्द्र., वाक्यार्थो व्यचिवत्।

प्रमाणमेकमेकस्य वा प्रमाणद्वयं भवितुमर्हम् । उभयोः साध्याभावादेकसाध्यस्य चैकेनैव प्रमाणेन सिद्धावितरवैयर्थ्यात् । तस्मात् युक्तमुक्तम्—'संकरात्तदनुत्तरम्' इति । तथा च सर्वत्र पक्षव्यापकमेवोत्तरं देयं दापनीयं च । यत्र पुनः सर्वथा तथाविधमुत्तरं न लभ्यते किन्त्वेकैकांशव्यापकमेवोत्तरम्, तत्र नानोत्तरवशेन नानाप्रतिज्ञाः कृत्वा क्रमेणैकैकप्रतिज्ञायामेकैकोत्तरोपादानेन व्यवहारः प्रवर्तनीयोऽन्यथा तत्र निर्णयाभावप्रसंगः । स चानुचितः । 'छलं निरस्य' इत्यादिवचनात् । 'संकरात्तदनुत्तरम्' इति हेतूपादानादुक्तविधया संकरे निराकृते स्यादेवोत्तरत्वमित्यभिप्रायः । एतदेव व्यतिरेकमुखेनोक्तम्—'यत्प्रभूतार्थविषयं यत्र वा स्यात्क्रियाफलम् । उत्तरं तत्र तज्ज्ञेयमसंकीर्णमतोऽन्यथा' इति ॥ अतोऽन्यथा यौगपद्ये संकीर्णं स्यादिति प्रागेव व्याख्यातम् । पक्षव्यापकानेकोत्तरविकल्पे तु न जातुचित्संकराऽवसरः । तस्मान्न क्वापि संकरे सदुत्तरत्वमिति ।

व्यप्र.६६-६८

## पितामहः

विषयविशेषे उत्तरदाने कालावधिविचारः

[1]ऋणोपनिधिनिक्षेपदानसंभूयकर्मणाम् ।
समये दायभागे च कालः कार्यः प्रयत्नतः ॥

एवमादिष्वपि कालदानं विस्मृत्यादिकारणतः प्रत्यर्थिनः कालार्थित्वे एव । स्मृच.४२

## प्रजापतिः

विषयविशेषे उत्तरदाने कालावधिविचारः

[2]दिनमेकमथ द्वे वा त्रीणि वा पञ्च सप्त वा ।
कालस्तृणादौ गहन आ त्रिपक्षादपि स्मृतः ॥

सदुत्तरस्वरूपम्

[3]पक्षस्य व्यापकं सारमसंदिग्धमनाकुलम् ।
अव्याख्यागम्यमित्येतदुत्तरं तद्विदो विदुः ॥

पक्षस्य व्यापकं कृत्स्नपक्षाच्छादकम् । सारं बाद्याभियोगोत्तरणक्षमम् । असंदिग्धं खण्डश्लेषादिरहितम् । अनाकुलमन्वितार्थम् । अव्याख्यागम्यं सुबोधम् ।

स्मृच.४३

उत्तरचतुष्टयस्वरूपम्

[1]यावदावेदितं किञ्चिन्मत्संबद्धमिहार्थिना ।
तावत्सर्वमसद्भूतमिति मिथ्योत्तरं स्मृतम् ॥
[2]अस्यैतदेवमेवैतन्नासद्भाषितमर्थिना ।
इति संप्रतिपत्त्याख्यं द्वितीयमिदमुत्तरम् ॥
दत्तमेव ममानेन किन्त्वस्यापि मया पुनः ।
प्रतिदत्तमितीदृक्च प्रत्यवस्कन्दनं स्मृतम् ॥
[3]अस्मिन्नर्थान्तरे पूर्वं प्रारब्धोऽस्म्यहमर्थिना ।
जितश्चायं मया तत्र प्राङ्न्यायविधिरुच्यते ॥

## हारीतः

उत्तरदानकालः

[4]स्वल्पवर्णोऽर्थबहुलः प्रतिज्ञादोषवर्जितः ।
साक्षिमान्कारणोपेतो निरवद्यः सुनिश्चितः ॥
[5]ईदृशः पूर्वपक्षस्तु लिखितो यत्र वादिना ।
दद्यात्तत्पक्षसंबन्धं प्रतिवादी तदोत्तरम् ॥

साक्षिमान् प्राड्विवाकादिप्रत्यवेक्षणवान् । स्मृच.४१

उत्तरानर्हविषयः

[6]साधारणी च या भूमिर्यच्च द्रव्यं गणाश्रितम् ।
एकस्य प्रार्थ्यमानस्य न वदेदुत्तरं बुधः ॥

यदा त्वनीदृशस्तदा न दद्यादित्यर्थसिद्धं स्पष्टयितुं पक्षाभासमेकमुदाहृत्य तस्योत्तरं न देयमित्याह—साधारणीति । स्मृच.४१

उत्तरदानविधिः

[7]तत्राभियोगानुगतमुत्तरं प्रतिवादिना ।
निष्कृष्यार्थं प्रदेयं स्याद्दोषसंज्ञाविवर्जितम् ॥

---

(१) स्मृच.४२; पमा.७१; सवि.९१; प्रका.२६; समु.२०. (२) गौमि.१३।२८; व्यनि. दपि (दहः); प्रका.२७ दपि स्मृतः (अहः स्मृतम्); समु.२० प्रकावत्.
(३) मिता.२।७ (=); व्यक.२८ नारदप्रजापती; स्मृच.४२; पमा.६९; स्मृसा.८८ (=); सवि.९० (=); चन्द्र.११३; व्यसौ.२४; व्यप्र.५५ नारदप्रजापती; प्रका.२७; समु.२१.

(१) स्मृच.४३; पमा.७२ बद्ध (बन्ध) सद्भू (संभू); प्रका.२८; समु.२१. (२) स्मृच.४३; पमा.७३ अ (य) सद्भाषि (संभावि); प्रका.२८; समु.२१. (३) स्मृच.४३; पमा.७३ प्रारब्धो (प्रलब्धो); प्रका.२८; समु.२१. (४) स्मृच.४१; प्रका.२५; समु.२०. (५) स्मृच.४१; प्रका.२५ न्धं (द्धं) दो (थो); समु.२० न्धं (द्धं). (६) स्मृच.४१; प्रका.२५; समु.२२. (७) स्मृच.४६; सवि.९८ स्मृतिः; प्रका.२९; समु.२२ कृष्या (क्रिया).

उत्तरदाने कालावधिविचारः

[1]कृते कार्ये विवादे तु सद्योऽनन्तरमुत्तरम् ।
अपरत्रागते काले काले दत्तेऽपि दीयते ॥

उत्तरदापनोपायाः

[2]पूर्वपक्षे यथार्थं तु न दद्यादुत्तरं यदा ।
प्रत्यर्थी दापनीयः स्यात् सामादिभिरुपक्रमैः ॥
[3]प्रियपूर्वं वचः साम भेदस्तु भयदर्शनम् ।
अर्थापकर्षणं दानं दण्डस्ताडनबन्धनम् ॥

सदुत्तरस्वरूपम्

[4]पूर्वपक्षार्थसंबद्धमनेकार्थमनाकुलम् ।
अनल्पमव्यस्तपदं व्यापकं नातिभूरि च ॥
[5]सारभूतमसंदिग्धमपक्षैकांशसंभवम् ।
अर्थिश्रवमगूढार्थं देयमुत्तरमीदृशम् ॥

(१) पूर्वपक्षार्थसंबन्धं अभियोगानुगतम्। अनेकार्थं निष्कृष्टार्थजातम् । अव्यस्तपदं निश्चितप्रतिज्ञापूर्वकम् । अपक्षैकांशसंभवं अनवशेषितस्वपक्षैकदेशम्। अर्थिश्रवं पूर्वावेदकश्रुतम्। अगूढार्थमवक्रोक्तिप्रसिद्धपदैकवेद्यम्। एवं लक्षणमुत्तरं चतुर्विधं ज्ञेयम्। 'चतुर्विधः पूर्वपक्षः प्रतिपक्षस्तथैव च' इति बृहस्पतिस्मरणात् । स्मृच.४३

(२) अनेकार्थं अनेकेऽर्था उपयुक्ता विशेषणादयो यत्र तत्तथा। न त्वनेकार्थपदयुक्तं, तस्य संदिग्धत्वेन दुष्टत्वात्। अनाकुलं उक्तार्थम्। उपयुक्तशब्दैरन्यूनमनल्पम् । अव्यस्तानि व्यत्यासयोजनानपेक्षाणि पदानि यत्र तदव्यस्तपदम्। व्यापकं परिपूर्णार्थम् । नातिभूरि अनुपयोगिविस्तररहितम्। सारत्वासंदिग्धत्वे व्याख्याते। स्वपक्षैकान्तसंभवं स्वपरिगृहीतपक्ष एवैकान्तेन नियमेन संभवति न कथञ्चिदपि पक्षान्तरकक्षामवगाहते तत्। अन्यद्व्यक्तार्थम्। व्यप्र.५५

प्राङ्न्यायोत्तरम्

अस्मिन्नर्थे ममानेन वादः पूर्वमभूत्तदा ।
जितोऽयमिति चेद्ब्रूयात् प्राङ्न्यायः स्यात्तदुत्तरम् ॥

अनेकविधोत्तरयौगपद्ये ग्राह्यमुत्तरम्

[2]मिथ्योत्तरं कारणं च स्यातामेकत्र चेदुभे ।
सत्यं वाऽपि सहान्येन तत्र ग्राह्यं किमुत्तरम्* ॥
[3]मिथ्याकारणयोर्वापि ग्राह्यं कारणमुत्तरम् ॥
[4]यत्प्रभूतार्थविषयं यत्र वा स्यात् क्रियाफलम् ।
उत्तरं तत्तु विज्ञेयमसंकीर्णमतोऽन्यथा ॥

(१) पूर्वमिति शेषः। पूर्वं यद्ग्राह्यं तदाह—यत्प्रभूतार्थेति। अयमर्थः। सत्येतरोत्तरानेकत्वे बह्वर्थविषयमग्रे ग्राह्यम्। सह सत्येनानेकत्वे बह्वर्थमपि सत्यं विहा-

---

(१) **व्यनि**. काले दत्तेऽपि दीयते (कालः काले विधीयते); **प्रका**.२७ काले दत्ते (कालः काले); **समु**.२१. (२) **शुनी**. ४।६३९ र्थं (र्थे) यदा (तु यः); **स्मृच**.४६; **प्रका**.२९; **समु**.२२. (३) **स्मृच**.४६; **प्रका**.२९; **समु**.२२-२३. (४) **स्मृच**.४३; **पमा**.६९; **व्यप्र**.५५; **व्यउ**.३७ मव्यस्त (मध्यम) नातिभू (नाभिपू); **प्रका**.२७; **समु**.२१. (५) **स्मृच**.४३; **पमा**.६९ अपक्षैकांश (स्वपक्षैकान्त); **व्यप्र**.५५ श्रव (श्रव्य) शेषं पमावत्; **व्यउ**.३७ श्रव (श्राव्य) शेषं पमावत्; **प्रका**.२७; **समु**.३१.

* अत्रत्या मिता.व्याख्या 'पक्षैकदेशे यत्सत्यम्' इति कात्यायनीयश्लोके (पृ.१७९-१८०) द्रष्टव्या। तत्रैव च पमा., सवि., व्यउ., व्यम., विता. एते ग्रन्था गतार्थाः।

(१) **शुनी**.४।६४६ मिति (मस्ति) स्या...म् (स उदाहृतः); **स्मृच**.४३; **सवि**.९३; **व्यप्र**.६१; **व्यउ**.४०; **प्रका**.२७; **समु**.२१. (२) **मिता**.२।७; **स्मृच**.४५ मिथ्यो (सत्यो); **पमा**.७८; **स्मृसा**.९१ वापि सहान्येन (चापि सहानेन); **व्याचि**.२४ च (तत्) शेषं स्मृसावत्; **व्यनि**. चेदुभे (चैव हि); **स्मृचि**.४० वा (चा) व्यासहारीतौ; **नृप्र**.७; **व्यत**.२०९ स्मृसावत्, व्यासहारीतौ; **सवि**.९६ वा (चा); **चन्द्र**.११९ स्मृसावत्; **व्यप्र**.६५; **व्यउ**.४२; **व्यम**.८ वा (चा); **विता**.६९ वा (चा); **सेतु**.१०८ स्मृसावत्, व्यासहारीतौ; **प्रका**.२९; **समु**.२२.

(३) **मिता**.२।७; **स्मृच**.४५,५३; **पमा**.८०; **व्यत**.२०९ व्यासहारीतौ; **सवि**.९६ नारदः; **चन्द्र**.११९; **व्यम**.९; **विता**.७०; **सेतु**.१०८; **समु**.२६.

(४) **मिता**.२।७ त्तु वि (त्र तत्); **व्यमा**.३०५ पू.; **स्मृच**.४५ मितावत्; **पमा**.७९ त्तु (त्र); **स्मृसा**.९१; **व्याचि**.२४; **व्यनि**. मितावत्; **स्मृचि**.४० मितावत्, व्यासहारीतौ; **नृप्र**.७; **व्यत**.२०९; **सवि**.९६ त्तु (त्र); **चन्द्र**.११९ पू.; **व्यप्र**.६५, ६७-६८ मितावत्; **व्यउ**.४२ त्तु (त्र); **व्यम**.८ मितावत्; **विता**.६९ त्तु विज्ञे (त्र तद्दे); **सेतु**.१०८; **प्रका**.२९ मितावत्; **समु**.२२ मितावत्.

योत्तरान्तरमेवादावादेयम्। सत्ये क्रियाफलाभावादिति। न चैवं क्रमवाचिपदाध्याहारापत्तेः। यत्रैवोत्तरकाले पक्षव्यापकानेकोत्तरोपन्यासः, यथा 'केनचिन्मानवेन मदीया गौर्नष्टा दृष्टाऽस्य सद्मनि' इत्यभियुक्तो वक्ति 'मिथ्यैतदस्मद्भवन एव सा संभूता' इत्येवमादि तद्विषयमेवेदं वचनमिति वाच्यम्। यत उक्तं 'असंकीर्णमतोऽन्यथा' इति। तस्यायमर्थः। असंकीर्णमुत्तरमेवंक्रमे भवति। अतोऽन्यथा यौगपद्ये संकीर्णमेव स्यादिति पक्षव्यापकानेकोत्तरहेतुविकल्पविषये न जातुचित्संकरावसरः। तस्मात्संकरोत्तरविषयमेवेदं वचनम्। अत एव पक्षव्यापकानेकोत्तरविषये वचनान्तरप्रारब्धं तेनैव—'मिथ्याकारणयोर्वाऽपि ग्राह्यं कारणमुत्तरम्' इति कारणोत्तरस्यानन्यथासिद्धत्वादिना मिथ्यातो गुरुतरत्वादित्यभिप्रायः। अतो मिथ्याकारणयोरुदाहरणमात्रत्वादुत्तरान्तरसंनिपातेऽपि गुरुतरं ग्राह्यमित्यूह्यम्। यत्र पुनः संकरोत्तरे तुल्यबलतया न पूर्वोक्तक्रमहेतुरस्ति तत्राप्यैच्छिकक्रमेणोत्तरं ग्राह्यम्। निर्णयस्य आवश्यकत्वात्। स्मृच.४५

(२) यत्रैकं प्रभूतार्थविषयं तत्र भूयो विषयोत्तरानुसारेण व्यवहारः। यत्र द्वयोस्तुल्यविषयता तत्र यस्य लिखितसाक्षिभुक्तीनां मध्ये अन्यतमक्रियायाः फलं शीघ्रं प्रतीयते तस्यैव क्रियानिर्देशः। तदुक्तं यत्र वा स्यात् क्रियाफलमिति। तदसंकीर्णमेव विज्ञेयम्। अतोऽन्यथा तत्संकीर्णम्। तच्चैवं, यथा परेण शताभियोगे दत्ते उत्तरवाद्येवमाह मया न गृहीतं, गृहीतमेव चेत्तदा मम सहायो अनेन दण्डितः तेनैव मया परिशोधितमित्यादि, अत्र मया न गृहीतमिति वाक्यैकदेशे मिथ्या देशान्तरे च कारणम्। अत एवंविधमुत्तरं हेयम्। स्मृसा.९१

(३) एवमुत्तरमसंकीर्णं भवति। अतोऽन्यथा संकीर्णं वादभेदापादकं भवतीत्यर्थः। उदाहरणम्—मत्तः सुवर्णशतमेकं च रजतं गृहीत्वा याच्यमानो न प्रयच्छतीत्यभियोगे सुवर्णशतं न गृहीतं रजतमेकं प्रतिदत्तमित्यभिहिते न वादभेदः। मिथ्याशेषपूर्ववादिनः क्रिया प्राप्ता प्रभूतविषयेति पूर्ववाद्येव तत्साधनादेव रजतप्रतिदानाभावमपि साधयेदिति न वादभेदप्रसङ्गः। क्रियाफलस्योदाहरणम्—ततोऽसावेकं सुवर्णं गृहीत्वा याच्यमानो न केवलं न ददाति, किन्तु मम शिरसि ताडितवानित्यासाधयेत्। तेन यत्र मिथ्याकारणयोर्दण्डस्याभियोगेन शिरसि ताडितं सुवर्णं च प्रतिदत्तमित्युत्तरेऽभिहिते न वादभेदः। पूर्ववादिनः क्रियाया दण्डगुरुत्वात्पूर्ववाद्येवोरसि ताडनं सुवर्णशतप्रतिदानाभावं च साधयेत्। तत्र मिथ्याकारणयोर्दमसमर्थसाम्यं च भवति तत्र भाषाभेदः। उदाहरणम्—असौ मत्तः सुवर्णशतं गृहीत्वा याच्यमानो न प्रयच्छतीत्यभियोगे एकं न गृहीतम्, एकं गृहीतं च प्रतिदत्तमित्युत्तरे दण्डार्थयोः साम्याद्वादभेदः। यत्र पुनः एकस्मिन्नेव मिथ्याकारणे भवतः। उदाहरणम्—शृङ्गिणी गौर्मदीया अमुकस्मिन्मासि नष्टा साऽस्य गृहे दृश्यमाना प्रार्थ्यमानाऽपि न प्रदीयते इत्यभियोगे उत्तरवादी तु न तदीया सा गौरिति प्रतिषिध्य मदीयैव सेत्यात्मसंबन्धं प्रतिज्ञाय कारणमभिहितवान्। मिथ्याऽभिप्रायेण न भवति। मैवम्। कारणे प्रतिवादिनि इत्यनेन संकरोत्तरे मिथ्यानिराकरणमात्रमेवोच्यते। मिथ्या क्रिया पूर्ववादीत्यनेन यस्य साधकमस्ति असौ साधयेदित्युच्यते। कारणोत्तरे पुनरुत्तरवादिन एव साध्यं, 'कारणात्पूर्वपक्षोऽप्युत्तरत्वं प्रतिपद्यत' इति वचनात्। तेन मिथ्योत्तरे 'पूर्ववादी'त्यनेन कारणोत्तरे उत्तरं सुष्ठूक्तम्। *व्यनि.

(४) असंकीर्णं संकरप्रयुक्तव्यवहारयौगपद्यासंभवदोषाभावात्। अतोऽन्यथा संकीर्णमिति शेषः। +व्यप्र.६५

## व्यासः

उत्तरदाने कालातिपातदोषापवादविचारः

**[1]राजदैवकृतो दोषस्तस्मिन्काले यदा भवेत्।**
**अवधित्यागमात्रेण न भवेत्स पराजितः॥**
**[2]राजदैवकृतं दोषं साक्षिभिः प्रतिपादयेत्।**
**जैह्म्येन वर्तमानस्तु दण्डो दाप्यस्तु तद्धनम्॥**

अवध्यतिक्रमहेतोः राजदैविकस्य प्रमितौ न तदति-

* शेषतात्पर्यं मितावत्। + सर्वं व्याख्यानं मितावत्।

(१) **व्यचि.**१७; **व्यत.**२०३ वधित्याग (वध्ययोग); **वीमि.**२१७ (राजदैवं ततो दोषास्तस्मिन्काले यदा न चेत्); **सेतु.**१०२.

(२) **व्यचि.**१७ जैह्म्येन (भैक्ष्येण) प्यस्तु (प्यश्च); **वीमि.**२१७ जैह्म्येन (भैक्ष्येण).

क्षामकोऽपराध्यति, जैह्म्यात्तु तदतिक्रमणे दण्ड्यः भङ्गी च भवतीत्यर्थः ।   *व्यचि.१७

उत्तरचतुष्टयस्वरूपम्

**साध्यस्य सत्यवचनं प्रतिपत्तिरुदाहृता ।**
**कारणं स्यादवस्कन्दो मिथ्या स्यात्साध्यनिन्हुतिः ॥**

(१) धारयसीत्यभियुक्तस्य धारयामीत्युत्तरं संप्रतिपत्तिः साध्यस्य विधानात् । न तु विप्रतिपत्त्या न्यायार्थमागतस्य कथं संप्रतिपत्तिरेवेति वाच्यम् । यतो भाषावादिनो मूर्खत्वेनापटुवाक्तया वा कदाचित् भाषादोषादेवायं हीयते इति भाषाविमर्षपर्यन्तं विप्रतिपन्नस्यापि भाषार्थं सम्यगवगम्य तन्निषेधार्थं सम्यगुत्तरासंभवाद्विद्वत्सभायां चासत्यवचनमत्यन्तमधर्मकरं परोक्तपराजयाय च द्विगुणं राजदण्डं वादिना च वैरमित्यादिप्रतिसंदधतः संप्रतिपत्त्युत्तरं भवत्येव एतेभ्य एव निस्तारात् उत्तरमपि, सिद्धसाधनेनाऽपि संप्रतिपत्तुर्वादिनः प्रत्यवस्थानमिति चोत्तरता ।   व्यमा.३००

(२) साध्यस्य भाषितस्य सहेतुकसाध्यस्य शब्दतोऽर्थतो वा निह्नवो मिथ्योत्तरम् । केवलसाध्यनिह्नवस्तु संप्रतिपत्तिभिन्नेष्वेव त्रिष्वप्युत्तरेषु समान इति द्रष्टव्यम् ।   व्यचि.१८

(३) यथा रूपकशतं मह्यं धारयसीत्युक्ते सत्यं धारयामि दास्यामीति च । यद्यपि भाषार्थस्यानिराकरणादनुत्तरत्वमस्याभाति, तथाप्यभियोक्त्रा साध्यतयोपन्यस्तस्य सिद्धत्वोपन्यासात् साध्यत्वनिराकरणादुत्तरत्वमस्यावसेयम् । तथा च स्मरणम्— 'अनुक्त्वा कारणं यत्र पक्षं वादी प्रपद्यते । प्रतिपत्तिस्तु सा ज्ञेया कारणे दूषणं पृथक्' ॥ कारणं परोक्तहेतुदूषणम् । वादी प्रत्यर्थी । कारणे कारणोत्तरे । पृथक् दूषणं भवेदित्यर्थः । न चास्याः सिद्धसाधनत्वेन सदुत्तरत्वे पूर्ववादिनो निग्रहस्थानं स्यादिति शङ्क्यम् । इष्टापत्तेः । पराजयेऽपि पूर्ववादिनो दण्डः परं न भवति । अपराधाभावात् । वाचस्पतिस्तु तत्त्वनिर्णिनीषुकथायाः सिद्धसाधनस्यादोषत्वान्न निग्रहोऽपीत्याह । न चैवं धर्माधिकरणप्रवेशपक्षलिखने पूर्ववादिनो वृथेति वाच्यम् । प्राग्विप्रतिपन्नस्यानुतापवतः प्रत्यर्थिनः पश्चादपि संप्रतिपत्तिसंभवात् । संधिकरणोत्तरमिव । संधिकरणं च निरूपयिष्यते । मिथ्योत्तरं तु न धारयामीत्यादि । यथाह कात्यायनः— 'अभियुक्तोऽभियोगस्य यदि कुर्यादपह्नवम् । मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः' इति ॥ व्यासोऽपि— मिथ्या स्यात्साध्यनिह्नुतिः इति । साध्यस्य सहेतुकसाध्यस्य शब्दतोऽर्थतो वा निह्नवो मिथ्योत्तरमित्यर्थः । केवलसाध्यनिर्ह्नवस्य संप्रतिपत्तिभिन्नोत्तरान्तरेष्वपि प्रसङ्गादिति वाचस्पतिः । तच्चिन्त्यम् । सहेतुकसाध्यनिह्नवस्य तत्रापि संभवात् । तस्मादपह्नवमात्रं कारणाद्यसंवलितं मिथ्योत्तरम् । कारणप्राङ्न्यायसंवलितं तूत्तरान्तरमिति वयम् ।   व्यप्र.५६–५७

[1] **मिथ्यैतन्नाभिजानामि मम तत्र न संनिधिः ।**
**अजातश्चास्मि तत्काले इति मिथ्या चतुर्विधम्* ॥**

(१) चतुर्ष्वपि ऋणग्रहणार्थकत्वे हेत्वन्तरमुखेन धार्यमाणस्यानुपपत्तिं ब्रुवतः सहेतुसाध्यापह्नुतवन्मिथ्योत्तरम् ।   व्यमा.३००

(२) अत्र मिथ्यैतदिति शब्दतः न जानामीत्यादिकं त्रिकमर्थतोऽपह्नवः ।   +व्यचि.१९

(३) अत्र मिथ्यैतदिति कण्ठतो न जानामीत्यादि त्रयं अर्थतोऽपन्हवः । 'न जानामि' इति योग्याऽस्मरणप्रतिपादनद्वाराऽभावप्रतिपादकम् । वाराणस्यां त्वया ऋणं गृहीतमिति भाषायां वाराणस्यां नासं इति, चत्वारिंशे वर्षे त्वया गृहीतमिति भाषायां न हि तदा जात इति चावापोद्वापदर्शनेनाभावबोधकम् । त्वत्पित्रा शतं सुवर्णानां गृहीतमिति भाषायां नाऽहं जानामीति

* व्यत., सेतु. व्यचिवत् ।

(१) **व्यमा.**३००:३०२ कारणं (कारणे) उत्त.; **स्मृसा.** ९२ न्हुतिः(न्हवः) चतुर्थपादः, हारीतः; **व्यचि.**१८ निन्हुतिः (निर्ह्नतिः); **व्यसौ.**२९ चतुर्थपादः, हारीतः; **वीमि.**२।७; **व्यप्र.**५६ पू.:५७ चतुर्थपादः.

* व्याख्यानविस्तरः 'श्रुत्वाभाषार्थम्' इत्यादिकात्यायनश्लोके (पृ.१७४) द्रष्टव्यः ।

+ व्यत., चन्द्र., व्यप्र., सेतु. वाक्यार्थो व्यचिवत् ।

(१) **व्यमा.**३०० इति (एवं) धम् (धा); **व्यक.**२८ मम (तदा); **पमा.** ७३ व्यकवत्, क्रमेण प्रजापतिः; **व्यचि.**१९; **व्यनि.** धम् (धा) हारीतः; **व्यत.**२०७ व्यासनारदौ; **व्यसौ.** २४ इति मिथ्या (मिथ्यैव स्यात्); **वीमि.**२।७; **व्यप्र.**५७ व्यकवत्; **व्यउ.**३८ मम (तदा) ले (लं); **सेतु.**१०६ धम् (धा) व्यासनारदौ; **विव्य.**७.

तूत्तरप्रतिरूपकं न तु मिथ्योत्तरम् । न चैवमुत्तराभावाद्भाषितुर्जय इति वाच्यम् । धर्मव्यवहारेण छलस्यावश्यनिरस्यत्वेन तत्र स्थापकेन ग्रहणस्यावश्यप्रमापणीयत्वात् । अत एव प्रकाशक्रये नाष्टिकेनादत्तत्वादिकमपि प्रमापणीयमिति वदन्ति । अत्र च हेत्वसिद्धिर्भाषायां दोषः । *वीमि. २।७

अनेकविधोत्तरयौगपद्ये ग्राह्यमुत्तरम्

**[१]मिथ्योत्तरं कारणं च स्यातामेकत्र चेदुभे ।**
**सत्यं वाऽपि सहान्येन तत्र ग्राह्यं किमुत्तरम् ॥**
**[२]मिथ्याकारणयोर्वाऽपि ग्राह्यं कारणमुत्तरम् ।**
**यत्प्रभूतार्थविषयं यत्र वा स्यात् क्रियाफलम् ।**
**उत्तरं तत्तु विज्ञेयमसंकीर्णमतोऽन्यथा ॥**

(१)अस्यार्थः—यदेकोत्तरावयविनि मिथ्याकारणरूपमवयवद्वयं परस्पराविरुद्धं, सत्येन वा सहावयवत्रयं, तदा क्रियैकत्वार्थमवयवविशेषग्रहणमिति ब्रूते । अस्य तूत्तराभासत्वे व्यासवचनं निर्विषयं स्यात्, तस्माच्छताभियोगे शतग्रहणं मिथ्या पञ्चाशदेव गृहीतास्ते च परिशुद्धा इति मिथ्यांशकारणांशयोस्तुल्यविषयत्वात् कारणोत्तरं ग्राह्यम् । यदि च शतं मिथ्या पञ्चविंशतिः पुराणा गृहीतास्ते च परिशुद्धा इति मिथ्यांशस्य प्रभूतार्थविषयत्वात् मिथ्योत्तरग्रहणं (तदा) पूर्ववादिन एव क्रिया इत्यर्थः । सत्यमिथ्याकारणैरपि संकीर्णोदाहरणं यथा—नवत्यभियोगे मिथ्यैतत् षष्टिपुराणा एव गृहीतास्तत्रापि त्रिंशत् परिशुद्धास्त्रिंशत् धारयामि इति, तत्रापि कारणोत्तरमेव ग्राह्यम् । मिथ्याकारणयोर्वाऽपीत्यपिशब्देन त्रिभिरपि संसृष्टे कारणमेव ग्राह्यमिति दर्शितत्वात् । प्रभूतार्थविषयत्वं च कारणोत्तरग्रहणापवादकम् । द्वयोरेवापवादकं 'यत्र वा स्यात् क्रियाफलम्' इति । क्रिया हि पत्रिकादिः, तस्याः फलं सम्यगिष्टनिर्णयः । तत्र यदि शतग्रहणे पत्रमस्ति, शतापह्नवे च पञ्चाशत् विशोधने साक्षिणस्तदा मिथ्योत्तरमेव ग्राह्यम् । लिखितस्य साक्षिभ्यो बलवत्वेन सम्यङ्निर्णयफलत्वादित्यर्थः । तदेतदुक्तम्—'यत्प्रभूतार्थविषयं यत्र वा स्यात्क्रियाफलम्' इति । ननु युक्तेर्भूयोऽनुरोधात् प्रभूतार्थक्रियाग्रहणस्यैव विनिगमनावारणत्वात् बलवत्वाच्च बलवत् प्रमाणग्रहणं, मिथ्याकारणयोस्तु तुल्यविषयत्वं, क्रियायाश्चाऽविशेषे, कुतः कारणग्रहणम् । मिथ्योत्तरे सति ग्रहणस्य प्रतिपाद्यत्वात्, कारणे च सति परिशोधनस्य ज्ञाप्यत्वात्, भावाभावरूपेणाऽपि कुपण्डितोक्तेनेति (विशेषः)?

उच्यते । ग्रहणस्य चिरातीतत्वात् परिशोधनस्य त्वनन्तरभावित्वेन स्मरणार्हतया कारणस्यैव ग्रहणम् । अस्यैव विनिगमनाकारणत्वात् । कश्चित्तु वचनादित्याह तदयुक्तं, वचनस्याऽदृष्टार्थतापत्तेः । अस्मदुक्तोदाहरणेषु संकीर्णोत्तरवादिनो हेयवचना एव । *व्यमा. ३०४-३०५

(२) अस्यार्थः—एकत्रोत्तरावसरे मिथ्योत्तरं कारणं चोत्तरवादी ब्रूते । यथा मदीया गौरस्मिन्कालेऽनेनापहृता साऽस्य गौर्विद्यते गृह इति पूर्ववादिनोक्ते अन्यो ब्रूते—मिथ्यैतत्किन्त्वस्मद्गृहजातैवेति । तथा चौरोऽयं यतो देवदत्तस्य गौर्विनष्टा साऽस्य गृहे वर्तत इति पर्यनुयुक्तो ब्रूते—सत्यं देवदत्तस्य गौरस्मद्गृहे वर्तते, किन्तु नाहं चौरो यतोऽस्मद्गोधनेन सार्धमस्मद्गृहमागतेति । अत्र प्रत्यवस्कन्दांश एवोत्तरत्वेन ग्राह्यः । यद्वा यस्मिन्नर्थे साधिते द्वितीयोऽर्थात्सिध्यति तत्प्रभूतविषयमुत्तरं ग्राह्यम् । यत्र वांऽशे प्रमाणफलं हानमुपादानं वा संभवति स ग्राह्यः । अतः प्रकारात्प्रकारान्तरमसंकीर्णमेव वाच्यं न तु संकीर्णमिति । अप. २।७

(३) प्राङ्न्यायेन सह सर्वथैव संकरानुपपत्तेरिति तन्नोक्तम् । +व्यत. २०९

(४) यथा मिथ्योत्तरमेकत्रांशे सर्वथा समान एवांशान्तरे कारणं तत्र कारणोत्तरं ग्राह्यम् । अत्रोत्तरवादिन एव क्रियानिर्देशः । यथा मत्क्रीतोऽयं वृषभस्तमयं त्यजत्वित्युक्ते मिथ्यैतद्वदसि किन्तु देवदत्तस्याऽयं तेन मयि विक्रीत इति । यत्र मिथ्योत्तरं प्रभूतविषयं कारणमल्प-

---

* वाक्यार्थो व्यचिवत् ।

(१) **व्यमा.** ३०४ सत्यं (स्वयं) तत्र (एव); **अप.** २।७; **व्यक.** २९; **स्मृचि.** ४० वा (चा) व्यासहारीतौ; **व्यत.** २०९ वा (चा) न्येन (नेन) व्यासहारीतौ; **व्यसौ.** २५; **सेतु.** १०८ व्यतवत्, व्यासहारीतौ; **विव्य.** ७ सत्यं (स्वयं) तत्र (एव)

(२) **व्यमा.** ३०४ यत् (तत्) तु (च्च); **अप.** २।७ तत्तु वि (तत्र तत्); **व्यक.** २९ अपवत्; **स्मृचि.** ४० व्यासहारीतौ; **व्यत.** २०९; **व्यसौ.** २५ अपवत्; **सेतु.** १०८; **विव्य.** ७.

* व्यक. वाक्यार्थो व्यमावत् । उदाहरणानि त्वन्यानि । सेतु. व्यमागतम् । + शेषं व्यमावत् ।

विषयं, तत्र मिथ्योत्तरमेव ग्राह्यम् । पूर्ववादिन एव क्रिया । कारणस्य प्रभूतविषयत्वे तु कारणोत्तरमेव ग्राह्यम् । अत्रोत्तरवादिन एव क्रिया, यत्प्रभूतार्थविषयमित्यभिधानात् । यदि तु मिथ्याकारणयोर्द्वयोरपि तुल्यार्थविषयत्वं, तदा यस्य लिखितसाक्षिभुक्तीनां मध्ये अन्यतमक्रियायाः सम्यक् शीघ्रं फलं प्रत्येतुं शक्यते तत्रैकस्यैव क्रियानिर्देशः 'यत्र वा स्यात्क्रियाफलम्' इति वचनात् । यत्र मिथ्याकारणसंप्रतिपत्तीनामंशभेदेन सांकर्यं तत्रापि मिथ्याकारणसंकरवदेव व्यवस्था । सत्यस्याविचार्यत्वेन मिथ्याकारणयोरविचारात् । यत्र शतपुराणाभियुक्तो वक्ति न मया शतं पुराणा गृहीताः किन्तु पञ्चाशत्पुराणाः गृहीतास्तत्राऽपि पञ्चविंशतिपुराणाः परिशोधिताः पञ्चविंशतिपुराणान् धारयामीति । तत्रोत्तरमसंकीर्णं संकरदोषशून्यम् । अतः अस्मादन्यथा संकीर्णमित्यर्थः । चन्द्र.११८-११९

## वृद्धशातातपः

चतुर्विधमुत्तरम्

[1]मिथ्या संप्रतिपत्त्या वा प्रत्यवस्कन्दनेन वा ।
प्राङ्न्यायविधिना चैवमुत्तरं तु चतुर्विधम् ॥

वृद्धशातातपवचनं तु बहुज्ञजीर्णे (?) कृतनिबन्धे अस्माभिर्दृष्टं, न पुनर्भोजदेवे । व्यमा.३०५

षड्विधमुत्तरम्

[2]मिथ्यापदेशसंसृष्टं विप्रतीतिस्तथा परा ।
विज्ञेया व्यवहारेषु षडेवोत्तरजातयः ॥
[3]अर्थान्तरापदेशेन पूर्वपक्षार्थनिह्नवे ।
मिथ्यापदेशसंसर्गात् तत्संसृष्टमुदाहृतम् ॥
गृहे जातेऽथवा क्रीते प्रतिज्ञाते गवादिके ।
गृहे जातो ममापीति विप्रतीत्युत्तरं हि तत् ॥

## वृद्धवसिष्ठः

चतुर्विधमुत्तरम्

[4]सत्यानृते कारणं च प्राङ्न्यायश्चोत्तरं पृथक् ॥

[5]इति प्रत्यवस्कन्दनस्थाने कारणं वदता अनयोरेकत्वं दर्शितम् । तत्राबाधकरूपं प्रत्युत्तरमेकं, निषेधात्मकं त्रिविधम् । त्रिभिरेव वादिनः साध्यनिषेधात् ।

कारणविशेषो हि प्रत्यवस्कन्दनम् । कारणं त्वनभ्युपगम्यापीति । सामान्यकारणं तृतीयमुत्तरम् । अत एव जितेन्द्रियेण प्रपद्येत्युपलक्षणमित्युक्तम् । दीक्षितप्रभृतिभिस्तु प्रतिपाद्येति व्याख्यातम् । व्यमा.३००,३०२

## बृहद्यमः

[1]समविद्योत्तरं चैव प्रत्यवस्कन्दनं तथा ।
पूर्वं न्यासविधिश्चैव उत्तरः स्याच्चतुर्विधः ॥

## शुक्रनीतिः

सद्योविवादविषयाः

[2]मनुष्यमारणे स्तेये साहसे स्तेयिके सदा ।
न कालनियमस्तत्र सद्य एव विवेचनम् ॥

प्रतिपत्त्युत्तरम्

[3]अङ्गीकृतं यथार्थं यद्वाद्युक्तं प्रतिवादिना ।
सत्योत्तरं तु तज्ज्ञेयं प्रतिपत्तिश्च सा स्मृता ॥

प्राङ्न्यायत्रैविध्यम्

[4]जयपत्रेण सभ्यैर्वा साक्षिभिर्भावयाम्यहम् ।
मया जितः पूर्वमिति प्राङ्न्यायस्त्रिविधः स्मृतः ॥

प्रतिज्ञोत्तराविचारणे सभ्यदण्डः

अन्योन्ययोः समक्षं तु वादिनोः पक्षमुत्तरम् ।
न हि गृह्णन्ति ये सभ्या दण्ड्यास्ते चौरवत्सदा ॥

## संग्रहकारः

उत्तरलेखकालः

[5]अनन्यार्थमहीनार्थं न्यायागमसमन्वितम् ।
अन्यूनानधिकाभ्रष्टमनन्याक्षरसंभवम् ॥
[6]भाषायामिति पत्रेषु लिखितायामनन्तरम् ।
प्रत्यर्थिनः श्रुतार्थस्य कालोऽयं दातुमुत्तरम् ॥

अनन्यार्थमित्यादि लक्षणजातं यथा भवति तथा भाषायां लिखितायामित्यर्थः । स्मृच.४१

---

(१) व्यमा.३०५. (२) व्यमा.३०५ देश (देशं) (३) व्यमा.३०५ न्तरा (न्तरो) देश (देशं).
(४) व्यमा.३०५. (५) व्यमा.३००,३०२; व्यनि.; प्रका.२७; समु.२१.

(१) बृयस्मृ.५।२४-२५. (२) शुनी.४।५५३. (३) शुनी.४।६४२. (४) शुनी.४।६४७-४८. (५) स्मृच.४१; सवि.९१ महीना (मभिन्ना) का (कं); प्रका.२५; समु.२०. (६) स्मृच.४१; सवि.९१; प्रका.२५ पू.; समु.२०.

## कौटिलीयमर्थशास्त्रम्

पराजयहेतवः, पराजितदण्डः, कालातिपातेऽपि प्रतिवचनाप्रदाने अभियुक्तस्य दण्डः ।

**निबद्धं पादमुत्सृज्यान्यं पादं संक्रामति । पूर्वोक्तं पश्चिमेनार्थेन नाभिसंधत्ते । परवाक्यमनभिग्राह्यमभिग्राह्यावतिष्ठते । प्रतिज्ञाय देशं निर्दिशेत्युक्ते न निर्दिशति । हीनदेशमदेशं वा निर्दिशति । निर्दिष्टाद् देशादन्यं देशमुपस्थापयति । उपस्थिते देशेऽर्थवचने नैवमित्यपव्ययते । साक्षिभिरवधृतं नेच्छति । असंभाष्ये देशे साक्षिभिर्मिथः संभाषते । इति परोक्तहेतवः ।**

**परोक्तदण्डः पञ्चबन्धः । स्वयंवादिदण्डो दशबन्धः । पुरुषभृतिरष्टांशः । पथिभक्तमर्घविशेषतः । तदुभयं नियम्यो दद्यात् ।**

**अभियुक्तो न प्रत्यभियुञ्जीत, अन्यत्र कलहसाहससार्थसमवायेभ्यः । न चाभियुक्तेऽभियोगोऽस्ति ।**

**अभियोक्ता चेत् प्रत्युक्तस्तदहरेव न प्रतिब्रूयात्, परोक्तः स्यात् । कृतकार्यविनिश्चयो ह्यभियोक्ता, नाभियुक्तः ।**

**तस्याप्रतिब्रुवतस्त्रिरात्रं सप्तरात्रमिति । अत ऊर्ध्वं त्रिपणावरार्ध्यं द्वादशपणपरं दण्डं कुर्यात् । त्रिपक्षादूर्ध्वमप्रतिब्रुवतः परोक्तदण्डं कृत्वा यान्यस्य द्रव्याणि स्युस्ततोऽभियोक्तारं प्रतिपादयेदन्यत्र वृत्त्युपकरणेभ्यः । तदेव निष्पततोऽभियुक्तस्य कुर्यात् । अभियोक्तुर्निष्पातसमकालः परोक्तभावः । प्रेतस्य व्यसनिनो वा साक्षिवचनासारम् । अभियोक्ता दण्डं दत्वा कर्म कारयेत् । आधिं वा स कामं प्रवेशयेत् । रक्षोघ्नरक्षितं वा कर्मणा प्रतिपादयेद् अन्यत्र ब्राह्मणादिति ।**

पराजयहेतूनाह—निबद्धमित्यादि । निबद्धं पूर्वलिखितं पादमुत्सृज्यान्यं पादं संक्रामति । तद्यथा—वाक्पारुष्यमिति पूर्वं विलिख्य पश्चाद् दण्डपारुष्यं वक्ति । पूर्वोक्तं पश्चिमेनार्थेन नाभिसंधत्ते इति । यथा—पूर्वं पशुहिरण्यधान्यानि देयान्युक्त्वा पश्चाद् हिरण्यमात्रं देयमिति वक्ति, न तु सर्वं निर्दिशति । परवाक्यमिति । प्रत्यर्थ्युक्तं, अनभिग्राह्यं अदूषणीयमेव, अभिग्राह्य दूषयित्वा, अवतिष्ठते तूष्णीमास्ते दुष्टत्वं न समर्थयते । प्रतिज्ञाय देशमित्यादि । त्रयो मे साक्षिणः सन्तीत्येवमादिना संख्याविशेषेण साक्षिणं प्रतिश्रुत्य, निर्दिशेत्युक्ते न निर्दिशति तान् नामादितो निर्दिशेति कथिते नोद्दिशति । हीनदेशं अदेशं वा निर्दिशति प्रतिज्ञातसंख्यान्यूनसंख्यान् साक्षिण उद्दिशति स्यालमातुलादीन् वा साक्षित्वानर्हान् उद्दिशति । निर्दिष्टाद् देशादिति । नामत उद्दिष्टात् साक्षिणः, अन्यं, देशं साक्षिणं, उपस्थापयति संनिधापयति । उपस्थिते देश इति । संनिहिते साक्षिणि, अर्थवचने स्वदृष्टमर्थं ब्रुवाणे, नैवमिति अपव्ययते नैवंविधोऽर्थ इति वदन्नपसरति । अपपूर्वो व्ययतिरनभ्युपगमार्थक आत्मनेपदी मृग्यः । साक्षिभिरिति । साक्षिवाक्यैः, अवधृतं नेच्छति निर्णीतं नानुमन्यते । असंभाष्ये देश इति । संभाषणानर्हे देशे, साक्षिभिः सह, मिथः संभाषते रहसि मन्त्रयते । इति एवं एतेऽन्यपादसंक्रमादयः साक्षिमिथस्संभाषान्ताः, परोक्तहेतवः उक्तं वचनं समर्थनं तद्विपरीतं परोक्तं असमर्थनं तेन च तन्मूलः पराजय इह लक्ष्यते पराजयस्य हेतव इत्यर्थः । पराशब्दोपसृष्टस्य वचेः पराजिवत् स्वार्थविपरीते वृत्तिरिह द्रष्टव्या ।

पराजितदण्डमाह—परोक्तदण्डः पञ्चबन्ध, इति । साक्षिनिमित्तस्वपक्षासिद्धिमूलस्य पराजयस्य दण्डः पराजितदेयस्यार्थस्य पञ्चमांशो भवति । स्वयंवादिदण्डो दशबन्ध इति । विनैव साक्षिणं स्वयं वादं कृतवतः पराजितस्य दण्डः पराजितदेयस्य दशभागः । पुरुषभृतिरष्टांशः व्यवहारद्रष्टृकर्मकरपुरुषवेतनमष्टभागः, स च

(१) कौ.३।१.

सामर्थ्यात् कार्षापणस्यैव ग्राह्यः । पथिभक्तमिति । साक्ष्यानेतॄणां मार्गगतागतभोजनार्थंदेयम् । अर्घविशेषतः तण्डुलादिमूल्यभेदमनुसृत्य, कल्पनीयमिति शेषः । तदुभयमिति । पुरुषभृतिं पथिभक्तं च, नियम्यः पराजितः, दद्यात् ।

अभियुक्त इति । केनचित् कृताभियोगः, न प्रत्यभियुञ्जित अर्थादभियोक्तारं अनिस्तीर्णे स्वाभियोगे । तत्रापवादः—अन्यत्र कलहसाहससार्थसमवायेभ्य इति । कलहसाहसादिषु तु विषये प्रत्यभियुञ्जीतैव । अभियुक्तमपि केनचित् तदन्यो नाभियुञ्जीतेत्याह—न चाभियुक्त इत्यादि । यदाह योगीश्वरः—'अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् । न चाभियुक्तमन्येन नोक्तं विप्रकृतिं नयेत्' इति ॥ अभियोक्तेति । सः, प्रत्युक्तः अभियुक्तदत्तोत्तरः, तदहरेव न प्रतिब्रूयाच्चेत् यस्मिन्दिने प्रत्युक्तस्तस्मिन्नेव दिने प्रत्युत्तरमभियुक्तोक्त्युपमर्देन स्वपक्षसमर्थनक्षमं न दद्याच्चेत्, परोक्तः स्यात् सद्यः प्रतिवचनाभावमात्रेण स पराजितो मन्तव्य इत्यर्थः । कुत इत्याह—कृतकार्यविनिश्चयो ह्यभियोक्ता नाभियुक्त इति । इदमीदृशमेवं साधनीयमिति प्रागेव संप्रधार्य कार्ये प्रवृत्त इत्यभियोक्ता सपदि प्रत्युत्तरदानप्रतिबद्धः, अन्यस्तु संप्रधारणीयकार्यगतित्वान्न तथेत्यर्थः।

अभियुक्तप्रतिवचनकालावधिमाह— तस्याप्रतिब्रुवतस्त्रिरात्रं सप्तरात्रमिति । तस्य अभियुक्तस्य श्रुतार्थस्य प्रतिवचनदानकालावधिस्त्रिरात्रात् प्रभृति आ सप्तरात्राद् अनुमन्तव्यः । अत ऊर्ध्वमिति । सप्तरात्रात् परतः, त्रिपणावरार्ध्यं त्रिपणोऽवरार्ध्यः अवरो यस्मिन् तं तथाभूतं, द्वादशपणपरं द्वादशपणोत्तमं, दण्डं कुर्यात् । त्रिपक्षात् पक्षत्रयात्, ऊर्ध्वम्, अप्रतिब्रुवतः अभियुक्तस्य, परोक्तदण्डं पराजितदण्डं पञ्चबन्धरूपं, कृत्वा, यानि अस्य अभियुक्तस्य, द्रव्याणि धान्यहिरण्यलोहदारुभाण्डादीनि स्युः, ततः तैर्द्रव्यैस्तदुद्धृतद्रव्यैर्वा, अभियोक्तारं प्रतिपादयेत् यथाप्रार्थितधनभाजं कुर्यादित्यर्थः । किं सर्वैरेवाभियुक्तद्रव्यैः, नेत्याह—अन्यत्र वृत्त्युपकरणेभ्य इति । कृष्यादिजीविकार्थानि हलखनित्रकुद्दालानि वर्जयित्वा । तदेवेति । अप्रतिब्रुवतोऽभियुक्तस्य यदुक्तं विधानं तदेव, निष्पततोऽभियोक्तृसंनिधानेऽपसरतः अभियुक्तस्य, कुर्यात् । अभियोक्तुः, निष्पातसमकालः निष्पातोऽभियुक्तसंनिधानेऽपसरणं तत्समानकालः, परोक्तभावः पराजितत्वं मन्तव्यम् । प्रेतस्य व्यसनिनो वा साक्षिवचनाः सारमिति । प्रमीतस्य विपद्गतस्य वाऽभियोक्तुरथवाऽभियुक्तस्य धनं साक्षिभिर्विभाव्यमानाः तत्पुत्रादयो दद्युर्गृह्णीयुर्वा । अभियुक्ते पराजिते निरुपाये किमभियोक्ता कुर्यादित्यत्राह—अभियोक्तेति । सः, दण्डं पराजयदण्डं, दत्वा स्वयं राज्ञे, कर्म कारयेत्, अर्थादभियुक्तम् । आधिं वा स कामं प्रवेशयेदिति । अथवा, सः अभियोक्ता अभियुक्तबन्ध्वन्यतममाधित्वेन कर्मकरणार्थं गृह्णीयाद् यथेच्छम् । रक्षोघ्नेत्यादि । वाशब्दश्चार्थे । रक्षोघ्नरक्षितं अकुशलपरिहारार्थः शिरसि सितसर्षपप्रक्षेपो रक्षोघ्नरक्षा तद्युक्तं यथा भवति तथा, कर्मणा प्रतिपादयेत् योजयेत्, अर्थात् पराजितं तदर्पितमाधिपुरुषं वा । एतेन, कर्म कारयितुरात्मरक्षणे प्रयत्नः कर्तव्यतयोपदिष्टो द्रष्टव्यः । इतरथा हि पराजित आधिपुरुषो वा कर्म कुर्वन्नवेतनकर्मकरणनिर्बन्धमात्मनोऽसहमानः कारयितारं कदाचिज्जिघांसेदिति । 'कर्म कारयेदि'त्यस्य विधेः संकोचमाह—अन्यत्र ब्राह्मणादितीति । इतिशब्दात् क्षत्रियादिरपि तपस्वी ब्राह्मणप्रकारो ग्राह्यः । श्रीमू.

विविधानि वादहानिकारणानि

**दृष्टदोषः स्वयंवादः स्वपक्षपरपक्षयोः ।**
**अनुयोगार्जवं हेतुः शपथश्चार्थसाधकः ॥**
**पूर्वोत्तरार्थव्याघाते साक्षिवक्तव्यकारणे ।**
**चारहस्ताच्च निष्पाते प्रदेष्टव्यः पराजयः ॥**

उक्तसाक्ष्याद्यतिरेकेण पञ्च व्यवहारसाधनान्याह—दृष्टेत्यादि । दृष्टदोषोऽर्थसाधकः दृष्टदोषः उपलब्धापराधचिह्नः दह्यमाने गृहे ज्वलितालातपाणिस्तदन्तस्तिष्ठन् जनः स्वाग्निदत्वानुमापकः, कायगतनवव्रणक्षरत्क्षतजोक्ष्यमाणभूमेर्वा कस्यचित् रुधिरार्द्रशस्त्रपाणिः पार्श्वे तिष्ठन् स्वात्मनस्तच्छेतृत्वानुमापकः । स्वयंवादः मयैवेदं कृतमिति वादः, अर्थसाधकः अर्थनिर्णायकः । स्वपक्षपरपक्षयोरनुयोगार्जवं वादिप्रतिवादिनोरजिह्मप्रश्नोत्तरकरणं, अर्थसाधकम् । यथा—पथि शकटचक्रारोपणेन

(१) कौ.३।१.

पादो मे भग्नः शाकटिकेनेति तं प्रति कस्यचिदभियोगे कुत एवं कृतवानसी'ति धर्मस्थेन पृष्टं शाकटिकं, भयवशात् क्षणं तूष्णीम्भूतं दृष्ट्वा 'किमयं मूक' इति शङ्कमाने प्राड्विवाके 'बहुवारमेष मां शकटनिकटादपसरेति शृण्वत्सु शकटगजनेषु तदोक्तवान्, इदानीं तु मूक इव लक्ष्यते' इत्यभियोक्तुः प्रश्नोत्तरवचनमृजुभावेन प्रवृत्तं अभियोज्यनिरपराधत्वसमर्थकं सत् व्यवहारनिर्णयाय कल्पत इत्येवञ्जातीयं द्रष्टव्यम्। हेतुरर्थसाधकः उपपन्नकारणप्रदर्शनमर्थनिर्णायकं, यथा— पारदारिकत्वविषयेऽभियोगेऽभियुक्तेनात्मनः क्लीबत्वनिवेदनम्। शपथः पुत्रादिभिः शपनं उपलक्षणाद् दिव्यक्रिया च, सोऽर्थसाधकः।

पराजयनिमित्तान्याह—पूर्वोत्तरेत्यादि। पूर्वोत्तरार्थव्याघाते चोरोऽयमिति शङ्क्यमानस्य 'क्व भुक्तं क्व शयितं त्वये'त्यादि पृष्टस्य प्रत्युक्तौ पूर्वोत्तरविरोधे, साक्षिवक्तव्यकारणे साक्षिणां वक्तव्यस्याप्रामाण्यदोषस्य कारणे बन्धुत्वोपकार्यत्वादिरूपे निमित्ते, चारहस्ताच्च निष्पाते बन्धनागारिकहस्तात् प्रच्छन्नपलायने च सति, पराजयः, प्रदेष्टव्यः स्थापयितव्यः। श्रीमू.

## मनुः

दुष्टत्वलिङ्गानि

**[१]बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम्।**
**स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च * ॥**

(१) तथा चेदमाह। अनुमानेनापि सत्यानृतवादिता व्यवहारतः साक्षिणां च निश्चेतव्या इति श्लोकार्थः। अतश्च स्वरादिग्रहणं प्रदर्शनार्थम्। तेन यन्निश्चितं लिङ्गं तेन परिच्छिन्द्यादित्युक्तं भवति न पुनः स्वरादिभिरेव, सव्यभिचारत्वात्तेषाम्। अनुचितसभाप्रवेशा हि महाप्रकृतिदर्शनेन सत्यकारिणोऽपि स्वभावतो विक्रियन्ते। प्रगल्भास्तु संवृताकारा भवन्ति। स्वरश्च वर्णश्चेङ्गितं च स्वरवर्णेङ्गितानि तेषामाकाराः स्वरवर्णेङ्गिताकाराः। आकारो विकारः। स्वाभाविकानां हि स्वरादीनामन्यथात्वं तैर्विभावयेन्निश्चिनुयात्। भावमभिप्रायमन्तर्गतं मनुष्याणां विवादिसाक्ष्यादीनाम्। तत्र स्वरस्य विकारो वाचि गद्गदरुदितादि। वर्णस्य गात्ररूपविपर्ययादि। इङ्गितं स्वेदवेपथुरोमाञ्चादि। चक्षुषा संभ्रमक्रोधदृष्टिपातेन। चेष्टितेन हस्तनिक्षेपभ्रूविक्षेपादि[१]ना। [२]स्वसंवेद्यं चैतत्, यद् गुह्यमानमप्यभिप्रायं स्वरादयः प्रकाशयन्ति निपुणतो लक्ष्यमाणाः। यतः प्रसिध्दमेतेषां गूढाभिप्रायप्रकटनसामर्थ्यम्। ×मेधा.

(२) सर्वेभ्यश्च दृष्टेभ्यो दुर्बलमनुमानम्। अनुमानमाह मनुः—बाह्यैरिति। व्यमा.३१३

(३) आकारो देहभवस्वेदरोमाञ्चादिः। *ममु.

(४) आकारो विकृतः। चेष्टितेन स्थानत्यागादिना। एषां च अनन्यथासिद्धेरतिदुर्निरूपत्वात् एभ्यः साक्षी बलवान् इत्यर्थः। +व्यचि.३१

**आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च।**
**नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः॥**

(१) तथा हि, लोके दृष्टशक्ति[३]तामनेन श्लोकेन स्वरादीनां पूर्वोक्तार्थाधिगमेन दर्शयतीत्यपौनरुक्त्यम्। तत्राक्रियन्ते विक्रयन्त इत्याकारा इङ्गितादयः। इङ्गितं व्याख्यातम्। व्यक्तिभेदाद्बहुवचनम्। गतिः पूर्वश्लोकादत्राधिका सा प्रस्खलन्ती स्वभावतोऽन्यथाभूता। भाषितं पौर्वापर्यविरुद्धं वचनम्। वक्त्रविकार आस्यशो[४]षादिः। शेषं पूर्वश्लोके एव व्याख्यातम्। एतैर्विकृतैरन्तर्गतं चित्तं लौकिकैरन्यत्रापि गृह्यत इति समासार्थः। ÷मेधा

(२) अन्तर्गतं निरूढसंद्रूपम्। गोरा.

*गोरा. अशुद्धिसंदेहान्नोद्धृतम्। अप. 'देशाद्देशान्तरं'(यास्मृ. २।१३) इत्यादि याज्ञवल्क्यश्लोके द्रष्टव्यम्।

(१) **मस्मृ**.८।२५; **व्यमा**.३१३; **अप**.२।१५; **व्यक**.३२; **स्मृच**.२५:३४ उत्त.; **पमा**.४० षा (षः) : ५५; **व्यचि**.३१; **स्मृचि**.४१; **व्यत**.२१८; **सवि**.७१ चेष्टि (भाषि); **व्यसौ**.३१; **व्यप्र**.७०; **सेतु**.१११-११२; **प्रका**.१४,२१ सविवत्; **समु**.१०.

× व्यक., मवि. मेधागतम्। * शेषं मेधागतम्। मच ममुगतम्।
\+ शेषं मेधागतम्। व्यत., व्यप्र., सेतु. व्यचिगतम्।
÷ व्यक. मेधागतम्।

(१) **मस्मृ**.८।२६; **गोरा**. गृह्य (ज्ञाय); **व्यमा**.३१३; **अप**.२।१५ रैरि (रेणे); **व्यक**.३२ रैश्च (रेण) गृह्य (लक्ष्य); **मभा**.११।२६; **गौमि**.११।२३ भाषि (हर्षि); **स्मृच**.४९; **पमा**.५५; **व्यनि**. षिते (षणे) नारदः; **स्मृचि**.४१-४२; **सावि**.१०४ व्यनिवत्; **व्यसौ**.३१ व्यनिवत्; **व्यप्र**.७१ गोरावत्; **प्रका**.२१,३१; **समु**.२४; **विव्य**.१० उत्त.

१ (०). २ त्वसं. ३ तोऽनेन. ४ विशेषादिः.

(३) दुष्टस्येति शेषः । ×स्मृच.४९

(४) अन्तर्गतं मनो बुद्धिरूपेण परिणतम् । ममु.

विविधानि वादहानिकारणानि

**अदेशं[१] यश्च दिशति निर्दिश्यापह्नुते च यः ।**
**यश्चाधरोत्तरानर्थान्विगीतान्नावबुध्यते ॥**

(१) उक्तमेवाधमर्णेऽपह्नुवाने धनिना राजा ज्ञापयितव्यः । ईदृशी च ज्ञापना कर्तव्या—अस्मिन्देशेऽस्मिन्काल इदं धनमियद्दैतेन मत्सकाशाद् गृहीतम् । स च पृष्टो भावयति—नैतस्मिन्देशेऽहमभवं योऽनेन धनग्रहणकाल[१] उपदिष्टः । तद्देशं[२] दिशति । अथवा देशसाक्षिणो व्याख्यातास्तान् साक्षिणो देशकालादाव[३]संभवतो निर्दिशति । निर्दिश्य देशादिकमपजानीते—'नैतन्मया निर्दिष्टमि' ति । यश्चाधरोत्तरानर्थान् पौरस्त्यानौपरिष्टांश्च विगीतान् विरुद्धानभिहितान्नावबुध्यते । यद्वा पूर्वं वक्तव्यं तत्परस्माद्वक्ति, यत्परस्तत्पूर्वं क्रमभेदं च वचनगतमात्मनो नानुसंधत्ते, हीनः स इति निर्दिशेत् इति सर्वत्र क्रियानुषङ्गो भविष्यतीति । मेधा.

(२) अदेशमिति । अपदिश्येति । असंभाष्येति । ब्रूहीति । अभियोक्ता दिशेदित्युक्तं, तत्र योऽर्थी तथाविधं देशं निर्दिशति, यत्र दानग्रहणे न संभाव्येते अधमर्णस्य वा तदानीं तत्रावस्थानं न संभवतीति । यश्चादेशादिकं निर्दिश्य न तन्मया निर्दिष्टमित्येवं पश्चादपजानीते, यो वा पूर्वपश्चादुक्तानर्थान् परस्परविरुद्धान्नावगच्छति, यश्चानेन मम हस्तात्सुवर्णं गृहीतमित्येवं निर्देष्टव्यं निर्दिश्य एतत्पुत्रेण गृहीतमित्येवमादिना पुनरपसरति, यो वा प्रतिज्ञाकालोपन्यस्तमर्थं कस्मात्पुनस्तथा राज्यादौ दानग्रहणं कृतमित्येवमादिरूपेण पूर्वपक्षविस्तारकाले प्राड्विवाकेन सम्यक् पृष्टः सन्नन्तर्धत्ते, यश्च संभाषणानर्हे उपह्वरादौ देशे साक्षिभिः परस्परं भाषते, यश्च साक्षिप्रश्नं क्रियमाणं नेच्छति वा, सभातः प्रतिवादिसंनिहिते हठादुत्प्लुत्य गच्छति, अथास्मिन्पूर्वपक्षे किं ब्रूहीत्युक्त उत्तरं च न ब्रूयात्, यो वा प्रतिज्ञातं साक्षिभिर्न विभावयेत्, पूर्वं वा साक्षिगतं न जानीयात् स्वगतस्मयश्चाधरोत्तराणि (?) त्यक्तत्वात्स तस्माद्व्यवहाराद्धीयते । =गोरा.

(३) अदेश्यं निर्णयसमयासंभविनं साक्षिणं यो निर्दिशति । +स्मृच.४७

(४) किञ्च अदेश्यादिषड्भिः श्लोकैरधमर्णोत्तमर्णयोः पराजयहेतूनाह । *मच.

(५) अदेश्यं अनुपयोगासभ्यत्वादिना निर्देशानर्हम् । दिशति कथयति । व्यप्र.७४

(६) हीनलक्षणं पञ्चभिः श्लोकैराह—अदेयं यश्चेति । अदेयं दानादानयोरयोग्यं देशकालादिकम् । ÷नन्द.

(७) योऽधमर्णः अदेश्यं असाक्षिकं दिशति कथयति । च पुनः अदेश्यं असाक्षिकं निर्दिश्य कथयित्वा अपह्नुते निह्नुते च । ÷भाच.

**अपदिश्यापदेशं[१] च पुनर्यस्त्वपधावति ।**
**सम्यक् प्रणिहितं चार्थं पृष्टः सन्नाभिनन्दति × ॥**

(१) पूर्वेणार्धेनोक्तस्यार्थस्य निगमनम् । उत्तरेणानुक्तोऽर्थ उच्यते । यदुक्तम्—'अदेशं यश्च दिशति निर्दिश्यापह्नुते च यः' इति स एवार्थोऽपदिश्येत्यस्य[२] । अदेश एवापदेशः । तमपदिश्य कथयित्वा पुनः पश्चादपधावत्यपसरति । नैतौ देशकालौ मम निश्चितौ, यावत्सुदेशकालाववधारयति । तावदियं[३] पश्चाद् ब्रवीति सोऽपि तस्मादर्थाद्धीयते । सम्यक् प्रणिहितं चार्थमनाकुलं निश्चितमुक्तं यदा पृच्छ्यते, यथा[४]ऽनेनोक्तं तत्र किं ब्रवीषि केन वा प्रमाणेन

=व्यक., मवि. गोरागतम् । ममु. गोरावत् । +शेषं मेधागतम् । * पदार्थो मेधावत् । ÷ शेषं गोरागतम् । × अत्रत्यं गोराव्याख्यानं 'अदेशं यश्चे'ति श्लोके द्रष्टव्यम् । व्यक., स्मृच., ममु., व्यप्र. गोरावत् ।

× शेषं व्याख्यानं 'देशाद्देशान्तरम्' (यास्मृ.२।१३) इत्यादियाज्ञवल्क्यश्लोके द्रष्टव्यम् ।

(१) **मस्मृ**.८।५३ शं (श्यं); **गोरा**. ह्नुते च यः (ह्ववीति च); **व्यक**.३३ शं (श्यं) विगी (विनी) बु (रु); **स्मृच**.४७ शं (श्यं) गीता (हीना); **स्मृसा**.१२१ शं (श्यं); **व्यनि**. शं (श्यं) नारदः; **स्मृचि**.४१ शं (यं) च यः (वयः) नारदः; **व्यसौ**.३२ शं (श्यं); **व्यप्र**.७४ शं (श्यं); **प्रका**.३० स्मृचवत्; **समु**.२३ शं (श्यं).

(१) **मस्मृ**.८।५४ शं (श्यं); **व्यक**.३३ मस्मृवत्; **स्मृच**.४७; **स्मृसा**.१२१ स्त्वप (स्त्वव) प्रणि (च नि); **व्यनि**. स्त्वप (स्त्वव) नारदः; **स्मृचि**.४१ स्त्वप (स्त्वव) चार्थं (वार्थं) नारदः; **व्यसौ**.३२ शं (श्यं) स्त्वप (स्त्वभि) चार्थं (वार्थं); **व्यप्र**.७४; **प्रका**.३०; **समु**.२३ मस्मृवत्.

१ च ग्र. २ तदा देशे दीयते. ३ लाव.

१ शेत्य. २ लोऽव. ३ दियं मह्यमिति. ४ यदा.

स्वपक्षं साधयसीति पृष्टो न संधत्ते[1] कथान्तरं प्रस्तौति, विचारावसानेन किल मे पराजयो भवतीति कालमुपक्षिपामीति तस्यापि पराजय एव । अथवाऽपदेशो व्याजस्तमपदिश्योपन्यस्य योऽपसरत्यधुना मे महती पीडा समुत्पन्ना न शक्नोमि प्रतिवक्तुम् । अलीकादिना वा प्रस्थितः, सोऽपि जीयते । मेधा.

(२) तथा बहुविधं अपदिश्य उक्त्वा पुनः स्वयमेवावधारणादयमेवात्र हेतुर्ग्राह्य इति । प्रणिहितं विचारितम् । मवि.

(३) देश्य एवोपदेश्यस्तमपदिश्योक्त्वा अपधावति पलायते । पुनर्वदति मद्धस्तात्सुवर्णं गृहीतमित्युक्त्वा मत्पुत्रहस्ताद् गृहीतमिति वा सोऽपि तस्मादर्थात्प्रहीयत इत्यनुवादः । ×मच.

(४) अपदेश्यमपदिश्य वक्तव्यमुक्त्वा तत्साधने यः पुनरपधावति अपसरति । पूर्वं स्वयमुपन्यस्तं सदस्यैः सम्यक् प्रणिहितमवधृतमर्थं तैः पृष्टः सन्नाभिनन्दति न सम्यङ्मया बुद्धमिति वदति सोऽपि हीयत इति संबन्धः । नन्द.

(५) अपदिश्यापदेश्यं कार्याकार्यं न जानाति, वाच्यावाच्यं वा न जानाति । पुनः यः पुनः धावति । स्थानात् स्थानान्तरं गच्छति । च पुनः सम्यक् प्रणिहितं अर्थं सम्यक्प्रकारेण दत्तं द्रव्यं पृष्टः सन्नाभिनन्दति न कथयति । भाच.

**[1]असंभाष्ये साक्षिभिश्च देशे संभाषते मिथः ।**
**निरुच्यमानं प्रश्नं च नेच्छेद्यश्चापि निष्पतेत्* ॥**

(१) असंभाषणार्हे देशे उपह्वरादौ साक्षिभिः सह संभाषत एकाकी तद्भेदाशङ्कया । निरुच्यमानं पृच्छ्यमानं निरूप्यमाणं वा प्रश्नं विचारवस्तु नेच्छति किञ्चिद् राजकार्यमुद्दिश्य राजपुत्रमान्याद्यनुग्रहेण च काललाभं करोति । यश्चापि निष्पतेत् । वक्ष्यमाणमेव क्रियापदं संहीयत इति । यदेवोक्तं—'पुनर्यस्त्वपधावती'ति स एवार्थः 'यश्चापि निष्पतेदि'ति । पुनर्वचने प्रयोजकमुक्तम् । अत्यन्तपौनरुक्त्यं[1] मा भूदिति कश्चिद् विशेष आश्रयितव्यः । मेधा.

(२) स्वकीयं प्रश्नं परेण निरुच्यमानमाकलय्य नेच्छेत्तदनिच्छाविभावकं कोलाहलादि कुर्यात् । निष्पतेत् सभातः पलायेत । मवि.

(३) यश्च भाषार्थस्थिरीकरणाय नितरामुच्यमानं प्राड्विवाकेन प्रश्नं नेच्छेत् । यश्च निष्पतेत् उक्तांश्च व्यवहारान् पुराऽनाख्याय यथा स्थानात्स्थानान्तरं गच्छेत् । *ममु.

(४) निरुच्यमानं विकल्पेनोच्यमानम् । +नन्द.

**[1]ब्रूहीत्युक्तश्च न ब्रूयादुक्तं च न विभावयेत् ।**
**न च पूर्वापरं विद्यात्तस्मादर्थात् स हीयते× ॥**

(१) उक्तार्थ एव श्लोकोऽयं श्लोकान्तरैर्दृश्यते । पुनर्वचने च प्रयोजनमुक्तम्—'बहुकृत्वोऽपि पथ्यं वेदितव्यमि'ति । अक्षरार्थस्त्वर्थिना निःशेषिते पूर्वपक्षे प्रतिवादी ब्रूह्यस्मिन्वस्तुनीति पृष्टो यदि न ब्रूयात्पुनः पुनः पृच्छ्यमानोऽपि[2], यो हि सम्यगुत्तराभावान्मिथ्योत्तरवादित्वादमुनैव मे पराजयो भवति । तूष्णीम्भूतस्य तु मे संशय एव पराजये । इत्यनया बुद्ध्या नोत्तरं ददाति सोऽपि जीयते । वक्ष्यति चात्र कालावच्छेदं 'न चेत्त्रिपक्षात्प्रब्रूयादि'ति सद्यो ह्याकृष्टस्य पूर्वपक्षार्थानवबोधादुत्तराप्रतिपत्तेर्युक्तं कालहरणम् । अत्र च दिवसैः पञ्चभिर्दशभिर्द्वादशभिर्वा ईषदीषद् वदतस्त्रिपक्षसमाप्तिः, न त्वियन्तं कालं तूष्णीम्भाव एव । यश्चातोऽधिकः कालः । संस्थितोऽपि कञ्चित्संवत्सरं प्रतीक्षे[3]ताप्रतिभायामिति न युक्तमादर्तुं यतोऽप्रतिभा प्रतीक्षाकार-

× शेषं गोरावत् ।

* अत्रत्यं गोराव्याख्यानं 'अदेशं यश्चे'ति श्लोके द्रष्टव्यम् । व्यक., मच., भाच. गोरागतम् ।

(१) **मस्मृ.**८।५५; **व्यक.**३३ रुच्य (रुध्य); **स्मृसा.** १२२ भिश्च (भिर्यो) नेच्छेद्यश्चापि (नेक्षेद्यस्यापि); **स्मृचि.**४१ नारदः; **व्यसौ.**३२ व्यकवत्; **व्यप्र.**७४; **समु.**२३.

१ +सम्यक्प्रणिहितं चार्थमनाकुलं निश्चितमुक्तम् ।

* पूर्वार्धव्याख्या गोरावत् । + शेषं गोरागतम् ।

× अत्रत्यं गोराव्याख्यानं 'अदेशं यश्चे'ति श्लोके द्रष्टव्यम् ।

(१) **मस्मृ.**८।५६; **व्यक.**३३; **स्मृसा.**१२२; **व्यचि.** ३१ क्तश्च (क्तोपि); **व्यनि.** न ब्रू (नो ब्रू) विद्या (विन्द्या) नारदः; **स्मृचि.**४१ नारदः; **व्यसौ.**३२; **वीमि.**२।१५; **व्यप्र.**७४; **समु.**२३ व्यचिवत्.

१ अमत्यन्तापौ. २ माने. ३ त प्रतिभावयेदिति.

णम् । सा संवत्सरादूर्ध्वं भवतीति किमित्यकारणम् । न चैष नियमः केनचित्प्रमाणेनावगम्यतेऽप्रतिभानवतः संवत्सरेण प्रतिभा भवतीति । तस्मात्तावन्त्येवाहान्युपेक्षा युक्ता, यावद्भिः पूर्वपक्षार्थावधारणं भवत्युत्तरं च प्रतिभाति । एतच्चामुकस्य मन्दधियोऽप्येतावन्मात्रैरहोभिर्भवतीति, नाधिकं कालमुपेक्षणीयम् । पूर्वपाक्षिकस्य तु तदहरेव स्वार्थविनिवेशनं युक्तम् । यत इदमेव मे धारयतीदं वाऽनेन ममापकृतमिति निश्चितं तस्य भवति । स्वेच्छया ह्यसौ प्रवर्तते केवलं तस्मै स्वपक्षमावेदयते । किमित्यनिश्चितः स्वार्थो भवति । उत्तरपाक्षिकस्त्वविदितसंबन्धस्तदानीमेव राजपुरुषैरानीयमानः कथमिव स्वपरपक्षौ निश्चिनुयात् । पक्षद्वयनिरूपणं हि तदस्य तदानीमेवापतति । नान्यथोत्तरपाक्षिको भवति । तस्मात्पूर्वपाक्षिकस्य साध्ये वस्तुनि तदहः पूर्वपक्षसमाप्तिर्द्विदिवसलाभो वा । उभावपि चैतौ पक्षौ स्मृत्यन्तरपरिगृहीतौ । तथा ह्याह–'सुनिश्चितबलाधानः पूर्वपक्षी भवेत्सदा । दशाहं द्वादशाहं वा स्वपक्षं परिशोधयेत्' इति ॥ तथेदमपरम् 'ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्' (यास्मृ. २।७) । या तु संवत्सरप्रतीक्षा सा मूलासंभवादप्रमाणम् । न हि व्यवहारस्मृतावष्टकादिवद्वेदमूलता शक्यते वक्तुम् । अकार्यरूपत्वादर्थस्य । प्रमाणान्तरविषयत्वे च तदसंभवः प्रतिपादितः । एषाऽपि त्रिपक्षोपेक्षा न सर्वत्र । यत उक्तम्— 'साहसस्तेयपारुष्यगोऽभिशापात्यये स्त्रियाम् । विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः' ॥ (यास्मृ.२।१५) इति । साहसादौ हि चिरमुपेक्ष्यमाणे परमपराध्नुयात् । अतः सद्यो विवादो विधीयते । न चात्र स्मृत्यादयोऽनुत्तरहेतवः संभवन्ति । साहसादिकारणं हि तदानीमेव राजानं वेदयेत् । तीव्रसंवेगता हि तत्र भवति । वस्त्राद्युपहारेण तदुपेक्षायां नाशाशङ्का भवति । साक्षिणस्तत्र यदृच्छया संनिहिता अपि भवन्ति । ते हि देशान्तरं गता नामजात्यादिभिर्न विज्ञायन्ते । ततः स्वाभाविकप्रमाणाभावः ।

किञ्च ऋणादानादिषु कदाचिदितरेतरं संदधते । न तत्र राज्ञो हस्तप्रक्षेपः । क्रमेण च संशुद्धौ स्मृतिरुपयुज्यते तदा कियद्दत्तमिति । साहसकारी तु राज्ञाऽवश्यं निग्रहीतव्य इतरेण संधीयमानोऽपि । तस्मादृणादिषु कालहरणं साहसादिषु सद्य इति स्थितम् । तदुक्तम्— 'गहनत्वाद्विवादानामसामर्थ्यात्स्मृतेरपि । ऋणादिषु हरेत्कालं कामं तत्वबुभुत्सया' ॥ यदा संकुलः पूर्वपक्षो भवति तदा गहनत्वान्न शक्यते ग्रहीतुमनाकुलो विलुप्तक्रमोऽपि गृहीतः प्रतिवचनकाले महत्त्वान्न शक्यते सर्वेण स्मर्तुमिति स्मृत्यन्तरस्यार्थः । उक्तं च न विभावयेत् । साध्यं वस्तु निर्दिश्य न साधयति साधनस्याभावात् । विपक्षे वा भावात् । न च पूर्वापरं विद्यात् । उक्तमेतत् । तस्मादर्थाद् व्यवहारवस्तुनः स हीयते पराजितो भवतीत्यर्थः । **मेधा.**

(२) न च पूर्वापरं एतत् प्राग्वाच्यमेतत्पश्चादिति जानीयात् । **मवि.**

(३) उक्तं साध्यं न प्रमाणेन प्रतिपादयति । पूर्वं साधनम् । अपरं साध्यम् । तद्यो न जानाति । असाधनमेव साधनत्वेन निर्दिशति । असाध्यमेव मानेन 'शशशृङ्गकृतं धनुर्ज्ञेयम्' इत्यादि साध्यत्वेन निर्दिशति स तस्मात्साध्यादर्थाद्धीयते । **ममु.**

(४) पूर्वापरं साध्यं न विद्यात् । यथावस्तु न विजानीयात् । **+मच.**

**ज्ञातारः सन्ति मेत्युक्त्वा दिशेत्युक्तो दिशेन्न यः ।**
**धर्मस्थः कारणैरेतैर्हीनं तमिति निर्दिशेत् ॥**

(१) ज्ञातारः साक्षिणः पुरुषा मम सन्तीत्युक्त्वा यदोच्यते कथ्यतामिति तदा तूष्णीक आस्ते न तान्

१ कारणेन ना. २ परीक्षा. ३ ऽपर. ४ नुक्तहे.

+ शेषं ममुवत् । भाच. मचगतम् ।

(१) **मस्मृ.**८।५७ क. ग. घ-पुस्तकेषु ज्ञातारः (साक्षिणः) मिति (मपि) इति पाठः; **व्यक.**३३ ज्ञातारः सन्ति मे (सन्ति ज्ञातार इ) मिति (मपि); **स्मृच.**४८ हीनं तं (हीनोऽसौ) शेषं व्यकवत्; **ममु.** मस्मृवत्; **स्मृसा.**१२२ व्यकवत्; **व्यचि.**३१ व्यकवत्; **व्यनि.** स्थः (स्थाः) ज्ञातारः सन्ति मे (सन्ति ज्ञातार इ) नारदः; **स्मृचि.**४१,४६ मिति (मपि) नारदः; **व्यसौ.**३२ व्यकवत्; **वीमि.**२।१५ व्यकवत्; **व्यप्र.** ७४ मिति (मपि) सन्ति ज्ञातार इत्युक्त्वेति कल्पतरुलिखितपाठस्त्वनाकर एव। आचार्यमेधातिथिभ्यामधृतत्वात्; **प्रका.**३० स्मृचवत्; **समु.**२३ स्मृचवत्.

देशनामजातिभिर्विशेषणैः कथयति । तदा एतैः प्रत्येकं पूर्वमुक्तैः कारणैरिह हीनोऽसौ व्यवहाराद् भ्रष्ट इति । धर्मस्थो धर्माधिकरणस्थः प्राड्विवाको निर्दिशेन्निश्चितं ब्रूयाज्जितोऽयमिति । यथैव विपक्षबाधकप्रमाणावृत्त्या पराजय एवं स्वपक्षसाधनाभावादपि । अभावनिश्चयश्च पुनः पुनरवसरेऽनुपन्यासात्कारणान्तरस्य चाऽनुपन्यासे अभावादिति (?) ज्ञातार इति तृन्नन्तमेव । तत्र 'मा' इति द्वितीयान्तं युज्यते । '...खलर्थतृनामि'ति षष्ठीनिषेधात् । हीनं तमिति द्वितीयान्तः पाठः । इतिशब्दः प्रकारार्थो द्रष्टव्यः । एभिरुक्तैः प्रकारैरन्यैश्चैवंविधैर्हीनं तन्निर्दिशेत् । यदा तु वाक्यार्थपरामर्शः, तदा हीनोऽसाविति पाठः । वाक्यार्थस्य कर्मत्वात् द्वितीयाया अभावः । एते पराजयहेतवः । न त्वाकारेङ्गितादिवद्व्यभिचारिणः । यो हि पुनः पुनर्विचारावसरे न संनिधीयते, संनिहितो नोत्तरं प्रतिवक्ति, न तत्र निश्चितमिदं भवति नास्य जयहेतुरस्तीति ? । यदि च सर्वदैवानुत्तरवादिनं न पराजयेद्राजा ततो व्यवस्थाभङ्ग आपद्यते । पौर्वापर्यानवबोधस्त्विङ्गितादिवद्द्रष्टव्यः । यः सर्वकालं वाग्मी प्रगल्भं प्रतिपत्तिमान् तस्येङ्गितादयोऽन्यथाभवन्तः पराजयहेतौ प्रमाणान्तरेणानिश्चितेऽपि लिङ्गदर्शनस्थानीया उपोद्बलका भवन्ति । मेधा.

(२) साक्षिण इति । साक्षिणोऽत्र मम विद्यन्ते इत्युक्त्वा ब्रूहि तान् इत्युक्तो यस्मान्न ब्रूयात्तं पूर्वोक्तैरेभिः पराजयकारणैः धर्मनिर्णयप्रवृत्तः प्राड्विवाको जितोऽयमिति कथयेत् । *गोरा.

(३) मेत्युक्त्वेति छान्दसः सन्धिः । तं वादिनम् । हीनं पराभियोगप्राप्तम् । मवि.

(४) धर्मस्थो विचारकः हीनं संभावितहानिकं पराजित इति भङ्गानन्यथासिद्धेरिति निपुणेनावधारणे स पराजितोऽव्यवहार्य इत्यर्थः । व्यचि.३२

(५) तमपीति अपिशब्दादधमर्णमपि । ×मच.

(६) यश्च ज्ञातारः साक्षिणो मदुक्तेऽर्थे सन्तीति सभायामुक्त्वा के ते वदेत्युक्तो न वदेत्तान् । अत्र मा मां ज्ञातारः यथार्थवाद्यहमिति जानानाः साक्षिण इति यावत् । द्वितीयैकवचनान्तस्यास्मच्छब्दस्य 'त्वामौ द्वितीयायाः' (व्यासू. ८।१।२३) इत्यनेन मामित्यस्य मा इत्यादेशः । न तु मे इति षष्ठ्यन्तमेतत् । 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति तन्निषेधात् । तेन मेति सन्धिरपि समाहित इति मेधातिथिः । आचार्यास्तु व्याकरणाधिकरणे सन्धिकरणमत्रापशब्द इति पूर्वपक्षप्रसंगेन वदन्तः षष्ठ्यन्ततामेवास्य मन्यन्ते । मे सन्तीति संबन्धान्न 'तृनाम्' इति संबन्धप्रयुक्तषष्ठीप्रतिषेधावकाश इति तेषाममभिसन्धिः । सन्ति ज्ञातार इत्युक्त्वेति कल्पतरुलिखितपाठस्त्वनाकर एवाचार्यमेधातिथिभ्यामधृतत्वादिति ध्येयम् । सिद्धान्ते त्वाचार्याणां छान्दसत्वमत्र समाधिरभिमतः । एतैः कारणैर्व्यस्तैः समस्तैर्वा वादिप्रतिवादिनोरन्यतरं हीनं निर्दिशेदित्यर्थः । हीनवादितया दण्डार्हतामात्रं न प्रकृतार्थहानिरिति प्रमादपरिहारार्थमेवायं प्रपञ्चः । 'छलं निरस्य' इत्यादिवचनात् । व्यप्र.७४–७५.

अब्रुवतोऽभियोक्त्रादेर्दण्ड्यत्वम्

**अभियोक्ता न चेद्ब्रूयाद् बध्यो दण्ड्यश्च धर्मतः ।**
**न चेत् त्रिपक्षात् प्रब्रूयात् धर्मं प्रति पराजितः ॥**

(१) अभियोक्ताऽर्थी राजान्तिकं च पुरुषमाहूय यदि व्यवहारपदं न कथयति तदा निष्प्रयोजनाद् बध्यो दण्ड्यश्च । दण्डबन्धने दण्डपरिमाणे च गुणवत्तां, प्रत्यर्थिन आह्वानेन च हानिमपेक्ष्य, कल्पनीयानि अतस्तद्धरेवार्थिना विवदितव्यम् । प्रत्यर्थी तु न चेत् त्रिपक्षाद् ब्रूयादित्यर्थस्तदा नासौ दण्ड्यो बन्धयितव्यो वा । किं तर्हीयता कालेनोत्तरे सत्यपराजित एव । धर्मं प्रति धर्मत एवायं पराजयो न छलमित्यर्थः । त्रिपक्षादिति पात्रादिषु द्रष्टव्यस्तेनेकाराभावः । अर्थतत्त्वमस्य श्लोकस्यास्माभिः प्राङ्निरूपितम् । मेधा.

---

* स्मृच., नन्द., भाच. गोरागतम् । ममु. गोरागतं मविगतं च । × शेषं गोरागतं मविगतं च ।

१ कं प्रमाणवृ. २ क्षे. ३ तत्रेदमिति. ४ चारणाः. ५ बाध.

(१) **मस्मृ**.८।५८; **व्यक**.३३-३४ योक्ता (योगे); **स्मृसा**.१२२ पू.; **व्यचि**.३१ प्रब्रूयात् (ब्रूयात्स); **व्यनि**. नारदः; **स्मृचि**.४१ ड्यश्च (ड्यः स) यात् (युः); **व्यसौ**.३२; **प्रका**.३० प्र (तत्) नारदः; **समु**.२४ प्रकावत्.

१ राज्ञान्तिकं.

(२) योऽर्थी सद्य एव पूर्वपक्षं न ब्रूयात्, तदा धर्मव्यतिक्रमतारतम्यापेक्षया वधार्हो दण्डनीयश्च स्यात्। आक्षिप्तः पुनः पक्षत्रये यदि न ब्रूयात्तदा धर्मविषये पराजितोऽन्याय्यप्रवृत्तत्वेनाधार्मिकत्वात्। *गोरा.

(३) न चेद् ब्रूयात् ज्ञातॄन् साक्षिणः। ज्ञातृपदं प्रमाणपरम्। वध्यस्ताडनादिना। अभियुक्तेनाप्रमाणे वाच्ये विशेषमाह—न चेदिति। त्रिपक्षादर्वाङ् न चेत्साक्षिणो ब्रूयात्तदा स धर्मं प्रति धर्मानपेक्ष्य पराजितो भवत्यतो वध्यो दण्ड्यश्चेत्यर्थाज्जातम्। एतच्च प्रत्यर्थिविषयम्। अर्थिना सद्य एव वाच्याः स्मृत्यन्तरात्। मवि.

(४) प्रत्यर्थी वा न ब्रूयात् साक्षी वा न ब्रूयात्। +मच.

(५) अभियोक्तारं प्रति राज्ञः कर्तव्यमाह—अभियोक्ता न चेदिति। प्रत्यर्थिदत्तोत्तरोऽभियोक्ता तत उत्तरं न चेद् ब्रूयाद् वध्यो हिंस्यः। दण्ड्यो दण्डार्हः। तद्गुणापेक्षया विकल्पः। तत्र कालावधिरुत्तरार्धेनोक्तः। धर्मशब्दौ व्यवहारवचनौ। नन्द.

## वाल्मीकिरामायणम्

दुष्टत्वलिङ्गानि

**[१]आकारश्छाद्यमानोऽपि न शक्यो विनिगूहितुम्।**
**बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम्॥**

(१) आकारो देहधर्मः मुखाप्रसादवैवर्ण्यरूपः। व्यत.२१९

(२) अनेन च पराजयसंभावनामात्रं प्रतिपाद्यते। तस्य च फलं क्रियादिपरामर्शो सभ्यादीनामत्यवधानेन व्यवहारशेषविचारः। न चैतावता पराजयनिश्चयो साक्ष्यनिर्णयो वा। नैसर्गिकनैमित्तिकविकारयोर्वैलक्षण्यस्य विवेक्तुमशक्यत्वात्। यद्यपि कोऽपि निपुणतममतिर्विवेक्तुं शक्नुयात् तथापि न पराजयनिमित्तमसाक्षित्वनिबन्धनं वा दण्डादिकार्यं संभवति। न हि निपुणभिषगभियोगमूलकमरणनिश्चयेऽपि मृतकार्यमार्याः समाचरन्ति। व्यप्र.७१

* इयं व्याख्या मेधावत्। ममु. गोरावत्। भाच. गोरागतम्। + शेषं गोरागतम्।

(१) **व्यक**.३३; **दीक**.३२ न....तुम् (निग्रहीतुं न शक्यते) त्येव (त्येष); **व्यत**.२१९ विनि (ऽसौ नि); **व्यसौ**.३१ द्धि (त्स); **व्यप्र**.७१ कारः (कारं) त्येव (त्येष).

## याज्ञवल्क्यः

अभियोगस्य प्रत्यभियोगेन न निराकरणम्। अस्यापवादश्च।

**[१]अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत्।**
**अभियुक्तं च नान्येन नोक्तं विप्रकृतिं नयेत्॥**
**[२]कुर्यात्प्रत्यभियोगं च कलहे साहसेषु च॥**

(१) ननु च यदा तु ममानेनापराद्धमित्येवमुक्तः स्वमभियोगमनिस्तीर्यैव तमेव प्रत्यभियुङ्क्ते, तदायं क्रमो नोपपद्यते। सत्यम्। तेनैव च—अभियोगमित्यादि। स्वाभियोगमनिस्तीर्याभियोक्तारं नाभियुञ्जीत, अनवस्थाप्रसङ्गेन व्यवहारासमाप्तेः। अत एव चान्याभियुक्तोऽप्यनभियोज्यः। न च स्वयमुक्तार्थापलापः कर्तव्य इति। अस्यापवादः—कुर्यादिति। अनिस्तीर्य स्वाभियोगं साहसादौ प्रत्यभियुञ्जीत। अयमेव तत्र निर्णयप्रकार इत्यर्थः। विश्व.२।९-१०

(२) एवं सर्वव्यवहारोपयोगिनीं व्यवहारमातृकामभिधायाधुना क्वचिद्व्यवहारविशेषे कश्चिद्विशेषं दर्शयितुमाह—अभियोगमिति। अभियुज्यत इति अभियोगोऽपराधः। तमभियोगमनिस्तीर्याऽपरिहृत्य एनं अभियोक्तारं न प्रत्यभियोजयेत् अपराधेन न संयोजयेत्। यद्यपि प्रत्यवस्कन्दनं प्रत्यभियोगरूपं तथापि स्वापराधपरिहा-

(१) **यास्मृ**.२।९; **अपु**.२५३।३८-३९ नोक्तं (त्यक्तं); **विश्व**.२।९ अभि...न्येन (न चाभियुक्तमन्येन); **मिता**.; **व्यमा**.२९९ नोक्तं (चोक्तं); **अप**.; **व्यक**.३०; **स्मृच**.४६ च ना (न चा); **पमा**.८५; **स्मृसा**.८४ नान्ये (वान्ये) नारदः: ८८ पू., क्रमेण कात्यायनः; **व्यचि**.१७ स्मृचवत्; **व्यनि**. स्मृचवत्; **नृप्र**.७; **व्यत**.२०१ पू.; **सवि**.१०० कृतिं (कृतं); **चन्द्र**.१०२ स्तीर्य (र्णीय) च ना (न चा); **व्यसौ**.२७ च ना (तथा); **वीमि**.; **व्यप्र**.९६; **व्यम**.९; **विता**.९७ युक्तं च नान्येन (युक्तस्तथान्येन); **सेतु**.९९; **प्रका**.२९ स्मृचवत्; **समु**.२३ स्मृचवत्; **विव्य**.६. (२) **यास्मृ**.२।१०; **अपु**.२५३।३९; **विश्व**.२।१० च (तु); **मिता**.; **अप**.; **व्यक**.३०; **स्मृच**.४६ च (तु); **पमा**.८५ च (तु); **स्मृसा**.८८ च (तु) क्रमेण कात्यायनः; **व्यचि**.१७; **व्यनि**. च (तु) नारदः; **नृप्र**.७; **व्यत**.२०१ नारदः; **सवि**.१०१ च (तु) नारदः; **व्यसौ**.२७; **वीमि**. योगं (योगे); **व्यप्र**.९७ च (तु); **व्यम**.९ वीमिवत्; **विता**.१०; **सेतु**.९९ नारदः; **प्रका**.२९ च (तु); **समु**.२३.

रात्मकत्वान्नास्य प्रतिषेधविषयत्वम् । अतः स्वाभियोगानुपमर्दनस्वरूपस्य प्रत्यभियोगस्यायं निषेधः । इदं प्रत्यर्थिनमधिकृत्योक्तम् । अथ अर्थिनं प्रत्याह—अभियुक्तमिति । अभियुक्तं च नान्येनेति । अन्येनाभियुक्तमनिस्तीर्णाभियोगमन्योऽर्थी नाभियोजयेत् । किं च उक्तमावेदनसमये यदुक्तं तद्विप्रकृतिं विरुद्धभावं न नयेन्न प्रापयेत् । एतदुक्तं भवति—यद्वस्तु येन रूपेणावेदनसमये निवेदितं तद्वस्तु तथैव भाषाकालेऽपि लेखनीयं नान्यथेति । ननु—'प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना' । इत्यत्रैवेदमुक्तं किमर्थं पुनरुच्यते 'नोक्तं विप्रकृतिं नयेत्' इति । उच्यते—'यथावेदितमर्थिना' इत्यनेनावेदनसमये यद्वस्तु निवेदितं तदेव भाषासमयेऽपि तथैव लेखनीयं एकस्मिन्नपि पदे न वस्त्वन्तरमित्युक्तम् । यथानेन रूपकशतं वृद्ध्या गृहीतमित्यावेदनसमये प्रतिपाद्य प्रत्यर्थिसंनिधौ भाषासमये वस्त्रशतं वृद्ध्या गृहीतमिति न वक्तव्यम् । तथा सति पदान्तरागमनेऽपि वस्त्वन्तरगमनाद्धीनवादी दण्ड्यः स्यादिति 'नोक्तं विप्रकृतिं नयेत्' इत्यनेनैकवस्तुत्वेऽपि पदान्तरगमनं निषिध्यते । यथा रूपकशतं वृद्ध्या गृहीत्वाऽयं न प्रयच्छतीत्यावेदनकालेऽभिधाय भाषाकाले रूपकशतं बलादपहृतवानिति वदतीति । तत्र वस्त्वन्तरगमनं निषिद्धमिह तु पदान्तरगमनं निषिध्यत इति न पौनरुक्त्यम् । एतदेव स्पष्टीकृतं नारदेन—'पूर्वपादं परित्यज्य योऽन्यमालम्बते पुनः । पदसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः' ॥ इति हीनवादी दण्ड्यो भवति न प्रकृतादर्थाद्धीयते । अतः प्रत्यर्थिनोऽर्थिनश्च प्रमादपरिहारार्थमेवायमभियोगमनिस्तीर्येत्याद्युपदेशो न प्रकृतार्थसिद्ध्यसिद्धिविषयः । अत एव वक्ष्यति— 'छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः' इति । एतच्चार्थव्यवहारे द्रष्टव्यम् । मन्युकृते तु व्यवहारे प्रमादाभिधाने प्रकृतादपि व्यवहाराद्धीयत एव । यथाह नारदः—'सर्वेष्वर्थविवादेषु वाक्छले नावसीदति । परस्त्रीभूम्यृणादाने शास्योऽप्यर्थान्न हीयते' इति ॥ 'अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत्' इत्यस्यापवादमाह—कुर्यादिति ।

कलहे वाग्दण्डपारुष्यात्मके । साहसेषु विषशस्त्रादिनिमित्तप्राणव्यापादनादिषु । प्रत्यभियोगसंभवे स्वाभियोगमनिस्तीर्याप्यभियोक्तारं प्रत्यभियोजयेत् । नन्वत्रापि पूर्वपक्षानुपमर्दनरूपत्वेनानुत्तरत्वात्प्रत्यभियोगस्य प्रतिज्ञान्तरत्वे युगपद्व्यवहारासंभवः समानः । सत्यम् । नात्र युगपद्व्यवहाराय प्रत्यभियोगोपदेशः, अपि तु न्यूनदण्डप्राप्तये अधिकदण्डनिवृत्तये वा । तथा हि । अनेनाहं ताडितः शप्तो वेत्यभियोगे पूर्वमहमनेन ताडितः शप्तो वेति प्रत्यभियोगे दण्डाल्पत्वम् । यथाह नारदः—'पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स दोषभाक् । पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः' इति ॥ यदा पुनर्द्वयोर्युगपत्ताडनादिप्रवृत्तिस्तत्राधिकदण्डनिवृत्तिः— 'पारुष्ये साहसे वाऽपि युगपत्संप्रवृत्तयोः । विशेषश्चेन्न लभ्येत विनयः स्यात्समस्तयोः' इति ॥ एवं युगपद्व्यवहारप्रवृत्त्यसंभवेऽपि कलहादौ प्रत्यभियोगोऽर्थवान् ऋणादिषु तु निरर्थक एव । ×मिता.

(३) तस्माद्वादिनोऽभियोगनिस्तारार्थमेवोत्तरं स्यान्न तु साध्यान्तरनिर्णायकत्वेन, अत एव उत्तीर्यतेऽभियोगोऽनेनेत्युत्तरम् । व्यमा. २९९

(४) सामान्यतश्चतुर्धा व्यवहारः, तस्येदानीं क्रममाह—अभियोगमिति । +अप.

(५) मिता. टीका—पदान्तरागमनेऽपीति । अस्मिन्प्रकरणे पदशब्दो विषयवाची ज्ञेयः । मन्युकृत इति । वाक्पारुष्ये दण्डपारुष्ये इत्यादिके व्यवहारे इत्यर्थः । सुबो.

(६) चकारात् स्तेये दण्डपारुष्ये च प्रत्यभियोगं कुर्यात् । +वीमि.

(७) अभियोगमिति । युगपद्व्यवहारस्य प्रतिज्ञाभेदेनासंभवात् प्रत्यभियोगानर्थक्यात् इत्ययं प्रत्यर्थिनं प्रत्युपदेशोऽन्यवादित्वेन हीनतापरिहारार्थः ।

अभियुक्तमिति । अयमपि युगपद्व्यवहारासंभवनिबन्धनोऽर्थिनं प्रत्युपदेशः ।

नोक्तमिति । यद्वस्तु यत्प्रकारेणावेदनसमये निवेदितं तत् तथैव भाषायां लेखनीयं नान्यथेत्ययमप्यर्थिन एवान्यवादित्वनिबन्धनहीनतापरिहारार्थ एवोपदेशः। *व्यप्र. ९६

×स्मृच., पमा., दीक., व्यनि. मितावत् संक्षेपतो वाक्यार्थः। व्यत., सवि., विता. मितागतम् ।
+मितावत् संक्षेपतो वाक्यार्थः । * शेषं सर्वं मितावत् ।

दुष्टत्वलिङ्गानि

[1]देशाद्देशान्तरं याति सृक्किणी परिलेढि च ।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥
[2]परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते ।
वाक्चक्षुः पूजयति नो तथौष्ठौ निर्भुजत्यपि ॥
[3]स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः ।
अभियोगे च साक्ष्ये वा दुष्टः स परिकीर्तितः ॥

(१) नन्वनेकप्रकाराः पुंसां प्रवृत्तयः । तत्र यदि कश्चिद् व्यवहारानुगुणवाक्प्रवृत्त्यकुशलतया सत्येऽप्यर्थे मिथ्यावादीव लक्ष्यते । अन्यस्तु कश्चित् कपटव्यवहारचतुरो मिथ्याभूतेऽप्यर्थे सत्यवादीव लक्ष्यते । ततश्च व्यवहारनिरूपणप्रयासवैयर्थ्यमेव । सत्यमेव, यदि विवेकावधृतिप्रकारो न स्यात् । स्यात्तु खलूपायः—देशाद्देशान्तरमित्यादिः ।

यद्यपि व्यवहारमार्गनिपुणतया कुतश्चिद्वा सहायाद्यवष्टम्भात् साधुताभासं प्रत्ययमुत्पादयति, तथापि यस्यैवमादीनि लिङ्गानि स दुष्टः परिकीर्तितः। परिकीर्तितवचनं दौष्ट्यनिश्चयख्यापनार्थम् । स्फुटावगतचातुर्यश्चैवमादिभिर्लिङ्गैरध्यवसेयः । अन्यस्य त्वप्रतिभयाऽपि धूर्तजनसंत्रासितस्य वा भवत्येव । अतश्चैवं विविच्यैतानि लिङ्गानि व्यवस्थापनीयानीत्यनवद्यम् । सृक्कणी ओष्ठसन्धी । वाक्चक्षुः पूजयति नो इति च्छेदः । वाचश्चक्षुषो वा पूजां न करोतीत्यर्थः । वाक्पूजा स्वोक्तिनिश्चयावष्टम्भः । चक्षुपश्च दर्शनावष्टम्भः । ओष्ठनिर्भुजनमनेकधौष्ठविकारः । जिह्वया वा परिलेहनम् । स्पष्टमन्यत् । विश्व.२।१३-१५

(२) मनोवाक्कायकर्मभिर्यः स्वभावादेव न भयादिनिमित्ताद्विकृतिं विकारं याति गच्छति असावभियोगे साक्ष्ये वा दुष्टः परिकीर्तितः । तां विकृतिं विभज्य दर्शयति । देशाद्देशान्तरं याति न क्वचिदवतिष्ठते । सृक्किणी ओष्ठपर्यन्तौ । परिलेढि जिह्वाग्रेण स्पर्शयति घट्टयतीति कर्मणो विकृतिः । अस्य ललाटं स्विद्यते स्वेदबिन्द्वङ्कितं भवति । मुखं च वैवर्ण्यं विवर्णत्वं पाण्डुत्वं कृष्णत्वं वा एति गच्छतीति कायस्य विकृतिः । परिशुष्यत् स्खलद्वाक्यः परिशुष्यत् सगद्गदं स्खलद्व्यत्यस्तं वाक्यं यस्य स तथोक्तः । विरुद्धं पूर्वापरविरुद्धं बहु भाषत इति वाचो विकृतिः । परोक्तां वाचं प्रतिवचनदानेन न प्रपूजयति, चक्षुर्वा प्रतिवीक्षणेन न पूजयतीति मनसो विकृतेर्लिङ्गम् । तथा ओष्ठौ निर्भुजति वक्रयतीत्यपि कायस्य विकृतिः । एतच्च दोषसंभावनामात्रमुच्यते, न दोषनिश्चयाय । स्वाभाविकनैमित्तिकविकारयोर्विवेकस्य दुर्ज्ञेयत्वात् । अथ कश्चिन्निपुणमतिर्विवेकं प्रतिपद्येत तथापि न पराजयनिमित्तं कार्यं भवति । न हि मरिष्यतो लिङ्गदर्शनेन मृतकार्यं कुर्वन्ति । एवमस्य पराजयो भविष्यतीति

(१) **यास्मृ**.२।१३; **अपु**.२५३।४२-४३ खं (ख) मेति (मेव); **विश्व**.२।१३ क्कि (क्क); **मिता**.; **व्यमा**.३१३ क्कि (क्क) स्वि (भि); **अप**.; **व्यक**.३३ सृक्किणी परिलेढि च (परिलेढि च सृक्किणीम्); **स्मृच**.४९,८५; **पमा**.५६ चास्य (तस्य); **स्मृसा**.१२१ क्किणी (क्कणीं) (ललाटं स्विद्यते यस्य मुखं च परिशुष्यति); **व्यनि**.; **स्मृचि**.४२ व्यमावत्; **नृप्र**.७; **व्यत**.२१८ क्कि (क्क); **सवि**.१४७ चास्य (यस्य); **मच**.८।२६ क्कि (क्कि) च (वा); **चन्द्र**.१२१ (=) उत्तरार्धं स्मृसावत्; **व्यसौ**.३१ चास्य (तस्य); **वीमि**.; **व्यप्र**.७० क्कि (क्कि); **व्यम**.१० व्यप्रवत्; **विता**.१०४ चास्य (वास्य); **सेतु**.११२; **प्रका**.३१ व्यतवत्; **समु**.२४ व्यप्रवत्.

(२) **यास्मृ**.२।१४; **विश्व**.२।१४; **मिता**. थौ (थो); **व्यमा**.३१३ मितावत्; **अप**.; **व्यक**.३३ मितावत्; **स्मृच**.४९ थौष्ठौ (थौष्ठो): ८५ मितावत्; **पमा**.१८ मितावत्; **स्मृसा**.१२१ क्यो (क्यं) पू.; **व्यनि**. मितावत्; **स्मृचि**.४२ थौ (थो); **व्यत**.२१८; **मच**.८।२६ मितावत्; **चन्द्र** १२१ (स्खलद्वाक्यं विसंबद्धं विरुद्ध बहु भाषते) पू.; **व्यसौ**.३१ मितावत्; **वीमि**. मितावत्; **व्यप्र**.७० मितावत्; **व्यम**.१० मितावत्; **विता**.१०४; **सेतु**.११२ मितावत्; **प्रका**.३१ मितावत्; **समु**.२४.

(३) **यास्मृ**.२।१५; **अपु**.२५३।४३-४४ च ... स (ऽथ वा साक्ष्ये वाग्दुष्टः); **विश्व**.२।१५ वा दुष्टः स (च स दुष्टः); **मिता**.; **व्यमा**.३१३ वा दु (च दु); **अप**. च साक्ष्ये वा (ऽथ वा साक्ष्ये); **व्यक**.३३ दुष्टः स (स दुष्टः); **स्मृच**.४९ काय (कार्य) च साक्ष्ये वा (ऽथ साक्ष्ये च): ८५ वा (च); **पमा**.५६ गे च (गेऽथ); **सुबो**.२।१५ (=) पमावत्, उत्त.; **स्मृसा**.१२१ च साक्ष्ये वा (तथा साक्ष्ये); **व्यनि**. पमावत्; **स्मृचि**.४२ पमावत्; **नृप्र**.७ पू.; **व्यत**.२१८ विश्ववत्; **सवि**.१४७ पमावत्, उत्त.; **मच**.८।२६ मनोवाक् (वाङ्मनः) शेषं स्मृसावत्; **चन्द्र**.१२१ स्मृसावत्, उत्त.; **व्यसौ**.३१ गच्छेत् (याति) क्ष्ये वा (क्ष्ये च); **वीमि**. विश्ववत्; **व्यप्र**.७० पमावत्; **व्यम**.१० व्यमावत्; **विता**.१०४ पमावत्; **सेतु**.११२ स्मृचवत्; **प्रका**.३१ वा (च); **समु**.२४ क्ष्ये वा (क्षे च).

लिङ्गादवगतेऽपि न पराजयनिमित्तकार्यप्रसङ्गः। *मिता.

(३) वाक्चक्षुर्न पूजयति न मुखमवलोकयन् ब्रूते इत्यर्थः। ओष्ठौ निर्भुजति कम्पयति। सुव्यक्तमपरम्। तदेवमादिभिर्लिङ्गैर्वादिनो हीनपक्षत्वमनुमीयते।

×व्यमा.३१२

(४) सृक्किणी, गल्लयोरन्तर्भागौ परितः सर्वतो लेढि, जिह्वया स्पृशति। परिशुष्यतास्येनोच्चार्यमाणं वाक्यं परिशुष्यत्। परिशुष्यत्स्खलद्वाक्यमस्य स तथोक्तः। विरुद्धं पूर्वापरविरुद्धम्। वाक्चक्षुषोः पूजा प्रसन्नता। निर्भुजति वक्रीकरोति। स्वाभाविको धर्मः स्वभावः। तस्मात्स्वभावाद्विकृतिर्वैपरीत्यम्। तत्र मनःकर्मणो विकृतिरज्ञानसंशयविपर्ययाः। वाक्कर्मणस्तु गद्गदत्वादिकम्। कायकर्मणः कम्पादि। य एवंविधः सोऽभियोगे व्यवहारे साक्षित्वे च दुष्टो वितथवादी प्रकीर्तितः। अन्यत्सुगमम्। तत्र मनुः—'बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम्। स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च॥ आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च। नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः' ॥

यदि दुष्टलक्षणानां दुष्टतायां प्रामाण्यं तदा तैरेव वादिनः प्रतिवादिनो वा पराजयेऽवधारिते दैवमानुषप्रमाणमन्तरेणैव व्यवहारसमाप्तिः स्यादिति दिव्यादिप्रमाणवैयर्थ्यं स्यात्। दुष्टलक्षणाभावे तदर्थवदिति यद्युच्यते, तर्हि लिखितादिप्रमाणानामसाक्षिकत्वेन विधानं नोपपद्यते। उक्तं हि 'क्रियापादस्तृतीयः स्यात्' इति। तस्मान्नैतानि दुष्टतायां प्रमाणानि किन्तु वादिप्रतिवादिनोर्मध्ये कः प्रमाणं करोत्विति जिज्ञासायाम्। यत्रैतानि न सन्ति स प्रमाणार्ह इत्यवधारणोपयोगितया एषामुपन्यासः। ननूत्तरविशेषे सति वादिविशेषं प्रति प्रमाणोपन्यासे वचनतोऽवधृते पूर्वोक्तजिज्ञासाया अनवसर एव। सत्यमेवमृणादानादौ। चौर्याद्यभिशापादौ तु दिव्ये प्राप्ते भवति जिज्ञासा। दिव्यं हि मिथ्योत्तरवादिनोऽपि संभवति न लेख्यसाक्ष्यादिकम्। तस्मात्तर्कवदेषां प्रमाणानुग्राहकत्वं न प्रमाणत्वम्। युक्तं चैतत्। दोषमन्तरेणापि भयादिना तेषामुपपत्तेः। अप.

(५) एवं दुष्टान्तःकरणतया ज्ञातस्यापि न दण्डो न प्रकृतार्थाद्धानिर्वा। तयोर्मुनिभिरनभिधानात्। अदुष्टस्यापि कथञ्चिदेवंविधचिह्नान्वयसंभवाद्दुष्टाभिधायकवचनानां च तद्रक्षणादाववधानविधानार्थत्वेनावैयर्थ्यात्॥ एवं च दुष्टचिन्हविहीनाः साक्षिलक्षणलक्षिताश्च साक्षिणो यद्युपस्थितास्तदा तैर्निर्णेतव्यम्। अथ विपरीतास्तदा प्रमाणान्तरेणेत्यनुसंधेयम्। स्मृच.४९,८५

(६) मिता.टीका—मनोवाक्कायकर्मभिरित्युद्दिश्य देशान्तरं यातीत्यादिना व्युत्क्रमेण कर्मकायवाङ्मनसां विकृतिं प्रदर्शयतो योगीश्वरस्यायमभिप्रायः। उद्देशक्रमेणोत्तरस्य बाह्यत्वेन अत्यन्तस्थूलत्वेन स्थूलतमप्रक्रमेण विकारदर्शनमिति एते वक्ष्यमाणास्त्रयो न केवलं दुष्टा अपि तु अर्थादपि हीना दण्ड्याश्च इति। सुबो.

(७) वादिलेखनीयं प्रमाणं प्रागभिहितमिदानीं तदलेखनीयं प्राड्विवाकसभ्याद्यवधारणीयं प्रत्याकलितापरंनामकमनुमानाख्यं प्रमाणं दर्शयति—देशादित्यादिभिः।

मनोवाक्कायकर्मभिर्यः स्वभावाद्भङ्गादिसंभावनातिरिक्तनिमित्तमन्तरेण विकृतिं विकारं याति प्राप्नोति स अभियोगे वादे साक्ष्ये साक्षिकृत्ये दुष्टः परिकीर्तितः। शास्त्रे तेन तत्कृतोऽभियोगः साक्ष्यं च न सिद्ध्यतीति तात्पर्यम्। चकारापिकारतथाशब्दैर्बहुभिः 'ब्रूहीत्युक्तश्च न ब्रूयाद्' इत्यादि मनूक्तानां समुच्चयः। वीमि.

(८) मिता.टीका—एवं च दुष्टः संभावितदोष एव इत्येवं व्याख्येयमिति बोध्यम्। बाल.

विविधानि वादहानिकारणानि

**[1]संदिग्धार्थं स्वतन्त्रो यः साधयेद्यश्च निष्पतेत्।**
**न चाहूतो वदेत्किञ्चिद्धीनो दण्ड्यश्च स स्मृतः॥**

(१) यदा पुनर्द्वयोर्व्यवहारविप्रतिपत्तौ स्वबलावष्टम्भेनैवान्तरेणापि राजावेदनं साधयितुं सामर्थ्यं स्यात्, तदापि किमवश्यं राज्ञ एव निवेदनीयम्। सत्यम्। एवं युक्तम्। यतः— संदिग्धेति।

यथैव यो राज्ञाहूतो निष्पतेत् प्रणश्येत्। यो वा राजान्तिकं गतः संभावितप्रतिभानवानपि न किञ्चिद्

*चन्द्र., व्यप्र., विता. मितागतम्। ×व्यत. व्यमावद्भावार्थः।

(१) **यास्मृ**.२।१६; **शुनी**.४।६१८ चा (वा) उत्त.; **विश्व**.२।१६; **मिता**.; **अप**.; **व्यक**.३४ स स्मृ (संस्मृ); **स्मृच**.४८; **पमा**.८४ र्थं (र्थ); **सवि**.४९०; **व्यसौ**.३३; **वीमि**.; **व्यप्र**.७२; **विता**.७६:१०४ (=); **प्रका**.३०; **समु**.२४.

वदेत्। स यथा पराजितो दण्डार्हश्च स्यात्।एवं योऽपि प्रत्यर्थिसंदिग्धं न्यायेन निश्चयमकृत्वैव हठात् स्वतन्त्रः साधयेत्, सोऽपि पराजितो दण्ड्यश्चेत्यभिप्रायः। विश्व.२।१६

(२) किञ्च संदिग्धमर्थमधमर्णेनानङ्गीकृतमेव यः स्वतन्त्रः साधननिरपेक्षः साधयत्यासेधादिना स हीनो दण्डयश्च भवति। यश्च स्वयं संप्रतिपन्नं साधनेन वा साधितं याच्यमानो निष्पतेत् पलायेत, यश्चाभियुक्तो राज्ञा चाहूतः सदसि न किञ्चिद्वदति सोऽपि हीनो दण्ड्यश्च स्मृत इति संबध्यते।

'अभियोगे च साक्ष्ये वा दुष्टः स परिकीर्तितः'। इति प्रस्तुतत्वाद्धीनपरिज्ञानमात्रमेव मा भूदिति दण्ड्यग्रहणम्। दण्ड्यश्चापि 'शास्योऽप्यर्थान्न हीयते' इत्यर्थादहीनत्वदर्शनादत्र तन्मा भूदिति हीनग्रहणम्। *मिता.

(३) साधकबाधकप्रमाणयोरपरीक्षणाद्ग्राह्याग्राह्यत्वेन संदिग्धमर्थं स्वतन्त्रः परीक्षकादिनिरपेक्षो यो हठेन साधयेत्परमङ्गीकारयेत्। यश्च शास्त्रदृष्टोपायेन साधितमप्यर्थमप्रदाय निष्पतेत् पलायेत। यश्च व्यवहारार्थं राज्ञा आहूतः स्वपक्षसाधकं परपक्षबाधकं वा न वदेत्। स हीनः स पराजितश्च राज्ञा च दण्ड्यः। साधितं च साधकाय देयम्। हीनस्य दण्डो यत्र वचनं तत्रैवेति ज्ञापयितुं दण्ड्यश्चेति पृथग्वचनम्। अप.

(४) निष्पतेत् देयमदत्वा निष्पत्य तिष्ठेत् पलायेत वा। +स्मृच.४८

(५) स्वतन्त्रः विचारकदत्तजयपत्रादिनिरपेक्षः। आदिचकारेण विचारस्थानानुपस्थायिनः समुच्चयः। द्वितीयचकारेण स्वाशक्तौ प्रतिनिधिद्वारापि न वादयेदिति समुच्चीयते। तृतीयचकारेण विवादास्पदं दापयितव्यः। एताश्च विकृतयोऽतिनिपुणेनाऽनन्यथासिद्धयोऽवतारिता भङ्गस्याऽनुमापिकाः। इतरथा तु भङ्गसंभावनामात्रापादिकाः। एताभिरेव च निर्णयो लोके प्रत्यक्षविचार इत्युच्यते। वीमि.

## नारदः

विविधानि वादहानिकारणानि

**[१]अनावेद्य तु यो राज्ञे संदिग्धेऽर्थे प्रवर्तते।**
**प्रसह्य स विनेयः स्यात्स चास्यार्थो न सिध्यति॥**

(१) राजसाधारणसंदिग्धेऽर्थे यो राज्ञेऽनावेद्यैव प्रवर्तते, स विनयप्राप्तो भवति। तदर्थसिद्धिरपि नास्त्येवेति। अभा.१३

(२) अनिवेद्य अनाख्याय राज्ञः संदिग्धेऽर्थे प्रवर्तते अनिर्णीते, धारयति न धारयतीति। यः प्रवर्तते साधयितुं स्वयमेवारभते। बलादाक्रम्य स दण्ड्यः स्यात्। सोऽप्यर्थः संदिग्धो न लभ्यते हीयते इत्यर्थः। नाभा.१।४०

**[१]नाभियुक्तोऽभियुञ्जीत तमनीत्वार्थमन्यतः।**
**न चाभियुक्तमन्येन न विद्धं वेद्धुमर्हति॥**

वादिना प्रतिवादी योऽभियुक्तः स तं वाद्यभियोगमन्तेऽनीत्वा परिसमाप्तिमनीत्वा तमेव वादिनं न प्रत्यभियुञ्जीत। द्वयोर्वादिनोरेककालमनिर्णयगमकत्वात्। तं च स्वकीयाभियोगं निर्वाह्य यदि सत्यमेव किमपि तस्य स्वकीयमभियोगकारणमप्यस्ति, ततः स एव प्रतिवादी तस्य वादिनस्तत्क्षणमेवाभियोगं दत्वा स्वयं वादी भवति। यश्चान्येनाभियुक्तः प्रारब्धव्यवहारस्तिष्ठति, तमपि नाभियुञ्जीत। यतो न विद्धं वेद्धुमर्हति। येन व्याधेन मृगः प्रथमं विद्धः, तं यदि द्वितीयोऽपि विध्यति तस्य वृथाश्रमः। प्रथमस्यैव तत्राधिकारो न द्वितीयस्येति। अभा.१५

**[२]यमर्थमभियुञ्जीत न तं विप्रकृतिं नयेत्।**
**नान्यत्पक्षान्तरं गच्छेद्गच्छन्पूर्वात्स हीयते॥**

(१) अत्र प्रथमं भाषाकृता अस्य पार्श्वे मयोपलभ्यसुवर्णगद्याणकदश, द्वितीयवेलायां विंशतिद्रम्माणकाव-

* पमा., व्यप्र., विता. मितागतम्। + शेषं मितागतम्।

(१) **नासं.**१।४० अना (अनि) राज्ञे (राज्ञः) चास्या (चाप्य); **नास्मृ.**१।४६; **अभा.**१३; **अप.**२।१६ अना (अनि); **व्यक.**३४ अना (अनि) चास्या (चाप्य); **स्मृच.**४८ व्यकवत्; **व्यसौ.**३३ (=) चास्या (चाप्य); **व्यप्र.**७५ अपवत्; **विता.**७६ व्यकवत्; **प्रका.**३० व्यकवत्; **समु.**२४ चास्या (चाप्य) ध्यति (ध्यते).

(१) **नासं.**१।४८ नीत्वार्थमन्यतः (तीर्त्वार्थमन्तरा) न विद्धं वेद्धु (विद्धं न व्यद्धु); **नास्मृ.**१।५५ नीत्वा (तीर्त्वा); **अभा.**१५ र्थमन्यतः (र्थसंमतः).

(२) **नासं.**१।४९; **नास्मृ.**१।५६; **अभा.**१५ यम (तम); **व्यमा.**२९२ यम (यश्चा) नान्यत्प (न च प) बृहस्पतिः; **व्यक.**२४ न्यत्प (न्यप) स ही (प्रही); **व्यचि.**१२ व्यमावत्, बृहस्पतिः; **व्यसौ.**३२; **वीमि.**२।६ व्यमावत्, बृहस्पतिः.

तारं परिकल्प्य स्वहृदये आवेदयति मया अस्य पार्श्वे लभ्यद्रव्यशतद्वयमिति। अथवा, प्रथमं लभ्यद्रव्यं जनं प्रार्थयित्वा द्वितीयवेलायामधिकं प्रार्थयते, अधिकं वा प्रथममुक्त्वा जनं वदति—इमां सर्वथाऽपि अर्थविप्रकृतिं विनाशतां न नयेत्। तथाऽन्यत्पक्षान्तरं गच्छेदिति—प्रथमं स्वकीयसुवर्णस्य विंशतिगद्याणकप्रार्थनां कृत्वा द्वितीयवेलायां वदति, मदीयपुत्रस्यानेन दातव्यमस्ति द्रम्मपञ्चाशादिति। एतदन्यत्पक्षान्तरमुच्यते। तं न गच्छेत्। यतो द्वितीयपक्षान्तरं गच्छन्पूर्वपक्षात् वादी हीयत इति। अभा.१५

(२) विप्रकृतिर्यथा। मदीया महिषी धेनुरनेनापहृतेति अभियुज्य लेखयित्वा पश्चाद्गोधेनुरित्याहुः। मदीयां पत्नीमयमपहृतवानिति अभियुज्य पश्चादाह अवरुद्धवानिति। पक्षान्तरं यथा, निक्षिप्तं मया तस्मिन् सुवर्णं, तद्ददात्विति लेखयित्वा आस्तां तावदिदं मदीयां अवरुद्धकीं कुतोऽपहृतवानिति। यत्र तु पूर्वोक्तमजहदेव प्रतिज्ञान्तरं गच्छेत्, यथा मम ऋणं गृहीत्वा न ददाति, तावत् तद्याचमानश्चाऽहमनेन मूर्ध्नि पादेन हत इति अधिकदण्डनीयार्थं, तत्र न दोषः। 'न तं विप्रकृतिं नयेत्' इति प्रतिज्ञातमर्थं न्यूनमधिकं वा न कुर्यात्, न च पूर्वं प्रतिज्ञामुक्त्वा प्रतिज्ञान्तरं कुर्यात्। व्यमा.२९२

(३) विप्रकृतिं न्यूनतामधिकतां वा, यथा शतं धारयसीति भाषित्वा पश्चात् पञ्चाशतमेव वा सार्धशतं वेति पुनर्भाषणं पक्षान्तरमिति शतं, सुवर्णान् धारयसीत्यादि भाषित्वा विरम्य पश्चात् गांश्च धारयसीति पक्षान्तरमित्यर्थः। इदं चोत्तरविरोधात् पूर्वमविरुद्धमेव तदनन्तरं तु विरुद्धम्। 'उत्तरेणावरुद्धस्य निवृत्तं लेखनं भवेत्' इत्यादिवचनात्। व्यचि.१३

(४) यमर्थं धान्यहिरण्यादिकमुद्दिश्य व्यवहारो लेखितः, तमर्थं क्रियाकालेऽन्यथा न ब्रूयात्। हिरण्यं लेखयित्वा साक्षिप्रश्नकाले धान्यमिति। नान्यत् पक्षान्तरमिति। गच्छेत् साक्षिणमुद्दिश्येत्युक्तम्, नार्थान्तरमुद्दिश्येति। इदमन्यन्मम धारयति तत् तावद् दाप्यतां तिष्ठन्तु साक्षिण इति। स पूर्वोक्तादर्थाद्धीयते। तत्र पराजीयत इत्यर्थः। तच्च न लभते दण्ड्यश्चेति। नाभा.१।४९

**न[१] च मिथ्याभियुञ्जीत दोषो मिथ्याभियोगिनः।**
**यस्तत्र विनयः प्रोक्तः सोऽभियोक्तारमाव्रजेत्॥**

(१) न च अर्थसंबन्धं विनैव कामक्रोधलोभान्धतया मिथ्याभियोगः केनाऽपि कार्यः कर्तव्यः कदापि। यतो मिथ्याऽभियोगदातुर्महान्दोषः। यस्तत्र विनयः प्रोक्तः स मिथ्याऽभियोगदातारमाव्रजेत् आगच्छेदित्यर्थः। अभा.१५

(२) तत्प्रतिपदोक्तदण्डाभावविषयम्। सामान्यशास्त्रत्वात्। तेन निह्नवेऽसद्वृत्तस्य यो दण्डोऽभिहितो विष्णुना स एव सद्वृत्तस्य मिथ्याभियोगिनो भवतीत्यवगन्तव्यम्। स्मृच.१२२

(३) अगुरुतल्पगः गुरुतल्पग इत्युक्ते गुरुतल्पगस्य यत्कार्यं तदभियोक्तुः कर्तव्यम्। नाभा.१।५०

**सापदेशं[२] हरन्कालमब्रुवंश्चाऽपि संसदि।**
**उक्त्वा वचो विब्रुवंश्च हीयमानस्य लक्षणम्॥**

तत्र अपदेशो व्याजः। सव्याजं कालहरणं कुर्वन् 'तावदपटुरहं, तावदशुचिरहं, नोत्तरं प्रयच्छामि' इति। तथा च, यश्च सभ्यैः पृष्टो न ब्रवीति। यश्च प्रथमं वचनमुक्त्वा पश्चाद् ब्रवीति– न मया तदुक्तमिति। एतैश्चिह्नैस्तस्य हीयमानस्य लक्षणं ज्ञेयमिति। अभा.१५-१६

**पलायते[३] य आहूतः प्राप्तश्च विवदेन्न यः।**
**विनेयः स भवेद्राज्ञा हीन एव स वादतः॥**

यश्च राज्ञा चाहूतः सन् पलायते, तथा पलायमानोऽपि पुरुषैर्यत्नादानीतः, तत्र प्राप्तः प्रचोद्यमानोऽपि किंचिन्न वदेत् स विनेयो राज्ञा भवति, यतो हीन एव स तस्माद्वादत इति। अभा.१६

**सम्यक्प्रणिहितं[४] चार्थं पृष्टः सन्नाभिनन्दति।**
**अपदिश्य च यो देश्यं पुनस्तमनुधावति॥**

---

(१) **नासं.**१।५०; **नास्मृ.**१।५७; **अभा.**१५; **व्यक.**१२८; **स्मृच.**१२२; **प्रका.**७७; **समु.**६७.

(२) **नासं.**१।५१; **नास्मृ.**१।५८ उक्त्वा वचो (उक्ता वाचो); **अभा.**१५; **व्यक.**३४ सा (सो) हरन् (हरेत्); **व्यनि.** हरन् (हरेत्) ब्रुवं (भ्रमं); **व्यसौ.**३३ सापदेशं (अदेशं यो).

(३) **नासं.**१।५२ विनेयः स (स दण्ड्यश्च); **नास्मृ.**१।५९; **अभा.**१६ विवदेन्न यः (न वदेत्तु यः); **व्यक.**३४ पला... तः (आहूतो यः पलायेत) स वा (विवा); **व्यसौ.**३३ व्यकवत्.

(४) **नास्मृ.**१।६० सन्ना (सन्नोऽ); **अभा.**१६ चार्थं (वार्तं) सन्ना (सन्नोऽ); **अप.**२।१६ चा (यो) च यो दे (यमुद्दि).

सम्यक्करणेन करणाग्रे प्रथममावेदितमपि यावत्सभ्यैः पृष्टस्तावत्तमेव नाभिनन्दति न समर्थयतीत्यर्थः। तथा अपदिश्य अर्थमलपित्वा पुनस्तमेवानुधावति। अस्यायमर्थः—सभ्यैः पृष्टः कीं तव साक्षिणो लिखितं च किञ्चिदस्ति? एवं पृष्टः प्रथमं वदति—न किंचिदस्ति। एवमपदिश्य पुनस्तमेव वदति—अनुधावति। यथा विद्यते मम लिखितं साक्षिण एवेति। सोऽपि हीयमानः। अभा.१६

**संन्ति ज्ञातार इत्युक्त्वा दिशेत्युक्तो दिशेन्न यः।**
**एतैस्तु कारणैः सर्वैर्धर्महीनान्विनिर्दिशेत् ॥**

यश्चैवं वदति—यथा लिखितं मम विद्यते साक्षिणो वा। तत् श्रुत्वा सभ्यैरुक्तम्—यदि ज्ञातारः सन्ति ततो दिश आवेदयेत्यर्थः। यावता न दिशति—न तत्रानयति। एतान्सर्वानप्येतैर्लक्षणैर्धर्महीनान्विनिर्दिशेत्। अभा.१६

**पूर्ववादं परित्यज्य योऽन्यमालम्बते पुनः।**
**वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः * ॥**

(१) यो वादी पूर्वपादलिखितस्वप्रतिज्ञार्थे क्रियया निर्वाहयितुमसमर्थः, अन्यपादाश्रितमभियोगमवतारयति, स तस्मात्संक्रमणाद्धीनवादीति ज्ञेयः। वक्तव्य इत्यर्थः। अभा.२४

(२) पूर्ववादः आवेदनम्। स्मृच.४६

(३) पदसंक्रमणम्—ऋणादानादिपदान्यतमं पदं विहाय अन्यतमपदस्वीकारपूर्वमावेदनम्। सवि.१०२

अर्थविवादेषु वादहानिकारणापवादः

**सर्वेष्वर्थविवादेषु वाक्छले नावसीदति।**

* अत्रत्या मिता.व्याख्या (यास्मृ. २।९) श्लोके (पृ.१९७) द्रष्टव्या। व्यत., विता. मितागतम्।

(१) **नास्मृ.**१।६१; **अभा.**१६; **अप.**२।१६ (धर्मस्थः कारणैरेतैर्हीनं तमपि निर्दिशेत्).

(२) **नास्मृ.**२।२४; **अभा.**२४ वादं (पादं); **मिता.**२।९ वादं (पादं) वाद (पद); **अप.**२।१६ पुनः (नरः); **व्यक.**३४ अपवत्; **स्मृच.**४६; **पमा.**८१; **स्मृसा.**१२२; **व्यनि.**; **स्मृचि.**४१ अपवत्; **नृप्र.**७ लम्ब (रभ); **व्यत.**२०१; **सवि.** १०१ वाद (पद); **चन्द्र.**१२२ अपवत्; **व्यसौ.**३२ अपवत्; **व्यप्र.**७२; **व्यम.**९-१०; **विता.**९९ सविवत्; **सेतु.**९९; **प्रका.**२९; **समु.**२३.

(३) **नास्मृ.**२।२५ ष्वर्थ (ष्वपि) वसीदति (पहीयते) पर (पशु); **अभा.**२४ दाने (दान) शेषं नास्मृवत्; **मिता.**२।९;

**परस्त्रीभूम्यृणादाने शास्योऽप्यर्थान्न हीयते ॥**

(१) अन्येषु सर्वेषु विवादेषु वाक्छले नापहीयते, नावसायं प्राप्नोति। यत्र पुनर्गोमहिष्यादिपशुवादः, यश्च स्त्रीविषयसंबद्ध्यमानो वादः, तथा गृहक्षेत्रादिको वादः, यो भूमिवादः, यश्च पञ्चविंशतिभेदभिन्नर्णादानवादः, एतेषु सर्वेष्वपि प्रधानवादेषु केनापि द्विरुक्तवाक्छलमात्रेणाऽवसायं न प्राप्नोति। शास्योऽपि विनयं प्राप्तोऽपि। तस्मात्प्रक्रान्तस्वकीयार्थान्नावहीयते न परिच्यवते इति। अभा.२४

(२) अस्यार्थः—सर्वेष्वर्थविवादेषु, न मन्युकृतेषु। वाक्छले प्रमादाभिधानेऽपि नावसीदति न पराजीयते। न प्रकृतादर्थाध्दीयत इत्यर्थः। अत्रोदाहरणं परस्त्रीत्यादि। परस्त्रीभूम्यृणादाने प्रमादाभिधानेन दण्ड्योऽपि यथा प्रकृतादर्थान्न हीयते एवं सर्वेष्वर्थविवादेष्विति। अर्थविवादग्रहणान्मन्युकृतविवादेषु प्रमादाभिधाने प्रकृतादप्यर्थाद्धीयत इति गम्यते। यथाऽहमनेन शिरसि पादेन ताडित इत्यावेदनसमये अभिधाय भाषाकाले हस्तेन पादेन वा ताडित इति वदन्न केवलं दण्ड्यः पराजीयते च। *मिता.२।९

(३)अर्थात् पश्चादेः। व्यक. ३५

(४) अत्रापवादमाह कात्यायनः—'उभयोर्लिखिते वाक्ये प्रारब्धे कार्यनिश्चये। अनुक्तं तत्र यो ब्रूयात्तस्मादर्थात्स हीयते' ॥ +स्मृच.४८

(५) वाक्छलवादी सर्वेषु वादेषु हीयते। अर्थात् पशुस्त्रीभूम्यृणादानात्। चन्द्र.१२३

(६) क्वचिदर्थविवादेऽप्यर्थहानिः सन्दिग्धार्थमित्यनेन दर्शिता। ×व्यप्र.७५

* व्यमा., व्यचि., व्यत., व्यम., विता., सेतु. मितागतम्। पमा. मितागतं स्मृचगतं च।

+ वाक्यार्थो मितावत्। × शेषं मितावत्।

**व्यमा.**२८९ ष्वर्थ (ष्वेव) पर (पशु); **व्यक.**३५ पर (पशु); **स्मृच.**४८ व्यकवत्; **पमा.**८३ व्यकवत्; **व्यचि.**३२ व्यकवत्; **नृप्र.**७; **व्यत.**२०५ व्यकवत्; **चन्द्र.**१२३ व्यमावत्; **व्यसौ.**३४ व्यकवत्; **व्यप्र.**७५; **व्यम.**९; **विता.**७८-७९, ९९; **सेतु.**१०४ भूम्यृ (भू ऋ); **प्रका.**३१ व्यकवत्; **समु.** २३ व्यकवत्.

वादहानिकारणानि

**पलायते य आहूतो मौनी साक्षिपराजितः ।**
**स्वयमभ्युपपन्नश्च अवसन्नश्चतुर्विधः ॥**

(१) य आहूतः आकारितोऽपि राजपुरुषैः प्रस्तुतव्यवहारखेटनार्थं पलायते स अवसन्नः प्राप्तावसाय उच्यते । मौनीति—यः प्रस्तुतव्यवहारे स्वकीयं प्राप्तावसरं प्रोत्साह्यमानोऽपि न वदति मौनी तूष्णीं स्थितः तिष्ठति, अयमप्यवसायं प्राप्तो द्वितीयः। तथा च साक्षिभिर्यः पराजयं प्रापितः, अयमप्यवसन्नस्तृतीयः । तथा व्यवहारार्थमागतः स्वकीयमन्यायं यः स्वयमेव प्रतिपद्यते, सः स्वयमभ्युपपन्नश्चतुर्थोऽवसायं प्राप्तः। इत्ययं अवसन्नश्चतुर्विध इति । अभा.२५

(२) अत्र अवसन्नचतुष्टयमध्ये आद्यौ संभावितभङ्गौ, अन्त्यौ निर्णीतभङ्गौ । व्यचि.३२

**अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः ।**
**आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः ॥**
**अन्यवादी तथा हीनः स एव विवृताननः ॥**

(१) अत्र ये समनन्तरपूर्वश्लोके ('पलायते य आहूत' इत्यादिश्लोके ) दर्शिताश्चत्वारः प्राप्तावसाया उक्ताः पुनरस्मिन् श्लोके मौनी आहूतप्रपलायी च हीनवादित्वविनयमात्रेणाऽनुगृह्य पुनरपि वादयोग्यत्वमापादितौ । ततस्तेषां चतुर्णां मध्ये निश्चितौ द्वावेवाऽवसन्नौ प्राप्तावसायौ प्रतिष्ठितान्तौ एको यः साक्षिभिः पराजितो, द्वितीयो यः स्वयमभ्युपपन्नः स्वकीयमन्यायवादित्वं प्रतिपन्नः । अतो ये हीनवादशब्देन प्राप्ताः विनयमात्राकोटनाः, न तु प्राप्तावसायाः पुनरपि वादयोग्या भवन्तीति । ते चात्रोच्यन्ते । तत्र अन्यवादी यो मतिभ्रंशात् किंचिदन्यद्वदति, यश्च क्रियाद्वेषाद्दूषणं प्रयच्छति, यश्च राजदैविकादिना नोपस्थानकर्ता जातः। यश्च तत्क्षणमेवोत्तरमदत्वा उत्तरकालं प्रार्थयति, यश्च स्वकीयवैरिणं दानग्रहणिकं वा दृष्ट्वा तद्भयात् प्रपलायनः, एते पञ्चापि एतैरेव छलैश्च प्राप्तावसाया न भवन्ति। तत्क्षणमात्रवादहीनाः पुनरपि वादयोग्या भवन्तीत्यर्थः । अभा.२५-२६

(२) तत्र न जयपत्रकमस्ति अपि तु हीनपत्रकमेव । तच्च कालान्तरे दण्डप्राप्त्यर्थम् । जयपत्रं तु प्राङ्न्यायविधिसिद्ध्यर्थमिति विशेषः । *मिता.२।९१

(३) आहूतविपलायी तु अभियोगपरिहारार्थमाह्वानं बुध्वा प्रच्छन्नचारी। एतेषां तूत्तरोत्तरस्य हीनता गुर्वीति ज्ञापयितुं हीनः पञ्चविध इत्युक्तम् । न पुनः पञ्चविध एव हीन इत्यवधारयितुम् । विधान्तरेणापि हीनानां स्मरणात्। हीनताया गुरुत्वज्ञापनं तूत्तरोत्तरस्य दण्डभूयस्त्वज्ञापनार्थम्। ×स्मृच.४७

(४) पञ्चविधाभिधानस्याऽपि साक्षाद्भङ्गपर्यवसाय्यभिधायकत्वेनैवोपपत्तेः। अन्यथा तदाधिक्यात्। चन्द्र.१२२

**प्रपलायी त्रिपक्षेण मौनकृत्सप्तभिर्दिनैः ।**
**क्रियाद्वेषी तु मासेन साक्षिभिन्नस्तु तत्क्षणात् ॥**

क्रिया लेख्यादिका । साक्षिभिन्नः साक्षिभिः पराजितः । व्यत.२०६

## बृहस्पतिः

वादहानिकारणानि

**मृषायुक्तं क्रियाहीनमसारान्यार्थमाकुलम् ।**
**पूर्वपक्षं लेखयतो वादहानिः प्रजायते ॥**

(१) **नास्मृ**.२।३२; **अभा**.२५ पल (पला) अव (न्यव); **व्यक**.३४ य आहूतो (ऽभियुक्तश्च); **स्मृसा**.१२२ व्यकवत्; **व्यचि**.३२ यते (यतो) क्षि (क्षी); **व्यसौ**.३२ तः (ताः) शेषं व्यकवत्. (२) **नास्मृ**.२।३३; **अभा**.२५ प्रप (व्यप); **मिता**. २।६,२।९१; **अप**.२।१६ स्थाता (स्थायी); **व्यक**.३४स्थाता (स्थायी) तप्र (तःप्र); **स्मृच**.४६; **पमा**.८१ अपवत्; **दीक**. ३२ व्यकवत्; **स्मृसा**.१२२ अपवत्; **व्यचि**.३२ व्यकवत्; **व्यनि**. अभावत्; **स्मृचि**.४१ स्थाता (स्थायी) आहूत (दिव्येषु); **व्यत**.२०५-२०६ व्यकवत्; **सवि**.८४,१०१ अभावत्; **चन्द्र**.१२२ (=); **व्यसौ**.३२ अपवत्; **वीमि**.२।७ अपवत्; **व्यप्र**.७२; **व्यउ**.४५ (=); **विता**.५४:१२४(=); **सेतु**.१०५ व्यकवत्; **प्रका**.२९ प्रप (विप); **समु**.२३ प्रकावत्.

(३) **व्यप्र**.७२.

* व्यउ., विता. मितागतम् । × सवि.,व्यप्र. स्मृचवत् ।

(१) **दीक**.३२ भिन्न (छिन्न); **व्यत**.२०६; **सेतु**.१०५ प्रपलायी (विप्रलापी).

(२) **अप**.२।६ क्तं (क्ति) सारान्यार्थं (साध्यार्थं) पूर्व(पूर्वं); **व्यक**.२५ युक्तं (युक्तं) न्यार्थं (क्षर) वाद (वादे); **पमा**.६५; **व्यसौ**.२१ (पूर्वं लेखयतः पक्षं वादे हानिः प्रजायते); **राकौ**. ३८८ क्तं (क्ति) रान्यार्थं (रं व्यर्थं); **समु**.१९ मृषा (भाषा).

अपदिश्याभियोगं यस्तमतीत्यापरं वदेत्।
क्रियामुक्त्वाऽन्यथा ब्रूयात्स वादी हानिमाप्नुयात्॥
महापापोपपापाभ्यां पातकेनाथ संसदि।
योऽभिशप्तस्तत्क्षमते संयुक्तं तं विदुर्जनाः।
तस्माद्यत्नेन कर्तव्यं बुधेनात्मविशोधनम्॥

यः सभायां पातकेनाभिशप्तः सन् मूको भवति स पातकी निश्चेतव्यः। संयुक्तं पापसंयुक्तम्। अपापित्वेन क्षमत इत्याशयात्। महापापोपपापाभ्यां अभिशप्तो यदि प्रथममुपपापविशुद्धिं दित्सति तदा महापापी निश्चेतव्यः। महापापाभिशप्त इत्यादिवचनात्। चन्द्र.१२३

यद्यद् गुरुतरं कार्यं तत्तत्पूर्वं विशोधयेत्॥
महापापाभिशप्तो यः पातकात्तर्तुमिच्छति।
पूर्वमङ्गीकृतं तेन जितोऽसौ दण्डमर्हति॥

पूर्वं महापातकं तर्तुमिच्छति। अङ्गीकृतं सत् तेन महापातकेन असौ महापातकी जितः पराजितः सन् तदनुरूपं दण्डमर्हतीत्यर्थः। चन्द्र.१२३

भयं करोति भेदं वा भीषणं वा निरोधनम्।
एतानि वादिनोऽर्थस्य व्यवहारे स हीयते॥

अर्थव्यवहारे भयादीनि समस्तान्यसमस्तानि वा येन वादिना कृतानि स हीन इत्यर्थः। भीषणं मुखान्तरेण भीत्युत्पादनम्। ×स्मृच.४७

आहूतप्रपलायी च मौनी साक्षिपराजितः।
स्ववाक्यप्रतिपन्नश्च हीनवादी चतुर्विधः॥

(१) स्ववाक्यप्रतिपन्नः स्ववाचैव संप्रतिपन्नः। अत्रापि चतुर्विधग्रहणमेतेषामुत्तरोत्तरस्याचिरं प्रकृतादर्थाद् हीनत्वं भवतीति ज्ञापयितुं, न पुनः प्रकृतार्थाद्धीनश्चतुर्विध एवेति नियन्तुं, विधान्तरस्याप्युक्तत्वात्। स्मृच.४८

(२) साक्षिपराजितः साक्षिवचनाद्यः पराजितः। स्ववाक्यप्रतिपन्नः संप्रतिपत्त्युत्तरदाता। अनयोर्दृष्टान्तत्वेनोपादानम्। यथाऽनयोरविप्रतिपन्नार्थहानिस्तथान्ययोरपीत्यर्थः। *व्यप्र.७६

प्रपलायी त्रिपक्षेण मौनकृत् सप्तभिर्दिनैः।
साक्षिभिस्तत्क्षणेनैव प्रतिपन्नश्च हीयते॥

(१) प्रतिपन्नः प्रतिवादिनः संप्रतिपन्नः। अप.२।१६

(२) तत्र कदा कस्य हीनत्वमित्यपेक्षिते स एवाह– प्रपलायीति। स्मृच.४८

साक्षिणस्तु समुद्दिश्य यस्तु तान्न विवादयेत्।
त्रिंशद्रात्रात्त्रिपक्षाद्वा तस्य हानिः प्रजायते॥

(१) अत्र कार्यगौरवलाघवाभ्यां समयविकल्पः। व्यचि.३२

(२) यश्च सामान्यतः साक्षिणो निर्दिश्य पश्चाद् विशिष्यानिर्दिशन्मनुना 'ज्ञातार' इत्यनेन हीनतयोक्तस्तत्रापि कालावधिं बृहस्पतिरेवाह—साक्षिणस्त्विति। व्यप्र.७६

निवेदितस्याऽकथनं अनुपस्थानमेव च।
पक्षार्थिदोषौ मौनं च हीयमानस्य लक्षणम्॥

वादहानिकारणापवादः

आचारकरणे दिव्ये कृत्वोपस्थाननिर्णयम्।

---

× सवि., व्यप्र. स्मृचवत्।

(१) **पमा**.६५; **समु**.१९ श्याभि (श्यादि). (२) **व्यक**.३५ शप्तस्त (शस्तात्त); **चन्द्र**.१२३ जेना (र्बुधाः); **व्यसौ**.३३. (३) **व्यक**.३५; **व्यसौ**.३४ तत्तत्पू (तत्तु पू).

(४) **व्यक**.३५; **चन्द्र**.१२३ पातकात् (पातकं) मिच्छति (मर्हति); **व्यसौ**.३४ शप्तो (शस्तो) पातकात् (पातकी) मिच्छति (मर्हति). (५) **स्मृच**.४७; **सवि**.१०३ कात्यायनः; **व्यप्र**.७३-७४ करोति (कुर्वति; ऽर्थस्य (यस्य); **प्रका**.३०; **समु**.२३.

(६) **अप**.२।१६; **स्मृच**.४८; **पमा**.८२ प्रप (व्यप) क्षि (क्षिः); **स्मृसा**.१२२; **चन्द्र**.१२०; **व्यसौ**.३३ तप्रपलायी च (तो यः पलायेत्तु); **व्यप्र**.७६; **विता**.७८; **प्रका**.३१; **समु**.२४ प्रप (विप).

* शेषं स्मृचवत्।

(१) **अप**.२।१६ मौनकृत् (मौनी वा) भिस्तत्क्षणेनैव (भिन्नस्तत्क्षणेन); **व्यक**.३५ भिस्तत्क्षणेनैव (भिन्नस्तत्क्षणेन); **स्मृच**.४८ व्यकवत्; **पमा**.८२ त्रि (तु); **स्मृसा**.१२२ व्यकवत्; **सवि**.१०३ यी (यन्) शेषं व्यकवत्; **चन्द्र**.१२० क्षेण (क्षे तु) शेषं व्यकवत्; **व्यसौ**.३३ व्यकवत्; **व्यप्र**.७६ व्यकवत्; **प्रका**.३१ व्यकवत्; **समु**.२४ व्यकवत्.

(२) **व्यक**.३५; **स्मृच**.४८; **स्मृसा**.१२२ विवा (निगा); **व्यचि**.३२ विवा (निगा) तस्य हानिः प्रजायते (हानिस्तस्योपजायते); **व्यनि**. विवाद (विभाव); **सवि**.१०३ नारदः; **चन्द्र**.१२० (=) यस्तु तान्न (यस्तन्नैव) शेषं व्यचिवत्; **व्यसौ**.३३ यस्तु तान्न (यस्तान्न तु) शेषं व्यचिवत्; **वीमि**.२।७७ द्रात्रा (द्दिना) शेषं व्यचिवत्; **व्यप्र**.७६; **विता**.७८ स्मृसावत्; **प्रका**.३१; **समु**२४. (३) **व्यसौ**.३३.

(४) **अप**.२।१६ निर्ण (निश्च) नारदः; **व्यक**.३५; **स्मृच**.

**नोपस्थितो यदा कश्चित् छलं तत्र न कारयेत् ॥**
**[1]दैवराजकृतो दोषस्तस्मिन्काले यदा भवेत् ।**
**अवधित्यागमात्रेण न भवेत्स पराजितः ॥**

(१) 'छलं तत्र न कारयेदि'ति वदन्नन्यत्रार्थहानिप्रतिपादकवचनाच्छलानिरसनेनाऽपि व्यवहारनयनं कार्यमिति ज्ञापयति । एवं चार्थविवादेषु यत्र नार्थहानिवचनं तत्रैव हीनस्य वादो ग्राह्यो नान्यत्रेत्यवगन्तव्यम् । स्मृच.४९

(२) आचारो व्यवहारः । छलं पराजयम् । दैवेति । अनुपस्थाने भङ्गमङ्गीकृत्यापि दैवादेरनुपस्थितस्यापि न भङ्ग इत्यर्थः । व्यचि.३२

(३) आचारकरणे उत्तरादौ । चन्द्र.१२१

(४) न कारयेद् निरस्येदित्यर्थः । अत्र पराजित इत्यभिधानात् पूर्वं हानिपदं भङ्गपरमित्येके । व्यवहारे छलस्य निरस्यत्वान्न निगदनमात्रेण भङ्गः, उपन्यस्तानामपि साक्षिणां मध्ये दोषनिश्चयसंभवात् । किन्तु निगदकपक्षे अनुत्कटकोटिकः संशय इत्यपरे । वीमि.२।७७

(५) 'छलं तत्र न कारयेत्' इति वदता यत्र वचनेनार्थहानिः प्रतिपादिता तत्रैव पुनर्विवादाभावोऽन्यत्र तु हीनतानिमित्तं दण्डं कृत्वा पुनर्वादः प्रवर्तनीय एवेति सूचितम् । व्यप्र.७६

## कात्यायनः

अभियोगस्य प्रत्यभियोगेन न निराकरणम् । अस्यापवादश्च ।

**[2]अभियुक्तोऽभियोक्तारं नाभियुञ्जीत कर्हिचित् ।**
**अन्यत्र दण्डपारुष्यस्तेयसंग्रहणात्ययात् ॥**

दण्डादिषु च समाप्यनेन दण्डपारुष्यादि कृतमिति प्रत्यभियोगो दातव्य एव । तथैव तदभियोगस्य निस्तारात् । व्यमा.२९९

अप्रतिवचने अभियुक्तस्य दण्ड्यत्वम्

**[3]उपायैश्चोद्यमानस्तु न दद्यादुत्तरं तु यः ।**
**अतिक्रान्ते सप्तरात्रे जितोऽसौ दातुमर्हति ॥**

दुष्टत्वलिङ्गानि

**[4]आकारेङ्गितचेष्टाभिस्तस्य भावं विभावयेत् ।**
**प्रतिवादी भवेद्धीनः सोऽनुमानेन लक्ष्यते ॥**
**कम्पः स्वेदोऽथ वैवर्ण्यमोष्ठशोषाभिमर्षणे ।**
**भूलेखनं स्थानहानिस्तिर्यगूर्ध्वनिरीक्षणम् ॥**
**स्वरभेदश्च दुष्टस्य चिह्नमाहुर्मनीषिणः ॥**

(१) प्रतिवादीति– द्वयोरप्युपादानम्, अन्योन्यं प्रतिपक्षवादात् । ओष्ठाभिमर्षणं लेहनम् । *व्यमा.३१३

(२) आकारोऽत्र क्रोधजनिता शरीरविकृतिः । +व्यक.३२

(३) इदं संभावनार्थं न निश्चयार्थम् । विता.१०४

विविधानि वादहानिकारणानि

**[5]श्रावयित्वा यदा कार्यं त्यजेदन्यद्वदेदसौ ।**
**अन्यपक्षाश्रयस्तेन कृतो वादी स हीयते ॥**

---

४९ दिव्ये(ऽनेन) त्वो (तो) निर्ण (निश्च); **स्मृसा.**१२२ (नोपस्थायी भवेद्यस्तु हीनं तमपि निर्दिशेत्); **व्यचि.**३२ यदा कश्चित् (भवेद्वादी); **सवि.**१०४(=); **चन्द्र.**१२० स्मृसावत्; **व्यसौ.**३४ त्वो (तो) निर्ण (निश्च) यदा कश्चित् (भवेद्वादी); **वीमि.**२।७७ व्यचिवत्; **व्यप्र.**७६; **प्रका.**३१ दिव्ये (ऽनेन); **समु.**२४.

(१) **अप.**२।१६ नारदः; **व्यक.**३५; **स्मृच.**४९; **पमा.** ८२ तस्मिन्काले (तत्काले तु); **स्मृसा.**१२२ नारदः; **व्यचि.** ३२; **व्यनि.** स्मृत्यन्तरम्; **चन्द्र.**१२१ दैवराज (राजदैव); **व्यसौ.**३४; **वीमि.**२।७७ दैव (देव); **व्यप्र.**७६; **विता.** ५४; **प्रका.**२१ यदा (यथा) स्मृत्यन्तरम्; **समु.**२४.

(२) **व्यमा.**२९९ नाभि (अभि); **व्यचि.**१७.

* व्यप्र. व्यमावत् । + शेषं व्यमावत् ।

(१) **पमा.**८१; **वीमि.**२१७ उपायैश्चोद्यमानस्तु (पूर्वपक्षे यथार्थं तु) दातु (दण्ड). (२) **व्यमा.**३१३; **व्यक.**३२ भाव (चार); **व्यसौ.**३१; **व्यप्र.**७१; **विव्य.**१०.

(३) **व्यमा.**३१३ वर्ण्य (कल्य); **व्यक.**३२ भिमर्षणे (वमर्शनम्); **व्यनि.** (प्रस्वेदो ह्यथ वैवर्ण्यमोष्ठशोषाभिमर्शनम्) नारदः; **व्यसौ.**३१ णे (णम्); **व्यप्र.**७१ व्यसौवत्; **विता.**१०४ भिमर्षणे (वमर्शने) भू (भ्रू); **प्रका.**३१ र्षणे (र्शनम्) नारदः; **समु.**२४ प्रकावत्, नारदः; **विव्य.**१० ओष्ठशोषाभिमर्षणे (मुखशोषोऽभिमर्शनम्) भूलेखनं स्थानहानिः (भूलेखं स्थानहानिश्च).

(४) **व्यमा.**३१३ हमा (हान्या); **व्यक.**३२; **व्यनि.** नारदः; **व्यसौ.**३१ चिह्न (हेतु); **व्यप्र.**७१; **विता.**१०४; **प्रका.**३१ व्यमावत्, नारदः; **समु.**२४ व्यमावत्, नारदः; **विव्य.**१० व्यमावत्.

(५) **शुनी.**४।६३३ यदा (तु यत्) (अन्यपक्षाश्रयाद्वादी हीनो दण्ड्यश्च स स्मृतः); **अप.**२।१६; **स्मृच.**४६; **सवि.** १०२ यदा (तदा); **व्यप्र.**७२; **प्रका.**२९; **समु.**२३.

[१]न मयाऽभिहितं कार्यमभियुज्य परं वदेत्।
विब्रुवंश्च भवेदेवं हीनं तमपि निर्दिशेत्॥

(१) अयमर्थः—विगताभियोगार्थः कार्यं साध्यं प्रतिज्ञाय न मयैतत्प्रतिज्ञातमिति पूर्वापरविरुद्धं ब्रवीति यस्तं हीनं निर्दिशेदिति। अप.२।१६

(२) परमभियुज्य नाहमभियुनज्मीत्येवं विरुद्धं यो वदेत् सोऽप्यन्यवादितया हीन इत्याह स एव—नेति। *स्मृच.४६

[२]लेखयित्वा तु यो वाक्यं न्यूनं वाऽप्यधिकं पुनः।
वदेद्वादी स हीयेत नाभियोगं तु सोऽर्हति॥

(१) अभियोगः पूर्ववादः। अप.२।१६

(२) लेखयित्वा पत्र इति शेषः। भूम्यादावावापोद्धारस्य तेनैवोक्तत्वात्। अभियोगः पूर्वपक्षः तं कर्तुं नार्हतीत्यर्थः। एतच्चानर्हत्वमुत्तरे निवृत्ते सति वदतो द्रष्टव्यम्। अनिवृत्ते तूत्तरे हीनतैव, नानर्हत्वम्। आ उत्तरनिवृत्तेः पूर्वपक्षशोधनस्य मोहादौ अगत्याऽभ्यनुज्ञानात्। स्मृच.४७

[३]सभ्याश्च साक्षिणश्चैव क्रिया ज्ञेया मनीषिभिः।
तां क्रियां द्वेष्टि यो मोहात् क्रियाद्वेषी स उच्यते॥
[४]आह्वानादनुपस्थानात् सद्य एव प्रहीयते॥
[५]ब्रूहीत्युक्तोऽपि न ब्रूयात्सद्यो बन्धनमर्हति।
द्वितीयेऽहनि दुर्बुद्धेर्विद्यात्तस्य पराजयम्॥

पराजयो हीनता। स्मृच.४७

व्याजेनैव तु यत्रासौ दीर्घकालमभीप्सति।
सापदेशं तु तद्विद्याद्वादहानिकरं स्मृतम्॥

वादहानिदोषदुष्टानां दण्डः

[२]अन्यवादी पणान् पञ्च क्रियाद्वेषी पणान् दश।
नोपस्थाता दश द्वौ च षोडशैव निरुत्तरः॥
[३]आहूतप्रपलायी च पणान् ग्राह्यस्तु विंशतिम्॥

हीनवादिनो दण्डेन पुनर्वादाधिकारमाह—अन्यवादीति। पमा.८३

[४]त्रिराहूतमनायान्तमाहूतविपलायिनम्।
पञ्चरात्रमतिक्रान्तं विनयेत्तं महीपतिः॥

तृतीयपञ्चमयोर्दण्डप्राप्तौ विशेषमाह स एव—त्रिराहूतमिति। स्मृच.४७

[५]श्रावितव्यवहाराणामेकं यत्र प्रभेदयेत्।
वादिनं लोभयेच्चैव हीनं तमपि निर्दिशेत्॥

श्रावितव्यवहाराणां सभ्यादीनां मध्ये एकमपि यः प्रभेदयेत् अन्यद्वारानुरोधाद्युत्पादनेनेत्यर्थः। व्यप्र.७३

[६]दोषानुरूपः स ग्राह्यः पुनर्वादो न विद्यते॥

एतेष्वपि हीनेषु दोषानुरूपो दण्डो ग्राह्यः। तथा च हीनाधिकारे कात्यायनः—दोषेति। प्रकृतार्थसिध्यर्थमिति शेषः। अयं च प्रतिषेधो मन्युकृतविवाद एव। *स्मृच.४८

---

* व्यप्र. स्मृचवत्।

(१) अप.२।१६; व्यक.३५; स्मृच.४६; पमा.८१ युज्य (युक्तं) नारदः; सवि.१०२ न मया (समया); व्यसौ.३३ युज्य (युक्त); व्यप्र.७२; प्रका.३०; समु.२३.

(२) अप.२।१६; व्यक.३५ वाप्य (अप्य); स्मृच.४७ न्यूनं वाप्य (हीनं वाऽभ्य); पमा.८१ न्यूनं वाप्य (ऊनं वाभ्य) नारदः; व्यचि.३५ वाप्य (अभ्य); सवि.१०२; व्यसौ.३३ यो वा (यद्वा); व्यप्र.७२; न्यूनं वाप्य (ऊनं वाऽभ्य) येत (यते); प्रका.३० स्मृचवत्; समु.२३ स्मृचवत्.

(३) स्मृच.४७; पमा.८२ नारदः; सवि.१०२; व्यप्र.७३; विता.५४ तां क्रि (सक्रि) नारदः; प्रका.३०; समु.२३. (४) स्मृच.४७; पमा.८२ नारदः; सवि.१०२; व्यप्र.७३ प्रहीयते (स हीयते); प्रका.३०; समु.२३. (५) स्मृच.४७; पमा.८२ नारदः; सवि.१०२ ऽपि (हि); व्यप्र.७३ सद्यो बन्धन (सद्यस्तद्धन); प्रका.३०; समु.२३. (१) अप.२।१६ शं तु (शं च); स्मृच.४७; चन्द्र.१२२ करं (पदं); व्यसौ.३३; व्यप्र.७३ मभीप्सति (मतिक्रमेत्); प्रका.३० भीप्सति (भीप्सिते); समु.२३.

* व्यप्र. स्मृचगतम्।

(२) स्मृच.४७; पमा.८३ द्वौ (द्वे); सवि.१०३; व्यप्र.७३ पमावत्; विता.५५; प्रका.३० पणान् (क्रियान्); समु.२३.

(३) स्मृच.४७ प्रप (विप); पमा.८३; सवि.१०३ प्रप (व्यप) च (तु); व्यप्र.७३ ग्राह्य (दाप्य); विता.५५ तिम् (तिः) शेषं व्यप्रवत्; प्रका.३० स्मृचवत्; समु.२३ स्मृचवत्. (४) स्मृच.४७; पमा.८३ यान्त (यात) विप (प्रप); व्यप्र.७३ पमावत्; प्रका.३०; समु.२३.

(५) स्मृच.४७; सवि.१०३; व्यप्र.७३; प्रका.३०; समु.२३. (६) स्मृच.४८; पमा.८३ पः (पं) स ग्रा (संग्रा); व्यप्र.७५ (=) पः (पं); समु.२३ पः (पं) विद्यते (युज्यते).

विविधानि वादहानिकारणानि

**उभयोर्लिखिते वाक्ये प्रारब्धे कार्यनिर्णये ।**
**अनुक्तं तत्र यो ब्रूयात् तस्मादर्थात्स हीयते *॥**
**[1]साक्षिणो यस्तु निर्दिश्य कामतो न विवादयेत् ।**
**स वादी हीयते तस्मात् त्रिंशद्रात्रात्परेण तु ॥**

वादहानावपि वादोद्धारविवेकः

**[2]पलायनानुत्तरत्वादन्यपक्षाश्रयेण च ।**
**हीनस्य गृह्यते वादो न स्ववाक्यजितस्य तु ॥**

(१) पलायनादाववधिभूतकालातिक्रमेणागमनादि-कर्तुरर्थहान्यभावात् वादो ग्राह्य इत्यर्थः । स्मृच.४९

(२) स्ववाक्यजितस्येति प्रकृतार्थहानिनिमित्तोपलक्षणम् । व्यप्र.७६

**[3]यो हीनवाक्येन जितस्तस्योद्धारं विदुर्बुधाः ।**
**स्ववाक्यहीनो यस्तु स्यात्तस्योद्धारो न विद्यते ॥**

उद्धारः पुनर्व्यवहारः । अत्रापि स्ववाक्यहीन इति प्रकृतार्थहानिनिमित्तोपलक्षणम् । व्यप्र.७६

विविधानि वादहानिकारणानि

**[4]न परेण समुद्दिष्टानुपेयात्साक्षिणो रहः ।**
**भेदयेच्चैव नान्येन हीयेतैवं समाचरन् ॥**
**[1]पराजयश्च द्विविधः परोक्तः स्वोक्त एव च ।**
**परोक्तः स्याद्दशविधः स्वोक्त एकविधः स्मृतः ॥**
**[2]विवादान्तरसंक्रान्तिः पूर्वोत्तरविरुद्धता ।**
**दूषणं स्वक्रियोत्पत्तेः परवाक्योपपादनम् ॥**
**[3]अनिर्देशश्च देशस्य निर्देशो देशकालयोः ।**
**साक्षिणामुपजापश्च विद्वेषो वचनस्य च ।**
**अयुक्तदेशोपनयः साक्षिप्रश्ननिराक्रिया ॥**

सत्योत्तरे स्वोक्तेनैव भङ्गः । परोक्तदशविधभङ्गमाह—विवादान्तरेति । व्यमा.२८४

## हारीतः

वादहानिकारणानि

**[4]सापदेशं हरेत्कालमब्रुवंश्चापि संसदि ।**
**उक्त्वा वचो विब्रुवंश्च हीयमानस्य लक्षणम् ॥**

## कालिकापुराणम्

दुष्टत्वलिङ्गानि

**[5]वाचं न वदति त्रस्तः कम्पः स्वेदोऽथवा न तु ।**
**विकारो वाऽन्यथा गात्रे गतिर्वा स्यान्न चान्यथा ।**
**स जयी यद्यकोपः स्यात् न चेत्प्राक्तन एव हि ॥**

न त्विति कम्पस्वेदादिभिः संबध्यते । न चेति विकारो वेत्यनेन संबध्यते । प्राक्तन एव पूर्ववाद्येव । स जयी स्यादित्यन्वयः । इति दुष्टलक्षणम् । व्यक.३३

---

* व्याख्यासंग्रहः स्थलादिनिर्देशश्च उत्तरप्रकरणे (पृ.१७३) द्रष्टव्यः ।

(१) **अप**.२।१६; **स्मृच**.४८; **विता**.७७ स्तु (तु) कामतो (काले यो) ण तु (ऽह्नि); **प्रका**.३१; **समु**.२४.

(२) **स्मृच**.४९; **स्मृसा**.१२३ स्ववाक्यजितस्य तु (स्वचर्यावसितस्य च); **चन्द्र**.१२० स्मृसावत्, उत्त., नारदः; **व्यप्र**.७६ च (वा) तु (च); **प्रका**.३१ उत्त., बृहस्पतिः; **समु**.२४. (३) **स्मृच**.४९; **सवि**.१०४ (=) यो हीन (हीनोऽन्य) जित (बुध) हीनो (भिन्नो); **व्यप्र**.७६ वाक्येन (चिह्नेन); **प्रका**.३१ बृहस्पतिः; **समु**.२४.

(४) **व्यक**.३४ चैव ना (नैव चा) नारदकात्यायनौ; **स्मृसा**.१२२; **व्यचि**.३२; **व्यसौ**.३३ तैवं (देवं) नारदकात्यायनौ.

(१) **व्यमा**.२८४; **विव्य**.३ च (वा) स्यात् (च).

(२) **व्यमा**.२८४; **विव्य**.३ पूर्वोत्त (पूर्वाप).

(३) **व्यमा**.२८५; **विव्य**.३ ,नयः (चयः).

(४) **स्मृच**.४७ वि (ऽपि); **व्यप्र**.७३; **प्रका**.३० उक्त्वा (उक्तो); **समु**.२३ रेत् (रन्).

(५) **व्यक**.३३ गति (मति); **चन्द्र**.१२१ वदति त्रस्तः (वक्ति यस्तत्र) रो वा (रो ना); **व्यसौ**.३१-३२ न तु (पुनः).

# संधिः

## बृहस्पतिः

[1]पूर्वोत्तरे संनिविष्टे विचारे संप्रवर्तिते ।
प्रशमं ये मिथो यान्ति दाप्यास्ते द्विगुणं दमम् ॥

मिथो यान्ति । नृपं वञ्चयित्वेति शेषः । *स्मृच.४९

[2]आवेद्य तु गृहीतार्थं प्रशमं यान्ति ये मिथः ।
अभियोगानुरूपेण तेषां दण्डं प्रकल्पयेत् ।
अकृतं तदिति प्राहुः शास्त्रे शास्त्रविदो जनाः ॥
[3]पूर्वोत्तरेऽभिलिखिते प्रक्रान्ते कार्यनिर्णये ।
द्वयोः संतप्तयोः संधिः स्यादयःखण्डयोरिव ॥
[4]साक्षिसभ्यविकल्पस्तु भवेत्तत्रोभयोरपि ।
दोलायमानौ यौ संधिं प्रकुर्यातां विचक्षणौ ॥

(१) एकस्य वादिनः एकान्तपराजयादर्वाक् । यौ संधिं प्रकुर्यातां तौ विचक्षणावित्यर्थः । ×स्मृच.४९

(२) उत्तापकारणमाह—साक्षिसभ्येति । व्यत.२१६

(३) साक्षिविकल्पः—उभयत्र समाः साक्षिणः । सभ्यविकल्पः—अद्वेषरागाणां सभ्यानां स्वाभाविकः परस्परपरामर्षविरोधः । चन्द्र.१२४

(४) साक्षिसभ्यविकल्प इति । उभयोरप्यर्थिप्रत्यर्थिनोः किमेते वक्ष्यन्तीति साक्षिसभ्यविषयको विकल्पो भवेत् । तत्र कार्यनिर्णये दोलायमानौ संदेहदोलारूढौ यौ अर्थिप्रत्यर्थिनौ संधिं कुर्यातां, तो विचक्षणौ चतुरौ पराजयजनिताऽप्रतिष्ठादितिरोधानादित्यर्थ इति कल्पतरुः। रत्नाकरस्तु साक्षिणां सभ्यानां च विकल्पः परस्परविरोध इत्याह । +व्यप्र.७७

[1]प्रमाणसमता यत्र भेदः शास्त्रचरित्रयोः ।
तत्र राजाज्ञया संधिरुभयोरपि शस्यते ॥

(१) चरित्रं आचारः । अप.२।११९

(२) उभयोरप्यर्थिप्रत्यर्थिनोः पक्षे सभ्यानां प्रमाणसाम्यं यत्र प्रतिभाति । यत्र च भेदः शास्त्रचरित्रयोः । शास्त्रे शास्त्रान्तरेण, चरित्रे व्यवहारे चरित्रान्तरेण, विप्रतिपत्तिस्तत्र राजाज्ञया संधिः प्रशस्यते इत्यर्थः । ×व्यक.३६

(३) धर्मशास्त्रविरोधे व्यवहारस्यार्थशास्त्रत्वेन दुर्बलत्वात् तत्र राजाज्ञया संधिः कार्यत्वेन प्रशस्यते । धर्मार्थोपग्रहादिहेतुत्वात् । निग्रहानुग्रहाद्यव्यवस्थानिवर्तकत्वाच्च । *व्यप्र.७७–७८

[2]धर्मार्थोपग्रहः कीर्तिर्भवेत्साम्येन भूभृतः ।
न क्लिश्यन्ते साक्षिसभ्या वैरं च विनिवर्तते ॥
[3]निग्रहानुग्रहं दण्डं धर्म्यं प्राप्य यशोऽयशः ।

---

* पमा., व्यप्र. स्मृचवत् । × सवि. स्मृचवत् ।

(१) **अप**. २।११६ मं ये (मय्य); **व्यक**.३५ संनिविष्टे (विनष्टे तु) स्ते द्वि (स्तद्द्वि); **स्मृच**.४९; **पमा**.८४ वोंत्तरे (वंरूपे); **व्यचि**.३५ संनिविष्टे (निविष्टे तु); **व्यसौ**.३४ व्यकवत्; **व्यप्र**. ७७; **विता**.७९-८०; **प्रका**.९२; **समु**.२४. (२) **व्यनि**. (३) **अप**.२।११९ त्तरेऽभि (त्तरार्थे); **व्यक**.३५ ऽभि (वि) संतप्त (उत्तर); **स्मृच**.४९; **पमा**.८५; **व्यनि**.ऽभि (तु) कात्यायनः; **स्मृचि**.४२ खण्ड (पिण्ड); **व्यत**.२१६ संतप्त (उत्तप्त) खण्ड (पिण्ड); **सवि**.१०४ ऽभिलिखिते प्रक्रान्ते (तु लिखिते प्रकृते) खण्ड (पिण्ड); **व्यसौ**.३४ खण्ड (पिण्ड); **व्यप्र**.७७ संतप्त (उत्तर); **प्रका**.३१; **समु**.२४ ऽभि (तु). (४) **व्यक**.३६ प्रकुर्या (कुर्वीया); **स्मृच**.४९ दोलायमानौ (डोलायमाने); **पमा**.८५ नौ यौ (नयोः) धिं (धिः)णौ (णैः); **व्यनि**. स्तु (श्च) तत्रो (यत्रो) (दोलायमाने कार्ये च तत्र संधिः प्रशस्यते) कात्यायनः; **स्मृचि**.४२ तत्रो (यत्रो) प्रकुर्यातां (कुर्यातां तौ); **व्यत**.२१६ स्मृचिवत्; **सवि**.१०४ दो (डो); **चन्द्र**. १२४ स्मृचिवत्; **व्यसौ**.३४ प्रकुर्यातां (कुर्यातां तौ); **व्यप्र**.७७ व्यसौवत्; **विता**.८० तत्रो (यत्रो); **प्रका**.३१ स्मृचवत्; **समु**.२४ स्तु (श्च) शेषं स्मृचवत्.

+ अस्मद्दृष्टव्यवहारकल्पतरुपुस्तके अत्रत्यः कश्चनांशो गलित इति व्यवहारप्रकाश एवोध्दृतः ।

× चन्द्र. व्यकवत् । * वाक्यार्थौ व्यकवत् ।

(१) **अप**.२।११९; **व्यक**.३६; **स्मृच**.४९; **पमा**.८५; **व्यनि**. कात्यायनः; **स्मृचि**.४२ शस्यते (संमते); **सवि**.१०४ समता (संमतो); **चन्द्र**.१३४ चरित्र (विचार); **व्यसौ**.३४; **व्यप्र**.७७; **विता**.८०; **प्रका**.३१; **समु**.२४. (२) **व्यक**. ३६; **स्मृचि**.४२; **व्यसौ**.३४; **व्यप्र**.७७. (३) **व्यक**.३६ र्म्यं (र्मं) राज्ञां (नृणां); **स्मृचि**.४२; धर्म्यं (धनं) हात् (हो)

**विग्रहाज्जायते राज्ञां पुनर्दोषस्तथैव च ॥**

निग्रहानुग्रहमिति । अर्थिप्रत्यर्थिनोर्विग्रहे सति अवस्थितनिग्रहादीनि भवन्तीत्यतः संधिः श्रेयानित्यर्थः ।

व्यक.३६

**[1]तस्मात्कुलगणाध्यक्षधर्मज्ञाः समदृष्टयः ।**
**अद्वेषलोभाद्यद्ब्रूयुस्तत्कर्तव्यं विजानता ॥**

तस्मादित्यादिना राजाज्ञैव केवलं न संधिहेतुः, कुलगणाध्यक्षादिवचोऽपि राजवञ्चनयेति प्रतिपाद्यते ।

व्यप्र.७८

**[2]यत्र सांशयिको धर्मो व्यवहारश्च पार्थिवे ।**
**संधिस्तत्र तु कर्तव्यो द्वयोः संतप्तयोस्तदा ।**

राज्ञां (नृणां) र्दो (र्दे); **व्यसौ**.३४ हात् (हो); **व्यप्र**.७७ हात् (हो) शेषं व्यकवत्.

(१) **व्यक.**३६ ध्यक्ष (ध्यक्षा) भाद्य (भा य); **स्मृचि**.४२ ध्यक्ष (ध्यक्षा) यद् (ये) विजा (प्रजा); **व्यप्र.**७७. (२) **व्यनि**.; **प्रका.**३१ स्तदा (स्तथा) सम (समः);**समु**.२४ द्वयोः (ऽयसोः) स्तदा (यथा) सम (समः) था (दा).

**समसंधिस्तथा कार्यो विषमस्तु निवर्तते ॥**

## कात्यायनः

नृपाननुमत्या संधिकरणे दण्डः

**[1]आवेद्य प्रगृहीतार्थाः प्रशमं यान्ति ये मिथः ।**
**सर्वे द्विगुणदण्डाः स्युर्विप्रलम्भान्नृपस्य ते ॥**

(१) एवं चाऽवञ्चनया प्रशान्तानां न दण्डः ।

+स्मृच.४९

(२) द्विगुणो दण्डस्तु पराजयनिमित्तदण्डापेक्षया । न तु विवादास्पदीभूतद्रव्यापेक्षया । अद्रव्यविवादेष्वव्याप्तेः । राज्ञे निवेद्यान्योन्यरुच्या राजानुरोधेनैव वा संधिकरणे तु न दण्ड इत्यर्थात् सिद्धम् । व्यप्र.७७

(३) पूर्वोत्तरपक्षलिखनोत्तरं राजाज्ञां विना वादिनोर्मीलने दण्डमाह—आवेद्येति । विता.७९

+ पमा. स्मृचवत्.

(१) **स्मृच**.४९; **पमा**.८४ र्थाः (र्थं) ण्डाः (ण्ड्याः); **व्यप्र**.७७ र्थाः (र्थं); **विता**.७९ पमावत्; **प्रका**. ३१; **समु**. २४.

# प्रत्याकलितविचारः

इदं च प्रत्याकलितं व्यवहर्तृसंबन्धाभावात् व्यवहारदर्शिमात्रकर्तृकत्वान्न व्यवहारपादचतुष्टयान्तर्भूतमिति मिताक्षराकारस्य संमतम् । न त्वनुपादेयम् । एतदन्तरेण तृतीयक्रियापादानवतारात् । यथाह—' उत्तराभिधानानन्तरमर्थिप्रत्यर्थिनोः कस्य क्रिया का वा क्रियेति परामर्शलक्षणस्य प्रत्याकलितस्य योगीश्वरेण व्यवहारपादत्वेनानभिधानाद्यवहर्तृसंबन्धाभावाच्च न व्यवहारपादत्वमि'ति ।

अपरार्कस्तु—साध्यसिद्धिपदेन जयपराजयावधारणलक्षणं प्रत्याकलितं योगीश्वरवचने लक्षणया गृह्यत इति वदन् क्रियोपन्यासोत्तरकालीनविचारस्य सभ्यैः क्रियमाणस्य प्रत्याकलितरूपतामभिप्रैति । संप्रतिपत्त्युत्तरेण क्रियापादेनापि जयपराजयावधारणलक्षणप्रत्याकलितपाद इति द्विपात्त्वमेवेति ब्रुवाणो वाचस्पतिरपि तदेवानुबध्नाति ।

कल्पतरुस्मृतिचन्द्रिकाकारौ मिताक्षराकारवदेवोत्तरलेखनानन्तरभावितानां हीनपरिज्ञानसंधिकरणक्रियादानानां क्रियापादप्राग्भाविनां प्रत्याकलितत्वमभिहितवन्तौ । व्यवहारोपयोगित्वात् बृहस्पत्यादिवचनानां प्रागस्मल्लिखितानामनुरोधाच्च । व्यवहारपादत्वं परं तदनभ्युपगतमभ्युपगतवन्तौ । क्रियापादप्राग्भावित्वमेव तु तस्य युक्तम् । ' ये तु तिष्ठन्ति करण ' इत्यादिवचनात् । व्यवहारपादत्वमस्तु न वेत्यन्यदेतत् ।

यत्तु साध्यसिद्धेर्व्यवहारफलत्वान्न व्यवहारपादत्वं युक्तमिति । तन्न । व्यवहारभावनायाः फलापवर्गिण्याः फलनिरूप्यत्वेन फलस्य तदंशत्वेन तत्पादत्वे बाधकाभावात् । अत एव ' त्र्यंशा भावने 'ति मीमांसकानामुद्घोषः ।

तात्पर्यपरिशुद्धावुदयनाचार्यास्तु प्रमाणोपन्यासमेव प्रत्याकलितमभिमन्यन्ते । तदाहुः—' यद्यपि परीक्षायां न वादिप्रतिवादिनौ स्तः । पृच्छोपक्रममात्रेण द्वितीयोपयोगात् । संभवेऽपि तयोर्विषयोपस्थापनमात्रपर्यवसानात् स्थेयस्यैव परीक्षकत्वम् । तथापि पूर्वपक्षोत्तरपक्षप्रत्याकलितनिष्कर्षभेदेन चतुष्पाद्व्यवहारपूर्वप्रवर्तनात् फलतो न कश्चिद्विशेषः । एककर्तृकत्वेऽपि तावत एव व्यापारकलापस्य विचारे विद्यमानत्वात् । तस्मादप्यनिपुणो देशकस्तथापि देश्यं सावगममेव' इति ।

वस्तुतस्तु न प्रमाणोपन्यासस्तेषां प्रत्याकलितत्वेनाभिप्रेतः । किन्तु सभिककृतः प्रमाणोपष्टम्भककृत्तर्कादिपरामर्श एव । यतो न शास्त्रीयकथायां व्यवहारवत् पूर्वपक्षोत्तरपक्षौ स्वाभिमतसहेतुकसाध्यनिर्देशमात्रपरौ किन्तु पूर्वपक्षिणा कण्टकोद्धारोत्तरपक्षदूषणपुरःसरं स्वपक्षे स्थिरीकृते सिद्धान्तवादिना तदुभयप्रतिक्षेपेण स्वपक्षसाधकप्रमाणकप्रमाणप्रथमप्रख्यापनं क्रियते । ततः स्थेयैस्तदुभयविवेकाख्यप्रत्याकलितेन निष्कर्ष एकतरपक्षनिर्धारणरूपः क्रियते । तावता कथासमाप्तिर्वादे । जल्पवितण्डयोस्तु सभिकादीनामुत्तरोऽपि व्यापारो विद्यत इत्यादि लक्षणमाकरे । अत्र तु साक्ष्यादिविलक्षणं मानमुत्तरभेदेन नियतं प्रागुपन्यासानर्हमिति न पूर्वोत्तरपादान्तर्गतिस्तस्य । अत एवात्र प्रत्याकलितस्यात्रोत्तरे कस्य क्रियेत्यादिविमर्शस्य स्थेयकृतस्य प्राच्यत्वं प्रमाणोपन्यासात् । तत्र तु प्रतीच्यत्वमेव स्थेयकृतप्रमाणसाध्वसाधुताविवेकरूपता चेत्यस्तु विस्तरः । एवं प्रत्याकलितमाकलितम् । व्यप्र.७८–७९

# क्रिया

## गौतमः

निर्णयसाधनानि

**विप्रतिपत्तौ साक्षिनिमित्ता सत्यव्यवस्था *।**

**शपथेनैके सत्यकर्म +।**

## आपस्तम्बः

**[1]संदेहे लिङ्गतो दैवेनेति विचित्य।**

ते च निर्णयन्तः संदेहस्थलेषु लिङ्गतोऽनुमानेन, दैवेन तत्तमाषादिना, इतिशब्दः प्रकारे, यच्चान्यदेवं युक्तं वचनव्याघातादि तेन च विचित्यार्थस्थितिमन्विष्य, निर्णेतारः स्युरित्यध्याहृतेन वाक्यपरिसमाप्तिः। उ.

**[2]सुविचितं विचित्य दैवप्रश्नेभ्यो राजा दण्डाय प्रतिपद्येत।**

आ दैवप्रश्नेभ्यः साक्षिप्रश्नादिभिः शपथान्तैः सुविचितं यथा भवति तथा विचित्य निरूप्य। राजा दण्डाय प्रतिपद्येत उपक्रमेत। उ.

## वसिष्ठः

**[3]लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम्।**
**धनस्वीकरणं पूर्वं धनी धनमवाप्नुयात्॥**

## विष्णुः

**[4]तस्य च भावनास्तिस्रो भवन्ति लिखितं साक्षिणः समयक्रिया च।**

वादिनोर्मध्ये कतरस्य प्रमाणोपन्यासः

**[5]द्वयोर्विवदमानयोर्यस्य पूर्ववादस्तस्य साक्षिणः प्रष्टव्याः।**

**[1]आधर्यं कार्यवशाद् यत्र पूर्वपक्षस्य भवेत् तत्र प्रतिवादिनोऽपि।**

## मनुः

**[2]अपह्नवेऽधमर्णस्य देहीत्युक्तस्य संसदि।**
**अभियोक्ता दिशेद्देश्यं करणं वाऽन्यदुद्दिशेत्*॥**

(१) यदा राज्ञा प्राड्विवाकेन वा संसदि व्यवहाराधिकरणे[1] 'देहि उत्तमर्णाय धनमि'ति उक्तस्यापन्हवोऽपलापोऽधमर्णस्य[2] भवति तदाऽभियोक्ता[3] धनस्य प्रयोक्ता उत्तमर्णो दिशेद्देशं साक्षिणं प्रमाणभूतं निर्दिशेत्। अन्यद्वा करणं लेख्यादि। देशशब्देन लक्षणया धनप्रयोगप्रदेशवर्तिनां साक्षिणामुपादानात्। करणशब्दः सामान्यशब्दोऽपि गोबलीवर्दवत्साक्षिव्यतिरिक्तं लेख्यादिकरणमाचष्टे। ततश्च पाठान्तरं 'कारणं वा समुद्दिशेदि'ति। अस्याप्ययमेवार्थः। अथवा अयमन्यः पाठः अभियुक्तो दिशेद्देशमिति। अयं वाऽर्थः। यत्राधमर्णो देहीत्युक्तः प्रतिजानीते, सत्यमेव धनं प्रतिदत्तं, यदसावभियोक्ता आसीत्स एवाभियुक्तः संवृत्तः[4]। स चाभियुक्तः संदिशेद्देशं कस्मिन्देशे त्वया मे प्रतिदत्तं कालं च निर्दिशेद्देशग्रहणस्य प्रदर्शनार्थत्वात्करणं वा समुद्दिशेत्। अस्ति भा किं तव प्रतिपादने तत्समुद्दिशेत्येवं ब्रूयात्। अथवा दिशेद्देश्यं यत्तस्मिन्काले चाहं[5] साक्ष्यादि तस्यैव प्रदर्शनं करणं वेति। वाशब्दः चशब्दस्य स्थाने। ×मेधा.

(२) 'उत्तमर्णस्य धनं देही'ति सभायां प्राड्विवाकेनोक्तस्याधमर्णस्य 'नास्मै धारयामी'त्यपलापे सति

---

* व्याख्यासंग्रहः स्थलादिनिर्देशश्च साक्षिप्रकरणे द्रष्टव्यः।

\+ व्याख्यासंग्रहः स्थलादिनिर्देशश्च दिव्यप्रकरणे द्रष्टव्यः।

(१) **आध**.२।२९।६; **हिध**.२।२०. (२) **आध**.२।११।३; **हिध**.२।९.

(३) **वस्मृ**. १६।७.

(४) **विस्मृ**.६।२३. (५) **विस्मृ**.८।१०; **व्यमा**.३०८ वादः (पक्षः); **व्यसौ**.२९ पूर्ववाद (पूर्वः पक्ष).

* अत्रत्यगोविन्दराजीयग्रन्थः अशुद्धिबाहुल्यान्नोद्धृतः।

× व्यक., मवि., नन्द. मेधागतम्।

(१) **विस्मृ**.८।११; **व्यमा**.३०८ ध (धा) यत्र (यस्य).

(२) **मस्मृ**.८।५२ ख. श्यं (शं); **गोरा**. श्यं (शं) ऽन्यदु (समु); **व्यक**.३७ कर (कार); **व्यसौ**.३५ श्यं (शं) कर (कार); **व्यप्र**.६९ व्यसौवत्; **समु**.८२.

१ रणादिदेश उत्त. २ धर्मेण भ. ३ युक्तो. ४ वृतः. ५ नाहं,

अभियोक्ताऽर्थी देश्यं धनप्रयोगदेशवर्तिसाक्षिणं निर्दिशेत्। प्रायेण साक्षिभिरेव स्त्रीमूर्खादिसाधारणनिर्णयात्प्राक्साक्ष्युपन्यासः। अन्यद्वा करणं पत्रादि कथयेत्। +मभु.

(३) अन्यत् मम धनेनेदं क्रीतं द्रव्यादि। ×मच.

(४) दिशति कथयति यथादृष्टमर्थमिति, देशः साक्षी। व्यप्र.६९

मानुषदैवप्रमाणविषयव्यवस्था

**[१]यत्र न स्यात् कृतं पत्रं करणं च न विद्यते।**
**न चोपलम्भः पूर्वोक्तस्तत्र दैवी क्रिया मता ॥**

## याज्ञवल्क्यः

निर्णयसाधनानि, मानुषदैविकभेदौ तयोर्व्यवस्था च

**[२]प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम्।**
**एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥**

(१) न चावश्यं तत्त्वाभिनिवेशिनामपि परमार्थावगत्युपायाभाव एव। यस्मात् 'प्रमाणं' इत्यादि। यदा हि दृष्टैरेव लिखितादिभिस्तत्त्वावगतिः, तदा सर्वं सुस्थमेव। अथ तु तानि व्यस्तानि समस्तानि वा न सन्ति, विद्यमानान्यपि वा न परितोषक्षमाणि। तदा वक्ष्यमाणदिव्यानामन्यतमेन तत्त्वावगमादविरोधः। विश्व.२।२२

(२) 'ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्' इत्युक्तं, किं तत्साधनमित्यपेक्षिते आह—प्रमाणमिति। प्रमीयते परिच्छिद्यतेऽनेनेति प्रमाणम्। तच्च द्विविधं मानुषं दैविकं चेति। तत्र मानुषं त्रिविधं, लिखितं भुक्तिः साक्षिणश्चेति कीर्तितं महर्षिभिः। तत्र लिखितं द्विविधं शासनं चीरकं चेति। शासनमुक्तलक्षणम्। चीरकं तु वक्ष्यमाणलक्षणम्। भुक्तिरुपभोगः। साक्षिणो वक्ष्यमाणस्वरूपप्रकाराः। ननु लिखितस्य साक्षिणां च शब्दाभिव्यक्तिद्वारेण शब्देऽन्तर्भावाद्युक्तं प्रामाण्यम्। भुक्तेस्तु कथं प्रामाण्यम्? उच्यते—भुक्तिरपि कैश्चिद्विशेषणैर्युक्ता स्वत्वहेतुभूतक्रयादिकमव्यभिचारादनुमापयन्त्यनुपपद्यमाना वा कल्पयन्तीत्यनुमानेऽर्थापत्तौ चान्तर्भवतीति प्रमाणमेव। एषां लिखितादीनां त्रयाणामन्यतमस्याप्यभावे दिव्यानां वक्ष्यमाणस्वरूपभेदानामन्यतमं जातिदेशकालद्रव्याद्यपेक्षया प्रमाणमुच्यते। मानुषाभाव एव दिव्यस्य प्रामाण्यमस्मादेव वचनादवगम्यते। दिव्यस्य स्वरूपप्रामाण्ययोः आगमगम्यत्वात्। *मिता.

(३) एषामन्यतमाभावे इति युक्त्यभावस्याप्युपलक्षणार्थम्। स्मृच.९५

(४) मिता.टीका—शासनमुक्तलक्षणमिति।

'दत्वा भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेत्' इत्यत्रोक्तरूपमित्यर्थः।भुक्तिरपि कैश्चिद्विशेषणैरित्यादिना। विशेषणानि अनुमानरचनावेलायां स्फुटीभविष्यन्ति। अयमभिप्रायः अनुमानेऽर्थापत्तौ वाऽन्तर्भवतीति प्रमाणमिति। इदं क्षेत्रादिकमस्य क्रयादिप्राप्तं भवितुमर्हति। आसेधरहितत्वे सति चिरकालोपभोगयोग्यत्वात्। 'संप्रतिपन्नवत्' इत्यनुमानम्। असौ देवदत्त एतत्क्षेत्रादिविषयकक्रयादिमान्। आसेधरहितचिरकालोपभोक्तृत्वात्। यथा संप्रतिपन्नः क्षेत्रादाविति वा। आसेधरहितचिरकालभोगान्यथानुपपत्त्या क्रयादिकं परिकल्प्यत इत्यर्थापत्तिः। एवमनुमानार्थापत्तिभ्यां सिध्दे क्रयादिके 'स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेष्वि' त्यादिभिर्वचनोपेतैर्नियतकारकत्वहेतुभिः स्वत्वं सिध्दं भवति। दिव्यस्य स्वरुपप्रामाण्ययोरिति। अयमर्थः। दृष्टे सत्यदृष्टाश्रयणस्यान्याय्यत्वात्। दिव्यस्वरुपस्य तत्प्रामाण्यस्य च शास्त्रैकसमधिगम्यत्वेनालौकिकत्वेनादृष्टत्वाद्यावद्दृष्टप्रमाणसंभावना तावददृष्टप्रमाणस्यावसराभावादेषामन्यतमाभाव इत्यत्र दृष्टप्रमाणस्याभावनिर्णये सति एवं दिव्यं प्रमाणीकर्तव्यमिति तात्पर्यार्थः। सुबो.

---

\+ मच., भाच. मभुगतम्। × शेषं मभुगतम्।

(१) **मस्मृ.**८।५१ इत्यत्र प्रक्षिप्तश्लोकोऽयम्, न स्या (तत्स्या) पत्रं (यत्र) मता (भवेत्); **स्मृसा.**११४ कर (कार).

(२) **यास्मृ.**२।२२; **अपु.**२५३।५०-५१; **विश्व.**२।२२; **मिता.**; **अप.**; **व्यक.**३८; **स्मृच.**५०,९५; **पमा.**८९ पू.: १५०; **स्मृसा.**९५ (लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम्) इति पूर्वार्धम्; **व्यचि.**२८; **व्यनि.**; **स्मृचि.**४२; **नृप्र.**७ पू.: ८; **व्यत.**२११; **सवि.**१०५; **व्यसौ.**३७; **वीमि.**२।२२ : २।६७ पू. : २।९५ उत्त.; **व्यप्र.**८२, १५२:१६९ उत्त.; **व्यउ.**४२ कीर्तितम् (तत्त्रयम्); **व्यम.**१० : ६० उत्त.; **विता.**११०; **राकौ.**३९३; **सेतु.**११० : १२४ उत्त.; **प्रका.**३२; **समु.**२५.

* अप., विता. मितागतम्।

(५) चकारात् प्रत्याकलितापरनामकमनुमानाख्यं प्रमाणं समुच्चिनोति । इति चतुर्विधलौकिकं प्रमाणमुच्यते विचारकैरुपदिश्यते कर्तव्यतया । प्राक्तनचकारोऽत्राप्यन्वेति, तेनालौकिकस्य शपथस्य दिव्यभिन्नतया नारदेनोक्तस्य समुच्चयः । वीमि.

वादिनोर्मध्ये कदा कतरेण प्रमाणोपन्यासः कर्तव्यः

**ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् ॥**

(१) न कालं हरेदित्यर्थः । विश्व.२।७

(२) एवमुत्तरे पत्रे निवेशिते साध्यसिद्धेः साधनायत्तत्वात्साधननिर्देशं कः कुर्यादित्यपेक्षित आह—तत इति । तत उत्तरानन्तरमर्थी साध्यवान् । सद्य एवानन्तरमेव लेखयेत् । प्रतिज्ञातः साध्यः स चासावर्थश्चेति प्रतिज्ञातार्थः, तस्य साधनं साध्यतेऽनेनेति साधनं प्रमाणम् । अत्र सद्यो लेखयेदिति वदतोत्तराभिधाने कालविलम्बनमप्यङ्गीकृतमिति गम्यते । तच्चोत्तरत्र विवेचयिष्यते । अर्थी प्रतिज्ञातार्थसाधनं लेखयेदिति वदता यस्य साध्यमस्ति स प्रतिज्ञातार्थसाधनं लेखयेत् इत्युक्तम् । अतश्च प्राङ्न्यायोत्तरे प्राङ्न्यायस्यैव साध्यत्वात् प्रत्यर्थ्येवार्थी जात इति स एव साधनं लेखयेत् । कारणोत्तरेऽपि कारणस्यैव साध्यत्वात्कारणवाद्येवार्थीति स एव लेखयेत् । मिथ्योत्तरे तु पूर्ववाद्येवार्थी स एव साधनं निर्दिशेत् । ततोऽर्थी लेखयेदिति वदता अर्थ्येव लेखयेन्नान्य इत्युक्तम् । अतश्च संप्रतिपत्त्युत्तरे साध्याभावेन भाषोत्तरवादिनोर्द्वयोरप्यर्थित्वाभावात्साधननिर्देश एव नास्तीति तावतैव व्यवहारः परिसमाप्यत इति गम्यते । एतदेव हारीतेन स्पष्टमुक्तम्—'प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम् । मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत्' इति ॥ *मिता.२।७

('ततोऽर्थी' इत्यादिना) भावप्रतिज्ञावादिन एव क्रिया इति व्यवस्था दर्शिता । मिता.२।९६

(३) सद्य एव क्रियां निर्दिशेत् उक्तमात्र एव न च तत्राप्युत्तरदानार्थमिव कालापेक्षा कार्या । प्रागेवाऽर्थिनः साक्षिपत्रादिस्थिरीकरणेन सुनिश्चितबलाधानस्य प्रवृत्तत्वात् । प्रत्यर्थिनोऽप्युत्तरदानार्थं दत्त एव कालः स्वप्रमाणस्य स्थिरतापूर्वकमुत्तरदानात् । ×व्यमा.३०६

(४) अर्थी पूर्ववादी... ... ... ... ततोऽर्थी लेखयेत्सद्य इति मिथ्योत्तरविषयम् । +अप.

(५) राजकृत्यस्य निर्णयस्य क्रियामूलकत्वात्तन्निर्देशस्य च वादिकृत्यत्वात्तमधिकृत्य तृतीयं क्रियापादमाह—तत इति ।

ततः सदुत्तरे प्रतिवादिकृते लेखिते च राज्ञाऽर्थी चाऽभिहितार्थप्रमापणार्थी यथायथं वादी प्रतिवादी वा प्रतिज्ञातस्य स्वयं समभिहितस्याऽर्थस्य साधकं साक्षिलिखितादिकं स्वयमुपन्यस्य राजनियुक्तद्वारा लेखयेत् । सद्य इत्यनेन प्रमाणोपन्यासे न विलम्बः कार्य इत्युक्तम् । वीमि.

(६) लेखयेत् लेखकद्वारा । स्वयं वा लिखेदित्यपि द्रष्टव्यम् । दृष्टार्थत्वात् । अत्र चण्डेश्वरः—

'साहसस्तेयपारुष्यगोऽभिशापात्यये स्त्रियाम् ।
विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः' ॥

इत्यत्र सद्यो विवादयेत् उत्तरं दापयेदित्यनेन प्रत्यर्थिपक्षस्य लिखने विलम्बप्राप्तौ साहसादिषु तत्पक्षमपि सद्य एव लेखयेदिति योऽपवादः स यदि प्राग्भाषावादिपक्षलिखने विलम्बोक्त्यार्थप्राप्तः प्रत्यर्थिपक्षलिखनविलम्बः स्यात् तदैव घटते नान्यथेत्येतद्वाक्यव्याख्याने यदर्थिपदेन प्रत्यवस्कन्दनप्राङ्न्याययोः प्रत्यर्थ्येवार्थी जात इति स एव साधनं लेखयेदिति प्रत्यर्थिनोऽपि ग्रहणमिति मिताक्षराकारेण व्याख्यातम् । तत् पूर्वापरविरोधान्मन्दमित्याह । तदतिसाहसम् । भाषोत्तरवादिपक्षमात्रलेखनपरत्वं यद्यनयोर्वाक्ययोस्तर्हि साधनपदानन्वये समासानुपपत्तेः संदर्भविरोधाच्च । साधनलेखनस्यैवोत्तरलिखनोत्तरमाकाङ्क्षितत्वात् । साहसादिष्वप्यु-

---

* व्यक., व्यचि., व्यत., सवि. मितागतम् ।

(१) **यास्मृ**.२।७; **अपु**.२५३।३७; **शुनी**.४।६५८; **विश्व**.२।७; **मेधा**.८।५६; **मिता**.२।७,२।९६; **व्यमा**.३०६; **अप**.; **व्यक**.३८; **स्मृच**.५०; **पमा**.८७; **व्यचि**.१५,२६ नम् (कम्); **व्यनि**.; **स्मृचि**.४२; **नृप्र**.७; **व्यत**.२१० व्यचिवत्; **सवि**.९९; **व्यसौ**.३६; **वीमि**.२।७: २।१६ व्यचिवत्; **व्यप्र**.८०,१०२; **व्यम**.९; **विता**.७३; **राकौ**.३९३; **सेतु**.१०९ ततो (अतो) नम् (कम्); **प्रका**.३२; **समु**.२५; **विव्य**.८.

× शेषं मितागतम् ।

+ व्यम. अपगतम् ।

त्तरभेदव्यवहारभेदव्यवस्थया द्वयोरपि पूर्ववाक्योपात्तसाधनलेखनसद्यस्त्वार्थाक्षिप्तोत्तरलेखनविलम्बापवादोपपत्तेः। न चोत्तरलेखनं सर्वत्र प्रत्यर्थिन एवेति तद्विलम्बानुमतिविमत्योस्तं प्रत्येव प्रतिपादनमर्हमिति वाच्यम् । एतावतापि क्रियोपन्यासप्रतिपादकवचनस्यार्थिपदेन भाषावादिमात्रग्रहणाग्रहे नियामकाभावात् । प्रत्युत 'मिथ्या क्रिया' इत्यादिवचनार्थसंग्रहाय द्वयोरपि ग्रहणमर्थिपदेनेत्यस्यैव युक्तत्वात् । एवं सति मिताक्षरायां पूर्वापरविरोधापादनमज्ञानविलसितमेवेत्यास्तां तावत् ।

*व्यप्र.८०–८१

(७) लेखयेत् सभ्यैः । *विता.७३

**साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः ।**
**पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः ॥**

(१) एवं तावद्यत्र साक्षिणः स्युः तत्र तदधीनैव निर्णीतिः,तदभावे विपर्यये वा देशान्तरगमनादिभिर्लिङ्गैः। यत्र तर्हि द्वयोरपि साक्षिणो लिङ्गानि वा देशान्तरगमनादीनि, तत्र कथम् ? उच्यते—साक्षिष्विति । क्व पुनर्विषये द्वयोः साक्षिसंभवः यत्रोत्तरवादी प्रत्यवस्कन्दनेन व्यवहारमाक्षिपति। यथा केनाप्युक्ते ममानेनामुष्मिन् काले देशे चैवं द्रव्यं गृहीतमिति, अथापरो वदति सत्यं यद्येवं, अहं पुनस्तस्मिन्काले निर्दिष्टदेशाद् देशान्तरस्थमात्मानं साक्षिभिः साधयामीति । तत्र द्वयोः साक्ष्यभ्युपगमे पूर्ववादिन एव साक्षिणो भवेयुः । तत्प्राधान्यात् व्यवहारप्रवृत्तेः । यत्र त्व(?)प्रमाणीकृतः पूर्वः पक्षः तत्रोत्तरवादिन एव साक्षिणः स्युः । यथा, सत्यं यथैवायमाह, तत्तु मयास्य प्रतिनिर्यातितम् । एवं च साक्षिभिः साधयामीति । विश्व.२।१७

(२) उभयतः उभयोरपि वादिनोः साक्षिषु संभवत्सु साक्षिणः पूर्ववादिनः । पूर्वस्मिन्काले मया प्रतिगृहीतमुपभुक्तं चेति यो वदत्यसौ पूर्ववादी । न पुनर्यः पूर्वं निवेदयति, तस्य साक्षिणः प्रष्टव्याः । यदा त्वन्य एवं वदति सत्यमनेन पूर्वं प्रतिगृहीतमुपभुक्तं च, किन्तु राज्ञेदमेव क्षेत्रमस्मादेव क्रयेण लब्ध्वा मह्यं दत्तमिति, अनेन वा प्रतिग्रहेण लब्ध्वा मह्यं दत्तमिति । तत्र पूर्वपक्षोऽसाध्यतयाऽधरीभूतस्तस्मिन्पूर्वपक्षेऽधरीभूते उत्तरकालं प्रतिगृहीतमुपभुक्तं चेति वादिनः साक्षिणः प्रष्टव्या भवन्ति । इदमेव व्याख्यानं युक्ततरम् । मिथ्योत्तरे पूर्ववादिनः साक्षिणो भवन्ति । प्राङ्न्यायकारणोक्तौ पूर्वपक्षेऽधरीभूते उत्तरवादिनः साक्षिणो भवन्तीति व्याख्यानमयुक्तम् । अस्यार्थस्य—'ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्' इत्यनेनैवोक्तत्वात्पुनरुक्तिप्रसंगात्। पूर्वव्याख्यानमेव स्पष्टीकृतं नारदेन—'मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनि । प्राङ्न्यायविधिसिद्धौ तु जयपत्रं क्रिया भवेत्' ॥ इत्युक्त्वा, 'द्वयोर्विवदतोरर्थे द्वयोः सत्सु च साक्षिषु । पूर्वपक्षो भवेद्यस्य भवेयुस्तस्य साक्षिणः' ॥ इति वदता । एतस्य च पूर्वव्यवहारविलक्षणत्वाद्भेदेनोपन्यासः । *मिता.

(३) साक्षिषु गुणसाम्ये सतीदं, असाम्ये तु बलवत्तरग्रहणम् । तदाह बृहस्पतिः—'साक्षिद्वैधे प्रभूतास्ते ग्राह्याः साम्ये गुणाधिकाः । गुणिद्वैधे क्रियायुक्तास्तत्साम्ये शुचिमत्तराः' ॥ तथा मनुविष्णू—'बहुत्वं परिगृह्णीयात्साक्षिद्वैधे नराधिपः । समेषु च गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमान्' ॥ न च गृहीतानां वचनद्वैधपरमिदं वचनं, साक्षिद्वैध इति निर्देशात् साक्षिणामेव ग्राह्यतया निर्देशात् । न तु तत्तद्वचनस्य। न्यायसाम्याद्वा उभयविषयपरत्वमेव वचनस्य, एवं चैकस्य सति पत्रेऽन्यस्य साक्षिणो न ग्राह्याः । यथा कात्यायनः—'क्रिया न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु । लेख्ये च सति वादेषु न स्याद्दिव्यं न साक्षिणः ॥ स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत् । साक्षिभिर्लिखितेनाथ भुक्त्या चैव प्रसाधयेत्' ॥ विश्वरूपेणापि साक्षिणः पूर्ववादिनः इत्यादि प्रतिग्रहविषयं व्याख्यातम् । तत्रैव पूर्वबलवत्त्वात् । अन्ये तु—'प्राङ्न्याये कारणोक्तौ च प्रत्यर्थी साधयेत्क्रियाम् । मिथ्योत्तरे पूर्ववादी प्रतिपत्तौ न सा भवेत्' ॥ इति हारीतेन नियमा-

---

* शेषं मितागतम् ।

(१) **यास्मृ.**२।१७; **अपु.**२५३।४५-४६; **विश्व.**२।१७; **मिता.**; **व्यमा.**३०७धरी (वरी); **अप.**; **व्यक.**३७; **पमा.** ११८; **स्मृसा.**९४ साक्षिणः (विज्ञेयाः); **व्यचि.**२९; **व्यनि.** (=); **व्यत.**२०८; **चन्द्र.**११७ र्ववादिनः (र्वपक्षिणः) पक्षे (वादे); **व्यसौ.**३५; **वीमि.**२७ उत्त.: २।१७ : २१९५ (=) **पू.**; **व्यप्र.** १३२; **व्यम.** ९; **विता.**१०१-१०२:१८२(=) **उत्त.**; **सेतु.** १०७; **समु.**३२; **विव्य.**९.

* व्यक,पमा., व्यनि. मितागतम् ।

दिति (?)। तदयुक्तम्। याज्ञवल्क्यवचने उत्तरार्धेनोत्तरवादिन उपादानात् तत्प्रतियोगिभूतस्य भाषावादिन एव पूर्ववादिपदेनोपादानात्। अत एव विष्णुः–'द्वयोर्विवदमानयोर्यस्य पूर्वपक्षस्तस्य साक्षिणः प्रष्टव्याः, आधर्ये कार्यवशात् यस्य पूर्वपक्षस्य भवेत्तत्र प्रतिवादिनोऽपि' अत एव प्रतिवादिपक्षप्रतियोगिकः पूर्वपक्षभाषार्थ एव प्रतीयते। किंच पूर्वत्वेन वादोऽन्यस्य परवादित्वे सति भवति तदा तु परवादितयैव तस्य पराजितत्वात् किं साक्षिभिः? अथाऽसौ न परवादी तदा कथमितरः पूर्ववादी। किञ्च तद्वचनान्तरेणाधौ प्रतिग्रहे इत्यादिनैव बलवत्त्वोक्त्या तद्ग्रहणस्य सिद्धत्वात् अनर्थकमिदं स्यात्, दुर्बलक्रियाग्रहणस्याऽसंभवीयत्वात्। किञ्च उभयोस्तु कारणोक्तौ कस्य क्रिया निर्देश्या, तस्याऽपि कारणोत्तरतया प्रतिवादिनः क्रियानियमात् प्रतिवादिन एवेति, तन्न 'प्रपद्य कारणम्' इत्यादीनां गुरुतरकारणविषयत्वेन तस्य वर्णितत्वात् तद्धि नेतरदिति। समाधमकारणोत्तरे सति भाषार्थस्यैव प्रतिवादिनोक्तेः। अत एव पूर्वपक्षेऽधरीभूत इत्याधर्ये पूर्वपक्षस्येत्यादिना भाषार्थस्याऽवधारणे प्रतिवादिनः क्रियोच्यते। अधरत्वं च बलवदपेक्षं भवति। न तु समानमधमं वा। तद्धिनेतरदिति गुरुतरं विना। अत एव, 'पूर्ववादी भवेद्यस्य भवेयुस्तस्य साक्षिणः'। इति पूर्वभूताध्यादिवर्णनमिति हेयम्। किन्तु समानकारणाभिधाने पूर्ववादिन एव क्रिया, प्रथमस्यैव विनिगमनाकारणत्वात्, अर्थित्वावष्टम्भेन च व्यवहारप्रवर्तनेन पीडातिशयानुमानात्, अन्यायगृहीतस्य लोके पीडातिशयदर्शनात्। एवं दुर्बलकारणाभिधानेऽपि पूर्ववादिन एव क्रिया, उत्तरस्य दुर्बलत्वेन ज्ञापितस्याऽपि पूर्वबाधाक्षमत्वात् एतन्न्यायमूलमेवोक्तं तद्धि नेतरत् गुरुतरं विनेत्यर्थः। दुर्बलकारणोदाहरणन्तु आध्यादिविषयं पूर्वदर्शितम्।

*व्यमा. ३०८–३०९

(४) उभयतः साक्षिसंभवे पूर्वपक्षवादिना निर्दिष्टाः साक्षिणः प्रमाणं भवन्तीत्युत्सर्गः। यदा तु पूर्वपक्षोऽधरो जातस्तदोत्तरवादिनिर्दिष्टाः साक्षिणः प्रमाणं भवन्ति। कः पुनर्व्यवहारोऽस्य वाक्यस्य विषयः? न तावन्मिथ्योत्तरवान्। न हि तत्र वादिद्वयस्य साक्षिणः संभवन्ति। तथा हि–सुवर्णशतं मे धारयसीति पूर्वपक्षवादिनाऽभियुक्तो नाहं धारय इति मिथ्योत्तरवादी ब्रूते। तत्र साक्षिणामसंभव एव। यो ह्यर्थोऽन्येषामुपलब्धुं योग्यस्तत्रैव तेषां साक्षित्वसंभवः। न च मिथ्यावाग्युक्तोऽर्थः परेषामुपलम्भयोग्यो येन ते तत्र साक्षिणः स्युः। भुक्तिलिखितयोस्तु प्रमाणत्वमत्र नाशङ्कनीयमेव। तस्मान्न मिथ्योत्तरवान् व्यवहारोऽस्य विषयः। नापि प्रत्यवस्कन्दोत्तरवान्। तत्र पूर्वपक्षवादिनः प्रमाणोपन्यासोपयोगाभावात्। तथा हि–सुवर्णशतं धारयसीति पूर्ववादी सति प्रत्यवस्कन्दे ब्रूते– सत्यं धारितवानस्मि किन्तु मया तत्तुभ्यं दत्तमिति धारणस्य परेणाङ्गीकृतत्वात्वान्न प्रमाणसाध्यता। सिद्धसाध्यताप्रसङ्गात्। किन्तु प्रतिवादिन एव प्रमाणमुत्तरवादिना वाच्यम्। एवं प्राङ्न्यायोत्तरवानपि व्यवहारो नास्य वाक्यस्य विषयः। न ह्युत्तरवादिनिर्दिष्टैरेव साक्षिभिः प्राङ्न्यायदर्शिभिस्तैर्दत्तेन वा जितपत्रेण पूर्ववादिनः पराजय उत्तरवादिनश्च विजयः सिध्यति। तस्मान्निर्विषयमिवेदं वाक्यं प्रतिभाति। उच्यते–प्रत्यवस्कन्दप्राङ्न्यायोत्तरवान्न्यायोऽस्य विषयः। सन्ति हि तत्र पूर्ववादिनोऽपि साक्षिणः। तथा हि–प्रत्यवस्कन्दिना यद्धारितवानस्मि तन्मया तुभ्यमर्पितमित्युक्ते पूर्ववादी यदैवं प्रत्युत्तरं कुरुते– सत्यं त्वयाऽर्पितं तत्तु पुरुषान्तराय दत्तं न तु मां प्रत्यात्मानमनृणीकर्तुम्। एतच्च साक्षिभिरहं संभावयामीत्येवंविधोत्तरप्रत्युत्तरयोरुभयतः साक्षिसद्भावः। तथा प्राङ्न्यायोत्तरेऽपि यदैवं पूर्ववाद्युत्तरं करोति—सत्यं प्राङ्न्याये कदाचित्त्वयाऽहं पराजितोऽस्मि किन्तु तन्न्यायं कुदृष्टं कृत्वा न्यायान्तरे मया भवान् पराजित इति। तदोभयत्रापि साक्षिसद्भावः। तत्रेदं वचनम्– 'साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः' इति। यदा तु पूर्ववादिनः प्रत्युत्तरभावादधरीभावस्तदेदमुच्यते–'पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः' इति।

*अप.

(५) तत्रापि वक्तव्यम्। तादृशविषयेऽपि प्रत्यवस्कन्दनप्राङ्न्याययोरसाध्यतया प्राग्वादिन एवार्थिद्रढिम्नि जाते तस्य निरुत्तरतायां तु प्रत्यर्थिन एवेति द्वेधापि

---

* स्मृसा., व्यचि., व्यत. व्यमावद्भावार्थः।

* वीमि. वाक्यार्थः अपवत्।

'ततोऽर्थी लेखयेत्' इत्यनेन गतार्थताऽस्य नापैति। मिताक्षराव्याख्याने तु द्वयोरपि भाववादितयार्थित्वसाम्ये 'ततोऽर्थी लेखयेत्' इत्येतद्वचनाविषयत्वात्कस्यात्र क्रियेत्यपेक्षायामेतद्वचनारम्भो घटते। तथा च मिताक्षरायामुक्तम्— 'एतस्य च सर्वव्यवहारविलक्षणत्वाद्भेदेनोपन्यास' इति। +व्यप्र.१३३

(६) पूर्ववादिनः प्रतिज्ञावादिनः। पूर्वपक्षः प्रतिज्ञा। अधरीभूते कारणोत्तरोपन्यासेन प्रत्यर्थिस्वीकारेणासाध्ये। साक्षिग्रहणं प्रमाणान्तरस्याप्युपलक्षणार्थम्। व्यम.९

(७) एकस्मिन्नहादौ द्वयोर्दानपत्रसाक्ष्यादिसत्त्वे निर्णयमाह —साक्षिष्विति। विज्ञानेश्वरव्याख्यानं 'आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा' इति सिद्धेर्व्यर्थमित्याभाति। विता.१०२

## नारदः

प्रमाणोपन्यासससमयः

**[1]पूर्वपादे हि लिखितं यथाक्षरमशेषतः।**
**अर्थी तृतीयपादे तु क्रियया प्रतिपादयेत्॥**

(१) यदर्थिना पूर्वभाषायां लिखितं तत्तेन तृतीयपादेन क्रियया खरीकरणीयमित्यर्थः। अभा.२४

(२) पूर्ववादो भाषा। अभिलिखितं पूर्वपक्षाभिभावकतया लिखितं उत्तरमिति यावत्। तृतीयपादः प्रत्याकलिताख्यः। तस्मिन् सति क्रिया प्रमाणम्। एवं चायमर्थः। भाषोत्तरप्रत्याकलिताख्यपादत्रये सति क्रियया प्रतिपादयेत् स्वकार्यमर्थी प्रमाणेन साधयेदिति। ×स्मृच.५४

(३) (स्मृतिचन्द्रिकाव्याख्यानमुध्दृत्योक्तम्) प्रत्याकलितस्य तृतीयव्यवहारपादत्वमभ्युपगच्छता स्मृतिचन्द्रिकाकारेणैवमिदं वचो व्याख्यातम्। मिताक्षराकारमते तु तृतीयपादक्रिययेति संमुख एवार्थः। व्यप्र.८२

---

\+ वाक्यार्थव्युत्पादनं मितावत्।

× सवि. स्मृचवत्।

(१) **नास्मृ.**२।२७; **शुनी.**४।६५१ उत्त.; **अभा.**२४; **स्मृच.**५४ पूर्वपादे...तं (पूर्ववादेऽभिलिखिते); **पमा.**८७ हि (वि) बृहस्पतिः; **सवि.**११० यया (यायाः) शेषं स्मृचवत्; **व्यप्र.**८२ (=) हि लिखितं (ऽपि लिखिते); **प्रका.**३४ स्मृचवत्; **समु.**२७ स्मृचवत्.



निर्णयसाधनानि

**[1]लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम्।**
**धनस्वीकरणे येन धनी धनमवाप्नुयात्॥**

पत्रं, साक्षिणो, भुक्तिरित्येतत् त्रिविधं प्रमाणं धनस्य स्वीकरणे, येन प्रमाणेन धनवान् धनं भुङ्क्ते। अन्यथा न कश्चिद् धनी धनमुपाश्नुते। 'धनमूलाः क्रियाः सर्वा' इत्यारभ्योक्तैरुपायैरार्जितं धनं धनी प्रमाणैः सुस्थितैर्भुङ्क्ते। अपरिपालने प्रमाणानां सर्वमेतदुपायेन धनोपार्जितवचनमनर्थकं स्यात्। स्वस्वामिभावस्याऽव्यवस्थानात्। नाभा.२।६५

**[2]नाकरिष्यद्यदि स्रष्टा लिखितं चक्षुरुत्तमम्।**
**तत्रेयमस्य लोकस्य नाभविष्यच्छुभा गतिः॥**

तत्र तावल्लिखितप्रशंसा—नाकरिष्यदिति। अभा.४७

**[3]देशकालफलद्रव्यप्रमाणावधिनिश्चये।**
**सर्वसंदेहविच्छेदि लिखितं चक्षुरुत्तमम्॥**
**[4]गृहीत्वाऽपि स्थले द्रव्यं योऽपह्नवितुमिच्छति।**
**[5]स्थापितः साक्षिभिर्मार्गे स दुःसाध्योऽपि साध्यते॥**

अथ साक्षिप्रशंसा। अभा.४७

**[5]लिखितं साक्षिणश्चैव द्वौ विधी परिकीर्तितौ।**
**संदिग्धार्थविशुद्ध्यर्थं द्वयोर्विवदमानयोः॥**

(१) अत्र वादिप्रतिवादिनोः परस्परं विवदमानयोरेकतरस्याऽपि दोषेण योऽर्थः संदिग्धो भूतः तस्य संदिग्धार्थस्य विशुध्यर्थं स्फुटीकरणार्थं लिखितं साक्षिणश्चैव द्वावेव विधी मुनिनाऽत्र प्रकीर्तितौ। न तु सत्याधिकगुणमपि तृतीयं दिव्यम्। तथा तोयगतिसंततनित्यप्रवृत्तस्याष्टादशपदोपलक्षितलोकसंव्यवहारस्य या शीघ्र-

---

(१) **नासं.**२।६५ स्मृतम् (विदुः) मवाप्नुयात् (मुपाश्नुते); **नास्मृ.**४।६९; **अभा.**४७; **मेधा.**८।१४८ पू.; **स्मृच.**५५ पू.; **स्मृसा.**१११ मवाप्नुयात् (मुपाश्नुते); **स्मृचि.** ४२ पू., याज्ञवल्क्यः; **सवि.**१११ पू.

(२) **नास्मृ.**४।७०; **अभा.**४७ तत्रेयमस्य (ततो ह्यन्धस्य). (३) **नास्मृ.**४।७१; **अभा.**४७ ये (यः) : ६२. (४) **नास्मृ.** ४।७२; **अभा.**४७ स्थले (शगे). (५) **नासं.**१।३ परिकीर्ति (संप्रवर्ति); **नास्मृ.**१।३; **अभा.**३; **विश्व.**२।७० (लिखितं साक्षिणश्चैव प्रमाणे व्यक्तिकारके) पू.; **स्मृच.**५५ श्चैव (श्चात्र) पू.; **सवि.**१११ स्मृचवत्, पू.; **प्रका.**३५ स्मृचवत्, पू.; **समु.**२५ स्मृचवत्, पू.

सुखोपायसाधनभूता मानुषी क्रियैवैषा साक्षिलिखितपूर्वा तावन्नित्योपयोगिनी । या पुनर्दैविकी क्रिया साऽतिमहत्स्वेव प्रयोजनेषु महत्तैव प्रारम्भेण परिक्षीणोपक्षयमहादण्डस्वरूपा भवतीत्येतदर्थं साक्षिलिखितावेवात्र श्लोके गृहीताविति । अभा.३

(२) यत् 'लिखितमि'ति न तत्संख्यानियमार्थं, तथात्वे 'लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम्' इति स्ववचनेन विरोधापत्तिः स्यात् । अतो बहुविषयत्वमितरयोरिति वक्तुं 'द्वौ विधी परिकीर्तितौ' इत्युक्तमित्यवगन्तव्यम् । +स्मृच.५५

(३) संदिग्धश्चासौ अर्थश्च संदिग्धार्थः तस्य विशुद्धिर्निर्णयस्तदर्थम् । नाभा.१।३

प्रमाणबलाबलविचारः

[1]लिखितं बलवन्नित्यं जीवत्स्वपि हि साक्षिषु ।
साक्षिभ्यो लिखितं श्रेयो लिखितान्न तु साक्षिणः॥
[2]लिखितं बलवन्नित्यं जीवन्तश्चैव साक्षिणः ।
कालातिहरणाद् भुक्तिरिति शास्त्रविनिश्चयः ॥

(१) अत्र बलाबलप्रमाणं निरूपणेनोक्तम् । यदेतल्लिखितं नाम तत्प्रयत्नरक्षितं सन्मृतेष्वपि धनिकर्णिकसाक्षिषु पुत्रपौत्रप्रपौत्रसंततिसंबध्यमानद्रव्यस्य उभयपक्षसंभावितसंव्यवहारस्य प्रतिष्ठाप्रविष्टं द्रव्यप्रमाणसंदेहविच्छेदकारकं भवति । साक्षिणस्तु जीवन्त एव प्रमाणमिति, जीवतां चैतदपेक्षया 'लिखितं बलवन्नित्यमि'त्युक्तम् । यदा पुनः कालातिहरणं भवति, तदा चतुर्थपञ्चमपुरुषोपरिष्टादपि अपरिमितकालादपि संततभुक्त्यैव धनी धनमवाप्नुयात् इति शास्त्रस्य निश्चयः । एतत्प्रमाणबलाबलमुक्तम् । अभा.४७

(२) एभ्यः स्वल्पकालभुक्तिसाक्षिलिखितेभ्यो बहुकाला भुक्तिर्बलवती । व्यक.७१

(३) भुक्तिस्तु बहुना कालेनाप्यविच्छिन्ना प्रमाणम् । ततोऽपि पत्रं नित्यत्वात्प्रमाणम् । ×नाभा.२।६६

[1]त्रिविधस्यास्य दृष्टस्य प्रमाणस्य यथाक्रमम् ।
पूर्वं पूर्वं गुरु ज्ञेयं भुक्तिस्तेभ्यो गरीयसी * ॥
[2]तदेतत्त्रिविधं ज्ञेयं प्रमाणाय न साधितम् ।
संदेहमागतमपि धनी धनमवाप्नुयात् ॥

मानुषदैविकभेदौ

[3]क्रिया तु द्विविधा प्रोक्ता मानुषी दैविकी तथा ।
मानुषी लेख्यसाक्षिभ्यां धटादिर्दैविकी स्मृता ॥

(१) मिथ्या कुर्वतः प्रतिवादिनः साधनार्थं क्रिया द्विप्रकारा दृष्टा मानुषी दैविकी च । तत्र मानुषी लेख्यसाक्षिरूपा । दैविकी–'धटोग्निरुदकं चैव विषं कोषश्च पञ्चमः' इत्येवमादिका । अभा.२४

(२) लेख्यसाक्षिभ्यां भुक्त्या च प्रोक्ता मानुषीत्यर्थः । भुक्तेरपि मनुष्यसंबन्धित्वात् । +स्मृच.५०

दैवमानुषप्रमाणयोर्विषयभेदेन व्यवस्था

[4]दिवा कृते कार्यविधौ ग्रामेषु नगरेषु वा ।
संभवे साक्षिणां चैव दिव्या न भवति क्रिया ॥

(१) यानि दिवा कृतानि कार्याणि भवन्ति तेषु श्रोतारो द्रष्टारश्च संभवन्ति । लिखितमपि संभवति । तेनैतेषु प्रदेशेषु मानुष्येव क्रिया प्रमाणं न दैविकी । तथा संभवे साक्षिणामिति–यच्च ससाक्षिकमेव प्रयोजनं वृत्तं तत्र साक्षिसंभव एव विद्यमाने दिव्या क्रिया न

---

+ सवि. स्मृचवत् ।

(१) **अभा.६६** जीवत्स्वपि हि साक्षिषु (जीवन्तश्चैव साक्षिणः); **व्यमा.३१४ : ३४० पृ.**; **स्मृसा.११२**; **विव्य १०.** (२)**नासं.२।६६** श्चै (स्त्वे) स्त्रवि (स्त्रेषु); **नास्मृ.४।७५** वन्त (वित); **अभा.४७**; **व्यक.७१** नासंवत्; **स्मृसा.१०५** स्त्रवि (स्त्रेषु); **व्यचि.७१** श्चै (स्त्वे) तिह (भिह) स्त्रविनिश्च (स्त्रेषु निर्ण); **स्मृचि.४९** नासंवत्; **व्यसौ.६७** नासंवत्; **प्रका.३५** तिह (दिह) स्त्रवि (स्त्रेषु); **समु.४४.**

× शेषं अभागतम् । * व्याख्यासंग्रहः भुक्तिप्रकरणे द्रष्टव्यः ।

+ सविः स्मृचवत् ।

(१) **नासं.२।६७** स्तेभ्यो (वैषां); **नास्मृ.४।७६**; **अभा. ४७**; **व्यक.७१** स्ते (रे); **स्मृसा.१०५** व्यकवत् : १११ स्तेभ्यो (स्तासां); **व्यचि.७१** व्यकवत्. (२) **नास्मृ.४।७४**; **अभा.४७.**

(३) **नास्मृ.२।२८** तु (ऽपि); **अभा.२४** तु (ऽपि) ख्य (ख); **स्मृच.५०**; **सवि.१०५**; **प्रका.३२**; **समु.२५.**

(४) **नास्मृ.२।२९**; **अभा.२४**; **व्यक.३८**; **स्मृच.५१** वा (च) दिव्या (दैवी); **व्यनि.** नारदबृहस्पती; **सवि.१०६** (=) स्मृचवत्; **चन्द्र.१२७** दिवा ... धौ (दिवा कृतेषु कार्येषु) वा (च) संभवे साक्षिणां (संभवत्साक्षिणी) दिव्या न (न दिव्या); **व्यसौ.३७** वा (च) नारदबृहस्पती; **प्रका.३२** स्मृचवत्; **समु. २५** स्मृचवत्.

भवति । अभा.२४-२५

(२) इति नारदवचनेऽपि दिवाकृतादिसंकीर्तनं मानुषप्रमाणसंभवे दिव्यनिषेधार्थमित्यवगन्तव्यम् । स्मृच.५१

**अरण्ये निर्जने रात्रावन्तर्वेश्मनि साहसे ।**
**न्यासस्यापन्हवे चैव दिव्या संभवति क्रिया ॥**

(१) अरण्ये वनमध्ये पत्तने वा निर्जनप्रदेशे रात्रौ च मानुषासंभवे एकान्ते गृहमध्ये वा । तथा साहसे व्यवहारे, तथा न्यासापह्नवे, एतेषु प्रदेशेषु अर्थेषु च मानुषीक्रियाभावे दिव्या संभवति क्रियेति । *अभा.२५

(२) अरण्यादिकीर्तनं साक्ष्यभावप्रदर्शनार्थम् । व्यमा.३१६

**यदा साक्षी न विद्येत विवादे वदतां नृणाम् ।**
**तदा दिव्यैः परीक्षेत शपथैश्च पृथग्विधैः ॥**

(१) या पुनर्नारदीयदिव्यशपथयोर्भेदेनोक्तिः 'यदा साक्षीति' सा गुरुषु दिव्यशब्दः प्रायिक इति दर्शयितुं न पुनस्तयोरर्थभेदकथनाय, लोके तयोः पर्यायशब्दत्वात् । 'साक्षी न विद्येते'ति लिखितादिक्रियाभावोपलक्षणार्थम् । याज्ञवल्क्येनाशेषमानुषाभावे दिव्यस्मरणात् ।

+स्मृच.५०–५१

(२) साक्षिणां नाशे देशान्तरगमने च दिव्यमायाति । चन्द्र.१२९

* मिता., विता. अभागतम् । + सवि. स्मृचवत् ।

(१) **नास्मृ**.४।२४१; **शुनी**.४।७५० पू.; **अभा**.२५ स्यापह्नवे (सापन्हवने); **मिता**.२।२२ अभावत्; **व्यमा**.३१६ स्यापन्हवे (सापहरणे); **अप**.२।२२ अभावत्; **व्यक**.३९ अभावत्, बृहस्पतिः; **स्मृसा**.११४ अभावत्; **व्यत**.२२८ व्यमावत्; **चन्द्र**.१२८ साहसे (या क्रिया) शेषं अभावत्; **व्यसौ**.३८ निर्जे (विज) शेषं अभावत्; **व्यप्र**.८४ अभावत्; **व्यम**.११ व्यसौवत्, व्यासः; **विता**.११०-१११ अभावत्; **राकौ**.३९४ अभावत्; **प्रका**.३२; **समु**.२७ अभावत्.

(२) **नास्मृ**.४।२४७; **अभा**.७४; **व्यमा**.३१६ तदा (तत्र) श्च (र्वा); **अप**.२।९५ विधैः (पृथक्); **व्यक**.३९ बृहस्पतिः; **स्मृच**.५१ वादे (वाद); **व्यनि**.क्षे (क्ष्ये) कात्यायनः; **सवि**.१०६ (=) यदा साक्षी (साक्षी यत्र); **चन्द्र**.१२९ यदा ...विद्येत (यदा न विद्यते साक्षी); **व्यसौ**.३८; **व्यप्र**.८४; **प्रका**.३२ स्मृचवत्; **समु**.२५ स्मृचवत्; **विव्य**.१० यदा (यत्र) तदा (तत्र) श्च (र्वा).

**स्त्रीणां शीलाभियोगेषु स्तेयसाहसयोरपि ।**
**एष एव विधिर्दृष्टः सर्वार्थापह्नवेषु च ॥**

(१) यदा स्त्रीणां शीलचारित्र्यखण्डनाऽभियोगो भवति, तथा स्तेयसाहसाभियोगो भवति, तथा ये केचिदर्थास्तेषामपह्नवेषु मिथ्यासु एवंविधेषु महाभियोगेषु एष महादिव्यविधिर्दृष्टः शपथादिरिति । *अभा.७३

(२) सर्वार्थापह्नवेष्विति ऋणनिक्षेपापन्हवमपि स्तेयसमानविधिं दर्शयति । व्यमा.३१२

वादिनोर्मध्ये कतरस्य प्रमाणोपन्यासः

**द्वयोर्विवदतोरर्थे द्वयोः सत्सु च साक्षिषु ।**
**पूर्वपक्षो भवेद्यस्य भवेयुस्तस्य साक्षिणः ॥**

(१) अयं श्लोकोऽनुक्तविषयविभागत्वात्स्पष्टान्धक एव भाति । तदस्य विषयविभागः अस्वामिविक्रये ऋणादाने च व्यवहारोपदेशार्थः अस्य च स्फुटीकरणार्थः । यदा कश्चित् समागत्य किञ्चिदेवं वदति यथा योऽयं वृषभः त्वत्पार्श्वे तिष्ठति स मदीयं तृतीयं वर्तते । मत्सकाशाच्चौरैर्हृतस्य अनेन सह सप्त गोरूपाणि गतानि । तानि यदि तव पार्श्वे लभ्यानि । तथा च रक्तवर्णपुण्ड्रकचमरपुच्छशुक्लपादाद्यभिज्ञानस्पष्टीकृतं चतुर्भिः साक्षिभिरात्मीयमिममहं संभावयामीति । तत् श्रुत्वा द्वितीयेनाभिहितम् । इह प्रजापतेः सृष्टिं कुर्वतः अनेकानि द्विपदचतुष्पदानि समानाभिज्ञानानि भवन्ति । यदि सदृशाभिज्ञानमात्रेण लभ्यते, ततः स्वकीयपत्नी या उद्वलित्वा गता तस्या यान्यभिज्ञानानि भ्रूकर्णनासिकाक्षिदन्तजिह्वाहस्तपादादिकानि तानि परस्त्रियोऽपि दृष्ट्वा कस्मात् स्वगृहं न प्रवेश-

* नाभा. अभावत् ।

(१) **नासं**.२।२१७ गेषु (गे च) च (यः); **नास्मृ**.४।२४२; **शुनी**.४।७५०; **अभा**.७३; **व्यमा**.३१२ गेषु (गे च) षु च (ष्वपि); **व्यक**.४० गेषु (गे च) बृहस्पतिः; **व्यनि**.गेषु (गे च) कात्यायनः; **व्यसौ**.३८ व्यकवत्; **व्यप्र**.८४ व्यकवत्; **समु**.२५:५० व्यनिवत्; **विव्य**.१० व्यमावत्, कात्यायनः.

(२) **नासं**.२।१४२; **नास्मृ**.४।१६३; **अभा**.६६; **मिता**.२।१७,२।८०; **व्यमा**.३०७ त्सु च (त्स्वपि) पक्षो (वादो): :३०९ पक्षो (वादो) उत्त.; **अप**.२।१७; **व्यक**.३७; **स्मृच**.८२; **पमा**.११६; **स्मृसा**.९४; **व्यचि**.२९ पक्षो (वादो); **चन्द्र**.१२५; **व्यसौ**.३५; **व्यप्र**.१३३; **विता**.१०२; **प्रका**.५३; **समु**.३२; **विव्य**.९.

यसि । तदेष वृषभो गृहजातो वर्धितो यस्मिन् ग्रामे स्थितस्तस्माद् ग्रामादहमपि साक्षिचतुष्टयमानीय स्वकीयं संभावयामीति । अस्मिन्नर्थेऽयं श्लोकोऽवतरति, द्वयोरिति । अत्र पूर्वकालः पक्षो यस्य भवति तस्य साक्षिणः प्रमाणानि भवन्ति । न पुनरल्पाऽवान्तरकालवादिन इति । एतत्कल्याणीयं विवरणमिति, विस्पष्टोदाहरणसहितमिति । 　अभा.६६

(२) समकारणाभिधाने तु पूर्ववादिन एव क्रिया तदाह नारदः—द्वयोरिति । 　*व्यमा.३०७

(३) अत्रोदाहरणम्—यत्रैकः क्षेत्रं प्रतिग्रहेण प्राप्य भुक्त्वा त्यक्त्वा देशान्तरं सकुटुम्बो गतः । पुनरन्येन लब्धं भुक्तं च । सोऽपि देशविभ्रमादिना देशान्तरं सकुटुम्बो गतः । पुनस्तौ द्वावपि चिरन्तनकालाऽपगमे स्ववृत्तिलोभेन स्वस्थानमागत्य क्षेत्रविवादनिर्णयार्थं धर्मस्थानं युगपदागतौ । तत्रैकः प्रतिजानीते— 'जयतिचन्द्राख्येन राज्ञा स्वराज्यकाले मह्यं दत्तमित्यस्मदीयमेवैतत्क्षेत्रमि'ति । इतरोऽपि प्रतिजानीते—'हरिश्चन्द्राख्येन राज्ञा जयतिचन्द्राख्यसुतेन राज्यार्थमभिषिक्तेन मह्यं दत्तमस्मदीयमेवैतत्क्षेत्रमि'ति । अथवा इतरस्यैवं प्रतिज्ञा—'सत्यं जयतिचन्द्रेणास्मै दत्तं किन्त्वेतस्य हस्तात् हरिश्चन्द्रेणैतत्क्षेत्रं क्रयेण गृहीत्वा मह्यं दत्तमित्यस्मदीयमेवे'ति । सन्ति च द्वयोरपि विवादिनोः साक्षिणः । तत्रेदमुक्तं 'द्वयोर्विवदतोरर्थे' इति । अयमर्थः । यस्य विवदतः पूर्वपक्षो भवेत् पूर्वकालिकस्य दानस्य स्वत्वहेतुतयोपन्यासेन पक्षो भवेत् तस्य साक्षिणः सभ्यैः प्रष्टव्या भवेयुः । नेतरस्य साक्षिणः । तेषामुत्तरकालदानसाक्षित्वेनासाक्षिप्रायत्वात् । 　×स्मृच.८२

(४) मिथ्योत्तरे यद्युभयोरपि साक्षी भवति तदा पूर्वपक्षिण एव ग्राह्यः । द्वयोरिति वचनात् । भावबोधस्य लघुत्वात् । कारणोत्तरे प्रभूतादिकं विनिगमकम् । चन्द्र.१२५

**आधर्ये पूर्वपक्षस्य यस्मिन्नर्थवशाद्भवेत् ।**
**विवादे साक्षिणस्तत्र प्रष्टव्याः प्रतिवादिनः ॥**

**अर्थ्युक्तं हि यदा वाक्यं प्रत्यर्थी प्रतिपद्यते ।**
**अनृतस्यापदेशेन तदाऽऽधर्यं प्रचक्षते ॥**

(१) अत्र अधरभावो लाघवम् । असाध्यमानत्वात् पूर्वपक्षस्य, यस्मिन्भवति विवादे, उत्तरपक्षो गरीयान् साध्यस्तत्सिद्धौ निषिक्तः तदा साक्षिणः प्रतिवादिना ये प्रष्टव्याः, प्रतिवादिना उद्दिष्टा इति । एवं च ते प्रतिवादिन उद्देशा भवन्ति इति । शास्त्रान्तरे चाह — 'सापदेशप्रतिज्ञानादाधर्यमुपजायते । पूर्वपक्षस्य साध्यस्तु विशेषः प्रतिवादिनः' ॥ तद्यथा कश्चिदाह—यत्तेनैव पञ्चकशतवृद्ध्या पणशतं गृहीतं कस्माद्द्वैगुण्यं प्राप्तं न ददाति, तस्य सिद्धौ साचिव्यं कर्तुमिच्छामीति । स आह —यथा प्रतिज्ञातमस्य पणशतं सत्यं मया गृहीतं ततः तस्मै दत्तमित्यत्र पूर्वपक्षप्रतिज्ञातपणशतग्रहणसंप्रतिपत्तिरेव । न वादिनः साध्यं किञ्चिदस्ति । यत्तु विशेषतः संप्रदानं तत्साध्यं प्रतिवादिनेति । यथा दत्तमित्येवं प्रतिवादिनः साक्षिणो भवन्तीति । 　अभा.६६-६७

(२) साक्षिण इति दृष्टक्रियोपलक्षणम् । *व्यमा.३०७

(३) यदा पुनरितरप्रतिज्ञातार्थवशेनैतस्य हस्तात् क्रीत्वा मह्यं दत्तमित्यादिना पूर्वदानोपन्यासपक्षस्याधर्यमकिञ्चित्करत्वं भवेत् तदा पश्चात् प्रतिजानानस्य साक्षिणः प्रष्टव्याः । न पूर्वं प्रतिजानानस्य, सिद्धसाध्यत्वेन वैयर्थ्यात् । किन्त्वसाक्षिवदुपेक्षणीयास्त इति । ×स्मृच.८२

(४) अत्र च बलवत्कारणोत्तरवादिन एव क्रियानिर्देश आह नारदः – आधर्यमिति । 　स्मृसा.९३

(५) पूर्वपक्षो यस्य तस्य साक्षिण इत्युक्तम् । तस्यापवादः । अधरभावः आधर्यम् । पूर्वपक्षस्याधर्यमर्थवशात् यत्र विवादे भवेत्, अभियोक्तुः पूर्वपक्षः अभियुक्तस्योत्तरः, स उत्तरोऽर्थवशेन पूर्वः स्यात्, पूर्वश्चाधरोऽभियोज्यः । 　+नाभा.२।१४३

(६) अत्र साक्षिग्रहणं प्रमाणमात्रोपलक्षणम् । 　व्यप्र.५९

* व्यचि. व्यमावत् । × पमा. स्मृचवत् ।

(१)नासं.२।१४३; नास्मृ.४।१६४; अभा.६६ दिनः (दिना); व्यमा.३०७ धर्ये (धार्ये) प्रति (पूर्वे); अप.२।१७; व्यक.३७; स्मृच.८२; पमा.११७; स्मृसा.९३; व्यचि.२१ प्रति (पूर्वे):

* व्यचि. व्यमावत् । × पमा. स्मृचवत् । + शेषं अभावत् । २९; व्यत.२०८; चन्द्र.११७ तत्र (तस्य); व्यसौ.३५ चन्द्रवत्; व्यप्र.५९ व्यचिवत्; सेतु.१०७ आध (अध); प्रका. ५३; समु.३२ व्यचिवत्; विव्य.८ यस्मिन्न (धर्मेणा).

(१) vulg. नास्मृ.४।१६४ इत्यस्यानन्तरमयं श्लोकः ।

[1]अभियुक्तोऽभियोगस्य यदि कुर्यादपह्नवम् ।
अभियोक्ता दिशेद्देश्यं प्रत्यवस्कन्दितो न चेत् ॥

अभियुक्तः प्रतिवादी यत्रभियोगस्यापह्नवं मिथ्या करोति तदाऽभियोक्ता वादी देश्यं दिशेदिति । क्रियामानयेदित्यर्थः । यदि स एव वादी प्रतिवादिना प्रत्यस्कन्दनोत्तरेण नाभियुक्तो भवति । तत्र च प्रत्यवस्कन्दनोत्तरे प्रतिवाद्येव नयेद्देश्यमिति । अभा.२४

[2]मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनि ।
प्राङ्न्यायविधिसिद्धौ तु जयपत्रं क्रिया भवेत् * ॥

(१) मिथ्या मिथ्योत्तरे सति पूर्ववादे भाषार्थे क्रिया मानुषी ग्राह्या । व्यमा.३०७

(२) पूर्ववादे क्रिया अर्थिनः क्रियोपन्यास इत्यर्थः । व्यप्र.६४

[3]कारणप्रतिपत्त्या च पूर्वपक्षे विरोधिते ।
अभियुक्तेन वै भाव्यं विज्ञेयं पूर्वपक्षवत् ॥

(१) अत्र कारणप्रतिपत्तिरिति संस्कारेण सह संप्रतिपत्तिः । प्रत्यवस्कन्दनोत्तरमित्यर्थः । सर्वत्र कारणोत्तरे प्रतिवादी संप्रतिपत्तिं कृत्वा कारणं ब्रवीति । अतस्तेन कारणप्रत्युत्तरेण पूर्वपक्षे विरोधिते भाषाऽर्थे निरर्थकीकृते, अभियुक्तेन प्रतिवादिना भाव्यं भावनीयम् । तत्स्वकीयं कारणमुपन्यस्तं खरीकरणीयमित्यर्थः । एतत्तेन विज्ञेयं पूर्वपक्षवत् । पूर्वपक्षं वादित्वं प्रति प्राप्तेन तत्स्वकीयं कारणं क्रियया खरीकरणीयमित्यर्थः । एतत्तेनाऽभियुक्तेन ज्ञेयमिति । अभा.२५

(२) यथा भाषावादी मिथ्योत्तरे सति स्वपक्षं साधयति, तथा कारणवादी स्वपक्षं साधयेदित्यर्थः । व्यक.३७

सत्पक्षोऽपि प्रमाणोपन्यासेन विना न सिध्यति

[1]प्रमाणानि प्रमाणस्थैः परिकल्प्यानि यत्नतः ।
सीदन्ति हि प्रमेयाणि प्रमाणैरव्यवस्थितैः ॥

(१) अतः प्रमाणभेदो भवति । अत्र यत्किमपि प्रमेयं वस्तु प्रकर्षेण मेयं प्रमेयं तत्त्वतो ज्ञेयमित्यर्थः । तत्सर्वं प्रमाणैः परिच्छिन्नं स्फुटीभवति यथा— गणितं संख्यया, तुलितं तुलया, मेयं मापनेन । तर्कादयः (?) प्रमेयाः प्रत्यक्षादिभिः प्रमाणैः, तथा अत्रापि द्वात्रिंशच्छतभेदोपलक्षितो अष्टादशपदव्यवहारः प्रमेयभूतः लिखितसाक्षिभुक्तिदिव्यप्रमाणैः परिच्छिन्नः स्फुटीभवति । अतो मतानि प्रमाणानि प्रमाणस्थैः पुरुषैः साधुनृपतिसभ्यादिभिर्यत्नतः परिकल्प्यानि । किमुक्तं भवति । रूढिप्रतिष्ठितान्यपि तानि पूर्वदग्धलोकानां हेतुवादशतैर्दूषितानि न दातव्यानि, यतः प्रमाणैः व्यवस्थापरिभ्रष्टैः सद्भिर्यानि प्रमेयाणि निसंदिग्धीकर्तुमभिप्रेतानि, तानि सीदन्ति सिद्धिं न प्राप्नुवन्ति इति । अतः प्रमाणरक्षणे यत्न उपन्यस्त इति । अभा.४६-४७

(२) अव्यवस्थितैः प्रमाणैः प्रमाणकर्तारो यतो विनश्यन्ति । अतः कस्यात्र किं प्रमाणं लेख्यमिति प्रत्याकलनकुशलैः प्रत्याकलयितव्यमित्यर्थः । अत्र कैश्चित्पण्डितम्मन्यैर्न स्थावरेषु लिखितादिकथनं प्रमाणनियमाय किन्तु प्रायिकत्वप्रदर्शनार्थम् । अन्यथा कथञ्चिल्लेख्यादिनाशे निर्णयाभावः स्यादित्युक्तं, तदयुक्तम् ।

---

* व्यवहारमातृकायां व्यवहारचिन्तामणौ चात्र व्याख्यानं विस्तृतमस्ति, अशुद्धिसंदेहान्न संगृहीतम् ।

(१) **नास्मृ.**२।३१; **अभा.**२४.

(२) **शुनी.**४।६५६पू.; **मिता.**२।१७; **व्यमा.**३०६; **पमा.**७७ पू. स्मरणम्; **व्यचि.**२७-२८ दिनि (दिनः) क्रिया भवेत् (विनिर्दिशेत्) व्यासः; **व्यनि.**; **स्मृचि.**४० दिनि (दिभिः) कात्यायनः; **नृप्र.**६ पू.; **व्यत.**२१६ (=) दिनि (दिनः) न्याय (न्याये); **सवि.**९५ पू. स्मरणम्; **व्यप्र.**६४ पू. स्मरणम्:१३३; **व्यउ.**४१ उत्तरार्धे (प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम्); **व्यम.**८ पू.; **विता.**६८ पू., स्मृतिः; **समु.**२६; **विव्य.**८.

(३) **नास्मृ.**२।३१; **अभा.**२५; **व्यक.**३७ कार...च (कारणं प्रतिपत्तौ तु); **व्यसौ.**३५ (कारणप्रतिपत्तौ तु भाव्यं तत्पूर्वपक्षवत्) एतावदेव लभ्यते.

(१) **नासं.**२।६४ कल्प्या (पाल्या) मेयाणि (माणानि); **नास्मृ.**४।६८; **अभा.**४६; **व्यक.**४१ स्थैः (ज्ञैः) परिकल्प्या (पालनीया) मेयाणि (माणानि) नारदकात्यायनौ; **स्मृच.**५४ स्थैः (ज्ञैः) शेषं नासंवत्; **पमा.**९२ स्थैः (ज्ञैः) कल्प्या (भाव्या); **व्यचि.**३४ परिकल्प्या (पालनीया) प्रमाणै...तैः (पुरुषस्यापराधतः); **नृप्र.**८ कल्प्या (भाव्या); **सवि.**११० स्मृचवत्; **व्यसौ.**३९ पूर्वार्धं व्यचिवत्; **व्यप्र.**७८ स्मृचवत्; **प्रका.**३४ स्मृचवत्; **समु.**२७ स्मृचवत्.

नियमार्थत्वेऽपि युक्तिभिः पार्थिववचनाद् वा निर्णय-संभवात् । +स्मृच.५४

(३) अव्यवस्थितैः प्रमाणैः प्रमाणकथितोऽर्थो यतो विनश्यति । अतः कालस्यानन्तत्वात् न किं प्रमाणमिति प्रत्याकलनकुशलैः प्रत्याकलयितव्यानीत्यर्थः । पमा.९२

(४) एतच्च प्रत्याकलितं सभ्यैरवश्यमादर्तव्यमित्याह नारदः— प्रमाणानीति । अस्यार्थः स्मृतिचन्द्रिकाकारेणैवमुक्तः । अव्यवस्थितैः प्रमाणैः, प्रमाणानि प्रमाणकर्तारः प्रमाणशब्देन लक्ष्यन्ते । ते सीदन्ति विनश्यन्ति निर्णयं नाप्नुवन्ति । अतः प्रत्याकलनकौशलेन प्रमाणज्ञैः सभ्यैर्यत्नतस्तानि प्रमाणानि परिपाल्यानि यथा व्यवस्थादुःस्थितानि न भवन्ति तथा विवेचनीयानीत्यर्थ इति । वयं तु अव्यवस्थितैर्मूलशैथिल्यादिना दुःस्थितैः, प्रमाणैः प्रमाणानुग्राहकैस्तर्कैः, प्रमाणानि साक्ष्यादीनि, सीदन्ति निर्णयाक्षमाणि भवन्ति । हि यतः । अतः प्रमाणज्ञैः प्रमाणानि यत्नतः परिपाल्यानि सत्तर्कपरिशुध्यनुग्रहेण तत्वनिर्णयफलानि कार्याणीति व्याचक्ष्महे । अनयोश्च व्याख्यानयोस्तारतम्यं तत्वविद्भिर्विवेचनीयम् । व्यप्र.७८

लेख्यसाक्षिणोरभावे प्रमाणम्

**[1]प्रमादाद्धनिनो यत्र न स्याल्लेख्यं न साक्षिणः ।**
**अर्थं चापन्हुते वादी तत्रोक्तस्त्रिविधो विधिः ॥**

वादी गृहीतधनः । विधिः धनसाधनोपायः ।

स्मृच.५१

**[2]चोदनाप्रतिकालं च युक्तिलेशस्तथैव च ।**
**तृतीयः शपथः प्रोक्तस्तैरेनं साधयेत्क्रमात् * ॥**

+सवि. स्मृचवत् ।

* व्याख्यासंग्रहः युक्तिप्रकरणे द्रष्टव्यः ।

(१) **नासं**.२।२११; **नास्मृ**.४।२३५; **शुनी**.४।७२० न स्या...णः(त्रिविधं साधनं न चेत्); **अभा**.७२; **व्यक**.७५; **स्मृच**.५१ न स्या...णः (न लेख्यं न च साक्षिणः) तत्रो (तस्यो); **स्मृसा**.१२२ धनि (बलि) शेषं स्मृचवत्; **व्यचि**.७६; **स्मृचि**.५०; **व्यसौ**.७० र्थं (र्थे); **व्यप्र**.१६९; **विता**.१५१ यत्र (यस्य) र्थं चा (थ वा); **प्रका**.३३ स्मृचवत्; **समु**.२५ स्मृचवत्.

(२) **नासं**.२।२१२ रेनं सा (र्ऋणं शो); **नास्मृ**.४।२३६; **शुनी**.४।७२१; **अभा**.७२ लेशः (लेखः) रेनं (रिमं); **व्यक**.७५ नासंवत्; **स्मृच**.५२ रेनं (र्ऋणं); **पमा**.९१ लं च (लं तु) लेश (लेख) रेनं (र्ऋणं) कात्यायनः; **स्मृसा**.११२ चोदनाप्रतिकालं (देशनाप्रतिघातः) सा (शो); **व्यचि**.७६; **स्मृचि**.५० चोद (देश) रेनं (रेतत्); **नृप्र**.८ लं च (लेषु) युक्तिलेश (युक्तिलेख) रेनं सा (र्ऋणं शो); **व्यसौ**.७० कालं (घातं) रेनं सा (र्ऋणं शो); **व्यप्र**.१६९ प्रतिकालं (प्राप्तकालः); **प्रका**.३३ स्मृचवत्; **समु**.२५ स्मृचवत्.

प्रमाणोपन्यासावधिः

**[1]निर्णिक्तव्यवहारेषु प्रमाणमफलं भवेत् ।**
**लिखितं साक्षिणो वाऽपि पूर्वमावेदितं न चेत् ॥**

(१) इह सर्वव्यवहारेष्वपि वादिना विद्यमानप्रमाणोपन्यासो नियमेन तृतीयपादे कर्तव्यः । यदि पुनस्तेन स न कृतः, तत उभयपक्षप्रतिभूग्रहणपूर्वकं अ(?)निर्णिक्तव्यवहारेण समुपन्यस्तमपि विफलं भवेत् व्यर्थमित्यर्थः । पूर्वमावेदितं न चेदित्यस्य तु विकल्पवाक्यस्यार्थः—'यावदद्यापि राजकुलधर्माधिकरणे व्यवहारो न प्रविशति, तावद्यदि तेन वादिना दुष्टर्णिकोपालम्भावसरे साधूदासीनलोकानां पुरतः पूर्वमेवैवमावेदितं न भवेत्– अनेन दुष्टर्णिकेन मम द्रव्यं दातव्यमस्ति, तच्च साक्षिप्रमाणसहितं, तथाऽपि न प्रयच्छति, अतोऽयं मया राजकुले समर्पणीय इत्यादिपूर्वजल्पावसरे यदि साक्षिप्रमाणं क्वचिदपि नावेदितं न कीर्तितं भवेत् । ततो निर्णिक्तव्यवहारे तत्पश्चादुपन्यस्तमपि न प्रमाणं भवति' । यदि पुनरेवं तत्पूर्वमावेदितो यद्यपि दैवयोगाद्वा करणराजसभाक्षोभाद्वा मतिविभ्रमाद्वा वादिना तृतीयपादे तन्नोपन्यस्तं, तथाऽपि प्रतिभूपर्यन्तनिर्णिक्तव्यवहारेऽपि यावदद्यापि करणं तत्रैव तिष्ठति, तावत्तेन तत्प्र-

(१) **नासं**.१।५३ क्त (क्ते) रेषु (रे तु); **नास्मृ**.१।६२; **अभा**.१६; **मिता**.२।८० नासंवत्; **व्यमा**.३३५ र्णिक्त (र्णीते) रेषु (रे तु) र्वमा (र्वं ना); **अप**.२।२२ पूर्वार्धं व्यमावत्; २।८० भवेत् (परम्) पूर्व ... त् (न चेत्पूर्वं निवेदितम्); **व्यक**.३८ नासंवत्; **व्यचि**.३१ अपवत्, कात्यायनः; ६१ रेषु (राणां); **व्यनि**. र्णिक्त (र्णीते) रेषु (रे तु) कात्यायनः; **चन्द्र**.१२६ निर्णिक्तव्यवहारेषु (निवृत्तव्यवहाराणां) न चेत् (न च); **व्यसौ**.३६ मितावत्; **वीमि**.२।१९ (=) व्यतवत्; **व्यप्र**.८० नासंवत्; **व्यउ**.५१ नासंवत्; **व्यम**.१९ नासंवत्; **विता**.१८२ नासंवत्; **सेतु**.१२६ व्यतवत्, कात्यायनः; **प्रका**.५९ नासंवत्; **समु**.३८ व्यतवत्.

माणमुपन्यस्तं सभ्यैः परीक्ष्य प्रमाणीकरणीयमेव । न पुनस्तत्र छलमवतारणीयम् । तथा हि पूर्वमेव सूक्तं कृतमिदम् 'तत्र शिष्टं छलं राजा मर्षयेद्धर्मसाधनः । भूतमेव प्रपद्येत धर्ममूला यतः श्रियः' ॥ इत्यादिभिर्वचनैः । अयं च प्रमाणावकाशः पूर्वावेदितविस्मृतस्यैवोक्तः । अभा.१६–१७

(२) निर्णिक्तेति वदता (नारदेन) जयावधारणोत्तरकालमेव प्रमाणान्तरं निषिद्धं न प्रागपि । तस्मादुक्तेऽपि साक्षिभिः साक्ष्ये अपरितुष्यता क्रियान्तरमङ्गीकर्तव्यमिति स्थितम् । पूर्वनिर्दिष्टानामसंभवे त्वनिर्दिष्टा अपि तथाविधा एव साक्षिणो ग्राह्या न दिव्यम् । 'संभवे साक्षिणां प्राज्ञो वर्जयेद्दैविकीं क्रियाम्' इति स्मरणात् । तेषामसंभवे दिव्यं प्रमाणं कर्तव्यम् । अतः परमपरितुष्यताऽप्यर्थिना न प्रमाणान्तरमन्वेषणीयम् । *मिता.२।८०

(३) सति लिखिते बलवत्सु साक्षिषु तान् विहाय स्वयमेव दुर्बलसाक्ष्युपन्यासेन पराजितस्य बलवत्तरप्रमाणोपन्यासो न न्याय्यो विफलोऽसाविति निर्णीतवचनस्यार्थः । तदेवाह कात्यायनोऽपि—'क्रियां बलवतीमुक्त्वा दुर्बलां योऽवलम्बते । स जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात् क्रियाम्' ॥ तस्य स्वबलेनैव पराजितत्वात् । व्यमा.३३५–३३६

(४) निर्णिक्तेऽवसिते व्यवहारे प्रमाणं लिखितं निष्फलं भवेत् साक्षिणो वा । पूर्वं व्यवहारदर्शनात् प्रमाणमस्तीति यदि नावेदितम् । आवेदितं चेत् पत्रसाक्ष्यभावादवसितेऽपि पुनर्दर्शिते न पराजितो भवति । नाभा.१।५३

(५) निर्णिक्ते शोधिते । अन्यतरजयपराजयान्यतरावधारणं प्रापित इति यावत् । पूर्वमेव दुर्बलप्रबलसकलप्रमाणोपन्यासे कृते तु सर्वप्रमाणानुसारेण 'छलं निरस्य' इत्यभिधानात् पश्चादुद्भावितं कृत्रिमत्वादिशङ्काकलङ्कितमित्यनुपादेयमेवेत्यर्थः । व्यप्र.८०

(६) इति नारदोक्तिस्तु परीक्षितसाक्षिवाक्यविषयेति विवेकः । अत एवार्थिनः साक्षिरूपक्रियावलम्बने क्रियान्तरावलम्बनं न दोषः । साक्षिरूपक्रियानिर्णयाभावात् । 'निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत्' इति नारदोक्तेः । व्यउ.५१

(७) इति तत् जयावधारणोत्तरं निषेधार्थे, न प्राग् इति विज्ञानेश्वरादयः । तन्न । 'कृतं वाप्यकृतं भवेदिति' प्रागुक्तमन्वादिविरोधात् । 'न्यायापेतं यदन्येन राज्ञाऽज्ञानकृतं भवेत् । तदप्यन्यायविहितं पुनर्न्याये निवेशयेत्' ॥ इति कात्यायनेन निर्णिक्तेऽपि न्यायप्रवृत्तेः 'न चैकत्र क्रियाद्वयमि'ति निषेधाच्च । न तु न्यायतो निर्णिक्ते इत्यर्थः । तत्त्वं तु सकारणे मिथ्योत्तरे वादिना ग्रहणे साक्षिभिः साधिते प्रत्यर्थी यदि प्रतिदानं प्रतिग्रहं वा द्विगुणैः साक्षिभिः साधयति तत्परमिदम् । तदुक्तम् । 'पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः' इति । न च पूर्वनिगदितत्वम् । तत्र पूर्वापरकालोक्तेः, अत्र च तदभावात् पूर्वनिर्दिष्टासंभवे त्वनिर्दिष्टा अपि साक्षिण एव न दिव्यम् । 'संभवे साक्षिणां प्राज्ञो दैविकीं वर्जयेत्क्रियाम्' इति नारदोक्तेः । विता.१८२

**[१]यथा पक्वेषु धान्येषु निष्फलाः प्रावृषो गुणाः ।**
**निर्णिक्तव्यवहाराणां प्रमाणमफलं तथा ॥**

यत्पुनः प्रमाणं न पूर्वावेदितं न वाऽपि क्रियाकाले सूपन्यस्तं, तद्विद्यमानमपि निर्णिक्तव्यवहाराणां यथा अत्यन्ताभावेनाप्रमाणं तदाऽयं सोदाहरणश्लोकोऽभिहितो महर्षिणा । यथा पक्वेष्विति । यथा पक्वेषु धान्येषु वृष्टेर्गुणाः पुनः प्रकरणप्रारम्भादिका निष्फलाः एवं निर्णिक्तव्यवहाराणामपि वादिप्रतिवादिसभ्यानां पुनर्वादप्रारम्भविचारादिका गुणा निष्फलाः, अतिक्रान्तावसरत्वादिति । अभा.१७

## बृहस्पतिः

वादिप्रतिवादिनोर्मध्ये कदा केन प्रमाणोपन्यासः कर्तव्यः

**[२]ये तु तिष्ठन्ति करणे तेषां सभ्यैर्विभावना ।**

(१) **नासं**.१।५४; **नास्मृ**.१।६३; **अभा**.१७; **मिता**.२।८०; **व्यमा**.३३५ र्णिक्त (वृत्त) तथा (परम्); **व्यक**.३८ र्णिक्त (वृत्त) तथा (भवेत्); **व्यचि**.३१ र्णिक्त (र्णीत) कात्यायनः; **व्यनि**. व्यचिवत्; **व्यत**.२३० व्यचिवत्, कात्यायनः; **व्यसौ**.३६ व्यकवत्; **वीमि**.२।१९ र्णिक्त (र्णीत) राणां (राभ्यां) तथा (भवेत्); **व्यप्र**.८० यथा...न्येषु (पक्वेषु धान्येषु यथा); **व्यउ**.५१; **सेतु**.१२६ व्यचिवत्, कात्यायनः; **प्रका**.५९; **समु**.३८ र्णिक्त (र्णीत) तथा (भवेत्).

(२) **शुनी**.४।६५४ (कल्पयित्वोत्तरं सभ्यैर्दातव्यैकस्य

* अप. मितागतम् ।

**कलयित्वोत्तरं सम्यक् दातव्यैकस्य वादिनः ॥**

(१) ये तु तिष्ठन्ति विप्रतिपत्तिवादिन इति शेषः। विभावना क्रिया दातव्येत्यन्वयः। व्यक.३६

(२) तेषां धर्माधिकरणस्थानां मध्ये एकस्यार्थिनः प्रत्यर्थिनो वा विभावना क्रिया सभ्यैर्निर्धारयितव्येत्यर्थः। स्मृच.५०

(३) करणे धर्माधिकरणे। ये तिष्ठन्ति वादिनः प्रतिवादिनश्च। तेषामुत्तरं मिथ्यादिचतुर्भेदम्। कलयित्वा विचार्य, एतदुत्तरे कस्य क्रियोपन्यास उचित इति निर्धार्य। विभाव्यते साध्यमनयेति विभावना क्रिया प्रमाणमिति यावत्। एकस्य वादिनः अर्थिप्रत्यर्थ्यन्यतरस्य। सभ्यैर्दातव्या उपन्यसनीयत्वेनाज्ञापयितव्येत्यर्थः। व्यप्र.६८

[1]**प्रतिज्ञां भावयेद्वादी प्रत्यर्थी कारणं तथा।**
**प्राग्वृत्तवादी विजयं जयपत्रेण भावयेत् ॥**

(१) प्रतिज्ञातमर्थं प्रमाणेन साधयेत्। एतच्च मिथ्योत्तरे। प्रत्यर्थी कारणं साधयेदित्यर्थः। एतच्च प्रत्यवस्कन्दनोत्तरे। *व्यक.३६

(२) प्राग्वृत्तं प्राङ्न्यायः। जयपत्रेणेति प्राङ्न्यायदार्शिप्रभृत्युपलक्षणम्। ×व्यप्र.६९

**मिथ्योक्तौ च चतुष्पात्स्यात्प्रत्यवस्कन्दने तथा।**
**प्राङ्न्याये च स विज्ञेयो द्विपात्संप्रतिपत्तिषु+ ॥**
[2]**प्राङ्न्याये प्रत्यवस्कन्दे प्रत्यर्थी साधयेत्स्वयम्।**
**उत्तरार्थं प्रतिज्ञार्थं अर्थी मिथ्योत्तरे पुनः ॥**

मिथ्योत्तरेऽभ्युपगमाभावेन भाषार्थस्य साध्यताभावात् प्रतिज्ञार्थमर्थ्येव साधयेदित्यर्थः। कारणोत्तरे तु भाषार्थस्याभ्युपगमादेव साध्यत्वहानान्न प्रतिज्ञावादिनः प्रतिज्ञातार्थसाधनं, किं तूत्तरार्थे अर्थिना यदनभ्युपगतं कारणं तदेव प्रमाणेन प्रत्यर्थिना साध्यम्। स्मृच.५२

---

* व्यचि. व्यकवत्। × शेषं व्यकवत्।

+ व्याख्यासंग्रहः स्थलादिनिर्देशश्च व्यवहारस्वरूपप्रकरणे (पृ.१७) द्रष्टव्यः।

भावना) उत्त.; **व्यक**.३६ व्यैक (व्या त); **स्मृच**.५०; **व्यसौ**.३५ तु (ऽत्र) कल (कल्प); **व्यप्र**.६८ सम्यक् (सभ्यैः); **प्रका**.३२; **समु**.२४-२५. (१) **व्यमा**.३०९; **व्यक**.३६; **व्यचि**.३०; **व्यसौ**.३५; **व्यप्र**.६९ दी वि (दिवि).

(२) **स्मृच**.५२ अर्थी (अथ); **प्रका**.३३; **समु**.२६.

[1]**श्रुत्वा पूर्वोत्तरं सभ्यैर्निर्दिष्टा यस्य भावना।**
**विभावयेत्प्रतिज्ञातं सोऽखिलं लिखितादिना ॥**

विभाव्यते साध्यते साध्यमनयेति विभावना क्रियैव। पूर्वोत्तरं पूर्वपक्षमुत्तरं चेत्यर्थः। द्वन्द्वैकवद्भावः। निर्दिष्टा ब्रूहीत्युपदिष्टा। व्यप्र.६८

निर्णयसाधनानि, तेषां दैवमानुषभेदौ, तयोरवान्तरभेदाश्च

[2]**द्विप्रकारा क्रिया प्रोक्ता मानुषी दैविकी तथा।**
**एकैकाऽनेकधा भिन्ना मुनिभिस्तत्त्ववेदिभिः ॥**

क्रिया प्रमाणम्। वीमि.२।७

[3]**साक्षिलेख्यानुमानं च मानुषी त्रिविधा स्मृता।**
**धटाद्या धर्मजान्ता च दैवी नवविधा स्मृता ॥**

(१) अनुमानं भुक्तिः, तया भोक्तुर्भोग्ये स्वाम्यमनुमीयते। अप.२।२२

(२) तत्र स्वयम्भुवेति शेषो द्रष्टव्यः। नारदस्मृतसत्यादिभिः सह दैव्या वस्तुतो बहुविधत्वात्। स्मृच.५०

(३) लेखो भोगस्याप्युपलक्षणम्। व्यचि.२७

---

(१) **शुनी**.४।६५४-६५५ श्रुत्वा ... भ्यैः (साध्यस्य साधनार्थं हि); **व्यक**.३७ सोऽ (योऽ); **स्मृच**.५४; **स्मृचि**.४२ निर्दि (निक्त) दिना (दिभिः); **व्यसौ**.३६; **व्यप्र**.६८; **प्रका**.३४ (=); **समु**.२७. (२) **व्यमा**.३०६ मुनि ... भिः (ऋषिभिस्तत्वदर्शिभिः); **अप**. २।२२ नेक (नैक) मुनि (ऋषि); **व्यक**.३८ मुनि (ऋषि); **स्मृच**.५४ वेदि (दर्शि); **पमा**.८७ व्यकवत्; **व्यचि**.२७ मुनि (ऋषि) वे (वा); **व्यनि**. व्यमावत्; **नृप्र**.७ व्यकवत्; **व्यत**.२११ पू.; **सवि**.१११; **व्यसौ**.३६ वे (वा); **वीमि**.२।७ व्यचिवत्; **व्यप्र**.८१ वे (वा); **विता**.७५ पू.; **प्रका**.३५ स्मृचवत्; **समु**.२५; **विव्य**.८ पू.

(३) **व्यमा**.३०६; **अप**.२।२२ स्मृता (क्रिया) जान्ता च (जात्यन्ता) स्मृता (क्रिया); **व्यक**.३८ त्रिविधा स्मृता (त्रिविधा क्रिया) न्ता (न्या) वी नवविधा (विकी नवधा); **स्मृच**.५० न्ता (ता); **पमा**.८७ त्रिविधा स्मृता (त्रिविधा क्रिया) पू.; **दीक**.३३; **व्यचि**.२७ ख्या (खा) वी नवविधा (विकी नवधा); **व्यनि**. पू.; **नृप्र**.७ स्मृता (क्रिया) पू.; **व्यत**.२११ वी नधविधा (विकी नवधा); **व्यसौ**.३६ पूर्वार्धं व्यकवत्, (धटाद्या धर्मजान्या तु दैविकी नवधा भवेत्); **वीमि**.२।७ ख्या (खा) न्ता (ता) शेषं व्यतवत्; **व्यप्र**.८१ मानु ... ता (त्रिविधा मानुषी क्रिया) पू.; **विता**.७५ न्ता (त्या) त्रिविधा स्मृता (त्रिविधा क्रिया); **प्रका**.३२ पू.; **समु**.२५ स्मृता (क्रिया); **विव्य**.८ पू.

(४) अनुमानं तु भुक्त्यादि । व्यत.२११

सा॒क्षी द्वादशभेदस्तु लिखितं दशधा स्मृतम् ।
अनुमानं च द्विविधं नवधा दैविकी क्रिया ॥

(१) भुक्तिः कैश्चिद्विशेषणैर्विशिष्टा स्वत्वहेतुः । सा क्रिया । सा लेख्यादिमव्यभिचारादनुमापयति, अनुपपद्यमानं वा कल्पयतीति, अनुमानं तु द्विविधमिति भुक्तिरेवोक्ता । व्यनि.

(२) इदं संख्याभिधानं न नियमाय भेदान्तराणामपि प्रमाणप्रकरणे वक्ष्यमाणत्वात् । व्यप्र.८२

बृहस्पत्यादयो मानुषप्रमाणभेदतयोपन्यस्ते तद्भेदत्रैविध्ये भुक्तियुक्तिचोदनाप्रतिकालानाख्यातवन्तः । 'साक्षी द्वादशभेदम्' इत्यादि उक्त्वा भुक्तियुक्तिचोदनाप्रतिकालान् बृहस्पतिर्विवृतवान् । तत्र युक्तिचोदनाप्रतिकालयोः प्रमाणान्तरसहकारितयैव प्रामाण्यम् । भुक्तेस्तु वक्ष्यमाणविशेषणवत्याः , स्वत्वहेत्वविनाभावात् स्वत्वानुमापकत्वं स्वत एवेत्यभिसंधाय योगीश्वरादिभिर्भुक्तिरेव प्रमाणतयोक्ता, अन्यैस्तु यथाकथञ्चिदनुमापकतामभिसंधाय युक्तिचोदनाप्रतिकालसंग्रहायानुमानत्वेनैव सोक्तेति सौकर्याय त्रयमपि निरूपयामः । व्यप्र.१५२

प्रमाणानां विषयभेदेनावतारः । दैवमानुषप्रमाणविषयव्यवस्था ।

[२]प्रथमे वा तृतीये वा प्रमाणं दैवमानुषम् ।
उत्तरे स्याच्चतुर्थे तु ससाक्षिजयपत्रकम् ॥

मिथ्यासंप्रतिपत्तिप्रत्यवस्कन्दप्राङ्न्यायरूपचतुर्विधोत्तरेषु प्रथमे मिथ्योत्तरे, तृतीये कारणोत्तरे, दैविकी मानुषी च क्रिया कार्या ; चतुर्थे प्राङ्न्यायोत्तरे साक्षिजयपत्रयोरन्यतरावलम्बनेनैव निर्णयः । न तत्र दिव्यावतार इत्यक्षरार्थः । संप्रतिपत्तौ भाषायामुत्तरे च साध्यार्थाभावात् द्विपाद्यवहारोऽयम् । सवि.१०७-१०८

[३]दिवाकृते कार्यविधौ ग्रामेषु नगरेषु च ।
संभवे साक्षिणां चैव न दिव्या भवति क्रिया ॥
वाक्पारुष्ये महीवादे निषिद्धा दैविकी क्रिया ।
प्रदातव्या प्रयत्नेन साहसेषु चतुर्ष्वपि ॥

एवमादीनि वचनानि विवादविशेषेषु लेख्यादिप्रमाणविशेषप्राबल्यपराणि । न पुनर्दिव्यादिप्रमाणान्तरनिषेधपराणि । तथात्वे सर्वत्र सर्वप्रमाणानां प्रापकवचनविरोधात् । अतः प्रमाणान्तरसंभवे महीवादे न दिव्यम् । तथा द्यूते समाह्वये चैव साक्षिसंभवे न दिव्यम् । नापि लेख्यम् । तथा ऋणादिवादेषु लेख्यसंभवे न दिव्यं न च साक्षिण इति नियमः । विवादान्तरेषु पराजितस्य दण्डद्वैगुण्यादिपणं कृत्वा प्रमाणान्तरावलम्बनं युक्तम् । महीवादादिषु पराजितस्य दण्डद्वैगुण्यस्य कल्पनया न दिव्यादिकल्पनमित्यविरोधः । व्यनि.

[२]लिखिते साक्षिवादे च संदिग्धिर्यत्र जायते ।
अनुमाने च संभ्रान्ते तत्र दिव्यं विशोधनम् ॥

(१) दिव्यादनुमानं बलवत्तरम् । तदाह बृहस्पतिः— लिखिते इति । लिखितसाक्षिभाषणमनवधारणमनुमानस्य च संभ्रान्तत्वं तदा दिव्यविधानात् । अनुमानात् साक्षी बलवान् । 'अनुमानाद्वरः साक्षी' इत्युक्तेः । लिखितं तु साक्षिभ्यो बलीयः । व्यमा.३१३-३१४

(२) मानुष्या अभावे एतत् । न च व्यर्थं वचनम् । मिथ्योत्तरवादिनः क्रियाप्राप्त्यर्थत्वात् । न हि मिथ्योत्तरवादिनो दैविकी क्रिया प्राप्ता । अप.२।२२

---

(१) **व्यक.**३८; **पमा.**८७ दशधा (अष्टधा) च द्विविधं (त्रिधा प्रोक्तं); **व्यनि.**; **नृप्र.**७ तु (स्यात्) दश ...तम् (अष्टधा मतम्) च द्विविधं (द्विधा प्रोक्तं); **व्यसौ.**३७; **व्यप्र.**८१ च (तु) : १५२ साक्षी...स्तु (साक्षिद्वादशभेदं तु) च द्विविधं (त्रिधा भिन्नं); **समु.**२५ च (तु) नवधा दैविकी (दैवी नवविधा).

(२) **स्मृच.**५२; **सवि.**१०७; **प्रका.**३३; **समु.**२६.

(३) **व्यनि.** नारदबृहस्पती; **व्यसौ.**३७ नारदबृहस्पती.

(१) **अप.**२।२२; **स्मृच.**५३ पू.; **व्यनि.** वाक्पारुष्ये (पारुष्ये च) चतुर्ष्वपि (च त्रिष्वपि); **नृप्र.**३१ निषि...या (दिव्यानि परिवर्जयेत्) पू., कात्यायनः; **सवि.**१०९ पू.; **समु.**२६.

(२) **व्यमा.**३१४,३३३; **अप.**२।२२ यत्र जायते (जायते यदि); **व्यक.**३९ च सं...ते (तु संदिग्धं जायते यदा); **स्मृच.** ५३, ९१ संदि... ते (संदेहो जायते यदा) दिव्यं (दैवं):९५ संदिग्धिः (संदेहो) दिव्यं (दैवं); **व्यनि.** संदि...ते (संदेहो जायते यदा) भ्रान्ते (प्राप्ते) तत्र (तदा) विशोधनम् (नियोजयेत्); **सवि.**१०८ स्मृच.५३ वत्; **चन्द्र.**१२८ ग्धिः (ग्धं) भ्रा (क्रा) तत्र ...म् (दिव्यं तत्र प्रकल्पयेत्); **व्यसौ.**३८ ग्धिः (ग्धं) विशोधनम् (प्रकल्पयेत्); **व्यम.**११ ग्धिः (ग्धं); **विता.**१३३-१३४ दिग्धिः (वादो) भ्रान्ते (प्राप्ते); **प्रका.**३४ स्मृच.५३ वत्; **समु.**२६-२७ स्मृच.५३ वत्.

(३) अनुमानं भुक्तिः, उल्काहस्तत्वादि युक्तिश्च । स्मृच.५३

(४) लिखितसाक्ष्यादिलेशे सत्येव दिव्यं देयं नान्यथा निरालम्बनवादप्रसङ्गादिति धारेश्वरोद्योतनकृष्णादयो मन्यन्ते । एतच्च विश्वरूपकुमारविज्ञानेश्वरादयो न सहन्ते । अप्रकाशविवादेषु दिव्याभावप्रसङ्गात् । व्यनि.

**[१]ऋणादिकेषु कार्येषु कल्पयेन्मानुषीं क्रियाम् ।**
**नृपद्रोहे साहसे च कल्पयेद्दैविकीं क्रियाम् ॥**
**[२]मणिमुक्ताप्रवालानां कूटकृन्न्यासहारकः ।**
**हिंसकोऽन्याङ्गनासेवी परीक्ष्यः शपथैः सदा ॥**
**[३]महापापाभिशापेषु निक्षेपहरणे तथा ।**
**दिव्यैः कार्यं परीक्षेत राजा सत्स्वपि साक्षिषु ॥**

(१) निक्षेपहरणं वधार्हमहापातकादन्यत् । यथा मनुः– 'रत्नानां चैव सर्वेषां हरणे वधमर्हति' । व्यमा.३१६

(२) महापापाभियोगे समीचीनसाक्षिसत्त्वेऽप्यतिनिष्कर्षार्थं दिव्येन निर्णयः । सर्वथाऽशक्यवैपरीत्यसाक्षिसंभवेऽपि तल्लङ्घनमनुचितमिति तदनुसारेण संकोचो बोद्धव्य इति रत्नाकरः । चन्द्र.१२९

(३) अत्र सत्स्वपि साक्षिषु इत्यनेनैतादृशि विषये साक्षिण एव तावन्न संभवन्ति । संभवन्तोऽपि वा कथञ्चित्कूटतया प्रायः प्रदुष्टा इति विवक्षितं, न तु यथाश्रुतम् । व्यप्र.८४

**[१]चिरन्तनोपांशुकृते चिरनष्टेषु साक्षिषु ।**
**प्रदुष्टेषु समानेषु दिव्यैः कार्यं विशोधयेत् ॥**

(१) चिरन्तनोपांशुकृते चिरन्तनकृते रहस्यकृते च, समानेषु सदृशेषु । व्यक.४०

(२) चिरन्तनकृते उपांशुकृते रहसि कृते इत्यनेन लेख्याद्यसंभवमेवोपलक्षयति । अत एवाग्रे चिरनष्टेषु प्रदुष्टेषु समानेषु इत्यनेनासाक्षिवन्निमित्तान्युपलक्षितवान् । व्यप्र.८४

## कात्यायनः

वादिप्रतिवादिनोर्मध्ये कदा केन प्रमाणोपन्यासः कर्तव्यः

**[२]शोधिते लिखिते सम्यगिति निर्दोष उत्तरे ।**
**प्रत्यर्थिनोऽर्थिनो वाऽपि क्रियाकरणमिष्यते ॥**

(१) अर्थिनः प्रत्यर्थिनो वा यस्य साध्यमस्ति असौ तत्साध्यसिद्धये सदुत्तरानन्तरमेव प्रमाणलेखनं कुर्यादित्यर्थः । स्मृच.५०

(२) एतदेव चन्द्रिकाकारादयः प्रत्याकलनमित्याहुः । ×सवि.१०५

(३) क्रियाकरणं क्रियोपन्यासः । व्यप्र.६८

**न चैकस्मिन्विवादे तु क्रिया स्याद्वादिनोर्द्वयोः ।**
**न चार्थसिद्धिरुभयोर्न चैकत्र क्रियाद्वयम्* ॥**
**[३]कारणात्पूर्वपक्षोऽपि ह्युत्तरत्वं प्रपद्यते ।**
**अतः क्रिया सदा प्रोक्ता पूर्वपक्षप्रसाधिनी ॥**

(१) क्रिया प्रत्याकलना । अप.२।१७

---

(१) **अप**.२।२२ उत्त.; **व्यक**.३९ दिकेषु (दिषु च); **व्यसौ**.३८ नृप ... च (साहसे चैव नृपद्रोहे).

(२) **व्यक**.४० प्रवाला (नालका) क्ष्यः (क्ष्याः); **पमा**.८९ न्यास (पाश) न्याङ्ग (न्त्याङ्ग); **व्यनि**. सदा (सह); **नृप्र**.८ टकृन्न्यास (टं कृत्वाऽप) (हिंसको वञ्चकश्चैव परीक्ष्यः शपथैस्तथा); **व्यसौ**.३८ प्रवाला (नाशका) कृन्न्यास (कृन्मांस); **व्यप्र**.८४; **व्यम**.११ प्रवाला (नाणका) क्ष्यः (क्ष्याः); **विता**.१११ (मणिमुक्तानाणकानि कूटकृत्या सहासकः) क्ष्यः (क्ष्याः); **प्रका**.३३ सदा (तथा); **समु**.२६ व्यमवत्.

(३) **शुनी**.४।७५१-७५२ शापे (शप्ते) तथा (षु च); **व्यमा**.३१६; **व्यक**.४०; **पमा**.८९ क्षेप (क्षेपे); **व्यनि**. शापे (योगे) क्षेत (क्ष्येत); **नृप्र**.८; **व्यसौ**.३८; **चन्द्र**.१२९ शापे (योगे); **व्यप्र**.८४; **विता**.१११; **प्रका**.३३ शापे (योगे) कार्यं (कार्यैः); **विव्य**.११ शापे (योगे) तथा (षु च).

× वाक्यार्थः स्मृचवत् । *व्याख्यासंग्रहः स्थलादिनिर्देशश्च उत्तरप्रकरणे (पृ.१७९) द्रष्टव्यः ।

(१) **शुनी**.४।७५१ समाने (प्रमाणे) येत् (नम्) उत्त.; **व्यक**.४०; **पमा**.९० षु स (ष्वनु); **नृप्र**.८ पमावत्; **व्यसौ**.३८; **व्यप्र**.८४ कृते (कृत).

(२) **शुनी**.४।६४९ शोधि....ते (लिखिते शोधिते) गिति (क् सति) प्रत्य....नो (अर्थिप्रत्यर्थिनोः); **स्मृच**.५० कर (कार); **सवि**.१०५ स्मृचवत्, बृहस्पतिः; **व्यप्र**.६८ शुनीवत्; **प्रका**.३२ स्मृचवत्; **समु**.२५ स्मृचवत्.

(३) **शुनी**.४।६५८ पू.; **अप**.२।१७ धिनी (धनी); **व्यक**.३६ ह्यु ...प्र (उत्तरं प्रति); **पमा**.८७ ह्यु (उ) सदा (तदा) धि (ध); **व्यचि**.२२ ह्यु (उ); **व्यनि**. ह्यु (उ) पक्ष (कर्म); **नृप्र**.७ व्यचिवत्; **व्यसौ**.३५ ह्यु (उ) प्रोक्ता (देया); **व्यप्र**.६० व्यचिवत्; **समु**.२५ अपवत्.

(२) कारणात् बलवत्त्वात् । उत्तरत्वम् उत्तमत्वम् । व्यचि.२२

(३) पूर्वपक्षबलवत्वहेतुकां पूर्ववादिनः क्रियां प्रतिपादयता कात्यायनेनोत्तरस्यापि बलवत्त्वे उत्तरवादिनः क्रियेत्युक्तं भवति । +व्यप्र.६०

**प्रपद्य कारणं पूर्वमन्यद्गुरुतरं यदि ।**
**प्रतिवाक्यगतं ब्रूयात्साध्यते तद्धि नेतरत् ॥**

(१) कारणोत्तरे तु प्रतिवादिनः क्रियामाह कात्यायनः—प्रपद्येति । धार्यमाणत्वस्य कारणं ऋणग्रहणम् । तदभ्युपगम्य तदा धार्यमाणत्वनिमित्तमुत्तरगतं यदि गुरुतरकारणं परिशोधनादिकं ब्रूयात्, तदा प्रतिवादिनः क्रिया । *व्यमा.३०७

(२) प्रथममेकं कारणमभिधाय ततोऽपरं गुरुतरं यदि कारणं वक्ति तदा तत्र प्रमाणमनुसरणीयं न पूर्वोक्ते । व्यक.३०

(३) पूर्वप्रतिज्ञावादिनोक्तं प्रपद्य अङ्गीकृत्य अन्यद् गुरुतरं अङ्गीकृतप्रतिज्ञार्थोपमर्दनक्षमं कारणं प्रत्यर्पणादिकं प्रतिवाक्यगतमुत्तरवाक्यस्थं यदि प्रत्यर्थी ब्रूयात् तदा तदेव किल तेन साध्यते । अर्थिनाऽनङ्गीकृतत्वात् नेतरत् प्रत्यर्थिनाऽङ्गीकृतं प्रतिज्ञातार्थजातमर्थिना साध्यत इत्यर्थः । प्रपद्येत्युपलक्षणार्थम् । तेन प्रतिज्ञावादिनोक्तं मिथ्येत्युक्त्वा कारणाभिधानेऽपि कारणमेव साध्यते । 'मिथ्याकारणयोर्वापि ग्राह्यं कारणमुत्तरम्' इति हारीतस्मरणात् स्मृच.५२–५३

(४) अस्यार्थः–यदि गुरुतरं कारणं ब्रूयात्तदैवोत्तरवादिना साध्यते, तद्धि नेतरत् गुरुतरकारणं विना तुल्यबलहीनबलकारणयोः पूर्ववादिनोक्तं साध्यते इत्यर्थः । चिरन्तननिबन्धेऽपि लिखितम्—'गुरावभिहिते हेतौ प्रतिवादिक्रिया भवेत् । दुर्बले वादिनः प्रोक्ता तुल्ये पूर्वक्रियैव च' इति ॥ ×स्मृसा.९४–९५

+ पदार्थः व्यचिवत् । * वीमि. व्यमावत् ।
× व्यचि.२५ व्यकगतम् । व्यचि.२८ स्मृसागतम् ।
(१) **व्यमा**.३०७ क्यगतं (क्ये गतिं); **अप**.२।७; **व्यक**.३०; **स्मृच**.५२; **स्मृसा**.९४ वाक्यगतं (पद्य स तं); **व्यचि**.२५ ,२८; **व्यसौ**.२६ ते तद्धि नेतरत् (मेतद्विनैव तत्); **वीमि**.२।७ वाक्य (वाद्य) तद्धि (तद्वि); **प्रका**.३३; **समु**.२६.

निर्णयसाधनानि

**वादिना यदभिप्रेतं स्वयं साधयितुं स्फुटम् ।**
**तत्साध्यं साधनं येन तत्साध्यं साध्यतेऽखिलम् ॥**
**प्रमाणानि प्रमाणज्ञैः पालनीयानि तत्वतः ।**
**सीदन्ति हि प्रमाणानि प्रमाणैरव्यवस्थितैः + ॥**
**साक्षिणो लिखितं भुक्तिः प्रमाणं त्रिविधं विदुः ।**
**लेशोद्देशस्तु युक्तिः स्याद्दिव्यानीह विषादयः ॥**

(१) लेशोऽन्यथाऽनुपपन्नो धर्मस्तस्योद्देशः परामर्षः । तेन परामृष्यमाणोऽन्यथाऽनुपपन्नो धर्म इत्यर्थः । *व्यचि.३३

(२) युक्तिस्वरूपमाह कात्यायनः—लिङ्गोद्देशस्तु युक्तिः स्यात् इति । लिङ्गस्य अग्निदत्वाद्यव्यभिचारिण उल्काहस्तत्वादेः, उद्देशो निश्चयः, तेन चाग्निदत्वाद्यनुमानम् । यद्यपि भुक्तिरपि निरन्तरत्वनिराक्रोशत्वादिप्रागुक्तविशेषणोपहिता अनुमानविधयाऽर्थापत्तिविधया वा साधिकेति, तत्रापि लक्षणमिदमतिप्रसक्तमेव, वक्ष्यमाणचोदनाप्रतिकालेऽपि । तथापि स्मर्तृप्रसिद्धिबलाद्गोवृषवत्तद्भिन्नलिङ्गोद्देश एव युक्तिरूपत्वेन लक्ष्यः । ×व्यप्र.१६७

प्रमाणानां प्राबल्यदौर्बल्यम् । दैवमानुषप्रमाणभेदौ ।

**ऋणे लेख्यं साक्षिणो वा युक्तिलेशादयोऽपि वा ।**

+ व्याख्यासंग्रहः नारदे (पृ.२२१) द्रष्टव्यः ।
* चन्द्र. व्यचिवत् । × व्यप्र.८२ व्यचिवत् ।
(१) **व्यमा**.३३४; **व्यक**.३७ साध्यं (शोध्यं); **व्यनि**.; **स्मृचि**.४२ (तत्साध्यसाधनं नाम यत्साध्यं साध्यतेऽखिलम्) बृहस्पतिः; **व्यसौ**. ३६; **व्यप्र**.७९; **समु**.२७.
(२) **व्यक**.४१ नारदकात्यायनौ; **व्यसौ**.३९ हि प्रमाणानि (हि प्रमेयाणि) नारदकात्यायनौ.
(३) **व्यक**.३८ लेशोद्दे (लेख्यादे); **पमा**.९१ लेशो (लिङ्गो); **व्यचि**.३३ साक्षि...तं (लिखितं साक्षिणो) विदुः (स्मृतम्) स्तु ... स्यात् (श्च युक्तिश्च); **व्यनि**. (=) शोद्दे (शाले) क्तिः स्यात् (क्तेःसा) नीह (न्याशी); **नृप्र**.८ लेशो (लिङ्गो) विषा (तुला); **चन्द्र**.१२५ पूर्वार्धं व्यचिवत्; **व्यसौ**.३७ विदुः (स्मृतम्); **व्यप्र**.८२ साक्षि ... तं (लिखितं साक्षिणो) : १६७ (लिङ्गोद्देशस्तु युक्तिः स्यात्); **विता**.७५ त्रिविधं (मानुषं) पू.; **प्रका**.३२ लेशो ( लिङ्गो ) नीह ( ह्यग्नि ); **समु**.२६.
(४) **व्यक**.३८ णे (णं) यु ... वा (भुक्तिलेख्यादयोऽपि च);

**दैविकी वा क्रिया प्रोक्ता प्रजानां हितकाम्यया ॥**

दैविकी वेति न पूर्वोक्तैस्तुल्यविकल्पः। किन्तु पूर्व-प्रमाणाभाव एव। व्यनि.

**[1]प्रमाणैर्हेतुना वाऽपि दिव्येनैव तु निश्चयम्।**
**सर्वेष्वपि विवादेषु सदा कुर्यान्नराधिपः ॥**
**[2]पूर्वाभावे परेणैव नान्यथैव कदाचन।**
**प्रमाणैर्वादिनिर्दिष्टैर्भुक्त्या लिखितसाक्षिभिः ॥**

(१) हेतुना अनुमानेन दिव्येन वा पूर्वाभावे परेण निर्णयः कार्यः, न तु पूर्वसद्भावे परेणेति दर्शयति। एवं च वदता अनुमानपर्यन्ताभावे दिव्यमिति दर्शितम्। +व्यमा.३१४

(२) पूर्वं नाम मानुषं प्रमाणम्। तस्याभावे दिव्यम्। अप.२।२२

**[3]कार्यं हि साध्यमित्युक्तं साधनं तु क्रियोच्यते।**
**द्विभेदा सा पुनर्ज्ञेया दैविकी मानुषी तथा।**
**मानुषी लेख्यसाक्ष्यादिर्धटादिर्दैविकी मता ॥**
**[4]पञ्चप्रकारं दैवं स्यात् मानुषं त्रिविधं स्मृतम् ॥**

पञ्चप्रकारमिति नावधारणार्थम्। तण्डुलतप्तमाषादि-विधान्तरस्यापि दैविकस्य स्मृत्यन्तरे दर्शनात्। त्रिविधमिति नियमार्थमेव, स्मृत्यन्तराविसंवादात्। अत एवात्र त्रिविधं स्मृतमित्युक्तम्। *स्मृच.५४–५५

प्रमाणोपन्यासावधिः

**[1]क्रियां बलवतीं त्यक्त्वा दुर्बलां योऽवलम्बते।**
**स जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात्क्रियाम् ॥**

(१) कात्यायनेन जयावधारणोत्तरकालं क्रियान्तर-परिग्रहनिषेधाज्जयावधारणात्प्राक् क्रियान्तरपरिग्रहो दर्शितः। मिता.२।८०

(२) मुक्त्वेति बुद्धिपूर्वकत्यागावगतिः। न च बलवत्तर-क्रियां परित्यज्य दुर्बलया प्रत्यवस्थानं युज्यते प्रेक्षापूर्व-कारिण इति। ×व्यमा.३०९

तस्य स्वबलेनैव पराजितत्वात्। यत्र तूपन्यस्तमेव बलवत् प्रमाणं परं च साक्षिरूपं, दूरदेशस्थत्वेन च संप्रति तदधीननिरुपणासामर्थ्येन दुर्बलसाक्षिभिर्निर्णयो जातस्त-दनन्तरं च देयत्वेन बलवत्साक्षिसमागमे तैरेव निर्णयः कार्यः। बलवत्प्रमाणस्य तेन पूर्वमुपन्यस्तत्वात् न तेन बलवती मुक्ता। व्यमा.३३६

(३) यत्र क्रियाद्वयमुपन्यस्यानयोरेकां स्वेच्छया गृहा-णेत्युक्तो बलवतीं त्यक्त्वा दुर्बलामेव परिगृण्हाति तत्र न बलवत्फलता। क्रियामिति कात्यायनवचनात्। त्यक्त्वा पुनरित्यनयोः स्वरसात्। एतदपि सप्ताहानन्तरं, सप्ता-हाभ्यन्तरे त्यक्त्वाऽपि क्रियोपयुज्यत एव 'जयेऽवधृते' इति वचनात्। जयावधारणस्य सप्ताहाद्यन्यतरसमयत्वात्। तत्वनिर्णये झटिति संवरणस्यादोषत्वात्, तत्वनिर्णयस्योद्दे-श्यत्वाच्च। यत्र तु विस्मृतां दुर्बलक्रियानिर्वाहानन्तरं सप्ताहाभ्यन्तरे बलवतीमुपन्यस्यति तत्र साऽपि सफलैव। 'उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तराः। द्विगुणा वाऽन्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः' ॥ इति वच-

---

\+ स्मृच., व्यचि., सवि. व्यमागतम्।

* सवि. स्मृचवत्।

**स्मृच**.५२; **पमा**.९१ शा (ख्या); **व्यचि**.३३; **व्यनि**.; **नृप्र**.८ युक्तिलेशा (भुक्तिलेख्या) याज्ञवल्क्यः; **सवि**.१०७ की वा (की च); **व्यसौ**.३७ पमावत्; **व्यम**.११ बृहस्पतिः; **प्रका**.३३; **समु**.२६.

(१) **व्यमा**.३१४ ष्वपि (ष्वेव); **अप**.२।२२; **स्मृच**.५२ व्यमावत्; **व्यचि**.३३ ष्वपि (ष्वेव) श्चयम् (र्णयम्); **सवि**.१०७ यम् (यः) ष्वपि (ष्वर्थे); **प्रका**.३३; **समु**.२६.

(२) **व्यमा**.३१४; **अप**.२।२२ परेणैव (तु यत्नेन) दा (र्थं) पू.; **स्मृच**.५२ पूर्वा...णैव (सर्वाभावे तु यत्नेन) पू.; **व्यचि**.३३ परेणैव (तु यत्नेन) पू.; **प्रका**.३३ स्मृचवत्, पू.; **समु**.२६ स्मृचवत्, पू.; **विव्य**.१० क्त्या लि (क्तिर्लि).

(३) **अप**. २।८ र्धटादि (र्वधादि).

(४) **स्मृच**.५४; **सवि**.१११; **प्रका**.३५; **समु**.२५.

× व्यचि., वीमि. व्यमावत्।

(१) **मिता**.२।८० त्य (मु); **व्यमा**.२८१ तीं त्य (तीमु): ३०९ त्य (मु): ३३६ तीं त्य (तीमु); **व्यक**.३७-३८ बल (मूल) त्य (मु); **व्यचि**. ३१:६१ योऽवलम्बते (यः समाश्र-येत्); **व्यत**.२३० लां (लात्) स (न); **चन्द्र**.१२६ योऽ-वलम्बते (यः समाश्रयेत्) तां ना ... म् (नाप्नोति तां क्रियाम्); **व्यसौ**.३६ तीं त्य (तीमु); **वीमि**.२।१९,२।८० व्यचिवत्; **व्यप्र**.८० त्य (मु) लां (लं); **व्यउ**.५१ त्य (मु) स जयेऽवधृते (तत एव धृतः); **विता**.१८१ त्य (मु)ऽवधृते (वर्ध्यते); **सेतु**.१२६ लां (लं); **प्रका**.५९ तीं त्य (तीमु); **समु**.३८ त्य (मु); **विव्य**.९ उत्त.:१५.

नेन सप्ताहाभ्यन्तरे रोगादिवद्धिपरीताभिधानस्यापि पूर्वसाक्षिकूटलिङ्गत्वाभिधानात् । तदुक्तं रत्नाकरे—
'एतत्सप्ताहाभ्यन्तरे निवृत्तव्यवहाराणामिति तु सप्ताहानन्तरमिति न विरोधः' इति । चन्द्र.१२६

(४) तां बलवतीम् । तेन प्रागेव प्रबलं प्रमाणमुद्भाव्यम् । दुर्बलप्रमाणालम्बनेन पराजितस्य पश्चात् प्रबलप्रमाणोपन्यासावसरो नास्तीत्यर्थः । व्यप्र.८०

प्रमाणप्राबल्यदौर्बल्ये दैवमानुषतारतम्यम् । प्रमाणानां विषयव्यवस्था ।

[1]सारभूतं पदं मुक्त्वा असाराणि बहून्यपि ।
संसाधयेत्क्रिया या तु तां जह्यात्सारवर्जिताम् ॥
[2]पक्षद्वयं साधयेद्या तां जह्यात् दूरतः क्रियाम् ॥
[3]संभवे साक्षिणां प्राज्ञो दैविकीं वर्जयेत्क्रियाम् ।
संभवे तु प्रयुञ्जानो दैविकीं हीयते ततः ॥

साक्षिग्रहणं मानुषोपलक्षणार्थमिति मन्तव्यम् ।
स्मृच.५१

[4]यद्येको मानुषीं ब्रूयादन्यो ब्रूयात्तु दैविकीम् ।
मानुषीं तत्र गृह्णीयान्न तु दैवीं क्रियां नृपः ॥

यथा प्रथमवादी ब्रूते, 'सुवर्णसहस्रं मे धारयतेऽयमिति मानुषेण प्रमाणेन साधयामि' इति । उत्तरवादी तु ब्रूते– 'नाहं सुवर्णसहस्रं धारय इति दिव्येन विभावयामी'ति । *अप.२।२२

* व्यनि. अपगतम् ।

(१) व्यक.३७ असा (याऽसा); स्मृच.५१; व्यनि. पदं (परं) असा (त्वसा) (संसाधयेत् क्रियायां तत्प्रजह्यात्समवर्जितम्); व्यसौ.३६ मु (त्य) या तु (यां तु); व्यप्र.७९ असा (निःसा) या या (यां यां); प्रका.३२ नारदः; समु.२५.

(२) व्यक.३७ येद्या (यन्ती) तां जह्यात् (जह्यात्तां); व्यसौ. ३६; व्यप्र.८०. (३) मिता.२।८० दैविकीं वर्जयेत् (वर्जयेद्दैविकीं) पू.; स्मृच.५१; व्यनि.ततः (ध्रुवम्) व्यासः; व्यप्र.१३१ पू.; व्यउ.५१ पू.; विता.१८२ पू., नारदः; प्रका.३२; समु.२५. (४) शुनी.४।७५७-७५८; मिता. २।२२; व्यमा.३१५ त्त (च) क्रियां नृपः (कदाचन); अप. २।२२ ब्रूयात् (कुर्यात्); व्यक.३८; स्मृच.५१; पमा.८७; व्यचि.२७ क्रियां नृपः (कदाचन); व्यनि.; स्मृचि.४१ नारदः; नृप्र.७; सवि.१०७ (=); व्यसौ.३७; व्यप्र.८२; व्यम.१०; विता.११० अन्यो ब्रूयात्तु (क्रियामन्यस्तु); राकौ.३९३ वितावत्; प्रका.३३नारदः; समु.२५.

[1]क्रिया न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु ।
लेख्ये सति च वादेषु न स्याद्दिव्यं न साक्षिणः ॥

इति गुणान्वितसाक्षिसत्त्वे । दित.५७५

कालेन हीयते लेख्यं दूषितं न्यायतस्तथा ॥
तद्दिव्यैः साक्षिभिर्वाऽपि हीयते लिखितं क्वचित् ।
लेख्ये धर्मः सदा श्रेष्ठो ह्येतेनान्येन हीयते * ॥
[3]यद्येकदेशप्राप्ताऽपि क्रिया विद्येत मानुषी ।
सा ग्राह्या न तु पूर्णाऽपि दैविकी वदतां नृणाम् ॥

(१) यत्रापि प्रधानैकदेशसाधनं मानुषं संभवति तत्रापि न दैवमाश्रयणीयम् । यथा रूपकशतमनया वृद्ध्या गृहीत्वाऽयं न प्रयच्छतीत्यभियोगापह्नवे ग्रहणसाक्षिणः सन्ति । नो संख्यायां वृद्धिविशेषे वा; अतो दिव्येन भावयामीत्युक्ते तत्रैकदेशविभावितन्यायेनापि संख्यावृद्धिविशेषसिद्धेर्न दिव्यस्यावकाशः । उक्तं च कात्यायनेन—यद्येकेति । ×मिता.२।२२

* व्याख्यासंग्रहः स्थलादिनिर्देशश्च लेख्यप्रकरणे द्रष्टव्यः ।

×अप. भावार्थो मितावत् । व्यनि., सवि., विता. मितागतम् ।

(१) व्यमा.३०६,३०८,३१५ सति च (च सति); अप.२।९२ प्रोक्ता (देया) सति च (च सति); व्यक.३९ व्यमावत्; पमा.८८ न (तु) प्रोक्ता (प्राप्ता) सति च (च प्रति) न स्याद्दिव्यं न (न दिव्यं न च); दीक.३३ व्यमावत्; व्यचि. २७ : २९ बृहस्पतिः; व्यनि. व्यमावत्; नृप्र.७ सति च (षु सति); व्यत.२१६ सति च (च सति) न स्याद्दिव्यं न (न दिव्यं न च); दित.५७५ व्यमावत्; चन्द्र १२८ च (तु) न स्याद्दिव्यं न (न दिव्यं न च); व्यसौ.३७ व्यमावत्; व्यप्र.८३ व्यमावत्; व्यम.१० व्यमावत्; विता.१११ सति च (च सति) उत्त.; सेतु. १२५ च (वि); समु.२५ व्यमावत्; विव्य.८ व्यमावत्: १० उत्त., नारदः.

(२) व्यमा.३४०.

(३) शुनी.४।७५८-७५९; मिता.२।२२ प्रा (व्या); व्यमा.३११ ऽपि दै (तु दै): ३१५; अप.२।२२ ग्राह्या (न्याय्या); व्यक.३८ अपवत्; स्मृच.५१ मितावत्; पमा. ८८ अपवत्; व्यचि.२७ मितावत्; व्यनि.मितावत्; स्मृचि. ४१ र्णाऽपि (र्णा तु) नारदः; नृप्र.७; व्यत.२१७; सवि. १०६ शप्रा (शं व्या); व्यसौ.३७ अपवत्; व्यप्र.८२ : १०१ प्रा (व्या) न तु (तु न); व्यम.१० मितावत्; विता.११० प्राप्ता (व्यग्रा) विकी (वी वि); राकौ.३९३; प्रका.३२ मितावत्; समु.२५ मितावत्; विव्य.१० द्येक (देक) पूर्णा (सर्वा).

(२) वदतां विवदतां।... ... दैविक्या दुर्बलतया मानुष्याश्च क्रियाया बलवत्वेनैकदेशप्रतिपादनेनैव समस्तसाध्यसिद्धिमाह । अन्यथा साध्यान्तरांशेऽपि यदि इष्टरूपक्रियान्तरं तदा न व्यापिता इष्टक्रियायाः । अथ तदंशे दिव्यादि क्रियते तदा दिव्यमेव स्यात् ।

*व्यमा.३११

(३) विशिष्टसाध्यविशेषणांशे विशेष्यांशे वा मानुषसंभवे विशिष्टार्थसाधकमपि न दिव्यं ग्राह्यमित्यर्थः । विशेषणांशसिद्धिस्तु विभावितैकदेशन्यायादल्पशपथेन वा कार्येत्यभिप्रायः । न च वाच्यं एकदेशेत्यविशेषवचनाद्विशेषणांशे विशेष्यांशे वा मानुषसंभवे दिव्यं निषिध्यत इति । स्मृच.५१

(४) एकदेशव्याप्तापीति स्तुतिर्वा अर्थान्तरव्याप्तैकदेशविषयं वा एकदेशविभावनेऽपि सर्वं दद्यामिति पणविषयं वा । व्यचि.२७

(५) एवमेकोऽपि वादी साध्यानेकत्वे साध्यैकदेशमपि यदि प्रमाणेन साधयति तदैकदेशविभावितन्यायेनैकदेशान्तरस्यापि सिद्धेर्वक्ष्यमाणत्वान्न दिव्यावसर इति । व्यप्र.८२-८३

**[१]स्वल्पाऽपि मानुषी यत्र दैवीं तत्र न कल्पयेत् ॥**
**[२]लिखिते शिथिलीभूते साक्षिणां च परागतौ ।**
**[३]युक्त्यभावे च दिव्यं स्यात् कारणत्रयमस्ति चेत् ॥**
**[४]वाक्पारुष्ये च भूमौ च दिव्यं न परिकल्पयेत् ॥**

नन्वनेनैव वाक्पारुष्ये दिव्यमुक्तं 'प्रक्रान्त' इत्यादिना । सत्यमुक्तम् । तत्तु महापारुष्यविषयम् । इदं त्वल्पपारुष्यविषयमिति न किञ्चिद्विरुद्धम् । भूमाविति स्थावरोपलक्षणार्थम् । ×स्मृच.५३

**[१]दत्ताऽदत्तेऽथ भृत्यानां स्वामिना निर्णये सति ।**
**विक्रियादानसंबन्धे क्रीत्वा धनमनिच्छति ॥**

**[१]द्यूते समाह्वये चैव विवादे समुपस्थिते ।**
**साक्षिणः साधनं प्रोक्तं न दिव्यं न च लेख्यकम् ॥**

(१) दत्वाऽदत्ते, दत्तमिति प्रतिश्रुत्यानर्पिते । तथा आदत्ते पुनराच्छिद्य गृहीते । स्वामिना निर्णये सतीति एतत्स्वामिकमेतदिति निश्चये सति । दत्त्वादत्ते विवादे साक्षिणः प्रमाणं, न पुनर्दिव्यं न च लेखकमित्यर्थः । धनं मूल्यरूपमनिच्छति दातुमिति शेषः । +व्यक.३९

(२)मिता.टीका—दत्तादत्तेति । दत्तं च अदत्तं च दत्तादत्तं तस्मिन् दत्ताप्रदानिकाख्ये, स्वामिभृत्यनिर्णयाख्ये, विक्रयासंप्रदानाख्ये । द्यूतं च समाह्वयं च द्यूतसमाह्वयम् । तदाख्ये च विवादपदे प्राप्ते साक्षिण एव साधनं नान्यदित्यस्यार्थः । एतानि च विवादपदानि उत्तरत्र स्फुटीभविष्यन्ति । सुबो.२।२२

(३) दत्तादत्तादिषु वृद्धानां लिखितकरणाप्रसिद्धेर्भुक्तेश्चासंभवात् साक्षिणश्चैतादृशि विषये सुलभत्वान्मानुषप्रमाणसंभवे च दिव्यासंभवात् 'न दिव्यं न च लेख्यकम्' इत्युक्तम् । *व्यप्र.८३

**[२]पूगश्रेणिगणादीनां या स्थितिः परिकीर्तिता ।**

---

* व्यत. व्यमागतम् । × सवि., व्यम. स्मृचगतम् ।

(१) सवि. १०७. (२) व्यनि.; समु.२७.

(३) अप.२।२२; व्यक.३९; स्मृच.५३ ध्ये (षे);व्यचि. ३३; व्यनि. न परिकल्प (तु परिवर्जं) बृहस्पतिः; सवि.१०९ स्मरणम्; व्यसौ.३८; व्यम.११; प्रका.३४; समु.२६.

(४) शुनी.४।७५४ऽथ (षु) ना (नां); मिता.२।२२ क्रिया (क्रया); अप.२।२२ थ भृत्यानां (तथाऽऽदत्ते) क्रि (क्री)

+ व्यचि. व्यकगतम् । व्यम. पदार्थः व्यकवत् ।

* पदव्याख्या सुबोवत् ।

मनि (मय); व्यक.३९ दत्ता (दत्त्वा) ना (नां) क्रीत्वा (कृत्वा) शेषं अपवत्; स्मृच.५३; पमा.८८ऽथ (षु) ना (नां) मनि (मय); व्यचि.३३ऽथ भृत्यानां (तथादत्ते); व्यनि. उत्त., बृहस्पतिः; नृप्र.७ऽथ (च) धनमनि (साधनमृ); व्यत.२१९ ना निर्णये (नां निर्गमे) क्रिया (क्रया) स्मृतिः; सवि.११० (=)ऽथ (च) ना (नां) क्रिया (क्रया) मनि (मय); व्यसौ.३८ दत्ता... नां (दत्त्वादत्ते तथादत्ते) ना (नां); व्यप्र.८३ क्रि (क्री); व्यम.१० क्रिया (क्रया) शेषं व्यसौवत्; विता.१११ निच्छ (दित्स) शेषं पमावत्; राकौ.३९४ ना (नां) मनि (मय); प्रका.३४; समु.२७ पूर्वार्धं व्यसौवत्, क्रि (क्री).

(१) शुनी. ४।७५५-७५६ द्यू...व (विवाहोत्सवद्यूतेषु) प्रोक्तं (तत्र); मिता.२।२२; अप.२।२२; व्यक.३९; स्मृच ५४; पमा.८८; व्यचि.३३-३४; व्यनि. बृहस्पतिः; नृप्र. ७ ख्यक (खन); व्यत.२१९ स्मृतिः; सवि.११० धनं (धकं); व्यसौ.३८ नृप्रवत्; व्यप्र.८३; व्यम.११; विता. १११-११२; राकौ.३९४ नृप्रवत्; प्रका.३४; समु.२७.

(२) मिता.२।२२ णि (णी); अप.२।२२ णि (णी) स्यास्तु (स्यां तु); स्मृच.५३; पमा.८८; व्यचि.३४ कीर्ति (कल्पि);

**तस्यास्तु साधनं लेख्यं न दिव्यं न च साक्षिणः॥**

(१) लेख्यादीनामपि क्वचिन्नियमो दृश्यते, यथा पूगेति। +मिता.२।२२

(२) दिव्यनिषेधो लेख्यस्य गुरुत्वकथनार्थः। सवि.११०

(३) पूगादीनां संविदि तु बहुकर्तृकायां लिखितं विना न निर्वाहः। सर्वेषां व्यवहर्तृत्वान्नोदासीनसाक्षिसंभवः। मानुषसत्त्वे च दिव्यानवकाशः। इत्यभिसंधायाभिहितं, 'न दिव्यं न च साक्षिण' इत्युक्तम्। व्यप्र.८३

**द्वारमार्गक्रियाभोगे जलवाहादिके तथा।**
**भुक्तिरेव हि गुर्वी स्यान्न लेख्यं न च साक्षिणः॥**

(१) क्वचिदनुमानं प्रबलम्। अनुमानं नाम भुक्तिः, याज्ञवल्क्येनानुमानस्थाने भुक्तिशब्दप्रयोगात्।
'प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम्' इति। भुक्तिप्राबल्यविषयमाह कात्यायनः— द्वारेति। पमा.८८-८९

(२) मिता.टीका—अस्यार्थः द्वारक्रिया मार्गक्रिया चेति। क्रियाशब्दस्य प्रत्येकमभिसंबन्धः। द्वारकरणं मार्गकरणं चेति। तत्र च आभोगे च। आभोगः परिणाहः। तेन परिणाहवदङ्गणादिकं लक्ष्यते। जलवाहादिषु च। जलवाहो जलमार्गः आदिशब्दाद्गृहादिषु प्रमार्जितरजःपुञ्जप्रक्षेपणस्थानमवस्करादिकं गृह्यते। एतेषु पूर्वोक्तेषु भुक्तिरेव क्रिया प्रमाणं, न दिव्यं, नापि साक्षिणः प्रमाणमिति। ×सुबो.२।२२

(३) द्वारमार्गक्रिया द्वारेण जलनिःसरणादिक्रिया द्वारक्रिया। मार्गेण गवादिनिःसरणादिक्रिया मार्गक्रिया। भोगो भोग्यं छत्रादि। जलवाहो जलनिर्गममार्गः। .........एषु भुक्तिर्गुर्वी। व्यचि.३४

(४) द्वारमार्गादिष्वपि गमनागमनादिरूपभोगस्यैव परं भावाल्लेख्यस्य चाप्रसिद्धेर्मानुषाभाव एव च दिव्यावकाशान्न दिव्यमित्यादि, भुक्तिरेव तु गुर्वीति चोक्तम्। एवं सर्ववचनानि विवेचनीयानि। व्यप्र.८३-८४

**[१]प्रक्रान्ते साहसे वादे पारुष्ये दण्डवाचिके।**
**बलोद्भवेषु कार्येषु साक्षिणो दिव्यमेव वा॥**

(१) मानुषाभावे एव दिव्येन निर्णय इति औत्सर्गिकम्। अस्य चापवादो दृश्यते—प्रक्रान्ते इति। *मिता.२।२२

(२) अयं च विकल्पः गूढसाहसिकेतरविषयः। तत्र मानुषासंभवेन विकल्पासंभवात्। +स्मृच.५१

**[२]पतनं क्रियते यत्र अङ्गच्छेदो वधोऽपि वा।**
**दिव्यं चेद्देशयेद्वादी सम्यग् दृष्टैः प्रदापयेत्॥**
**[३]गूढसाहसिकानां तु प्राप्तं दिव्यैः परीक्षणम्।**
**युक्तिलेशेङ्गिताकारवाक्चक्षुश्चेष्टितैर्नृणाम्॥**

---

+ व्यनि. मितावत्।

**व्यनि.** बृहस्पतिः; **नृप्र.**७; **व्यत.**२२१ मितावत्, स्मृतिः; **सवि.**१०९ व्यासः; **व्यसौ.**३८ तस्यास्तु साधनं (साधनमाभवेत्); **व्यप्र.**८३ मितावत्; **व्यम.**१०; **विता.**१११; **राकौ.**३९४; **प्रका.**३४; **समु.**२७.

(१) **शुनी.**४।७५६-७५७ गे (ग्य) दिके (दिषु) लेख्यं (दिव्यं); **मिता.**२।२२ गे (ग) के (षु) तथा (क्रिया) हि (तु) लेख्यं (दिव्यं); **अप.**२।२२ गे (ग); **व्यक.**३९ गे (ग) लेख्यं (दिव्यं); **स्मृच.**५३ अपवत्; **पमा.**८९; **व्यचि.**३४ गे (ग) हि (तु); **व्यनि.** गे (ग) बृहस्पतिः; **नृप्र.**७ गे (ग); **व्यत.**२२४ मितावत्; **सवि.**११० व्यचिवत्; **व्यसौ.**३८ व्यचिवत्; **व्यप्र.**८३ मितावत्; **व्यम.**११; **विता.**१११ मितावत्; **राकौ.**३९४ मितावत्; **सेतु.**९० भोगे (योगो) के तथा (षु क्रियाः) हि (तु) स्मृतिः; **प्रका.**३४ अपवत्; **समु.**२७ व्यचिवत्; **विच.**१३८ सेतुवत्, स्मृतिः.

×बाल. सुबोवत्। *सवि. मितावत्। +अवतरणं मितावत्।

(१) **मिता.**२।२२ द्भवे (द्भूते) वा (च); **अप.**२।२२ न्ते (न्त) बलोद्भवे (बालोद्भूते) वा (च); **व्यक.**३९ लोद्भवे (लाद्भुक्ते); **स्मृच.**५१; **पमा.**९१ वादे (वाद) द्भवे (द्भूते); **व्यचि.**३४ प्रक्रा (एक्रा) द्भवे (द्भते); **नृप्र.**८ बलोद्भवेषु (अत्र भूतेषु) दिव्यमेव वा (भुक्तिरेव च); **व्यत.**२१९ वादे (वापि) वा (च) स्मृतिः; **सवि.**१०७; **व्यसौ.**३८ द्भवे (द्भूते); **व्यम.**११ व्यसौवत्, बृहस्पतिः; **विता.**१११ वा (च) बृहस्पतिः; **राकौ.**३९४वा (च); **प्रका.**३३ नारदः; **समु.**२५.

(२) **व्यक.**४० अङ्ग (तद्); **व्यसौ.**३८.

(३) **मिता.**२।२२ पू.; **व्यक.**४०; **स्मृच.**५१ लेशे (चिन्हे); **व्यनि.** स्मृचवत्, नारदः; **व्यसौ.**३८; **व्यप्र.**८४; **विता.**११० (=) पू.; **प्रका.**३३ स्मृचवत्, नारदः; **समु.**२५ स्मृचवत्.

(१) इति तदपि मानुषासंभवकृतनियमार्थम्। +मिता.२।२२

(२) गूढसाहसिकानां तु मुखवेष्टनादिवशादलक्ष्यमूर्तीनामित्यर्थः। युक्तिचिह्नादेरप्यभावे तेषां दिव्यं, न पुनः साक्ष्याद्यभावमात्र इति दर्शयितुं पुनर्वचनारम्भः। स्मृच.५१

**[१]अलेख्यसाक्षिके दैवीं व्यवहारे विनिर्दिशेत्।**
**दैवसाध्ये पौरुषेयीं लेख्यं वा न प्रयोजयेत्॥**
**[२]उत्तमेषु च सर्वेषु साहसेषु विचारयेत्।**
**सद्भावं दिव्यदृष्टेन सत्सु साक्षिषु वै भृगुः॥**

तथा उत्तमसाहसिकानां प्रकटानामपि दिव्येनैव परीक्षणमित्याह—उत्तमेष्विति। स्मृच.५१

**[३]समत्वं साक्षिणां यत्र दिव्यैस्तत्रापि शोधयेत्॥**

समत्वं साक्षिणां यत्रेति वादिप्रतिवादिनोरन्यतरस्य, गृहीतैः पृष्टैः साक्षिभिरनुक्तेऽर्थे परस्परविप्रतिपत्तौ, समत्वे साक्षिणां गुणतः संख्यातश्च, विशेषाभावे संदेहस्य तदवस्थत्वाद्दिव्येन तत्र तत्र निर्णयः कार्य इति मन्तव्यं, साक्षिग्रहणकाले वादिप्रतिवादिनोः साम्ये पूर्ववादिनः साक्षिग्रहणस्योक्तत्वात्। *व्यमा.३१६

---

+ व्यनि., विता. मितावत्।

* व्यचि., व्यप्र. व्यमागतम्।

(१) मिता.२।९१ पू.; व्यक.४० लेख्यं वा न (न लेख्यं वा); स्मृच.६५ पू.,२१६ पू.; पमा.३०० ख्यसा (ख्याऽसा) पू.; व्यनि. (दैवीं वा पौरुषेयीं वा न लेख्यं वा प्रयोजयेत्) उत्त.; दित.५७९ पू. स्मृतिः; सवि.११८पू., स्मरणम्; व्यसौ.३८; व्यप्र.८४ व्यकवत्: २९३ पू., व्यउ.४४ (=); व्यम.१३ पू.; विता.१३१ (=) क्षिके (क्षिकं) वीं (वी); प्रका.४३ पू.; समु.२५ षेयीं (षेयं) शेषं व्यकवत्.

(२) व्यक.४० च (तु); स्मृच.५१; पमा.९० सद्भावं (सर्वं तु); नृप्र.८ सद्भा...न (सर्वां तु दिव्यसृष्टिं च); चन्द्र. १३०; व्यसौ.३८-३९ पमावत्; प्रका.३३ नारदः; समु. २६. (३) व्यमा.३१६ त्रापि (त्र वि); अप.२।२२; व्यक.४०; स्मृच.५३; पमा.९०; व्यचि.२९, ३४ व्यमावत्; व्यनि. व्यमावत्, बृहस्पतिः; नृप्र.८; व्यत.२१६ व्यमावत्; दित.५८१ तत्रापि (तमपि); व्यसौ.३८; व्यप्र.८४; विता.११२; सेतु.१२५ व्यमावत्; प्रका.३४; समु.२६ व्यमावत्; विव्य.११ दिव्यैस्तत्रापि (तत्र दिव्यैस्तु).

**[१]प्राणान्तिकविवादेषु विद्यमानेषु साक्षिषु।**
**दिव्यमालम्बते वादी न पृच्छेत्तत्र साक्षिणः॥**

(१) प्राणान्तिकविवादो महापातकाभिशापस्तत्र सत्स्वपि साक्षिषु दिव्येन निर्णयः कार्यः। +व्यमा.३१६

(२) यथा वादिनः प्रतिवादिनो वा यत्र प्राणान्तिको दण्डस्तत्र सत्स्वपि साक्षिषु दिव्यमेव। अप.२।२२

**[२]यत्र स्यात्सोपधं लेख्यं तद्राज्ञे श्रावितं यदि।**
**दिव्येन शोधयेत्तत्तु राजा धर्मासनस्थितः॥**

सोपधं छलकृतम्। व्यप्र.८५

## पितामहः

प्रमाणानां विषयव्यवस्था। दैवमानुषतारतम्यम्।

**[३]स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत्।**
**साक्षिभिर्लिखितेनाथ भुक्त्या चैतान् प्रसाधयेत्॥**

---

+ व्यचि. व्यमावत्।

(१) शुनी.४।७४६-७४७ देषु (दे तु) षु साक्षिषु (ऽपि साधने) साक्षिणः (साधनम्); व्यमा.३१६ लम्ब (पद्य); अप.२।२२; व्यक.४०; स्मृच.५३ देषु (दे च) णः (णम्); पमा.९०; व्यचि.३४ स्मृचवत्, पू.; व्यनि. बृहस्पतिः; नृप्र.८; दित.५८१; सवि.१०८ देषु (दे च); चन्द्र.१२९; व्यसौ.३८,५६; व्यप्र.८४-८५; व्यम.११ प्राणा...देषु (महापापाभिशापेषु) बृहस्पतिः; विता.११२ कवि (के वि) विद्य...क्षिषु (दिव्यं स्यान्नैव साक्षिणः) पू.; प्रका.३४ प्राणा... देषु (प्रमाणान्तिकवादे च) णः (णम्); समु.२६ देषु (दे च); विव्य.११ पू.

(२) शुनी.४।७४७-७४८ यत्र...ख्यं (सोपधं साधनं यत्र) दि...त्तु (शोधयेत्तत्तु दिव्येन); अप.२।२२ ज्ञे (ज्ञः); व्यक.४१; स्मृच.५३ तत्तु (तत्र); पमा.९० तद्राज्ञे (यद्राज) तत्तु (तत्र); नृप्र.८ ज्ञे (ज्ञः) तत्तु (तत्र) धर्मा (दिव्या); व्यसौ.३९; व्यप्र.८५ दिव्ये...त्तु (शोधयेतत्तु दिव्येन); प्रका.३४ स्मृचवत्; समु.४५ स्मृचवत्.

(३) शुनी.४।७५५ उत्त.; मिता.२।९६ पू.; व्यमा.३०८ वर्जे (धार) थ (थैं) तान् (व) कात्यायनः; अप.२।२२ चैतान् (वैनं); व्यक.३९; स्मृच.५३; स्मृसा.११५ (स्थावरेषु तु दिव्यानि वर्जयन्ति मनीषिणः। साक्षिभिर्लिखितेनापि भुक्त्या वा साधयेदिदम्॥); व्यचि.३३ नाथ (वाथ) चै (वा); व्यनि. पू.; स्मृचि.३८-३९ उत्तरार्धे (साक्ष्यभुक्तिप्रमाणानि साध्यसिद्धिर्विधीयते।) याज्ञवल्क्यः; नृप्र.१२ पू.; दित. ५७९ पू.; सवि.१०९ तान् (नं); १६९ पू., १७० पू.,

(१) यत्तु पितामहवचनं 'स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत्' इति तदपि लिखितसामन्तादिसद्भावे दिव्यानि परिवर्जयेदिति व्याख्येयम्। ननु विवादान्तरेष्वपि प्रमाणान्तरसंभवे दिव्यानामनवकाश एव। सत्यम्। ऋणादिषु विवादेषु उक्तलक्षणसाक्ष्युपन्यासे अर्थिना कृतेऽपि प्रत्यर्थी यदि च दण्डाभ्युपगमावष्टम्भेन दिव्यमवलम्बते, तदा दिव्यमपि भवति। साक्षिणामाशयदोषसंभवाद् दिव्यस्य निर्दोषत्वेन वस्तुतत्वविषयत्वात्तल्लक्षणत्वाच्च धर्मस्य। यथाह नारदः— 'तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिणि। दैवसाध्ये पौरुषेयीं न लेख्यं वा प्रयोजयेत्' इति॥ स्थावरेषु तु विवादेषु प्रत्यर्थिना दण्डावष्टम्भेन दिव्यावलम्बने कृतेऽपि सामन्तादिदृष्टप्रमाणसद्भावे न दिव्यं ग्राह्यमिति विकल्पनिराकरणार्थं 'स्थावरेषु विवादेष्वि'त्यादिपितामहवचनं नात्यन्तिकदिव्यनिराकरणार्थम्। लिखितसामन्ताद्यभावे स्थावरविवादेष्वनिर्णयप्रसङ्गात्। *मिता.२।९६

(२) अत्र मानुषासद्भावे हेतुना निर्णयः। तदसंभवे राजाज्ञयेति मन्तव्यम्। स्मृच.५३

(३) मिता.टीका—स्थावरपदस्य सार्थकत्वमाह—स्थावरेषु तु विवादेषु प्रत्यर्थिनेति। अयमभिप्रायः। स्थावरेषु मानुषदिव्यप्रमाणयोर्न विकल्प इति विकल्पनिवारणार्थः स्थावरशब्द इति। सुबो.२।९६

(४) संदिग्धं हि सर्वत्र दिव्येन निर्णीयते, न च स्थावरेषु आत्मीयेषु लिखितसाक्षिभुक्तयः सर्वथा न सन्तीति संभवति। तेन तत्र संदेहाभावाद्दिव्याभावः। यत्र तु कालवशात् लिखनं विनष्टं, साक्षिणश्च नष्टाः, भोगश्च यथोद्दिष्टकालादूनः, तत्र संदेहस्य विद्यमानत्वात्, संभवति दिव्यावसर इति न किञ्चिदनुपपन्नम्। +स्मृसा.११५

(५) एतत् (चन्द्रिकामतं) च धर्मस्थानविहीनेषु विवादेषु राजाज्ञारूपप्रमाणनिरूपणासंभवाद्धेयम्। न च राजाज्ञाप्रमाणस्य निरवकाशत्वमिति वाच्यम्। 'उत्तरः पूर्वबाधकः' इति तद्व्याख्यानावसरे पूर्वमेव प्रपञ्चितत्वात्। अत एव विज्ञानेश्वरमतमेव सम्यक्। सवि.१०९

**[१]प्रदुष्टेष्वनुमानेषु दिव्यैः कार्यं विशोधयेत्॥**
**[२]महापापाभिशापेषु निक्षेपहरणे तथा।**
**दिव्यैः कार्यं परीक्षेत राजा सत्स्वपि साक्षिषु॥**

तत्र हि साक्षिणामनृताभिधानत्वं विधास्यति— 'वर्णिनां हि वधो यत्र' इत्यादिना। अप.२।२२

**[३]यस्मिन् यस्मिन् विवादे तु साक्षिणां नास्ति संभवः।**
**साहसेषु च सर्वेषु तत्र दिव्यानि दापयेत्॥**

(१) साहसपदं प्राणान्तिकदण्डार्हपरम्। *व्यमा.३१६

(२) साक्षिग्रहणं मानुषप्रमाणोपलक्षणार्थम्। स्मृच.९५

**लेख्यं यत्र न विद्येत न भुक्तिर्न च साक्षिणः।**
**न च दिव्यावतारोऽस्ति प्रमाणं तत्र पार्थिवः+॥**
**निश्चेतुं ये न शक्याः स्युर्वादाः संदिग्धरूपिणः।**
**तेषां नृपः प्रमाणं स्यात् स सर्वस्य प्रभुर्यतः+॥**

## प्रजापतिः

**[४]लिखितादिक्रिया न स्याच्छपथं दिव्यमेव वा।**
**सर्वेषु च विवादेषु योजयेद्दिव्यमेव वा॥**

## हारीतः

वादिप्रतिवादिनोर्मध्ये केन प्रमाणोपन्यासः कर्तव्यः

**[५]प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम्।**
**मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत्॥**

* दित., विता., व्यम. मितागतम्।

\+ व्यचि. स्मृसावत्। व्यप्र. मितावत् स्मृसावच्च।

४४४ पू.; **चन्द्र.**१२८; **व्यसौ.**३७; **व्यप्र.**८३ चै (वै): २९३ पू.; **व्यउ.**५३; **व्यम.**११; **विता.**२०३ पू.; **राकौ.** ४०९ पू.; **प्रका.**३४ पू.; **समु.**२६ अपवत्.

* व्यचि. व्यमावत्। + व्याख्यासंग्रहः स्थलादिनिर्देशश्च दर्शनविधौ (पृ. १०५) द्रष्टव्यः।

(१) **समु.**२६. (२) **अप.**२।२२ पापा (शापा); **स्मृच.** ५३; **सवि.**१०८ पापाभिशापे (शापाभिशेषे); **प्रका.**३४; **समु.**२६. (३) **व्यमा.**३१६ यस्मिन् वि (एव वि); **स्मृच.** ९५ च सर्वेषु (विशेषेण); **व्यचि.**३४; **प्रका.**६२ स्मृचवत्; **समु.**५० स्मृचवत्; **विव्य.**११ उत्त.

(४) **व्यनि.**(=) पू.; **समु.**२५. (५) **मिता.**२।७, २।८०; **व्यमा.**३०८ न्याय (न्याये) क्तौ तु (क्तौ च) निर्दिशेत् (साधयेत्) मिथ्यो ...तु (मिथ्योत्तरे पूर्ववादी); **अप.**२।८ न्याय (न्याये); **स्मृच.**५३; **स्मृसा.**९५; **व्यचि.**२२; **व्यनि.** अपवत्, बृहस्पतिः; **नृप्र.**७; **सवि.**९९; **चन्द्र.**११८ अपवत्; **व्यम.**९; **विता.**७३; **राकौ.**३९१; **प्रका.**३४ कात्यायनः; **समु.**२६ न्याय (न्याये) क्तौ तु (क्तौ च).

(१) उत्तरानुसारेण सर्वत्रैव नियता क्रिया स्मर्यते —प्राङ्न्यायेति । मिता.२।८०

(२) एवं च मिथ्याकारणयोः मानुषी दैविकी वा क्रिया । प्राङ्न्याये मानुष्येव । सत्ये न काचिदित्यनुसंधेयम् । स्मृच.५३

(३) कारणोक्तौ बलवत्कारणोक्तौ । व्यचि.२२

**व्यासः**

वादिप्रतिवादिनोर्मध्ये केन कदा प्रमाणोपन्यासः कर्तव्यः

**[१]प्राङ्न्याये कारणोक्तौ च प्रत्यर्थी साधयेत् क्रियाम् ।**
**मिथ्योत्तरे पूर्ववादी प्रतिपत्तौ न सा भवेत् ॥**

(१) मिथ्योत्तरस्याभावरूपत्वात् अभावस्य च भावनिरूपणाधीननिरूपणत्वेन गौरवात्, भावे साक्ष्यादिकारणसंभवाच्च, पूर्ववादिन एव दृष्टादृष्टक्रियोचितेति भावः । यत्र मिथ्योत्तरं एकत्रांशे सर्वथा समान एवांशान्तरे कारणं तत्र कारणोत्तरं ग्राह्यम् । चन्द्र.११८

(२) प्राङ्न्यायकारणोत्तरयोः प्राङ्न्याये कारणे च साधितेऽर्थिसाध्यस्य ग्रहणस्य धारणासाधकत्वाद्यर्थे साधनं प्रत्यर्थिनाऽभ्युपगमाच्चेति तत्रैव साध्यत्वाविर्भावात्तदुपन्यासकारिण एव प्रत्यर्थिनः प्रमाणोपन्यासस्तत्साधनायोचितः । अर्थिसंबन्धविरहप्रत्यर्थिसंबन्धयोर्द्वयोरपि तेनैव निर्णयात् । मिथ्योत्तरे तु वादिनः प्रमाणदुर्भिक्षं यदि प्रतिज्ञातेऽर्थे, प्रमाणाभावादेव प्रत्यर्थ्यभिमतोऽर्थिप्रतिज्ञातसाध्यहेत्वभावः सिध्यतीति तत्परिहाराय भावाभावयोर्भावस्यैव साध्यत्वौचित्याच्चार्थिन एव क्रिया । संप्रतिपत्तौ तु न कस्यापि साध्यमस्तीति निरर्थकत्वात् क्रियैव नास्तीत्यर्थः । व्यप्र.६८-६९

यच्च मिथ्योत्तरे पूर्ववादिनः क्रियादानं नोत्तरवादिन इति प्रागुक्तं तत्र भाषावादिनो मानुषप्रमाणसंभवादुत्तरवादिनश्च तदसंभवान्मानुषसंभवे च दिव्यानवसरादिति न्यायो मूलमिति । यदि तत्रापि भाषावादिनो दिव्यभिन्नप्रमाणाभावस्तदा 'न कश्चिदभियोक्तारं दिव्येषु विनियोजयेत् । अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदैः'॥ इति कात्यायनीयादुत्तरवादिन एव दिव्यं देयम् ।पूर्वार्द्धेनार्थिनो दिव्यनिषेधात् प्रत्यर्थिनोऽर्थात्तत्सिद्धौ पुनः परार्द्धेन तद्विधानस्य 'सिद्धे सत्यारम्भो नियमाय' इति न्यायेन निषेधदार्ढ्यार्थत्वात् । प्राङ्न्यायकारणोत्तरयोः क्रियापदमुभयक्रियापरमपि मिथ्योत्तरे मानुषमात्रपरं कात्यायनीयानुरोधात् । न चैवमनुषङ्गानुपपत्तिः । तदर्थकतयोभयान्वयस्यानुषङ्गहेतुत्वं न यावदर्थकत्वस्य । विरुद्धार्थकत्वे व्यवायवत्संनिधिबाधेनानुषङ्गस्य तुल्ययोगितानिबन्धस्याभङ्गः । किञ्चिदर्थानन्वयेऽपि तुल्ययोगितायाः सत्त्वात्तदभङ्गात् । यदा तु प्रत्यर्थी संदिहानस्तदा तस्याधिकारनिश्चयाभावान्मानुषप्रमाणाभावेऽपि न दिव्यं किन्त्वर्थिनोऽधिकारनिश्चयादिति ध्येयम् । न च 'न कश्चित्' इति कात्यायनवचनविरोधः । अधिकारानिश्चये तत्प्रवृत्त्यसंभवात् । *व्यप्र.८५-८६

**[१]मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनि ।**
**प्राङ्न्यायेऽपि तथैव स्यात् प्रतिपत्तौ न सा भवेत् ॥**
**[२]प्राङ्न्याये जयपत्रेण प्राड्विवाकादिभिस्तथा ।**
**सत्यं वादी समाप्नोति यद्यत्तेन निवेदितम् ॥**

(१) प्राङ्न्यायोत्तरे पूर्ववादिन एव जयपत्रं, यायद्रष्टारः अन्येऽपि वा तद्वेदिनः प्रमाणम् । तदाह व्यासः— प्राङ्न्याय इति । व्यमा.३०९

(२) प्राङ्न्यायोत्तरे मानुष्येव जयपत्रादिका क्रिया इत्याह व्यासः— प्राङ्न्याय इति । अप.२।८

(१) **शुनी**.४।६५६ न्याये (न्याय) च (तु) साधये (निर्दिशे) पू.; **व्यक**.३६ च (तु) साधये (निर्दिशे) मिथ्यो...वादी (मिथ्योक्तौ पूर्ववादी तु); **पमा**.७७, ८० शुनीवत् पू.; **व्यचि**.२७ न्याये (न्याय) च (तु); **नृप्र**.६ शुनीवत्, पू.; **व्यत**.२१०; **सवि**.९५ (प्राङ्न्यायप्रत्यवस्कन्दे प्रत्यर्थी निर्दिशेत्क्रियाम्) पू.; **चन्द्र**.११८ पूर्वार्धं शुनीवत्, मिथ्यो...वादी (मिथ्योक्तौ पूर्ववादी तु); **व्यसौ**.३५ ये का (यक) च (तु) साधये (निर्दिशे) उत्तरार्धं चन्द्रवत्; **वीमि**.२।७ त्र (तु) सा भवेत् (भावयेत्); **व्यप्र**.६४ शुनीवत्, पू., स्मरणम्: ६८, ८१, १३२ पूर्वार्धं शुनीवत्, उत्तरार्धं चन्द्रवत्; **व्यउ**.४१ शुनीवत्, पू., स्मृतिः; **व्यम**.८ शुनीवत्, पू.; **विता**.६८, ७० शुनीवत्, पू., स्मृतिः; **सेतु**.१०९; **विव्य**.९ पू., स्मृतिः.

* व्यवहारतत्वकारोक्तमेवात्र सविस्तरव्याख्यानरूपेणोपन्यस्तमिति व्यवहारतत्वं नोध्दृतम् ।

(१) **व्यप्र**.८१. (२) **व्यमा**.३०९; **अप**.२।८; **व्यक**.३७ त्रेण (त्रे च) त्यं (त्य) त्ते (न्ते); **स्मृच**.५२ त्ते (न्ते); **व्यचि**.३० त्यं (त्ये); **चन्द्र**.१२५-१२६ यत्ते (येते); **व्यसौ**.३६; **व्यम**.८ पू.; **प्रका**.३३; **समु**.२६ तथा (सह); **विव्य**.९ था (दा).

(३) वादी प्रत्यर्थी, तस्यैव तत्र साध्यवादित्वात् । स्मृच.५२

निर्णयसाधनानि

[१] **प्रमाणैर्हेतुचरितैः शपथेन नृपाज्ञया ।**
**वादिसंप्रतिपत्त्या वा निर्णयोऽष्टविधः स्मृतः ॥**

(१) प्रमाणैरित्यत्र लिखितसाक्षिभुक्तीनां प्रत्येकं विवक्षा । तर्कानुमाने हेतुरित्येकैव विधा । व्यचि.९३

(२) प्रमाणत्रयं, सत्तर्कोपष्टब्धमनुमानं चरितादिचतुष्टयमित्यष्टविधहेतुकत्वान्निर्णयस्याप्यष्टविधत्वम् । यद्यपि भुक्तिरप्यनुमानमेव तथापि प्रत्याकलितकालीनं सभ्यानामनुमानमिहानुमानपदेन विवक्षितम् । व्यप्र.८७

[२] **लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम् ।**
**अनुमानं विदुर्हेतुस्तर्कश्चेति मनीषिणः ॥**
[३] **देशस्थितिः पूर्वकृता चरित्रं समुदाहृतम् ।**
**अर्थानुरूपाः शपथाः स्मृताः सत्यघटादयः ।**
**तेषामभावे राजाज्ञा निर्णयं तु विदुर्बुधाः ॥**

(१) तर्कानुमाने हेतुरिति मन्यन्ते इत्यर्थः । व्यक.९९

(२) एवं च दृष्टप्रमाणेनासिद्धौ अदृष्टप्रमाणमाश्रयणीयम् । नान्यथेति तात्पर्यार्थः ।

प्रमाणानां स्वरूपतो निषेधवशाद्वा असंभवे निर्णयो राजाज्ञया भवतीत्यर्थः । *स्मृच.५२,५४

(३) सत्यघटादय इति दैवक्रियामात्रोपलक्षणमतोऽष्टविधत्वम् । इदं शपथपदं गौणं प्राचीनविभागानुरोधादित्यवधेयम् । व्यचि.९३

प्रमाणानां दैवमानुषभेदौ । तयोर्विषयव्यवस्था ।

[१] **कार्यं तु साध्यमित्युक्तं साधनं तु क्रियोच्यते ।**
**द्विविधा सा पुनर्ज्ञेया मानुषी दैविकी तथा ॥**

साधनं प्रमाणम् । स्मृच.५४

[२] **रहःकृतं प्रकाशं च कार्यं द्विविधमुच्यते ।**
**प्रकाशं साक्षिभिर्भाव्यं दैविकेन रहःकृतम् ॥**

भाव्यं शोधनीयम् । व्यक.३९

[३] **यन्नामलेख्यं तल्लेख्यं तुल्यं लेख्यं क्वचिद्भवेत् ।**
**अगृहीते धने तत्र कार्यो दैवेन निर्णयः ॥**
[४] **न मयैतत्कृतं लेख्यं कूटमेतेन कारितम् ।**
**अधरीकृत्य तत्पत्रमर्थे दिव्येन निर्णयः ॥**

(१) कुर्यादिति शेषः । अप.२।२२

(२) मूललेख्येन नामगोत्रैस्तुल्यं लेख्यान्तरं विपरीतार्थं यदा भवति तदा तदप्रमाणीकृत्य दिव्येन निर्णयः कर्तव्य इत्यर्थः । व्यक.४०-४१

(३) यदा वादी मयैतल्लेख्यं न कृतमिति वदति प्रतिवादी च न तं क्षिपति तदा दिव्येन निर्णयः ?। चन्द्र.१३०

(४) लेख्यदोषोद्भावनेन लेख्ये निर्णयाक्षमे तदारूढसाक्षिषु सुतरां दण्डापूपिकन्यायेन दोषोद्भावनात् मानुषासंभवे दिव्येन निर्णयः कार्य इत्यर्थः । व्यप्र.८५

[५] **प्रथमे यत्र भिद्यन्ते साक्षिणश्च तथा परे ।**
**परेभ्यश्च तथा चान्ये तं वादं शपथैर्नयेत् ॥**

---

* सवि. स्मृचगतम् ।

(१) **व्यक**.९९; **स्मृसा**.११८; **व्यचि**.९२; **नृप्र**.१८; **व्यसौ**.९० वा (च) ऽष्ट (द्वि); **व्यप्र**.८६; **समु**.२६ णैः (ण) कात्यायनः. (२) **शुनी**.४।७५९-७६०; **व्यक**.९९; **स्मृच**.११,५२:९५ उत्त.; **स्मृसा**.११८; **व्यचि**.९२ हेतुः (हेतुं); **नृप्र**.१८; **सवि**.१०७ कात्यायनः; **व्यसौ**.९० त्रि (द्वि); **व्यप्र**.८६-८७; **प्रका**.४,३३; **समु**.२६.

(३) **व्यक**.९९; **स्मृच**.११:५० सत्य (सत्या) द्वितीयार्धम्: ५४ तेषा (एषा) तृतीयार्धम्: ९६ द्वितीयार्धम्; **स्मृसा**.११८ कृता ( चरितात् ) तेषा (एषा); **नृप्र**.१८; **व्यचि**.९२-९३; **सवि**.१०६ द्वितीयार्धम्; **व्यसौ**.९०; **व्यप्र**.८७ कृता (कृतां) जाज्ञा (जाज्ञां); **प्रका**.४,३२:३४ द्वितीयार्धम्; **समु**.२६.

(१) **शुनी**.४।६५१ र्यं तु (र्यं हि) पू.; **स्मृच**.५४ तु (हि) विधा (भेदा); **सवि**.१११; **व्यप्र**.८२ र्यं तु (र्यं हि); **प्रका**.३५ स्मृचवत्; **समु**.२७ व्यप्रवत्.

(२) **अप**.२।२२; **व्यक**.३९ कार्यं द्विविध (द्विविधं दिव्य) विके (वके); **पमा**.८९ कार्यं द्विविध (द्विविधं कार्यं); **व्यनि**. पमावत्; **नृप्र**.७ पमावत्; **चन्द्र**.१२८ पमावत्; **व्यसौ**.३८; **प्रका**.३४ पमावत्; **समु**.२७ पमावत्. (३) **पमा**.९०.

(४) **अभा**.६३ ( ≟ ) मेते (मन्ये); **अप**.२।२२ यः (यम्); **व्यक**.४०; **स्मृच**.५३ मेते (मन्ये) यः (यम्); **पमा**.९० लेख्यं (पत्रं) त्रम (त्रं ह्य); **नृप्र**.८ (अथवाऽन्यकृतं पत्रं ह्यत्र दिव्येन निर्णयः); **सवि**.१०९ अभावत्; **चन्द्र**.१३० पत्र (लेख्य); **व्यसौ**.३९; **व्यप्र**.८५; **व्यम**.११; **प्रका**.३४ स्मृचवत्. (५) **शुनी**.४।७५२-७५३; **व्यक**.४०; **चन्द्र**.१२९ मे (मा) परे ...न्ये (अपरेभ्यस्तथाऽन्येऽपि); **व्यसौ**. ३८ मे (मा) भि (वि) परे ...न्ये (अवरेभ्यस्तथाऽन्येऽपि); **व्यप्र**.८४,

(१) भिद्यन्ते विप्रतिपद्यन्ते । व्यक.४०

(२) साक्षिभेदे च दिव्यैरेव निर्णयः । चन्द्र.१२९

## स्मृत्यन्तरम्

प्रमाणोपन्यासः केन कर्तव्यः

[1]गुरावभिहिते हेतौ प्रतिवादिक्रिया भवेत् ।
दुर्बले वादिनः प्रोक्ता तुल्ये पूर्वक्रियैव च ॥

## अनिर्दिष्टकर्तृकवचनम्

दैवमानुषप्रमाणविषयव्यवस्था

[2]अशेषमानुषाभावे दिव्येनैव विनिर्णयः ।
संभवे साक्षिणां प्राज्ञो दैविकीं तु विवर्जयेत् ॥

## शुक्रनीतिः

निर्णयसाधनानि । दैवमानुषभेदौ । तयोर्विषयव्यवस्था ।

[3]चतुष्पाद् व्यवहारः स्यात्प्रतिपत्त्युत्तरं विना ।
क्रमागतान् विवादांस्तु पश्येद्वा कार्यगौरवात् ॥
[4]तत्त्वच्छलानुसारित्वात् भूतं भव्यं द्विधा स्मृतम् ।
तत्त्वं सत्वार्थाभिधायि कूटाद्यभिहितं छलम् ॥
[5]तत्साधनं तु द्विविधं मानुषं दैविकं तथा ।
त्रिधा स्याल्लिखितं भुक्तिः साक्षिणश्चेति मानुषम् ॥
दैवं धटादि तद्भव्यं भूताऽलाभे नियोजयेत् ।
युक्तानुमानतो नित्यं सामादिभिरुपक्रमेत् ॥
[6]अर्थी प्रत्यर्थिप्रत्यक्षं साधनानि प्रदर्शयेत् ।
अप्रत्यक्षं तयोर्नैव गृह्णीयात्साधनं नृपः ॥
[1]अन्यथा दूषयन् दण्ड्यः साध्यार्थादेव हीयते ।
विमृश्य साधनं सम्यक् कुर्यात्कार्यविनिर्णयम् ॥
कूटसाधनकारी तु दण्ड्यः कार्यानुरूपतः ।
द्विगुणं कूटसाक्षी तु साक्ष्यलोपी तथैव च ॥
[2]मानुषं साधनं न स्यात्तत्र दिव्यं प्रदापयेत् ॥
[3]स्थावरेषु विवादेषु युगश्रेणिगणेषु च ॥

## मानसोल्लासः

[4]अर्थिप्रत्यर्थिवाक्यानि लेखयित्वा विचारयेत् ।
देशकालानुसारेण हेतुभिश्च पृथग्विधैः ॥
[5]लिखितात् साक्षितो भुक्तेः प्रमाणत्रितयादतः ।
विचारयेन्महीपालः स्मृतिशास्त्रानुसारतः ॥
[6]एतैः प्रमाणैर्हीनस्य दिव्यं देयं महीभुजा ।
तच्च देयं वयोऽवस्थादेशकालानुसारतः ॥
[7]प्रमाणं मानुषं यत्र दुर्लभत्वेन वर्तते ।
तदा दिव्यं प्रदेयं स्यान्न देयं मानुषे सति ॥
[8]शङ्कितानां नरेन्द्रेण कथितानां च तस्करैः ।
शुद्धिमन्विच्छतां तस्य दिव्यं देयं विना शिरः ॥
[9]प्रमाणैर्निश्चिते वाऽपि दिव्यैर्वाऽपि विचारिते ।
युक्त्या दण्डं नृपः कुर्याद् यथादोषानुसारतः ॥
[10]विषेक्षु (?) दन्तिभुजगशस्त्रानलजलादिभिः ।
पापानां प्राणहरणं वधदण्डः प्रकीर्तितः ॥

---

(१) स्मृसा.९५; व्यचि.२२ च (हि); व्यत.२०८ (=) तुल्ये ...च (क्रिया तुल्येऽपि वादिनः); चन्द्र.११७; व्यप्र.५९ तुल्ये (तुल्यैः); व्यउ.३९; सेतु.१०८ व्यतवत्.

(२) सवि.१०६.(३) शुनी.४।६५२.(४) शुनी.४।६५७. (५) शुनी.४।६५९-६६०. (६) शुनी.४।६६२.

(१) शुनी.४।६६४-६६५.(२) शुनी.४।७४९.(३) शुनी. ४।७५३. (४) मासो.२०।२।१२८१. (५) मासो.२०।२।१२८२. (६) मासो.२०।२।१२८३. (७) मासो.२०।२। १२८४. (८) मासो. २०।२।१२८५. (९) मासो.२०।२। १२८६. (१०) मासो.२०।२।१२८७.

# साक्षी

## वेदाः

सुविज्ञानं चिकितुषे जनाय सच्चासच्च वचसी पस्पृधाते ।
तयोर्यत्सत्यं यतरदृजीयस्तदित्सोमोऽवति हन्त्यासत् ॥

चिकितुषे विदुषे जनायेदं सुविज्ञानं विज्ञातुं सुशकं भवति । किं तत् । सच्चासच्च सत्यं चासत्यं च । वचसी सत्यासत्यरूपे वचने पस्पृधाते मिथः स्पर्धेते । तयोः सदसतोर्मध्ये यत् सत्यं यथार्थं वचनं यतरच्चर्जीय ऋजुतममकुटिलं तदित्तदेवाकुटिलं सत्यभाषणं सोमोऽवति रक्षति । असदुक्तविलक्षणमसत्यं हन्ति हिनस्ति। एवं सत्यावयोर्मध्ये कतरोऽनृतभाषीति विद्वद्भिः सुविज्ञानमित्यर्थः । ऋसा.

सत्यं वै चक्षुः सत्यं हि वै चक्षुस्तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमदर्शमहमश्रौषमिति य एव ब्रूयादहमदर्शमिति तस्मा एव श्रद्दध्याम ।
चक्षुर्वै सत्यं चक्षुर्हि वै सत्यं तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमद्राक्षमहमश्रौषमिति य एव ब्रूयात् अहमद्राक्षमिति तस्मा एव श्रद्दध्यात् ।

## गौतमः

साक्षिणः प्रमाणम्

विप्रतिपत्तौ साक्षिनिमित्ता सत्यव्यवस्था ।

(१) प्रायश इत्यर्थः । व्यमा.३१७

(२) विप्रतिपत्तौ साक्षिणः प्रष्टव्याः। तैर्यथोक्तं तथा सत्यं व्यवस्थाप्यम् । गौमि.

(३) विप्रतिपत्तिर्नानाविधा प्रतिपत्तिः अर्थिप्रत्यर्थिनोः, तस्यां सत्यां साक्षिहेतुका सत्यव्यवस्था सत्यस्थापना कर्तव्या । साक्षिणः पञ्चप्रकाराः, यथाह नारदः—'लिखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च। गूढश्चोत्तर साक्षी च साक्षी पञ्चविधः स्मृतः' इति॥ तान्विचार्य तत्वावबोध इत्यर्थः । साक्षिनिमित्तं सत्यमिति वक्तव्ये व्यवस्थाग्रहणं साक्षिणां विप्रतिपत्तौ बहूनां वचनं प्रमाणम् । तत्रापि संदेहे विद्वद्वचनं प्रमाणम् । तत्रापि संदेहे तैरेव शपथपूर्वकं प्रतिपादितमित्येवमर्थम् । मभा.

(४) साक्षिनिमित्तेति प्रमाणोपलक्षणार्थम् ।

तेनोत्तरानन्तरमर्थिना साक्षिणः सन्ति चेन्निर्देष्टव्या इत्यभिप्रायः । ते च निर्दिष्टाः सदोषाश्चेद्दूषयितव्याः । स्मृच.२५,८३

कियन्तः कीदृशाश्च साक्षिणः कर्तव्याः

बहवः स्युरनिन्दिताः स्वकर्मसु प्रात्ययिका राज्ञाम् । निष्प्रीत्यनभितापाश्चान्यतरस्मिन् ।

(१) ते पुनः कीदृशाः कियन्तो वेत्याह—बहव इति । वर्णप्रयुक्तान्याश्रमप्रयुक्तान्युभयप्रयुक्तानि स्वानि कर्माणि श्रौतानि स्मार्तानि च तेष्वनिन्दिता अकरणादन्यथाकरणाद्वा । 'त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्तक्रियापराः' इति याज्ञवल्क्यः ।

प्रत्ययः विश्वासस्तेन ये चरन्ति ते प्रात्ययिकाः, ये एवम्भूता राज्ञामदृष्टदोषतया विश्वसनीयाः । अर्थिप्रत्यर्थिनोरन्यतरस्मिन् निष्प्रीतयो निःस्नेहा अनभितापा अकृतद्वेषाः । एवम्भूता बहवः साक्षिणः स्युः । 'उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित्' इति याज्ञवल्क्यः । गौमि.

(२) बहवः त्र्यवराः स्युरित्यर्थः । यथाह मनुः—'त्र्यवरैः साक्षिभिर्भाव्यं नृपब्राह्मणसंनिधौ' इति । स्युर्ग्रहणं संदेहव्युदासार्थम् । अनिन्दिताः स्वकर्मसु विहितानुष्ठाना इत्यर्थः । स्वग्रहणं धनपुत्रादावपि । यथाह मनुः—गृहिणः पुत्रिणो मौल्याः इत्यादि । कर्मस्विति

---

(१) ऋसं.७।१०४।१२; असं८।४।१२. (२) शब्रा.१।३।१।२७.(३) शब्रा.१४।८।१५।५. (४) गौध.१३।१; व्यमा. ३१७(सत्य०);मभा.;गौमि.१३।१; स्मृच.२५, ८३;पमा. ४० सत्य (तस्य);व्यचि.३५ (सत्य०); सवि.७१; व्यसौ.३९ (सत्य०); व्यप्र.१०६ (सत्य०); प्रका.१५; समु.१०.

(१) गौध.१३।२।३; व्यक.४४; मभा. त्यनभि (त्यभि); गौमि.१३।२; व्यसौ.४२.

बहुवचनमापद्विहितस्याप्युपसंग्रहार्थम् । बहुवचनाद्राजनियुक्तानां सभासदादीनामपि । चकारान्नार्थसंबन्धिनश्च । *मभा.

सर्ववर्णीयाः साक्षिणः प्रमाणम्

**अपि शूद्राः ।**

शूद्रा अप्येवंविधाश्चेत्साक्षिणो भवेयुः किं पुनः द्विजातय इति । एवं च गुणवद्द्विजात्यभावे शूद्रा अप्येवंविधा भवन्तीति द्रष्टव्यम् । ×गौमि.

अब्राह्मणवचनान्न ब्राह्मणः साक्षी

**[2] ब्राह्मणस्त्वब्राह्मणवचनादनवरोध्योऽनिबद्धश्चेत् ।**

(१) ब्राह्मणो नात्र (?) श्रोत्रियः । अस्य वृत्तान्तस्यासौ ब्राह्मणः साक्षीत्यब्राह्मणेनोक्ते राज्ञा साक्षित्वेन नावरोध्यो न निर्बन्धेन ग्राह्यः । अनिबद्धश्चेत् स चेल्लेखनिबद्धो न भवति । लेख्यारूढस्तु भवत्येव साक्षी । नात्र कश्चिद् हेतुरस्ति वचनमेव प्रमाणम् । ...तदिह श्रोत्रियः क्वचिदपि साक्षी न भवतीति नारदस्य पक्षः । इहाब्राह्मणवचनादित्युक्तत्वाद् ब्राह्मणेनोक्तः श्रोत्रियोऽपि भवत्येव साक्षी । गौमि.

(२) अब्राह्मणः क्षत्रियादिः । अब्राह्मणग्रहणादेव सिद्धे ब्राह्मणग्रहणं श्रोत्रियपरिग्रहार्थम् । इतरो ग्राह्य एवेति । तुशब्दाद् अन्येऽपि लिङ्गिनो न ग्राह्याः विशेषेण ब्राह्मणा इति । +मभा.

साक्षिभिः कदा वक्तव्यम्

**[3] नासमवेतापृष्टाः प्रब्रूयुः ।**

(१) असमवेता असमुदिता राज्ञा प्राड्विवाकेन वाऽपृष्टाः सन्तो न ब्रूयुः । किन्तु समवेताः पृष्टाश्च प्रब्रूयुः । गौमि.

(२) समुदिता यावन्तस्ते समवेता अपि राज्ञा प्राड्विवाकेन वा अपृष्टाः न प्रब्रूयुः । आ प्रश्नात्तद्यापारं प्रति मौनिन एव भवेयुरिति प्रशब्दोपादानम् । मभा.

(३) असमवेतप्रतिषेधः समवेतानां साक्षिभाव एव । न सर्वत्र । यत आह वसिष्ठः–'समवेतैस्तु यद्दृष्टं वक्तव्यं तु तथैव तत् । विभिन्नैरेव यत्कार्यं वक्तव्यं तत् पृथक् पृथक् ॥ भिन्नकाले तु यत्कार्यं ज्ञातं वा यत्र साक्षिभिः । एकैकं वादयेत्तत्र विधिरेष प्रकीर्तितः' इति ॥ +स्मृच.९०

(४) तदपि वसिष्ठोक्तसमवेतसाक्ष्यविषयम् । हरदत्तस्तु नासमवेतापृष्टाः प्रब्रूयुरिति पाठं धृत्वाऽसमवेतां अपृष्टाश्च न ब्रूयुरिति व्याचख्यौ । पूर्वपाठस्तु मिताक्षराकारधृतेः सम्यगिति । व्यप्र.१२६

साक्षिभिरनुक्तौ दोषः

**[4] अवचने च दोषिणः स्युः ।**

(१) ते चैवम्भूता यदि जानन्त एव न ब्रूयुस्तदा दोषिणो दुष्टाः स्युः । इह राज्ञा दण्ड्याः, परत्र च नारकिणः । गौमि.

(२) प्रश्नकालेऽप्यवचने चकारादन्यथा वचने च दोषिणो दण्डभाजः स्युः । तथा च मनुः– 'सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् । अब्रुवन् विब्रुवन्वापि नरो भवति किल्बिषी' इति ॥ तस्मात्तथ्यमेव वक्तव्यमित्यभिप्रायः । *मभा.

सत्यासत्योक्तिफलम्

**[5] स्वर्गः सत्यवचने विपर्यये नरकः ।**

न केवलं तथ्यवचने दण्डाभावमात्रं विपर्यये दण्डभाक्त्वमेव । किं तर्हि ? स्वर्ग इति । सत्यवचननिमित्तात् धर्मात्स्वर्गश्च भवति, विपर्यये अनृतवचननिमि

---

* शेषपदार्थो गौमिवत् ।

× मभा. गौमिवत् । + शेषवाक्यार्थः गौमिवत् ।

(१) **गौध**.१३।४; **व्यक**.४४; **मभा**.; **गौमि**. १३।३; **व्यसौ**.४२.

(२) **गौध**.१३।५; **व्यक**.५८; **मभा**.; **गौमि**.१३।४.

(३) **गौध**.१३।६; **मिता**.२।७३ तापृ (ताः पृ); **व्यमा**.३२९ नासमवेता (नामसमेताः पृथक्); **व्यक**.५६ नास (अस) तापृ (ताः पृ); **मभा**. तापृ (ता अपृ); **गौमि**. १३।५; **स्मृच**.९० मितावत्; **व्यचि**.४६,५३ मितावत्; **व्यप्र**.१२६ मितावत्; **व्यउ**.४९ नासम (सम) शेषं मितावत्; **विता**.१६८ नास (तेऽस) शेषं मितावत्; **प्रका**.५९ मितावत्; **समु**.३६ मितावत्.

+ व्यचि. स्मृचगतम् । * स्मृच. मभागतम् ।

(१) **गौध**.१३।७; **मभा**.; **गौमि**.१३।६ अवचने +(अन्यथावचने); **व्यचि**.५६.

(२) **गौध**.१३।८; **मभा**.; **गौमि**.१३।७.

तादधर्मान्नरकश्च भवति । वचनग्रहणं साक्षिणां एतत्फलं, न तु व्यवस्थाहेतोर्नृपस्येति । ×मभा.

अनिर्दिष्टैरपि वक्तव्यम्

अनिबद्धैरपि वक्तव्यम् ।

(१) निबद्धा निर्दिष्टा ' यूयमत्र साक्षिण ' इति । तद्विपरीता अनिबद्धास्तैरपि साक्ष्यं वक्तव्यम् । ते च नारदेन 'अन्ये पुनरनिर्दिष्टा' इत्यारभ्य कथिता द्रष्टव्याः । गौमि.

(२) इदानीं यत्र पञ्चप्रकारा अपि साक्षिणो न भवन्ति तत्र कथमित्यत आह—अनिबद्धैरिति । निबद्धाः निश्चयेन बद्धाः स्मृताः, पञ्चविधत्वेन स्मृता इत्यर्थः । ये पञ्चविधत्वेन न स्मर्यन्ते ते अनिबद्धाः, येन केनचित्प्रकारेण तद्व्यापारज्ञाः तद्ग्रामस्था इत्यर्थः । तैरपि वक्तव्यम् । अपिशब्दो निबद्धाभावसूचनार्थः । अनिबद्धा अपीत्युक्तेऽपि साक्षिप्रकरणत्वात् साक्षिणः स्युरिति सामर्थ्यलब्धत्वादेव समस्तार्थे लभ्यमाने वक्तव्यग्रहणं तत्रापि येषां वचनं प्रमाणत्वेन निर्दिष्टं तेषामेव वचनं ग्राह्यं नार्थसंबन्धिनां वचनं, ततश्चार्थसंबन्धादिदोषरहितैरेव वक्तव्यमिति । मभा.

हिंसादिदोषे निर्गुणा अपि साक्षिणः

न पीडाकृते निबन्धः ।

(१) पीडाकृतं पीडाकरणम् । निबन्धो निबन्धनमर्थसंबन्धादि । पीडाकरणे हिंसाविषये साक्षिणां निबन्धो न निरूप्यः । अर्थसंबन्धादि न किञ्चिदपि दूषणं भवति । आह व्याघ्रः—'स्तेये च साहसे चैव संसर्गे च स्त्रियास्तथा । गरादीनां प्रयोगे च न दोषः साक्षिषु स्मृतः' इति ॥ गौमि.

(२) अत्र बन्धशब्देन व्यवस्था उच्यते । निश्चयबन्धो निबन्धः पीडाकृते हिंसादौ । न निबन्धः न प्रतिषेधोऽस्तीत्यर्थः । पञ्चप्रकारैरन्यैश्च अर्थसंबन्धादिदूषणयुक्तैरपि वक्तव्यमेवेत्यभिप्रायः । तथा चोशनाः—'साहसे सर्वे भवन्ति' इति । मभा.

प्रमत्तोक्ते च ।

(१) प्रमादोऽनवधानम् । अन्त्ये (?) परे वाक्ये साक्षिणा यदृच्छया यदुक्तं तत्रापि निबन्धो न भवति । अर्थसंबन्धादिदूषणं न भवति । गौमि.

(२) प्रमत्तः अज्ञानतः वञ्चनया वा । प्रशब्दोपादानात् । यदा निगूढाः साक्षिणः कृत्वा उपायैरेनं रहस्यापादयन्ति ततः तत्स्थाः अर्थसंबन्धादिदूषणयुक्ता अपि साक्षिणो भवन्तीति । प्रमत्तेनोक्ते परिभाषित इत्यर्थः । चकारात् स्त्रीगमनव्यापारेऽपि । तथा च व्याघ्रः—'स्तेये च साहसे चैव संसर्गे च स्त्रियास्तथा । गरादीनां प्रयोगे च न दोषः साक्षिषु स्मृतः' इति ॥ मभा.

अधर्मवचने साक्ष्यादयः सर्वे दोषिणः

साक्षिसभ्यराजकर्तृषु दोषो धर्मतन्त्रपीडायाम् ।

विपर्यये नरक उक्तः । न स केवलं साक्षिण एव किं तर्हि ? साक्षिसभ्येति । तन्त्रं लोकव्यवहारः । धर्मतन्त्रयोः पीडायां सत्यां साक्षिषु सभ्येषु राजनि कर्तरि च सर्वेषु दोषो भवति । कर्तृग्रहणं दृष्टान्तार्थम् । यावान् कर्तुर्दोषस्तावान् साक्ष्यादीनामपि इति । यद्यपि, साक्षिणः पूर्वं दोष उक्तः तथापीह ग्रहणं सभ्यादीनां ससाक्षिकेऽपि दोषग्रहणार्थम् । अन्यथाऽसाक्षिकव्यवहारे सभ्यादीनां दोषः । ससाक्षिके तु साक्षिणामेवेत्युक्तं स्यात् । ×गौमि.

विषयभेदेन साक्ष्यनृतदोषतारतम्यम्

क्षुद्रपश्वनृते साक्षी दश हन्ति ।

(१) विपर्यये नरक इति सामान्येन साक्षिणो दोष उक्तः । इदानीं व्यवहारविशेषे दोषविशेषमाह—क्षुद्रेति । क्षुद्रपशवोऽजाविकादयः । तद्विषयेऽनृतवदने साक्षी दश हन्ति । तेषां दशानां वधे यावान्दोषस्तावानस्य भवति इति । दण्डप्रायश्चित्तेऽपि तदनुगुणे द्रष्टव्ये । गौमि.

(२) साक्षिग्रहणं सभ्यादीनामप्युपलक्षणार्थम् । *मभा.

---

× गौमि. मभावत् ।

(१) गौध. १३।९; मभा.; गौमि. १३।८.

(२) गौध. १३।१०; मभा.; गौमि. १३।९.

× मभा. गौमिवत् । * शेषं गौमिगतम् ।

(१) गौध. १३।११; मभा.; गौमि. १३।१०.

(२) गौध. १३।१२; मभा.; गौमि. १३।११.

(३) गौध. १३।१५; मभा.; गौमि. १३।१४.

[1] गोऽश्वपुरुषभूमिषु दशगुणोत्तरान् ।

(१) उक्तानामुत्तरं दशगुणान् दशगुणोत्तरान् । गवादिविषयेऽनृते साक्षी पूर्वोक्ताद्दशगुणोत्तरं तत्तद्वधयुक्तदोषो भवति। एतदुक्तं भवति— गवानृते साक्षिणो गोशतहननदोषः। अश्वानृतेऽश्वसहस्रहननदोषः। पुरुषानृतेऽयुतपुरुषहननदोषः। भूम्यनृते यस्य सा भूमिस्तज्जातीयानां लक्षहननदोष इति । 'पञ्च पश्वनृते हन्ति दश हन्ति गवानृते । शतमश्वानृते हन्ति सहस्रं पुरुषानृते' ॥ इत्येतत्तु अत्यन्तक्षुद्रपश्वादिविषयम् । गौमि.

(२) 'पञ्च पश्वनृते' इत्यादि यदुक्तं स्मृत्यन्तरे तत्परिग्रहविशेषापेक्षया प्रयोजनापेक्षया वा द्रष्टव्यम् । मभा.

[2] सर्वं वा भूमौ ।

(१) यदि वा भूमिविषयेऽनृते सर्वमेव मनुष्यजातं हन्ति । ग्रामदेशादिमहाभूमिविषयो विकल्पः । गौमि.

(२) भूमिविषये शतसहस्रं सर्वं वा मनुष्यजातम् । कृताकृतक्षेत्रभेदेन विकल्पो द्रष्टव्यः । मभा.

[3] हरणे नरकः ।

(१) प्रासङ्गिकमिदम् । भूमेरिति विपरिणामेन संबन्धः । भूमेर्हरणे नरको भवति । कालान्तरावधिः शास्त्रान्तरावसेयः । गौमि.

(२) अविशेषात् आ कल्पाद् भवति । दोषवचनप्रसङ्गेनैतदुक्तम् । मभा.

[4] भूमिवदप्सु ।

अब्विषयेऽनृते भूमिवल्लक्षहननदोषो हरणे नरक इति च समानम् । अप्शब्देन कूपतडागादिरुपलक्षितः । गौमि.

[5] मैथुनसंयोगे च ।

मैथुनसंयुक्ते चानृते परदारानसौ गच्छतीत्यादौ, भूमिवदिति चकाराद् गम्यते । गौमि.

['भूमिवदप्सु' 'मैथुनसंयोगे च' इति सूत्रद्वयस्थाने मस्करिणाऽन्यथैव पठितम् । तद्यथा]—

[1] अप्सु मैथुनसंयोगे च ।

अप्सु कूपाद्याधारावस्थितासु । मैथुनसंयोगे च परस्त्रीगमनादावित्यर्थः । संयोगग्रहणात् कन्यालक्षणादावपि । चकारः अब्ग्रहणं मैथुनविशेषणं मा भूदित्येवमर्थः । भूमिवद्दोषः । एवं च हरणेऽपि नरको द्रष्टव्यः । मभा.

[2] पशुवन्मधुसर्पिषोः ।

मधुसर्पिर्विषयेऽनृते क्षुद्रपशुवद्दोषः । *गौमि.

[3] गोवद्वस्त्रहिरण्यधान्यब्रह्मसु ।

ब्रह्म वेदः । वस्त्रादिविषयेऽनृते गोवद्दोषः । अधीत्य 'नास्मान्मयाऽधीतमि'त्यादि ब्रह्मानृतम् । *गौमि.

[4] यानेष्वश्ववत् ।

हस्तिशकटशिबिकादीनि यानानि, तद्विषयेऽनृतेऽश्ववद्दोषः। अन्ये तु 'क्षुद्रपश्वनृत' इत्यारभ्य साक्षिश्रावणे योजयन्ति । क्षुद्रपश्वनृते साक्षिणो दशपशुहननदोषः । तस्मात् त्वया सत्यमेव वक्तव्यमिति साक्षी श्रावयितव्य इति । एवं सर्वत्रोपरिष्टादपि । गौमि.

(२) केचिदन्यथा व्याचक्षते पशुवन्मधुसर्पिषोरित्यारभ्य पश्वनृतवद्दोषः मधुसर्पिषोर्हरणे । वस्त्रादिहरणे च गोवद्दोषः । तत्र ब्रह्मशब्देन वेदाङ्गानि, लिखितानि पुस्तकान्याहुः । यानहरणे चाश्वानृततुल्यो दोष इति । ×मभा.

### मिथ्यावचने साक्षिदण्डः

[5] मिथ्यावचने याप्यो दण्ड्यश्च साक्षी ।

(१) एवमदृष्टविषये दोषमुक्त्वा दृष्टविषये साक्षिणो दण्डमाह—मिथ्येति । मिथ्यावचने दृष्टे साक्षी याप्यो गर्ह्यः सर्वैरयमसंव्यवहार्य इति, दण्ड्यश्च राज्ञा । गौमि.

(२) यदि त्वेवमपि दोषे उक्ते साक्ष्यनृतमेव वक्ति ततः मिथ्येति । अनृत उक्ते याप्यः गर्ह्यः सर्वलोकसमक्षं संव्यवहारविच्छेदनार्थम् । पुरुषशक्त्यादिविज्ञानात् तन्मूल्य-

---

(१) गौध.१३।१६; मभा.; गौमि.१३।१५.
(२) गौध.१३।१७; मभा.; गौमि.१३।१६.
(३) गौध.१३।१८; मभा.; गौमि.१३।१७.
(४) गौमि. १३।१८. (५) गौमि. १३।१९.

* मभा. गौमिवत् । × शेषं गौमिगतम् ।

(१) गौध.१३।१९; मभा. (२) गौध.१३।२०; मभा.; गौमि.१३।२०. (३) गौध.१३।२१; मभा.; गौमि.१३।२१. (४) गौध.१३।२२; मभा.; गौमि.१३।२२.
(५) गौध.१३।२३; मभा.; गौमि.१३।२३; स्मृच. ९२; प्रका.६०; समु.३८.

प्रमाणेन दण्डश्च भवति । अर्थप्रयोजनापेक्षया परिग्रह-विशेषापेक्षया च समस्तव्यस्तपरिकल्पनार्थश्चकारः । अधिकारादेव सिद्धे साक्षिग्रहणं स एव याप्यो दण्ड्यश्च । सभ्यादयो दण्ड्या एवेति । मभा.

साक्षिणोऽनृतवचनदोषापवादः

**नानृतवचने दोषो जीवनं चेत्तदधीनम्+ ।**

(१) अदोषवचनं चाल्पदोषाभिप्रायं प्रायश्चित्त-विधानसामर्थ्यात् द्रष्टव्यम् । विश्व.२।८५

(२) यदा सत्यवचनात् परस्परवधोऽनृतवदने तु तदधीनमनृतवचननिबन्धनमन्यस्य जीवनं भवति न वधः, तत्रानृतवचने न पूर्वोक्तो दोष इति । अत्र याज्ञवल्क्यः—'वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् । तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः' इति ॥ *गौमि.

(३) 'साक्षिधर्मे विशेषेणे' त्यादिभिर्वचनैर्यदधिकपातकमुक्तं तदत्र नास्तीति । स्मृच.८९

(४) पापीयसस्तु क्षत्रियादेर्वधप्रसक्तावपि नोभयाभ्यनुज्ञेत्याह गौतमः – नानृतेति । व्यप्र.१३९

(५) महाभारते, 'न नर्मयुक्तं वचनं हिनस्ति न स्त्रीषु राजन्न विवाहकाले । प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि' ॥ सेतु.१२३

अनृतवचनदोषापवादप्रतिप्रसवः

**न तु पापीयसो जीवनम् ।**

(१) यदि त्वनृतवचनेन पापीयसः पापवत्तरस्य परपीडारतस्य जीवनं भवति तदा न तु न दोषः । अपि तु दोष एवेति । गौमि.

(२) तुशब्दो विशेषार्थः एतज्ज्ञापयति अवश्यम्भाव्यनृतवचने दोषः, तथापि तु वधनिमित्तात् सत्यादनृतमेव विशिष्टमल्पतरदोषत्वादिति । तथा च मनुः—'शूद्रविट्क्षत्रविप्राणां यत्रोक्तार्थे भवेद्वधः । तत्र वक्तव्यमनृतं तद्धि तत्र विशिष्यते' इति ॥ यदेवं मन्येत—जीवन्नप्ययं पापकर्मरतिरेव भवति स्तेयाद्येव करोतीति तदा सत्यमेव वक्तव्यमित्यभिप्रायः । पापीयस इत्यातिशायनिकप्रत्ययनिर्देशः । परपीडाकर्तर्येव सत्यं वक्तव्यं, न विहिताकरणमात्रे प्रतिषिद्धकरणमात्रे वेति । मभा.

**सर्वधर्मेभ्यो गरीयः प्राड्विवाके सत्यवचनम्* ।**

## आपस्तम्बः

साक्षी कदा कुत्र कथं च वदेत्

**पुण्याहे प्रातरग्नाविद्धेऽपामन्ते राजवत्युभयतः समाख्याप्य सर्वानुमते मुख्यः सत्यं प्रश्नं ब्रूयात् ।**

पुण्याहो देवनक्षत्रम् । प्रातर्मध्याह्नादिषु । अग्नाविद्धे अभिमिध्वा तत्समीपे । अपामन्ते उदकमुपनिधाय तत्समीपे । राजवति राजाधिष्ठिते सदसि । राजग्रहणं प्राड्विवाकादेरुपलक्षणम् । उभयतः उभयोरर्थिप्रत्यर्थिनोः समाख्याप्य किमहं युवयोः प्रमाणभूतः साक्षीत्यात्मानं ख्यापयित्वा । यदि वा उभयतः उभयोरपि पक्षयोः सत्यवचने च असत्यवचने च साक्षिणो यद् भावि फलं तत्, 'सत्यं ब्रूह्यनृतं त्यक्त्वा सत्येन स्वर्गमेष्यसि । अनृतेन महाघोरं नरकं प्रतिपत्स्यसे' ॥ इत्यादिना प्रकारेण समाख्याप्य प्राड्विवाकादिभिः पृष्ट इति शेषः । सर्वानुमते अर्थिप्रत्यर्थिनोः सभ्यानां चानुमतौ सत्यां सभ्यो मुख्यः साक्षिगुणैरुपेतो दोषैश्च वर्जितः साक्षी प्रश्नं पृष्टमर्थं सत्यं यथा आत्मना ज्ञातं तथा ब्रूयात् । उ.

---

\+ अत्रत्यं मेधातिथिव्याख्यानं 'शूद्रविट्क्षत्रे' ति ( मस्मृ. ८।१०४) श्लोके द्रष्टव्यम् । * मभा. गौमिवत् ।

(१) **गौध.**१३।२४;**विश्व.**२।८५; **मेधा.**८।१०४ वचने (वदने) चेत्तद ( चैतद ); **अप.**२।८३ जीवनं (जीवितं); **व्यक.**५९; **मभा.**; **गौमि.**१३।२४; **मवि.**८।१०४; **स्मृच.**८९; **ममु.**८।१०४ वचने (वदने) षो +( यत् ); **दीक.**३९ जीवनं चेत्तदधीनम् ( जीवितं तदधीनं चेत् ); **व्यचि.**५६ षो+ (अस्ति); **व्यत.**२१५; **व्यसौ.**५६; **वीमि.**२।८३ जीवनं चेत् तदधीनम् ( अस्ति जीवनं तदधीनं चेत् ); **व्यप्र.**१३९ वनं (वतः); **विता.** १९१ तव (ते व) षो+(अस्ति); **सेतु.**१२३; **प्रका.**५८; **समु.**३६.

(२) **गौध.**१३।२५; **गोरा.**८।१०४; **अप.**२।८३; **व्यक.**५९; **मभा.**; **गौमि.**१३।२५; **मवि.**८।१०४; **ममु.**

* व्याख्यानं स्थलादिनिर्देशश्च सभाप्रकरणे (पृ.२५) द्रष्टव्यः ।

८।१०४; **दीक.**३९; **व्यचि.**५६; **व्यत.**२१५; **व्यसौ.**५६; **वीमि.**२।८३; **व्यप्र.**१३९; **विता.**१९१; **सेतु.**१२३.

(१) **आध.**२।२९।७; **हिध.**२।२० (प्रातर्०) ख्याप्य (ख्यानः).

अनृतवदनदण्डविधिः

**[1] अनृते राजा दण्डं प्रणयेत् ।**

साक्षिणाऽनृतमुक्तमिति प्रतिपन्ने राजा दण्डं प्रणयेत् । अत्र मनुः—'यस्य दृश्येत सप्ताहादुक्तसाक्ष्यस्य साक्षिणः । रोगोऽग्निर्ज्ञातिमरणं दाप्यो दण्डं च तत्समम्' ॥ उ.

सत्यानृतोक्तिफलम्

**[2] नरकश्चात्राधिकः साम्पराये ।**

न केवलमसत्यवचने राजदण्डः । किं तर्हि ? नरक इति । साम्परायः परलोकः, तत्र नरकश्च भवति । न तु, 'राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः । निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा' ॥ इत्यस्यायं विषय इति । उ.

**[3] सत्ये स्वर्गः सर्वभूतप्रशंसा च ।**

सत्य उक्ते स्वर्गो भवति । सर्वाणि च भूतान्येनं प्रशंसन्ति अपि देवाः । उ.

## बौधायनः

साक्षिणा किं किमर्थं च वक्तव्यम्

**[4] लोकसंग्रहणार्थं यथादृष्टं यथाश्रुतं साक्षी ब्रूयात् ।**

द्वयोः परस्परविप्रतिपत्तौ ज्ञातमर्थं साक्षिभिर्भावयेत् । महाजनपरिग्रहार्थं तत्र साक्षी यथादृष्टं निरपेक्षप्रमाणेनाऽवगतं यथाश्रुतमाप्तवाक्यादवगतं तथैव ब्रूयात् । बौवि.

कीदृशाः साक्षिणः कीदृशाश्चासाक्षिणः

**[5] चत्वारो वर्णाः पुत्रिणः साक्षिणः स्युरन्यत्र । श्रोत्रियराजन्यप्रव्रजितमानुष्यहीनेभ्यः ।**

मानुष्यहीनो बन्धुहीनः । एते श्रोत्रियराजन्यप्रव्रजिताः वचनादसाक्षिणः । बौवि.

साक्ष्यादिभिर्धर्म एव वक्तव्यः

**[6] पादोऽधर्मस्य कर्तारं पादो गच्छति साक्षिणम् । पादः सभासदः सर्वान् पादो राजानमृच्छति ॥ राजा भवत्यनेनाश्च मुच्यन्ते च सभासदः । एनो गच्छति कर्तारं यत्र निन्द्यो ह निन्द्यते ॥**

राज्ञा सम्यक् परीक्षा कर्तव्येति श्लोकद्वयस्य तात्पर्यार्थः । इतरथा, अधर्मस्य कृतस्य पाद एव तत्कर्तारं गच्छेत् । इतरे त्रयः पादाः साक्षिसभासद्राजगा इत्युक्तम् । सम्यक् परीक्ष्य दुष्टनिग्रहः परीक्षकाणां पापप्रमोचनार्थ इति द्वितीयश्लोकार्थः । बौवि.

साक्षिप्रश्नविधिः

**[1] साक्षिणं त्वेवमुद्दिष्टं यत्नात्पृच्छेद्विचक्षणः ।**

अर्थिना निर्दिष्टान् साक्षिण एवं पृच्छेदिति पदान्वयः । बौवि.

साक्षिणोऽनृतवचने दोषः

**[2] यां रात्रिमजनिष्ठास्त्वं यां च रात्रिं मरिष्यसि । एतयोरन्तरा यत्ते सुकृतं सुकृतं भवेत् । तत्सर्वं राजगामि स्यादनृतं ब्रुवतस्तव ॥**

सुकृतं धर्मः । स च सुष्ठु कृतः यथाविध्यनुष्ठितः । यमनृतेन पराजयसि ( से ? ) तद्गामी त्वदीयो धर्म इति । बौवि.

**[3] त्रीनेव च पितॄन् हन्ति त्रीनेव च पितामहान् ।**

अनृतवदनमात्रे एष दोषः । बौवि.

**[4] सप्त जातानजातांश्च साक्षी साक्ष्यं मृषा वदन् ।**

(१) आत्मना सह जातानां सप्तमत्वम् । व्याचि.५०

(२) साक्ष्यनृते तु सप्तेति । स आत्मनः पूर्वापरान् सप्त सप्त हन्तीत्यर्थः । अधर्मप्रवणचित्तानां मत्या आत्मीयवंश्यहननोपाये वैराग्यं भवति इत्येवं सान्त्वनम् । बौवि.

---

(१) आध.२।२९।८; हिध.२।२०. (२) आध.२।२९।९; हिध.२।२०. (३) आध.२।२९।१०; हिध.२।२०. (४) बौध.१।१०।२९; व्यक.५६ (लोकप्रतिग्रहार्थं यथादृष्टं श्रुतं साक्ष्यं ब्रूयुः); व्यसौ.५२ व्यकवत्. (५) बौध.१।१०।३७. (६) बौध.१।१०।३०-३१; व्यक.१५ गच्छति साक्षिणम् (साक्षिणमृच्छति), 'राजे'त्यांशो नास्ति, मनुनारदहारीतबौधायनाः; दवि.१७ व्यकवत्, 'राजे' त्यांशो नास्ति, मनुनारदहारीतबौधायनाः; व्यत.२०० गच्छति साक्षिणम् (साक्षिणमृच्छति) नाश्च (नास्तु) यत्र निन्द्यो ह निन्द्यते (निन्दार्हो यत्र निन्द्यते) मनुनारदबौधायनहारीताः; सेतु.९६ व्यतवत्, मनुनारदबौधायनहारीताः.

(१) बौध. १।१०।३२.

(२) बौध. १।१०।३२-३३.

(३) बौध. १।१०।३४; व्यक.५३; व्यचि.४९; व्यसौ.५१; व्यप्र.१२८ च पिता (प्रपिता); विता.१७२ व्यप्रवत्.

(४) बौध.१।१०।३४; व्यक.५३ वदन् (ब्रुवन्); व्यचि.५०; व्यसौ.५१ साक्षी साक्ष्यं (साक्ष्यं साक्षी); व्यप्र.१२८ व्यकवत्; विता.१७२ व्यकवत्.

अनृतोक्तौ विषयभेदेन दोषतारतम्यम्

[1]हिरण्यार्थेऽनृते हन्ति त्रीनेव च पितामहान् ।
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ॥
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ।
सर्वं भूम्यनृते हन्ति साक्षी साक्ष्यं मृषा वदन् ॥

अथेदानीं विप्रतिपत्तिविषयभूतद्दष्टविशेषापेक्षयाऽनृतवदने दोषमाह—हिरण्यार्थ इत्यादि । अत्र हिरण्यशब्दो रजतादिवचनः । 'हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन्' इति सुवर्णविषये मानवदर्शनात् । बौवि.

साक्षिद्वैधे गुणाद्यनुसारेण निर्णयः

[2]स्मृतौ प्रधानतः प्रतिपत्तिः ।

साक्षिद्वैधे सति राज्ञा तत्पुरुषैश्च किं कर्तव्यमित्याह—स्मृताविति । प्राधान्यं तपोनिर्दिष्टविद्यादिभिः । तद्वचनात् प्रतिपत्तिः निश्चयः । कार्य इत्यध्याहारः । किमुक्तं भवति ? 'द्वैधे बहूनां वचनं समेषु गुणिनां तथा । गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तराः' ॥ इत्येतदुक्तं भवति । बौवि.

अन्यथानिर्णये नरकः

[3]अतोऽन्यथा कर्तपत्यम् ।

उक्तोपायादुपायान्तरेण निर्णये सति 'कर्तपत्यं' नाम दोषो भवति । कर्तं नरकं तस्मिन्निपातः कर्तपत्यम् । बौवि.

अधर्म्यनिर्णयप्रायश्चित्तम्

[4]द्वादशरात्रं तप्तं पयः पिबन् कूष्माण्डैर्वा जुहुयात् ।

तत्र प्रायश्चित्तमाह—द्वादशेति । घृतमिति शेषः । अस्मार्तत्वादाहवनीय एवायं होमो राज्ञो राजपुरुषाणां च (?) । कूष्माण्डानि, 'यद्देवा देवहेलनम्' इत्यारभ्य 'पुनर्मनः पुनरायुर्म आगादि' त्यन्तानि आरण्यके प्रसिद्धानि । प्रतिमन्त्रं च होमभेदः । प्रत्यहं होमावृत्तिरिति केचित् । अपरे द्वादशरात्रस्यान्ते सकृदेवेत्याहुः । बौवि.

(१) **बौध**.१।१०।३५-३६; **व्यक**. वदन् ( ब्रुवन् ) 'हिरण्यार्थे' इत्यर्धं नास्ति.

(२) **बौध**.१।१०।३८; **अप**.२।८३ स्मृतौ ... पत्तिः (प्रधानतः प्रतिपत्तिरतोऽन्यथा).

(३) **बौध**.१।१०।३९.

(४) **बौध**.१।१०।४०; **अप**.२।८३ द्वादश (कर्ता द्वादश) (तप्तं०) (वा०).

## वसिष्ठः

कीदृशाः साक्षित्वमर्हन्ति । जातिभेदे साक्षिभेदः ।

[1]अथ साक्षिणः । श्रोत्रियो रूपवान् शीलवान् पुण्यवान् सत्यवान् साक्षिणः सर्वेषु सर्व एव वा । स्त्रीणां तु साक्षिणः स्त्रियः कुर्यात् द्विजानां सदृशा द्विजाः । शूद्राणां सन्तः शूद्राश्च, अन्त्यानामन्त्ययोनयः ।

समुदायसाक्षित्वम्

[2]समवेतैस्तु यद् दृष्टं वक्तव्यं तु तथैव तत् ।
विभिन्नैरेव यत्कार्यं वक्तव्यं तत् पृथक् पृथक् ॥

यत्कार्यं दृष्टमित्यनुषङ्गः । व्यप्र.१२६

प्रातिस्विकसाक्षित्वम्

[3]भिन्नकाले तु यत्कार्यं ज्ञातं वा यत्र साक्षिभिः ।
एकैकं वादयेत्तत्र विधिरेष प्रकीर्तितः ॥

साक्षिवचनविधिः

[4]प्राङ्मुखोऽधःस्थितः साक्षी शपथैः शापितः स्वकैः ।
हिरण्यगोशकृद्दर्भास्तान् संस्पृश्य वदेदृतम् ॥

अनृतवदनदोषः

[5]ब्रूहि साक्षिन् यथातत्त्वं लम्बन्ते पितरस्तव ।
तव वाक्यमुदीक्षाणा उत्पतन्ति पतन्ति च ॥
[6]नग्नो मुण्डः कपाली च भिक्षार्थी क्षुत्पिपासितः ।
अन्धः शत्रुकुले गच्छेद्यः साक्ष्यमनृतं वदेत् ॥

(१) **वस्मृ**. १६।२२-२४ (ख) (सर्वेषु०) अन्त्ययोनयः (अन्त्याः).

(२) **स्मृच**.९०; **पमा**.११३ यत्का (तत्का) तत् (स्यात्); **चन्द्र**.१४६ व्यं तु (व्यं च) तत् (च) रेव यत् (श्च कृतं) वक्तव्यं तत् (तद्वक्तव्यं); **व्यप्र**.१२६; **व्यम**.१८ न्नैरेव यत् (न्नैनैव तत्) तत् पृ (तु पृ); **विता**.१६९ न्नैरेव (न्नैनैव); **प्रका**.५९ न्नैरेव (न्नैनैव) तत् पृ (च पृ); **समु**.३६ वितावत्.

(३) **शुनी**.४।६९२ पूर्वार्धे (विभिन्नकाले यज्ज्ञातं साक्षिभिश्चांशतः पृथक्) प्रकीर्तितः (सनातनः); **स्मृच**.९०; **पमा**.११३ यत्र (यच्च); **व्यप्र**.१२६ ज्ञातं वा (विज्ञातं); **व्यम**.१९ व्यप्रवत्; **प्रका**.५९; **समु**.३६.

(४) **स्मृच**.८९; **पमा**.११२ ऽधः (ऽव) ण्य (ण्यं); **नृप्र**.१० ऽधः (प); **सवि**.१५७ ऽधः (यः) तान्संस्पृश्य (उपस्पृश्य); **प्रका**.५८; **समु**.३६ वदेदृतम् (ऋतं वदेत्).

(५) **वस्मृ**. १६।२७ (ख) उदीक्षाणा ( उदीर्यन्तम्).

(६) **वस्मृ**. १६।२८ (ख) यः साक्ष्यम ( यस्तुसाक्ष्य).

असाक्षिणा न वक्तव्यम्

यः[1] साक्षी नैव निर्दिष्टो नाहूतो नैव चोदितः ।
ब्रूयान्मिथ्येति तथ्यं वा दण्ड्यः सोऽपि नराधमः॥

अनृतोक्तिफलम्

अथ[2] चेदनृतं ब्रूयात् सर्वतोऽमेध्यलक्षणम् ।
मृतो नरकमायाति तिर्यग्गच्छेदनन्तरम् ॥

अमेध्यभक्षणयुतं नरकं मृतो गच्छतीत्यर्थः । स्मृच.८६

सूकरो[3] दश वर्षाणि शतवर्षाणि गर्दभः ।
श्वा वै द्वादशवर्षाणि भासो वर्षाणि विंशतिम् ॥
कृमि[4]कीटपतङ्गेषु चत्वारिंशत्तथैव च ।
मृगस्तु दश वर्षाणि जायते मानवस्ततः ॥
मानुष्यं[5] तु यदाप्नोति मूकोऽन्धश्च भवेत्तु सः ।
दारिद्र्यं तु भवेत्तस्य पुनर्जन्मनि जन्मनि ॥
पामरो[6] जायते पश्चात् स परित्यक्तबान्धवः ।
पङ्ग्वन्धबधिरो मूकः कुष्ठी नग्नः पिपासितः ॥
बुभुक्षितः[7] शत्रुगृहे भिक्षते भार्यया सह ।
ज्ञात्वैताननृते दोषान् ज्ञात्वा सत्ये च सद्गुणान् ।
श्रेयस्करमिहान्यत्र सत्यं साक्ष्ये वदेदतः ॥

अत्रापिशब्दोऽध्याहर्तव्यः । अमित्रेऽपि साक्ष्ये सत्यं वदेदित्यर्थः । सवि.१५९

(१) स्मृच.९१; प्रका.६०; समु.३७. (२) स्मृच. ८६ ल (भ); पमा.११०; सवि.१५८ ल (भ) मृतो (मृतौ); व्यप्र.१२७ ऽमेध्य (मिथ्य) च्छेदनन्तरम् (च्छत्यसंशयम्); प्रका.५६ ल (भ); समु.३४ ल (भ). (३) स्मृच.८७; पमा.११० वै द्वा (चैव) तिम् (तिः); सवि.१५९ शत (दश) गर्द (गार्द) वै द्वा (चैव); व्यप्र.१२८ शत (दश) वै द्वा (चैव) तिम् (तिः); विता.१७२ व्यप्रवत्; प्रका.५७; समु. ३५ शत (शतं). (४) स्मृच.८७ त्तथै (तमे); पमा.११०; नृप्र.१० पू.; सवि.१५९; व्यप्र.१२८; विता.१७२ गेषु (गत्वं); प्रका.५७ स्मृचवत्; समु.३५ स्मृचवत्.

(५) स्मृच.८७; पमा.११० ष्यं तु (षत्वं) च (तु); सवि. १५९ च (तु); व्यप्र.१२८ च (तु) तु सः (हि सः) पू.; प्रका.५७; समु.३५ तस्य (तस्मिन्).

(६) नृप्र.१० (वानरो जायते पश्चात् संपरित्यज्य बान्धवान्); व्यप्र.१२८; विता.१७२ उत्त.

(७) व्यप्र.१२८; सवि.१५९ ज्ञात्वैताननृते (त्वा त्वनृततो) न्यत्र (मित्रे) साक्ष्ये (साक्षी); विता.१७२ प्रथमार्धम्.

अनृतोक्तिदोषतारतम्यम्

पञ्च[1] कन्याऽनृते हन्ति दश हन्ति गवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥

अनृतोक्त्यपवादः

व्यवहारे[2] मृते दारे प्रायश्चित्ते कुलस्त्रियाः ।
तेषां पूर्वपरिच्छेदाच्छिद्यन्तेऽत्रापवादिभिः ॥
उद्वाहकाले[3] रतिसंप्रयोगे
प्राणात्यये सर्वधनापहारे ।
विप्रस्य चार्थे ह्यनृतं वदेयुः
पञ्चानृतान्याहुरपातकानि ॥
स्वजनस्य[4] अर्थे यदि वाऽर्थहेतोः
पक्षाश्रयेणैव वदन्ति कार्यम् ।
ते शब्दवंशस्य कुलस्य पूर्वान्
स्वर्गस्थितांस्तानपि पातयन्ति ॥

## विष्णुः

कीदृशाः साक्षित्वमर्हन्ति

अथ[5] साक्षिणः । कुलजातिवृत्तसंपन्ना यज्वानस्तपस्विनः पुत्रिणो धर्मज्ञा अधीयानाः सत्यवन्तस्त्रैविद्यवृद्धाश्च । अभिहितगुणसंपन्नस्तूभयानुमत एकोऽपि ।

(१) अपूर्वाभिहितगुणसंपन्नानां अनुमतियोग्यानामेव बहुवचनान्तपदेन व्यवराणामननुमतानामपि विधानात् पुनरभिहितगुणसंपन्नस्योभयानुमतस्यैव विधानार्थमुभयानुमतिवचनं, अन्यथा कुलजात्यादिसंपन्नानां व्यवराणां विधानानुपपत्तेः । व्यमा.३१९

(२) एकस्य साक्षित्वे अभिमतगुणसंपत्त्युभयानुमती मिलिते तन्त्रं यत्तु भिन्ने तन्त्रं तेन निर्गुणस्यापि सदो-

(१) वस्मृ.१६।२९. (२) वस्मृ. १६।३०.

(३) वस्मृ. १६।३१ (ख) ह्य (अ).

(४) वस्मृ. १६।३२ (ख) ते...पूर्वान् (वै शब्दवादं स्वकुलानपूर्वान्).

(५) विस्मृ.८।७-९ जाति (जा) वृत्त + (वित्त) तू (उ); व्यमा.३१८; व्यचि.३९ जातिवृत्त (वृत्तजाति) च अभिहित (अभिमत); व्यत.२१२ (अथ ... वृद्धाश्च०) हि (म); सेतु. ११८ प (त्वे) शेषं व्यतवत्.

षस्याप्युभयानुमतस्यैकस्य साक्ष्यमेवेति । तन्न । एवमर्थभेदाद्वाच्यभेदापत्तेरिति । व्यचि.३९

साक्षिनिरुक्तिः

[1]समक्षदर्शनात्साक्षी श्रवणाद्वा ।

(१) द्वयमपि यदि वादिद्वयसंनिधौ । व्यमा.३१७

(२) चक्षुषा श्रोत्रेण वा सह मनोव्यापारो यस्य स साक्षी इति । पमा.९३

कीदृशा असाक्षिणः

[2]अथासाक्षिणः । न राजश्रोत्रियप्रव्रजितकितवतस्करपराधीनस्त्रीबालसाहसिकातिवृद्धमत्तोन्मत्ताभिशस्तपतितक्षुत्तृष्णार्तव्यसनिरागान्धाः ।

रिपुमित्रार्थसंबन्धिविकर्मदृष्टदोषसहायाश्च । अनिर्दिष्टस्तु साक्षित्वे यश्चोपेत्य ब्रूयात् ।

[3]एकश्चासाक्षी ।

[4]स्तेयसाहसवाग्दण्डपारुष्यसंग्रहणेषु साक्षिणो न परीक्ष्याः ।

स्तेयसाहसवाग्दण्डपारुष्यसंग्रहणादिकार्याणां निह्नवेनैव क्रियमाणत्वात् दैवादेव परे तत्र साक्षिणः भवन्तीति मत्वा न तान् परीक्षेतेत्युक्तम् । वचनं तु तेषामप्यरिमित्रादिभावनिरूपणेनोपपत्त्यनुपपत्तिभ्यामालोचनीयम् । न तु तद्वचनमात्रादेव निर्णयः । *व्यमा.३२८

परंपरया साक्षित्वम्

[5]उद्दिष्टसाक्षिणि मृते देशान्तरगते वा तदभिहितज्ञातारः प्रमाणम् ।

सत्योक्तिफलम् । सत्यापवादः । तत्रानृतोक्तिप्रायश्चित्तम् ।

[6]साक्षिणश्च सत्येन पूयन्ते । वर्णिनां यत्र वधस्तत्रानृतेन ।

तत्पावनाय कूष्माण्डीभिर्द्विजोऽग्निं जुहुयात् ।

शूद्रश्चैकाहिकं गोदशकस्य ग्रासं दद्यात् ।

एकाहिकं एकस्मिन्नहनि भक्षयितुं पर्याप्तम् । व्यम.१९

कूटसाक्षिलिङ्गम् । कूटसाक्षिदण्डः ।

[2]स्वभावाद् विकृतौ मुखवर्णविनाशे चासंबद्धप्रलापे च कूटसाक्षिणं विद्यात् ।

[3]कूटसाक्षिणां सर्वस्वापहारः कार्यः ।

सामान्येनाभिधानेऽपि दण्डगौरवादिविषयमेतदवसेयम् । स्मृच.२३३

वर्णभेदेन साक्षिवचनविधिः

[4]साक्षिणश्चाहूयादित्योदये कृतशपथान् पृच्छेत् । [5]ब्रूहीति ब्राह्मणं पृच्छेत् । सत्यं ब्रूहीति राजन्यम् । गोबीजकाञ्चनैर्वैश्यम् । सर्वमहापातकैस्तु शूद्रम् । [6]साक्षिणश्च श्रावयेत् । ये महापातकिनो लोका ये चोपपातकिनस्ते कूटसाक्षिणामपि । जननमरणान्तरे कृतसुकृतहानिश्च ।

[7]सत्येनादित्यस्तपति । सत्येन भाति चन्द्रमाः ।

---

* व्यत., सेतु. व्यमागतम् ।

(१) **विस्मृ**.८।१३ क्ष (क्ष्य); **व्यमा**.३१७; **पमा**.९३; **नृप्र**.९ साक्षी (साक्ष्यं) श्रवणाद्वा (श्रवणाच्चैव सिध्यति); **विव्य**.११. (२) **विस्मृ**.८।१-४. (३) **विस्मृ**.८।५.

(४) **विस्मृ**.८।६; **व्यमा**.३२८; **व्यत**.२१४ क्ष्याः (क्षाः); सेतु.१२० संग्रह (ग्रह) षु (च). (५) **विस्मृ**.८।१२; **व्यमा**. ३२१-३२२ ष्ट (ष्टे) गते+ (अपि) ज्ञातारः (श्रोतारः); **व्यत**.२११ गते+ (अपि) ज्ञातारः (श्रोतारः) णम्+ (नात्र संशयः). (६) **विस्मृ**.८।१४-१५; **व्यक**.५९ (च०) वर्णिनां यत्र (यत्र वर्णिनां).

(१) **विस्मृ**.८।१६-१७ चैकाहिकं (एकाह्निकं); **अप**. २।८३ चैकाहिकं (चैकाग्नि [ह्नि] कं); **व्यक**.५९ हि (ह्नि); **स्मृच**.८९ ग्निं (ग्नौ); **व्यचि**.५६ तत्... जुहुयात् (तत्पापशोधनाय कूष्माण्डीर्जुहुयात्) श्चैकाहि (स्त्वेकाह्नि) ग्रासं (ग्रामं); **व्यसौ**.५६ ग्निं (ग्नौ) हि (ह्नि) ग्रासं (ग्रामं); **वीमि**.२।८३ (तत्... जुहुयात्०) चैकाहि (त्वेकाह्नि); **व्यप्र**.१४०; **व्यम**. १९ (तत्... यात्०); **विता**.१९३ (द्विजोऽग्निं०) श्चै (स्यै); **बाल**.२।८३ व्यमवत्; **प्रका**.५८ स्मृचवत्; **समु**.३६ स्मृचवत्. (२) **विस्मृ**.८।१८ भावाद् (भाव) चासं (असं); **स्मृच**.८५ बद्ध (बन्ध) (च०); **सवि**.१४७ विद्यात (विन्द्यात्); **प्रका**.५५; **समु**.३३.

(३) **विस्मृ**.५।१७५; **अप**.२।८१; **व्यक**.५८ (कार्यः०). **स्मृच**.९३,२३३; **व्यचि**.५५ व्यकवत्; **दवि**.३४७; **चन्द्र**.१५० कार्यः (कर्तव्यः); **वीमि**.२।८२ हारः कार्यः (हरणम्); **प्रका**.६१.

(४) **विस्मृ**.८।१९; **व्यक**.५०; **व्यसौ**.४९; **प्रका**.५७; **समु**.३५ च्छेत् (च्छति).

(५) **विस्मृ**.८।२०-२३; **गौमि**.१३।१३ ब्रूहीति ... ... पृच्छेत् (पृच्छेत् ब्रूहीति ब्राह्मणम्) (महा०) (तु०).

(६) **विस्मृ**.८।२४-२६. (७) **विस्मृ**.८।२७-३५

सत्येन वाति पवनः । सत्येन भूर्धारयति । सत्येनापस्तिष्ठन्ति । सत्येनाग्निस्तिष्ठति । खं च सत्येन । सत्येन देवाः । सत्येन यज्ञाः ।

अश्वमेधसहस्रं तु सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ।
वरं कूपशताद्वापी वरं वापीशतात् क्रतुः ॥
वरं क्रतुशतात्पुत्रः सत्यं पुत्रशताद्वरम् ।
सत्येन भूर्धारयति सत्येनोदेति भास्करः ॥
सत्येन वायुः पवते सत्येनापः स्रवन्ति च ।
सत्यमेव परं दानं सत्यमेव परं तपः ॥
सत्यमेव परो धर्मो लोकानामिति नः श्रुतम् ।
नास्ति सत्यात् परो धर्मो नानृतात्पातकं परम् ॥
साक्षिधर्मविशेषेण सत्यमेव वदेत्ततः ।
सत्यं ब्रूह्यनृतं त्यक्त्वा सत्येन सत्यमेष्यसि ॥
जानन्तोऽपि हि ये साक्ष्ये तूष्णीम्भूता उपासते ।
ते कूटसाक्षिणां पापैस्तुल्या दण्डेन वाऽप्यथ ।
एवं हि साक्षिणं पृच्छेद्वर्णानुक्रमतो नृपः ॥

पारयन्तोऽपीत्यपिशब्देन जानन्तोऽपि, यदि सत्याभिधाने स्वकीयमनर्थप्रवेशमाशङ्कमानास्तूष्णीमासते, तदा न (?) ते दण्डनीया भवन्तीत्युक्तम् । व्यमा. ३३२

साक्ष्युक्तिरेव जयपराजयकारणम्

यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ।
अन्यथावादिनो यस्य ध्रुवस्तस्य पराजयः ॥

(१) प्रतिपाद्यतया यावत् प्रतिज्ञातं तावज्जानीम इति यदि साक्षिणो ब्रूयुस्तदा स जयी भवति । न तु भाषाकाले यावत् साध्यं निर्दिष्टं विभावितैकदेशन्यायनिर्विषयापत्तेः । अस्य विस्तरेण पूर्वं प्रतिपादितत्वात् । यस्य पुनः साक्षिणोऽन्यथा वदन्ति मिथ्येति तत्र भवत्येवायमर्थस्तस्य भङ्ग (?) इति, तदाह व्यासः—'तीर्णप्रतिज्ञो विजयी मिथ्यावादी विहीयते' । मिथ्यावादत्वावधारणाद् भङ्ग इत्यर्थः । अत एव यत्र न स्मरामः इत्याहुस्तत्र न प्रतिज्ञातस्य सत्यत्वं नापि मिथ्यात्वं इति । न तत्र जयपराजयौ, परीक्षकाणामन्यतरपक्षावधारणे प्रमाणाभावात्, अतः क्रियान्तरेण दिव्यादिना निर्णयः कार्यः । व्यमा. ३३३

(२) अन्यथावादिन इति प्रतिज्ञातार्थस्यासत्यवादिन इत्यर्थः । पूर्वार्धे प्रतिज्ञातार्थसत्यत्वस्यैवोपस्थिततया अन्यथापदेन तदसत्यत्वस्यैवाभिधानात्तथैव व्युत्पत्तेः वादिन इत्यस्य विभागे अर्थपौनरुक्त्यात् अन्यथेतिमात्रस्य साकाङ्क्षतया भवन्तीत्यध्याहारगौरवात् अध्याहारलक्षणवाक्यभेदापत्तेश्चेति । व्यचि. ५७

साक्षिद्वैधे बहुत्वगुणाद्यनुसारेण निर्णयः

बहुत्वं परिगृह्णीयात् साक्षिद्वैधे नराधिपः ।
समेषु च गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमान् ॥

(१) न च गृहीतानां वचनद्वैधपरमिदं वचनं, साक्षिद्वैध इति निर्देशात् साक्षिणामेव ग्राह्यतया निर्देशात्, न तु तत्तद्वचनस्य, न्यायसाम्यांद्वा उभयविषयपरत्वमेव वचनस्य । एवं चैकस्य सति पत्रेऽन्यस्य साक्षिणो न ग्राह्याः । व्यमा. ३०८

पृष्टानां तु वचनद्वैधे कर्तव्यतामाहतुर्मनुविष्णू —बहुत्वमिति । द्वैधमेकस्य अन्वयाभिधायित्वेऽपरस्य च व्यतिरेकाभिधायित्वे भवति । पुनर्न जानामि न स्मरामि इत्यभिधानेऽपि सत्यपि वस्तुनि तत्संभवेऽपि द्वैधापवादकत्वात् । अत एव नारदः— 'साक्षिविप्रतिपत्तौ तु प्रमाणं बहवो मताः । तत्साम्ये शुचयो ग्राह्यास्तत्साम्ये शुचिमत्तराः' ॥ विप्रतिपत्तिर्विरुद्धार्थाभिधान एव भवति,

---

(१) **विस्मृ**.८।३६; **व्यमा**.३३१; **व्यक**.५२ विष्णुनारदौ; **स्मृसा**.१२१ तु (च) मनुः; **व्यचि**.५६ तु (च) व वि (वावि) विष्णुनारदौ; **व्यत**.२१५ व विशिष्यते (वातिरिच्यते) मनुः; **सेतु**.१२२ तु (च) स्राद्धि (स्राणि) मनुः.

(२) **व्यमा**.३३१.

(३) **विस्मृ**.८।३७; **व्यमा**.३३२ जानन्तोऽपि हि (पारयन्तोऽपि) क्ष्ये (क्ष्यं) भूता (भूत्वा) ल्या (ल्यो) वाऽप्यथ (चैव हि) प्रथमार्धद्वयम्; **अप**.२।७७ जानन्तोऽपि हि (पारयन्तोऽपि) क्ष्ये (क्ष्यं) वाऽप्यथ (चैव हि) प्रथमार्धद्वयम्; **व्यक**. ५८ अपवत्, प्रथमार्धद्वयम्; **गौमि**.१३।१३ अन्त्यार्धमेव; **दवि**. ३४९ अपवत्, प्रथमार्धद्वयम्; **व्यसौ**.५५ अपवत्, प्रथमार्धद्वयम्.

(४) **विस्मृ**.८।३८; **व्यमा**.३३२ वः (वं); **व्यक**.६० विष्णुयाज्ञवल्क्यौ; **व्यचि**.५७.

(१) **विस्मृ**.८।३९ परि (प्रति); **व्यमा**.३०८, ३२५, च (तु) : ३३५ मनुविष्णू; **अप**.२।७७; **व्यक**.५९ मनुविष्णू; **सवि**.१४१ (साक्षिद्वैधे बहूनां वा गुणवत्तमानां वा वचनं ग्राह्यम्); **व्यसौ**.५६-५७ त्कृष्टा (त्कर्षा).

न चाज्ञानादस्मरणाद्वा वस्तुनोऽभावो भवति । विप्रतिपत्तौ च नैकाधिकेनाधिक्यं ग्राह्यं, किन्तु द्वित्राद्यधिकत्वेनेत्युक्तम् । समेषु च इत्युभयार्थमुभयत्र च संबन्धः तेन समेषु गुणेषु बहुत्वेन निर्णयः कार्यः । तथा समेषु समांशेषु गुणोत्कर्षान्निर्णयः कार्यः । एकान्तगुणोत्कर्षे त्वसंख्येनापि निर्णयः । यथा शङ्खलिखितौ—कामं त्रयाणामेकोऽपि स्वपरिगृहीतः सर्वलोकसंमतः। व्यमा.३३५

(२) समसंख्यानां वा समगुणानां वा द्वैधे युक्तिसध्रीचीनं वचनं ग्राह्यमित्यर्थादुक्तं भवतीति ।

सवि.१४१

कूटसाक्ष्ये कार्यनिवर्तनम् । दण्डपरिमाणम् ।

**[१]यस्मिन् यस्मिन् विवादे तु कूटसाक्ष्यनृतं वदेत् । तत्तत्कार्यं निवर्तेत कृतं चाऽप्यकृतं भवेत् ॥**

**[२]शतनाशे षट्चत्वारिंशद्दिवसप्रतीक्षणम् । द्विशतनाशे त्रिसप्ताहप्रतीक्षणम् । पञ्चशतनाशे द्विसप्ताहप्रतीक्षणम् । सहस्रनाशे सप्ताहप्रतीक्षणम् ।**

अथ शतादिसंख्यासंख्येयत्वं ताम्रिकपणानामित्याह भारुचिः । सुवर्णमाषाणामित्याह वरदराजः । दण्डविधाने 'सहस्रं ब्राह्मणो दण्ड्यः' इत्यादौ सहस्रसंख्यासंख्येयत्वं ताम्रिकपणानामित्याह विज्ञानयोगी । भारुचिस्तु सहस्रसंख्यासंख्येयत्वं सुवर्णमाषाणामित्याह । अत्र देशतो व्यवस्था । सवि.१५०

पितापुत्रविरोधे न साक्षित्वम्

**[३]पितापुत्रविरोधे तु साक्षिणां दशपणो दण्डः ।**

## शङ्खः

असाक्षिणः

**[४]पित्रा विवदमानगुरुकुलवासिपरिव्राजकवानप्रस्था निर्ग्रन्थाश्चासाक्षिणः ।**

(१) पित्रा विवदमाननिर्ग्रन्थयोर्दोषादप्यसाक्षित्वसंभवे वचनादप्यसाक्षित्वे न विरोधः । व्यप्र.११४

(२) मिता.टीका—गुरुकुलेत्यनेनोभयोरपि ग्रहणम् । निर्ग्रन्था इति, पाषण्डिन इत्यर्थः । बाल.२।७०

समुदायसाक्षित्वं पृथग्वा

**[१]प्राड्विवाको नृपो वाऽथ समवेतान्पृथक् पृथक् ।**

## शङ्खलिखितौ

कीदृशाः साक्षित्वमर्हन्ति

**[२]अथ साक्षिणः । श्रोत्रियो गुणवान् रूपवान् माणवकः शीलवान् क्षत्रियस्तथा वैश्यः शूद्रो वा धर्मवांश्च वयःशीलोपपन्नः कर्मवादैर्विदितो न त्वेकः ।**

**[३]मौलाः प्रतिष्ठिताः साक्ष्यर्थं विदितवन्तः कुलीना ऋजवो जन्मतः कर्मतोऽर्थतः शुद्धाः पुत्रिणः सत्यवादिनः श्रौतस्मार्तक्रियायुक्ताः विगतद्वेषमत्सरा अप्रवासिनो युवानो लोभमोहविवर्जितास्त्र्यवराः नवसंख्याका न जातु कूटतां प्रतिपद्यन्ते । [४]कामं त्रयाणामेकोऽपि स्वपरिगृहीतः सर्वलोकसंमतः ।**

एको न साक्षी

**[५]एकः साक्षी सर्वथा न ग्राह्यः ।**

गुणवतोऽप्यग्रहणमिति सर्वथापदस्यार्थः । *व्यमा.३१८

साक्षिशपथविधिः

**[६]साक्षिणः सुवर्णरजतरत्नगोधान्यसूर्याग्निगजस्कन्धाश्वपृष्ठरथोपस्थशस्त्रादिभिः तथा पुत्रपौत्राद्यैर्यथावर्णं परिग्रहविशेषतः स्याद्देवब्राह्मणस्वामिनामग्रतः ।**

---

(१) **विस्मृ**.८।४०; **व्यक**.१०३ कूटसाक्ष्यनृतं वदेत (कौटसाक्ष्यं कृतं भवेत्) चाप्य (वाप्युप) मनुविष्णू; **व्यसौ**.९३ यस्मिन् वि (किल वि) क्ष्यनृतं (क्ष्यं कृतं) तत्तत् (तत्) निव (विनिव) तं चा (तम); **व्यप्र**.९३ कूटसाक्ष्यनृतं वदेत् (कौटसाक्ष्यं कृतं भवेत्). (२) **सवि**.१५०. (३) **विस्मृ**.५।११९.

(४) **मिता**.२।७०; **सवि**.१४० (परिव्राजक०) स्था निर्ग्रन्थाश्चा (स्थनिर्गन्धा अ); **व्यप्र**.११३; **व्यउ**.४८ ल (ला) स्थाश्चा (स्था अ); **समु**.३१ निर्ग्रन्थाश्चा (निरुद्धा अ).

* व्यचि. व्यमावत् ।

(१) **प्रका**.५५; **समु**.३३ ऽथ (ऽपि).

(२) **व्यक**.४४; **व्यसौ**.४२ (अथ साक्षिणः०) रूपवान् गुणवान् (गुणवान् रूपवान्) (माणवकः०) द्रो वा (द्रोऽथ) (च०) वादैर्वि (प्रदानैर्वै). (३) **सवि**.१३८.

(४) **व्यमा**.३३५. (५) **व्यमा**.३१८; **व्यचि**.३९.

(६) **व्यक**.५३ र्णं+(वत्) जत (जतवज्र) त्राद्यैः (त्रैः); **व्यचि**.५० त्राद्यैः (त्रैः); **व्यसौ**.५१ स्थ (स्था) (परिग्रह०) षतः (षः); **वीमि**.२।७५ (साक्षिणः ... तथा०) त्राद्यैः (त्रैः)

सुवर्णादिस्पर्शनेन सूर्यादिदर्शनेन शापयेदिति शेषः। तथा पुत्रपौत्रैरिति । पुत्रपौत्रशिरःस्पर्शनेन स्वल्पेऽर्थे शापयेदित्यर्थः। यथावर्णमिति । यस्य वर्णस्य यद्द्रव्यस्पर्शनेन शपथ आम्नातः। स्मृत्यन्तरे स तेनैव कारयितव्य इत्यर्थः। व्यक.५३

दुष्टसाक्षिलिङ्गानि

**[1]तत्र मन्त्रिभिः शास्त्रसामर्थ्यात् दुष्टलक्षणं ग्राह्यम्। तिर्यक् प्रेक्षते, समन्तादेवावलोकयति, अकस्मान्मूत्रपुरीषं विसृजति, देशादेशं गच्छति, पाणिना पाणिं पीडयति, नखान्निकृन्तति, मुखमस्य विवर्णतामेति, प्रस्विद्यति चास्य ललाटं, न चक्षुर्न च वाचं प्रतिपूजयति, अकस्माद् ददाति, प्रशंसति, पुनः पुनरन्यमपनुदति, बहिर्निरीक्षते, शस्त्रं परामृशति, शोकमुपवर्णयति, भूमिं विलिखति, शिरः प्रकम्पयति, ओष्ठौ निर्भुजति, सृक्किणी परिलेढि, अविस्मितः कर्मसु महत्स्वपि भ्रुवौ संहरति, हसति, तूष्णीं ध्यायति, पूर्वोत्तरविरुद्धं व्याहरति, एवमादि दुष्टलक्षणं क्रुद्धस्य च स्वामिनोऽन्यत्र प्रकृतिशीलात्।**

(१) विकृतस्वरादयः कूटत्वसंभावनायां हेतव इति भावः। व्यचि.५४

(२) अकस्मादिति तूष्णीमिति च यथायोगमनेकत्र संबन्धनीयम्। अन्यत्र प्रकृतिशीलादिति। प्रकृत्या स्वभावात् शीलं तिर्यक्प्रेक्षणादिधर्मो यस्य स तथोक्तस्ततोऽन्यत्रैतानि दुष्टक्रुद्धलक्षणानि। एतेन अवान्तर-

वैलक्षण्यस्य दुर्ज्ञेयत्वादत्यवधानेन परीक्ष्य वस्तुतत्त्वानुसरणं करणीयमिति सूचितम्। व्यप्र.१२४

असाक्षिणः

**[1]शुल्कगुल्माधिकृतौ दूतो वेष्टितशिराः स्त्रियश्च सर्वा गुरुकुलवासिनः परिव्राजकवनस्थनिर्ग्रन्थशङ्खव्यालग्राहिणः।**

(१) शुल्काधिकृतः शुल्कग्रहणस्थानाधिकारी, गुल्माधिकृतः, पदातिसमूहो गुल्मः, तदधिकृतः। गुरुकुलवासिनो ब्रह्मचारिणः। निर्ग्रन्थः क्षपणकः। व्यक.४७

(२) अत्राऽसाक्षिण इति प्रकृतम्। गुल्मः स्वस्थाननिवेशितः पदातिसमूहस्तदधिकृतः। वेष्टितशिराः उद्धतवेषो मूर्धव्याध्यभिभूतो वा। इतरे प्रसिद्धा व्याख्याततराश्च। व्यप्र.१२०

## कौटिलीयमर्थशास्त्रम्

कीदृशाः कति च साक्षिणः कर्तव्याः

**[2]संप्रतिपत्तावुत्तमः। असंप्रतिपत्तौ तु साक्षिणः प्रमाणं प्रात्ययिकाः शुचयोऽनुमता वा त्रयोऽवरार्ध्याः। पक्षानुमतौ वा द्वौ ऋणं प्रति, न त्वेवैकः।**

ऋणसाधनप्रकारमाह—संप्रतिपत्ताविति। धनिकनिवेद्यमानार्थाभ्युपगमे ऋणिकेन क्रियमाणे, उत्तमो निर्णयोपायः सिद्ध इत्यर्थः। असंप्रतिपत्तौ तु, साक्षिणः प्रमाणं विवादनिर्णयसाधनम्। साक्षिण इति लिखितस्याप्युपलक्षणम्। कथम्भूताः साक्षिणः कार्याः, प्रात्ययिकाः विश्वासार्हाः, शुचयः बाह्याभ्यन्तरशौचयुक्ताः, अनुमता वा वादिप्रतिवादिसंमताश्च, ते च त्रयोऽवरार्ध्याः त्र्यवराः। पक्षानुमतौ वा द्वौ उभयपक्षसंमतौ द्वौ वा साक्षिणौ, ऋणं प्रति ऋणविषये, न त्वेवैकः एकस्तु साक्षी नैव कार्यः। श्रीमू.

असाक्षिणः

**प्रतिषिद्धाः स्यालसहायान्वर्थिधनिकधारणिकवैरिन्यङ्गधृतदण्डाः। पूर्वे चाव्यवहार्याः राजश्रोत्रियग्रामभृतककुष्ठिव्रणिनः पतितचण्डालकुत्सितकर्माणोऽन्धबधिरमूकाहंवादिनः स्त्रीराज-**

अग्रतः+(पुत्रपौत्रशिरःस्पर्शनेन शापयेत्); **प्रका.**५८ (पृष्ठ०) त्राद्यैः (त्रैः) षतः (षितस्य) अग्रतः (अग्रे); **समु.**३६ (पृष्ठ०) त्राद्यैः (त्रैः).

(१) **व्यक.**५६-५७ ओष्ठौ निर्भु (तूष्णीं निर्भे) व्याह (व्यवह); **व्यचि.**५४ ग्राह्यम्+(तदाह) देवावलोकयति (दवलोकते) मूत्र (मूत्रं) देशं (देशान्तरं) खान् (खं) ददाति (वदति) प्रकम्पयति (कम्पयते) क्किणी (क्कनी) कर्म (स्वकर्म) तूष्णीं (दृष्टिं) (च०) शीलात् (शीलत्वात्); **व्यप्र.**१२४ (तत्र०) मूत्र (मूत्रं) नुदति (वदति) (शोकमुपवर्णयति, भूमिं विलिखति०) प्रक (प्रक्र) अवि (अतिवि) मह (अमह) (हसति०); **विता.**१८६ (तत्र... लोकयति०) मूत्र (मूत्रं) (देशादेशं गच्छति०) (मुख... भ्रुवौ संहरति०) (पूर्वोत्तरविरुद्धं व्याहरति०).

(१) **व्यक.**४७ ग्रन्थ (गन्ध); **व्यसौ.**४५ तौ (तो); **व्यप्र.**११९ (च सर्वा०) न्थश (न्थाः श).

(२) **कौ.**३।११. अग्रेऽपि इदमेव स्थलं बोध्यम्।

**पुरुषाश्च । अन्यत्र स्ववर्गेभ्यः ।**

साक्षिभावानर्हानाह— प्रतिषिद्धा इति । स्यालादयोऽष्टौ साक्षिभावे प्रतिषिद्धाः । तत्र अन्वर्थी आर्थिनमनुगतस्तदुपजीवी, न्यङ्गो निहीनाङ्गः, धृतदण्डः राजदण्डितः । शेषाः प्रतीताः । पूर्वं चाव्यवहार्या इत्यादि । पूर्वं अव्यवहार्याः पितापुत्राविभक्तभ्रात्रादयो व्यवहारानर्हाः पूर्वोक्ताः । अहंवादी साक्षी भवामीति स्वयमागतः । शेषाः प्रतीताः । सर्वं एते साक्षित्वे निषिद्धाः । अन्यत्र स्ववर्ग्येभ्य इति । स्वस्ववर्ग्यातिरिक्ताः प्रतिषिद्धातिरेकिणः सामान्यतः साक्षिणो भवेयुः । श्रीमू.

हिंसादिषु उक्तासाक्षित्वापवादः

**पारुष्यस्तेयसंग्रहणेषु तु वैरिस्यालसहायवर्जाः । रहस्यव्यवहारेष्वेका स्त्री पुरुष उपश्रोता उपद्रष्टा वा साक्षी स्याद् राजतापसवर्जम् ।**

पारुष्यस्तेयसंग्रहणेष्वित्यादि । तुशब्दो विशेषे । पारुष्यादिषु, वैरिस्यालसहायवर्जाः, सर्वे साक्षिणः स्युः । रहस्यव्यवहारेषु, एका स्त्री, एकः पुरुषः, एक उपश्रोता साक्षादश्रावितोऽपि समीपस्थितिवशात् श्रुतार्थः, उपद्रष्टा वा समीपस्थितिवशाद् यदृच्छादृष्टार्थो वा, साक्षी स्यात्, राजतापसवर्जं राजानं तापसं च वर्जयित्वा । श्रीमू.

**स्वामिनो भृत्यानामृत्विगाचार्याः शिष्याणां मातापितरौ पुत्राणां चानिग्रहेण साक्ष्यं कुर्युः । तेषामितरे वा । परस्पराभियोगे चैषामुत्तमाः परोक्ता दशबन्धं दद्युरवराः पञ्चबन्धम् । इति साक्ष्यधिकारः ।**

स्वामिन इति । ते, भृत्यानाम्, ऋत्विगाचार्याः शिष्याणां, मातापितरौ पुत्राणां च, अनिग्रहेण अबलात्कारेण आत्मेच्छयेत्यर्थः, साक्ष्यं साक्षिकर्म कुर्युः । तेषामितरे वेति । तेषां स्वामिनां ऋत्विगाचार्याणां मातापित्रोश्च, इतरे भृत्याः शिष्याः पुत्राश्च, अनिग्रहेण साक्ष्यं कुर्युः । परस्परेत्यादि । एषां स्वामिभृत्यादीनां परस्पराभियोगे, उत्तमाः परोक्ताः स्वामिऋत्विगादयः पराजिताश्चेद्, दशबन्धं पराजितधनदशभागं, दद्युः, अवरेभ्यः । अवराः भृत्यादयः, परोक्ताः, पञ्चबन्धं पराजितधनपञ्चभागं, दद्युः, उत्तमेभ्यः । इति साक्ष्यधिकार इति । व्याख्यात इति शेषः । श्रीमू.

वर्णभेदेन साक्षिवचनविधिः

**ब्राह्मणोदकुम्भाग्निसकाशे साक्षिणः परिगृह्णीयात् । तत्र ब्राह्मणं ब्रूयात्—सत्यं ब्रूहीति । राजन्यं वैश्यं वा—मा तवेष्टापूर्तफलं, कपालहस्तः शत्रुकुलं भिक्षार्थी गच्छेरिति । शूद्रं—जन्ममरणान्तरे यद् वः पुण्यफलं तद् राजानं गच्छेत् । राज्ञश्च किल्बिषं युष्मान् अन्यथावादे । दण्डश्चानुबन्धः । पश्चादपि ज्ञायेत यथादृष्टश्रुतम् । एकमन्त्राः सत्यमवहरतेति ।**

अथ साक्ष्यनुयोगविधिमाह— ब्राह्मणोदकुम्भाग्निसकाश इति । ब्राह्मणान् उदकुम्भं अग्निं चाग्रे कृत्वा, साक्षिणः, परिगृह्णीयात् विभावयेत् । ब्राह्मणानुयोगमाह— तत्र ब्राह्मणमित्यादि । राजन्यं वैश्यं वेति । ब्रूयादिति संबध्यते । वचनप्रकारः— मा तवेष्टापूर्तफलमिति । तव यज्ञफलं खातादिकर्मफलं च न सिध्येत् । कपालहस्तः भिक्षापात्रपाणिः, शत्रुकुलं शत्रुगृहं, भिक्षार्थी सन्, गच्छेः, यद्यनृतं ब्रूया इति शेषः । शूद्रानुयोगमाह— शूद्रमिति । ब्रूयादितीहापि संबध्यते । वचनप्रकारः— जन्ममरणान्तर इति । जन्ममरणयोर्मध्ये, यद् वः, पुण्यफलं कृतानां पुण्यकर्मणां फलं, तद् राजानं गच्छेत्, राज्ञश्च, यद् जन्ममरणान्तरे किल्बिषं पापं, तद् युष्मान् गच्छेत्, अन्यथावादे असत्यकथने । दण्डश्च अन्यथावादनिमित्तः, अनुबन्धः अनुयायी कालान्तरभावी । न चान्यथावादनिश्चयो निरुपाय इत्याह— पश्चादपीति । यथादृष्टश्रुतं सत्यं तदात्वे गूहितं, पश्चादपि कालान्तरेऽपि, ज्ञायेत असद्यत्नादिति शेषः । एकमन्त्राः यूयं सर्वे संभूय कृतसंमन्त्रणाः भूत्वा, सत्यं परमार्थं, अवहरत उपनयत इति । श्रीमू.

साक्षिणामनुक्तौ दण्डः

**अनवहरतां सप्तरात्रादूर्ध्वं द्वादशपणो दण्डः त्रिपक्षादूर्ध्वमभियोगं दद्युः ।**

अनवहरतामित्यादि । सत्यावहरणार्थं सप्तरात्रावधिर्देयः । तत ऊर्ध्वं, अनवहरतां द्वादशपणो दण्डोऽर्थादेकैकदिवसस्य । त्रिपक्षादूर्ध्वं, अभियोगं अभियोगद्रव्यं दद्युः, अर्थाद् दण्डसहितम् । इदं च विधानं

मानान्तरेण परमार्थे विज्ञाते सति द्रष्टव्यम् । श्रीमू.

साक्षिद्वैधे बहुत्वगुणाधिक्याद्यनुसारेण निर्णयः । अनिर्णये राजगामि धनम् ।

**साक्षिभेदे यतो बहवः शुचयोऽनुमता वा ततो नियच्छेयुः । मध्यं वा गृह्णीयुः । तद् वा द्रव्यं राजा हरेत् । साक्षिणश्चेदभियोगादूनं ब्रूयुरतिरिक्तस्याभियोक्ता बन्धं दद्यात् । अतिरिक्तं वा ब्रूयुस्तदतिरिक्तं राजा हरेत् । बालिश्यादभियोक्तुर्वा दुःश्रुतं दुर्लिखितं प्रेताभिनिवेशं वा समीक्ष्य साक्षिप्रत्ययमेव स्यात् ।**

साक्षिभेद इति । साक्षिणामन्योन्यवचनविसंवादे, यतः यस्मिन् पक्षे, बहवः शुचयः अनुमता वा, तिष्ठन्तीति शेषः, ततो नियच्छेयुः तं पक्षमाश्रित्य व्यवहारं निर्णयेयुः । मध्यं वा गृह्णीयुः उभयोः पक्षयोः साक्षिगुणसाम्ये उभयसमं कमपि प्रकारं गृह्णीयुः । तदसंभवे विसंवादितमर्थं राजा गृह्णीयादित्याह– तद्वा द्रव्यं राजा हरेदिति । साक्षिण इति । ते चेदभियुक्तद्रव्याद् ऊनं ब्रूयुः, तर्हि अभियोक्ता, अतिरिक्तस्य स्वार्थितस्य, बन्धं पञ्चभागं, दद्यात्, राज्ञे । अतिरिक्तं वा ब्रूयुः अभियोक्त्रर्थितादधिकं वा साक्षिणश्चेद् ब्रूयुः, तर्हि, तद् अतिरिक्तं राजा हरेत् । अत्रापवादमाह– बालिश्यादभियोक्तुर्वेति । अभियोक्तृमौर्ख्याद् वा, दुःश्रुतं लेखकेनान्यथाश्रुतं, दुर्लिखितं अन्यथा लिखितं च, समीक्ष्य पर्यालोच्य, प्रेताभिनिवेशं वा बन्धुमरणशोकनिमित्तं लेखकचित्तविक्षेपं च, समीक्ष्य, साक्षिप्रत्ययमेव स्यात् साक्षिवाक्यातिनिर्णयमेव ऋणादानं स्यात् । श्रीमू.

विसंवादिसाक्षिदण्डः

**साक्षिबालिश्येष्वेव पृथगनुयोगे देशकालकार्याणां पूर्वमध्यमोत्तमा दण्डा इत्यौशनसाः ।**

साक्षिबालिश्येष्वेव पृथगनुयोग इति । प्रत्येकं प्रश्ने साक्षिणां मौर्ख्यकृतेषु वचनविसंवादेषु, देशकालकार्याणां विसंवादे इति शेषः, पूर्वमध्यमोत्तमा दण्डाः यथासंख्यं पूर्वादिसाहसदण्डाः । इति औशनसाः ।

श्रीमू.

**कूटसाक्षिणो यमर्थमभूतं वा कुर्युर्भूतं वा नाशयेयुस्तद्दशगुणं दण्डं दद्युरिति मानवाः ।**

कूटसाक्षिण इति । कपटसाक्षिणः, यमर्थम्, अभूतं वा कुर्युः असत्यमेव कल्पयित्वा ब्रूयुः, भूतं वा नाशयेयुः यमर्थं सत्यमेव हीनं कथयेयुः, तद्दशगुणं कल्पितनाशितदशगुणं दण्डं दद्युः । इति मानवाः । श्रीमू.

**बालिश्याद् वा विसंवादयतां चित्रो घात इति बार्हस्पत्याः ।**

बालिश्याद्वेति । मौर्ख्याद्, विसंवादयतां विसंवादं कथयतां, चित्रो, घातः वधः । इति बार्हस्पत्याः । श्रीमू.

**नेति कौटल्यः । ध्रुवा हि साक्षिणः श्रोतव्याः । अशृण्वतां चतुर्विंशतिपणो दण्डः, ततोऽर्धमध्रुवाणाम् ।**

नेति कौटल्य इति । एतच्च विशेषपरं न तु प्रतिषेधपरम् । विशेषश्चायं — यद् ध्रुवसाक्षिण एव साक्षिपदे कर्तव्या इति । तदाह — ध्रुवा हि साक्षिणः श्रोतव्या इति । अशृण्वतां श्रवणार्थमाहूतानामनागतानां ध्रुवाणां, चतुर्विंशतिपणो दण्डः । ततोऽर्धं द्वादशपणः, अध्रुवाणाम् । तत्र ध्रुवाश्चत्वारिंशत्कुलिकाः, तदनन्तर्गता अध्रुवाः । श्रीमू.

साक्षिणो धर्माधिकरणे आनयनीयाः

**देशकालाविदूरस्थान् साक्षिणः प्रतिपादयेत् ।**
**दूरस्थानप्रसारान् वा स्वामिवाक्येन साधयेत् ॥**

अध्यायान्ते श्लोकमाह— देशकालाविदूरस्थानिति । देशतः कालतश्चादूरस्थितान् साक्षिणः प्रतिपादयेत् अर्थी स्वयमेवानीय वादयेत् । दूरस्थान्, अप्रसारान् वा समीपस्थानेवाहूतानागतान् वा, स्वामिवाक्येन प्राड्विवाकाज्ञया, साधयेत् आनाययेत् । श्रीमू.

## मनुः

कीदृशाः साक्षित्वमर्हन्ति

**यादृशा धनिभिः कार्या व्यवहारेषु साक्षिणः ।**
**तादृशान् संप्रवक्ष्यामि यथा वाच्यमृतं च तैः ॥**

(१) साक्षिलक्षणोपन्यासः श्लोकः । यादृशाः साक्षिणो

(१) **मस्मृ.**८।६१; **व्यमा.**३१७ ऋतं (मतं); **व्यक.**४४ धनि (अर्थि); **स्मृच.**७५; **पमा.**९४; **व्यचि.**३८ व्यकवत्; **स्मृचि.**४४; **नृप्र.**९ यथा...तैः (यथावदनुपूर्वशः); **व्यसौ.** ४२ व्यकवत्; **व्यप्र.**११० व्यकवत्; **बाल.**२।६८ व्यकवत्; **प्रका.**४८; **समु.**२७.

यज्जातीया यद्गुणयुक्ताश्च धनिभिरुत्तमर्णैर्व्यवहारेषु धनप्रयोगादिषु कर्तव्यास्तादृशान्वक्ष्यमाणेन कथयिष्यामि। यथा च वाच्यं वक्तव्यं पृष्टैः सद्भिस्तैः 'पूर्वाह्णे' इत्यादि तमपि प्रकारं वक्ष्यामीति। *मेधा.

(२) यथा — यादृक् शपथादि कृत्वा। ऋतं सत्यम्। मवि.

**गृहिणः पुत्रिणो मौलाः क्षत्रविट्शूद्रयोनयः।**
**अर्थज्ञाः साक्ष्यमर्हन्ति न ये केचिदनापदि ॥**

(१) कृतदारपरिग्रहा गृहीणः। गृहशब्दो दारेषु वर्तते। ते हि स्वकलत्रपरिभवभयान्न कूटमाचरन्ति। आत्मनि केचित् निरपेक्षा अपि भवन्ति। अन्यदेशान्तरगमनेनात्मानं रक्षयिष्याम, इहैव च क्वचिद् गुप्ता भविष्यामो, धनं मित्रे वाऽर्जयाम इत्यनया बुद्ध्या अनृतमपि वदन्ति। कुटुम्बिनस्तु स्वकुटुम्बभयात् क्व वात्मानं न परिरक्षिष्याम इति दूरं कृत्वा, कुटुम्बस्य सापेक्षतया राजदण्डभयान्नान्यथा प्रवर्तन्ते। पुत्रिण इति। पुत्रस्नेहात्पुत्रिणः। अपुत्रदारश्च साक्षिप्रश्नकाले साध्वाचारोऽपि कदाचिन्न संनिहितो भवति। स हि नैकस्मिन् देशे आस्थानवान् भवति। एवं मौला अपि व्याख्येयाः। मौला जानपदास्तद्देशाभिजनाः। ते हि स्वजनज्ञातिमध्ये पापभीरुतया न मिथ्या वदन्ति। मूलं प्रतिष्ठा। सा येषांमस्ति ते मौलाः। अर्थकथनमेतत्। तद्धितस्तु [२]भवार्थ एव कर्तव्यः। यो हि यत्र [३]भवः सोऽपि तस्यास्तीत्यविरुद्धम्। क्षत्रविट्शूद्रयोनयः। न ब्राह्मणः। सर्वदा ह्यस्याध्ययनाध्यापने विहिते, अन्वहं वाऽग्निहोत्रहोमः। तत्र दूरस्थे राजनि धर्मोपरोधोऽस्य मा भूदित्यसौ न कर्तव्यतयोपादीयते। यदृच्छयाऽवगतार्थस्तु साक्ष्यन्तराभावे गरीयसि कार्ये मुख्यतमः स साक्षी। तथा च 'ब्रूहीति ब्राह्मणं पृच्छेदि'ति साक्षिप्रश्नो भविष्यति। योनिशब्दः प्रत्येकमभिसंबध्यते। [४]क्षत्रं योनिः उत्पत्ति[५]कारणमस्यासौ क्षत्रयोनिः। क्षत्रजातीय इत्यर्थः। क्षत्राद्वा योनिर्जन्मास्येति 'पञ्चमी'ति योगविभागात्समासोऽप्युक्तः। अर्थिना यदा उक्त भवन्त्येते मम साक्षिणः [१]तदा साक्षिकर्मणि योग्या भवन्ति। ये तु स्वयमागत्य साक्ष्यं ददति न ते साक्षिणः। अनापदि, आपत् साक्ष्यन्तराभाव इति केचित्, तदयुक्तम्। विसंवादकत्वमसाक्षित्वे कारणम्। तत्संवादकान्तराभावेनापैति। न वयं ब्रूमः, प्रतिषिद्धसाक्षिभावा विद्यमानानृताभिधानहेतवोऽर्थसंबन्ध्यादयो वाऽस्यामवस्थायां प्रतिप्रसूयन्ते। किं तर्हि? येषां कदाचिदाहूयमानानां धर्मविरोधो भवति श्रोत्रियादीनां, तेषामविद्यमानेष्वन्येष्वनुभूतार्थानामिदं प्रत्यनुज्ञानं न पुनर[२]नृताभि[३]धानसंभावनाहेतुसद्भावेऽप्राप्तप्रमाणभावानामापदि प्रामाण्यम्। मेधा.

(२) न तु ये केचिदृणादानादौ साक्षिणः। तदनपेक्षे व्यवहारे वाग्दण्डपारुष्यादौ पुनः साक्षिण उक्तगृहस्थादिव्यतिरिक्ता अपि भवन्ति। *गोरा.

(३) आपदि अनेवम्भूता अपि, ये केचिदिति, गृहित्वादिगुणशून्या अपि निर्दोषतामात्रेण साक्षित्वमर्हन्ति इत्यर्थः। +व्यमा.३१७

(४) मौलाः प्रसिद्धकुलोद्भवाः। व्यक.४४

(५) मौलाः तद्ग्रामे परम्परया निवसन्तः। मवि.

(६) मौलाः प्रतिष्ठिताः। अर्थज्ञाः साध्यमर्थं समक्षं विदितवन्तः। गृहिण इत्यादिषु पुल्लिङ्गनिर्देशो विवक्षितः। उपादेयगतत्वात्। स्मृच.७५

(७) मूलं पूर्ववृत्तान्तस्तद्विदन्तीति मौलाः। 'तदधीते तद्वेद' इत्यणिति मदनरत्ने। वक्ष्यमाणयाज्ञवल्क्यवचनसंवादात्साक्षित्वेनैव पूर्ववृत्तान्तवेदित्वाक्षेपात्तदर्थकमौलपदानर्थक्यप्रसङ्गाच्च कल्पतरुव्याख्यानमेव सम्यक्। रत्नाकरेऽपि मौलाः कुलीना इत्येवं व्याख्यातम्। मूलं प्रतिष्ठा सा येषामस्ति ते मौलाः। मेधातिथिरपीममर्थमनुमन्यते। प्रतिष्ठान्तरस्य साक्षिलक्षणानुपयोगात्। पुत्रादिप्रतिष्ठायाः पदान्तरैरेवोपादानात्। ×व्यप्र.११०

* गोरा., ममु. मेधागतम्।

(१) मस्मृ.८।६२ र्थज्ञाः (र्थ्युक्ताः); व्यमा.३१७ मस्मृवत्; अप.२।६८; व्यक.४४; मभा.१३।२ लाः (ल्याः); स्मृच.७५; पमा.९४ अर्थज्ञाः (प्रवक्तुं); व्यचि.३८ मस्मृवत्; स्मृचि.४४ मस्मृवत्; व्यसौ.४२ मस्मृवत्; व्यप्र.११० मस्मृवत्; बाल.२।६८ मस्मृवत्; प्रका.४८; समु.२७.

१ अभि. २ भावा. ३ भावः. ४ क्षत्र. ५ त्तिः.

* वाक्यार्थः मेधावत्। ममु. गोरावत्।

\+ व्यचि. व्यमागतम्। × शेषं मेधागतम्।

१ सदा. २ अनृतानाम्. ३ अभिधानादिप्रामाण्यपर्यन्तांशो नास्ति।

(८) मौलाः कुलश्रेणीप्रधानभूताः । नन्द.

**आप्ताः सर्वेषु वर्णेषु कार्याः कार्येषु साक्षिणः ।**
**सर्वधर्मविदोऽलुब्धा विपरीतांस्तु वर्जयेत् ॥**

(१) आप्ता अविसंवादका यथादृष्टार्थवादिनः, येषां लोको विप्रलम्भकत्वं न संभावयति, धर्मानुष्ठानपरा ये ख्याताः । सर्वधर्मविदः श्रौतं स्मार्तमाचारनिरूढं च सर्वं धर्मं, इह नरकः फलं, इह स्वर्गः, इत्येवं निरवशेषं जानन्ति, ते ह्यनृताभिधाने नरकं पश्यन्तो बिभ्यन्ति । अलुब्धा उदारसत्त्वा न स्वल्पं धनं बहु मन्यन्ते । एकैकस्य समस्तानि सर्वाणि विशेषणानि । साक्षिक्रियायां गुणभूतत्वाद्गुणे च साहित्यस्य विवक्षितत्वात् । सर्वेषु वर्णेष्विति । न जातिनियमोऽस्तीति उक्तं भवति । यत्पुनर्जातिव्यवस्थावचनं तदुपरिष्टाद्वक्ष्यामः । कार्येषु सर्वकार्येष्वित्यर्थः । तदेतदुक्तं भवति—सर्वैः कार्यिभिः सर्वे वर्णा यथासंभवं साक्षिणः कर्तव्याः, कार्येषु ऋणादानादिषु यथोक्तलक्षणाः । विपरीतांस्तु वर्जयेत् । यद्यपि विशिष्टेष्वभिहितेषु तद्विपरीतानां प्रसङ्ग एव नास्ति तथापि लौकिकोऽयं पर्युदासः । प्रायेण हि लौकिका अन्यं[१] विधायान्यं तद्विपरीतं निषेधयन्ति । तथा च भवन्ति वक्तारः । क्रिया हि द्रव्यं विनयति नाद्रव्यमिति । किं चाविसंवादकत्व[२]मिह प्रधानं साक्षिलक्षणं तच्च न विधिमुखेन शक्यावसानम् । किन्तु विसंवादकरणाभावमुखेन । न ह्यविसंवादकत्वं प्रत्यक्षदृश्यम् । तद्धि यथार्थाभिधानम् । श्रोत्रग्राह्ये च वस्तुनि कुतः प्रत्यक्षो यथार्थनिश्चयः । प्रत्यक्षत्वे हि नैव साक्ष्यवगमोऽन्विष्येत[३] । न च सर्वत्र परोक्षे वस्तुनि शब्दावगम्ये प्रमाणान्तरसंवादसंभवः । तस्माद्यानि भूयस्त्वेन मिथ्याभिधानकरणतया दृष्टानि तदभाव[४]निश्चयेनाविसंवादकत्वमनुमीयते[५] । अतस्तत्प्रदर्शनार्थोऽयमुपक्रमो विपरीतांस्तु वर्जयेदिति । मेधा.

(२) वर्जयेदिति । सिद्धस्य तु शब्दाभिधानं दण्डार्थम् । *गोरा.

(३) 'क्षत्रविट्शूद्रयोनयः' इत्युक्तत्वात्ततो ब्राह्मणपरिग्रहार्थं सर्वेषु वर्णेष्वित्यभिधानम् । *ममु.

(४) आप्ताः धर्मनिश्चये प्रधानभूताः । *नन्द.

(५) ब्राह्मणस्य ब्राह्मणाः । क्षत्रियस्य क्षत्रियाः । एवमग्रे । *भाच.

जातिवर्णभेदेन साक्षिभेदः

**स्त्रीणां साक्ष्यं स्त्रियः कुर्युर्द्विजानां सदृशा द्विजाः ।**
**शूद्राश्च सन्तः शूद्राणामन्त्यानामन्त्ययोनयः × ॥**

(१) यत्र पुमांसावर्थिप्रत्यर्थिनौ तत्र स्त्रीणां साक्ष्यं नास्ति । यत्र तु स्त्रिया सह पुंसः[१] कार्यं स्त्रीणामेव चेतरेतरं स्वल्पं तत्र भवन्त्येव स्त्रियः साक्षिण्यः । न चायं नियमः, स्त्रीणां स्त्रिय एव साक्ष्यं कुर्युर्न पुमांसः । केवलं पुंविषये व्यवहारे क्वचिदेव स्त्रीणां साक्ष्यं यतोऽस्थिरत्वादिति हेतुरुपात्तः । भवन्ति काश्चन स्त्रियो ब्रह्मवादिन्य एव सत्यवादिन्यः स्थिरबुद्धयश्च । द्विजानां सदृशा द्विजाः । यः प्रमाणतरो द्विजः स विसदृशं शङ्क्यमानप्रमाणभावमपि दिशन् साक्ष्ये न श्रद्धेयवचनो भवति । यतस्तथाभूतेन प्रमाणभूत एव द्रष्टव्यः, स हि तस्य सदृशः, सदृशानां हि समानं देशः स्थानमितरेतरकार्यज्ञत्वं च संभाव्यते । इतरस्य तु तत्प्रदेशसंनिधिर्यत्नेन साध्यः सदृशत्वौचित्यात्सिद्ध एव । एवं हीनस्य हीनगुणोऽपि सादृश्याद्[२] ग्रहीतव्यो, न तूत्कृष्टगुणो न ग्रहीतव्यः । सादृश्यं जात्या शिल्पादिना वा गुणेन क्रियया वा श्रुताध्ययनादिकया समानशीलतया च । एतच्च नातिमहति कार्ये द्रष्टव्यम् । न हि हीनगुणेषु प्रत्ययितता निश्चीयते । अन्त्यानां चण्डालश्वपचा-

---

(१) **मस्मृ.**८।६३; **व्यमा.**३१७; **व्यक.**४४; **स्मृच.**७७; **पमा.**९४; **व्यचि.**३८; **स्मृचि.**४४; **नृप्र.**१० तु (च) उत्त.; **सवि.**१३७ ब्धा (ब्धान्); **व्यसौ.**४२ धर्म (कर्म); **व्यप्र.**११०; **बाल.**२।६८:२।८०उत्त.; **प्रका.**४८; **समु.**२७.

१ अन्यविषयेऽन्ये तद्. २ कमिह. ३ न्विष्यते. ४ न भाव. ५ मीयन्ते.

* शेषवाक्यार्थः मेधावत् । ×गोरा. अशुद्धिसंदेहान्नोद्धृतम् ।

(१) **मस्मृ.**८।६८; **विश्व.**२।७३; **व्यमा.**३२३; **अप.**२।६८; **व्यक.**४५ सदृशा द्विजाः (द्विजसत्तमाः) मनुकात्यायनौ; **स्मृसा.**९९ द्राश्च सन्तः (द्राः सन्तश्च); **व्यचि.**३८ यः कुर्युः (यं कुर्यात्) शेषं स्मृसावत्; **स्मृचि.**४५ (=) स्मृसावत्; **नृप्र.**९ प्रथमपादः; **व्यत.**२१४; **व्यसौ.**४३; **व्यप्र.**१११; **विता.**१५५; **राकौ.**४०२ प्रथमपादः; **बाल.**२।६८ व्यकवत्; **सेतु.**१२१ स्मृसावत्; **समु.**२८; **विव्य.**१२.

१ पुंस. २ सदृशाद्.

दीनां तादृशा एवान्त्ययोनयः । अन्ते भवा अन्त्याः । सा योनिरुत्पत्तिकारणं येषामिति विग्रहः । प्रदर्शनं चैतत् ये समाना जातिशिल्पशीलादिभिस्तेषामिहानुक्तानामपि वणिक्कारुकुशीलवादीनां, हेतोः समानत्वात् । मेधा.

(२) एतद्दोषविरहे चाण्डालादयोऽपि ग्राह्या इत्येतदर्थं स्त्रीणामित्यादि प्रतिषेधः । सन्तोऽसंभावितदोषाः । मवि.

(३) स्त्रीणामन्योन्यव्यवहारे ऋणादानादौ स्त्रियः साक्षिण्यो भवन्ति । द्विजानां ब्राह्मणक्षत्रियविशां सदृशाः सजातीयाः साक्षिणः स्युः । एवं शूद्राः साधवः शूद्राणां, चाण्डालादीनां चाण्डालादयः साक्षिणो भवेयुः । एतच्च सजातीयसाक्ष्यभिधानम् । उक्तलक्षणसजातीयसाक्ष्यसंभवे विजातीया अपि साक्षिणो भवन्ति । अत एव याज्ञवल्क्यः— 'यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः' । ममु.

(४) उक्तेषु प्रतिप्रसवतया व्यवस्थितिमाह— स्त्रीणामिति । सन्तो द्विजशुश्रूषादिरताः । मच.

(५) स्त्रीणामसाक्षित्वस्य वक्ष्यमाणस्यायमपवादः । नन्द.

साक्षिनिरुक्तिः । सत्योक्तिप्रशंसा ।

**समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिध्यति ।**
**तत्र सत्यं ब्रुवन् साक्षी धर्मार्थाभ्यां न हीयते ॥**

(१) ननु च 'अनुभावी तु यः कश्चित्' इत्यनेनोक्तमेवैतत्कथं चान्यथासिद्धिराशङ्क्यते येनेदमुच्यते दर्शनश्रवणाभ्यां साक्ष्यसिद्धिरिति । अत्रोच्यते— साक्षी व्यवहरिष्यता कर्तव्यः, त्वं मे साक्षी भविष्यसि इत्युक्तम् । तत्र य एवमनुक्तः स न प्राप्नोति एवमर्थमिदमुच्यते । यस्तत्र संनिहितः कथञ्चिदनुभविता त्वं स्मर्तुमर्हस्यावयोरमुमर्थमित्येवमनुक्तेऽपि भवत्येव साक्षी, समक्षदर्शनात्साक्षादनुभवाच्छ्रवणाच्च[1] । समक्षशब्दानुषङ्गः कर्तव्यः । यत्कुतश्चिदेकेन श्रूयते, ततोऽन्येन तत्परम्पराश्रुतं, तेन परम्पराश्रावी न साक्षी । यथैतेनेदमकार्यं कृतमिदमस्मै वा धारयतीति लोकप्रसिद्ध्याऽवगतं[2], न तु प्रमाणतः । तत्र समक्षदर्शनं साक्षादनुभवनमर्थविषयम् । ऋणप्रयोगदण्डपारुष्यादि साक्षाद्दृष्टं चक्षुर्व्यापारेण, वाक्पारुष्यं तथेदमस्मान्मया गृहीतमित्येवमादिविषयं शब्दश्रवणम् । यद्यपि, दृशिरुपलब्धिमात्रवचनः, तथापि[3] वृत्तानुरोधितया श्रोत्रज्ञानं श्रवणं भेदेनोपात्तम् । एतावच्चात्र विवक्षितम् । प्रमाणतो येनानुभूतं स साक्षी । समक्षशब्दग्रहणं प्रमाणमात्रोपलक्षणार्थम् । तेनानुमानादिनाऽप्यनुभूतमनुभूतमेव । अत आप्तागमात् श्रुतमप्रत्यक्षमपि प्रमाणम् । उत्तरस्तु श्लोकार्धोऽनुवाद एव । सत्यवचनस्य विहितत्वात् । असत्यवादिनो धर्मार्थहानेश्च प्रमाणान्तरावगतत्वात् । *मेधा.

(२) चक्षुर्ग्राह्ये साक्षाद्दर्शनात्, श्रोत्रग्राह्ये च साक्षात् श्रवणात् साक्ष्यं सिध्यति । सत्यवचनेन धर्मोत्पादाद्दण्डाभावः । गोरा.

(३) द्वयमपि यदि वादिद्वयसंनिधिः । व्यमा.३१७

(४) श्रवणाद् आप्तवचनसंज्ञानात् । मवि.

(५) साक्षिपदस्य यौगिकत्वमाह– समक्षेति । +मच.

(६) समक्षदर्शनस्य साक्ष्यहेतुत्वं पाणिनिरपि स्मरति, 'साक्षाद्द्रष्टरि संज्ञायाम्' (व्यासू.५।२।९१) इति । तत्तु व्युत्पत्तिमात्रमव्यापकत्वात् । श्रुतसाक्ष्यादीनामपि साक्षित्वव्यवहारविषयत्वात् । अत एव श्रवणादित्युपलक्षणं प्रमाणमात्रस्य । विवादविषयप्रमाता साक्षीति विवक्षितम् । व्यप्र.१०६

(७) साक्षित्वं च वादिनिष्ठविवादविषयतदनुकूलव्यापारान्यतरविषयकसाक्षात्कारवत्त्वम् । तेन चौर्यहिंसादिजनकव्यापारसाक्षात्कारिण्यपि साक्षित्वमिति सर्वनिबन्धाः । सिन्धुपारीयास्तु लाघवाद् विवादविषयसाक्षात्कारित्वमेव तत् । तेन तज्जनकव्यापारसाक्षात्कारवति न साक्षित्वमित्याहुः । स च द्विविधः । दृष्टसाक्षी श्रुत

(१) **मस्मृ**.८।७४; **मिता**.२।६८ पू. **व्यमा**.३१७ पू.; **व्यक**.४१ पू., ५६ उत्त.; **स्मृच**.७५पू.:८५; **पमा**.९३साक्ष्यं (साक्षी) पू.; **दीक**.३८ पू.; **व्यचि**.३५पू.; **नृप्र**.९ पू.; **व्यत**.२११ पू.; **सवि**.१४१पू., पितामहः; **व्यसौ**.३९ पू.; **व्यप्र**.१०६ पू.; **व्यउ**.४७ पू.; **विता**.१५६ पू.; **राकौ**.४०१ पू.; **सेतु**.११५ पू.; **प्रका**.४८ मक्ष (मक्षं) पू., ५५ उत्त.; **समु**.२७ पू., ३३ उत्त.

* व्यक., व्यत., सेतु. मेधावत् । + शेषं मेधावत् ।

[1] भावात् . [2] ऽगतम् । [3] तथापि यद्वद् वृत्ता.

साक्षी च । व्यउ.४६-४७

(८) तत्र सभायाम् । भाच.

**साक्षी दृष्टश्रुतादन्यद् विब्रुवन्नार्यसंसदि ।**
**अवाङ्नरकमभ्येति प्रेत्य स्वर्गाच्च हीयते ॥**

(१) असत्याभिधाने साक्षिणां फलदर्शनार्थमिदम् । दृष्टश्रुतशब्द उपलब्धिपर्याय इत्युक्तम् । तस्मादन्यदनुपलब्धं तच्चेद् ब्रवीति । आर्याः सभ्याः सम्यक्कारिणः । तेषां संसदि सभायाम् । अवाङ् अधोमुखः, नरकं याम्यं यातनास्थानं गच्छति । प्रेत्य मृत्वा, स्वर्गाच्च हीयते भ्रश्यति । यदप्यनेन स्वर्गारोहणिकं कर्म कृतं तदपि कौटसाक्ष्यपापस्य गुरुत्वात्प्रतिबध्यते ।न तु स्वर्गस्य कर्मणः पापेनान्येन नाशः । स्वफलविधित्वात् कर्मणामन्यत्र प्रायश्चित्तेभ्यः । *मेधा

(२) आर्यसंसदि ब्राह्मणसभायाम् । ×गोरा.

(३) विब्रुवन् विशेषेण ब्रुवन् । नरकानुभवान्तेऽपि सुकृतनाशात् स्वर्गाद्धीयते न स्वर्गं प्राप्नोति । मवि.

लेखानिबद्धोऽपि साक्षी भवति

**यत्रानिबद्धोऽपीक्षेत शृणुयाद् वाऽपि किञ्चन ।**
**पृष्टस्तत्रापि तद्ब्रूयात् यथादृष्टं यथाश्रुतम् ॥**

(१) ननु चोक्तं समक्षदर्शनादित्यत्र यथाकथञ्चिदनुभूतवतोऽनियुक्तस्यापि साक्ष्यमस्तीति । तत्र किमनेन यत्रानिबध्दोऽपीति । को वा विशेषः ? उच्यते । लेख्यारूढस्य व्यापारविशेषाद्युक्तं साक्षित्वं न पुनरनारूढस्य । आरोहणस्यानर्थक्यप्रसङ्गाद्दुःसाक्षित्वम् । अत एतामाशङ्कामपनेतुमिदमुच्यते । पूर्वस्तु श्लोको यत्रानुक्ताः[१] साक्षिणः । अयं तु यत्र ससाक्षिकं लेख्यम् । अनिबध्दो लेख्यमनारूढोऽपीत्यर्थः । ईक्षणश्रवणे व्याख्याते । शेषं सुबोधम् । मेधा.

(२) त्वं मे साक्षी स्या इत्येवमनिबध्दोऽपि यत्र किञ्चिद् ऋणादानादि पश्येत्, वाक्पारुष्यादि शृणुयात् तत्रापि पृष्टः सन् साक्षी यथोपलब्धं कथयेत् । *गोरा.

(३) अनिबद्धोऽनधिकृतः । प्रसङ्गात्तत्रागतः । मवि.

(४) अयं त्वकृतसाक्षी सामान्येन मनुनोक्तः । अस्य 'ग्रामश्च प्राड्विवाकश्च राजा चे'त्यादिना नारदादिभिः षाड्विध्यमुक्तम् । ×ममु.

(५) यत्र विवादपदे । +नन्द.

(६) यत्र साक्ष्ये । +भाच.

साक्षिसङ्ख्या

**पृष्टोऽपव्ययमानस्तु कृतावस्थो धनैषिणा ।**
**त्र्यवरैः साक्षिभिर्भाव्यो नृपब्राह्मणसंनिधौ ॥**

(१) यः कृतावस्थ आहूतोऽभियुक्तो गृहीतप्रतिभूश्च राजसकाशे प्राड्विवाकेनान्यैर्वा पृच्छयते—किमस्मै धारयसि नेति पृष्टः सन्नपव्ययतेऽपह्नुते ह्नुवानो धनैषिणा स्वधनं पूर्वप्रयुक्तमात्मनः साधयितुमिच्छता साक्षिभिर्भाव्यो विप्रतिपन्नः प्रतिपादयितव्यः । त्र्यवरैस्त्रय अवरे येषां तैस्त्र्यवरैः । अवरमपचयान्नियमाह—यद्यत्यन्तं न्यूनास्तदा त्रयः स्युः । अन्यथा त्रिभ्य ऊर्ध्वम् । नृपब्राह्मणसंनिधाविति । ननु च तेषामेव यैर्न्यायः प्रारब्धस्तत्र तत्संनिधान एव साक्षिप्रश्नः प्राप्तः किमनेन नृपब्राह्मणसंनिधाविति । नैवं, प्रमाणपुरुषप्रेष्रणेनाऽपि साक्षिप्रश्न उपपद्यत इति साक्षात्प्रष्टव्य इति पुनर्वचनम् । ÷मेधा.

(२) कृतावस्थः आसेधादिना कृतमवस्थानं यस्य सः, तथा । व्यक.४३

(३) भाव्यः साधनीयः । त्रित्वादूनसंख्या साक्षिष्वप्रशस्तेत्यर्थः । स्मृच.७६

(४) कृतावस्थः कृतपीडः । भाच.

---

* ममु. मेधागतम् । मच. मेधागतं मविगतं च ।

× शेषं मेधागतम् ।

(१) **मस्मृ**.८।७५; **व्यक**.५९ अवाङ् (आरात्) मभ्ये (माप्नो); **स्मृच**.८६; **प्रका**.५६; **समु**.३४.

(२) **मस्मृ**.८।७६क.,ख.,घ. पुस्तकेषु पृष्टः (दृष्टः);**शुनी**.४।६९१**बद्धो** (युक्तो) तद् (स); **व्यक**.४२ऽपीक्षे(वीक्ष्ये);**व्यत**.२११ निब (निरु) ऽपीक्षे(वीक्ष्ये); **व्यप्र**.१०९; **सेतु**.११६ ऽपी (वी); **प्रका**.५२ ऽपी (वी) तद् (यद्); **समु**.३१ प्रकावत्.

१ त्र मुक्तकाः.

* मच. वाक्यार्थो गोरावत् । × वाक्यार्थो गोरावत् ।

+ शेषं मविगतम् । ÷ गोरा., ममु.वाक्यार्थः मेधावत् ।

(१) **मस्मृ**.८।६०; **व्यक**.४३ णा (णाम्); **मभा**.१३।२ र्भाव्यो (र्भाव्यं) उत्त.; **समु**.७६ उत्त.; **व्यसौ**.४०. षिणा (रिव) कात्यायनः; **प्रका**.४९; **समु**.२८ स्तु (श्च).

असाक्षिणः

**नार्थसंबन्धिनो नाप्ता न सहाया न वैरिणः ।**
**न दृष्टदोषाः कर्तव्या न व्याध्यार्ता न दूषिताः ॥**

(१) तानि इमानि संभाव्यमानमिथ्याभिधानकरणत्वेन पठ्यन्ते । तत्रार्थसंबन्धिन उत्तमर्णाधमर्णाद्याः । उत्तमर्णा ह्यधमर्णवचनेन पराजीयमानास्तदानीमेव रोषावेशतः[1] स्तम्भयन्ति धनं प्रत्यादातुमधमर्णम्, अतोऽसौ[2] संनिहितधनत्वाच्चित्तमनुवर्तमानः शक्यते । तस्मादसौ न साक्षी । उत्तमर्णोऽपि निर्धनेऽधमर्णे व्यवहारजयाच्च धनप्राप्तौ मह्यमयं प्रतिदास्यतीत्यनया बुद्ध्या कदाचित्तत्पक्षानुगुणं वक्तीति सोऽप्यसाक्षी ।

अथवाऽर्थः प्रयोजनम् । यस्य साक्षिणो विवादिभ्यां किञ्चित्प्रयोजनं साध्यं, तेन वा तयोः स उपकारगन्धान्न साक्षी । यो वा व्यवहारगतेनार्थेन समानफल इत्येवंप्रकारा अर्थसंबन्धिनः । आप्ता मैत्र[3]बान्धविकया कार्याभ्यन्तराः पितृव्यमातुलादयः । सहायाः प्रतिभूप्रभृतयः । वैरिणः प्रसिद्धाः । दृष्टदोषा अन्यत्र कृतकौटसाक्ष्याः, अन्यद्वा प्रतिषिद्धमाचरितवन्तः । व्याध्यार्ता रोगपीडिताः, न पुनरीषद्रोगिण इत्यार्तग्रहणम् । पीडितस्य हि क्रोधविस्मृत्यादयो मिथ्यावचने संभाव्यन्ते । दूषिताः पातकिनोऽभ्यस्तोपपातकाश्च । दृष्टदोषग्रहणं तु तेषामेवं कृतनिग्रहाणां परिग्रहार्थम् । ते हि राजभिर्धृत[4]दण्डग्राहितविनयत्वान्न संप्रति दूषिता भवन्ति । *मेधा.

(२) साक्षिणो भयलोभरागद्वेषस्मृतिभ्रंशादिनाऽन्यथाभिधानाशङ्कायां न कार्याः । ऋणाद्यर्थसंबन्धिमित्रवैरिकृतकौटसाक्ष्यव्याधिमूर्च्छितमहापातकादिदूषिता न कार्याः । ×गोरा.

(३) अर्थसंबन्धिनस्तज्जयफलभागिनः । आप्ताः स्निग्धाः स्वस्य परस्य वा असाधारण्येन । सहायाः भृत्याः वक्तुः । *मवि.

(४) अर्थसंबन्धिनः विप्रतिपद्यमानार्थस्य संबन्धिनः । आप्तास्तु कात्यायनेन दर्शिताः । ×स्मृच.७७

(५) अत्र सर्वैर्विशेषणैरसत्यसंभाषणविस्मरणादिकमसाक्ष्यनिमित्तमुपलक्ष्यते । अत एव वृद्धविकलेन्द्रियविकर्मकृत्तस्करादीनां गोवृषन्यायेन पुनरुपादानम् । ×व्यप्र.११७

**न साक्षी नृपतिः कार्यो न कारुककुशीलवौ ।**
**न श्रोत्रियो न लिङ्गस्थो न सङ्गेभ्यो विनिर्गतः ॥**

(१) त्वं मे साक्षी भविष्यसीति व्यवहारकृता धनविसर्गादिकाले साक्षित्वे नृपतिर्नाध्येषितव्यः । तस्य हि साक्ष्यं ददतः पक्षपातमाशङ्केरन् । प्रभुत्वाद्वा ददतोऽन्यतरस्य कार्यनाशः । न च साक्षिधर्मेण प्रष्टुं युज्यते । तद्देशवासी च यद्यपि लेखादिना संवादयेत्तथाऽपि साक्षिधर्मं सर्वं न कुर्यादिति तद्देशवासिनो राज्ञः समानकरणप्रतिषेधः ।

कारुकादीनां स्वकार्योपरोधशङ्कया । संगत्या च ते जीवन्ति । स्वभावश्चैष जानपदानां यत्स्वयं निश्चितवन्तोऽपि 'जीवयामहे वयमि'ति जिताः साक्षिकादिभ्यो रुष्यन्ति । ततश्च सार्वलौकिकी संगतिः कारुकादीनामुच्छिद्यते । किञ्च प्रकृतिपरिलघुत्वात्तेषां वृत्तयश्चलयितुमपि शक्यन्ते । तथा च पक्षपातं भजेरन् । श्रोत्रियस्य तु साक्षित्वे कर्तव्यता प्रतिषिध्यते, राजवन्न पुनरप्रत्ययितता । न हि श्रोत्रियत्वं प्रामाण्यं विहन्ति जनयत्येव विशेषतः । न हि श्रोत्रियत्वं विसंवादहेतुतयोपलब्धमेवमुत्तरत्रापि । कारुकाः शिल्पोपजीविनः सूपकारायस्कारादयः । कुशीलवाः नटनर्तकगायनाद्याः । श्रोत्रियो

---

*मच., नन्द., भाच. पदार्थो मेधावत् । ×ममु. गोरावत् ।

(१) **मस्मृ.**८।६४; **व्यमा.**३२४ नार्थ (नात्म) न दृष्ट (अदृष्ट); **व्यक.**४५; **मभा.**१३।३ पृ.; **स्मृच.** ७७; **पमा.** ९६; **व्यचि.**४२; **स्मृचि.**४६; **नृप्र.**१०; **सवि.**१३८; **व्यसौ.**४३; **व्यप्र.**११६; **बाल.**२।८०; **प्रका.**४९ बृहस्पतिः; **समु.**२८.

[1] वेशवशिताः. [2] तौ. [3] मित्रबान्ध. [4] भिर्वृत्तिदण्ड.

* शेषं गोरागतम् । × पदार्थो मेधावत् ।

(१) **मस्मृ.**८।६५; **व्यक.**४६ लिङ्गस्थो (लिङ्गी स्यात्) विनिर्गतः (निवर्तकः); **स्मृच.**७७ सङ्गे (सङ्घे); **पमा.**९७ न लि (विलि); **स्मृसा.**१०० साक्षी ... कार्यो (कार्यो नृपतिः साक्षी) कारुककुशीलवौ (च कारुकुशीलवाः) पृ.; **व्यचि.**३७ साक्षी (कार्यो) कार्यो (साक्षी) रुक (रुर्न) वौ (वाः) पृ.; **स्मृचि.** ४६; **नृप्र.**१०; **सवि.**१३९ कारु (कामु) वौ (वाः) निर्ग (वर्जि); **व्यसौ.**४४ कारुक (च कारु); **व्यप्र.**११६; **बाल.** २।८०; **प्रका.**४९-५० बृहस्पतिः; **समु.**२८ साक्षी (साक्ष्ये).

वेदपाठको यस्त्वध्ययनतत्परः स इह गृह्यते। अथवा श्रोत्रियत्वं कर्मानुष्ठानोपलक्षणार्थम्। तेनानुष्ठानपरस्य तद्विरोधतया प्रतिषेधः। लिङ्गस्थो ब्रह्मचारी। परिव्राजकपाखण्डलिङ्गधारिणस्तु कुशास्त्रवर्तित्वादेवाप्राप्ताः। सङ्गेभ्यो विनिर्गता वेदसंन्यासिनो गृहस्थाः। सङ्गो लालसतया विषयोपभोगो, दृष्टार्थकर्मारम्भो वा। ×मेधा.

(२) राजा प्रभुत्वाद्व्यवहारद्रष्टृत्वाच्च शास्त्रधर्मेण च प्रष्टुमशक्यत्वात् न साक्षी कार्यः। सूपकारनटादयश्च। वेदसंन्यासिनो गृहस्था एते धर्मपरा न कार्याः। नटादयश्च प्रायेणार्थपराः स्वकर्मग्रस्ताश्च व्यग्राश्च ते न कार्याः। श्रोत्रियः, ब्रह्मचारितापसभिक्षवश्च लिङ्गस्थाः सङ्गवर्जिताश्च न कार्याः। श्रोत्रियग्रहणादध्ययनानुष्ठानरहितस्य ब्राह्मणस्य न निषेधः। गोरा.

(३) न नृपतिः, तस्य बहुव्यासक्तत्वेनाऽस्मरणात्। लिङ्गस्थः परिव्राजकादिः। सङ्गनिर्गतः सर्वदैकान्तसेवनादिशीलः। मवि.

(४) सङ्गेभ्यो विनिर्गतः संन्यासीति केचित्, कुटुम्बबहिष्कृतः मण्डलाच्च बहिष्कृत इति वा, लिङ्गस्थपदेन संन्यासिनो ग्रहणात्। मच.

(५) नृपतेरसाक्षित्वं कृताभिप्रायेणातो न प्राक्तननारदोक्तिविरोधः। व्यप्र.११७

(६) राज्ञः साक्षित्वे शपथादिना लाघवं संभवेदिति राज्ञः प्रतिषेधः। श्रोत्रियादीनां त्रयाणामाह्वाने धर्मपीडा स्यादिति प्रतिषेधः। नन्द.

**नाध्यधीनो न वक्तव्यो न दस्युर्न विकर्मकृत्।**
**न वृद्धो न शिशुर्नैको नान्त्यो न विकलेन्द्रियः॥**

(१) अध्यधीनशब्दोऽत्यन्तपरतन्त्रगर्भदासादौ रूढ्या वर्तते। अन्ये तु तुल्यसंहितत्वादध्याधीन इति पठन्ति। अध्याधीनो बन्धकीकृतः। वक्तव्योऽनुशास्यः शिष्यपुत्रादिः, आचार्याधीनत्वात्। अथवा कुष्ठादिना कुत्सितकायः। दस्युः भृतिदासः वैतनिकः। स ह्युपदासयति कर्माणीति नैरुक्ते निरुक्तः। तस्य च दिवसभृतत्वान्नात्यन्तपारतन्त्र्यमस्तीति पृथगुपदेशः क्रियते। कर्मजीवनव्यापत्तौ तथाविधानां जीविकोच्छेदः लघुवृत्तित्वाच्च लोभादिसंभवेनाप्रत्ययितताऽपि। चौरस्य तु शब्दान्तरोपादानान्न दस्युग्रहणेन ग्रहणम्। कठिनहृदयो वा दस्युः क्रूरचेष्टः। विकर्मकृच्छास्त्रविरुद्धं यः कर्म करोति। यथा ब्राह्मणः क्षत्रियवृत्तिं वैश्यो वेत्यादि। वृद्धो वयःपरिणामादसंस्मृतिः। शिशुर्बालोऽप्राप्तव्यवहारः। एवं त्र्यवरग्रहणेनैकस्याप्राप्तेः प्रतिषेधो द्वयोः कस्यांचिदवस्थायामभ्यनुज्ञानार्थः[1][2]। यथा त्रिहस्ताचारपत्रे[3], यद्यपि तत्र तृतीयलेखको भवति तथापि लेखमात्रस्य व्यापारो नसाक्षित्व इति कस्यचिदियमाशङ्का स्यात्। अन्त्यो बर्बरचण्डालादिः। स्वधर्मादन्यत्र शूद्रयोनित्वेन प्राप्तस्य प्रतिषेधः। विकलेन्द्रियोऽन्धबधिरादिः शरीरपीडयोपलब्धिविकलत्वाच्च[4]। *मेधा.

(२) न वक्तव्यः, सर्वकर्मदोषाद् गर्हणीयः। प्रतिषिद्धकर्मकृदनाश्वासात्। न वृद्धः अतिक्रान्तव्यवहारकत्वात्। एकोऽपि न, नाशप्रवासाशङ्कया। तस्य त्र्यवरैरिति निषेधसिद्धौ कस्यांचिदवस्थायां द्वयोरभ्यनुज्ञानार्थं वचनम्। अन्त्यश्चाण्डालादिः, धर्मानभिज्ञत्वात्। +गोरा.

(३) विकर्मकृत् सूनादिः। ×मवि.

(४) आध्यधीनो मानसव्याधिविह्वलः। एको विवदमानाभ्यामननुमतः। ×स्मृच.७७

(५) दस्युः पश्यतोहरः। सवि.१३९

(६) दस्युर्हीनजातिः। पूर्वं साक्षिणां त्र्यवरत्वमुक्तं, अत्रैकत्वं प्रतिषिद्धम्। तेनायमर्थो गम्यते। त्र्यधिकत्वमुत्तमः पक्षः, त्र्यवरत्वं मध्यमः, द्वित्वमधमः, न कदाचिदप्येक इति। नन्द.

**नार्तो न मत्तो नोन्मत्तो न क्षुत्तृष्णोपपीडितः।**

× स्मृच. मेधागतं गोरागतं मविगतं च। ममु., भाच. मेधागतम्।

(१) मस्मृ.८।६६; व्यक.४६; स्मृच.७७ स्युर्न (स्युर्ना); पमा.९७ नाध्य (नान्या); स्मृचि.४६ धीनो न (धीनश्च) उत्तरार्धे (न मूढो न तथा गोपो वृद्धो न विकलेन्द्रियः); नृप्र.१० पमावत्; सवि.१३९ श्लोकार्धौ व्यत्यासेन पठितौ; व्यसौ.४४; व्यप्र.११६-११७ नाध्य (अध्य) नान्त्यो (नार्तो); बाल.२।८०; प्रका.५० बृहस्पतिः; समु.२८.

*व्यप्र., भाच. पदार्थो मेधावत्। + शेषं मेधागतम्। ममु., मच. पदार्थः गोरावत्। × शेषं मेधागतम्।

(१) मस्मृ.८।६७; व्यक.४६; स्मृच.७७; पमा.९७; नृप्र.१० पू.; सवि.१३९; स्मृचि.४६; व्यसौ.४४; व्यप्र.

[1] पादा. [2] यां सभ्य. [3] रोप. [4] विक.

**न श्रमार्तो न कामार्तो न क्रुद्धो नापि तस्करः ॥**

(१) आर्तो बन्धुधनादिनाशेन । मत्तो मद्यमदक्षीबः । अपस्मारगृहीत उन्मत्तः पिशाचकी । क्षुत्तृष्णोपपीडितो बुभुक्षापिपासाभ्यां व्यथितः । श्रमः कायचेष्टाधिक्येन दूराध्वगमनयुद्धादिनोत्पन्नस्तेनार्तः पीडितः । कामः स्त्रीसङ्गाभिलाषस्तेनाऽऽर्तो विप्रलब्धोऽत्यन्तसंयोगी वा द्वावपि तावप्रत्ययौ । चित्तोपप्लवात् तत्साधने च विप्रलम्भाशङ्कया च । क्रुद्धोऽन्यस्मिन्नपि बहुतरक्रोधः । स हि क्रोधेन व्याप्तचित्तत्वान्न यावदनुभवति नाप्यनुभूतं स्मरति । तस्करश्चौरः । यद्यप्यसौ विकर्मकृत्तथापि भेदोपादानाद् गोबलीवर्दन्यायो द्रष्टव्यः । *मेधा.

(२) एते चार्तत्वादयः साक्षिकरणकाले दोषाः । तस्करः साक्ष्यकाले दृष्टपरार्थापहारः । मवि.

(३) तस्करः सुरुङ्गादेर्निर्माता । सवि.१३९

(४) आर्ताद्यष्टसु स्मृतिलोपः प्रसिद्धः । ×मच.

उक्तासाक्षित्वप्रतिप्रसवः । स्त्रीणान्तु सर्वदैवासाक्षित्वम् । दुष्टानां च ।

**अनुभावी तु यः कश्चित्कुर्यात्साक्ष्यं विवादिनाम् ।**
**अन्तर्वेश्मन्यरण्ये वा शरीरस्यापि चाऽत्यये÷ ॥**

(१) **अन्तर्वेश्मनि** यत्कार्यमतर्कितोपनतं वाग्दण्डपारुष्यसंग्रहस्तेयसाहसादिरूपमरण्ये वा तादृशमेव, शरीरे च पीड्यमाने, तत्काले दस्युभिरन्यैर्वा यतः कुतश्चिद् गृहीतं (यो वा धननिमित्तं प्रतिभूत्वेन स्थापितो न च साक्षिणामेव सर्वो, राजपुरुषादिकं न चोपद्रवन्ति ?) रहसि चोक्तो वाऽर्थमाददते अप्रकाशं, तादृशे विषये यः कश्चिदनुभावी स साक्षित्वेन ग्रहीतव्यः । तर्हि यावता कालेन यथोक्तलक्षणाः साक्षिणो लभ्यन्ते तावन्तं कालं न प्रतिपालयन्ति । अनुभावी साक्षाद् द्रष्टा । यः कश्चिदिति न जातिनियमः । सादृश्यं च तदा नास्तीत्याह । अन्तर्वेश्मनीति विरलजनोपलक्षणार्थम् । तेन शून्यदेवतायतनादीन्यपि विरलजनानि गृह्यन्ते । तथा चारण्यग्रहणमस्यैवार्थस्य प्रदर्शनार्थम् । अन्ये तु शरीरस्यापि चात्यय इत्यन्यथा व्याख्यानयन्ति । कार्यशरीरस्यातिपाते यः कश्चित्साक्षी, यत्कार्यं तदानीं अनुष्ठीयमानमतिपतत्युत्तरकालमशक्यानुष्ठानं तत्र साक्षिणां जातिलिङ्गवयःसादृश्यसंबन्धाभावादिनियमो नास्ति । एतदेवोत्तरेण दर्शयति । मेधा.

(२) अनुभावी, येन तत्कार्यं प्रसङ्गादप्यनुभूतम् । यः कश्चिदधमोऽपि । अन्तर्वेश्मन्यरण्य इत्यसंभवत्पुरुषान्तरदेशोपलक्षणम् । शरीरस्यात्यये तत्साक्ष्यकरणे तदैव यदि मृत्युस्तदापीत्यर्थः । मवि.

(३) अनुभावी कार्याभिज्ञः । स्मृच.७९

(४) गृहाभ्यन्तरेऽरण्यादौ वा चौरादिकृतोपद्रवे देहोपघाते वा आततायिकृते यः कश्चिदुपलभ्यते वादिनोरेव साक्षी भवति, न तु ऋणादानादिवदुक्तलक्षणोपेतः । ममु.

(५) अत्यये पीडायाम् । नन्द.

**एकोऽलुब्धस्तु साक्षी स्याद्बह्व्यः शुच्योऽपि न स्त्रियः ।**
**स्त्रीबुद्धेरस्थिरत्वात्तु दोषैश्चान्येऽपि ये वृताः ॥**

(१) एकस्य पुनः प्रतिषेधो लोभादिरहितस्य प्रतिप्रसवार्थः । तेन सत्यवादितया निश्चित एकोऽपि साक्षी भवत्येव । स्त्रियस्तु न कथंचित्साक्ष्यमर्हन्ति अल्पा वा बह्व्यो वा । शुच्योऽपीति गुणवत्योऽपीत्यर्थः । अत्र हेतुः स्त्रीबुद्धेरस्थिरत्वादिति । प्रकृतिरेषा स्त्रीणां यद् बुद्धेश्चापलम् । गुणास्तु यत्नोपार्जिता अपि प्रमादालस्यादिना

* गोरा., ममु. मेधागतम् । × शेषं मेधागतम् ।

÷ गोरा. अशुद्धिसंदेहान्नोद्धृतम् ।

११७ नापि (नाति); **बाल.**२।८०; **प्रका.**५० बृहस्पतिः; **समु.**२८.

(१) **मस्मृ.**८।६९; **व्यमा.**३२८ चा (वा) उत्त.; **अप.** २।७२ चा (वा); **व्यक.**४९; **स्मृच.**७९; **स्मृसा.**१०३; **स्मृचि.**४७ उत्त.; **व्यत.**२११ तु (च) पू.: २१४ पि चात्यये (त्ययेऽपि च) उत्त.; **व्यसौ.**४७; **व्यप्र.**१२१ अपवत्; **सेतु.**११५ व्यतवत्, पू.: १२१ उत्त.; **प्रका.**५०; **समु.**२९.

(१) **मस्मृ.**८।७७ मेधातिथिभाष्यावलोकनात् 'एको लुब्धस्त्वसाक्षी स्यात्' इति पाठः प्रतीयते ; **व्यमा.**३१९ लुब्धस्तु (प्यलुब्धः) श्चान्ये (रन्ये); **व्यक.**४९; **स्मृच.**७९ स्तु (स्त्व) प्रथमपादः; **पमा.**१०० न्येऽपि (न्यैश्च) नारदः; **व्यचि.**४० व्यमावत्; **स्मृचि.**४६ त्वात्तु (त्वाच्च); **व्यत.**२१३ व्यमावत्; **चन्द्र.**१३४ लुब्धस्तु (प्यलुब्धः) च्योऽपि (द्वाश्च) पू.; **व्यसौ.**४७ नारदः; **व्यप्र.**११६ स्मृचिवत्; **सेतु.**११८ लुब्धस्तु (प्यलुब्धः) त्वात्तु (त्वाच्च); **प्रका.**५१ नारदः; **समु.**३० नारदः; **विव्य.**११ त्वात्तु (त्वाच्च) श्चान्ये (रन्ये).

१ म्भोऽ. २ गो द्वा. ३ तावत्प्र. ४ वि.

१ सदृशं च. २ (०). ३ श्यकसं.

व्यपयन्त्यतः स्वाभाविकमस्थैर्यं तिष्ठेदेव। यथा आमयाविनो घृतादिनोत्पन्नेऽप्यग्नेः स्थैर्ये स्वल्पेनापि प्रमादेन पुनः सहजामयावितानुवृत्तिः अतोऽनया शङ्कया गुणवतीष्वपि तासु नाश्वासः। यत्तु 'स्त्रियाऽप्यसंभवे कार्यमि'ति, तत् यत्र तत्क्षणादेव पृच्छ्यन्ते। यत्रेयमाशङ्का न भवति केनचिदासां संचलितं मन इति। यत्र तु कालव्यवधानं तत्र जीयमानेन कदाचिदनुकूल्यन्ते इति न क्वचित् साक्षिण्यः। दोषैश्चान्येऽपि ये वृताः। रोगादिभिर्दोषैर्ये स्त्रीभ्योऽन्येऽपि पुरुषा वृता आक्रान्ता भूयिष्ठदोषा इत्यर्थः। के पुनरमी दोषा नाम? उक्तं च—रागादयः शास्त्रप्रतिषिद्धाः शङ्क्यमानव्यभिचारहेतुभावाः। यद्यपि केवलेन स्वशब्देनैवोक्ता दोषाः तथाप्यनुक्तपरिग्रहार्थमिदमपुनरुक्तम्। सामान्यविशेषाभिधानं हि सर्वत्र ग्रन्थकारा अनुमन्यन्ते। अन्ये त्वकारप्रश्लेषेणालुब्धोऽप्येको न साक्षी किं पुनर्लुब्ध इत्येवमाचक्षते। तथा च द्वयोरभ्यनुज्ञानं भवति। शुच्य इतीकारो दुर्लभो 'वोतो गुणवचनात्' इति विधानात्। कृदिकारादिति केचित्समर्थयन्ते। मेधा.

(२) लोभवानेकः साक्षी न भवति। एवं चालुब्धोऽत्यन्तगुणवान् कस्याञ्चिदवस्थायां एको भवति। स्त्रियश्चास्थिरत्वाच्चापल्यात् बह्व्योऽपि अर्थशौचयुक्ता अपि साक्षिण्यो न भवन्ति, एवं ऋणादानादौ स्वस्थे व्यवहारे। आत्ययिके 'तूक्तं स्त्रियाऽप्यसंभवे कार्यमि'ति। एवमन्येऽपि अशुच्यादिभिर्दोषैः व्याप्तास्तेऽपि स्वस्थव्यवहारे साक्षिणो न भवेयुः। गोरा.

(३) यत्तु मनुवचनं एक इति तदपि लुब्धस्यैकस्यासाक्षित्वं बोधयति, न तु तन्निषेधमुखेनालुब्धस्य तस्योभयानुमतिमन्तरेणाऽपि साक्षित्वं ज्ञापयति, पूर्वोक्तवचनजातविरोधात्। तेनायमर्थः— प्रमाणासिद्धेऽलुब्धत्वे उभयानुमतावप्येकः साक्षी न ग्राह्यः। भ्रान्त्याऽन्यतरस्यानुमतिसंभवे तद्वचनेन निर्णये धर्मविरोधापत्तेः। अत एव च लुब्धमात्रोपादानमुभयानुमतौ सत्यामपि ग्रहणविरोधार्थं, लुब्धपदं च दोषमात्रोपलक्षकम्। बहूनां सदोषत्वे उभयानुमतानां ग्रहणं कार्यम्। निर्दोषस्तूभयानुमतिमन्तरेणापि ग्राह्य इत्येतदर्थं त्र्यवराणां विधानम्। एकोऽप्यलुब्धः साक्षी स्यादित्यनाकरम्। सत्यपि च पाठे अलुब्धत्वमात्रेणैकस्य साक्षित्वं न वाच्यम्। अलुब्धस्यापि स्नेहवैरादिनाऽभिधानसंभवात्। निर्दोषमात्रपरमलुब्धपदमिति चेन्न, निर्दोषस्य सकलगुणसंपन्नस्यापि उभयानुमतिसत्वेनैव विष्णुप्रभृतिभिर्ग्रहणप्रतिपादनात्। तस्माद् वृथाऽन्यथापाठकल्पना। अत एव उभयानुमतः एकः साक्षीति विश्वरूपप्रभृतीनां व्याख्यानमादरणीयम्। अलुब्धपाठे वा निक्षेपादिवर्णिविषयं वर्णनीयम्। व्यमा. ३१९

(४) एकोऽप्यलुब्धः पुमान्। शुच्यः अलुब्धा अपि। दोषैश्चान्येऽपि ये वृताः, अर्थसंबन्धित्वादिभिस्तेऽपि न बहवः साक्षिणः। एकस्मिन्नलुब्धेऽविपरीतवादिनि सति। मवि.

(५) एकोऽलुब्ध इत्यत्राकारप्रश्लेषो द्रष्टव्यः। एकोऽपि साक्षी लोभादिरहितः स्यात्। अत एव व्यासः— 'शुचिक्रियश्च धर्मज्ञः साक्षी यत्रानुभूतवाक्। प्रमाणमेकोऽपि भवेत् साहसेषु विशेषतः'॥ मेधातिथिगोविन्दराजाभ्याम् 'एको लुब्धस्त्वसाक्षी स्यात्' इति पठितं व्याख्यातं च। ÷ममु.

(६) एकोऽलुब्धस्तु साक्षी स्यादिति कुल्लूकभट्टधृतपाठः। एको लुब्धस्त्वसाक्षी स्यादिति जीमूतवाहनधृतपाठस्तु न युक्तः, लुब्धश्चेद्बहवोऽप्यसाक्षिणो भवितुमर्हन्तीति एकपदव्यर्थतापत्तेः। भवतु वा तत्पाठः। तथापि एक इत्यनुरोधात् तन्निषेधमुखेनालुब्धस्यैकस्यानुमतिसत्वे धर्मवित्त्वमन्तरेण साक्षित्वं बोध्यं इत्यर्थतो न विरोधः। अत एव विश्वरूपप्रभृतीनां उभयानुमत एक एव साक्षीति व्याख्याने धर्मविदिति नोक्तम्। दोषैः स्तेयादिभिः। *व्यत. २१३

(७) एको लुब्धस्त्वसाक्षीति मेधातिथिनान्याभिमतत्वेनेमं पाठमभिप्रेत्य—'अन्ये त्वकारप्रश्लेषेणालुब्धोऽप्येको न साक्षी किं पुनर्लुब्ध इत्येवं व्याचक्षते, तदा द्वयोरभ्यनुज्ञानं भवति। स्त्रियस्त्वलुब्धा बह्व्योऽपि न साक्ष्यार्हाः किमुताशुचय' इति भणितम्×। तत्र अन्ये त्वित्यस्वरसबीजमेकस्य प्रागेव निरस्तत्वात्। स्त्रीसाक्ष्यपर्युदासायानुवादे तु यथोक्तपाठेऽप्युपपत्तेस्तत्र चैकस्यालुब्धस्य पुंस्त्वेन

१ प्रमादे. २ न्यः. ३ ता. ४ देका.

÷ शेषं गोरागतम्। मच., भाच. ममुगतम्।
* सेतु. व्यतवत्।
× इदं वाक्यं मुद्रितमेधातिथौ नोपलभ्यते।

प्रतिप्रसवपूर्वकं स्त्रीणां सर्वथा निषेधपरत्वे संदर्भसामञ्जस्यमिति। अलुब्ध इत्यकारप्रश्लेषं विनैव पूर्वपाठ एव लुब्धश्चेदेको न साक्षी अलुब्धस्त्वेकोऽपि पुमान् साक्षीति जीमूतवाहनेनैवं व्याख्यातम्। तत्र लुब्धानां बहूनामप्यसाक्षित्वे एकपदवैयर्थ्यमिति व्यवहारतत्वे दूषणमुक्तम्। तदप्युत्तरवाक्यशेषत्वादस्य न सम्यगिति द्रष्टव्यम्। +व्यप्र.११६

स्त्रीबालादीनामसाक्षित्वस्य प्रतिप्रसवः

**[1]स्त्रियाऽप्यसंभवे कार्यं बालेन स्थविरेण वा।**
**शिष्येण बन्धुना वाऽपि दासेन भृतकेन वा॥**

(१) स्त्रियेति लिङ्गव्यत्यय उक्तः। बालेन स्थविरेण वेति वयोव्यत्ययः। शिष्येणेत्यादिना संबन्धिनः प्रतिप्रसवः। एतच्च प्रदर्शनमेवंविधानां नियमानां व्यभिचाराय। तेन ज्ञातिसाहश्ये अपि नाद्रियेते। सुहृद्वैरिदृष्टदोषादयस्तु नेष्यन्ते। येषां किञ्चिदसत्याभिधानकरणत्वं दृष्टं नातिव्यापकं ते न प्रतिप्रसूयन्ते। येषां तु बहुव्यापकं क्वचिदेव गुणातिशयं चेति व्यभिचरेत्ततः क्वचिदेव तत्साक्षिणः। उक्तं च—'एकः सहस्राल्लभ्येत न सौहार्दान्न शात्रवात्। नार्थसंबन्धतो वाऽपि पुरुषोऽनृतमाचरेत्' इति॥ असंभवेऽन्येषां साक्षिणां स्त्रियाऽपि कार्यम्। किम्? साक्ष्यमिति पूर्वश्लोकादनुषज्यते। शिष्येणेति मौखस्रौवसंबन्धप्रदर्शनार्थमेतत्। बन्धुनेति (अहार्योत्पत्तिका?) यौनसंबन्धप्रतिप्रसवः। सत्यपि संबन्धित्वे[2] यो नातिप्रत्यासन्नः स गृह्यते। तेन भ्रातृव्यमातुलश्वशुरादयो न साक्षिणः। तथाविधे हि बन्धुशब्दो रूढः। दासेनेति स्वस्वामिसंबन्ध उपलक्ष्यते। न स्वाम्युपाध्यायो याजकश्च सर्व[3]विधे विषये साक्षिणः। दासो गर्भदासो भृतको वैतनिकः। ननु चासामर्थ्याद् बालादयः साक्षित्वे निरस्ताः। न ह्येते साक्ष्यमवधारयितुं शक्नुवन्ति, बुद्धेरस्थैर्यादपरिपाकादिभिर्दोषैस्तदापदि प्रतिप्रसूयमानमसमञ्जसमिति, न ह्यापदि शक्तिरस्याविर्भवति। यो हि ब्रूयात्तेन वा नवौदनः पक्तव्यः सत्याग्नौ तु पक्तव्य इति तादृगेतत्स्यात् (?)। नैष दोष एवमर्थमेवोत्तरश्लोक आरभ्यते। मेधा.

(२) स्त्रीप्रभृतीनां दुष्टाशयत्वादिदोषरहितानामेव साक्षित्वमत्र वेदितव्यम्। अप.२।७२

(३) तदेतत्सर्वं साहसाद्यस्थिरकर्मविषयम्। तत्र प्रशस्तानां दुर्लभत्वात्। स्मृच.७९

**[1]बालवृद्धातुराणां च साक्ष्येषु वदतां मृषा।**
**जानीयादस्थिरां वाचमुत्सिक्तमनसां तथा॥**

(१) अनुमानानुसारिणी च निश्चयावगतिस्तत्रैवोक्ता—बालवृद्धेति। एवमन्यत्रापि व्यवहारप्रकरणे न्यायागमविवेकः प्रपञ्चनीयः। विश्व.२।७४

(२) अयमस्यार्थः। नेहात्यन्ताप्राप्तनिबद्धभ्रान्तबुद्धयो बालादयो गृह्यन्ते येनारभ्योऽर्थ उपदिष्टः स्यात्। किन्तु ये शक्नुवन्त्यवधारयितुं न चातिस्थिरचेतसस्तेभ्यः अनुज्ञायन्ते तेषां वचनमनुमानेन परीक्ष्यम्। यदि संबध्दं वदन्ति, न च स्ख[3]लन्ति, न शङ्क्यमानदोषेण केनचित्स ङ्गतास्ततः प्रमाणम्। तदाह—तेषां मृषा वदतामस्थिरां वाचं जानीयात्। एतदुक्तं भवति। वाचोऽस्थैर्येण मृषात्वं निश्चिनुयात्। तत्र वाचोऽस्थैर्यं पदानामितरेतरमसंगतिः। अस्फुटाऽपरिपूर्णाक्षरत्वं च। एतच्च बालादीनामवस्थोपलक्षणार्थम्। ये च वयसा व्याधिना वाऽप्यवस्थामियतीं गता यदन्यद् विवक्षन्तोऽन्यदुच्चारयन्ति तच्चाव्यक्तं, न ते साक्षिणः। एतत्प्रत्यक्षवेद्यमसाक्षित्वकारणम्। अन्यत्तु रागद्वेषधनलोभादि साधारणमनुमानतः परीक्ष्यम्। तच्चोक्तमेव। उत्सिक्तचेतसः प्रकृत्यैवोपप्लुता अधीरधियः। मेधा.

(३) नन्वस्थिरबुद्धित्वादिकारणावगमे स्त्र्यादीनां

---

+ प्रथमपादव्याख्यानं मस्मुवत्, शेषं च मेधावत्।

(१) **मस्मृ**.८।७०; **विश्व**.२।७४; **व्यमा**.३२८; **अप**.२।७२; **व्यक**.४९ प्य (वा); **स्मृच**.७९; **पमा**.१०१ बन्धु... सेन (वापि दासेन बन्धुना); **स्मृसा**.१०३; **व्यचि**.४५; **स्मृचि**.४५ वा (च) : ४७ पू.; **व्यत**.२१५; **चन्द्र**.१४२; **व्यसौ**.४७; **व्यप्र**.१२०; **व्यम**.१७; **विता**.१६६ भृत (मृत) नारदः; **सेतु**.१२१; **प्रका**.५१; **समु**.२९.

१ यान. २ न्धत्वे. ३ सर्ववि. ४ तानि.

(१) **मस्मृ**.८।७१; **विश्व**.२।७४ तां मृषा (तानृतम्); **व्यमा**.३२८ च (तु); **व्यक**.४९; **स्मृच**.८५ व्यमावत्; **व्यसौ**.४७ स्थिरां (र्थिनां); **प्रका**.५४ व्यमावत्; **समु**.३३ व्यमावत्.

१ त्परि. २ स्वमानसम. ३ खल.

साक्ष्यं निषिद्धमतोऽत्रापि कथं तद्वचनान्निश्चय इत्यत आह– बालवृद्धातुराणामिति । +गोरा.

**साहसेषु च सर्वेषु स्तेयसंग्रहणेषु च ।**
**वाग्दण्डयोश्च पारुष्ये न परीक्षेत साक्षिणः ॥**

(१) सहो बलं तदाश्रित्य यत्क्रियते तत्साहसम् । राजवाल्लभ्येन, महापक्षतया, स्वशरीरबलेन, बलवदाश्रयेण वा यदकार्यकरणं तत्साहसम् । यथा–वस्त्रपाटनाग्निदाहकेशच्छेदादि, अन्यत् प्रसिद्धम् । अत्र साक्षिणो न परीक्ष्याः । 'गृहिणः पुत्रिणः' इत्येवमादिरूपपरीक्षाऽत्र प्रतिषिध्यते । या तु व्यभिचारहेतुतया शङ्क्यते रागद्वेषधनलोभादिरूपा सा कर्तव्यैव । दृष्टमूलत्वादस्याः स्मृतेरित्युक्तम् । ×मेधा.

(२) 'स्त्रियाऽप्यसंभवे कार्यम्' इत्यस्यैवायमुदाहरणप्रपञ्चः । ममु.

साक्षिप्रश्नविधिः

**सभान्तः साक्षिणः सर्वानर्थिप्रत्यर्थिसंनिधौ ।**
**प्राड्विवाकोऽनुयुञ्जीत विधिनाऽनेन सान्त्वयन् ॥**

(१) सभायामन्तः सभान्तः । शौण्डादित्वात् समासः । व्यवहारदेशगता उभयोरर्थिप्रत्यर्थिनोः संनिधानेऽनुयोक्तव्या वक्ष्यमाणेन विधिना । सान्त्वयन् अपरुषं ब्रुवन् । पारुष्येण हि प्राड्विवाकाद्बिभ्यतोऽप्रकृतिस्थाः न सर्वं स्मरेयुः, संस्कारभ्रंशहेतुत्वाद्भयस्य । प्राड्विवाको राज्ञा व्यवहारदर्शनाधिकृतो रूढयोच्यते । यद्यप्यवयवार्थो राजन्यपि संभवति पृच्छति विविनक्तीति, तथापि भेदेन प्रयोगदर्शनम्—'अमात्यः प्राड्विवाको वा यः कुर्यात् कार्यमन्यथा' इति । पृच्छतीति प्राट् 'क्विब्वचिप्रच्छ्यायतस्तु कटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च' इति प्राट् । विशेषेण धर्मसङ्कटेषु विवक्तीति विवाकः । 'कृत्यल्युटो बहुलम्' इति कर्तरि घञ् । 'चजोः कु घिण्यतोः' इति कुत्वम् । प्राट् चासौ विवाकश्च प्राड्विवाकः । मेधा.

(२) सभामध्यं साक्षिणः संप्राप्तान् अर्थिप्रत्यर्थिसमक्षं राजाधिकृतो ब्राह्मणः प्रियं कुर्वन् वक्ष्यमाणप्रकारेण पृच्छेत् । *गोरा.

(३) अनुयुञ्जीत यथार्थकथनोन्मुखान् कुर्वीत । स्मृच.८५

(४) अनुयुञ्जीत पृच्छेत् । अनेन वक्ष्यमाणेन विधिना धर्मोपदेशेन सान्त्वयन् । मच.

(५) अनुयुञ्जीत आज्ञापयेत् । भाच.

**यद्द्वयोरनयोर्वेत्थ कार्येऽस्मिंश्चेष्टितं मिथः÷ ।**
**तद् ब्रूत सर्वं सत्येन युष्माकं ह्यत्र साक्षिता ॥**

(१) यज्जानीथ अस्मिन् व्यवहारवस्तुनि अनयोर्मिथः अस्मदप्रत्यक्षं रहसि वा चेष्टितं वृत्तं तत्सर्वं सत्येन तथ्येन ब्रूत कथयत । युष्माकं ह्यत्र साक्षिता भवतामत्र प्रामाण्यम् । युष्मद्वचनाधीने सत्यानृते इत्यनेन प्रोत्साह्यन्ते साक्षिभूताः । अस्मिन् कार्ये इति सामान्यनिर्देशेऽप्यखिलवस्तुश्रावणं सामर्थ्याद्द्रष्टव्यम् । न ह्यश्रुतविशेषाः प्रश्नविषयं वेदितुमर्हन्तीति । ×मेधा.

(२) अनयोरर्थिप्रत्यर्थिनोः । मच.

**सत्यं साक्ष्ये ब्रुवन् साक्षी लोकानाप्नोति पुष्कलान् ।**
**इह चानुत्तमां कीर्तिं वागेषा ब्रह्मपूजिता ॥**

---

+ ममु. गोरावत् मेधावच्च । × गोरा., स्मृच., मच. मेधागतम् ।

(१) मस्मृ.८।७२; व्यमा.३२७ मनुनारदौ; स्मृच.७९ च सर्वे (तु सर्वे); पमा.१०१ स्तेय (स्तेये) व्याघ्रः; व्यचि. ४५; स्मृचि.४६ स्मृचवत्; चन्द्र.१४१; व्यसौ.४७; व्यप्र.१२०; प्रका.५१ स्मृचवत्; समु.३० स्मृचवत्.

(२) मस्मृ.८।७९ क.घ. पुस्तकयोः सर्वान् (प्राप्तान्) ऽनेन (तेन) इति पाठः, ख.ग. पुस्तकयोः सर्वान् (प्राप्तान्) इति पाठः; व्यमा.३२९ सर्वा (प्राप्ता) पू.; अप.२।७५ व्यमावत्; व्यक.५१ सर्वा (पूर्वा); स्मृच.८५; पमा.१०७ ऽनुयु (नियु); व्यचि.४७; स्मृचि ४७; व्यसौ.४९; व्यम. १८; विता.१७१ उत्त.; प्रका.५५ पमावत्; समु.३३; भाच. ऽनु (नि).

१ (०). २ स्थानं.

* ममु. गोरावत् । ÷ वेत्थेति रूपमशुद्धं प्रतिभाति । × गोरा., ममु. मेधागतम् ।

(१) मस्मृ.८।८०; अप.२।७५; व्यक.५१ वेत्थ (रथे) युष्मा (ह्यस्मा); स्मृच.८५ वेत्थ (वित्थ); पमा.१०८; व्यचि. ४७ तद्...सत्येन (ब्रूयुः सर्वमशेषेण); स्मृचि.४७; व्यसौ. ४९; व्यम.१८; विता.१७१; प्रका.५५ स्मृचवत्; समु. ३३ स्मृचवत्.

(२) मस्मृ.८।८१ ख. पुस्तके आप्नोति पुष्कलान् (प्राप्नोत्यनिन्दितान्) इति पाठः; शुनी.४।६९६-६९७; अप. २।७५ ब्रुव (वद); व्यक.५१ सत्यं (सम्यक्) वागेषा (वाग्यथा);

१ च. २ वेत्ती. ३ टः. ४ भूते.

(१) इतः प्रभृति सत्यवचनार्थः साक्षिणामनुयोगविधिः । सत्यं वदन् लोकान् स्वर्गादिलक्षणान् अनिन्दितानगर्हितानभिप्रेतफलभोगहेतून् लभते साक्षी । जातिवचनो वा लोकशब्दः । शुभे जन्मनि जायत इत्यर्थः । अस्मिंश्च जन्मनि कीर्तिः ख्यातिरनुत्तमा, यस्या अन्यदुत्तमं प्रकृष्टं नास्ति, तां लभते । साधुवादो जनेनास्मै दीयते । यस्मादेषा च वाक् सत्या सरस्वती ब्रह्मणा प्रजापतिना पूजिता । *मेधा.

(२) ब्रह्मणा सत्येन विशिष्टा । मच.

(३) ब्रह्मपूजिता वेदप्रशस्ता । नन्द.

**साक्ष्येऽनृतं वदन्पाशैर्बध्यते वारुणैर्भृशम् ।**
**विवशः शतमाजातीस्तस्मात्साक्षी वदेदृतम् ॥**

(१) पूर्वेण दृष्टादृष्टशुभाशुभप्रदर्शनेन सत्यवचने साक्षिणः प्रोत्साहिताः । अनेन विपरीताभिधाने दुःखोत्पत्तिदर्शनम् । सत्यवचनार्थमेवैतत् । साक्षिणः कर्म साक्ष्यम् । तत्रासत्यं ब्रुवाणो वारुणैः पाशैर्बध्यते पीड्यते । भृशमत्यर्थं विवशः परतन्त्रीकृतः सर्वचेष्टासु वाक्चक्षुर्गतास्वपि शतं यावज्जन्मानि, वारुणाः पाशा घोराः सर्परज्जवो जलोदराणि वा । एतद्दोषपरिहारार्थं सत्यं वदेदिति विधिः । आजातीरिति नायं मर्यादाभिविध्योराङ् तथा सति पञ्चमी स्यात् । तस्मादुपसर्गोऽयमनर्थकः प्रलम्बत इति यावत् । द्वितीया चेयम् । आवृत्तिश्चात्र गम्यते । शतं जन्मान्यावर्तते उदरगृहीतः । *मेधा.

(२) विवशं इति क्रियाविशेषणम् । सवि.१५८

(३) शतमाजातीः जन्मशतं व्याप्य । मच.

(४) आ प्रेत्य जायत इत्याजातिरिति जन्मकालो विवक्षितः । तेनात्यन्तसंयोगे द्वितीया । नन्द.

**ब्राह्मणो वा मनुष्याणामादित्यस्तेजसामिव ।**
**शिरो वा सर्वगात्राणां धर्माणां सत्यमुत्तमम् ॥**

ब्राह्मणो वा ब्राह्मण इवेत्यर्थः । एवं शिरो वेत्यत्रापि वाशब्द उपमानार्थोऽवगन्तव्यः । स्मृच.८६

**स्थितिश्च लोकधर्मश्च तस्मात्सत्यं विशिष्यते ॥**
**नास्ति सत्यात् परो धर्मो नानृतात् पातकं परम् ।**
**साक्षिधर्मे विशेषेण तस्मात्सत्यं विशिष्यते ॥**
**एकमेवाद्वितीयं तु प्रब्रुवन्नावबुध्यते ।**
**सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥**
**सत्येन पूयते साक्षी धर्मः सत्येन वर्धते ।**
**तस्मात् सत्यं हि वक्तव्यं सर्ववर्णेषु साक्षिभिः ॥**

(१) पूयते शुद्ध्यति । अन्यस्मादपि पापान्मुच्यत इति यावत् । शेषं गतार्थम् । मेधा.

(२) लोकानाप्नोतीत्युक्तम् । तत्र हेतुः सत्येनेति । पूयते तत्प्राप्तिप्रतिबन्धकादधर्मान्मुच्यते । अत एव तद्धर्मोऽप्रतिबन्धतया स्वफलं जनयतीत्याह— वर्धत इति । अत

---

* गोरा., ममु. मेधागतम् ।

**स्मृच**.८५; **पमा**.१०८ साक्ष्ये (सत्ये) नाप्नो (न्प्राप्नो); **व्यचि**.४७ साक्ष्ये (साक्षी) साक्षी (साक्ष्ये) पूजिता (निर्मिता); **स्मृचि**.४७ व्यचिवत्; **नृप्र**.१० क्ष्ये (क्ष्यं) नाप्नो (न्प्राप्नो) पू.; **व्यसौ**.४९; **नाभा**.२।१७९ (=) वागेषा (वाग् ह्येषां); **व्यप्र**.१२७; **विता**.१७१; **प्रका**.५५; **समु**.३३.

(१) **मस्मृ**.८।८२ साक्षी (साक्ष्यं); **अप**.२।७५ पाशै.... भृशम् (साक्षी पाशैर्बध्येत दारुणैः) साक्षी (साक्ष्ये); **व्यक**.५१ पाशै....भृशम् (साक्षी पाशैर्बध्येत वारुणैः) साक्षी (कोषे); **स्मृच**.८६ भृशम् (नरः) जाती (जाति); **व्यचि**.४७-४८ पूर्वार्धं व्यकवत्; **स्मृचि**.४७ व्यचिवत्; **सवि**.१५८ (वदन् साक्ष्यनृतं पाशैर्बध्यते वारुणैर्नरः) वशः (वशं) जाती (जाति); **चन्द्र**.१४६ पाशै....भृशम् (साक्षी पाशैर्विध्येत दारुणैः) साक्षी (साक्ष्ये); **व्यसौ**.४९ व्यचिवत्; **नाभा**.२।१७९ भृशम् (नरः); **व्यप्र**.१२७ साक्षी (साक्ष्ये) शेषं व्यचिवत्; **विता**.१७१ शतमाजातीः (पातमायाति) शेषं व्यचिवत्; **प्रका**.५५ नाभावत्; **समु**.३४ नाभावत्.

१ न्मनि.

* गोरा., मवि., ममु. मेधागतम् ।

(१) **मस्मृ**.८।८२ इत्यस्योपरि प्रक्षिप्तश्लोकोऽयम्, ब्राह्मणो वा (ब्राह्मणो वै) इव (दिवि) इति पाठः; **स्मृच**.८५; **पमा**.१०८ उत्तरार्धस्तु नारदस्य; **प्रका**.५५; **समु**.३३.

(२) **समु**.३३. मनुस्मृतौ नोपलभ्यते ।

(३) **मस्मृ**.८।८२ इत्यस्योपरि प्रक्षिप्तश्लोकोऽयम् ।

(४) **मस्मृ**.८।८२ इत्यस्योपरि प्रक्षिप्तश्लोकोऽयम्; **समु**.३३ उत्त.

(५) **मस्मृ**.८।८३; **शुनी**.४।६९७-६९८ पूय (पूज्य); **व्यक**.५१; **स्मृच**.८६; **पमा**.१०८नारदः; **व्यचि**.४८; **स्मृचि**.४७; **सवि**.१५८; **चन्द्र**.१४६ शुनीवत्; **व्यसौ**.४९ पूय (पूज्य) वर्णे (धर्मे); **व्यप्र**.१२७; **प्रका**.५५; **समु**.३३.

आह—सर्ववर्णेष्विति। निमित्तार्था सप्तमी अवच्छेदार्था वा। संकरसर्ववर्णाविशिष्टैः साक्षिभिरिति। मच.

**[1]आत्मैव ह्यात्मनः साक्षी गतिरात्मा तथाऽऽत्मनः।**
**माऽवमंस्थाः स्वमात्मानं नृणां साक्षिणमुत्तमम्॥**

(१)एष एवार्थो विस्पष्टीक्रियते उत्तरेण श्लोकेन। मेधा.

(२) यस्मात् शुभाशुभकर्मप्रवृत्तस्यात्मनश्चात्मैव साक्षी, तथात्मैवात्मनः शरणम्। तस्मादेनं स्वमात्मानं नराणां मध्यादुत्तमं साक्षिणमसत्याभिधानेन मावज्ञासीः केन ममैतद्दृष्टमित्येवं बुद्धिं कृत्वा। यत आत्मा तवात्र सर्वसाक्ष्युत्तमः साक्षी विद्यते। एकस्यैवात्मनः कर्मकर्तृव्यपदेशोऽसत्यनिवृत्त्यर्थः। *गोरा.

(३) आत्मा परमात्मा, आत्मनः शरीरस्य जीवस्य च। साक्षी चेष्टितसाक्षात्कारी। गतिर्ज्ञानहेतुः। मावमंस्था आत्मना दृष्टस्य विपरीताभिधानात्। +मवि.

(४) तन्मिथ्यात्वापरिज्ञानात्कथं प्रत्यवैति साक्षी? तत्राह—आत्मेति त्रिभिः। आत्मा जीवः। मिथ्योक्तं मयेत्यनुसंधत्तेऽवश्यम्। गतिर्गमनसाधनं, तत्पुण्यादिना तत्तल्लोकावाप्तेः। मावमंस्थाः आत्मानं कथं पश्यन्तीति मावजानीहि। उत्तमं अत्यन्तविजनेऽपि साक्षात् द्रष्टृत्वात्। मच.

**[2]मन्यन्ते वै पापकृतो न कश्चित्पश्यतीति नः।**
**तांस्तु देवाः प्रपश्यन्ति स्वस्यैवान्तरपूरुषः॥**

(१) नः शब्दो व्यवहितः। पापकृतः कूटादिकारिण एवं जानते—न कश्चिदस्मान् पश्यतीति। इतिकारेण मन्यतेर्वाक्यार्थः कर्मेति प्रतिपाद्यते। न नः कश्चित्पश्यतीत्येष वाक्यार्थः। तांस्तु देवा वक्ष्यमाणाः पश्यन्ति। स्वस्यान्तरात्मा। तदुक्तम्—'आत्मैव ह्यात्मनः साक्षी' इति। ननु कः पुनरयं पापचारी तस्य च कोऽन्यो द्रष्टा? यावताऽऽत्मैव कर्ता शुभाशुभानां चान्तरपूरुषो द्रष्टेति। सत्यम्, तस्यैव देवतात्वमध्यारोप्य भेदेन कर्मकर्तृव्यपदेशोऽनृतनिवृत्त्यर्थः। देवतारूपस्त्वं जानीष्व तात्विकमात्मीयमान्तरं रूपं, शारीरं, तथा बाह्यमनात्मीयमसारं, एतदुपभोगार्थं मा दुष्कृतं कार्षीरिति प्रोत्साह्यते। अतो 'माऽवमंस्थाः स्वमात्मानम्' माऽवज्ञासीर्नृणां साक्षिणमुत्तमम्। अन्यो हि साक्षी अस्मिन्नेव लोके, अयं तु मृतस्यापि साक्ष्यं ददाति। तस्मादेतस्माद् भेतव्यम्। [1]असत्यवादी कदाचिन्मन्यते, आत्मान्तरं प्रतिपन्नस्य किमेष मे द्रष्टाऽपि करिष्यतीति, तन्न, 'गतिरात्मा तथाऽऽत्मनः'। आत्मानमन्तरेणान्या गतिर्नास्ति। न हि द्वावात्मानावेकस्य भवतः। अन्ये तु मन्यन्ते—परमात्मा साक्षी संसार्यात्मानो नियोज्या इति भेदः। मेधा.

(२) देवा इन्द्रियस्थाः सूर्यादयः। आन्तरपूरुषः परमात्मा। मवि.

**[1]द्यौर्भूमिरापो हृदयं चन्द्रार्काग्नियमानिलाः।**
**रात्रिः सन्ध्ये च धर्मश्च वृत्तज्ञाः सर्वदेहिनाम्॥**

(१) के पुनस्ते देवा रहस्यपि प्रच्छन्नं पापमाचरन्तं ये पश्यन्त्यत आह—द्यौरिति। हृदयशब्देन हृदयायतनो लिङ्गपुरुष उच्यते। देवादीनां द्रष्टृत्वं [2]अचेतनेषु चैतन्यमारोप्यते। पृथिवी भारावतरणाय ब्रह्माणमुपागमदिति वर्ण्यते। सर्वगतत्वात्तेषां न किञ्चिदप्रत्यक्षमस्तीति सर्वशरीरिणां

---

* ममु. गोरावत्। + नन्द., भाच. मविगतम्।

(१) **मस्मृ**.८।८४; **शुनी**.४।६९८-६९९ त्मा तथा (त्मैव ह्या) क्षिण (क्षित्व); **अप**.२।७५ गतिरात्मा तथात्मनः (ह्यात्मैव गतिरात्मनः); **व्यक**.५१ क्षिण (क्षित्व); **स्मृच**.८६ स्वमा (त्वमा); **पमा**.१०९; **व्यचि**.४८ स्वमा (तमा) क्षिण (क्षित्व); **स्मृचि**.४७ स्वमा (त्वमा) णमुत्तमम् (त्वमागतम्); **सवि**.१५८ स्मृचवत्; **चन्द्र**.१४६ स्मृचवत्; **व्यसौ**.४९; **व्यप्र**.१२७; **प्रका**.५५ स्मृचवत्; **समु**.३४.

(२) **मस्मृ**.८।८५; **शुनी**.४।६९९-७०० कृतो (कारी) नः (माम्) तु (च) स्वस्यैवा (तथा ह्य); **गोरा**. वै (ऽमी) तांस्तु (तांश्च); **अप**.२।७५ तांस्तु (तांश्च) स्यैवा (श्चैवा); **व्यक**.५१ अपवत्; **स्मृच**.८६ स्वस्यै (यस्यै) रुषः (रुषाः); **पमा**.१०९ स्यैवा (श्चैवा); **व्यचि**.४८ ति नः (ह नः) स्वस्यै (यश्चै); **स्मृचि**.४७ अपवत्; **चन्द्र**.१४७ कश्चि ,..नः (मां कश्चित्प्रपश्यति) शेषं अपवत्; **व्यसौ**.५० अपवत्; **व्यप्र**.१२७ पमावत्; **विता**.१७१ अपवत्; **प्रका**.५५ स्वस्यै (यश्चै); **समु**.३४ स्मृचवत्.

(१) **मस्मृ**.८।८६; **अप**.२।७५; **व्यक**.५१; **स्मृच**.८६ संध्ये च (संध्याश्च); **पमा**.१०९; **व्यचि**.४८; **स्मृचि**.४७; **नृप्र**.१०; **चन्द्र**.१४७ न्द्रार्काग्नियमा (न्द्रादित्यानला); **व्यसौ**.५०; **व्यप्र**.१२७; **विता**.१७१; **प्रका**.५६ ध्ये (ध्या); **समु**.३४.

१ नासत्यवादिना कदाचिन्मन्यन्ते। २अचैतन्या श्रुत्याऽऽरोप्यते।

वृत्तं शीलं चात्मनः कायगतं शुभमशुभं च जानते। मेधा.

(२) हृदयं मनः। मवि.

(३) द्युलोकपृथिवीजलहृदयस्थजीवचन्द्रादित्याग्नियमवायुरात्रिसंध्याद्वयधर्माः सर्वशरीरिणां शुभाशुभकर्मज्ञाः। दिवादीनां चाधिष्ठातृदेवताऽस्ति, सा च शरीरिण्यैकत्रावस्थापिता तत्सर्वं जानातीत्यागमप्रामाण्याद्वेदान्तदर्शनं तदङ्गीकृत्येदमुक्तम्। +ममु.

(४) हृदयं हृदयस्थः परमात्मा। नन्द.

**देवब्राह्मणसांनिध्ये साक्ष्यं पृच्छेदृतं द्विजान्।**
**उदङ्मुखान् प्राङ्मुखान् वा पूर्वाह्णे वै शुचिः शुचीन्॥**

(१) देवा दुर्गामार्तण्डादयः प्रतिमाकल्पिताः। शुचीन् कृतस्नानाचमनादिविधीन्। शुचिः प्रष्टा स्वयमपि तथाविध एव स्यात्। ऋतमिति श्लोकपूरणार्थमेव। प्रसिद्धमन्यत्। *मेधा.

(२) आलेख्यादिविन्यस्तोक्तदेवसंनिधाने ब्राह्मणानां समक्षं सभ्यानां यत्नकरणेन सत्यरूपतामापन्नं साक्ष्यं द्विजातीन् प्रयतानुत्तराभिमुखान् पूर्वाभिमुखान् वा प्रयतः सन् प्राड्विवाकः पूर्वाह्णकाले तु पृच्छेत्। गोरा.

(३) एतत्सर्वं श्रावयित्वाऽनन्तरं साक्ष्यं पृच्छेत्। मवि.

(४) द्विजानिति साक्षिपुरुषोपलक्षणार्थम्। उपात्तविशेषणत्वात्। स्मृच.८८

**ब्रूहीति ब्राह्मणं पृच्छेत्सत्यं ब्रूहीति पार्थिवम्।**
**गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः॥**

+मच. ममुगतम्। * ममु. मेधागतम्।

(१) **मस्मृ.**८।८७; **व्यमा.**३३९ ऋतं (ऋते) शुचिः (शुभे); **अप.**२।७३ जान् (जः) वै (वा); **व्यक.**५१ वै (वा); **स्मृच.**८७; **पमा.**१११; **व्यचि.**४७ उदङ्......वा (प्राङ्मुखोदङ्मुखान् वाऽपि) वै (तु); **स्मृचि.**४७ ऋतं द्विजान् (अतन्द्रितः); **नृप्र.**१०; **व्यत.**२१५; **सवि.**१५५ दृतं (न्नृपो); **चन्द्र.**१४३ दृतं द्विजान् (च तान् द्विजः) शुचिः शुचीन् (शुचीन् शुचिः); **व्यसौ.**४९; **व्यम.**१८ वै (च); **सेतु.**१२१; **प्रका.**५७; **समु.**३५; **विव्य.**१४ साक्ष्यं (साक्षिं) ऋतं (तु तान्).

(२) **मस्मृ.**८।८८; **गोरा.** सर्वैस्तु (एभिस्तु); **व्यमा.** ३३०; **अप.**२।७५ पृच्छे (ब्रूया) पार्थिवम् (भूमिपम्)

(१) क्व पुनरियं तृतीया गोबीजकाञ्चनैरिति ? यदि तावत्पृच्छेदिति क्रियासंबन्धात्करणमुच्यते तदनुपपन्नम्। शब्दो हि तत्र करणम्। नार्थः। नैष दोषः। यथा गवादीनि प्रश्नकरणत्वं प्रतिपद्यन्ते तथा व्याख्येयम्। पातकैरित्युभयशेषो विज्ञेयः। गोबीजकाञ्चनैः पातकैरिति। तेनायमर्थो भवति - गोबीजकाञ्चनविषयैः पातकप्रदर्शनैः पृच्छेदिति। गां हृत्वा हत्वा वा यत्पातकं, तद्भवति तव मिथ्या वदतः, इति प्रश्नवाक्यं पठितव्यम्। एवं वक्ष्यमाणैः पातकैः शूद्रं पृच्छेत्। पातकशब्दस्तु पातकप्रदर्शनार्थेष्वभिधानेषु द्रष्टव्यो मुख्यानां प्रश्नकरणत्वाभावादित्युक्तम्। मेधा.

(२) ब्रूहीत्येवं शब्दमुच्चार्य ब्राह्मणं पृच्छेत्। सत्यमित्येवमभिधाय क्षत्रियम्। गोबीजसुवर्णापहारे यत्पातकं, तवानृतवदने तत्स्यात् इत्येवं वैश्यम्। शूद्रं वक्ष्यमाणैः पापप्रतिपादकैः शब्दैः पृच्छेत्। *गोरा.

(३) गोबीजकाञ्चनैः, एतेषां ते हानिर्मिथ्योक्ताविति। एतैः पातकैः वक्ष्यमाणैः ब्रह्मघ्न इत्यादिभिः। +मवि.

(४) उत्कृष्टब्राह्मणं सत्यं विनैव साक्ष्यं दापयेत्। 'ब्रूहीति ब्राह्मणम्' इति मनुना विना सत्यमेव प्रश्नाभिधानात्, 'शपथैनैकेन सत्यकर्म। तदेव राजब्राह्मणसंसदि स्यादब्राह्मणानाम्' इति गौतमवचनाच्च। 'सत्येन शापयेद् विप्रम्' इत्यपकृष्टब्राह्मणविषयम्, उत्कृष्टस्य गौतमेन शपथनिषेधात्, इति रत्नाकराच्च। चन्द्र.१४५-४६

(५) गोबीजकाञ्चनानि स्पर्शयित्वेत्यर्थः। नन्द.

अनृतोक्तिनिन्दा सत्योक्तिप्रशंसा च

**ब्रह्मघ्नो ये स्मृता लोका ये च स्त्रीबालघातिनः।**
**मित्रद्रुहः कृतघ्नस्य ते ते स्युर्ब्रुवतो मृषा॥**

* ममु., व्यत., मच., सेतु., भाच. गोरागतम्।
+ स्मृच., सवि. मविगतम्।

हवैस्तु (एभिस्तु); **व्यक.**५४; **स्मृच.**८८ पू.; **दीक.**३८; **व्यचि.**५० मनुनारदौ; **स्मृचि.**४८; **व्यत.**२१५; **सवि.** १५६ पू.; **चन्द्र.**१४५; **व्यसौ.**५१; **वीमि.**२।७३ (=) पू.; **सेतु.**१२१; **प्रका.**५७ पू.; **समु.**३५ पू.; **विव्य.**१४.

(१) **मस्मृ.**८।८९; **गोरा.** घ्नो ये (घ्नानां) तिनः (तिनाम्); **व्यमा.**३३० घ्नो (हा) लोका (लोके) घ्नस्य (घ्नाश्च); **अप.**२।७५ ब्रुव (वद) शेषं गोरावत्; **व्यक.**५४ तिनः

१ स्त्वपा.

ब्राह्मणं हत्वा ये लोका नरकादिलक्षणाः प्राप्यन्ते तत्कारिभिः ते तव भवन्ति मिथ्यावदतस्तस्मात्सत्यं ब्रूहीत्यनुयोगः । यश्च मित्रं द्रुह्यति, ब्राह्मणदारसर्वस्वापहरणादिना नाशयति, यश्च कृतमुपकारं विस्मृत्य तमेवोपकर्तारमपकरोति, यत्तस्य परत्र दुःखं तदवाप्नोति । मेधा.

**जन्मप्रभृति यत्किञ्चित्पुण्यं भद्र त्वया कृतम् ।**
**तत्ते सर्वं शुनो गच्छेद्यदि ब्रूयास्त्वमन्यथा ॥**

(१) शुनो गच्छेन्निष्फलं स्याद् भवतं इत्यर्थः । अत्यन्तदोषप्रदर्शनार्थं श्वगमनवचनम् । यथा कृच्छ्रेण महता सुवर्णाद्युत्तमद्रव्यमर्जयित्वाऽशुचिप्रवाहे त्यजेत्तादृक् सुकृतं भवति । न पुनरन्यकृतस्य सुकृतस्यान्यत्र गमनमस्तीत्यसकृदुक्तमेतत् । मेधा.

(२) भद्रेति शूद्रसंबोधने । मवि.

**एकोऽहमस्मीत्यात्मानं यस्त्वं कल्याण मन्यसे ।**
**नित्यं स्थितस्ते हृद्येष पुण्यपापेक्षिता मुनिः ॥**

(१) पुण्यपापयोरीक्षिता द्रष्टा मुनिस्तूष्णीम्भूतः। मेधा.

(२) हे भद्र, एक एवाहं शरीरमात्रात्मक एवाहं इत्येवंरूपमात्मानं यस्त्वं बुध्यसे, मैवं मंस्थाः । यस्मादेष पुण्यपापानां द्रष्टा मुनिः स्वरूपतोऽत्यन्तशुद्धरूपस्तव हृदये नित्यमवस्थितः । गोरा.

(३) मुनिः ज्ञानवान् परमात्मा । मवि.

(४) हे भद्र, एक एवाहमस्मि जीवात्मक इति यदात्मानं मन्यसे, मैवं मंस्थाः । यस्मादेवं पापानां पुण्यानां च द्रष्टा मननान्मुनिः सर्वज्ञस्तव हृदये परमात्मा नित्यमवस्थितः । तथा च श्रुतिः—द्वा सुपर्णेत्यादि । *ममु.

(५) मिथ्यात्वस्य सर्वदेवज्ञेयत्वमनुवदन् सत्यवादिनः सर्वतीर्थगमनफलवादेन तन्निषेधरूपस्तुतिमाह—एकोऽहमिति द्वाभ्याम् । मच.

**यमो वैवस्वतो देवो यस्तवैष हृदि स्थितः ।**
**तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः ॥**

(१) कः पुनरसौ मुनिर्भयातिशयप्रदर्शनार्थमाह—यम इति । यथा यमः सर्वप्राणिनां देहवनायुच्छेदकारी यातनाभिश्च, निगृह्णीते[1] इति श्रुतिपथमागतो भवतः । सोऽयं तव हृदये वर्तते, न विप्रकृष्टः । सत्रा कृतापराधमधुनैव नयति । मा चैवं मनसि कृथाः एष आत्मा मदीयो मामुपेक्षिष्यत इति । न ह्येतस्य कश्चिदात्मीयः । तेन चेदविवादः,स चेत्प्रसन्नः प्रत्ययिनः, किं गङ्गागमनेन स्नानार्थिनः पापशुद्धये, किं वा कुरुक्षेत्रगमनेऽस्ति प्रयोजनम् । यत्फलं पापप्रमोचनलक्षणं ततः प्राप्यते, तदिहैवाविसंवादिनि परमात्मनि । न हि पापकारिण आत्मा निर्विशङ्को भवति । किं मेऽतः स्यादेतेनेति नास्तिकस्यापि किंकथिका कदाचित् भवत्येव । गङ्गानदी पावयन्ती । कुरुक्षेत्रं तु देश एव पावनः । ×मेधा.

(२) सर्वसंयमनाद्यमः परमात्मा । वैवस्वत इति दण्डधारित्वात् । देवनाद्देवः । यस्तवैष हृदि तिष्ठति, तेन सह यथार्थकथने यदि तवाविवादः, यदा त्वन्मनोगतमसावन्यज्जानाति त्वं चान्यथा कथयसि तदान्तर्यामिणा सह विप्रतिपत्तिः स्यात् । मनूक्तमेवात्र गङ्गाकुरुक्षेत्रयोः साम्यं मत्स्यपुराणे व्यासेन स्फुटीकृतम्—'कुरुक्षेत्रसमा गङ्गा यत्र तत्रावगाहिता' इति । +ममु.

---

(तिनाम्) ब्रुव (वद); **स्मृच**.८८ ब्रुव (वद); **पमा**.१११; **व्याचि**.५० अपवत्, मनुनारदौ; **स्मृचि**.४८; **व्यत**.२१५ घ्नो (घ्ना) लोका (लोके) ब्रुव (वद); **सवि**.१५६ घ्नो (घ्ना) लोका (चौरा) घ्नस्य (घ्नाश्च) ब्रुव (वद); **व्यसौ**.५१ घ्नो (घ्ना) लोका (लोके) ते स्यु (वै स्यु); **सेतु**.१२२ स्मृचवत्; **प्रका**. ५७ स्मृचवत्; **समु**.३५ व्यकवत्.

(१) **मस्मृ**.८।९०; **व्यमा**.३३० जन्म (स्वजन्म) किञ्चित् (सर्वं); **अप**.२।७५ भद्र (भद्रं); **व्यक**.५४ भद्र (भद्रं) सर्वं शुनो (सर्वस्वतो); **स्मृच**.८८; **पमा**.१११; **व्याचि**.५० ते सर्वं (सर्वं ते) मनुनारदौ; **स्मृचि**.४८; **नृप्र**.१०; **सवि**. १५६; **व्यसौ**.५१; **प्रका**.५७; **समु**.३५.

(२) **मस्मृ**.८।९१ क.ग.ध. पुस्तकेषु यस्त्वं(यत्त्वं) इति पाठः;

१ त्येवेत्यर्थः. २ त्यदोष.

* भाच. ममुगतम् । × गोरा. मेधागतम् । + शेषं मेधागतम् ।

**व्यमा**.३३० चैष (देशे); **अप**.२।७५ यस्त्वं (यदि) ते (स) मुनिः (पुनः); **व्यक**.५४; **स्मृच**.८८; **व्याचि**.५०-५१ मनुनारदौ; **व्यसौ**.५१; **प्रका**.५७; **समु**.२३.

(१) **मस्मृ**.८।९२; **व्यमा**.३३० पू.; **अप**.२।७५ देवो ...हृदि (देवस्तवैष हृदये); **व्यक**.५४; **स्मृच**.८८; **स्मृसा**. १२१ देवो (राजा); **व्याचि**.५१ मनुनारदौ; **सवि**.१५६; **व्यसौ**.५१; **प्रका**.५७; **समु**.३५.

१ तेति.

**[1]नग्नो मुण्डः कपालेन भिक्षार्थी क्षुत्पिपासितः ।**
**अन्धः शत्रुकुलं गच्छेद्यः साक्ष्यमनृतं वदेत् ॥**

(१) कपालं शरावादिपात्रैकदेशः । सुबोधम् । मेधा.

(२) यः साक्ष्यमनृतं ब्रूयात्स नग्नः कृतकेशमुण्डनपरिभवोऽन्धः क्षुत्तृष्णार्तः खर्परेण युक्तो भिक्षार्थं शत्रुगृहं गच्छेदिति साक्षिमात्रविषयत्वेनैतदुच्यते न शूद्रप्रश्नार्थं, मध्यपुरुषानिर्देशात् । एते शपथाः । गोरा.

(३) अत्र केचित् 'नग्नो मुण्ड' इत्यादि श्लोकत्रयमपकृष्य अनुयोजनविधौ निवेशनीयं अन्यथा अनन्वयः स्यादिति मन्यन्ते । तदा 'मा कुरून् गम' इत्यभिधानानन्तरं 'यावतो बान्धवान्' इत्याद्यभिधातव्यमित्यवगन्तव्यम् । स्मृच.८८

(४) अनृतवदनेऽदृष्टरूपं दण्डान्तरमाह—नग्न इति त्रिभिः । मच.

(५) कपालं अलाबुपात्रम् । नन्द.

**[2]अवाक्शिरास्तमस्यन्धे किल्बिषी नरकं व्रजेत् ।**
**यः प्रश्नं वितथं ब्रूयात्पृष्टः सन् धर्मनिश्चये ॥**

(१) प्रश्नं धर्मनिश्चयनिमित्तं पृष्टो यो वितथमसत्यं वक्ति स तेन किल्बिषेण पापेन गृहीत ऊर्ध्वपादोऽधोमुखो महति गाढे तमसि, नरकं यातनास्थानं, व्रजेत् प्राप्नोतीत्यर्थः । अन्यस्मिंस्तमसि किञ्चिद् दृश्यते, तत्र तु न किञ्चिदेवेत्यन्धग्रहणम् । मेधा.

(२) धर्मनिश्चये व्यवहारनिर्णये । नन्द.

**[3]अन्धो मत्स्यानिवाश्नाति स नरः कण्टकैः सह ।**
**यो भाषतेऽर्थवैकल्यमप्रत्यक्षं सभां गतः ॥**

(१) अर्थवैकल्यं सत्यादपेतं भाषते । यथा अकण्टका मत्स्या अशिता भक्षिताः प्रीतिं[2] जनयन्ति, न तादृशीं सकण्टकाः प्रीतिं जनयन्ति । यदा धनलोभेन काचित् प्रीतिमात्रा भवति, तथापि महादुःखं[3] भवतीति सकण्टकमत्स्याशनोपमा । +मेधा.

(२) अर्थवैकल्यं अर्थस्य विकलता शून्यत्वं यत्र तत् । अप्रत्यक्षं प्रत्यक्षेतरं वचः अनुपलब्धं वा । मच.

(३) सभागतेऽर्थे आत्मनोऽप्रत्यक्षं वैकल्यमर्थासद्भावं यो भाषते, स नर इह जन्मनि अन्धो भूत्वा वृत्त्यभावात् कैवर्तादिवत्समुद्रादितीरवर्तिमत्स्योदरस्थैः कण्टकैः सह मत्स्यानश्नाति । *नन्द.

**[1]यस्य विद्वान् हि वदतः क्षेत्रज्ञो नातिशङ्कते ।**
**तस्मान्न देवाः श्रेयांसं लोकेऽन्यं पुरुषं विदुः× ॥**

(१) यस्य वदतः साक्षिणो, विद्वान् सत्यानृते जानानः, क्षेत्रज्ञोऽन्तर्यामी पुरुषो नातिशङ्कते, किमयं सत्यं वक्ष्यत्यनृतं वेत्येवं नाशङ्कते, निश्चितमेवैष सत्यं वक्तीति यस्यात्मा निर्विशङ्कः तस्मात्पुरुषान्नान्यं श्रेयांसं श्रेष्ठं प्रशस्ततमं पुरुषं देवा जानते ।

कः पुनरयं वेदिता, कश्च ततोऽन्य आशङ्किता ? एक एव ह्यात्मा सुप्रपन्नद्वारेण वाचमीरयन्वेदिता संपद्यते । स एव तद्धर्मेण किं कथं स्यादित्येवंरूपेणाशङ्काख्यानेन युज्यते तत्र भेदानुपपत्तिः । सत्यमेतत्, काल्पनिकेन भेदेनैवमुक्तम् । यथा 'हन्त्यात्मानमात्मने'ति । =मेधा.

(२) क्षेत्रज्ञः परमात्मा । मवि.

---

(१) **मस्मृ**.८।९३ ख. पुस्तके कपालेन (कपाली च) कुलं (गृहं) इति पाठः; **गोरा**. कुलं (गृहं); **व्यमा**.३३०; **अप**.२।७५ गोरावत्; **व्यक**.५४ अन्धः (क्रुद्धः) कुलं (गृहं) मनुनारदौ; **स्मृच**.८८ गोरावत्; **स्मृसा**.१२१ लेन (ली च) अन्धः (क्रुद्धः) यः साक्ष्यमनृ (यदि साक्ष्यनृ); **व्याचि**.५१ लेन (ली च); **सवि**.१५६ कुलं (गृहं) यः सा (यत्सा); **व्यसौ**.५१ उत्तरार्धं स्मृसावत्; **प्रका**.५७ गोरावत्; **समु**.३४ गोरावत्. (२) **मस्मृ**.८।९४; **अप**.२।७५; **व्यक**.५४; **स्मृच**.८८ प्रश्नं (प्रश्ने); **व्याचि**.५१ निश्च (संश); **व्यसौ**.५१ व्याचिवत्; **प्रका**.५७; **समु**.३४.

(३) **मस्मृ**.८।९५; **व्यक**.५४ वाश्ना (वाप्नो); **स्मृच**.८८; **व्याचि**.५१ स ... सह (निरपेक्षः संकण्टकान्) षते (षेता); **व्यसौ**.५१ पूर्वार्धं व्याचिवत्, त्यक्षं (त्यक्षः); **प्रका**.५७ऽर्थ (ऽर्थे); **समु**.३४.

१ 'प्रश्नं धर्मनिश्चय' इत्यंशो नास्ति । २ तत्.

\+ गोरा. मेधावत् । * भाच. नन्दगतम् ।
× मच. अशुद्धिबाहुल्यान्नोध्दृतम् ।
= गोरा., स्मृच., ममु. मेधागतम् ।

(१) **मस्मृ**.८।९६ क. पुस्तके नाति (नाभि) तस्मा (तस्मि): ख.पुस्तके तस्मा (तस्मि): ग.घ. पुस्तकयोः नाति (नाभि) इति पाठः; **अप**. २।७५ नाति (नाभि); **व्यक**.५४ अपवत्; **स्मृच**. ८६ऽन्यं (ऽस्मिन्); **व्याचि**.५१ अपवत्; **व्यसौ**.५१ अपवत्; **प्रका**.५५ स्मृचवत्; **समु**.३३ स्मृचवत्.

१ असिता. २ (०). ३ मोहद्.

(३) वदतो यस्य वाक्यादिति शेषः। क्षेत्रज्ञः परमात्मा न तुष्यतीति। नन्द.

अनृतवादिसाक्षिणः विषयभेदेन पातकतारतम्यम्

**यावतो बान्धवान् यस्मिन् हन्ति साक्ष्येऽनृतं वदन्।**
**तावतः संख्यया तस्मिन् शृणु सौम्यानुपूर्वशः॥**

(१) द्रव्यविशेषानृताश्रयाः पापविशेषाः कूटसाक्षिण इत्येतत्प्रदर्शनार्थं प्रकरणमारभ्यते। तत्रायं श्लोकः संबोधनद्वारेणोपदिश्यमान आदरार्थः संपद्यते। यद् गुह्यं मिथ उपदिश्यते तद् यथाकथञ्चिद्भवतीत्यवधारितं ग्रहणं नातिगुरु। इदं त्वतिमहाप्रयोजनमवहितैः श्रोतव्यमिति।

सौम्येति चैकवचनमनेकशिष्यसंनिधाने भृगावेव विवक्षितम्। यस्मिन् साक्ष्य इति व्यधिकरणसप्तमी। यस्मिन् द्रव्यभेदभिन्ने व्यवहारे यत्साक्ष्यं तत्र तन्निमित्तं यदनृतमित्येषा विषयसप्तमी, अपरा 'यस्य च भावेने'ति (व्यासू. २।३।३७)। अथवा द्रव्यभेदात्साक्ष्यभेदस्ततः समानाधिकरण एव। तावत इति परिमाणे व्युत्पाद्यते। तत्र निमित्तमपि परिमाणं संभाव्यते, शिशून् स्त्रियो वृद्धान् इति विशिनष्टि—संख्ययेति। अनुपूर्वश इति सुखप्रतिपत्तये। अनुपूर्वेण ह्यभिधीयमानं सुखेन प्रतीयते। आनुपूर्वी च संख्यागताऽत्राभिप्रेता। तस्या एव वक्ष्यमाणत्वात् 'पञ्च पश्वे'त्यादि। +मेधा.

(२) बान्धवान् पूर्वपुरुषान् हन्ति नरके पातयति। केचित्तु तावत्पुरुषहन्तृदोषो भवतीत्यस्यार्थ इत्याहुः। मवि.

**एवं संबन्धनात्तस्मान्मुच्यते नियतावृतः।**
**पशून् गोऽश्वपुरुषाणां हिरण्यं भूर्यथाक्रमम्॥**
**पञ्च पश्वनृते हन्ति दश हन्ति गवानृते।**
**शतमश्वानृते हन्ति सहस्रं पुरुषानृते*॥**

(१) पशुनिमित्तमनृतम्। शाकपार्थिववत्समासः। पञ्चबान्धवांश्चानृतं हन्ति। ततश्च तेषां नरकपातनम्। मातापितरौ जायापतिमिथुनं चापत्यमिति पञ्च। कथं पुनरन्यकृतेनैनसाऽन्यस्य फलम्? संसर्गादिति ब्रूमः। तैरयं परित्यज्यत इत्युक्तं भवति। अथवा, तैर्हतैर्यत्पापं तदस्य भवतीत्यघ्नन्नपि हन्तीत्युच्यते। अदृष्टकार्यतुल्यत्वात्। अर्थवादश्चायं, न तत्कार्योपदेशः। तत्कार्योपदेशे हि हिंसाप्रायश्चित्ती स्यात्। कौटसाक्ष्यप्रायश्चित्तमेतद् भवति। उत्तरोत्तरसंख्यादिवृद्धिः प्रायश्चित्तगौरवार्था। न पुनर्विवक्षितैव। तेनोत्तरोत्तरस्य गरीयः प्रायश्चित्तमित्युक्तं भवति। अयं पुरुषः कस्य दास इत्येवं संशये यदनृतं तत्पुरुषानृतमुच्यते। +मेधा.

(२) पशुविषयेऽनृते पञ्च बान्धवान् नरकेण योजयति, दश गोविषये, शतमश्वविषये, सहस्रं पुरुषविषये। गोरा.

(३) पश्वनृते गवाद्यन्यपश्वर्थमनृते सहस्रं पूर्वपूर्वपुरुषानेव। मवि.

(४) हननं तिर्यग्योनित्वप्राप्तिः। मच.

(५) अत्र हरदत्तेन 'क्षुद्रपश्वे' (गौध. १३।१४-१५) त्यादिगौतमवचनव्याख्याने मनुवचः 'पञ्च पश्वनृते' इत्याद्युपन्यस्य व्याख्यातं तत्तु 'यावतो बान्धवान्' इति मानवोपक्रमानालोचननिबन्धनमित्युपेक्ष्यम्। तस्मात् साक्षिसंबन्धिपित्रादिगतसंख्यापरतयैव व्याख्यानं सूचितम्। गौतमीयमपि मानवसंवादेनैव व्याख्येयमेकमूलकल्पनालाघवाय। 'त्रीनेव च पितॄन् हन्ति' इत्यादिबौधायनादिवचनसंवादोऽप्येवम्। व्यप्र. १२९

**हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन्।**
**सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वदः॥**

* गोरा. अशुद्धिसंदेहान्नोद्धृतम्। + ममु. मेधागतं मविगतं च।

(१) मस्मृ. ८।९७; व्यमा. ३३० साक्ष्येऽ (साक्ष्य); अप. २।७५ व्यमावत्; व्यक. ५४ मनुनारदौ; स्मृच. ८८; पमा. १११; व्यसौ. ५२; व्यप्र. १२८ तावतः (तावन्तः) मनुनारदौ; प्रका. ५७-५८; समु. ३५.

(२) मस्मृ. ८।९७ इत्यस्योपरिष्टात् प्रक्षिप्तश्लोकोऽयम्।

(३) मस्मृ. ८।९८; व्यमा. ३३०; अप. २।७५; व्यक. ५४ मनुनारदौ; मभा. १३।१६ स्मृत्यन्तरम्; गौमि. १३।१५

१ संबन्धो धन. २ स्तत्र.

* मभा., गौमि. च (गौध. १३।१५-१६) इत्यत्र (पृ. २३९-२४०) द्रष्टव्ये।

+ गोरा., ममु. मेधातिथिभाष्यस्य प्रथमकल्पवदर्थः। (=); स्मृच. ८८; पमा. १११; स्मृसा. १२१; स्मृचि. ४८; व्यत. २२० बौधायनः; सवि. १५६; व्यसौ. ५२; व्यप्र. १२८ मनुनारदौ; विता. १७१-१७२ मश्वा (श्वान्या) मनुनारदौ; सेतु. १२२ मनुनारदबौधायनाः; प्रका. ५८; समु. ३५.

(१) मस्मृ. ८।९९ वदः (वदीः); व्यमा. ३३० सर्वं (सर्व); अप. २।७५ वदः (वदेत्); व्यक. ५४ मनुनारदौ;

१ जायामिथुनं.

(१) कथं पुनरजातानामसति संसर्गे परकीयेन संयोगो येनेदमुच्यते 'हन्ति जातानजातांश्चे'ति । उक्तम्, अर्थवादोऽयमिति । 'सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वदः' । माऽवादीः भूमिसंबन्ध्यसत्यम् । 'स्मोत्तरे लङ् च' इति लङ्वादः । माऽवादीरित्यादरार्थं मध्यमेन प्रत्यक्षं संबोधनम् । का पुनरियं भूमिर्नाम, यदेतत्पृथिवीगोलकं पर्वतावष्टम्भनं सागरावधि प्रसिध्दं, [1]नन्वियत्याः कः स्वामी को वाऽपहर्ता ? न हि सार्वभौमः कश्चिदस्ति ! तथा च गाथा (ऐब्रा.८।२१, शब्रा.१३।७।१।१५) भूमेः—'न मा मर्त्यः कश्चन दातुमर्हति' । न कश्चित्सार्वभौमोऽस्तीत्यभिप्रायः । 'विश्व[2]कर्मन् भौवन मां दिदासिथ' विश्वकर्मन् भौवनेति पितृव्यपदेशेन स्वनाम्ना च राज्ञो आमन्त्रणं श्रुतम् । मामसौ दातुमिच्छतीति । 'उपमं[3]क्ष्यति स्या सलिलस्य मध्ये' निमज्जेऽहं, सलिलस्य मध्यम् । एवं संकल्पं वृथा संकल्पितवति त्वयि सलिले मज्जामि । सलिलमज्जनेन नैष्फल्यमत्र दानसंकल्पस्याह । यथा सलिले निक्षिप्तं निष्फलमेवमेतदपीति । 'मृषैष कश्यपाय संगरः' । तवैष संगरः प्रतिश्रवः प्रतिज्ञानं कश्यपाय ददामीति मोघो वन्ध्योऽस्तु; सर्वसाधारणाऽहं सर्वजनोपभोग्या । केवलं राजानो रक्षानिर्बन्धमात्रभाज इत्यभिप्रायः। अत एतावत्या भूमेर्न दानापहारसंभव इति कुतो विवादः? सत्यम्, यथैवायं भूमिशब्दोऽत्र वर्तते एवं क्षेत्रग्रामस्थण्डिलादावपि । तत्र च संभवत्येव साम्यं प्रत्यक्षस्यैव दानापहाराविति न किञ्चिदनुपपन्नम् । अपहारश्चास्याः यादृशेन रूपेण अपहारः गृहादेर्न वीरुद्विच्छेदः । अतश्च यः परकीये क्षेत्रे [4]चङ्क्रम्येत मृदो वा कश्चिदादद्यान्नासौ भूम्यपहारी स्यात् । मीमांसकैरुक्तम्—'न भूमिः स्यात्सर्वान् प्रत्यविशिष्टत्वात्' इति ।

एकदे[1]शवचनं च भूमिशब्दमधिकृत्य भगवान् कृष्णद्वैपायनो दानधर्मेषु पठितवान्—'परैरप्यनुमन्तव्यो दानधर्मो नृपैर्भुवि । अक्षयो हि निधिर्ब्राह्मो विहितोऽयं महीभृताम्' इति ॥ कृत्स्नगोलकाभिप्रायमेव [2]अदेयत्वं भूमेर्विश्वजिति मीमांसकैरुक्तम्—'न भूमिः स्यात्सर्वान् प्रत्यविशिष्टत्वादि'ति । सर्वान् पुरुषान् प्रति चङ्क्रमणादियोग्यतयाऽविशिष्टा भूमिः स्वी[3]कर्तुमशक्या कथं दीयत इत्यर्थः । अस्मिंस्तु पक्षे ग्रामनगरादि विश्वजिति दातव्यम् । अन्ये तु पठन्ति 'अन्तरेण सदः पत्नीशालं च दक्षिणा नयन्ती'ति भूमौ गुणविधेरस्यासंभवात्क्षेत्रादेरप्यत्र दानम् । वदन्ति च एकवचननिर्देशाच्छृणु सौम्येति, साक्षिविषयमेवैतत्संबोधनं, न शिष्यविषयम् । 'शूद्रमेभिस्तु पातकैः' इत्यत आरभ्य यावन्तो मध्यमपुरुषनिर्देशास्ते सर्वेषां पातकभूयस्त्वसमानाख्यातरूपाद्येकवाक्यत्वाच्छूद्रानुयोगार्थाः । 'अन्धः शत्रुगृहं गच्छेत्' इत्यत आरभ्य सर्वे साक्षिविषया अनुयोगाः । आख्यातवैरूप्येण प्रकरणस्य विच्छेदात् मध्यमपुरुषे समानार्थक्रमत्वात्कर्तव्यो गच्छेदिति प्रथमपुरुषनिर्देशः पूर्वाधिकारनिवृत्त्यर्थः । मेधा.

(२) हिरण्यविषये अनृतं वदन् जातान् पित्रादीन् अजातांश्च पुत्रादीन् आत्मानृतत्वात् नरके योजयति । भूमिविषये चानृतं वदन् सर्वं प्राणिजातं नरके योजयति, तस्माद् भूमिविषयेऽनृतं न वदेत् । *गोरा.

(३) अजातान् पुत्रादीन् । अत्रापि सहस्रमित्यन्वयः । सर्वं सहस्रादप्यधिकम् । मवि.

(४) जातानजातानिति । स्वकुल इति शेषः ।

सवि.१५७

[1]पशुवत्क्षौद्रघृतयोर्यच्चान्यत्पशुसंभवम् ।
गोवद्वस्त्रहिरण्येषु धान्यपुष्पफलेषु च ।
अश्ववत्सर्वयानेषु खरोष्ट्राश्वतरादिषु ॥

---

स्मृच.८८ वदः (वदीः); पमा.११२वदः(वदेः);स्मृसा.१२१ अपवत्; स्मृचि.४८अपवत्; व्यत.२२० मा स्म ... वदः(साक्ष्ये साक्षी मृषा वदन्)बौधायनः; सवि.१५६ वदन् (वदेत्) वदः (वदेः); व्यसौ. ५२ पमावत्; व्यप्र.१२८ स्मृचवत्, मनुनारदौ; विता.१७२ सर्वं (सर्वं) नृते(नृतं)मनुनारदौ; सेतु.१२२ मा ... वदः (साक्ष्यं साक्षी मृषा वदन्) मनुनारदबौधायनाः; प्रका.५८ पमावत्; समु.३५.

१ न त्वि. २ विश्वकर्मा भौवनमादिशद्विश्वकर्म भौवनेति पितृव्यपदेशेन स्वनाम्ना च राज्ञा आमन्त्रणं श्रुतम्। मयासौ रन्तुमिच्छतीति । ३ मैष्यति सलिल. ४ चक्र.

* ममु. गोरावत् ।

(१) मस्मृ.८।९९ इत्यस्योपरिष्टात् अर्धत्रयं प्रक्षिप्तम्, ष्ट्राश्व (ष्ट्रव) इति पाठः; समु.३५ क्षौद्र (क्षीर) द्वस्त्र (द्वसु).

१ वशनं. २ नादे. ३ स्वामीक.

**अप्सु भूमिवदित्याहुः स्त्रीणां भोगे च मैथुने ।**
**अब्जेषु चैव रत्नेषु सर्वेष्वश्ममयेषु च ॥**

कूपतडागादिस्थे महति जले स्वल्पेऽपि खल्वपहारे भूमिवद्दोषः । स्त्रीणां भोगे च मैथुनाख्ये, केनेयं स्त्री भुक्ता मैथुनधर्मेणेति । 'अब्जेषु रत्नेषु' मणयो रत्नानि मुक्ताद्याः । अश्ममयेषु वैडूर्यादिषु । रत्नेष्विति संबध्यते । द्विविधान्येव रत्नानि जलजान्यश्ममयानि च । अतो रत्नग्रहण एव कर्तव्ये विशेषणद्वयोपादानं श्लोकपूरणार्थम् । अद्भ्यो जातान्यब्जानि । अश्मनो विकारा अश्ममयानि । *मेधा.

**पशुवत्क्षौद्रघृतयोर्यानेषु च तथाऽश्ववत् ।**
**गोवद् रजतवस्त्रेषु धान्ये ब्रह्मणि चैव हि ॥**

ब्रह्मणि वेदे । व्यक.५४

**एतान्दोषानवेक्ष्य त्वं सर्वाननृतभाषणे ।**
**यथाश्रुतं यथादृष्टं सर्वमेवाञ्जसा वद ॥**

(१) ऊहापोहौ[1] वर्जयित्वा यथादृष्टं यथाश्रुतं[2] तत्त्वेन ब्रूहि । मेधा.

(२) एतान् सर्वाननृतभाषणे दोषान् ज्ञात्वा दृष्टश्रुतानतिक्रमेण सर्वमेतत् तत्त्वतो ब्रूहि । *गोरा.

(३) अञ्जसा शीघ्रम् । मवि.

(४) अञ्जसा शुद्धेन हृदयेन । अयं च शूद्रप्रश्नविधिरनापदि हीनवृत्त्युपजीविनां द्विजानामपि भवति । तेषामल्पशपथेन नियन्तुमशक्यत्वात् । +स्मृच.८८

(५) साक्षिवाचनमुपसंहरति— एतानिति । ब्रह्मघ्नानित्यादि वदेत्यन्तान् शूद्रायैव श्रावणीयं संदंशन्यायात् शूद्रवदाचरेदिति गोरक्षकादिषु शूद्रधर्मातिदेशाच्च । मच.

विकर्मस्थद्विजा अपि शूद्रवत्प्रष्टव्याः

**गोरक्षकान् वाणिजकांस्तथा कारुकुशीलवान् ।**
**प्रेष्यान्वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥**

(१) कारवः[1] शिल्पिनस्तक्षायस्कारसूपकारादयः । कुशीलवा नर्तकगायनाद्याः । प्रेष्या जीविकार्थे परस्याशाकेरा[2] दासा इति प्रसिद्धाः । वार्धुषिका वृद्ध्युपजीविनः । एते ब्राह्मणा अपि सन्तः प्रकरणात्साक्ष्ये, शपथे च शूद्रवद् द्रष्टव्याः, न क्रियान्तरे । यथा शूद्रो[3] दानपुण्यादिना पृच्छ्यते साक्ष्ये, शपथे चाग्निहरणादिना शोध्यते, तद्वदेषोऽपि । शपथो यद्यपि पूर्वत्राप्रकृतः तथाप्युत्तरत्रानन्तर्यात्[4] प्रकृतत्वात्[5], अप्रकृतत्वेऽपि आनन्तर्यस्य संबन्धहेतुत्वाद्वक्ष्यमाणस्यापि प्रत्यासत्या पूर्ववत् बुद्धौ संनिधानात्[6] शपथेऽपि तुल्यम् । मेधा.

(२) विप्रग्रहणं क्षत्रियवैश्ययोरुपलक्षणार्थम् । मिता.२।७३

(३) गोरक्षकवाणिज्यसूपकारादिकारुकर्मदास्यप्रतिषिद्धजीविनो ब्राह्मणान् साक्षिप्रश्ने शूद्रवत्पृच्छेत् । गोरा.

(४) शूद्रवत्सर्वपातकैः पृच्छेदिति । ×मवि.

(५) वाक्यप्रकरणपठितं पञ्च पश्वनृत इत्याद्यधर्मज्ञानं द्विजानामपि भवत्येव । सर्वपातकादियुक्तं निकृष्ट-

---

* गोरा., मवि. मेधागतम् ।

(१) **मस्मृ**.८।१००; **व्यमा**.३३०; **व्यक**.५४ ष्वश्मम (षु सम); **स्मृच**.८८; **पमा**.११२; **व्यचि**.५१ गे च (गेऽथ); **स्मृचि**.४८; **व्यसौ**.५२; **व्यप्र**.१२८ व्यचिवत्; **विता**.१७२ अब्जे (अन्ये) उत्त.; **प्रका**.५८; **समु**.३५.

(२)**मस्मृ**.८।१००इत्यस्योपरिष्टात् प्रक्षिप्तश्लोकोऽयम्,ब्रह्मणि चैव हि (ब्राह्मणवद् विधिः) इति पाठः; **व्यमा**.३३१ श्ववत् (श्मवत्); **व्यक**.५४; **व्यचि**.५१; **व्यसौ**.५२; **व्यप्र**.१२८ ऽश्ववत् (ऽऽप्नुयात्); **विता**.१७२ ऽश्ववत् (ब्रुवन्) रजत (रञ्जन) मनुनारदौ; **प्रका**.५८.

(३) **मस्मृ**.८।१०१; **व्यमा**.३३१; **अप**.२।७५ नृतभाषणे (नृतवादिनः) सर्व (सत्य); **व्यक**.५४ सर्व (सत्य); **स्मृच**.८८ वद (वदेत्); **पमा**.११२ सर्वान् (सर्वथा) सर्व (सत्य); **व्यचि**.५१ वेक्ष्य त्वं (वेक्षस्व) सर्व (सत्य); **स्मृचि**.४८ व्यकवत्; **नृप्र**.१० पमावत्; **सवि**.१५६ सर्व (सत्य) वद (वदेः); **व्यसौ**.५२ व्यकवत्; **व्यप्र**.१२८ व्यकवत्; **विता**.१७२ वेक्ष्य त्वं (वेक्षस्व) पू., मनुनारदौ; **प्रका**.५८ सविवत्; **समु**.३५-३६ सविवत्.

१ सहोपकारो. २ श्रुतं दृष्टं.

* ममु. गोरावत् । + सवि. स्मृचवत् ।

× नन्द., भाच. गोरागतं मविगतं च । मवि. शेषं गोरागतम् ।

(१) **मस्मृ**.८।१०२ गिज (गिजि); **मिता**.२।७३; **अप**.२।७५, २।८३; **व्यक**.५५ याज्ञवल्क्यः; **स्मृच**.८८; **दीक**.३८; **व्यचि**.५२; **व्यसौ**.५२; **वीमि**.२।७४ (=); **व्यप्र**.१२६,१३९; **व्यउ**. ४९; **व्यम**.१९; **विता**.१६९; **प्रका**.५८; **समु**.३६ गिज (गिजि).

१ करा. २ कारा. ३ द्रो +(न). ४ र्यात् +(दोषवत्त्वात्). ५ यत. ६ वद्वयोसन्निपातात् शपथे.

द्विजेऽपि वाचयेदित्याह गोरक्षेति । मच.

[1]ये व्यपेताः स्वकर्मभ्यः परपिण्डोपजीविनः ।
द्विजत्वमभिकाङ्क्षन्ति तांश्च शूद्रवदाचरेत् ॥

द्विजत्वमभिकाङ्क्षन्तीति वदन्नद्विजातीनामम्बष्ठादीनां शूद्रवदेव प्रश्नविधिं दर्शयति । स्मृच.८८

कीदृक् साक्षिवचो ग्राह्यम्

[2]स्वभावेनैव यद्ब्रूयुस्तद् ग्राह्यं व्यावहारिकम् ।
अतो यदन्यद् विब्रूयुर्धर्मार्थं तदपार्थकम् ॥

(१) साक्षिणो यत् स्वभावेन व्यावहारिकं ब्रुवन्ति तद् ग्राह्यम् । यत्तु स्वभावाद् विचलितारुणया धर्मबुद्ध्या स्त्रीप्रत्ययमाश्रित्य धर्मार्थं ब्रूयुस्तदपार्थकमग्राह्यमित्यर्थः । यद्[1]यथादृष्टस्यार्थस्य वचनं तत् स्वभावतो, यत्त्वन्यथा मा भूदस्य तपस्विनो मद्वचनेन बाध इत्यनया बुद्ध्या, तदपार्थकम् । यथा, केनचिदावेदितं भवति अनेनाहमाक्रुष्ट इति । तत्र परेणापह्नुतम् । साक्षिण आहुः, सत्यमाक्रुष्टं न कर्मणा न तु[2] रोषेणेति । तत्राक्रुष्टं इत्येतत्साक्षिणां वचो ग्राह्यम् । न कर्मणेत्येतदुत्तरवादिनानुक्तत्वादपृष्टमुक्तमपि न ग्राह्यम् । व्यावहारिकं व्यवहारगतम् । अपगतप्रयोजनमपार्थकम् । अन्ये व्याचक्षते— यदप्रागल्भ्यादिभिः स्खलितपदमुदाहरन्ति न तावता तदनादेयं किन्तु स्वभाव एषामुपलक्षितव्योऽनुमानेन । किममी अप्रागल्भ्यात्स्खलन्ति उतासत्याभिधायितयेति । तत्तु प्रागुक्तम् । न चाक्षरार्थ इत्युपेक्ष्यम् । मेधा.

(२) यत्साक्षिणः स्वाभाविकं सत्यरूपं ब्रूयुः, तद्व्यवहारनिर्णयार्थं, स्वाभाविकात् पुनः यदन्यत् कारणार्थं विरुद्धं ब्रूयुस्तन्निष्प्रयोजनमतश्च न ग्राह्यम् । *गोरा.

(३) स्वभावेनाविचार्यैव द्राक् । व्यावहारिकं व्यवहारसंपादकम् । यदन्यत् पश्चादालोचनादिना अपार्थकं व्यर्थम् । मवि.

(४) एवं तर्हि स्त्रीणां वाक्यं सर्वत्राश्रद्धेयं तत्राह— स्वभावेनेति । अन्यथा भक्षणादिव्यवहारलोपापत्तिः । तत्रापि व्यावहारिकं न सदुपदेशादिविशिष्टमपि ब्रूयुः स्त्रीबुद्धिः प्रलयङ्करीत्युक्तेः । अतोऽपार्थकं शास्त्रदृष्टयभावेनापगतोऽर्थो धर्मरूपो यस्मात्तदपार्थकमतो मिथ्यात्वादश्रद्धेयम् । मच.

अनापदि साक्ष्यमब्रुवतो दण्डः

[1]त्रिपक्षादब्रुवन् साक्ष्यमृणादिषु नरोऽगदः ।
तदृणं प्राप्नुयात्सर्वं दशबन्धं च सर्वतः ॥

(१) पञ्चदशाहोरात्राणि पक्षः । त्रयाणां पक्षाणां समाहारः त्रिपक्षम् । 'अकारान्तोत्तरपदो द्विगुः' इति स्त्रीत्वे प्राप्ते पात्रादिदर्शनात्प्रतिषेधः । यद्येवं त्रिपक्षीति न (?) प्राप्नोति छान्दसस्तत्र लिङ्गव्यत्ययः । ल्यब्लोपे कर्मणि पञ्चमी । त्रीन्पक्षान् यावदतीत्य यः साक्ष्यं न ददाति अगदोऽपीडितशरीरस्त[1]दृणं प्राप्नुयादित्यर्थः । दशबन्धं च दशमं भागं, दण्डनीयस्तस्मादृणात् । ऋणादिषु इत्यादिग्रहणेन सर्वव्यवहारोपक्रमः । द्वितीयमृणग्रहणं उपलक्षणार्थम् । यस्मिन् व्यवहारे साक्ष्यमियन्तं कालं भवति, पराजीयमानस्य बाधः, स साक्षिणो बाढमित्युक्तं भवति । गदो रोगस्तत्स[2]मानानुपस्थानहेतूपलक्षणार्थं, तेनात्र कुटुम्बोपद्रवधनिकोपरोधाद्यपि परीक्ष्यम् । बन्धशब्दः संख्यादिपरो दण्डविषये दशमांश[3]वचनः । नरग्रहणं सर्वतोग्रहणं च श्लोकपूरणार्थम् । अन्ये त्वाहुस्तदृणं प्राप्नुयादित्यस्यायमर्थः— ऋणोपहरणलक्षणेन पापेन युज्येत । राज्ञे वा जीयमानस्य यो

---

* ममु., नन्द., भाच. गोरागतम् । एतदेव मेधातात्पर्यम् ।

(१) **मस्मृ**.८।१०२ इत्यस्योपरिष्टात् प्रक्षिप्तश्लोकोऽयम्, व्यपेताः (ऽप्यतीताः) कर्मभ्यः (धर्मेभ्यः) शूद्रवद् (शूद्रानिव) इति पाठः; **व्यक**.५५ (=) पिण्डो (पीडो); **स्मृच**.८८; **व्यचि**.५२; **सवि**.१५७ व्यपेताः (ऽनुपाताः) क्षन्ति (क्षन्ते); **व्यसौ**.५२; **प्रका**.५८ तांश्च (तांस्तु); **समु**.३६.

(२) **मस्मृ**.८।७८; **मिता**.२।८० (=) पू.; **स्मृच**.९० अतो (यतो); **पमा**.११३; **बाल**.२।८० उत्त.; **प्रका**.५९; **समु**.३७; **विव्य**.११.

१ यन्यथा. २ तु+ (न्या).

(१) **मस्मृ** ८।१०७; **मिता**.२।७६ र्वतः (र्वशः); **अप**.२।७६ मितावत्; **व्यक**.५८ साक्ष्य (वाक्य) तदृणं (तादृशं) च सर्वतः (तु पूर्वशः); **दवि**.३४८; **स्मृचि**.९२; **सवि**.१४८ ऽगदः (यदि); **चन्द्र**.१४२ मितावत्; **व्यसौ**.५५ मितावत्; **व्यप्र**.१३० मितावत्; **विता**.१७८ मितावत्; **प्रका**.६०; **समु**.३८ मितावत्.

१ स्तत्सदृशं प्राप्नु. २ मानप्रत्युत्थान. ३ माषवचनः,

दण्डस्ततो दशममंशं दद्यादिति दण्डितः पुनः पृच्छयते। मेधा.

(२) अव्याधितः साक्षी ऋणादानादिव्यवहारेषु पक्षत्रयं यावत् यदि साक्ष्यं न दद्यात्तदा तद्विवादास्पदीभूतं सर्वर्णमप्युत्तमर्णस्य दद्यात् । तस्माच्च ऋणात् सर्वस्माद्दशमं भागं राज्ञो दण्डं दद्यात् । *गोरा.

(३) अगद इति राजदैवोपप्लवविरहोपलक्षणार्थम् । +मिता.२।७६

(४) बध्यत इति बन्धः दशानां भागानां संबन्धी बन्धः भागस्तदेकदेशो दशबन्धः । सर्वतः सर्वस्मात् विवादविषयधनात् । इदं च स्मरणार्थं त्रिपक्षदानम् । मवि.

(५) तद्दणं साक्षिरूपप्रमाणसाध्यं धनं सर्वं सवृद्धिकं प्राप्नुयाद्दाप्य इत्यर्थः। स्मृच.९२

(६) सर्वतः सर्वेभ्यो ब्राह्मणादिभ्यः। मच.

(७) प्राप्नुयात् दण्डत्वेन राज्ञे देयात् । न केवलमेतावदेव किन्तु सर्वतः सर्वद्रव्येषु विवादविषयादन्यत्र द्रव्यान्तरेष्वपि दशबन्धं दशभागं दण्डं प्राप्नुयादित्यर्थः। नन्द.

कूटसाक्षिलिङ्गम् । तद्दण्डश्च ।

**यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः ।**
**रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः ॥**

(१) सप्ताहादिति पञ्चमीदर्शनादर्वागित्यध्याह्रियते। सप्तानां दिवसानामन्यतमस्मिन्नहनि यस्य साक्षिणो रोगादि दृश्यते स मृषावादी दैवेन विभावितः पूर्वोक्तेन विधिना दापयितव्यः । रोगोऽत्यन्तपीडाकरोऽग्निर्गेहधन-[1]दहनः । पुत्रदारादिप्रत्यासन्नज्ञातिमरणं तस्य कूटसाक्षित्वे लिङ्गम् । +मेधा.

(२) यत्र तु प्रत्यर्थिनः स्वप्रत्ययविसंवादित्वेन साक्षिवचनस्याप्रामाण्यं मन्यमानस्य साक्षिषु दोषारोपणेनापरितोषस्तत्र प्रत्यर्थिनः क्रियोपन्यासावसराभावात्सप्ताहावधिकदैविकराजिकव्यसनोद्भवेन साक्षिपरीक्षणं कर्तव्यम्। तत्र च दोषावधारणे विवादास्पदीभूतमृणं दाप्याः। सारानुसारेण दण्डनीयाश्च । अथ दोषानवधारणं तदा प्रत्यर्थिना तावता संतोष्टव्यम् । यथाह मनुः— यस्येति । एतच्च, 'यस्योचुः साक्षिणः सत्याम्' (यास्मृ. २।७९) इत्यस्याऽपरितुष्यत्प्रत्यर्थिविषयेऽपवादो द्रष्टव्यः । मिता.२।८०

(३) उत्कटदिव्ये फलावधिरयम् । क्षुद्रेषु त्वर्वाक्चतुर्दशादित्यादिस्मृत्यन्तरोक्तः । एतच्च तत्प्रागनुपजातनिमित्तकृतं ग्राह्यम्। मवि.

(४) एतच्च परीक्षणं दूतकादेः साक्षिणः कार्यं न पुनर्गुणान्वितस्य नृपाध्यक्षयोर्वा । तत्रैकस्याप्यनृतसंभावनाऽसंभवात् । स्मृच.९४

(५) मिता.टीका—एतदुक्तं भवति । साक्षिभिः साक्ष्ये कथिते यदि प्रत्यर्थी परितुष्यति तदाऽर्थिनो जयः, प्रत्यर्थिनः पराजयः । अथ स्वप्रत्ययविसंवादित्वेन प्रत्यर्थी न परितुष्यति, तर्हि साक्षिपरीक्षणे सप्तदिनेषु क्रियमाणे यदि दोषवन्तः साक्षिणः तदा 'यस्य दृश्येत सप्ताहादि'ति मनुवचनेन 'यस्योचुः साक्षिणः सत्यामि'ति योगीश्वरवचनमपोद्यते । तथा च प्रत्यर्थिनो जयः । अपरस्य पराजय इति । *सुबो.२।८०

(६) अत्र यद्यपि भवदेवेन कृतदिव्यस्येति लिखितं, तथाप्युक्तसाक्ष्यस्येत्यभिधानादकृतदिव्यस्यापि द्रष्टव्यम् । कृतदिव्यस्येति प्रायोवादः, अन्यथा निषिद्धदिव्यस्य साक्षिणोऽतिपीडाकररोगादावपि कूटत्वं न स्यात्, अनतिपीडाकराग्निदाहे न कूटत्वम् । रोगादिकमत्रातिपीडाकरं विवक्षितम्, आचतुर्दशकादह्न इत्येकमूलकत्वात्, अन्यथाऽतिप्रसङ्गात् रोगादिविशेषस्य तन्मात्रगामित्वस्य चाप्रतिलम्भप्रसङ्गात् । चन्द्र.१५०

(७) दमं कौटसाक्ष्यप्रयुक्तं दण्डम् । असति सप्ताहा-

---

* ममु., भाच. गोरागतम् । एतदेव मेधातात्पर्यम् ।

+ व्यप्र. मितावत् ।

(१) **मस्मृ.**८।१०८; **मिता.**२।८०; **व्यक.**५८ मनुनारदौ; **उ.**२।२९।८ वाक्य (साक्ष्य) ऋणं...सः (दाप्यो दण्डं च तत्समम्); **स्मृच.**९४; **पमा.**११५ दृश्येत (पश्येत्तु); **सुबो.**२।८० पू.; **स्मृसा.**१०३ वाक्य (साक्ष्य) मनुनारदौ; **दवि.**३४७ स्मृसावत्, मनुनारदौ; **स्मृचि.**४८ दृश्येत (दृष्टे तु) मनुनारदौ; **सवि.**४९१ यस्य दृश्येत (दृश्यते यस्य); **चन्द्र.**१५० स्मृसावत्; **व्यसौ.**५५ स्मृसावत्; **व्यप्र.**१३१; **व्यउ.**५१; **व्यम** १९; **प्रका.**६१ कात्यायनः; **समु.**३८.

[1] गोवाहनदहनः.

+ गोरा., ममु. मेधागतम् । * बाल.२।८० सुबोवत्।

भ्यन्तरव्यसनोपनिपाते प्रत्यर्थिना तावता संतोष्टव्यं दिव्यं वा सत्याध्यवसायमवलम्बनीयमित्यर्थसिद्धम्। व्यप्र.१३१

(८) अत्र क्रियान्तरं साक्ष्यादिरूपं न दिव्यम्। 'संभवे साक्षिणां प्राज्ञो दैविकीं वर्जयेत्क्रियाम्' इत्युक्तेः। यत्रार्थिनः साक्षिषु न विश्वासः, दिव्यातिरिक्तक्रियान्तराभावः, अल्पविषयत्वेन दिव्याभावश्च; तत्र सप्तदिनपर्यन्तं प्रतीक्षा कार्येत्याह मनुः—'यस्ये'ति। अत्र केचित्, रोगादिकृतकूटसाक्षित्वावेदकसप्ताहादिप्रतीक्षा अर्थिसाक्ष्योत्तरं प्रत्यर्थिद्विगुणगुणवत्तमसाक्षिप्रदर्शनविषया। अन्यथा अर्थिसाक्ष्योत्तरं सप्ताहप्रतीक्षाया अनुपपत्तेरित्याहुः। तन्न। एकस्मिन् वादे द्वयोः साक्षिरूपक्रियाद्वयाऽसंभवात्। प्रत्यर्थिसाध्यस्याभावस्य साक्षिगम्यत्वाभावाच्च। अतः 'यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत्' इत्यनेन जयप्राप्तावपरितुष्यत्प्रत्यर्थिविषयमिदमिति मिताक्षराकारः। व्यउ.५१

साक्षिद्वैधे बहुत्वगुणाधिक्यादि निर्णायकम्

**बहुत्वं परिगृह्णीयात् साक्षिद्वैधे नराधिपः।**
**समेषु च गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमान्*॥**

(१) यत्र भूमिभागादौ विप्रतिपत्तिर्द्वाभ्यां च भोगसाधनं, साक्षिणो निर्दिष्टाः। ते च केचिदर्थिनो भोगमाहुरपरे प्रत्यर्थिनस्तत्र बहूनां वचनं ग्राह्यम्। समसंख्येषु तु ये गुणैरुत्कृष्टा बहुगुणा इत्यर्थः। एकेन वा गुणेन दृष्टपुरुषार्थोपकारिणा सातिशयेन युक्ताः। गुणवतां समगुणानां भेदे जातिरादर्तव्या। सर्वसाम्ये शपथः। अन्यद्वा प्रमाणं अनुमानम्। बहुत्वं परिगृह्णीयात्, बहूनां वचनं प्रमाणीकुर्यात्। द्वैधं परस्परविरुद्धार्थाभिधानम्। ×मेधा.

(२) गुणवतामेव विप्रतिपत्तौ द्विजोत्तमान् द्विजेषु ये उत्तमाः। क्रियावन्त इत्यर्थः। अत एव बृहस्पतिः—'गुणिद्वैधे क्रियायुक्ताः' इति। *ममु.

(३) न चेदं साक्ष्युपादानमात्रपरं परिगृह्णीयादिति वचनात्। न तु तद्वचनप्रामाण्यपरमिति वाच्यम्। परिग्रहणानर्थक्यापत्तेः। नापि वादिनोरेव साक्षिद्वैधे सति इदम्। एकस्यापि वादिनः साक्षिभेदे संकोचेन जागरूकत्वात्। व्यचि.४०

पृष्टानां तु साक्षिणां वचनद्वैधे मनुः—बहुत्वमिति। द्वैधं साक्ष्यन्तरोक्तव्यतिरेकाभिधायित्वम्। एवं च न जानामीत्यभिधाने न द्वैधं, तस्य ज्ञानाभावपरत्वेन ज्ञेयाभावास्पर्शात्। समेष्विति, संख्यासाम्ये गुणाधिकाः, तत्र न जात्याद्यधिका ग्राह्या इत्यर्थः। सर्वथा साम्ये तु मानान्तरानुसरणमिति भावः। व्यचि.६०-६१

साक्षिणां सत्यवचनापवादविषयः

**तद्वदन् धर्मतोऽर्थेषु जानन्नप्यन्यथा नरः।**
**न स्वर्गात् च्यवते लोकाद्दैवीं वाचं वदन्ति ताम्+॥**

(१) तदन्यथाऽपि जानन्नन्यथा वदन्न स्वर्गाद् भ्रश्यति। कूटमपि वदन्न दुष्यतीत्यर्थः। किं सर्वदैव? नेत्याह— धर्मतोऽर्थेषु। धर्मेण दयादिना निमित्तेनार्थेषु व्यवहारेषु धर्मस्य च निमित्तत्वमुक्तमुत्तरश्लोके दर्शयिष्यति। एतच्च न स्वमनीषिकयोच्यते। किं तर्हि? एतां वाचं वदन्ति अस्मात्पूर्वेऽपि[1] स्मर्तारः। का पुनर्दैवी वाग् ययाऽस्मिन्निमित्तेऽनृतं वदितव्यमिति? एषा देवानां संबन्धिनी वाक्[2], तां मन्वादयः श्रुत्वा वदन्तीति विशेषेऽनृतप्रशंसा। अन्यैस्तु पूर्वविधिशेषतयाऽयं श्लोको व्याख्यातः। तदेतद् गोरक्षकादिष्वनुयोगवाक्यं ब्राह्मणेषु भवितव्यं, अन्यथा ब्राह्मणेषु सत्यं ब्रूहीति। अथ[3] ब्राह्मणा एते कथं शूद्र-

---

* व्यमा. अत्रैव प्रकरणे विष्णुवचने (पृ.२४६-२४७) द्रष्टव्या।

(१) **मस्मृ.**८।७३ च (तु); **व्यमा.**३०८ मनुविष्णू: ३२५ च (तु): ३३५; **अप.**२।७८ मनुविष्णू; **व्यक.**५९; **स्मृच.**९१; **पमा.**११६ परि (प्रति) च (तु); **स्मृसा.**१०१: १२१ नारदः; **व्यचि.**४०,६०; **स्मृचि.**४७; **सवि.**१४६ गुणि (गुणं); **चन्द्र.**१३८ द्विजोत्तमान् (च धार्मिकान्); **व्यसौ.**५६-५७ च (तु) कृष्टान् (कर्षान्); **व्यप्र.**११४; **प्रका.**५९; **समु.**३७; **विव्य.**९ च (तु).

१ दृष्टे पुरु. २ (०). ३ ने.

× गोरा. मेधावत्। * शेषं मेधावत्।

+गोरक्षकानिति (८।१०२) श्लोकाऽव्यवहितोऽयं श्लोकः। तत् श्लोकार्थं परामृश्यैवास्य श्लोकस्य कानिचिद् व्याख्यानानि।

(१) **मस्मृ.**८।१०३; **व्यक.**५९ दन्ति ताम् (देवि जाम्); **व्यसौ.**५६; **विता.**१९१ उत्त.; **समु.**३६.

१ विस्म. २ वाक्येषु. ३ यथा ब्रा.

वत् अनुयोज्या इति । तद्विद्वानपि न दुष्यतीति । यतो मन्वादय एवंविधां वाचं वदन्ति, यथैते शूद्रवदाचरणीया[1] इति । ते च धर्माधर्मयोः प्रमाणम् । तैश्च सत्यं वदितव्यं, तच्च यथाविहितं, तत्र स एव धर्मो, यत्र चानृतं तत्रानृताभिधानमेव धर्म इति । मेधा.

(२) तदेतत्साक्ष्यमन्यथा जानन्नपि मनुष्यो धर्मेण दयया हेतुभूतयोपाधिरहितो व्यवहारेष्वन्यथा ब्रुवन् न स्वर्गात् लोकात् भ्रश्यति । यस्मादेतन्निमित्तविशेषेण अनृताभिधानम् । एतां दैवसंबन्धिनीं वाचं मन्वादयो वदन्ति । अन्ये तु प्राड्विवाकविषयमिदं व्याचक्षते, प्राड्विवाको गोरक्षकादिषु ब्राह्मणेषु सच्छूद्रप्रश्नं कुर्वन्न धर्महानिं प्राप्नोति । *गोरा.

(३) तत्साक्ष्यं धर्मतो धर्मार्थं जानन्नप्यन्यथा वदन् स्वर्गान्न च्यवते । यतस्तत्राऽनृताऽपि वाग् दैव्येवेति वदन्ति । मवि.

(४) अर्थेषु चातुर्वर्ण्यवधपर्यन्तेषु । अन्यथा जानन्नपि अन्यथा तदनृतं धर्मतो हेतोर्वदन् स्वर्गान्न च्यवते। तां धर्मानुसारिणीं वाचं दैवीं सत्यां वदन्ति । नन्द.

(५) तद्वदन्निति सार्धेनाह । तत्साक्ष्यं धर्मतोऽर्थेषु वर्णिरक्षाद्यन्यतरधर्मार्थेषु जानन्नप्यन्यथा वदन्नरः स्वर्गान्न च्यवते । भाच.

**शूद्रविट्क्षत्रविप्राणां यत्रर्तोक्तौ भवेद्वधः ।**
**तत्र वक्तव्यमनृतं तद्धि सत्याद् विशिष्यते ॥**

(१) तत्र नानृतं वदेदिति यः प्रतिषेधः तस्याशूद्रादिविषयताऽनेनोच्यते । न पुनरनृतवदनं विधीयते । तथा सति प्रतिषेधेनैकवाक्यता बाध्येत । अधिकारकल्पना[1] च स्यात् । अन्ये तु नैमित्तिकधर्माधिकारं मन्यमानाः कल्पनामपवदन्ते । का पुनरत्र निमित्तश्रुतिः । तत्रेति । तस्य वधविशेषणत्वात् । न वधोस्याऽसतो[2] निमित्तत्वानुपपत्तेरतश्च कृते[3] वधे पश्चात्तद्विषयमनृतं[4] वक्तव्यमित्यर्थ आपतति । तत्त्वनिष्टम्[5] । ननु च यत्रेति व्यवहारवस्तु[6] निर्दिश्यते । पुनस्तत्रेति तदेव प्रतिनिर्दिश्यते । ततश्च यस्मिन् व्यवहारे पराजिताः सन्तो वधार्हा भवन्ति तस्य नानुपपन्नो निमित्तभावः । अत्र वदन्ति — न चात्र वधार्हेष्वनृतमिष्यते, यतोऽननुरूपं पापीयसो जीवनमिति । यस्त्ववधार्होऽनवकाशात् पुरदास्यादिस्खलितादनृताख्यापनाय राजानः स्वल्पापराधात् न घातयन्तीत्युपपत्तिः,राजत्वात्क्रोधदण्डस्य चाशास्त्रीयत्वादस्थितप्रमाण-[11][12]तया निश्चयाभावो न तस्यापि निमित्तत्वोपपत्तिरतः प्रतिषेधशेषतैव न्याय्या । गौतमीये त्वनृतविध्याशङ्काऽपि नास्ति, 'नानृतवदने दोषो जीवनं चेत्तदधीनम्' इत्येवमादिप्रतिषेधे सत्यानृतयोः कामचारप्रसङ्गे सत्यवचनेन वधे[13] निमित्तभावः[14] प्रतिपद्यमानो 'न हिंस्यात्सर्वभूतानी'ति प्रतिषेधव्यतिक्रमभये[15] चानृतं प्रतिपद्येतेति[16] इति युक्तिमत्[17] । तेनेदं कृतं, न चेदसौ पृष्ट आचष्टे, न पुनर्हन्ति अन्नंश्च कथं हिंसादोषेणानुषज्यते । अथासत्यपि[18] स्वातन्त्र्ये तद्वचनेन राज्ञा हन्यमानत्वात्तद्धेतुभावापत्त्या प्रयोजकर्तृत्वमिति[19] चेत्? न, सर्वो हेतुः प्रयोजको, धनेन कुलं विद्यया यश इति भवति विद्यायशसोर्हेतुता[20] प्रयोक्त्री । ननु चान्य एवायं लौकिकः[21] फलोत्पत्तियोग्यतालक्षणो[22] हेतुभावः । अपि तु द्रव्यगुणेष्वत्रापि क्रिया श्रूयते अग्निना पाक इति । साऽपि स्वरूपेण, सिद्धरूपाभिधानात् कुर्दन्तैर्भावस्य । अन्यश्चायं शास्त्रीयः कर्तृव्यापारस्य प्रयोजको हेतुर्न तु तत्प्रयोजकत्वमेवमित्यर्थः[23] । यदि तावत्प्रेषणाध्येषणे आज्ञाप्रार्थनारूपे प्रयोजकत्वम्;

* मेधातिथेरेवायं संक्षेपतोऽनुवादः । मच. गोरागतम् ।

(१) **मस्मृ**.८।१०४; **गोरा**. र्तोक्तौ (चैव); **अप**.२।८३ र्तोक्तौ (चोक्तो); **व्यक**.५९ (शूद्रविट्क्षत्रियाणां च ऋतोक्तौ च भवेद्वधः); **मभा**. १३।२५ यत्रर्तोक्तौ (यत्रोक्तार्थे) सत्यात् (तत्र); **स्मृच**.८९ यत्रर्तोक्तौ (यत्रोक्ते तु); **पमा**.११३ यत्रर्तोक्तौ (यथोक्तौ तु); **व्यचि**.५६ तद्धि ... ते (तत्सत्यादतिरिच्यते); **सवि**.१५९; **चन्द्र**.१५२ (शूद्रविट्क्षत्रियाणां च यत्रोक्तौ तु वधो भवेत्); **व्यसौ**.५६ क्षत्रविप्राणां (क्षत्रियाणां च) र्तोक्तौ (चोक्तौ); **वीमि**.२।८३ व्यचिवत्; **व्यप्र**.१३८; **विता**. १९१ तत्र ... नृतं (तत्र तत्रानृतं भयात्); **प्रका**.५८ यत्रर्तोक्तौ (यच्चोक्त तु); **समु**.३६ स्मृचवत्.

१ भाच.

१ 'अधि ... वदन्ते' इत्यंशो नास्ति. २ वधस्तस्या. ३ ते ऽवधौ. ४ मतद्विषयं वा ऽनृ. ५ ऽष्टं न. ६ स्तुतिर्नि.

७ आनुरूपापी. ८ धार्हान. ९ दनुद्दतदण्डता. १० वा जनैः स्व. ११ तयित्वोपपत्तिरा. १२ परिमा. १३ (०). १४ भावं. १५ मतया. १६ यत. १७ मत्वेनेदं. १८ अथ. १९ जिक. २० तुना. २१ कफ. २२ ताद्देतुलक्षणे. २३ अर्थम्.

शोषयते व्रीहीनातप इत्यादावचेतनेषु णिजुत्पत्तिर्दुर्लभा। ननु च परिहृतमेतद् व्याख्यातृभिः, 'मुख्योपचरितक्रिय' इति चेतनावद् वस्तूपचारे भिक्षा वासयति कारीषोऽध्यापयतीति। न ह्यत्र चैतन्यकृत उपकारः। अपि तु निश्चितत्वात्तदन्यस्य प्रयोजकस्य। अध्ययनं ह्याचार्यकरणविधिप्रयुक्तं कुर्वाणस्य माणवकस्य शीतादिलक्षणं प्रतिबन्धकमनुवदति। कारीषे प्रयोजकत्वाद्ध्यारोपः। प्रेरकत्वाद्धि प्रयोजकमुच्यते। तच्चा[1]ऽचेतनस्य वायुजलादेरग्निकाष्ठादौ सुतरां दृश्यते। तदा विधिप्रयोजकस्तुतिप्रयोक्तृभिः (?) प्रेषणाद्यभावाद् गौणार्थाः शब्दाः स्युः। अथैतत्[2]समर्थाचरणं प्रयोजकत्वं तच्च प्रयोजकस्य [3]प्रयोज्यव्यापारानुगुणं प्रेषणादिव्यतिरिक्तक्रियान्तरा[4]चरणं संविधानाख्यम्। संविदधान एव हि कारयतीत्युच्यते। यथा बुभुक्षमाणस्य कश्चित्पात्रमाहरत्यन्यो भक्तमुपनयति, कस्यचिद्वधप्रवृत्तस्य कश्चिदायुधमर्पयति अन्यो वध्यदोषाविष्करणेन मन्युमुपदीपयति। एवंलक्षणः प्रेषित्रादिरूपरहितः सव्यापारः प्रयोज्यफलसिद्धावानुकूल्यं प्रतिपद्यमानस्तत्समर्थाचरणपक्षे प्रयोजकः। अस्मिन् पक्षे कारीषोपाध्यायौ तुल्यौ प्राप्नुतः। अत्रापि यमन्तरेण क्रियाया [5]अनिर्वृत्तिर्यस्य च कारकविशेषसंज्ञा न(?)प्रवर्तेत स मुख्यः प्रयोजकः कर्ता। अध्यापयितारं चान्तरेण कारीषो न शक्नोत्यध्ययनहेतुभावं प्रतिपत्तुम्। आचार्यस्तु तमन्तरेणापि शक्त एवेति गौणः कारीषः। यत्र च करणादिभावे निश्चिते[6] हेतुमत्प्रत्ययदर्शनं[7] तत्रापि गौणार्थतैव। यथा कश्चित् स्वल्पेनाऽपि प्रयोजनेन दूरं ग्रामं पुनः पुनर्गतवन्तं दृष्ट्वा ब्रवीति, 'अश्वो गमयति देवदत्तम्' इति। यत्र तु न कस्यचिदासत्तिविप्रकर्षावन्तरङ्गबहिरङ्गभावो वा गम्यते तत्र यावन्तस्तदानुकूल्यं प्रतिपद्यन्ते सर्वे ते प्रयोजकाः।

ननु च कारकसंज्ञायामन्तरङ्गयोगो नास्तीति को विशेषः कारीषोपाध्याययोः? स्वप्रक्रियैव सा तत्रभवताम्। न वस्त्वाश्रया। वस्त्वाश्रयौ च विधिप्रतिषेधौ। इदमपि तत्र पठ्यते— विवक्षातः कारकाणि भवन्तीति। एवं च सति यत्राकर्तुरेव कर्तृत्वं कश्चिद् विवक्षेत् तत्र कर्तृप्रत्ययविधिप्रतिषेधावपि स्याताम्। यथा पातकपरिगणनायां[1] मनुः पठति—'क्रयविक्रयी संस्कर्ता चोपहर्ता चे'ति। तस्मादन्वाख्यानसिद्ध्यर्थं तान्त्रिकी सा व्यवस्था न वस्त्वधिष्ठानमर्थमवस्कन्दति अत एव व्याख्यातृभिस्तत्समर्थाचरणं चेद्धेतुमात्रे प्रसङ्गः। ततश्च योऽपि कस्मैचिद् भोजनं ददाति, स चौदरिकतयाऽतिसौहित्येन व्यापद्येत, प्राप्तं तत्र दातुर्वधकर्तृत्वमिति। न च तत्प्रयुक्तं भवति। क्रियान्तरेण ह्यसौ निश्चितो भोजनकार्ये[2] प्रयोजको न वधे न वैर्थ्यादि (?) कथञ्चिन्निमित्तं भवति। भवतु, प्रयोजकत्वाभावात्तु कर्तृत्वं नास्तीति ब्रूमः। यस्य तु भूमिसुवर्णापहारादिनाऽपराध्येत स च तदपहारमन्युना कथञ्चिन्म्रियेत किं तत्रापहर्तु[3]रपहारदोष एवोर्ते[4] वधेऽपि निमित्तीभाव[5] इति चिन्त्यम्। किमत्र चिन्त्यते? अव्यभिचारावगम्यत्वाद्धेतुहेतुमद्भावस्य, न खड्गप्रहारभोजनविच्छेदादेरिव भूम्यादिहरणस्य नियतनिमित्तत्वोपपत्तिः। कोऽयं नियमोऽभिप्रेतः? न[6] हि केचित् म्रियन्ते केचिन्नेति नियतो नियमो भवति, पुरुषस्वभावभेदात्। तदेवौषधं श्लेष्मि[7]कस्य हितं विपरीतमन्यस्येति। सर्वेषामेव च भावानां देशकालस्वभावभेदसहकारिसापेक्षः[8] शक्त्यन्तरप्रादुर्भावस्तदेव लक्षणं पुरुषवित्तसंततिसापेक्षं[9] पिपासाहेतुः[10] प्राण्यन्तर[11]सापेक्षं तद्विच्छेदहेतुरिति। एवमत्यन्तामर्षिणो मन्युमतः स्वहरणपरिभवादि मरणाय कल्पते। किं, तत्राशक्यो निमित्तभावोऽपह्नोतुम्? पेशलमानसस्य तूपेक्षैव तत्र। ये पुनर्मन्युपरीता अनशनश्वभ्रपतनविषभक्षणादिना परान् द्वारमुद्दिश्य म्रियेरंस्तत्राप्येष एव न्यायः। ननु चान्यस्यैव प्रसिद्धहेतुभावस्य विषभक्षणादेर्निमित्तस्य तत्र दर्शनान्न भूम्यादिहरणस्यापरोधी[12] हन्तृत्वमाप्नुयात् तेनोपजनितमन्युः[13] मरणे[14]हेतुः प्रवर्तेत इति पारम्पर्यतो निमित्तत्वमिति चेत्। एवं सति पथ्योपदेशेनाऽपि किञ्चिदुद्विजमाना आत्मानं व्यापादयन्ति। ततश्च तत्रोपदेष्टारो हन्तारः स्युः। तथा मत्सरिणः परद्रव्येष्वीर्षया शुष्यन्तो धनिषु दोषमाददीरन्। तथाऽन्ये मूढमनसः प्रियान् पुत्रान् स्वामिनश्चानुम्रियन्ते।

१ च चैतन्यस्य. २ त्स्थम. ३ 'प्रयोज्ये'ति नास्ति. ४ वर. ५ अनिवृत्ति. ६ तद्दे. ७ नात.

१ यामनुपठति. २ नाख्यप्र. ३ हर. ४ वोभयव. ५ त्तिभा. ६ यदि ह वा के. ७ ष्मिकोपहि. ८ क्षा. ९ पेक्ष्यं. १० तुप्रा. ११ सापेक्ष्यं. १२ राधो. १३ न्यु. १४ णहेतोः.

तत्र प्रियादीनां हन्तृतापत्तिः। अपरे च रूपवत्स्त्रीदर्शनेन परिफल्गुमनसः श्रूयन्ते भज्यमानहृदयाश्च विवेकशून्यात्मानः, तत्र शीलवत्यः स्त्रियो दुष्येयुः। तदेवेदमापतितं मृतस्य ब्रह्महत्येति। सत्यमेवं यदि विधिप्रतिषेधविशेषो न स्यात्। विहितो हितोपदेशः प्रतिषिद्धं स्वहरणादि। तथा चाहुः—'उपकारप्रवृत्तानां कथंचिच्चेद् विपर्ययः। न तत्र दोषः केषाञ्चिद्भिषजामौषधी यथा'॥ अत्र न केवलं वैद्यादेरातुरोपकारार्थिनः प्रयुक्तौषधस्य कथञ्चिद्विपरीततयोपपत्तावदोषः। किं तर्ह्यन्यस्यापि गवादेर्महति पङ्के निमग्नस्योद्धर्तुर्भुजाकर्षणश्रमेण यदि व्यापत्तिर्न तत्रोद्धर्ता दुष्येदिति कथितं भवति।

एवं सर्वत्र। येऽपि कस्मिंश्चित्स्वव्यापारानुष्ठानवति धनरूपातिशयसंपद्वति दृश्यमाने दन्दह्यते, न तं प्रति कस्यचिच्छास्त्रार्थातिक्रमः। निश्चितो हि निमित्तभावः प्रतिषेधस्य विषयो भवितुमर्हति। न च प्राण्यन्तराश्रयिषु चैतनिकेषु धर्मेषु प्रतिक्षणमन्यथाभवत्सु स्वभावविशेषावसायः। न हि शक्यमवसाययितुमयमस्या रूपसंपदा व्यापद्यत इति। न च निश्चिते प्रतिषेधविषये संभवत्यनिश्चितविषयता न्याय्या। यत्र तर्हि कथञ्चिद्वर्णविपर्ययशरीरशोषणादिना कुतार्किकपठिता स्यादपि निमित्तावगतिस्तत्र किं भ्रंशयितुं शीलं संयुज्यतां कामिन्या, भवतु वा पुरुषव्यापत्तिरिति। नैतदेवं, न हीदृशी भवन्त्यपि निमित्तता प्रतिषेधस्य विषयः विध्यन्तरविरोधात्। अस्ति ह्यत्र व्यभिचारप्रतिषेधविधिः। न चाऽपि विध्यन्तरेणानवष्टब्धे विषये कृतावकाशा विधयो विरोधिविध्यन्तरविषयमास्कन्दितुमर्हन्ति। येऽपि मन्यन्ते, रागलक्षणां प्रवृत्तिं शीलसंरक्षणोपदेशो निषेधति, न शास्त्रलक्षणाम्। तेन, महानुभावतया नास्य तपस्विनो जीवितं[11] विच्छिन्द्यात् इति प्राणोजिहीर्षया मुमूर्षुणा संप्रयुज्येत[12] नासौ व्यभिचारप्रतिषेधमतिक्रामेत्। यत्तु विध्यन्तरविषये न विध्यन्तरं प्रवर्तत इति, नैवायं विध्यन्तरस्य विषयो, रागलक्षणत्वात्। ननु च प्रवृत्तावपि नैव शास्त्रमस्ति, नियोगविधाविव व्यभिचारानुज्ञानं स्मृत्यभावात्। अथाऽप्रवृत्तौ कामयेत मारणमिति प्रतिषेधभयात् प्रवर्तते सोऽपि प्रतिषेधो रागलक्षणामेव हिंसां प्रतिषेधयति। न चासौ रागतो न प्रवर्ततेऽपि तु प्रतिषेधभयात् या तु परोपकारतः प्रवृत्तिः साऽपि प्रतिषेधविषयपरिहारेण। योऽपि किञ्चिद्यावदयमहमात्मानं हन्मीति हन्यान्न तत्राप्रयच्छतो घातकत्वं व्यवहारोच्छेदप्रसङ्गात्। मेधा.

(२) क्व पुनस्तदनृतं वक्तव्यमित्यत आह—'शूद्रेति'। इदं चात्यन्तधार्मिकप्रमादस्खलितपुरुषविषयं न त्वत्यन्ताधार्मिकविषयम्। तथा च गौतमः—'नानृतवचने दोषो जीवनं चेत्तदधीनं न तु पापीयसो जीवनम्' इत्यादि (गौध.१३।२४-२५)। तत्र विषये प्रमाणान्तरेण राजा निर्णयं कुर्यात् न साक्षिभिः। न प्रमाणान्तरान्न चैवानुमानादिनात्यन्तं साक्षिपरीक्षां कुर्यात्। न च 'न जातु ब्राह्मणं हन्यात्' इति वचनात् कथं ब्राह्मणस्य वध आपतेदित्याशङ्कनीयम्। उग्रदण्डत्वाद्राज्ञः कथञ्चित् संभवात् व्यवहारेऽन्यत्रापि चैवंविधे विषयेऽनृतस्येष्यमाणत्वात्। वधस्यामङ्गलत्वात् शूद्रादिक्रमेण निर्देशः। गोरा.

(३) बुद्धिपूर्वसाहसादौ तु दृष्टे वधसंभवेऽपि सत्यं वाच्यम्। मवि.

(४) यस्मिन्व्यवहारे सत्याभिधाने सति शूद्रवैश्यक्षत्रियब्राह्मणानां वधः संपद्यते तत्रासत्यं वक्तव्यम्। यस्मात् तस्मिन्विषयेऽनृतं यत्तत्प्राणरक्षणेन सत्याद्विशिष्यते। *ममु.

(५) यत्र त्रैवर्णिकवधः सत्याभिधाने तत्रासत्यं वाच्यम्—शूद्रविडिति। चन्द्र.१५२

(६) तद्धीति। तद् अनृतम्। सत्येन धर्ममात्रमत्र तु विप्रादिरक्षा दृष्टार्थाऽहिंसाऽदृष्टार्थेति तद्द्वयमतो विशेष इति भावः। शूद्रेति क्रमवैपरीत्यं कूष्माण्डैरित्यादिप्रायश्चित्तचतुष्टयस्य+ सूचनार्थं, अन्यथा तदसंभवात्। ×मच.

---

१ सू. २ सूत्यात्मा. ३ णाय यथाश्र. ४ त्ता. ५ सादितु. ६ नां. ७ व्यापिनीति. ८ य. ९ वा. १० रोधविध्यन्तरं वि. ११ तुं चेच्छेत् इ. १२ ज्यते.

* शेषं गोरावत्। +चतुष्टयस्येत्यस्यानन्तरं 'शूद्रादिषु क्रम इति टिप्पण्यामधिकम्।

× वाक्यार्थो ममुवत्।

१ द्वा.

(७) इदमपि योगीश्वरवचनवद्विशिष्टाभावपरतया व्याख्येयम् । अवचनानृतवचनाभ्यनुज्ञालाभाय । सत्याद्विशिष्यत इत्यस्यायमर्थः—ब्राह्मणादिवधप्रयोजकतानिबन्धनाधिकदोषपरिहाराय अवचनानृतवचनप्रयुक्ताल्पदोषस्वीकार उचित एवेति प्रशंसार्थम् । यद्यपि—'न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम् । राष्ट्रादेनं बहिः कुर्यात् समग्रधनमक्षतम्' ॥ इत्यादिमन्वादिवाक्यैर्ब्राह्मणवधदण्डनिषेधाद्विप्रग्रहणमनर्हम्; तथापि, तस्य वधस्थानीयदण्डप्रसक्तेस्तत्परिहारायैव अवचनानृतवचनाभ्यनुज्ञा ।

तथा च मनुः—'मौण्ड्यं प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते । इतरेषां तु वर्णानां दण्डः प्राणान्तिको भवेत्' इति ॥ स्मृत्यन्तरेऽपि—'ब्राह्मणस्य वधो मौण्ड्यं पुरान्निर्वासनं तथा । ललाटे चाङ्ककरणं प्रयाणं गर्दभेन च' इति ॥ न च वधशब्देनार्थद्वयपरिग्रहे वैरूप्यम् । निमित्तांशपातिनि तत्प्रसक्तावपि विधिवैषम्याऽप्रसक्तेः । यद्वा 'गोरक्षकान् वाणिजकांस्तथा कारुकुशीलवान् । प्रेष्यान्वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत्' ॥ इति मानवात्तेषां शूद्रवद्वधाभ्यनुज्ञाप्रतीतेस्तत्परं विप्रग्रहणम् । तथा च वधपदमुभयत्र मुख्यार्थकमेव । अयं त्वपरार्कोक्तसमाधिरनुपादेयः । तस्य मानवस्य प्रकरणाच्छपथपरत्वेन दण्डविषयत्वाभावात् । '......सर्वपापेष्वपि स्थितम् । तस्मादस्य वधं राजा मनसाऽपि न चिन्तयेत्' ॥ इत्यादिश्रवणाद् विप्रवधमात्रस्यैव परिहरणीयत्वप्रतीतेश्च । अथवा यत्र क्रोधाद्यावेशवशेनातिक्रम्य निषेधं विप्रस्यापि राज्ञा म्लेच्छादिना वा वधदण्डः कर्तव्य इति संभावना तत्रैवेदमस्तु । यथाकथञ्चित्प्रसक्त्युपजीवकत्वादस्य, राज्ञोऽस्तु परं दोषः । पापीयसस्तु क्षत्रियादेर्वधप्रसक्तावपि नोभयाभ्यनुज्ञेत्याह गौतमः—'नानृतवचने...न तु पापीयसो जीवनम्' इति । व्यप्र.१३८-१३९

(८) उक्ते ऋत इति पदच्छेदः, संधिकार्यमार्षम् । उक्त्वार्तमिति वा पाठः । तत्र समानकर्तृत्वमार्षम् । नन्द.

उक्तानृतवचनप्रायश्चित्तम्

**वाग्दैवत्यैश्च चरुभिर्यजेरंस्ते सरस्वतीम् ।**
**अनृतस्यैनसस्तस्य कुर्वाणा निष्कृतिं पराम्* ॥**

(१) एवं प्रायश्चित्तचतुष्टयं यदाम्नातं, तत् तन्निर्देशानुसाराच्छूद्रादिक्रमेण यथावर्णं क्रमशो द्रष्टव्यम् । शूद्रस्वरूपापेक्षया च चरोः सकृदवृत्तिरावृत्तिर्यथा स्यादिति चरुभिरित्युक्तम् । अस्मादेव च प्रायश्चित्तानृतानुज्ञानाद् राज्ञो नैयोगिकं वध्यानुपेक्षणमिति गम्यते । साक्षिणस्तु प्रायश्चित्तोपदेशमात्राद् राजकीयविनयानर्हा इत्यवसेयम् । विश्व.२।८५

(२) वाक् चासौ देवता च सा वाग्देवता । तदर्थं च चरवो वाग्दैवत्याः । तण्डुला नातिपक्वाः चरवः तैर्यजेरन्निति । बहुवचननिर्देशात् चरुभिरिति बहुवचनम्, न पुनरेकैकशो बहवश्चरवः, नापि संहतानां व्रात्यस्तोमवद्यागो 'देवश्चेद्वर्षेद्बहवो ब्राह्मणा यजेरन्' (पूमी. १०।६।४५) इति तद्बहुवचनम्। न तु[१] कपिञ्जलैश्च त्रिभिर्यजेरन् । तदेतद्ब्राह्मणाद्यनुग्रहार्थमनृतमुक्तं भवति। अनृतमेवैनः पापं असत्याभिधानलक्षणा क्रिया । यथा धर्मः[२] क्रिया । अत[३] एव[४] समानाधिकरणे षष्ठी । येषां तु क्रियाजन्यौ धर्माधर्मौ न क्रियैव, तन्मतेऽनृतस्य यदेन इति वैय्यधिकरण्येन[५] अनृतनिमित्तत्वादेनोऽनृतं उपचारतः समानाधिकरणे एव । तस्य निष्कृतिः शोधनं पावनं प्रायश्चित्तमिति यावत् । परा प्रकृष्टा ।

ननु च कुतोऽत्र पापम् ? यावताऽस्मिन्निमित्ते 'नानृतवचने दोष' इत्युक्तम् । केचिदाहुः — 'निवृत्तिस्तु महाफले'ति अस्माच्छास्त्रात्तु यावज्जीवमनृतं मया न वक्तव्यमिति येन संकल्पितं तस्य मिथ्यासंकल्पदोषो मा भूदिति प्रायश्चित्तमुच्यते । गेहदाहवधाप्रतिषेधेऽपि नैमित्तिकं विधानमेनसो निष्कृतिरित्य[६]नुवादः । इदं तर्हि कथं? 'वाग्देवत्यैः सरस्वतीं यजेरन्' यदि

* व्यप्रव्याख्यानं 'कूष्माण्डैर्वाऽपि' इत्याद्यग्रिमश्लोके द्रष्टव्यम्।

(१) **मस्मृ**.८।१०५; **विश्व**.२।८५; **अप**.२।८३ त्यैश्च (तैश्च); **व्यक**.५९ अपवत्; **स्मृच**.८९ त्यैश्च (त्यैस्तु) तस्य (तत्र); **व्यचि**.५६ अपवत्; **व्यसौ**.५६; **व्यप्र**.१३९ अपवत्; **विता**.१९३ त्यैश्च (तैस्तु) स्ते (स्तु) तस्य (तेऽस्य) निष्कृ (निकृ); **प्रका**. ५८ स्मृचवत्; **समु**.३६ तस्य (तत्र).

१ नु. २ धर्म. ३ वत. ४ वं. ५ (०). ६ मित्यर्थवादः. ७ (०).

वाग्देवता सरस्वती कथमिज्यते ? अथ वाक्सरस्वत्यो-रेकत्वेन । नैवं देवताभावः, शब्दावगम्यरूपत्वाद्देवतायाः । भिन्नौ चैतौ वाक्सरस्वतीशब्दौ । यथाऽग्नये जुहोतीति चोदिते न ज्वलनाय कृशानवे वा स्वाहेति हूयते, वायवे निरूप्य जुहुयाद्वायुर्वै प्राण इत्युक्तेऽपि, न प्राणायेति हूयते । सत्यम् । वागेव देवता । सामानाधिकरण्याद्देवतार्थे तद्धितः । सरस्वतीमिति द्वितीयानिर्देशात् । न हि द्वितीयानिर्देश्या देवता । कर्मणि हि द्वितीया । संप्रदानं च देवता, न कर्म । कथं तर्हि सरस्वतीपदान्वयः ? अर्थवादोऽयमग्नये जुहोत्यग्निर्वै सर्वा देवता इति वागेव सरस्वती । तयेष्टया साऽपीष्टा भवति । यागेन देवताऽवगम्यते । कथमग्निर्यष्टव्यः । प्रजापतिर्यष्टव्यस्तथाग्निं यजति यदग्निं यजतीत्यादि । केचिदाहुर्देवतास्तु तत्र तत्र पूज्यन्ते । दैवतपूजावचनोऽत्र यजिः, पूजा च पूज्यमानकर्मिका । तत्र युक्ता द्वितीया । तथा च देवता पूजनीयेत्यादि स्मर्यते । एतच्च न युक्तम् । अस्मिन्हि पक्षे देवतात्वं मन्यते । नूनं तत्र यागसंप्रदानं देवतेति स्मरणविरोधः । एषा च स्मृतिर्बलीयसी । निरपेक्षत्वात् । पूर्वा देवता उद्देश्या ध्येया च । यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेदिति तत्क्रियाकर्मत्वात् कर्मण्येषा द्वितीया । मेधा.

(३) वाग्वै सरस्वतीति श्रुतेर्वाक्सरस्वत्योरैक्याद्वाग्देवताकैश्चरुभिः सरस्वतीं ते साक्षिणोऽनृताभिधायिनस्तस्यासत्यस्य यत्पापं तस्य प्रकृष्टां शुद्धिं कुर्वाणा यजेरन् । अत्रैकस्य साक्षिणः अपि कपिञ्जलवच्चरुत्रयं आहुस्तदसत् । 'देवश्चेद्वर्षेद् बहवो ब्राह्मणा यजेरन्' इतिवत् इत्येतत्प्रायश्चित्तकर्तृबहुत्वापेक्षया चरुभिरिति बहुवचनम् । व्रात्यस्तोमवदेषां संपाद्य यागाश्चोत्पादिताः । अत्र प्रायश्चित्तस्य प्रकरणोत्कर्षो लाघवार्थः । तत्र हि क्रियमाणे विट्क्षत्रियानृताभिधाने एतत्कर्तव्यं स्यात् । *गोरा.

(४) संभूय अनेकैः साक्षिभिर्मिथ्याभिधानेऽपि स्वस्वाग्निषु प्रत्येकमेकैक एव चरुः पृथक् पृथक् निर्वाप्यः । यदुक्तं याज्ञवल्क्येन— 'तत्पावनाय निर्वाप्यश्चरुः सारस्वत' इति । अत्र च सरस्वत्येव देवता वाक्पदं तदुपलक्षकम् । सवि.

(५) यद्यपि वाग्देवताके चरौ वाक्शब्देनैव देवतात्वं न सरस्वतीशब्देन; 'विधिशब्दस्य मन्त्रत्वे भावः स्यात्' इति न्यायात् तथापि 'वाग्वै सरस्वती' इति श्रुतेर्वाक्सरस्वत्योरेकार्थत्वात्सरस्वतीमित्युपसंहारः । अत्र प्रकरणे चेदं प्रायश्चित्ताभिधानं लाघवार्थम् । तत्र क्रियमाणे 'शूद्रविट्क्षत्रियब्राह्मणवधविषयानृतवादिनः' इत्यपि वक्तव्यं स्यात् । ×ममु.

**कूष्माण्डैर्वाऽपि जुहुयाद् घृतमग्नौ यथाविधि । उदित्यृचा वा वारुण्या तृचेनाब्दैवतेन वा* ॥**

(१) कूष्माण्डा नाम मन्त्रा यजुर्वेदे पठ्यन्ते । तैर्घृतमग्नौ जुहुयात् । जुहोतिश्च देवतामुद्दिश्य द्रव्यस्य त्यागः । आधारविशेषणे तत्रेहाग्नावित्यधिकरणनिर्देशान्मान्त्रवर्णिकी देवता वेदितव्या । येषु च मन्त्रेषु देवताविशेषलिङ्गं न दृश्यते, यथा—'देवकृतस्यैनसोऽवयजनमसि' इत्यादिषु । तत्र प्रजापतिर्देवतेति याज्ञिकाः । अथ वा, यस्या अन्यत्र देवतात्वं दृष्टं सेह संबन्धिनीति यावत् । तथा च निरुक्तकाराः—'अपि वा सा कामदेवता स्यादि'ति ( नि. ७।४।५ ) । यद्यपि, याऽन्यस्य हविषो देवता साऽन्यस्य न कदाचित्, तथाऽपि यजतिः श्रूयते, द्रव्यं मन्त्राश्च । तेऽत्रासत्यां देवतायां जुहोतेः रूपं जुहुयादिति व्याख्येयम् । तच्चायुक्तम् । तथाभिक्षारयेदिति वक्तव्यं स्यात् । वयं तु ब्रूमो, 'देवकृतस्यैनसोऽवयजनमसि' इत्यत्र कर्मैवावयजनमेवावयाजनमित्युच्यते । अतस्तदेव देवता । सर्वत्र च मन्त्राभिधेयं

* भावार्थो मेधावत् । अप. गोरागतम् ।

१ वत्याः. २ ष्यते. ३ वे. ४ सरस्वतीं. ५ दैवतैः स्वतस्तत्र. ६ उद्दि.

× शेषं गोरावत् । * विश्वरूपव्याख्यानं 'वाग्दैवत्यैश्चे'ति पूर्वस्मिन् श्लोके द्रष्टव्यम् ।

(१) **मस्मृ.**८।१०६; **विश्व.**२।८५; **अप.**२।८३ तृचे (त्र्यृचे); **व्यक.**५९; **स्मृच.**८९ वाऽपि (वाऽथ); **व्यचि.** ५६; **व्यसौ.**५६; **वीमि.**२।८३ अपवत्; **व्यप्र.**१३९-१४० अपवत्; **विता.**१९३ पि जुहुयाद् (भिर्जुहुयुः) उदि (तदि) तृचे (त्र्यृचे); **प्रका.**५८ वाऽपि (वाऽथ) न वा (न च); **समु.** ३६ स्मृचवत्.

१ न्म. २ यस्यान्यत्र. ३ सह संबन्धि. ४ दैव. ५ तीति रू. ६ अतस्तद्देवता.

वस्त्वस्तीति न देवतायां मन्त्रवर्णाभावः।

उदित्यृचा वा वारुण्येति। 'उदुत्तमं वरुणपाशमस्मत्' इति एषा ऋक् वरुणदैवत्या उदिति प्रतीकेन लक्ष्यते। वारुणीग्रहणं चान्यस्याः 'उत्त्वा मदन्तु स्तोमा' इत्युच्छब्दप्रतीकाया निर्वृत्त्यै। तृचेनाब्दैवतेन वेति। तदेवं देवतैव दैवतम्। आपो दैवतं अस्य त्र्यृचस्य तेन 'आपो हि ष्ठा' इत्यादिना। अतश्चैकैकया ऋचा एकैका आहुतिः प्रत्येकमब्दैवतत्वात्, न समुदायाहुतिरेकेति। घृतमग्नाविति सर्वत्रानुषङ्गः। यथाविधि यादृशः शिष्टसमाचार इत्यर्थः। तेन च विधिहीनत्वादप्राप्तायामितिकर्तव्यतायां परिसमूहनपर्युक्षणावेक्षणस्रुवहोमाद्येतावन्मात्रमनुजानाति। वाशब्दाद्वैकल्पिकाः सर्व एव। मेधा.

(२) 'यद्देवा देवहेडनम्' इत्येभिर्मन्त्रदेवताकैर्घृतमग्नौ परिस्तरणादिहोमविधिना जुहुयात्। 'उदुत्तमम्' इति वरुणदेवताकया ऋचा आपोहिष्ठेत्यनेनाब्देवताकेन वा जुहुयात्। ×गोरा.

(३) उदित्यृचा 'उदुत्तमं वरुणे'त्यृचा जुहुयात् घृतमेव। पापोत्कर्षापेक्षया सहस्रादप्यधिकं होतव्यम्। अल्पे तु सहस्रम्। तृचेनापोहिष्ठीयेन। गुणजात्याद्युत्कर्षापेक्षया च प्रायश्चित्तचतुष्कव्यवस्था। अत्र चाग्नाविति वचनात्पूर्वोक्तो वाग्दैवत्यश्चरुः वैतानिकेष्वेवेति गम्यते। मवि.

(४) कूष्माण्डमन्त्रा याजुर्वेदिकाः। यद्देवा देवहेडनं देवासश्चकृमा वयं आदित्यास्तस्मान्मामुञ्चतर्तस्यर्तेन मामितः स्वाहा। आदित्येभ्य इदं न ममेत्युद्देशत्यागो न मन्त्रान्तःपाती। एवमुत्तरत्रापि ज्ञेयम्। प्रयोगश्च महार्णवोक्तः। यथाविधि पर्युक्षणादिहोमधर्मेण स्वगृह्योक्तेन तदित्यृचा गायत्र्या तदादिकेत्युक्तत्वात्। 'उदुत्तमं वरुणपाशम्' इत्येतया वारुण्या। अब्दैवतेन आपोहिष्ठेत्यनेन। अत्र यदि शूद्रः साक्ष्यं वक्ति सोऽपि ब्राह्मणद्वारा होमं कारयेत्। मच.

(५) ते इति प्रक्रमाज्जुहुयादिति छान्दसो वचनव्यत्ययः। उदुत्तमं चेति पाठे उदुत्तमं वरुणपाशेति ऋक्। तदित्यृचेति पाठे 'तत्वायामि ब्रह्मणे'ति वारुणी ज्ञेया। न चाभ्यनुज्ञावचः सार्थक्याय प्रत्यवायाभावकल्पनमावश्यकमिति प्रायश्चित्तविधानं नैमित्तिकक्षामवत्यादिवत् पुंश्चलीवानरदंशादिनिमित्तकद्वादशरात्रादिवद्वेति वाच्यम्। 'तत्पावनाय' 'एनसस्तस्य कुर्वाणा निष्कृतिं पराम्' इत्यस्य वैयर्थ्यापत्तेः।

अत्र चरुरिति योगीश्वरवचन एकवचनाद्दैवतैक्याच्च मानवे चरुभिरिति बहुवचनं कर्तृबहुत्वन्यायप्राप्तबहुत्वानुवादकम्। द्विजग्रहणान्न शूद्रस्यैतत्प्रायश्चित्तं किन्त्वन्यत्।

वयं तु 'तत्पावनाय' 'अनृतस्यैनसस्तस्य' इत्यादियोगीश्वरमन्वादिवचनेषु तच्छब्दोपादानात् साक्ष्यनृतपातकमेव गृह्यते। तन्निरसनायैवेदं प्रायश्चित्तम्। न च तस्याभ्यनुज्ञावचनेनाभावावगमात् कथमेतदिति वाच्यम्। वर्णिवधदोषापेक्षया साक्षिवितथवचनदोषस्याल्पस्य सह्यतेति 'तद्धि सत्याद् विशिष्यते' इति वाक्यशेषपर्यालोचनेन तस्य तात्पर्यात्। अत एवावचने दोषपरिहारोऽप्यनेन प्रायश्चित्तेन। सामान्यतः साक्षिभिन्नस्यावचनदोषाभावात्। न च 'अब्रुवन्विब्रुवन्वापि' इति वचनमवचने सामान्यतो दोषप्रतिपादकमिति वाच्यम्। तस्य प्रकरणात् 'सभा वा न प्रवेष्टव्या' इति वाक्यशेषाच्च सभ्यपरत्वात्। अत एव साक्षिणां पृथग्वचने दोषवचनं सफलम्। न च साक्षिणामवचनानृतवचनयोर्दोषाधिक्यात् इदमल्पप्रायश्चित्तमनुचितमिति वाच्यम्। अभ्यनुज्ञाविधेरस्मिन् विषयेऽल्पदोषपरत्वस्योक्तत्वात्। एतेन भूयोदोषनिवृत्तावल्पदोषनिवृत्तिरविनाभावादन्यत्र तु विधिद्वयसाफल्याय न तथेत्यपि कल्पनीयम्। ततश्च वर्णिवधप्रसक्तौ साक्षिणोऽप्यनृतवचनावचनयोर्वधप्रयोजकतादोषापेक्षया अल्पो दोषस्तत्र चेदं प्रायश्चित्तं तेन च ततोऽप्यल्पः सामान्यानृतवचनप्रतिषेधातिक्रमनिबन्धनो दोषः सुतरामुपैतीति तात्पर्यमिति ब्रूमः। +व्यप्र. १४०-४१

(६) शूद्रस्य तु स्मृत्यन्तरे प्रोक्तम्—शूद्रस्य द्वादशकस्य ग्रासदानम्। नन्द.

---

× ममु. गोरावत्।

१ स्त्विति. २ देवता. ३ तल्लक्षते. ४ निवृत्त्या च तत्रायनाद्दैवतेन चेति. ५ + भावात्. ६ (०). ७ प्रत्येकशब्दवत्त्वेन. ८ वोक्षण; स्रु.व

+ अत्र प्रथमं मिताक्षराव्याख्यानं समर्थ्य वयं तु इत्यारभ्य विश्वरूपमतं समर्थयति ग्रन्थकारः।

कौटसाक्ष्ययुक्तव्यवहारनिवर्तनम्

**[1]यस्मिन् यस्मिन् विवादे तु कौटसाक्ष्यं कृतं भवेत्।**
**तत्तत्कार्यं निवर्तेत कृतं चाप्यकृतं भवेत् ॥**

(१) यस्मिन् व्यवहारे कूटसाक्षिभिर्व्यवहारः कृतः स्यात् स निवर्तयितव्यः। कृतं चाप्यकृतं भवेत्। गृहीतधनोऽप्युत्तमर्णः प्रतिपादयितव्यः, इतरदण्डो गृहीतोऽपि त्याज्यो वाङ्मात्रेण जितस्त्वमसीति निश्चिते कार्ये निवर्तेत इत्युच्यते। दण्डपर्यन्तं कृतमपीति विशेषः। वीप्सा श्लोकपूरणायाम्। +मेधा.

(२) कूटसाक्षिणश्च दण्डयित्वा पुनर्व्यवहारः प्रवर्तनीयः। ÷मिता.२।७७

(३) निवर्तेतेत्यस्य विवरणं 'कृतमि'त्यादि। मच.

कौटसाक्ष्यनिमित्तानि

**[2]लोभान्मोहाद्भयान्मैत्रात्कामात्क्रोधात्तथैव च।**
**अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते ॥**

(१) कौटसाक्ष्ये[1] लोभादिनिमित्तविशेषकथनं दण्डविशेषलाभार्थम्। वितथमसत्यम्। सर्वत्र पञ्चमी हेत्वर्था। ×मेधा.

(२) लोभोऽर्थपरत्वम्। मोहो भ्रमः। अज्ञानं किञ्चिज्ज्ञता। बालभावोऽपरिणतत्वम्। अप.२।८१

(३) लोभोऽर्थलिप्सा। मोहो विपरीतज्ञानम्। कामः स्त्रीरागः। अज्ञानं तद्विषयस्फुटज्ञानाभावः। बालभावः साक्ष्ययोग्यवयोऽवस्थाभावः। वितथं मिथ्यासाक्ष्यमुच्यते लोकैः। मवि.

(४) मोहः सम्यक्प्रश्नार्थानवधारणम्। भयमनिष्टप्राप्तिशङ्का। मैत्रं स्नेहातिशयः। अज्ञानं समक्षदर्शनश्रवणसमय एवान्यथाज्ञानम्। बालिश्यं अप्राप्तबुद्धिस्थैर्यम्। स्मृच.९३

(५) (बालभावात्) अनवधानेन। +ममु.

(६) मोहाद् वैचित्यात्। स च त्रिविधो रोगादिकृतो धत्तूरादिकृतः प्रमादकृतश्च। भयाद् दस्युवृत्तिभ्यः। कामात् तदीयस्त्र्यादिषु भोग्यज्ञानात्। अज्ञानात् अदृष्टश्रुतं न जानामीत्यभिधानात्। बालभावात् अधर्माद्यज्ञानादिति। मच.

(७) बालभावः ऊनषोडशवयस्कत्वम्। नन्द.

कौटसाक्ष्ये निमित्तविशेषकृतदण्डविशेषाः

**[1]एषामन्यतमे स्थाने यः साक्ष्यमनृतं वदेत्।**
**तस्य दण्डविशेषांस्तु प्रवक्ष्याम्यनुपूर्वशः ॥**

(१) एषां लोभादीनामन्यतमस्मिन् निमित्ते सति योऽसत्यं साक्ष्यं ब्रूयात् तस्य दण्डविशेषान् क्रमेण वक्ष्यामि। *गोरा.

(२) स्थाने करणे। नन्द.

**[2]लोभात् सहस्रं दण्ड्यस्तु मोहात् पूर्वं तु साहसम्।**
**भयाद् द्वौ मध्यमौ दण्डौ मैत्रात्पूर्वं चतुर्गुणम् ॥**

---

+ गोरा. मेधावत्। ÷ व्यउ. मितागतम्। × गोरा. मेधावत्।

(१) **मस्मृ.**८।११७; **मिता.**२।७७; **व्यक.**१०३ मनु-विष्णू; **स्मृच.**९४; **स्मृसा.**१२३ विवादे तु (कृते कार्ये) कौट (कूट) तत्तत्कार्यं (तत्कार्यं वि) कृतं चा (कृतम); **व्यचि.**१०१ कृतं चा (कृतम); **नृप्र.**१०; **चन्द्र.**१४९ कौट (कूट) क्ष्यं (क्ष्य) उत्तरार्धे (तत्सर्वं विनिवर्तेत तत्कृतं चाकृतं भृशम्); **व्यप्र.**९३; **व्यउ.**५०; **विता.**१७९ चाप्य (वाप्य); **राकौ.**४०२ चा (वा); **प्रका.**६१; **समु.**३८.

(२) **मस्मृ.**८।११८; **अप.**२।८१; **व्यक.**५७ मैत्रात् (मैत्र्यात्); **स्मृच.** ९३; **पमा.**११४; **स्मृसा.**१०२; **व्यचि.**४४ व्यकवत्; **स्मृचि.**४८; **चन्द्र.**१३८ भयात् (तथा) मैत्रा (मैत्र्या) बालभावाच्च (वल्लभाभावात्); **व्यसौ.**४३,५४; **व्यप्र.**१२० न्मैत्रात्कामात्क्रोधा (त्क्रोधान्मैत्र्यात्कामा) साक्ष्यं (साक्षी) थमु (थ उ) : १३६ व्यकवत्; **प्रका.**६०; **समु.**३८.

[1] कौटसाक्ष्यलोभादिनिमित्तं विषयकथनं दण्डविशेषभावार्थम्।

+ शेषं मेधावत्। * मवि., ममु., मच. गोरागतम्।

(१) **मस्मृ.**८।११९; **व्यक.**५७; **स्मृच.**९३ एषा (तेषा) तु (च); **पमा.**११४ षांस्तु (षं तु); **स्मृचि.**४८; **व्यसौ.**५४ पू.; **प्रका.**६० तु (च); **समु.**३८.

(२) **मस्मृ.**८।१२०; **मिता.**२।८१ ण्ड्यस्तु (ण्ड्यः स्यात्) भयात्...दण्डौ (भयादौ मध्यमो दण्डो) त्रात् (त्र्यात्); **अप.**२।४ (=) ण्ड्यस्तु (ण्ड्यः स्यात्) पू.: २।८१ ण्ड्यस्तु (ण्ड्यः स्यात्) भयात्...दण्डौ (भयादौ मध्यमो दण्डो); **व्यक.**५७ त्रात् (त्र्यात्); **गौमि.**१३।२३ ण्डौ (ण्ड्यौ) त्रात् (त्र्यात्); **स्मृच.**९३ ण्ड्यस्तु (ण्ड्यास्तु) द्वौ (वै) मौ (मो) ण्डौ (ण्डो); **पमा.**११४ भयात्...दण्डौ (भयाद्वै मध्यमं दण्ड्यौ); **व्यचि.**५४ ण्ड्यस्तु (ण्ड्यः स्यात्); **विचि.**१९१; **दवि.**३४३; **स्मृचि.**४८ ण्ड्यस्तु (ण्ड्यश्च); **सवि.**१४९ त्रा (त्र्या) ण्ड्यस्तु (ण्ड्यः स्यात्) शेषं स्मृचवत्; **चन्द्र.**१५० मैत्रात् (शाठ्यात्);

**कामाद् दशगुणं पूर्वं क्रोधात्तु त्रिगुणं परम् ।**
**अज्ञानाद् द्वे शते पूर्णे बालिश्याच्छतमेव तु ॥**

(१) लोभाद्यो वितथं वक्ति स सहस्रं दण्डनीय इत्येवं प्रयोजना कर्तव्या । तत्र यः परस्माद्धनमुपादाय विपरीतं वक्ति तस्य लोभो हेतुः । मोहाद् वैचित्त्यात्[१], यथार्थवादी यथादृष्टार्थवादी च केनचिच्चित्तसंक्षोभहेतुना प्रश्नकाले व्यामूढः[२] सम्यक् प्रश्नार्थमनवधार्यास्मृतत्वाद्वाऽन्यथा ब्रूयात्स मोहादित्युच्यते । भयं त्रासः । यदि[३] सत्यवचनेनायं जीयेत, तत्रायं कदाचित् ज्ञातिधनादिबाधया मां व्यापादयेदित्याशङ्का । सहस्रमिति संख्येयविशेषावगतिर्वाक्यान्तरात्पणानामिति । पूर्वं तु साहसं प्रथमं 'पणानां[४] द्वे शते सार्धे' (मस्मृ.८।१३८) इत्यादौ । द्वौ मध्यमौ, साहसाविति विपरिणामः । पूर्वं चतुर्गुणं सहस्रमेवेत्यर्थः । वृत्तानुरोधेन विचित्रया शब्दवृत्त्या स एवार्थः कथ्यते ।

मन्मथः कामः । यत्र स्त्रियो विवदन्ते तत्संबन्ध्यन्यतमां[५] कामयमानोऽनृतं वदति । अर्धतृतीयानि सहस्राणि दण्ड्यते । क्रोधात्त्रिगुणं परम्—प्रथमसाहसस्य प्रकृतत्वात्ततः परो मध्यः[६] । सर्वान्ते लोकविज्ञानादिति वा उत्तम एव परः । द्वेषः क्रोधः । अज्ञानादिति । यो विपरीतं[७] ब्रूयाद् भ्रान्त्या प्रश्नकाले । द्वे शते दमः । प्रदर्शनमेव विपरीतं नाभिधानम्(?) । बालिश्यं[८] बालभावः अप्राप्तव्यवहारता । ईषदपक्रान्तबालभावस्याप्राप्तबुद्धिस्थैर्यस्यायं बालिश्यदण्डोऽन्यस्य त्वसाक्षितैव । *मेधा.

(२) लोभादिति । लोभेनाऽनृताभिधाने सति पणानां वक्ष्यमाणानां सहस्रं दण्ड्यः । मोहेन प्रथमसाहसं वक्ष्यमाणम् । भयेन वक्ष्यमाणसाहसौ द्वौ । मैत्र्यात् प्रथमसाहसं चतुर्गुणम् । कामादिति । कामेनाऽनृतं वदन् प्रथमसाहसं दशगुणं दण्ड्यः । क्रोधेन उत्तमसाहसं वक्ष्यमाणं त्रिगुणम् । अज्ञानेन द्वे शते पणे संपूर्णे । मौर्ख्येण शतमेव च । गोरा.

(३) एतच्च (२।८१ याज्ञवल्क्यवचनं) लोभादिकारणविशेषापरिज्ञाने अनभ्यासे च द्रष्टव्यम् । लोभादिकारणविशेषपरिज्ञाने अभ्यासे च मनुनोक्तं 'लोभादि'-त्यादि । तत्र लोभोऽर्थलिप्सा । मोहो विपर्ययज्ञानम् । भयं संत्रासः । मैत्री स्नेहातिशयः । कामः स्त्रीव्यतिकराभिलाषः । क्रोधोऽमर्षः । अज्ञानमस्फुटज्ञानम् । बालिश्यं ज्ञानानुत्पादः । सहस्रादिषु ताम्रिकाः पणा गृह्यन्ते । ×मिता.२।८१

(४) कार्षापणसंख्याश्चैताः । कश्चिन्मन्यते द्विविधं कूटसाक्षित्वं लोभादिनिमित्तकं तद्विपरीतं चेति । तत्र लोभादिनिमित्तके कूटसाक्षित्वे मानवो दण्डविधिः । इतरत्र तु याज्ञवल्कीय इति । तदसत्, लोभादिनिमित्तकमेव कूटसाक्षित्वम् । अप.२।८१

(५) अज्ञानाद् व्यवहारकाल एव विपरीतज्ञानात् । बालिश्यमत्र प्राप्तमात्रयौवनत्वं, बालस्य साक्ष्यनिषेधात् । +व्यक.५८

(६) अत्र लोभभयमैत्रनिमित्तानृते तुल्यदोषे वचोभङ्ग्योत्तमसाहस उक्तः । कामतोऽनृते तु ततो दोषबाहुल्यात् सार्धोत्तमसाहसद्वयमुक्तम् । क्रोधनिमित्ते पुनस्ततोऽपि दोषबाहुल्यादुत्तमसाहसत्रितयमुक्तम् । मोहे त्वल्पदोषत्वात्प्रथमसाहसमुक्तम् । अज्ञाने तु ततोऽल्पदोषत्वात्कार्षापणशतद्वितयमुक्तम् । बालिश्ये पुनस्ततोऽप्यल्पदोषत्वात्तदर्धमेवोक्तमिति मन्तव्यम् । इदं च दण्डवैचित्र्यं ब्राह्मणस्याऽपि कूटसाक्षिणो ज्ञेयम्, 'एतानाहुः कौटसाक्ष्ये' इत्यविशेषस्मृतेः । स्मृच.९३

(७) बालिश्यात् अनवधानात् । ÷ममु.

---

**व्यसौ**.५४; **वीमि**.२।८१ व्यचिवत्; **व्यप्र**.१३५ ण्ड्यस्तु (ण्ड्यः स्यात्) त्रात् (श्यात्) शेषं स्मृचवत्; **विता**.१८७ ण्ड्यस्तु (ण्ड्यः स्यात्) (भयाद् द्वे मध्यमो दण्डो मैत्र्यात्पूर्वश्चतुर्गुणः); **बाल**.२।८१; **प्रका**.६०-६१ उत्तरार्धं स्मृचवत्; **समु**.३८ प्रकावत्; **विव्य**.५६.

(१) **मस्मृ**.८।१२१; **मिता**.२।८१; **अप**.२।८१ तु (च); **व्यक**.५७; **गौमि**.१३।२३ त्तु त्रि (त्तद्द्वि); **स्मृच**.९३; **पमा**.११५ त्रि (द्वि); **व्यचि**.५४ तु (च); **विचि**.१०१पूर्वं (प्रोक्तं) र्णे (र्वे); **दवि**.३४३ तु (च); **स्मृचि**.४८ पूर्वं ... त्रि (दण्ड्यं क्रोधात् शत) तु (च); **सवि**.१४९ द्वे (द्वि); **चन्द्र**.१५० तु (च); **व्यसौ**.५४ धात्तु (धाच्च); **वीमि**.२।८१ तु (च); **व्यप्र**.१३५; **विता**.१८७; **प्रका**.६१; **समु**.३८; **विव्य**.५६.

१ विचिन्तयतो यथा. २ रूढः. ३ दि+(भयेन). ४णानां+(तु). ५ न्ध्यान्यतरं. ६ वध्यः. ७ तं+ (प्रथमं). ८ न्त्या + (ननु). ९ श्यं +(वा).

* मवि., व्यचि., भाच. मेधागतम् ।

× सवि. पदार्थो मितावत् । + सर्वं मेधागतम् । पदद्वयव्याख्यानं तु स्पष्टार्थप्रतिपत्तये । ÷ शेषं मेधागतम् ।

(८) पूर्वं चतुर्गुणं सहस्रद्वयम्। ×मच.

(९) पौरस्त्यनिबन्धेषु रत्नाकरादिषु बालभावस्य बालिश्यपदार्थत्वेन यौवनोन्मेषप्रातो मद इति व्याख्यातम्। तदशब्दार्थत्वात् संदर्भविरोधाच्चोपेक्ष्यम्। आहात्रापरार्कः—नेयं व्यवस्था युक्ता। लोभादिनिमित्तकमेव हि कौटसाक्ष्यमुपन्यस्तं मनुना। न च संभवत्यन्यत्तन्निमित्तम्। यथाह सः– 'लोभान्मोहाद्भयान्मैत्र्यात् कामात् क्रोधात् तथैव च। अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते' ॥ अज्ञानं किञ्चिज्ज्ञानम्। बालभावो अपरिणतत्वम्। तस्माद्योगीश्वरोक्तो दण्डः स्वल्पापराधेऽनभ्यासे च ज्ञेयः। गुर्वपराधे अभ्यासे च मनूक्त इति न्याय्या व्यवस्था इति। तत्रेदं वाच्यम्। लोभादौ सहस्रादिदण्डस्य मानवस्य विवादपराजयहेतुकद्विगुणदण्डाद् याज्ञवल्कीयान्नाधिक्यनियमो येन गुर्वपराधविषयता अभ्यासविषयता वा कल्पेत। क्वचिद्वैपरीत्यस्यापि संभवात्। न च कौटसाक्ष्ये लोभाद्यतिरिक्तकारणाऽसंभवात् मनुनापि तावतामेव परिगणनाच्च न कारणभेदकृता व्यवस्था सुस्थेति वाच्यम्। वस्तुतो हेत्वन्तरासंभवे तु हेतुविशेषापरिज्ञानतज्ज्ञानयोः संभवात् तत्कृतव्यवस्थायामदोषात्। अत एव मिताक्षरायां लोभादिति विशेषज्ञानाऽज्ञाने एव व्यवस्थापकत्वेनोक्ते, न तु लोभादितद्भिन्नहेतुसत्वाऽसत्वे। या तु मिताक्षराकृताभ्यासाऽनभ्यासकृता व्यवस्थोक्ता, सा क्वचित् तथापि संभवतीत्याशयेन। ज्ञानाऽज्ञानकृतैव तु तात्त्विकी। अत एव मदनरत्नकृताऽपि सैवादृता। *व्यप्र.१३५-३६

(१०) मिता.टीका– अस्फुटमिति। एतेन 'व्यवहारे एव विपरीतं ज्ञानमि'ति कल्पतरूक्तमपास्तम्। मोहेन पौनरुक्त्यापत्तेः। बाल.२।८१

**एतानाहुः कौटसाक्ष्ये प्रोक्तान्दण्डान्मनीषिभिः।**
**धर्मस्याव्यभिचारार्थमधर्मनियमाय च ॥**

(१) उभयप्रयोजनो दण्ड इति दर्शयति अवश्यानुष्ठेयत्वाय। शास्त्राचारनिरूढा व्यवस्था धर्मस्तस्याव्यभिचारोऽनिवृत्तिरुच्यते। मेधा.

(२) शास्त्रव्यवस्थाया अपरिलोपार्थमव्यवस्थायाश्चोत्तत्तिवारणार्थमेतान् कूटसाक्षिविषये चिरन्तनैर्विद्वद्भिः प्रोक्तान् दण्डान् मन्वादयः प्राहुः। एतच्च सकृत् करणे। गोरा.

(३) अव्यभिचारार्थं सर्वथानिश्चयार्थम्। मवि.

(४) सत्यरूपधर्मस्यापरिलोपार्थमसत्यरूपाधर्मस्य च वारणार्थमेतान्कौटसाक्ष्यविषये पूर्वैर्मुनिभिरुक्तान् दण्डान् मन्वादय आहुः। एतच्च सकृत्कौटसाक्ष्ये। *ममु.

(५) अधर्मान्नियमनं निवृत्तिः तस्मै च। +मच.

(६) अधर्मनियमाय पापापनुत्त्यर्थम्। भाच.

**कौटसाक्ष्यं तु कुर्वाणांस्त्रीन्वर्णान्धार्मिको नृपः।**
**प्रवासयेद्दण्डयित्वा ब्राह्मणं तु विवासयेत् ॥**

(१) सकृदपराद्धानां पूर्वो दण्डः। अभ्यासात्प्रवर्तमानानां दण्डयित्वा प्रवासनं राष्ट्रान्निष्कासनं, मारणं वाऽर्थशास्त्रे प्रयोगदर्शनात्तद्रूपत्वाच्च दण्डविधेः। ब्राह्मणं तु विवासयेत्, वाससोऽपहरणं विवासनं गृहभङ्गो वा। विवाससं विवासं वा करोति 'तत्करोती'ति णिचि णाविष्ठवदिति टिलोपे रूपम्। त्रीन्वर्णानिति, क्षत्रादयस्त्रयः, ब्राह्मणस्य दण्डान्तरविधानात्। मेधा.

(२) क्षत्रियादीन् त्रीन्वर्णान् कृतकूटसाक्ष्यान् पूर्वोक्तेन दण्डेन दण्डयित्वा धर्मप्रधानो राजा राष्ट्रान्निर्वासयेत्। ब्राह्मणं पुनर्दण्डयित्वा नग्नीकुर्यात्। ×गोरा.

(३) एतच्चाभ्यासविषयम्। कुर्वाणानिति वर्तमानकालनिर्देशात्। त्रीन्वर्णान् क्षत्रियादीन् पूर्वोक्तं दण्डयित्वा

---

× शेषं मेधागतम्। * सर्वं मितागतम्।

(१) **मस्मृ.**८।१२२; **व्यक.**५७ कौट (कूट); **स्मृच.**२३, ९३ षिभिः (षिणः) पू.; **पमा.**११५ व्यकवत्; **व्यचि.**५४ व्यकवत्; **विचि.**१९१ क्तान्द (क्तद) र्थम (र्थं स्व); **स्मृचि.**४८; **व्यसौ.**५४ व्यकवत्; **वीमि.**२।८१ व्यकवत्; **बाल.**२।८१ (=) पू.; **प्रका.**६१ षिभिः (षिणः) नियमाय (निधनाय); **समु.**३८ प्रकावत्; **विव्य.**५६ पू.

* नन्द. ममुगतम्। + शेषं ममुगतम्। × तात्पर्यं मेधावत्।

(१) **मस्मृ.**८।१२३; **गोरा.** कौट (कूट); **मिता.** २।८१; **अप.**२।८१ धार्मिको (पालको); **व्यक.**५७-५८ गोरावत्; **गौमि.**१३।२३गोरावत्; **स्मृच.**९३; **पमा.**११५ गोरावत्; **दीक.**३९; **व्यचि.**५४; **विचि.**१९१; **दवि.**३४४ गोरावत्; **स्मृचि.**४८; **सवि.**१५० (=); **व्यसौ.**५४; **व्यप्र.**१३६; **विता.** १८७; **राकौ.**४०३; **बाल.**२।२६; **प्रका.**६१; **समु.**३८; **विव्य.**५६.

१ मर. २ (०).

प्रवासयेत् मारयेत् । अर्थशास्त्रे प्रवासशब्दस्य मारणे प्रयोगात् । अस्य चार्थशास्त्ररूपत्वात् । तत्रापि प्रवासनमोष्ठच्छेदनं जिह्वाच्छेदनं प्राणवियोजनं च कौटसाक्ष्यविषयतानुसारेण द्रष्टव्यम् । ब्राह्मणं तु दण्डयित्वा विवासयेत् स्वराष्ट्रान्निष्कासयेत् । वाससो विगतो विवासाः । विवासं करोतीति णिचि कृते णाविष्ठवत्प्रातिपदिकस्येति टिलोपे रूपम् । नग्नीकुर्यात् इत्यर्थः । अथवा वसत्यस्मिन् इति वासो गृहम् । विवासयेत् भग्नगृहं कुर्यादित्यर्थः । ब्राह्मणस्यापि लोभादिकारणविशेषाऽपरिज्ञाने अनभ्यासे च तत्र तत्रोक्तो दण्ड एव । अभ्यासे त्वर्थदण्डो विवासनं च । तत्रापि जातिद्रव्यानुबन्धाद्यपेक्षया विवासनं नग्नीकरणं गृहभङ्गो देशान्निर्वासनं चेति व्यवस्था द्रष्टव्या । लोभादिकारणविशेषाऽपरिज्ञाने अनभ्यासे चाल्पविषये कौटसाक्ष्ये ब्राह्मणस्यापि क्षत्रियादिवदर्थदण्ड एव । महाविषये तु देशान्निर्वासनमेव । अत्राप्यभ्यासे सर्वेषामेव मनूक्तं द्रष्टव्यम् ।

न च ब्राह्मणस्यार्थदण्डो नास्तीति मन्तव्यम् । अर्थदण्डाभावे शारीरदण्डे च निषिध्दे, स्वल्पेऽप्यपराधे नग्नीकरणगृहभङ्गाङ्ककरणविप्रवासनं दण्डाभावो वा प्रसज्येत । 'चतुर्णामपि वर्णानां प्रायश्चित्तमकुर्वताम् । शारीरं धनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत्' ॥ इति स्मरणाच्च । तथा— 'सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद्व्रजन्' इति स्मरणात् (मस्मृ.८।३७८) । यत्तु शङ्खवचनम् — 'त्रयाणां वर्णानां धनापहारवधबन्धक्रियाविवासनाङ्ककरणं ब्राह्मणस्ये'ति । तत्र धनापहारः सर्वस्वापहारो विवक्षितो वधसाहचर्यात् । 'शारीरस्त्ववरोधादिर्जीवितान्तः प्रकीर्तितः । काकिण्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव च' ॥ इति वधसर्वस्वहरणयोः सहपाठात् । यदप्युक्तम् — 'राष्ट्रादेनं बहिः कुर्यात्समग्रधनमक्षतम्' इति तत्प्रथमकृतसाहसविषयं न सर्वविषयम् । शारीरस्तु ब्राह्मणस्य न कदाचिद् भवति । 'न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम्' । इति सामान्येन मनुस्मरणात् । तथा मनुः—'न ब्राह्मणवधाद्भूयानधर्मो विद्यते भुवि । तस्मादस्य वधं राजा मनसाऽपि न चिन्तयेत्' ॥

*मिता.२।८१

(४) त्रीन्वर्णान् क्षत्रियादीन् दण्डयित्वा देशान्निर्वासयेत् । ब्राह्मणं तु न दण्डयेत्, किन्तु विवासयेदेव । अभ्यासे विषयगौरवे वा विप्रोऽपि दण्ड्यः । अप.२।८१

(५) कौटसाक्ष्यावृत्तिविषये ब्राह्मणस्य विशेषस्मरणाच्च कः पुनरत्र विशेषः ? न पुनर्दण्डयित्वा प्रवासनं क्षत्रियादेः, ब्राह्मणस्य तु प्रवासनमात्रमिति विशेषो युक्तः । सकृत् कृतेऽपि कौटसाक्ष्ये ब्राह्मणस्य याज्ञवल्क्येन प्रवासनविधानादभ्यासेऽधिकदण्डानुक्तिप्रसक्तेः । अतो यत्कैश्चिदुक्तम्— 'तुशब्दो ब्राह्मणे धनदण्डनिवृत्यर्थ' इति तदपास्तम् । कथं तर्हि ब्राह्मणे दण्डविशेष उक्तः ? उच्यते, प्रवासशब्देनात्र दन्तच्छदच्छेदनं जिह्वाच्छेदो मारणं चोच्यते । विवासशब्देन तु नग्नीकरणादिकम् । तेन दण्डयित्वेत्यस्यानुषङ्गेऽपि विशेषोक्तिर्युक्ता । प्रवासनविवासनावान्तरभेदात् दन्तच्छदच्छेदादयो नग्नीकरणादयश्च कौटसाक्ष्यविषयानुसारेणाभ्याससंख्याविवृध्यनुसारेण चानुसंधातव्याः । अनवधारितहेतुके कौटसाक्ष्ये सकृत् कृते 'पृथक् पृथगि'त्यादिवचनोक्तो याज्ञवल्कीयो दण्डः । अन्यत्र मानव इति चानुसंधेयम् । स्मृच.९३

(६) भूयोभूयः कौटसाक्ष्यकरणे तु कौटसाक्ष्यमिति । क्षत्रियादींस्त्रीन्वर्णान् कौटसाक्ष्यात्पूर्वोक्तेन दण्डयित्वा धार्मिको राजा स्वराष्ट्राद्विवासयेत् । ब्राह्मणं तु धनदण्डव्यतिरेकेण स्वराष्ट्रान्निःसारयेत् । 'न जातु ब्राह्मणं हन्यात्सर्वपापेष्ववस्थितम् । राष्ट्रादेनं बहिः कुर्यात् समग्रधनमक्षतम्' ॥ इति धनसहितनिर्वासनस्याभिधास्यमानत्वात् । मभु.

(७) मिता.टीका— एतच्चाभ्यासविषयमिति । एतदुक्तं भवति— अनभ्यासे त्वेकदैव कृतत्वेन भूतार्थे क्तप्रत्ययान्तः शब्दः स्यात्कृतानिति । न च तथा वर्तमानार्थवाचिशानच्प्रत्ययान्तः शब्दः प्रयुक्तः कुर्वाणानिति । प्रारब्धस्यापरिसमाप्तिर्हि वर्तमानता । पुनः पुनः कौटसाक्ष्यमभिधीयमानस्यापरिसमाप्तप्रायत्वाद्वर्तमानत्वमेव कौटसाक्ष्याभिधानस्य अतोऽभ्यासविषयत्वमिति । ननु ब्राह्मणस्यार्थदण्डो न युज्यते । शङ्खवचने त्रयाणां वर्णानां क्षत्रियादीनां धनापहारवधबन्धक्रिया, ब्राह्मणस्य तु विवासनमेवेत्युक्तत्वादित्याशङ्क्य परिहरति 'यत्तु शङ्खवचनं त्रयाणां वर्णानामि'त्यादिना । एष परिहाराभिप्रायः ।

* सवि., व्यप्र., विता., नन्द. मितागतम् ।

सर्वस्वहरणं ब्राह्मणस्य निषिध्यते न दण्डमात्रमिति । सुबो.२।८१

(८) दण्डोत्तरकालीनं कृत्यमाह—कौटेति । ×मच.

## याज्ञवल्क्यः

कीदृशाः कियन्तश्च साक्षिणो भवन्ति

**[1]तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः ।**
**धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः ॥**
**[2]त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्तक्रियापराः ।**
**यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः ॥**

(१) सर्वत्र च ऋणादानादौ व्यक्तिहेतवो लिखितं साक्षिणो भुक्तिश्चेति । तत्र भुक्तिः स्थावरादौ । अन्यत्र तु लिखितं साक्षिणश्च । तथा च नारदः—'लिखितं साक्षिणश्चैव प्रमाणे व्यक्तिकारके' इति सामान्यविवक्षयैवाह । तेनार्थिप्रत्यर्थिभ्यां साक्षिभिर्लिखितेन वा स्वपक्षसिद्धिः कार्येत्युक्ते किंलक्षणास्तु साक्षिणो लेख्यं चेत्येतद् वक्तव्यम् । तत्र साक्षिणस्तावदुच्यन्ते—तपस्विन इति ।

तपःप्रभृतयो यथोपलब्धवादित्वे हेतवः । कथम्? यो हि निष्कारणं परलोकसाधनैकप्रवणस्तपोदानादिप्रवृत्तोऽतिशयितेतरपुरुषप्रज्ञः स कथमिवात्मनो दृष्टादृष्टविरुद्धं विमार्गाश्रयिणः परस्यार्थेऽनृतं ब्रूयादित्यभिप्रायः । तपोदानादिभिर्ये धर्मप्रधानतया सत्यवादिनः, ये वा कुलीनाः स्वकुलकलङ्कभीत्या, ये वा पुत्रिणो धनिनश्च तद्विनाशभीत्या, प्रकृत्या ऋजवः उपलब्धातिरिक्तवचनाशक्त्याऽनन्यथावादिनः, ते त्र्यवराः साक्षिणो ज्ञेयाः । त्रयो येषामवरास्ते त्र्यवराः, त्रिप्रभृतय इत्यर्थः । साक्षिणो ज्ञेया इति प्रत्यक्षमूलत्वाभिप्रायम् । निपुणतः प्रत्यक्षादिभिर्लक्षणतः साक्षिणो निरूपणीया इत्यर्थः । पञ्चयज्ञक्रियारता इति । आन्वाहिकाशक्यपरिहारहिंसानिष्कृत्यर्थं हि पञ्चयज्ञक्रियाविधानम् । तद् ये ह्यशक्यपरिहारामपि हिंसामपाकर्तुं प्रवृत्ताः, ते कथमिव स्वाभिप्रायेणान्यायवर्तिजनवदसद्वादेषु प्रवर्तेरन्नित्यभिप्रायः । एवं स्मृत्यन्तराण्यपि साक्षिप्रपञ्चविषयाणि व्याख्येयानि । यत्तु नारदेनैकादशविधं साक्ष्यं कृताकृतत्वभेदेनोक्तं, तत् सौहृदान्मुग्धजनव्युत्पत्त्यर्थम् । तच्च तस्मादेवावगन्तव्यम् । यथाजातीति । मनुष्यस्त्रीजातिभेदाभिप्रायं वा जातिवचनम् । यथोक्तं नारदेन 'श्रेणीषु श्रेणिपुरुषा' इत्यादि । यथावर्णं च ब्राह्मणादीनां च साक्ष्यम् । सर्वे वा सर्वासु जातिषु जातिशब्दाभिधेयत्वाद् वर्णेऽपि स्त्रीलिङ्गाविरोधः । पुनःशब्दोऽवसरापेक्षया । साक्ष्यन्तराभावे पुनर्वक्ष्यमाणकार्यापेक्षया वा सर्वे सर्वेषाम् । यथा 'सर्वः संग्रहणे साक्षी'ति । विश्व.२।७०-७१

(२) ते साक्षिणः कीदृशाः कियन्तश्च भवन्तीत्यत आह—तपस्विन इति । तपस्विनः तपःशीलाः । दानशीला दाननिरताः । कुलीना महाकुलप्रसूताः । सत्यवादिनः सत्यवदनशीलाः । धर्मप्रधानाः नार्थकामप्रधानाः । ऋजवोऽकुटिलाः । पुत्रवन्तो विद्यमानपुत्राः । धनान्विता बहुसुवर्णादिधनयुक्ताः । श्रौतस्मार्तक्रियापराः नित्यनैमित्तिकानुष्ठानरताः । एवम्भूताः पुरुषाः त्र्यवराः साक्षिणो भवन्ति । त्रयः अवराः न्यूना येषां ते त्र्यवराः, त्रिभ्योऽर्वाङ् न भवन्ति । परतस्तु यथाकामं भवन्तीत्यर्थः । जातिमनतिक्रम्य यथाजाति । जातयो मूर्धावसिक्तादयः अनुलोमजाः प्रतिलोमजाश्च । तत्र मूर्धावसिक्तानां मूर्धावसिक्ताः साक्षिणो भवन्ति । एवमम्बष्ठादिष्वपि द्रष्टव्यम् । वर्णमनतिक्रम्य यथावर्णम् । वर्णा ब्राह्मणादयः । तत्र ब्राह्मणानां ब्राह्मणा एवोक्तलक्षणा

---

× शेषं ममुगतम् ।

(१) **यास्मृ**.२।६८; **अपु**.२५५।१; **विश्व**.२।७०; **मिता**.; **व्यमा**.३१७; **अप**.; **व्यक**.४४; **पमा**.९४; **स्मृसा**.९९ धना (गुणा); **व्यचि**.३८; **स्मृचि**.४४ धनान्विताः (यशस्विनः); **नृप्र**.९; **सवि**.१३६; **व्यसौ**.४२; **वीमि**.; **व्यप्र**.११०; **विता**.१५४ कुलीनाः (धर्मज्ञाः); **राकौ**.४०२; **सेतु**.११७; **प्रका**.४९; **समु**.२७.

(२) **यास्मृ**.२।६९; **अपु**.२५५।२ पूर्वार्धे (पञ्चयज्ञक्रियायुक्ताः साक्षिणः पञ्च वा त्रयः); **शुनी**.४।६८१ वा स्मृताः (साक्षिणः) उत्त.; **विश्व**.२।७१ श्रौत ... राः (पञ्चयज्ञक्रियारताः) सर्वेषु (सर्वासु) स्मृताः (पुनः); **मिता**.; **व्यमा**.३१७ पराः (रताः) यथाव (तथाव); **अप**.; **व्यक**.४४; **गौमि**.१३।२ पू.; **स्मृच**.७७ उत्त.; **ममु**.२।६८ उत्त.; **पमा**.९५; **स्मृसा**.९९; **व्यचि**.३८ पराः (न्विताः); **स्मृचि**.४४; **नृप्र**.९; **व्यत**.२१२ पराः (रताः); **सवि**.१३६; **चन्द्र**.१३३ व्यचिवत्; **व्यसौ**.४२; **वीमि**.; **व्यप्र**.११०; **व्यउ**.४७; **व्यम**.१६; **विता**.१५४; **राकौ**.४०२; **सेतु**.११७ त्र्य (अ) पराः (रताः); **प्रका**.४९ श्रौत ...पराः (शुचयः शुद्धबुद्धयः); **समु**.२७ सर्वेषु (सर्वासु); **विव्य**.११ (=) उत्त.

उक्तसंख्याकाः साक्षिणो भवन्ति । एवं क्षत्रियादिष्वपि द्रष्टव्यम् । तथा स्त्रीणां साक्ष्यं स्त्रिय एव कुर्युः । यथाह मनुः—'स्त्रीणां साक्ष्यं स्त्रियः कुर्युरि'ति । सजातिसवर्णाऽसंभवे सर्वे मूर्धावसिक्तादयो ब्राह्मणादयश्च सर्वेषु मूर्धावसिक्तादिषु ब्राह्मणादिषु च यथासंभवं साक्षिणो भवन्ति । *मिता.

(३) यथाजाति संकीर्णजात्यभिप्रायेण । असंकीर्णायां यथावर्णमित्युपात्तत्वात् । मुख्याः सवर्णाः, असंभवे अन्यवर्णाः, तेन संख्यागुणसाम्येऽपि यस्य वादिनः सवर्णाः साक्षिणस्तस्यैव ग्राह्या इत्युक्तम् । +व्यमा.३१७

(४) तपः कृच्छ्रादि स्वधर्मवर्तित्वं वा, तद्वन्तः । ते च यथाजाति वादिप्रतिवादिजात्यनतिक्रमेण कार्याः । तज्जातीया एव कार्या इत्यर्थः । एतच्च वादिप्रतिवादिनोः सजातित्वे ज्ञेयम् । नानाजातित्वे तु यथावर्णं ब्राह्मणादिवर्णक्रमेणेत्यर्थः । सर्वे वा ब्राह्मणादयो वर्णाः सर्वेषु नानावर्णेषु व्यवहर्तृषु साक्षित्वेन ग्राह्याः । ×अप.

(५) जातिग्रहणं श्रेण्यादेरप्युपलक्षणार्थम् । स्मृच.७७

(६) यथाजाति, ते च यथाजाति भवन्ति । यथा स्त्रीणां स्त्रियः अन्त्यजानामन्त्यजाः । =स्मृसा.९९

(७) सजातीयेषु साक्षिषु सत्सु विजातीया अपि साक्षिणः 'त्र्यवराः साक्षिणो ज्ञेया' इति वचनात् । 'स्त्रीणां साक्ष्यं स्त्रियः कुर्युः' (मस्मृ. ८।७०) इति वचनाच्च । चन्द्र.१३३-१३४

(८) त्रयोऽवमः कल्पो येषां ते त्र्यवराः । ÷वीमि.

(९) यथाजाति यथायुक्त्या ब्राह्मणादीनां ब्राह्मणा एव साक्षिण इत्यर्थसिद्धेः यथावर्णमिति व्यर्थमेव । जातिपदं वर्णत्वव्याप्यब्राह्मणत्वादिजातिभिन्नमूर्धावसिक्तत्वादिजातिपरमिति विज्ञानेश्वरः । सर्वे वेत्यपवादः । व्यउ.४७

असाक्षिणः

**स्त्रीबालवृद्धकितवमत्तोन्मत्ताभिशस्तकाः ।**
**रङ्गावतारिपाखण्डिकूटकृद्विकलेन्द्रियाः ॥**

* सवि., व्यप्र., विता. मितागतम् । + व्यचि. व्यमावत् स्मृसावच्च । × शेषं मितागतम् । = वाक्यार्थो मितावत् । व्यत., सेतु. स्मृसावत् । ÷ शेषं मितागतम् ।

(१) **यास्मृ.**२।७०; **अपु.**२५५।३; **विश्व.**२।७२ बाल-वृद्ध (वृद्धबाल); **मिता.**; **अप.** पाख (पाषा); **व्यक.**४७ तारि (तार) ण्डि (ण्डी) न्द्रियाः (न्द्रियः); **स्मृसा.**१२०; **स्मृचि.**४६; **चन्द्र.**१३९; **व्यसौ.**४५; **वीमि.**; **व्यप्र.**११४; **व्यम.**१६; **विता.**१६१; **राकौ.**४०२; **सेतु.**११९; **प्रका.**५०; **समु.**२९.

**पतितासार्थसंबन्धिसहायरिपुतस्कराः ।**
**साहसी दृष्टदोषश्च निर्धूताद्यास्त्वसाक्षिणः ॥**

(१) उक्तन्यायविरोधे तु— स्त्रीबालेत्यादि । येषां तु दृष्टमदृष्टं वा यथाभूतार्थदर्शने दृष्टार्थाभिधायित्वे च कारणं न स्यात्, विपर्यये वा स्यात्, ते न साक्षिण इत्यर्थः । सर्वे चाभोज्यप्रकरणोक्ता अग्निहीनादयः साक्ष्यानर्हा द्रष्टव्याः । तदुपलक्षणार्थैवात्र स्त्री । यथोक्तम् 'अवीरायाश्च योषित' इति । सैव चाप्यत्राप्यभिप्रेता । सवीरायास्तु तदधिष्ठितायाः साक्ष्यं क्वचिदस्त्येव । यथोक्तं स्वयंभुवा—'स्त्रीणां साक्ष्यं स्त्रियः कुर्युः' इति । रङ्गावतारी मल्लः । स्पष्टमन्यत् । अभोज्यान्नानां तु साक्ष्यानधिकारं न्यायसिद्धमेवाभिप्रेत्य नारदेनोक्तम्— 'नार्थसंबन्धिनो नाप्ता न सहाया न वैरिणः । न दृष्टदोषाः कर्तव्या न व्याध्यार्ता न दूषिताः' ॥ इत्युक्त्वा ततः 'दासनैकृतिकश्रान्तवृद्धस्त्रीबालचक्रिकाः' इति । एवं सर्वेऽभोज्यान्ना अनुक्रान्ताः । प्रमाणान्तरमूलं चासाक्षित्वं प्रपञ्चितम् । यथा— 'बालोऽज्ञानादसत्या स्त्री पापाभ्यासाच्च कूटकृत् । विब्रूयुर्बान्धवाः स्नेहाद् वैरनिर्यातनादरिः' इति ॥ वचनादपि क्वचित् । यथाह — 'श्रोत्रियाद्या वचनतः स्तेनाद्या दोषदर्शनात्' इति । सर्वथाऽनया दिशा न्यायागमाभ्यां साक्ष्यमसाक्ष्यं च प्रपञ्चनीयम् । विश्व.२।७२-७३

(२) तानेतानसाक्षिणो दर्शयति — स्त्रीबालेति । स्त्री प्रसिद्धा । बालोऽप्राप्तव्यवहारः । वृद्धोऽशीतिकावरः । वृद्धग्रहणं वचननिषिद्धानामन्येषामपि श्रोत्रियादीनामुपलक्षणार्थम् । कितवोऽक्षदेवी । मत्तः पानादिना ।

(१) **यास्मृ.**२।७१; **अपु.**२५५।४ पू.; **विश्व.**२।७३ ताद्यास्त्व (तश्चेत्य); **मिता.**; **अप.** विश्ववत्; **व्यक.**४७ धूताद्यास्त्व (र्दोषाश्चेत्य); **स्मृसा.**१०२ विश्ववत्; **स्मृचि.**४६; **चन्द्र.**१३९; **व्यसौ.**४५; **वीमि.**; **व्यप्र.**११४; **व्यम.**१६; **विता.**१६२ तासार्थ (तश्चार्थ) द्यास्त्व (स्ते ह्य); **राकौ.**४०२ विश्ववत्; **सेतु.**११९; **प्रका.**५०; **समु.**२९ द्यास्त्व (द्या अ).

उन्मत्तो ग्रहाविष्टः। अभिशस्तोऽभियुक्तो ब्रह्महत्यादिना। रङ्गावतारी चारणः। पाखण्डिनो निर्ग्रन्थप्रभृतयः। कूटकृत्कपटलेख्यादिकारी। विकलेन्द्रियः श्रोत्रादिरहितः। पतितो ब्रह्महादिः। आप्तः सुहृत्। अर्थसंबन्धी विप्रतिपद्यमानार्थसंबन्धी। सहाय एककार्यः। रिपुः शत्रुः। तस्करः स्तेनः। साहसी स्वबलावष्टम्भकारी। दृष्टदोषो दृष्टवितथवचनः। निर्धूतो बन्धुभिस्त्यक्तः। आद्यशब्दादन्येषामपि स्मृत्यन्तरोक्तानां दोषादसाक्षिणां भेदादसाक्षिणां स्वयमुक्तेर्मृतान्तरस्य च ग्रहणम्। एते स्त्रीबालादयः साक्षिणो न भवन्ति। *मिता.

(३) स्त्रीबालाद्या असाक्षिणः। एषामविहितत्वादेवासाक्षित्वे प्राप्ते यद्वचनं तद्विहितसाक्ष्यलाभे प्रतिषिद्धव्यतिरिक्तानां साक्षित्वज्ञापनार्थम्। अभिशस्तः पापकारित्वेनाक्षिप्तः। रङ्गावतारी नटादिः। पाषाण्डी अवेदमूलस्मृत्यनुष्ठाता। कूटकृत्कूटमानादिकर्ता। आप्तो ब्राह्मयौनसंबन्धी। साहसी हठकारी। दृष्टदोषः स्तेनादिः। निर्धूतः शिष्टैर्गर्हितः। प्रसिद्धमन्यत्। ×अप.

(४) पुरुषाणां न स्त्री साक्षिणी। बाल आषोडशवर्षकः। वृद्धो ग्लानेन्द्रियः। उन्मत्त उन्मादयुक्तः। रङ्गावतारी नर्तकः। विकलेन्द्रियः सम्यग् दर्शनश्रवणाशक्तः। आप्तो यो यस्य सखा। साहसी मनुष्यमारणसाहसशीलः। निर्धूतो निष्प्रकम्पः। धुञ् कम्पने इत्यस्य प्रयोगः लोकभयशून्य इत्यर्थः। सर्व एवैते मृषाभिधाने लोभाद्यन्यतमकारणस्य संभाव्यमानत्वादसाक्षिण इति बोद्धव्यम्। +स्मृसा.१०२

(५) पाखण्डी वेदबाह्यः। सहायो वादिसाहाय्यकर्ता। साहसी प्रसह्य मारणादिकारी। दृष्टदोषः वादान्तरेऽसत्याभिधायी।

तुशब्देन स्त्र्यादिभिन्नानां तपस्वीत्यादियथागुणशून्यानामसाक्षित्वं व्यवच्छिनत्ति। +वीमि.

(६) मिता. टीका — अशीतिकेति। अशीतिः परिमाणमस्य स अवरो यस्येति विग्रहः। ततोऽर्वाक् न भवति। तदारभ्य भवतीत्यर्थः। कारीति। तेन करोति न तु विचारेण। अविचारितकारीत्यर्थः। बन्धुभिरिति। 'ग्रामराजकुलश्रेण्यादिभिर्निस्सारितः' इति कल्पतरुः। बाल,

* व्यप्र. प्रायः मितागतम्, अन्यत्र च गतार्थम्।

× चन्द्र. श्लोकप्रयोजनं अपवत्, पदार्थः स्मृसावत्।

+ शेषपदार्थो मितावत्। विता., सेतु. स्मृसागतम्।

उक्तासाक्षित्वप्रतिप्रसवः

**उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित्।**
**सर्वः साक्षी संग्रहणे चौर्यपारुष्यसाहसे॥**

(१) देशकालाद्यपेक्षया पुनः—उभयानुमत इति। अर्थिप्रत्यर्थिभ्यामनुमतोऽतिशयगुणवानेकोऽपि साक्षी स्यात्। अपिशब्दाद् द्वावपि। साक्षिपुनर्वचनं च समक्षदर्शनादेव संग्रहणादौ साक्ष्यं यथा स्यात्। अविशेषाभिधानेऽपि भूतार्थोपलम्भवचनाशक्तेर्बालादयो न स्युः। ×विश्व.२।७४

(२) त्र्यवराः साक्षिणो ज्ञेया इत्यस्यापवादमाह— उभयानुमत इति। ज्ञानपूर्वकं नित्यनैमित्तिककर्मानुष्ठायी धर्मवित्। स एकोऽप्युभयानुमतश्चेत्साक्षी भवति। अपिशब्दबलाद् द्वावपि। यद्यपि श्रौतस्मार्तक्रियापरा इति त्र्यवराणामपि धर्मवित्त्वं समानं, तथापि तेषामुभयानुमत्यभावेऽपि साक्षित्वं भवत्येकस्य द्वयोर्वोभयानुमत्यैव साक्षित्वं भवति इत्यर्थवत् त्र्यवरग्रहणम्। तपस्विनो दानशीला इत्यस्यापवादमाह— सर्व इति। संग्रहणादीनि वक्ष्यमाणलक्षणानि। तेषु सर्वे वचननिषिद्धास्तपःप्रभृतिगुणरहिताश्च साक्षिणो भवन्ति। दोषादसाक्षिणो भेदादसाक्षिणः स्वयमुक्तिश्चात्रापि साक्षिणो न भवन्ति।

× शेषं व्याख्यानं 'तेषामपि न बालः स्यात्' इति नारदश्लोके द्रष्टव्यम्।

(१)**यास्मृ**.२।७२; अपु.२५५।४-५ (असाक्षिणःसर्वसाक्ष्ये चौर्यपारुष्यसाहसे); **शुनी**.४।६८० पू.; **विश्व**.२।७४ साक्षी ...चौर्य (संग्रहणे साक्षी दण्ड); **मिता**.; **व्यमा**.३१८ वत्येको (वेदेको) पू.:३२८ साक्षी संग्रहणे(संग्रहणे साक्षी) उत्त.;**अप**.; **व्यक**.४३ वत्येको (वेदेको) पू.; **गौमि**.१३।२ पू.; **स्मृच** ७३,७९ उत्त.; **स्मृसा**.९९ (=) व्यकवत्, पू.; **व्यचि**.३९ व्यकवत्, पू.; **दवि**.२९४ उत्त.; **स्मृचि**.४६ व्यकवत्, पू.; **व्यत**.२१२ व्यकवत्, पू.; **सवि**.१३८ पू.; **चन्द्र**.१३४ व्यकवत्, पू.; **व्यसौ**.४१ व्यकवत्, पू.; **वीमि**.; **व्यप्र**.११२ पू., १२० उत्त.; **व्यउ**.४८; **व्यम**.१६ व्यकवत्, पू.:१७ उत्त.; **विता**.१६४ पू., १६६ (=) उत्त.; **राकौ**.४०२ पू.; **सेतु**.११८ व्यकवत्, पू.; **प्रका**.५१ उत्त.; **समु**.२८; **विव्य**.११ व्यकवत्, पू.

सत्त्वाभावादेर्हेतोरत्रापि विद्यमानत्वात् । 'मनुष्यमारणं चौर्यं परदाराभिमर्शनम् । पारुष्यमुभयं चेति साहसं स्याच्चतुर्विधम्' ॥ इति वचनाद्यद्यपि स्त्रीसंग्रहणचौर्यपारुष्याणां साहसत्वम्, तथापि तेषां स्वबलावष्टम्भेन जनसमक्षं क्रियमाणानां साहसत्वम् । रहसि क्रियमाणानां तु संग्रहणादिशब्दवाच्यत्वमिति तेषां साहसात्पृथगुपादानम् । *मिता.

(३) धर्मवित् श्रोत्रियः । तपस्विन इत्यादिगुणवतामेव व्यवरादीनां विधानात् उभौ तु श्रोत्रियाविति गुणवतोर्विदुषोर्धर्मविदोरननुमतियोग्ययोरुभयोर्विधानसंभवात्, तद्विरुद्धं कथमेकस्य विधानं भवति ? तच्चानुमतिं विनाऽपि योग्ययोर्द्वयोर्विधानम् । योग्यस्यानुमतौ सत्यामेकस्यैवेत्यविरोधो बोध्यः । किञ्च 'धर्मवित्'पदादेवानुमतियोग्यस्य प्राप्तत्वादनुमतिपदमनर्थकं, उभयपदमप्यविशेषकम्, अनुमतियोग्ययोरिव एकस्याप्यनुमतियोग्यस्यैव ग्रहणात् । अनुमतिपरत्वे तु सार्थकं, तथैवैकस्य साक्षित्वात् । व्यमा.३१८

(४) चौर्यपारुष्यसाहसे इत्यत्र साहसशब्देन मनुष्यमारणमेव विवक्षितं, न चौर्यादिकम् । तस्य स्वशब्देनैवोक्तत्वात् । साहसशब्दश्च न चौर्यादिमात्रवाचकः, किन्तु तद्विशेषस्य । यदाह नारदः– 'सहसा क्रियते कर्म यत्किञ्चिद्बलदर्पितैः । तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते' ॥ तेन साहसरूपेष्वपि चौर्यादिषु सर्वस्य साक्षित्वविधानार्थं साहसचौर्यादीनां पृथग्ग्रहणम् । सर्वः साक्षी न तु गुणवानेवेत्यर्थः । दोषवांस्तत्रापि परिहरणीय एव वक्तृदोषाणां वचनाप्रामाण्यहेतुत्वात् । ×अप.

(५) तदपि (सर्वः साक्षीति) गुणपरीक्षामात्रनिवृत्त्यर्थमित्यवगन्तव्यम् । स्मृच.७९

साहसादौ मिथ्यावादित्वनिश्चयाभावमात्रात् साक्षिणां प्रामाण्यमिष्टम् । स्मृच.७३

(६) धर्मविदिति सकलसाक्षिगुणोपलक्षणम् । +व्यचि.३९

(७) परमधार्मिक एकोऽपि साक्षी भवत्येव न तत्रापराननुमत्या निषेधः । अत्रोभयानुमतत्वाभिधानं परमधार्मिकत्वप्रतिपादनार्थम्, तेन योऽत्यन्तधार्मिकोऽलुब्धत्वेन सर्वजनसिद्धः स एकोऽपि साक्षी भवत्येव । एवंविधस्यान्यतरविप्रतिपत्तेरप्रयोजकत्वादिति भावः । एतावतोभयपदेन सभ्यप्राड्विवाकावुक्ताविति प्रतिभाति, अन्यथा उभयानुमतेरेव साक्षिवादने प्रयोजकत्वाविशेषेण वैयर्थ्यात् । चन्द्र.१३४

(८) अपिशब्देन 'उभौ तु श्रोत्रियौ ग्राह्यौ' इति बृहस्पतिवचनोक्तसमुच्चयः । *वीमि.

(९) लिखितादीनामुभयानुमतत्वे ग्राह्यत्वमेकस्यापीत्याह योगीश्वरः—उभयानुमत इति । +व्यप्र.११२

स्त्रीसंग्रहणादिषु योगीश्वरः—सर्व इति । स्त्रीसंग्रहादीनां सत्यपि साहसत्वे बलानवष्टम्भेन क्रियमाणानां तेषामसाहसत्वात् तत्संग्रहार्थं ततः पृथगुपादानम् । व्यप्र.१२०

(१०) मिता.टीका— प्रत्यासत्तेः 'स्त्रीबाले'त्यस्यैवोपस्थितेराह — तपस्वीति । इत्यस्येति । इत्यस्यापीत्यर्थः । क्वचित् तथैव पाठः । अपिना स्त्रीबालेत्यादिनिषिद्धसंग्रहः । अत एव व्याख्यानविरोधो नेति बोध्यम् । बाल.

* व्यउ., विता. मितागतम् ।

× उभयपदार्थौ विश्ववत् । + शेषं व्यमागतम् ।

साक्षिप्रश्नविधिः

**[1]साक्षिणः श्रावयेद्वादिप्रतिवादिसमीपगान् ।**
**ये पातककृतां लोका महापातकिनां तथा ॥**
**[2]अग्निदानां च ये लोका ये च स्त्रीबालघातिनाम् ।**
**स तान्सर्वानवाप्नोति यः साक्ष्यमनृतं वदेत् ॥**

* उभयपदार्थौ विश्ववत् ।

+ शेषं (पृ.११२) मितागतम् । व्यम. व्यप्रगतम् ।

(१) **यास्मृ.**२।७३; **अपु.**२५५।७-८; **विश्व.**२।७७; **मिता.**; **अप.** पातककृतां (च पातकिनां); **व्यक.**५१; **व्यचि.** ४८ महा (उप); **नृप्र.**१०; **चन्द्र.**१४७ महा ... तथा (ये लोका ब्रह्मघातिनाम्) उत्त.; **व्यसौ.**५०; **वीमि.** ये पातक (ये च पाप); **व्यप्र.**१२७; **व्यउ.**४८-४९; **विता.**१६८; **प्रका.** ५७; **समु.**३५.

(२) **यास्मृ.**२।७४; **अपु.**२५५।८-९ स तान्सर्वान् (तान्सर्वान् सम); **विश्व.**२।७८ स ... नवा (तान् सर्वान् समवा); **मिता.**; **अप.** विश्ववत्; **व्यक.**५१ विश्ववत्; **सुबो.**२।८३ उत्त.; **व्यचि.**४८ नां च (नान्तु) स ... प्नोति (तान् सर्वान्स समाप्नोति); **नृप्र.**१०; **चन्द्र.**१४७ यः (यदि) शेषं विश्ववत्; **व्यसौ.**५० विश्ववत्; **वीमि.** नां च (नान्तु) स ... प्नोति

**सुकृतं यत्त्वया किञ्चिज्जन्मान्तरशतैः कृतम् ।**
**तत्सर्वं तस्य जानीहि यं पराजयसे मृषा ॥**

(१) कूटसाक्षिणो मिथ्यावादिनः। तेषां यत् पापं तत् प्रकरणान्तरेण दर्शयति— साक्षिण इति। स्मृत्यन्तरान्न्यायाच्च प्राङ्मुखानुदङ्मुखान् वा प्रयतान् पूर्वाह्णे प्रणिहितैकाग्रानर्थिप्रत्यर्थिसभ्यसमक्षं तथाभूत एव प्राड्विवाकोऽपि हि 'ये पातककृतां लोका' इति श्रावयेत्। स्पष्टमन्यत्। एवं श्रावयित्वा तत्स्वरूपापेक्षया यथार्हं पृच्छेत्। धर्मानभिज्ञांस्त्वेवं प्रतिबोधयेत्—'यत्त्वया सुकृतं किञ्चिज्जन्मान्तरशतैः कृतम्। तत्सर्वं तस्य जानीहि पराजयसि यं मृषा'॥ विश्व.२।७७-७९

(२) अर्थिप्रत्यर्थिसंनिधौ साक्षिणः समवेतान्—'नासमवेताः पृष्टाः प्रब्रूयुरि'ति गौतमवचनात्। वक्ष्यमाणं श्रावयेत्। तथा ब्राह्मणादिषु श्रावणे मनुना नियमो दर्शितः 'सत्येन शापयेत्' (८।११३) इति। ब्राह्मणं—'अन्यथा ब्रुवतः सत्यं ते नश्यती'ति शापयेत्। क्षत्रियं 'वाहनायुधानि तव विफलानी'ति। 'गोबीजकाञ्चनादीनि तव विफलानि भविष्यन्ती'ति वैश्यम्। शूद्रं 'अन्यथा ब्रुवतः तव सर्वाणि पातकानि भविष्यन्ती'ति शापयेत्। अत्र चापवादस्तेनैव दर्शितः। 'गोरक्षकान् वाणिजकांस्तथा कारुकुशीलवान्। प्रेष्यान् वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत्'॥ (मस्मृ.८।१०२) इति। विप्रग्रहणं क्षत्रियवैश्ययोरुपलक्षणार्थम्। कुशीलवा गायकाः। 'जितः सविनयं दाप्यः शास्त्रदृष्टेन कर्मणा। यदि वादी निराकाङ्क्षः साक्षिसत्ये व्यवस्थितः'॥ इति स्मरणात्। साकाङ्क्षश्चेत्क्रियान्तरमवलम्बेतेत्यभिप्रायः।

पातकोपपातकमहापातककारिणामग्निदानां स्त्रीबालघातिनां च ये लोकास्तान् सर्वानसौ आप्नोति यः साक्ष्यनृतं वदेदिति। तथा जन्मान्तरशतैर्यत्सुकृतं कृतं तत्सर्वं तस्य भवति यस्ते अनृतवदनेन पराजितो भवतीति श्रावयेदिति संबन्धः। एतच्च शूद्रविषयं द्रष्टव्यम्। शूद्रं सर्वैस्तु पातकैरिति शूद्रे सर्वपातकश्रावणस्य विहितत्वात्। गोरक्षकादिद्विजातिविषयं च। गोरक्षकान् वाणिजकानित्युक्तत्वात्। अन्यानेकजन्मार्जितसुकृतसंक्रमणस्य महापातकादिफलप्राप्तेश्चानृतमात्रेणानुपपत्तेः। साक्षिसंत्रासार्थमिदमुच्यते। यथाह नारदः—'पुराणैर्धर्मवचनैः सत्यमाहात्म्यकीर्तनैः। अनृतस्यापवादैश्च भृशमुत्त्रासयेदिति'॥ *मिता.

(३) ब्राह्मणा अपि क्षत्रियवैश्यशूद्रसमाः तेऽपि क्षत्रियादिवदेव प्रष्टव्याः। व्यमा.३३१

(४) कर्तृगामिफलप्रदं हि धर्मं 'अग्निहोत्रं जुहुयात्स्वर्गकाम' इत्यादीनि श्रुतिवचनानि बोधयन्तीति तद्विरोधपरिहारार्थं साक्षिणामुत्त्रासनायैव 'सुकृतं यत्त्वया किञ्चिदि'त्याद्युच्यते। यानि पुनः श्रुतिभ्योऽविरुद्धानि तानि यथार्थान्येव स्मृतिवचनानि। तथाह नारदः—'अवीचिनरके कल्पं वसेयुः कूटसाक्षिणः'। बृहस्पतिः—'कूटसत्यः कूटसाक्षी ब्रह्महा च समः स्मृतः'। इत्यादीनि। अत एव प्रायश्चित्तप्रकरणे—'उक्त्वा चैवानृतं साक्ष्ये कृत्वा च स्त्रीसुहृद्वधम्'। इत्यत्र ब्रह्महत्याप्रायश्चित्तं कूटसाक्षिणां मनुर्विदधाति। +अप.

(५) 'शूद्रं सर्वैस्तु पातकैः' इति मानवसंवादात् पातकश्रावणं शूद्रविषयकमिति मिताक्षराकारापरार्कौ। शपथदानश्रवणविधिभेदात् मानवे च शपथदान एव तन्नियमादस्य सर्वविषयतां तु युक्तामुन्नयामः। व्यप्र.१२७

साक्ष्यमब्रुवतो दण्डः

**अब्रुवन् हि नरः साक्ष्यमृणं सदशबन्धकम्।**
**राज्ञा सर्वं प्रदाप्यः स्यात् षट्चत्वारिंशकेऽहनि॥**

(एतान् सर्वान् समाप्नोति); **व्यप्र**.१२७; **व्यउ**.४९; **विता**.१६८; **बाल**.२।८३ उत्त.; **प्रका**.५७; **समु**.३५.

(१) **यास्मृ**.२।७५; **अपु**.२५५।९-१०; **शुनी**.४।७००-७०१; **विश्व**.२।७९ सुकृतं यत्त्वया (यत्त्वया सुकृतं) यं पराजयसे (पराजयसि यं); **मिता**. मृषा (वृथा); **व्यमा**.३३१; **अप**.; **व्यक**.५५; **व्यचि**.५२; **स्मृचि**.४८; **नृप्र**.१०; **चन्द्र**.१४८; **व्यसौ**.५२; **वीमि**.; **व्यप्र**.१२७; **व्यउ**.४९; **विता**.१६८; **प्रका**.५७; **समु**.३५; **विव्य**.१४ मितावत्.

* वाक्यार्थो विश्ववत्। वीमि., विता. मितागतम्। 'सत्येन शापयेदि'त्यादिमनुश्लोको (८।११३) दिव्यप्रकरणान्तर्गतोऽपि साक्षिप्रकरणे मिताक्षराकारादिभिःबहुभिर्निबन्धकारैश्च व्याख्यातः। तच्चिन्त्यम्। 'ब्रूहीति ब्राह्मणं पृच्छेत्' (८।८८) इत्यादिसाक्षिप्रकरणान्तर्गतमनुश्लोकविरोधात्। + शेषं मितागतम्।

(१) **यास्मृ**.२।७६; **अपु**.२५५।५-६; **विश्व**.२।७५ स्यात्...शके (षट्चत्वारिंशत्तमे); **मिता**.; **अप**. विश्ववत्; **व्यक**.५८ विश्ववत्; **स्मृच**.९२ विश्ववत्; **दवि**.३४८ विश्ववत्; **व्यसौ**.५५; **वीमि**. वन् हि (वंस्तु); **व्यप्र**.१३०; **व्यम**.१९;

(१) नन्वेवमपि संकटे साक्ष्यव्यवहारे यदि न कश्चित् साक्ष्यं ब्रूयात्। सत्यम्, तेनैव चाह — अब्रुवन्निति। यद्यपि अरोगस्त्रिपक्षेणापि साक्ष्यं न ब्रूयात्, ततो राज्ञा सदशबन्धकमृणं प्रमथ्य दाप्यः। सह दशबन्धकेन सदशबन्धकम्। दशांशाभ्यधिकमित्यर्थः। ऋणग्रहणं सर्वविवादोपलक्षणार्थम्। विश्व.२।७५

(२) यदा तु श्राविताः साक्षिणः कथञ्चिन्न ब्रूयुस्तदा किं कर्तव्यमित्यत आह — अब्रुवन्निति। यः साक्ष्यमङ्गीकृत्य श्रावितः सन् कथञ्चिन्न वदति स राज्ञा सर्वं सवृद्धिकमृणं धनिने दाप्यः। सदशबन्धकं दशमांशसहितम्, दशमांशश्च राज्ञो भवति। 'राज्ञाऽधमर्णिको दाप्यः साधिताद्दशकं शतम्' इत्युक्तत्वात्। एतच्च षट्चत्वारिंशकेऽहनि प्राप्ते वेदितव्यम्। ततोऽर्वाग् वदन्न दाप्यः। इदं च व्याध्याद्युपद्रवरहितस्य। *मिता.

(३) अब्रुवता साक्षिणा अधमर्णदेयं दातव्यमित्येतावदत्र वाक्ये विधीयते। +अप.

(४) अत्राधमर्णेन न किञ्चिद्दातव्यं, तद्देयमेवाब्रुवन् साक्षी दाप्य इति पूर्ववचनस्य तात्पर्यार्थत्वात्। न चाब्रुवता साक्षिणा स्वेन दत्तमधमर्णतो ग्राह्यम्। स्वापराधेन दत्तत्वात्। स्मृच.९२

(५) बध्यते राज्ञे देयत्वेन व्यवस्थाप्यते इति बन्धो दशांशरूपो जेतृदेयो दशबन्धस्तत्सहितमृणम्। +वीमि.

**न ददाति हि यः साक्ष्यं जानन्नपि नराधमः।**
***स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि॥***

(१) जानन्नपि इति पदं नियोगस्याविवक्षां दर्शयति। तथा च स्वयम्भूः—'यत्रानिबद्धो वीक्षेत श‍ृणुयाद्वापि कश्चन। पृष्टस्तत्रापि तद् ब्रूयात् यथादृष्टं यथाश्रुतम्' इति। यतश्चानभिधाने प्रत्यवायः, ततो जानता तत्कालनियुक्तेनापि वक्तव्यमित्यर्थः। विश्व.२।७६

(२) यस्तु जानन्नपि साक्ष्यमेव नाङ्गीकरोति दौरात्म्यात् तं प्रत्याह — न ददातीति। यः पुनर्नराधमो विप्रतिपन्नमर्थं विशेषतो जानन्नपि साक्ष्यं न ददाति नाङ्गीकरोति, स कूटसाक्षिणां तुल्यः पापैः कृत्वा दण्डेन च। कूटसाक्षिणां दण्डं च वक्ष्यति। मिता.

(३) ऋणादिव्यतिरिक्तविषये पुनरन्यथा दण्डमाह— नेति। सत्यासत्यतां व्यवहारे जानन्नपि यो नराधमोऽतिक्रान्तविधिनिषेधः साक्ष्यं विवादनिवर्तकं सत्यवचनं न ददाति न प्रयुङ्क्ते। सत्यवचनप्रयोगः स्वस्य परस्य चोपकारक इति दानतुल्यस्तस्माद्ददातिना व्यपदिश्यते। स मृषावादिसाक्षिणां पापैर्ब्रह्महत्यासाम्याद्युपलक्षितैर्वक्ष्यमाणेन च दण्डेन तुल्यो वेदितव्यः। अप.

(४) चकारेण लोकनिन्द्यत्वसमुच्चयः। एवकारेण पूर्वश्लोकोक्तेतरदण्डसमुच्चयं व्यवच्छिनत्ति। तेन दशबन्धकमृणं दाप्यः। बहुधनत्वे तु वक्ष्यमाण एव तस्य दण्ड इति। दण्डान्तरं तु विषयान्तरे व्यवस्थापयिष्यते। +वीमि.

साक्षिद्वैधे बहुत्वगुणाधिक्यादि निर्णायकम्

**द्वैधे बहूनां वचनं समेषु गुणिनां तथा।**
**गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तमाः×॥**

* विता. मितागतम्। + शेषं मितागतम्।

विता. १७७दश (दृश); प्रका.६० विश्ववत्; समु.३८ विश्ववत्.

(१) यास्मृ.२।७७; अपु.२५५।६-७; विश्व.२।७६ ददाति (ब्रवीति); मिता.; व्यमा.३३२; अप.; स्मृच.९१; पमा. ११४ कात्यायनः; नृप्र.१०; व्यत.२१५; सवि.१४८; चन्द्र.१४२ (जानन्नपि हि यः साक्ष्यं न ददाति नराधमः) पा...ण्डेन (पापं दण्डं प्राप्नोति); वीमि.; व्यप्र.१२९ तिहि (तीह); व्यउ.५०; विता.१७८; राकौ.४०२; सेतु. १२२; प्रका.६०; समु.३७; विव्य.१४ क्षिणां (क्षिणः).

+ शेषं मितागतम्।

× अत्रत्यं व्यमाव्याख्यानं 'साक्षिणां लिखितानान्तु' इत्यादिकात्यायनश्लोके द्रष्टव्यम्। व्यचि. व्यमागतम्।

(१) यास्मृ.२।७८; अपु.२५५।१०-११मा: (रा:); शुनी. ४।६९० तथा (वचः) उत्तरार्धे (तत्राधिकगुणानां च गृह्णीयाद्वचनं सदा); विश्व.२।८० द्वैधे...वचनं (साक्षिद्वैधे प्रभूतानां) ये ...त्तमाः (यद् गुणवत्तरम्); मिता.; व्यमा.३२५ समे (साम्ये) तु (च) त्तमाः (त्तराः); अप.; व्यक.६० त्तमाः (त्तराः); स्मृच. ८२,९१ व्यकवत्; व्यचि.४० व्यकवत्; स्मृचि.४७ मनुः; नृप्र.१०; व्यत. २१५ (=) व्यकवत्; व्यसौ.५७ व्यकवत्; वीमि. व्यकवत्; व्यप्र.११४ तथा (वचः) (गुणिद्वैधं तु यत्र स्यात् ग्राह्या ये गुणवत्तमाः); व्यउ.५०; व्यम.१९; विता. १२३ व्यकवत्: १७६; सेतु.१२३ व्यकवत्; प्रका.५३, ६० व्यकवत्; समु.३७.

(१) साक्षिविप्रतिपत्तौ कथं निर्णयः? इत्यत आह— द्वैध इति । साक्षिणां द्वैधे विप्रतिपत्तौ बहूनां वचनं ग्राह्यम् । समेषु समसंख्येषु द्वैधे ये गुणिनः तेषां वचनं प्रमाणम् । यदा पुनर्गुणिनां विप्रतिपत्तिस्तदा ये गुणवत्तमाः श्रुताध्ययनतदर्थानुष्ठानधनपुत्रादिगुणसंपन्नास्तेषां वचनं ग्राह्यम् । यत्र तु गुणिनः कतिपये, इतरे च बहवस्तत्रापि गुणिनामेव वचनं ग्राह्यम् । 'उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित्' इति गुणातिशयस्य मुख्यत्वात् । यत्तु भेदादसाक्षिण इत्युक्तं, तत्सर्वसाम्येनागृह्यमाणविशेषविषयम् । मिता.

(२) साक्षिणामेकतरवादिनिगादितानामुभयवादिनिगादितानां वा द्वैधे तु परस्परविरुद्धार्थाभिधायित्वे बहूनां विरुद्धाभिधायिसाक्ष्यपेक्षयाऽधिकानां साक्षिणां वचनं ग्राह्यम् । यत्र गुणिनः समसंख्याश्च उभयत्र कोटौ साक्षिणः तत्र विरुद्धाभिधायिसाक्ष्यपेक्षया ये गुणवत्तरास्तेषां वचनं ग्राह्यम् । तुशब्देन ग्राह्यविपरीतवचनस्य ग्राह्यत्वं व्यवच्छिद्यते । यत्र वादिनोः साक्षिद्वैधे सर्वथा साम्यं, तत्र 'साक्षिषूभयतः सत्सु' इत्यादिना प्राग्व्यवस्था कृता । स्वसाक्षिणामेव परस्परद्वैधे सर्वथा च साम्ये मानान्तरमनुसरणीयमिति मिश्राः । वीमि.

प्रतिज्ञाद्यनुगुणाननुगुणसाक्ष्युक्त्यधीनौ जयपराजयौ

**यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ।**
**अन्यथावादिनो यस्य ध्रुवस्तस्य पराजयः* ॥**

(१) एवं च परीक्षितवचनाः— 'यस्योचुः साक्षिणः सत्यामि'त्यादि । प्रतिज्ञामित्यविशेषवचनात् कृत्स्नप्रतिज्ञातार्थसत्यत्व एव जयो विज्ञेयः । अन्यथा तु पराजय एव स्यात् । तथा च नारदः— 'देशकालवयोद्रव्यप्रमाणाकृतिजातिषु । यत्र विप्रतिपत्तिः स्यात् साक्ष्यं तदपि चान्यथा' इति ॥ बह्वर्थप्रतिज्ञायां च— 'न्यूनमभ्यधिकं चार्थं प्रब्रूयुर्यत्र साक्षिणः । तदप्यनुक्तं विज्ञेयमेष साक्ष्यविधिः स्मृतः' इति ॥ अतः कृत्स्नप्रतिज्ञातार्थसत्यत्व एव ध्रुवो जयः । न्यायमूलत्वाच्च व्यवहारस्मृतेः । विश्व.२।८१

(२) साक्षिभिश्च कथमुक्ते जयः कथं वा पराजय इत्यत आह— यस्येति । यस्य वादिनः प्रतिज्ञां द्रव्यजातिसंख्यादिविशिष्टां साक्षिणः सत्यां वदन्ति सत्यमेवं जानीमो वयमिति स जयी भवति । यस्य पुनर्वादिनः प्रतिज्ञामन्यथा वैपरीत्येन मिथ्यैतदिति वदन्ति तस्य पराजयो ध्रुवो निश्चितः । मिता.

(३) साध्यार्थनिर्देशः प्रतिज्ञा । तत्र प्रथमवादिनः सा तावद् भवति । प्रत्यवस्कन्दप्राङ्न्यायोत्तरयोरपि साध्यविषयत्वात्प्रतिज्ञाशब्देन परिग्रहः । तेन यस्य वादिनः प्रतिज्ञावादिनो वा प्रतिज्ञां साक्षिणः सत्यामाहुः, स जयी भवति । यस्य तु मिथ्याभूतामाहुः, स ध्रुवं पराजयी; न पुनरर्थापत्तिगम्यः । एकस्य तु जयित्वे द्वितीयस्य पराजयो न साक्षिवचनात् साक्षाद्गम्यते किं त्वर्थात् । *अप.

(४) 'यस्ये'ति स्मृतेर्न्यायमूलकतया साक्षिपदस्योपलक्षणत्वे केनापि प्रमाणेन यत्प्रतिज्ञातोऽर्थः प्रमितः स जयीति । व्यचि.६०

(५) एतावता संदेहे तूष्णींभावे वा न जानामीति भाषणे वा किञ्चिदभिधाने था यावत्यर्थे संशयः तत्र क्रियान्तरेण निर्णय इत्यायाति, प्रकृताऽविरोध्यधिकाभिधाने जय एव । प्रकृतविरोध्यधिकाभिधाने भङ्ग एवेति । रत्नाकरकृतस्त्वनभिधानपक्षे क्रियान्तरमनुसरणीयमिति केचित् । तन्न । व्यवहारविरोधादित्याहुः । एवं च व्यवहारविरोधः, पुरुषशक्तिनिरूपके व्यवहारे प्रमाणत्वेन वादिना परिगृहीतेन साक्षिणा साध्यसिद्धौ प्रमाणान्तरपरिग्रहणस्याप्रयोजकत्वात् । तत्प्रमाणकप्रतिज्ञातार्थसिद्धेरेव जयित्वप्रयोजकत्वात् । प्रमेयनिरूपणार्थे तु

---

*व्यमा. व्याख्यानं अस्मिन्नेव विष्णुवचने(पृ.२४६)द्रष्टव्यम् ।

(१) **यास्मृ.**२।७९; **अपु.**२५५।११-१२; **विश्व.**२।८१ स्योचुः (स्याहुः); **मिता.**; **व्यमा.**३३२ ध्रुवः (ध्रुवं) विष्णुयाज्ञवल्क्यौ; **अप.**; **व्यक.**६० विष्णुयाज्ञवल्क्यौ; **स्मृच.**९१; **सुबो.**२।८० (=) पू.; **स्मृसा.**११८ ध्रुवः (ध्रुवं) नारदः; **व्यचि.**६० पू.; **नृप्र.**१०; **व्यत.**२१५ यस्यो ... तिज्ञां (सत्यां प्रतिज्ञां यस्योचुः साक्षिणः): २२९ नारदः; **सवि.**१४५ स जयी (विजयी); **चन्द्र.**१५१ व्यमावत्; **व्यसौ.**५७; **वीमि.** पूर्वार्धं व्यतवत्, ध्रुवः (ध्रुवं); **व्यप्र.**१३० व्यमावत्; **व्यउ.**५० व्यमावत्; **विता.**१७६ सत्यां (सत्यं) दिनो (दितां); **राकौ.**४०३; **सेतु.**११५ नारदः; **प्रका.**५९; **समु.**३७.

* स्मृच., सवि. अपगतम् ।

प्रमेयसिद्धेः केनापि प्रमाणेनोद्देश्यत्वात् तस्याप्याग‍न्तुकाप्तकथनेनेव दिव्येनापि निर्वाहात् । चन्द्र.१५२

(६) केचित्तु यस्य वादिनः साक्षिणो यथा सत्यत्वाऽनभिधायिन इत्यर्थमाहुः तदयुक्तम् । धर्मव्यवहारे छलस्य निरस्यतयाऽनभिधानमात्रेण पराजयासंभवादिति दिक् । *वीमि.

अनुगुणाननुगुणसाक्षिणां कूटसाक्षिणः कथं ज्ञेयाः

**उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तमाः ।**
**द्विगुणा वाऽन्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः ॥**

(१) 'अन्यथावादिनो यस्य ध्रुवस्तस्य पराजयः' इत्यस्यापवादमाह—उक्तेऽपीति । पूर्वोक्तलक्षणैः साक्षिभिः साक्ष्ये स्वाभिप्राये प्रतिज्ञातार्थवैपरीत्येनाभिहिते यद्यन्ये पूर्वेभ्यो गुणवत्तमाः द्विगुणा वा अन्यथा प्रतिज्ञातार्थानुगुण्येन साक्ष्यं ब्रूयुस्तदा पूर्वे साक्षिणः कूटा मिथ्यावादिनो भवेयुः ।

नन्वेतदनुपपन्नम् । अर्थिप्रत्यर्थिसभ्यसभापतिभिः परीक्षितैः प्रमाणभूतैः साक्षिभिर्निगदिते प्रमाणान्तरान्वेषणेऽनवस्थादोषप्रसङ्गात् । 'निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत् । लिखितं साक्षिणो वाऽपि पूर्वमावेदितं न चेत् ॥ यथा पक्केषु धान्येषु निष्फलाः प्रावृषो गुणाः । निर्णिक्तव्यवहाराणां प्रमाणमफलं तथा ॥ (नास्मृ.४।६३) इति नारदवचनाच्च । उच्यते, यदाऽर्थी प्रतिज्ञातार्थस्यान्तरात्मसाक्षित्वेनानाविष्कृतदोषाणामपि साक्षिणां वचनमर्थविसंवादित्वेनाप्रमाणं मन्यमानः साक्षिष्वपि दोषं कल्पयति, तदा प्रमाणान्तरान्वेषणं केन वार्यते ? उक्तं च, 'यस्य च दुष्टं करणं, यत्र च मिथ्येति प्रत्ययः, स एवासमीचीन' इति । यथा चक्षुरादिकरणदोषाऽनध्यवसायेऽप्यर्थविसंवादात्तज्जनितस्य ज्ञानस्य प्रामाण्येन करणदोषकल्पना; तथेहापि साक्षिपरीक्षातिरेकेण वाक्यपरीक्षोपदेशाच्च 'साक्षिभिर्भाषितं वाक्यं सह सभ्यैः परीक्षयेत्' इति कात्यायनेनाप्युक्तम् । 'यदा शुद्धा क्रिया न्यायात्तदा तद्वाक्यशोधनम् । शुद्धाच्च वाक्याद्यः शुद्धः स शुद्धोऽर्थ इति स्थितिः' इति ॥

क्रिया साक्षिलक्षणा 'नार्थसंबन्धिनो नाता' इति न्यायाद्यदा शुद्धा तदा तद्वाक्यशोधनं साक्षिवाक्यशोधनं कर्तव्यम् । वाक्यशुद्धिश्च सत्यार्थप्रतिपादनेन । 'सत्येन शुद्ध्यते वाक्यमि'ति स्मरणात् । एवं शुद्धायाः क्रियाया शुद्धवाक्याच्च यः शुद्धोऽवगतोऽर्थः स शुद्धः तथाभूत इति स्थितिरीदृशी मर्यादा न्यायविदाम् । करणदोषबाधकप्रत्ययाभावे सति अवितथ एवार्थ इत्यर्थः ।

ननु स्वयमर्थिना प्रमाणीकृतान् साक्षिणोऽतिक्रम्य कथं क्रियान्तरं प्रमाणीक्रियते ? नैष दोषः; यतः, 'क्रियां बलवतीं मुक्त्वा दुर्बलां योऽवलम्बते । स जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात्क्रियाम्' ॥ इति कात्यायनेन जयावधारणोत्तरकालं क्रियान्तरपरिग्रहनिषेधाज्जयावधारणात् प्राक् क्रियान्तरपरिग्रहो दर्शितः । नारदेनापि 'निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत्' इति वदता जयावधारणोत्तरकालमेव प्रमाणान्तरं निषिद्धं न प्रागपि । तस्मादुक्तेऽपि साक्षिभिः साक्ष्ये अपरितुष्यता क्रियान्तरमङ्गीकर्तव्यमिति स्थितम् ।

एवं स्थिते यद्यभिहितवचनेभ्यः साक्षिभ्यो गुणवत्तमाः द्विगुणा वा पूर्वनिर्दिष्टा असंनिहिताः साक्षिणः सन्ति तदा त एव प्रमाणीकर्तव्याः । स्वभावेनैव यद् ब्रूयुस्तद् ग्राह्यं व्यावहारिकम्' इत्यस्य सर्वव्यवहारशेषत्वात् । 'निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत् । लिखितं साक्षिणो वाऽपि पूर्वमावेदितं न चेत्' ॥ इति नारदवचनाच्च । पूर्वनिर्दिष्टानामसंभवे त्वनिर्दिष्टा अपि तथाविधा एव साक्षिणो ग्राह्या न दिव्यम् । 'संभवे साक्षिणां प्राज्ञो वर्जयेद्दैविकीं क्रियाम्' इति स्मरणात् । तेषामसंभवे दिव्यं प्रमाणं कर्तव्यम् । अतःपरमपरितुष्यताऽप्यर्थिना न प्रमाणान्तरमन्वेषणीयं मनुवचनादिति परिसमापनीयो व्यवहारः ।

यत्र तु प्रत्यर्थिनः स्वप्रत्ययविसंवादित्वेन साक्षिवचन-

* स्वपक्षो मितावत् ।

(१) **यास्मृ.**२।८०; **अपु.**२५५।१२-१३ माः (राः); **विश्व.**२।८२ त्तमाः (त्तराः); **मिता.**; **व्यमा.**३३५ घन्ये (चेके); **अप.**; **व्यक.**६० ऽपि (तु) त्तमाः (त्तराः); **स्मृच.**९४ विश्ववत्; **स्मृसा.**१२१ विश्ववत्; **व्यचि.**६१ विश्ववत्; **नृप्र.**११; **व्यत.**२२० विश्ववत्; **चन्द्र.**१२६ (=) विश्ववत्; **व्यसौ.**५७ यद्यन्ये (यदन्ये); **वीमि.**विश्ववत्; **व्यप्र.**१३०; **व्यउ.**५०; **व्यम.**१९; **विता.**१८१; **प्रका.**५९:६१ विश्ववत्; **समु.**३८ विश्ववत्.

स्याप्रामाण्यं मन्यमानस्य साक्षिषु दोषारोपणेनापरितोषस्तत्र प्रत्यर्थिनः क्रियोपन्यासावसराभावात् सप्ताहावधिकदैविकराजिकव्यसनोद्भवेन साक्षिपरीक्षणं कर्तव्यम् । तत्र च दोषावधारणे विवादास्पदीभूतमृणं दाप्याः । सारानुसारेण दण्डनीयाश्च । अथ दोषाऽनवधारणं तदा प्रत्यर्थिना तावता संतोष्टव्यम् । यथाह मनुः— 'यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः । रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः' इति ॥ एतच्च 'यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत्' इत्यस्यापरितुष्यत्प्रत्यर्थिविषये अपवादो द्रष्टव्यः ।

केचिद् 'उक्तेऽपि साक्षिभिः साक्ष्ये' इत्येतद्वचनमर्थिना निर्दिष्टेषु साक्षिष्वर्थ्यनुकूलमभिहितवत्सु यदि प्रत्यर्थी गुणवत्तमान् द्विगुणान् वाऽन्यान् साक्षिणः पूर्वोक्तविपरीतं संवादयति तदा पूर्ववादिनः साक्षिणः कूटा इति व्याचक्षते । तदसत् । प्रत्यर्थिनः क्रियानुपपत्तेः । तथा हि, अर्थी नाम साध्यस्यार्थस्य निर्देष्टा, तत्प्रतिपक्षस्तदभाववादी प्रत्यर्थी; तत्राभावस्य भावसिद्धिसापेक्षसिद्धित्वाद्भावस्य चाभावनिरपेक्षसिद्धित्वाद्भावस्यैव साध्यत्वं युक्तम् । अभावस्य स्वरूपेण साक्ष्यादिप्रमेयत्वाभावात् । अतश्चार्थिन एव क्रिया युक्ता । अपि चोत्तरानुसारेण सर्वत्रैव क्रिया नियता स्मर्यते । 'प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम् । मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत्' इति ॥ न चैकस्मिन् व्यवहारे द्वयोः क्रिया । 'न चैकस्मिन् विवादे तु क्रिया स्याद्वादिनोर्द्वयोः' । इति स्मरणात् । तस्मात् प्रतिवादिनः साक्षिणो गुणवत्तमा द्विगुणा वाऽन्यथा ब्रूयुरित्यनुपपन्नम् । अथ मतम् — द्वावपि भावप्रतिज्ञावादिनौ मदीयमिदं दायादप्राप्तं मदीयमिदं दायादप्राप्तमिति प्रतिज्ञावादिनोः पूर्वापरकालविभागाऽनाकलितमेव वदतस्तत्र द्वयोः साक्षिषु सत्सु कस्य साक्षिणो ग्राह्या इत्याकाङ्क्षायां 'द्वयोर्विवदतोरर्थे द्वयोः सत्सु च साक्षिषु । पूर्वपक्षो भवेद्यस्य भवेयुः तस्य साक्षिणः'॥ इति वचनेन यः पूर्वं निवेदयति तस्य साक्षिणो ग्राह्या इति स्थिते तस्यापवादमाह—'उक्तेऽपि साक्षिभिः साक्ष्ये' इति । अतश्च पूर्वोत्तरयोर्वादिनोः समसंख्येषु समगुणेषु साक्षिषु सत्सु पूर्ववादिन एव साक्षिणः प्रष्टव्याः । यदा तु उत्तरवादिनः साक्षिणो गुणवत्तमा द्विगुणा वा तदा प्रतिवादिनः साक्षिणः प्रष्टव्याः । एवं च नाभावस्य साध्यता, उभयोरपि भाववादित्वाच्चतुर्विधोत्तरविलक्षणत्वाच्च प्रकृतोदाहरणे न क्रियाव्यवस्था । एकस्मिन् व्यवहारे यथैकस्यार्थिनः क्रियाद्वयं परमते, तथा वादिप्रतिवादिनोः क्रियाद्वयेऽप्यविरोध इति तदप्याचार्यो नानुमन्यते । 'उक्तेऽपि साक्षिभिः साक्ष्ये' इत्यतः शब्दादर्थात्प्रकरणाद्वाऽर्थस्यानवगमादित्यलं प्रसङ्गेन । ×मिता.

(२) यदा तु साक्षिप्रश्नात् जयपराजयावधारणे वृत्ते पराजितो वादी पूर्वेभ्योऽधिकगुणैः समसंख्यैरेव समगुणैः पूर्वद्विगुणसंख्यैरन्यथा ज्ञापयति तदा पूर्वनिर्णये त्वनिर्णयो भवति । पूर्वसाक्षिणां कूटत्वावधारणात् । तदाह याज्ञवल्क्यः— उक्तेऽपीति । तथा कात्यायनः— 'यत्र वै भावितं कार्यं साक्षिभिः पूर्ववादिनाम् । प्रतिवादी तदा तत्र भावयेत् कार्यमन्यथा ॥ अनुक्तास्तु कुलीनैर्वा कूटाः स्युः पूर्वसाक्षिणः' ॥ नन्वेतदसम्बद्धं, नारदवचनात् यथा, 'निर्णीते व्यवहारे तु प्रमाणमफलं भवेत् । लिखितं साक्षिणो वाऽपि पूर्वमावेदितं न चेत् ॥ यथा पक्केषु धान्येषु निष्फलाः प्रावृषो गुणाः । निवृत्तव्यवहाराणां प्रमाणमफलं परम्' ॥ ततो निर्णीते व्यवहारे कथं साक्ष्यन्तरग्रहणं कथं च तत्प्रश्ने पूर्वेषां कूटत्वम् ? उच्यते, सति लिखिते बलवत्सु साक्षिषु तान् विहाय स्वयमेव दुर्बलसाक्ष्युपन्यासेन पराजितस्य बलवत्तरप्रमाणोपन्यासो न न्याय्यो विफलोऽसाविति निर्णीतवचनस्यार्थः । तदेवाह कात्यायनोऽपि — 'क्रियां बलवतीमुक्त्वा दुर्बलां योऽवलम्बते । स जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात्क्रियाम्' ॥ तस्य स्वबलेनैव पराजितत्वात् । यत्र तु उपन्यस्तमेव बलवत् प्रमाणं परं च साक्षिरूपं दूरदेशस्थत्वेन च संप्रति तदधीननिरूपणासामर्थ्येन दुर्बलसाक्षिभिर्निर्णयो जातः तदनन्तरं च देयत्वेन बलवत्साक्षिसमागमे तैरेव निर्णयः कार्यः बलवत्प्रमाणस्य तेन पूर्वमुपन्यस्तत्वात्, न तेन बलवती मुक्ता तेन तत्रैव कूटत्वमित्यविरोधः । अत एव नारदः — 'साक्षिसभ्यावसन्नानां दूषणे दर्शनं पुनः । स्वचर्यावसितानां च नोक्तः पौनर्भवो विधिः' ॥ स्वचर्यावसितस्य

× व्यचि. भावार्थो मितावत् ।

स्ववचनैः पराजितस्य, पौनर्भवो विधिः पुनर्न्यायकरणं नास्तीत्यर्थः। उपन्यस्तस्य तु बलवत्प्रमाणस्यासंनिधानेन दुर्बलप्रमाणग्रहणात् पराजितसाक्षिदोषसंबद्धत्वात् अस्ति प्रमाणावसरः। एवं च यत्रापि द्वयोः साक्षिवचनान्निर्णयो जातः तत्रापि दैवात् बलवत्तरसाक्षिसमागमात् तैरेव निर्णयः कार्यः। पूर्वनिर्णयहेतवः साक्षिणः कूटा भवन्ति। अत एव वादिना भाविते यदि प्रतिवादी हि प्रतिपादयतीत्युक्तं कात्यायनेन।

व्यमा.३३५-३३६

(३) साक्षिवचनप्रामाण्यभेदहेतुमाह—उक्तेऽपीति। वादिना प्रतिवादिना वा निर्दिष्टैः साक्षिभिरुक्तेऽपि वाक्ये प्रतियोगनिर्दिष्टाः पूर्वसाक्षिभ्यो बलवत्तमा द्वैगुण्येन वा भूयांस उक्तमेवार्थमन्यथा ब्रूयुस्तदा पूर्वसाक्षिणः कूटा मिथ्यावादिनः स्युः। तथा च कात्यायनः—'यत्र वै भावितं कार्यं साक्षिभिर्वादिनो भवेत्। प्रतिवादी तदा तत्र भावयेत्कार्यमन्यथा॥ बहुभिस्तु कुलीनैर्वा कूटाः स्युः पूर्वसाक्षिणः'॥ कुलीनग्रहणं गुणातिशयोपलक्षणार्थम्। ननु चैकस्मिन् व्यवहारे वादिप्रतिवादिनोः कथं साक्षिसंबन्धः? उक्तं हि—'न चैकस्मिन् विवादे तु क्रिया स्याद्वादिनोर्द्वयोः। न चार्थसिद्धिरुभयोर्न चैकत्र क्रियाद्वयम्' इति॥ सत्यम्, तुल्यवदुभयोर्नास्ति क्रियाप्राप्तिः। यदा यस्य क्रिया शास्त्रतः प्राप्ता तदा तस्य तां मिथ्याभूतां विदित्वा तस्या मिथ्यात्वख्यापनाय साक्ष्यन्तरमुपन्यसनीयमित्येतेनोच्यते। अत्र च स्मृत्यन्तरोक्तविशेषः। 'तीरितं चानुशिष्टं च यो मन्येत विधर्मतः। द्विगुणं दण्डमास्थाय तत्कार्यं पुनरुद्धरेत्' इति॥ अधर्म एव विधर्मस्तस्माद् विधर्मतः। एतत्तीरितं लिखितम्। अनुशिष्टं साक्षिवचनं च यो मन्येत स द्विगुणं दण्डमुद्धृत्य तत्कार्यं तं व्यवहारं पुनः साक्ष्यन्तरैरुद्धरेदित्यर्थः। यत्तु व्यासेनोक्तम्—'अन्यैस्तु साक्षिभिः साध्ये दूषणे पूर्वसाक्षिणाम्। अनवस्था भवेद्दोषस्तेषामप्यन्यसंभवात्'॥ इति, तत्साक्षिदूषणमेवान्यैः साक्षिभिर्न कार्यमित्येवमर्थम्। अनवस्थाप्रसङ्गश्च साक्षिणां साम्ये सति भवति, न पुनः संख्यादिवैषम्ये। यत्तु नारदेनोक्तम्—'निर्णीते व्यवहारे तु प्रमाणमफलं परम्। लिखितं साक्षिणो वाऽपि न चेत्पूर्वं निवेदितम्' इति॥ तद्वादिनः प्रतिवादिनो वा जयपराजयावधारणरूपव्यवहारनिर्णेजने सति पूर्वोपन्यस्तात्प्रमाणात् प्रमाणान्तरस्य पूर्वमनुपन्यस्तस्य प्रतिपादनमफलमित्याचष्टे, न पुनः प्रागपि निर्णेजनात्। *अप.

(४) यत्रार्थिना संनिहिता असंनिहिताश्च बहवः साक्षिणो निर्दिष्टास्तत्रासंनिहितानयने क्लेशमालोच्य यदा संनिहितैरेवालमित्यङ्गीकृत्य तद्वचनान्निर्णीतमर्थिनं पराजयते। तं च पराजयं कौटसाक्ष्यनिबन्धनं मन्यमानोऽर्थी पुनः पूर्वनिर्दिष्टानसंनिहितान् संनिहितेभ्यो गुणवत्तरान द्विगुणान्वा आनीय विजयी भवति तदा पूर्वसंनिहिताः साक्षिणः कूटाः स्युरिति। कात्यायनोऽपि—'यत्र वै भावितं कार्यं साक्षिभिर्वादिना भवेत्। प्रतिवादी यदा तत्र भावयेत्कार्यमन्यथा॥ बहुभिश्च कुलीनैर्वा पूर्वाः स्युः कूटसाक्षिणः' इति॥ अस्यार्थः—अर्थिना निर्दिष्टेषु साक्षिष्वर्थिपक्षानुकूलमभिहितवत्सु यदा प्रत्यर्थी संख्यया गुणैर्वाऽधिकान् साक्षिणः पूर्वोक्तविपरीतं वादयति तदाऽर्थिनः साक्षिणः कूटास्युरिति। ननु चैकस्मिन् व्यवहारे कथमर्थिप्रत्यर्थिनोः साक्षिसंभवः। 'न चैकस्मिन् विवादे तु क्रिया स्याद्वादिनोर्द्वयोः'। इति प्रतिषिद्धत्वात्। सत्यम्, अत एव 'यत्र वै भावितम्' इत्यादिवचनस्य पुनर्न्यायविषयत्वमाश्रीयते। तेन न कश्चिद् विरोधः। स्मृच.९४

(५) मिता.टीका—युक्त्यन्तरमाह—एकस्मिन् व्यवहारे यथेति। अयमर्थः—यथा परमते सिद्धान्तिनो मते साक्षिभिः साक्ष्येऽभिहिते सति प्रतिज्ञातार्थस्य अन्यथात्वेन स्वान्तःकरणप्रत्ययाभावात् प्रमाणान्तराङ्गीकरणं, एवमस्मन्मतेऽपि वादिप्रतिवादिनोः क्रियाद्वयमिति। एतदुक्तं भवति, सिद्धान्तिनो मते 'न चैकस्य क्रियाद्वयमिति' वचने जाग्रत्यपि यथा स्वान्तःकरणविसंवादित्वेन प्रमाणान्तराङ्गीकरणं, तथाऽस्मिन्मतेऽपि 'न चैकस्मिन् विवादे तु क्रिया स्याद्वादिनोर्द्वयोः' इत्येतस्मिन् सत्यपि उक्तरीत्यैकस्मिन् विवादे क्रियाद्वयमिति निराचष्टे। तदप्याचार्य इति। आचार्यो विश्वरूपाचार्यः। 'विश्वरूपविकटोक्तिविस्तृतिसंग्रहात्मकत्वात् अस्य ग्रन्थस्य। 'उक्तेऽपि साक्षिभिः साक्ष्ये' इत्यतः शब्दादिति। अतो-

* चन्द्र., विता. भावार्थः अपवत्।

ऽस्माच्छब्दात् वचनादित्यर्थः। ×सुबो.

(६) युगपदुपस्थितानां साक्षिणां द्वैधे बलाबलमुक्तमिदानीं क्रमेणोपस्थितौ तदाह— 'उक्तेऽपी'ति। वीमि.

(७) उक्तापरार्कनिराकरणाय उच्यते, अस्तु वचनात् कात्यायनीयादेवमपि। योगीश्वरवचस्तु 'ततोऽर्थी लेखयेत्' इति तद्वचस्यैव सर्वस्यार्थस्य संग्रहसंभवादगतार्थविज्ञानयोगिव्याख्ययैव संगच्छते। साधनपदेन साधनक्षममेवोच्यते। प्रतिवादिना तस्मिन्नाभासीकृते साधनत्वमेव तस्याप्यमतमिति तेनैव तदर्थलाभात्। अत एवाह स एव —'तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा' इति। +व्यप्र.१३४-१३५

(८) एवं चापरीक्षितसाक्षिवाक्यविषयमिदम्।

व्यउ.५०

कौटसाक्ष्यदण्डः। कूटकृद्ब्राह्मणदण्डः।

**पृथक् पृथक् दण्डनीयाः कूटकृत्साक्षिणस्तथा।**
**विवादाद् द्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः॥**

(१) एवं च कौटसाक्ष्ये साक्षिणां व्यवहारकर्त्रोर्वा कूटव्यवहारकर्तृत्वे स्पष्टीकृते निर्विकल्पं राज्ञा —पृथक् पृथक् दण्डनीया इत्यादि। कूटव्यवहारकर्ता कूटकृद् दण्ड्यः। एकैकशश्च पृथक् पृथक् साक्षी विवादद्विगुणं द्रव्यं दाप्यः। ब्राह्मणस्त्वददद् दण्डं समग्रधन एव च राष्ट्राद् विवास्यः। तथा च स्वायम्भुवम् —'न जातु ब्राह्मणं हन्यात् सर्वपापेष्ववस्थितम्। राष्ट्रात्त्वेनं बहिष्कुर्यात् समग्रधनमक्षतम्' इति॥ वधप्रसङ्गे दण्डाप्रदाने वा समग्रधन एव राष्ट्राद् बहिष्कार्यः। न तु शारीरो निग्रहोऽन्यथा वा ब्राह्मणस्य कार्य इत्यर्थः। विश्व.२।८३

(२) कूटसाक्षिणो दर्शितास्तेषां दण्डमाह — पृथगिति। यो धनदानादिना कूटान् साक्षिणः करोतीति स कूटकृत्। साक्षिणश्च ये तथा कूटास्ते विवादाद्विवादपराजयात्पराजये यो दण्डस्तत्र तत्रोक्तः तं दण्डं द्विगुणं पृथक् पृथक् एकैकशो दण्डनीयाः। ब्राह्मणस्तु विवास्यो राष्ट्रान्निर्वास्यो न दण्डनीयः। एतच्च लोभादिकारणविशेषापरिज्ञाने अनभ्यासे च द्रष्टव्यम्। लोभादिकारणविशेषपरिज्ञाने अभ्यासे च मनुनोक्तम्—लोभादित्यादि। ×मिता.

(३) उत्कोचादिना साक्षिणः कूटान् करोति यो वा कूटं लिखितं करोति स कूटकृत्। एतच्च दण्डविधानं कूटकृत्प्रभृतीनां स्वल्पापराधेऽनभ्यासे च वेदितव्यम्। +अप.

(४) कूटं साक्ष्यं कुर्वन्ति इति कूटकृतः। मिथ्यावादिन इति यावत्। ते राज्ञा पृथक् पृथक् दण्डनीयाः। विवादपराजयनिबन्धनदमाद् द्विगुणं दममित्यर्थः। विवास्यो ब्राह्मण इत्यविशेषेणोक्तेऽपि यत्र क्षत्रियादीनामल्पधनेन द्विगुणो दमः संपद्यते तत्र ब्राह्मणस्य नग्नीकरणरूपविवासनं दण्डः। यत्र त्वनल्पधनेन क्षत्रियादीनां तत्र गृहभङ्गरूपविवासनं ब्राह्मणस्य। यत्र पुनरतिबहुधने क्षत्रियादीनां तत्र स्वराष्ट्रबहिष्काररूपविवासनं ब्राह्मणस्येति मन्तव्यम्। दण्डतारतम्यस्य दोषतारतम्यानुविधायित्वात्। अत एव मनुनाऽनृतबीजनिबन्धनदोषतारतम्यानुसारेण दण्डवैचित्र्यमुक्तम् 'लोभान्मोहाद्भयादि'त्यादिभिः ( मस्मृ.८।११८-२२ )। स्मृच.९३

(५) एतत्तु लोभादिबहुकारणनिश्चये। व्यचि.५५

(६) कूटकृतः कपटेन व्यवहरन्तोऽसत्याभिधायिन इति यावत्। ईदृशा ये साक्षिणस्ते पृथक् पृथक् प्रत्येकं विवादपदाद्द्विगुणं दण्डं दण्डनीया राज्ञे दाप्याः। क्वचित्तु कूटसाक्ष्यकृत इति पाठः। इदं च लोभादिबहुकारणनिश्चयेन। तथा शब्देन वृथा पराजिताय विवादपदं धनमनिगददण्डरूपं प्रागुक्तं दाप्या इति समुचीयते। *वीमि.

(७) यद्यपि कूटकृतश्च ते साक्षिणश्चेति कूटकृतश्च साक्षिणश्चेति वा व्याख्यानं संभवति तथापि तथेत्यस्या-

× बाल.२।८० सुबोवत्। + सर्वं व्याख्यानं मितावत्। अपरार्कपरामर्शश्चाधिकः।

* व्यप्रव्याख्यानं 'लोभात्सहस्रं' (८।१२०) इति मनुश्लोके (पृ.२८०) द्रष्टव्यम्।

(१) यास्मृ.२।८१; अपु.२५५।१३-१४; विश्व.२।८३ दाद्द्वि (दद्वि) दण्डं (द्रव्यं) स्मृतः(भवेत्); मिता.; अप.; व्यक.५८; स्मृच.९२; व्यचि.५५ कृत्साक्षिणः (साक्ष्यकृतः); दवि.३४४ स्मृतः (तथा); सवि.१४८,४९१ दाद्द्वि (दद्वि); चन्द्र.१५०; व्यसौ.५५ सविवत्; वीमि.; बाल.२।२५; व्यप्र.१३५; विता.१८६-१८७; प्रका.६०; समु.३८.

× शेषं मिताव्याख्यानं 'कौटसाक्ष्यं तु' (८।१२३) इति मनुश्लोके (पृ.२८०) द्रष्टव्यम्। सवि. भावार्थो मितावत्।

+ शेषं 'लोभात्सहस्रं'(८।१२०) इति मनुश्लोके (पृ.२७९) द्रष्टव्यम्। * शेषं मितागतम्।

वैयर्थ्यायैकदेशान्वयाभावाय च भेदेन व्याचष्ट — य इति। आदिना सामादिपरिग्रहः। विवादादिति। हेतौ पञ्चमी। पराजये तस्य लक्षणा। गर्गदण्डनन्यायेन समुदाये दण्डविश्रान्तिवारणायाह—पृथगिति। बाल.

पूर्वाङ्गीकृतसाक्ष्यस्य तदपह्नवे दण्डः

**यः साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तत्तमोवृतः।**
**स दाप्योऽष्टगुणं दण्डं ब्राह्मणं तु विवासयेत्॥**

(१) उत्तरसाक्षी तु प्रवत्स्यता मुमूर्षुणा वा — यः साक्ष्यमित्यादि। अतोऽवश्यं वक्तव्यं साक्ष्यं सत्यं च।

विश्व.२।८४

(२) अपि च यस्तु साक्षित्वमङ्गीकृत्यान्यैः साक्षिभिः सह साक्ष्यं श्रावितः सन्निगदनकाले तमोवृतो रागाद्याक्रान्तचित्तस्तत्साक्ष्यमन्येभ्यः साक्षिभ्यो निह्नुते, नाहमत्र साक्षी भवामीति। स विवादपराजये यो दण्डस्तं दण्डमष्टगुणं दाप्यः। ब्राह्मणं पुनरष्टगुणद्रव्यदण्डदानासमर्थं विवासयेत्। विवासनं च नग्नीकरणगृहभङ्गदेशनिर्वासनलक्षणं विषयानुसारेण द्रष्टव्यम्। इतरेषां त्वष्टगुणद्रव्यदण्डासंभवे स्वजात्युचितकर्मकरणनिगडबन्धनकारागृहप्रवेशादि द्रष्टव्यम्। एतच्च पूर्वश्लोकेऽप्यनुसर्तव्यम्। यदा सर्वे साक्ष्यं निह्नुवते तदा सर्वे समानदोषाः। यदा तु साक्ष्यमुक्त्वा पुनरन्यथा वदन्ति तदाऽनुबन्धाद्यपेक्षया दण्ड्याः। ×मिता.

(३) यस्तमोवृतः तामसः सभ्यैर्यथाविधि साक्षिप्रश्नवाक्यं श्रावितः सन् वादकालेऽन्येभ्यः साक्षिभ्यः स्वकीयं साक्ष्यं साक्षित्वं निह्नुते—नाहमत्र साक्षी भवामीत्यपलपति, स साक्षिदण्डमष्टगुणं दाप्यः। स्वकीयसाक्षित्वापह्नवमन्यान्साक्षिणो ज्ञापयतीति अन्येभ्य इति चतुर्थ्या अर्थः। स्वयं तावत्साक्षित्वापह्नवं करोति, परांश्च कारयितुमिच्छतीत्यतिदुष्टत्वादष्टगुणं दण्डं दाप्यः। ब्राह्मणश्चेदेवंविधस्तं स्वदेशाद्विवासयेन्निर्वासयेन्न तु दण्डयेत्। श्रावित इति वचनादङ्गीकृतसाक्षिभावोऽसाविति गम्यते। अप.

(४) मिता.टीका—एतदिति। ब्राह्मणस्य द्रव्यदानासमर्थस्य विवासनं, क्षत्रियादीनां च द्रव्यदानासमर्थानां निगडबन्धनादिकं यदुक्तं तत् पृथक् पृथक् पूर्वोक्तप्रकारेण दण्ड्य इत्यर्थः। तदाऽनुबन्धापेक्षया इति। जातिद्रव्यगुणद्रव्यगुणाद्यपेक्षयेत्यर्थः। सुबो.

(५) श्रावितः श्रावितवान्। व्यचि.५५

(६) त्वमन्येभ्यः साक्ष्यं श्रावयेति वादिना प्रयुक्तो यः श्रावितः। एवम्भूतोऽपि सभायां निगदकाले साक्ष्यं निह्नुते यस्तस्याष्टगुणो दण्डः। *व्यत.२२०

(७) यस्तु साक्ष्यमन्येभ्यः श्रावितः श्रावितवान् अहमिममर्थं जानामीति कथितवान् पश्चात्तमोवृतो रागाद्याक्रान्तचित्तः साक्ष्यं निह्नुते निगदकाले यस्तपति स विवादपदादष्टगुणं द्रव्यं दाप्यः। तादृशापराधेऽपि ब्राह्मणं विवासयेदेव। तुशब्देनार्थदण्डव्यवच्छेदः। वीमि.

(८) यः साक्ष्यमङ्गीकृत्य अन्यैः साक्षिभिः सह साक्ष्यं श्रावितः सन् निगदसमये तमोगुणेनावृतो रागद्वेषाद्याक्रान्तचित्तस्तत्साक्ष्यमन्येभ्यो निह्नुते नाहमत्र साक्ष्यं स्वीकरोमीति प्रकाशयति। यथा तेऽपि एतदनुरोधात्तन्न स्वीकुर्वते कूटतां वा कुर्वन्ति, स विवादपराजयनिमित्तकदण्डापेक्षयाऽष्टगुणदण्डं दाप्योऽपराधमहत्त्वात्। अन्येभ्य इति 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः' (व्यासू.१।४।३४) इत्यनेन संप्रदानसंज्ञायां चतुर्थी। तेन पूर्वोक्तार्थलाभः। ब्राह्मणं तु तथा कुर्वाणं विवासयेत्। विवासनं च व्याख्यातरीत्या देशनिर्वासननग्नीकरणगृहभङ्गान्यतमरूपमनुबन्धाद्यपेक्षया व्यस्तसमस्तविधया ज्ञेयम्। यत्तु मिताक्षराकृता अष्टगुणदण्डदानासमर्थमिति व्याख्यातम्। तत्प्रधानक्रियानिरूपितवैलक्षण्यप्रतिपादकतुशब्दविरोधादुपेक्ष्यम्। न चैवमल्पविषयेऽपि विवासनमदण्डता वा प्रसज्जेतेति वाच्यम्। वचनोपात्तविषयस्यैव दण्डस्य युक्तत्वात्। अत एवाह नारदः—'श्रावयित्वा ततोऽन्येभ्यः साक्षित्वं यो विनिह्नुते। स विज्ञेयो भृशतरं कूटसाक्ष्यधिको हि सः' इति॥

× स्मृच. मितागतम्।

(१) **यास्मृ.**२।८२; **अपु.**२५५।१४-१५; **विश्व.**२।८४ ऽन्येभ्यो (ऽन्येन) दण्डं (द्रव्यं); **मिता.**; **अप.**; **व्यक.** ५८ क्ष्यं (क्ष्य) तो (ते) स दाऽप्योष्ट (तदाप्यष्ट); **स्मृच.**९२; **व्यचि.** ५५ क्ष्यं (क्षी) तत् (तु); **दवि.**३४६ क्ष्यं (क्ष्ये); **व्यत.**२२० तत्तमो (तमसा) णं तु (णश्च); **व्यसौ.**५५ क्ष्यं (क्ष्ये) तो (ते); **वीमि.**; **व्यप्र.**१३७; **व्यम.**१९; **विता.**१८८; **बाल.**२।२५; **सेतु.**१२३ (=) तत्तमो (तमसा) दण्डं (द्रव्यं); **प्रका.**६०; **समु.**३८ ते तत्त (वीत त).

* सेतु. व्यतवत्।

तथा चापरार्कोऽपि—'ब्राह्मणश्चेदेवंविधस्तं विवासयेन्नतु दण्डयेत्' इत्येवं व्याचख्यौ । क्षत्रियादीनां तु दण्डदानासामर्थ्ये स्वजात्युचितकर्मैकरणनिगडबन्धनकारागृहनिरोधनादि तावत् द्रव्यसमीकरणानुरूपं बोध्यम् । सर्वेषामपि निह्नवकारित्वे समानदोषत्वात्सर्वेऽपि प्रत्येकमष्टगुणं दण्ड्याः । व्यप्र.१३७

(९) मिता.टीका—ननु 'यः स' इति सामान्योक्त्या पादत्रयोक्तदण्डस्य सर्ववर्णविषयत्वं सकृदपराधेनाभ्यासे तद्गमकाभावात्, 'तमोवृत' इति हेतूक्त्या तत्रापि लोभादिसारया सामान्यपरिज्ञानविषयत्वलाभेऽपि न तद्विशेषपरिज्ञानविषयत्वं, गमकाभावात् । एवं साक्ष्यङ्गीकारादिपूर्वकनिह्नवदोषस्य पूर्वत आधिक्येन द्विगुणदण्डादष्टगुणदण्डोक्तावपि तद्वदत्राप्यन्यविषयत्वं न ब्राह्मणविषयत्वं तत्र विवासनस्यैव व्यवस्थापितत्वात्तुर्यपादेन। एवं सति अत्र तुर्यपादेन सामान्यप्राप्ताष्टगुणदण्डापवादेन विप्रस्य कथं विवासनविधिः ? न हि पूर्वदण्डोऽपि महाविषयक एवेति वक्तुं शक्यः तत्र विवासनस्यैव व्यवस्थापितत्वादत आह—ब्राह्मणमिति । त्वर्थमाह—पुनरिति । स्वल्पविषये बहुदण्डस्यायोग्यत्वात् । तत्र ब्राह्मणे अर्थदण्डस्यानुपदमेव व्यवस्थापितत्वादाह—अष्टगुणेति । अयं भावः—यद्यपि सामान्येनार्थदण्ड उपदिष्टो योगिना तथापि तद्दानसमर्थं प्रत्येवायमुपदेशो नासमर्थं प्रतीत्यवश्यं वक्तव्यमन्यथा मुनेर्भ्रान्तत्वापत्तिस्तथा च ब्राह्मणस्यापि तत्सामर्थ्ये तद्विषयेऽयमेव मुख्यः, तदसंभवेऽनुकल्पो विवासनम् । एतद्वैलक्षण्यसूचक एव तुः। सर्वथा तस्य शारीरदण्डाभावेन सेवादिनिषेधेन चानुकल्पान्तरस्यासंभवात्सर्वथा दण्डाकरणे राज्ञो दोषश्रवणात् प्रागुक्तविवासनमेव तस्यानुकल्प इति । एतेन 'प्रधानक्रियानिरूपितवैलक्षण्यसूचकतुशब्दविरोधात् 'अदष्टगुणे'त्यादि (मिता.) चिन्त्यमि'ति वीरमित्रोदयोक्तमपास्तम् । पुनः स्पष्टार्थमाह—विवेति । *बाल. साक्षिणां सत्यवचनापवादविषयः । तादृशानृतोक्तिप्रायश्चित्तम् ।

**[१]वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् ।**
**तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः ॥**

(१) 'यः साक्ष्यमि'त्यस्यापवादमाह—वर्णिनामिति। शूद्रेण तु दानादय इत्यभिप्रायः । चतुर्ष्वपि भवा ब्राह्मणादयो वर्णिनः । तेषां यत्र साक्षिणि सत्याभिधातरि वधः स्यात्, तत्र साक्षी अनृतं वक्तुमर्हति । सदोषमपि गुणभूम्नाऽनृतवचनमभ्युपगम्यते । तथा च गौतमः—'नानृतवचने दोषो जीवनं चेत्तदधीनम्' इत्युक्त्वाह 'न तु पापीयसो जीवनम्' इति । अदोषवचनं चाल्पदोषाभिप्रायं प्रायश्चित्तविधानसामर्थ्याद् द्रष्टव्यम् । एतच्च न्यायप्राप्तमेव मन्दबुद्धिप्रतिबोधनाय । प्रायश्चित्तविधानाच्चावश्यकर्तव्यताऽत्रोच्यते । अन्यत्रापि गुरुलघुत्वे समीक्ष्य पापस्याप्यनुष्ठानं प्रायश्चित्तं च तदपनुत्तये कार्यं यथा स्यात् । धर्मान्तरोपयोगित्वाच्चैतत् कामकृतमप्यकामकृतमेव द्रष्टव्यम् । विश्व.२।८५

(२) साक्षिणामवचनमसत्यवचनं च सर्वत्र प्रतिषिद्धम् । तदपवादार्थमाह—वर्णिनामिति ।

यत्र वर्णिनां शूद्रविट्क्षत्रविप्राणां सत्यवचनेन वधः संभाव्यते तत्र साक्ष्यनृतं वदेत् । सत्यं न वदेत् । अनेन च सत्यवचनप्रतिषेधेन साक्षिणः पूर्वप्रतिषिद्धमसत्यवचनमवचनं चाभ्यनुज्ञायते । यत्र शङ्काभियोगादौ सत्यवचने वर्णिनो वधोऽनृतवचने न कस्यापि वधस्तत्रानृतवचनमभ्यनुज्ञायते । यत्र तु सत्यवचनेऽर्थिप्रत्यर्थिनोरन्यतरस्य वधोऽसत्यवचने चान्यतरस्य वधः तत्र तूष्णीम्भावाभ्यनुज्ञा, राजा यद्यनुमन्यते । अथ राजा कथमप्यकथने न मुञ्चति तदा भेदादसाक्षित्वं कर्तव्यम् । तस्याप्यसंभवे सत्यमेव वदितव्यम् । असत्यवचने वर्णिवधदोषोऽसत्यवचनदोषश्च । सत्यवचने तु वर्णिवधदोषः । तत्र च यथाशास्त्रं प्रायश्चित्तं कर्तव्यम् ।

---

* शेषं सुबोधगतम् ।

(१) **यास्मृ.**२।८३; **अपु.**२५५।१५ पू.; **विश्व.**२।८५ हि (तु) निर्वाप्य (कर्तव्य); **मिता.**; **अप.**; **व्यक.**५९; **गौमि.**१३।२४; **स्मृच.**८९; **व्यचि.**५६; **नृप्र.**११ हि (च) पू., स्मरणम्; **व्यत.**२१५ वर्णि (वर्णा); **सवि.**१४५ तत्र साक्ष्य (साक्ष्ये तत्रा) तत्त्वावनाय इति टीकायाम् : १५९ तत्र ... वदेत् (वदेत् साक्ष्यं तथाऽनृतम्) पू.; **मच.**८।१०६; **व्यसौ.**५५; **वीमि.**; **व्यप्र.**१३८-१३९ हि (तु); **व्यउ.**५१-५२ हि (तु); **व्यम.**१९; **विता.**१९१ तत्पाव (तस्याव); **सेतु.**१२२-१२३ (=) व्यतवत्; **राकौ.**४०४ उत्त.; **प्रका.**५८; **समु.**३६; **भाच.**८।१०४ वर्णि (प्राणि).

तर्ह्यसत्यवचने तूष्णीम्भावे च शास्त्राभ्यनुज्ञया प्रत्यवायाभाव इत्यत आह—तत्पावनायेति। तत्पावनाय अनृतवचनावचननिमित्तप्रत्यवायपरिहाराय सारस्वतश्चरुर्द्विजैरेकैकशो निर्वाप्यः कर्तव्यः। सरस्वती देवता अस्येति सारस्वतः। अनवस्रावितान्तरूष्मपक्कौदने चरुशब्दः प्रसिद्धः। इहायमभिसंधिः—साक्षिणामनृतवचनमवचनं च यन्निषिद्धं तदिहाभ्यनुज्ञातम्। यत्तु नानृतं वदेत् 'अब्रुवन्विब्रुवन् वाऽपि नरो भवति किल्बिषी'ति च सामान्येनानृतवचनमवचनं च निषिद्धं तदतिक्रमनिमित्तमिदं प्रायश्चित्तम्। न च मन्तव्यं साक्षिणामनृतवचनावचनाभ्यनुज्ञानेऽपि साधारणानृतवचनावचनप्रतिषेधातिक्रमनिमित्तप्रत्यवायस्य तादवस्थ्यादभ्यनुज्ञावचनमनर्थकमिति। यतः, साक्षिणामसत्यवचनावचनप्रतिषेधातिक्रमयोर्भूयान् प्रत्यवायः असाधारणानृतवचनावचनयोरल्पीयानित्यर्थवदभ्यनुज्ञावचनम्।

यद्यपि भूयसः प्रत्यवायस्य निवृत्त्या आनुषङ्गिकस्याल्पीयसः प्रत्यवायस्य निवृत्तिरन्यत्र; तथापीहाभ्यनुज्ञावचनात् प्रायश्चित्तविधानाच्च भूयसो निवृत्त्याऽल्पीयानप्यानुषङ्गिकोऽपि प्रत्यवायो न निवर्तत इति गम्यते।

एतदेवान्यत्र प्रश्नेषु वर्णिवधाशङ्कायां पान्थादीनामनृतवचनावचनाभ्यनुज्ञानं वेदितव्यम्। न च तत्र प्रायश्चित्तमस्ति प्रतिषेधान्तराभावात्। निमित्तान्तरेण कालान्तरेऽर्थतत्त्वावगमेऽपि साक्षिणामन्येषां च दण्डाभावोऽस्मादेव वचनात् अवगम्यत इति। *मिता.

(३) ब्राह्मणस्य यद्यपि वधः प्रतिषिद्धः 'न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम्। राष्ट्रादेनं बहिः कुर्यात् समग्रधनमक्षतम्॥ न ब्राह्मणवधाद् भूयानधर्मो विद्यते क्वचित्। तस्मादस्य वधं राजा मनसाऽपि न चिन्तयेत्'॥ इत्यादिमन्वादिवाक्यैः, तथाऽपि वधतुल्यता अस्ति दण्डस्य, यथाह मनुः—'मौण्ड्यं प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते। इतरेषां तु वर्णानां दण्डः प्राणान्तिको भवेत्' इति॥ तेन पुरनिर्वासनादिरपि दण्डो वधसम एव। तदुक्तं स्मृत्यन्तरे—'ब्राह्मणस्य वधो मौण्ड्यं पुरान्निर्वासनं तथा। ललाटे चाङ्ककरणं प्रयाणं गर्दभेन च' इति॥ यद्वा—'गोरक्षकान्वाणिजकांस्तथा कारुकुशीलवान्। प्रेष्यान् वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत्'॥ इति मनुवचनान्महत्यपराधे विप्रविशेषस्यापि वधः प्राप्नोति। न च वाच्यं 'वर्णिनां हि वधः' इत्यत्र वर्णग्रहणं ब्राह्मणविषयमिति। यदाह मनुः—'शूद्रविट्क्षत्रविप्राणां यत्र चोक्तो भवेद्वधः। तत्र वक्तव्यमनृतं तद्धि सत्याद्विशिष्यते' इति॥ अथवाऽतिक्रान्तनिषेधेन यत्र ब्रह्मवधः क्रियते तत्रैतत्। ×अप.

(४) मिता.टीका—अनृतवचननिषेधो हि द्विप्रकारः। साधारणोऽसाधारणश्चेति। साधारणस्तु 'नानृतं वदेदब्रुवन् विब्रुवन् वे'त्यादिकः। असाधारणस्तु 'स तान् सर्वानवाप्नोति यः साक्ष्यमनृतं वदेत्'। इति, 'विब्रुवन् हि नरः साक्ष्यमि'त्यादिकश्च। एवं स्थिते योऽयमसाधारणो निषेधः साक्ष्यनृतवचनावचनयोस्तत्राभ्यनुज्ञावशादनृतवचने अवचने वा न प्रायश्चित्तमित्यभिप्रायेणाह—'साक्षिणामनृतवचनं चे'ति। ननु तर्हि 'तत्पावनाये' त्यनेन प्रायश्चित्तार्थं सारस्वतचरुः क्व विधीयते इत्याशङ्क्य साधारणनिषेधातिक्रमाभ्यनुज्ञानाभावात् तदतिक्रमदोषपरिहारायेदं प्रायश्चित्तमित्याह— 'यत्तु नानृतं वदेदि'ति। +सुबो.

(५) भगवत्पादमतं तु क्षामवतीष्टिवत् सारस्वतः। अयमर्थः—तत्पावनाय शुद्ध्यर्थं दोषिणां संरक्षणार्थम्। एतत्पर्यन्तमेकं वाक्यम्। यत्र वर्णिनां वधस्तत्र तत्पावनाय साक्ष्यमनृतं वदेत्। अतो नैमित्तिकक्रतुरिति सारस्वतश्चरुर्नैमित्तिक इति। अत्र नैमित्तिकत्वे तत्पावनाय इति पदं नान्वीयादिति अन्यथेति पदमध्याहृत्य व्याचष्टे टीकाकारः, अयमर्थः—सत्यमेव वदित्वा सारस्वतश्चरुर्नैमित्तिकः। न च सत्यवचनानन्तरं प्राणिव्यापादे जाते तदपनोदनाय सारस्वतश्चरुः प्रायश्चित्तमात्रमिति वाच्यम्। अनृतवचनस्य विहितत्वात्, विहिताननुष्ठान एव प्रायश्चित्तस्मरणात्। अत्र केचिदेतद्वचनमन्यथा पठित्वा व्याचक्षते—तत्त्वावनाय निर्वाप्यत

* व्यप्र. पूर्वार्धव्याख्यानं मितावत्। उत्तरार्धव्याख्यानं 'कूष्माण्डैर्वाऽपी'ति (८।१०६) मनुश्लोके (पृ.२७७) द्रष्टव्यम्। विस्तरस्तु विश्ववत्। विता. मितागतम्।

× वाक्यार्थः सरलः। अत्रोद्धृतग्रन्थस्य व्यप्रकृतं खण्डनं 'शूद्रविड्'ति (८।१०४) मनुश्लोके (पृ. २७५) द्रष्टव्यम्।

\+ बाल. सुबोवत्।

इति । तत्त्वावनाय सत्यसंरक्षणाय । अस्मिन्ननृतेऽपि सारस्वतश्चरुः नैमित्तिक एव । तत्त्वावनायेत्यस्यायमर्थः— तत्त्वस्य अवनं रक्षणम् । तादृशे समये सत्यमनृतवचनेनैव सेत्स्यतीत्यभिप्रायः । क्रियाग्रहणमात्रे चतुर्थी । सवि.१४६

(६) अत्र द्विजैरिति निर्देशाद् गुणमुख्यसाधारणम् । अन्यथा शूद्रो मिथ्या वदन्नेवंविषये न प्रत्यवेयात् । द्विजैरिति स्वरसात्तान् प्रत्येव नियमः शूद्रस्य तु दानादि । मच.८।१०६

(७) वर्णिनां ब्राह्मणक्षत्रियविशाम् । सारस्वतः सरस्वतीदेवताकश्चरुः प्रागुक्तो निर्वाप्य इत्यङ्गमुखेन होमनिर्देशः । तत्पावनायेति अकरणजन्यपापाभावायेत्यर्थः । अनृतवचनस्य यागीयहिंसावद्विहितत्वेन पापाजनकत्वात् । वीमि.

(८) यत्र सत्यवचने । संभाव्यत इत्यध्याहारः । अनृतवचनमवचनस्याप्युपलक्षणम् । वर्णिनो वर्णाः । ब्राह्मणादयश्चत्वार इति केचित् । ब्रह्मचर्यावन्तस्त्रय इत्यन्ये । इदं चोपलक्षणं मूर्धावसिक्तादीनामपि । व्यउ.५२

## नारदः

विवादे साक्षिभ्यो निर्णयः

**[१]संदिग्धेषु च कार्येषु द्वयोर्विवदमानयोः ।**
**दृष्टश्रुतानुभूतत्वात् साक्षिभ्यो व्यक्तिदर्शनम् ॥**

(१) यानि कानिचित् संदिग्धानि कार्याणि तेषु द्वयोर्वादिप्रतिवादिनोरपि विवदतोरिति अन्याऽन्यार्थबद्धाग्रहयोः विवादं कुर्वतोः साक्षिभ्यः सकाशात् कार्यव्यक्तिदर्शनं स्फुटीभवति । यतस्ते उदासीनाः । श्रुतार्थत्वादनुभूतार्थत्वाद्वा, यत्साक्षिकाले किमपि ब्रुवते, तस्माद् व्यक्तिदर्शनं कार्यनिर्णयो भवति इत्यर्थः । अभा.६४

(२) साक्षिभ्यो व्यक्तिर्निर्णयः तस्य दर्शनं बोधः, साक्षिभ्योऽन्यतरतत्त्वज्ञानम् । कुतः ? दृष्टश्रुतानुभूतत्वात् । दृष्टं चक्षुर्द्वारेण ज्ञातम् । श्रुतं श्रोत्रद्वारेण । अनुभूतं लिङ्गादिनिमित्तं स्वसंवेद्यज्ञानं अन्यथासंभवविलोप्त्रभिघातादिनैवमेव नान्यथेति परिच्छेदज्ञानम् । एतदुक्तं भवति — प्रत्यक्षानुमानागमैर्यस्मादर्थः परिच्छिन्नः, तस्मात् तेभ्यो व्यक्तिदर्शनमुपपद्यते, यस्मात् सर्वपरिच्छेदहेतवः प्रत्यक्षानुमानागमाः तैः परिच्छिन्नत्वादुपपन्नं तेषां प्रामाण्यमिति । नाभा.२।१२४

(३) दृष्टश्रुताभ्यामनुभूतत्वादित्यर्थः । यद्वा दृष्टत्वात् श्रुतत्वादनुभूतत्वाच्चेत्यर्थः । अनुभूतत्वादित्यनेन च गोवृषन्यायेन प्रमाणान्तरजन्योऽनुभवो गृह्यते । व्यक्तिदर्शनं विवेकज्ञानम् । व्यप्र.१०६

साक्षिनिरुक्तिः

**[१]समक्षदर्शनात्साक्षी विज्ञेयः श्रोत्रचक्षुषोः ।**
**श्रोत्रस्य यत्परो ब्रूते चक्षुषोर्दर्शनं स्वयम् ॥**

(१) प्रत्यक्षदर्शनात् साक्षीत्युच्यते । तत्र अक्षीणि यत्तेषां प्रतिपत्तिसानुभवं प्रयोजनं तत्प्रत्यक्षम् । तेषां च श्रोत्रस्य यच्छब्दश्रवणं तत्परतः अर्थसानुभवम् । यत्तु चक्षुःसानुभवं तत्स्वयमेवार्थदर्शनसानुभवमिति । अभा.६४

(२) यत्परो व्यवहारसमर्पकं वाक्यं ब्रूते तद्विषयं समक्षदर्शनम् । श्रोत्रस्य श्रोत्रसंबन्धीत्यर्थः । एवं चक्षुषः समक्षदर्शनं व्यवहाररूपशरीरव्यापारविषयम् । अप.२।६९

(३) साक्षिनिर्वचनम्— समक्षदर्शनात् सम्यगिन्द्रियेणोपलब्धत्वात् साक्षी विज्ञेयः । तथा च 'साक्षात् द्रष्टरि संज्ञायाम्' (व्यासू.५।२।९१) इत्युक्तम् । त्रयाणां साक्षाद् द्रष्टृत्वेऽप्युदासीनः साक्षीत्युच्यते रूढत्वाच्छब्दस्य । कस्येन्द्रियस्य समक्षदर्शनादिति न ज्ञायत इति तद् विशिनष्टि — 'श्रोत्रचक्षुषोरि'ति । पुनरपि किं श्रोत्रस्य, किं चक्षुषः ? इति विशेषयति — श्रोत्रस्य यत्परो ब्रूते आक्रोशवादादि, चक्षुषः कायकर्म शरीरे यदुपनिपतति तत् तयोः समक्षमिति । नाभा.२।१२५

---

(१)**नासं**.२।१२४ च (तु); **नास्मृ**.४।१४७ दृष्टश्रुतानुभूतवात् (श्रुतदृष्टानुभूतार्थात्); **अभा**.६४ नास्मृवत्; **व्यक**.४१ च(तु) क्ति (क्त); **पमा**.९३ क्ति (क्त) मनुः; **नृप्र**.९; **व्यसौ**.३९ नासंवत्; **दानि**.६; **व्यप्र**.१०६ नासंवत्; **व्यम**.१५ व्यकवत्; **बाल**.२।६८ व्यकवत्; **प्रका**.४९ पमावत्; **समु**.२७ पमावत्.

(१) **नासं**.२।१२५ षोर्दर्शनं स्वयम् (षः कायकर्म यत्); **नास्मृ**.४।१४८; **अभा**.६४; **अप**.२।६९ षोर्दर्शनं स्वयम् (षः कार्यकर्मकृत्); **समु**.२७ पू.

एकादशप्रकाराः साक्षिणो भवन्ति

[1]**एकादशविधः साक्षी शास्त्रे दृष्टो मनीषिभिः ।**
**कृतः पञ्चविधस्तेषां षड्विधोऽकृत उच्यते ॥**

(१) अत्रैकादशविधाः साक्षिणो दृष्टाः । तेषां च पञ्च साक्षिणः कृता भवन्ति । ते च प्रत्येकमुच्यन्ते । अभा.६४

(२) साक्षित्वेन निरूपितः कृतः । अनिरूपितोऽकृतः । मिता.२।६८

(३) लिखितस्यैव स्वयं परेण लेखनात् बृहस्पतिवचनात् द्वादश साक्षिण उक्ताः । व्यचि.३७

(४) साक्षित्वेनाऽर्थिप्रत्यर्थिभ्यां निरूपितः कृतः । व्यप्र.१०६

पञ्च कृतसाक्षिणः

[2]**लिखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च ।**
**गूढश्चोत्तरसाक्षी च साक्षी पञ्चविधः कृतः ॥**

(१) लिखितः पत्रारूढः । स्मारितः कर्णकथितः । यदृच्छाभिज्ञोऽनुपरोधेनागतः । गूढः कुड्यान्तरितश्रोता । उत्तरसाक्षी साक्षिजल्पितश्रोता । एवं पञ्चविधः साक्षी कृतो भवति । अभा.६४

(२) तत्र यः साक्षित्वेन पत्रे लिखितः स लिखितसाक्षी । तथा योऽर्थिप्रत्यर्थिभ्यां त्वमत्र साक्षी स्मरिष्यसीत्यभिहितः स स्मारितसाक्षी । तथा यत्समक्षमर्थिप्रत्यर्थिभ्यां व्यवहारः कृतः, सोऽपि कृत एव, तत्समक्षं तस्यार्थस्य कृतत्वात् स यदृच्छाभिज्ञः साक्षी । तथा योऽर्थिना गूढतया प्रत्यर्थिवचनं श्रावितः स गूढसाक्षी । स्मृसा.९९-१००

(३) साक्षी च कृतेषु पञ्चसु अकृतेषु षट्सु पूर्वपूर्वः श्रेयान्, स्मृतिहेतुप्राचुर्यात् । यः स्वहस्ताक्षरैरन्याक्षरैर्वा साक्षित्वेन लिख्यते पत्रे स लिखितः । यदग्रे आर्थिप्रत्यर्थिभ्यां व्यवहारः कृतो न लिखितो न वा स्मारितः स यदृच्छाभिज्ञः । *चन्द्र.१३५-१३६

(४) अलेखितो दृष्टवांस्त्वमिति स्मारितः । अनपह्नवार्थं यस्य सकाशे पूर्वमेव संभाषितं, स उत्तरसाक्षी । +नाभा.२।१२७

षड् अकृतसाक्षिणः

**षडेते पुनरुद्दिष्टाः साक्षिणस्त्वकृताः स्वयम् ।**
**ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् ॥**
[2]**कार्येष्वभ्यन्तरो यः स्यादर्थिना प्रहितश्च यः ।**

---

* शेषं स्मृसागतम् । + शेषं पूर्वव्याख्यानगतम् ।

(१) **नासं**.२।१२६ शास्त्रे (स तु) तेषां (तत्र); **नास्मृ**.४।१४९ स्त्रे (स्त्र); **अभा**.६४ नास्मृवत्; **मिता**.२।६८ धस्तेषां (धो ज्ञेयः); **व्यमा**.३२० नास्मृवत्; **अप**.२।६९; **व्यक**.४१ षड्विधो (त्रिविधा); **गौमि**.१३।१; **स्मृच**.८१ पू.; **स्मृसा**.९९ स्तेषां (स्त्वेषां); **व्यचि**.३७; **स्मृचि**.४५ षड्विधोऽकृत उच्यते (अकृतः षड्विधो मतः); **नृप्र**.९ मितावत्; **व्यसौ**.३९; **व्यप्र**.१०६; **व्यउ**.४७ (कृतः पञ्चविधो ज्ञेयोऽकृतः षड्विध उच्यते); **विता**.१५६ मितावत्; **राकौ**.४०१ मितावत्; **सेतु**.११६ उच्यते (इत्यपि) शेषं मितावत्; **प्रका**.५२ नास्मृवत्; **समु**.३१ तेषां (प्रोक्तः); **विव्य**.१२.

(२) **नासं**.२।१२७ लिखि (लेखि) कृतः(स्मृतः); **नास्मृ**.४।१५०; **अभा**.६४ कृतः (स्मृतः); **मिता**.२।६८ अभावत्; **व्यमा**.३२० अभावत्; **अप**.२।६९; **व्यक**.४१; **मभा**.१३।१ अभावत्; **गौमि**.१३।१; **स्मृच**.८०; **स्मृसा**.९९ अभावत्; **व्यचि**.३७ अभावत्; **स्मृचि**.४५ अभावत्; **नृप्र**.९; **सवि**.१४२ अभावत्; **चन्द्र**.१३५; **व्यसौ**.३९ अभावत्; **व्यप्र**.१०७; **व्यउ**.४७; **विता**.१५७; **राकौ**.४०१; **सेतु**.११६ अभावत्; **प्रका**.५१ साक्षी (कृतः) कृतः (स्मृतः); **समु**.३०; **विव्य**.१२ अभावत्.

(१) **नासं**.२।१२८ पूर्वार्धे (अकृतः षड्विधो नित्यं सूरिभिः परिकीर्तितः); **नास्मृ**.४।१५१ : ४।१४९ इत्यस्यानन्तरं 'अकृतः षड्विधस्तेषां सूरिभिः परिकीर्तितः । त्रयः पुनरनिर्दिष्टाः साक्षिणः समुदाहृताः' इति श्लोकः; **अभा**.६४; **मिता**.२।६८ उत्त.; **व्यमा**.३२० पूर्वार्धे (अन्ये पुनरनिर्दिष्टाः साक्षिणश्च उदाहृताः) नारदकात्यायनौ; **अप**.२।६९ पूर्वार्धे (अकृतः षड्विधस्तेषां सूरिभिः परिकीर्तितः । त्रयः पुनरनिर्दिष्टाः साक्षिणः समुदाहृताः ॥); **व्यक**.४१ पूर्वार्धे (अन्ये पुनरनिर्दिष्टाः साक्षिणः समुदाहृताः) नारदकात्यायनौ; **गौमि**.१३।१ पूर्वार्धे (अन्ये पुनरनुद्दिष्टाः साक्षिणः समुदाहृताः); **स्मृच**.८० पूर्वार्धे (अकृतः षडविधः साक्षी सूरिभिः परिकीर्तितः); **स्मृसा**.१०० पूर्वार्धे (सद्भिः पुनरनिर्दिष्टाः साक्षिणः षडुदाहृताः); **व्यचि**.३७ व्यकवत्; **स्मृचि**.४५ उत्त.; **नृप्र**.९ गौमिवत्; **सवि**.१४१ उत्त.; **चन्द्र**.१३६ पूर्वार्धं स्मृसावत्; **व्यसौ**.३९ पूर्वार्धं व्यकवत्, नारदकात्यायनौ; **व्यप्र**.१०७ उत्त.; **व्यउ**.४७ उत्त.; **विता**.१५७ उत्त.; **राकौ**.४०१ उत्त.; **प्रका**.५१ स्मृचवत्; **समु**.३० स्मृचवत्.

(२) **नासं**.२।१२९ भ्यन्तरो (धिकृतो) स्याः (लं); **नास्मृ**.४।१५२; **अभा**.६४; **मिता**.२।६८ भ्यन्तरो (धिकृतो) भवेयुः

**कुल्याः कुलविवादेषु भवेयुस्तेऽपि साक्षिणः ॥**

(१) षडेते पुनरकृता अपि साक्षिणो भवन्ति । तद्यथा ग्राममध्ये वृत्तप्रयोजनस्य ग्राम एव साक्षी । धर्माधिकरणवृत्तस्य प्राड्विवाक आस्थानस्थः । राज्ञः पुरतो वृत्तस्य राजा । तथा यः कार्यस्याभ्यन्तरः । तथा कार्यार्थमर्थिना यः प्रहितः । तथा कुलविवादेषु कुलहरकमेव (?) साक्षी । एते षडपि साक्षिणः अकृता अपि भवन्ति । एवं कृताकृतभेदेनैकादशविधः साक्षी उक्तः । अभा.६४

(२) प्राड्विवाकग्रहणं लेखकसभ्योपलक्षणार्थम् । 'लेखकः प्राड्विवाकश्च सभ्याश्चैवानुपूर्वशः । नृपे पश्यति तत्कार्ये साक्षिणः समुदाहृताः' इति ॥ *मिता.२।६८

(३) अत्र ग्रामपदेन ग्रामस्था लक्ष्यन्ते । ते ह्यकृता अपि ग्रामगतकार्यं जानन्त्येवेति । तद्विषये साक्षिण एते । तथा राज्ञो यः प्राड्विवाको धर्माधिकृतस्तस्य सकलविवादनिरूपकत्वात् । प्राङ्न्यायादावकृतस्यापि साक्षित्वं भवति । तथा यः खलु धार्मिको राजा तस्य स्वयमेव विवादनिरूपकत्वात् प्राङ्न्यायादिविषये प्राड्विवाकवदकृतस्यापि साक्षित्वम् । तथा ऋणादिकार्ये योऽभ्यन्तरकृतोऽर्थमादाय ऋणादिकं कृतं स कार्याभ्यन्तरोऽकृतोऽपि साक्षी । तथा अर्थिना यः प्रत्यर्थिनि वक्तुं प्रहितस्तेन तद्वचनं श्रुतं, सोऽप्यकृत एवार्थिप्रहितः साक्षी । तथा कुलस्य विवादे अकृतमपि कुलं साक्षी भवति । ननु राज्ञः साक्षित्वं निषिद्धम् । तथा मनुः—'न कार्यो नृपतिः साक्षी' इति तच्च कथमभिधीयते नृपतेः साक्षित्वमिति । उच्यते—मनुना खलु साक्षी नृपतिर्न कार्य इति नृपतेः साक्ष्ये करणं निषिद्धं प्रायशः स्मरणवादयोरसंभवात् । स्वकृतस्त्वेवंविधविषये भवत्येवेत्यविरोधः । अत्र च कृतसाक्षिणां मध्ये ये अकृतास्ते ग्राह्याः । कृतसाक्षिष्वपि पूर्वपूर्वाभावे उत्तरोत्तरेषां साक्षित्वमिति पूर्वपूर्वेषां स्मृतिहेतुसंस्कारकारणस्य लिखितादेर्लघीयस्त्वात् । अत एव नारदेन पूर्वपूर्वसाक्षिणामधिककालत्वमप्युक्तम् । *स्मृसा.१००-१०१

(४) पूर्ववृत्तेषु कार्येष्वधिकृतः तेषु व्यवहारकार्येषु यो व्यापृतः । कुलं कुलविवादेषु, गृहवृत्तेषु गृहजनः, कुलधर्मेषु वा कुलम् । एते नित्या अकृताः । नाभा.२।१२८-१२९

कीदृशाः कियन्तश्च साक्षिणो भवन्ति

**कुलीना ऋजवः शुद्धा जन्मतः कर्मतोऽर्थतः ।**
**त्र्यवराः साक्षिणोऽनिन्द्याः शुचयः शुद्धबुद्धयः ॥**

(१) कुलीनाः कुलोत्पन्नाः । ऋजवः आर्जवस्वभावाः । तथा जन्मतः कर्मतोऽर्थतश्च शुद्धा ये भवन्ति । शुचयो ये त्वलुब्धाः । शुद्धबुद्धयः प्रतिष्ठितशास्त्रबुद्धयः । अनिन्द्याः लोकप्रसिद्धाः । एवंविधाः साक्षिणो भवन्ति । त्रयाणामधो द्वावेको वा उभयानुमतः । अधिकास्तु भूवादे । अन्यत्र कार्यविस्तरानुसारेण । अभा.६४

(२) त्रयोऽवरास्त्र्यवराः साक्षिण इत्यधमकोटिरियम् । नवपर्यन्ताः परा कोटिरसौ । तपस्वित्वादिगुणयुक्तत्वेन त्र्यवराः, पूर्वोक्तगुणेषु सत्सु यदि विद्याऽप्यधिका भवति तदा श्रोत्रियपदवाच्यौ द्वावपि साक्षिणौ, श्रोत्रियोऽपि नैकः साक्षी । तस्यैकस्यापि साक्षित्वे उभावित्यनर्थकं स्यात् । उभौ च श्रोत्रियावित्यनन्तरं च नैकं पृच्छेत् इति श्रोत्रियस्यैव वागतस्य । व्यमा.३१८

(३) एतैर्गुणैः समस्तैर्व्यस्तैर्बहुभिर्युक्ताः, त्रयः अवरा ऊना येषां ते त्र्यवराः साक्षिणः स्युः । एष प्रथमः कल्पः । नाभा.२।१३०

---

* सवि. मितावत् ।

(विज्ञेयाः); **व्यमा.**३२० स्यात् (च); **अप.**२।६९ न्तरो (तन्रे) ल्याः कुल (ल्याकुल्य); **व्यक.**४१ स्यात् (च) ल्याः कुल (ल्याकुल्य); **गौमि.**१३।१ व्यकवत्; **स्मृच.**८०; **स्मृसा.**१००ल्याः (लं); **व्यचि.**३७ स्यात् (च); **व्यनि.**(=) षु भवेयु (तु विज्ञेया); **स्मृचि.**४५ ल्याः कुल (ल्याकुल्य); **नृप्र.**९ व्यकवत्; **सवि.**१४१ मितावत्; **चन्द्र.**१३६ स्मृसावत्; **व्यसौ.**३९ नारदकात्यायनौ; **व्यप्र.**१०७ मितावत्; **व्यउ.**४७ मितावत्; **विता.**१५७ मितावत्; **राकौ.**४०१ मितावत्; **प्रका.**५१; **समु.**३०.

---

* व्यचि. स्मृसागतम् ।

(१) **नासं.**२।१३० शुद्ध (स्युः सु); **नास्मृ.**४।१५३; **अभा.**६४; **व्यमा.**३१८ ऽनिन्द्याः (ज्ञेयाः); **स्मृच.**७६ र्थतः (र्थतेः) उत्तरार्धे (साक्षिणः शुचयोऽनिन्द्याःपुरुषाः स्युः सुबुद्धयः); **पमा.**९५ ऽनिन्द्याः(ज्ञेयाः) यः शुद्ध (यश्च सु); **व्यचि.**३८ व्यमावत्; **प्रका.**४८ उत्तरार्धं स्मृचवत्; **समु.**२७ उत्तरार्धं स्मृचवत्; **विव्य.**११ व्यमावत् .

वर्णादिभेदेन साक्षिभेदः

**ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये चाप्यनिन्दिताः।**
**प्रतिवर्णं भवेयुस्ते सर्वे सर्वेषु वा स्मृताः ॥**

(१) एते चत्वारोऽपि वर्णाः स्वकीयस्वकीयवर्णसाक्षिणो भवन्ति। अथवा सर्वेषु वर्णेषु सर्वे वर्णा भवन्ति। अभा.६४

(२) ब्राह्मणक्षत्रियविट्शूद्रा ये चाप्यनिन्दिताः अकुत्सितकर्माणोऽन्तरालप्रभवाः। सर्वेषामनिन्दितत्वेऽप्येतेषामनिन्दितग्रहणमत्यन्तकुत्सितकर्मश्वपाकचण्डालमृतपादिनिवृत्त्यर्थम्। एतेषां गुणवतामपि हि निसर्गतः कुत्सितं कर्मेति। वर्णे वर्णे प्रतिवर्णं, भवेयुस्ते साक्षिणः ब्राह्मणाः ब्राह्मणेषु क्षत्रियाः क्षत्रियेषु। एवं सर्वत्र। सर्वेषु चानियमेन साक्षिणः। प्रतिवर्णं भवेयुरिति वाशब्देन विनोक्तत्वात् प्रथमकल्प इति गम्यते, न तुल्यकल्पत्वं, पुनर्वचनादनुकल्प इति गम्यते। यथा 'दशाहं शावमाशौचमि'त्यविकल्पेनोक्त्वा 'आ वा संचयनादस्थामि'त्यादिवचनादनुकल्पः, तथाऽत्रापि। नाभा.२।१३१

**[२]श्रेणिषु श्रेणिपुरुषाः स्वेषु वर्गेषु वर्गिणः।**
**बहिर्वासिषु बाह्याः स्युः स्त्रियः स्त्रीषु च साक्षिणः॥**

(१) श्रेणीषु अष्टादशप्रकृतिनिबद्धासु ये श्रेणिपुरुषास्ते तन्मध्यपतितत्वात्तादृशा एव साक्षिणः प्रमाणम्। स्वेषु वर्गेषु भाटवर्गेषु भाटिका इत्यादयः। बहिर्वासिषु अन्त्यजातिषु बाह्या एव। स्त्रीषु च व्यवहारोत्पत्तौ स्त्रिय एव साक्षित्वमर्हन्ति। एतेषु साक्षिपरीक्षा नास्ति। अभा.६५

(२) श्रेणयो वणिगादिसमूहाः प्रसिद्धाः, तेषु श्रेणिपुरुषाः समूहाभ्यन्तराला इत्यर्थः। पुरुषग्रहणं स्त्रीनिवृत्त्यर्थम्। स्वेषु वर्गेषु वर्गिणः हस्तिपकादयः नटमल्लगायकपाकजीवनादयः, तेषां स्ववर्गपुरुषाः। नाभा.२।१३२

(३) श्रेणिपुरुषाणां सत्यपि वर्गित्वे पृथङ्निर्देशो गोवृषन्यायेन। प्रयोजनं चात्राप्यभ्यर्हितत्वबोधनम्। व्यप्र.१११

उत्तरसाक्षिणः कदा प्रमाणम्

**[१]साक्ष्युद्दिष्टो यदि प्रेयाद्गच्छेद्वाऽपि दिगन्तरम्।**
**तच्छ्रोतारः प्रमाणं स्युः प्रमाणं ह्युत्तरा क्रिया ॥**

(१) तत्र यदि साक्ष्युद्दिष्टो म्रियेत देशान्तरं वा गच्छेत् तस्य मुमूर्षोर्यियासोर्वा तदर्थं पृष्टस्यार्थिना उद्देशश्रुतार्थस्य वा स्वयं विश्रावयतो वचनं श्रुतं यैस्ते उत्तरसाक्षिणः प्रष्टव्या इति। अयं चाऽसौ प्राक्सूत्रस्थानोक्तोत्तरसाक्षी प्रष्टव्यः। अभा.६७

(२) बहुवचननिर्देशात् नैको न द्वौ, बहूनां ह्यनृते चैकमत्यं प्रायेण न भवतीति। हेतुमाह— उत्तरसाक्षिणः प्रमाणमित्युक्तं 'गूढश्चोत्तरसाक्षी चे'ति। नाभा.२।१४५

लिखितसाक्षिणो विशेषः

**[२]सुदीर्घेणाऽपि कालेन लिखितः सिद्धिमाप्नुयात्।**
**आत्मनैव लिखेज्जानन्न चेदन्येन लेखयेत् ॥**

(१) तत्र योऽसौ पञ्चविधः प्रयुक्तः साक्षी तस्य भेदफलविवक्षयेदमुच्यते—सुदीर्घेणाऽपि कालेन लिखितस्य

---

(१) **नासं**.२।१३१ स्मृताः (पुनः); **नास्मृ**.४।१५४; **अभा**.६४; **व्यमा**.३१८ नासंवत्; **स्मृच**.७७ पूर्वार्धे (ब्राह्मणः क्षत्रियो वैश्यः शूद्रो ये चाप्यनिन्दिताः) स्मृताः (पुनः); **पमा**.९५ वा स्मृताः (वादिनः); **व्यचि**.३८ नासंवत्; **सवि**.१३६ नासंवत्; **प्रका**.४९ नासंवत्; **समु**.२७ नासंवत्; **विव्य**.११ पू.

(२) **नासं**.२।१३२ स्युः (च); **नास्मृ**.४।१५५; **अभा**.६५; **विश्व**.२।७१; **व्यमा**.३२३; **अप**.२।६९; **व्यक**.४५ क्रमेण व्यासः; **स्मृच**.७७; **पमा**.९५ वर्गेषु (स्वे चैव) स्युः (च); **स्मृसा**.९९ र्गेषु वर्गिणः (र्णेषु वर्णिनः) स्युः (च); **सवि**.१३६ स्वेषु (तेषु); **व्यसौ**.४३; **व्यप्र**.१११ णिषु (णीषु) **व्यम**.१६ च (तु); **बाल**.२।६९; **प्रका**.४९; **समु**.२८.

(१) **नासं**.२।१४५ रा क्रि (रक्रि); **नास्मृ**.४।१६६; **अभा**.६७ रा क्रिया (राः क्रियाः).

(२) **नासं**.२।१४६ चेदन्येन (जानानस्तु); **नास्मृ**.४।१६७; **अभा**.६७ खितः (खितं); **व्यमा**.३२३ उत्तरार्धे (संजानन्नात्मनो लेख्यमजानंस्तु न लेखयेत्); **व्यक**.४३ उत्तरार्धे (संजानन्नात्मनो लेख्यमजानन्तु न लेखयेत्); **पमा**.१०४ सिद्धि (शुद्धि) जानन्न चेद (जातमज्ञस्त्व); **व्यचि**.३७ उत्तरार्धे (संजानन्नात्मनो लेख्यमजानन्न तु लेखयेत्); **स्मृचि**.४५ व्यचिवत्; **व्यत**.२१९ खितः (खितं) उत्तरार्धे (संजानन्नात्मनो लेख्यमजानंस्तत्तु लेखयेत्); **सवि**.१४२-१४३ लिखितः (निश्चितः) जानन्न चेद (ज्ञातमज्ञस्त्व); **चन्द्र**.१३६ व्यचिवत्; **व्यसौ**.४१ व्यचिवत्; **व्यप्र**.१०९ (=) उत्तरार्धे (संजानन्नात्मनो लेख्यमजानन्तं तु लेखयेत्).

साक्षित्वम् । तेन च लिपिसमयज्ञेन आत्मनैव स्वनाम लेख्यम् । यथा कश्चिद्देशे साक्षिणश्च स्वहस्तेन मतमारोपयिष्यन्ति इति । लेखकेन विलिखिते आत्मनैव लिखेद् 'अत्राहं साक्षी देवदत्तः' इति। न चेल्लिपिज्ञस्तदाऽन्येन लेखयेत् । तस्य कालान्तरे निरूपयतश्चिह्नाय भवतीति । एवं च लेखकविधिरुद्दिष्टः ।

अभा.६७

(२) अजानन्तं न लेखयेदत्रायमर्थः — यत्र कारणसमये लेखितुमजानन्तमात्मानं योऽन्येन लिपिज्ञेनाहमत्रामुकोऽमुकग्रामीयोऽमुकपुत्रः साक्षित्वे च लेखयेत् सोऽपि चिरेणापि सिद्धिमाप्नुयात् ।　　व्यक.४३

(३) सुदीर्घेणेति संस्कारोद्बोधकलिखनसत्वादयं चिरेणापि साक्ष्यं दातुं शक्नोतीत्यर्थः। सज्ञानन्निति लिपिपटुसाक्षिणं तु स्वहस्तेनैव लेखयेत् ।　　*व्यचि.३७

(४) सम्यग् जानन्नात्मनो लेख्यं कुर्यादिति शेषः । सिद्धिं निर्णायकतामाप्नुयादित्यर्थः ।　　व्यप्र.१०९

साक्षिविशेषाणां भद्रत्वकालमर्यादा

**[1]आष्टमाद्वत्सरात्सिद्धिः स्मारितस्येह साक्षिणः ।**
**आ पञ्चमात्तथा सिद्धिर्यदृच्छोपगतस्य च ॥**
**[2]आ तृतीयात्तथा वर्षात्सिद्धिर्गूढस्य साक्षिणः ।**
**आ संवत्सरतः सिद्धिर्वदन्त्युत्तरसाक्षिणः ॥**

(१) इति कालो नियम्यते ।　　×अभा.६७

(२) तदेतत्परमताभिप्रायेणोक्तम् । यतः स्वमतमुपरि स एवाह—'निर्णये कालनियमः' इत्यादिना ।

पमा.१०४

(३) इदं च अष्टवर्षपर्यन्तं स्मारितानां भद्रत्वप्रतिपादनार्थम्। न तु कालनियमार्थम् । यतस्तेनैवोक्तं अथवेत्यादिना ।　　*स्मृसा.१०१

(४) इति वचनं प्रायोवादः उत्कर्षाभिप्रायं वा ।

+चन्द्र.१३७

(५) लिखितस्य स्मृतिहेत्वक्षरसंभवात् सार्वकालिकत्वं युक्तं हेतोः । स्मारितस्याहूतस्य आह हितस्य त्वं साक्षीति, तथाभूतानां संवादस्मृतिहेत्वभावादाष्टमाद् वर्षात् सिद्धिः । आ पञ्चमात् सिद्धिर्यदृच्छोपगतस्य आह — हितानुरूपोऽपि स्मृतिहेतुर्नास्तीति शिथिलप्रयत्नत्वात् असमाहितचेतसा यदृच्छोपगतेन श्रुतमिति। गूढस्य आ तृतीयात् । आङभिविधौ द्रष्टव्यः । वृत्तस्याप्रत्यक्षत्वात् परकीयवचनं न चिरं शक्यं स्मर्तुमिति। अनुभूतमनुस्मर्येतापि चिरम् । आ संवत्सरात् सिद्धिः। अनेनैव सर्वत्राङभिविधाविति गम्यते, अत्र मर्यादाया असंभवात् उत्तरसाक्षिणो गूढवदपि प्रयत्नाभावात् तत्सकाशेऽभिहितमात्रत्वादल्पकाला स्मृतिरिति ।

नाभा.२।१४७-१४८

**[1]अथवा कालनियमो न दृष्टः साक्षिणं प्रति ।**
**स्मृत्यपेक्षं हि साक्षित्वमाहुः शास्त्रविदो जनाः ॥**

(१) औत्सर्गिकमेतद्रूपमभिधाय तस्यापवादमाह नारदः — अथवेति ।　　व्यमा.३२३

(२) तस्माद्यावद्यः स्मरति तावत्साक्षी, न कालावधारणं न्याय्यमिति ।　　नाभा.२।१४९

**[2]यस्य नोपहता बुद्धिः स्मृतिः श्रोत्रं च साक्षिणः ।**
**सुदीर्घेणापि कालेन स साक्षी साक्ष्यमर्हति ॥**

* व्यत. व्यचिवत् ।

× अत्र आदर्शपुस्तकेऽसंगतो ग्रन्थो दृश्यते लेखकप्रमादात् ।

(१) **नासं**.२।१४७ च (तु); **नास्मृ**.४।१६८; **अभा**.६७ सिद्धिर्य...च (सिद्धिं वदन्त्युत्तरसाक्षिणः); **व्यमा**.३२३; **व्यक**.४४ आष्ट (अष्ट) च (तु); **पमा**.१०४ व्यकवत्; **स्मृसा**.१०१; **स्मृचि**.४५; **सवि**.१४३ आष्ट (अष्ट) द्धिः (द्धिं); **चन्द्र**.१३७; **व्यसौ**.४१ च (तु); **व्यप्र**.१०९ च (तु).

(२) **नासं**.२।१४८ आ संवत्सरतः सिद्धिः (आ वत्सरात् तथा सिद्धिं); **नास्मृ**.४।१६९; **व्यमा**.३२३ नासंवत्; **व्यक**.४४ रतः सिद्धिः (रात्सिद्धिं च); **पमा**.१०४ व्यकवत्; **स्मृसा**.१०१ आ संवत्सरतः (आ वत्सरात्तथा) वदन्त्यु (भवत्यु); **स्मृचि**.४५ स्मृसावत्; **सवि**.१४३ द्धिर्गू (द्धिं गू) संवत्सरतः सिद्धिः (च संवत्सरात्सिद्धिं); **व्यसौ**.४१ रतः (रात्तथा) वदन्त्यु (भवत्यु); **व्यप्र**.१०९ रतः सिद्धिः (रात् सिद्धिं तु).

* सवि. स्मृसागतम् । + व्यप्र. चन्द्रगतम् ।

(१) **नासं**.२।१४९; **नास्मृ**.४।१७०; **अभा**.६७; **व्यमा**.३२३; **व्यक**.४४ क्षिणं (क्षिणः); **पमा**.१०४ अथवा (निर्णये); **स्मृसा**.१०१ व्यकवत्; **स्मृचि**.४५ व्यकवत्; **सवि**.१४३; **चन्द्र**.१३६ हि (तु); **व्यसौ**.४१ व्यकवत्; **व्यप्र**.१०९.

(२) **नासं**.२।१५० बुध्दिः (पुंसः) साक्षिणः (नित्यशः); **नास्मृ**.४।१७१; **शुनी**.४।६७९ साक्षिणः (नित्यशः) साक्षी साक्ष्य (वै साक्षित्व); **अभा**.६७ बुद्धिः स्मृतिः (पुंसःमतिः);

(१) आभ्यामपि काले नियमप्रतिषेधः साक्षित्वस्यानुस्मरणबलेन क्रियते। तदयुक्तम्, अविशेषेण क्रियतां मा कार्षीत् इति चैकविषयमुन्मत्तवदिति। अत्रोच्यते–आचार्यमतदर्शनेन प्राक्कालनियमनं स्वमतेन वा, न स्मरणोपपत्तिमता पुनरन्यथावचनमेव। मा भूदन्यशास्त्रदर्शनेन कालनियम आगममात्राद्विनैव वार्हतः स्वमतेन विकल्प इति। अनुस्मरणे श्रोत्रं वानुपहतं चेतश्च इति हेतुत्वेनोपादाय स्वतां प्रश्नार्थमन्यथावचनं लिखितसाक्ष्युत्कर्षार्थं नेति। अभा.६७

(२) यस्य नोपहता असंकीर्णा स्मृतिः श्रोत्रं च, चशब्दाच्चक्षुश्च, उपघातो रजस्तमोऽनुषङ्गित्वं दुःखप्रायत्वं वा। महताऽपि कालेन स साक्ष्यमर्हति, असंकीर्णस्मृतित्वात्। नाभा.२।१५०

पञ्चविधा असाक्षिणः

**[१]असाक्ष्यपि हि शास्त्रेषु दृष्टः पञ्चविधो बुधैः।**
**वचनाद्दोषतो भेदात्स्वयमुक्तिर्मृतान्तरः॥**

(१) यश्च साक्षी न भवति सोऽपि पञ्चप्रकारः वचनदोषभेदस्वयमुक्तिमृतान्तरैः इति। ते प्रत्येकं व्याख्यास्यन्ते। अभा.६५

(२) उक्तलक्षणानां साक्षिणामसंभवे प्रतिषेधरहितानां अन्येषामपि साक्षित्वप्रतिपादनार्थमसाक्षिणो वक्तव्याः। ते च पञ्चविधा नारदेन दर्शिताः। *मिता.२।७०

(३) असाक्षित्वहेतूनां पञ्चविधत्वात्तद्वशेनासाक्ष्यपि पञ्चविधो बुधैर्निर्दिष्ट इति। स्मृच.८१

(४) असाक्षित्वेऽप्युत्तरोत्तरं निन्द्यम्। चन्द्र.१३७

**[१]श्रोत्रियाद्या वचनतः स्तेनाद्या दोषदर्शनात्।**
**भेदाद्विप्रतिपत्तिः स्याद्विवादे यत्र साक्षिणाम्॥**

श्रोत्रियादीनां वेदाध्ययनाद्यासक्तत्वेन विवादपदविस्मरणशीलतया न ते साक्षिणः कार्याः। अकृतास्तु ते जानन्तो भवन्त्येव साक्षिणः। तदुक्तम्–'उभौ तु श्रोत्रियौ ग्राह्यावि'ति। वीमि.२।७२

**[२]स्वयमुक्तिरनिर्दिष्टः स्वयमेवैत्य यो वदेत्।**
**मृतान्तरोऽर्थिनि प्रेते मुमूर्षुश्राविताद्दृते॥**

(१) यत्र तु मुमूर्षुणा सुस्थेन वा पित्रा पुत्रादयः श्राविता अस्मिन्नर्थेऽमी साक्षिण इति तत्र मृतान्तरोऽपि साक्षी। यथाह नारदः– मृतान्तर इति। ×मिता.२।७०

(२) साक्षित्वेनानुपन्यस्तः स्वयमेवागत्येममर्थमहं

---

**व्यमा.३२३** स्मृतिः श्रोत्रं (स्मृतिशास्त्रे) साक्षिणः (नित्यशः); स साक्षी साक्ष्य (स वै साक्षित्व); **व्यक.४४** स्मृतिः श्रोत्रं च साक्षिणः (स्मृतं शास्त्रं च नित्यशः); **पमा.१०४** साक्षिणः (नित्यशः); **स्मृसा.१०१** (यस्यानपहता पुंसः स्मृतिः श्रोत्रं च नित्यशः); **स्मृचि.४५** नासंवत्; **सवि.१४३** स्मृतिः श्रोत्रं च (स्मृतितन्त्रेषु); **व्यसौ.४१-४२** स्मृतिः श्रोत्रं (स्मृतिश्रोत्रे) शेषं व्यमावत्; **व्यप्र.११०** साक्षी साक्ष्य (वै साक्षित्व) शेषं पमावत्.

(१) **नासं.२।१३४** क्ति (क्ते) रः (रात्); **नास्मृ.४।१५७; अभा.६५** स्त्रेषु (स्त्रेऽस्मिन्); **मिता.२।६९** क्ति (क्ते); **व्यमा.३२३** क्ष्यपि हि शास्त्रे (क्षी व्यवहारे) र्मृता (र्मुदा); **अप.२।७१; व्यक.४५; गौमि.१३।४** नासंवत्; **स्मृच.८१** शास्त्रेषु दृष्टः (निर्दिष्टः शास्त्रे) र्मृता (र्मता); **स्मृसा.१०१** (असाक्ष्यपि च निर्दिष्टः शास्त्रे पञ्चविधो जनः); **व्यचि.४०; स्मृचि.४५; सवि.१३९** हि शास्त्रेषु दृष्टः (विनिर्दिष्टः शास्त्रे); **चन्द्र.१३७** क्तिर्मृ (क्तिः स्मृ) शेषं सविवत्, श्लोकार्धौ व्यत्यासेन पठितौ; **व्यसौ.४३; वीमि.२।७२; व्यप्र.११३; व्यउ.४७** शास्त्रे (साक्ष्ये) क्ति (क्ते) रः (रम्); **विता.१६०; प्रका.५२** शास्त्रेषु दृष्टः (निर्दिष्टः शास्त्रे); **समु.३१** प्रकावत्; **विव्य.१२** क्ष्यपि हि शास्त्रे (क्षी व्यवहारे); **बौवि.१।१०।१६** उत्त.

* व्यप्र. मितागतम्। × विता. मितागतम्।

(१) **नासं.२।१३५** णाम् (णः); **नास्मृ.४।१५७** Vulg. यत्र साक्षिणाम् (साक्षिणां यतः); **विश्व.२।७३** पू.; **व्यमा.३२४ : ३२५** उत्त.; **अप.२।७१** यत्र साक्षिणाम् (साक्षिणां यतः); **व्यक.४५; गौमि.१३।४; स्मृसा.१०१** नासंवत्; **व्यचि.४०; व्यसौ.४३; वीमि.२।७२; व्यप्र.११३** द्या वचनतः (द्यास्तु वचनात्); **विव्य.१२; बौवि.१।१०।१६.**

(२) **नासं.२।१३६** क्ति (क्ते); **नास्मृ.४।१५७** Vulg; **मिता.२।७०** उत्त.; **व्यमा.३२४,३२६** न्तरो (न्तरे); **अप.२।७१** रनि (स्त्वनि) र्षु (र्षुः); **व्यक.४५** व्यमावत्; **गौमि.१३।४** र्षु (र्षुः); **स्मृच.८१** गौमिवत्; **स्मृसा.१०१** वै (वे) र्षु (र्षुः); **व्यचि.४१; सवि.१४१** ताद्दृते (तो दृढः) उत्त.; **चन्द्र.१३८-१३९** रो (रे); **व्यसौ.४३** उक्तिरनि (वदत्यनि) रो (रे); **वीमि.२।७२** रनि (र्न नि); **व्यप्र.११३** उत्त.; **व्यउ.४८** रो (रे) उत्त.; **विता.१६१** उत्त.; **प्रका.५३** उत्त.; **समु.३२** रो (रे) उत्त.

जानामीति ब्रुवाणो न साक्षी । अन्तरोऽन्तरङ्गः विवादे अर्थी, प्रत्यर्थी, धनं च । बहिरङ्गाः साक्षिसभ्यादयः । तेन यत्रासौ साक्षी कृतो गोभृत्यालङ्कारविषये, तस्मिन् मृते नष्टे वा साक्षी मृतान्तर उच्यते । गोभृत्यादेर्मूलभूतस्य मृतत्वात् तत्संस्थानतो विप्रतिपत्तौ हि तस्यासाक्षित्वम् । 'इममर्थं कस्य जानीयाः?' इति प्रश्नानुपपत्तेरित्यसाक्षी मृतान्तरः । तथा येनर्णादिविषये साक्षी कृतोऽर्थिना प्रत्यर्थिना वा तस्मिन् मृते साक्षी मृतान्तरो भवति । अर्थिना च पुत्रादिना देशकालधनेयत्त्वाद्यपरज्ञाने तत्त्वज्ञानानर्हत्वादनुपन्यस्तस्य च साक्षिणः स्वयमुक्तित्वापत्तेर्मृतान्तरो न साक्षी । व्यमा.३२६-२७

(३) मुमूर्षुग्रहणं स्वस्थस्याप्युपलक्षणार्थम् । स्मृच.८१

(४) अस्यार्थः— यो ह्यनिर्दिष्टः स्वयमेवाह, 'अहमत्र साक्षी'ति स्वयमुक्तः । यस्तु मृते धनिके तत्पुत्रस्य ऋणादिपरिमाणविशेषाज्ञाने परम्परया श्रुतं, 'अयमस्माकं धारयत्ययं च साक्षी' एतावन्मात्रज्ञाने यदहं न जानामि किं त्वयं यज्जानाति तदयमस्मदीयं धारयतीत्यभिधाय पुत्रेणोपन्यस्यते स साक्षी मृतान्तर उच्यते । यदि तु मुमूर्षुणाऽपि पित्रा पुत्रः श्रावितो भवति, अयमस्माकमियद्धारयत्ययं च तत्र साक्षीति तदा मृतान्तरोऽपि साक्षी भवत्येव । *स्मृसा.१०१-१०२

(५) यत्तु विज्ञानयोगिनोक्तं, 'यत्र तु मुमूर्षुणे'त्यादि तत्तु श्रावितस्य साक्षित्वं नापगतमित्येवं परम् । न पुनर्मृतान्तरस्यापि साक्षित्वविधानार्थमित्यवगन्तव्यम् । मृतान्तरस्य साक्षित्वासंभवात् । सवि.१४१

(६) स्वयमुक्तेरसाक्षी । स्वयमेवानुद्दिष्टो गत्वा वदेत् अहं जानामीति । मृतान्तर इत्युक्तं धनिनि प्रेते, अमुष्य असौ धारयति अत्राहं साक्षीति ब्रवीति सदसि । अत्रापवादः—मुमूर्षुणा श्रावितः मुमूर्षुश्रावितः । स भवत्येव साक्षी प्रेतेऽपि धनिनि । यथा असौ मे धारयति द्रव्यं ब्राह्मणेभ्यो दापयेदिति । नाभा.२।१३६

वचनादसाक्षिणः

**[1]श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजिता नराः ।**
**असाक्षिणस्ते वचनान्नात्र हेतुरुदाहृतः ॥**

(१) तापसा वानप्रस्थाः । आदिशब्देन पित्रा विवदमानादीनां ग्रहणम् । यथाह शङ्खः— 'पित्रा विवदमानगुरुकुलवासिपरिव्राजकवानप्रस्था निर्ग्रन्थाश्चासाक्षिण' इति । ×मिता.२।७०

(२) वचनान्निषेधवचनादिति न्यायस्यार्थः । न हि तेषां साक्षित्वेन ग्रहणे प्रश्ने वा निषेधातिक्रमादधर्मोत्पत्तिर्न्यायमूलत्वाद्वचनानाम् । सत्यपि बाधादोषे (?) तत्प्रश्नेन सत्यप्रशस्तव्यवहारसमाप्त्यविरोधाद्व्यवहारप्रकरणे लिखननिषेधस्य पुरुषार्थत्वात् । ततश्च ते साक्षिणो न कार्याः, तेषां पूज्यतमत्वात्, अदण्डनीयत्वात्, तपःप्रकर्षाच्च, भूरिकोपवत्त्वेन तच्छापभयेन व्यवहारद्रष्टारो न तान् पृच्छन्तीति तत्साक्षिकरणानर्थक्यान्न ते कार्याः । यद्वा नित्यं तेषामग्निहोत्रादिकार्यव्यग्रतया परकीयकार्यप्रसरणासंभवात् अनर्थकं तत्साक्षिकरणम् । वचनादिति । श्रोत्रियत्वादिरूपाभिधानान्नात्रान्यो हेतुरित्यर्थः । तेन ते साक्षिणो न कर्तव्याः । अकृतास्तु भवन्त्येव साक्षिणः । उभौ तु श्रोत्रियौ ख्यातावित्यादिवचनात् । अत एव वृद्धस्याप्यसाक्षित्वं वृद्धत्वात् ग्लानेन्द्रियत्वादित्यर्थः । *व्यमा.३२४

(३) श्रोत्रियाः अध्ययनश्रवणयुक्ताः । तापसा वानप्रस्थाः, अन्येऽपि तपोनिष्ठाः । वृद्धा अशीतेरूर्ध्वम् । वचनात् प्रतिषिद्धत्वात् । नात्र हेतुरुक्तः, नित्यं तेषां साधुनि कर्मणि प्रवृत्तत्वात् । तदुपरोधो मा भूदिति । वृद्धा असमर्था एव । नाभा.२।१३७

(४) अत्र श्रोत्रियादयो न साक्षिणः कार्याः । तेषां

---

* व्यचि., चन्द्र., वीमि. स्मृसागतम् ।

× सवि., व्यउ., विता. मितागतम् ।

* व्यचि., व्यत., सेतु. व्यमागतम् ।

(१) **नासं**.२।१३७; **नास्मृ**.४।१५८; **अभा**.६५ नात्र (तत्र); **मिता**.२।७० नराः (दयः); **व्यमा**.३२४; **अप**.२।७१; **व्यक**.४५; **स्मृच**.८१ मितावत्; **पमा**.१०१ अभावत्, याज्ञवल्क्यः; **स्मृसा**.१०१ (वचनात्तेष्वसाक्षित्वं नात्र हेतुरुदाहृतः); **व्यचि**.४२; **स्मृचि**.४५ मितावत्; **व्यत**.२१४ स्मृसावत्; **सवि**.१४० च (तु) नराः (दयः) याज्ञवल्क्यः; **चन्द्र**.१३७ स्मृसावत्; **व्यसौ**.४३; **वीमि**.२।७२ ये च (येन); **व्यप्र**.११३ मितावत्; **व्यउ**.४८ मितावत्, याज्ञवल्क्यः; **विता**.१६० नराः (दयः) नात्र हे (तन्निर्दे) तः (तम्); **सेतु**.१२० ये च प्र (हेतुप्र) शेषं स्मृसावत्; **प्रका**.५२-५३ मितावत्; **समु**.३१ मितावत्; **विव्य**.१२-१३.

रागादिशून्यानां सत्यवादित्वातिशयेऽपि तपःस्वाध्यायाग्निहोत्रादिव्यासङ्गेन श्रावितार्थविस्मरणसंभवात् । अतिपूज्यानां धर्माधिकरणप्रवेशाह्वानाद्यनौचित्याच्चेत्यर्थः । नात्र हेतुः— असत्यवादित्वप्रयोजको हेतुः स्तेनत्वादिर्नोदाहृत इत्यर्थः । *व्यप्र.११५-११६

दोषादसाक्षिणः

[1]**स्तेनाः साहसिकाश्चण्डाः कितवा वधकाश्च ये ।**
**असाक्षिणस्ते दुष्टत्वात्तेषु सत्यं न विद्यते ॥**

(१) चण्डाः कोपनाः । कितवाः द्यूतकृतः। मिता.२।७०

(२) दोषतोऽपि येषामसाक्षित्वं तेषामप्यदोषदशायां साक्षित्वमायात्येव । स्तेनत्वादिकमपि प्रकृतविषयकवचनान्यथासिद्धिशङ्काधायकमिह विवक्षितमिति रत्नाकरेऽभिधानात् । अथ यद्दशायां यस्य निर्वेदादिना सत्यवादितैव प्रमीयते तदा सोऽपि साक्ष्येव । चन्द्र.१३७-३८

(३) साहसिकाः प्रसह्य परस्वापहारिणः । चण्डाः धनहेतोर्मारकाः परप्रयुक्ताः । वधकाः सौनिकाः । असाक्षिणस्ते, स्वभावत एव दुष्टत्वात् परातिसंधानपरत्वात् । तेषु सत्यं नास्ति । महापातके प्रवृत्तानां साक्षित्वेऽनृतवचनं प्रियमेव । नाभा.२।१३८

भेदादसाक्षिणः

[2]**राज्ञा परिगृहीतेषु साक्षिष्वेकार्थनिश्चये ।**
**वचनं यत्र भिद्येत ते स्युर्भेदादसाक्षिणः ॥**

(१) यत्तु भेदादसाक्षिण इत्युक्तं, तत्सर्वसाम्येन अगृह्यमाणविशेषविषयम् । मिता.२।७८

(२) यत्तु राज्ञेति तत्संख्यातो गुणतश्च साम्ये सति वेदितव्यम् । न हि तत्र श्रोतॄणां संशयनिवृत्तिरस्ति । *अप.२।७८

(३) अस्यार्थः — एकस्य भाषार्थस्य उत्तरार्थस्य वा निर्णयार्थं गृहीतानां साक्षिणां वचनभेदाद् असाक्षित्वमिति । व्यचि.४०

(४) ननु भेदादसाक्षिण इत्यनुपपन्नम् । 'साक्षिद्वैधे बहूनां वा गुणवत्तमानां वा वचनं ग्राह्यम्' इति विष्णुस्मरणात् । समसंख्यानां वा समगुणानां वा द्वैधे युक्तिसध्रीचीनं वचनं ग्राह्यमित्यर्थादुक्तं भवतीति निबन्धनकारवचनादिति चेन्मैवम् । बहवः साक्षिणो मिलित्वा साक्ष्यभावमेकस्मिन् निवेश्य संसदि अनेन यदुक्तं तदस्माकं संमतमित्यवोचन्, तदाऽसावेकोऽपि विसंवादी, सर्वे ते साक्षिणोऽविसंवादिन इत्येवं परं वचनमिति न कश्चिद्विरोधः । सवि.१४१

(५) राज्ञैकवचनत्वेन परिगृहीतेषु साक्षिषु पृथक् पृथगुत्सार्य पृच्छ्यमानेषु वचनं भिद्येत यत्र येषु यस्मिन् वा कार्येऽन्योऽन्यद्वा ब्रूयात् अन्यश्चान्यथा, तेऽपि वचनभेदाद् रागाद् द्वेषाल्लोभाद्वा मृषा वदन्तीत्यसाक्षिणः । नाभा.२।१३९

स्वयमुक्तेरसाक्षी

[3]**अनिर्दिष्टस्तु साक्षित्वे स्वयमेवैत्य यो वदेत् ।**
**सूचीत्युक्तः स शास्त्रेषु न स साक्षित्वमर्हति ॥**

* व्यप्र. (पृ.११३) मितावत् । शेषं व्यमावत् ।

(१) **नासं**.२।१३८; **नास्मृ**.४।१५९; **अभा**.६५; **मिता**.२।७० वधकाश्च ये (वञ्चकास्तथा); **व्यमा**.३२४ च ये (तथा); **अप**.२।७१ वधकाश्च ये (बान्धवास्तथा); **व्यक**.४५ व्यमावत्; **पमा**.१०० चण्डाः (षण्ढाः) वधकाश्च ये (सूचकास्तथा) असा (न सा) सत्यं (साक्ष्यं) **बृहस्पतिः**; **स्मृसा**.१०१ वध (व्याध) सत्यं (साक्ष्यं); **व्यचि**.४२ वधकाश्च ये (व्याधकास्तथा); **स्मृचि**.४५ व्यमावत्; **व्यत**.२१३ चण्डाः (धूर्ताः) वध (योध) स्ते दुष्टत्वात् (स्तु ते दृष्टाः); **सवि**.१४० च ये (तथा) स्ते (स्तु); **चन्द्र**.१३७ वध (योध) दुष्ट (दोष); **व्यसौ**.४३ कितवा वधकाश्च ये (उन्मत्ताः कितवास्तथा); **व्यप्र**.११४ मितावत्; **व्यउ**.४८ व्यमावत्, याज्ञवल्क्यः; **विता**.१६० मितावत्; **सेतु**.११९ चण्डाः (धूर्ताः) वध (क्रोध) स्ते दुष्टत्वात् (स्तु ते ज्ञेयाः); **प्रका**.५२ व्यमावत्; **समु**.३१ व्यमावत्; **विव्य**.१३ व्यमावत्.

(२) **नासं**.२।१३९; **नास्मृ**.४।१६०; **अभा**.६५; **व्यमा**.३२५ निश्चये (निर्णये) यत्र (तत्र); **अप**.२।७८ निश्चये

* स्मृसा., चन्द्र. अपगतम् ।

(निर्णये); **व्यक**.४७; **स्मृच**.८१; **स्मृसा**.१०१; **व्यचि**.४० अपवत्; **चन्द्र**.१३८ अपवत्; **व्यसौ**.३८,४५ यत्र (तत्र); **वीमि**.२।७२ अपवत्; **प्रका**.५३; **समु**.३२.

(१) **नासं**.२।१४० अनिर्दि ... साक्षित्वे (स्वयमुक्तेरनुद्दिष्टः); **नास्मृ**.४।१६१; **अभा**.६५; **मिता**.२।७० अनि ... त्वे (स्वयमुक्तिरनिर्दिष्टः); **व्यमा**.३२६ वै (वे) न स (न च); **व्यक**.४७-४८ वै (वे) सूचीत्युक्तः स (स्वयमुक्तस्तु) न स (न च); **स्मृच**.८१ अनि ...त्वे (स्वयमुक्तिस्तु निर्दिष्टः); **स्मृचि**.४६ मितावत्, मनुः; **सवि**.१४० मितावत्; **व्यसौ**.४६(अनिर्दिष्टश्च यः साक्ष्ये स्वयमेवेत्य भाषते । सूचीत्युक्तः स

स्वयमुक्तेरनुद्दिष्टः इति व्याख्यातः सूचक इत्युक्तः। स साक्षी न भवति परोपघातप्रवृत्तत्वात्। नाभा.२।१४०

मृतान्तरोऽसाक्षी

**योऽर्थः श्रावयितव्यः स्यात्तस्मिन्नसति चार्थिनि।**
**क्व तद्वदतु साक्षित्वमित्यसाक्षी मृतान्तरः * ॥**

(१) येनार्थिना प्रत्यर्थिना वा साक्षिणां योऽर्थः श्रावयितव्यो भवेत्, यूयमत्रार्थे साक्षिण इति, तस्मिन्नर्थिनि प्रत्यर्थिनि वा असति मृतेऽर्थे चानिवेदिते साक्षित्वं कस्मिन्नर्थे कस्य वा कृते साक्ष्यं वदत्विति मृतान्तरः साक्षी न भवति। +मिता.२।७०

(२) ज्ञापयितव्यः इत्यर्थः। अर्थे विनष्टे, अर्थिनि मृते, इत्युभयथैव मृतान्तरत्वम्। व्यमा.३२७

(३) अस्मिन्नर्थे मयाऽसौ साक्षी कृत इति योऽर्थोऽर्थिना स्वस्यास्थिरत्वं मन्वानेन श्रावयितव्यः पुत्रादेः ज्ञापयितव्यः तस्मिन्नर्थेऽसत्यज्ञापितेऽर्थिनि चासति मृते तत्साक्षित्वमर्थिना कृतं साक्षित्वमर्थी पुत्रादिः क्व कस्मिन्नर्थे कस्य पुरुषस्य प्रमाणोक्तिकाले वदत्वित्यनवधृतेरसाक्षी मृतान्तर इति। स्मृच.८१

(४) मिता.टीका—'एवं च पदार्थविशेषनिर्देष्टैव मृतः। अथवा अर्थविशेषो न निवेदितः। तदा तस्मिन्नर्थे कस्य कृते साक्ष्यं वदत्विति मृतान्तरः साक्षी नेति। मृतेनान्तरं अवकाशो व्यवधानं यस्य स मृतान्तरः। सुबो.२।७०

(५) यस्मिन्नर्थे पुत्रस्य विशेषज्ञानं नास्ति तत्रैव परं मृतान्तरस्याऽसाक्षित्वम्। यत्र पुनः सविशेषमेव पुत्रो जानाति ऋणादिकं तत्र मृतान्तरोऽपि साक्षी भवत्येवेति। *स्मृसा.१०२

(६) योऽर्थः श्रावयितव्यः पूर्वपक्षः प्रतिवादिना भवेत्, असति तस्मिन्ननिवेशिते, अर्थिनि चासति निवेशयितरि, क्व कस्मिन्नर्थे कीदृशे वाऽर्थे वदति साक्षित्वम्। स केन चोद्दिष्टः। अथवा स्वयं निवेशयति, न साक्षी, अर्थी सः। अथाऽहं साक्षीति ब्रवीति, तस्यान्यैः साक्षिभिः प्रयोजनम्। न तद्वचः प्रमाणम्, अस्वार्थवचनाद् (?) रागीत्यसाक्षी सः। नाभा.२।१४१

(७) अयमत्र साक्षीति ज्ञानवानान्तरोऽर्थिप्रत्यर्थिनोरन्यतरः स मृतो यस्येति मृतान्तरः। तस्यासाक्षित्वमपि सहेतुकं विवृतं नारदेन— योऽर्थ इत्यादिना।

येनार्थिना प्रत्यर्थिना वा योऽर्थः स्वीयः श्रावितव्यः स्यात् श्रावणीयत्वेनाभिमतो भवेत् तस्मिन् अर्थिप्रत्यर्थिनोरन्यतरस्मिन् असति मृते प्रोषिते वाऽभिमतार्थे चानिवेदिते स साक्षित्वं क्व कस्मिन्नर्थे वदतु कस्य वा कृते वदत्वित्यर्थः। सामान्यतो य आवयोः कश्चिद्व्यवहारसंबन्धोऽस्ति तत्र त्वया साक्षिणा भाव्यमित्येतावन्मात्रमुक्तं, विशिष्य च व्यवहारविषयो न तस्मै श्रावितः श्रावयिता च नास्ति स पृष्टोऽपि विशिष्य विषयाऽज्ञानादसाक्षीति यावत्। इदमेवाभिप्रेत्योक्तम्— 'मुमूर्षुश्राविताद्दृते' इति। मुमूर्षुग्रहणमश्रावणप्रयोजकाभावपरम्। व्यप्र.११५

(८) मिता.टीका—अनेन 'मृत उक्तान्यतमः अन्तरे साक्ष्यस्य स्वीकारभाषणयोर्मध्ये यस्य स मृतान्तर' इति व्युत्पत्तिः सूचिता। बाल.२।७०

**सन्तोऽपि न प्रमाणं स्युर्मृते धनिनि साक्षिणः।**
**अन्यत्र श्राविताद्यस्मात्स्वयमासन्नमृत्युना ॥**

---

* अत्रत्यं 'असहायभाष्यम्' बहुस्थलेषु लेखकप्रमादाद्गलितमतो न लगते, तस्मान्नोद्धृतम्।

+ व्यक. मितागतं स्मृसागतं च। विता. मितागतम्। साक्ष्ये तु नासौ साक्षित्वमर्हति॥); व्यप्र.११३ मितावत्; व्यउ.४८ न स (न च) शेषं मितावत्; व्यम.१६ सूचीत्युक्तः (स्वयमुक्तिः); विता.१६१ मितावत्; बाल.२।६९ सूचीत्युक्तः (स्वयमुक्तः) न स (न च); प्रका.५३ मितावत्; समु.३२ मितावत्; विव्य.१३ मेवैत्य (मागत्य).

(१) नासं.२।१४१ तु (ति); नास्मृ.४।१६२; अभा.६५ र्थः (र्थे); मिता.२।७०; व्यमा.३२७; व्यक.४८ तु (ति); स्मृच.८१; स्मृसा.१०२ क्व तद्वदतु (कृतस्त्वदनु); व्यचि.४१ तद्वदतु (तदुत्तर); स्मृचि.४६ मनुः; चन्द्र.१३८ क्व तद्वदतु (कचिदेव तु); व्यसौ.४६; व्यप्र.११५ श्रावयितव्यः (तु श्रावितव्यः); व्यउ.४८; विता.१६१ (=); प्रका.५३; समु.३२.

* व्यचि. स्मृसागतम्।

(१) नासं.२।८२ श्राविताद्यस्मात् (श्रावितं यत्स्यात्); नास्मृ.४।९४; अभा.५०; व्यमा.३२७ ताद्यस्मात् (तं स्याच); व्यक.४८ ताद्यस्मात् (तं यस्य); व्यसौ.४६ नासंवत्; प्रका.५३ (पुत्रे तु श्राविता ये स्युः स्वयमासन्नमृत्युना।) बृहस्पतिः; विव्य.१३ तात् (तं).

(१) मृते धनिनि यदि कश्चिद्वदति— मम धनिना अमुकामुकगौर्महिषी बलीवर्दो वा अमुककेदारो वा अमुकप्रयोजने पर्वणि वा प्रतिपादितः। तथा चाऽमुकाः साधवः साक्षिणो नाम विद्यन्ते। अन्योऽपि यदि कश्चिद्वदति 'तव पित्रा मम द्रम्मशतं दातव्यं, अमुकामुकसाक्षिण' इति। ततो मृते धनिनि मृतान्तरे सन्तोऽपि साधवः साक्षिणो न प्रमाणं स्युः। अन्यत्र स्वयं श्रावितादिति— यदा पुनः तेनैव धनिना समासन्नमृत्युना कथञ्चित्साक्षिणामत्रैव स्वमुखेनैव कोऽप्यर्थः श्रावितः स्यात्। अथवा असौ मुमूर्षुः केनापि धनिना जल्पयितः, तेनापि समासन्नमृत्युना सोऽर्थः स्वमुखेन प्रतिपन्नः। ततस्तस्मिन्मृतेऽपि साक्षिणः प्रमाणमिति। अभा.५०

(२) यदि तु पुत्रादिषु पित्रादिना ज्ञापितं सकलमन्यत एव श्रुतं तदा तत्रासौ भवत्येव साक्षी। मुमूर्षुश्रावितत्वमुपलक्षणम्। अन्यथा अदृष्टार्थतापत्तेः। व्यमा.३२७

(३) 'जीवन्तस्त्वेव साक्षिण' इत्युक्तम्। जीवन्तोऽपि न प्रमाणं स्युः। वेदाः प्रमाणं स्मृतयः प्रमाणमिति यथा। पुत्रेण विना त्वं साक्षीत्येवमाह यः, मृते तस्मिन् कः साक्षीकृतः केन चेत्यविज्ञानात् तेषां साक्षित्वे पुनः प्रमाणेन प्रयोजनमित्यनवस्था स्यात्। किमेष एवोत्सर्गः? न, मुमूर्षुणा यच्छ्रावितं स्यात्— एते साक्षिणोऽस्मिन्नर्थ इति अन्येभ्यः। तत्र मृतेऽपि साक्षिणः प्रमाणं तेषां साक्षित्वे इतरे प्रमाणमिति। अतोऽन्यत्राप्रमाणम्, एते तत्र साक्षिण इति पत्राभावात्। इतरत्र साक्षित्वे तन्मुखादेव श्रोतणां विद्यमानत्वात् प्रमाणम्। नाभा.२।८२

**न हि प्रत्यर्थिनि प्रेते प्रमाणं साक्षिणां वचः।**
**साक्षिमत्कारणं तत्र प्रमाणं तस्य जीवतः॥**

(१) अत्राऽर्थी धनी उच्यते। प्रत्यर्थी ऋणी। तस्मिन्प्रत्यर्थिनि ऋणिके प्रेतीभूते साक्षिणां वचः वचनं न हि प्रमाणं, यतः साक्षिमत्कारणं तस्य जीवत एव च, न मृतस्येति। अभा.५०

(२) तथाभूत एव विषये प्रत्यर्थिनि प्रेते न प्रमाणं साक्षिणां वचः। विद्यमानसाक्षिकं करणं पत्रं प्रमाणम्। तत्र साक्षिव्यतिरिक्तस्य पत्रस्य तेषां साक्षित्वे विद्यमानत्वात्। नाभा.२।८३

(१) नासं.२।८३ कार (कर) तस्य जीवतः (स्याद् विनिश्चये); नास्मृ.४।९५; अभा.५०; व्यसौ.४६ प्रेते (मृते) शेषं नासंवत्.

मुमूर्षुश्रावितस्य साक्षित्वम्

**श्रावितश्चातुरेणाऽपि यस्त्वर्थो धर्मसंहितः।**
**मृतेऽपि तत्र साक्ष्यं स्यात् षट्सु चान्वाहितादिषु॥**

(१) अत्र आतुरेण पित्रा पुत्रपरोक्षेऽपि योऽर्थो धर्मदत्तादिसाक्षिणां पुरतः श्रावितः स प्रमाणम्। तथा षट्सु चान्वाहितादिषु। तस्मिन्नातुरत्वे समुपस्थिते संजातपश्चात्तापो यद्वदति साक्षिपुरतः— यथा मया अमुकपार्श्वात्सारममुकं वसु असारप्रतिवस्तुना अन्वाहितं तदर्पणीयम्। तथाऽमुकसत्ककं वसु मया हृतं तन्मोक्तव्यम्, तथाऽमुकेनाऽमुकं वसु मम निक्षिप्तं तदर्पणीयम्। तथाऽमुकं मया बलादवष्टब्धं तन्मोक्तव्यम्। तथाऽमुकं याचितं तदर्पणीयम्, अमुकं परोक्षं भुक्तं तन्मोक्तव्यमिति। एतेषु षट्सु अन्वाहितादिषु मृतेऽपि तस्मिन्साक्षिणः प्रमाणानीति। अभा.५०

(२) एवं च यदुक्तं स्मृत्यन्तरे —'न्यासान्वाहितविक्रीते हृते दत्तेऽथ याचिते। मुमूर्षुश्रावितर्णे च पृच्छेत्साक्ष्यं मृतान्तरम्'॥ इति तच्छ्रावितस्य साक्षित्वं मृतेऽपि श्रावकेऽर्थिनि नापैतीति ज्ञापनार्थम्। न पुनर्मृतान्तरस्यापि क्वचित्साक्षित्वविधानार्थमित्यवगन्तव्यम्। मृतान्तरस्य साक्षित्वासंभवात्। स्मृच.८२

(३) मिता.टीका—अपिर्मुमूर्षुसमुच्चायकः। धर्मसंज्ञितो धर्माख्य इत्यर्थः। तत्स्वरूप इति यावत्। धर्मज्ञानविषयो वा। 'धर्मसंहित' इति पाठान्तरम्। धर्मयुक्त

(१) नासं.२।८४ श्चा (स्त्वा) क्ष्यं (क्षी); नास्मृ.४।९६; अभा.५०,६२,६६; मिता.२।७० तश्चा (तोऽना) क्ष्यं (क्षात्); व्यक.४८ तश्चातु (तेनान्त); स्मृच.८१ तश्चा (तेना) क्ष्यं (क्षी) चान्वा (त्वन्वा) स्मृत्यन्तरम्; व्यसौ.४६ (=) तश्चा (तोऽना); व्यप्र.११५ क्ष्यं स्यात् (क्षी स); व्यउ.४८ तश्चा (तोऽना) क्ष्यं (क्षी) दिषु (त्रिषु); विता.१६१ तश्चा (तोऽना) क्ष्यं (क्षी); प्रका.५३ वितावत्, स्मृत्यन्तरम्; समु.३२ चान्वा (त्वन्वा) शेषं प्रकावत्, स्मृत्यन्तरम्.

इत्यर्थः । तदा । तत्रेति । तस्मिन्दैवान्मृतेऽपि । तत्रार्थे मृतान्तरोऽपि एतेषु षट्सु साक्षी स्यादित्यर्थः ।

बाल.२।७०

कीदृशाः साक्षित्वं नार्हन्ति

**नार्थसंबन्धिनो नाप्ता न सहाया न वैरिणः ।**
**न दृष्टदोषाः प्रष्टव्याः साक्षिणः प्रतिदूषिताः ॥**

(१) तत्र परीक्षा साक्षिप्रमाणच्छेद्या । न च वाक्पारुष्यविषय एव केवलमियं साक्षिणां साधुता विवक्षिता, किन्तु यत्र यत्र साक्षिप्रमाणावतारः, तत्राऽपि यथोच्यमाना अर्थिसंबन्धिप्रभृतयः साक्षिणो न भवन्ति । तत्रार्थसंबन्धी यः स्यात् द्वेष्टि, विवक्षितार्थसंसिद्धा चार्थसिद्धिः । आप्तस्त्विष्टः स्वकुल्यश्चोच्यते । तथा सहाया इति एकार्थसंभूयकारिणः । वैरी शत्रुः । दृष्टदोषस्त्वन्यकार्येषु कूटसाक्षित्वादिनाऽपि ज्ञायते । अन्यशास्त्रमतेन वाग्दण्डादिसामीप्याच्च । यदा चाऽमी प्रतिवादिना प्रतिदूषिता भवन्ति प्रश्नकाले, तदा न प्रष्टव्याः । अभा.६८

(२) अभोज्यान्नानां तु साक्ष्यानधिकारं न्यायसिद्धमेवाभिप्रेत्य नारदेनोक्तम्— नार्थसंबन्धिन इति ।

विश्व.२।७३

(३) अर्थसंबन्धिनो दानग्रहणसंबन्धाः । ते भयाद् द्वेषाद् वाऽन्यथा ब्रूयुः । दृष्टदोषाः अकार्यकारिणः । तेऽपि निःश्रीकत्वान्न प्रष्टव्याः । नाभा.२।१५६

**दासनैकृतिकाश्राद्धवृद्धस्त्रीबालचाक्रिकाः ।**
**मत्तोन्मत्तप्रमत्तार्तकितवग्रामयाजकाः ॥**

(१) तत्र दासो गृहजातः । नैकृतिकः छलव्यवहारी । अश्राद्धो न श्राद्धमर्हतीति । दुर्बलादिर्वृद्धः संव्यवहारायोग्यः, लुप्तस्मृत्यादिकरणत्वात् । उन्मत्तो वायुदोषात् । प्रमत्तः प्रमादशीलः । आर्तः व्यसनार्तः । कितवो द्यूतकारः । ग्रामयाजकः ग्रामर्त्विक् । अभा.६८

(२) एवं सर्वेऽभोज्यान्ना अनुक्रान्ताः । विश्व.२।७३

(३) अश्रद्धः श्रद्धारहितः । व्यक.४६

(४) चाक्रिकः कुलालः । अप.२।७१

(५) नैकृतिकः पररन्ध्रान्वेषणशीलः । चाक्रिकः वैतालिकः । स्मृच.७८

(६) वृद्धः ग्लानेन्द्रियः । बाल अजातविवेकः ।

व्यचि.४३

(७) दासोऽस्वतन्त्रत्वात् स्वामिकार्ये च नित्यव्यापृतत्वात् । निकृत्या चरतीति नैकृतिकः । श्रद्धा नाम परलोकदेवब्राह्मणधर्माधर्माः सन्तीत्येवंरूपः प्रत्ययः । स यस्य नास्ति सोऽश्रद्धः अश्रद्दधानः । सोऽपि संभिन्नबुद्धित्वाद् यत्किञ्चनकारी । वृद्धस्त्रीबालाः अशक्तत्वादज्ञानाच्च । चाक्रिकः अश्रोत्रियः कार्यं प्रति प्रतिषिध्यते । चक्रेण जीवतीति चाक्रिकः उपमर्दनप्रधानत्वात् । मत्तोन्मत्तप्रमत्तार्ताः उक्तावधारणविचारासामर्थ्यात् । कितवो व्यसनित्वादविश्वास्यः । ग्रामयाजको ग्रामार्थं दृष्टादृष्टव्यापारकारी । सोऽपि वृत्तिच्छेदभयान्न धर्ममपेक्षते ।

नाभा.२।१५७

(८) चाक्रिकः तैलिकः । प्रमत्तः सदाऽनवहितः ।

व्यप्र.११८

**महापथिकसामुद्रवणिक्प्रव्रजितातुराः ।**
**व्यङ्गैकश्रोत्रियाचारहीनक्लीबकुशीलवाः ॥**

(१) महापथिकः दीर्घाध्वगः । सामुद्रो वणिक् समुद्रयात्रानिरतः । प्रव्रजितो भिक्षुः । आतुरो रोगी । व्यङ्गः अङ्गहीनः । एकः एक एव । श्रोत्रियः छान्दसः । आचारहीनः प्रच्युतः स्वधर्मात् । क्लीबः षण्ढः प्रजननाऽसमर्थः । कुशीलवश्चारण इति । अभा.६८

(२) सामुद्रवणिक् समुद्रयायी । आतुरः मुमूर्षुः । युग्मौ द्वौ । एकः प्रसिद्धः । क्लीबः षण्ढः निरुत्साहो वा ।

(१) **नासं**.२।१५६; **नास्मृ**.४।१७७; **अभा**.६८; **विश्व**.२।७३ (न दृष्टदोषाः कर्तव्या न व्याध्यार्ता न दूषिताः); **व्यमा**.३२४ नार्थ (नात्म) (अदृष्टदोषाः कर्तव्या न व्याध्यार्ता न दूषिताः) मनुनारदौ; **विव्य**.१३ विश्ववत्.

(२) **नासं**.२।१५७ श्रा (श्र); **नास्मृ**.४।१७८; **अभा**.६८; **विश्व**.२।७३ काश्राध्द (कश्रान्त) चाक्रिकाः (धिकृताः) पू.; **अप**.२।७१ श्राद्ध (शुद्ध); **व्यक**.४५ श्रा (श्र) चाक्रिकाः (वञ्चकाः); **स्मृच**.७७; **पमा**.९७ काश्राद्ध (ककुद्ध); **व्यचि**.४२ श्रा (श्र); **व्यसौ**.४३ पमावत्; **व्यप्र**.११७ श्रा (श्र); **प्रका**.५०; **समु**.२८.

(१) **नासं**.२।१५८ व्यङ्गै (लुब्धै); **नास्मृ**.४।१७९; **अभा**.६८; **अप**.२।७१ व्यङ्गै (युग्मै); **व्यक**.४५; **स्मृच**.७७ अपवत्; **पमा**.९७ द्र (द्रि); **व्यचि**.४२; **चन्द्र**.१४० व्यङ्गै (व्यङ्ग्यै); **व्यसौ**.४३; **व्यप्र**.११७; **प्रका**.५० अपवत्; **समु**.२८ अपवत्.

कुशीलवः नर्तकः । अप.२।७१

(३) कुशीलवः रङ्गोपजीवी । व्यक.४६

(४) सामुद्रवणिक् वहित्रयायी । स्मृच.७८

(५) एकः श्रोत्रियः, द्वयोः श्रोत्रिययोः विहितत्वात् । सोऽपि अननुमतः । व्यचि.४३

(६) महापथिको दीर्घाध्वनिकः । सोऽपि कार्यगौरवान्न धर्ममपेक्षते अस्वतन्त्रश्चेति । सामुद्रवणिक्, सामुद्रश्चासौ वणिक् चेति सामुद्रवणिक् । अप्सु मूत्रपुरीषाद्युत्सर्गात् सामुद्रश्च वणिक् चेति वा । प्रव्रजितः श्रोत्रियादिसाहचर्यात् परिव्राजकः । इह श्रमणकादिः प्रव्रजितः । आतुरो व्याधितः । तयोर्धर्मापेतत्वाद् अन्यचित्तत्वादसामर्थ्यात् प्रमादप्रसङ्गाच्च । लुब्धः एकश्च । लुब्धोऽर्थार्थमकार्यं न परिहरेत् । एकोऽपि प्रमादात्तत्त्वं नावधारयेत् । श्रोत्रियः, पूर्वत्र 'श्रोत्रिया' इति बहुवचननिर्देशात् त एव मिश्राः प्रतिषिद्धाः । प्रव्रजितानामयमपि विशेषः इह मिश्रोऽपि प्रतिषिध्यते । आचारहीनः स्वधर्मपरिभ्रष्टः किमकार्यं न कुर्यात् । क्लीब उपहतपुंस्त्वः पूर्वकृतदोषात् । कुशीलवो रङ्गोपजीविविशेषः अनृतप्रधानत्वात् । नाभा.२।१५८

**नास्तिकव्रात्यदाराग्नित्यागिनोऽयाज्ययाजकाः ।**
**एकस्थालीसहायारिचरज्ञातिसनाभयः ॥**

(१) तत्र नास्तिको मिथ्यादृष्टिः । व्रात्योऽकृतसंस्कारः । दाराग्नित्यागिनः धर्मभार्यावैतानाग्नित्यागिनः । अयाज्ययाजकाः निन्दितयाजकाः । एकस्थाली सहभोजनः । सहायारी मित्रशत्रू । चरो राजनियुक्तः । ज्ञातिः बन्धुः । सनाभिः सोदर्य इति । अभा.६८

(२) एकस्थाली एकपाकभोजी । अरिधरः शस्त्रधारी । व्यक.४६

(३) एकस्थालीत्यस्य द्वेधा विग्रहः । एका पाकसाधनस्थाली यस्य पुरुषस्य विप्रतिपन्नयोरन्यतरेण पुरुषेण सह यस्य वा एकं भोजनस्थालं स एकस्थाली । एकपाकः सहभोजनो वेति यावत् । अरिषु चरतीत्यरिचरः । शत्रुसंबन्धीति यावत् । सनाभयस्तु कात्यायनेन दर्शिताः । 'मातृष्वसुः सुताश्चैव सोदर्यासुतमातुलाः । एते सनाभयस्तूक्ताः साक्ष्यं तेषु न योजयेत्' इति ॥ *स्मृच.७८

(४) व्रात्यः उपनयनसमयेऽकृतोपनयनः, एकस्थाली वादिना सहैकपाकभोजी, अरितरः परमवैरी, ज्ञातिः सनाभ्यतिरिक्तसपिण्डः । चन्द्र.१४०

(५) एतेऽपि धर्मनिरपेक्षत्वान्न प्रमाणम् । सनाभयो मात्रा योनिसंबद्धाः । नाभा.२।१५९

(६) एकस्थालीसहायः एकपाकभोजी । सहायः अन्यतरसाहाय्यकारीति मित्रचण्डेश्वरौ । मदनरत्नाकरस्तु एकस्थाली सहाय इति विशेषणद्वयं पृथक्कृत्य स्थाली स्थाल्यधिकरणकः पाको लक्ष्यते स एको यस्येत्येकस्थालीति व्याचख्यौ । समासान्तविधेरनित्यत्वादेकस्थालीत्यत्र 'नद्यृतश्च' (व्यासू. ५।४।१५३) इति न कप् । अर्धपिप्पलीत्यादिवन्न ह्रस्व इति च समादधे । अरिचरः भूतपूर्वः शत्रुः । 'भूतपूर्वे चरट्' (व्यासू. ५।३।५३) । ज्ञातयः सगोत्राः । व्यप्र.११८

**प्राग्दृष्टदोषशैलूषविषजीव्याहितुण्डिकाः ।**
**गरदाग्निदकीनाशशूद्रापुत्रौपपातिकाः ॥**

(१) तत्र प्राग्दृष्टो दोषो यस्य स प्राग्दृष्टदोषः । प्राग्जन्माशुभदोषकर्मपरिणामप्राप्तरोगचिह्नः, तत्कर्मा वा तदाऽऽसीत् इत्यास्तेनादिदृष्टदोषोऽपीति । शैलूषो नटः । विषजीवी विषक्रेता (विक्रेता ?) वा । आहितुण्डिकः सर्पादिदन्दशूकग्राही । गरदो द्वेषसंबन्धाद्विषस्य दाता । अग्निदो गृहादिदाहकः । कीनाशः क्षुद्रः कदर्यो वा । शूद्र्याः पुत्रः शूद्रीपुत्रः । औपपातिकः उपपातक-

(१) **नासं**.२।१५९ ली (लि); **नास्मृ**.४।१८०; **अभा**.६८; **अप**.२।७१ ली (नि) रि (नि) चर (चार); **व्यक**.४५; **स्मृच**.७७; **पमा**.९७ यारी ( वासी ); **व्यचि**.४२; **चन्द्र**.१४० (=) दाराग्नि (कुष्ठयाग्नि) चर (तर); **व्यसौ**.४३ दारा (कुहका); **व्यप्र**.११७; **प्रका**.५०; **समु**.२८.

* पमा., व्यचि. स्मृचगतम् ।

(१) **नासं**.२।१६० त्रौ (त्रो) ति (त); **नास्मृ**.४।१८१ व्या (व्य); **अभा**.६८ द्रापुत्रौ (द्रीपुत्रो); **अप**.२।७१ ण्डि (ण्ड) पुत्रौ (पत्यौ); **व्यक**.४५-४६ ग्नि (ग्न्यु) त्रा (त्रो); **स्मृच**.७८ पुत्रौ(पत्यु) ति (त); **पमा**.९७ प्राग् (वाग्) लूष (लूषा) व्या (व्य) (गरदछद्म्यग्निदाता शूद्रापत्युपपातिकाः); **व्यचि**.४३ ण्डि (ण्ड) त्रौ (त्रो) तिकाः (तिताः); **चन्द्र**.१४० त्रौ ( त्रो ) तिकाः ( दिताः ); **व्यसौ**.४३ त्रौ ( त्रो ) तिकाः (तिताः); **व्यप्र**.११७ व्या (व्य) त्रौ (त्रो) तिकाः (तिताः); **प्रका**.५० स्मृचवत्; **समु**.२८-२९ स्मृचवत्.

संयोगात् । अभा.६८-६९

(२) कीनाशः हालिकः । अप.२।७१

(३) विषजीवी विषस्य संग्रहणरक्षणादिव्यापारे नियुक्तः । स्मृच.७८

(४) शैलूषो नटभिन्नरङ्गोपजीवी विवक्षितः । विषजीवी विषवैद्यः । व्यचि.४३-४४

(५) एतेऽधर्मप्रायाः साहसिकत्वात् । गरदो विषदः । अग्निदो गृहाणां दाहकः । रूढ एवायं गृहदाहकादिषु । एतौ निःश्रीकत्वात् । कीनाशः कृपणः, परकर्मकर इत्यन्ये । शूद्रेव शूद्रा द्विजातिस्त्री व्यभिचारिणी, तत्पुत्रः । उपपातकाः उपपातकिनः । नाभा.२।१६०

(६) शैलूषः स्त्रीणां नर्तयिता । कुशीलवस्तु रङ्गोपजीवी नट इति भेदः । विषजीवी विषक्रयजीवीति मदनरत्ने । उपपातितः उपपातकीति कल्पतरुः । मदनरत्ने तूपपातक इति पठितम् । उप समीपं पातकं यस्येति विगृह्य पातकयुक्त इति व्याख्यातं च । व्यप्र.११८

**क्लान्तसाहसिकश्रान्तनिर्धनान्त्यावसायिनः ।**
**भिन्नवृत्तासमावृत्तजडतैलिकमूलिकाः ॥**

(१) तत्र क्लान्तः खिन्नः । साहसिकः प्रसह्याऽयुक्तकारी । श्रान्तः निःसङ्गः । निर्धनो द्यूतादिव्यसनदोषाद् हृतसर्वस्वः । अन्त्यावसायी चण्डालः । भिन्नवृत्तो मिथ्यादृष्टिः । असमावृत्तो ब्रह्मचारी प्राक् स्नानात् । जडो निरिन्द्रियः । तैलिकः चक्रादितैलिकचाक्रिकः । मूलिको मूलद्रव्यविक्रयजीवन इति । अभा.६९

(२) निर्धूतो बहिष्कृतः । अन्त्यावसायी प्रतिलोमजः । भिन्नवृत्तो दुराचारः । पौपिकः पूपादिविक्रयी । अप.२।७१

(३) अश्रान्तः अयोग्यकारी । निर्धूतः ग्रामराजकुलश्रेण्यादिभिर्निःसारितः । भिन्नवृत्तः स्वधर्मानवस्थितः । मूलिकः, मूलं विप्रलम्भः, तत्कारी । व्यक.४६

(४) असमावृत्तो नैष्ठिकब्रह्मचारी । तैलिकः तिलघाती महायान्त्रिक इति यावत् । स्मृच.७८

(५) अन्त्यावसायी क्रोधादिना संस्कृताग्निनिर्वापकः । भिन्नवृत्तः स्वकर्मत्यागी । असमावृत्तः अकृतसमावर्तनः । तैलिकः तिलविक्रयी । *व्यचि.४४

(६) 'स्तेनाः साहसिका' इति प्रसह्यकारिण इत्युक्ताः । इह त्वप्रत्ययकारी । अशान्तोऽयोग्यकारी । अयोग्यकारित्वाद् यत् किञ्चनकारित्वाच्च । निर्धूतो ग्रामराजकुलश्रेण्यादिभिर्निष्कासितः वर्जितः, प्रत्यक्षदृष्टदोषत्वात् । अन्तावसायिनः चण्डालादयः, अयोग्यत्वात् साध्वाचारे । भिन्नवृत्तयः स्वधर्मेऽनवस्थिताः तेनैव स्वहस्तो दत्तोऽप्रामाण्ये । असमावृत्तः, पूर्वं स्त्रीबाल इत्युक्तत्वादिदानीं ब्रह्मचारी गृह्यते नैष्ठिकः । झल्लश्चारणजातीयः । तैलिको महायन्त्रिकः । मूलिको मूलैर्विप्रलम्भकः । गुरुकुलाधीनत्वादुपमर्दकत्वात् विप्रलम्भकत्वाच्च नैष्ठिकादयः । नाभा.२।१६१

(७) क्लान्तोऽतिखिन्नः । अश्रान्तोऽनवरतकर्मकारीति मदनरत्ने । अशान्त इति पठित्वाऽयोग्यकर्मकारीति रत्नाकरे । निर्धूतो बान्धवैस्त्यक्त इति मदनरत्ने । ग्रामराजकुलश्रेण्यादिभिर्निःसारितः इति रत्नाकरे । लोकभयशून्य इति भवदेवः । मूलं विप्रलम्भस्तत्कारीति कल्पतरुः । 'मूलकर्म तु कार्मणम्' इत्यमरकोशात्तत्कारीति तु युक्तम् । अपरार्केण तु 'पौपिक' इति पठित्वा पौपिकः पूपादिविक्रयीति व्याकृतम् । व्यप्र.११८

**भूताविष्टनृपद्विष्टवर्षनक्षत्रसूचकाः ।**
**अघशंस्यात्मविक्रेतृहीनाङ्गभगवृत्तयः ॥**

---

(१) **नासं**.२।१६१ कश्रा (काशा) धनान्त्या (धूतान्ता) त्तास (त्यस) जड (झल्ल); **नास्मृ**.४।१८२; **अभा**.६९ निर्धनान्त्या (निर्धान्तान्त्या); **अप**.२।७१ धना (धूता) त्तास (त्ताः स) मूलि (पौपि); **व्यक**.४६ धना (धूता); **स्मृच**.७८ (कान्तसाहसिकाशान्तनिर्धूतान्तावसायिनः । हीनवृत्तासमावृत्ता जडतैलिकपौपिकाः॥); **पमा**.९८ वृत्त(वृत्य); **व्यचि**.४३ कश्रा (काश्रा) धना (धूता); **चन्द्र**.१४० सिक (सिका) धनान्त्या (धूताग्न्या) मू (लौ); **व्यसौ**.४३ चन्द्रवत्; **व्यप्र**.११७ सिक(सिका)धना (धूता); **प्रका**.५० पूर्वार्धं नासंवत् ,त्तज (त्ता ज) तैलिकमूलिकाः (लैलकपौपिकाः); **समु**.२९ पूर्वार्धं नासंवत् ,(भिन्नवृत्तसमावृत्तजडतैलपरैपिकाः).

* चन्द्र. व्यचिगतम् ।

(१) **नासं**.२।१६२; **नास्मृ**.४।१८३; **अभा**.६९; **अप**.२।७१; **व्यक**.४६ भग (बक); **स्मृच**.७८; **पमा**.९८; **व्यचि**.४३ वृत्तयः (विक्रयः); **चन्द्र**.१४०; **व्यसौ**.४४; **व्यप्र**.११७-११८; **प्रका**.५०; **समु**.२९.

(१) तत्र भूताविष्टः सग्रहः । नृपद्विष्टः राजद्विषः । वर्षनक्षत्रसूचकः सांवत्सरसूचकः । अघशंसी पापस्तेनो हिंस्रो वा । आत्मविक्रेता धनेन दासत्वमुपगतः । हीनाङ्गो बाहुपादहीनः । भगवृत्तिः स्त्रीजीवनः मुखभगो वा । अभा.६९

(२) अघशंसी अभिशापकृत् । भगवृत्तिः स्ववृत्तये भार्याया वेश्यात्वकारी । अप.२।७१

(३) वर्षसूचकः वृष्टिसूचकः । नैमित्तिक इति यावत् । नक्षत्रसूचकः ज्यौतिषवृत्तिः । अघशंसी परदोषप्रकाशकः । *स्मृच.७८

(४) अघशंसी वाच्यताभिधायी । हीनाङ्गः न्यूनपरिमाणावयवः । चन्द्र.१४१

(५) भूताविष्टः पिशाचादिगृहीतः, अस्वतन्त्रत्वात् । नृपद्विष्टो दोषवत्त्वात् । न हि स्वधर्मस्थं राजा द्वेष्टि । वर्षसूचको नैमित्तिकः । नक्षत्रसूचको, ज्योतिषवृत्तिः । सत्यानृतप्रायत्वात् प्रतिषिद्धत्वाचाऽऽजीवकस्य । अघशंसी परदोषकथनव्यसनी, धर्मनिरपेक्षत्वात् । आत्मविक्रेता अकार्यकारित्वात् दत्तस्वहस्तोऽप्रमाणत्वात् । हीनाङ्गः पूर्वकृतदोषत्वात् । भगवृत्तिः स्त्रीवृत्तिमनुजीवति, प्रतिषिद्धसेवित्वात् कृपणत्वाच । नाभा.२।१६२

(६) हीनाङ्गः उचितपरिमाणातिन्यूनाङ्गः । व्यङ्गस्तु छिन्नाङ्गुल्यादिरिति भेदः । भगवृत्तिः भार्यादास्यादिसंभोगशुल्कोपजीवी । व्यप्र.११९

**कुनखी[1] श्यावदन्तश्च मित्रध्रुक्शठशौण्डिकाः ।**
**ऐन्द्रजालिकलुब्धोग्रश्रेणीगणविरोधिनः ॥**

(१) उग्रः क्रूरः । क्षत्रियाद्वा शूद्रायां जातः । अभा.६९

(२) कुनखिश्यावदत्श्वित्रिणां पूर्वजन्मकृतदोषत्वात् । मित्रध्रुक् अकार्यकारित्वात् । 'कृतघ्ने नास्ति निष्कृतिरि'त्युक्तम् । शठः स्वकार्यप्रधानत्वात् । शौण्डिको मद्यविक्रयी स्ववर्गादन्यत्र मद्यप्रायत्वात् स्वस्थास्वस्थावस्थेन ज्ञायते । ऐन्द्रजालिको य इन्द्रजालेन चरति स विप्रलम्भक एव । लुब्ध एव लुब्धः । सोऽर्थार्थे न किञ्चिन्न करोति । उग्रः क्रूरः । सोऽपि पशुवत् प्रवर्तते । श्रेणीविरोधिनो गणविरोधिनश्च महाजनोपघातप्रायत्वात् । नाभा.२।१६३

**वधकश्[1]चित्रकृत् मङ्खः पतितः कूटकारकः ।**
**कुहकः प्रत्यवसितस्तस्करो राजपूरुषः ॥**

(१) वधकः सौनिकः । चित्रकृल्लेख्यक्रियोपजीवी । मङ्खः कपटजीवी । पतितः पातकी । कूटकारकः कूटलेख्यककार्षापणादिकर्ता । कुहकः मन्त्रौषध्याद्युपायाश्चर्याद्वशीकरणादिकर्ता । प्रत्यवसितः प्रव्रज्यापतितवृत्तः । तस्करश्चौरः । राजपुरुषः सेवक इति । अभा.६९

(२) शङ्खः बलीवर्दनाटनेन भिक्षाटनशीलः । व्यक.४६

(३) मङ्खः ( मूर्खः ? ) देवतां गृहीत्वा याचकः । कुहको दाम्भिकः । स्मृच.७८

(४) प्रत्यवसितः त्यक्तव्रतः । राजपुरुषो वाच्यः । चन्द्र.१४१

(५) वधकृत् लुब्धकादिः, वध्यानां वा वधे नियुक्तः । सोऽप्यकार्यकारित्वात् । चित्रकृत् चित्रकरः, प्रतिषिद्धवृत्तित्वात् । मङ्खो देवतां गृहीत्वा याचकः, देवताद्वारेण लोकस्य विप्रलम्भकत्वात् । पतितोऽसंभाष्यत्वात् । कूटकारकोऽद्रव्यं द्रव्यवत् कृत्वा विप्रलम्भकत्वादकार्यकारी । कुहको दाम्भिकः । सोऽपि परवञ्चनार्थमुद्धतचित्तत्वात् । प्रत्यवसृतः प्रव्रज्याया निवृत्तः । सोऽप्यसंभाष्यत्वान्निःश्रीकत्वाच्च । तस्करः प्रसह्यचोरः प्रतिरोध-

---

* पमा. स्मृचवत् ।

(१) **नासं**.२।१६३ दन्तश्च (दन् श्वित्री); **नास्मृ**.४।१८४ श्याव (श्याम); **अभा**.६९ शौण्डि (कौशि) लिक (लक); **अप**.२।७१ (कुनखश्यावदच्छ्वित्रिमित्रध्रुक्शठशौण्डिकाः); **व्यक**.४६ अपवत्; **स्मृच**.७८ (कुनखिश्यावदच्छ्वित्रिमित्रध्रुक्शठशौण्डिकाः); **पमा**.९८; **व्यचि**.४३ स्मृचवत्; **चन्द्र**.१४० (=) दन्तश्च (दच्चित्रि); **व्यसौ**.४४ दन्तश्च मित्रध्रुक् (दन्श्वित्रिमित्रद्विट्); **व्यप्र**.११८ स्मृचवत्; **प्रका**.५० स्मृचवत्; **समु**.२९ स्मृचवत्.

(१) **नासं**.२।१६४ कश्चि (कृच्चि) सित (सृत); **नास्मृ**.४।१८५ श्चित्रकृन्मङ्खः (श्चर्मकृत्पङ्गुः); **अभा**.६९ नास्मृवत्; **अप**.२।७१ मङ्खः (नग्नः); **व्यक**.४६ मङ्खः (शङ्खः); **स्मृच**.७८ कश्चि (कृच्चि) मङ्खः (मूर्खः); **पमा**.९८ मङ्खः (मूर्खः); **व्यचि**.४३ व्यकवत्; **चन्द्र**.१४० व्यकवत्; **व्यसौ**.४४ व्यकवत्; **व्यप्र**.११८ व्यकवत्; **प्रका**.५० स्मृचवत्; **समु**.२९ स्मृचवत्.

कादिः । स्तेनः छिद्रकारी पूर्वोक्तः । राजपूरुषो राजार्थं प्रवृत्तः, यतो धनं ततो गृह्यमाणकरणत्वात् ।

नाभा.२।१६४

[१]**मनुष्यपशुमांसास्थिमधुक्षीराम्बुसर्पिषाम् ।**
**विक्रेता ब्राह्मणश्चैव द्विजो वार्धुषिकश्च यः ॥**

मनुष्याणां विक्रेता प्रतिषिद्धकारित्वात् । विषस्य विक्रेता शस्त्रस्य च, वधसंबद्धत्वात् । अम्बुलवणापूपवीरुधां प्रतिषिद्धत्वाद् ब्राह्मणस्य ब्राह्मण एतेषां विक्रेता । द्विजातिश्च वार्धुषिकः, प्रतिषिद्धत्वात् । 'आपत्स्वपि हि कष्टास्वि'ति वैश्यानामपि निस्तीर्णापदां प्रतिषिद्धत्वात् ।

नाभा.२।१६५

[२]**च्युतः स्वधर्मात्कुलिकः सूचको हीनसेवकः ।**
**पित्रा विवदमानश्च भेदकृच्चेत्यसाक्षिणः ॥**

(१) निगदव्याख्यातौ श्लोकौ । स्तावकस्तु नग्नाचार्यजातीयः । भेदकृत् सस्नेहयोरद्रव्यैर्योजकः । एते साक्षित्वेऽनिर्दिष्टाः न प्रश्नार्हाः । अभा.६९

(२) कुलिकः परिच्छेदकत्वेन नियुक्तः । व्यक.४६

(३) सूचकः परदोषसूचनार्थं राज्ञा नियुक्तः । भेदकृत् पिशुनः । स्मृच.७८

(४) सर्वे चैते मन्दाभिधायिनो लोभादिशङ्कनात् । अत्र यद्यपि साक्षिणां विशेषविधिनैव शेषप्रतिषेधः, इति कल्पतो निषेधोऽनर्थकः, तथापि विहितालाभेऽपि अमीषामनुपादानाय, सौर्यश्चरुर्भवतीत्युक्तेऽप्ययज्ञिया वै माषा इतिवत् । तथा च विहिताऽलाभे अविहिता अनिषिद्धाः साक्षिणो ग्राह्याः, कल्पतो निषिद्धास्तु सर्वथा न ग्राह्याः, इत्याशयः । व्यचि.४४

(५) च्युतः स्वधर्मात् स्वधर्मं न परिपालयति, सत्यं परिपालयतीति को विश्वासः । कुलिकः परिच्छेदकत्वेन नियुक्तः । उदासीनेन तेन भवितव्यम् । प्रत्याय्यप्रत्यायकयोरेकत्वविरोधात् । स्तावकः प्रस्थापकादिः, पराराधनजीवनत्वाद् धनवत्पक्षाश्रयत्वात् । हीनसेविता हीनजातीयं यः सेवते, शूद्रस्य द्विजातिः पादमूलिकस्त्यक्तधर्मत्वात् । पित्रा विवदमानो विरुद्धकरणात् पितुः शासनेऽनवस्थानात् । भेदकृत् पिशुनः सत्यानृतप्रवृत्तत्वात् । चशब्द एतेषां समुच्चयार्थः । समस्ता व्यस्ताश्चैते न साक्षिणः । सर्व एते धर्मानपेक्षाः कथमिव धर्ममपेक्षेरन्निति निरस्ताः । अथवा किमत्रोपपत्त्या ? वचनात् तेऽसाक्षिणः । नाभा.२।१६६

(६) कुलिको राज्ञा व्यवहारपरिच्छेदकतया नियुक्तः । अस्य च साक्षित्वकरणे निषेधो विधिस्त्वकृतसाक्ष्य इति कल्पतरुः । मदनरत्ने तु कुलं ब्राह्मणादिगणस्तदधिकारी कुलिक इति व्याख्यातम् । सूचको राज्ञा परदोषान्वेषणपूर्वकं स्वस्मै तन्निवेदने नियुक्तः । भेदकृत् मित्रादिप्रीतिभङ्गकर्ता । व्यप्र.११९

[१]**श्रेण्यादिषु च सर्वेषु कश्चिच्चेद्द्वेष्यतामियात् ।**
**तेभ्य एव न साक्ष्यं स्याद्द्वेष्टारः सर्व एव ते ॥**

(१) अत्र श्रेण्यादिषु वर्गेषु यदि कश्चिद्राजगामित्वाद्वाक्पारुष्यदण्डपारुष्यदोषाद् वा द्वेष्यतां गच्छेत्, ते बहवोऽपि द्वेष्टृत्वात्तस्य साक्षित्वं नार्हन्ति । यतो द्वेष्टारः सर्व एव ते तस्येति । अभा.६५

(२) श्रेण्यादिषु ये यस्य द्वेषं कुर्वन्ति ते तस्य न साक्षिण इत्यर्थः । श्रेण्यादिग्रहणं वर्णादिप्रदर्शनार्थम् । द्वेष्टृग्रहणं चायथार्थकथनकारणवतामुपलक्षणार्थम् ।

×स्मृच.७७

(३) श्रेण्यादिष्वित्यस्यायमर्थः—येषु श्रेण्यादिषु यस्यै-

---

(१) **नासं**.२।१६५ (मनुष्यविषशस्त्राम्बुलवणापूपवीरुधाम्); **नास्मृ**.४।१८६; **अभा**.६९; **अप**.२।७१ पशु (विष); **व्यक**.४६ **श्चैव** (स्तेषां); **स्मृच**.७८ अपवत्; **पमा**.९८ अपवत्; **व्यचि**.४३; **चन्द्र**.१४० राम्बु (राज्य); **व्यसौ**.४४; **व्यप्र**.११८; **प्रका**.५० अपवत्; **समु**.२९ अपवत्.

(२) **नासं**.२।१६६ सूच (स्ताव) वकः (विता); **नास्मृ**.४।१८७ सूच (स्ताव); **अभा**.६९ नास्मृवत्; **अप**.२।७१; **व्यक**.४६; **स्मृच**.७८; **पमा**.९८; **व्यचि**.४३ कृच्चे (कश्चे); **चन्द्र**.१४०; **व्यसौ**.४४; **व्यप्र**.११८; **प्रका**.५०; **समु**.२९.

× सवि. स्मृचवत्।

(१) **नासं**.२।१३३ क्ष्यं (क्षी); **नास्मृ**.४।१५६; **शुनी**.४।६८६ सर्वे (वर्गे) तेभ्य एव (तस्य तेभ्यो) **अभा**.६५ च सर्वे (तु वर्गे); **अप**.२।७१ च सर्वे (तु वर्गे) तेभ्य एव (तस्य तैश्च); **व्यक**.४६ च सर्वे (तु वर्गे) चेत् (वै) तेभ्य एव (तस्य तेभ्यो); **स्मृच**.७७ सर्वे (वर्गे) तेभ्य एव (तस्य तेभ्यो); **व्यचि**.४३ तेभ्य एव (तस्य तेभ्यो); **सवि**.१३६ च सर्वे (तु वर्गे) चेत् (वै) शेषं व्यचिवत्; **व्यसौ**.४४ च सर्वे (तु वर्गे) शेषं व्यचिवत्; **व्यप्र**.११८ व्यसौवत्; **प्रका**.४९ स्मृचवत्, कात्यायनः; **समु**.२८ व्यसौवत्.

कोऽपि द्वेष्यतां शत्रुतामाप्तस्तदीयविवादे तच्छ्रेण्यादिनिविष्टाः सर्व एव न साक्षिणः। तत्र हेतुर्द्वेष्टारः सर्व एव त इति। तच्छ्रेण्यन्तर्गतैकद्वेष्यानुरोधकृतवैरनिर्यातनार्थमन्यथावादित्वसंभवात्। व्यप्र.११९

विषयविशेषे उक्तासाक्षित्वप्रतिप्रसवः

**असाक्षिणो ये निर्दिष्टा दासनैकृतिकादयः।**
**कार्यगौरवमासाद्य भवेयुस्तेऽपि साक्षिणः * ॥**

(१) एवं च सति वचनाप्रामाण्यकारणीभूतानां दोषाणां सद्भाव एव हेयाः। तदभावे तु निश्चिते बालादयोऽप्युपादेया इति बालादीनां साक्षित्वविधायकेन वचनेनाविरोधः। अप.२।७२

(२) कार्यगौरवं कार्यस्य प्रशस्तज्ञातृराहित्यम्। तदेतत्सर्वं साहसाद्यस्थिरकर्मविषयम्। तत्र प्रशस्तानां दुर्लभत्वात्। +स्मृच.७९

(३) इदं च असत्यवादित्वनिश्चयाभावे साक्ष्यन्तरस्य तद्गुणविशिष्टस्यासंभवे बोध्यम्। ×व्यप्र.१२०

**साहसेषु च सर्वेषु स्तेयसंग्रहणेषु च।**
**पारुष्ययोश्चाप्युभयोर्न परीक्षेत साक्षिणः॥**

(१) एषु तु विवादपदेषु परोक्षे च न कर्तव्याः। उद्देशमात्रादेव द्रष्टव्या इति। अभा.६९

(२) साहसेषु सर्वेषु मारणशस्त्रप्रहारादिषु चौर्यसंग्रहणादिषु च सर्वप्रकारेषु, वाग्दण्डपारुष्ययोश्च न कश्चिन्न साक्षी सहसा प्रवृत्ते येन दृष्टम्। नात्र बुद्धिपूर्वाः साक्षिण उपादातुं शक्याः। नाभा.२।१६८

(३) अस्मिंश्च प्रघट्टके प्रकटदोषानभिषङ्गे क्वाचित्कविसंवादादिदोषपुरस्कारेण साहसादिसाक्षिता न कक्षीकरणीयेत्यत्र तात्पर्यम्। अत एव विज्ञानयोगिनोक्तम्— 'दोषादसाक्षिणो भेदादसाक्षिणः स्वयमुक्तिश्चात्रापि न साक्षिणो भवन्ति सत्याभावादिति हेतोरनपगमात्' इति। अपरार्कोऽपि—'सर्वः साक्षी न तु गुणवानेवेत्यर्थः। दोषवांस्तत्रापि परिहरणीय एव। वक्तृदोषाणां वचनाप्रामाण्यहेतुत्वात्' इत्याह। तस्यापि सर्वदोषाभावे न तात्पर्यम्। प्रतिप्रसवानुपपत्तेः। यत्तु केनचिदुक्तं साक्षिगुणदोषप्रतिप्रसवा यथाश्रुता एव ग्राह्या अन्यथा तत्र तत्र तत्तद्विशेषणोपादानमनर्थकमुपलक्षणं वा प्रसज्येतेति। तद्बालिश्यम्। न्यायमूलकत्वात्तेषां तदविरोधेनैव नेयत्वात्। अत एव न्यूनाधिकविशेषणोपादानमविरुद्धम्। अदृष्टार्थत्वे तद्विरोधो दुष्परिहरः स्यात्। व्यप्र.१२१

**स्तेयेऽपि साहसे चैव पारुष्ये संगमे स्त्रियाः।**
**शमादीनां प्रयोगे च न दोषः साक्षिषु स्मृतः॥**

उक्तविषयविशेषे बालादीनां तु नैव साक्षित्वम्

**तेषामपि न बालः स्यान्न स्त्री नैको न कूटकृत्।**
**न बान्धवो न चारातिर्ब्रूयुस्ते साक्ष्यमन्यथा॥**

* अत्रत्यं अभाव्याख्यानं गलितं, लेखकप्रमादात्।

\+ नाभा. स्मृचवद्भावः। × विता. व्यप्रगतम्।

(१) **नासं** २।१६७; **नास्मृ.**४।१८८; **अभा.**६९; **विश्व.**२।७४ ये निर्दिष्टा (ऽपि येऽत्रोक्ता); **व्यमा.**३२८ नैकृ (नैष्कृ); **अप.**२।७२ (=) साद्य (श्रित्य); **व्यक.**४९; **स्मृच.**७९ व्यमावत्; **पमा.**१०० पू.: १०१ व्यमावत्; **व्यचि.**४५ उत्त., कात्यायनः; **स्मृचि.**४६ व्यमावत्; **व्यसौ.**४७ ये निर्दिष्टा (ऽत्र ये प्रोक्ता) कृ (ष्कृ); **व्यप्र.**१२०; **व्यम.**१७ व्यमावत्; **विता.**१६६ नै (वै); **बाल.**२।७२; **प्रका.**५१; **समु.**२९-३०; **विव्य.**१३ व्यमावत्.

(२) **नासं.**२।१६८ न... साक्षिणः (असाक्षी नोपपद्यते); **नास्मृ.**४।१८९; **शुनी.**४।६८२-६८३ पारु... योः(वाग्दण्डयोश्च पारुष्ये); **अभा.**६९; **विश्व.**२।७४ च (तु) णेषु च (णादिषु) पारुष्ययोश्चाप्युभयोः (वाग्दण्डयोश्च पारुष्ये); **व्यमा.**३२७ उत्तरार्धं विश्ववत्, मनुनारदौ; **व्यक.**४८-४९ च (तत्) शेषं व्यमावत्, मनुनारदौ; **स्मृसा.**१०३ पारुष्ययोश्चाप्युभयोः (पारुष्ये वाग्दण्डयोश्च); **व्यसौ.**४७ विश्ववत्; **व्यप्र.**१२० व्यमावत्, मनुनारदौ.

(१) **मभा.**१३।११ ऽपि (च) पारुष्ये... याः (संसर्गे च स्त्रियास्तथा) शमा (गरा) व्याघ्रः; **गौमि.**१३।९ मभावत्, व्याघ्रः; **पमा.**१०१; **प्रका.**५१ ऽपि (च) शमा (गरा) मनुः; **समु.**३० ऽपि (च) शमा (गरा).

(२) **नासं.**२।१६९ (न तत्रापि च बालः स्यात् नैको न स्त्री न कूटकृत्); **नास्मृ.**४।१९०; **अभा.**६९; **विश्व.**२।७४ तेषा (एषा) न स्त्री नैको (नैको न स्त्री) ब्रूयु (कुर्युः); **अप.**२।७१ (=) न स्त्री नैको (नैको न स्त्री); **व्यक.**४९ अपवत्; **स्मृच.**७९ अपवत्; **पमा.**१०० अपवत्; **स्मृसा.**१०३ साक्ष्य (कार्यं); **व्यचि.**४५ अपवत्; **स्मृचि.**४६ अपवत्, पू.; **व्यत.**२१२ कूट (दुष्ट) साक्ष्य (कार्यं) शेषं अपवत्; **चन्द्र.**१४१ साक्ष्य (कार्यं) शेषं अपवत्; **व्यसौ.**४७ अपवत्; **बाल.**२।७२ अपवत्; **सेतु.**११७ व्यतवत्; **प्रका.**५१ अपवत्; **समु.**३० अपवत्.

(१) अतो बालादिवर्जं द्विप्रभृतिसाक्ष्यमविरुद्धम् । यद्वा नैक इति नायं संख्यानिषेधः, पुरुषमात्रप्रतिषेध एवायम् । यथैवैका स्त्री निषिद्धा 'योषितं चावीरामि'ति, तथैव स्त्रीरहित एकः पुमाननर्ह इति व्याख्येयम् । अतश्च त्र्यवराणामेव संग्रहणादौ साक्ष्यमित्यवसेयम् । न्यायमूलत्वादेव चात्यर्थमनुमानकुशलतयाऽयमपि नारदीयः प्रतिषेधोऽतिक्रामयितव्यः । विश्व.२।७४

(२) तेषां दासनैकृतिकादीनां मध्येऽपि व्यक्तानृतशालिनो बालादयो वर्ज्या इत्यर्थः । स्मृच.७९

(३) न चात्र स्त्र्यादीनां विधेर्निषेधाच्च विरोधः तद्विधेः साक्ष्यन्तराभावविषयत्वात् । व्यचि.४५

(४) एवं च यदि परमधार्मिकत्वेन बान्धवादीनामपि सत्यवादित्वं निश्चीयते तदा तेऽपि साक्षिणो भवितुमर्हन्तीति । *व्यत.२१२

**बालोऽज्ञानादसत्यात्स्त्री पापाभ्यासाच्च कूटकृत् ।**
**विब्रूयाद् बान्धवः स्नेहाद्वैरनिर्यातनादरिः ॥**

(१) श्लोकावेतौ निगदव्याख्यातौ । दासनैकृतिकादिषु प्रतिषेधोत्सर्गस्य गौरवाद्यपेक्षया विवक्षितार्थाविति। अभा.७०

(२) प्रमाणान्तरमूलं च असाक्षित्वं प्रपञ्चितं यथा बाल इति । विश्व.२।७३

(३) असत्यात् असत्यशीलत्वात् इत्यर्थः । अनेनाज्ञत्वासत्यशीलत्वाधर्मनिष्ठत्वात्यन्तोत्कटरागद्वेषशालित्वान्येव व्यक्तानृतहेतवो न पुनः बालत्वादय इति दर्शितम् । स्मृच.७९

(४) बालोऽज्ञानाद्, विब्रूयादिति प्रत्येकं संबध्यते । असत्यात् स्त्रीस्वभावचापलत्वात् । एकस्य हेतुर्नोक्तो दुरवधारणत्वाद् गम्यत इति । नाभा.२।१७०

* सेतु. व्यतवत्।

(१) नासं.२।१७० च (तु); नास्मृ.४।१९१; शुनी.४।६८३-६८४; अभा.७० वैर (वैरि); विश्व.२।७३ असत्यात् (अमत्या) यात् (युः) वः (वाः); अप.२।७२ (=) यात् (युः) वः (वाः); व्यक.४९ नासंवत्; स्मृच.७९; पमा.१०० अपवत्; व्यचि.४५; स्मृचि.४६ उत्त.; व्यत.२१६ कात्यायनः; व्यसौ.४७ विब्रूयात् (ब्रूयात्स्व); व्यप्र.११९; सेतु.१२४-१२५ कात्यायनः; प्रका.५१; समु.३०.

उभयानुमत एकोऽपि साक्षित्वमर्हति

**अथवाऽनुमतो यः स्याद्द्वयोर्विवदमानयोः ।**
**भवत्येकोऽपि साक्षित्वे प्रष्टव्यः स्यात्स संसदि ॥**

(१) एकस्योभयानुमतस्य विशिष्टविषयसंसदि जनताप्रत्यक्षं प्रष्टव्यमनुज्ञातम् । अभा.७०

(२) स तु संसदि बहुजनसंनिधौ प्रष्टव्यः । तथैव सत्याभिधानसंभवात् । *व्यमा.३१८

(३) एवं च त्र्यवरा इति संख्यानियमो लिखितगूढोभयानुमतव्यतिरिक्तसाक्षिविषय एवेत्यनुसंधेयम् । उभयानुमतसाक्षिविषये लिखितगूढसाक्षिविषये च न्यूनसंख्यापक्षस्यापि विहितत्वात् । स्मृच.७६

(४) यस्तु बालादिरप्युभयानुमतो भवति स चौर्यादिषु साक्षी भवत्येवेति । तथा च नारदः उभयेति । स्मृसा.१०३

कौटसाक्ष्यलिङ्गानि

**यस्त्वात्मदोषदुष्टत्वादस्वस्थ इव लक्ष्यते ।**
**स्थानात्स्थानान्तरं गच्छेदेकैकं चानुधावति ॥**

कूटकृत्साक्षी येन लक्ष्यते तल्लक्षणमुच्यते—आत्मदोष-

* व्यत., सेतु. व्यमागतम् ।

(१) नासं.२।१७१ भवत्ये (स साक्ष्ये) स (तु); नास्मृ.४।१९२ अथवा (उभया) भवत्ये (असाक्षि); अभा.७० ऽनुमतो (संमतो) भवत्ये (असाक्ष्ये); व्यमा.३१८ द्वयोर्विव (वादिनोर्वे) स्यात्स (स तु); स्मृच.७६ नासंवत्; पमा.९६ अथवा (उभया) शेषं नासंवत्; स्मृसा.१०३ अथवा (उभया) भवत्येकोऽपि (असाक्ष्यपि हि) स (तु); व्यचि.३९ अथवा (उभया) भवत्ये (भवेदे) स (तु); व्यत.२१३ अथवा (उभया) त्ये (वे); चन्द्र.१४२ अथवा (उभया) भवत्येकोऽपि (असाक्ष्यपि च) स (तु); व्यप्र.११२ अथवा (उभया) भवत्ये (असाक्ष्ये) स (तु); सेतु.११८ अथवा (उभया) (भवेदेकोप्यदुष्टश्चेत् प्रष्टव्यः स्यात् स संसदि); प्रका.४९ स्मृचवत्; समु.२८ स्मृचवत्.

(२) नासं.२।१७२ चानु (चोप); नास्मृ.४।१९३ दुष्ट (भिन्न); अभा.७० नास्मृवत्; अप.२।७५; व्यक.५७ यस्त्वात्म (पश्चाच्च); स्मृच.८५; पमा.१०७ दस्वस्थ (त्र दक्ष); चन्द्र.१४९ यस्त्वा (यश्चा) चानु (उप); व्यसौ.५४ चानु (अनु); व्यप्र.१२४; व्यम.१८ चा (वा); विता.१८५ यस्त्वा (यः स्वा); प्रका.५५; समु.३३; विव्य.१५ चानु (अभि).

दुष्टत्वाद् अद्य मां शास्यन्तीति सशङ्कत्वादस्वस्थ इव लक्ष्यते। स्थानात्स्थानान्तरं गच्छेत्, नैकत्रावतिष्ठते। एकैकं चोपसर्पति प्रत्यायनार्थम्। नाभा.२।१७२

**[1]कासत्यनिभृतोऽकस्मादभीक्ष्णं निःश्वसत्यपि।**
**भूमिं लिखति पादाभ्यां बाहू वासो धुनोति च॥**

कासति चानिभृतोऽविनयेनोच्चैः निष्कारणं पुनः पुनः निश्वसिति। भूमिं पादाभ्यां विलिखति। बाहू वासश्च धुनोति चालयति स्फोटयतीत्यर्थः। नाभा.२।१७३

**[2]भिद्यते मुखवर्णोऽस्य ललाटं स्विद्यते तथा।**
**शोषमागच्छतश्चोष्ठावूर्ध्वं तिर्यक् च वीक्षते॥**

भिद्यते मुखवर्णोऽस्य, अन्यथा भवति मुखवर्णः। स्विद्यते च ललाटम्। ओष्ठौ च शुष्यतः। ऊर्ध्वं तिर्यक् च निरीक्षते। नाभा.२।१७४

**[3]त्वरमाण इवाकस्मादपृष्टो बहु भाषते।**
**कूटसाक्षी स विज्ञेयस्तं पापं विनयेन्नृपः॥**

(१) अत्र ('यस्त्वात्मदोषे' त्यतो 'विनयेन्नृप' इति यावत्) प्राड्विवाकस्य व्यवहारदर्शनमुपदिश्यते। साक्षिप्रश्नकाल उपस्थिते इङ्गिताकारादि परीक्षेत। न केवलमुक्तदोषदूषित एव न प्रश्नार्हः, एवंक्रियोऽपि न प्रष्टव्यः। कूटसाक्षी स इति विनयेच्च। दण्डं दण्डयन् न दोषः। अभा.७०

(२) आविद्धमाकुलम्। व्यक.५७

(३) त्वरमाण इवाबद्धं बहु भाषतेऽपृष्टः। एतैर्लिङ्गैः कूटसाक्षी स विज्ञेयः। तं पापं विनयेद् भृशं, दण्डयेदित्यर्थः। प्रत्यर्थी च स्वार्थमनृतं ब्रवीति। अज्ञानादपि संभवति। अयं तु परार्थत्वात् ज्ञात्वा च धर्मनिरपेक्षोऽकस्मान्महादोषमनृतं ब्रवीति। तस्माद् भृशमित्युक्तम्। नाभा.२।१७५

(४) अबद्धं असंबद्धम्। विनयेत् शिक्षयेद्यथा कौटसाक्ष्याद्बिभेति इत्यर्थः। न तु दण्डयेदित्यर्थः। प्राकृतिकवैकारिकविकारविवेकस्य दुःशकत्वात्। संभावनामात्रेण च दण्डनस्यान्याय्यत्वादिति युक्तम्। व्यप्र.१२४

पूर्वं साक्षित्वमभ्युपगम्य पुनर्निन्हवे दोषः

**[1]श्रावयित्वा तथाऽन्येभ्यः साक्षित्वं यो विनिह्नुते।**
**स विनेयो भृशतरं कूटसाक्ष्यधिको हि सः॥**

(१) नासं.२।१७३ सत्यपि (सित्यपि); नास्मृ.४।१९४ कास (काम) हू (हु); अभा.७० कास (काम) त्यपि (त्रपि); व्यमा. ३३२ (=) (विलिखत्यवनीं पद्भ्यां बाहू वासश्च धूनयेत्) उत्त.; अप.२।७५ निभृतोऽकस्मात् (कस्माच्च भृशम्) (विलिखत्यवनिं पद्भ्यां बहु वासश्च धूनयेत्); व्यक.५७ (कासत्यकस्माच्च भृशमतीव निश्वसत्यपि। विलिखत्यवनिं पद्भ्यां बाहू वासश्च धूनयेत्॥); स्मृच.८५ (कासत्यकस्माच्च भृशमभीक्ष्णं निःश्वसित्यपि। विलिखत्यवनीं पद्भ्यां बाहू वासश्च धूनयेत्॥); पमा.१०७ पूर्वार्धं अपवत्, उत्तरार्धं व्यकवत्; चन्द्र. १४९ (करोत्यवभृतोऽकस्मादभीक्ष्णं निःश्वसत्यपि। विलिखत्यवनिं पद्भ्यां मूर्धानं विधुनोति च॥); व्यसौ.५४ पमावत्; व्यप्र.१२४ स्मृचवत्; व्यम.१८ पमावत्; विता. १८५ (क्रोशत्यकस्माच्च भृशमभीक्ष्णं निःश्वसत्यपि। विलिखत्यवनिं पद्भ्यां बाहुवासश्च धूनयेत्); प्रका.५५ स्मृचवत्; समु.३३ स्मृचवत्; विव्य.१५ (हसत्यकस्मात् सुभृशं सुतीक्ष्णं निश्वसत्यपि) उत्तरार्धं स्मृचवत्.

(२) नासं.२।१७४; नास्मृ.४।१९५; अभा.७०; व्यमा. (=)३३२; अप.२।७५ श्चो (श्चौ); व्यक.५७; स्मृच.८५ अपवत्; पमा.१०७; चन्द्र.१४९ तथा (यदि) च वी (निरी); व्यसौ.५४; व्यप्र.१२४ च वी (निरी); व्यम.१८; विता. १८५-१८६; प्रका.५५ अपवत्; समु.३३ र्णोऽस्य (र्णेन) श्चो (श्चौ); विव्य.१५.

(३) नासं.२।१७५ कस्मादपृष्टो बहु (पृष्टो बह्वबद्धं च) नृपः (भृशम्); नास्मृ.४।१९६; अभा.७० (त्वरमाणो वदेत्तत्र तं पापं विनयेन्नृपः) एतावदेव; व्यमा.३३२ (=) (त्वरया बह्वाऽबद्धमपृष्टं बहु भाषते) नृपः (भृशम्); अप.२।७५ कस्मात् (त्यर्थम्) नृपः (भृशम्); व्यक.५७ कस्मात् (विद्धम्) नृपः (भृशम्); स्मृच.८५ अपवत्; पमा.१०७ अपवत्; चन्द्र. १४९ अपवत्; व्यसौ.५४ अपवत्; व्यप्र.१२४ कस्मात् (बद्धम्) नृपः (भृशम्); व्यम.१८ व्यप्रवत्; विता.१८६ कस्मात् (विद्धम्) ष्टो (ष्टं) पू.; प्रका.५५ अपवत्; समु. ३३ अपवत्; विव्य.१५ कस्मात् (बद्धम्) ष्टो (ष्टं) नृपः (भृशम्).

(१) नासं.२।१७६ वि (ऽपि); नास्मृ.४।१९७; अभा. ७०; व्यमा.३३२(=) यित्वा (येद्वा) विनि (ऽपि नि) भृशतरं (ऽध्यर्धशतं); अप.२।८२; व्यक.५७; स्मृच.९१; दवि. ३४७ विनि (ऽतिनि); चन्द्र.१४९ भृश (ऽधिकं); व्यसौ.५४ तथा (यथा) वि (ऽपि); व्यप्र.१३७ तथा (ततो); प्रका.६०; समु.३७; विव्य.१५ तथा (यथा) वि (ऽपि) पू.

(१) यश्चान्येभ्योऽपि तत्साक्ष्यं श्रावयित्वा प्रपद्य च पुनः साक्ष्यप्रदानकाले अन्यथा ब्रूयात्तस्य महादण्डः कर्तव्यः । कूटसाक्ष्यं कूटं साक्षित्वं कूटसाक्षिभ्योऽधिकं यस्मात् इति । अभा.७०

(२) श्रावयित्वा पूर्वमन्येभ्यः साक्षित्वं 'एवं वृत्तमहं जानामी'ति प्रश्नकाले निह्नुते प्रयोजनमभिचिन्त्य 'नाहं जानामि न च मयोक्तमि'ति, स विनेयो भृशतरम् । कूटसाक्ष्यधिको यस्मात् सः । कुटसाक्ष्येवं निह्नुते अज्ञानाद्वा, अयं तु तच्च स्ववचनं चोभयं निह्नुते उभौ च विवक्षयिष्यति । नाभा.२।१७६

साक्षिणो भेदे वादहानिः

**न परेण समुद्दिष्टमुपेयात्साक्षिणं रहः ।**
**भेदयेत्तं न चान्येन हीयेतैवं समाचरन् ॥**

(१) तत्र यः परोद्दिष्टं साक्षिणं रहसि संभाषिताऽसौ हीयेत, भेदयंश्च तर्जनभर्त्सनादिना लौकिकभेदेन च अर्थसंप्रदानेनेति । अभा.६७

(२) तेन तथा आचरन्तं हीनदण्डेन दण्डयेदित्यभिप्रायः । स्मृच.९४

(३) अन्यतरेणोपन्यस्ताः साक्षिणोऽन्येन यदि रहसि संवाद्यन्तेऽन्यद्वारेण भेद्यन्ते वा तदा प्रकृतार्थहानिस्तस्येत्याह — न परेणेति । व्यप्र.१३८

साक्षिप्रश्नविधिः

**आहूय साक्षिणः पृच्छेन्नियम्य शपथैर्भृशम् ।**
**समस्तान्विदिताचारान् विज्ञातार्थान्पृथक् पृथक् ॥**

(१) सादरमाहूय साक्षिणः समस्तान् पृच्छेत् । पूर्वश्रुतार्थानेकैकशः विज्ञाताचाराणामेषाम् । अथवा समस्तान्विदिताचारान् पृच्छेदविज्ञाताचारांस्त्वेकैकशः । अप्रतिदूषिता ह्यविज्ञाताचारा अपि प्रष्टव्या एवेति । प्रश्नश्चोभयथाऽपि युक्तः । नियम्य शपथैर्भृशं सुतरामिति । अभा.७०

(२) भयावहैः शपथैः सत्यनिष्ठान् कृत्वा प्रत्येकं पृच्छेदित्यर्थः । ×स्मृच.८८

(३) साक्षिणश्च पृथक् पृथक् प्रष्टव्याः । आहूयेति नारदवचनात् । चन्द्र.१४४

(४) आहूय साक्षिणः पृच्छेन्नियम्य नियमयित्वा 'सत्यमेव वक्तव्यं नान्यदि'ति । अथवा देवताग्निसुवर्णबीजादीनि संनिधाप्य शपथैर्भृशं नियम्येति संबन्धः । पुनः पुनर्वा शपथैः समस्तान् युगपत्सर्वान् विदिताचारान् शुद्धाचारान् विज्ञातार्थान् विदितवृत्तान्तान् पृथक् पृथक् वा समस्तान् वा पृथक् पृथक् पृच्छेत् । नाभा.२।१७७

**सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।**
**गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥**

(१) शपथनिर्देशार्थं श्लोकः । अभा.७०

(२) सत्येन श्रावयेद् विप्रमित्यप्रकृष्टब्राह्मणविषयम् । न ब्राह्मणमात्रविषयम् । तस्य गौतमेन शपथनिषेधात् । शापयेदित्यर्थः । *व्यक.५३

(३) सत्यादीष्टविघातोपदर्शनेन विप्रादीन्, वक्ष्यमाणानिष्टापत्तिदर्शनेन शूद्रं शापयेदित्यर्थः । स्मृच.८८

(४) असाक्षिके विवादेऽलिङ्गे च सत्येन शापयेद् ब्राह्मणम् । 'एतासां देवतानां राज्ञश्च संनिधौ सत्यं त्वया वक्तव्यं' एवं पृष्टेन 'सत्यं दृष्टं श्रुतमनुभूतं वे'त्युक्ते समाप्तो व्यवहारः । एवमितरत्रापि । यथोक्तैरभियुक्तस्यायं यथोक्तः शपथः । क्षत्रियं वाहनायुधैः,

---

(१) **नासं**.२।१४४; **नास्मृ**.४।१६५; **अभा**.६७; **मिता**.२।८२ त्तं न (नैव); **व्यक**.३४ द्दिष्ट (द्दानु) णं (णो) त्तं न (नैव) नारदकात्यायनौ; **स्मृच**.९४ त्तं (त); **चन्द्र**.१२१ (परेण तु समुद्दिष्टान्नोपेयात् साक्षिणो रहः) त्तं न चा (च्चैव ना); **व्यसौ**.३२ द्दिष्ट (द्दानु) णं (णो) त्तं न चा (च्चैव ना) तै (दे); **व्यप्र**.१३८ त्तं न चा (च्चैव ना); **व्यउ**.५१ व्यप्रवत्; **विता**.१६७ त्तं न चा (च्चैव वा); **प्रका**.६१; **समु**.३८.

(२) **नासं**.२।१७७; **नास्मृ**.४।१९८; **शुनी**.४।६९४ पू.; **अभा**.७० विज्ञातार्थान् (अविज्ञातान्); **अप**.२।७५; **व्यक**.५०; **स्मृच**.८८; **व्यचि**.४६; **स्मृचि**.४७ विज्ञाता (विदिता); **नृप्र**.१०; **सवि**.१५५; **चन्द्र**.१४४; **व्यसौ**.४९; **व्यप्र**.१२६; **व्यम**.१८; **विता**.१६८ विदिताचारान् (विदितान् चारान्); **प्रका**.५७; **समु**.३५; **विव्य**.१४.

× सवि. स्मृचवत् । * व्यचि. व्यकवत् ।

(१) **नासं**.२।१७८; **नास्मृ**.४।१९९; **अभा**.७०; **व्यक**.५३ शाप (श्राव); **स्मृच**.८८ त्येन (त्ये च) सर्वै (एभि); **व्यचि**.५० व्यकवत्; **व्यसौ**.५१ स्तु (श्च); **वीमि**.२।७५; **प्रका**.५७ स्मृचवत्; **समु**.३५ स्मृचवत्.

गोबीजकाञ्चनैर्वैश्यं, पातकैः सर्वैः शूद्रं पञ्चमहापातकादिभिः । नाभा.२।१७८

(५) सत्यं वदेति विप्रं सत्यमिदमित्यपि धनरूपं शपथं कारयेत् । इदं तु मध्यविधब्राह्मणपरम् । 'स येनैकेन सत्यकर्म तदेव ब्राह्मणसंसदि स्यादब्राह्मणानामि'ति गौतमवचनात् । एकेनेति गुणवत्परम् । तेन वाहनायुधैरित्यादिबहुवचनसंगतिः । वाहनमश्वादिकम् । आयुधं खड्गादि । तत्स्पर्शरूपं शपथं कारयेत् । गोबीजस्य कृषिमूलभूतस्य काञ्चनस्य स्पर्शेन वैश्यं शापयेत् । शूद्रमिति सुकृतमित्यादौ विचारकेण श्राविते 'सर्वाणि पातकानि मृषावादे मम स्युरि'ति वादयेदित्यर्थः । तुशब्देन त्रैवर्णिकशपथानां व्यवच्छेदः । वीमि.२।७३

**[१]पुराणैर्धर्मवचनैः सत्यमाहात्म्यकीर्तनैः ।**
**अनृतस्यापवादैश्च भृशमुत्त्रासयेदिमान् ॥**

(१) प्रश्ने विध्युपन्यासार्थं श्लोकः । अभा.७०

(२) आर्षैः सस्तुतिकसत्यवादविधिवचनैः साक्षिणां प्रोत्साहनम् । अनृतप्रतिषेधवचनैर्दुरिताऽपूर्वफलसंहितैरत्यर्थं भीषणमपि कुर्यादित्यर्थः । स्मृच.८७

(३) पुराणैः पूर्वोक्तैर्धर्मवचनैः, सत्यस्य माहात्म्यं सत्यमाहात्म्यं तस्य कीर्तनैः । कीर्त्यत एभिरिति कीर्तनानि । सत्यमाहात्म्यं यैः कीर्त्यते तैर्धर्मवचनैः, अनृतस्यापवादैः अपोद्यते निन्द्यते यैः तैर्भृशमुत्त्रास्य उद्वेगं जनयित्वा पृच्छेत् । नाभा.२।१७९

अनृतोक्तिफलम्

**[१]नग्नो मुण्डः कपालेन भिक्षार्थी क्षुत्पिपासितः ।**
**अन्धः शत्रुगृहं गच्छेद्यः साक्ष्यमनृतं वदेत् ॥**

नग्नग्रहणं प्रव्रजितार्थम् । मुण्डग्रहणं केशसंस्कारासामर्थ्यार्थं एतावतोऽप्ययमसमर्थ इति । कपालग्रहणं अब्रह्मादानार्थम् । क्रुद्धग्रहणं अन्यत्रालाभार्थम् । शत्रुग्रहणं परिभवार्थमन्नदानार्थं च । एषैषावस्थानृतवादिनः साक्ष्य इति । नाभा.२।१८०

**[२]नागरैः प्रतिरुद्धः सन् बहिर्द्वारे बुभुक्षितः ।**
**अमित्रान् भूयशः पश्येत् यः साक्ष्यमनृतं वदेत् ॥**

नगरे प्रतिरुद्धः बद्धः, दारा यस्य बहिः स बहिर्दारः, बुभुक्षितोऽमित्रान् भूयसो बहुतरान् पश्येत् । स्वजनो बहिः, येचासन्नास्ते वैरिणः न ददति बुभुक्षितस्य, तथाभूतस्य कुतः प्रतिक्रिया । एतामवस्थामनुभवेद् यः साक्ष्यमनृतं वदेत् । नाभा.२।१८१

**[३]नग्नो मुण्डः कपालेन परद्वारे बुभुक्षितः ।**
**अमित्रान्भूयशः पश्येद्यः साक्ष्यमनृतं वदेत् ॥**
**[४]यां रात्रिमधिविन्ना स्त्री यां चैवाक्षपराजितः ।**
**यां च भाराभितप्ताङ्गो दुर्विवक्ता स तां वसेत् ॥**

(१) अधिविन्ना प्रत्यग्रसपत्नीका । व्यचि.४९

(२) यां रात्रिमधिविन्ना, अधि ऊढा अन्या यस्याः साध्यूढा स्त्री पूर्वोढा, यथा दुःखिता । यां च द्यूतपराजितः, न भुक्तं न दत्तमेवमेव विनाशितं तेन । यां चातिभारतप्ताङ्गः, तामिव लुप्तोपमा द्रष्टव्या । यथा ते तां रात्रिं

(१) नासं.२।१७९ उत्त्रासयेदिमान् (उत्त्रास्य साक्षिणः); नास्मृ.४।२००; शुनी.४।६९४-६९५ पु (पौ) ध...सत्य (सत्यवचनधर्मे) पवादै (तिदोषै) इमान् (शनैः); अभा.७० स्या (श्चा) त्रा (द्वा); मिता.२।७५ इमान् (इति); व्यमा.३२९ पु (पौ) कीर्त (दर्श) दे (द) उत्त्रासयेदिमान् (उद्वासयेदपि); अप.२।७५ सत्य (सभ्य) इमान् (अपि); व्यक.५२ पु (पौ) कीर्त (दर्श) उत्त्रासयेदिमान् (उल्लासयेदपि); स्मृच.८७ पु (पौ) इमान् (अपि); व्यचि.४८ पु (पौ) कीर्त (दर्श) इमान् (अपि); स्मृचि.४७ सत्य...र्तनैः (सत्ये सत्यप्रदर्शनैः) इमान् (अपि); व्यसौ.५० व्यचिवत्; व्यप्र.१२६ पु (पौ); व्यउ.४९ उत्त्रा (संत्रा); विता.१६९; राकौ.४०३; बाल.२।७३ पु (पौ) इमान् (इमम्); प्रका.५७ स्मृचवत्; समु.३५ स्मृचवत्.

(१) नासं.२।१८० अन्धः (क्रुद्धः); नास्मृ.४।२०१; अभा.७० सितः (सयोः); व्यमा.३३० गृहं (कुलं); व्यक.५४ नासंवत्, मनुनारदौ; चन्द्र.१४८ मुण्डः कपालेन (मुण्डकपाली च) गृहं (कुलं) यः साक्ष्यम (यदि साक्ष्य); व्यसौ.५१ अन्धः (क्रुद्धः) यः साक्ष्यम (यदि साक्ष्य).

(२) नासं.२।१८१ नागरैः (नगरे) द्वारे (दारो) शः (सः); व्यमा.३३० अमि (अमू); व्यक.५२ नागरैः प्र (नगरप्र) सन् (स) अमित्रान् भूयशः (अग्निरतं स्वयं); व्यचि.४८-४९ नागरैः प्रतिरुद्धः (नग्नस्थः प्रतिबद्धः) भूय (बहु); व्यसौ.५० नागरः (नग्नस्तु) द्वारे (द्वारि).

(३) नास्मृ.४।२०२; अभा.७०.

(४) नासं.२।१८२ च भाराभि (चातिभार) स (स्म); नास्मृ.४।२०३; अभा.७०; व्यक.५२; व्यचि.४९; व्यसौ.५० च भाराभि (चातिभार) विव (विभ).

वसन्ति दुःखिताः, तथा दुर्विवक्ता अनृतस्य वक्ता साक्ष्ये सर्वा रात्रीर्वसति। तथा मा भूदिति सत्यं वदेदिति। नाभा.२।१८२

**साक्षी साक्ष्यसमुद्देशे गोकर्णशिथिलं चरन्।[1]**
**सहस्रं वारुणान्पाशानात्मनि प्रतिमुञ्चति॥**

(१) गोकर्णशिथिलं चरन् गोकर्णशिथिलं व्यवहरन् दृढमब्रुवन्नित्यर्थः। व्यक.५२

(२) साक्षी साक्ष्यसमुद्देशे साक्षिप्रश्ने गोकर्णशिथिलं गोकर्ण इव शिथिलं, यथा गोः कर्णो न स्तब्धो नापि पतति तथा साक्ष्यन्यतरन्न ब्रवीति, जानन् क्षिपति कालं, सहस्रं वारुणान् पाशान् सहस्रैः वारुणैः पाशैरात्मानं बध्नातीत्यर्थः। नाभा.२।१८३

**तस्य वर्षशते पूर्णे पाश एकः प्रमुच्यते।[2]**
**एवं स बन्धनात् तस्मान्मुच्यते नियताः समाः॥**

वर्षशते पूर्णे एकः पाशो मुच्यते। एवं स बन्धनात् तस्मात् वर्षशते वर्षशत एकैक इति नियताः समाः संवत्सरानतिक्रम्य मुच्यते। नाभा.२।१८४

विषयविशेषेणानृतोक्तिदोषतारतम्यम्

**पशुगोऽश्वपुरुषाणां हिरण्यं भूर्यथाक्रमम्॥[3]**
**यावतो बान्धवान् यस्मिन् हन्ति साक्ष्येऽनृतं वदन्।[4]**
**तावतः संख्यया तस्मिन् शृणु सौम्यानुपूर्वशः॥**

बान्धवान् पूर्वापरान् यावतो यस्मिन् विवादवस्तुन्यनृतं वदन् हन्ति साक्षी, तावतः संख्यया तस्मिन् विवादवस्तुनि शृणु सौम्य क्रमेण। नाभा.२।१८५

**अन्नानृते जन्म हन्ति द्वे वा सस्यानृते तथा।[1]**
**त्रीणि यानानृते हन्ति चतुर्थं वाहनानृते॥**
**पञ्च पश्वनृते हन्ति दश हन्ति गवानृते।[2]**
**शतमश्वानृते हन्ति सहस्रं पुरुषानृते॥**
**हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन्।[3]**
**सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वदः॥**

(१) पञ्च बान्धवान्– माता, पिता, भार्या, अपत्यं, आत्मा चेति पञ्च इति पारिजातः। व्यचि.५१

(२) पञ्च पूर्वापरान् हन्ति साक्षी पशुवादेऽनृतं वदन्। पशवोऽजाविखरोष्ट्रादयः। दश गवानृते। शतमश्वानृते। सहस्रं पुरुषानृते। जातानजातांश्च सर्वान् हिरण्यार्थेऽनृतं वदन्। सर्वं संबद्धमसंबद्धं च भूम्यनृते हन्ति। तस्माद् भूम्यनृतं मा वादीः। महादोषत्वाद् भूम्यनृतस्य विशेषेण प्रतिषेधः। अनृतनिन्दापरं वा अनृतवचनस्य साक्ष्ये। न चाकृताभ्यागमकृतप्रणाशौ। तस्य तावत् कस्मादुभयं भवति? अकर्तृत्वादिति चेत्, कर्तृर्भवतीति कुतः? शास्त्रादिति चेत्, तुल्यमीदृशं तत्, यत्सर्वेषां दुःखमुत्पादयतीति। न स्वकृतं तेषां हीयते, तदपि क्रमेण भुज्यते। तत्क्षये चैवम्। अथवा तदपि विनश्यति। एवं महादोषमनृत-

---

(१) **नासं**.२।१८३; **नास्मृ**.४।२०४ साक्ष्यसमुद्देशे (साक्ष्ये समुद्दिशन्) चरन् (वचः) आत्मनि प्रतिमुञ्चति (भुङ्क्ते स बन्धनाद् ध्रुवम्); **अभा**.७७ क्ष्य (क्ष्यं) चरन् (वचः) आत्मनि प्रतिमुञ्चति (स भुङ्क्ते बन्धनाद् ध्रुवम्); **व्यक**.५२ क्ष्य (क्ष्ये); **व्यचि**.४९; **चन्द्र**.१४७ साक्ष्यसमुद्देशे (साक्ष्ये समुद्दिष्टो) लं (लः); **व्यसौ**.५०.

(२) **नासं**.२।१८४; **नास्मृ**.४।२०५-२०६ उत्तरार्धे (तदा पाशाद्विनिर्मुक्तः स्त्री संभवति मानवः। एवं संबन्धनात्तस्मान्मुच्यते नियताच्च सः॥); **अभा**.७० एकः (एव) शेषं नास्मृवत्; **व्यक**.५२ स ब (संब) नियताः समाः (नियतं क्रमात्); **व्यचि**.४९ नियताः समाः (नियतं क्रमात्); **चन्द्र**.१४७ व्यचिवत्; **व्यसौ**.५० पू.

(३) **नास्मृ**.४।२०६; **अभा**.७०.

(४) **नासं**.२।१८५; **नास्मृ**.४।२०७ यस्मिन् (तस्मिन्) संख्यया तस्मिन् (संप्रवक्ष्यमि); **अभा**.७० वान् य (वास्त) शेषं नास्मृवत्; **व्यमा**.३३० क्ष्ये (क्ष्य); **व्यक**.५४ वतो (वन्तो) मनुनारदौ; **व्यचि**.५१ व्यमावत्; **व्यसौ**.५२ व्यमावत्; **व्यप्र**.१२८ वतः (वन्तः).

(१) Vulg. **नास्मृ**.४।२०७ इत्यस्यानन्तरमयं श्लोकः।

(२) **नासं**.२।१८६; **नास्मृ**.४।२०८; **अभा**.७१; **व्यमा**.३३०; **व्यक**.५४ मनुनारदौ; **व्यचि**.५१; **व्यसौ**.५२; **व्यप्र**.१२८; **विता**.१७१-१७२ मश्वा (श्वान्या); **सेतु**.१२२.

(३) **नासं**.२।१८७; **नास्मृ**.४।२०९ वदः (वदीः); **अभा**.७१ नजा (नुजा) नृते (नृतं); **व्यमा**.३३० र्वं (र्वं); **व्यक**.५४ मनुनारदौ; **व्यचि**.५१ वदः (वदीः); **व्यसौ**.५२ र्वं (र्वं) वदः (वदेः); **व्यप्र**.१२८ व्यचिवत्; **विता**.१७२ र्वं (र्वं) नृते (नृतं) वदः (वदीः); **सेतु**.१२२ मा ... वदः (साक्ष्यं साक्षी मृषा वदन्).

वचनं, तत् परिहर्तव्यमिति ह्यनृतनिन्दार्थमुच्यते 'असदपी'ति। नाभा.२।१८६-१८७

सत्योक्तिप्रशंसाऽनृतोक्तिनिन्दा च

**[1]एकमेवाद्वितीयं तत्प्राहुः पावनमात्मनः।**
**सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥**

इत आरभ्य सत्यप्रशंसा यावदनृतनिन्देति। एकमेवाद्वितीयं तथाभूतमन्यत् नास्तीति प्राहुः। शोधनमात्मनः। अन्यदप्यस्ति, तत् सशेषं शोधयति यज्ञादि। इदं त्वद्वितीयं निरपेक्षमशेषं शोधयतीत्यर्थः। किं पुनस्तत्। सत्यमेव। अत एव स्वर्गस्य सोपानम्। यथा हर्म्यतलस्य सोपानं तथा स्वर्गमारोढुं मार्गः। पारावारस्य समुद्रस्येति केचित्, महानद्याः गङ्गादेः परकूलस्येत्यन्ये, यथा नौरिति। नाभा.२।१८८

**[2]अश्वमेधसहस्रं च सत्यं च तुलया धृतम्।**
**अश्वमेधसहस्रात्तु सत्यमेव विशिष्यते ॥**

'ब्रह्महत्याश्वमेधाभ्यां न परं पुण्यपापयोः' इत्यश्वमेधः पुण्यानामुत्कृष्टः। ततोऽपि भूतोक्तिः सत्यम्। न तयोः समत्ववैषम्यचिन्तया प्रयोजनं, फलद्वारेणोत्कर्षापकर्षचिन्ता। उत्कर्षश्चापकर्षश्च तत्फलयोरेव वा। ते तुलया समधारयत्। तथाभूतप्रकृष्टपुण्यसाधनाश्वमेधसहस्रादपि सत्यं व्यतिरिच्यते। यस्यावभृथस्नानादपि ब्रह्महत्यायाः पूयते किं ततः परम्? तत्सहस्रादपि सत्यमतिरिच्यते। तस्मात् सत्यसमं नास्तीति सत्यस्तुतिः। जन्मप्रभृति आ मरणात् सत्यवचनस्यैषा स्तुतिः, आहोस्विदेकैकस्येति? यदि जन्मप्रभृत्युक्ता, इह साक्ष्यश्रवणे फलं मन्दम्। अन्यथाक्रान्तत्वादिह सत्यवचने फलाभावात्। अथ एकैकस्य, इह सत्यवचने इयत् फलमवाप्नोति तस्मात् सत्यं ब्रूहीति उपपद्यते स्तुतिः। नाभा.२।१८९

**[1]वरं कूपशताद्वापी वरं वापीशतात्क्रतुः।**
**वरं क्रतुशतात्पुत्रः सत्यं पुत्रशताद् वरम् ॥**

परत्वं भूयःफलत्वम्। कूपशताद् वापी भूयःफला, सर्वप्राण्यनुग्रहभूयस्त्वात्। भूतानुग्रहस्य च दुःखनिवृत्तिहेतुत्वात्। वापीशतफलाद् भूयःफलत्वं क्रतोः, श्रुतिविहितफलत्वात्। 'त्रयः प्राञ्चः त्रयः प्रत्यञ्च आत्मा सप्तम एतावन्त एवैनमुष्मिँल्लोक उपजीवन्ती'ति श्रुतेः। तच्छतादपि भूयःफलः पुत्रः। 'पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते। अथ पौत्रस्य पुत्रेण ब्रध्नस्याप्नोति विष्टपम्'॥ 'नापुत्रस्य लोकोऽस्ती'ति च स्मृतेः। क्रतोरदृष्टफलत्वात्, दृष्टादृष्टफलत्वाच्च पुत्रस्य। ततोऽपि भूयःफलं सत्यं, सर्वप्रकृष्टाश्वमेधसहस्रातिरिक्तफलत्वात्। तस्मात् सत्ये स्थिरो भव, अनृतं मा वादीरिति। नाभा.२।१९०

**[2]भूर्धारयति सत्येन सत्येनोदेति भास्करः।**
**सत्येन वायुः पवते सत्येनापः स्रवन्ति च ॥**

पृथिव्यादीनां सत्येन संबन्धाद् धारणादिप्रतिज्ञाया अपरित्यागादेतान्यचेतनान्यपि स्वकार्यमुत्पत्तिप्रभृत्यव्यभिचारेण सत्येन कुर्वन्ति, किमुत चेतनावानिति सत्यस्तुतिः। नाभा.२।१९१

**[3]सत्यमेव परं दानं सत्यमेव परं तपः।**
**सत्यमेव परो धर्मो लोकानामिति वै श्रुतिः ॥**

---

(१) **नासं**.२।१८८; **नास्मृ**.४।२१०; **अभा**.७१ तत (तु); **व्यमा**.३३१ उत्त.; **व्यक**.५२ तत् प्राहुः (यत् प्रोक्तं); **व्यचि**.४९ तत् (यत्); **स्मृचि**.४७ उत्त.; **चन्द्र**.१४७ व्यचिवत्; **व्यसौ**.५० व्यचिवत्.

(२) **नासं**.२।१८९; **नास्मृ**.४।२११; **अभा**.७१; **व्यमा**.३३१ च (तु) तु (द्धि) उत्त.; **व्यक**.५२ व्यमावत्, विष्णुनारदौ; **व्यचि**.४८ तु (द्धि) मेव (मेवा) विष्णुनारदौ; **स्मृचि**.४७ तु (द्धि) व विशिष्यते (वातिरिच्यते); **व्यत**.२१५ स्रं च (स्रं तु) शेषं स्मृचिवत्; **चन्द्र**.१४७ स्मृचिवत्; **व्यसौ**.५० स्मृचिवत्; **सेतु**.१२२ तु (णि) शेषं स्मृचिवत्.

(१) **नासं**.२।१९० वरं (परं); **नास्मृ**.४।२१२; **अभा**.७१; **व्यमा**.३३१; **व्यक**.५२; **व्यचि**.४९ क्रतुः (ह्रदः) क्रतुशतात् (शतह्रदात्); **स्मृचि**.४७; **चन्द्र**.१४८; **व्यसौ**.५०.

(२) **नासं**.२।१९१ देति भास्करः (दयते रविः); **नास्मृ**.४।२१३ पव (प्लव); **अभा**.७१; **व्यमा**.३३१ भू...सत्येन (सत्येन भूर्धारयति); **व्यक**.५२ नास्मृवत्; **व्यचि**.४९; **चन्द्र**.१४८; **व्यसौ**.५०.

(३)**नासं**.२।१९२; **नास्मृ**.४।२१४ वै श्रुतिः (नः श्रुतम्); **अभा**.७१ वै (नः); **व्यमा**.३३१ नास्मृवत्; **व्यक**.५२ नास्मृवत्; **स्मृच**.८६ वै (नः); **पमा**.१०८ वै श्रुतिः (हि स्मृतिः); **व्यचि**.४९ दानं (धाम) वै श्रुतिः (निश्चितम्); **स्मृचि**.४७ दानं (धाम) वै श्रुतिः (नः श्रुतम्); **चन्द्र**.१४८

दानफलमपि सत्यफलेऽन्तर्भूतम् । प्रकृष्टं च तपः सत्यमेव । 'सत्यमेव प्रकृष्टो धर्मो लोकानामि'त्यागमः । तस्मात् साक्ष्ये वदेत्सत्यमिति । नाभा.२।१९२

[1]सत्यं देवाः समासेन मनुष्यास्त्वनृतं स्मृतम् ।
इहैव तस्य देवत्वं यस्य सत्ये स्थिता मतिः ॥

सत्यफलं देवाः संक्षेपेण दुःखाननुषक्तनित्यसुखत्वात् । अनृतफलं मनुष्याः दुःखभूयस्त्वात् । इहैव शरीरे तस्य देवत्वं यस्य सत्ये स्थिता मतिः । भाविनि देवत्वे भूतवन्निर्देशः । हस्तप्राप्तं देवत्वं तस्य न दूरे । 'प्रविष्टं धान्यमि'ति यथा । नाभा.२।१९३

[2]सत्यं ब्रूह्यनृतं त्यक्त्वा सत्येन स्वर्गमेष्यसि ।
उक्त्वानृतं महाघोरं नरकं प्रतिपत्स्यसे ॥

सत्यं ब्रूहि स्वर्गसाधनत्वात् । ततश्च सत्येनेहैव शरीरे तस्य देवत्वं यस्य सत्ये स्थिता मतिः । अनृतं त्यक्त्वा, नरकसाधनत्वात् । ततश्च सत्येन स्वर्गमेष्यसि । अतोऽपि त्वमनृतं नरकसाधनमुक्त्वा घोरं नरकं प्रतिपत्स्यसे । नाभा.२।१९४

[3]नरकेषु च ते शश्वज्जिह्वामुत्कृत्य दारुणाः ।
असिभिः शातयिष्यन्ति बलिनो यमकिङ्कराः ॥

अनृतवचनान्निरयं गतस्य तव निरयेषु नित्यं जिह्वां छित्त्वा दारुणाः बलवन्तो यमकिङ्कराः यमस्याज्ञाकराः छित्वा भित्त्वा शातयिष्यन्ति । तस्मान्मा वादीरनृतमिति । नाभा.२।१९५

[1]शूले मत्स्यानिवाक्षिप्य क्रोशन्तमपरायणम् ।
अवाक्शिरसमुत्क्षिप्य क्षेप्स्यन्त्यग्नौ ह्रदेषु च ॥

मत्स्यानिव शूले प्रोत्य क्रोशन्तं रोरुद्यमानमगतिं पुनः शूलादुद्धृत्याग्निप्रदेशे क्षेप्स्यन्ति ततश्च ह्रदेषु । नाभा.२।१९६

[2]लोहयन्त्रादिपीडाभिः क्षुत्पिपासासु विह्वलः ।
प्रक्षिप्यते तथा घोरे नरके संप्रतापने ॥
[3]अवीचिनरके कल्पं वसेयुः कूटसाक्षिणः ।
परवित्तहरा ये च राजानश्चाऽप्यधार्मिकाः ॥
[4]अनुभूय च तास्तीव्राश्चिरं नरकवेदनाः ।
इह यास्यसि पापासु गृध्रकाकादियोनिषु ॥

अनुभूय तत्र नरकेषु चिरं दुःखा दुरनुभवा नरकवेदनाः शूलाग्निह्रदासिपत्रवनकुम्भीपाकतप्तवालुककूटशल्मल्याद्याः, पुनरिहायास्यसि उत्पत्स्यसे अभव्यासु पापासु गृध्रवायसकुम्यादियोनिषु । नाभा.२।१९७

[5]ज्ञात्वैताननृते दोषान् ज्ञात्वा सत्ये च सद्गुणान् ।
सत्यं वदोद्धरात्मानं नात्मानं पातय स्वयम् ॥

---

स्मृचिवत्; व्यसौ.५० नास्मृवत्; प्रका.५५ स्मृचवत्; समु.३४ वै (हि).

(१) नासं.२।१९३ स्मृतम् (स्मृताः); नास्मृ.४।२१५; अभा.७१; व्यक.५२ स्थिता मतिः (स्थितं मनः); स्मृच.८६; पमा.१०८; व्यचि.४९ स्थिता (स्थिरा); स्मृचि.४८ व्यकवत्; नृप्र.१० हैव (ह स्यात्) उत्त.; व्यसौ.५० स्मृतम् (स्मृताः) स्थिता मतिः (स्थिरं मनः); समु.३४.

(२) नासं.२।१९४ प्रतिपत्स्यसे (संप्रपत्स्यते); नास्मृ.४।२१६; अभा.७१ से (ते); व्यक.५५; उ.२।२९।७ (=) उक्त्वानृतं (अनृतेन); व्यचि.५२ पत्स्यसे (पद्यसे); स्मृचि.४८ व्यचिवत्; व्यसौ.५२ ब्रूह्य (ब्रता).

(३) नासं.२।१९५ नरके (निरये); नास्मृ.४।२१७; अभा.७१ ते शश्वत् (तेभ्यस्ते); व्यक.५५ णाः (णैः) शात (घात) बलि (वशि); स्मृच.८७ नासंवत्; व्यचि.५१ शात (घात); स्मृचि.४८ षु च (तत्र); व्यसौ.५२ व्यकवत्; प्रका.५६ नासंवत्; समु.३४ नासंवत्.

(१) नासं.२।१९६ ग्नौ (ग्नि); नास्मृ.४।२१८ (शूलैर्भेत्स्यन्ति चाक्रम्य क्रोशन्तमपरायणम् । अवस्थितं समुत्कृत्य क्षेप्स्यन्ति त्वां हुताशने); अभा.७१ (शूलो भत्स्यति चाक्रम्य क्रोशन्तमपरायणम् । अवांछितं समुत्कृत्य क्षिप्स्यन्त्युग्रह्रदेषु च ॥); व्यक.५५ (शतैर्भेत्स्यन्ति चाक्रम्य क्रोशन्तमपरायणम्); स्मृच.८७; व्यचि.५२ पूर्वार्धं नास्मृवत्, क्षेप्स्य (क्षिप्य); स्मृचि.४८ पूर्वार्धं नास्मृवत्, ग्नौ (ग्नि); व्यसौ.५२ पूर्वार्धं नास्मृवत्; प्रका.५६; समु.३४.

(२) स्मृच.८७; प्रका.५६ सासु (सादि); समु.३४.

(३) अप.२।७५ पू.; स्मृच.८७ अवीचि (आवीचौ); व्यप्र.५६ स्मृचवत्; समु.३५ स्मृचवत्.

(४) नासं.२।१९७ तास्तीव्राः (दुःखास्ताः) इह ... पापासु (इहायास्यस्यभव्यासु); नास्मृ ४।२१९; अभा.७१; व्यक.५५ तास्तीव्राः (दुःखास्ताः) सि पापासु (स्यभव्याश्च); स्मृच.८७ तास्तीव्राः (दुःखार्ताः) नाः (नाम्) स्यसि पापासु (स्यन्त्यभव्यासु); व्यचि.५२ च ... श्चिरं (सुदुःखांस्तान् चरन्) सि पापासु (स्यभव्याश्च); प्रका.५६-५७ स्मृचवत्; समु.३५ स्मृचवत्. (५) नासं.२।१९८ नात्मा ... स्वयम् (मात्मानं पीपतश्चिरम्); नास्मृ.४।२२०; अभा.७१ पातय स्वयम् (पात-

एवं ज्ञात्वा अनृते दोषान् सत्ये च शोभनान् गुणान् सत्यं वदोद्धरात्मानं देवत्वं प्रापय । अनृतमुक्त्वा मा आत्मानं नरके पीपतः । नाभा.२।१९८

**१न बान्धवा न सुहृदो न धनानि महान्त्यपि ।**
**अलं धारयितुं शक्तास्तमस्युग्रे निमज्जतः ॥**

बान्धवाः स्वजनाः, सुहृदो मित्राणि, धनानि गवाश्वहिरण्यादीनि, महान्त्यपि भूयांस्यपि, न शक्ता न पर्याप्ताः धारयितुं तमस्युग्रे महति नरके निमज्जतः, सत्यमेवैकं समर्थम् । तस्मात् स्वार्थे तदेवैकमवलम्बस्व, अनृतं परार्थे मा वादीरिति । नाभा.२।१९९

**२पितरस्त्ववलम्बन्ते त्वयि साक्षित्वमागते ।**
**तारयिष्यति किन्त्वस्मान्किमधः पातयिष्यति ॥**

पितरस्त्ववलम्बन्ते यथोलपा लम्बमानास्तथा पतेम न पतेमेति संशयावस्थायां त्वयि साक्षित्वमागते साक्षित्वेन नियुक्ते । किमिति संशये, न्विति, वितर्के । किन्नु तारयिष्यति नरकादस्मानात्मानं च, किन्नु पातयिष्यति अनृतवचनेन नरकेऽस्मानात्मानं चेति । तस्मात् तान् भूतवचनेनोद्धर्तुमर्हसि । नाभा.२।२००

**३सत्यमात्मा मनुष्यस्य सत्ये सर्वं प्रतिष्ठितम् ।**
**सत्यमुक्त्वाऽऽत्मनाऽऽत्मानं श्रेयसा संनियोजय ॥**

सत्यमात्मा मनुष्यस्य, यथात्मानं श्रेयसा योजयिष्यति तथा सत्यमिति सत्यमात्मेत्युच्यते । सत्ये सर्वं प्रतिष्ठितं आ ब्रह्मणः स्थानात् सत्यं निमित्तं, तदभाव आकीटपतङ्गेभ्यः सर्वनारकाणीति । सर्वथा आत्मानमात्मना श्रेयसा योजयिष्यसि, सत्यवचनं न पितॄणामेव हितार्थमात्मार्थमपीति । नाभा.२।२०१

**१यां रात्रिमजनिष्ठास्त्वं यां च रात्रिं मरिष्यसि ।**
**वृथा तदन्तरं ते स्यात् साक्ष्यं चेदन्यथा वदेः ॥**

'अन्तरान्तरेण युक्ते' ( व्यासू. २।३।४ ) इति द्वितीयोभयत्र । यां रात्रिमवधिं कृत्वा यां च मरणं जन्मन आरभ्यामरणादन्तरा यत् कृतं, सुकृतमिति सामर्थ्यात्, तत् तव वृथा स्यात् साक्ष्यं चेदन्यथा वदेः । तस्मात् सुकृतरक्षणार्थमपि माऽनृतं वादीरिति । नाभा.२।२०२

**२ब्रह्मघ्नस्य तु ये लोका ये च स्त्रीबालघातिनाम् ।**
**ये च लोकाः कृतघ्नस्य ते ते स्युर्ब्रुवतो वृथा ॥**
**३नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम् ।**
**साक्षिधर्मे विशेषेण सत्यमेव वदेत्ततः ॥**
**४कुबेरादित्यवरुणशक्रवैवस्वतादयः ।**
**पश्यन्ति लोकपालाश्च नित्यं दिव्येन चक्षुषा ॥**
**५पुराणानुमतौ चात्र द्वौ श्लोकौ समुदाहृतौ ।**

---

यिष्यति); **व्यक**.५५ ज्ञात्वा सत्ये (तथा सत्ये) उत्तरार्धे (सत्यं धर्मेण सततमात्मानं पावयेत्स्वयम्); **व्यचि**.५२ (उक्तान्वैतानमृते दोषान् तथा सत्येषु सद्गुणान्) तय (तयेत्).

(१) **नासं**.२।१९९; **नास्मृ**.४।२२१; **अभा**.७१; **व्यक**.५५; **व्यचि**.५२ शक्तास्तमस्युग्रे (सर्वे तमस्यन्धे); **स्मृचि**.४८ धारयितुं ... ग्रे (वारयितुं सर्वे तमस्यन्धे).

(२) **नासं**.२।२०० किन्त्व ... मधः (किन्त्वस्मानात्मानं); **नास्मृ**.४।२२२ अधः (चाथं); **अभा**.७१ नास्मृवत्; **अप**.२।७५ स्व (स्तेऽ) किन्त्व ... मधः ( किन्त्वस्मान् किन्त्वस्मान्); **व्यक**.५५ अपवत्; **स्मृसा**.१२१ मनुः; **व्यचि**.५२ त्वयि (पुत्रे) किन्त्व (किन्त्व); **स्मृचि**.४८ त्वस्मान् किमधः (वास्मान् किं वास्मान्); **चन्द्र**.१४८ त्वयि (पुत्रे).

(३) **नासं**.२।२०१ सत्ये सर्वं (सर्वं सत्ये) सत्यमुक्त्वा (सर्वथैवा) संनियोजय (योजयिष्यसि); **नास्मृ**.४।२२३; **अभा**.७१ पू.; **व्यक**.५५ सत्यमुक्त्वा (सर्वथैवा) सा सं (स्येव); **व्यचि**.५२ सा सं (स्येव) शेषं नासंवत्; **स्मृचि**.४८ व्यचिवत्.

(१) **नासं**.२।२०२ न्तरं (न्तरा); **नास्मृ**.४।२२४ (यस्यां रात्रावजनिष्ठा यस्यां रात्रौ मरिष्यसि । वृथा तदन्तरं तुभ्यं साक्ष्यं चेदन्यथा कृथाः॥); **अभा**.७१ (यस्यां रात्रावथाविष्ट यस्यां रात्रौ मरिष्यति । वृथा तदन्यं तत्तुभ्यं साक्ष्यं चेदन्यथा कृथाः॥); **व्यक**.५५; **व्यचि**.५२ वदेः (वदेत्).

(२) **नास्मृ**.४।२२५; **अभा**.७१; **व्यचि**.५० ब्रह्म ... लोका (ब्रह्मघ्नां ये स्मृता लोका) ये च लोकाः (मित्रद्रुहः) ब्रुवतो वृथा (वदतो मृषा) मनुनारदौ.

(३) **नासं**.२।२०३ देत्ततः (देरतः); **नास्मृ**.४।२२६; **अभा**.७१; **व्यमा**.३३१ र्मे वि (र्मेवि); **व्यक**.५३; **स्मृच**.८६ त्ततः (दतः); **पमा**.१०८ उत्त.; **व्यचि**.४९ परम् (महत्); **स्मृचि**.४८ सत्य ... ततः (सत्यं ब्रूहि परंतप); **नृप्र**.१० पू.; **व्यसौ**.५०; **प्रका**.५५ स्मृचवत्; **समु**.३४स्मृचवत्.

(४) **स्मृच**.८६; **पमा**.१०९; **नृप्र**.१०; **सवि**.१५८; **प्रका**.५६; **समु**.३४.

(५) **नास्मृ**.४।२२७ (पुराणोक्तौ द्वौ श्लोकौ भवतः) एतावदेव; **अभा**.७१ (पुराणोक्तौ तथैवात्र श्लोकौ द्वौ भवतः शुभौ) पू.; **व्यक**.५३; **व्यचि**.४९; **व्यसौ**.५०.

या श्रुत्वा सत्यमेवेह सदा वाच्यं नरैर्बुधैः ॥
य॒ः परार्थेऽपहरति स्वां वाचं पुरुषाधमः ।
आत्मार्थे किं न कुर्यात्स पापो नरकनिर्भयः ॥
अर्था वै वाचि नियता वाङ्मूला वाग्विनिःसृताः ।
यो हि तां स्तेनयेद् वाचं स सर्वस्तेयकृन्नरः ॥

साक्ष्यनृतप्रातिषेधोद्बोधनार्थत्वादिहोपन्यस्तौ । यः परस्यार्थे वाचं सत्यान्महाफलादपहरति अनृतं महादोषं प्रापयति । स्वायत्तानपराधिनां परायत्तत्वेन दोषः स्यात् । अत एव पुरुषाधमः । स आत्मार्थे किं न कुर्यात् पापम् ? आत्मनः फलसंबन्धो दृष्टादृष्टविषयो यत्र नास्ति तत्राप्यकार्ये प्रवृत्तोऽयं यत्रात्मनो दृष्टफलसंबन्धोऽस्ति तत्र नरकनिर्भयः किं पापं न करिष्यतीति । 'सुवाग् ब्राह्मणं' इति दर्शनाद् वागिति शब्द उच्यते इन्द्रियं च । तत्रार्था दृष्टादृष्टा अग्निहोत्रादयः कृष्यादयश्च नियताः तया प्रवर्तन्ते । वाङ्मूलाः शब्दा देवाग्निहोत्रादयो गम्यन्ते । वाचि शब्दब्रह्मणि मिश्रिताः स्थिताः । अतः सर्वत्र प्रतिष्ठितां वाचं यः स्तेययेत् चोरकर्म करोति प्रतिषिद्धं करोति अनृतं वदतीत्यर्थः, स सर्वस्तेयकृन्नरः तत्प्रभवत्वात् सर्वस्य तदन्तर्भूतत्वाच्च । तत्र स्तेनप्रणाडिकया साक्षाच्च सर्वस्तेनः । तस्मात् सत्ये स्थातव्यमिति । नाभा.२।२०४-२०५

साक्षिसाक्ष्यशोधनक्रमः

साक्षिकदूषणे कार्यं पूर्वसाक्षिविशोधनम् ।
शुद्धेषु साक्षिषु ततः पश्चात्साक्ष्यं विशोधयेत् ॥

यदा प्रतिवादी साक्षिकदूषणं प्रयच्छति तदा पूर्वं साक्षिविशोधनं साक्षिप्रकरणोक्तन्यायेन कर्तव्यम् । यदि चादुष्टदूषणं करोति ततः क्रियाद्वेषिहीनवादिविनयं ग्राह्यः । ततः शुद्धेषु साक्षिषु साक्षिवचनं विशोध्यम् । व्याजं निर्व्याजं चेति । अभा.२७

साक्षिद्वैधे बहुत्वगुणाधिक्यादि निर्णायकम्

साक्षिविप्रतिपत्तौ तु प्रमाणं बहवो यतः ।
तत्साम्ये शुचयो ग्राह्यास्तत्साम्ये स्मृतिमत्तराः* ॥

(१) शुचिग्रहणं गृहस्थत्वादिगुणवतामुपलक्षणार्थम् । स्मृच.९१

(२) विप्रतिपत्तिः द्वयोः परस्परविरुद्धभावाभावनिगदः । व्यचि.६१

(३) साक्षिणां विप्रतिपत्तौ बहवो यद् ब्रूयुः तद् ग्राह्यम् । तेषां साम्ये शुचयः नान्यथा वदन्तीति संभाविताः अन्येषु कार्येषु दृष्टप्रत्ययाः, तेषां वचो ग्राह्यम् । तेषां साम्ये स्मृतिमत्तराः कृतज्ञा विविक्तभावाः बहुशो दृष्टव्यवहाराः । नाभा.२।२०६

(४) बहवोऽधिकाः । एवं सभ्यद्वैधेऽपि, तुल्यन्यायत्वात् । विता.१७७

विरुद्धसाक्षिसाम्ये साक्ष्यमप्रमाणम्

स्मृतिमत्साक्षिसाम्यं तु विवादे यत्र दृश्यते ।
सूक्ष्मत्वात्साक्षिधर्मस्य साक्ष्यं व्यावर्तते ततः ॥

(१) तस्मात् स्मृतिमत्साक्षिसाम्याद् व्यावर्तते । साक्ष्यमनुस्मरणसक्तं न भवति । समक्षदर्शनानुपलब्धेरेकविषयमेव एके आहुः । उद्दिष्टाः साक्षिण इत्यन्ये आहुः ।

* व्यमा. 'बहुत्वं परिगृह्णीयादि'ति विष्णुवचने (पृ. २४६-२४७) द्रष्टव्या।

(१) **नासं**.२।२०४ पो (पं); **नास्मृ**.४।२२७ ऽपहरति (प्रहिणुयात्); **अभा**.७१; **व्यक**.५३ पो (पं) भयः (र्णयम्); **व्यचि**.४९ ति (ते); **व्यत**.२२० पो (पौ); **चन्द्र**.१४८ ति (ते) पो (पं); **व्यसौ**.५० पो (पं).

(२) **नासं**.२।२०५ वाग्विनिःसृताः (वाचि मिश्रिताः) हि (वै); **नास्मृ**.४।२२८ (वाच्यर्था नियताः सर्वे वाङ्मूला वाग्विनिश्चिताः); **अभा**.७१ वाङ्मू (त्वग्मू); **व्यक**.५३ यो हि (यस्तु); **व्यचि**.४९ व्यकवत्; **व्यत**.२२० व्यकवत्; **चन्द्र**.१४८ विनिसृताः (मनस्विताः) यो हि (यस्तु); **व्यसौ**.५० यो हि (यस्तु) वैस्ते (वैः स्ते).

(३) **नास्मृ**.२।३९; **अभा**.२७ पूर्वं (पूर्वं).

(१) **नासं**.२।२०६; **नास्मृ**.४।२२९; **अभा**.७१; **व्यमा**.३२५ (साक्षिणां विप्रतिपत्तौ प्रमाणं बहवो मताः । साम्ये तत् शुचयो ग्राह्यास्तत्साम्ये शुचिमत्तराः ॥) : ३३५ यतः (मताः) स्मृति (शुचि); **अप**.२।७८ व्यमा.३३५ वत्; **व्यक**.५९ यतः (मताः); **स्मृच**.९१ व्यकवत्; **स्मृसा**.१२१ व्यकवत्; **व्यचि**.६१ व्यकवत्; **सवि**.१४७तत्साम्ये स्मृति(समे तु शुचि); **विता**.१७७ व्यकवत्; **प्रका**.५९ व्यकवत्; **समु**.३७ व्यकवत्.

(२) **नासं**.२।२०७ सूक्ष्म (तीक्ष्ण); **नास्मृ**.४।२३०; **अभा**.७१; **व्यक**.४७; **स्मृच**.९१ ते ततः (येत्ततः); **सवि**.१४७ (तत्साम्यात् साक्षिसाम्ये च विवादो यत्र दृश्यते । सूक्ष्मत्वात्साध्यधर्मस्य साध्यं व्यावर्तयेत्ततः ॥); **व्यसौ**.४५; **प्रका**.५९ स्मृचवत्; **समु**.३७ स्मृचवत्.

न वयमिति उभयेषां च सतां साम्यं किं पुनर्विवक्षया समक्षदर्शनमिति विनिश्चय एव नोपपद्यते। ततश्च तन्निमित्तोत्पन्नस्य साक्ष्यस्याभाव एवेति— साक्ष्यं व्यावर्तते साक्षिण एव ते न भवन्तीति। एवं च कृत्वा प्राक्प्रतिज्ञातभेदादसाक्षिण इति समर्थितं भवतीति। अभा.७१

(२) स्मृतिमतां साम्यं यस्मिन् व्यवहारे दृश्यते, तीक्ष्णत्वात् प्रत्यवायबहुलत्वात् औदासीन्याध्दीनत्वाच्च साक्षिधर्मस्य विरुद्धवादिनोर्गणयोः, तत्र योऽन्यैः साक्षिभिर्दैवेन वा शुध्यति, तद्वचो ग्राह्यम्। स च वादी जयति। इतरः साक्षिवर्गः स च पक्षो यस्य स दण्ड्यः। अथवा साक्ष्यं व्यावर्तेत इति ततः परं साक्षिव्यापारो नास्ति, तत्र दैवेन वान्यैर्वा साक्षिभिर्निर्णयः, दण्डश्च पराजितस्य साक्षिवर्गस्य। नाभा.२।२०७

साक्षिरहितो वादी पराजीयते

**स्वसाक्षिवर्जितो यस्तु दैवाद्वादी कथञ्चन।**
**उद्धारं तस्य नेच्छन्ति दिव्येनापि मनीषिणः॥**

साक्ष्यस्य परीक्षा

[२] **निर्दिष्टेष्वर्थजातेषु साक्षी चेत्साक्ष्य आगते।**
**न ब्रूयादक्षरसमं न तन्निगदितं भवेत् *॥**

(१) अतो भाषायामुत्तरे वा यावानर्थो निर्दिष्टस्तस्येत्येवार्थे यदि साक्षित्वमागतः स्वीकृतस्तावन्तमर्थं न ब्रूयात् तदा तेनाऽकथितमेव भवेदित्यर्थः। व्यमा.३१२

(२) साक्ष्य आगते साक्ष्यवादावसरे। अक्षरसमं अक्षरानुरूपं, पृष्टार्थमिति यावत्। अनेनापृष्टार्थसमर्पकमपार्थमित्युक्तम्। स्मृच.९०

(३) तथा यत्रापि न्यूनातिरिक्ताभिधानं साक्षिणो भवति। यथा यस्मिन् देशे यस्मिन् काले यस्मिन्पत्रे शताभियोगे पृष्टः स साक्षी तस्मिन्नेव देशाधिके यद्येवमाह— नाहमस्य शतग्रहणं जानामि किन्तु पञ्चाशदिति न्यूनं, सार्धशतग्रहणं जानामीति चाधिकमेवाभिधत्ते। तदाप्यनभिहितमेव उभयत्राप्यन्यतरप्रतिज्ञासत्यतायां विनिगमकाभावात्। स्मृसा.११९

(४) त्वं मह्यं हेम्नां शतस्य धारयसि एष च तद्वेदेत्युद्दिष्टः साक्षी यत्र दिव्यं निगदति संख्यायां तु मुह्यते तत्र द्रव्यांशे तन्निगदनिरस्तसंशयमपहायानिर्णीतसंख्यांशे मानान्तरमनुसरणीयमित्येके, द्रव्यांशेऽपि क्रियान्तरमिति संप्रदायः। *व्यचि.५८

(५) निर्दिष्टेष्वर्थजातेषु गोभूहिरण्यादिषु साक्ष्य आगते साक्षिप्रश्नकाले यदि साक्षी न ब्रूयात् अक्षरसमम्। 'अयं मम हिरण्यं धारयति अयं मे साक्षी' इति स पृष्टः 'सत्यं जानाम्यहं न न जानामी' त्यक्षरसममेतत्। अतोऽन्यथा ब्रूयात् 'अस्य ग्रहीतुर्वाह्यं नीयमानं दृष्टमि'ति, न तन्निगदितं भवेत् न तत् साक्ष्यं दत्तं भवति। अक्षरानुरूपं भाषयितव्यः सः। नाभा.२।२०८

[१] **देशकालवयोद्रव्यप्रमाणाकृतिजातिषु।**
**यत्र विप्रतिपत्तिः स्यात् साक्ष्यं तदपि चान्यथा॥**

(१) एवं च ऋणादौ स्थिरकर्मणि अन्यूनानतिरिक्तं पृष्टार्थसमर्पकं साक्षिवचनं प्रमाणं नान्यदित्यनुसंधेयम्। स्मृच.९१

(२) देशश्च कालश्च वयश्च द्रव्यं च प्रमाणं चाकृतिश्च जातिश्चेति देशादयो द्वन्द्वाः। तेषु विप्रतिपत्तिः स्यात् अन्यथा लिखितमन्यथा साक्षी ब्रूयात् — देशे — 'गृहे मया दत्तं अत्रैते ज्ञातार' इति लिखिते 'क्व दीयमानं दृष्टं युष्माभिरि'ति पृष्टाः देशान्तरं यदि ब्रूयुः 'आपणे त्रैविद्यामण्टपे वे'ति, एवं काले — 'पूर्वाह्ण' इति लिखिते 'अपराह्ण' इति ब्रूयुः, वयसि — 'दम्य'

---

*अत्रत्या अभा.व्याख्या लेखकप्रमादान्मध्ये त्रुटिता तस्मान्नोद्धृता।

(१) नास्मृ.४।२३१.

(२) नासं.२।२०८; नास्मृ.४।२३२; अभा.७२ रसमं (रं सम्यक्); व्यमा.३१२ चेत् (तत्) आगते (मागतः) : ३३३ आगते (मागतः); व्यक.६० आगते (संग्रहः); स्मृच.९०; पमा.११४ बृहस्पतिः; स्मृसा.११९,१२१ आगते (मागतः); व्यचि.५७ स्मृसावत्; सवि.१४७ कात्यायनः; चन्द्र.१५२ (निर्दिष्टश्चार्थजातश्च साक्षी चेत्साक्ष्यमागतः।) समं (पदं) दितं (दत्तं); व्यसौ.५७ गते (गतः); वीमि.२।७९ चेत् साक्ष्य आगते (साक्ष्यत्वमागतः) न तन्निगदितं (तन्नैव गदितं); व्यप्र.१२९ स्मृसावत्; प्रका.५९; समु.३७; विव्य.१४ उत्त.

* वीमि. व्यचिगतम्।

(१) नासं.२।२०९; नास्मृ.४।२३३; विश्व.२।८१; व्यक.६०; स्मृच.९० चान्यथा (विप्लुतम्); दीक.३९ चान्यथा (कुत्सितम्); स्मृसा.१२१ दीकवत्; चन्द्र.१५२ दीकवत्; व्यसौ.५७ दीकवत्; व्यप्र.१२९ दीकवत्; प्रका.५९ स्मृचवत्; समु.३५ स्मृचवत्.

इति लिखिते 'बलीवर्द' इति ब्रूयुः, द्रव्ये— 'हिरण्यमि'ति लिखिते 'धान्यमि'ति ब्रूयुः, प्रमाणे — मणिमुक्तादीनां 'बदरमात्रमि'ति लेखिते 'निष्पावमात्रमि'ति ब्रूयुः, आकृतौ— 'स्त्रीरूपा' इति लेखिते 'पुरुषरूपा' इति ब्रूयुः, जातौ— 'इन्द्रनीलमि'ति लेखिते 'वैडूर्यमि'ति ब्रूयुः तदपि चान्यथा न साक्ष्यमित्यर्थः। हीनः स भवति येन ते साक्षिण उद्दिष्टाः। नाभा.२।२०९

**ऊनं वाऽप्यधिकं वाऽर्थं प्रब्रूयुर्यत्र साक्षिणः।**
**तदप्यनुक्तं विज्ञेयमेष साक्ष्यविधिः स्मृतः *॥**

(१) यत्र ऋणादिरिथरप्रायविवादेष्वित्यर्थः।

स्मृच.९०

(२) अयमर्थः— न तावदधिकाभिधानं साक्षिणः प्रमाणावगतसार्द्धशतग्रहणमूलकमिति वक्तुं शक्यते आदावारभ्य सातिशयो हि स्मृतिमूलसंस्कारातिशयाधायकः। स चार्थिन एव युज्यते, न साक्षिणः। तेनार्थी न स्मरति साक्षी च स्मरत्यधिकमिति नोपपन्नम्। नाप्यर्थिकृतप्रतिज्ञासत्यत्वप्रतिपादनार्थः। अर्थिनाऽप्यधिकग्रहणस्याप्रतिज्ञातत्वात्। नापि विषयान्तरत्वं, देशकालादेस्तस्यैव प्रत्यभिज्ञानात्। तेनान्यथाऽनुपपत्त्या इदमेव गम्यते, यदयं ग्रहणं जानात्येव, द्रव्यसंख्यादौ भ्रान्त इति। न च भ्रान्तिमूलमभिधानमन्यतरप्रतिज्ञासत्यत्वे प्रमाणम्। ननु भवत्येवमधिकाभिधाने, न्यूनाभिधाने तु कथम्? उत्तरवाद्युक्तशतग्रहणस्य साक्ष्यभिहितपञ्चाशद्ग्रहणेऽपि सत्यत्वात्। कथं न तस्य विजयः? उच्यते— नात्रोत्तरवादिनः शतसंख्यास्वरूपे तात्पर्यम्। तथा सति विशेषनिषेधप्रतिज्ञायाः शेषाभ्यनुज्ञाफलकत्वादिति न्यायेनोनशतसंख्यावच्छिन्नग्रहणस्वीकारप्रसङ्गात्। किन्तु शतं मया न गृहीतमित्यस्यायमर्थः— यत्तस्मिन् देशादौ न मयाऽस्य किमपि गृहीतमिति। पञ्चाशद्ग्रहणाभिधानेनान्यतरप्रतिज्ञासत्यत्वमिति साधूक्तम्। तदप्ययुक्तं विज्ञेयमिति। सर्वत्र चात्र संशयप्रशमनार्थं दिव्यादिना क्रियान्तरेण निर्णयः। उक्तस्यापि संदेहानपाकरणेन फलतोऽनुक्तत्वात्। अतो नैतावता जयपराजयावधारणम्। किन्तु क्रियान्तरेणेति वाक्यार्थः। तदुक्तम्— 'न तन्निगदितं भवेदि'ति। इयांस्तु विशेषः— साक्षिणा सर्वथा संख्यानभिधाने अधिकाभिधाने च सकलप्रतिज्ञायामेव क्रियान्तरम्। न्यूनाभिधाने तु पञ्चाशद्ग्रहणस्याभिहितस्य भ्रान्त्यादिमूलत्वे शङ्काबीजाभावात्, तदतिरिक्तानभिधाने तु परस्मरणस्यापि शङ्कितत्वाद् धर्मव्यवहारे च छलादेर्निरसनीयत्वात् साक्ष्यभिहितपञ्चाशत्पुराणातिरिक्ते निर्णयान्तरमिति विवेचनीयम्। यत्तु नारदेनैकदेशविभावनेऽपि सर्वस्य विवादविषयस्य देयत्वमुक्तं, तदुक्तम्— 'अनेकार्थाभियुक्तेषु सर्वार्थेष्वपलापिना। विभावितैकदेशेन देयं तदपि युज्यते'॥ इत्यनेकवचनविरोधेन यत्रैकग्रहणमन्यग्रहणाव्यभिचारि तद्विषयं व्याख्येयम्। तद्यथा— सुवर्णाद्यनेकवस्तुसहितं पात्रं चौरेण गृहीतं तत्रैकदेशस्यापि सुवर्णाद्यन्यतरस्य विभावने सर्वमेव देयम्। राजदण्डविषयं वा अपराधत्वात् सर्वमेव राज्ञा ग्राह्यं, स्वयं यत्र वादी तथाङ्गीकरोति तद्विषयं वा। *स्मृसा.११९-१२१

(३) साक्षिणा न्यूनस्याधिकस्य वाऽभिधाने द्रव्येऽपि क्रियान्तरमिति मिताक्षरा। साक्षी च यदा प्रतिज्ञातार्थं पृष्टस्तन्न ब्रूते, किन्तु तद्व्याप्यं तत्रापि तन्निगादकस्य वादिनो जय एव। तदभिधानोपस्थापितानुमानेन वादिप्रतिज्ञातार्थस्य प्रमितत्वात्। न च साक्षिणा तदनभिधानात् न तथेति वाच्यम्। 'यस्योचुः साक्षिणः सत्यां

* अत्रत्यं अभा.व्याख्यानं बहुस्थलेष्वशुद्धत्वान्नोध्दृतम्।

(१) **नासं**.२।२.१० वाप्य (अभ्य); **नास्मृ**.४।२३४; **अभा**.७२ वाप्य (अभ्य) वा (चा) क्ष्य (क्ष्ये); **विश्व**.२।८१ ऊनं वाप्य (न्यूनमभ्य) वा (चा); **व्यमा**.३३३ वाप्य (अप्य) र्थं (पि) नु (यु) क्ष्य (क्षि); **व्यक**.६० नु (यु) क्ष्य (क्षि); **स्मृच**.९० वाप्य (अभ्य) प्र (वि); **पमा**.११४ वाप्य (अभ्य) प्र (वि) प्यनुक्तं (र्थानुक्त) क्ष्य (क्षि) बृहस्पतिः; **स्मृसा**.११९ ऊनं वाप्य (न्यूनमप्य) र्थं (पि) प्रब्रूयुर्यत्र (ब्रूयुर्यस्य च) क्ष्य (क्षि); **व्यचि**.५८ ऊनं (न्यूनं) यत्र (यस्य) क्ष्य (क्षि); **सवि**.१४७ वाप्य (अभ्य) प्र (वि) नु (यु) क्ष्यविधिः स्मृतः (क्षिविनिश्चयः); **चन्द्र**.१५२ र्थं (पि) यत्र (यस्य); **व्यसौ**.५७ वाप्य (अभ्य) र्थं (पि) नु (यु); **वीमि**.२।७९ ऊनं वाप्य (न्यूनमभ्य) र्थं (पि) त्र (स्य) क्ष्य (क्षि); **व्यप्र**.१२९ वाप्य (मप्य) र्थं (पि); **विता**.१७५ ऊनं वाप्य (न्यूनमभ्य) र्थं (पि) (त्र स्य) नु (यु) क्ष्य (क्ष्ये); **प्रका**.५९ वाप्य (अभ्य) प्र (वि) क्ष्य (क्षि); **समु**.३७ वाप्य (अभ्य) प्र (वि) क्ष्य (क्षि).

* वीमि. स्मृसावत्, व्यचिवच्च।

प्रतिज्ञां स जयी भवेत्' इति स्मृतेर्न्यायमूलकतया साक्षिपदस्य उपलक्षणत्वे केनापि प्रमाणेन यत्प्रतिज्ञातोऽर्थः प्रमितः स जयीत्येवंपरत्वात् । 'साध्यार्थांशेऽपि गदिते साक्षिभिः सकलं भवेत् । स्त्रीसङ्गे साहसे चौर्ये यत्साध्यं परिकीर्तितम् ' ॥ इति कात्यायनवचनादेकदेशप्रमाणे सर्वदेयता चौर्यादाविति मिताक्षरा । श्रुतसाक्षी तु पृष्टो यत्राहमिममर्थमश्रौषमित्याह, तत्र नार्थसिद्धिः शब्दार्थयोर्व्याप्त्यभावात् किन्तु प्रत्यक्षादिव शब्दादप्यर्थं यत्रावधारयति, तत्र प्रामाण्यशङ्काकलङ्कानालिङ्गितशब्देन प्रमितार्थोऽर्थमेव यत्र निगदति तत्रैवार्थसिद्धिः । तत्र कलङ्के तु न साक्षी न वा तन्निगद आदेय इति ।

×व्यचि.६०

(४) लिखितादूनमधिकं वार्थं पृष्टाः साक्षिणो ब्रूयुः 'दशे'ति लेखिते 'सप्ते'ति 'द्वादशे'ति वा, पृष्टाः साक्षिणो ब्रूयुस्तदप्यनुक्तं साक्ष्यम् । एष साक्षिधर्मः । तत्रातिरिक्तवचने साक्षिणो मृषावादिनः । न स्वार्थं कश्चिदूनं प्रतिजानीते । सर्वथा हीनः स भवति । तदूनवचने विभाषितैकदेशत्वात् दाप्यः सर्वं स्यात् । न । विषयभेदात् । अपह्नुते लोप्त्रादिनैकदेशे विभाषिते सर्वं दाप्य इति तदुक्तम् । इह तु प्रतिज्ञासाक्षिवचनयोर्विप्रतिपत्तिरिति वैषम्यं तेन ! नाभा.२।२१०

(५) न चाधिकाभिधानमसंभवि वादितः प्रतिवादितो वाऽश्रुतेऽदृष्टे वाऽनुभवमूलकसंस्काराभावेनास्मृततत्प्रतिपादनासंभवादिति वाच्यम् । करणापाटवादिना श्रुतिदृष्टयोरुभयोरपि संभवात् । अत एव भ्रान्तिमूलत्वेनाप्रामाण्यात् तद् उक्तमपि अनुक्तमित्युक्तम् । न च तथाप्यूनाभिधाने कुत अनुक्तिः ? साक्षिवचनात्तावतः सिद्धावेकदेशविभावितन्यायेनाऽन्यांशस्यापि सिद्धेर्जयफलकतया न्यूनतोक्तेरदुष्टत्वादिति वाच्यम् । प्रतिज्ञातसकलसाध्यसाधकतयोद्दिष्टेषु न्यूनमभिहितवत्सु न तन्न्यायावसर इति प्रागावेदितत्वात् । व्यप्र.१२९

**[१]यस्य दृश्येत सप्ताहादुक्तसाक्ष्यस्य साक्षिणः ।**
**रोगोऽग्निर्ज्ञातिमरणं ऋणं दाप्यो दमं च सः ॥**

× शेषं स्मृसागतम् ।

(१) अप.२।८१ साक्ष्य (वाक्य) गो (गा); व्यक.५८ मनुनारदौ; स्मृसा.१०३ मनुनारदौ; व्यचि.५५; दवि.३४७ मनुनारदौ; स्मृचि.४८ मनुनारदौ; व्यसौ.५५; वीमि.२।७९.

## बृहस्पतिः

द्वादशविधाः साक्षिणः

**[१]लिखितो लेखितो गूढः स्मारितः कुल्यदूतकौ ।**
**यादृच्छिकश्चोत्तरश्च कार्यमध्यगतोऽपरः ॥**
**[२]नृपोऽध्यक्षस्तथा ग्रामः साक्षी द्वादशधा स्मृतः ।**
**प्रभेदमेषां वक्ष्यामि यथावदनुपूर्वशः ॥**

(१) लिखितस्यैव स्वयं परेण वा लिखनभेदात् द्विविधत्वम् । व्यमा.३२१

(२) अत्र साक्षी द्विविधः द्रष्टा श्रोता च । तत्र द्वावपि षड्विधौ, तत्राद्यो लिखितलेखितस्मारितकुल्ययादृच्छिककार्यमध्यगतभेदात् षोढा । अन्यो गूढदूतकोत्तरसाक्षिग्रामाध्यक्षराजभेदात् षोढैव । व्यचि.३६

(३) अर्थिना पत्रे विनिवेशितो लिखितः । कुड्यादिव्यवधानेन श्रावितो गूढः । पुनःपुनः कार्यं स्मार्यमाणः स्मारितः । यदृच्छयैवागतः साक्षी क्रियमाणो यादृच्छिकः । श्रवणाच्छ्रावणाद्वा साक्षिणामप्युपरि परि भाषमाण उत्तरः । अध्यक्षः प्राड्विवाकः । इदं च सभ्यादीनामुपलक्षणम् । व्यम.१५

(४) प्रत्यर्थिना अर्थिपरेण यो निवेशितो लेखितः ।

*बाल.२।६८

**[३]जातिनामादि लिखितं येन स्वं पित्र्यमेव च ।**
**निवासश्च स विज्ञेयः साक्षी लिखितसंज्ञकः ॥**

---

* शेषं व्यमगतम् ।

(१) व्यमा.३२१ तो लेखि (तोऽलिखि) रितः (रितौ) च्छिकश्चोत्तरश्च (च्छाश्चोत्तराश्चैव); अप.२।६९ यादृच्छिकश्चोत्तरश्च (यदृच्छश्चोत्तरश्चैव); व्यक.४१ अपवत्; स्मृच.८१ च्छिक (च्छक); पमा.१०२ तो ले (ते लें) या ... श्च (यदृच्छोत्तरसाक्षी च); व्यचि.३५ तोऽप (तः प); नृप्र.९; व्यसौ.३९; वीमि.२।७२ व्यचिवत्; व्यप्र.१०७; व्यम.१५; विता.१५८; बाल.२।६८ दूत (दत्त); प्रका.५२; समु.३१ कुल्य (कुल); विव्य.११-१२.

(२) व्यमा.३२१ स्मृ (म); अप.२।६९; व्यक.४१; स्मृच.८१ पू.; पमा.१०२; व्यचि.३५; नृप्र.९; व्यसौ.३९; वीमि.२।७२; व्यप्र.१०७-१०८; व्यम.१५पू.; विता.१५८पू.; प्रका.५१ उत्त., ५२ पू.; समु.३१; विव्य.१२पू.

(३) व्यमा.३२१ मादि (माभि) निवा (निरा) संज्ञ (सञ्ज्ञ); अप.२।६९; व्यक.४१ दि (भि); स्मृच.८०; पमा.

**अर्थिना च क्रियाभेदैस्तस्य कृत्वा ऋणादिकम् ।**
**प्रत्यक्षं लिख्यते यस्तु लेखितः स उदाहृतः ॥**
**कुड्यव्यवहितो यस्तु श्राव्यते ऋणिभाषितम् ।**
**विनिह्नुते यथाभूतं गूढसाक्षी स कीर्तितः ॥**
**आहूय यः कृतः साक्षी ऋणन्यासक्रियादिके ।**
**स्मार्यते च मुहुर्यश्च स्मारितः सोऽभिधीयते ॥**
**विभागदाने विपणे ज्ञातिर्यत्रोपयुज्यते ।**
**द्वयोः समानो धर्मज्ञः कुल्यः स परिकीर्तितः ॥**

१०२ दि (भि) (निवासं च समुद्दिष्टं स साक्षी लिखितः स्मृतः); **व्यचि.**३५ व्यकवत्; **नृप्र.**९; **व्यसौ.**४० व्यकवत्; **वीमि.**२।७२ पूर्वार्धे (स्वजातिर्लिखिता येन येन स्वं पितृनाम च); **व्यप्र.**१०८ व्यकवत्; **विता.**१५८ व्यकवत्; **प्रका.**५१; **समु.**३१; **विव्य.**१२ व्यकवत्.

(१) **व्यमा.**३२१ पूर्वार्धे (संधिक्रियां क्रियोभदैस्तस्य कृत्वा ऋणादिके) लिख्य (लेख्य) यस्तु (यश्च); **अप.**२।६९ अर्थिना च (संविक्रियां) तस्य (कार्यं) लिख्यते यस्तु (लेख्यते यच्च); **व्यक.**४१-४२ नाच (क्रियां) लिख्यते यस्तु (लेख्यते यश्च); **पमा.**१०२ अर्थिना च (संधिक्रियां) दिकम् (दिके) यस्तु (यस्य); **व्यचि.**३५; **नृप्र.**९ना च (क्रियां) स्तु (श्च); **व्यसौ.**४० ना च (नश्च); **वीमि.**२।७२; **व्यप्र.**१०८; **विता.**१५८ अर्थिना च (अर्थक्रिया) लिख्यते यस्तु (लेख्यते यश्च); **प्रका.**५१ अर्थिना च (संधिक्रियां) लिख्यते यस्तु (लेखितो यश्च); **समु.**३१ लिख्यते यस्तु (लेख्यते यश्च) शेषं प्रकावत्.

(२) **अप.**२।६९ णि (ण) ह्नुते (ह्नुतो) ढ (ढः) कीर्तितः (उच्यते); **व्यक.**४२ ढ (ढः); **स्मृच.**८० यथा (तथा) कीर्तितः (उच्यते); **पमा.**१०२ व्यकवत्; **व्यचि.**३५ णि (ण) ढ (ढः); **नृप्र.**९; **व्यसौ.**४० यस्तु (यश्च) कीर्तितः (उच्यते); **वीमि.**२।७२ स्तु (श्च) णि (ण); **व्यप्र.**१०८; **प्रका.**५१ यथाभूतं (तथाहूतो) कीर्तितः (उच्यते); **समु.**३१ भाषि (भावि) ढ (ढः) शेषं स्मृचवत्.

(३) **व्यमा.**३२१ सोऽभिधीयते (स उदाहृतः); **अप.**२।६९ व्यमावत्; **व्यक.**४२ ण (णे); **स्मृच.**८० क्रिया (क्रया) शेषं व्यमावत्; **पमा.**१०२ यश्च (तच्च); **व्यचि.**३५ च (ऽथ); **नृप्र.**९; **व्यसौ.**४०; **वीमि.**२।७२ च (ऽर्थं); **व्यप्र.**१०८ च (यो) यश्च (चैव); **प्रका.**५१ स्मृचवत्; **समु.**३१ व्यमावत्.

(४) **व्यमा.**३२२ युज्यते (दिश्यते); **अप.**२।६९ यत्रो (यश्चो); **व्यक.**४२ कुल्यः स (स कुल्यः) शेषं व्यमावत्; **स्मृच.**८१; **पमा.**१०२ विभागदाने विपणे (विभागे दान आधाने) युज्यते (दिश्यते); **व्यचि.**३५ व्यमावत्; **नृप्र.**१० व्यकवत्; **व्यसौ.**४० व्यमावत्; **वीमि.**२।७२ व्यमावत्; **व्यप्र.**१०८ व्यकवत्; **प्रका.**५२; **समु.**३१.

**अर्थिप्रत्यर्थिवचनं शृणुयात्प्रेषितस्तु यः ।**
**उभयोः संमतः साधुर्दूतकः स उदाहृतः ॥**
**क्रियमाणे तु कर्तव्ये यः कश्चित्स्वयमागतः ।**
**अत्र साक्षी त्वमस्माकमुक्तो यादृच्छिको मतः ॥**
**यत्र साक्षी दिशं गच्छन् मुमूर्षुर्वा यथाश्रुतम् ।**
**अन्यं संश्रावयेत्तं तु विद्यादुत्तरसाक्षिणम् ॥**
**उभाभ्यां यस्य विश्वस्तं कार्यं वा विनिवेदितम् ।**
**गूढचारी स विज्ञेयः कार्यमध्यगतस्तथा ॥**
**अर्थिप्रत्यर्थिनोर्वाक्यं यच्छ्रुतं भूभृता स्वयम् ।**

(१) **व्यमा.**३१९ शृणुयात् (भाषते) यो: संमतः (यानुमतः): ३२२; **अप.**२।६९; **व्यक.**४२; **स्मृच.**८०; **पमा.**१०२ नं (ने); **व्यचि.**३५; **नृप्र.**१० तु (च); **व्यसौ.**४०; **वीमि.**२।७२; **व्यप्र.**१०८; **प्रका.**५२; **समु.**३१; **विव्य.**११ पूर्वार्धे (उभयानुमतः साक्षी दूतकः स उदाहृतः).

(२) **व्यमा.**३२१ क्षी त्वम (क्षित्वम) मतः (ऽपि सः); **अप.**२।६९ को मतः (कस्तु सः); **व्यक.**४२ (अस्ति साक्षित्वमस्माकमुक्तो यादृच्छिकस्तु सः); **स्मृच.**८० अत्र (तत्र) शेषं व्यकवत्; **पमा.**१०३; **व्यचि.**३५ तु (च) क्षी त्वम (क्षित्वम) को मतः (कस्तु सः); **नृप्र.**१० अपवत्; **व्यसौ.**४० क्षी त्वम (क्षित्वम) को मतः (कश्च सः); **वीमि.**२।७२ तु (च) क्तो (क्ते) को मतः (कस्तु सः); **व्यप्र.**१०८ व्यचिवत्; **प्रका.**५१ क्षी (क्षि) को मतः (कस्तु सः); **समु.**३१ प्रकावत्; **विव्य.**१२ मतः (स्मृतः).

(३) **व्यमा.**३२१; **अप.** २।६९ च्छन् (च्छेत्) श्रुतम् (क्रमम्); **व्यक.**४२ च्छन् (च्छेत्) यथाश्रुतम् (श्रुतं वचः); **स्मृच.**८०; **पमा.**१०३ श्रुतम् (स्मृतम्); **व्यचि.**३५ यत्र साक्षी (यः साक्षी तु); **नृप्र.**१० अपवत्; **व्यसौ.**४० यत्र (यस्तु); **वीमि.**२।७२ यत्र साक्षी (यः साक्षी तु) श्रुतम् (क्रमम्); **व्यप्र.**१०८ यत्र (यस्तु) च्छन् (च्छेत्); **प्रका.**५२; **समु.**३१; **विव्य.**१२.

(४) **व्यमा.**३२०,३२२ वा वि (वाऽपि); **अप.**२।६९ वा वि (चापि) चारी (धारी); **व्यक.**४२ वा वि (वापि) बृहस्पतिकात्यायनौ; **स्मृच.**८० यस्य (यत्र) शेषं अपवत्; **पमा.**१०३ गूढचारी (कूटसाक्षी); **व्यचि.**३५; **नृप्र.**१० वा वि (वाऽपि) गूढ (कूट); **व्यसौ.**४० बृहस्पतिकात्यायनौ; **वीमि.**२।७२; **व्यप्र.**१०८ व्यकवत्; **प्रका.**५२ चारी (साक्षी) शेषं स्मृचवत्; **समु.**३१ स्मृचवत्; **विव्य.**११ उत्त.

(५) **व्यमा.**३२० श्रुतं (व्रतं) भूभृता (प्रभृतात्) (तत्र०) बृहस्पतिकात्यायनौ : ३२२; **अप.**२।६९; **व्यक.**४२ बृहस्पति-

**स एव तत्र साक्षी स्याद्विसंवादे द्वयोरपि ॥**
**निर्णीते व्यवहारे तु पुनर्न्यायो यदा भवेत् ।**
**अध्यक्षः सभ्यसहितः साक्षी स्यात्तत्र नान्यथा॥**
**मुषितं घातितं यत्र सीमायाश्च समन्ततः ।**
**अकृतोऽपि भवेत्साक्षी ग्रामस्तत्र न संशयः ॥**

(१) अर्थिना प्रहित इत्यर्थिपदं वादिद्वयपरम् । उभयोरपि स्वपक्षार्थित्वात् तेनान्यतरेण वचनग्रहणार्थं प्रहितत्वाद् दूतक इत्युच्यते । द्वयोः समानः न कस्याप्यरिमित्रभूतः, साधारण इत्यर्थः । व्यमा.३२२

(२) तत्र प्रथमषट्के आद्यस्य लक्षणं जातीत्यादि क्रियादर्शी स्वयं लिखितं स्वसाक्ष्ये लिखितसाक्षीत्यर्थः। द्वितीयस्य तु अर्थिनेत्यादि क्रियादर्शी वणिगादिलिखितो लेखित इत्यर्थः । तृतीयस्य तु आहूयेत्यादि क्रियादर्शी तद्बोधितसंस्कारः स्मारित इत्यर्थः । चतुर्थस्य च विभागेत्यादि क्रियादर्शी धनिकेत्यादिसन्नाभिः कुल्य इत्यर्थः। पञ्चमस्य तु क्रियमाणेत्यादि क्रियादर्शी अतिरस्कृताऽपुरस्कृतो याद‍ृच्छिक इत्यर्थः। षष्ठस्य तु उभाभ्यामित्यादि तत्तत्क्रियाव्यवहारान्तर्गतस्तत्क्रियादर्शी कार्यमध्यगत इत्यर्थः । अत्र विश्वस्तं विश्वासः स कृतः 'वा'कारः समुच्चये यद्यपि कार्यविनिवेदनात् श्रुतौ साक्ष्यसौ, तथापि कार्यमध्यगतत्वं पुरस्कृत्य द्रष्टृवर्गे गणित इत्यवधेयम् । उत्तरषट्के तु प्रथमस्य लक्षणं अन्ये त्यादिष्वभियुक्ताज्ञातः सन्नभियोक्त्रभिहिताभियुक्तवाक्यश्रावी गूढसाक्षीत्यर्थः । द्वितीयस्य तु अर्थीत्यादि प्रेषितो निर्णयक्रमवादिवाक्यश्रावी दूतक इत्यर्थः । तृतीयस्य तु य इत्यादि श्लोकद्वयं, साक्षिवचनात्तदर्थनिश्चयवान् उत्तरसाक्षीत्यर्थः । चतुर्थस्य तु अर्थीत्यादिभाषोत्तरश्रावी अपरः साक्षीत्यर्थः । अस्य तु भाषाद्यपह्नवे सति पूर्वभाषाद्यभिज्ञतया निर्णायकत्वम् । पञ्चमस्य तु निर्णीतेत्यादि पूर्वजयज्ञः पञ्चमः साक्षीत्यर्थः । षष्ठस्य तु दूषित इत्यादि अभियोगहेतुभूतोपघातद्रष्टा । उपहन्तव्यसीमोत्सादादिश्रोता ग्रामादिस्थः षष्ठः साक्षीत्यर्थः । व्यचि.३६-३७

(३) लिखितलेखितयोः स्वपरलिखनमात्रभेदादेकादशद्वादशसंख्ययोरविरोधः । सर्वे च यथासंभवं दृष्टश्रुतरूपद्विविधसाक्षिभेदा ज्ञेयाः । क्रियाभेदैर्व्यवहारप्रकारभेदैः । तस्य प्रत्यर्थिनः । ऋणादिकमित्यादिशब्दात् यथासंभवं सर्वविवादपदनिदर्शनम् । कुड्यग्रहणं व्यवधायकोपलक्षणम् । विनिह्नुते इति भावे क्तः । निह्नवे संभावित इति शेषः । इत्युक्त इतीतिशब्दाध्याहारः । दिशं देशान्तरम् । तं अन्यमित्यर्थः । उभाभ्यां अर्थिप्रत्यर्थिभ्याम् । यस्य विश्वस्तं यदीयो विश्वासः कृत इति संबन्धसामान्यविवक्षया षष्ठीं भावे क्तं चाभ्युपेत्य व्याख्येयम् । गूढचारी कार्यमध्यगतश्चेत्येकस्यैव संज्ञाद्वयमिति द्वादशत्वाऽविरोधः । दूतग्रहणं लेखकस्यापि प्रदर्शनार्थम् । 'दूतकः खटिकाग्राही' इति बृहस्पतिवचनात् । ग्रामग्रहणमप्यकृतसाक्ष्युपलक्षणम् । येन योऽर्थः प्रमितस्तत्र साक्षित्वेन प्रागनिरूपितोऽपि पश्चात्साक्षित्वेन विज्ञायोपन्यस्तः पृष्टश्च सभायां साक्ष्यं दातुमर्हतीति फलितोऽर्थः । इतरथा वेतनादानादिषु लिखिताद्यसंभवे साक्ष्यभावप्रसङ्गः । व्यप्र.१०८-१०९

कियन्तः साक्षिणो ग्राह्याः

**नव सप्त पञ्च वा स्युः चत्वारस्त्रय एव वा ।**
**उभौ वा श्रोत्रियौ ग्राह्यौ नैकं पृच्छेत्कदाचन ॥**

कात्यायनौ; **स्मृच**.८०; **पमा**.१०३ वाक्यं (वापि) श्रुतं (वृत्तं) तथा (अपि); **व्यचि**.३५-३६; **व्यसौ**.४० विसंवादे (विवादे तु); **वीमि**.२।७२; **व्यप्र**. १०८; **समु**.३१.

(१) **व्यमा**.३२०,३२२; **अप**.२।६९; **व्यक**.४२ बृहस्पतिकात्यायनौ; **स्मृच**.८०; **पमा**.१०३; **व्यचि**.३६; **नृप्र**.१०; **व्यसौ**.४०; **वीमि**.२।७२; **व्यप्र**.१०८; **प्रका**.५२; **समु**.३१; **विव्य**.१२ न्यायो (वादो) अध्यक्षः (अदुष्टः).

(२) **व्यमा**.३२२ माया (मयो); **अप**.२।६९ अकृतो (अर्थतो); **व्यक**.४२ यत्र (यच्च) स्तत्र (स्तेन); **स्मृच**.८० मुषितं घातितं (घातितं मुषितं); **पमा**.१०३ मु (व्यु) घाति (छादि) याः (यां) अकृ (स कृ); **व्यचि**.३६ मु (दू) यत्र (यत्तु) च (तु); **नृप्र**.१०; **व्यत**.२१९ यत्र (यच्च); **व्यसौ**.४०; **वीमि**.२।७२ मु (दू) यत्र (य ) याः (यां); **व्यप्र**.१०८ मु (दू) यत्र (यच्च) च (तु); **प्रका**.५२ स्मृचवत्; **समु**.३१ स्मृचवत्.

(१) **व्यमा**.३१७ भौ वा (भौ च) ग्राह्यौ (ज्ञेयौ); **व्यक**.४३; **स्मृच**.७६ ग्राह्यौ (ख्यातौ); **पमा**.९५ पञ्च वा (च पञ्च) ग्राह्यौ (ख्यातौ); **व्यचि**.३८ सप्त पञ्च (पञ्च सप्त) भौ वा (भौ तु); **नृप्र**.१० स्मृचवत्; **व्यत**.२१२ भौ वा (भौ तु);

(१) नवादिषु पूर्वपूर्वालाभे परः परो ग्राह्यः विषमशिष्टत्वात् । व्यमा.३१७

(२) तत्र उभाविति लिखितगूढसाक्षिविषयम् । स्मृच.७६

(३) श्रोत्रियाविति त्र्यवरसाक्षिगुणापेक्षया उत्कृष्टगुणावित्यर्थः । व्यचि.३८

(४) तच्च उभयसंमतव्यतिरिक्तविषयम् । नव–पञ्च–सप्त–त्रयाणां विषमसंख्यात्वेऽपि संख्यासाम्यप्रतिपादनं प्राबल्यार्थमित्युक्तत्वाददोषः । सवि.१३८

[१]**लिखितौ द्वौ तथा गूढौ त्रिचतुःपञ्च लेखिताः ।**
**यदृच्छास्मारिताः कुल्यास्तथा चोत्तरसाक्षिणः ॥**

(१) लिखितौ द्वावपि साक्षिणौ, गूढागूढौ च चत्वारोऽपि, लेखितयादृच्छिकस्मारितकुल्योत्तरसाक्षिणस्तु प्रत्येकं त्र्यवरा एव । तदाह बृहस्पतिः— लिखिताविति । लिखितादिषु सर्वत्र बहुवचनात् त्रयोऽवश्यं ग्राह्याः । चतुःपञ्चेति तत्प्राप्तौ न तु त एव ग्राह्या इत्येतदर्थम् । व्यमा.३२१

(२) लेखिताद्यास्त्र्यवराः । एतच्च भूपादीनां प्रतीतार्थस्मृतिहेतूत्कर्षवत्तया, लिखितगूढयोः संनिकृष्टतया, लेखितादीनां ततोऽतिनिकृष्टतया ज्ञेयमिति रत्नाकरः । चन्द्र.१३५

[२]**दूतकः खटिकाग्राही कार्यमध्यगतस्तथा ।**
**एक एव प्रमाणं स्यान्नृपोऽध्यक्षस्तथैव च ॥**

(१) खटिकाग्राही भाषोत्तरलेखकः । व्यमा.३१९

(२) घटिकाग्राही गणकः । अध्यक्षः प्राड्विवाकः । स्मृच.७६

(३) एक एवेत्येवकारो वाद्यपेक्षाया ‘ नैकं पृच्छेत्कदाचन ’ इत्यनेनोक्ताया अनावश्यकत्वार्थो न नियमार्थोऽदृष्टार्थत्वप्रसङ्गात् । ‘त्र्यवराः साक्षिणो ज्ञेया ’ इति योगीश्वरीयमप्येतदभिप्रायकमेव । व्यप्र.११२

(४) त्र्यवरा इति नियमस्तु निर्गुणपरो यादृच्छिकादौ च । विता.१५५

कीदृशाः साक्षित्वमर्हन्ति । कीदृशाश्च नार्हन्ति ।

[१]**प्रष्टव्याः साक्षिणो ये तु वर्ज्याश्चैव नराधमाः ।**
**तानहं कथयिष्यामि साम्प्रतं शास्त्रचोदितान् ॥**

एतच्च साक्ष्यसाक्ष्यभिधानं मनुनारदादिभिरुक्तानां साक्षिणामसाक्षिणां च प्रदर्शनार्थम् । अत एव शास्त्रचोदितानित्युक्तम् । स्मृच.८५

[२]**श्रौतस्मार्तक्रियायुक्ता लोभद्वेषविवर्जिताः ।**
**कुलीनाः साक्षिणोऽनिन्द्यास्तपोदानदयान्विताः ॥**
[३]**सन्तोऽपि न प्रमाणं स्युर्मृते धनिनि साक्षिणः ।**
**पुत्रे तु श्राविता ये स्युः स्वयमासन्नमृत्युना ।**
**ते साक्षिणो भवन्त्येव यथान्ये साक्षिणो मताः ॥**
[४]**मातुः पिता पितृव्यश्च भार्याया भ्रातृमातुलौ ।**
**भ्राता सखा च जामाता सर्ववादेष्वसाक्षिणः ॥**

अर्थिनोरन्यतरस्य एतादृशसंबन्धिनो न साक्षिणः संबन्धिनि स्नेहादन्यत्र वैरसंभवादिति ध्येयम् । व्यप्र.११९

[५]**परस्त्रीपानसक्ताश्च कितवाः पूर्वदूषिताः ।**

---

**सवि.**१३८ ग्राह्यौ (शान्तौ); **चन्द्र.**१३५ पञ्च वा (च पञ्च) ग्राह्यौ (ख्यातौ); **व्यसौ.**४०; **वीमि.**२।७२ व वा (व च); **व्यप्र.**११२ ग्राह्यौ (ख्यातौ); **व्यम.**१५; **विता.**१५५ सप्त ...स्युः (सप्ताथवा पञ्च) ग्राह्यौ (ख्यातौ); **सेतु.**११८ (=) सप्त...स्युः (सप्ताथवा पञ्च) वा (तु); **प्रका.**४९ स्मृचवत्; **समु.**२८ स्मृचवत्; **विव्य.**११ मौ वा (मौ तु) ग्राह्यौ (ज्ञेयौ).

(१) **व्यमा.**३२१ यदृच्छा (यादृच्छाः); **व्यक.**४३; **स्मृच.**७६ ताः कुल्याः (ता कुल्या); **पमा.**१०३; **नृप्र.**१०; **चन्द्र.**१३५; **व्यसौ.**४१; **व्यप्र.**११२ च्छा (च्छाः); **व्यम.**१५; **विता.**१५५ व्यमावत्; **बाल.**२।६८ ताः (तः) उत्त.; **प्रका.**४९; **समु.**३१.

(२) **व्यमा.**३१९; **व्यक.**४३; **स्मृच.**७६,९४ कः ख (को घ); **पमा.**९६ दूतकः ख (बूतकः श):१०३; **नृप्र.**१०; **चन्द्र.**१३५ दूतकः (भृतकः); **व्यसौ.**४१; **व्यप्र.**११२; **व्यम.**१५; **विता.**१५५ तकः (तश्च); **प्रका.**४९ स्मृचवत्; **समु.**३१ स्मृचवत्; **विव्य.**११ (ज्ञेयः स खटिकाग्राही उभयोत्तरलेखकः).

(१) **व्यमा.**३१८ तु (च); **स्मृच.**८४; **प्रका.**५४; **समु.**३३. (२) **व्यमा.**३१८; **स्मृच.**८४; **प्रका.**५४; **समु.**३३. (३) **समु.**३२.

(४) **व्यमा.**३२५ खा च (खा वा); **व्यक.**४७ मातुः (माता); **स्मृच.**८५; **स्मृचि.**४६; **व्यसौ.**४५; **व्यप्र.**११९; **व्यम.**१६ मातुलौ (मातरौ); **विता.**१६० व्यकवत्; **प्रका.**५४; **समु.**३३.

(५) **व्यक.**४७ पूर्व (सर्व); **स्मृच.**८५; **स्मृचि.**४६ पूर्वदूषिताः (सर्वदूषकाः) उन्मत्तार्ताः (तथोन्मत्ताः); **व्यसौ.**४५

**उन्मत्तार्त्ताः साहसिका नास्तिकाश्च न साक्षिणः॥**
**उपस्थिताः परीक्ष्याः स्युः स्वरवर्णेङ्गितादिभिः॥**

(१) तत्र ये निर्विकारास्ते वस्तुतः साक्षिणो भवन्ति। ये पुनः सविकारास्ते कूटसाक्षिण इत्यवगन्तव्यम्। स्मृच.८५

(२) स्वरवर्णेङ्गितानि मनुयोगीश्वरोक्तानि हीननिरूपणे विवृतानि। व्यप्र.१२४

**साक्षिणोऽर्थिसमुद्दिष्टान् सत्सु दोषेषु दूषयेत्।**
**अदुष्टान् दूषयन्वादी तत्समं दण्डमर्हति॥**

(१) तत्समो दुष्टसाक्षिदण्डसमः। अप.२।७२

(२) यैर्द्वेष्यत्वादिहेतुभिरसाक्षित्वमुक्तं ते साक्षिदोषाः। ते यद्यर्थिनिर्दिष्टसाक्षिषु गूढाः सन्ति तदा प्रत्यर्थिना प्रख्यापनीया इत्यर्थः। यदि पुनः प्रकटाः सन्ति तदा सभ्यैरेव वक्तव्याः। स्मृच.८३

(३) विवादास्पदीभूतधनसममित्यर्थः। *स्मृसा.१०३

(४) तत्समं विवादविषयसममिति बहवः। तदर्थाऽविषयविवादेष्वव्यापकमिति। तत्समं कूटसाक्षिदण्डसममिति व्याख्येयम्। +व्यप्र.१२१

(५) वाद्यत्र प्रत्यर्थी। ×व्यम.१७

साक्षिसाक्ष्यशोधनक्रमः

**साक्षिसंदूषणे कार्यं पूर्वं साक्षिविशोधनम्।**

* व्यत. स्मृसावत्। + शेषतात्पर्यं स्मृचवत्।
× शेषं स्मृसावत्।

षिताः (षकाः); **व्यप्र**.११९ क्ताश्च (क्तश्च) पूर्वं (सर्वं) षिताः (षकाः); **प्रका**.५४; **समु**.३३.

(१) **अप**.२।७५; **व्यक**.५६; **स्मृच**.८५; **पमा**.१०७; **व्यचि**.५३; **चन्द्र**.१४९; **व्यसौ**.५३; **व्यप्र**.१२४; **प्रका**.५४; **समु**.३३.

(२) **व्यमा**.३२७ उत्त.; **अप**.२।७५ (=) णोऽर्थि (णो हि) दिष्टान् (दिष्टाः) दो (अदो); **व्यक**.४९; **स्मृच**.८३; **पमा**.१०५र्थि (र्थि) सत्सु (यस्तु) षेषु (षेण) दुष्टान् (दुष्टं); **स्मृसा**.१०३; **व्यचि**.४५ दुष्टान् (दुष्टं); **दवि**.३४१; **व्यत**.२१६ दूषये (दोषये) दुष्टान् (दुष्टं); **सवि**.१४३; **चन्द्र**.१४२ र्थि (र्थे) अदु (अद्व); **व्यसौ**.४७-४८; **व्यप्र**.१२१ ऽर्थि (हि) सत्सु (सत्स्व); **व्यम**.१७ ऽर्थि (र्थे); **सेतु**.१२४ (=) व्यचिवत्; **प्रका**.५३ दूषये (दोषये); **समु**.३२.

(३) **अप**.२।७५; **स्मृच**.८४ र्वं (र्वे); **पमा**.१९५ पूर्वार्धे (साक्षिणो दूषणं हार्यं पूर्वसाक्षिपरीक्षणम्); **प्रका**.५४ स्मृचवत्; **समु**.३२ स्मृचवत्.

**शुद्धेषु साक्षिषु ततः पश्चात्कार्यं विशोधयेत्॥**

(१) ततः शुद्धसाक्षिभ्य इत्यर्थः। अनेन पूर्वव्यवहारमध्य एव प्रमाणदोषविवादनिर्णयः कार्यः। न पुनर्व्यवहारान्तरनिर्णयवत् पूर्वव्यवहारसमाप्त्यनन्तरकाल इत्युक्तम्। न च व्यवहारमध्ये व्यवहारान्तरनिर्णयस्यानुचितत्वादयुक्तमुक्तमिति वाच्यम्। प्रमाणदोषविवादनिर्णयस्य पूर्वव्यवहारशेषत्वेन तत्रैव कार्यत्वात्। पृथक्फलाभावेन व्यवहारान्तरत्वाभावाच्च। स्मृच.८४

(२) संसदि प्रतिवादिना साक्षिदूषणे कृते साक्षिणः प्रष्टव्याः। युष्मास्वभिहितो दोषः सत्यं न वा। ते च यदि दूषणमभ्युपगच्छन्ति तदा न साक्षिणः। अथ न अङ्गीकुर्वन्ति तदा दूषणवादिना दूषणक्रिया भाव्या। अथ संभावयितुं न शक्नोति तदा दूषणवादी सारानुसारेण दण्ड्यः। यदि भावयति तदा तेन साक्षिणः सर्व एव दुष्टा भवन्ति तदा अर्थिनः पराजयः। विपर्ययस्य निश्चितत्वात्। अथ साक्षिणां दोषैः सभ्यानां साध्यार्थसंदेहस्तदा वादविशेषः साधनान्तरेण प्रवर्तयितव्यः। यदि साधनान्तरं पूर्वं निर्दिष्टं तदा वादसमाप्तिः। 'पूर्वमावेदितं न चेत्' इति वचनात्। न चैतत् प्रस्तुतव्यवहाराद् व्यवहारान्तरम्। तस्मिन्नेव व्यवहारे प्रमाणसाधनदूषणव्यवहारादिति। पमा.१०५

लेख्यसाक्षिशुद्धावेव कार्यसिद्धिः

**लेख्यं वा साक्षिणो वाऽपि विवादे यस्य दूषिताः।**
**तस्य कार्यं न सिध्येत्तु यावत्तन्न विशोधयेत्॥**

(१) तल्लेख्यं साक्षिणश्च प्रमाणमिति यावत्। *व्यक.५०

(२) यस्य साक्षिणो लेख्यं वा यदुद्भावितं परेण दूषितं स यावत्तन्न विशोधयेत्, तद्दोषरहितं न कुर्यात्तावत्तत्र प्रमाणाभासत्वसंभावनया तेन प्रमाणेन तस्य तत्कार्यं न सिध्येदिति द्वितीयवचनार्थः। इदं च सभाक्षोभादिना साक्षिणां स्वदोषपरिहाराक्षमतायां द्रष्टव्यम्।

* व्यचि., व्यत., सेतु. व्यकवत्।

(१) **अप**.२।७५ सिध्येत्तु (शोध्यं तु); **व्यक**.५० सिध्येत्तु (सिध्येत); **स्मृच**.८४; **व्यचि**.४६ सिध्येतु यावत्तत् (सिध्येत यावत्तु); **व्यत**.२१९ व्यकवत्; **व्यसौ**.४८ तस्य... तु (न तस्य कार्यं सिध्येत); **व्यप्र**.१२३ व्यकवत्; **व्यम**.१७; **सेतु**.११२ व्यकवत्; **प्रका**.५४; **समु**.३२.

तदिति। तच्च लेख्यं च, ते च साक्षिणश्चेति द्वन्द्वे 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' (व्यासू. १।२।६९) इति नपुंसकैकशेषैकवद्भावौ। व्यप्र.१२३

**साक्षिभिर्गदितैः सभ्यैः प्रक्रान्ते निर्णये तु यः।**
**पुनर्विवादं कुरुते तस्य राजा विचारयेत्॥**

(१) गदितैः अर्थिना निर्दिष्टैः। सभ्यैः प्रकटदोषरहितैः साक्षिभिर्निर्णये प्रक्रान्त इत्यर्थः। प्रक्रान्तग्रहणं निर्णयादूर्ध्वे न दूषणाभिधानकाल इति प्रतिपादनार्थम्। स्मृच.८३

(२) अयं कूटसाक्षीत्यभिधाय यः पुनर्वादी वादं कुरुते तद्राजा विचारयेदित्यर्थः। व्यचि.४६

साक्ष्याप्रदाने दण्डविधिः

**आहूतो यस्तु नागच्छेत् साक्षी रोगविवर्जितः।**
**ऋणं दमं च दाप्यः स्यात् त्रिपक्षात्परतस्तु सः॥**

(१) ऋणपदं निक्षेपादीनुपलक्षयति, न्यायस्याऽविशेषात्। व्यमा.३३२

(२) रोगविवर्जितग्रहणं सामर्थ्योपलक्षणार्थम्। ऋणादिव्यवहारविषयमेतत्। अप.२।७६

(३) रोगपदं अलङ्घ्यप्रतिबन्धकपरम्। ऋणपदं विवादवस्तुमात्रपरम्। व्यचि.५५

**अपृष्टाः सत्यवचने प्रश्नस्याकथने तथा।**
**साक्षिणः संनिरोद्धव्या गर्ह्या दण्ड्याश्च धर्मतः॥**

साक्षिप्रश्नविधिः। सत्यप्रशंसा। अनृतनिन्दा।

**सत्यप्रशंसावचनैरनृतस्यापवर्जनैः।**
**सभ्यैः संबोधनीयाश्च धर्मशास्त्रार्थवेदिभिः॥**

**आ जन्मनश्चा मरणात् सुकृतं यत्त्वयार्जितम्।**
**तत्सर्वं नाशमायाति वितथस्याभिशंसनात्॥**
**कूटसभ्यः कूटसाक्षी ब्रह्महा च समाः स्मृताः।**
**भ्रूणहा वित्तहा चैषां नाधिकः समुदाहृतः॥**
**एवं विदित्वा यः साक्षी स यथार्थं वदेत्ततः।**
**तेनेह कीर्तिमाप्नोति परत्र च शुभां गतिम्॥**

साक्ष्योक्तिविधिः

**विहायोपानदुष्णीषं दक्षिणं पाणिमुद्धरेत्।**
**हिरण्यगोशकृद्दर्भान् समादाय ऋतं वदेत्॥**

(१) दक्षिणं पाणिमुद्धरेत्। प्रावृतं वस्त्रं यज्ञोपवीतवत् कुर्यादित्यर्थः। स्मृच.८९

(२) अत्र दक्षिणपाण्युद्धारोऽवधानार्थोऽदृष्टार्थो वा। *व्यचि.५३

(३) तथा च श्रुतिः—दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतम्। सवि.१५७

---

(१) **व्यक.**५०प्रक्रान्ते... यः (प्रयोक्ता निर्णये तु यत्); **स्मृचि.**८३; **व्यचि.**४६ गदितैः सभ्यैः (गदिते साक्ष्ये) निर्णये तु यः (कार्यनिर्णये); **व्यसौ.**४८; **प्रका.**५३; **समु.**३२.

(२) **व्यमा.**३३२; **अप.**२।७६ यस्तु (यत्र); **व्यक.**५८; **स्मृच.**९१ दमं (दत्तं); **पमा.**११५; **व्यचि.**५५ दमं (दण्डं); **सवि.**१४८; **व्यसौ.**५५ दमं (दण्डं) परत (परम); **प्रका.**६०; **समु.**३७; **विव्य.**१४ दमं (देयं).

(३) **व्यमा.**३३२; **व्यक.**५८; **व्यचि.**५५ प्रश्नस्याकथने (पृष्टश्चावचने).

(४) **व्यमा.**३२९ श्च (स्तु); **व्यक.**५२ श्च (स्तु) स्त्रार्थ (स्त्रप्र); **व्यचि.**४८ स्त्रार्थ (स्त्रप्र); **स्मृचि.**४७ यास्तु (यस्तु); **व्यसौ.**५० व्यमावत्.

* चन्द्र. व्यचिवत्।

(१) **व्यमा.**३२९; **व्यक.**५२ यत्त्वया (यदुपा) वितथ (अनृत); **व्यचि.**४८ व्यकवत्; **स्मृचि.**४७ व्यकवत्; **चन्द्र.**१४७ न (त) सुकृतं ...र्जितम् (यच्चापि सुकृतं कृतम्) माया (माप्नो); **व्यसौ.**५० व्यकवत्; **व्यप्र.**१२७ यत्त्वया (यदुपा) वितथस्याभि (अनृतस्य तु); **विव्य.**१४ नं (त) सुकृतं यत्त्वया (पुण्यं यत्समुपा).

(२) **व्यमा.**२८३ वित्त (मैत्र): ३२९ कूट (गूढ); **अप.**२।७५ सभ्यः (सत्यः) माः स्मृताः (मः स्मृतः) वित्त (मित्र); **व्यक.**५२; **स्मृच.**८६; **व्यचि.**७ पू.: ४८ वित्त (वृत्त) चै (ते); **स्मृचि.**४७ पू.; **सवि.**१५८; **चन्द्र.**१४७ (=) सभ्यः (सत्यः) वित्त (वृत्ति); **व्यसौ.**५० वित्त (वृत्त); **व्यप्र.**१३५ पू.; **प्रका.**५६; **समु.**३४.

(३) **व्यमा.**३२९; **व्यक.**५२ यः (तत्) स यथार्थं (यथाभूतं); **व्यचि.**४८ (एवं विदित्वा तत्साक्षी यथा भूतं वदेद् वचः); **स्मृचि.**४७ व्यकवत्; **व्यसौ.**५० पू.; **विव्य.**१४ स यथार्थं (यथाभूतं).

(४) **अप.**२।७५ ण्य (ण्यं); **व्यक.**५६; **स्मृच.**८९; **पमा.**११२ रेत् (रन्) ण्य (ण्यं); **व्यचि.**५३; **नृप्र.**१० रेत् (रन्); **सवि.**१५७ पाणि (बाहु); **चन्द्र.**१४८ योपानदु (य पादुकौ); **व्यसौ.**५३; **व्यप्र.**१२९ रेत् (रन्); **प्रका.**५८; **समु.**३६ सविवत्.

सत्योक्त्यपवादः

**[1]संकृत्प्रमादापराधि विप्रं व्यापदि पीडितम् ।**
**छटादिभिर्बध्यमानं रक्षेदुक्त्वाऽनृतान्यपि ॥**

अपिशब्दादत्राप्यनृतोक्त्या किञ्चित्पापं भवतीति गम्यते । स्मृच.८९

कीदृशसाक्ष्योक्तौ जयः

**[2]यस्याशेषं प्रतिज्ञातं साक्षिभिः प्रतिपादितम् ।**
**स जयी स्यादन्यथा तु साध्यार्थं न समाप्नुयात् ॥**

(१) अन्यथा मिथ्यैतदिति विपरीताभिधाने साध्यं न लभेत, भग्नत्वादित्यर्थः । व्यमा.३३२

(२) अत्र साक्षिण इत्युपलक्षणम् । लिखितसाक्षिभुक्तिषु मध्येऽन्यतरप्रमाणम् । यस्यैव प्रतिज्ञासत्यार्थप्रतिपादकमस्ति स विजयीति मन्तव्यम् । एवं दिव्येऽपि कथितजयहेतुप्रकारेण प्रतिज्ञासत्यत्वेऽप्येवम् ।

स्मृसा.११८

(३) अन्यथाऽशेषप्रतिज्ञातप्रतिपादनाभावे । अयं च द्वेधा संभवति । अनभिधाने अनपेक्षिताभिधाने वा । अन्त्योऽपि चतुर्धा । न्यूनाभिधाने अधिकाभिधाने अज्ञानाभिधाने विरुद्धपक्षाभिधाने च । अत्र सर्वत्र साध्यासिद्धिः । किन्तु प्रथमतुर्ययोः प्रमाणान्तरमनुसरणीयं, न तु तावतैव तद्भङ्गनिर्णयः, विचारारम्भकसंशयानिवृत्तेः । न च न जानामीति निगदे पराजय एव वादिन इति प्रदीपलिखनविरोध इति वाच्यम् । प्रदीपकृता हि अनिगदे संशयतादवस्थ्येन प्रमाणान्तरानुसरणं ब्रुवता ज्ञानाभावनिगदेऽपि तस्योक्तप्रायत्वात् । कथं तर्ह्यज्ञाननिगदे भङ्गलिखनम् ? साक्षिज्ञानव्याप्तार्थविशेषाभिप्रायेणेति । द्वितीयतृतीययोस्तु मानान्तरानुसरणमित्यत्र 'ऊनं वाऽप्यधिकं वे'त्यादिवचनमेव दर्शयिष्यते । तस्मात् पञ्चमे परं भङ्गः । ×व्यचि.५७

**[1]देशकालवयोद्रव्यसंज्ञाजातिप्रमाणतः ।**
**अन्यूनं चेन्निगदितं सिद्धं साध्यं विनिर्दिशेत् ॥**

साध्यं सिद्धं विनिर्दिशेत् इत्यन्वयः । यत्र देशादीनां प्रतिज्ञान्तर्गतत्वं तत्रैव देशादिनिगदः प्रयोजको न सर्वत्र ।

चन्द्र.१५१

**[2]पूर्वपक्षे प्रतिज्ञातमशेषं प्रतिभावयेत् ।**
**ऊनाधिकं तु यत्रोक्तं न तन्निगदितं भवेत् ॥**

(१) तत्रोनाधिकाभिधाने साक्षिनिर्देशकस्य भङ्ग इति केचित्, अस्याप्यन्यथावादित्वादिति तदयुक्तं, 'मिथ्यावादी विहीयते' इति वचनात् विपरीताभिधानस्यान्यथावादत्वात्, न त्वन्यथावादस्य । न स्मरामीत्यादिवादेऽपि तथात्वापत्तेः इष्यत एवेति केचित् । साधकबाधकप्रमाणाभावेन संदेहे सत्यपि भग्नत्वे छलापत्तेः अस्य निरास्यत्वात् । बृहस्पतिश्चान्यथावादिसाध्यस्य प्राप्त्या भङ्गमभिधाय पुनरूनाधिकाभिधानार्थं वचनान्तरविवरणं कृतवान् तदनर्थकं भवेत्, अन्यथावचनेनैव प्राप्तत्वात् । अत एवात्र तन्निगदितमित्यर्थतत्त्वमाह, न च साध्याप्राप्तिम् । व्यमा.३३३

(२) पूर्वपक्षग्रहणं प्रदर्शनार्थम् । निगदितं विनिर्णीतम् । अप.२।७९

साक्षिद्वैधे बहुत्वगुणाधिक्यादिना निर्णयः

**[3]साक्षिद्वैधे प्रभूतास्तु ग्राह्याः साम्ये गुणान्विताः ।**
**गुणिद्वैधे क्रियायुक्तास्तत्साम्ये स्मृतिमत्तराः ॥**

---

(१) **स्मृच**.८९; **प्रका**.५८ द्वादि (दादि); **समु**.३६ बध्य (बाध्य).

(२) **व्यमा**.३३२ पादितम् (वर्णितम्); **अप**.२।७९ शेषं (शेषः) ज्ञातं (ज्ञार्थः) पादितम् (वर्णितः); **स्मृच**.९१ (यस्याशेषप्रतिज्ञार्थः साक्षिभिः प्रतिवर्णितः); **पमा**.११४ षं (षः) ज्ञातं (ज्ञार्थः) पादितम् (वर्णितम्) स ... तु (सोऽजयी स्यादन्यनीतं); **स्मृसा**.११८ प्रतिपादितम् (परिवर्णितम्) प्नुयात् (पयेत्); **व्यचि**.५७; **व्यत**.२२० यस्या (यस्य); **सवि**.१४५ (यत्रादोषः प्रतिज्ञार्थः साक्षिभिः प्रतिवर्णितः । स जयी स्यात् ) एतावदेव; **चन्द्र**.१५१ स्मृसावत्; **वीमि**.२।७९ ध्या (क्ष्य); **प्रका**. ५९ शेषं (शेषः) शेषं स्मृचवत्; **समु**.३७ स्मृचवत्; **विव्य**.१४ शेषं (शेष) पादितम् (भाषितम्) प्नुया(पये).

× वीमि. व्यचिगतम् ।

(१) **पमा**.११४; **चन्द्र**.१५१ (कालाकृतिवयोद्रव्यदेशजातिप्रमाणतः); **व्यप्र**.१२९ द्रव्य (जाति) जाति (द्रव्य); **व्यम**.१९ (=) जाति (ज्ञाति); **विता**.१७५.

(२) **व्यमा**.३३३ प्रति (परि); **अप**.२।७९; **विव्य**.१४ भाव (पाद) ऊ (न्यू).

(३) **व्यमा**.३०८ स्तु (स्ते) न्विताः (धिकाः) गुणि (गुण) स्मृति (शुचि) : ३२५ स्तु (स्ते) स्मृति (शुचि); **व्यक**.५९ म्ये (ध्ये); **पमा**.११६ तु (स्युः) स्मृति (शुचि); **व्यचि**.२९ न्विताः (धिकाः); **चन्द्र**.१५१; **व्यसौ**.५६ द्वैधे (भेदे) न्विताः

साक्षिणामनेकविधत्वे ग्राह्यान् विभजते बृहस्पतिः– साक्षिद्वैध इति । पमा.११६

## कात्यायनः

साक्षिप्रकाराः । तल्लक्षणानि । साक्षिविशेषविषयाः ।

**अर्थिना स्वयमानीतो यो लेख्ये संनिवेश्यते ।**
**स साक्षी लिखितो नाम स्मारितः पत्रकादृते ॥**
**अथ स्वहस्तेनारूढस्तिष्ठंश्चैकः स एव तु ।**
**न चेत्प्रत्यभिजानीयात्तत्स्वहस्तैः प्रसाधयेत् ॥**
**यैस्तु कार्यप्रसिद्ध्यर्थं दृष्ट्वा कार्यं पुनः पुनः ।**
**स्मार्यते ह्यर्थिना साक्षी स स्मारित इहोच्यते ॥**

(१) 'स्मारितः पत्रकादृते' इत्यस्य विवरणं तेनैव कृतम् । 'यस्तु' इति । यस्तु यदृच्छया आगतः साक्षी क्रियते स यदृच्छाभिज्ञः । मिता.२।६८

(२) दृष्ट्वेति दर्शयित्वेत्यन्तर्भावितण्यर्थः । कार्यं व्यवहारपदं दर्शयित्वा प्रमापय्य । कार्यप्रसिद्ध्यर्थं कालान्तरे व्यवहारनिर्णयसिद्ध्यर्थं पुनः पुनः स्मार्यते कार्यमेव विस्मरणनिरासाय यः स स्मारितो नाम साक्षीत्यर्थः । यस्तु यदृच्छया प्रसङ्गादागतस्त्वमत्र साक्षी भवेति साक्षित्वेन निरूप्यते स यदृच्छाभिज्ञः । व्यप्र.१०७

(३) मिता.टीका–पौनरुक्त्यं परिहरति स्मारित इति । तेनैव कात्यायनेनैव । एवमग्रेऽपि । पुनः पुनः कार्यं दृष्ट्वा कार्यप्रसिद्ध्यर्थं यः स्मार्यते इत्यन्वयः । स्मारित इति पाठे ' मतिबुद्धीति ' वर्तमाने क्तः । इह व्यवहारे । आगतः सन्निति शेषः । बाल.२।६८

**प्रयोजनार्थमानीतः प्रसङ्गादागतश्च यः ।**
**द्वौ साक्षिणौ त्वलिखितौ पूर्वपक्षस्य साधकौ ॥**

(१) अनयोः पत्राऽनारूढत्वेऽपि भेदस्तेनैव दर्शितः– प्रयोजनार्थमिति । *मिता.२।६८

(२) मिता.टीका—अनयोः स्मारितयदृच्छाभिज्ञयोः। बाल.२।६८

**अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम् ।**
**यः श्राव्यते स्थितो गूढो गूढसाक्षी स उच्यते ॥**

(१) मिता.टीका— अस्यार्थः, अर्थिना साध्यवता स्वार्थसिद्ध्यर्थं प्रत्यर्थिनो वचनं स्फुटं यथा भवति तथा, प्रत्यर्थिनाऽविज्ञातः सन् स्थितो यः पुमान् श्राव्यते स गूढसाक्षी कथ्यत इति । ×सुबो.२।६८

(२) तेनाऽन्यतरवाद्यभिहितार्थविषयकदृष्टकारणजं विज्ञापनं साक्ष्यमिति स्थितम् । व्यत.२१२

**साक्षिणामपि यः साक्ष्यमुपर्युपरि भाषते ।**
**श्रवणाच्छ्रावणाद्वापि स साक्ष्युत्तरसंज्ञितः ॥**

(१) स्वपक्षसंबन्धिसाक्ष्यं परिभाषतां साक्षिणां यः स्वयं शृणोति अर्थिना श्राव्यते वा स श्रवणात् श्रावणादुत्तरसाक्षीत्यर्थः । +व्यत.२१२

(२) मिता.टीका—साक्षिणामपि उपरि ऊर्ध्वं यः पुमान् श्रवणात् श्रावणाद्वा साक्ष्यं उपरि उत्तानं उत्कृष्टं भाषते इत्याद्यर्थः । अत एव षष्ठीसंगतिरन्यथा द्वितीयापत्तिः स्फुटैव । बाल.२।६८

* सवि., व्यप्र., सेतु. मितावत्।
× बाल. (२।६८) सुबोगतम्। + सेतु. व्यतवत्।

(धिकाः); **समु.**३७ प्रभूतास्तु (तु बहवो) स्मृतिमत्तराः (मतिमत्तमाः); **विव्य.**९ व्यसौवत् , नारदः.

(१) **मिता.**२।६८; **स्मृचि.**४५ नारदः; **नृप्र.**९; **सवि.**१४२ (=) नीतो (हूतः); **व्यप्र.**१०७; **व्यउ.**४७ नीतो (नीते) स सा (स्वसा) त्र (त्रि); **विता.**१५७ यो (वा); **सेतु.**११६; **प्रका.**५१; **समु.**३०.

(२) **व्यक.**४३; **व्यसौ.**४१; **व्यप्र.**१०९.

(३) **मिता.**२।६८; **नृप्र.**९ स्मार्य (कार्य); **स्मृचि.**४५ ह्य (अ) नारदः; **व्यप्र.**१०७; **व्यउ.**४७ (=) यस्तु (यत्तु); **विता.**१५७; **राकौ.**४०१; **सेतु.**११६; **प्रका.**५१; **समु.**३०.

(४) **मिता.**२।६८; **स्मृचि.**४५ क्रमेण नारदः; **नृप्र.**९; **सवि.**१४२ (=) त्वलि (चालि); **व्यप्र.**१०७; **व्यउ.** ४७ यः (सः); **विता.**१५७; **सेतु.**११६; **प्रका.**५१; **समु.**३०.

(१) **मिता.**२।६८ व्यते (वितः); **व्यमा.**३२१ बृहस्पतिः; **सुबो.**२।६८; **स्मृचि.**४५ क्रमेण नारदः; **नृप्र.**९ तो (रो); **व्यत.**२१२ स्थितो (तदा) नारदः; **सवि.**१४२ (=); **व्यप्र.**१०७; **व्यउ.**४७; **विता.**१५७ ढो (ढे) नारदः; **सेतु.**११६; **प्रका.**५१ व्यासः; **समु.**३०.

(२) **मिता.**२।६८; **स्मृसा.**१०० ते (ताम्) नारदः; **व्यचि.**३५ षते (षितम्) बृहस्पतिः; **स्मृचि.**४५ क्रमेण नारदः; **नृप्र.**९-१०; **व्यत.**२१२ यः (यत्) उपर्युपरि भाषते (स्वपक्षं परिभाषताम्) ज्ञितः (ज्ञकः) नारदः; **सवि.**१४२(=); **चन्द्र.**१३६ ते (ताम्); **वीमि.**२।७२ बृहस्पतिः; **व्यप्र.**१०७; **व्यउ.**४७; **विता.**१५७ नारदः; **सेतु.**११६ ज्ञितः (ज्ञकः); ११७ उपर्युपरि (समक्षं परि) नारदः; **प्रका.**५१; **समु.**३०.

**उभाभ्यां यस्य विश्वस्तं कार्यं वाऽपि निवेदितम् ।**
**गूढचारी स विज्ञेयः कार्यमध्यगतस्तथा ॥**

(१) बृहस्पतिकात्यायनौ कार्यमध्यगतं व्याकुरुतः—उभाभ्यामिति । व्यमा.३२०

(२) उभाभ्यामर्थिप्रत्यर्थिभ्यां यस्य विश्वासः कृतः, स गूढचारी कार्यमध्यगतो विज्ञेय इत्यर्थः । व्यक.४२

**लेखकः प्राड्विवाकश्च सभ्याश्चैवानुपूर्वशः ।**
**नृपे पश्यति तत्कार्यं साक्षिणः समुदाहृताः ॥**

(१) सर्व एवैते वादिनोरनुमतिमन्तरेणापि एकैकशः साक्षिणः । व्यमा.३२०

(२) मिता.टीका—अस्यार्थः, राजनि तत्कार्ये व्यवहारकार्ये पश्यति सति एते लेखकादयोऽनुपूर्वशः 'पूर्वाभावे परः पर' इति साक्षिणः न तु लेखकादीनामेव सभापतित्वे ते एव साक्षिणः । 'नृपे पश्यति' इत्यभिधानादिति लेखकादिभिः सह परिपठितस्य प्राड्विवाकस्योपादानं लेखकाद्युपलक्षणार्थमित्यर्थः । ×सुबो.२।६८

**अर्थिप्रत्यर्थिनोर्वाक्यं यच्छ्रुतं भूभृता स्वयम् ।**
**स एव तत्र साक्षी स्याद्विसंवादे द्वयोरपि ॥**
**निर्णीते व्यवहारे तु पुनर्न्यायो यदा भवेत् ।**
**अध्यक्षः सभ्यसहितः साक्षी स्यात्तत्र नान्यथा ॥**
**अन्ये पुनरनिर्दिष्टाः साक्षिणः समुदाहृताः ।**

× बाल. (२।६८) सुबोवत् ।

(१) **व्यमा.**३२० बृहस्पतिकात्यायनौ; **व्यक.** ४२ बृहस्पतिकात्यायनौ; **व्यसौ.** ३० विश्वस्तं (विश्रंभात्) वापि (वा वि) बृहस्पतिकात्यायनौ.

(२) **मिता.** २।६८; **व्यमा.**३२० तत् (यत्): ३२३; **व्यक.**४२ कार्यं (कार्ये); **सुबो.**२।६८; **सवि.**१४२ (=); **व्यसौ.**४०; **व्यप्र.**१०७ (=); **व्यउ.**४७ व्यकवत्; **व्यम.** १५ पू.; **विता.**१५८ णः समुदाहृताः (णो ह्यकृताःस्मृताः) नारदः; **प्रका.**५२ बृहस्पतिः; **समु.**३०.

(३) **व्यमा.**३२० श्रुतं भूभृता (ब्रूतं प्रभृतात्) (तत्र ०) बृहस्पतिकात्यायनौ; **व्यक.**४२ बृहस्पतिकात्यायनौ; **नृप्र.**१०; **व्यसौ.**४० बृहस्पतिकात्यायनौ; **प्रका.**५२.

(४) **व्यक.**४२ बृहस्पतिकात्यायनौ.

(५) **व्यमा** ३२० णः समु (णश्च उ) नारदकात्यायनौ; **व्यक.**४१ नारदकात्यायनौ; **व्यत.**२१९ मनुकात्यायनौ; **व्यसौ.**३९ नारदकात्यायनौ; **विव्य.**१२ समु (षड्).

**ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् ॥**
**कार्येष्वभ्यन्तरो यः स्यादर्थिना प्रहितश्च यः ।**
**कुल्याः कुलविवादेषु भवेयुस्तेऽपि साक्षिणः ॥**
**ऋक्थभागविवादे तु संदेहे समुपस्थिते ।**
**कुल्यानां वचनं तत्र प्रमाणं तद्विपर्यये ॥**
**प्रख्यातकुलशीलाश्च लोभमोहविवर्जिताः ।**
**आप्ताः शुद्धा विशिष्टा ये तेषां वाक्यमसंशयम् ॥**

(१) तेषामिति बहुवचनं द्व्येकसंख्याकसाक्षिवाक्यमेवं न निश्चायकमिति प्रतिपादनार्थम् । स्मृच.७६

(२) आप्ताः यथार्थवादिनः । विबुद्धाः विवादविषयीभूतार्थज्ञानवन्तः शास्त्रार्थज्ञानवन्तश्च । 'मतिबुद्धिपूजार्थेभ्यश्च' ( व्यासू. ३।२।१८८ ) इति कर्तरि क्तः । 'आदिकर्मणि' इति मदनरत्ने । तेषां वाक्यमसंशयं यथा भवति तथा । व्यप्र.१११

अत्र सर्वत्र न्यूनाधिकविशेषणोपादानं न दोषाय । अनृतभाषणभीरुत्वसत्यवदनशीलत्वस्य च साक्षित्वप्रयोजकस्योपलक्षणार्थत्वात्तेषाम् । व्यप्र.११२

**विभाव्यो वादिना यादृक् सदृशैरेव भावयेत् ।**
**नोत्कृष्टश्चावकृष्टस्तु साक्षिभिर्भावयेत्सदा ॥**

वादिना विभाव्योऽङ्गीकारयितव्योऽर्थात्प्रतिवादी । तत्र विशेषमाह—यादृक् प्रतिवादी तत्सदृशैस्तज्जातीयैरेव भावयेत् । वादिनेत्युपलक्षणम् । वाद्यपि प्रतिवादिना तज्जातीयैरेव विभाव्यः । व्यप्र.१११

**लिङ्गिनः श्रेणिपूगाश्च वणिग्व्रातास्तथाऽपरे ।**
**समूहस्थाश्च ये चान्ये वर्गास्तानब्रवीद्भृगुः ॥**

(१) **व्यमा.**३२० यः स्याद् (यश्च); **व्यक.**४१ कुल्याः कुल (कुल्याकुल्य) नारदकात्यायनौ; **व्यत.**२१९ ल्याः (ल्या) मनुकात्यायनौ; **व्यसौ.**३९ स्याद (च अ) नारदकात्यायनौ; **विव्य.**१२ पूर्वार्धे (कार्यस्याभ्यन्तरा यस्तु आत्मना सहितस्तु यः) देषु (दे तु). (२) **व्यमा.**३२२ वादे (भागे).

(३) **व्यक.**४४; **स्मृच.**७६; **व्यसौ.**४२ शुद्धा विशिष्टा (शिष्टा विबुद्धा); **व्यप्र.**१११ व्यसौवत्; **प्रका.**४९; **समु** २८.

(४) **व्यक.**४४ व्यो (व्य); **व्यसौ.**४२ वकृ (पकृ); **व्यप्र.** १११. (५) **अप.**२।६९ भृगुः (गुरुः); **व्यक.**४५ व्राता (जाता); **व्यसौ.**४३ व्रातास्तथापरे (प्रीतास्तथव च) भृगु (मुनिः); **व्यप्र.** १११; **व्यम.**१६ व्राता (जाता) र्गा (र्गां); **बाल.**२।६९ व्यमवत्; **प्रका.**४९ ये (ते) वर्गा (वर्ग्या); **समु.**२८ र्गा (र्गां).

[1]दासचारणमल्लानां हस्त्यश्वरथजीविनाम् ।
प्रत्येकैकसमूहानां नायका वर्गिणः स्मृताः ॥
[2]तेषां वादः स्ववर्गेषु वर्गिणस्तेषु साक्षिणः ॥
[3]स्त्रीणां साक्ष्यं स्त्रियः कुर्युर्द्विजानां सदृशा द्विजाः ।
शूद्राश्च सन्तः शूद्राणामन्त्यानामन्त्ययोनयः ॥
[4]आभ्यन्तरस्तु निक्षेपे साक्ष्यमेकोऽपि वाच्यते ।
अर्थिना प्रहितः साक्षी भवत्येकोऽपि याचिते ॥

(१) निक्षेपकाले द्वाभ्यामेव सभ्यभावेन कार्याभ्यन्तरीकृतत्वात् निक्षिप्तेयत्ताविवादे साक्ष्यमेकोऽपि वाचनीयो न तत्रोभयानुमत्यपेक्षा कार्या, तथा केनापि प्रयोजनेनालङ्कारादियाचनाय प्रहितस्तदियत्तादिविवादे प्रहित एव साक्षी द्वाभ्यामेवादरणीयः, सत्यतावधृतत्वात् । न ह्यसत्यमेवालङ्काराय प्रस्थापयति तदा वा तस्मै ददाति यथा यत्र द्वाभ्यामेव स्ववचनं श्रावितोऽसावेकोऽपि साक्षी साहसेषु च । व्यमा.३१९

(२) याचिते इति निक्षेपविशेषणं, न्यायतौल्यादन्यत्रापि । व्यचि.३९

(३) याचित इत्येवमेकमात्रवेद्यतया प्रतीतेरन्यत्रापि बोद्धव्यम् । एवं च नैको न स्त्रीत्यन्यविषयो द्रष्टव्यः चन्द्र.१३५

(४) मदनरत्नाकरस्तु याचितं विवाहाद्यर्थं याचितं गृहीतमाभरणादिकं याचितकमिति यावदित्याह । निक्षेपविशेषणवैयर्थ्यादयाचिते तस्मिन्नभ्यन्तरस्यैकस्यासाक्षित्वप्रसङ्गाद्यवहितान्वयप्रसक्तेश्चोत्तरैव व्याख्या प्रख्या । व्यप्र.११३

[1]संस्कृतं येन यत्पण्यं तत्तेनैव विभावयेत् ।
एक एव प्रमाणं स विवादे तत्र कीर्तितः ॥

(१) येन सुवर्णकारादिना यत्पण्यं कुण्डलादि घटितं तत्तेनैव साक्षिणा साधयेदित्यर्थः । व्यक.४३

(२) तत्सर्वमुभयानुमतसाक्षिविषयम् । बहुत्ववदुभयसंमतत्वस्याप्यनाप्तत्वशङ्काव्युदासकत्वात् । स्मृच.७६

(३) एतच्च तादृशस्याऽन्यस्याऽभावे । तस्य च स्तेयत्वपक्षे द्रष्टव्यम् । व्यचि.४०

(४) इदं च बहूनामसंभवे सत्यवादिनोर्द्वयोरेकस्य वानुमतिप्रदर्शनार्थं, न नियमार्थम् । अदृष्टार्थत्वप्रसङ्गादिति ध्येयम् । व्यप्र.११३

[2]अन्येन हि कृतः साक्षी नैवान्यस्तं विवादयेत् ।
तदभावे नियुक्तो वा बान्धवो वा विवादयेत् ॥

स्वयमुक्तित्वेनासाक्षित्वं मा भूदिति येन केनचित् साक्षिनिर्देशो न कार्य इत्याह—अन्येनेति । अर्थी तदीयो वा साक्षिणं निर्दिशेन्नान्य इत्यर्थः । एवं चान्येन निर्दिष्टोऽनिर्दिष्टवदेवासाक्षीत्यवगन्तव्यम् । स्मृच.८२

[3]भावयेत्साक्षिभिः कार्यं मृते त्वर्थिनि बान्धवः ।

---

(१) अप.२।६९ श्वरथ (श्वायुध) क (कं) स्मृताः (तथा); व्यक.४५ श्वरथ (श्वायुध); व्यसौ.४३ व्यकवत्; व्यप्र. १११-११२ श्वरथ (श्वायुध) क (कं); व्यम.१६; बाल.२।६९ जीवि (वाजि); प्रका.४९:५२ उत्तरार्धे (पूगश्रेणिगणादीनां साक्ष्यं स्वेषु विधीयते); समु.२८ उत्तरार्धे (पूगश्रेणिगणादीनां साक्ष्यं स्वेषु नियोजयेत्) एतस्मिन्नेव पत्रे आदर्शवदपि वर्तते।

(२) अप.२।६९; व्यक.४५; व्यसौ.४३; व्यप्र.११२.

(३) व्यमा.३२३; व्यक.४५ सदृशा द्विजाः (द्विजसत्तमाः) मनुकात्यायनौ; चन्द्र.१३३ च सन्तः (सन्तश्च); व्यसौ.४३; विव्य.१२.

(४) व्यमा.३१९ आभ्यन्तरस्तु (अभ्यन्तरणे) वत्ये (वेदे) चिते (चितः); व्यक.४३ आभ्यन्तरस्तु (अभ्यन्तरे तु)क्ष्य (ध्य) वाच्य (बाध्य); गौमि.१३।२ आभ्य (अभ्य) चिते (चितः); स्मृच.७६:९४ याचिते (दूतकः); पमा.९६ निक्षेपे (विज्ञेयः) वाच्यते (वा वदेत्) पू.; व्यचि.३९ आभ्यन्तरस्तु (अभ्यन्तरश्च) वत्ये (वेदे); व्यत.२१४ आभ्य (अभ्य) वाच्यते (दापयेत्) वत्ये (वेदे); चन्द्र.१३४ आभ्य (अभ्य) वत्ये (वेदे) चिते (चितः); व्यसौ.४१ आभ्यन्तरस्तु (अभ्यन्तरेण) वत्ये (वेदे); व्यप्र.११२ आभ्य (अभ्य) वत्ये (वेदे); व्यम.१६ आभ्यन्तरस्तु (अभ्यन्तरस्थ) वत्ये (वेदे); विता.१६५ ाभ्यन्तरस्तु (अभ्यन्तरस्थ); सेतु.१२० आभ्यन्तरस्तु (अभ्यन्तरणे) क्षेपे(क्षेप) वाच्यते (दापयेत्) वत्ये (वेदे); प्रका.४९; समु.२८.

(१) व्यक.४३; स्मृच.७६ यत्पण्यं (संन्यस्तं); व्यचि. ४० तत्र (परि); व्यत.२१४ व्यचिवत्; चन्द्र.१३४ व्यचिवत्; व्यसौ.४१ स (च) तः (तम्); व्यप्र.११३; व्यम. १६; विता.१६५ तेनैव (तत्रैवं) पू.; सेतु.१२० स विवादे तत्र (स्यात्स विवादे प्र); प्रका.४९ स्मृचवत्; समु.२८ स्मृचवत्.

(२) व्यमा.३२७ बान्धवो (ब्राह्मणो); अप.२।७१; व्यक. ४८ नियुक्तो वा (विनियुक्तो); स्मृच.८२; व्यसौ.४६-४७ विवाद (विभाव); प्रका.५३; समु.३२.

(३) व्यक.४८; स्मृचि.४६ त्व (प्य); व्यसौ.४७

**कुलादीनां समक्षं चेल्लिखितं भावयेत्सदा ॥**

असाक्षित्वनिमित्तानि

**साक्षिणां लिखितानां च निर्दिष्टानां च वादिना।**
**तेषामेकोऽन्यथावादी भेदात्सर्वे न साक्षिणः ॥**

(१) अस्यार्थः— एकस्य भाषार्थस्योत्तरार्थस्य वा प्रतिपादं गृहीतानां साक्षिणां वचनविप्रतिपत्तिमात्रेण भेदादसाक्षित्वं, न तु समसंख्यानाम्। एकस्याप्यन्यथा वादे सर्वेषां बहूनामसाक्षित्वावधारणात्। अत एवाह—'भेदाद्विप्रतिपत्तिः स्याद्विवादे यत्र साक्षिणाम्' इति। वचनभेदवादे चासाक्षित्वमुक्तं, न तु संख्यासमानतापेक्षातः, सर्वत्र निरपेक्षश्रुतेः। नन्वेतद्विरुद्धं, एकस्याप्यन्यथावादेपीतरेषां संख्यातिरेके निर्णयाभिधानात्। यथा मनुविष्णू 'बहुत्वं परिगृण्हीयात् साक्षिद्वैधे नराधिपः। समेषु तु गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमान्' ॥ तथा नारदः— 'साक्षिणां विप्रतिपत्तौ प्रमाणं बहवो मताः। साम्ये तत् शुचयो ग्राह्यास्तत्साम्ये शुचिमत्तराः' ॥ तथा बृहस्पतिः— साक्षिद्वैधे प्रभूतास्ते ग्राह्याः साम्ये गुणान्विताः। गुणिद्वैधे क्रियायुक्तास्तत्साम्ये शुचिमत्तराः' ॥ अथ मन्यसे वादिनोः साक्षिग्रहणे विप्रतिपत्तावेतानि, साक्षिणामेव ग्राह्यतया निर्देशात् अतो न बाध इति। एवं तर्हि याज्ञवल्क्यविरुद्धमेतत्, यथा—'द्वैधे बहूनां वचनं साम्येषु गुणिनां तथा। गुणिद्वैधे च वचनं ग्राह्यं ये गुणवत्तराः' ॥ अनेन गृहीतसाक्षिप्रश्नानन्तरं वचनविप्रतिपत्तौ बहूनां वचनस्यैव ग्राह्यतया निर्देशात्। ननु कथमेकस्यापि साक्षिणो बन्धभेदात् बहूनामप्यसाक्षित्वमुच्यते? सत्यं, एतस्मादेव तर्हि विरोधात् द्वैधे बहूनामित्यादिकमप्युभयोः सद्भावे विषयत्वेन वर्ण्यतामेतत्, साक्षिग्रहणाच्च तद्वचनस्यापि ग्रहणमर्थप्राप्तमनूद्यते। वचनग्रहणार्थमेव साक्षिणो ग्रहणात्। तेन गृहीतानां तुल्यगुणानां साक्षिणां मध्ये यद्येकोऽन्यथा ब्रूते, तदा बहूनामेवाप्यसाक्षित्वमित्यादिविरोधात् समानम्। किन्तु सकलप्रामाणिकव्यवहारविरुद्धत्वादन्यार्थस्याप्यन्यथा समाधीयते। त्रयाणां मध्ये यद्येकस्यान्यथावादः स्यात्तदा इतरयोर्मध्ये एकस्यैवान्यथावादनात्तुल्यत्वेन तदपरस्यैकस्य निर्णयः स्यात्, एकश्चासाक्षी इत्युक्तं प्राक्। तेन साक्षिवचनभेदे यत्रैकोऽधिकः स्यात्तत्र भेदादसाक्षित्वमिति वर्णनीयम्। द्वित्राद्यधिके तु बहुत्वं परिगृण्हीयादित्यादिवचनमित्यविरोधः।

एवं च तुल्यरूपेषु पञ्चसु पृष्टेष्वेकस्यान्यथावादे तुल्यादेकस्मात् त्रयोऽधिकाः तेन तत्र भवतु निर्णयः। तेष्वेव तु द्वयोर्विप्रतिपत्तावितरेषु त्रिषु द्वयोर्विप्रतिपन्नसमानयोरेकोऽधिक इति भेदादसाक्षित्वं बोद्धव्यम्। वचनवशात्तु पूर्वोक्त एवार्थः। एकैकशः सर्वेषामेव प्रतिपन्नसमानत्वादेकैकस्य प्रमाणत्वान्मिलितानां प्रमाणत्वाभावात्। *व्यमा.३२५-३२६

(२) तत्र सर्वशब्देनान्यथावादिसहितानामेव बहूनामसाक्षित्वमुक्तम्। न पुनः केवलानामित्यवगन्तव्यम्। अन्यथा 'द्वैधे बहूनाम्' इत्यादिवचनविरोधात्। +स्मृच.८२

(३) मिता.टीका— अस्यार्थः, साक्षित्वेन निर्दिष्टानां 'एते साक्षिण' इति पत्रलिखितानां, वादिनां ब्रुवतां तेषां साक्षिणां मध्ये एकोऽन्यथा वादी चेत् ते भेदान्न साक्षिण इति। सुबो.२।६८

(४) अत्र लिखितग्रहणादकृतसाक्षिणां भेदेऽपि न साक्ष्यहानिरित्युक्तम्। सवि.१४०

(५) पञ्चस्वेष्वपि साक्षिष्वधिकगुणस्यैकस्याप्यन्यथावादित्वे तद्विरुद्धार्थाभिधायिनां सर्वेषामन्येषामसाक्षित्वम्। अधिकगुणस्याप्येकस्य बहुवाक्यविरुद्धाभिधानादसाक्षित्वमिति सर्वेऽपि ते न साक्षिण इति न मन्वादिविरोध

---

भिः कार्य (कार्यं तु) लिखि (लेखि).

(१) **मिता.**२।७० ना (नाम्) नारदः; **व्यमा.**३२५ च (तु) ना (नाम्); **अप.**२।७१ च (तु); **स्मृच.**८२ च नि (तु नि); **पमा.**११६ ना (नाम्); **व्यचि.**४१ च नि (सुनि) ना (नाम्) भेदात्सर्वे न साक्षिणः (तदा सर्वेप्यसाक्षिणः); **स्मृचि.**४५-४६ ना (नाम्) नारदः; **व्यत.**२१५ ना (नाम्) वें न (वेंऽप्य); **सवि.**१४० ना (नाम्) नारदः; **वीमि.**२।७८ साक्षिणां लिखितानां (लिखितानां साक्षिणां); **व्यप्र.**११४ ना (नाम्) वादी (ब्रूते) वें न (वेंऽप्य); **व्यउ.**४८ ना (नाम्); **व्यम.**१६ भेदात् (भवेत्); **विता.**१६१ ना (नाम्) वें न (वेंऽप्य) क्रमेण बृहस्पतिः; **सेतु.**१२४ च वा (तु वा) वें न (वेंऽप्य); **प्रका.**५३ स्मृचवत्; **समु.**३२ ना (नाम्); **विव्य.**१३ च (तु) वें न (व त्व).

* व्यचि., व्यत., वीमि., सेतु. व्यमागतम्।

\+ पमा. स्मृतिचन्द्रिकैवोध्दृता।

इति मदनरत्नाकरः ।

वयं तु गुणवत्त्वस्यैव 'शतमप्यन्धानां न पश्यति' 'एकेनापि बहूनां प्रतिबन्धाच्च' इत्यादिन्यायेन प्राधान्यात् गुणवतः साम्ये वादिनिर्दिष्टानामेकस्याप्यन्यथावादित्वे संख्याधिक्येऽपि गुणवत्तरत्वाभावे सर्वेष्वसाक्षित्वम् । 'द्वैधे बहूनां' इत्यत्रापि विनिगमकान्तराभावे बहुत्वमेव विनिगमकमत एव संख्यानपेक्षमेव गुणवत्तमत्वमात्रं ग्राह्यवचने हेतुमाहेति ब्रूमः ।

*व्यप्र.११५

**तद्वृत्तिजीविनो ये च तत्सेवाहितकारिणः ।**
**तद्बन्धुसुहृदो भृत्या आप्तास्ते तु न साक्षिणः ॥**
**[२]मातृष्वसृसुताश्चैव पितृष्वसृसुतास्तथा ॥**
**[३]मातुलस्य सुताश्चैव सोदर्यसुतमातुलाः ।**
**एते सनाभयः प्रोक्ताः साक्ष्यं तेषु न योजयेत् ॥**
**[४]कुल्याः संबन्धिनश्चैव विवाह्यो भगिनीपतिः ।**
**पिता बन्धुः पितृव्यश्च श्वशुरो गुरवस्तथा ॥**

* अत्र वाचस्पतिमतमप्युद्धृतं प्रकाशकारेण, तच्च व्यमागतम् ।

(१) व्यमा.३२४; अप.२।७१; व्यक.४७; स्मृच.७७; स्मृचि.४६ उत्त., बृहस्पतिः; चन्द्र.१४१; व्यसौ.४५; व्यप्र.११९; विता.१६० तत्सेवा (ये च तत्) ते तु न (चैव न); प्रका.५०; समु.२८; विव्य.१३ सेवा (समा).

(२) व्यमा.३२४ (मातृस्वसुः सुताश्चैव विवाह्यो भगिनीपतिः); अप.२।७१ पितृ...स्तथा (विवाह्यो भगिनीपतिः); व्यक.४७ ष्व (स्व); व्यप्र.११९ मातृष्वसृ (मातृष्वसुः).

(३) अप.२।७१ उत्त.; व्यक.४७ यें (र्याः) प्रोक्ताः (तूक्ताः); स्मृच.७८ मातुलस्य (मातृष्वसुः) र्यं (र्या) प्रोक्ताः (तूक्ताः); पमा.९९ मातुलस्य (मातुःस्वसुः) प्रोक्ताः (तूक्ताः); व्यचि.४३ मातुलस्य (मातृष्वसृ) प्रोक्ताः (तूक्ताः) योजयेत् (विद्यते); स्मृचि.४६ साक्ष्यं तेषु (तेषु साक्ष्यं); चन्द्र.१४१ मातुलस्य (मातृष्वसृ) र्यं (र्या) प्रोक्ताः (तूक्ताः) शेषं स्मृचिवत्; व्यसौ.४५ मातुलस्य (मातृष्वसृ) प्रोक्ताः (तूक्ताः); व्यप्र.११९; प्रका.५० स्मृचवत्; समु.२९ मातुलस्य (मातृष्वसृ) र्यं (र्या) प्रोक्ताः (तूक्ताः); विव्य.१३ मातुलस्य (मातुः स्वसुः) र्यं (र्याः) साक्ष्यं...येत् (तेषु साक्ष्यं न विद्यते).

(४) व्यमा.३२४ उत्त.; अप.२।७१ श्वशुरो गुरवस्तथा (सोदर्यासुतमातुलाः); व्यक.४७; स्मृच.७८; पमा.१०० उत्त.; नृप्र.१० उत्त.; व्यसौ.४५ कुल्याः (अन्याः); व्यप्र.११९; प्रका.५०; समु.२९; विव्य.१३ पू.

**[१]नगरग्रामदेशेषु नियुक्ता ये पदेषु च ।**
**वल्लभाश्च न पृच्छेयुर्भक्तास्ते राजपूरुषाः ॥**

(१) ये कुल्यादयो राजपुरुषान्ताः प्रकीर्तिताः ते साक्ष्यं कर्तुं न पृच्छेयुः । न साक्षिणः स्युरित्यर्थः । ननु अयमसाक्षिकथनप्रपञ्चो व्यर्थः । लक्षणोक्त्यैवार्थाद्विलक्षणानामसाक्षित्वसिद्धेः । सत्यमेवं, तथापि यत्र सर्वथा विहितसाक्षिणामभावः तत्र मनुष्यमात्रस्य साक्षित्वं नयेत् । 'न ये केचिदनापदी'ति मनुवचनात्प्राप्तं, तत्र केषांचित्प्रतिषेधार्थं 'नार्थसंबन्धिनो नाप्ता' इत्यादिवचनरचना कृतेत्यर्थवानेवायं प्रपञ्चः । एवं च लक्षणान्वितसाक्षिणामलाभे प्रतिषेधराहित्यमात्रशालिनां साक्षित्वं विहितमित्यनुसंधेयम् । स्मृच.७८

(२) न पृच्छेयुः भवदीयो विवादः कीदृश इति तैर्न प्रष्टव्यम् । पमा.१००

**[२]न क्रुद्धैर्नापि संसृष्टैर्नासीनैर्न रुजान्वितैः ।**
**न निन्द्यैर्नापि संमूढैः साक्षिभिश्च विचारयेत् ॥**
**[३]विरुद्धा वर्गिणः स्युश्चेत् साक्ष्यं वर्गस्य न क्वचित् ॥**
**[४]यः साक्षी नैव निर्दिष्टो नाहूतो नैव दर्शितः ।**
**ब्रूयान्मिथ्येति तथ्यं वा दण्ड्यः सोऽपि नराधमः ॥**
**[५]अर्थी यत्र विपन्नः स्यात्तत्र साक्षी मृतान्तरः ।**
**प्रत्यर्थी वा मृतो तत्र तत्राप्येवं प्रकल्पयेत् ॥**
**[६]न साक्ष्यं साक्षिभिर्वाच्यमपृष्टैरर्थिना सदा ।**
**न साक्ष्यं तेषु विद्येत स्वयमात्मनि योजयेत् ॥**

(१) अप.२।७१; व्यक.४७ क्ता ये (क्तार्थे) भक्ता (उक्ता); स्मृच.७८; पमा.१००; नृप्र.१० क्तास्ते (क्ता ये); चन्द्र.१४१ पदे (परे) भक्ता (उक्ता); व्यसौ.४५ भक्ता (उक्ता); प्रका.५०; समु.२९.

(२) व्यक.४७ न निन्द्यै (नानिन्द्यै) श्च विचारयेत् (स्तु विभाव्यते); व्यसौ.४५.

(३) व्यक.४७ वर्गिणः (वर्जिताः) वर्गस्य (वृद्धस्य); व्यसौ.४५. (४) शुनी.४।६८९ दर्शि (देशि); व्यमा.३२६ नैव (नापि); व्यक.४८ नैव दर्शितः (नापि चोदितः); व्यचि.४१; व्यत.२१६ हूतो (भूतो); व्यसौ.४६ व्यमावत्; व्यप्र.११५ दर्शि (देशि); सेतु.१२५ व्यप्रवत्.

(५) व्यक.४८; व्यसौ.४६ वा (च) कल्पयेत् (कल्प्यते); बाल.२।६९ विपन्नः (विषण्णः). (६) व्यमा.३२६.

साक्षिणः कुत्र परीक्ष्याः कुत्र न

**ऋणादिषु परीक्षेत साक्षिणः स्थिरकर्मसु ।**
**साहसात्ययिके चैव परीक्षा कुत्रचित्स्मृता ॥**

(१) एतच्च साक्षिपरीक्षणं ऋणादिषु न साहसादिषु तदाह कात्यायनः— ऋणादिष्विति । ×व्यमा.३२७

(२) तत् यत्र साहसादौ पराजये वधादिगुरुतरदण्डप्राप्तिसंभावना, तत्र परीक्षाविधानार्थं ऋणादिसाहचर्यादज्ञत्वादिदोषपरीक्षायाः सार्वत्रिकत्वेन कुत्रचिद्विधानासंभवाच्च । स्मृच.७९

(३) परीक्षाभिधानं स्पष्टासत्यवादिदोषविषयम् । अत एव 'कुत्रचित्' इत्युक्तम् । व्यप्र.१२१

**व्याघातेषु नृपाज्ञायाः संग्रहे साहसेषु च ।**
**स्तेयपारुष्ययोश्चैव न परीक्षेत साक्षिणः ॥**

(१) व्याघातेषु भङ्गेषु इत्यर्थः । अप.२।७२

(२) एतद् गृहस्थत्वादिगुणगणविषयपरीक्षाया निषेधकं न पुनरज्ञत्वादिदोषविषयपरीक्षाया अपि, पूर्वोक्तवचनविरोधात् । स्मच.७९

**अन्तर्वेश्मनि रात्रौ च बहिर्ग्रामाच्च यद्भवेत् ।**
**एतेष्वेवाभियोगश्चेन्न परीक्षेत साक्षिणः ॥**

साक्ष्यादिप्रमाणपरीक्षा

**नातथ्येन प्रमाणं तु दोषेणैव तु दूषयेत् ।**
**मिथ्याभियोगे दण्ड्यः स्यात्साध्यार्थाच्चापि हीयते ॥**

दोषेणैव तु दूषयेत् । न तु गुणाभावेन । तस्य वचनप्रामाण्यविघातकारित्वाभावादित्यभिप्रायः । अत एव आपदि गुणरहितस्यापि निषिद्धेतरस्य ऋणादौ साक्षित्वमुक्तम् । अतो न गुणाभावोद्भावनमात्रेण ऋणादौ निर्दिष्टसाक्षिणामसाक्षित्वापत्तिः । किन्तु दासत्वादिनिषिद्धनिमित्तोद्भावनेनेत्यवगन्तव्यम् । साहसादौ न तेनापि । किन्त्वज्ञत्वासत्यशीलत्वादिदोषोद्भावनेनैवेत्यनुसंधेयम् । *स्मृच.८३

**प्रमाणस्य हि ये दोषा वक्तव्यास्ते विवादिना ।**
**गूढास्तु प्रकटाः सभ्यैः काले शास्त्रप्रदर्शनात् ॥**

(१) प्रमाणस्य प्रमाणबुद्ध्या प्रयुक्तस्य गूढा दोषा विवादिना वक्तव्याः, प्रकटास्तु सभ्यैरित्यन्वयः । अप.२।७२

(२) विवादिना अविदितत्वेनानुद्भावितदोषाः शास्त्रप्रदर्शनेन प्रकटीकृत्य सभ्यैर्वक्तव्या इत्यर्थः । +व्यक.४९

(३) प्रमाणस्य प्रमाणतया कीर्तितस्य । काले प्रमाणपरीक्षाकाल इत्यर्थः । स्मृच.६२

काले निर्णयकाले इत्यर्थः । स्मृच.८३

(४) ये गूढाः प्रत्यर्थिना न ज्ञातास्ते, काले साक्षिवादात्पूर्वकाले, कार्या इति शेषः । शास्त्रप्रदर्शनात् दुष्टानां शास्त्रे साक्षित्वेनानुपादेयत्वदर्शनात् । छलं निरस्येति च छलनिरासस्यावश्यकत्वादिति तात्पर्यार्थः । व्यप्र.१२२

---

× व्यचि. व्यमावत् ।

(१) **व्यमा.**३२७ (साहसात्यधिके चैव परीक्षा न क्वचिन्मता); **व्यक.**४९; **स्मृच.**७९; **व्यचि.**४४ उत्तरार्धे (साहसात्यधिके चापि न परीक्षा क्वचिन्मता); **व्यत.**२१४ के चैव (के नैव); **व्यसौ.**४७; **व्यप्र.**१२१ (=) चैव (चापि); **सेतु.**१२० यिके चै (यके नै); **प्रका.**५१; **समु.**३०.

(२) **व्यमा.**३२८ तेषु (ते च); **अप.**२।७२; **व्यक.**४९ याः (यां); **स्मृच.**७९; **व्यचि.**४४ तेषु (ते च) याः (यां); **स्मृचि.**४६ व्यचिवत्; **व्यसौ.**४७ क्षे (क्ष्ये); **प्रका.**५१; **समु.**३०.

(३) **व्यमा.**३२८ यद्भवेत् (यो भवेत्) (एतेष्वेवाभियोगे च परीक्षा नास्ति साक्षिणाम्); **अप.**२।७२; **व्यक.**४९; **व्यचि.**४५ यद्भवेत् (यो भवेत्) (एतेष्वेवाभियोगे तु परीक्षा नात्र साक्षिणाम्); **व्यसौ.**४२ त्रौ च (त्रौ वा) यद्भ (यो भ) क्षेत (क्षाऽत्र).

(४) **अप.**२।७२ दण्ड्यः (दण्डः) चापि (चाभि); **व्यक.**४९; **स्मृच.**६२,८३; **पमा.**१०६ ना (न) भियोगे (भोगे तु): १३२ नातथ्येन (तथ्येन हि) येत् (णम्): १३२ पू., बृहस्पतिः; **व्यचि.**४६ र्थाच्चापि (र्थाच्च); **दवि.**३४१ णं तु (णेन) च्चा (द्धा); **सवि.**१४४ नातथ्ये (नावद्ये); **व्यसौ.**४८ च्चापि (द्धापि); **व्यप्र.**१२२ व्यसौवत्; **प्रका.**५०, ५४; **समु.**३२ योगे (योगी).

* सवि. स्मृचवत् । + व्यचि. व्यकवत् ।

(१) **शुनी.**४।६६३ प्रमा ... हि (साधनानां च) ले (ल); **अप.**२।७२; **व्यक.**४९ ढास्तु (ढात्तु) पादत्रयमेव; **स्मृच.** ६२,८३; **पमा.**१३२ दिना (दिनः) ढास्तु (ढाः स्युः) ले (ल); **व्यचि.**४६ काले (कार्यै); **व्यसौ.**४८; **व्यप्र.**१२२; **व्यम.**१७ क्रमेण व्यासः; **विता.**१७९ विवा (हि वा); **प्रका.** ४१,५३; **समु.**३२.

(५) काले वादात्पूर्वम् । विता.१७९

[5]लेख्यदोषास्तु ये केचित्साक्षिणां चैव ये स्मृताः ।
वादकाले तु वक्तव्याः पश्चादुक्तान्न दूषयेत् ॥
[3]उक्तेऽर्थे साक्षिणो यस्तु दूषयेत् प्रागदूषितान् ।
न च तत्कारणं ब्रूयात्प्राप्नुयात्पूर्वसाहसम् ॥
[3]प्रत्यर्थिनाऽर्थिना वाऽपि साक्षिदूषणसाधने ।
प्रस्तुतार्थोपयोगेन व्यवहारान्तरं न च ॥

प्रमाणदोषविवादनिर्णयः पूर्वव्यवहारमध्य एव कर्तव्य इत्यभिप्रायः । न च व्यवहारमध्ये व्यवहारान्तरनिर्णयस्य अनुचितत्वादयुक्तमिति वाच्यं, प्रमाणदोषविवादनिर्णयस्य पूर्वव्यवहारशेषत्वेन तत्रैव कार्यत्वात् । पृथक् फलाभावेन व्यवहारान्तरत्वाभावाच्चेति । *सवि.१४५

[4]राजा क्रियां समीक्ष्यैव यथान्यायं विचारयेत् ।
लेख्याचारेण लिखितं साक्ष्याचारेण साक्षिणः ॥

(१) सुव्यक्तवर्णवाक्यादिको लेख्याचारः । स्मृच.६१ साक्ष्याचारेण, साक्षिलक्षणजातेनेत्यर्थः । स्मृच.८४

(२) राजा साक्षिण आहूय साक्ष्याचारेण लिखितं विचारयेत् । यद्वा लेख्याचारेण लिखितं विचारयेत् । अस्मिन् व्याख्याने क्रियामिति लक्षणे द्वितीया । क्रियानिर्णयार्थं लिखितं साक्षिणश्च विचारयेदित्यर्थः । क्रियां समादायेति पाठे ऋजुरेवान्वयः । सवि.११९

साक्षिणः सद्यः प्रष्टव्याः

[1]न कालहरणं कार्यं राज्ञा साक्षिप्रभाषणे ।
महान्दोषो भवेत्कालाद्धर्मव्यावृत्तिलक्षणः ॥

(१) साक्षिणां निर्देशः । पृष्टानां वा अपृष्टानां वा साक्षिणां वचनं द्वयमपि साक्षिप्रभाषणं, न्यायस्याविशेषात् । उभयत्राऽपि विलम्बे कूटकरणेन धर्मविरोधापत्तेरित्यर्थः । व्यमा.३०६

(२) तत् स्पष्टसाक्षिविषयमित्यवगन्तव्यम् । संदिग्धसाक्ष्ये कालदानविधानात् । *स्मृच.९२

साक्षिभ्यः कालो देयः

[2]सम्यक्क्रियाऽपरिज्ञाने देयः कालस्तु साक्षिणाम् ।
संदिग्धं यत्र साक्ष्यं तु सद्यः स्पष्टं विवादयेत् ॥

(१) सम्यक्क्रियापरिज्ञाने सम्यक्कार्यज्ञानार्थम् । व्यक.५९

(२) निगाद्याऽस्मरणे तत्स्मरणार्थं कालो देयः । स्मरणे सद्य एव साक्षिणो निगाद्याः । व्यचि.५६

साक्षिप्रश्नविधिः । सत्यप्रशंसाऽनृतनिन्दा च ।

[3]आहूय साक्षिणः पृच्छेन्नियम्य शपथैर्भृशम् ।
समस्तान्विदिताचारान्विज्ञातार्थान्पृथक्पृथक् ॥
[4]देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं द्विजान् ।
उदङ्मुखान्प्राङ्मुखान् वा पूर्वाह्णे च शुचिः शुचीन् ॥

---

* व्यप्र. सविगतम् ।

(१) व्यक.५० बृहस्पतिकात्यायनौ; स्मृच.८३; पमा.१०६; सवि.१४३ उक्तान् (उक्तं); चन्द्र.१४३ षास्तु (षाश्च) णां चैव (दोषाश्च) वादकाले तु (विवादकाले) उक्तान् (वक्ता); व्यसौ.४८ उक्तान् (वक्ता); प्रका.५३; समु.३२.

(२) व्यमा.३२७; अप.२।७२; व्यक.५० न च (नैव); स्मृच.८३; पमा.१०६ न च (स च); दवि.३४२; सवि.१४४; व्यसौ.४९ च तत् (तत्र) पूर्व (सर्व); व्यप्र.१२२; व्यम.१७; विता.१८०; प्रका.५४; समु.३२.

(३) पमा.१०६ ना (नो); सवि.१४५ (=) ना (नो) उत्तरार्धे (न तु साक्ष्यभियोगः स्याद्व्यवहारान्तरं तथा); व्यप्र.१२२ गेन (गित्वात्).

(४) व्यक.६५ समीक्ष्यैव (समाहूय); स्मृच.६१,८४ व्यकवत्; पमा.१०७ यथा (यत्नात्) : १२९ क्रियां (ज्ञया) शेषं व्यकवत्; सवि.११९ व्यकवत्; व्यप्र.१४८ यां (याः) शेषं व्यकवत्; प्रका.४० व्यकवत्; समु.४२ व्यकवत्.

* सवि. स्मृचवत् ।

(१) शुनी.४।६६१ रा...णे (राजा साधनदर्शने) : ४।६८७ पू.; व्यमा.३०६ हर (ग्रह) : ३२८; व्यक.५० कालाद्धर्म (कालो धर्मे); स्मृच.९२; व्यचि.४६; स्मृचि.४७ पू.; सवि.१४८ (=) कालात् (काले); चन्द्र.१४४ भवेत्कालात् (भवत्यस्मात्); व्यसौ.४९; वीमि.२।१७; व्यप्र.१२६; व्यम.१८ महान् (महा); विता.१७५ पू.; प्रका.५५; समु.३८; विव्य.१३.

(२) अप.२।७७ तु (स्यात्) स्पष्टं (पृष्टं); व्यक.५८-५९ विवाद (विचार); स्मृच.९२; व्यचि.५५-५६ अपवत्; सवि.१४८ देयः (ज्ञेयः) यत्र (पत्र) सद्यः स्पष्टं (स्पष्टं सद्यो); व्यसौ.५५-५६; प्रका.३४ सद्यः...त् (तत्र दिव्येन निर्णयः) : ६०; समु.३८. (३) मिता.२।७३; व्यउ.४९.

(४) मिता.२।७३ च (वै); व्यप्र.१२५ च (वा); व्यउ.४९ च (वा); व्यम.१८; विता.१६८ ऋतं (अथ) च (वै).

सभान्तः साक्षिणः सर्वानर्थिप्रत्यर्थिसंनिधौ ।
प्राड्विवाकोऽनुयुञ्जीत विधिनाऽनेन सान्त्वयन् ॥
यद्द्वयोरनयोर्वेत्थ कार्येऽस्मिन् चेष्टितं मिथः ।
तद्ब्रूत सर्वं सत्येन युष्माकं ह्यत्र साक्षिता ॥
कालपाशावृतग्रीवं मुद्गराहतिविह्वलम् ।
क्रुद्धः कण्टकिनीं भूमिं तं नयेद्यमकिङ्करः ॥

कालपाशावृतग्रीवं कृष्णायसपाशबद्धग्रीवम् । स्मृच.८६

असिपत्रवनाघातशल्मल्यालिङ्गनातुरः ।
पूयशोणितसंपूर्णां नदीं यास्यति दारुणाम् ॥
अवीचिनरके कल्पं वसेयुः कूटसाक्षिणः ॥

साक्ष्यविषयः

अशक्य आगमो यत्र विदेशप्रतिवादिनाम् ।
त्रैविद्यप्रहितं तत्र लेख्यं साक्ष्यं प्रवादयेत् ॥

वादिनां व्यवहारिणाम् । विदेशे विरुद्धदेश आगमनमागमोऽशक्यो यत्र तत्र त्रैविद्यैः सभ्यैः प्रहितं लेख्यमेव साक्षिणो वादयेत् । लेख्यार्थमवधार्य सभ्यप्रहितपुरुषसंनिधौ साक्षिणो ब्रूयुरित्यर्थः । अप.२।६९

अनुद्विग्नेन चित्तेन दृष्टं सम्यग्विदा तु यत् ।
प्रत्यक्षं तत्स्मृतं कार्यं साक्ष्यं साक्षी तु तद्वदेत् ॥

समवायसाक्षित्वं पृथक्साक्षित्वं च

समवेतैस्तु यद्दृष्टं वक्तव्यं तत्तथैव च ।
विभिन्नैस्तु कृतं कार्यं तद्वक्तव्यं पृथक्पृथक् ॥
नैककार्ये च कार्ये च वक्तव्यं तत्पृथक्पृथक् ॥
भिन्नकाले तु यत्कार्यं विज्ञातं तत्र साक्षिभिः ।
एकैकं वादयेत्तत्र भिन्नकाले तु तद्गुः ॥

(१) मिलितैरवगते मिलिता एव प्रष्टव्याः । एकैकशस्तु तत्र कार्यावगमे पृथक् पृथगित्यविरोधः । *व्यमा.३२९

(२) नैककार्यमिति, अनेककार्यमित्यर्थः । व्यक.५६

देशकालादिनियमयुक्तः साक्ष्योक्तिविधिः, साक्ष्यविषयश्च

नापृष्टैरनियुक्तैर्वा समं सत्यं प्रयत्नतः ।
वक्तव्यं साक्षिभिः साक्ष्यं विवादस्थानमागतैः ॥

अनियुक्तैः तेनानुपन्यस्तैः । व्यक.५६

सभान्तस्थैस्तु वक्तव्यं साक्ष्यं नान्यत्र साक्षिभिः ।
सर्वसाक्ष्येष्वयं धर्मो ह्यन्यत्र स्थावरेषु तु ॥

---

(१) **मिता**.२।७३ कोऽनु (को नि); **नृप्र**.१० सान्त्वयन् (सुस्वरम्); **व्यप्र**.१२५ सर्वा (प्राप्ता); **व्यउ**.४९ मितावत्; **व्यम**.१८; **विता**.१६८ मितावत्; **राकौ**.४०३ सर्वा (प्राप्ता) ऽनु (नि). (२) **व्यप्र**.१२५; **व्यम**.१८.

(३) **स्मृच**.८६; **प्रका**.५६; **समु**.३४.

(४) **स्मृच**.८६; **प्रका**.५६; **समु**.३५ यास्यति (पास्यति).

(५) **व्यक**.५९ कल्पं (कल्पे); **दीक**.३९ कल्पं (वर्षे); **व्यचि**.५६ व्यकवत्; **व्यत**.२१५ दीकवत्; **सेतु**.१२२.

(६) **अप**.२।६९ देश (देशं) लेख्यं (लेख्य); **व्यक**.४२ क्य आ (क्यस्त्वा) तं (तः); **व्यचि**.५३ वाद (दाप); **व्यसौ**.४० दि (सि) लेख्यं (लेख्य); **वीमि**.२।७८ अशक्य (अप्राप्य) वाद (दाप); **प्रका**.५२ अश (आशं) शप्र (शे प्र) दिनाम् (दिनः) वाद (दाप); **समु**.३१ शप्र (शे प्र) दिनाम् (दिनः) वाद (दाप).

(७) **व्यक**.५५-५६ विदा तु यत् (तदा तु तत्) साक्ष्यं साक्षी (साक्षी साक्ष्यं); **व्यचि**.५३ विदा (यदा); **व्यत**.२२० दृष्टं (दुष्टं); **व्यसौ**.५३ विदा (यथा); **वीमि**.२।७८ व्यचिवत्; **सेतु**.१२३ द्विग्ने (द्वेगे).

* व्यचि. व्यमावत्।

(१) **व्यमा**.३२९ न्नैस्तु कृतं (न्नै चैव यत्) तद्वक्तव्यं (वक्तव्यं तत्); **अप**.२।७५ व च (व तु) (विभिन्नैकैककार्यं यद्वक्तव्यं तत् पृथक्पृथक्); **व्यक**.५६ व च (व हि) न्नैस्तु कृतं कार्यं (न्नैनैव कार्यं तु); **व्यचि**.४७ : ५३ व च (व हि) न्नैस्तु कृतं कार्यं (न्नैनैक कार्यं तु); **व्यत**.२२० स्तु (श्च) न्नैस्तु कृतं कार्यं (न्नैनैव कार्ये तु); **व्यसौ**.५३ (विभिन्ने चैव यत्कार्यं वक्तव्यं तत् पृथक् पृथक्); **वीमि**.२।७८ व्यचि.५३ वत्; **सेतु**.१२३ तैस्तु (तैश्च) शेषं व्यकवत्; **विव्य**.१४ तथैव च (समेत्य वै) पू. (२) **व्यक**.५६.

(३) **व्यमा**.३२९ भिन्न (भिन्ने) भिन्नकाले तु तत् (भिन्नकालं तु तत्); **अप**.२।७५ काले तु तत् (कालं तु तत्); **व्यक**.५६; **व्यचि**.४७ अपवत् : ५३ काले तु यत् (कालेषु यत्); **व्यसौ**.५३ भिन्न (भिन्ने); **वीमि**.२।७८; **सेतु**.१२३.

(४) **व्यक**.५६; **व्यचि**.५३; **व्यत**.२२०; **चन्द्र**.१४४ ष्टैर (ष्टैर्ना); **व्यसौ**.५२; **सेतु**.१२३ समं (सत्यं); **प्रका**.५८ रनि (रभि); **समु**.३६ प्रकावत्.

(५) **अप**.२।७५ ह्यन्यत्र (ऽन्यत्र स्यात्); **व्यक**.५५ सभान्तस्थैः (सभां गतैः) (सर्वसाक्ष्येषु यद्धर्मोऽन्यस्तस्मात्स्थावरेषु च); **स्मृच**.८९; **पमा**.११२ तु (च)क्ष्ये (क्षि) ह्यन्यत्र (नित्यः स्यात्); **व्यचि**.५३ ह्यन्यत्र (ऽन्यत्र स्यात्) तु (च); **नृप्र**.१० स्तु (श्च) ह्यन्यत्र (नित्यः स्यात्) तु (हि); **सवि**.

अन्यत्र स्थावरस्योपरीत्यर्थः । स्मृच.८९

**अर्थिप्रत्यर्थिसान्निध्ये साध्यार्थस्य च संनिधौ ।**
**प्रत्यक्षं चोदयेत्साक्ष्यं न परोक्षं कथञ्चन ॥**

(१) वादिप्रतिवादिवस्तूनां संनिधौ साक्षिवादनं कार्यमिति मुख्यः कल्पः । व्यचि.४७

(२) साध्यं गवाश्वादि । विता.१७४

**अर्थस्योपरि वक्तव्यं तयोरपि विना क्वचित् ।**
**चतुष्पादेष्वयं धर्मो द्विपदस्थावरेषु च ॥**

(१) तयोः पूर्वोक्तस्थानयोस्ते स्थाने विनाऽपि क्वचिद्धरूपविवादे साक्ष्यं वक्तव्यमित्यर्थः । +स्मृच.८९

(२) वस्तुमात्रसंनिधौ वादिसंनिधापनाशक्यत्वे सति कार्यमित्यवरः कल्पः । अयं च नियमश्चतुष्पादादावेव । व्यचि.४७

(३) तयोः वादिनोर्विनापीति संबन्धमात्रविवक्षया षष्ठी । अपिशब्दात् कैमुतिकन्यायेन तदुभयसंनिधाने न तात्पर्यम् । किन्तु साध्यार्थसान्निध्यावश्यकतायाम् । यद्वोभयासंनिधिः प्रत्यर्थ्यसान्निध्यानुमत्यर्थः । तेन कथंचित् प्रत्यर्थ्यसंनिधानेऽपि साक्षिप्रश्ने न दोषः । क्वचिदित्यस्यैव विवरणं चतुष्पादेष्वित्यादि । व्यप्र.१२५

**तौल्यगणिममेयानामभावेऽपि हि वादयेत् ।**
**क्रियाकारेषु सर्वेषु साक्षित्वं न ततोऽन्यथा ॥**

(१) तौल्यं सुवर्णादि, गणिमं कपर्दकादि, मेयं व्रीह्यादि । क्रियाकारेषु व्यवहारेषु । व्यक.५१

(२) हिरण्यादिषु तु वस्त्वसंनिधावपि साक्षिवादनम् । *व्यचि.४७

(३) अभावेऽपि साध्यार्थसान्निध्याभावेऽपि । व्यप्र.१२५

**वधे चेत्प्राणिनां साक्ष्यं वादयेच्छवसंनिधौ ।**
**तदभावे तु चिन्हस्य नान्यथैव प्रवादयेत् ॥**

(१) तदभावे शवाभावे । चिन्हस्य अस्थिकेशादेः संनिधावित्यर्थः । व्यक.५५

(२) चिह्नस्य वधचिह्नस्याभियोज्यसंबन्धिनोऽभावे तत्साक्ष्यं वादयेत् । अन्यथा तत्सद्भावे नैव वादयेत्साक्ष्यम् । वधचिह्नेनैव निर्णयसंभवादित्युत्तरार्धार्थोऽनुवाद्यः । विधेयस्तु पूर्वार्धार्थः । स तु स्पष्ट एव । ×व्यप्र.१२५

**अर्थिप्रत्यर्थिसान्निध्यादनुभूतं तु यद्भवेत् ।**
**तद्ग्राह्यं साक्षिणो वाक्यमन्यथा न बृहस्पतिः ॥**

(१) अनुभूतं चक्षुषा श्रोत्रेण वा । व्यमा.३१७

(२) अर्थिप्रत्यर्थिसान्निध्यादनुभूतमिति मुख्यः कल्पः। तदसान्निध्येऽपि श्रवणादिना साक्ष्यस्य वचनान्तरैरनुमतत्वात् । व्यप्र.१०६

साक्ष्युक्तिपरीक्षा

**उपस्थितान्परीक्षेत साक्षिणो नृपतिः स्वयम् ।**

---

+ पमा. स्मृचवत् ।

१५७ अपवत्; **चन्द्र.**१४५ व्यचिवत्; **व्यसौ.**५२ व्यचिवत्; **वीमि.**२।७८ व्यचिवत्; **प्रका.**५८; **समु.**३६.

(१) **शुनी.**४।६८७-६८८ र्थस्य (र्थेऽपि) चोद (वाद); **व्यमा.**३२९ येत् (यं) कथं (कदा) उत्त., मनुः; **व्यक.** ५१; **व्यचि.**४७ चोद (वाद) न परोक्षं (परोक्षं न); **स्मृचि.** ४७ व्यचिवत्; **चन्द्र.**१४३-१४४ व्यचिवत्; **व्यसौ.**४९ चोद (देश) न परोक्षं (परोक्षं न); **व्यप्र.**१२५ चोद (वाद) क्षं क (क्षे क); **व्यम.**१८; **विता.**१७४; **समु.**३६.

(२) **व्यमा.**३२९ पादेष्वयं (पदेष्वेवं) पद (पदे) मनुः; **व्यक.** ५१ ष्पा (ष्प) द्विप (द्विपा); **स्मृच.**८९ ष्पा (ष्प); **पमा.**११३; **व्यचि.**४७ षु च (ष्वपि); **चन्द्र.**१४४ अयं धर्मो (धर्मोऽयं); **व्यसौ.**४९ वक्त (कर्त) अयं धर्मो (धर्मोऽयं); **व्यप्र.**१२५ द्विप (द्विपा) शेषं व्यसौवत्; **व्यम.**१८ व्यसौवत्; **प्रका.**५८ स्मृचवत्; **समु.**३६ स्मृचवत्.

(३) **व्यमा.**३२९(तैन्ये गणेयमेयेनमभावेऽपि हि वाचयेत्) पू., मनुः; **व्यक.**५१; **व्यचि.**४७; **चन्द्र.**१४४ गणिम (गणेय) पू.; **व्यसौ.**४९ हि (वि); **व्यप्र.**१२५ ल्य (ल्यं) ततो (त्वतो); **व्यम.**१८ ततो (त्वतो); **विता.**१७४ णिम (णित) पू.; **प्रका.**५८ तौल्य (तौल) कारेषु (कालेषु); **समु.**३६ तौल्य (तौल) ततो (त्वतो).

* शेषं व्यकवत् । × व्यम. व्यप्रगतम् ।

(१) **व्यक.**५५ चेत् (च) प्रवाद (च दाप); **स्मृच.**८९ च्छव (च्छिव); **पमा.**११३; **व्यचि.**५३ चेत् (त्र); **सवि.** १५७; **चन्द्र.**१४५ चेत् (तु) थैव (था तु); **व्यसौ.**५२; **वीमि.**२।७८ चेत् (न); **व्यप्र.**१२५ चेत् (च) च्छव (च्छित्र); **व्यम.**१८ च्छव (च्छिव) थैव (थैतत्); **विता.**१७४ स्मृचवत्; **प्रका.**५८ स्मृचवत्; **समु.**३६ च्छव (च्छिव) चिन्हस्य (विप्रस्य). (२) **शुनी.**४।६७८ यद्भवेत् (प्राग् यथा) पू.; **व्यमा** ३१७ न (ऽऽह); **व्यक.**४१; **व्यसौ.**३९; **व्यप्र.**१०६.

(३) **मिता.**२।८० उत्त.; **व्यमा.**३३१ सह सभ्यैः (सभ्यैः सह); ३३६ भाषितं (व्याहृतं); **अप.**२।७५ क्षेत (क्ष्याथ

**साक्षिभिर्भाषितं वाक्यं सह सभ्यैः परीक्षयेत् ॥**

(१) यथा चक्षुरादिकरणदोषानध्यवसायेऽप्यर्थविसंवादात्तज्जनितस्य ज्ञानस्याऽप्रामाण्येन करणदोषकल्पना। तथेहापि साक्षिपरीक्षातिरेकेण वाक्यपरीक्षोपदेशाच्च 'साक्षिभिर्भाषितं वाक्यं सह सभ्यैः परीक्षयेत्' इति। मिता.२।८०

(२) नृपतिरित्युपलक्षणम्। व्यमा.३३१

(३) मिता.टीका—यथा चक्षुरादीति। अयमभिप्रायः— अर्थविसंवादादर्थस्य शुक्तिरजतादेरन्यथात्वात्तजनितस्येदं रजतमिति ज्ञानस्याप्रामाण्येन चक्षुरादिगतदोषकल्पना। यथेति दार्ष्टान्तिके योजयति तथेहापीति। न केवलं युक्तितः प्रमाणान्तरगवेषणमुचितं, अपि तु वचनबलादपीत्याह—साक्षिपरीक्षातिरेकेणेति। अयमभिप्रायः– न केवलं साक्षिवचनमात्रेण निर्णयः, अपि तु तद्वाक्यपरीक्षया च। एवं च साक्षिवचनपरीक्षायां क्रियमाणायां यदि तद्वचनमबाधितं स्यात्तदा तस्य प्रामाण्यमितरथा साक्षिवचनस्य बाधितत्वे साक्षिष्वपि दोषकल्पना स्यादिति। एतच्च परीक्षावचनविधिबलाद्गम्यते। सुबो.२।८०

(४) साक्षिदोषानुद्भावनेऽपि ससभ्येन सभापतिनैवैते परीक्ष्योपादेयाः। तथा च कात्यायनः— उपस्थितानिति। *व्यप्र.१२३

**यदा शुद्धा क्रिया न्यायात्तदा तद्वाक्यशोधनम्।**

* व्यप्र. (१३१) मितागतम्।

भाषितं (व्याहृतं); **व्यक**.५६; **व्यसौ**.५३; **व्यप्र**.१२३ पू., १३१ उत्त.; **व्यउ**.५० भाषि (भावि) उत्त.; **विता**.१८२ पू.; **बाल**.२।८० पू., नारदः; **प्रका**.५४ उत्तरार्धे (अथैते साक्षिणः सर्वे साधवोऽर्हन्ति साक्षिताम्):५९ उत्त.,याज्ञवल्क्यः; **समु**.३३ प्रका.५४ वत्; **विव्य**.१५ ह सभ्यैः (हामात्यैः).

(१) **मिता**.२।८० (=) (शुद्धाच्च वाक्याद्यः शुद्धः स शुद्धोऽर्थ इति स्थितिः); **व्यमा**.३३६ न्यायात् (न स्यात्) (शुद्धतायान्तु वाक्यार्थः शुद्धः शुद्धोऽन्यथा न तु); **अप**.२।७५ द्धा क्रि (द्धक्रि); **व्यक**.५६ द्वाक्याच्च (र्थवाक्यात्); **व्यसौ**.५३ न्यायात् (पाल्या) द्वाक्याच्च (च्च वाक्यात्); **व्यप्र**.१३१ मितावत्; **प्रका**.५९ द्धा क्रि (द्धक्रि) शेषं मितावत्; **समु**.३२ न्यायात् (न्याय्या) शेषं मितावत्, स्मृत्यन्तरम्; **विव्य**.१५ (शुद्धात्तु वाक्याच्छुध्दार्थः स शुध्दार्थो न चान्यथा) उत्त.

**शुद्धाद्वाक्याच्च यः शुद्धः स शुद्धोऽर्थोऽन्यथा न तु॥**

(१) क्रिया साक्षिलक्षणा, 'नार्थसंबन्धिनो नाप्ता' इति न्यायाद्यदा शुद्धा तदा तद्वाक्यशोधनं साक्षिवाक्यशोधनं कर्तव्यम्। वाक्यशुद्धिश्च सत्यार्थप्रतिपादनेन। 'सत्येन शुद्ध्यते वाक्यं' इति स्मरणात्। एवं शुद्धायाः क्रियायाः शुद्धवाक्याच्च यः शुद्धोऽवगतोऽर्थः स शुद्धस्तथाभूत इति स्थितिरीदृशी मर्यादा न्यायविदाम्। करणदोषबाधकप्रत्ययाभावे सति अवितथ एवार्थ इत्यर्थः। ×मिता.२८०

(२) क्रिया लिखितादि प्रमाणम्। शुद्धिर्दोषगणाऽदर्शनम्। अप.२।७५

(३) मिता.टीका— करणदोषबाधकप्रत्ययाभाव इति। 'यदा शुद्धा क्रिया न्यायात्' इत्यनेनांशेन साक्षिलक्षणक्रियारूपकरणगतदोषाभावोऽभिधीयते। 'शुद्धाच्च वाक्याद्यः शुद्धः' इत्यनेन तु बाधकप्रत्ययाभावोऽभिधीयते। एवं च करणदोषबाधकप्रत्यययोरभावे सत्यर्थोऽवितथः सत्य इति तात्पर्यार्थः। सुबो.२।८०

**यत्र वै भावितं कार्यं साक्षिभिर्वादिना भवेत्।**
**प्रतिवादी यदा तत्र भावयेत्कार्यमन्यथा।**
**बहुभिस्तत्कुलीनैर्वा कूटाः स्युः पूर्वसाक्षिणः+॥**

(१) कूटाः अनादेयनिगदाः। व्यचि.६१

(२) तत्कार्यमिति संबन्धः। बहुभिरिति पूर्वसाक्ष्यपेक्षया बहुत्वम्। कुलीनैरित्यनेन तदपेक्षया गुणवत्तरत्वं विवक्षितम्। अपरार्कमदनरत्नकाराभ्यामेतत्संवादादेव योगीश्वरवचोऽपि 'उक्तेऽपि' इत्यादिकमेतदर्थकतयैव व्याख्यातम्। व्यप्र.१३४

× व्यप्र. मितागतम्।

+ व्यमा., अप., स्मृच. व्याख्यानं 'उक्तेऽपि साक्षिभिः' इति याज्ञवल्क्यश्लोके (पृ. २९०-२९१) द्रष्टव्यम्।

(१) **व्यमा**.३३५ वादिना भवेत् (पूर्ववादिनाम्) यदा (तदा) बहुभिस्तत् (अनुक्तास्तु); **अप**.२।८० त्र वै (त्रैव) ना भ (नो भ) यदा (तदा); **व्यक**.६०; **स्मृच**.९४ स्तत् (श्च) कूटाः (पूर्वाः) पूर्व (कूट); **व्यचि**.६१ यत्र (यदा) ना भ (नां भ) भिस्तत् (भिर्वा) पूर्व (सर्व); **चन्द्र**.१२७ द्वितीयार्धं विना; **व्यसा**.५७ यदा (तदा) स्तत् (स्तु); **व्यप्र**.१३४ भाव (वाद); **विता**.१८१ ना भ (नां भ) कुलीनैर्वा (कुटा नैव); **प्रका**.६१ स्मृचवत्; **समु**.३८ स्मृचवत्.

**[१]स्वभावोक्तं वचस्तेषां ग्राह्यं यद्दोषवर्जितम् ।**
**उक्ते तु साक्षिणो राज्ञा न प्रष्टव्याः पुनः पुनः ॥**

(१) यत्र तु प्रतिज्ञातार्थस्य विस्मरणादिना भावाभावौ साक्षिणो न प्रतिपादयन्ति, तत्र प्रमाणान्तरेण निर्णयः कार्यः, न च राज्ञा साक्षिणः पुनः पुनः प्रष्टव्याः । स्वभावोक्तमेव वचनं ग्राह्यम् । मिता.२।७९

(२) मिता.टीका— यद्दोषेति । यतो दोषवर्जितमित्यर्थः । बाल.२।७९

**[२]ऋणादिषु विवादेषु स्थिरप्रायेषु निश्चितम् ।**
**ऊने वाभ्यधिके वाऽर्थे प्रोक्ते साध्यं न सिध्यति ॥**

(१) ननु 'ऋणादिषु' इति वदता कात्यायनेनानेकार्थाभियोगे साक्षिभिरेकदेशे भाविते ऽधिके वा भाविते साध्यं सर्वमेव न सिध्यतीत्युक्तम् । तथा सत्येकदेशे भाविते अभावितैकदेशसिद्धिः कुतस्त्या । उच्यते । लिखितसर्वार्थसाधनतयोपन्यस्तैः साक्षिभिरेकदेशाभिधानेऽधिकाभिधाने वा कृत्स्नमेव साध्यं न सिध्यतीति तस्यार्थः । तत्रापि निश्चितं न सिध्यतीति वचनात्पूर्ववत्संशय एवेति प्रमाणान्तरस्यावसरोऽस्त्येव, छलं निरस्येति नियमात् । *मिता.२।२०

(२) यावत्प्रतिज्ञातार्थसाधनार्थमुद्दिष्टसाक्षिवाक्यमूनाधिकं चेत् संदेहापादकमेव । न पुनः प्रतिज्ञातार्थैकदेशे प्रमाणमित्यर्थः । प्रतिज्ञातार्थैकदेशसाधनार्थमुद्दिष्टसाक्षिवाक्यमपि ततो न्यूनाधिकं चेत् एवमेवाप्रमाणमित्येतस्मादेव वचनादवगन्तव्यम् । साध्यं न सिध्यतीति सामान्येनाभिधानात् । +स्मृच.९०

(३) मिता.टीका— स्थिरप्रायेष्विति । लिङ्गदर्शनमात्रेणादृढहेतुना स्त्रीसंग्रहणादिरूपस्य साध्यस्य सिद्धिर्भवतीति तादृशानामस्थिरत्वम् । ऋणादानादिरूपस्य तु साध्यस्य दृढसाधनेनैव सिद्धेः स्थिरप्रायत्वमित्यर्थः । लिखितसर्वार्थसाधनेति । अयमभिप्रायः— 'सुवर्णं रजतं वस्त्राणि चानेन गृहीतं' इत्यभियोगे न मया गृहीतमिति निह्नवे कृते तत्रोक्तसकलवस्तुग्रहणे साधनत्वेन कथितैः साक्षिभिः सुवर्णाद्यन्यतमस्य ग्रहणे वा सुवर्णं रजतं वस्त्राणि धान्यं च गृहीतमिति पूर्वनिर्दिष्टवस्तुभ्योऽधिकवस्तुग्रहणे वा निर्दिष्टे सकलमपि साध्यं न सिध्यतीत्येतत्परं कात्यायनवचनम् । ×सुबो.२।२०

**[१]साध्यार्थांशेऽपि गदिते साक्षिभिः सकलं भवेत् ।**
**स्त्रीसङ्गे साहसे चौर्ये यत्साध्यं परिकीर्तितम् ॥**

(१) साहसादौ तु सकलसाध्यसाधनतयोद्दिष्टैः साक्षिभिरेकदेशेऽपि साधिते कृत्स्नसाध्यसिद्धिर्भवत्येव । तावतैव साहसादेः सिद्धत्वात् । मिता.२।२०

(२) अनेन व्यवस्थितविकल्पमाह कात्यायनः । व्यमा.३१२

(३) स्त्रीसङ्गादिविषये साध्यस्यार्थस्यैकदेशेऽपि तस्यैव साध्यस्यार्थस्यैकदेशान्तरेणाविनाभूते साक्षिभिर्गदिते सकलं साध्यं गदितं भवेदिति । यथा युवत्या परस्त्रिया भगिन्यादिव्यतिरिक्तया सहैकस्मिन् शयने स्वयं युवा सकलां रात्रिं रहसि निरालोके प्रदेशे शयितवानिति साक्षिभिर्गदिते तत्संभोगो विनैव साक्षिवचनं सिध्यति । +अप.२।२०

(४) इति कात्यायनवचनं तद्विषयप्रदर्शकं तेन ऋणनिक्षेपाद्यपह्नवेऽपि योज्यम् । *व्यत.२१८

---

* व्यप्र., विता. मितागतम् । + व्यनि. स्मृचगतम् ।

(१) **शुनी**.४।६९३ ग्रा ... तम् (गृह्णीयान्न बलात्कश्चित्) णो राज्ञा(णा साक्ष्ये) व्याः (व्यं); **मिता**.२।७९ ( = ); **अप**.२।७५; **व्यक**.५६ न प्रष्टव्याः (प्रष्टव्या न) मनुः; **स्मृच**.९०; **व्यचि**.५३; **नृप्र**.१० क्ते तु(क्तेषु); **चन्द्र**.१४५ यद्दोषव (दोषविव); **व्यसौ**.५३ व्याः (व्यं); **वीमि**.२।७८ नृप्रवत्; **व्यउ**.५० यत् (तत्) याज्ञवल्क्यः; **विता**.१६९ नारदः; **प्रका**.५९; **समु**.३६-३७. (२) **मिता**.२।२० वाभ्य (वाप्य); **अप**.२।७९ मितावत्, क्रमेण बृहस्पतिः; **स्मृच**.९०; **व्यनि**. मितावत्; **व्यप्र**.१०० ( = ); **विता**.१०७ मितावत्; **प्रका**.५९; **समु**.३७.

× बाल.(२।२०) सुबोगतम् ।

+ सुबो., बाल. (२।२०) अपगतम् । * सेतु. व्यतवत् ।

(१) **मिता**.२।२०; **व्यमा**.३११ऽपि (नि) पू.: ३१२ ऽपि (नि); **अप**.२।२० कीर्ति(कल्पि): २।७९ ध्यार्थांशे(ध्यैकांशे) कीर्ति (कल्पि)क्रमेण बृहस्पतिः; **स्मृच**.९० कीर्ति (कल्पि); **व्यचि**.६०; **व्यनि**.; **व्यत**.२१८ ऽपि (नि) कीर्ति (कल्पि); **वीमि**.२।२०; **व्यप्र**.१०२; **विता**.१०९ (=) ऽपि (नि); **सेतु**.१११ व्यतवत्; **प्रका**.५९ स्मृचवत्; **समु**.३७ स्मृचवत्.

**[1]ऊनाधिकं तु यत्र स्यात् तत्साक्ष्यं तत्र वर्जयेत् ।**
**साक्षी तत्र न दण्ड्यः स्यादब्रुवन् दण्डमर्हति ॥**

(१) ऊनाधिकाभिधानेऽपि व्यतिरेकेऽन्वयव्यतिरेकयोरन्यतराभिधाने इव साक्ष्यस्य विवर्जनं स्यात्तदापि तत्ववचने निर्णयात् तूष्णीं स्थितस्यैव वा कथकतया दण्डप्रसक्तौ न दण्ड्यः स्यादिति निषेधयति; यथा अज्ञाननिर्देशेनासत्साक्षित्वात् तस्मादसङ्गतो भङ्गवादः । विश्वरूपस्य मते ऊनाधिकाभिधाने तदयुक्तमिति मुनिभिरभिहितत्वात् । अनुक्तेश्च प्रश्नात् प्रागिवात्रापि संशयस्याविशेषात् यथासंभवं क्रियान्तरेण दिव्यादिना निर्णयः कार्यः। पूर्वस्यासाधनत्वात्, तदुक्तं कात्यायनेन ' वादिना यदभिप्रेतं स्वयं साधयितुं स्फुटम् । तत्साध्यं साधनं येन तत्साध्यं साध्यतेऽखिलम् ' ॥ अखिलसाधनस्य साधनत्वादिति तदालोचनीयम् । नियुक्तेऽप्यर्थे संशयेऽनुक्ते वा न तावदुक्ते निरूपणापूर्वकप्रमाणाभावेन गृहीतानां साक्षिणां संपूर्णाभिधानस्य प्रमाणाभावाविशेषात् कुतः संशयः ? न च न्यूनाभिधानेनाऽप्रमाणता, अप्रामाण्यसाधकत्वेन स्वहेतोः साध्यविरुद्धत्वात् । तथा हि प्रमादाशक्तिसंभ्रमास्तावन्नाशङ्कनीयाः, पूर्णाभिधानेऽपि तदविशेषात् अनिर्णयापत्तेः । न चाशयदोषः, स हि वादिनोरन्यतरप्रयोजनेन तत्र संपूर्णमेव वा वदेत्, अपन्हुवीत एव वा; न पुनरर्द्धजरतीयं, द्वयोरपि प्रयोजनाऽसिद्धेः । तदसिद्धौ स्वप्रयोजनस्यापि धनलाभादेरसंभवः । तस्मात् स्वधर्मरक्षार्थं सत्यमेवाभिहितवान् इति कथमुक्तेऽर्थे संशयः । न च कृत्स्नाऽसाधकत्वेनाऽकृत्स्नसाधकत्वमपि तत्र वचनान्न संभवीति वाच्यं, निर्दोषपुरुषवचनानामन्यथात्वानुपपत्तेः । मुनिवचनं तु कृत्स्नसाधनस्याभिप्रेतसाधकत्वमाह, न पुनरेकदेशस्य साधनमसाधनमेवेति नैकदेशान्तरसिद्ध्यर्थं क्रियान्तरमन्वेषणीयम् । तत्र साक्षिनिर्देशकस्य साक्षिवचनेनैकदेशे सत्यवादित्वावधारणात् तस्यैव दिव्यं देयम् । जितेन्द्रियेणापि शतपुराणसिद्धये पृष्टो यदि नवतिं पुराणान् ब्रूते, तदा दशपुराणा न्यूनास्तेऽनुक्ता भवन्ति, न तूक्ताः प्रमाणविरोधादित्युक्तम् । श्रीकरेण त्वन्यथावादे भङ्गमभिधाय यदि तु प्रतिज्ञातार्थात् न्यूनाधिकं वा साक्षिणो वदन्ति तदा तेषामसाक्षित्वमभिधाय ' ऊनमप्यधिकं वाऽपि' इति पठितम् । तेनान्यथावादे पराजयमभिधाय यदा त्विति पक्षान्तरानभिधानावगतेः क्रियान्तरेण निर्णयोऽभिमत इति प्रतीयते । अतः कथितेऽप्यकथितवदभिधानं तद्धर्मक्रियान्तराधीननिरूपणप्राप्त्यर्थम् । साक्षिणो हि तूष्णीं स्थिताः । क्रियान्तरं निरपवादमेव । तेन साक्षिभिर्न्यूनाधिकनिर्देशेऽपि न साक्षिनिर्देशकस्य पराजयः, वाद्यन्तरस्यैव यावद्भङ्गो युक्तः । ऊनाभिधाने कियत्यंशे वादिनः सत्यतासिद्धत्वाऽसिद्धत्वाद्वाद्यन्तरस्य मिथ्यावादितासिद्धेः । अधिकाभिधाने प्रतिज्ञातस्यैव सत्यत्वाद्विजयो युक्तः । अधिकं तु न सिध्यति, तेनैवानुपन्यासात्; न्यूनाभिधाने च तत्सिद्धये क्रियान्तरं कार्यम् । तच्च सिद्धेऽप्येकदेशगतमेव मया दत्तमिति प्रतिज्ञाय दिव्यं कार्यमिति । एवं तु न क्रियाद्वयापत्तेः क्रियान्तरकरणे फलतो विश्वरूपेण सहाऽविशेषः ! ननु द्वयोरपि साक्षिस्थिरीकरणपूर्वकव्यवहारेषु प्रवृत्तेः कथं साक्षिविज्ञेयाऽन्यूनाधिकसाध्यनिर्देशो वादिनः ? उच्यते, नात्राशयदोषसंभावनेति तावत् सिद्धं, प्रेक्षावत्सु विपरीताभिधानानुपपत्तेः । किन्तु साक्षिस्थिरीकरणकाले तद्वचनाऽन्यूनाधिकसंख्यापरिज्ञानमसम्यगवगम्य भ्रान्तेन तावत् संख्यानिर्दिष्टः साक्षी, स पुनरारोपितयथाज्ञानमेव निर्दिष्टवानिति । साक्षिभिरेव वा अनारोपणकाले यथाकथंचिदभिहितं धर्मस्थानारोपितैः सम्यगुक्त इति न विरोधः । यत्र च साक्षिणो न ब्रुवते, प्रमाणान्तरेण च तेषामन्यतरव्यतिरेकयोरन्यतरज्ञानमवधार्यते, तत्र वादिनोरन्यतरस्य जयः पराजयो वा परीक्षकैर्निर्देष्टव्यः प्रमाणस्याविशेषात् । व्यमा.३३३–३३५

(२) एतत् स्थिरकर्मविषयम् । स्मृच.९०

**[1]देशं कालं धनं संख्यां रूपं जात्याकृती वयः ।**
**विसंवदेद्यत्र साक्ष्ये तदनुक्तं विदुर्बुधाः ॥**

दुष्टसाक्षिदण्डः

**[2]अपृष्टसत्यवचने प्रश्नस्याकथने तथा ।**

---

(१) **व्यमा.**३३३ तत्साक्ष्यं तत्र (साक्ष्यं तत्र वि); **अप.**२।७९ व्यमावत्, क्रमेण बृहस्पतिः; **स्मृच.**९०; **प्रका.**५९; **समु.**३७; **विव्य.**१४ ऊ (न्यू) शेषं व्यमावत्.

(१) **अप.**२।७९ धनं (दिनं) क्रमेण बृहस्पतिः; **स्मृच.**९०; **प्रका.**५९; **समु.**३७. (२) **स्मृच.**९१; **पमा.**११६ प्रश्न (पृष्ट)

**साक्षिणः संनिरोद्धव्या गर्ह्या दण्ड्याश्च धर्मतः ॥**
**[1]वाक्पारुष्ये छले वादे दाप्याः स्युस्त्रिशतं दमम् ।**
**ऋणादिवादेषु धनं ते स्युर्दाप्या ऋणं तथा ॥**

धनं दण्डधनम् । त इति सर्वनाम्ना प्रश्नस्योत्तरमकथयन्त एव प्रत्यवमृश्यन्ते । तेषामत्यर्थं प्रकृतत्वात् । स्मृच.९२

**[2]साक्षी साक्ष्यं न चेद्ब्रूयात्समं दण्डं वहेदृणम् ।**
**अतोऽल्पेषु विवादेषु त्रिशतं दण्डमर्हति ॥**

(१) त्रिभिः शतं कार्षापणानाम् । अप.२।७७

(२) अतोऽन्येषु ऋणादितोऽन्येष्वित्यर्थः । स्मृच.९२

**[3]उक्त्वाऽन्यथा ब्रुवाणाश्च दण्ड्याः स्युर्वाक्छलान्विताः ॥**

(१) यदा तु साक्ष्यमुक्त्वा पुनरन्यथा वदन्ति, तदा अनुबन्धाद्यपेक्षया दण्ड्याः । यथाह कात्यायनः—उक्त्वेति । *मिता.२।८२

(२) मिता.टीका– तदाऽनुबन्धापेक्षयेति । जातिद्रव्यगुणद्रव्यगुणाद्यपेक्षयेत्यर्थः । सुबो.२।८२

**[4]येन कार्यस्य लोभेन निर्दिष्टाः कूटसाक्षिणः ।**
**गृहीत्वा तस्य सर्वस्वं कुर्यान्निर्विषयं ततः ॥**

(१) निर्विषयं स्वदेशान्निर्वासनम् । स्मृच.९३

(२) सर्वस्वमिति गुरुलघ्वपराधानुसारेण दण्डतारतम्योपलक्षणम् । निर्विषयं विवादविषयीभूतार्थशून्यम् । ततः कूटसाक्ष्यकरणात् । व्यप्र.१२३

(३) वादस्थद्रव्यहीनं देशहीनं वा कुर्यादित्यर्थः । विता.१८०

कूटसाक्षिलिङ्गम्

**[1]संप्राहात्तु प्रतीयेत यत्र साक्ष्यनृतं वदेत् ।**
**रोगोऽग्निर्ज्ञातिमरणं द्विसप्ताहस्त्रिसप्त वा ॥**
**[2]षट्चत्वारिंशके वाऽपि द्रव्यजात्यादिभेदतः ॥**

## पितामहः

साक्षिणः साक्ष्यं च परीक्ष्यम्

**[3]नियमेनैव संशोध्याः सर्व एव हि साक्षिणः ।**
**विप्रलिप्सादयो दोषा विज्ञेयाश्चर्मचक्षुषा ।**
**प्रतिवाक्यमपेक्ष्यं स्यात्प्रामाण्यं धर्मनिश्चितम् ॥**

आदिशब्देन प्रमादालस्यद्वेषादयो गृह्यन्ते । प्रतिवाक्यं प्रामाण्यमपेक्ष्यम् । न तु प्रतिपुरुषं, अवस्थाभेदेन विप्रलिप्सादीनां संभावयितुं शक्यत्वात् । सवि.१३७

**[4]संनिधौ चण्डिकायाश्च वादिद्वयसमन्वितौ ॥**

अनृतोक्तिफलम्

**[5]ग्रहान्ततप्तसंदंशजिह्वात्रोटनमूर्च्छितम् ।**
**किंकराः पातयिष्यन्ति महारौरवरौरवे ॥**

## उशना

साहसादौ असाक्ष्यापवादः

**दासोऽन्धो बधिरः कुष्ठी स्त्रीबालस्थविरादयः ।**
**एतेऽप्यनभिसंबन्धाः साहसे साक्षिणो मताः ॥**

(१) अनभिसंबन्धाः मित्रारिभावरहिता इत्यर्थः । अप.२।७२

(२) साहसे साहसादिषु इत्यर्थः । अभिसंबन्धाश्चेत् साहसादिष्वपि ते वर्जनीया एव । स्मृच.७९

(३) स्तेयसंग्रहणादिकार्याणां निह्नवेनैव क्रियमाणत्वात् दैवगत्यैव परं साक्षिणो भवन्तीति मत्वा नैते परीक्षणीयाः । अनभिसंबन्धाः प्रकृतापराधजयाद्यसंबन्धाः । व्यचि.४५

---

* स्मृच., व्यप्र. मितावत् ।

णः सं (णश्च) प्रजापतिः; **प्रका**.६०; **समु**.३७ प्रश्न (पृष्ट).

(१) **स्मृच**.९२; **प्रका**.६०; **समु**.३७.

(२) **अप**.२।७७ समं (सम) दण्ड (दम); **व्यक**.५८ समं (सम); **स्मृच**.९२; **पमा**.११५ समं दण्डं (स सदण्डं); **दवि**.३४९ मं (म) ल्पे (न्ये); **व्यसौ**.५५ समं (सम) ऋणम् (भृशम्); **प्रका**.६०; **समु**.३७-३८ समं (सम) व्यासः.

(३) **मिता**.२।८२; **व्यक**.५७; **स्मृच**.९२ श्च (श्चेत्); **व्यसौ**.५४; **व्यप्र**.१३८; **विता**.१७९ क्त्वा (क्ता):१८८; **प्रका**.६०; **समु**.३८.

(४) **अप**.२।७२ : २।८१ नारदः; **व्यक**.५०; **स्मृच**.९३; **दवि**.३४२; **व्यसौ**.४९; **व्यप्र**.१२३; **व्यम**.१८; **विता**.१८०; **प्रका**.६१; **समु**.३८.

(१) **सवि**.१४९. (२) **सवि**.१४९. (३) **सवि**.१३७. (४) **प्रका**.५५; **समु**.३६ मन्वितौ (मीपतः).

(५) **स्मृच**.८७; **प्रका**.५६; **समु**.३४.

(६) **व्यमा**.३२८ स्त्रीबाल (बालः स्त्री); **अप**.२।७२ बन्धाः (बद्धाः); **व्यक**.४९ कुष्ठी (कुब्जः); **स्मृच**.७९; **स्मृसा**१०३; **व्यचि**.४५; **व्यत**.२१३; **व्यसौ**.४७ व्यमावत्; **व्यप्र**.१२०; **व्यम**.१७ अपवत्; **सेतु**.११९ न्धाः (न्धात्); **प्रका**.५१; **समु**.२९.

(४) स्थविरो ग्लानेन्द्रियग्रामः। आदिशब्दात् कितवादयः। व्यत.२१३

(५) अनभिसंबन्धाः विवादगोचरीभूतार्थासंबन्धिनः। अपक्षपातिन इति मदनरत्ने। व्यप्र.१२०

[1]साहसे सर्वे भवन्ति।

अनृतोक्तिफलम्

[2]लोहगृध्रमुखोत्खातलोचनार्द्रीकृताननाः।
पतिष्यन्त्यन्धतामिस्रे नरके पापमोहिताः॥

## प्रजापतिः

साक्षिप्रकाराः

[3]साक्षी द्विभेदो विज्ञेयः कृत एकोऽपरोऽकृतः।
लेख्यारूढः कृतो ज्ञेय उत्तरोऽकृत उच्यते॥

लेख्यारूढ इति प्रायिकम्। व्यमा.३२०

असाक्षिणः

[4]दासनैकृतिकाश्राद्धनास्तिकग्रामयाजकाः॥
[5]महापथिकसामुद्रवणिग्विषदवह्निदाः।
युग्मैकचारा दूताश्च हीनाङ्गा भगवृत्तयः॥
[6]हीनाश्च व्रात्यदाराग्नित्यागिनोऽयाज्ययाजकाः।
एकस्थालीसहायारिज्ञातिसंबन्धिबान्धवाः॥
[7]विषजीवी भिषग्जीवी परप्रेष्यो नियोजितः।
आध्यधीननिसृष्टार्थशूद्रापुत्रोपपातकाः॥
[8]भिन्नवृत्तासमावृत्तमहायन्त्रप्रवर्तकाः।
भूताविष्टनृपद्विष्टवर्षनक्षत्रसूचकाः॥
[9]क्लान्तः श्रान्तोऽघशंसी च श्यावदन्कुनखस्तथा।
आत्मविक्रेतृमित्रध्रुक्शठशौण्डिकपौपिकाः॥

(१) मभा.१३।१०. (२) स्मृच.८७; प्रका.५६; समु.३४. (३) व्यमा.३२० द्विभेदो वि (हि द्विविधो) य उत्तरो (यो मुक्तको); अप.२।६९ य उत्तरो (यो मुक्तको); स्मृच.८०; व्यचि.३७ द्विभेदो वि (तु द्विविधो); प्रका.५१; समु.३०; विव्य.१२ (साक्षी च द्विविधः प्रोक्तः कृत एकोऽकृतोऽपरः) शेषं अपवत्. (४) प्रका.५०; समु.२९. (५) प्रका.५० चारा (चार) नाङ्गा (नाङ्ग); समु.२९. (६) प्रका.५० नाश्च (नश्च); समु.२९. (७) प्रका.५० आध्य (आस्य) पुत्रोपपातकाः (य साततायिनः); समु.२९. (८) प्रका.५० वृत्ता (वृत्त); समु.२९ यन्त्र (यज्ञ) पू.

(९) प्रका.५० श्रान्तो (शान्तो); समु.२९ पौपि (पौलि).

[1]ऐन्द्रजालिकलुब्धोग्रश्रेणीगणविरोधिनः।
तैलकृच्चित्रकृत्पङ्गुः कुहको राजपूरुषः॥
[2]नग्नोऽन्धः प्रत्यवसितो बैडालव्रतहैतुकाः।
कैवर्तबकवृत्तार्थलौकायतिकसौगताः॥
[3]मौहूर्तिकः शाकुनिको धर्मात्स्वात्प्रच्युतस्तथा।
मनुष्यपशुमांसास्थिमधुक्षीराम्बुसर्पिषाम्॥
[4]विक्रेता ब्राह्मणश्चैव द्विजो वार्धुषिकश्च यः।
पित्रा विवदमानश्च कुलिकः सूचकस्तथा॥
[5]श्रुतिस्मृत्युदितं कर्म त्यजन्नन्यत्करोति यः।
बहुना किमिहोक्तेन साक्ष्यं तेषु न विद्यते॥

## हारीतः

साक्षित्वयोग्यतायाः कालमर्यादा

[6]सुदीर्घेणापि कालेन लिखितः सिद्धिमाप्नुयात्।
आत्मनैव लिखेज्जानन्नज्ञस्त्वन्येन लेखयेत्॥
[7]आष्टमाद्वत्सरात्सिद्धिः स्मारितस्येह साक्षिणः।
आपञ्चमात्तथा सिद्धिर्यदृच्छोपगतस्य च॥

यत्पुनस्तेनैव ( हारीतेन ) उक्तं 'आष्टमात्' इत्यादि, तत्पूर्वपक्षत्वेनाभिहितमित्यवगन्तव्यम्। यतोऽनन्तरमाह स एव—'अथवा कालनियम' इत्यादि। स्मृच.८०

[8]आ तृतीयात्तथा वर्षात् सिद्धिर्गूढस्य साक्षिणः।
आ वत्सरात्तु सिद्धिं च वदन्त्युत्तरसाक्षिणः॥
[9]अथवा कालनियमो न दृष्टः साक्षिणं प्रति।
स्मृत्यपेक्षं हि साक्षित्वमाहुः शास्त्रविदोजनाः॥
[10]यस्य नोहपता बुद्धिः स्मृतिः श्रोत्रे तु साक्षिणः।
सुदीर्घेणापि कालेन स साक्षी साक्ष्यमर्हति॥

(१) प्रका.५० तैल (तिल); समु.२९ पू. (२) प्रका.५० ग्नोऽन्धः (ग्नादिः) सितो (जितो) है (हे); समु.२९. (३) प्रका.५०; समु.२९ मधु (दधि). (४) प्रका.५०; समु.२९. (५) प्रका. ५०; समु.२९. (६) स्मृच.८०; प्रका.५२; समु.३०. (७) स्मृच.८०; प्रका.५२ स्येह (स्यैव); समु.३०.

(८) स्मृच.८०; प्रका.५२; समु.३० रात्तु (राच्च) च (तु).

(९) स्मृच.८०; प्रका.५२; समु.३०.

(१०) स्मृच.८०; प्रका.५२ स साक्षी साक्ष्य (साक्षी साक्षित्व); समु.३०.

## व्यासः

साक्षिणः कीदृशा भवन्ति

**धर्मज्ञाः पुत्रिणो मौलाः कुलीनाः सत्यवादिनः ।**
**श्रौतस्मार्तक्रियायुक्ता विगतद्वेषमत्सराः ॥**
**श्रोत्रिया न पराधीनाः सूरयश्चाप्रवासिनः ।**
**युवानः साक्षिणः कार्या ऋणादिषु विजानता ॥**

श्रोत्रियाः श्रुतिपाठकाः । स्मृच.७६

साहसादौ असाक्षित्वापवादः

**शुचिक्रियश्च धर्मज्ञः साक्षी यत्रानुभूतवाक् ।**
**प्रमाणमेकोऽपि भवेत् साहसेषु विशेषतः ॥**

(१) अनुभूतवाक् सत्यत्वेन अनुभूता वाक् यस्य सः । व्यक.४३

(२) अनुभूतवाक् स्थानान्तरे सत्यत्वेनेति । भवदेवभट्टोऽप्येवम् । व्यत.२१३

(३) आप्तत्वेन राजादिभिरवधारितोऽप्येकः साक्षी इत्याह व्यासः—शुचीति । व्यप्र.११२

(४) अनुमत्यभावेऽपि राज्ञा शिष्टो ज्ञात एकोऽपीत्याह व्यासः—शुचीति । विता.१६५

साक्षिप्रकाराः

**साक्षिणोऽपि च यः साक्ष्यमुपर्युपरि भाषते ।**
**श्रवणाच्छ्रावणाद्वाऽपि स साक्ष्युत्तरसंज्ञितः ॥**
**राज्ञा धर्मासनस्थेन यच्छ्रुतं तत्वमिच्छता ।**
**नान्यः साक्षी भवेत्तत्र मुक्त्वा राजानमीश्वरम् ॥**

दिव्यापेक्षया साक्षिणः वरीयस्त्वम्

**मणिमन्त्रौषधिबलात्प्रदत्तं चाविधानतः ।**
**विसंवदेद्दिव्यमपि न तु साक्षी गुणान्वितः ॥**
**दिव्यमौषधिभिर्मन्त्रैः प्रायेण व्यभिचार्यते ।**
**न स्वल्पदोषदुष्टानां व्यभिचारोऽस्ति साक्षिणाम् ॥**

साक्षिपरीक्षा

**साक्षिदोषाः प्रयोक्तव्याः संसदि प्रतिवादिना ।**
**पत्रेऽभिलेख्य तान्सर्वान् वाच्याः प्रत्युत्तरं तु ते ॥**

(१) प्रत्युत्तरं उत्तरं प्रति ते दोषा वक्तव्याः । व्यक.५०

(२) पत्रे लिखितान् साक्षिदोषान् प्रतिलक्षीकृत्य तद्विषयं परिहारं ते साक्षिणः सभ्यैर्वाचनीया इत्यर्थः । व्यम.१७

(३) मिता.टीका—'पत्रे तान् सर्वानभिलिख्य उत्तरमुत्तरं ते दोषा वाच्या' इति कल्पतरुः। *बाल.२।७२

**प्रतिपत्तौ न साक्षित्वमर्हन्ति तु कदाचन ।**
**अतोऽन्यथा भावनीयाः क्रियया प्रतिवादिना ॥**

(१) अन्यथा असंप्रतिपत्तौ । व्यक.५०

(२) प्रतिपत्तिः दोषाङ्गीकारः । क्रियया साक्षिव्यतिरिक्तयेति शेषः । स्मृच.८३

---

(१) **स्मृच**.७६,१३६; **पमा**.९४; **नृप्र**.१० पू.; **व्यप्र**. १११; **व्यम**.१६; **बाल**.२।६९; **प्रका**.४९; **समु**.२७.

(२) शुनी.४।६८१-६८२ श्रोत्रिया (गृहिणो) ऋ...ता (स्त्रियः स्त्रीषु च कीर्तिताः); **स्मृच**.७६,१३६; **पमा**.९४; **नृप्र**.१०; **व्यप्र**.१११; **व्यम**.१६; **बाल**.२।६९; **प्रका**. ४९; **समु**.२७-२८.

(३) **व्यमा**.३१९; **व्यक**.४३; **गौमि**.१३।२ उत्त.; **स्मृच**.७६; **ममु**.८।७७; **पमा**.९६ यत्रा (योऽत्रा); **दीक**. ३८ सेषु (से तु); **व्यचि**.३९; **स्मृचि**.४५ क्रमेण नारदः; **व्यत**.२१३ यश्च (याश्च) साक्षी यत्रा (योऽन्यत्राप्य); **मच**.८।७७ साहसे (सद्दशे); **चन्द्र**.१३४ यश्च (योऽथ); **व्यसौ**.४१; **व्यप्र**.११२ यत्रानु (यस्त्वनु); **व्यम**.१६ व्यप्रवत्; **विता**. १६५ व्यप्रवत्; **सेतु**.११९-१२०; **प्रका**.४९; **समु**.२८.

(४) **व्यक**.४२ णोऽपि च (णामपि); **व्यसौ**.४० णाच्छ्रा (णाश्च). (५) **व्यमा**.३२०:३२२ नान्यः (न्याय्यः) मुक्त्वा (त्यक्त्वा); **व्यनि**.; **प्रका**.५२ मिच्छता (दर्शिना); **समु**. ३० प्रकावत्.

* अत्रोध्दृतं कल्पतरुवाक्यं अस्मत्पुस्तके न समुपलभ्येत ।

(१) **व्यमा**.३१५ चावि (चाभि); **व्यक**.४४ न तु (नैव); **स्मृच**.९४; **व्यसौ**.४२ (=); **प्रका**.६१ कात्यायनः; **समु**. २८; **विव्य**.१० चा (वा).(२) **स्मृच**.७८;**प्रका**.५०;**समु**. २९.(३) **अप**.२।७२ लेख्य (लिखि) तु (च); **व्यक**.५० पत्रेऽभिलेख्य (यत्रातिलिखि) ते (ये); **स्मृच**.८३; **पमा**.१०६ भिलेख्य (विलिख्य) तु ते (ततः) कात्यायनः; **व्यसौ**.३२ लेख्य (लिखि); **व्यप्र**.१२२ प्रयो (प्रव) लेख्य (लिखि); **व्यम**. १७ व्यसौवत्; **बाल**.२।७२ प्रयो (प्रव) लेख्य(लिख्य); **प्रका**. ५४ भिले (विलि) उत्त.; **समु**.३२.

(४) **अप**.२।७२; **व्यक**.५० वादिना (पादिताः); **स्मृच**. ८३; **पमा**.१०६ न (तु) तु (न) कात्यायनः; **व्यसौ**.४८ न (तु) तु (न) कदा (कथं); **व्यम**.१७; **बाल**.२।७२; **प्रका**. ५४; **समु**.३२.

(३) भावनीया अङ्गीकारयितव्याः। क्रियया प्रमाणेन। *व्यम.१७

**संभासदां प्रसिद्धं यत् लोकसिद्धमथापि वा।**
**साक्षिणां दूषणं ग्राह्यमसाध्यं दोषवर्जनात्॥**

(१) साक्षिणां च दूषणं सभासदामन्येषां वा तद्वेदिनां विदितं ग्राह्यम्। न तु तदपि व्यवरादिसाक्षिभिः प्रतिपाद्यं, अनवस्थापातात्। तदाह व्यासः—सभासदामिति। व्यमा.३२७

(२) असाध्यं असाध्यनिराकरणं, दोषवर्जनात्। सभ्यप्रसिद्धस्य लोकप्रसिद्धस्य च दोषरहितत्वादित्यर्थः। अप.२।७२

(३) दोषवर्जनात् अनवस्थादिरहितत्वात्। व्यक.५०

(४) एवं प्रतिवादिना दूषणप्रतिपादनं न प्रकटे दूषणे कार्यम्। वैयर्थ्यात्। किं तु सभ्यैरेव तथाविधदूषणं ग्राह्यमित्याह स एव—सभासदामिति। ग्राह्यं परीक्षकैरिति शेषः। असाध्यं च प्रतिवादिना, तत्र दूषणस्य प्रसिद्धदोषाद्वर्जनसिद्धेरित्यर्थः। स्मृच.८३-८४

(५) तदानीमेव यत्साध्यं दूषणं तन्न ग्राह्यम्। स्मृसा.१०३

(६) असाध्यं साधनानर्हं सिद्धत्वात्। ×व्यचि.४६

(७) अनवस्थात्यागमुद्दिश्येत्यर्थः। चन्द्र.१४३

(८) यत् इति हेतुगर्भमिति। दोषवर्जनात् अनवस्थादोषाभावादित्यर्थः। यद्यपि लोकसभ्यप्रसिद्धिरपि साक्षिप्रसिद्धिरेव पर्यवस्यति। तथापि तत्र साक्षित्वोद्भावनानपेक्षत्वान्नानवस्था। अत एवातिगूढवादिप्रतिवादिमात्रविदितदूषणसाधनमन्यतरेणालौकिकप्रमाणेन क्रियमाणं न दुष्यतीत्यभिप्रायः। न च साक्षिदूषणविभावनं व्यवहारान्तरत्वादयुक्तमिति वाच्यम्। प्रकृतोपयोगित्वेनार्थान्तरत्वानापत्तेः। व्यप्र.१२१-१२२

(९) एतल्लोकावधारितासत्साक्षिविषयम्। व्यम.१७

**[१]अन्यैस्तु साक्षिभिः साध्ये दूषणे पूर्वसाक्षिणाम्।**
**अनवस्था भवेद्दोषस्तेषामप्यन्यसंभवात्+॥**
**[२]अन्तरप्रभवो वादः सर्वसाक्षिसमुद्भवः।**
**न याति निर्णयं यावत् तावत्पूर्वं विवर्जयेत्॥**
**[३]प्रत्यर्थिनोऽर्थिनो वाऽपि साक्षिदूषणसाधने।**
**न तु साक्ष्यभियोगः स्याद्व्यवहारान्तरं तथा॥**

अतः प्रमाणदोषविवादनिर्णयः पूर्वव्यवहारमध्य एव कर्तव्य इति स्थितम्। स्मृच.८४

**[४]असाधयन् दमं दाप्यः प्रत्यर्थी साक्षिणः स्फुटम्।**
**भाविताः साक्षिणो वर्ज्याः साक्षिधर्मनिराकृताः॥**

(१) प्रतिवादिना साक्षिदूषणे दत्ते प्रत्यक्षयोग्यदूषणेषु बाल्यादिषु तथैव निर्णयः। अयोग्येषु तु तद्वचनाल्लोकतश्च निर्णयो न साक्ष्यन्तरेणेति नानवस्था। यदि साक्षिदोषमुद्भाव्य साधयितुं न शक्नोति प्रतिवादी तदाऽसौ

---

* बाल. व्यमवत्।

× अवतरणं व्यमावत्। व्यत. व्यचिवत्।

(१) **व्यमा.३२७** असा... वर्ज (न साध्यदोषदर्शी); **अप.२।७२**; **व्यक.५०**; **स्मृच.८४** वर्ज (वर्ण); **पमा.१०५** दोषवर्जनात् (नान्यदिष्यते) कात्यायनः; **स्मृसा.१०३** असा (न सा); **व्यचि.४६** नारदः; **दवि.३४१** स्मृसावत्, बृहस्पतिकात्यायनौ; **व्यत.२१६** नारदः; **चन्द्र.१४३** ग्राह्यम (वाच्यं न); **व्यसौ.४८**; **व्यप्र.१२१**; **व्यम.१७** प्रसिद्धं (दूषणं) असा (न सा); **बाल.२।७३**; **सेतु.१२४** नारदः; **प्रका.५४** स्मृचवत्; **समु.३२** कात्यायनः.

+ अत्रत्यं अप. व्याख्यानं (पृ. २९१) इत्यत्र द्रष्टव्यम्।

(१) **व्यमा.३२७** साध्ये (साक्ष्ये) षणे (षणं) प्यन्य (न्यत्र); **अप.२।८०**; **व्यक.५०**; **स्मृच.८३**; **व्यचि.४६** स्तु (श्च) नारदः; **दवि.३४१** बृहस्पतिकात्यायनौ; **व्यत.२१६** स्तु (श्च) नारदः; **सवि.१४४** (=); **व्यसौ.४८**; **व्यप्र.१२१**; **बाल.२।७३**; **सेतु.१२४** मप्यन्य (मन्यस्य) नारदः; **प्रका.५४**; **समु.३३**.

(२) **स्मृच.८४**; **प्रका.५४**; **समु.३३** तावत् (तत्).

(३) **स्मृच.८४**; **प्रका.५४**; **समु.३३** उत्तरार्धे (प्रस्तुतार्थोपयोगेन व्यवहारान्तरं न च).

(४) **मिता.२।७३** प्रत्यर्थी (दूषणं) णः (णां) विताः (विते); **अप.२।७२** धर्म (धर्मात्); **व्यक.५०** साध (भाव); **स्मृच.८४**; **पमा.१०६** साध (भाव) दमं (धनं) वर्ज्याः (सर्वे) कात्यायनः; **सवि.१४४** विताः (विनः) कात्यायनः :४९० साध (भाव) प्रत्यर्थी (दूषणं) णः (णां) विताः(विते) मनुः; **व्यसौ.४८**; **व्यप्र.१२३** मितावत्; **व्यउ.४९** साध (भाव) प्रत्यर्थी (दूषणं) णः (णां) भाविताः (भावयेत्); **व्यम.१७** साध (भाव); **विता.१७९** मितावत्, कात्यायनः; **बाल.२।७२** साध (भाव) णः (णां) कृताः (कृतः); **प्रका.५४**; **समु.३३** व्यमवत्.

दोषानुसारेण दण्ड्यः । अथ साधयति तदा न साक्षिणः । यथाह— असाधयन्निति । उद्दिष्टेषु च सर्वेषु साक्षिषु दुष्टेष्वर्थी यदा क्रियान्तरनिरपेक्षस्तदा पराजितो भवति । *मिता.२।७३

(२) न तु दण्ड्या इत्यभिप्रायः । ×स्मृच.८४

(३) साक्षिधर्मेति, साक्षित्वानर्हा इत्यर्थः । बाल.२।७३

[1]जितः स विनयं दाप्यः शास्त्रदृष्टेन कर्मणा ।
यदि वादी निराकाङ्क्षः साक्षिसत्ये व्यवस्थितः ॥

(१) साकाङ्क्षश्चेत् क्रियान्तरमवलम्बेतेत्यभिप्रायः । +मिता.२।७३

(२) निराकाङ्क्षः प्रमाणान्तरं प्रतीति शेषः । यदा तु साकाङ्क्षस्तदा मानुषाभावे दिव्येनापि जयावधारणं कार्यमित्यभिप्रायः । यदा तु निर्दोषिणः साक्षिणो भवेयुस्तदा तैरेव जयावधारणं कार्यम् । स्मृच.८४

(३) विनयं दण्डम् । स वादी । मदनरत्ने तु सविनयं विनयः शिक्षा तत्सहितं यथा तथा दाप्यो विवादविषयीभूतधनमिति शेष इति व्याख्यातम् । तत् जित इत्यनेनैव साधितधनदानस्यार्थसिद्धत्वेन निरर्थकाध्याहारदोषापत्तेः क्लिष्टत्वाच्चोपेक्ष्यम् । व्यप्र.१२३

[2]अर्थी यत्र न विद्येत तत्र साक्षी मृतान्तरः ।
प्रत्यर्थी वा मृतो यत्र तत्राप्येवं प्रकल्पयेत् ॥

अयमर्थः—अर्थिना वा प्रत्यर्थिना वा साक्षिणो 'यूयमत्रार्थे साक्षिणः' इति योऽर्थः श्रावयितव्यो भवेत् । तस्मिन् अर्थिनि प्रत्यर्थिनि वा असति मृते वा साक्षी मृतान्तर इति । सवि.१४०

[3]ज्ञात्वा कार्यं देशकालकुशलाः कूटकारकाः ।
कुर्वन्ति सदृशं लेख्यं नैते स्युः साक्षिणो यथा ॥

एवमुक्तविधा न जातु कूटतां प्रतिपद्यन्ते इत्याह स एव ज्ञात्वेति । स्मृच.७६

साक्षिप्रश्नविधिः । सत्यप्रशंसा । अनृतनिन्दा ।

[1]साक्षिणा धर्मसंस्थेन सत्यमेव वदेत्ततः ॥
[2]साक्षिभावे नियुक्तानां देवता वियति स्थिताः ।
पितरश्चावलम्बन्ते वितथाख्यानशङ्कया ॥
[3]सत्यवाक्यैर्व्रजन्त्यूर्ध्वमधो यान्त्यन्यथा तु ते ।
तस्मात्सत्यं प्रवक्तव्यं भवद्भिः सभ्यसंनिधौ ॥
[4]बध्यन्ते वारुणैः पाशैः साक्षिणोऽनृतवादिनः ।
षष्टिवर्षसहस्राणि तिष्ठन्ति नरके ध्रुवम् ॥
[5]तेषां वर्षशते पूर्णे पाश एकः प्रमुच्यते ।
कालेऽतीते मुक्तपाशस्तिर्यग्योनिषु जायते ॥
[6]मानवो जायते पश्चात् संपरित्यक्तबान्धवः ।
पङ्ग्वन्धबधिरो मूकः कुष्ठी नग्नः पिपासितः ॥
[7]बुभुक्षितः शत्रुगृहे भिक्षते भार्यया सह ।
ज्ञात्वा त्वनृततो दोषान् ज्ञात्वा सत्ये च सद्गुणान् ॥
[8]श्रेयस्करमिहामुत्र सत्यं साक्ष्ये वदेत्ततः ॥

एवं संबोधनमेतैरेव वचनैः कार्यं न पुरुषान्तररचितैः । स्मृच.८७

कीदृशं साक्ष्यं साध्यपर्याप्तम्

[9]कालाकृतिवयोद्रव्यदेशजातिप्रमाणतः ।
अन्यूनं चेन्निगदितं सिद्धं साध्यं विनिर्दिशेत् ॥

---

* अप. मितागतम् ।

× शेषं मितागतम् । सवि. स्मृचवत् । + विता. मितावत् ।

(१) **मिता**.२।७३; **अप**.२।७२; **व्यक**.५० व्यव (ष्वव); **स्मृच**.८४ त्ये व्य (भ्येष्व); **पमा**.१०६ कात्यायनः; **व्यसौ**.४८ दाप्यः (दण्ड्यः); **व्यप्र**.१२३ स्मृचवत्; **व्यउ**.५० क्षि (क्षी) स्मृत्यन्तरम्; **व्यम**.१७ जितः स (तथैव); **विता**.१८० नारदः; **बाल**.२।७२ व्यकवत्; **प्रका**.५४ स्मृचवत्; **समु**.३३ सत्ये (ष्वेव). (२) **स्मृच**.८१; **सवि**.१४०; **प्रका**.५३; **समु**.३२. (३) **स्मृच**.७६; **सवि**.१३८ काल (कालौ) नारदः; **प्रका**.४९; **समु**. २८.

(१) **पमा**.१०९. (२) **स्मृच**.८६; **पमा**.१०९ उत्त.; **प्रका**.५५; **समु**.३४. (३) **स्मृच**.८६; **पमा**.१०९ क्यैः (क्ये) तु (च); **प्रका**.५५; **समु**.३४.

(४) **स्मृच**.८७ षष्टि (षष्टिं); **पमा**.११० षष्टि (षष्टिः); **नृप्र**.१०; **सवि**.१५८ बध्यन्ते (पीड्यन्ते) तिष्ठन्ति नरके (नरके वसतिः); **प्रका**.५६ स्मृचवत्; **समु**.३४ स्मृचवत्.

(५) **स्मृच**.८७; **पमा**.११०; **नृप्र**.१० पू.; **सवि**.१५९; **प्रका**.५६; **समु**.३४-३५. (६) **स्मृच**.८७; **पमा**.११० मानवो (स नरो) पुराणम्; **प्रका**.५७; **समु**.३५.

(७) **स्मृच**.८७ सत्ये च (सत्येन); **पमा**.११०-१११ पुराणम्; **सवि**.१५९ वसिष्ठः; **प्रका**.५७ स्मृचवत्; **समु**.३५.

(८) **स्मृच**.८७; **पमा**.१११ पुराणम्; **सवि**.१५९ मुत्र (मित्रे) क्ष्ये (क्षी) त्ततः (दतः) वसिष्ठः; **प्रका**.५७; **समु**.३६ त्ततः (दतः). (९) **व्यक**.६०; **स्मृच**.९१; **स्मृसा**.१२१; **व्यचि**.५६; **व्यसौ**.५७; **वीमि**.२।७९; **प्रका**.५९; **समु**.३७.

## उतथ्यः

अनृतनिन्दा

[१]सप्तजन्मकृतं पापं शरीरे यत्तु तिष्ठति ।
गृह्णाति तस्य सर्वस्वं यस्तु साक्ष्यं मृषा वदेत् ॥
[२]यः साक्षी कौटसाक्ष्यं तु विवदेद्भुवि निर्भयः ।
उभयोः सप्तगोत्राणि अधस्तान्नयति ध्रुवम् ॥

## कण्वः

कूटसाक्षिलिङ्गम्

[३]गुरुकार्ये द्विसप्ताहे साक्षिणोऽनर्थदर्शनम् ॥

## स्मृत्यन्तरम्

विषयविशेषे साक्षिणः

[४]तत्कुलीनास्तत्कुलव्यवहारे साक्षिणः ॥
[५]न्यासान्वाहितविक्रीते हृते दत्तेऽथ याचिते ।
मुमूर्षुश्रावितर्णे च पृच्छेत्साक्ष्यं मृतान्तरम् ॥

कूटसाक्षिलिङ्गम्

[६]सप्ताहाभ्यन्तरे यस्य ज्ञातिबन्धुसुहृन्मृतिः ।
अर्थनाशस्तथा रोगो धनं दाप्यो दमं च सः ॥

## अनिर्दिष्टकर्तृकवचनम्

असाक्षिणः

[७]न कार्यो नृपतिः साक्षी नैको न स्त्री न कूटकृत् ॥

## शुक्रनीतिः

साक्षिनिरुक्तिः । साक्षिभेदाः । असाक्षिणः । साक्षित्वानङ्गीकारे दण्डः । साक्षिप्रश्नविधिः ।

[८]स्वेतरः कार्यविज्ञानी यः स साक्षी त्वनेकधा ।
दृष्टार्थश्च श्रुतार्थश्च कृतश्चैवाऽकृतो द्विधा ॥
[९]दर्शनैः श्रवणैर्थेन (?) स साक्षी तुल्यवाक् यदि ॥
[१०]अनुभूतः सत्यवाक् यः सैकः साक्षित्वमर्हति ॥
[११]अभिमानाच्च लोभाच्च विजातिश्च शठस्तथा ।

(१) स्मृच.८६; प्रका.५६; समु.३४. (२) स्मृच.८६; प्रका.५६; समु.३४. (३) समु.३८. (४) सवि.१३९. (५) स्मृच.८२; प्रका.५३; समु.३२. (६) समु.३८. (७) चन्द्र.१३७. [वस्तुतस्तु नेदं स्वतन्त्रं वचनम्। मस्मृ. ८।६५ इति श्लोके प्रथमपादस्य, नासं.२।१६९ इति श्लोके द्वितीयपादस्य समुपलभ्यमानत्वात्।]

(८) शुनी.४।६७७. (९) शुनी.४।६७८. (१०) शुनी. ४।६८०. (११) शुनी.४।६८४-६८५.

उपजीवनसंकोचाद् भृत्यश्चैते ह्यसाक्षिणः ।
नार्थसंबन्धिनो विद्यायौनसंबन्धिनोऽपि न ॥
[१]नाङ्गीकरोति यः साक्ष्यं दण्ड्यः स्याद्विशितो यदि ॥
[२]देशे काले कथं कस्मात्किं दृष्टं वा श्रुतं त्वया ।
लिखितं लेखितं यत्तद्वद सत्यं तदेव हि ॥
[३]समाप्नोषि च तत्पापं शतजन्मकृतं सदा ॥
साक्षिणं श्रावयेदेवं सभायामरहोगतम् ।
दद्याद्देशानुरूपं तु कालं साधनदर्शने ॥

## संग्रहकारः

कियन्तः साक्षिणः कर्तव्याः

[४]कर्तव्याः सर्वकार्येषु त्रिभ्य आरभ्य साक्षिणः ।
द्व्येकयोः प्रतिषेधः स्यादेकोऽप्युभयसंमतः ॥

(१) साक्षिणो लिखितगूढव्यतिरिक्ताः त्रिभ्य आरभ्य कर्तव्या इत्यर्थः । स्मृच.७६

(२) अपिशब्दादुभयसंमतत्वे द्वयोरपि ग्रहणम् । सवि.१३७

असाक्षिभेदाः

[५]दुष्टत्वात्प्रतिषिद्धत्वादकृतत्वादनिश्चयात् ।
एकाङ्गविकलत्वाच्च स्यादसाक्ष्यपि पञ्चधा ॥
[६]स्तेनादिः श्रोत्रियादिश्च स्वयम्भूर्भिन्नगीर्मिथः ।
मुमूर्षुः श्रावितादन्यः पञ्चमः स्यान्मृतान्तरः ॥

दुष्टत्वादसाक्षी स्तेनादिः। प्रतिषिद्धत्वाच्छ्रोत्रियादिः। अकृतत्वात्स्वयंभूः। अनिश्चयान्मिथो भिन्नगीः। एकाङ्गविकलत्वात् मृतान्तर इत्यर्थः। स्मृच.८१

असाक्षित्वापवादः

[७]उत्कृष्टमध्यमाभावे निषिद्धा अपि साक्षिणः ।
साहसादिषु मन्तव्याः कालकार्यनिबन्धनाः ॥
[८]बहुत्वेन गुणानां वा तारतम्येन निश्चयः ।
साक्षिविप्रतिपत्तौ स्यात् सर्वसाम्येऽप्रमाणता ॥

अनिश्चयादसाक्षित्वं कोट्योर्विशेषाग्रहण एवेत्यर्थः । स्मृच.८२

(१) शुनी.४।६८८. (२) शुनी.४।६९५-६९६. (३) शुनी.४।७०१-७०२. (४) स्मृच.७६; सवि.१३७; प्रका.४९; समु.२८. (५) स्मृच.८१; प्रका.५२; समु. ३१. (६) स्मृच.८१; प्रका.५२; समु.३१.

(७) स्मृच.७९; प्रका.५१; समु.२९ षिध्दा (कृष्टा). (८) स्मृच.८२; प्रका.५३; समु.३७.

# लेख्यम्

## वसिष्ठः

लेख्यप्रकाराः तल्लक्षणानि च

[1]लौकिकं राजकीयं च लेख्यं विद्याद्द्विलक्षणम् ।
राजकीयं चतुर्भेदमष्टभेदं तु लौकिकम् ॥

(१) लौकिकं जानपदम् । स्मृच.५५

(२) इति द्वैविध्यमुक्तं तत् स्थानकृतस्वहस्तलिखितयोर्भेदमाश्रित्य । व्यम.१२

[2]राज्ञः स्वहस्तसंयुक्तं स्वमुद्राचिह्नितं तथा ।
राजकीयं स्मृतं लेख्यं सर्वेष्वर्थेषु साक्षिमत् ॥
[3]शासनं प्रथमं ज्ञेयं जयपत्रं तथाऽपरम् ।
आज्ञाप्रज्ञापनापत्रे राजकीयं चतुर्विधम् ॥
[4]चीरकं च स्वहस्तश्च तथोपगतसंज्ञकम् ।
आधिपत्रं चतुर्थं तु पञ्चमं क्रयपत्रकम् ॥
षष्ठं तु स्मृतिपत्राख्यं सप्तमं षटिपत्रकम् ।
विशुद्धिपत्रकं चैवमष्टधा लौकिकं स्मृतम् ॥
दत्वा भोगान् द्विजातिभ्यो रत्नानि विविधानि च ।
राजा भूमिं च कुर्वीत तेषां तस्याश्च शासनम् ॥
क्रियाकारकसंबन्धं समासार्थक्रियान्वितम् ।
समामासतदर्धाहर्नृपनामोपलक्षितम् ॥
प्रतिग्रहीतृजात्यादिसगोत्रब्रह्मचारिकम् ।
संनिवेशप्रमाणं च स्वहस्तं तु लिखेत्स्वयम् ॥
संधिविग्रहकारी च भवेद्यस्तत्र लेखकः ।
स्वयं राजा समादिष्टः स लिखेद्राजशासनम् ॥
स्वनाम विलिखेत् पश्चान्मुद्रितं राजमुद्रया ।
ग्रामक्षेत्रगृहादीनामीदृक्स्याद्राजशासनम् ॥
[5]आज्ञाप्रज्ञापनापत्रे द्वे वसिष्ठेन दर्शिते ॥

(१) अप.२।८४; स्मृच.५५ पू.; पमा.११९ पू.; नृप्र.११ पू.; व्यम.११ पू.; बाल.२।९१ विद्या (कुर्या) पू.; प्रका.३५ पू.; समु.३९.

(२) व्यप्र.१४६-१४७; व्यउ.४४ (=); विता.१२१.

(३) अप.२।८४ पनापत्रे (पत्रं पत्रं); स्मृच.५५; पमा.१२१ पत्रे (पत्रं); नृप्र.११; व्यप्र.१४७ पमावत्; व्यम.१३; विता.१२१; प्रका.३५; समु.३९. (४) अप.२।८४.

(५) पमा.१२५; नृप्र.११.

[1]सामन्तेष्वथ भृत्येषु राष्ट्रपालादिकेषु वा ।
कार्यमादिश्यते येन तदाज्ञापत्रमुच्यते ॥
[2]ऋत्विक्पुरोहिताचार्यमान्येष्वभ्यर्चितेषु तु ।
कार्यं निवेद्यते येन पत्रं प्रज्ञापनाय तत् ॥
[3]कालं निवेश्य राजानं स्थानं निवसितं तथा ।
दायकं ग्राहकं चैव पितृनाम्ना च संयुतम् ॥

स्थानं जनपदः । निवसनं पुरग्रामादिकम् ।

व्यप्र.१४३

[4]जातिं स्वगोत्रं शाखां च द्रव्यमाधिं ससंख्यकम् ।
वृद्धिं ग्राहकहस्तं च विदितार्थौ च साक्षिणौ ॥

ग्राहकोऽधमर्णः । व्यप्र.१४३

## विष्णुः

[5]अथ लेख्यं त्रिविधम् ।
राजसाक्षिकं ससाक्षिकमसाक्षिकं च ।
राजाधिकरणे तन्नियुक्तकायस्थकृतं तदध्यक्षकरचिह्नितं राजसाक्षिकम् ।

(१) स्मृच.५८; पमा.१२५ वा (च); नृप्र.११; सवि.११३ (=); व्यप्र.१४७ वा (च); व्यम.१३ वा (च); विता.१२१ वा (च); प्रका.३७; समु.४१ मुच्यते (मिष्यते).

(२) स्मृच.५८ भ्यर्चि (भ्यर्हि); पमा.१२५ द्यते (दितं) शेषं स्मृचवत्; नृप्र.११ पमावत्; सवि.११३ (=) भ्यर्चि (भ्यर्हि) य तत् (त्मकम्); व्यप्र.१४७ नाय (नेति); व्यम.१३ भ्यर्चि (भ्यर्थि) तु (च); विता.१२१ कार्यं (माने); प्रका.३७ स्मृचवत्; समु.४१ भ्यर्चि (भ्यर्हि) तु (च).

(३) स्मृच.५८; पमा.१२६ सितं (सनं); नृप्र.११ पमावत्; व्यप्र.१४३ पमावत्; विता.१२५ पमावत्; प्रका.३७; समु.४१.

(४) स्मृच.५८ धिं (दिं); पमा.१६ स्वगोत्रं (गोत्रं च); नृप्र.११; व्यप्र.१४३ पमावत्; विता.१२५ (जातिगोत्रं च शाखां च लेख्यकं कारयेत्सुधीः । वृद्धिग्राहकहस्तं च विदितार्थाश्च साक्षिणः); प्रका.३७ हस्तं (हस्तौ); समु.४१.

(५) विस्मृ.७।१-३; व्यक.६१ (असाक्षिकं ०) तन्नियुक्त (नियुक्त) क्षकर (क्षर).

पटे वा ताम्रपट्टे वा लिखितं स्वमुद्राङ्कं
चागामिनृपतिपरिज्ञानार्थं दद्यात् ।
यत्र क्वचन येन केनचिल्लिखितं साक्षिभिः
स्वहस्तचिन्हितं ससाक्षिकम् ।
स्वहस्तलिखितमसाक्षिकम् ।

प्रमाणमप्रमाणं च लेख्यम्

तद्बलात् कारितमप्रमाणम् ।
उपधिकृताश्च सर्व एव ।
दूषितकर्मदुष्टसाक्ष्यङ्कितं तत्ससाक्षिकमपि ।
तादृग्विधेन लिखितं च ।
स्त्रीबालाऽस्वतन्त्रमत्तोन्मत्तभीतताडितकृतं च ।
देशाचाराऽविरुद्धं व्यक्ताधिकृतलक्षणमलुप्त-
क्रमाक्षरं प्रमाणम् ।

लेख्यपरीक्षा

वर्णैश्च तत्कृतैश्चिह्नैः पत्रैरेव च युक्तिभिः ।
संदिग्धं साधयेल्लेख्यं तद्युक्तिप्रतिरूपितैः ॥
यत्रर्णी धनिको वाऽपि साक्षी वा लेखकोऽपि वा ।
म्रियते तत्र तल्लेख्यं तत्स्वहस्तैः प्रसाधयेत् ॥
'धनिको वाऽपि' इति शुद्धपत्रिकाविषयम् ।
व्यमा.३३९

## याज्ञवल्क्यः

राजकृतदानलेख्यविधिः

दत्वा भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेत् ।
आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः ॥

(१) भूमिनिबन्धदानयोस्त्वयं विशेषः— दत्वा भूमिमिति । निबन्धोऽक्षयनिधिः । स्पष्टमन्यत् । विश्व.१।३१४

(२) यथोक्तविधिना भूमिं दत्वा स्वत्वनिवृत्तिं कृत्वा निबन्धं वा 'एकस्य भाण्डभरकस्येयन्तो रूपकाः' 'एकस्य पर्णभरस्येयन्ति पर्णानी'ति वा निबन्धं कृत्वा लेख्यं कारयेत् । किमर्थम् ? आगामिनः एष्यन्तो ये भद्राः साधवो नृपतयो भूपास्तेषामनेन दत्तमनेन प्रतिगृहीतमिति परिज्ञानाय । पार्थिवो भूपतिः । अनेन भूपतेरेव भूमिदाने निबन्धदाने वा अधिकारो न भोगपतेरिति दर्शितम् । मिता.

(३) भूमिं क्षेत्रारामग्रामादिकां विप्राय दत्वा निबन्धनं वा कृत्वा भद्राणां शास्त्रार्थकारिणामागामिनां नृपतीनां परिज्ञानाय परिनिश्चयाय पार्थिवः पृथिवीपतिर्लिखितं लेख्यं वक्ष्यमाणप्रकारं कारयेत् । अस्मिन् ग्रामे प्रतिक्षेत्रं क्षेत्रस्वामिनैतद्धनमस्मै प्रत्यब्दं प्रतिमासं वा देयमित्येवमादिनियमो निबन्धः । अप.१।३१६-३१७

(४) निबन्धो वाणिज्यादिकारिभिः प्रतिवर्षं प्रतिमासं वा किञ्चिद्धनमस्मै ब्राह्मणायास्यै देवतायै वा देयमित्यादिप्रभुसमयलभ्योऽर्थः । अत्र यद्यपि धनदातृत्वं वाणिज्यादिकर्तुः तथापि निबन्धकर्तुरेव पुण्यं तदुद्देशेनैवेतरस्य प्रवृत्तेः । भूमिमिति ग्रामारामादीनामुपलक्षणार्थम् । *स्मृच.५५

(५) भूमिं ब्राह्मणादिभ्यो दत्वा निबन्धं 'अस्यां भूमावियान् करो ग्राह्य' इत्यादि व्यवस्थां च कृत्वा । +वीमि.

(६) इयति पर्णक्रमुकभारादावियन्ति पर्णक्रमुकादीन्यस्मै देयानीति राज्ञो नियतदानाज्ञा निबन्धः । कारयेत् संधिविग्रहाद्यधिकारिद्वारेत्यर्थात् । व्यप्र.१४४-१४५

(७) निबन्धः आकरादौ राजादिदत्तं नियतलभ्यम् । व्यम.१३

तल्लेख्यस्वरूपम्

पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम् ।
अभिलेख्यात्मनो वंश्यानात्मानं च महीपतिः ॥

(१) स्मृच.५६; व्यप्र.१४५ टे वा (टे च) चा (आ) र्थं (र्थे); प्रका.३६; समु.४०. (२) विस्मृ.७।४-५; व्यक.६१. (३) विस्मृ.७।६-११.

(४) विस्मृ.७।१२. (५) विस्मृ.७।१३; व्यमा.३३९; स्मृच.६४ साध (धाव); पमा.१३४; प्रका.४२; समु.४४.

(६) यास्मृ.१।३१८; विश्व.१।३१४ भद्र (क्षुद्र); मिता.; अप.१।३१६-३१७ तु (च); व्यक.६३; स्मृच.५५; पमा.१२२; सुबो.२।२२ पू.; व्यचि.६२ आगामिभद्र (तत्र चागामि); सवि.२६; व्यसौ.६०; वीमि.; व्यप्र.१४४ दत्वा भूमिं (भूमिं दत्वा); व्यम.१३; विता.११९; बाल.२।२२ पू.; प्रका.३५; समु.३९.

* पमा., सवि. स्मृचगतम्। + शेषं मितागतम्।

(१) यास्मृ.१।३१९; विश्व.१।३१५ द्रोप (द्राप); मिता.; अप.१।३१७-३१८; व्यक.६३; स्मृच.५५ उत्त.; पमा.१२२ उत्त.; व्यचि.६२ पू.;

**प्रतिग्रहपरीमाणं दानच्छेदोपवर्णनम् ।**
**स्वहस्तकालसंपन्नं शासनं कारयेत्स्थिरम् ॥**

(१) किं पुनर्वक्ष्यमाणलेख्यलक्षणवत् कार्यम् ? नेत्युच्यते, किं तर्हि ? पटे वा ताम्रपट्टे वेति । पटवचनं भूर्जनिवृत्त्यर्थम् । परिशब्दात् प्रज्ञादूतकस्वहस्तमुद्रास्कन्धावारसमावासनामदेशादिचिह्नितम् । आदावेवाभिलेखनीयाः पूर्वपुरुषास्त्रयः । वंश्यत्ववचनाच्च स्त्रियोऽपि । अनन्तरमात्मानम् । ततः प्रतिग्रहपरीमाणम् । अस्मिन् देशेऽमुकनामेयान् ग्राम इत्यादि । ततो दानाच्छेदमुपवर्ण्य, एतद्दानफलं, एतदाच्छेदनफलम् । 'षष्टिं वर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः । आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत्' ॥ इत्यादि । लेखकनामाङ्कितं स्वहस्तसंयुक्तमागामिक्षुद्रनृपत्यशोचनं स्थिरं भूमेश्छिद्रन्यासेनाचन्द्रात् स्थितिसंस्थानं कारयेत् । सर्वथा यथा आगामिनोऽप्यस्मादेव शासनान्न विकुर्युः, तथा कार्यमिति । विश्व.१।३१५–३१६

(२) कार्पासिके पटे ताम्रपट्टे फलके वा आत्मनो वंश्यान् प्रपितामहपितामहपितॄन् । बहुवचनस्यार्थवत्वाय वंशवीर्यश्रुतादिगुणोपवर्णनपूर्वकमभिलेख्यात्मानं चशब्दात् प्रतिग्रहीतारं प्रतिग्रहपरिमाणं दानच्छेदोपवर्णनं चाभिलेख्य । प्रतिगृह्यत इति प्रतिग्रहो निबन्धस्तस्य रूपकादिपरिमाणम् । दीयते इति दानं क्षेत्रादि तस्य छेदः छिद्यते अनेनेति छेदः नद्याघाटौ निवर्तनं तत्परिमाणं च तस्योपवर्णनं, अमुकनद्या दक्षिणतोऽयं ग्रामः क्षेत्रं वा, पूर्वतोऽमुकग्रामस्यैतावन्निवर्तनमित्यादिनिवर्तनपरिमाणं च लेख्यम् । एवमाघाटस्य नदीनगरवर्त्मादेः संचारित्वेन भूमेर्न्यूनाधिकभावसंभवात्तन्निवृत्त्यर्थं, स्वहस्तेन स्वहस्तलिखितेन 'मतं मे अमुकनाम्नः अमुकपुत्रस्य यदत्रोपरि लेखितम्' इत्यनेन संपन्नं युक्तं, कालेन च द्विविधेन—शकनृपातीतरूपेण संवत्सररूपेण च कालेन, चन्द्रसूर्योपरागादिना संपन्नं, स्वमुद्रया गरुडवराहादिरूपयोपरि बहिश्चिह्नितं अङ्कितं स्थिरं दृढं शासनं शिष्यन्ते भविष्यन्तो नृपतयः अनेन दानाच्छेयोऽनुपालनमिति शासनं कारयेत् । महीपतिर्न भोगपतिः । संधिविग्रहादिकारिणा न येन केनचित् । 'संधिविग्रहकारी तु भवेद्यस्तस्य लेखकः । स्वयं राज्ञा समादिष्टः स लिखेद्राजशासनम्' ॥ इति स्मरणात् । दानमात्रेणैव दानफले सिद्धे शासनकारणं भोगाभिवृद्ध्या फलातिशयार्थम् । *मिता.

(३) प्रतिग्रहो भूमिर्निबन्धश्च । तस्य च्छेदोऽपहारः । स उपवर्ण्यते प्रत्यवायजनकतया येन शास्त्रेण तद्दानच्छेदोपवर्णनं तच्च लेखयित्वा । शासनं शिष्यन्ते दानापहारान्निवर्त्यन्ते भाविनो भूपतिप्रभृतयो येन तच्छासनं कारयेत् । न हि तेन विना प्रतिग्रहीता तद्वंश्यो वा भूमिनिबन्धौ शक्नुयादुपभोक्तुम् । ×अप.१।३१७-३१९

(४) उद्धृतमहीमण्डलस्य श्रीपतेः वराहवपुषो वरदानप्रतिपादकमाशीर्वादमादावाचारप्राप्तमभिलेख्यानन्तरमात्मनो वंश्यान् लेखयेत् । ×स्मृच.५५

(५) आत्मानं चेति चकारेण प्रतिग्रहीतृसमुच्चयः । स्थिरं अप्रामाण्यशङ्कानास्कन्दनीयम् । +वीमि.

(६) तत्परीमाणम् । उपसर्गस्य दीर्घो बाहुलकः । इदं च साधुशब्दैरेव लेखनीयं न लौकिकवत्तदनियमः । ×व्यप्र.१४५

(७) मिता.टीका––आघाटो मर्यादा । बाल.

ऋणपत्रादिलेखविधिः

**यः कश्चिदर्थो निष्णातः स्वरुच्या तु परस्परम् ।**
**लेख्यं तु साक्षिमत्कार्यं तस्मिन्धनिकपूर्वकम् ॥**

---

**स्मृचि**.४३; **नृप्र**.११ उत्त.; **सवि**.२७; **व्यसौ**.६०; **वीमि**.; **व्यप्र**.१४४; **व्यउ**.४४; **व्यम**.१३; **विता**.११९ लेख्या (ख्याया); **प्रका**.३५ उत्त.; **समु**.३९.

(१) **यास्मृ**.१।३२०; **विश्व**.१।३१६ दान (दाना); **मिता**.; **अप**.१।३१८-३१९; **व्यक**.६३; **स्मृच**.५५-५६; **पमा**.१२२ पू.; **स्मृचि**.४३ परीमाणं (प्रमाणं च); **नृप्र**.११ पू.; **सवि**.२७; **व्यसौ**.६० उत्त.; **वीमि**.; **व्यप्र**.१४४; **व्यउ**.४४ पू.; **व्यम**.१३; **विता**.११९; **प्रका**.३५-३६; **समु**.३९.

*व्यम. मितागतम् । ×शेषं मितागतम् । +शेषं अपगतम् ।

(१) **यास्मृ**.२।८४; **अपु**.२५५।१६ निष्णा (ऽभिम); **विश्व**.२।८६ स्वयं तु (स्वयं वा); **मिता**.; **अप**.; **व्यक**.६२; **स्मृच**.५८; **स्मृसा**.९५; **स्मृचि**.४३; **नृप्र**.११; **मच**.८।१६४ निष्णा (निर्णी); **व्यसौ**.५९; **वीमि**.; **व्यप्र**.१४३; **व्यउ**.४३; **व्यम**.१२; **विता**.१२४ रुच्या तु (रूप्यात्तु); **राकौ**.४०५ र्थो (र्थं); **प्रका**.३७; **समु**.४१.

(१) साक्ष्यनन्तरं व्यक्तिप्रमाणकत्वाविशेषाल्लिखितमुच्यते—यः कश्चिदिति। यः कश्चित् ऋणाधिक्रयप्रतिग्रहविक्रयादिरर्थो निष्णातः परिशुद्धस्वरूपसंख्यापरिमाणवृद्ध्यवध्यादिकः धनिकर्णिकादीनां स्वरुच्या परस्परमवस्थिते तस्मिन्नव्यभिचारार्थं लेख्यं वोक्तलक्षणसाक्षियुक्तं भाविसंदेहापनोदनक्षमं कार्यम् । तस्य चायं क्रमः। धनिकपूर्वकं स्याद् ऋणिकापेक्षया च धनिकस्य पूर्वत्वं न कालाद्यपेक्षया । विश्व.२।८६

(२) भुक्तिसाक्षिणौ निरूपितौ। सांप्रतं लेख्यं निरूप्यते। तत्र लेख्यं द्विविधं, शासनं जानपदं चेति। शासनं निरूपितम्। जानपदमभिधीयते। तच्च द्विविधं, स्वहस्तकृतमन्यकृतं चेति। तत्र स्वहस्तकृतमसाक्षिकं, अन्यकृतं ससाक्षिकम् । अनयोश्च देशाचारानुसारेण प्रामाण्यम्। तत्रान्यकृतमाह — यः कश्चिदिति। धनिकाधमर्णयोर्योऽर्थो हिरण्यादिः परस्परं स्वरुच्या इयता कालेनैतावद्देयमियती प्रतिमासं वृद्धिरिति निष्णातो व्यवस्थितः तस्मिन्नर्थे कालान्तरे विप्रतिपत्तौ वस्तुतत्वनिर्णयार्थं लेख्यं साक्षिमदुक्तलक्षणसाक्षियुक्तं धनिकपूर्वकं धनिकः पूर्वो यस्मिंस्तद्धनिकपूर्वकं धनिकनामलेखनपूर्वकमिति यावत् कार्यं कर्तव्यम्। उक्तलक्षणाः साक्षिणो वा कर्तव्याः। 'कर्त्रा तु यत्कृतं कार्यं सिद्ध्यर्थं तस्य साक्षिणः। प्रवर्तन्ते विवादेषु स्वकृतं वाऽथ लेख्यकम्'॥ इति स्मरणात् । ×मिता.

(३) निष्णातः निरूपितः। व्यक.६२

(४) मिता.टीका — 'प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति' मानुषप्रमाणानां मध्ये निर्देशक्रमेण लेखस्य पूर्वभावित्वेऽपि साक्षिलिखितयोरर्थसंबन्धवशात्पौर्वापर्यं असिद्धवत् कृत्वा प्रसङ्गात् प्रथमत एव मध्यनिर्दिष्टाऽपि भुक्तिः प्रतिपादिता। ततश्च साक्षिस्वरूपे विज्ञाते 'लेख्यं तु साक्षिमत् कार्यम्' इति साक्षियुक्तलेख्यविधानं सुबोधमिति साक्षिप्रकरणानन्तरभावित्वं लेख्यप्रकरणस्योचितमिति सङ्गतिं दर्शयति — भुक्तिसाक्षिणौ निरूपिताविति। सुबो.

(५) आद्यतुशब्देन बलोपधिकृतत्वव्यवच्छेदः । द्वितीयतुशब्देनाऽन्यकृते लेख्येऽसाक्षिकत्वव्यवच्छेदः । इदं चावधेयम्— परस्याप्यतिप्रामाणिकत्वेनाऽवधारितस्य लेख्यं साक्षिरहितमपि प्रमाणमन्यथा तु साक्षिणा निर्णयः। लेख्यं तु तत्र साक्षिणां स्मरण एवोपयुज्यत इति। *वीमि.

(६) धनिकनामपूर्वकमित्यनेनोत्तमर्णनामोपरि लेख्यमधमर्णनाम तदध इत्यर्थः। व्यप्र.१४३

**समामासतदर्धाहर्नामजातिस्वगोत्रकैः ।**
**सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम् ॥**

(१) ततश्चायं क्रमः—समेति। विश्व.२।८७

(२) अपि च, समा संवत्सरः। मासश्चैत्रादिः । तदर्धं पक्षः शुक्लः कृष्णो वा। अहस्तिथिः प्रतिपदादिः। नाम धनिकाधमर्णयोः । जातिर्ब्राह्मणादिः । स्वगोत्रं वासिष्ठादिगोत्रम्। एतैः समादिभिश्चिह्नितम् । तथा सब्रह्मचारिकं बह्वृचादिशाखाप्रयुक्तं गुणनाम, 'बह्वृचः कठ' इति। आत्मीयपितृनाम धनिकार्णिकपितृनाम। आदिशब्दात् द्रव्यजातिसंख्यावारादेर्ग्रहणम् । एतैश्च चिह्नितं लेख्यं कार्यमिति गतेन संबन्धः। ×मिता.

(३) कठादिना समानमभिन्नं ब्रह्म वेदशाखां चरत्यधीत इत्येवंशीलः सब्रह्मचारी, तस्य भावः सब्रह्मचारिकम्। नामजातिसगोत्रब्रह्मचारित्वादीनि अत्र धनिकादीनामेव। +अप.

(४) एतच्च ऋणपत्रादिविषयं, अन्यत्राऽसंभवात्। व्यप्र.१४३

(५) ब्रह्मवादिपदेन ब्रह्मवादिशाखा लभ्यते तदुक्तम् । अत्र समामासादिलिखनं आधिप्रतिग्रहादिव्यवहारे उपयुज्यते। 'आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा' इति वचनात् । गोत्रादिकं च उत्तमा-

* अप., विता. मितागतम्।

* वाक्यार्थो मितावत्। × स्मृच., वीमि. मितागतम्।
+ शेषं मितागतम्।

(१) **यास्मृ**.२।८५; **अपु**.२५५।१७; **विश्व**.२।८७ हर्नाम (होवास) स्व (स) मादि (म्ना च); **मिता**.; **अप**. स्व (स); **व्यक**.६२; **स्मृच**.५८; **स्मृसा**.९५ हर्ना (होना) स्व (स) पू.; **स्मृचि**.४३ पू.; **नृप्र**.११ समा (वर्ष); **मच**.८।१६४; **व्यसौ**.५९; **वीमि**. अपवत्; **व्यप्र**.१४३; **व्यउ**.४३ चारि (वादि); **व्यम**.१२ अपवत्; **विता**.१२५ (=); **राकौ**.४०५; **प्रका**.३७; **समु**.४१.

धमर्णयोरुभयोरपि लेख्यम्। इदं च स्वपरलिखित-साधारणम्। व्यउ.४३

(६) ब्रह्मणि वेदे चरतीति चारी। चार्येव चारिकः। विता.१२५

(७) मिताटीका—अत्र समादीनां व्याप्यव्यापकभावः। अत एव क्रमस्य प्रतिपाद्यत्वात्तस्य प्रागुक्तिरेवं क्रमो नामादावपि बोध्यः। बाल.

**समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत्।**
**मतं मेऽमुकपुत्रस्य यदत्रोपरिलेखितम् ॥**

(१) किं च धनिकाधमर्णयोर्योऽर्थः स्वरुच्या व्यवस्थितस्तस्मिन्नर्थे समाप्ते लिखिते ऋणी अधमर्णो नामात्मीयं स्वहस्तेनास्मिँल्लेख्ये यदुपरि लेखितं तन्ममामुकपुत्रस्य मतमभिप्रेतमिति निवेशयेत्पत्रे लिखेत्। *मिता.

(२) उपरीति वदन् पूर्वलिखिताक्षरसंस्थानादधस्तात् स्वहस्ताक्षरसंस्थानमिति दर्शयति। ऋणीति साक्षिणामपि प्रदर्शनार्थम्। स्मृच.५८

**साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम्।**
**अत्राहममुकः साक्षी लिखेयुरिति ते समाः ॥**

(१) अत्राहममुकः साक्षीत्येवं लिखेयुः। असमाः त्रय इत्यर्थः। अन्ये तु समा इति छेदभ्रान्त्या द्वावित्याहुः। तत्तु बहुवचनविरोधादयुक्तम्। न च चतुरभिप्रायं तदिति युक्तम्। 'लेख्ये तु परमास्त्रयः' इति वचनात्। विश्व.२।८९

(२) तथा तस्मिँल्लेख्ये ये साक्षिणो लिखितास्तेऽप्यात्मीयपितृनामलेखनपूर्वकमस्मिन्नर्थेऽहममुको देवदत्तः साक्षीति स्वहस्तेनैकैकशो लिखेयुः। ते च समाः संख्यातो गुणतश्च कर्तव्याः। यद्यधमर्णः साक्षी वा लिपिज्ञो न भवति तदाऽधमर्णोऽन्येन, साक्षी च साक्ष्यन्तरेण, सर्वसाक्षिसंनिधौ स्वमतं लेखयेत्। यथाह नारदः—'अलिपिज्ञ ऋणी यः स्यात्स्वमतं तु स लेखयेत्। साक्षी वा साक्षिणाऽन्येन सर्वसाक्षिसमीपतः' इति ॥ *मिता.

(३) ते चासमा विषमसंख्याका भवन्तीत्यर्थः। समा इति नृपं प्रति वादिप्रतिवादिनोः समास्तुल्या भवन्तीत्यर्थः। ×अप.

(४) ते च द्वित्वादिसमसंख्यया विशिष्टा भवेयुः। न त्रित्वादिविषमसंख्ययेत्यर्थः। केनचिदकारप्रश्लेषकल्पनया साक्षिसंख्यानियमो वैपरीत्येन दर्शितः। स यस्मिन्देशे तथैवाचारः तत्रैव ग्राह्यः। नान्यत्र। अस्वरसार्थत्वात्। साक्षिण इति बहुवचनं गुरुतरकार्यलेख्यविषयम्। 'उत्तमर्णाधमर्णौ च साक्षिणौ लेखकस्तथा। समवायेन चैतेषां लेख्यं कुर्वीत नान्यथा' ॥ इति हारीतेन लेख्यमात्रे साक्षिणावित्युक्तवात्। एवं च अन्यकृतलेख्यस्योत्तमर्णाधमर्णसाक्षिद्वयलेखकरूपपञ्चपुरुषारूढत्वात्पञ्चारूढं पत्रमिति लोके व्यवहारः, साक्षिसंख्याऽधिकत्वे चायं व्यवहारो गौण इति मन्तव्यम्। लेख्यमात्रं प्रकृत्य व्यासेनाप्युक्तम्—'ऋणी हस्तं नामयुतं साक्षिभ्यां पितृपूर्वकम्' इति। अतः द्विप्रभृतिभिः समैर्भवितव्यमिति नियमो देशाचाराऽविरोधेनानुसंधेयः। स्मृच.५९

(५) समाः तुल्यरूपा इत्यर्थः। स्मृसा.९५

(६) ते च गुणैश्च संख्यया समा एव, न विषमाः। संख्यासाम्यमदृष्टार्थं प्राबल्यार्थं वा। गुणसाम्यं दृष्टार्थम्। उत्तमर्णाधमर्णसाक्षिलेखकलेखनीयरूपपञ्चविधगमकारूढत्वात् तदभेदात्पत्रस्य लेख्यं पञ्चारूढमिति लौकिक-

---

* अप. मितागतम्।

(१) **यास्मृ.**२।८६; **अपु.**२५५।१८; **विश्व.**२।८८; **मिता.**; **व्यमा.**३३७; **अप.**; **स्मृच.**५८; **पमा.**१२६ स्वहस्तेन (हस्तेन वि); **स्मृसा.**९५; **स्मृचि.**४३; **नृप्र.**११-१२; **सवि.**११३; **मच.**८।१६४; **व्यसौ.**५९; **वीमि.**; **व्यप्र.**१४३; **व्यउ.**४३; **व्यम.**१२; **विता.**१२५ (=) यदत्रो (पदं चो); **राकौ.**४०५; **प्रका.**३८; **समु.**४१; **विव्य.**१५ बृहस्पतिः.

(२) **यास्मृ.**२।८७; **अपु.**२५५।१९; **विश्व.**२।८९ समाः (ऽसमाः); **मेधा.**८।३ समाः (समम्); **मिता.**; **व्यमा.**३३८; **अप.** विश्ववत्; **व्यक.**६२; **स्मृच.**५९; **पमा.**१२६; **स्मृसा.**९५ अत्रा (तत्रा) उत्त.; **व्यचि.**६२ मक (मादि) नारदः; **स्मृचि.**४३ उत्त.; **नृप्र.**११ णश्च (णोऽस्य): १२; **सवि.**११४ श्च (स्तु) नामक (नाम) पू., व्यासः; **मच.**८।१६४ मक (मादि); **व्यसौ.**५९; **दानि.**५; **वीमि.**; **व्यप्र.**१४३; **व्यउ.**४३; **व्यम.**१२; **विता.**१२५ (=); **प्रका.**३८; **समु.**४१; **विव्य.**१५ मक (मादि) बृहस्पतिः.

* मच., व्यउ., व्यम., विता. मितागतम्।

× शेषं मितागतम्।

प्रसिद्धिः। ननु 'पत्रं हि लिपिसंयुक्तमुच्यते' इत्यस्य लिपेर्लेखनीयार्थनिरूपकतया तदभेदात्पत्रस्य तदारूढत्वोक्तिः पञ्चसंख्योक्तिश्चायुक्तेति चेत्, मैवम्; यथा लेख्यस्य लेखकनिरूपकतया तदभेदेऽपि तद्गतविशेषाकारस्वीकारेण लेखकारूढत्वोक्तिरविरुद्धा तथैवात्रेति। यद्यपि स्वहस्तलेख्ये लेखकाभावात् पञ्चारूढत्वं नास्ति, तथापि तस्मिन्नवस्थाद्वयविवक्षयाऽवस्थितं गमकत्वमवलम्ब्य तदुक्तिर्न विरुद्धा। न च वाच्यं स्वहस्तलेख्यसाक्ष्यभावपक्षे पञ्चारूढत्वं गौणमिति। साक्षिकृत्यं स्वकृतलिपावेव तिष्ठति। स्वस्यैव साक्षित्वाङ्गीकारात्। केचित्त्वन्यकृतलेख्ये पञ्चारूढत्वं पत्रस्येत्याहुः। चन्द्रिकाकारादयस्तु अन्यकृतलेख्यस्य उत्तमर्णाधमर्णसाक्षिद्वयलेखकरूपपञ्चपुरुषारूढत्वात् पञ्चारूढं पत्रमिति लोकव्यवहारः, साक्षिसंख्याधिक्ये त्वयं व्यवहारो गौण इति मन्तव्यमित्याहुः। तस्मिन्मते पञ्चशब्दः पुरुषमात्रपरो न तु गमकपरः। अत्र पत्रस्य पञ्चारूढत्वे पुरुषमात्रं न निमित्तं, अपि तु तद्गतगमकत्वं, अतश्चेतरप्रमाणापेक्षया पत्रस्य प्राबल्यसिद्धिः। किं च साक्षिसंख्याधिक्ये त्वयं व्यवहारो गौण इत्यसमञ्जसम्। षडादिसंख्याविशिष्टसाक्षिमत्पत्रस्थलेऽपि शते पञ्चाशन्न्यायेन मुख्यतायां गौणत्वाङ्गीकारोक्तेरयुक्तत्वात्। केचित्तु तन्मतानुवर्तिन एवं तत्परिहारमाहुः— एकोऽप्युभयसंमत इति वचनात् श्रुताध्ययनसंपन्नस्य तस्य वादिनोऽप्येकस्यैव साक्षित्वाङ्गीकारात्। पुरुषचतुष्टयारूढत्वे पञ्चारूढत्वोक्तिर्गौणीति। तत्तु पूर्वापरविरुद्धाभिधानमित्यनादर्तव्यम्। तथापि पूर्वोक्तदोषदुष्टत्वादस्मदुक्तप्रकार एव सम्यक्। सवि.११४-११५

(७) लिखितानभिज्ञास्तु लेखयेयुरिति चशब्देन समुच्चीयते। वीमि.

(८) समा इत्यनेन गुणसाम्यं संख्यासाम्यं च वैषम्यानियमाय विवक्षितम्। असमा इत्यकारप्रश्लेषस्तु वैषम्यस्य सामान्यत एव साक्षिषु प्राप्तेर्नोपादेयः। व्यप्र.१४४

**[१]अलिपिज्ञ ऋणी यः स्यात् स्वमतं लेखयेत्तु सः।**
**साक्षी वा साक्षिणाऽन्येन सर्वसाक्षिसमीपगः॥**

ऋणी साक्षी वा योऽलिपिज्ञः, स सर्वसाक्षिसमक्षं लेखकेन साक्षिणा वाऽन्येन स्वमतं साक्ष्यं वा लेखयेत्। विश्व.२।९०

**[१]उभयाभ्यर्थितेनैतन्मया ह्यमुकसूनुना।**
**लिखितं ह्यमुकेनेति लेखकोऽन्ते ततो लिखेत्॥**

(१) अन्तत इति वचनं प्राप्तत्वादधिकनिवृत्त्यर्थम्। विश्व.२।९१

(२) किं च, ततो लेखको धनिकाधमर्णिकाभ्यामुभाभ्यां प्रार्थितेन मयाऽमुकेन देवदत्तेन विष्णुमित्रसूनुना एतल्लेख्यं लिखितमित्यन्ते लिखेत्। *मिता.

(३) हिशब्दाभ्यामर्थनस्य लेखनहेतुत्वं लेख्यार्थस्याऽवधारणं च दर्शितम्। वीमि.

प्रमाणमप्रमाणं च लेख्यम्

**[२]विनाऽपि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु यत्।**
**तत्प्रमाणं स्मृतं सर्वं बलोपधिकृतादृते॥**

---

(१) अपु.२५५।२० पगः (पतः); विश्व.२।९०; स्मृसा.९५ स्यात् ...सः (तु लेखयेत्स्वमतं तु सः); मच.८।१६४

* अप. मितागतम्। स्वमतं लेखयेत् (लेखयेत्स्वमतं) वा (चेत्). मूलस्मृतिप्रमाणपुस्तके नोपलभ्यते.

(१) यास्मृ.२।८८; अपु.२५५।२१; विश्व.२।९१ नैतत् (नेदं) ह्यमु (त्वमु) कोऽन्ते त(कस्त्वन्त); मेधा.८।३ नैतत्(नैवं) नेति (नैव) कोऽन्ते त (कस्तत्व); मिता.; व्यमा.३३८ उभयाभ्य (उभाभ्याम); अप.; व्यक.६२; स्मृच.५९; पमा.१२६ नैतत् (नैव) कोऽन्ते त (कस्त्वन्त); स्मृसा.९५ भ्यर्थि (नुम) ह्यमुक (चामुक) शेषं पमावत्; स्मृचि.४३; नृप्र.११-१२; सवि.११५ ह्यमुक (ऽप्यमुक) उत्तरार्धं पमावत्; मच.८।१६४ भ्यर्थि (नुम); व्यसौ.५९; दानि.५-६ पमावत्; वीमि.; व्यप्र.१४३; व्यउ.४३ नैतत् (नैवं) कोन्ते (नान्ते); व्यम.१२; विता.१२७; प्रका.३८; समु.४१; विव्य.१५ बृहस्पतिः.

(२) यास्मृ.२।८९; अपु.२५५।२२ तु (च); विश्व.२।९२; मिता.ऽपि (तु) सर्वं (लेख्यं); व्यमा.३३८; अप. पधि (पाधि); व्यक.६४; स्मृच.६१; पमा.१३०; स्मृसा.९६ तु यत् (भवेत्) सर्वं (लेख्यं); व्यचि.६२ क्षिभिः (क्षिणं); स्मृचि.४४ तु (च); नृप्र.११ सर्वं (लेख्यं) पधिं (पाधि); मच.८।१६४; चन्द्र.१३० अपवत्; व्यसौ.६१; वीमि.; व्यप्र.१४२ तु (च); व्यउ.४३ अपवत्; व्यम.१२ सर्वं (लेख्यं); विता.१२७ व्यमवत्; राकौ.४०५ सर्वं(लेख्यं); प्रका.४० अपवत्; समु.४३ अपवत्; विव्य.१५.

(१) किं पुनः स्वहस्तारोपणे प्रयोजनम्? उच्यते विनापीति। ऋणिकसंप्रतिपत्त्यर्थं हि साक्षिणः। स चेत् स्वहस्तेनापि संप्रतिपद्येत, मन्दं साक्षिप्रयोजनं मन्यते। एतच्चोपगतादिविषयं द्रष्टव्यम्। विश्व.२।९२

(२) यल्लेख्यं स्वहस्तेन लिखितमधमर्णेन तत्साक्षिभिर्विनापि प्रमाणं स्मृतं मन्वादिभिः। बलोपधिकृतादृते, बलेन बलात्कारेण उपधिना छललोभक्रोधभयमदादिलक्षणेन यत्कृतं तस्माद्विना। मिता.

(३) उपाधिः छद्म। अपिशब्दात् ससाक्षिकमपि। यत्पुनर्न स्वहस्तलिखितं तत्साक्षिमदेव सत्प्रमाणम्। *अप.

(४) तल्लेख्यप्रामाण्येन योऽभियोज्यः तल्लिखितमित्यर्थः। व्यचि.६२

(५) तुशब्देन परलिखिते साक्षिविनाकृतत्वस्य व्यवच्छेदः। सर्वमित्यनेन वादिसाक्षिपत्रलेखकानां सर्वं लिखितमुच्यते। वीमि.

(६) बलोपधिकृतपर्युदासः सर्वलेख्यविषयो न स्वकृतमात्रविषयः। व्यप्र.१४२

पूर्वलेख्यहानिसंभवे तत्तुल्यलेख्यकरणम्

**[१]देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा।**
**भिन्ने दग्धेऽथवा छिन्ने लेख्यमन्यत्तु कारयेत्॥**

(१) यदा त्वृणिकदेशात् देशान्तरे लेख्यं, प्रमाणतो वा भ्रष्टं तदा यः प्रकारः तमाह—देशान्तरेति। राजा, परस्परं वा धनिकर्णिकावित्यभिप्रायः। लेख्यदोषो यत्र प्रमादाल्लिख्यमाने संजातः, तद् दुर्लेख्यम्। उन्मृष्टं भग्नाक्षरम्। छिन्नं मूषिकादिभिः। भिन्नं पाटितम्। तथाशब्दः प्रकारार्थः। स्पष्टमन्यत्। विश्व.२।९४

(२) प्रासङ्गिकं परिसमाप्य प्रकृतमेवानुसरति—देशान्तरस्थे इति। व्यवहाराक्षमे पत्रे पत्रान्तरं कुर्यादिति विधीयते। व्यवहाराक्षमत्वं चात्यन्तव्यवहितदेशान्तरस्थे पत्रे। दुर्लेख्ये दुष्टानि संदिह्यमानानि अवाचकानि वा लेख्यानि लिप्यक्षराणि पदानि वा यस्मिंस्तत् दुर्लेख्यं तस्मिन्दुर्लेख्ये। नष्टे कालवशेनोन्मृष्टे मषीदौर्बल्यादिना मृदितलिप्यक्षरे। हृते तस्करादिभिर्भिन्ने विदलिते। दग्धे प्रज्वलिते। छिन्ने द्विधाभूते सति भवति। एतच्चार्थिप्रत्यर्थिनोः परस्परानुमतौ सत्याम्। विमत्यां तु व्यवहारप्राप्तौ देशान्तरस्थपत्रानयनाय दुर्गाध्वापेक्षया कालो दातव्यः।

दुर्गदेशावस्थिते नष्टे वा पत्रे साक्षिभिरेव व्यवहारनिर्णयः कार्यः। यदा तु साक्षिणो न सन्ति तदा दिव्येन निर्णयः कार्यः। 'अलेख्यसाक्षिके दैवीं व्यवहारे विनिर्दिशेत्' इति स्मरणात्। एतच्च जानपदं व्यवस्थापत्रम्। राजकीयमपि व्यवस्थापत्रमीदृशमेव भवति। इयांस्तु विशेषः 'राज्ञः स्वहस्तसंयुक्तं स्वमुद्राचिन्हितं तथा। राजकीयं स्मृतं लेख्यं सर्वेष्वर्थेषु साक्षिमत्' इति॥ *मिता.

(३) छिन्ने शीर्णे। स्मृच.६०

(४) तथाशब्देन श्लिष्टपदघटितस्य चकारेण चौरहृतस्य समुच्चयः। एवकारेण देशान्तरस्थत्वाद्यभावे लेख्यान्तरकरणव्यवच्छेदः। यदि तु परः पापिष्ठहारिणा पूर्वलेख्यं न मन्यते तदा साक्ष्यादिना पूर्वपत्रं प्रमाप्य पत्रान्तरं करणीयमिति। ×वीमि.

(५) शासनादौ तथाभूते राजादिद्वाराऽन्यत्करणीयमित्याह— देशान्तरस्थे इति। यद्यपि दग्धमपि नष्टमेव तथापि कालमात्रकृता शीर्णता नष्टपदेनात्र विवक्षिता। ×व्यप्र.१४७

लेख्यपरीक्षा

**[१]संदिग्धलेख्यशुद्धिः स्यात्स्वहस्तलिखितादिभिः।**

---

* शेषं मितागतम्। स्मृच. अपगतम्।

(१) **यास्मृ.**२।९१; **अपु.**२५५।२४ दग्धेऽथवा छिन्ने (छिन्ने तथा दग्धे); **विश्व.**२।९४ भिन्ने...छिन्ने (छिन्ने भिन्ने तथा दग्धे); **मिता.**; **अप.**ऽथवा (तथा); **व्यक.**६४ न...हृते (ततोन्मृष्टे कृते)ऽथवा (तथा); **स्मृच.**६० अपवत्; **पमा.** १२९ ष्टोन्मृ (ष्टे घृ); **स्मृचि.**४४ पमावत्; **सवि.**११८ अपवत्; **मच.**८।१६४ ष्टोन्मृ (ष्टे म्लि)ऽथवा (तथा); **व्यसौ.** ६१ स्थे...न्मृष्टे (स्थिते लेख्ये तथोन्मृष्टे); **वीमि.** हृते तथा (तथैव च); **व्यप्र.**१४७ अपवत्; **व्यउ.**४४ (=) मष्टो(मृष्टो) लेख्य (लेख); **व्यम.**१३ अपवत्; **विता.**१३० वा छि (वोच्छि); **प्रका.**३८ अपवत्; **समु.**४२ अपवत्.

* सवि. मितागतं स्मृचगतं च। व्यउ., विता. मितागतम्।
× शेषं मितागतम्।

(१) **यास्मृ.**२।९२; **अपु.**२५५।२५ (संदिग्धार्थविशु-

युक्तिप्राप्तिक्रियाचिह्नसंबन्धागमहेतुभिः ॥

(१) लेख्यस्वरूपे चेद् व्यभिचाराशङ्का, कोऽत्र निर्णयहेतुः ? उच्यते, संदिग्धेति । संदिग्धश्चासावर्थश्चेति संदिग्धार्थः, तद्विशुद्धिरर्थः प्रयोजनं यस्य लेख्यस्य तत् तथोक्तम् । संदिग्धार्थनिर्णये तदेव प्रमाणमित्यर्थः । तच्च स्वहस्तलिखितं यदि स्यात्, ततः शुद्धमेव । संशये तु युक्त्यादिभिर्निर्णयः कार्यः । तस्मिन् काले देवदत्तस्य द्रव्यप्रयोजनमासीद्, यज्ञदत्तश्च तदा स्वधनं प्रयुक्तवान् इत्यादिका युक्तिः । समानदेशस्थौ तदोभावप्यभूतां इति प्राप्तिः । अप्रतारकश्चासौ लेखकः प्रसिद्धः, तदीया लेख्या इति क्रिया । चिह्नं मुद्रालिपिविशेषादिकम् । संबन्धो बलोपध्याद्यभावः । आगमो लेख्यलक्षणयोगः । कूटसाक्षित्वाद्यसंभवो हेतुः । एवं युक्त्यादिभिर्यत् परीक्षितं लेख्यं, तत् प्रमाणमित्यवसेयम् । विश्व.२।९५

(२) शुद्धमशुद्धं वेति संदिग्धस्य लेख्यस्य शुद्धिः स्वहस्तलिखितादिभिः स्यात् । स्वहस्तेन लिखितं यल्लेख्यान्तरं तेन शुद्धिः । यदि सदृशान्यक्षराणि भवन्ति तदा शुद्धिः स्यादित्यर्थः । आदिशब्दात् साक्षिलेखकस्वहस्तलिखितान्तरसंवादाच्छुद्धिरिति । युक्त्या प्राप्तिर्युक्तिप्राप्तिः । देशकालपुरुषाणां द्रव्येण सह संबन्धः प्राप्तिः । अस्मिन्देशेऽस्मिन्कालेऽस्य पुरुषस्येदं द्रव्यं घटत इति युक्तिः । क्रिया तत्साक्ष्युपन्यासः । चिह्नमसाधारणं श्रीकारादि । संबन्धः आर्थिप्रत्यार्थिनोः पूर्वमपि परस्परविश्वासेन दानग्रहणादिसंबन्धः । आगमोऽस्यैतावतोऽर्थस्य संभावितः प्राप्त्युपायः । एते एव हेतवः । एभिर्हेतुभिः संदिग्धलेख्यशुद्धिः स्यादित्यन्वयः । यदा तु लेख्यसंदेहे निर्णयो न जायते तदा साक्षिभिर्निर्णयः कार्यः । यथाह कात्यायनः 'दूषिते पत्रके वादी तदारूढांस्तु निर्दिशेत्' । इति साक्षिसंभवविषयमिदं वचनम् । साक्ष्यसंभवविषयं तु हारीतवचनं 'न मयैतत्कृतं पत्रं कूटमेतेन कारितम् । अधरीकृत्य तत्पत्रमर्थे दिव्येन निर्णय' इति ॥ ×मिता.

(३) युक्तिप्राप्तिः पत्रलिखितदेशकाले तयोः सहावस्थानम् । चिह्नं मुद्रादिकम् । +व्यमा.३३९

(४) लेख्ये प्रमाणतया संदिग्धे स्वहस्तलिखितादिभिः प्रामाण्यलिङ्गैर्युक्त्यादिभिश्च कारणैः शुद्धिः संशयनिवृत्तिः प्रामाण्यावधारणलक्षणा स्यात् । एतच्चाधमर्णेन साक्षिरहितं स्वहस्तेन कृतं यल्लेख्यं तद्विषयवचनम् । तत्र ह्यधमर्णस्य न मयैतल्लिखितमिति प्रत्यवस्थानसंभवः । तत्र तेनैव यदन्यल्लेख्यं कृतं तत्स्वहस्तलिखितं तेनैव निर्णयः । आदिशब्देन च पितृनामगोत्रसब्रह्मचारित्वानां ग्रहणम् । युक्त्यादीनामपि तत्रैव पत्रके स्वयं प्रमाणतया प्रमाणान्तरानुग्राहकतया वा निर्णायकत्वम् । युक्तिरर्थापत्तिः । प्राप्तिरेकत्र देशे काले च वादिप्रतिवादिनोः स्थितिः । एतच्च प्रमाणान्तरानुग्राहकतया शुद्धिहेतुर्न स्वातन्त्र्येण । यदि हि नैकत्र देशादौ तयोः स्थितिस्तदा लिखितमप्रमाणमेवेति निश्चिते स्वहस्तलिखितादिषु लेख्यप्रामाण्यावधारकेषु विचारकाणां जिज्ञासैव न जायते । क्रिया संव्यवहारः । ययोः खलु नास्त्यार्यद्रविडयोरिव संव्यवहारस्तत्र लेख्यं प्रति प्रामाण्यमसंभवनिरस्तम् । चिह्नं मुद्रा । संबन्धो वादिप्रतिवादिनोः प्राग्विवादात्परस्परं विश्वासपूर्वं आदानप्रतिदानादिः । आगमो विवादास्पदीभूतस्यार्थस्य स्वस्वामिसंबन्धोपायः क्रयादिः । अस्यार्थिन एतावद्धनं क्रयादिनोपायेनास्य संभवत्येतद्बुद्धिरिति हेतुरनुमानम् । स्वहस्तलिखितादिकं न लेख्यस्य शुद्धौ युक्त्यादिनिरपेक्षं कारणं भवितुमर्हति । अनैकान्तिकत्वात् । सन्ति खलु पुरुषाः कुशला ये पुरुषान्तरलिखिततुल्यं लेख्यमापादयन्ति । पितृनामादीनां वाऽभेदः संभवति । *अप.

(५) तत्र स्वहस्तलिखनमुक्तमेव । युक्त्यादीन्युच्यन्ते । तत्र यदि गूढपत्रविभावनार्थमेवाह यस्मिन् काले मयास्य शतं गृहीतमिति पत्रे लिखितमस्ति तत्काले नास्य शतसंभावना । न वा मम शतेन प्रयोजनम् । सेयमाशङ्का युक्त्या निराक्रियते— अस्ति तत्कालेऽस्य

---

द्ध्यर्थ स्वहस्तलिखितं तु यत्); **विश्व**.२।९५ अपुवत्; **मिता**.; **व्यमा**.३३९; **अप**. लेख्य (लेख्ये); **स्मृच**.६३; **पमा**.१३३; **स्मृसा**.९६; **स्मृचि**.४४; **नृप्र**.१२; **सवि**.१२०; **मच**.८।१६४ ग्ध (ग्धे); **चन्द्र**.१३१; **वीमि**.; **व्यप्र**.१४९; **व्यउ**.४५; **व्यम**. १३; **विता**.१३२ ग्ध (ग्धे); **प्रका**.४१; **समु**.४४ ग्ध (ग्धे); **विव्य**,१६.

× सवि., व्यप्र., व्यउ., विता. मितागतम् । चन्द्र., व्यम. मितागतं अपगतं च । + शेषं मितागतम् । * स्मृच. अपगतम् ।

शतसंभावना अस्त्यस्यापि शतग्रहणप्रयोजनमिति। अथैवमाह—नास्त्येव मम तदा तद्देशप्राप्तिर्देशान्तरस्थत्वात्। सा प्राप्तिस्तद्देशसंनिधानेन निराक्रियते—अस्त्यनयोस्तद्देशप्राप्तिरिति। अथैवमाह—नैतानि ममाक्षराणि, नापि साक्षिलेखकयोरिति। तदा यदि कश्चिद् धार्मिको असाधारणेन चिह्नेन तान्यक्षराणि प्रत्यभिजानाति, तदा चिह्नमपि निर्णायकम्। एवमसाधारणमपि पुत्रादिकं चिह्नं निर्णायकमिति बोध्यम्। यत्र द्रव्यसंख्यास्वरूपनिर्देशस्थाने पूर्वाक्षराणि विलुप्यान्या द्रव्यसंख्या कृतेति तत्र संबन्धेन निर्णयः। यान्यक्षराणि कूटत्वेन शङ्कितानि यद्यन्याक्षरैः सह बिन्दुमात्रादिना संबद्धानि तदा प्रमाणमेव पत्रमिति। संबन्धोऽपि निर्णायक इति। एवमन्योन्यसंबन्धो विश्वासहेतुश्च निर्णायक इति। हेतुभिरिति न पृथक्करणोपादानं, किन्तु युक्त्यादिभिर्हेतुभिरित्यर्थः। एतच्च दिगुपदर्शनम्।

स्मृसा.९६–९७

(६) युक्तिः इदानीं द्रव्यं नास्ति मासान्तरे दातव्यं मयेत्यभिधानान्यथानुपपत्तिः। प्राप्तिः तत्पत्रलिखितर्णवृद्ध्यादिप्राप्तिः। संबन्धः विवादपदे कुण्डलादौ पूर्वकाल उत्तमर्णायत्वावधारणम्। आगमो विवादपदस्य तत्पूर्वक्रियादिः।

*वीमि.२।९२

ऋणापाकरणसंबन्धी उपगतादिविधिः

**लेख्यस्य पृष्ठेऽभिलिखेद्दत्वा दत्वर्णिको धनम्।**
**धनी वोपगतं दद्यात् स्वहस्तपरिचिह्नितम् + ॥**
**दत्वर्णं पाटयेल्लेख्यं शुद्ध्यै वाऽन्यत्तु कारयेत्।**
**साक्षिमच्च भवेद्यद्वा तद्दातव्यंससाक्षिकम् + ॥**

## नारदः

लेख्यप्रकाराः तल्लक्षणानि च

**[1]लेख्यं तु द्विविधं ज्ञेयं स्वहस्तान्यकृतं तथा।**
**असाक्षिमत्साक्षिमच्च सिद्धिर्देशस्थितेस्तयोः॥**

---

* 'संदिग्ध' पदार्थो मितावत्।

+ अनयोर्व्याख्यासंग्रहः स्थलादिनिर्देशश्च ऋणादाने द्रष्टव्यः।

(१) **नासं**.२।११२ मत्सा (कं सा) ते (ति); **नास्मृ**.४।१३५; **शुनी**.४।६६७-६६८ पूर्वार्धे (स्वहस्तलिखितं वा ऽन्यहस्तेनापि विलेखितम्); **अभा**.५९ ते (ति); **मिता**.

(१) अत्र एकं स्वहस्तकृतं, द्वितीयमन्यहस्तलिखितम्। एवं तावद्द्विविधमेवोक्तम्। एतयोस्तु यत्स्वहस्तलिखितं तत्साक्षिभिर्विनाऽपि प्रमाणम्। यत्त्वन्यहस्तलिखितं तत्साक्षिसहितं प्रमाणम्। स्वहस्तलिखितस्यैतन्माहात्म्यं यद्विनाऽपि साक्षिभिस्तत्प्रमाणमेवेति। यथोक्तं—सिद्धिर्देशस्थितिस्तयोः तद्देशाचारमाहात्म्यं दर्शितम्। यस्मिन् देशे या देशस्थितिः आलेख्यसिद्धिरिति।

अभा.५९

(२) देशाचारस्थितिर्यस्मिन्देशे यादृशं लेख्यं तत्र तादृशमेव आदरणीयमित्यर्थः।

×स्मृसा.९५

(३) लेख्यं द्विप्रकारं ज्ञेयं स्वहस्तलिखितमधमर्णेन, अन्यकृतमन्येन लिखितं तद्वचनात्। तदप्येकैकं द्विप्रकारमविद्यमानसाक्षिकं पत्रमात्रं ससाक्षिकं च। तयोः सिद्धिः प्रमाणं देशाचारः। यस्मिन्देशे असाक्षिकः पत्रसंव्यवहारः तत्र तथा सिद्धिः, यत्र ससाक्षिकः तत्र ससाक्षिकं प्रमाणम्।

नाभा.२।११२

(४) आद्यं तु साक्षिभिर्विना बलात्कारेण छद्मना च कृतं विना प्रमाणमिति विशेषः। परं तु स्वलिखितसंशयसंभावनायां तद्व्युदासाय साक्षिमत्तदपि कार्यम्। इतरत् साधारणं विशेषणम्।

*वीमि.२।८४

(५) तयोरर्थिप्रत्यर्थिनोर्लेख्ययोर्वा।

व्यउ.४३

**[1]राज्ञः स्वहस्तसंयुक्तं स्वमुद्राचिह्नितं तथा**
**राजकीयं स्मृतं लेख्यं सर्वेष्वर्थेषु साक्षिमत्॥**

---

× व्यत., सेतु. स्मृसावत्। * व्यप्र. वीमिगतम्।

२।८४; **अप**.२।८९ (=) ज्ञेयं (विद्यात्); **व्यक**.६१ नासंवत्; **स्मृच**.६१ ज्ञेयं (प्रोक्तं); **पमा**.१३० स्मृचवत्, कात्यायनः; **स्मृसा**.९५ तु (च) ज्ञेयं (प्रोक्तं) सिद्धिर्देश (देशाचार) शेषं नासंवत्; **व्यचि**.६२ ज्ञेयं (प्रोक्तं) न्यकृतं (न्याक्षरं) मत्सा (कं सा); **स्मृचि**.४२ मत्सा (कं सा); **व्यत**.२२० ज्ञेयं (प्रोक्तं) मत्सा (कं सा); **व्यसौ**.५८ ज्ञेयं (प्रोक्तं) न्यकृतं (न्याक्षरं); **व्यप्र**.१४२ स्मृचवत्; **व्यउ**.४२-४३ मत्सा (कं सा); **व्यम**.१२ स्मृचवत्; **विता**.१२४ ज्ञेयं (प्रोक्तं) ते (ति); **राकौ**.४०५; **सेतु**.११३ व्यतवत्; **प्रका**.४० स्मृचवत्; **समु**.४३ स्मृचवत्.

(१) **शुनी**.४।६७०; **स्मृच**.६१; **स्मृचि**.४३ पूर्वार्धे (स्वहस्तचिह्नितं राज्ञः स्वमुद्राचिह्नितं तथा) कात्यायनः; **प्रका**.४०; **समु**.४३.

[3]सकलं पूर्वपादं च सोत्तरं सक्रियं तथा ।
सावधारणकं चैव तज्ज्ञेयं जयपत्रकम् ॥
नृपानुज्ञातलिखितः संश्राव्योऽर्थश्च पक्षयोः ।
सभ्यैर्निर्धारितः पश्चाद्राज्ञा शास्यः स शाश्वतः ॥
प्राप्तं द्विगुणदण्डं तु दण्डयित्वा पुनस्ततः ।
जयिने वाऽपि देयं स्याद्यथावज्जयपत्रकम् ॥
[2]आधिं कृत्वा तु यो द्रव्यं प्रयुंक्ते स्वधनं धनी ।
यत्तत्र क्रियते लेख्यमाधिपत्रं तदुच्यते ॥
[3]लेख्यं च साक्षिमत्कार्यमविलुप्तक्रमाक्षरम् ।
देशाचारस्थितियुतं समग्रं सर्ववस्तुषु ॥
[4]अलिपिज्ञ ऋणी यः स्याल्लेखयेत्स्वमतं तु सः ।
साक्षी वा साक्षिणाऽन्येन सर्वसाक्षिसमीपतः ॥

(१) साक्षिणाऽन्येनेति लिपिज्ञमात्रप्रदर्शनार्थम् । अन्यथा त्वदृष्टार्थं स्यात् । अप.२।८७

(२) विजातीयलिपिज्ञोऽपि स्वयमेव लिखेत्, लिपिज्ञत्वात् । स्मृच.५९

[5]विजातीयलिपिज्ञोऽपि स्वयमेव लिखेत्पदम् ॥

पदमिति स्वसंकेतमित्यर्थः । सवि.११५

प्रमाणमप्रमाणं च लेख्यम्

[6]देशाचाराऽविरुद्धं यद्व्यक्ताधिविधिलक्षणम् ।
तत्प्रमाणं स्मृतं लेख्यमविलुप्तक्रमाक्षरम् ॥

(१) अत्र लेख्यप्रामाण्यमुक्तम् । तदिह यल्लेख्यमदेयदानलेखनेन, अस्वतन्त्रोपरि लिखितादिना च देशाचारविरोधेन वर्जितं यत्तद्देशाचाराविरुद्धम् । यत्र च लेख्ये व्यक्तमाधिप्रतिभूसुस्थलक्षणं, यत्र च पत्रलिखितक्रमः अविलुप्त अविनष्टः, यत्राक्षराण्यप्यविलुप्तानि, तल्लेख्यं प्रमाणमिति । तथा चाह कल्याणोऽपि— 'लिखितं लक्षणज्ञेन युक्तिन्यायैकवर्त्मना । अर्थतो ग्रन्थतश्चैवमत्र न व्यभिचारवत्' ॥ अभा.५९

(२) तच्चैतत्स्वहस्तकृतं परहस्तकृतं च यल्लेख्यं देशाचारानुसारेण सबन्धकव्यवहारेऽबन्धकव्यवहारे च युक्तमर्थक्रमाऽपरिलोपेन लिप्यक्षराऽपरिलोपेन च लेख्यमित्येतावत्, न पुनः साधुशब्दैरेव । प्रातिस्विकदेशभाषयाऽपि लेखनीयम् । यथाह नारदः— देशाचाराविरुद्धमिति । विधानं विधिः । आधेर्विधिराधीकरणम् । तस्य लक्षणं गोप्याधिभोग्याधिकालकृतमित्यादि, तद्व्यक्तं विस्पष्टं यस्मिंस्तद्व्यक्ताधिविधिलक्षणम् । अविलुप्तक्रमाक्षरम्— अर्थानां क्रमः, क्रमश्चाक्षराणि च क्रमाक्षराणि, अविलुप्तानि क्रमाक्षराणि यस्मिंस्तदविलुप्तक्रमाक्षरम् । तदेवंभूतं लेख्यं प्रमाणम् । राजशासनवन्न साधुशब्दनियमोऽत्रेत्यभिप्रायः । *मिता.२।८९

(३) व्यक्ताधिविधिलक्षणं, स्पष्टं बन्धप्रकारकलक्षणं यत्र तत्तथा । व्यक.६४

(४) देशाचारेणाविरुद्धं यद् व्यक्ताधिकृतलक्षणं, व्यक्तमधिकृतं लक्षणं यस्मिन् तद् व्यक्ताधिकृतलक्षणम् । इदं द्रव्यममुष्मिन्मासे इयतोदयेनानुष्मिन् काले दातव्यं, अदाने च आ दानादियानुदय इति । अविलुप्तक्रमं लेख्यक्रमेण लिखितं, न व्युत्क्रमेण । अविनष्टाक्षरं च काकपदादिवर्जितम् । तल्लेख्यं प्रमाणं, नात्र विचार्यमस्ति, यथा लिखितं तथाऽनुष्ठेयम् । नाभा.२।११३

(५) मिता.टीका— सबन्धकव्यवहारविषयमिदम् । बाल.२।८९

[1]मत्ताभियुक्तस्त्रीबालबलात्कारकृतं च यत् ।

---

(१) अप.२।८४. (२) **स्मृच**.५९; **पमा**.१२७; **नृप्र**.११; **सवि**.११७ यमः; **प्रका**.३८; **समु**.४१. (३) **स्मृच**.५८; **सवि**.११३ च (तु) स्थिति (क्रम); **प्रका**.३७; **समु**.४१.

(४) **मिता**.२।८७ लेख...सः (स्वमतं तु स लेखयेत्); **अप**.२।८७; **स्मृच**.५९; **पमा**.१२९ ज्ञ (ज्ञो); **नृप्र**.११ मितावत्; **सवि**.११५ ज्ञ (ज्ञो) साक्षी वा (साक्षिणा) णाऽन्ये (णोऽन्ये) मीपतः (मन्वितः); **व्यप्र**.१४४ लेख...सः (स्वमतं स तु लेखयेत्); **व्यउ**.४३ ज्ञ (ज्ञो) शेषं मितावत्; **व्यम**.१२ णाऽन्येन (णोऽन्येन) शेषं मितावत्; **विता**.१२७ मितावत्; **प्रका**.३८; **समु**.४१.

(५) **सवि**.११५. (६) **नासं**.२।११३ विधि (कृत); **नास्मृ**.४।१३६ धिविधि (वधिवि); **अभा**.५९ नास्मृवत्; **मिता**.२।८९; **व्यक**.६४; **स्मृच**.६२; **पमा**.१३० क्ताधि (क्तादि); **स्मृचि**.४३ तत्...लेख्यं (स्मृतं लेख्यमतिक्रान्तं); **नृप्र**.१२ पमावत्; **व्यसौ**.६१; **व्यप्र**.१४५; **व्यउ**.४४ लेख्यं (ज्ञेयं); **विता**.१२८; **प्रका**.३६ शाचारा (शकाला) धिविधि (दिकृत) कात्यायनः: ४०; **समु**.४३.

* स्मृच., व्यप्र., विता. मितागतम् ।

(१) **नासं**.२।११४ लिखितं (करणं); **नास्मृ**.४।१३७; **अभा**.५९; **मिता**.२।८९ भीतो (भयो); **अप**.२।८९ (=) च

**तदप्रमाणं लिखितं भीतोपधिकृतं तथा ॥**

(१) अत्र मत्तेन लिखितं, तथा ब्रह्महत्याद्यभिशस्तेन यत्, स्त्रिया यत्, बालेन च कृतं यत्, तथा अर्थसंबन्धेन विनैव बलात्कारेण कारितं यत्, तथैव भीतोपधिकृतं यत् तत्करणमप्रमाणमिति । अभा.५९

(२) भयादिकृतत्वमेवात्राप्रामाण्ये कारणं, न स्त्र्यादिकृतत्वमपि । तथा हि सति स्त्रीबालादिभिर्यथार्थमपि क्रियमाणं लिखितमप्रमाणं स्यात् । न च यथार्थमप्रमाणं भवितुमर्हति । यत्तु स्त्र्यादीनां पृथगुपादानं तत्तेषां बाहुल्येन भयादिसंभवख्यापनार्थम् । अप.२।८९

(३) यत्तु केनाप्युपधिना स्वयं लिखितं उपधिश्च न निष्पन्नस्तदप्रमाणं, मत्तेति वचनात् । चन्द्र.१३०

(४) पूर्वोक्तस्यापवाद उच्यते । मत्तश्चाभियुक्तश्चेति द्वन्द्वः । प्रत्येकं कृतशब्दोऽभिसंबध्यते । मत्तेन कृतं, अभियुक्तेन कृतमित्येवमादि । मत्तस्य तत्कालमेव, तस्मिन् कालेऽस्वतन्त्रत्वात् । अभियुक्तोऽन्येन वशीकृतः । तस्यापि आ व्यवहारनिवृत्तेरार्तत्वादाकुलत्वाच्च । स्त्री अबुद्धित्वादस्वतन्त्रत्वाच्च । बालोऽप्येवमेव आ षोडशाद् वर्षात् । बलात्कारकृतमस्वेच्छया कृतत्वात् । भीतकृतं चान्यथाकरणे गृह्यमाणकारणत्वात् । उपधिकृतं च, उपधिर्व्याजः । एतत् सर्वमप्रमाणं, गृह्यमाणकारणत्वात् । नाभा.२।११४

**मृताः स्युः साक्षिणो यत्र धनिकर्णिकलेखकाः ।**
**तदप्यपार्थं लिखितं न चेदाधिः स्थिराश्रयः ॥**

(१) यत्र पत्रे धनिकर्णिकसाक्षिलेखकाः सर्वेऽपि मृताः तदप्यप्रमाणं किल । अन्यथा तादृशैः पत्रैः जनस्य कूटप्रपञ्चकृतैर्विश्वासः संभवति । एतदर्थमुक्तम् । यत्र तु लेख्ये आधिर्भुक्तिसहितः स्थिरीकरणचिन्हभूतस्तिष्ठति, तत्तेषु सर्वेषु मृतेष्वपि प्रमाणमेवेति । अभा.५९

(२) आश्रयो भुक्तिः । अप.२।९२

(३) मृता इति–साक्ष्यादौ मृते पुत्रादिसंस्थं लेख्यपत्रं न सिध्यति । यद्याधिभोगोऽस्ति तदा तदपि प्रमाणमित्यर्थः । ×व्यत.२२१

(४) भुज्यमान आधौ मृतर्णिकसाक्षिधनिकलेख्यमपि प्रमाणमेव । यत्र तु न स्थिरो भोगः तत्राऽप्रमाणमेव । चन्द्र.१३१-१३२

(५) आधिः स्थिरश्चास्थिरश्च । स्थिरो भूम्यादिः, अस्थिरो गवादिः । अस्थिराध्याश्रयणं तावदप्रमाणं अस्थिरद्रव्यस्य भङ्गुरत्वात्, विप्रकृष्टकालत्वाच्चास्मृतेः । स्थिराश्रयं तु प्रमाणमेव लिखितं, तस्य नित्यत्वात् तद्विषयस्मृत्यविच्छेदोपपत्तेः । नाभा.२।११५

**यदि लब्धं भवेत्किञ्चित्प्रज्ञप्तिर्वा कृता भवेत् ।**
**प्रमाणमेव लिखितं मृता यद्यपि साक्षिणः ॥**

यदि लिखितबलादुत्तमर्णेनाधमर्णात्किञ्चिल्लब्धं यद्वा लिखितं ममैतद्धस्ते विद्यतेऽत्र विषय इति प्रज्ञप्तिरधमर्णं प्रति कृत्वा भवति तदा लेख्यारूढसाक्षिणामभावेऽपि लेख्यं प्रमाणमित्यर्थः । अप.२।९२

**दर्शितं प्रतिकालं यत्प्रार्थितं श्रावितं तथा ।**
**लेख्यं सिध्यति सर्वत्र मृतेष्वपि हि साक्षिषु ॥**

---

(तु) भीतोप (भयोपा); **व्यक**.६५ तोप (तोपा) शेषं नासंवत्; **स्मृच**.६२ अपवत्; **पमा**.१३१ च (तु) भीतो (भयो); **स्मृसा**.९६ मत्ता (मन्दा) तद ... खितं (न तत्प्रमाणं करणं) तथा (च यत्); **स्मृचि**.४४ उत्तरार्धे (न तत्प्रमाणं करणं भीतोपाधिकृतं च यत्); **चन्द्र**.१३० (न तत्प्रमाणं करणं भयोपाधिकृतं तथा); **व्यप्र**.१४३ मितावत्; **व्यउ**.४३ अपवत्; **विता**.१२८ पूर्वार्धे (अपत्रचिह्नयुक्तं यत् स्त्रिया बालेन वा कृतम्) भीतो (बलो); **राकौ**.४०५; **प्रका**.४० च (तु) पू.; **समु**.४३ अपवत्.

(१) **नासं**.२।११५ न ... श्रयः (ऋते त्वाधेः स्थिराश्रयात्); **नास्मृ**.४।१३८; **अभा**.५९; **व्यमा**.३४०; **अप**.२।९२ पार्थं (नर्थं); **स्मृच**.६४ अपवत्; **पमा**.१३५ न ... श्रयः (ऋते चाधेः स्थिराश्रयात्); **व्यत**.२२१ स्युः (तु) लिखितं

× सेतु. व्यतवत् ।

(करणं) शेषं नासंवत्; **चन्द्र**.१३१ उत्तरार्धस्तु व्यतवत्; **सेतु**.११३ स्युः (तु) लिखितं (करणे) न ... श्रयः (मृते त्वाधिः स्थिराश्रयात्); **प्रका**.४२ अपवत्; **समु**.४४ अपवत्.

(१) Vulg. **नास्मृ**.४।१३८ इत्यस्यानन्तरमयं श्लोकः; **अप**.२।९२; **स्मृच**.९४; **पमा**.१३७ कात्यायनः; **सवि**.१२२ कात्यायनः; **प्रका**.४२ ज्ञप्ति (दीप्ति); **समु**.४४.

(२) **नासं**.२।११७ (दर्शितं प्रतिकालं यच्छ्रावितं स्रावितं च यत्); **नास्मृ**.४।१४०; **अभा**.५९; **व्यमा**.३३९ यत्प्रा ... तथा (यच्छ्रावितं स्मारितं च यत्); **अप**.२।९२ व्यमावत्; **व्यक**.६६ व्यमावत्; **स्मृच**.६४ प्रार्थितं श्रावितं (श्रावितं स्मारितं); **पमा**.१३६ व्यमा-

(१) अत्र धनिकसंतत्या ऋणिकसंततेर्यत्प्रतिकालं दर्शितम्। यदा यदा किञ्चित्फलं प्रार्थ्यते तत्प्रार्थितम्। तथा यत्प्रतिकालं श्रावितं कालान्तरे स्कन्धकं वा गृहीतम्। अथवा श्रावितमेव भूयोभूयः कथितम्। तदेवमृणिकसंततेः संतानारूढप्रत्ययमेव मृतेष्वपि हि साक्ष्यादिषु सर्वेष्वपि प्रमाणमेवेति। अभा.५९-६०

(२) निरन्तरप्रदर्शितं च पत्रमृणिकेन चानिषिद्धमदूषितं च सिद्ध्यति। ×व्यमा.३३९

(३) एतच्च लेख्यसिद्धिसंभावनामात्रप्रतिपादकं, न पुनः परीक्षानिवारकम्। अप.२।९२

(४) प्रज्ञतिमेव प्रपञ्चयति दर्शितमिति। स्मृच.६४

(५) साक्षिधनिकर्णिकलेखकेषु मृतेष्वप्रमाणं पत्रमित्युक्तम्। तस्यायमपवादः ईदृशं प्रमाणं अतोऽन्यदप्रमाणं इति। दर्शितं प्रतिकालं तेषु जीवत्सु दृष्टं च नापह्नुतम्। श्रावितं बहूनां मध्ये श्रावितं, तेन चानुज्ञातम्। स्त्रावितमेकदेशभावितम्। ईदृशं लेख्यं सिध्यति। सर्वत्र सर्वेषु मृतेष्वपि साक्षिषु। अपिशब्दाद् धनिकादिष्वपि। नाभा.२।११७

**अदृष्टार्थमश्रुतार्थं व्यवहारार्थमागतम्।**
**न लेख्यं सिद्धिमाप्नोति जीवत्स्वपि हि साक्षिषु॥**

(१) यत्पुनर्लेख्यमृणिकसंततेः स्वयमदृष्टार्थं स्वकीयपूर्वजेभ्यः सकाशादश्रुतार्थम्। केवलमाचारव्यवहारार्थमेवागतं दृष्टम्। एवंविधं न लेख्यं सिद्धिमाप्नोति। जीवत्स्वपि हि साक्षिषु तथापि कृतकत्वाशङ्कया। अभा.६०

(२) अश्रुतार्थं अश्रावितार्थम्। अदृष्टार्थं काले अदर्शितार्थं अननुज्ञातार्थं, व्यवहारार्थमेव प्रतिपन्न अस्त्रावितं च। जीवत्स्वपि हि साक्षिष्वीदृशमप्रमाणं किं पुनर्मृतेष्विति मृतेष्वप्रामाण्यं प्रतिपाद्यते। जीवत्सु तु प्रमाणमेव। नाभा.२।११८

लेख्यपरीक्षा

**[1]लेख्ये देशान्तरन्यस्ते दग्धे दुर्लिखिते हृते।**
**सतस्तत्कालहरणमसतो द्रष्टृदर्शनम्॥**

(१) अस्य श्लोकस्यार्थो द्वयोरपि वादिप्रतिवादिनोः सोपयोगः। वादिनस्तावत् यदा वादिना प्रतिवादी लिखितद्रव्यसंबन्धे पृष्टः, न च तत्पत्रं तस्य हस्ते। ऋणी च वदति दर्शयतु ममायं पत्रम्। यदि विद्यमानं स्यात् तदाऽनपेक्षया तदानयनाय धर्माधिकरणेन विशिष्टैर्वा कालहरणं देयम्। अथ वा यदीदं पत्रं दग्धं हृतं वा; तदा असत अविद्यमानस्य तद्द्रष्टृदर्शनमपि साधुजनसाक्ष्यपेक्षया प्रमाणम्। ते च ते द्रष्टारः साक्षिलेखकाः साधवो यदि जीवन्ति। अथवा केचिदुदासीनाः प्रश्नकाले आगता यैस्तल्लिख्यमानं दृष्टम्। अविद्यमानं पत्रमानीतं च। वादिना किं तु यावद्वाच्यते तावदङ्कनष्टत्वादक्षरभ्रष्टत्वाद्वा असत्पत्रसंदेहमागतं, तदा तस्याशोभनस्य ये तत्काललिख्यमानस्य साक्षिलेखकोदासीनादयो द्रष्टारः केचित् तेऽङ्कभ्रान्त्यपनोदने नामवर्णभ्रान्त्यपनोदने वा प्रमाणं भवन्ति। एवमयं वादिसंबध्यमानः श्लोकोऽभिहितः। इदानीं प्रतिवादिसंबध्यमानोऽयमेवोच्यते— यदा अगृहीतधनपत्रेण वा प्रवेशितधनपत्रेण वा सहायागतेन धनपत्रेण वा पत्रारूढ-

× व्यत., चन्द्र., सेतु. व्यमावत्।

वत्; **स्मृसा**.९७ व्यमावत्; **व्यत**.२२१ (दर्शितं प्रतिकालं च पाठितं स्मारितं च यत्) हि (च); **सवि**.१२२ (=) प्रार्थितं श्रावितं (ग्राहितं स्मारितं) हि (च); **चन्द्र**.१३२ व्यतवत्; **व्यसौ**.६४ स्मृचवत्; **व्यप्र**.१५० व्यमावत्; **सेतु**.११३ व्यतवत्; **प्रका**.४२ स्मृचवत्; **समु**.४४ स्मृचवत्.

(१) **नासं**.२।११८ (अश्रुतार्थमदृष्टार्थं व्यवहारार्थमेव च); **नास्मृ**.४।१४१; **अभा**.६० 'अश्रुतार्थमदृष्टार्थं' इति प्रथमपादः; **पमा**.१३५ अभावत्; **स्मृसा**.९७ (अश्रुतार्थमभूतार्थं व्याहृतार्थं तथैव च) न लेख्यं (लेख्यं न); **स्मृचि**.४४ स्मृसावत्; **चन्द्र**.१३२ स्मृमावत्; **समु**.४५ अभावत्, स्मृत्यन्तरम्.

(१) **नासं**.२।११९ हर (कर) द्रष्टृ (ऽदृष्ट); **नास्मृ**.४।१४२; **अभा**.६०; **मिता**.२।९१ दग्धे (शीर्णे) हर (कर); **अप**.२।९१ख्ये (खे) शेषं मितावत्; **व्यक**.६९ न्तर (न्तरे) द्रष्टृ (दुष्ट) नारदकात्यायनौ; **स्मृच**.६१ मितावत्; **पमा**.१२९ मितावत्; **स्मृसा**.९७ हृते (तथा) स्तत् (स्तत्र) द्रष्टृ (दृष्ट); **स्मृचि**.४४ दग्धे (जीर्णे) द्रष्टृ (दृष्ट); **व्यत**.२२१ न्यस्ते (स्थे च); **सवि**.११८ दुर्लि (दुर्ले) शेषं मितावत्; **चन्द्र**.१३२ (=) न्यस्ते (स्थे च) हृते (कृते); **व्यसौ**.६५ दग्धे (शीर्णे) हृते (कृते); **व्यप्र**.१४७ न्यस्ते (स्थे तु) शेषं मितावत्; **व्यउ**.४४ हर (कर) शेषं स्मृचिवत्; **व्यम**.१३ मितावत्; **विता**.१३१ (=) सत (तत) शेषं मितावत्; **सेतु**.११३ व्यतवत्; **प्रका**.३९ मितावत्; **समु**.४२ मितावत्.

पितृनामजातिद्रव्यप्रमाणर्णिमतसाक्षिलेखाद्यङ्गपरिपूर्णलिखितबलात् कश्चिदृणी धर्माधिकरणमानीतः। तेन चोत्तरकालेऽभिहितं — यथा सत्यमिदमस्ति। मया तत्पत्रं लिखितमासीत्। किं तु किल कार्यार्थं द्वितीयदिने द्रव्यमभिग्रहीष्यामि। तावत्कार्यं वोढनीयम्। मया द्रव्यं न गृहीतम्। पत्रं च प्रमादात्पार्श्वे स्थित्वा मया न पाटितम्। तावत्कतिपयदिवसागमेनैवास्य पित्रा उक्तोऽहं यथा त्वदीयमगृहीतार्थं पत्रं मया तस्मिन्नेव दिने अनादरेण बहिरेव मुक्तं किल निरर्थकत्वात्। त्वन्निरोधात् पाटयिष्यामि। तावत्तद्देयं नष्टं, येन अतिप्रयत्नेनान्वेषयतापि मया तत्क्वचिन्न दृष्टम्। तन्मा कश्चिद्दैवयोगात्कालान्तरेऽपि तव यः चाकरीभवति। अतोऽहमेव प्रणष्टिविशुद्धिपत्रं प्रयच्छामि। एवमुक्त्वा तेनाऽस्य पित्रा तत्काल एव मम प्रणष्टिविशुद्धिपत्रं दत्तम्। तच्च मयाऽतिप्रयत्नेन तत्कालेऽमुकायतने वसता तत्रैवामुकपार्श्वे धवलगृहमञ्जूषायां स्थापितम्। इत्येवं प्रतिवादिनोत्तरे दत्ते तदानयनापेक्षया तद्दानार्थं तस्य सतस्तत्कालहरणं देयम्। असतस्तद्द्रष्टृदर्शनं प्रमाणमित्यादिकं प्रतिवादिनोऽपि सोपयोगार्थमिति।

अभा.६०-६१

(२) सतो विद्यमानस्य पत्रस्य देशान्तरस्थस्यानयनाय कालकरणं कालावधिर्दातव्यः। असतः पुनरविद्यमानस्य पूर्वं ये द्रष्टारः साक्षिणः तैर्दर्शनं व्यवहारपरिसमापनं कार्यम्। *मिता.२।९१

(३) अयमर्थः— सतो देशान्तरस्थस्याऽनयनार्थं कालकरणमियता कालेन त्वया तदाहरणीयमिति कालावधिकरणम्। असति तु पूर्वलिखिते लिखितान्तरं कृत्वा तस्य दर्शयितव्यं, येन तत्पूर्वं लिखितं दृष्टम्। द्वितीयस्य लेख्यस्यान्यथाभावनिराकरणाय। अप.२।९१

(४) एतत्तदैव धनदानोद्यतऋणिकविषयम्। तत्र लेख्यान्तरकरणे प्रयोजनाभावात्। कालकरणमानयनार्थं तस्य पत्रस्यानयनयोग्यकालकल्पनम्। द्रष्टृदर्शनं यत्र लभ्यपत्रार्थज्ञातृज्ञापनं धनप्रतिपादने कार्यमित्यर्थः। एतच्च पत्रपाटनासंभवेऽपि साक्षिणां साक्षित्वनिवृत्तये कार्यम्। प्रतिपादनप्रकाशनार्थं च प्रतिदत्तपत्रं ग्राह्यम्। कालान्तरे तु धने देये लेख्यान्तरं कार्यमेव।

*स्मृच.६१

(५) देशान्तरन्यस्तेऽसंनिहिते। दग्धे गृहदाहादौ। दुर्लिखिते लेख्यधर्मापेतत्वेन। हृते चोरादिभिः। सतस्तत्कालकरणं सतो देशान्तरस्थस्य हृतस्य वा तस्य कालकरणमियता कालेनानेतव्यमिति। असतो दग्धस्य दुर्लिखितस्य वा। अदृष्टस्य दर्शनमदृष्टदर्शनं, अदृष्टस्यापूर्वस्य दर्शनं कारणम्। अथवा सतः सद्भूतस्य तत्कालकरणं यद्युभयानुमतं अविवादः स्यात्। पुनः पत्रं कर्तव्यम्। असतोऽदृष्टस्य दर्शनम्। दृश्यतेऽनेनेति दर्शनम्। दर्शनमुपलब्ध्युपायः। ×नाभा.२।११९

(६) असत इत्यनादरे षष्ठी तद्विनापीत्यर्थः।

+व्यप्र.१४८

**यत्र[1] स्यात्संशयो लेख्ये भूताऽभूतकृते क्वचित्।**
**तत्स्वहस्तक्रियाचिह्नयुक्तिप्राप्तिभिरुद्धरेत्॥**

(१) यत्र लेख्ये भूताभूतकृतेऽर्थे विप्रत्ययो भ्रान्तिर्भवेदिति तत्परीक्ष्यं स्वहस्तक्रियाचिह्नयुक्तिप्राप्तिभिरिति। स्वहस्तप्रातिविश्वासकेन। क्रियया तदारूढसाक्षिभिः। चिह्नेन लेखकलिपिचिह्ननिरूपणेन। युक्त्या चानया युज्यमानार्थता युक्तिरयुक्तिस्तद्विपर्यये। प्राप्तिर्द्विधा, एका कथमनेन पत्रमिदं प्राप्तम्। द्वितीया जल्पतः साक्षोभ्यमाक्षोभ्यं वा। कीदृशी अस्य प्राप्तिरित्यादि भूताभूतलेख्यसंशयमुद्धरेदिति। अभा.६१

(२) चिन्हमसाधारणम्। युक्तिप्राप्तिः अस्मिन्देशे अस्मिन्काले युज्यते तस्य पुरुषस्येदं दृष्टमित्यादिरूपा।

व्यक.६७

(३) तदसाक्षिकस्वहस्तकृतलेख्यविषयम्। तत्र

---

* स्मृसा., व्यत., सवि., व्यउ., व्यम., विता., सेतु. मितागतम्।

* पमा. स्मृचवत्।

× अपरार्कानुसारीदं व्याख्यानम्। + शेषं मितागतम्।

(१) **नासं.**२।१२० यत्र (यस्मिन्) युक्तिप्राप्ति (प्राप्तियुक्ति); **नास्मृ.**४।१४३; **अभा.**६१; **व्यक.**६७ यत्र (यस्मिन्); **स्मृच.**६३ यत्र स्यात् (यस्मिंस्तु) कृते (कृतः); **पमा.**१३३ नासंवत्; **नृप्र.**१२ नासंवत्; **व्यसौ.**६२-६३ व्यकवत्, बृहस्पतिः; **बाल.**२।९२ व्यकवत्; **प्रका.**४१ स्मृचवत्; **समु.**४४ स्मृचवत्.

साक्ष्यादिस्पष्टनिर्णायकाभावात् । स्मृच.६३

(४) नष्टासंनिहिते लेख्ये विधिरुक्तः । संप्रति दृश्यमाने। लेख्ये यस्मिन् संशयः स्याद् भूताभूतकृते, क्वचिद् धनी भूतकृतमिति ब्रवीति ऋण्यभूतकृतमिति न मया कृतं कूटलेख्यमिति । तत्पत्रम् । स्वहस्तेनान्यत्र तल्लिखिताक्षरसामान्येन । क्रियया साक्षिभिः । चिह्नेन तत्कालनिर्वृत्तव्यापारसंवादनेन । प्राप्तिरतिक्रान्तकाले विश्वावितं कस्यचिद्वा सकाशेऽभ्युपगमितम् । युक्तिभिर्योग्यायोग्यत्वं द्रव्यापह्नवयोः । नाभा.२।१२०

**लेख्यं यच्चान्यनामाङ्कं हेत्वन्तरकृतं भवेत् ।**
**विप्रत्यये परीक्ष्यं तत्संबन्धागमहेतुभिः ॥**

(१) अत्र अन्यनामरूपोऽङ्को यस्य लेख्यस्य तदन्यनामाङ्कमुच्यते । तच्च द्विविधं भवति । एकं यस्य सक्तं द्रव्यं तस्यैव नाम्ना लिखितं किन्तु तस्य पार्श्वात् येन किमपि क्रीतं लब्धं वा, तस्य तद्द्रव्यं प्रार्थयतः । तत्पत्रमन्यनामाङ्कं भवति । तयोश्च द्वयोरपि यथासंख्येनाधिप्रत्ययसंभवरूपमुच्यते । तत्र प्रथमे अन्यनामाङ्के यस्य सक्तं द्रव्यं तस्मिन्नामारूढं स आगत्य पत्रं व्यासेधयति । तं धनिकं सुतं च वदति, अस्य ऋणिकस्योपरि यत्पत्रं तन्मदीयम् । मन्नामाङ्कितं त्वदीयपितुः पार्श्वस्थापनिकभूतं मया मुक्तम् । तदर्प्यतामिति । धर्माधिकरणस्याग्रे ईदृशे विप्रत्ययोपन्यासे कृते तेन सद्द्रव्यपत्रध्वनिना उत्तरं दत्तं, यथायमस्मदीयपितुरष्टप्रहरिकः कर्मकर आसीत् । तदा काले च स दायादभयादस्यैव नाम्ना पत्रमिदमभिलिखितवान् । ऋणिनापि स्वहस्तेनास्मदीयपितुः समर्प्य तत्पार्श्वात् स्वहस्तेन द्रम्मा अपि गृहीताः । यदि किञ्चिदिदमन्यथा ततो ममावसायः पृच्छ्यतामेतदस्माद्गृणिकः, कस्तव धनी ? इति, ततो धर्माधिकरणसभ्यैः अस्य विप्रत्ययस्य परीक्षार्थे पठितोऽयं श्लोकः— लेख्यमिति । अत्र च संबन्धागमहेतूनां त्रयाणामपि परीक्षा आवेदकानां कल्याणकृतं श्लोकत्रयमिदमस्ति, तत्र संबन्धः—'अन्वयज्ञातिवैवाह्या मैत्र्येकव्यवहारतः । युज्यते द्रव्यसंबन्धे निःसंबन्धे नियुज्यते' ॥ अथागमः— 'अन्वयक्रीतमाधत्तं लब्धप्रीत्याप्तलक्षणैः । सागमं षड्भिरेतैः स्याद्विनात्वेतैर्निरागमम्' ॥ अथ हेतुः—'वितर्के च निमित्ते च हेतुशब्दः प्रयुज्यते । प्रमाणं संशयोत्तीर्णे सन्निमित्तं च नान्यथा' ॥ इति सभ्यैः श्लोकत्रयमिदमेवं व्याख्यातम् । ऋणिकेनापि धर्माधिकरणपृष्टेन तस्मिन्नेव धनिके समर्पिते अन्यनामाङ्कस्यापि पत्रस्य यस्यार्थसंबन्धस्तस्य प्रामाण्यम् । न पुनरर्थसंबन्धवर्जितस्य नाममात्रस्येति । निर्णयं दत्वा उत्तरवादिनोः प्रदत्त इति । एवं प्रथमस्यान्यनामाङ्के लेख्यस्वरूपं निर्णयस्वरूपं च परिस्फुटीकृतम् । इदानीं द्वितीयस्योच्यते— केनापि भारुकच्छीयब्राह्मणेन आदित्यभट्टनाम्ना खेटकीयब्राह्मणसोमभट्टनाम्न उपरि युक्तं मूलिकं द्रम्मसहस्रद्वयं तेनापि संततिरहितेनोपस्थितमृत्युकालेन वा आत्मनः श्रेयोऽर्थिना दीक्षितमङ्गलभट्टनाम्ना नर्मदातीर्थस्थितेन प्रधानब्राह्मणाय साक्षिचतुष्टयप्रत्यक्षं तत्पत्रमुदकचुलुकपूर्वेण प्रतिपादितम् । तेन चागत्य पत्रहस्तेन द्रव्यार्थं सोमभट्टः प्रारब्धः तावत् आदित्यभट्टभ्रात्रा बुद्धभट्टेनागत्य व्यासेधः कृतः । धर्माधिकरणस्याग्रे च एवमभिहितं, यथा—तेन अस्मदीयपत्रेण सह मङ्गलदीक्षितभट्टनाम्नः पार्श्वे भ्रातृद्रव्यं मया बहु लब्धव्यमतस्तदभावे अन्यैर्वा प्रत्यक्षीकृतसाक्षिभिर्निर्हरेत् । अथवा तत्रापि पूर्वसाक्षिणामप्रत्यक्षत्वेन तत्रापि विशुद्धिलिखितमेव श्रेयः कालकालान्तरेऽपि 'साक्षिभ्यो लिखितं श्रेय' इति वचनात् । यत्र पुनः लिखितपूर्वः प्रथमव्यवहारः, तत्र ऋणिप्रवेशेऽपि लिखितपाटनं वा विशुद्धिलिखितं वा सविशेषमेतदेव श्रेयः । न पुनस्तत्र साक्षिणः कृता अपि श्रेयांसो भवन्ति । विनाशित्वपरवशत्वादिदोषात् । तथा लिखिताद् न तु साक्षिणोऽभ्यधिका भवन्तीति । अभा.६१-६२

(२) विप्रत्यये विप्रतिपत्तौ । संबन्धोऽत्र अर्थिप्रत्यर्थिनोः परस्परविरोधपूर्वमपि धनग्रहणादिसंबन्धः । व्यक.६७

---

(१) **नासं.**२।१२१; **नास्मृ.**४।१४४; **अभा.**६१; **अप.**२।९२; **व्यक.**६७ भवेत् (क्वचित्); **स्मृच.**६४; **पमा.**१३९ विप्रत्यये (विवृत्य वै); **स्मृसा.**९८; **व्यत.**२२१ विप्रत्यये (विप्रतिपत्तौ); **चन्द्र.**१३३ यच्चा (यत्रा); **व्यसौ.**६३ भवेत् (च यत्) तत् (स्यात्); **बाल.**२।९२ परीक्ष्यं तत् (परीक्षेत); **सेतु.**११३ विप्रत्यये (प्रतिपत्तौ); **प्रका.**४२; **समु.**४५.

(३) हेत्वन्तरकृतं दायादादेर्वञ्चनार्थं कृतम् । आगमः एतावतो धनस्य संभवोऽस्यास्ति नेत्येवमात्मकः। हेतुरनुमानम् । एवं धनिनामाङ्कलेख्यमपि वञ्चनादिहेतुकं परीक्ष्यम् । स्मृच.६५

(४) यत्र पुनरन्य एव ऋणं ददाति पत्रं च केनापि हेतुनाऽन्यनाम्ना लिखितं तत्र विप्रतिपत्तौ संबन्धागमादिना हेतुना निर्णयः यस्य नाम्ना तत्पत्रं तेन सः । यदि तस्यैव द्विविधविश्वासहेतुः संबन्धः कश्चिदस्ति । एवमागमे तदीयपञ्जिकायां यदि पुरातनक्रयेण पत्रस्य दिवसमासद्रव्यसंख्यापरिमाणानि प्रतीयन्ते । तदा तदपि प्रमाणमेव । तदाह—लेख्यमिति । ×स्मृसा.९८

(५) यच्च लेख्यं अन्यनामाङ्कम् । अन्यस्य नाम अन्यनाम, अन्यनाम अङ्कः लक्षणं यस्य तदन्यनामाङ्कं, अन्यस्य नाम्ना कृतं स्यात् । हेत्वन्तरेण कृतं पितृभ्रातृभयेन श्वशुरादिनाम्ना कृतम् । विपरीतः प्रत्ययो यस्य स विप्रत्ययः । विप्रत्यये विसंवादिते तस्मिन् ममैवैतन्नान्यस्येति, तत् संबन्धागमहेतुभिः परीक्ष्यम् । संबन्धिभ्य आगमः संबन्धागमः । सुहृज्ज्ञातिबान्धवास्तत्कालानुकालवृत्तं जानन्ति क उदयं गृण्हन्ति कोऽभिमन्ता क उदासीन इत्यादि । हेतवः प्रागभिहिताः साधारणनयादयः । नाभा.२।१२१

**[१]लिखितं लिखितेनैव साक्षिमत्साक्षिभिर्हरेत् ।**
**साक्षिभ्यो लिखितं श्रेयो लिखितान्न तु साक्षिणः ।।**

(१) अत्र हरेदिति क्रियापदेन लिखितं कृत्वा ऋणिकेन धनिकस्य धने प्रवेशिते तेनैव हस्तीकृतेन ऋणी तमृणसंबन्धं निर्हरेत् । यदि पुनर्धनी तस्य लिखितस्य हृतनष्टदग्धादि कारणमुपन्यस्यति, ततस्तदीयं प्रणष्टविशुद्धिपत्रं ग्राह्यम् । अत इदमुक्तं 'लिखितं लिखितेनैव' हरेदिति । यत्र पुनः प्रथमसंव्यवहारकरणं साक्षिमत् संजातं, तत्र ऋणे विशोध्यमाने तैरेव साक्षिभिः प्रत्यक्षीकृतैस्तदृणं निर्हरेत् । अभा.६३

(२) लिखितानारूढसाक्षिविषयमेतत् । अप.२।९२

(३) अविद्यमानसाक्ष्यादिकं लिखितं तत्सजातीयलिखितादिना शोधयेदित्यर्थः । *स्मृच.६३

(४) लिखितं सपत्रं व्यवहारं पत्रवशेनैव समापयेत् । साक्षिमदपत्रं व्यवहारं साक्षिवशेनैव समापयेत् । यत्रैकः पत्रं दर्शयत्यन्यो नैवमिति साक्षिण उपस्थापयति, तत्र साक्षिभ्यो लिखितं श्रेयः प्रत्ययकरं प्रमाणमित्यर्थः । यतो लिखितेन तु साक्षिणः लिखितपक्षे पत्रसाक्षिणो विद्यमानत्वात् । इतरत्र साक्षिण एव । साक्षिणश्चान्यथा शक्याः संपादयितुम् । अथवा लिखितं श्रेयः । कस्मात् । यस्माल्लिखितेन सह साक्षिणोऽविनाभूताः । तस्माद् बलवत्तरं लिखितमिति । नाभा.२।१२२

**[१]दुष्टे पत्रे स्फुटं दोषं नोक्तवानृणिको यदि ।**
**ततो विंशतिवर्षाणि क्रान्तं पत्रं स्थिरं भवेत् ।।**

(१) यदि सदोषं पत्रं, कथं विंशतिवर्षपर्यन्तं पत्रवतो भुक्तिरित्येवं संदिग्धप्रामाण्यं लेख्यं दिव्यप्रतिसाधनार्थं स्थिरीभवतीत्यर्थः । अप.२।९२

(२) तस्यामयर्थः— दौष्ट्यचिरकालभोगाभ्यां संदिग्धप्रामाण्यकं लेख्यं दिव्येन साधितार्थं स्थिरं भवेदिति। चिरकालत्वमात्रेण स्थैर्यासंभवात् । स्मृच.६५

**[२]छिन्नभिन्नहृतोन्मृष्टनष्टदुर्लिखितेषु च ।**
**कर्तव्यमन्यल्लेख्यं स्यादेष लेख्यविधिः स्मृतः ।।**

(१) अत्र लिखितमाहात्म्यं प्रथमोक्तमपि पुनरत्र प्रस्तावागतमुच्यते — 'देशकालफलद्रव्यप्रमाणावधिनिश्चये । सर्वसंदेहविच्छेदि लिखितं चक्षुरुत्तमम्'।। एतदर्थं धनिना लिखितं कारितमपि यदि कथमपि प्रमादाद्दग्धं वा छिन्नं वा भवति । अथवा उदकतैलादिद्रव-

---

× व्यत., सेतु. स्मृसागतम् ।

(१) **नासं.**२।१२२ तान्न (तेन); **नास्मृ.**४।१४५; **अभा.** ६३ साक्षि...रेत् (तेन हस्तीकृतेन तु); **मेधा.**८।३ साक्षिभिर्हरेत् (चैव साक्षिभिः) तान्न (तेन); **अप.**२।९२ (=) हरेत् (नयेत्); **स्मृच.**६३ श्रेयो (ज्ञेयं); **स्मृसा.**१२२ उत्त.; **प्रका.** ४१ स्मृचवत्; **समु.**४४ स्मृचवत्.

* शेषं अपवत् ।

(१) **अप.**२।९२ क्रान्तं (कान्तं); **स्मृच.**६५; **प्रका.**४७.

(२) **नासं.**२।१२३ कर्त...स्याद् (लेख्यमन्यद्धि कर्तव्यं); **नास्मृ.**४।१४६; **अभा.**६२ छिन्न ... न्मृष्ट (दग्धभिन्नहृतछिन्न); **स्मृच.**६१ नष्ट (दग्ध); **स्मृसा.**९७ हृतो (कृतो) लेख्यं... लेख्य (लिखितमेष एव); **व्यत.**२२१ हृतो (कृतो) लेख्यं स्यादेष (लिखितं ह्येष); **चन्द्र.**१३२ हृतोन्मृष्ट (कृतम्लिष्ट) लेख्यं स्याद (लिखितं); **सेतु.**११३ लेख्यं स्यादेष (लिखितं ह्येष); **प्रका.** ४० स्मृचवत्; **समु.**४२ स्मृचवत्.

वस्तुना भिन्नं भवति। अथवा चौरैर्गृहीतं भवति। अथवा प्रधाननामाक्षराङ्कप्रदेशेषु कुत्सितलिखिताद् उन्मृष्टं भवति। अथवा पतितत्वान्नष्टं भवति। अथवा दुर्लिखितमिति प्रधानाङ्कस्थाने संजातन्यूनाधिकाङ्कदोषम्। सहस्रे प्रयुक्ते एकाङ्कस्योपरि कुलेखको बिन्दुद्वयमेव यदा ददाति तदा तत् शतमेव भवति। नवशतानां मूलनाशः संभवति। अथवा शते प्रयुक्ते एकाङ्कोपरि शून्यत्रयं ददाति तदा धनिकदोषाद् ऋणिककृतसहस्रमिथ्याप्रयुक्तशतस्यापि प्रणाशः। अथवा न्यूनाधिकप्रधाननामाक्षरम्। 'ग्राहको गोसमः' इति लेखनीये मि (ग?) लितैकाक्षरम्— लिखितागमः। अयं नाक्षरदोषः। अथवा 'ग्राहको गोसमः' एवं लेखनीये लिखितं 'समः'। एवमूनाधिकाङ्काक्षरप्रधानस्थानभ्रान्तिकारि दुर्लिखितमुच्यते। एवं च तेषु दग्धभिन्नहृतच्छिन्ननष्टदुर्लिखितदोषैः अवसन्नभूतेषु पुनरपि कालान्तरे कालदायकद्रव्यफलप्रमाणादीनामविस्मरणार्थं कर्तव्यमन्यल्लेख्यं स्यादित्युक्तं महर्षिणा। तच्च तेन निश्चितं कर्तव्यमिति धनिकर्णिकयोर्विशेषनामोच्चारणं न कृतम्। यथासंभवकृते लेख्यप्रमाणार्थं यदि ऋणी प्रत्यक्ष एव तिष्ठति, तदासौ धनिना अन्यलेख्यकरणाय विधारणीयः। तेनाप्यवश्यमेव करणीयमन्यल्लेख्यं स्यादिति। अथ कदाचिद् ग्राहको मृतः, दूरदेशान्तरे व्यवहितो वा वर्तते, यत्रास्य वा यं एकतमः प्रमादः संपन्नः, तदा धनिनैवात्मना नित्यानित्यतालोचनस्थितेन स्वसंततेरनष्टद्रव्यसंबन्धकरणार्थिना अल्पं भूर्जचोरकं वा समानीयान्यं लेखकमाहूय तथैव तदवस्थितनवाङ्कक्रमपरिपूर्णं तेनैव धनिना कर्तव्यमन्यल्लेख्यं स्यादेवं लेख्यविधिः स्मृतः।

अभा.६२-६३

(२) यदि तु अविप्रतिपत्तिदशायामेव पूर्वलिखनानुसारेण लिखनान्तरं क्रियते तदा तदपि प्रमाणमेव।

चन्द्र.१३२

(३) छिन्नं मूषिकादिभिः। भिन्नं छिद्रितं पिपीलिकादिभिः। हृतं चोरादिभिः। उन्मृष्टं ध्वस्ताक्षरमुदककालादिना। नष्टं पतितं विस्मृतम्। दुर्लिखितेऽवधीरिते लेख्यमन्यच्छुद्धं कर्तव्यम्। एष लेख्यविधिः स्मर्यमाणः।

नाभा.२।१२३

## बृहस्पतिः

लेख्यप्रकाराः तल्लक्षणानि च

**साक्षिणामेष निर्दिष्टः संख्यालक्षणनिश्चयः।**
**लिखितस्याधुना वच्मि विधानमनुपूर्वशः॥**
**षाण्मासिकेऽपि विषये भ्रान्तिः संजायते यतः।**
**धात्राऽक्षराणि सृष्टानि पत्रारूढान्यतः पुरा॥**
**राजलेख्यं स्थानकृतं स्वहस्तलिखितं तथा।**
**लेख्यं तु त्रिविधं प्रोक्तं भिन्नं तद्बहुधा पुनः॥**
**भागदानक्रयाधानसंविद्दासऋणादिभिः।**
**सप्तधा लौकिकं लेख्यं त्रिविधं राजशासनम्॥**

(१) अत्रापि न संख्या विवक्षिता। अधिकानामपि लेख्यानामेतेभ्यो दर्शितत्वादत एवात्रादिग्रहणं कृतम्। अन्यथा गणितैरेव सप्तविधत्वसिद्धेरादिग्रहणमपार्थं स्यात्। तेनैव तत् ज्ञायते लेख्यसंख्यानवधारणार्थेति। अतो विविधसंख्यावद्वचनानामविरोधः।

स्मृच.६०

(२) यत्पूर्वमुदाहृतं 'लिखितं दशधा स्मृतम्' इति तद्विशदत्वेन संपन्नम्। लौकिकस्य सप्तविधत्वात्। राजपत्रस्य त्रिविधत्वात्। शासनमेकं, जयपत्रं द्वितीयं, आज्ञाप्रज्ञापनपत्रयोरेकीकारेण तृतीयं द्रष्टव्यम्।

पमा.१२१

---

(१) **व्यमा.**३३६ मेष (मेव) निश्च (निर्ण) विधानम (यथावद्); **व्यक.**६०; **पमा.**११९; **व्यसौ.**५७ निश्च (निर्ण); **व्यप्र.**१४१; **प्रका.**३५ प्रजापतिः; **समु.**३९.

(२) **व्यमा.**३३६; **व्यक.**६०; **पमा.**११९ षा... ये (ऋणादिकेऽपि समये); **व्यचि.**६२ विष (सम); **स्मृचि.**४२ व्यचिवत्; **व्यत.**२२० व्यचिवत्; **व्यसौ.**५७ व्यचिवत्; **व्यप्र.**१४१ यतः (नृणाम्) शेषं व्यचिवत्; **प्रका.**३५ पमावत्, प्रजापतिः; **विव्य.**१५ विष (सम) सृष्टानि (शस्तानि).

(३) **व्यमा.**३३६; **अप.**२।८४ तु (तत्); **व्यक.**६०; **पमा.**११९ भि...पुनः (विदुरेवं बुधाः पुनः); **नृप्र.**११ भिन्नं (आद्यं); **व्यसौ.**५७-५८ खितं (खनं); **व्यप्र.**१४१; **व्यम.**११; **प्रका.**३५; **समु.**३९ बहुधा (दशधा).

(४) **स्मृनी.**४।६६८-६६९ भाग (भोग) लेख्यं (चैतत्); **व्यमा.**३३७ क्रया (क्रिया); **अप.**२।८४ धान (धीनां); **व्यक.**६०; **स्मृच.**६०; **पमा.**११९ धान (धानं); **नृप्र.**११ व्यमावत्; **व्यसौ.**५८ व्यमावत्; **व्यप्र.**१४१ व्यमावत्; **व्यम.**१२; **विता.**१२९ दास (दास्य); **प्रका.**३९ व्यमावत्; **समु.**४२.

(३) भागो विभागः। आधानमाधीकरणम्। संवित् समयः। आधिशब्देन विशुद्धाधिग्रहणम्। व्यप्र.१४१

(४) आदिशब्दाद्विशुध्यादिपत्रग्रहणम्। व्यम.१२

(५) अन्यदपि संधिपत्रं सीमापत्रं ऋणमोचनपत्रं चेति त्रयोदश भेदाः। ते मदनरत्ने ज्ञेया विस्तारान्नोच्यन्ते। विता.१२९

**[1]भ्रातरः संविभक्ता ये स्वरुच्या तु परस्परम्।**
**विभागपत्रं कुर्वन्ति भागलेख्यं तदुच्यते ॥**
**[2]भूमिं दत्वा तु यत्पत्रं कुर्याच्चन्द्रार्ककालिकम्।**
**अनाच्छेद्यमनाहार्यं दानलेख्यं तु तद्विदुः ॥**
**[3]गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम्।**
**पत्रं कारयते यत्तु क्रयलेख्यं तदुच्यते ॥**
**[4]जङ्गमं स्थावरं बन्धं दत्वा लेख्यं करोति यत्।**
**गोप्यभोग्यक्रियायुक्तमाधिलेख्यं तु तन्मतम् ॥**
**[5]ग्रामो देशश्च यत्कुर्यात् मतलेख्यं परस्परम्।**
**राजाऽविरोधि धर्मार्थं संवित्पत्रं वदन्ति तत् ॥**
**[1]वस्त्रान्नहीनः कान्तारे लिखितं कुरुते तु यत्।**
**कर्माणि ते करिष्यामि दासपत्रं तदुच्यते ॥**
**[2]धनं वृद्धया गृहीत्वा तु स्वयं कुर्याच्च कारयेत्।**
**उद्धारपत्रं तत्प्रोक्तमृणलेख्यं मनीषिभिः ॥**
**[3]देशाचारयुतं वर्षमासपक्षाहवृद्धिमत्।**
**ऋणिसाक्षिलेखकानां हस्ताङ्कं लेख्यमुच्यते ॥**
**[4]पूगश्रेण्यादिकानां तु समयस्य स्थितेः कृतम्।**
**स्थितिपत्रं तु तत्प्रोक्तं मन्वादिस्मृतिवेदिभिः ॥**
**[5]दत्वा भूम्यादिकं राजा ताम्रपत्रे पटेऽथवा।**
**शासनं कारयेत् धर्म्यं स्थानवंशादिसंयुतम् ॥**

कारयेत् संधिविग्रहाद्यधिकारिणेति शेषः। तस्यैवात्र लेखने कर्तृत्वनियमात्। स्मृच.५५

**[6]मातापित्रोरात्मनश्च पुण्यायाऽमुकसूनवे।**
**दत्तं मयाऽमुकायाद्य दानं सब्रह्मचारिणे ॥**

(१) सब्रह्मचारिणे सहाध्यायिने। व्यक.६३

---

(१) **व्यमा.**३३७ स्वरुच्या तु (विरुद्धत्वात्); **अप.**२।८४; **व्यक.**६१ गपत्रं (गं यत्र); **स्मृच.**६०; **पमा.**१२०; **स्मृचि.**४३; **नृप्र.**११; **दात.**१७९; **सवि.**११६ पत्रं (लेख्यं) नारदः; **व्यसौ.**५८; **दानि.**५ नारदः; **व्यप्र.**१४१; **व्यम.**१२; **प्रका.**३९; **समु.**४२; **विच.**१०३.

(२) **व्यमा.**३३७ यत् (यः); **अप.**२।८४ तु यत् (यस्तु); **व्यक.**६१ यत् (यः); **स्मृच.**६०; **पमा.**१२० कुर्यात् (कुर्युः) तु तद्विदुः (तदुच्यते); **स्मृचि.**४३ यत् (यः); **नृप्र.**११; **सवि.**११६ कालि (साक्षि) लेख्यं तु तद्विदुः (पत्रं तदुच्यते) नारदः; **व्यसौ.**५८; **व्यप्र.**१४१; **व्यम.**१२; **प्रका.**३९; **समु.**४२ तद्विदुः (तत्स्मृतम्) स्मृत्यन्तरम्. (३) **व्यमा.**३३७ यत्तु (यस्तु); **अप.**२।८४.; **व्यक.**६१; **स्मृच.**६०; **पमा.**१२० यत्तु (यत्र); **स्मृचि.**४३ व्यमावत्; **नृप्र.**११ पमावत्; **व्यसौ.**५८; **व्यप्र.**१४१; **व्यम.**१२; **प्रका.**३९; **समु.**४२.

(४) **व्यमा.**३३७ बन्धं दत्वा (दत्वा बन्धं) यत् (यः) तु तन्मतम् (तदुच्यते); **अप.**२।८४ मतम् (स्मृतम्); **व्यक.**६१ यत् (यः) शेषं अपवत्; **स्मृच.**६० तु तन्मतम् (तदुच्यते); **पमा.**१२० यत् (यः) शेषं स्मृचवत्; **स्मृचि.**४३ बन्धं (चान्यत्) शेषं अपवत्; **नृप्र.**११ पमावत्; **व्यसौ.**५८ पमावत्; **व्यप्र.**१४१ स्मृचवत्; **व्यम.**१२ स्मृचवत्; **प्रका.**३९ स्मृचवत्; **समु.**४२ स्मृचवत्.

(५) **व्यमा.**३३७ यत् (यः) मत (मतं) तत् (च); **अप.**२।८४ र्थं (र्थे); **व्यक.**६१ मत (सत्यं) र्थं (र्थे); **स्मृच.**६० मत (मतं); **पमा.**१२० ग्रामो...मत (ग्रामादिसमयात्कुर्यान्मतं); **स्मृचि.**४३ र्थं (र्थे); **नृप्र.**११; **सवि.**११६ मत (मते) पितामहः; **व्यसौ.**५८ स्मृचवत्; **व्यप्र.**१४१; **व्यम.**१२ स्मृचवत्; **प्रका.**३९; **समु.**४२ स्मृचवत्.

(१) **व्यमा.**३३७ यत् (यः); **अप.**२।८४ णि (हं) दुच्यते (दिष्यते); **व्यक.**६१ यत् (यः) दुच्यते (दिष्यते); **स्मृच.**६०; **पमा.**१२० रिष्यामि (रोमीति); **नृप्र.**११ व्यकवत्; **स्मृचि.**४३ यत् (यः); **व्यसौ.**५८ यत् (यः); **व्यप्र.**१४२ यत् (यः); **व्यम.**१२ हीनः (हीन); **प्रका.**३९; **समु.**४२.

(२) **व्यमा.**३३७; **अप.**२।८४; **व्यक.**६२; **स्मृच.**६०; **पमा.**१२०; **स्मृचि.**४३; **नृप्र.**११ त्वा तु (तं तु) च्च (त्तु); **व्यसौ.**५८ कुर्याच्च (कृत्वा तु) द्धार (द्दाम) लेख्यं (पत्रं); **व्यप्र.**१४२; **व्यम.**१२ धनं (धन); **प्रका.**३९; **समु.**४२ वृद्धया गृहीत्वा तु (गृहीत्वा वृद्ध्यर्थं).

(३) **व्यमा**३३७; **व्यक.**६२; **पमा.**११९ क्षाह (क्षादि); **स्मृचि.**४३; **नृप्र.**११ पमावत्; **व्यसौ.**५८; **प्रका.**३५ पमावत्, प्रजापतिः; **विव्य.**१५ क्षाह (क्षर्तु). (४) **सवि.**११६. (५) **व्यमा.**३३७ पत्रे पटेऽथवा (पट्टेऽथवा पटे); **स्मृच.**५५ पत्रे पटेऽथवा (पट्टे तथा पटे); **पमा.**१२० धर्म्यं (धर्मं); **नृप्र.**११ पत्रे (पट्टे); **सवि.**२७ व्यमावत्; **व्यप्र.**१४४ पत्रे (पट्टे) वंशा (वंश्या); **विता.**११८ पत्रे (पट्टे); **प्रका.**३५ स्मृचवत्; **समु.**३९ व्यमावत्.

(६) **व्यक.**६२; **व्यप्र.**१४४; **विता.**११८.

(२) सब्रह्मचारिणे अमुकशाखाध्यायिने। व्यप्र.१४४

**अनाच्छेद्यमनाहार्यं सर्वभागविवर्जितम् ।**
**चन्द्रार्कसमकालीनं पुत्रपौत्रान्वयानुगम् ॥**

(१) सर्वभाव्यविवर्जितं देवब्राह्मणनापितादिलभ्यवर्जितम् । व्यक.६३

(२) सर्वभागविवर्जितं सकलराजपुरुषादिदेयांशरहितम् । व्यप्र.१४४

(३) अन्यांशहीनमित्यर्थः । विता.११८

**दातुः पालयितुः स्वर्ग्यं हर्तुर्नरकमेव च ।**
**षष्टिवर्षसहस्राणि दानच्छेदफलं लिखेत् ॥**

आगामिनृपतिबोधनार्थमिति शेषः । स्मृच.५६

**स्वदत्तां परदत्तां वा हरेद्यस्तु वसुंधराम् ।**
**षष्टिवर्षसहस्राणि विष्टायां जायते कृमिः ॥**
**समुद्रं वर्षमासादिधनाध्यक्षाक्षरान्वितम् ।**
**ज्ञातं मयेति लिखितं संधिविग्रहलेखकैः ।**
**एवंविधं राजकृतं शासनं समुदाहृतम् ॥**
**देशादिकं यस्य राजा लिखितेन प्रयच्छति ।**
**सेवाशौर्यादिना तुष्टः प्रसादलिखितं तु तत् ॥**

अतो राजकीयं पञ्चविधम् । चतुर्विधमित्यनास्थयोक्तमिति मन्तव्यम् । स्मृच.५८

**पूर्वोत्तरक्रियावादनिर्णयान्ते यदा नृपः ।**
**प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते ॥**

(१) व्यवहारदर्शिनो नृपस्य प्राधान्यान्निर्देशः । भाषोत्तरे यथोक्ते क्रियापत्रे साक्षिदिव्यादिना निर्णयश्च जयपराजयावधारणम् । निर्णयकालावस्थिताश्च मध्यस्था इत्यादि सर्वं लेखनीयं निरूपणस्य सम्यक् तत्त्वप्रदर्शनार्थम् । भाषोत्तरलिखनं तु पूर्वन्यायकरणे हेत्वन्तरेण प्रत्यवस्थाननिराकरणार्थम् । न हि न गृहीतं मयेति मिथ्योत्तरेण प्रत्यवस्थितौ जितस्य पुनः परिशुद्धं मयेति प्रत्यवस्थानं संभवति । व्यमा.३०९

(२) पूर्वोत्तरक्रियायुक्तमिति वृत्तान्तोपलक्षणार्थम् । स्मृच.५७

**यद्वृत्तं व्यवहारे तु पूर्वपक्षोत्तरादिकम् ।**
**क्रियावधारणोपेतं जयपत्रेऽखिलं लिखेत् ॥**

आदिशब्देन साक्षिवचनसभ्यप्राड्विवाककुलानां शास्त्रस्य च मतं स्वहस्तेनान्यहस्तेन वा लिखेदिति तज्जयपत्रम् । सवि.११२

---

(१) **व्यक.**६२ भाग (भाव्य) नुगम् (गतम्) व्यासः; **स्मृच.**५६ भाग (भाव्य); **पमा.**१२० सर्वभाग (सर्वं भाव्य); **स्मृचि.**४३ भाग (भोग) नुगम् (गतम्) व्यासः; **नृप्र.**११ स्मृचवत्; **व्यसौ.**६० स्मृचवत्; **व्यप्र.**१४४; **विता.**११८; **प्रका.**३५ स्मृचवत्; **समु.**३९ स्मृचवत्. [व्यक., स्मृचि., व्यप्र., विता. एषु ग्रन्थेषु श्लोकार्धौ व्यत्यासेन पठितौ.]

(२) **व्यक.**६३ पू., व्यासः; **स्मृच.**५६ र्ग्यं (र्गं) ष्टि (ष्टिं); **पमा.**१२१; **स्मृचि.**४३ स्मृचवत्, पू., व्यासः; **नृप्र.**११; **सवि.**११२ (=) र्ग्यं (र्गं) तुं (न्तु) ष्टि (ष्टिः); **व्यसौ.**६० पू., व्यासः; **व्यप्र.**१४४ दान (दानो); **विता.**११८ र्ग्यं (र्गो) नच्छेद (नोच्छेदे); **प्रका.**३६ र्ग्यं (र्गं); **समु.**३९ स्मृचवत्.

(३) **विता.**११८-११९; **विव्य.**४७ (=) (स विष्टायां कृमिर्भूत्वा पच्यते पितृभिः सह).

(४) **पमा.**१२१ मुद्रं (मुद्रा) समु (तदु); **नृप्र.**११ समु (तदु); **व्यसौ.**६०; **व्यप्र.**१४४; [आद्यमर्धद्वयं व्यत्यासेन पठितम्]; **विता.**११९ लिखितं (लेख्यं तु) [आद्यमर्धद्वयं व्यत्यासेन पठितम्]; **समु.**३९.

(५) **व्यमा.**३३७; **व्यक.**६३; **स्मृच.**५८ यस्य (यत्र) तु त (हि त); **पमा.**१२१ तेन (तं तु); **नृप्र.**११ यस्य (चास्य) तेन (तं तु); **सवि.**११३ (=) तु त (हि त); **व्यसौ.**६०; **व्यप्र.** १४४ तु तत् (तथा); **व्यम.**१३; **विता.**११९; **प्रका.**११० स्मृचवत्; **समु.**४१ स्मृचवत्.

(१) **व्यमा.**३०९ वाद (युक्तं) न्ते (न्तं): ३५३ यदा (तदा) शेषं पूर्ववत्; **व्यक.**६३ वाद (युक्तं) न्ते (न्तं); **स्मृच.**५७,१२० व्यकवत्; **पमा.**१२१:२०० व्यकवत्; **व्यचि.**३० यिने (यिनं) शेषं व्यकवत्; **स्मृचि.** ६० व्यकवत्, कात्यायनः; **नृप्र.**११ न्ते (न्तं): १७-१८ व्यकवत्; **व्यत.**२३० र्वोत्तर (र्णोक्त) लेख्यं (पत्रं) शेषं व्यकवत्; **व्यसौ.**६० वाद (वादं) न्ते (न्तं); **व्यप्र.**१४४; **व्यम.**१३; **विता.**११९; **बाल.**२।९१ वाद (वादि); **सेतु.**१२५ व्यकवत्; **प्रका.**३६ व्यकवत्; **समु.**४० व्यकवत्; **विव्य.**९ व्यकवत्.

(२) **व्यमा.**३०९ तु (षु) ऽखिलं (ऽथ सं): ३३७ तु (षु): ३५३ तु (षु) ऽखिलं (ऽर्थिनं); **व्यक.**६३; **स्मृच.**५७; **व्यचि.**३० रे तु (रात्तु); **स्मृचि.** ६० कात्यायनः; **व्यत.**२३० तु (षु); **सवि.**११२ (=); **व्यसौ.**६० ऽखिलं (तु तत्); **सेतु.**१२५ व्यचिवत्; **प्रका.**३६; **समु.**४०.

**[1]साधयेत्साध्यमर्थं यच्चतुष्पादान्वितं च यत् ।**
**राजमुद्रान्वितं चैव जयपत्रकमिष्यते ॥**
**[2]अन्यवाद्यादिहीनेभ्य इतरेषां प्रदीयते ।**
**वृत्तानुवादसंसिद्धं तच्च स्याज्जयपत्रकम् ॥**

इतरेषामहीनवादिनामित्यर्थः । स्मृच.५८

लेख्यपरीक्षा

**[3]त्रिविधस्यास्य लेख्यस्य भ्रान्तिः संजायते यदा ।**
**ऋणिसाक्षिलेखकानां हस्तोक्त्या शोधयेत्ततः ॥**
**[4]उद्याममुदयादानादाधानं फलसंग्रहात् ।**
**प्रयोगित्वं धनाद्यत्वात् ज्ञेयं यत्रोपधिः कृतः ॥**

उद्याममृणिदेयादानात् । आधानमाधिः । प्रयोगित्वमुत्तमर्णत्वम् । व्यक.६७

**[5]कुलश्रेणिगणादीनां यथाकालं प्रदर्शयेत् ।**
**श्रावयेत्स्मारयेच्चैव यथा स्याद्बलवत्तरम् ॥**
**[6]मुमूर्षुशिशुभीतार्तस्त्रीमत्तव्यसनातुरैः ।**
**निशोपधिबलात्कारकृतं लेख्यं न सिध्यति ॥**

मुमूर्ष्वादिकृतं अयथार्थशङ्कया न प्रमाणतां प्रतिपद्यते इति बृहस्पत्यादिवचनानां तात्पर्यार्थः । स्मृच.६२

**[1]दूषितो गर्हितः साक्षी यत्रैकोऽपि निवेशितः ।**
**कूटलेख्यं तु तत्प्राहुर्लेखको वाऽपि तद्विधः ॥**
**[2]यदुज्ज्वलं चिरकृतं मलिनं चाल्पकालिकम् ।**
**भग्नोन्मृष्टाक्षरयुतं लेख्यं कूटत्वमाप्नुयात् ॥**
**[3]लेख्यदोषास्तु ये केचित्साक्षिणां चैव ये स्मृताः ।**
**वादकाले तु वक्तव्याः पश्चादुक्तान्न दूषयेत् ॥**

(१) पश्चादुक्तात् प्रमाणपरीक्षापर्यवसानात् पश्चान्न दूषयेत् । स्मृच.६२

(२) उक्तानुक्तवतः वक्तुमारब्धवत इत्यर्थः । 'आदिकर्मणि क्तः कर्तरि च' ( व्यासू.३।४।७१ ) इति कर्तरि क्तः । व्यम.१७

**[4]ज्ञात्वा कालं च देशं च कुशलाः कूटकारकाः ।**
**कुर्वन्ति सदृशं लेख्यं तद्यत्नेन विचारयेत् ॥**
**[5]स्त्रीबालार्तान् लिप्यविज्ञान् वञ्चयन्ति स्वबान्धवाः ।**
**लेख्यं कृत्वा स्वनामाङ्कं ज्ञेयं युक्त्यागमैस्तु तत् ॥**

---

(१) **मिता.**२।९१ स्मरणम्; **स्मृच.**५७ यच्च... च यत् ( तु चतुष्पादान्वितं जये); **व्यउ.**४५ ( = ) च यत् (च तत्) द्रान्वितं (द्राङ्कितं) ; **विता.**१२३ द्रान्वितं (द्राङ्कितं) चैव (तत्र) स्मृत्यन्तरम्; **प्रका.**३७ स्मृचवत्; **समु.**४० स्मृचवत्.

(२) **स्मृच.**५८ तच्च (तत्र); **सवि.**११२ वाद्या (विद्या) वृत्ता (व्यक्ता) पत्र (पत्रि); **प्रका.**३७; **समु.**४०.

(३) **व्यक.**६६-६७ कात्यायनः; **पमा.**१२९:१३४ यदा (तदा) त्ततः (त्तु तत्); **नृप्र.**१२ शो (सा); **व्यसौ.**६२ स्यास्य (स्यापि) हस्तो...तः (स्वहस्तोक्त्या तु साधयेत्); **समु.**४२ त्रि (द्वि) त्ततः (त्तदा).

(४) **व्यक.**६७ कात्यायनः; **व्यसौ.**६२.

(५) **व्यक.**६६; **व्यसौ.**६४; **व्यप्र.**१५०.

(६) **व्यमा.**३३८ तार्त (तार्तैः) निशो...त्कार (देशोपाधिबलात्कारैः); **अप.**२।८९; **व्यक.**६४; **स्मृच.**६२; **पमा.**१३१ (मुमूर्षुहीनलुप्तार्थैरुन्मत्तव्यसनातुरैः) निशो (विषो); **दीक.**३९ तार्त (तार्तैः); **व्यत.**२२१ मुमूर्षु (सुमृष्ट) तार्त (तार्तैः) शोपधि (शापत्सु); **सवि.**११९ शिशु (बाल) कार (कारैः) हारीतः; **व्यम.**१३ शिशु (शत्रु); **विता.**१३२ शिशु (शत्रु); **प्रका.**४०; **समु.**४३.

(१) **अप.**२।८९ कोऽपि(को वि) हुः (हु) तद्विधः (तादृशः); **व्यक.**६५ त्रैकोऽपि (च्चैको वि) प्राहुः (प्रोक्तं); **पमा.**१३१; **नृप्र.**१२ त्रै (श्चै); **व्यसौ.**६२ कोऽपि (को वि); **व्यप्र.**१४९ प्राहुः (प्रोक्तं); **व्यम.**१.३ कोऽपि (को वि) प्राहुः (प्रोक्तं); **विता.**१३२ वेशितः (वेश्यते) (सर्वं तत्साक्षिदोषेण कूटं लेख्यं प्रकीर्तितम्); **समु.**४३ व्यसौवत्.

(२) **अप.**२।८९ चाल्प (स्वल्प) ग्नोन्मृष्टा (ग्नं म्लिष्टा); **व्यक.**६५ दुज्ज्वलं (दुर्लवणं) चाल्प (स्वल्प); **स्मृच.**६२ चाल्प (स्वल्प); **पमा.**१३१ यदु (अत्यु); **व्यसौ.**६२ स्मृचवत्; **प्रका.**४० स्मृचवत्; **समु.**४३ स्मृचवत्.

(३) **अप.**२।७२; **व्यक.**५० बृहस्पतिकात्यायनौ; **स्मृच.**६२; **सवि.**१२० णां (णः); **व्यसौ.**४८ उक्तान् (वक्ता); **व्यप्र.**१२२; **व्यम.**१७; **प्रका.**४०.

(४) **व्यक.**६५-६६ च देशं च (देशकार्यं ); **स्मृच.**६५ कालं च देशं च ( कार्यं देशकाल ); **सवि.**१२२ कालं च देशं च (काले देशकार्ये); **व्यसौ.**६२; **व्यप्र.**१४८ कालं च देशं ( देशं च कालं ); **प्रका.**४२ स्मृचवत्; **समु.**४५ स्मृचवत्.

(५) **व्यक.**६६ युक्त्या (शक्त्या); **स्मृच.**६५; **सवि.**१२२ स्वना (ऽन्यना); **व्यसौ.**६२ र्तान् लिप्यविज्ञान् (र्तालिपिज्ञांश्च) स्तु तत् (स्ततः); **व्यप्र.**१४८ व्यसौवत्; **प्रका.**४२; **समु.**४५ विज्ञा (भिज्ञा).

वाचकैर्यत्र सामर्थ्यमक्षराणां विहन्यते ।
क्रियाणां सर्वनाशः स्यादनवस्था च जायते ॥

क्रियाणां लेख्यक्रियाणाम् । स्मृच.६६

[2] न जातु हीयते लेख्यं साक्षिभिः शपथेन वा ।
अदर्शनाऽश्राविताभ्यां हानिं प्राप्नोत्युपेक्षया ॥

बहुकालव्यापिन्येति शेषः । स्मृच.६६

[3] आढ्यस्य निकटस्थस्य यच्छक्तेन न याचितम् ।
शुद्धं तु शङ्कया तत्र लेख्यं दुर्बलतामियात् ॥

[4] लेख्यं त्रिंशत्समातीतमदृष्टाऽश्रावितं च यत् ।
न तत्सिद्धिमवाप्नोति तिष्ठत्स्वपि हि साक्षिषु ॥

अप्रदर्शनाश्रावणाप्रार्थनैः पत्रस्याप्रामाण्यात् सुतरां साक्षिणामप्रामाण्यं दिव्यस्य सुतरामनवकाशः, तावत्कालाप्रार्थनादीनामानृण्यगमकत्वमन्यथादृश्यमानत्वादिति भावः । बलवत्पत्रस्य दुर्बलत्वं वदता दुर्बलयोः साक्षिदिव्ययोर्दण्डापूपन्यायादप्रामाण्यमुक्तम् । व्यमा.३४०

[5] प्रयुक्ते शान्तलाभे तु लिखितं यो न दर्शयेत् ।
न याचते च ऋणिकं तत्संदेहमवाप्नुयात् ॥

प्रयुक्ते धने शान्तलाभे लिखितमुपरते लाभे यो न पत्रं दर्शयति न चाधमर्णं याचते, तल्लेख्यं संदेहमप्रामाण्यविषयमवाप्नुयादित्यर्थः । अप.२।९२

[6] उन्मत्तजडबालानां राजभीतप्रवासिनाम् ।
अप्रगल्भभयार्तानां न लेख्यं हानिमाप्नुयात् ॥

अस्य ( लेख्यं त्रिंशदित्यस्य ) अपवादमाह बृहस्पतिः—उन्मत्तेति । उन्मत्ततादिनैवाप्रार्थनोपपत्तेः । व्यमा.३४०

[1] उद्धरेल्लेख्यमाहर्ता तत्पुत्रो भुक्तिमेव तु ।
अभियुक्तः प्रमीतश्चेत्तत्सुतोऽपि तदुद्धरेत् ॥

अभियुक्तेति लेख्यसाधुत्वज्ञानार्थमभियुक्ते लेख्यग्रहीतरि तदविज्ञाप्यैव प्रमिते तत्पुत्रेण तत्साधुत्वं साध्यमित्यर्थः । *व्यचि.६३

## कात्यायनः

लेखविधिः । लेख्यप्रकाराः । तल्लक्षणानि च ।

[2] ग्राहकेण स्वहस्तेन लिखितं साक्षिवर्जितम् ।
स्वहस्तलेख्यं विज्ञेयं प्रमाणं तत्स्मृतं बुधैः ॥

एवमेव दायकेन लिखितं ग्राहकेणाभ्युपगतं लेख्यमुपागताख्यं विज्ञेयम् । +स्मृच.५९

[3] उत्पत्तिजातिसंज्ञां च धनसंख्यां च लेखयेत् ।
स्मरन्त्येवं प्रयुक्तस्य नश्येदर्थः स्वलेखितः ॥

प्रयुक्तस्येति कर्मणि षष्ठी, तेनैवं प्रयुक्तं स्मरन्ति, नान्यथेत्यर्थः । व्यक.६२

[4] देशाचारयुतं वर्षमासपक्षादिवृद्धिमत् ।
ऋणिसाक्षिलेखकानां हस्ताङ्कं लेख्यमुच्यते ॥

[5] लेख्यं तु साक्षिमत्कार्यमविलुप्ताक्षरक्रमम् ।
देशाचारस्थितियुतं समग्रं सर्ववस्तुषु ॥

[6] सर्वजानपदान् वर्णान् लेख्ये तु विनिवेशयेत् ॥

[7] लिखतं यस्य हस्ते तु जयं तस्य विनिर्दिशेत् ॥

[8] चातुर्विद्यपुरश्रेणीगणपौरादिकस्थितिः ।

---

(१) **स्मृच**.६६; **सवि**.१२३; **प्रका**.४३; **समु**.४५ वाच (वाचि). (२) **व्यमा**.३१४ पू., ३४० **पू**.; **स्मृच**.६६; **प्रका**.४३; **समु**.४५. (३) **व्यमा**.२९४ लेख्यं (पत्रं): ३४० द्धं तु (द्धर्णे) लेख्यं (पत्रं); **अप**.२।९२ द्धं तु (द्धर्णा); **व्यक**.६८ तत्र (तत्तु) शेषं अपवत्; **स्मृच**.६६ तु (न); **पमा**.१३४ द्धं तु (द्धर्णे) तत्र (तत्तु) कात्यायनः; **स्मृसा**.११२ द्धं तु (द्धत्वा); **व्यसौ**.६४व्यकवत्; **प्रका**.४३-४४ तु (न); **समु**.४६ तु (न); **विव्य**.१६ अपवत्.

(४) **व्यमा**.३४० ष्टाऽश्रावितं (ष्टश्रोत्रियं); **अप**.२।९२; **व्यक**.६८; **स्मृसा**.११२; **व्यसौ**.६४.

(५) **अप**.२।९२; **व्यक**.६८; **स्मृसा**.११२ तु (च); **व्यसौ**.६४.

(६) **व्यमा**.३४० भीत (भीति); **अप**.२।९२; **व्यक**.६९; **स्मृच**.६६; **पमा**.१३५ बाला (मूका) भीत (भीति); **व्यचि**.६३ व्यमावत्; **व्यसौ**.६५ व्यमावत्; **व्यप्र**.१४९ व्यमावत्; **प्रका**.४४; **समु**.४६.

* व्यत., व्यप्र., सेतु. व्यचिवत्। + पमा. स्मृचवत्।

(१) **व्यक**.६५ तदु (समु); **स्मृच**.७४ सुतोऽपि तदु (पुत्रस्तत्समु); **व्यचि**.६३; **व्यत**.२२२ पुत्रो (सुतो) तु (हि); **व्यसौ**.६३ तु (च); **व्यप्र**.१४९ प्रमी (सभा) सुतो (पुत्रो); **सेतु**.११४; **प्रका**.४८ स्मृचवत्; **समु**.४९ स्मृचवत्.

(२) **स्मृच**.५९; **पमा**.१२७; **नृप्र**.११; **प्रका**.३८; **समु**.४१. (३) **व्यक**.६२ जाति (ज्ञान); **व्यसौ**.५९. (४) **स्मृच**.६१ स्ताङ्कं (स्तकं); **प्रका**.३८; **समु**.४३. (५) **व्यक**.६४; **स्मृचि**.४३; **व्यसौ**.६१. (६) **स्मृच**.५९; **प्रका**.३८; **समु**.४१. (७) **विता**.११७.

(८) **स्मृच**.६०; **पमा**.१२८ चातु... श्रेणी (यद्यत्पुरःसरश्रेणी) पितामहः; **नृप्र**.१२; **प्रका**.३८; **समु**.४१.

तत्सिद्ध्यर्थं तु यल्लेख्यं तद् भवेत्स्थितिपत्रकम् ॥
[1]उत्तमेषु समस्तेषु अभिशापे समागते ।
वृत्तानुवादलेख्यं यत्तज्ज्ञेयं संधिपत्रकम् ॥
[2]संधौ कृते तु यत्पत्रं संधिलेख्यं तदुच्यते ।
देशाचारस्थितियुतं करलेख्यादिकं स्मृतम् ॥
[3]अभिशापे समुत्तीर्णे प्रायश्चित्ते कृते जनैः ।
विशुद्धिपत्रकं ज्ञेयं तेभ्यः साक्षिसमन्वितम् ॥
[4]राज्ञः स्वहस्तसंयुक्तं स्वमुद्राचिह्नितं तथा ।
राजकीयं स्मृतं लेख्यं सर्वेष्वर्थेषु साक्षिमत् ॥
[5]अर्थिप्रत्यर्थिवाक्यानि प्रतिज्ञा साक्षिवाक् तथा ।
निर्णयश्च तथा तस्य यथा चावधृतं स्वयम् ॥
[6]एतद्यथाक्षरं लेख्ये यथापूर्वं निवेशयेत् ॥
[7]चतुर्ष्वपि च पादेषु जयिने जयपत्रकम् ॥

(१) प्रतिज्ञापदेन च प्रतिपाद्यतया स्थिरीकृतमुच्यते । यथा तस्येति साक्षिवचनस्य द्वैधे सति षड्गुणत्वादिना ग्रहणान्निर्णयो मतः । शेषं सुव्यक्तम् । अत्र भाषोत्तरयोर्लेखनं पुनर्न्यायेन वादिनोरन्यथाप्रत्यवस्थाननिराकरणार्थं जयावधानस्य सम्यक् प्रदर्शनार्थं सर्वं, तेन निरूपका अपि निरपवादा भवन्तीति सर्वमनवद्यम् ।

व्यमा.३५३

(२) ततश्च भाषोत्तरे क्रिया च यत्र साक्ष्यादिकं निर्णयो जयपराजयावधारणं निर्णयकालावस्थितमध्यस्थाश्चेत्यादिकं सर्वं लेखनीयं निरूपणस्य सम्यक्त्वप्रदर्शनार्थम् । तथा हि भाषोत्तरलिखनं हेत्वन्तरेण पुनर्न्यायप्रत्यवस्थाननिषेधार्थं न हि न गृहीतमिति मिथ्योत्तरेण पराजितस्य पुनः परिशोधितं मयेति प्रत्यवस्थानं संभवति, प्रमाणलिखनं तु पुनः प्रमाणान्तरेण न्यायनिषेधार्थम् ।

*व्यत.१३०

[1]अभियोक्त्रभियुक्तानां वचनं प्राङ् निवेशयेत् ।
सभ्यानां प्राड्विवाकस्य कुलानां वा ततः परम् ॥

यथापूर्वमित्येतत्तेनैव प्रपञ्चितम् । अभियोक्त्रेति ।

स्मृच.५७

[2]निश्चयं स्मृतिशास्त्रस्य मतं तत्रैव लेखयेत् ॥

मतं नृपादीनामिति शेषः । तल्लेखनं तु स्वहस्तेन । परहस्ततो मतलेखनस्य 'यथा चावधृतं स्वयमि'त्यनेन पूर्वमेव विहितत्वात् ।

स्मृच.५७

[3]सिद्धेनार्थेन संयोज्यो वादी सत्कारपूर्वकम् ।
लेख्यं स्वहस्तसंयुक्तं तस्मै दद्यात्तु पार्थिवः ॥
[4]सभासदश्च ये तत्र स्मृतिशास्त्रविदः स्थिताः ।
यथा लेख्यविधौ तत्र स्वहस्तं दद्युरेव ते ॥

---

(१) **स्मृच**.६०; **पमा**.१२८ शापे (शाप) तज्ज्ञेयं (ज्ञेयं तत्) पितामहः; **नृप्र**.१२; **व्यप्र**.१४२; **व्यम**.१२ वाद (वादे); **प्रका**.३९; **समु**४२.

(२) **प्रका**.३६ उत्त.; **समु**.४२. (३) **स्मृच**.६०; **पमा**.१२८ पितामहः; **नृप्र**.१२; **सवि**.११६ त्रकं (त्रं वि) तेभ्यः (लेख्य) हारीतः; **व्यप्र**.१४२ ज्ञेयं (देयं); **व्यम**.१२ पत्र (पत्रि); **प्रका**.३९; **समु**.४२. (४) **व्यक**.६१; **नृप्र**.११; **व्यसौ**.५८-५९.

(५) **व्यमा**.३०९ चाव (चार) : ३५३ साक्षिवाक् (वचनं) तथा तस्य यथा (यथा तस्य तथा); **व्यक**.६३; **स्मृच**.५७ तथा तस्य (यथा तस्य); **व्यचि**.३० चाव (वाव); **स्मृचि**.६०; **व्यत**.२३० प्रतिज्ञा साक्षिवाक् (प्रतिसाक्षिवचः) चाव (चार); **व्यसौ**.६१; **सेतु**.१२५ वाक् (णः) चाव (चार); **प्रका**.३६ स्मृचवत्; **समु**.४० स्मृचवत्.

(६) **व्यमा**.३०९ लेख्ये (लेख्यं) : ३५३ एतं(तत्त) लेख्ये (लेख्यं); **व्यक**.६३; **स्मृच**.५७; **व्यचि**.३० लेख्ये (लेख्यं); **स्मृचि**.६० व्यचिवत्; **व्यत**.२३० व्यचिवत्; **व्यसौ**.६१ व्यचिवत्; **सेतु**.१२५ व्यचिवत्; **प्रका**.३६ व्यचिवत्; **समु**.४०; **विव्य**.९.

(७) **प्रका**.३६; **समु**.४० चतु ... षु (चतुष्पात् सुविवादेषु).

* सेतु. व्यतवत् ।

(१) **व्यक**.६४; **स्मृच**.५७; **स्मृचि**. ६० उत्त.; **व्यसौ**.६१ वा (च); **प्रका**.३७; **समु**.४०.

(२) **व्यक**.६४; **स्मृच**.५७; **स्मृचि**.६०; **व्यसौ**.६१; **प्रका**.३७; **समु**.४०.

(३) **अप**.२।८४ नार्थे (चार्थे) तस्मै (तस्माद्); **व्यक**.१०२ लेख्यं स्वहस्त (लभ्यं तदर्थं); **स्मृच**.५७:१२० लेख्यं ...क्तं (लेख्यस्वहस्तसंयुक्तः); **पमा**.१९९; **व्यचि**.९७ ज्यो (ज्य) स्वहस्त (तदर्थं) तु (च); **स्मृचि**.५९; **नृप्र**.१७-१८; **सवि**.२२०; **व्यसौ**.९२ ज्यो (ज्य) स्वहस्त (तदर्थं); **व्यप्र**.१४६; **प्रका**.३७; **समु**.४०.

(४) **मिता**.२।९१ मनुः; **व्यमा**.३०९ पू. : ३५३ स्थिताः (स्मृताः) पू.; **व्यक**.६३ स्थिताः (स्मृताः) तत्र... ते (तद्वत् स्वहस्तं तत्र दापयेत्); **स्मृच**.५७ उत्तरार्धं व्यकवत्;

राजा तान् सभ्यान् जानपदलेख्यवत् जयपत्रं स्वहस्तं दापयेत् इत्यर्थः । स्मृच.५७

**[1]अनेन विधिना लेख्यं पश्चात्कारं विदुर्बुधाः ॥**
**[2]निरस्ता तु क्रिया यत्र प्रमाणेनैव वादिना ।**
**पश्चात्कारो भवेत्तत्र न सर्वासु विधीयते ॥**

(१) अयं च पश्चात्कारो निर्णयविशेषे एव न सर्वत्रेत्याह स एव—निरस्तेति । क्रिया साध्यम् । प्रमाणेनैवेति वदंश्चतुष्पाद्व्यवहार एव पश्चात्कारो न द्विपाद्व्यवहार इति कथयति । स्मृच.५७

(२) पश्चात् क्रियत इति पश्चात्कारो जयपत्रम् । यत्र वादिवाक्यपर्यालोचनया जयावधारणं तत्रैव जयपत्रं न त्वन्यत्रेति केचित्, तन्न; पूर्वजयविभावनस्य अन्यत्रापि कृत्यत्वेन सर्वत्रैव जयपत्रस्य न्यायतः प्रसिरिति पूर्वपक्षोत्तरे भाषोत्तरे क्रिया च पत्रसाक्ष्यादिका निर्णयश्च जयपराजयावधारणं निर्णयकालावस्थिता मध्यस्थाश्चेत्यादिकं सर्वं लेखनीयं निरूपणस्य सम्यक्त्वप्रदर्शनार्थम् । भाषोत्तरलिखनं च हेत्वन्तरेण पुनर्न्याये प्रत्यवस्थाननिरासार्थं न हि न गृहीतं मयेति मिथ्योत्तरे जितस्य पुनः परिशोधितं मयेति प्रत्यवस्थानं भवति । व्यचि.३०

पश्चात्कारो निर्णयानन्तरक्रिया जयपत्रादिका । व्यचि.९८

**[3]अन्यवाद्यादिहीनेभ्य इतरेषां विधीयते ।**
**वृत्तानुवादसंसिद्धं तच्च स्याज्जयपत्रकम् ॥**

लेख्यपरीक्षा

**राजा क्रियां समाहूय यथान्यायं विचारयेत् ।**
**लेख्याचारेण लिखितं साक्ष्याचारेण साक्षिणः* ॥**
**[1]वर्णवाक्यक्रियायुक्तमसंदिग्धं स्फुटाक्षरम् ।**
**अहीनक्रमचिह्नं च लेख्यं तत्सिद्धिमाप्नुयात् ॥**

क्रिया साध्यम् । चिह्नं मुद्रा, सा राजकीयलेख्ये एव । स्मृच.६१

**[2]मलैर्यद्भेदितं दग्धं छिद्रितं वीतमेव वा ।**
**तदन्यत्कारयेल्लेख्यं स्वेदेनोल्लिखितं तथा ॥**

वीतं विगतम् । अप.२।९१

**[3]लेख्ये देशान्तरन्यस्ते दग्धे दुर्लिखिते हृते ।**
**सतस्तत्कालहरणमसतो द्रष्टृदर्शनम् ॥**
**[4]यल्लेख्यं प्राड्विवाकेन न दृष्टं न प्रतिश्रुतम् ।**
**अलब्धर्णे कृते लेख्ये कथं तत्प्राप्नुयाद्धनी ॥**
**[5]आधानमुपरुद्धो वा यावत्तिष्ठति लग्नकः ।**
**लेख्याभावे स्मृतं तावत्प्रमाणं द्रष्टृदर्शनम् ॥**
**[6]स्थानभ्रष्टास्त्वकान्तिस्थाः संदिग्धा लक्षणच्युताः ।**
**यदा तु संस्थिता वर्णाः कूटलेख्यं तदा भवेत् ॥**
**[7]देशाचारविरुद्धं यत्संदिग्धं क्रमवर्जितम् ।**
**कृतमस्वामिना यच्च साध्यहीनं च दुष्यति ॥**

---

**व्यचि.**३० स्मृति (धर्म) स्थिताः (तथा) पू.; **स्मृचि.**६० स्थिताः (तथा) उत्तरार्धं व्यकवत्; **व्यत.**२३० व्यचिवत्, पू.; **व्यसौ.**६१ स्मृति(सभा) शेषं व्यकवत्; **व्यप्र.**१४६; **व्यउ.**४४ स्थिताः (स्मृताः); **विता.**१२१ (=) तत्र (तद्वत्); **सेतु.**१२५ व्यचिवत् , पू.; **प्रका.**३७ पू.; **समु.**४० शास्त्र (वाक्य); **विव्य.**९ विदः स्थिताः (विशारदाः) पू.

(१) **व्यक.**६४; **स्मृच.**५७; **पमा.**१२४ कारं (कार्यं); **स्मृचि.**६०; **व्यसौ.**६१ लेख्यं (तत्र); **व्यप्र.**१४६; **प्रका.**३७; **समु.**४०.

(२) **व्यक.**६४,१०२; **स्मृच.**५७ स्ता तु ( स्तास्तु ); **पमा.**१२४; **व्यचि.**३०,९८; **व्यसौ.**६१; **व्यप्र.**१४६; **प्रका.**३७; **समु.**४०.

(३) **पमा.**१२५ वृत्ता (वृद्धा) सिद्धं (सिद्धिः); **व्यप्र.**१४६ विधी (प्रदी).

*व्याख्यासंग्रहः स्थलादिनिर्देशश्च अस्मिन्नेव श्लोके (पृ.३३६) द्रष्टव्यः ।

(१) **व्यक.**६४; **स्मृच.**६१; **पमा.**१२९ दिग्धं (दिग्ध); **स्मृचि.**४३-४४; **सवि.**११९; **व्यसौ.**६१ पमावत्; **प्रका.**४०; **समु.**४३. (२) **अप.**२।९१ वा (च); **व्यक.**६४ छिद्रितं (भिदितं ); **स्मृच.**६१; **स्मृचि.**४४; **व्यसौ.**६१ वा (च); **प्रका.**४०; **समु.**४२ वीत (सृत).

(३) **व्यक.**६९ न्तर (न्तरे) हृते (कृते) द्रष्टृ (दुष्ट) नारदकात्यायनौ; **व्यसौ.**६५ दग्धे (शीर्णे).

(४) **व्यक.**६९; **व्यसौ.**६५ केन न दृष्टं न (कैर्न दृष्टं दृश्यं ).

(५) **व्यक.**६९; **व्यसौ.**६५. (६) **अप.**२।८९ उत्तरार्धे (यत्रैवं स्युः स्थिता वर्णा लेख्यं दुष्टं तदा भृगुः ) क्रमेण बृहस्पतिः; **व्यक.**६५ अपवत्; **स्मृच.**६२ कान्ति (पङ्क्ति); **पमा.**१३० यदा तु सं (यथासंस्थाः); **व्यसौ.**६२ अपवत्; **प्रका.**४० स्मृचवत्; **समु.**४३ स्मृचवत्. (७) **अप.**२।८९; **व्यक.**६५; **स्मृच.**६२; **पमा.**१३१; **नृप्र.**१२; **स्मृचि.**४४; **व्यसौ.**६२; **व्यप्र.**१४८; **प्रका.**४०; **समु.**४३.

[1]समामासादिहीनं तु प्रमाणं न भवेत्पुनः ॥
[2]मत्तेनोपाधिभीतेन तथोन्मत्तेन पीडितैः ।
स्त्रीभिर्बालाऽस्वतन्त्रैश्च कृतं लेख्यं न सिध्यति ॥
[3]ख्यापितं चेद्द्वितीयेऽह्नि न कश्चिद्विनिवर्तयेत् ।
तथा तत्स्यात्प्रमाणं तु मत्तोन्मत्तकृताद्दते ॥
[4]साक्षिदोषाद् भवेत् दुष्टं पत्रं वै लेखकस्य वा ।
धनिकस्योपधादोषात्तथा धारणिकस्य च ॥
[5]दुष्टैर्दुष्टं भवेल्लेख्यं शुद्धं शुद्धैर्विनिर्दिशेत् ।
तत्पत्रमुपधादुष्टैः साक्षिलेखककारकैः ॥

(१) धारणिककारकपदाभ्यां पत्रदातोच्यते । व्यमा.३३८

(२) उपधा भावदोषः । व्यक.६४

[6]साक्षिलेखककर्तारः कूटतां यान्ति ते यथा ।
तथा दोषाः प्रयोक्तव्या दुष्टैर्लेख्यं प्रदुष्यति ॥

गूढदोषोद्भावनप्रकारमाह कात्यायनः—साक्षीति । स्मृच.६२

[7]आहर्ता भुक्तियुक्तोऽपि लेख्यदोषान्विशोधयेत् ।
तत्सुतो भुक्तिदोषांस्तु लेख्यदोषांस्तु नाप्नुयात्*॥
[8]न लेखकेन लिखितं न दृष्टं साक्षिभिस्तथा ।
एवं प्रत्यर्थिनोक्ते तु कूटलेख्यं प्रकीर्तितम् ॥

(१) अथवा आरूढलेखकेन न लिखितमारूढसाक्षिभिर्वा न दृष्टं दुष्टमित्युद्भावनीयमित्याह स एव—नेति । उक्तेनार्थेनेति शेषः । स्मृच.६२-६३

(२) कूटमप्रामाण्यशङ्काकलङ्कितमित्यर्थः । तस्माद् दुष्टलेख्यपरीक्षाऽवश्यापेक्षणीयेत्यभिप्रायः । व्यप्र.१४९

नातथ्येन प्रमाणं तु दोषेणैव तु दूषयेत् ।
मिथ्याभियोगे दण्ड्यः स्यात्साध्यार्थाच्चाऽपि हीयते ×॥
[1]एवं दुष्टं नृपस्थाने यस्मिंस्तद्धि विचार्यते ।
विमृश्य ब्राह्मणैः सार्धं पत्रदोषान्निरूपयेत् ॥
[2]येन ते कूटतां यान्ति साक्षिलेखककारकाः ।
तेन दुष्टं भवेल्लेख्यं शुद्धैः शुद्धं विनिर्दिशेत् ॥

तत्र यदीतरेण ते दोषा न परिहृतास्तदा लेख्यं दुष्टम् । परिहृताश्चेददुष्टमित्याह स एव—येनेति । स्मृच.६३

[3]धनिकेन स्वहस्तेन लिखितं साक्षिवर्जितम् ।
भवेत्कूटं न चेत्कर्ता कृतं हीति विभावयेत् ॥

(१) यद्युत्तमर्णो भवदनुमतेन मयैतल्लिखितमिति प्रतिवादिनं न भावयेन्नाङ्गीकारयेदित्यर्थः । अप.२।८९

(२) कर्ता धनिकोऽधमर्णानुमत्या कृतमिति यदि न विभावयेत् न साधयेत्तदा न जानाम्मीत्यधमर्णेन दूषितं लेख्यं कूटं भवेदित्यर्थः । स्मृच.६३

(३) न चेदित्यादेरयमर्थः—कर्ता लिखनकर्ता धनिकाधमर्णसंप्रतिपत्त्या मयैतल्लिखितमिति यदि न विभावयेत्तदा तत्पत्रं कूटं भवेदप्रामाण्यशङ्कास्कन्दितं स्यादिति । व्यप्र.१४८

[4]दत्तं लेख्ये स्वहस्तं तु ऋणिको यदि निह्नुते ।
पत्रस्थैः साक्षिभिर्वाच्यो लेखकस्य मतेन वा ॥

---

* अस्य व्याख्यासंग्रहो भुक्तौ द्रष्टव्यः ।

(१) प्रका.३६; समु.४३. (२) स्मृच.६२; सवि.११९ पाधि (पधि); प्रका.४०; समु.४३. (३) व्यक.६४ ख्या (स्था) तु (तत्) कृताद्दते (हृताद्दते); व्यसौ.६१.

(४) व्यमा.३३८ भवेत् (तु यत्) धनि (ऋणि); अप.२।८९ रणि (रण); व्यक.६४ वा (च) धारणि (चाधन); स्मृच.६२ स्योपधा (स्यापि वा) रणि (रण) च (वा); पमा.१३१ स्योपधा (स्यापि वै) धारणि (चारण); नृप्र.१२; व्यसौ.६१ धादोषात् (धा लेख्यं); व्यप्र.१४८ वा (च) स्योपधा (स्यापि वै); प्रका.४० स्मृचवत्; समु.४३. स्मृचवत्.

(५) व्यमा.३६८ ष्टैर्दु (ष्टेर्दु); व्यक.६४ शुद्धं शुद्धैः (शुद्धैः शुद्धं); व्यसौ.६१-६२; व्यप्र.१४८ व्यकवत्.

(६) व्यक.६५; स्मृच.६२; पमा.१३२ खक (खन) ते यथा (वादिनः) प्रयो (प्रव); व्यसौ.६२ ते (ये); व्यप्र.१५० प्रयो (प्रव); प्रका.४१ दुष्टैः (दुष्टं); समु.४३. (७) व्यक.६५; स्मृच.७२; पमा.१४५; व्यचि.६३; व्यत.२२२; व्यप्र.१५० तु ना (अवा); सेतु.११४; प्रका.४७; समु.४८.

(८) अप.२।९२; व्यक.६७; स्मृच.६३; पमा.१३२; व्यसौ.६३; व्यप्र.१४९ क्ते तु (लेख्यं); प्रका.४१; समु.४३.

× व्याख्या स्थलादिनिर्देशश्च साक्षिप्रकरणे (पृ.३३५) द्रष्टव्यः ।

(१) अप.२।९२; स्मृच.६३; पमा.१३२ पत्रदोषान् (वक्तृदोषं) बृहस्पतिः; प्रका.४०; समु.४३ दोषान् (दोषं).

(२) स्मृच.६३ शुद्धं (शुद्धिं); पमा.१३३ बृहस्पतिः; प्रका.४१; समु.४३.

(३) अप.२।८९; व्यक.६५; स्मृच.६३ कृतं (कृतिं); व्यसौ.६२; व्यप्र.१४८; प्रका.४१; समु.४३.

(४) स्मृच.६३; पमा.१३३ वाच्यो (वाचा) वा (चँ) बृहस्पतिः; प्रका.४१; समु४४.

यदा पुनः स्वहस्तनिह्नवेन लिखितं दूषयति, तदा तदारूढसाक्ष्यादितो दुष्टमदुष्टं वेति निश्चेतव्यम्। स्मृच.६३

**[1]कृताकृतविवादेषु साक्षिभिः पत्रनिर्णयः ॥**

साक्षिग्रहणमुपलक्षणम्। 'दूषिते' इत्यादि तेनैवोक्तत्वात्। स्मृच.६३

**[2]दूषिते पत्रके वादी तदारूढांस्तु निर्दिशेत् ॥**

साक्षिसंभवविषयमिदम्। मिता.२।९२

**[3]त्रिविधस्यापि लेख्यस्य भ्रान्तिः संजायते नृणाम्।**
**ऋणिसाक्षिलेखकानां हस्तोक्त्या साधयेत्ततः ॥**
**[4]अथ पञ्चत्वमापन्नो लेखकः सह साक्षिभिः।**
**तत्स्वहस्तादिभिस्तेषां विशुध्येत न संशयः ॥**

तेषां मृतसाक्ष्यादीनां तत्स्वहस्तादिभिः पत्रान्तरप्रसिद्धस्वगोत्रवर्णसादृश्यप्रभृतिभिरित्यर्थः। स्मृच.६४

**[5]ऋणिस्वहस्तसंदेहे जीवतो वा मृतस्य वा।**
**तत्स्वहस्तकृतैरन्यैः पत्रैस्तल्लेख्यनिर्णयः ॥**

'ऋणिस्वहस्तसंदेहे' इत्युपलक्षणम्। साक्षिस्वहस्तसंदेहे लेखकस्वहस्तसंदेहेऽपि बोद्धव्यः। स्मृसा.९६

**[6]समुद्रे तु यदा लेख्ये मृताः सर्वेऽपि तत्स्थिताः।**

(१) अप.२।९२ विवादेषु (विचारे तु); स्मृच.६३; प्रका.४१ षु (तु); समु.४४ प्रकावत्.

(२) मिता.२।९२; स्मृच.६३ ते (के); सवि.१२०; व्यउ.४५; विता.१३३; समु.४४.

(३) व्यमा.३३९ स्यापि (स्य च) नृणाम् (यदा) क्त्या (त्थैः) त्ततः (त्तदा) नारदः; व्यप्र.१४९.

(४) व्यमा.३३९ ध्येत (ध्येत्तु); अप.२।९२; व्यक.६६ (=) न्नो (न्ने) ध्येत न (द्धिस्तत्र); स्मृच.६४ ध्येत (द्धे तु); पमा.१३४ न्नो (न्ने) खकः (खके) ध्येत (ध्येत्तु); नृप्र.१२; व्यसौ.६३ ध्येत न (द्धिर्न च); व्यप्र.१४९ ध्येत (द्धिः स्यात्); प्रका.४२; समु.४४ सह साक्षिभिः (साक्षिभिः सह).

(५) व्यमा.३३९; अप.२।९२ (=); व्यक.६६ (=); पमा.१३४; दीक.३९; स्मृसा.९६ (=); स्मृचि.४४ तो वा (तोऽपि) वा (च); नृप्र.१२; व्यत.२१९-२२० ऋणिस्वहस्त (स्वहस्तलेख्य) स्य वा (स्य च); चन्द्र.१३१ तो वा (तोऽपि); व्यसौ.६३ तो वा (तोऽथ) वा (च); व्यप्र.१४९; सेतु.११२ रन्यैः (र्वान्यैः) शेषं व्यतवत्.

(६) अप.२।९२ (=) द्रे तु (द्रेऽपि) यदा (तथा) णं (णे); व्यक.६६ (=); स्मृच.६४; पमा.१३४ द्रे तु (द्रेऽपि)

**लिखितं तत्प्रमाणं तु मृतेष्वपि हि तेषु वै ॥**

(१) समुद्रे राजमुद्रासहिते शासन इत्यर्थः। अप.२।९२

(२) प्रमाणं मुद्रादिभिरिति शेषः। स्मृच.६४

**[1]यत्र पञ्चत्वमापन्नो लेखकः सह साक्षिभिः।**
**ऋणिको धनिकश्चैव नैव पत्रं प्रमाणयेत् ॥**
**[2]प्रत्यक्षमनुमानेन न कदाचित्प्रबाध्यते।**
**तस्माल्लेख्यस्य दुष्टस्य वचोभिः साक्षिणां भवेत्।**
**निर्णयः स्वधनार्थं हि पत्रं दूषयति स्वयम् ॥**

साक्षिणां वचोभिर्न पुनरधमर्णवचनतः, तस्याशयदोषसंभवादित्यर्थः। स्मृच.६३

**[3]लिखितं लिखितेनैव साक्षिमत्साक्षिभिर्हरेत् ॥**

प्रत्यर्थिलिखितं साक्षिरहितं लिखितान्तरेण तत्कृतेन, साक्षिमत्तु साक्षिभिरुद्धरेत्। अप.२।९२

**[4]कूटोक्तौ साक्षिणां वाक्यात् लेखकस्य च पत्रकम्।**
**नयेच्छुद्धिं न यः कूटं स दाप्यो दण्डमुत्तमम् ॥**

(१) लेखकं प्रति कूटोक्तौ साक्षिणां वचनात्पत्रकं यो वादी शुद्धिं न नयेत्स उत्तमसाहसं दण्ड्यः। अप.२।९२

(२) साक्षिणां वाक्यं लेखकस्य पत्रं च प्रतिकूटोक्तावुक्तविधया यो वादि कूटं शुद्धिं न नयेत् स उत्तमसाहसं दण्डय इत्यर्थः। +स्मृच.६५

(३) लेख्यकूटत्वाभिधाने यो लेख्यशुद्धिं न करोति स दण्ड्यः। चन्द्र.१३३

**[5]लेख्यं त्रिंशत्समातीतमदृष्टाश्रावितं च यत्।**

+पमा. स्मृचवत्।

तत्स्थिताः (ते स्थिताः) वै (च); व्यसौ.६३ पमावत्; प्रका.४२ यदा (यथा); समु.४४.

(१) व्यत.२२१ नैव (नैनं) माण (माप); चन्द्र.१३२ पत्रं (तच्च); सेतु.११३.

(२) अप.२।९२ यति (यते); स्मृच.६३; प्रका.४१; समु.४४. (३) अप.२।९२; पमा.१३४.

(४) अप.२।९२ दण्ड (दम); व्यक.६७; स्मृच.६५ क्यात् (क्यं); पमा.१३४ णां (णो) पू.: १३८ क्यात् (क्यं) येत् (चेत्) न यः (नयेत्); चन्द्र.१३३ अपवत्; व्यसौ.६३ येत् (चेत्) न यः (नयेत्) दण्ड (दम); व्यप्र.१५० अपवत्; विता.१३३ अपवत्; प्रका.४३ स्मृचवत्; समु.४५ स्मृचवत्. (५) स्मृच.६६; पमा.१३५; चन्द्र.१५७ष्टा (ष्ट); प्रका.४३; विव्य.१६.

न तत् सिद्धिमवाप्नोति तिष्ठत्स्वपि हि साक्षिषु ॥
[1]प्रयुक्ते शान्तलाभे तु लिखितं यो न दर्शयेत् ।
न याचते च ऋणिकं तत्संदिग्धत्वमाप्नुयात् ॥

ऋणिकमासन्नमाढ्यं चेति शेषः । स्मृच.६६

[2]मुद्राशुद्धं क्रियाशुद्धं पारम्पर्यानुमोदितम् ।
अदूषितं च स्पष्टं च क्रियाचिह्नविभावितम् ।
ईदृशं सिद्धिमाप्नोति शासनं नृपचिह्नितम् ॥

क्रियाशुद्धं साक्ष्यनुगृहीतं पारम्पर्यानुमोदितं बहुभिरनुमतम् । व्यक.६६

[3]मुद्राशुद्धं क्रियाशुद्धं भुक्तिशुद्धं सचिह्नकम् ।
राजस्वहस्तसंशुद्धं शुद्धिमायाति शासनम् ॥

क्रियाशुद्धमपशब्दानन्वयादिदोषरहितम् । स्मृच.६४

[4]पश्चात्कारनिबन्धं यत्तद्यत्नेन विचारयेत् ।
यदि स्याद्युक्तियुक्तं तु प्रमाणं लिखितं तदा ॥

पश्चात्कारनिबन्धं पश्चात्काराख्यजयपत्रनिवेशितमित्यर्थः । स्मृच.६४

[5]अन्यथा मूलतः कार्यं पुनरेव विनिर्णयेत् ॥
[6]अतथ्यं तथ्यभावेन स्थापितं ज्ञानविभ्रमात् ।
निवर्त्यं तत्प्रमाणं स्यात् यत्नेनापि कृतं नृपैः ॥
[7]दर्पणस्थं यथा बिम्बमसत्सदिव दृश्यते ।
तथा लेख्यस्य बिम्बानि कुर्वन्ति कुशला जनाः ॥

---

(१) **स्मृच**.६६; **पमा**.१३५ शान्त ( शान्ति ) ( नैव याचेत ऋणिकं न तत्सिद्धिमवाप्नुयात्); **प्रका**. ४३; **समु**. ४५ स्मृत्यन्तरम्.

(२) **व्यक**.६६ ईदृ (यादृ); **व्यसौ**.६३. (३) **अप**. २।८४; **स्मृच**.६४ राज (राज्ञः); **सवि**.१२१ह्नक (ह्नित); **प्रका**.४२ स्मृचवत्; **समु**.४४ स्मृचवत्. (४) **व्यक**.६६ युक्तियुक्तं तु (प्रक्रियायुक्तं); **स्मृच**.६४; **व्यसौ**.६३ बन्धं (बद्धं) तु (च); **प्रका**.४१; **समु**.४४. (५) **व्यक**.६६ निर्ण (चिन्त); **स्मृच**.६४ मूल (दूर); **व्यसौ**.६३; **प्रका**.४१; **समु**.४४ स्मृचवत्. (६) **व्यक**.६६ यत्ने (आत्म) नृपैः (नरैः); **स्मृच**.६४; **व्यसौ**.६३ निवर्त्यं तत् (विनिवर्त्य) यत्ने (आत्म); **प्रका**.४२; **समु**.४४.

(७) **व्यमा**.३३९ जनाः (नराः); **व्यक**.६५ कुशला जनाः (कृतिनो नराः); **स्मृच**.६५; **नृप्र**.१२ कुशला जनाः (कुटिला नराः); **व्यप्र**.१४८ नृप्रवत्; **प्रका**.४२; **समु**.४५.

[1]निर्दोषं प्रथितं यत्तु लेख्यं तत्सिद्धिमाप्नुयात् ॥
[2]दृष्टे पत्रे स्फुटं दोषं नोक्तवान् ऋणिको यदि ।
ततो विंशतिवर्षाणि क्रान्तं पत्रं स्थिरं भवेत् ॥
[3]शक्तस्य संनिधौ बन्धो यस्य लेख्येन भुज्यते ।
वर्षाणि विंशतिं यावत् तत्पत्रं दोषवर्जितम् * ॥
[4]अथ विंशतिवर्षाणि आधिर्भुक्तः सुनिश्चितः ।
येन लेख्येन तत्सिद्धिर्लेख्यदोषविवर्जिता ॥
[5]सीमाविवादे निर्णीते सीमापत्रं विधीयते ।
तस्य दोषाः प्रवक्तव्या यावद्वर्षाणि विंशतिः ॥

---

* व्याख्यासंग्रहः भुक्तौ द्रष्टव्यः ।

(१) **पमा**.१३६; **समु**.४४.

(२) **व्यमा**.३४० टं (टान्) षं (षान्) क्रान्तं (क्रान्त); **व्यक**.६६ क्रान्तं (क्रीतं); **पमा**.१३६ दृष्टे पत्रे (तथाऽदृष्टे) क्रान्तं (क्रीतं) स्थिरं (स्थितं); **व्यचि**.६३ ततो (तद्वा); **व्यप्र**.१५०-१५१ क्रान्तं (स्थितं); **समु**.४४.

(३) **व्यमा**.३४०:३४६ बन्धो (योऽर्थो); **मिता**.२।२४ बन्धो (अर्थो) वर्षाणि विंशतिं यावत् (विंशद्वर्षाण्यतिक्रान्तं ); **अप**.२।९२ बन्धो (अर्थो); **व्यक**.६६; **स्मृच**.६४ बन्धो (अर्थो) लेख्येन (लेख्ये न) : ६७ बन्धो (अर्थो) वर्षाणि विंशतिं यावत् (दशवर्षाण्यतिक्रान्तं ); **पमा**.१३६ पत्रं (परं) शेषं स्मृच-६४ वत्; **व्यचि**.६३,६७; **नृप्र**.९ तत्पत्रं ... तम् (लेख्यं दोषविवर्जितम्) शेषं स्मृच६७वत्; **सवि**.१२१ अपवत् : १२७मितावत्; **व्यप्र**.१५१ मितावत्; **विता**.१४५-१४६ मितावत्; **प्रका**.४२ अपवत् : ४४ स्मृच६७वत्; **समु**. ४४ अपवत्; **विव्य**.१६ बन्धो (अर्थो) लेख्येन (पत्रेण) दोष-वर्जितम् (बलवत्तरम्).

(४) **मिता**.२।२४ येन (तेन); **अप**,२।९२ अथ (तथा) ( येन लेख्येन तत्सिद्धं लेख्यं दोषविवर्जितम्); **व्यक**.६७ मितावत्; **स्मृच**.६४ भुक्तः (भुक्तिः) ( येन लेख्येन तत्सिद्धिं लेख्यं दोषविवर्जितम् ) स्मृत्यन्तरम्; **पमा**.१३६ श्रितः (श्रितम्) (तेन लेख्येन तत्सिद्धं लेख्यं दोषविवर्जितम्); **सवि**. १२१ आधि ... श्रितः (आधेर्भुक्तेः स निर्णयः) उत्तरार्धं अप-वत्, स्मृत्यन्तरम् : १२८ आधि ... श्रितः (आधिभुक्तिः सुनिश्चिना) येन (तेन) लेख्य ... जिता ( लेख्यं तद्दोषवर्जितम्); **व्यप्र**.१५१ मितावत्; **विता**.१४६ येन (तेन) लेख्य (आधि); **प्रका**.४२ स्मृचवत्, स्मृत्यन्तरम्; **समु**.४४ सिद्धिः (शुद्धं) लेख्य (लेख्यं) जिता (जितम्).

(५) **मिता**.२।२४; **अप**.२।९२ प्रव (प्रयो); **व्यक**.६१-पू. : ६७; **स्मृच**.६० पू. : ६४ प्रव (प्रयो) तिः (तिम्) स्मृत्य-

[1]आधानसहितं पत्रमृणलेख्यनिवेशितम् ।
मृतसाक्षि प्रमाणं तु स्वल्पभोगेऽपि तद्विदुः ॥

आधानमाधिः । मृतसाक्षि मृतसाक्षिकम् । अप.२।९२

[2]प्राप्तं वा तेन यत् किञ्चिद्देयं वाऽथ निरूपितम् ।
विनापि मुद्रया लेख्यं प्रमाणं मृतसाक्षिकम् ॥

अपिशब्दो मृतसाक्षिकमित्यत्राप्यन्वेति । व्यप्र.१५१

[3]न दिव्यैः साक्षिभिर्वापि हीयते लिखितं क्वचित् ।
लेख्यधर्मः सदा श्रेष्ठो ह्यतो नाऽन्येन हीयते ॥

[4]तद्युक्तप्रतिलेख्येन तद्विशिष्टेन वा सदा ।
लेख्यक्रिया निरस्येत न साक्षिशपथैः क्वचित् ॥

अन्येन साक्ष्यादिना । स्मृच.६६

[5]स्थावरे विक्रयाधाने लेख्यं कूटं करोति यः ।
स सम्यक् भावितः कार्यो जिह्वापाण्यङ्घ्रिवर्जितः ॥

[6]द्रव्यं गृहीत्वा यल्लेख्यं परस्मै संप्रदीयते ।
छन्नमन्येन वा रूढं संयतं चान्यवेश्मनि ॥
दत्ते वृत्तेऽथवा द्रव्ये क्वचिल्लिखितपूर्वके ।
एष एव विधिर्ज्ञेयो लेख्यशुद्धिविनिर्णये ॥

---

न्तरम्; **पमा**.१२८ पू.: १३६ तस्य (यस्य); **नृप्र**.१२ पू.; **सवि**.१२१,१२८; **व्यसौ**.५८ पू.; **व्यप्र**.१४२ पू.: १५१ तिः (तिम्); **व्यम**.१२ पू.; **विता**.१४६; **प्रका**.३९ पू.: ४२ स्मृचवत्; **समु**.४४ स्मृचवत्.

(१) **अप**.२।९२ पत्रं (यत्र) लेख्य (लेख्यं); **व्यक**.६७ स्वल्प (अल्प); **स्मृच**.६४ स्मृत्यन्तरम्; **पमा**.१३७ पत्रमृणलेख्य (यत्र ऋणं लेख्ये) मृत (मृतं) ऽपि (षु); **प्रका**.४२ स्मृत्यन्तरम्; **समु**.४४ सहितं (स्य हितं).

(२) **व्यक**.६७ वा तेन यत् (वानेन ते); **पमा**.१३७ तेन यत् (ऽनेन चेत्) देयं वाऽथ (दानं चाप्य); **व्यप्र**.१५१.

(३) **व्यमा**.३१४ न दि (तद्दि) ख्य (ख्ये) ह्यतो (ह्येते); **अप**.२।९२; **व्यक**.६८; **स्मृच**.६६; **स्मृसा**.११२ ह्यतो (यतो); **सवि**.१२३; **व्यसौ**.६४; **प्रका**.४३; **समु**.४५.

(४) **अप**.२।९२ द्युक्त (द्युक्ति); **व्यक**.६८ अपवत्; **स्मृच**.६६ न साक्षिशपथैः (निरस्यान्येन न); **सवि**.१२३ स्मृचवत्; **व्यसौ**.६४ अपवत्; **प्रका**.४३ स्मृचवत्; **समु**.४५ सदा (पुनः) शेषं स्मृचवत्.

(५) **स्मृच**.६५ ण्यङ्घ्रि (ण्यङ्ग); **पमा**.१३८ स स (अस); **प्रका**.४३; **समु**.४५.

(६) **स्मृच**.६७; **प्रका**.४४; **समु**.४६ छन्न (छिन्न).

## पितामहः

प्रमाणलेख्यं क्रयपत्रं च

[1]वादिभ्यामभ्यनुज्ञातं लेखकेन ससाक्षिकम् ।
लिखितं सर्वकार्येषु तत्प्रमाणं स्मृतं बुधैः ॥
[2]क्रीते क्रयप्रकाशार्थं द्रव्ये यत्क्रियते क्वचित् ।
विक्रेत्राऽनुमतं क्रेत्रा ज्ञेयं तत्क्रयपत्रकम् ॥

## प्रजापतिः

लेख्यप्रकाराः तल्लक्षणानि च

[3]राजकीयं जानपदं लिखितं द्विविधं स्मृतम् ।
शासनं राजदूतादौ चिरकं स्याद्दणादिषु ॥
[4]राज्ञा स्वहस्तचिह्नेन संधिविग्रहलेखकैः ।
लिखितं राजनामाङ्कं मुद्रितं राजमुद्रया ॥
समामासतदर्धाहर्नामजात्यादिचिह्नितम् ।
स्पष्टवर्णक्रमोपेतमविलुप्तक्रमाक्षरम् ॥
राजशासनमेतत्स्यादुत्तमं सर्वलेख्यतः ॥
[5]धनी धनेन तेनैव परमाधिं नयेद्यदि ।
कृत्वा तदाधिलिखितं पूर्वं चास्य समर्पयेत् ॥

अन्वाधिपत्रमाह प्रजापतिः— धनीति । पूर्वं आधिपत्रम् । व्यप्र.१४२

लेख्यपरीक्षा

[6]कार्यो यत्नेन महता निर्णयो राजशासने ।
राज्ञः स्वहस्ततो मुद्रालेखकाक्षरदर्शनात् ॥

मुद्रालेखकाक्षरयोर्दर्शनान्निर्णयाद्राजस्वहस्ततश्च निर्णय इत्यर्थः । व्यप्र.१५०

लेखकूटत्वे सति दिव्यं प्रमाणम्

[7]लेख्ये कूटत्वमापन्ने संदिग्धे कार्यनिर्णये ।
असत्कृत्य च तल्लेख्यमर्थे दिव्येन निर्णयः ॥

---

(१) **स्मृच**.६१; **पमा**.१३०; **प्रका**.४०; **समु**.४३.
(२) **स्मृच**.६०; **पमा**.१२८ त्राऽनु (त्रनु); **नृप्र**.१२ पमावत्; **सवि**.११७ क्रेत्रा (क्रेतुः) वसिष्ठः; **प्रका**.३८; **समु**.४१. (३) **प्रका**.३५; **समु**.३९ दूता (दत्ता). (४) **समु**.३९.

(५) **स्मृच**.६० दाधि (दादि); **पमा**.१२८; **नृप्र**.१२; **व्यप्र**.१४२; **व्यम**.१२ तदा (तद); **प्रका**.३८ दाधि (दा वि).

(६) **व्यक**.६६; **स्मृच**.६४ तो मु (तन्मु); **सवि**.१२१; **चन्द्र**.१३३ राज्ञः (राज्ञां); **व्यसौ**.६३ चन्द्रवत्; **व्यप्र**.१५०; **व्यम**.१३ चन्द्रवत्; **प्रका**.४१ स्मृचवत्; **समु**.४४ स्मृचवत्. (७) **समु**.४५.

[1]यन्नामगोत्रैस्तत्तुल्यरूपं लेख्यं क्वचिद्भवेत् ।
अगृहीते धने तत्र कार्यो दिव्येन निर्णयः ॥

(१) साक्षिणां स्वहस्तलिखिताद्यभावे चैतत् । अप.२।९२

(२) तत्तुल्यरूपं अविप्रतिपन्नलेख्यान्तरतुल्यरूपम् । अगृहीते धने प्रतिवादिनि दृढ इत्यर्थः । स्मृच.६५

(१) साक्ष्यसंभवविषयं तु हारीतवचनम् । *मिता.२।९२

(२) यत्र लेख्ये सर्वथा कूटशङ्काऽनपगमः तत्र साध्यार्थनिर्णयो दिव्येनेति तात्पर्यार्थः। उदाहरणतयोक्तस्वहस्तलेख्यस्यानादरणीयत्वात्। तेन स्वहस्तगोत्रचिह्नादिसंभवेऽपि प्रतिवादिनो दृढविप्रतिपत्त्या कूटशङ्कानपगमो यत्र भवेत् तत्रापि दिव्येन निर्णयः। स्मृच.६५

## हारीतः

संधिपत्रलक्षणम्

[2]संधिपत्रं तु विज्ञेयमर्थिप्रत्यर्थिनोर्यदा ।
परस्परानुमत्या च निर्मितं तु ससाक्षिकम् ॥
[3]उत्तमर्णाधमर्णौ च साक्षिणौ लेखकस्तथा ।
समवायेन चैतेषां लेख्यं कुर्वीत नान्यथा ॥

लेख्यपरीक्षा

[4]ऋणिस्वहस्तसंदेहे जीवतो वा मृतस्य वा ।
तत्स्वहस्तकृतैरन्यैः पत्रैस्तल्लेख्यनिर्णयः ॥

स्वहस्तकृतैरिति पूर्वोक्तक्रियाद्युपलक्षणार्थम् । यत्र पुनरस्ति ससाक्षिकस्वहस्तकृतलेख्यादौ साक्ष्यादिस्पष्टनिर्णायकं न तत्र लेख्यान्तरसादृश्यात् स्पष्टनिर्णायकेन निर्णयः । स्मृच.६३

[5]यच्च काकपदाकीर्णं तल्लेख्यं कूटतामियात् ।
बिन्दुमात्राविहीनं यत् संहितं चिरितं च यत् ॥
[6]न मयैतत्कृतं लेख्यं कूटमन्येन कारितम् ।
अधरीकृत्य तत्पत्रमर्थे दिव्येन निर्णयः ॥

## व्यासः

लेख्यप्रकाराः तल्लक्षणानि च

[1]चिरकं च स्वहस्तं च तथोपगतसंज्ञितम् ।
आधिपत्रं चतुर्थं च पञ्चमं क्रयपत्रकम् ॥
षष्ठं तु स्थितिपत्राख्यं सप्तमं संधिपत्रकम् ।
विशुद्धिपत्रकं चैवमष्टधा लौकिकं स्मृतम् ॥

नात्र संख्या विवक्षिता विभागपत्रादेरपि लौकिकत्वात् । स्मृच.५९

[2]स्वहस्तकाज्जानपदं तस्मात्तु नृपशासनम् ।
प्रमाणतरमिष्टं हि व्यवहारार्थमागतम् ॥

(१) लेख्यानामन्योन्यविरोधे यत्प्रमाणतरं तदाह व्यासः—स्वहस्तकादिति । अप.२।९२

(२) जानपदपदेनात्र गोबलीवर्दन्यायात् स्वहस्तकृतादन्यदुच्यते । नृपशब्देन च लक्षणया शासनेतरद्राजकीयम् । तेनान्यकृतं स्वहस्तकृतात् बलवत् तस्मादपि राजकीयं ततोऽपि शासनमित्यर्थः। बलवत्त्वं चोत्तरोत्तरस्य कूटत्वासंभवतारतम्यतोऽवबोध्यम् । अत एवोपगताख्यलेख्यादसाक्षिकं स्वहस्तकृतम् । तस्माच्च ससाक्षिकं स्वहस्तकृतं बलवदित्यवगन्तव्यम् । स्मृच.६६

[3]द्वित्रिलिपिज्ञः स्वकृतेन सलेख्येन युक्तिभिः ।
कुर्याद्धि सदृशं लेख्यं तस्माज्जानपदं शुभम् ॥

---

(१) शुनी.४।७४८-७४९ (यन्नामगोत्रैर्यल्लेख्यं तुल्यं लेख्यं यदा भवेत्); अप.२।९२ रूपं लेख्यं (रूपसंख्या) अगृ (प्रगृ); **स्मृच**.६५; **पमा**.१३८ यन्ना (स्वना); **सवि**.१२२; **व्यसौ**.३९ तत्तुल्यरूपं (मूलेन तुल्यं); **व्यप्र**.८५ स्तत्तुल्यरूपं (यल्लेख्यं तुल्यं) हीते (हीत); **प्रका**.४२; **समु**.४५ क्वचित् (कृतं). (२) **सवि**.११६.

(३) **स्मृच**.५९; **सवि**.११४ चैते (चैके) : १३७ च (द्वौ) नारदः; **प्रका**.३८; **समु**.४१.

(४) **स्मृच**.६३; **प्रका**.४१; **समु**४४.

(५) **स्मृच**.६२; **पमा**.१३१ सं...यत् (संदिग्धसहितं च तत्); **नृप्र**.१२; **प्रका**.४०; **समु**.४३. (६) **अभा**.६३; **मिता**.२।९२ लेख्यं (पत्रं) मन्ये (मेते); **अप**.२।९२ मन्ये (मेते); **स्मृच**.६५; **पमा**.१३७ मर्थे (मथ) शेषं मितावत्; **सवि**.१२१ मितावत्; **व्यउ**.४५ मितावत्, पूर्वार्धं तु कात्यायनस्य; **विता**.१३३ लेख्यं (पत्रं) मन्येन (न्ने तेन); **प्रका**.४२; **समु**.४५. (१) **स्मृच**.५९; **पमा**.१२६ चि (ची) क्रय (कार्य) चैवम्(चैव); **प्रका**.३८; **समु**.४१. (२) **व्यमा**.३३८; **अप**.२।९२ तु (च्च); **व्यक**.६८ शासन (धारण); **स्मृच**.६६; **पमा**.१३७ णत (णान्त); **सवि**.२२२; **व्यसौ**.६४; **व्यप्र**.१५१ पमावत्; **प्रका**.४३; **समु**.४५ अपवत्; **विव्य**.१६.

* अप., सवि., व्यउ. मितावत्।

(३) **व्यमा**.३३८ द्वित्रिलि(द्विस्त्रिर्लि) तेन स(तमन्य); **अप**.२।९२; **व्यक**.६८; **पमा**.१३७ (द्वित्रिर्लिपिज्ञैः स्वकृतं न

अत्रोपपत्तिमाह—द्वित्रीति । सलेख्येन समानेन लेख्येन युक्तिभिश्चानेकलिपिज्ञेन कृतं स्वलेख्यं शुद्धिं न यातीत्यध्याहार्यम् । यतोऽसौ सदृशमपि कर्तुं शक्नोति । तस्माज्जानपदं वरमित्यर्थः । अप.२।९२

[1]अप्रकाशात्साक्षियुक्तं लेखकाक्षरमुद्रितम् ।
लोकप्रसिद्धं स्वकृताद्वरमन्यकृतं शुभम् ॥
[2]देशाध्यक्षादिना लेख्यं यत्र जानपदं कृतम् ।
समकालं पश्चिमं वा तत्र राजकृतं शुभम् ॥

समकालपश्चिमाभ्यां राजकृतमेव विशिष्यते । अप.२।९२

[3]राज्ञा तु स्वयमादिष्टः संधिविग्रहलेखकः ।
ताम्रपट्टे पटे वाऽपि विलिखेद्राजशासनम् ॥
[4]क्रियाकारकसंबन्धं समासार्थक्रियान्वितम् ॥
[5]संनिवेशं प्रमाणं च स्वहस्तं च लिखेत्स्वयम् ।
मतं मेऽमुकपुत्रस्य अमुकस्य महीपतेः ॥

(१) क्रियाकारकयोः संबन्धो यस्मिन् शासने तत्तथोक्तम् । समासार्थक्रियान्वितं संक्षिप्तार्थोपन्यासक्रियया समन्वितमित्यर्थः । *स्मृच.५५

(२) संनिवेशं प्रमाणं चेत्यस्य पूर्ववाक्ये प्रलिखेदित्यत्रान्वयः । नियमात् । व्यप्र.१४५

समासासतदर्धोहन्नृपनामोपलक्षितम् ।
प्रतिग्रहीतृजात्यादिसगोत्रब्रह्मचारिकम् ॥

संप्रदानस्यासाधारणत्वावबोधकं जातिकुलशाखादिकमपि लेखनीयमित्युत्तरार्धस्यार्थः । स्मृच.५६

[1]स्थानं वंशानुपूर्व्यं च देशं ग्राममुपागतम् ।
ब्राह्मणांस्तु तथा चान्यान्मान्यानधिकृतान् लिखेत् ॥
[2]कुटुम्बिनोऽथ कायस्थदूतवैद्यमहत्तरान् ।
म्लेच्छचण्डालपर्यन्तान् सर्वान् संबोधयन्निति ॥
[3]मातापित्रोरात्मनश्च पुण्यायामुकसूनवे ।
दत्तं मयाऽमुकायाथ दानं सब्रह्मचारिणे ॥
[4]षष्टिवर्षसहस्राणि दानच्छेदफलं तथा ।
आगामिनृपसामन्तबोधनार्थं नृपो लिखेत् ॥

अत एव दत्तापहारदोषप्रतिपादनमपि भाविनृपप्रत्यायनार्थं तत्रावश्यकमित्यप्याह— षष्टिवर्षेति ।

षष्टिवर्षसहस्राणीत्यादि पुराणवचनप्रसिद्धम् । दानाच्छेदयोः दानापहारयोः स्वर्गादिनरकादि फलं लेखयेद्राजेत्यर्थः । व्यप्र.१४५–१४६

[5]सामान्योऽयं धर्मसेतुर्नृपाणां काले काले पालनीयो भवद्भिः ।

---

* पमा. स्मृचवत् ।

संलेख्येन युक्तितः) द्वि सदृशं (ज्जानपदं); व्यसौ.६४ स्वकृतेनं स (सुकृतमन्य) द्वि (द्वि); व्यप्र.१५१ (द्वित्रलिपिज्ञः स्वकृतमन्यल्लिख्येत युक्तितः) द्वि (द्वि).

(१) व्यमा.३३८ द्वर (लिख); अप.२।९२ युक्तं (युतं) स्व (सु); व्यक.६८ स्व (सु); पमा.१३७ अप्र...साक्षि (अप्रकाशोत्साधि) प्रसिद्धं (प्रसादात्); व्यप्र.१५१.

(२) व्यमा.३३८ यत्र (यत्तत्) (सकालं पश्चिमं वा तु तस्माद्राजकृतं शुभम्); अप.२।९२; व्यक.६८; पमा.१३७ यत्र (पत्रं); व्यसौ.६४ पमावत्; व्यप्र.१५१ दे...लेख्यं (देशाध्यक्षादिलिखितं).

(३) व्यक.६२ विलि (प्रलि); स्मृच.५५; पमा.१२२ विलि (प्रलि); स्मृचि.४२-४३; व्यसौ.६०; व्यप्र.१४५ मादिष्टः (मुदिष्टः); व्यम.१३ दिष्टः (दिष्ट); प्रका.३५; समु.३९. (४) स्मृच.५५; पमा.१२२; व्यसौ.६०; प्रका.३५; समु.३९. (५) स्मृच.५६; पमा.१२३; व्यप्र.१४५ हस्तं च (हस्तेन); व्यम.१३ व्यप्रवत्; बाल.२।९१ उत्त.; प्रका.३६ पू.; समु.४० अमु (ह्यमु).

(१) स्मृच.५५ ग्रही (गृही); पमा.१२३ स्मृचवत्; प्रका.३५ स्मृचवत्; समु.३९.

(२) व्यक.६२ पूर्व्यं च (पूर्वी च) देशं (देश); स्मृच.५६; पमा.१२३ स्थानं...र्व्यं (स्थानवंशादिपूर्वं) देशं (देश) था चा (थैवा); स्मृचि.४३ र्व्यं च (र्वं वा) स्तु (श्च); नृप्र.११नं वंशा (नवंश्या); व्यसौ.६० पूर्वार्धं पमावत्, स्तु (श्च); प्रका.३५; समु.३९ वंशा (वंश्या).

(३) व्यक.६२; स्मृच.५६; पमा.१२३ म्लेच्छ (ते च); स्मृचि.४३ ऽमुकायाथ (स्वकार्यार्थं); व्यसौ.६०; प्रका.३५; समु.३९ दूत (द्यूत).

(४) स्मृच.५६ ष्टि (ष्टिं); व्यप्र.१४५ दान (दाता) र्थं ....खेत् (याभिलेखयेत्); प्रका.३६ ष्टि (ष्टिं); समु.३९ ष्टि (ष्टिं) दान (दाना).

(५) स्मृच.५६; पमा.१२३ भद्रः (चन्द्रः); सवि.११२ (=) नृपा (नरा) प्रथमपादः; प्रका.३६; समु.४०.

सर्वानेतान् भाविनः पार्थिवेन्द्रान् भूयो भूयो याचते रामभद्रः ॥

[1]राजकीये तथा राजा स्वहस्तेन लिखेत्स्वयम् ॥
[2]संधिविग्रहकारी च भवेद्यश्चापि लेखकः ।
स्वयं राज्ञा समादिष्टः स लिखेद्राजशासनम् ॥
स्वनाम तु लिखेत्पश्चात् मुद्रितं राजमुद्रया ।
ग्रामक्षेत्रगृहादीनामीदृक् स्याद्राजशासनम् ॥

एतच्च प्रतिग्रहीतुरर्पणीयम् । तस्योपयोगित्वात् । स्मृच.५६

[3]ज्ञातं मयेति लिखितं दात्राऽध्यक्षाक्षरैर्युतम् ।
अब्दमासतदर्धाहाराजमुद्राङ्कितं तथा ॥
[4]अनेन विधिना लेख्यं राजशासनकं लिखेत् ॥
[5]व्यवहारान् स्वयं दृष्ट्वा श्रुत्वा वा प्राड्विवाकतः ।
जयपत्रं ततो दद्यात् परिज्ञानाय पार्थिवः ॥
[6]जङ्गमं स्थावरं येन प्रमाणेनात्मसात्कृतम् ।
भागाभिशापसंदिग्धो यः सम्यग्विजयी भवेत् ।
तस्य राज्ञा प्रदातव्यं जयपत्रं सुनिश्चितम् ॥
[7]पूर्वोत्तरे क्रियापादं प्रमाणं तत्परीक्षणम् ।
निगदं स्मृतिवाक्यं च यथासभ्यं विनिश्चितम् ।
एतत्सर्वं समासेन जयपत्रेऽभिलेखयेत् ॥

(१) क्रियापादं क्रियाभिमर्शनपादम् । प्रत्याकलितपादमिति यावत् । निगदः साक्षिवचनम् । यथासभ्यं सभ्यानतिक्रमेण । समासेन संक्षेपेण । स्मृच.५७

(२) प्रमाणस्य पृथक् ग्रहणात्क्रियापदेन प्रत्याकलितमत्र गृह्यते । परिज्ञानाय प्राड्न्यायस्य बोधनाय । भागेऽभिशापे वा संदिग्धे । विवादपदमात्रोपलक्षणमेतत् । तेन विवादविषयो यो यत्र विवादे स तत्र लेखनीयः । व्यप्र.१४६

[1]लिखेज्जानपदं लेख्यं प्रसिद्धस्थानलेखकः ।
राजवंशक्रमयुतं वर्षमासार्धवासरैः ॥
[2]जातिः संज्ञा निवासोऽर्थः संख्या वृद्धिश्च वत्सरः ।
मासः पक्षो दिनं चैषां लिखितं व्यक्तिकारकम् ॥
[3]देशस्थित्या क्रियाधानप्रतिग्रहविचिह्नितम् ॥

देशस्थित्या क्रिया देशाचारानुसारेण करणम् । आधानमाधिः । स्मृच.५८

[4]पितृपूर्वे नामजाती धनिकर्णिकयोर्लिखेत् ।
द्रव्यभेदं प्रमाणं च वृद्धिं चोभयसंमताम् ॥
[5]मयोभयाभ्यर्थितेनामुकेनामुकसूनुना ।
स्वहस्तयुक्तं स्वं नाम लेखकस्त्वन्ततो लिखेत् ।
एवं जानपदे लेख्ये व्यासेनाभिहितो विधिः ॥
[6]अलिपिज्ञ ऋणी यः स्याल्लेखयेत्स्वमतं तु सः ।
साक्षी वा साक्षिणाऽन्येन सर्वसाक्षिसमीपगः ॥
[7]ऋणी हस्तं नामयुतं साक्षिभ्यां पितृपूर्वकम् ॥

लेख्यपरीक्षा

[8]दासाऽस्वतन्त्रबालैश्च स्त्रीकृतं चैव यद्भवेत् ।
प्रमाणं नैव तल्लेख्यमिति शास्त्रविदो विदुः ॥
[9]संदेहेऽपि च लेख्यस्य विशुद्धिः परिकीर्तिता ।
ऋणिसाक्षिलेखकानां स्वहस्ताक्षरपङ्क्तिभिः ॥

---

(१) **बाल.**२।९१. (२) **स्मृच.**५६; **प्रका.**३६; **समु.**४० श्चापि (स्तस्य). (३) **व्यक.**६३ हा (हो); **स्मृच.**५६; **स्मृचि.**४३ हा (हो) उत्त.; **व्यसौ.**६० हा (हो) उत्त.; **प्रका.**३६ हा (हो); **समु.**४०. (४) **व्यक.**६३; **स्मृच.**५७; **स्मृचि.**४३ नकं (निकं); **व्यसौ.**६० स्मृचिवत्; **प्रका.**३६; **समु.**४०. (५) **व्यक.**१०२; **स्मृच.**५७; **पमा.**१२४ रान् (रं); **स्मृचि.**६०; **व्यप्र.**९१,१४६; **प्रका.**३६; **समु.**४०. (६) **स्मृच.**५७; **पमा.**१२४ प्रमाणे (परीक्षणे) ग्धो (ग्धे)निश्चितम् (लेखितम्); **व्यप्र.**१४६; **प्रका.**३६; **समु.**४०.
(७) **स्मृच.**५७ त्तरे (त्तर); **पमा.**१२४ भ्यं (भ्य)ऽभि (वि); **व्यप्र.**१४६ त्तरे (त्तर) प्रमाणं तत् (तत्प्रमाणं) गदं (गद) भ्यं (भ्य); **प्रका.**३६ स्मृचवत्; **समु.**४० स्मृचवत्.

(१) **स्मृच.**५८; **पमा.**१२५; **नृप्र.**११; **सवि.**११३ द्ध (द्धं); **प्रका.**३७; **समु.**४१ बृहस्पतिः. (२) **अप.**२।८५. (३) **स्मृच.**५८; **प्रका.**३७; **समु.**४१ बृहस्पतिः.
(४) **स्मृच.**५८ कर्णि (कर्ण); **पमा.**१२५ र्वे (र्वं) दं (द); **सवि.**११३ र्वे (र्वं) जाती (जाति) वृद्धिं (पृथ्वीं); **प्रका.**३७ स्मृचवत्; **समु.**४१ बृहस्पतिः.
(५) **स्मृच.**५९; **सवि.**११५ कस्त्वन्त (कोऽन्तेत); **प्रका.**३८; **समु.**४१. (६) **व्यमा.**३३८ क्षिस (क्ष्यस); **व्यक.**६२; **दीक.**३९ क्षिणा (क्षिणो); **व्यत.**२१९ ज्ञ (ज्ञो); **व्यसौ.**५९; **वीमि.**२।८५अलिपि (अनभि) सर्व (पर). (७) **स्मृच.**५९; **प्रका.**३८ णी (णि); **समु.**४१ णी (णि) युतं (युक्तं) बृहस्पतिः. (८) **व्यमा.**३३९; **व्यत.**२२१स्त्री (स्वी); **विव्य.**१६. (९) **स्मृसा.**९६; **स्मृचि.**४४ लेख्यस्य (लेख्ये च); **चन्द्र.**१३१.

[1]लेख्यमालेख्यवत्केचिल्लिखन्ति कुशला नराः ।
तस्मान्न लेख्यसामर्थ्यात्सिद्धिरैकान्तिकी मता ॥

तेन सम्यक् परीक्षणीयमित्यभिप्रायः । स्मृच.६५

[2]ज्ञात्वा कालं देशकार्ये कुशलाः कूटकारकाः ।
कुर्वन्ति सदृशं लेख्यं तद्यत्नेन विचारयेत् ॥
स्त्रीबालानलिपिज्ञानान् वञ्चयन्ति स्वबान्धवाः ।
लेख्यं कृत्वा स्वनामाङ्कं ज्ञेयं युक्त्याऽऽगमैस्तु तत् ॥

[3]यैश्चान्यस्य कृतं लेख्यमन्यहस्ते प्रदृश्यते ।
अवश्यं तेन वक्तव्यं पत्रस्यागमनं ततः ॥

(१) अमुकस्यैतल्लेख्यं ततो मां प्रत्यनेनोपायेन आगतमिति यस्य हस्ते दृश्यते तेन वक्तव्यं साधनीयमित्यर्थः । अप.२।९२

(२) ततो लेख्यस्वामिनः सकाशादित्यर्थः । स्मृच.६६

[4]दूषितः कर्मदुष्टो वा साक्षी यत्र निवेशितः ।
कूटलेख्यं तु तत्प्राहुर्लेखको वाऽपि तद्विधः ॥

[5]अदृष्टाऽश्रावितं लेख्यं प्रमीतधनिकर्णिकम् ।
अबन्धलग्नकं चैव बहुकालं न सिध्यति ॥

(१) बहुकालं बहुकालीनम् । अप.२।९२

(२) अबन्धलग्नकं आधिप्रतिभूरहितम् । बहुकालं बहुकालीनं न सिध्यति स्वत इत्यभिप्रायः । स्मृच.६६

(३) अदर्शितत्वादिसत्तदोषाश्रये लेख्यं न प्रमाणमित्यर्थः । व्यचि.६३

[6]स्थावरे विक्रयाधाने लेख्यं कूटं करोति यः ।
स सम्यग्भावितः कार्यो जिह्वापाण्यङ्घ्रिवर्जितः ॥

सम्यग्भावितः प्रमाणेन सल्लेख्यत्वमङ्गीकारितः । अनेन, कूटलेख्यकर्तुर्नायं दण्डः; किन्तु कूटत्वोद्भावनकर्तुरिति गम्यते । तथा च लेख्यं परकीयं यः कूटं करोति कूटमेतदिति वदतीत्यर्थः । कूटलेख्यकर्तुस्तु दण्डान्तरं वक्ष्यते । ऋणादानादावपि लेख्यदोषमुद्भावयितुस्तदसाधयतो विषयानुबन्धानुरोधेन दण्डः कल्प्यः । व्यप्र.१५०

## संवर्तः

लेख्यस्य प्रमाणान्तरतः प्राबल्यं, लेख्यपरीक्षा च

[1]लेख्ये लेख्यक्रिया प्रोक्ता वाचिके वाचिकी मता ।
वाचिके तु न सिध्येत्सा लेख्यस्योपरि या क्रिया ॥

(१) वाचिकी साक्षिक्रिया । अत्रापि बलीयसीति शेषः । लेखस्योपरि क्रिया विरोधिनी या क्रिया सा न प्रमाणमित्यर्थः । व्यक.६८

(२) अस्यार्थः—लेख्ये सति लेख्यक्रिया प्रोक्ता सैव बलीयसीत्यर्थः । वाचिके साक्षिरूपे प्रमाणे सति वाचिकी क्रिया साक्षिरूपा क्रिया सैव मता बलीयसी । लेख्यस्योपरि या वाचिकी साक्षिरूपा क्रिया लेख्यानारूढेति यावत् । तत्र सा (न) सिध्येत् । व्यप्र.१५१

[2]लेख्यस्योपरि यत्साक्ष्यं कूटं तदभिधीयते ।
अधर्मस्य हि तद्द्वारमतो राजा विवर्जयेत् ॥

[3]वाचिकैर्यदि सामर्थ्यमक्षराणां विहन्यते ।
क्रियाणां सर्वनाशः स्यादनवस्था च जायते ॥

(१) लेख्यस्योपरि यत्साक्ष्यं लेख्यविरुद्धं तद्वर्ज्य-

---

(१) शुनी.४।७०६ पूर्वार्धे (कुशला लेख्यबिम्बानि कुर्वन्ति कुटिलाः सदा); **व्यमा.३३९** ख्यवत् (ख्य यत्); **अप.२।९२** न लेख्य (तल्लेख्य) रैका (नैका); **व्यक.६५**; **स्मृच.६५**; **व्यप्र.१४८** लिखन्ति (कुर्वन्ति); **प्रका.४२**; **समु.४५.**

(२) **अप.२।९२.**

(३) **अप.२।९२**; **व्यक.६७**; **स्मृच.६६**; **पमा.१३९**; **व्यसौ.६३** हस्ते प्र (हस्तेषु); **प्रका.४३**; **समु.४५.**

(४) **स्मृच.६२**; **प्रका.४०**; **समु.४३** शितः (शयेत्).

(५) **अप.२।९२**; **व्यक.६९**; **स्मृच.६६**; **पमा.१३५** नारदः; **व्यचि.६३**; **सवि.१२३** दृष्टा (दृष्टं); **व्यसौ.६४**; **व्यप्र.१४८** सविवत्; **प्रका.४३**; **समु.४५.**

(६) **व्यक.६५**; **दवि.३४९**; **व्यसौ.६२** लेख्यं कूटं (कूटं लेख्यं); **व्यप्र.१५०**; **विता.१३३** धाने (धान).

(१) **व्यमा.३१४** ख्यक्रि (ख्या क्रि) वाचिके तु....सा (वाचिकी न तु सिद्धे च); **अप.२।९२**; **व्यक.६८** के तु न (की तत्र); **स्मृसा.९८** प्रोक्ता (कार्या) के तु ... सा (की न तु सिध्येत): १११ के तु ... सा (की तु न सिध्येत); **व्यसौ.६४** मता (तथा) शेषं व्यकवत्; **व्यप्र.१५१** व्यकवत्; **त्रिव्य.१०** के तु .... सा ( का सा न सिध्येत्तु ).

(२) **व्यमा.३१४**; **अप.२।९२**; **व्यक.६८**; **स्मृच.६६** हि (तु); **स्मृसा.९९** विवर्ज (निवर्त): १११ हि (च) शेषं पूर्ववत्; **सवि.१२३** अतो (ततो) विवर्ज ( निवर्त); **व्यसौ.६४** हि (तु) विवर्ज (निवर्त); **व्यप्र.१५१**; **प्रका.४३ पू.**; **समु.४५** हि (तु); **विव्य.१०** हि (तु).

(३) **व्यमा.३१४** च (ऽपि); **अप.२।९२**; **व्यक.६८** कैः (की); **स्मृसा.१११** कैः (के) सर्वे (पूर्वे); **व्यसौ.६४** कैः (के); **व्यप्र.१५१** कैः (की).

मित्यर्थः । क्रियाणां लेख्यक्रियाणाम् । अप.२।९२

(२) लेख्यस्योपरि यत्साक्ष्यं लेख्यसाधकतयोपन्यस्त-मित्यर्थः । अधर्मस्य च तद्द्वारमित्यत्र हेतुर्वाचिकीति । तत्रापि हेतुः क्रियाणामिति । तत्राप्युपपत्तिरनवस्थेति । प्रमादपरिहारमतियत्नेन कृत्वा हि प्रायशो लेख्यं भवति । तेन तत्राप्रामाण्यशङ्कापि नोचिता । साक्ष्यादावपि तत्संभवादिति तात्पर्यम् । न तु सर्वथा तत्र साक्ष्यादि-निवर्तनमभिप्रेतम् । लेख्यपरीक्षोपदेशविरोधात् ।

व्यप्र.१५१-१५२

[1]बलोपधिकृतं चैव मत्तोन्मत्तकृतं तथा ।
एते चान्ये च बहवश्चिरस्था वादहेतवः ॥

तेनैवमादिषूक्तशुद्धिविधिरनुसंधेयो निर्णेतृभिरित्यभि-प्रायः । स्मृच.६७

## मरीचिः

लेख्यप्रमाणविषयः

[2]स्थावरे विक्रयाधाने विभागे दान एव च ।
लिखितेनाप्नुयात् सिद्धिमविसंवादमेव च ॥

लेख्यप्रयोजनमाह मरीचिः— स्थावर इति । आधानमाधिः । आद्यश्चशब्दः ऋणादिनिष्कृतार्थसं-ग्रहार्थः । अविसंवादः कालान्तरेऽपि निष्कृतार्थस्यान-न्यथाभावः । एवं च स्थावरादावविसंवादेन सिद्धि-मालोच्य राजवंशवर्षादिलेखनीयानामावापोद्वापौ कार्यौ । तेषां दृष्टार्थत्वात् । अतो न दानादिलेख्ये धनिकर्णिकादि लेखनीयम् । नापि ऋणादानादिलेख्ये प्रतिग्रहादिकम् । एवमन्यत्रापि लेख्ये लेख्यं समूहनीयम् । दृष्टप्रयोजनत्वा-ल्लेख्यस्य । अत एवाकृतप्रयोजनस्य लेख्यस्य कार्याक्षमत्वे नाशे वा लेख्यान्तरमुत्पाद्यम् । स्मृच.६०

[3]सिध्यते वाचिकोऽप्याधिः स्थावरेषु दशाब्दिकः ।
प्रतिग्रहे च क्रीते च नालेख्या सिध्यति क्रिया ॥

स्थावरविषयस्त्वाधिर्दशवर्षपर्यन्तमुपभुक्तः स तथा वाचिकोऽपि लेख्यं विना सिध्यतीत्यर्थः । व्यक.६१

## वृद्धवसिष्ठः

जयपत्रलक्षणम्

[1]यथोपन्यस्तसाध्यार्थसंयुक्तं सोत्तरक्रियम् ।
सावधारणकं चैव जयपत्रं तदिष्यते ॥

मिता.टीका—यथोपन्यस्तसाध्यार्थ इति । अस्यार्थः, साध्यार्थः प्रतिज्ञातार्थः तेन संयुक्तम् । तथा उत्तरेण द्विती-यपादसरूपेण क्रियया पत्रादिरूपेण च सहितम् । तथैव सावधारणकं अवधारणकं निर्णयः, तेन सहितं जयपत्रं भवतीति । सुबो.२।९१

[2]सभासन्यस्तचिह्नं च वादिप्रत्यर्थिसंयुतम् ॥
[3]प्राड्विवाकादिहस्ताङ्कं मुद्रितं राजमुद्रया ।
सिद्धेऽर्थे वादिनो दद्याज्जयिने जयपत्रकम् ॥

## स्मृत्यन्तरम्

[4]दानलेख्यं भागलेख्यं सीमालेख्यं तथैव च ।
क्रयलेख्यं दासलेख्यमाधिलेख्यमतः परम् ॥
संविदुद्धारलेख्यं च जयपत्रकमेव च ।
संधिपत्रं तथैवैतत् क्रियाभेदादनेकधा ॥
[5]विभागपत्रमित्येतत् भागानां निर्णये कृतम् ।
सीमाविवादे निर्णीते सीमापत्रमिति स्मृतम् ॥
आध्यर्थमाधिलेख्यं स्याद्दासार्थं दासलेख्यकम् ।
समीहितार्थसिध्यर्थं ग्रामश्रेणिगणादिभिः ॥

---

(१) **स्मृच**.६७ पधि (पाधि); **प्रका**.४४ स्मृचवत्; **समु**.४६ स्मृचवत्. (२) **व्यक**.६० विक्रयाधाने (विक्रियादाने) द्धिम (द्धिं स); **स्मृच**.६०; **पमा**.१२८ क्रया (क्रिया) पू.; **सवि**.११७-११८ मवि (मपि); **व्यसौ**.५८; **व्यप्र**.१४१, १४७; **विता**.११७ मविसं (मनित्यं); **प्रका**.३९; **समु**.४२ क्रयोधा (क्रये दा) दान (दाय) पू., कात्यायनः.

(३) **व्यक**.६१; **पमा**.१२८ उत्त.; **व्यसौ**.५८ च क्रीते च (षु क्रीतेषु); **व्यप्र**.१४७; **समु**.४२ उत्त., कात्यायनः.

(१) **मिता**.२।९१ त्रं तदि (त्रकमि); **अप**.२।८४; **व्यक**.६३ मितावत्; **व्यचि**.३० पत्रं तदिष्यते (पत्रकमुच्यते); **स्मृचि**.६० न्यस्त (न्यास) बृहस्पतिः; **व्यसौ**.६० व्यचिवत्; **व्यप्र**.१४६ व्यचिवत्; **व्यउ**.४४ साव (स्वाव) शेषं मितावत्; **विता**.१२१ मितावत्; **समु**.४० मितावत्.

(२) **समु**.४०. (३) **मिता**.२।९१; **अप**.२।८४; **व्यक**.६३ पू.; **स्मृच**.५७ दिनो (दिनोः); **पमा**.१२४ वसिष्ठः; **व्यचि**.३० हस्ता (मुद्रा) पू.; **नृप्र**.११ नो (ने) ज्जयि ... कम् (ज्जयपत्रं तदुच्यते) वसिष्ठः; **सवि**.११२ त्रकम् (त्रिकाम्); **व्यसौ**.६० व्यचिवत्, पू.; **व्यप्र**.१४६ पू.; **व्यउ**.४४ द्धेऽर्थे (द्धार्थे); **विता**.१२१; **प्रका**.३४ स्मृचवत्; **समु**.४० स्मृचवत्. (४) **प्रका**.३९ थैव च (थाऽपरम्) बृहस्पतिः; **समु**.४२. (५) **समु**.४२.

शास्त्राविरोधि धर्मार्थे कृतं संवित्तिपत्रकम् ॥

लेख्यपरीक्षा

[3]जडमूकान्धबालाज्ञक्रुद्धरुग्णार्तभीरुभिः ।
अस्वतन्त्रोपधादुष्टैः कृतं लेख्यं न सिध्यति ॥
समामासादिहीनं च देशाचारविरोधि च ।
विलुप्तक्रमवर्णं च शृङ्गहीनं च दुष्यति ॥
एकमेव भवेल्लेख्यमेकस्यार्थस्य सिद्धये ।
अनेकेषु तु लेख्येषु दोषमुद्भावयेदपि ॥
[2]लेख्ये संशयमापन्ने साक्षिलेखककर्तृभिः ।
दुष्टेषु तेषु तद्धस्तकृतपूर्वाक्षरादिभिः ।
यथालाभोपपन्नैस्तैर्निर्णयं कारयेन्नृपः ॥

## अनिर्दिष्टकर्तृकवचनम्

स्वहस्तलेख्यं प्रबलम्

[3]स्वहस्तलिखितं पत्रं साक्ष्यभावेऽपि तद्बलि ॥

## शुक्रनीतिः

लेख्यप्रकाराः तल्लक्षणानि च

[4]न कार्यं भृतकः कुर्यान्नृपलेखाद्विना क्वचित् ।
नाज्ञापयेल्लेखनेन विनाऽल्पं वा महन्नृपः ॥
भ्रान्तेः पुरुषधर्मत्वाल्लेख्यं निर्णायकं परम् ।
अलेख्यमाज्ञापयति ह्यलेख्यं यत्करोति यः ॥
राजकृत्यमुभौ चोरौ तौ भृत्यनृपती सदा ।
नृपसंचिह्नितं लेख्यं नृपस्तन्न नृपो नृपः ॥
समुद्रं लिखितं राज्ञा लेख्यं तच्चोत्तमोत्तमम् ।
उत्तमं राजलिखितं मध्यं मन्त्र्यादिभिः कृतम् ॥
पौरलेख्यं कनिष्ठं स्यात्सर्वं संसाधनक्षमम् ।
यस्मिन्यस्मिन् हि कृत्ये तु राज्ञा योऽधिकृतो नरः ॥
सामात्ययुवराजादिर्यथानुक्रमतश्च सः ।
दैनिकं मासिकं वृत्तं वार्षिकं बहुवार्षिकम् ॥
तत्कार्यजातलेख्यं तु राज्ञे सम्यङ् निवेदयेत् ।
राजाद्यङ्कितलेख्यस्य धारयेत्स्मृतिपत्रकम् ॥
कालेऽतीते विस्मृतिर्वा भ्रान्तिः संजायते नृणाम् ।
अनुभूतस्य स्मृत्यर्थं लिखितं निर्मितं पुरा ॥
यत्नाच्च ब्रह्मणा वाचां वर्णस्वरविचिह्नितम् ।

वृत्तलेख्यं तथा चायव्ययलेख्यमिति द्विधा ॥
व्यवहारक्रियाभेदादुभयं बहुतां गतम् ।
यथोपन्यस्तसाध्यार्थसंयुक्तं सोत्तरक्रियम् ॥
सावधारणकं चैव जयपत्रकमुच्यते ।
सामन्तेष्वथ भृत्येषु राष्ट्रपालादिकेषु यत् ॥
कार्यमादिश्यते येन तदाज्ञापत्रमुच्यते ।
ऋत्विक्पुरोहिताचार्यमान्येष्वभ्यर्चितेषु च ॥
कार्यं निवेद्यते येन पत्रं प्रज्ञापनाय तत् ।
सर्वे शृणुत कर्तव्यमाज्ञया मम निश्चितम् ॥
स्वहस्तकालसंपन्नं शासनं पत्रमेव तत् ।
देशादिकं यस्य राजा लिखितेन प्रयच्छति ॥
सेवाशौर्यादिभिस्तुष्टः प्रसादलिखितं हि तत् ।
भोगपत्रं तु करदीकृतं चोपायनीकृतम् ॥
पुरुषावधिकं तत्तु कालावधिकमेव वा ।
विभक्ता ये च भ्रात्राद्याः स्वरुच्या तु परस्परम् ॥
विभागपत्रं कुर्वन्ति भागलेख्यं तदुच्यते ।
गृहभूम्यादिकं दत्त्वा पत्रं कुर्यात्प्रकाशकम् ॥
अनाच्छेद्यमनाहार्यं दानलेख्यं तदुच्यते ।
गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्यप्रमाणयुक् ॥
पत्रं कारयते यत्तु क्रयलेख्यं तदुच्यते ।
जंगमं स्थावरं बन्धं कृत्वा लेख्यं करोति यत् ॥
ग्रामो देशश्च यत्कुर्यात्सत्यलेखं परस्परम् ।
राजाविरोधि धर्मार्थं संवित्पत्रं तदुच्यते ॥
वृध्या धनं गृहीत्वा तु कृतं वा कारितं च यत् ।
ससाक्षिमच्च तत्प्रोक्तं ऋणलेख्यं मनीषिभिः ॥
अभिशापे समुत्तीर्णे प्रायश्चित्ते कृते बुधैः ।
दत्तं लेख्यं साक्षिमद्यत् शुद्धिपत्रं तदुच्यते ॥
मेलयित्वा स्वधनांशान् व्यवहाराय साधकाः ।
कुर्वन्ति लेखपत्रं यत्तच्च सामायिकं स्मृतम् ॥
सभ्याधिकारिप्रकृतिसभासद्भिर्नयः कृतः ।
तत्पत्रं वादिमान्यं चेज्ज्ञेयं संमतिपत्रकम् ॥
स्वकीयवृत्तज्ञानार्थं लिख्यते यत्परस्परम् ।
श्रीमङ्गलपदाद्यं वा सपूर्वोत्तरपक्षकम् ॥
असंदिग्धमगूढार्थं स्पष्टाक्षरपदं सदा ।
अन्यव्यावर्तकस्वात्मपरपित्रादिनामयुक् ॥
एकद्विबहुवचनैर्यथार्हस्तुतिसंयुतम् ।

---

(१) समु.४३. (२) समु.४४. (३) सवि.११७.
(४) शुनी.२।२८१-३११.

समामासतदर्धाहर्नामजात्यादिचिह्नितम् ॥
कार्यबोधि सुसंबन्धं नत्वाशीर्वादपूर्वकम् ।
स्वाम्यसेवकसेव्यार्थं क्षेमपत्रं तु तत्स्मृतम् ॥
एभिरेव गुणैर्युक्तं स्वाधर्षकविबोधकम् ।
भाषापत्रं तु तज्ज्ञेयमथवाऽऽवेदनार्थकम् ॥
प्रदर्शितं वृत्तलेख्यं समासाल्लक्षणान्वितम् ।
समासात्कथ्यते चान्यच्छेषायव्ययबोधकम् ॥
व्याप्यव्यापकभेदैश्च मूल्यमानादिभिः पृथक् ।
विशिष्टसंज्ञितैस्तद्धि यथार्थैर्बहुभेदयुक् * ॥
[1]समासतो लेख्यमुक्तं सर्वेषां स्मृतिसाधनम् ॥
[2]अनुभूतस्मारकं तु लिखितं ब्रह्मणा कृतम् ॥
[3]शासनार्थं ज्ञापनार्थं निर्णयार्थं तृतीयकम् ।
[4]अतीतकाललिखितं न तत्स्यात् साधनक्षमम् ।
अप्रगल्भेण च क्रिया बलात्कारेण यत्कृतम् ॥
सद्भिर्लेख्यैः साक्षिभिश्च भोगैर्दिव्यैः प्रमाणताम् ।
व्यवहारे नरो याति चेहामुत्र प्राप्नुते सुखम् ॥

## संग्रहकारः

[5]राजकीयं जानपदं लिखितं द्विविधं स्मृतम् ॥

[1]राजस्वहस्तचिह्नेन राजादेशेन संयुतम् ।
युक्तं राजाभिधानेन मुद्रितं राजमुद्रया ॥
[2]सुलिप्यनपशब्दोक्तिसंपूर्णावयवाक्षरम् ।
शासनं राजदत्तं स्यात्संधिविग्रहलेखकैः ॥

संधिविग्रहलेखकैर्लिखितमुक्तविधमन्यस्मै राजदत्तं शासनाख्यं स्यादित्यर्थः । एतच्च शासनं न दानसिद्ध्यर्थं, तस्य प्रतिग्रहेणैव सिध्देः । किन्तु दत्तस्य स्थैर्यकरणार्थम् । स्थिरत्वेऽक्षयफलश्रुतेः । तथा हि 'रुणद्धि रोदसी चास्य यावत्कीर्तिस्तरस्विनी । तावत्किलायमध्यास्ते सुकृती वैबुधं पदम्' ॥ स्मृच.५६

[3]चिरकं नाम लिखितं पुराणैः पौरलेखकैः ।
अर्थिप्रत्यर्थिनिर्दिष्टैर्यथासंभवसंस्तुतैः ॥
स्वकीयैः पितृनामाद्यैरर्थिप्रत्यर्थिसाक्षिणाम् ।
प्रतिनामभिराक्रान्तमर्थिसाक्षिस्वहस्तवत् ॥
स्पष्टावगमसंयुक्तं यथास्मृत्युक्तलक्षणम् ॥

---

* इतःपरं आयव्ययावान्तरनिरूपणं सविस्तरमभिहितं, तन्नात्र संगृहीतम् ।

(१) शुनी.२।३७६. (२) शुनी.४।६६६. (३) शुनी.४। ६६९. (४) शुनी.४।६७५-७६. (५) शुनी.४।६६७ (राजकीयं लौकिकं च द्विविधं लिखितं स्मृतम् ); स्मृच.५५; नृप्र.११; सवि.१११; व्यम.१२; बाल.२।९१; प्रका.३५.

(१) स्मृच.५६; व्यप्र.१४५ मुद्रितं (मण्डितं); प्रका.३६; समु.४० राजस्व (राज्ञः स्व).

(२) स्मृच.५६ सु.(स्व) नप (नय); व्यप्र.१४५; विता.११९ प्यनप (प्यं नाप); प्रका.३६ सु (स्व); समु.४० स्मृचवत्. (३) स्मृच.५९, १३६; पमा.१२७ चि (ची) ष्टैः (ष्टं) संस्तु (संस्कृ) पितृ (प्रति); नृप्र.११ यथास्मृ (यावत्स्मृ) शेषं पमावत्; प्रका.३८, ८५; समु.४१.

# भुक्तिः

## गौतमः

भुक्तिविशेषस्य स्वत्वहेतुत्वम्

[1]अजडाऽपोगण्डधनं दशवर्षभुक्तं परैः संनिधौ भोक्तुः ।

(१) **जडो** विकलेन्द्रियः, पोगण्डः पूतो गण्डः कपोलेऽनुत्पन्नः श्मश्रुर्यस्य स भण्यते । तथा नारदः—'बाल आ षोडशाद्वर्षात् पोगण्डो वाऽपि शब्द्यते'। केचित् पठन्ति 'पौगण्डश्चापि विंशतेः', तौ न भवत इत्यजडपोगण्डौ, तयोर्धनं तयोरेव संनिधौ परैर्भुक्तमन्यदीयं भवति । *व्यमा.३४६

(२) जडः उन्मुग्धचित्तः संव्यवहारायोग्यः। पोगण्डः अप्राप्तव्यवहारः । तौ मुक्त्वा यदन्यस्य धनं परैः असंबन्धैः तत्समक्षं स्वामिन्येकग्रामस्थित एवेत्यर्थः। भुज्यते तत् दशवर्षभोक्तुरेव भवति। न हि सति स्वामित्वे इयन्तं कालमुपेक्षणमुपपद्यत इत्यभिप्रायः । जडबालधनं तु नाह्रियते । तद्ग्रहणमाध्यादीनामप्युपलक्षणार्थम् । यथाह नारदः— 'आधिः सीमा बालधनं निक्षेपोपनिधिः स्त्रियः । राजस्वं श्रोत्रियस्वं च नोपभोगेन जीर्यति ' इति ॥ अत्र जडधनं न परिगणितमिति चेत् विंशतिवर्षेणापि जीर्णत्वं मा भूदिति । यथाह नारदः— 'प्रत्यक्षपरिभोगाच्च स्वामिनो द्विदशाः समाः । आध्यादीन्यपि जीर्येयुः स्त्रीनरेन्द्रधनादृते ' इति ॥ एवं च विंशतिवर्षात् बालधनं जीर्यत्येव । संनिधावित्यनेनैव परेषामर्थसिद्धत्वात्परग्रहणं संबन्धिभुक्तस्यानतिचारज्ञापनार्थम्। संनिधिग्रहणादन्यग्रामस्थस्य न दोषः। मभा.

(३) जड उन्मत्तः, पौगण्डो व्याकृतव्यवहारः । यो जडो न भवति पौगण्डो वा न भवति तस्य धनं परैः तत्संनिधावेव चेद्दश वर्षाणि भुक्तं भवति तदा तद्धनं भोक्तुरेव स्वमिति निश्चीयते । स एव भोगः स्वामिनः सकाशाद्दानादिरूपेण तस्य धनस्य निर्गतं सूचयति। गौमि.

श्रोत्रियादिभुक्तेर्न स्वत्वहेतुत्वम्

[1]न श्रोत्रियप्रव्रजितराजन्यपुरुषैः ।

श्रोत्रियादिभिर्भुज्यमानं न भोगमात्रात्तेषां भवति । उपेक्षाकारणत्वोपपत्तेः । श्रोत्रियप्रव्रजितयोर्धर्मतृष्णयोपेक्षेति । राजपुरुषस्य तु भयेन । राजपुरुषग्रहणं सर्वेषां बलवतामुपलक्षणम् । एतेन साहसिका व्याख्याताः । अपरिग्रहस्यापि प्रव्रजितस्य स्वस्वामिके शून्यगृहादावुपभोगः संभवति । *गौमि.

विषयविशेषभुक्तेर्न स्वत्वहेतुत्वम्

[2]पशुभूमिस्त्रीणामनतिभोगः ।

(१) अनतिभोगः अतिभोगेन न हानिरित्यर्थः । व्यक.७४

(२) पशुशब्देन सर्वे चतुष्पादा यज्ञिया गृह्यन्ते, 'चतुष्पादा वै पशवो यज्ञियाः' इति श्रुतिदर्शनात् ।भूमिः क्षेत्रारामादिः न गृहम् । 'दशवर्षाद् वेश्मनो भोक्तुर्न भूमिः' इत्यौशनसवचनात् । स्त्रियः परिचारिकाः। एषामनतिभोगः दशवर्षानुभवेन न स्वाम्यं भवतीत्यर्थः। तथा च नारदः—'अनागमं तु यद्भुक्तं वत्सराणां शतैरपि' इति । इदमपि वचनं पशुभूमिस्त्रीविषयत्वेन व्याख्यातमिति । मभा.

(३) पशवश्चतुष्पादः। भूमिः क्षेत्रारामादिका। स्त्रियः परिचारिका दास्यः । पश्वादीनां स्वत्वे नातिभोगोऽपेक्षितः । अल्पेनापि भोगेन भोक्तुः स्वं भवति। कथमन-

---

* व्यत., सेतु. व्यमागतम् ।

(१) **गौध.१२।३४; व्यमा.३४६** डा (ड) धौ (धाने); **व्यक.७३; मभा.; गौमि.१२।३४** पो (पौ); **स्मृसा.१०६** धौ+ (तस्य); **व्यचि.६७** परैः संनिधौ(संनिधौ परैः); **व्यत.२२३** पो (पौ); **व्यप्र.१६६** पो (पौ); **सेतु.८८** पो (पौ) वर्ष (वर्ष); **विच.१३७.**

* मभा. गौमिगतम् ।

(१) **गौध.१२।३५; व्यक.७३** राजन्य (राज); **मभा.; गौमि.१२।३५** जन्यपु (जपू); **व्यसौ.६९** गौमिवत्; **व्यप्र.१६६** व्यकवत्. (२) **गौध.१२।३६; व्यक.७४** भूमि (पुष्प); **मभा.; गौमि.१२।३६; व्यसौ.६९; व्यप्र.१६६** भूमि (पुरुष); **प्रका.४५.**

न्तरगृहे दृश्यमानां गां स्वयं तक्रादि क्रीत्वोपयुञ्जान उपेक्षेत? कथं वा बहुफलमारामम्? कथं वा दासीं यौवनस्थामन्वहं परिचारिकाम्? गौमि.

(४) अतिभोगे तद्धानिरेवेत्यर्थः। व्यप्र.१६६

## वसिष्ठः

भुक्तिविशेष एव स्वत्वहेतुः

[1]पैतृकं क्रीतमाधेयमन्वाधेयं प्रतिग्रहम्।
यज्ञादुपगमो वेणिस्तथा धूमशिखाऽष्टमी॥
[2]तत्र भुक्तानुभुक्तदशवर्षम्।अन्यथाऽप्युदाहरन्ति।
[3]आधिः सीमा बालधनो निक्षेपोपनिधिः स्त्रियः।
राजस्वं श्रोत्रियद्रव्यं न संभोगेन हीयते॥
[4]तच्च संभोगेन ग्रहीतव्यम्।

## विष्णुः

आध्यधिकारे भोगो गमकः

[5]ययोर्निक्षिप्त आधिस्तौ विवदेते यदा नरौ।
भुक्तिर्यस्य जयस्तस्य बलात्कारं विना कृता॥

वृद्धिग्रहणं तु न भोगः। आधिं विनापि सत्वेन व्यभिचारात्। तेन भोगाभावे पूर्वाऽपि न बलवती किन्तु भोगयुतोत्तरैव प्रबलेति मिताक्षरापरार्कस्मृतिचन्द्रिकामदनरत्नादिसर्वग्रन्थसिद्धान्तः। इदं चाधावेव। तत्र स्वत्वनाशपरस्वत्वयोरभावात्। प्रतिग्रहे क्रये च तयोः सत्वात् भोगरहिताऽपि पूर्वा बलवती दानमात्रेण सिद्धेति दिक्। विता.११६

सागमो भोगः स्वत्वहेतुः

[6]सागमेन तु भोगेन भुक्तं सम्यग् यदा भवेत्।
आहर्ता लभते तत्र नापहार्यं तु तत्कचित्॥

(१) सम्यगिति विंशतिवर्षपर्यन्तम्। व्यमा.३४५

(२) आहर्ता भोक्ता। अपहार्यस्तद्धनस्वामी। व्यचि.६४

निश्छिद्रत्वादिधर्मयुक्तः पितृभोगः स्वत्वहेतुः

[1]पित्रा भुक्तं तु यद्द्रव्यं भुक्त्याचारेण धर्मतः।
तस्मिन्प्रेते न वाच्योऽसौ भुक्त्या प्राप्तं हि तस्य तत्॥

भुक्त्याचारेण निश्छिद्रत्वादिना। व्यचि.६५

[2]त्रिभिरेव तु या भुक्ता पुरुषैर्भूर्यथाविधि।
लेख्याभावेऽपि तां तत्र चतुर्थः समवाप्नुयात्॥

(१) लेख्यं शुद्धप्रमाणोपलक्षणम्। यथाविधीति शक्तस्य संनिहितस्य विरोधं विनेत्यर्थः। व्यमा.३४१

(२) लेख्याभावेऽपि क्रयाद्यागमप्रकाशकप्रमाणाभावेऽपीत्यर्थः। स्मृच.७२

## कौटिलीयमर्थशास्त्रम्

भुक्तिविशेष एव स्वत्वहेतुः

[3]स्वस्वामिसंबन्धस्तु। भोगानुवृत्तिरुच्छिन्नदेशानां यथास्वं द्रव्याणाम्।

यत् स्वं द्रव्यमन्यैर्भुज्यमानं दश वर्षाण्युपेक्षेत, हीयेतास्य, अन्यत्र बालवृद्धव्याधितव्यसनिप्रोषितदेशत्यागराज्यविभ्रमेभ्यः। विंशतिवर्षोपेक्षितमनुवसितं वास्तु नानुयुञ्जीत।

ज्ञातयः श्रोत्रियाः पाषण्डा वा राज्ञामसंनिधौ परवास्तुषु विवसन्तो न भोगेन हरेयुः। उपनिधिमाधिं निधिं निक्षेपं स्त्रियं सीमानं राजश्रोत्रियद्रव्याणि च।

स्वस्वामिसंबन्ध इति सूत्रम्। स्वस्वामिनोः संबन्धः

---

(१) **वस्मृ.** १६।१३ (ख)पैतृकं (य एकं) वेणिः (वीणैः) ऽष्टमी (ष्टमी).

(२) **वस्मृ.** १६।१४-१५ (ख) (तत्र भुक्ते दशवर्षमेवोदाहरन्ति). (३) **वस्मृ.** १६।१६ (ख) बालधनो (धिकं चैव) संभोगेन हीयते (राजा दातुमर्हति). (४) **वस्मृ.** १६।१६ क-पुस्तके नास्ति.

(५) **विस्मृ.**५।१८० देते (देतां) भुक्तिर्यस्य जयः (यस्य भूक्तिः फलं); **विता.**११६.

(६) **विस्मृ.**५।१८१ तु भो (च भो); **व्यमा.**३४५ भोगे (भुक्ते) भुक्तं ... भवेत् (सम्यग् भुक्तं यदा तु यत्) तत्र (तत्तु) विष्णुकात्यायनौ; **व्यक.**७० भवेत् (तु यत्) तत्र (यत्र) विष्णुकात्यायनौ; **व्यचि.**६४ र्यं (र्यः); **नृप्र.**९ भवेत् (तु यत्) तत्र (तत्तु); **व्यसौ.**६५ भवेत् (तु यत्).

(१) **विस्मृ.**५।१८२; **स्मृसा.**१०४; **व्यचि.**६४ वाच्यो (वाद्यो); **नृप्र.**९; **समु.**४९ न वाच्योऽसौ (ऽपि तत्प्राप्तं) हि (तु) स्मृत्यन्तरम्.

(२) **विस्मृ.**५।१८३ तु (च) र्थः (र्थं); **व्यमा.**३४१ विष्णुकात्यायनौ; **व्यक.**७० तां (तत्) विष्णुकात्यायनौ; **स्मृच.**७२; **स्मृसा.**१०४; **व्यचि.**६४; **स्मृचि.**४९ तु या (यदा); **नृप्र.**९ र्थः ... यात् (र्थपुरुषान्विताम्); **चन्द्र.**१५४ यथाविधि (यदा भुवि); **प्रका.**४७; **समु.**४९ स्मृतिः; **विव्य.**१६.

(३) **कौ.**३।१६.

न्यायाधिगमलक्षणोऽभिधीयत इति सूत्रार्थः। स्वस्वामिसंबन्धस्त्विति। अधिक्रियत इति शेषः। भोगानुवृत्तिरिति। उच्छिन्नदेशानां उच्छिन्नसाक्षिकाणां, द्रव्याणां, यथास्वं यथायथं, भोगानुवृत्तिः अविच्छिन्नो भोगः, स्वत्वे प्रमाणं भवतीति वाक्यशेषः।

यदिति। यत् स्वं स्वीयं द्रव्यं अन्यैर्भुज्यमानं, दश वर्षाणि उपेक्षेत, हीयेतास्य उपेक्षमाणस्य तद् द्रव्यं हीयेत। अन्यत्र बालेत्यादि। बालवृद्धव्याधितव्यसनिप्रोषितानां द्रव्यं उपेक्षमाणानां न हीयेत, अबालादीनामपि द्रव्यं देशत्यागे राज्यविभ्रमे चोपेक्षमाणानां न हीयेत।

विंशतिवर्षोपेक्षितमिति। तथाविधं, अनुवसितं अविच्छिन्नाध्युषितं, वास्तु गृहं, नानुयुञ्जीत न प्रार्थयेत। इह वसितपदे संप्रसारणाकरणमार्षम्। तत्रापवादमाह— ज्ञातय इत्यादि। श्रीमू.

## शङ्खः

नियमतः पुरुषद्वयभोगः स्वत्वहेतुः

**पैत्रं विनाऽप्यागमेन पूर्वपुरुषाभ्यां भुक्तं लभेत।**

लभेत चतुर्थादिरिति शेषः। स्मृच.७३

## मनुः

भुक्तिविशेषः स्वत्वहेतुः

**यत्किञ्चिद्दश वर्षाणि संनिधौ प्रेक्षते धनी।**
**भुज्यमानं परैस्तूष्णीं न स तल्लब्धुमर्हति॥**

(१) यत्किञ्चिद्भुज्यमानमिति व्यवहितेन संबन्धः, धनीति संनिधानात्सामान्यनिर्देशेऽपि भुज्यमानधनोपेक्षणं प्रतीयते। यत्किञ्चिदिति दासदासीसारासारभाण्डादि सर्वं ग्राहयति। न हि तल्लोकेऽत्यन्तं धनमिति प्रसिद्धम्। गोभूहिरण्याद्येव महार्घं धनमिति प्रसिद्धतरम्। तेनायमत्र वाक्यार्थः— यत्किंचिद्द्रव्यं परेण भुज्यमानं धनी धनस्वामी दशवर्षाणि यावत्प्रेक्षते न किञ्चिद्वक्ति, न राजनि व्यवहरति, न कुलसमक्षं भोक्तारं वदति 'मदीयमेतत्किमिति त्वया स्वयं भुज्यते' इति, स दशभ्यो वर्षेभ्य उत्तरकालं न तल्लब्धुं स्वीकर्तुमर्हति, निवर्ततेऽस्य स्वाम्यमिति यावत्। प्रेक्षणेन ज्ञेयतामात्रमुच्यते न प्रत्यक्षतैव। संनिधाविति वक्ष्यामः। परैः न ज्ञातिसंबन्धिभिः। तथा च स्मृत्यन्तरम्—'ज्ञातिसंबन्धिभिर्विना' इति। 'संबन्धिबान्धवैश्चैव भुक्तं यज्ज्ञातिभिस्तथा। न तद् भोगान्निवर्तेत भोगमन्यत्र कल्पयेत्'॥ तदयुक्तम्। अव्यवस्थैवं सति स्यात्। के ज्ञातयः? के वा संबन्धिनः? इति संबन्धमात्रग्रहणे न किंचिद् व्यावर्त्यम्। तस्माद्येनान्यदीयं भुज्यते स पर एव भवति, किन्तु तथा सति परशब्दोऽनुवादमात्रमनर्थकः स्यात्। यस्य परस्यापि न परव्यपदेशः स निरस्यते यथा भार्यापती पितापुत्राविति। तत्र ह्यात्मव्यपदेशोऽस्ति 'अर्द्धो ह वा एष आत्मनो यज्जाया आत्मा वै पुत्रनामासि' इति। तेन दम्पत्योः पितापुत्रयोर्न भोगाभोगौ कारणम्। तेषामपि विभक्तधनानां भोगकाले प्राप्ते भोगो बाधक एव। भार्यया अपि स्त्रीधने भर्तृसकाशाद् गृहीते बन्धेन पत्युर्भोगे नासिद्धिः, सा ह्यत्यन्तपरवती, नोभयोर्विभागोऽस्ति, स्त्रीधनमपि तेनैव तस्याः परिपालनीयम्। 'राजस्त्रीश्रोत्रियद्रव्यादन्यत्र' इति च पठ्यते। एवमनेन स्वामिन उपेक्षमाणस्य स्वाम्यहानिरुक्ता। कस्य तर्हि तत्संभवतीत्येवमर्थमुत्तरश्लोकः। मेधा.

(२) यत्किञ्चिद्धनजातं समक्षमेवान्यैर्दशवर्षाणि भुज्यमानं धनस्वामी तूष्णीं प्रतीक्षते, किमेतन्मा मैवं भुङ्क्ष्वेति न प्रतिबध्नाति, नासौ तत्पुनर्न्यायेन स्वीकर्तुमर्हति। *गोरा.

(३) दशेति भूमिन्नधनपरम्। व्यचि.६७

(४) प्रीत्यादिव्यतिरेकेण परैर्दशवर्षाणि भुज्यमानम्। +व्यत.२२३

(५) प्रतिग्रहादि विना स्वत्वं नास्त्येव, किन्तु पूर्व-

---

(१) **स्मृच**.७३; **प्रका**.४७.

(२) **मस्मृ**.८।१४७; **व्यमा**.३४७ मनुनारदौ; **गौमि**.१२।३४; **दीक**.३३; **स्मृसा**.१०६ क्ष (क्ष्य) मनुनारदौ; **व्यचि**.६७; **व्यत**.२२२ मनुनारदौ; **चन्द्र**.१५३ मनुनारदौ; **व्यसौ**.६८ मनुनारदौ; **व्यप्र**.१५७ यत्किचित् (यं कश्चिद्) स्तूष्णीं (र्थं); **सेतु**.८८ मनुनारदौ; **समु**.४६; **विच**.१३६.

१ अवस्थितं.

* ममु. गोरावत्। + सेतु. व्यतवत्।

१ स्वमि. २ (०). ३ भोगो नि. ४ स एवं भ. ५ नर्थः कस्यापि न. ६ त्मन्यपि व्य. ७ प्तेऽभो. ८ र्याया. ९ ह्यात्य. १० ह्या स्त्री.

भुक्तभूम्यादिफलं बहुमूल्यमपि पूर्वस्वामिना न प्राप्यते, भूम्यादि प्राप्यते । एवं च वक्ष्यमाणं, 'भग्नं तद्व्यवहारेणे'ति भग्नं नष्टं न तद्धनं किन्तु तदुत्पन्नं बहुसस्यादि नष्टमित्यर्थः । मच.

(६) धनी आधाता उपनिधाता वा । नन्द.

**अजडश्चेदपोगण्डो विषये चास्य भुज्यते ।**
**भग्नं तद्व्यवहारेण भोक्ता तद्द्रव्यमर्हति ॥**

(१) न स तल्लब्धुमर्हतीत्यस्य शेषः । अजडश्चेदपोगण्डो, यदि जडः अप्रतिपत्तिमान्, पोगण्डो बालः, प्राक् षोडशाद् बालः पोगण्ड इत्युच्यते । एतच्च स्वधनसंरक्षणासामर्थ्यकारणानामन्येषामप्युपलक्षणार्थम् । मद्यद्यूतविषक्तता दीर्घरोगगृहीतता तपःस्वाध्यायैकपरत्वं व्यवहारेष्वनैपुण्यं वागिन्द्रियाभावो बाधिर्यं यस्यैतेऽसामर्थ्यहेतवः सन्ति न तदीये धने भोक्तुर्बहुतरेणापि कालेन स्वत्वमापद्यते । विषये चास्य भुज्यते । अस्येति धनिनः प्रत्यवमर्शः । विषयः काश्मीरकाणां[1] कश्मीराः, पञ्चालानां च पञ्चालाः । दूरदेशेषूषिते[2] स्वामिनि भोक्तुर्भोगाऽसिद्धिः । यदुक्तं संनिधाविति तस्यैवायं प्रपञ्चो विज्ञेय इति । यदि भोक्ता च स्वामी च एकस्मिन्नेव देशे वसेतां[3] तथापि समानदेशवासिनोऽपि[4] स्वामिनो न शक्तिविहीनस्यापहारः । अजडापोगण्डग्रहणस्य प्रदर्शनार्थतया व्याख्यातत्वात् । तेन यस्य जानतो यदुपेक्षाकारणं[5] न संभाव्यते, तदीयं धनं दशवर्षाणि भुञ्जानो भोक्तैवार्हति, तस्य तत्स्वमित्यवगन्तव्यम् ।

ननु च न भोगात्स्वत्वं युक्तं, स्वत्वे सति भोगो युक्तः । भोगाद्धि स्वत्वेऽव्यवस्था स्यात् । यश्चायमवधिर्दशवर्षाणीति, स स्मृत्यन्तरेण न सर्वस्मिन् धन इष्यते । किं तर्हि ? ' पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी ' इति ( यास्मृ.२।२४ ) । अन्ये तु विंशतिवार्षिकेणाऽपि भोगेन न[1] भूमेरपहारमिच्छन्ति त्रिपुरुषैव भुक्तिः प्रमाणमिति वदन्तः । अन्ये तु न कदाचिदागमरहितेन भोगेन स्वाम्यमनुमन्यन्ते । एवं ह्याहुः— 'अनागमं च यो भुङ्क्ते बहून्यब्दशतान्यपि' । तथा—'संभोगो यत्र दृश्येत न दृश्येतागमः क्वचित् । आगमः कारणं तत्र न संभोग इति स्थितिः' ॥ त्रिपुरुषभुक्तिवादिनस्त्वावदेवं पठन्ति— 'यद्विनागममत्यन्तं भुक्तं पूर्वैस्त्रिभिर्भवेत् । न तच्छक्यमपाहर्तुं क्रमात् त्रिपुरुषागतम्' ॥ अस्यायमर्थः—आगमो दानादिः, असति तस्मिन् यद्भुक्तं पितृपितामहप्रपितामहैस्तच्चतुर्थस्य सिध्यति न तु विंशत्या वर्षैः । तत्रान्यत्रोक्तम्—'आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा । अन्ते तु भुक्तिरेवैका प्रमाणं स्थावरे भवेत्' ॥ तृतीयस्य भोगात्सिद्धिर्न प्रथमद्वितीययोः पितृपितामहयोरस्यापि न विंशतिवर्षैर्भोगः प्रमाणम् । अन्ये त्वागमरहितस्य वार्षशतिकस्याऽपि भोगस्या[3]प्रामाण्यमनुमन्यन्ते । तथा चाहुः—'अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि । चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः ॥ भोगकेवलतां यस्तु कीर्तयेन्नागमं क्वचित् । भोगच्छलापदेशेन विज्ञेयः स तु तस्करः' इति ॥ उच्यते[5] । यदत्र चेदमुक्तं भोगो नैव प्रमाणमिति तदयुक्तम् । सर्वस्मृतिकारैस्त्रिपुरुषभोगस्य प्रामाण्येनाभ्युपगतत्वात् । यत्तु[6] बहून्यब्दशतानीति तदाहर्तृविषयं, यदात्मीयमेव भोगं चिरकालसिद्धिहेतुमाह तस्य पितृपितामहभोगेन विना न सिध्यतीत्यर्थः । कथं पुनरेकस्यानेकाब्दशतो भोगः पुरुषस्य ? नैष दोषः, चिरकालप्रतिपादनपरा बहुत्ववचनाः शतं सहस्रमित्यादयः शब्दाः । यथा 'शतायुर्वै पुरुषः शतवीर्यः शतेन्द्रिय' इति । एतदुक्तं भवति, विंशतिवार्षिकाद्भोगादधिकादपि न प्रथमभोक्तुर्भोगात्स्वत्वसिद्धिः। अथवा तत्परस्यापि न सिध्यतीति यथाश्रुतमेव । न हि बहुष्वब्दशतेष्वागमस्मरणं संभवति । ततश्च चिरन्तनदेवायतनब्राह्मणमठग्रामा राजभिरपह्रियेरन्, लेख्यशासनमपि राजाधिकृतलेखकलिखितमिति चिरन्तनेषु नैव प्रत्यभिज्ञायेत ।

(१) **मस्मृ**.८।१४८; **मिता**.२।२४ पो (पौ) द्रव्यं (धनं); **अप**.२।२४ मितावत्; **स्मृच**.६८ मितावत्; **दवि**.२९२ द्रव्यं (धनं); **सवि**.१२७ मितावत्; **चन्द्र**.१५३ पोग (योद) भग्नं (भग्न) द्रव्यं (धनं); **व्यप्र**.१५८ मितावत्; **विता**.१४५ ये चास्य (यो वास्य) भग्नं (भग्नः) शेषं मितावत्; **प्रका**.४५ द्रव्यं (धनं); **समु**.४७ प्रकावत्.

१ काश्मीराणां काश्मीरपञ्चा. २ 'दूर ... विज्ञेय इति' इत्यंशो नास्ति. ३ तथा. ४ 'समान ... न' इत्यंशो नास्ति. ५ दुपे.

१ 'न ... भोगेन' इत्यंशो नास्ति. २ नावस. ३ ग्यस्या. ४ आगमः कारणं तत्र न संभोग इति स्थितिः । . ५ 'उच्यते ... गतत्वात्' इत्यंशो नास्ति. ६ या तु. ७ लत्वे हे.

कूटशासनमपि संभाव्येत । तस्माच्चिरन्तनो भोगः स्वत्वकार्यः स्वत्वस्य दानाद्यागमसंभावनाया ज्ञापको हेतुर्न तु कारकः । अत एव भुक्तिः प्रमाणमध्ये पठिता— 'लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम्' इति । न तु स्वत्वकारणमध्ये 'सप्तवित्तागमा' ( मस्मृ. १०।१५५ ) इति 'श्रुतशौर्यतपःकन्या' ( मस्मृ. ४।२२७ ) इत्यादौ च । अथवा यत्र बलादिभोगकारणं संभाव्यते तद्विषयमेतत् 'अनागममि'त्यादि, अत्रैव प्रकरणे पठितम्—'अन्वाहितं हृतं न्यस्तं बलावष्टब्धयाचितम् । अप्रत्यक्षं च यद्भुक्तं षडेतान्यागमं विना' इति ।

ननु च 'आधिः सीमा' इत्यनेनैवायमर्थः सिद्धः । न, उक्तस्य कालस्य त्रिपुरुषं यावद् भुङ्क्ते स एवार्थः (?)। अयं तु तत उत्तरकालमपि निवृत्त्यर्थमारभते । तथा च 'बहून्यब्दशतानि' इत्यत्र वचनम् । अन्वाहितं यत्प्रकटमन्यथा प्रदर्श्यान्तर्हितमन्यदवस्थाप्यते, बन्धोपाहृतं रात्रौ संधिभेदच्छलादिना, बलावष्टब्धं प्रसह्येति विशेषः । शिष्टं प्रसिद्धम् । यदि त्रिपुरुषा भुक्तिः प्रमाणं, कस्तर्हि यदुक्तं 'पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी' इत्यस्यार्थः ? केचिदाहुः— इयन्तं कालं भुञ्जानस्य सति लेख्यदोषादौ शङ्काभियुक्तादिकृतत्वं क्रमाक्षरविलोपा ······इत्येवमर्थमेव उच्यते (?) । संदिग्धरूपमपि लेख्यमियता भोगकालेन निश्चीयते । अन्ये त्वाहुः यत्रैकं एव तामेव भूमिमेकस्य बन्धायार्पयति तामेव चापरस्यैकस्य आद्यं प्रमाणमपरस्य पाश्चात्यम् । तत्र सत्यपि प्रामाण्यस्याद्यत्वे पाश्चात्यो विंशतिवार्षिको भोगो बलवानेतच्चायुक्तम् । 'येनैव स्वीकृतो बन्धस्तस्यैव सः' 'आधेः स्वीकरणात् सिद्धिः' इति वचनात् । स्वीकारश्च भूमेर्भोगामिर्ष्वङ्ग एव तेनेदृशे विषये स्वल्पेनापि भोगकालेन बन्धसिद्धिः । एतदेवाभिप्रेत्योक्तम्— 'विद्यमानेऽपि लिखिते जीवत्स्वपि हि साक्षिषु । विशेषतः स्थावराणां यन्न भुक्तं न तत्स्थिरम्' इति ॥ विशेषग्रहणं गवाश्वादावभुज्यमानेऽपि नासिद्धिर्यतः ते न अवश्यंभोग्याः तथा हि भवद्गौर्गर्भं गृह्णाति, कीदृशोऽस्या अतो भोगः ? भूमिस्तु सर्वदा फलदेति भोगलाभमन्तरेण न बन्धत्वसिद्धिः । तत्रापि कथंचिदुपेक्ष्यमाणस्य तु यच्छतः प्रथमभोगकाल एव यदि द्वितीयेन आधिग्राहकेण संनिकर्षादिना स्वीकृतः स्यादितरेण वा आद्यप्रमाणवता देशविप्रकर्षात्कार्यव्यासङ्गाद्वा न स्वीकृतः तदा विचार्यते, नेयता तदसिद्धिः । यदा तु गृहीताधिरेव समनन्तरं राज्ञा प्रव्राजितो महान्तं व्याधिमाससाद, न वाऽस्यान्योऽर्थरक्षाद्यधिकृतः कश्चिदस्ति स चिरेणाप्यागतः, सिद्धावपि निरुपधिप्रमाणकाले, लभत एव स्वीकृतमप्यन्येन ।

अन्ये तु भ्रातॄणां न्यूनाधिकविभक्तानां पुनर्विभागः समीकरणार्थं उक्तः, स विंशतिवर्षेभ्य ऊर्ध्वं नास्ति इत्येवमर्थमिदमाहुः । एतावन्मात्रफलत्वे तत्रैवाभिधानमुचितम् । सामान्याभिधानं तु प्रकरणोत्कर्षेणान्यविषयतामपि ज्ञापयति ।

अपरे तु खिलीभूता भूमिर्येन क्षेत्रीकृता तत्र भूमिस्थानोपभोग उक्तः । स चेदेतावन्ति वर्षाणि न निगृहीतः ततः क्षेत्रपितैव स्वामीत्येवमादिर्विशेषविषय इत्येवमाहुः । इह भवन्तस्त्वाहुः, यौ समानदेशौ समानसामर्थ्यौ समानस्वभावौ समानधनौ तत्प्रयोजनावपरस्परसंबन्धिनौ तयोरन्यतरस्येतरेण भुज्यमानमियन्तमवधिं समक्षमुपेक्षमाणस्यास्त्येवं स्थावरेषु स्वाम्यम् । किन्तु त्रिपुरुषभुक्तिविरोधात् न सर्वेण सर्वं समर्थनीयम् । विरुद्धे ह्येते स्मृती । ते न किमपि कल्पनमर्हतः, येनास्ति च स्वाम्यं, नास्ति चेत् किञ्चिद्युज्यते, तत एव व्यवस्था युक्ता ।

यद्यपि स्वत्वागमकारणानि बहूनि सन्ति दानविक्रयबन्धकरणादीनि, तथाऽप्यनुपलभ्यमानकारणविशेषे विंशतिवार्षिकभोगेऽनन्तरादर्शितविषये बन्धरूपताऽभ्युपगन्तुं युक्ता, चञ्चलं भोग्यं च स्वत्वं, वस्त्वपचये तत्प्रत्याहर्तुं लभ्यते । ततश्च त्रिपुरुषा भुक्तिः सर्वस्य स्वमापादयति दानविक्रयसंभावनया यावत्येव सा वार्षिकी (?) भविष्यति, विंशतिवार्षिके तु भोगे न किंचिदनुपपन्नम् ।

१ राम. २ त्वत्रै. ३ याचितान्वाहितं न्य. ४ (०). ५ ष्बत्वं प्र. ६ किय. ७ सक्ता. ८ लेपादसत्यनयाभ्यामधमर्ण उ. ९ त्रैव ता. १० रेक. ११ भिलषैव ते. १२ गमिति का.

१ तथा सूत्रक्षेत्रयन्त्रैश्च स्वामी भूमित्वेन स च विषय. २ स्यैव. ३ (०). ४ (०). ५ षु. ६ न्ना.

यत्रोभावप्यागममन्तरेण भोगमात्रबलात्प्रवृत्तौ तत्र पूर्वो भोगश्चिरन्तनोऽपि विंशतिवर्षभोगेन साम्प्रतिकेन निरुपाधिना बाध्यते। दण्डापूपिकया[1] आगमवतः इयत्कालो भोगः त्रिपुरुषागतताया भुक्तेर्बाधक इत्युक्तं भवति ।

भग्नं तद्व्यवहारेणेति। व्यवहारग्रहणं धर्मनिवृत्त्यर्थम्। तेन यदि कथञ्चिज्जानीते तदा जीयेत, तदापि त्वनेन उपधिना[2] भुक्तं पूर्वस्वामिनस्तं उपधिभोगज्ञापने प्रमाणं नास्ति। तेन व्यवहारतो[3] जीयते[4]। तद्धर्मो नास्ति तादृशेन भोगेनापहरतः[5] इति। तिष्ठत्वेतत्। - मेधा.

(२) निधानस्वामी यदि बुद्धिविकलो न भवति बालो वा, अस्य च तस्मिन्नेव देशे व्यवस्थितस्यान्येन तदीयं भुज्यते तद्धनं व्यवहारेण भग्नं, स्वामिनस्तत्र विवादो न भवति। यतो भोक्तैव तद्धनमर्हति। व्यवहारेण भग्नमिति वचनाद् धर्मेण तत् स्वामिन एव सर्वदा स्वम्। एवं चायं पूर्वशेषश्लोकः। *गोरा.

(३) तथा च यत्परमार्थतः परकीयमेव व्यवहारेणैवार्जितं तत्प्रत्यवायभयादेव यथास्थानं गमयितव्यम्। ×अप.२।२५

(४) विषये तस्य पुनः पुनर्ज्ञानविषये। +मवि.

(५) जडादेस्तदपि सस्यादिकं न नश्यतीत्याह— अजड इति। अस्येदृशधनस्वामिनो विषये दर्शनविषये। +मच.

(६) मिता.टीका—तद्धनं तदुत्पन्नं फलरूपम्। बाल.२।२४

(७) विषये निवारणयोग्ये देशे। +नन्द.

(८) अजडः स्पष्टवाक् बुद्धिविकलो न चेत्, पोगण्डो दशमावधि। +भाच.

आधिप्रीतिभोग्यादेर्भोगो न स्वत्वहेतुः

**आधिश्चोपनिधिश्चोभौ न कालात्ययमर्हतः।**

* ममु. गोरावत्।

× मिताक्षराकाराणां स्वाभिप्रायस्तु पश्यतोऽब्रुवतो' इति याज्ञवल्क्यवचने (पृ. ३८९) द्रष्टव्यः। + शेषं गोरागतम्।

(१) **मस्मृ.**८।१४५; **व्यमा.**३४९ अव (नाव) तां तौ (दासौ) मव (मुप); **व्यक.**७३; **स्मृसा.**१०६; **व्यचि.**६८,

१ दण्डपूर्विकयाऽत्रागतः इ. २ (०). ३ हर. ४ न्ते. ५ पहतः.

**अवहार्यौ भवेतां तौ दीर्घकालमवस्थितौ ॥**

(१) आधिरुक्तार्थः। प्रीत्या भुज्यमानः उपनिधिस्तु वस्त्रान्तर्हितो न्यासः।[1] तौ चिरकालं न स्थाप्यौ। किं तर्हि? प्राप्ते काले मोक्षणीयौ। आधेर्मोक्षणकालो[2] द्विगुणीभूतं धनं तस्यातिक्रमस्तस्मिन्नपि कालेऽमोक्षणम्। उपनिधिरपि। यावता कालेन न अस्यावसरो भवति, मदीयमेवैतद्भोक्ताऽहमिति, स प्रत्याहरणकालः ततोऽधिकः कालः कालात्ययस्तं नार्हतः स न कर्तव्य इत्यर्थः। हेतुमाह। अवहार्यौ भवेतां ताविति। तौ हि दीर्घकालमवस्थितावप्रत्याह्रियमाणौ[3] हानिं गच्छतः। तस्माद्द्विगुणीभूतधने[4] आधिमोक्षणे प्रयतितव्यम्। सुहृदुपदेशोऽयं 'न त्वेवाधावि'ति। भूयसाऽपि कालेन[5] नापहारः। यतो वक्ष्यति—'आधिः सीमा बालधनमि'ति अतस्तस्यैवायमनुवादः।

अन्ये त्वाधिविषयमुपदेशमिच्छन्ति। यो द्वेषेण द्विगुणीभूते धने कालं क्षपति, तत् त्रिलाभं धनं नाधिकं वर्धते। न चास्याधुनाऽन्यत्राधानविक्रयौ स्तः, इह वृद्धिमयं मा लभतामित्यनेन मात्सर्येण, तत्रेदमुच्यते अवहार्यौ भवेतां ताविति। अनया बुध्याऽमोक्षयतः स्वाम्यमस्य निवर्तते। यस्तु कथंचिदसति धने न मोक्षयति, तस्य विसर्गविक्रयौ[6] न स्त इति। अथवाऽपरोऽर्थः, सुखेनोपेक्षयति[7] इति, परहस्तगतयोर्नाशशङ्कयोच्यते[8] अवहार्यौ भवेतामिति। **मेधा.**

(२) बन्धः प्रीतिभोग्यश्च पदार्थः- एतौ द्वौ कालातिक्रमणं नार्हतः, अपि तु प्राप्ते काले स्वामिना प्रत्याहरणीयौ यस्मात्तस्मात्तौ दीर्घकालमन्यहस्तावस्थितौ आधित्वोपनिधित्वात् साक्ष्याद्यभावेन हारयितुं शक्याविति। गोरा.

(३) आधिर्बन्धकम्। उपनिधिरेव भोगार्थं समर्पितं क्षेत्रादि। न तु 'वासनस्थमनाख्याये'त्यादिस्मृत्युपलक्षितः। तस्योपभोगानर्हत्वात्। कालात्ययः उक्तावधिकालाति-

७५ श्चोभौ (श्चैव); **स्मृचि.**११; **व्यसौ.**६८ श्चोभौ (श्चैतौ); **प्रका.**४५ अव (अप) मव (मपि); **समु.**४७ अव (अप); **विव्य.**१९ श्चोभौ (श्चैव) मव (मपि).

१ शाखान्तरवदन्तर्वित्तो न्यासः. २ ले द्वि. ३ व्यवहार्याविति स्थितम्. ४ नेऽधि. ५ (०). ६ निस. ७ मुखे. ८ तया शङ्क.

क्रमः । न कालात्ययमर्हतः,मोक्षणकालेऽवश्यं मोक्षणीयावित्यर्थः । तत्र हेतुमाह—'अवहार्यौ भवेतामि' त्यादिना । तौ हि चिरकालावस्थितौ भोक्तुरवहार्यौ भवेतां, भोक्ता कदाचिदपहरेदपीत्यर्थः । +व्यक.७३

(४) आधिग्रहणानन्तरमल्पमूल्यापत्तौ तत्पूरकतया यत्नेन सह स्थाप्यते स उपनिधिः । कालात्ययं कालातिक्रमं नाशम् । अवहार्यौ स्वामिना आनेतव्यौ । *मवि.

(५) नारदस्मृतिलक्षितौ च निक्षेपोपनिधी तावेवात्रोपनिधिशब्देन गृह्येते । एतावाध्युपनिधी चिरकालावस्थितावपि न कालात्ययमर्हतः । यदैव स्वामिना प्रार्थितौ तदैव तस्यावहार्यौ समर्पणीयावित्यर्थः । ममु.

(६) स्वामिप्रार्थने सति सुदीर्घकालेऽपि उपनिधिरिवाधिरपि न नश्यतीति वार्थः । 'न त्वेवाधावि' त्यत्रात्ययाभावस्योक्तत्वात् । ×मच.

**[1]चिरकालेऽपि न तयोर्भोगात्स्वत्वमिति स्थितिः ॥**
**[2]संप्रीत्या भुज्यमानानि न नश्यन्ति कदाचन ।**
**धेनुरुष्ट्रो वहन्नश्वो यश्च दम्यः प्रयुज्यते ॥**

(१) प्रीतिरेव संप्रीतिः । तया हेतुभूतयोपभुज्यन्ते धेन्वादयस्ते न नश्यन्ति । पूर्वस्वामिसंबन्धहान्या भोक्तुः [1]स्वत्वापत्तिर्नाशः, स धेन्वादीनां प्रीत्या भुज्यमानानां न भवति । ननु च सर्वस्यैवोपनिधेर्भोगेनापहारो नास्ति, वक्ष्यति–'निक्षेपोपनिधिः[2] स्त्रिय' इति । को विशेषो धेन्वादीनाम् ? उच्यते; यत्र दशवर्षो भोगो न च स्वरूपनाशः, तत्र 'यत्किञ्चिदि'ति सामान्यवचनेन प्राप्तेऽपहारे उपनिधेः प्रतिषेधः; धेन्वादीनां तूपनिधित्वमेव नास्त्यतः प्रतिषेधस्य नायं विषय इति स्यादाशङ्का । आधाननिमित्तो हि धेनुशब्दो यदि परसंवत्सरे धेनुः स्यात् परत उपसर्या, यदि गर्भमादध्याद्धेनुत्वमापद्येत, तदा जनयेदाशङ्कामस्यैवेयं न देवदत्तस्य, यतः प्रष्ठौही न भोग्या, प्रीतिसंभोग्यश्चोपनिधिः । येन स्वकैः भोग्यं परिपाल्य पुनर्भुज्यमानं दृष्टं, न पुनरुपनिधेरेतद्रूपं, भोग्यो ह्युपनिधिः असद्भावाद्भोग्यस्य च कीदृशगुणमुपनिधित्वम् ? उपनिधेश्चासौ प्रतिषेधः । तस्मादुपनिधिरूपातिक्रमादसति तस्मिन् प्रतिषेधे यत्नान्तरमुक्तम् । उष्ट्रादीनामपि दशवर्षाणि भुज्यमानानामवस्थान्तरापत्तिः । अतस्तत्रापि नोपनिधित्वम् । वहन्निति केचिदश्वविशेषणं मन्यन्ते । वृषस्य नायं विधिः । अपरे तु गर्दभाश्वतरार्थं मन्यन्ते । दम्यो बलीवर्दः । प्रयुज्यते, [2]वाहनार्थं यो दीयते ।

अन्ये तु पुनः प्रतिषेधं विकल्पार्थं मन्यन्ते । एतद्व्यतिरेकेणान्यस्योपनिधेरस्ति कादाचित्कोऽपहारः । तेन यद्वस्त्रादि प्रीत्या भुज्यते[3], यावत्परिक्षीणं तत्रास्त्येवापहारः[4] । न हि प्रीत्या गृहीते वस्त्रे[5] परिक्षीणे स्वामिनोपेक्षिते[6] पुनरवसरोऽस्ति, देहि मे वस्त्रं विनाशितं त्वया तत्समेन मूल्येन [7]संशोधयेति । मेधा.

(२) दोग्ध्री गौरुष्ट्रो वहंश्चाश्व एते प्रीत्या अन्योन्यं भुज्यमाना न कदाचिदपि स्वामिनोऽपहार्यन्ते । अश्वादि दमनार्थं दमनस्य दीयते । संप्रीत्या भुज्यमानानीति सामान्योपक्रमविशेषाभिधानम् । *गोरा.

(३) एते दशवर्षोर्ध्वमपि न नश्यन्ति । धेनुर्दुह्यमाना गौः । वहन्नश्वो न त्ववहन् । दम्यो दमनीयो बलीवर्दो यः स्वयं दान्तः कृत्वा प्रयुज्यते हले । मवि.

(४) 'यत्किंचिद्दशवर्षाणि' इत्यनन्तरं भोगेन स्वत्वहानिं वक्ष्यति तदपवादार्थमिदम् । ×ममु.

(५) क्वचिदन्यत्रापि नष्टफलहान्यपवादो मनुनोक्तः–संप्रीत्येति । व्यप्र.१६५

आध्यादिभोगो न स्वत्वहेतुः

**[1]आधिः सीमा बालधनं निक्षेपोपनिधिः स्त्रियः ।**
**राजस्वं श्रोत्रियस्वं च न भोगेन प्रणश्यति + ॥**

+ स्मृसा., व्यचि., नन्द. व्यकगतम् ।
* भाच. वाक्यार्थो मविवत् । × शेषं ममुवत् ।

(१) समु.४७. (२) मस्मृ.८।१४६; व्यक.७४ प्रयुज्य (समर्प्य); स्मृच.६९; पमा.१४९; स्मृसा.१०७; व्यचि. ७१ कदा (कथं); स्मृचि.११, ५०; सवि.१२९ यश्च (यच्च); व्यसौ.६९; व्यप्र.१६५; व्यम.१५; प्रका.४५; समु.४७.

१ सत्वा. २ धिश्चय.

* नन्द. गोरागतम् । मच.गोरागतं ममुगतं च ।
× शेषं गोरागतं मविगतं च ।
+ अत्रत्यः गोविन्दराजीयग्रन्थः अशुद्धिसंदेहान्नोद्धृतः ।

(१) मस्मृ.८।१४९; व्यमा.३५१ आधिः सीमा बाल (दायसीमादाय) निधिः (निधि) मनुनारदौ; व्यक.७४ मनु-

१ मानास. २ वाहान्यस्य स्पन्दीयते. ३ तो. ४ तत्रत्येवोप. ५ स्त्रे तस्योप. ६ क्षते. ७ संसाधयति.

(१) आधीयत इत्याधिर्बन्धकद्रव्यं गोभूहिरण्याद्युच्यते। यच्चोत्तमर्णाद्धनमादीयते। उपनिधिः वस्त्रान्तरेणान्तर्हितो न्यास उक्तः। यदप्रदर्शितरूपं सचिह्नं वस्त्रादिना पिहितं निक्षिप्यते। प्रीतिभोग्यं तु युक्तमुपनिधिशब्दवाच्यम्। तस्य निक्षेपग्रहणेनैव गृहीतत्वात्। सीमा मर्यादा। ग्रामादीनां बहुसाधारण्याद्धि तत्रोपेक्षा संभवति। गृहादीनां तु प्राकारपरिखादिरूपा द्वित्रिहस्तपरिमाणरूपा द्वयोः साधारणी याऽन्यतरेण कथंचिदुपजीव्यमाना, स्वल्पत्वाद्भोगस्य कश्चित्कियन्तं कालमुपेक्षेतापि, तत्रापि न दानादि स्वत्वापगमहेतुं संभावयति। अतस्तत्पुत्राः पौत्रा वा गूढचिह्नादिना प्रज्ञापितसीमत्वादाच्छिन्दन्त्येव। बालधनं दृष्टान्तार्थं, पोगण्डशब्दस्य दर्शितत्वादित्युक्तम्। स्त्रियो दास्यः। भार्या वा। नेतरस्याधनस्यापहार उक्तो 'धनस्य दशवार्षिकी' इति।

ननु च नेह धनमस्ति यत्किञ्चिदिति वस्तुमात्रनिर्देशोऽयम्। नैवं, धनीति संबन्धात् धनविषयतैव यत्किञ्चिदिति सामान्यशब्दस्य प्रतीयते। क एवमाह स्त्रियो न धनमिति। ईच्छाविनियोज्ये द्रव्ये धनशब्दो वर्तते विनिमयादृते। अथास्मादेव स्त्रीधनात्स्वत्वमात्रोपलक्षणम्। धनोपमानेन पुमांसोऽपि भोगेन दासाः स्वीक्रियन्त एव। राजस्वं, देशेश्वरा राजानः तेषां धनम्। ते हि महाधनत्वादुग्रत्वाच्च स्वयं धनमन्विच्छन्तोऽधिकृतैरुक्तभेदादिभिर्निर्धनीक्रियन्ते तद्धनोपेक्षया। श्रोत्रियद्रव्यं श्रोत्रियधनाभियुक्तिः। मेधा.

(२) सीमा चिह्ननिर्णीता। बालधनमिति पूर्वश्लोकव्यतिरेकः। स्त्रियोऽन्यपरिणीता दास्यश्च। आध्यादिकमबालधनमपि न नश्यतीत्येतदर्थं बालधनोक्तिः। प्रणश्यति भोक्तुः स्वं भवति। मवि.

(३) सीम्नि तत्रत्यचिह्नैः सुसाधनत्वमुपेक्षाकारणम्। स्त्रीष्वप्रागल्भ्यं, राजश्रोत्रिययोर्दृष्टादृष्टकार्यवैयग्र्यम्। अवशिष्टेषूपेक्षाकारणं व्यक्तम्। एवं संबन्धरूपोपेक्षाकारणसंभवेऽप्यहानिः। स्मृच.६९

(४) उक्तेन दशवर्षभोगेन न स्वामिनो नश्यन्ति न भोक्तुः स्वत्वं भजन्ते। ममु.

(५) श्रोत्रियग्रहणमन्यासक्तोपलक्षणार्थम्। पमा.१४८

(६) उक्तार्थे प्रतिप्रसवमाह—आधिरिति। सीमा चतुर्विधा वक्ष्यमाणा। बालधनं राजरक्षितातिरिक्तम्। राजस्वं करशुल्कादि। श्रोत्रियस्वं धनभूम्यादिमात्रम्। एषूत्पन्नं वृद्धिसस्यापत्याद्यपि न नङ्क्ष्यतीति भावः। *मच.

(७) निक्षेपः ऋणार्थं परत्र निहितोऽर्थः। आध्युपनिध्योः स्वामिना प्राप्तकालात्प्राचीनभोगविषयोऽयमपवादो ग्राह्यः। अन्यथा 'आधिश्चोपनिधिश्चोभौ न कालात्ययमर्हतः' इत्यनेन विरोधप्रसङ्गः स्यादिति। नन्द.

आगमभोगविरोधे प्राबल्यदौर्बल्ये

**संभोगो दृश्यते यत्र न दृश्येतागमः क्वचित्।**
**आगमः कारणं तत्र न संभोग इति स्थितिः॥**

(१) यस्मिन् वस्तुनि गोवस्तुहिरण्यक्षेत्रादावन्यस्य भोगो दृश्यते अन्यस्य च रिक्थप्रतिग्रहादिरागमः स्वाम्यापादकस्तत्रागमो बलवान्न भोगः। भोग एव संभोगः। कारणं स्वाम्ये तत्र इति स्थितिः एवमनादिव्यवस्था, न भोगमात्रेण स्वत्वम्। यादृशेन च स्वत्वं तत्पुरस्ताद् व्याख्यातम्। 'यत्किंचिद्दश वर्षाणि' इति वानेन विरोधः तत्रैव परिहृतः। मेधा.

(२) यस्मिन् वस्तुनि भोगो दृश्यते, आगमः पुनः क्रयादिः न क्वचिदस्ति, तत्रागमः कारणं न संभोगोऽतश्च शुद्धागमस्य दशवर्षभोगेनापि कार्यसिद्धिः। +गोरा.

(३) इत्यादीनि मन्वादिवचनानि स्वल्पकालभोगाभिप्रायाणि। व्यमा.३४२

---

नारदौ; **स्मृच**.६९ स्वं च...श्यति (द्रव्यं नोपभोगेन नश्यति); **पमा**.१४८ आधिः (आधि) बाल (बल) शेषं स्मृचवत्; **स्मृसा**.१०७ न भोगेन प्रण (नोपभोगेन न) मनुनारदौ; **व्यचि**.७१ न भो...ति (नोपभोगेन शाम्यति); **स्मृचि**.५० व्यचिवत् ,मनुनारदौ; **सवि**.१२९ सीमा बाल(च सीमाऽऽत्म) निधिः (निधि) शेषं स्मृचवत्; **चन्द्र**.१५३ व्यचिवत्; **व्यसौ**. ६९ न भो...ति (नोपभोगेन सिध्यति); **व्यप्र**.१६६ निधिः (निधी) शेषं स्मृसावत्; **प्रका**.४५ स्मृचवत्; **समु**.४७ स्मृचवत्; **विव्य**.२०.

१ शास्त्रा. २ यमा. ३ क्षय तत्रा. ४ (०). ५ सत्वा. ६ तः. ७ न्धेन विष. ८ इत्थं वि. ९ (०). १० दुच्चत्वान्वयं धन. ११ विरुतभेदा. १२ दूनापे.

* शेषं ममुगतम्। + ममु. गोरावत्।

(१) **मस्मृ**.८।२००; **व्यमा**.३४२ दृश्यते यत्र (यत्र दृश्येत); **अप**.२।२७ व्यमावत्; **समु**.४८ व्यमावत्.

(४) अत्र आगमः स्वामित्वपरिच्छेदे संभोगसहितः कारणं न तु केवलः संभोग इत्युक्तम् । अप.२।२७

(५) एकस्य भोगो दृश्यते आगमश्च लेख्यादिर्न दृश्यते इतरस्य च आगमो दृश्यते तत्र यस्यागमस्तस्यैव, न भोगिन इत्याह—संभोग इति । मवि.

(६) आगमः प्रतिग्रहक्रयादिः कारणं तद्दते दशवर्षोत्तरं भोगमात्रात्स्वत्वासिद्धेः भुक्त्यसत्त्वे आगमो न प्रमाणं किन्तूभयम् । मच.

(७) नाष्टिकविप्रतिपत्तौ बलाबलमाह – संभोगो यत्रेति । यत्र अस्वामिना विक्रीतेऽर्थे एकस्य संभोगो दृश्यते तत्रागमः कारणं प्रमाणं, न संभोगः अस्वामिविक्रयसाधर्म्यात् । नन्द.

**[१]यद्विनागममत्यन्तं भुक्तं पूर्वैस्त्रिभिर्भवेत् ।**
**न तच्छक्यमपाहर्तुं क्रमाधिपुरुषागतम् ॥**

## याज्ञवल्क्यः

भुक्तिविशेषः स्वत्वहेतुः

**[२]पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी ।**
**परेण भुज्यमानाया धनस्य दशवार्षिकी * ॥**

(१) भुक्तौ तु—पश्यतोऽब्रुवतो भूमेरिति । पश्यन्नपि यः परैरसंबद्धैर्भुज्यमाने न किञ्चनेयता कालेनापि ब्रूयात्, नूनं तदीयं न भवेदित्यभिप्रायः । कालनियमस्तु वेदमूलतयैव द्रष्टव्यः । नन्वेतदयुक्तम्, यदनभिधानमात्रेणैवार्थनाशः । एवं तर्ह्येतदपि वेदादेव । उपेक्षयापि द्रव्यनाशो भवतीत्यतो द्रष्टव्यम् । परैर्भुज्यमानं नोपेक्षणीयमित्यभिप्रायः । अथेतरस्य किं स्वत्वसंबन्धोऽस्ति ? पूर्वस्य तावद्धानिरित्याचार्याभिप्रायः । इतरस्यापि तु स्वत्वं नैव, परस्वबुद्ध्यैव भोगप्रवृत्तेः । यद्येवं न, तर्हि राज्ञस्तदा दोषः । तदपि सत्यम् । अथ किं ? नृपस्यैव तद् भवतु स्वामिनो हान्युपदेशात्, तथाविधस्य च राजगामित्वात् । अथवा पूर्वस्वामिन एव तदर्पणीयं तत्स्वत्वापाये हेत्वभावात् । स्मृतिस्तु दृष्टमूलतयाऽप्युपपद्यत एव । उपेक्षानिषेधमात्रं चैतत् । हानिवचनं तु निन्दामात्रत्वेनोपेक्षकस्य व्यवहारप्रवृत्त्ययोग्यतामात्रज्ञप्तिफलम् । तदेव चात्र युक्तम् । अन्यथा श्रुतहानिरश्रुतकल्पना च स्यादित्यलं प्रसङ्गेन । विश्व.२।२४

(२) परेणासंबन्धेन ।' भुज्यमानां भुवं धनं वा । पश्यतः अब्रुवतः मदीयेयं भूः न त्वया भोक्तव्येति अप्रतिषेधयतः । तस्या भूमेर्विंशतिवार्षिकी अप्रतिरवं विंशतिवर्षोपभोगनिमित्ता हानिर्भवति । धनस्य तु हस्त्यश्वादेर्दशवार्षिकी हानिः ।

नन्वेतदनुपपन्नम् । न ह्यप्रतिषेधात्स्वत्वमपगच्छति, अप्रतिषेधस्य दानविक्रयादिवत् स्वत्वनिवृत्तिहेतुत्वस्य लोकशास्त्रयोरप्रसिद्धत्वात् । नापि विंशतिवर्षोपभोगात्स्वत्वम् । उपभोगस्य स्वत्वे प्रमाणत्वात् प्रमाणस्य च प्रमेयं प्रत्यनुत्पादकत्वात् । रिक्थक्रयादिषु स्वत्वकारकहेतुषु अपाठाच्च । तथा हि 'स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु । ब्राह्मणस्याधिकं लब्धम् । क्षत्रियस्य विजितम् । निर्विष्टं वैश्यशूद्रयोः' (गौध. १०।३८-४१) इत्यष्टावेव स्वत्वकारणहेतून् गौतमः पठति न भोगम् । न चेदमेव वचनं विंशतिवर्षोपभोगस्य स्वत्वोत्पत्तिहेतुत्वं प्रतिपादयतीति युक्तम् । स्वत्वस्य स्वत्वहेतूनां च लोकप्रसिद्धत्वेन शास्त्रैकसमधिगम्यत्वाभावात् । एतच्च विभागप्रकरणे निपुणतरमुपपादयिष्यते । गौतमवचनं तु नियमार्थम् । अपि च, 'अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि । चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः' ॥ इत्येतदनागमोपभोगस्य स्वत्वहेतुत्वे विरुद्ध्यते । न च 'अनागमं तु यो भुङ्क्ते' इत्येतत्परोक्षभोगविषयं 'पश्यतोऽब्रुवत' इति प्रत्यक्षभोगविषयमिति युक्तं वक्तुम्,

---

* व्यचि.व्याख्यानं व्यप्र.व्याख्याने द्रष्टव्यम् । व्यमा. अशुद्धिबहुलत्वान्नोद्धृतम् ।

(१) **मस्मृ**.८।१४९ इत्यस्योपरिष्टात् प्रक्षिप्तश्लोकोऽयम् ।

(२) **यास्मृ**.२।२४; **अपु**.२५३।५२-५३; **विश्व**.२।२४; **मेधा**.८।३ : ८।१४८ पू.; **मिता**.; **व्यमा**.३४२ भूमेर्हानि (हानिर्भूमे); **अप**.; **गौमि**.१२।३४; **स्मृच**.६८,३११; **पमा**.१४७; **स्मृसा**.९४ भूमेर्हानिर्विंशति (हानिर्धनस्य दश) धनस्य दश (भूमेर्विंशति) : १०६,१०९; **व्यचि**.६५ व्यमावत् : ७५; **नृप्र**.८; **व्यत**.२०८ भवदेवभट्टधृतपाठस्तु स्मृसावत्, शूलपाणिधृतपाठस्तु व्यमावत् : २२२ व्यमावत्; **सवि**.१२५, ४४३; **मच**.८।१४८; **चन्द्र**.१५३ परेण (संनिधौ) नाया (नस्य) शेषं व्यमावत्; **व्यसौ**.६८ भूमेर्हानिर्विंशति (हानिर्भूमेर्द्वादश); **वीमि**. व्यमावत्; **व्यप्र**.१५७ नाया (नस्य); **व्यम**.१५; **विता**.१४४; **राकौ**.३९५; **सेतु**.८७ व्यमावत्; **प्रका**.४४-४५; **समु**.४६; **विच**.१३६ व्यमावत्.

'अनागमं तु यो भुङ्क्ते' इत्यविशेषाभिधानात् । 'नोपभोगे बलं कार्यमाहर्त्रा तत्सुतेन वा । पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः'॥ इति कात्यायनवचनाच्च । समक्षभोगे च हानिकारणाभावेन हानेरसंभवात् । न चैतन्मन्तव्यम् । आधिप्रतिग्रहक्रयेषु पूर्वस्याः क्रियायाः प्राबल्यादपवादेन भूविषये विंशतिवर्षोपभोगयुक्तायाः, धनविषये दशवर्षोपभोगयुक्तायाः, उत्तरस्याः क्रियायाः प्राबल्यमनेनोच्यते इति । यतस्तेषूत्तरैव क्रिया तत्त्वतो नोपपद्यते स्वमेव ह्याधेयं देयं विक्रेयं च भवति । न चाहितस्य दत्तस्य विक्रीतस्य वा स्वत्वमस्ति । अस्वस्य दाने प्रतिग्रहे च दण्डः स्मर्यते । 'अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति । उभौ तौ चौरवच्छास्यौ दाप्यौ चोत्तमसाहसम्' इति ॥ तथा आध्यादीनां त्रयाणामपवादत्वेऽस्य श्लोकस्याधिसीमादीनामुत्तरश्लोकेऽपवादो नोपपद्यते । तस्माद्भूम्यादीनां हानिरनुपपन्नैव । नापि व्यवहारहानिः । यतः, 'उपेक्षां कुर्वतस्तस्य तूष्णींभूतस्य तिष्ठतः । काले विपन्ने पूर्वोक्ते व्यवहारो न सिध्यति' ॥ इति नारदेनोपेक्षायां लिङ्गाभावकृता व्यवहारहानिरुक्ता न तु वस्त्वभावकृता । तथा मनुनाऽपि ( ८।१४८ ) 'अजडश्चेदपौगण्डो विषये चास्य भुज्यते । भग्नं तद्व्यवहारेण भोक्ता तद्धनमर्हति' ॥ इति व्यवहारतो भङ्गो दर्शितो न वस्तुतः । व्यवहारभङ्गश्चैवम् । भोक्ता किल वदति 'अजडोऽयमपौगण्डोऽबालोऽयमस्य संनिधौ विंशतिवर्षाण्यप्रतिरवं मया भुक्तं तत्र बहवः साक्षिणः सन्ति । यद्यस्य स्वमन्यायेन मया भुज्यते तदायं किमित्येतावन्तं कालमुदास्ते इति' तत्र चायं निरुत्तरो भवतीति । एवं निरुत्तरस्यापि वास्तवो व्यवहारो भवत्येव । 'छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः' (यास्मृ. २।१९) इति नियमात् ।

अथ मतम् । यद्यपि न वस्तुहानिर्नापि व्यवहारहानिस्तथापि पश्यतोऽप्रतिषेधतो व्यवहारहानिशङ्का भवतीति तन्निवृत्तये तूष्णीं न स्थातव्यमित्युपदिश्यत इति । तच्च न । स्मार्तकालाया भुक्तेर्हानिशङ्काकारणत्वाभावात् । तूष्णीं न स्थातव्यमित्येतावन्मात्राभिधित्सायां विंशतिग्रहणमविवक्षितं स्यात् । अत्रोच्यते । विंशतिग्रहणमूर्ध्वं पत्रदोषोद्भावननिराकरणार्थम् । यथाह कात्यायनः—'शक्तस्य संनिधावर्थो यस्य लेख्येन भुज्यते । विंशद्वर्षाण्यतिक्रान्तं तत्पत्रं दोषवर्जितम्' इति ॥ तदपि न । आध्यादिष्वपि विंशतेरूर्ध्वं पत्रदोषोद्भावननिराकरणस्य समत्वेनापवादासंभवात् । यथाह कात्यायनः—'अथ विंशतिवर्षाणि आधिर्भुक्तः सुनिश्चितः । तेन लेख्येन तत्सिद्धिर्लेख्यदोषविवर्जिता' ॥ तथा– 'सीमाविवादे निर्णीते सीमापत्रं विधीयते । तस्य दोषाः प्रवक्तव्या यावद्वर्षाणि विंशतिः' इति ॥ एतेन धनस्य दशवार्षिकीत्येतदपि प्रत्युक्तम् । तस्मादस्य श्लोकस्यान्योऽर्थो वक्तव्यः । उच्यते । भूमेर्धनस्य च फलहानिरिह विवक्षिता न वस्तुहानिर्नापि व्यवहारहानिः । तथा हि, निराक्रोशं विंशतिवर्षोपभोगादूर्ध्वं यद्यपि स्वामी न्यायतः क्षेत्रं लभते, तथापि फलानुसरणं न लभते, अप्रतिषेधलक्षणात् स्वापराधात्, अस्माच्च वचनात् । परोक्षभोगे तु विंशतेरूर्ध्वमपि फलानुसरणं लभत एव । पश्यत इति वचनात् । प्रत्यक्षभोगे च साक्रोशे अब्रुवत इति वचनात् । विंशतेः प्राक् प्रत्यक्षे निराक्रोशे च लभते, विंशतिग्रहणात् ।

ननु तदुत्पन्नस्यापि फलस्य स्वत्वात्तद्धानिरनुपपन्नैव । बाढं, तस्य स्वरूपाविनाशेन तथैवावस्थाने यथा तदुत्पन्नपूगपनसवृक्षादीनाम् । यत्पुनस्तदुत्पन्नमुपभोगान्नष्टं तत्र स्वरूपनाशादेव स्वत्वनाशः । 'अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि । चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः' ॥ इत्यनेन वचनेन निष्क्रयरूपेण गणयित्वा चौरवत्तत्समद्रव्यदानं प्राप्तं हानिर्विंशतिवार्षिकीति अपोद्यते । राजदण्डः पुनरस्त्येव विंशतेरूर्ध्वमपि । अनागमोपभोगादपवादाभावाच्च । तस्मात्स्वाम्युपेक्षालक्षणस्वापराधादस्माच्च वचनाद्विंशतेरूर्ध्वं फलं नष्टं न लभत इति स्थितम् । एतेन धनस्य दशवार्षिकीत्येतदपि व्याख्यातम् । *मिता.

(३) भूम्यादिधनविषये स्वामित्वं प्रति भुक्तेः क्वचिद्विषये आगमसापेक्षायाः, क्वचिच्च तन्निरपेक्षायाः प्रामाण्यं वक्ष्यति; तस्याः विशेषणं तावदाह—पश्यत इति । आध्यादिव्यतिरिक्ताया भूमेः परेण प्रत्यर्थिना विंशतिवर्षाणि यावद्भुज्यमानाया अर्थिनः पश्यत इमां

* पमा., सवि., व्यम., विता, मितागतम् ।

भूमिमेष भुङ्क्त इति प्रत्यक्षमुपलभमानस्याब्रुवतोऽनाक्षिपतो हानिः स्वस्वामिसंबन्धाभावो भवति। एवं भूव्यतिरिक्तस्य धनस्य दश वर्षाणि भुज्यमानस्य हानिः। एवंविधा हि भुक्तिस्तूष्णींभूतस्य पश्यतः स्वामित्वे सति न घटते। किं तु भोक्तुरेव स्वामित्वे सति भुज्यत इति भवति तत्र भुक्तिः प्रमाणम्।

एतच्च व्यवहारस्थितिमाश्रित्योच्यते। न धर्मगतिम्। अत एव मनुः (८।१४८)—'अजडश्चेदपौगण्डो विषये चास्य भुज्यते। भग्नं तद्व्यवहारेण भोक्ता तद्धनमर्हति'॥ तथा च यत्परमार्थतः परकीयमेव व्यवहारेणैवार्जितं तत्प्रत्यवायभयादेव यथास्थानं गमयितव्यम्। यत्तु नारदेनोक्तं 'अनागमं च यो भुङ्क्ते बहून्यब्दशतान्यपि। चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः' इति॥ तत् बहुबालादिधनविषयम्। पूर्वजभूमिभोक्तृपुरुषविषयं वा। अत एव वक्ष्यति—'आगमस्तु कृतो येन' इत्यादि। अप.

(४) याज्ञवल्क्येनाप्येवमुपेक्षकस्य हानिरेवाभिहिता न पुनर्भोक्तुः स्वत्वापत्तिः पश्यत इति। हानिश्चात्र लिखितबलेनात्मीयत्वप्रसाधनमात्रस्याभिप्रेता। न पुनर्भूम्यादौ तत्फले वा स्वत्वस्य। नोपेक्षामात्रेण स्वत्वमपैतीत्युक्तत्वात्। तेनात्र न धर्माख्यनिर्णयवशादुपेक्षकस्य हानिः। तद्वशेनात्मीयत्वप्रसाधनसंभवात्। नैवं व्यवहाराख्यनिर्णयवशेन। लेख्यवैगुण्यस्योक्तत्वात्। किं तु द्वितीयव्यवहाराख्यनिर्णयात्। भोक्तुरनिन्द्यत्वं स्वामिनो निरुत्तरत्वेनास्वामिना जितत्वात्। स्मृच.६८

(५) मिता.टीका—भुक्तेः कैश्चिद्विशेषणैर्युक्ताया इति। आसेधराहित्यचिरकालत्वादीनि विशेषणानि तैर्युक्तायाः। अत्र क्रिया नाम करणं कृतिरिति यावत्। सुबो.

(६) अत्र हलायुधनिबन्धे स्वरसः—आगमस्मरणार्हकाले सागमैव भुक्तिः प्रमाणम्। त्रैपुरुषिकभोगे त्वागमाऽस्मरणे भुक्तिः प्रमाणम्। 'स्मार्तकाले क्रियाभूमेः सागमा भुक्तिरिष्यते। स्मार्ते त्वागमाभावात् क्रमात्त्रिपुरुषागता'॥ इति कात्यायनवचनात्। हानिप्रतिपादकानां च वाक्यानां प्रमाणपरिपालनकर्तव्यताशेषत्वात्। तथा च बृहस्पतिः—'भूमेरभुक्तिर्लेख्यस्य यथाकालमदर्शनम्। अस्मारणं साक्षिणां च स्वार्थहानिकरणानि तु॥ तस्माद्यत्नेन कर्तव्यं प्रमाणपरिरक्षणम्। तेन कार्याणि सिद्ध्यन्ति स्थावराणि चराणि च'॥ तस्माद्दशविंशत्यादिवर्षपर्यन्तं समक्षमन्यस्य भुञ्जतः संबन्धिनोपेक्षा यदा कृता तदा हानिरपि तावत्संभाव्येत। तस्मान्नोदासितव्यम्। विंशत्यादिग्रहणं दीर्घकालोपलक्षणार्थं न तु विंशत्यादिवर्षपर्यन्तं पश्यतोऽब्रुवतः पूर्वस्वामिनो बाल्यादिदोषरहितस्य स्वत्वं नाशयति भोक्तुश्च स्वत्वं जनयति पूर्वस्वामिस्वत्वाभावं भोक्तुः स्वत्वं चागमयति भुक्तिरेवागमानपेक्षिणीति युक्तम्। उक्तयुक्तेः कात्यायनविरोधादन्यपरत्वाच्चेति। भवदेवनिबन्धे लिखितं एवमेव यथोक्तकालव्यापिनी भुक्तिः प्रमाणम्। ननु आगमयुक्ता भुक्तिः प्रमाणमुक्तं न तु भुक्तिमात्रम्। तथा च याज्ञवल्क्यः—'आगमेन विशुद्धेन भोगो याति प्रमाणताम्। अविशुद्धागमो भोगः प्रामाण्यं नाधिगच्छति'॥ पुलहोऽप्याह—'भोगं तु केवलं यश्च कीर्तयेन्नागमं क्वचित्। भोगच्छलापदेशेन विज्ञेयः स तु तस्करः'॥ व्यासेनाप्युक्तम्—'अनागमं तु यो भुङ्क्ते बहून्यब्दशतानि च। चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः'॥ अतः कथमभिधीयते भुक्तिः केवलैव प्रमाणमिति उच्यते। नैतानि वचनानि सर्वत्रागमसहितभुक्तिप्रामाण्यप्रतिपादकानि। पूर्वोक्तानेकवचनविरोधात्। युक्तिविरोधाच्च। न हि संभवति विद्यमाने संबन्धिनि स्नेहादिकं विनान्येनाविवादेन विंशत्यादिवर्षपर्यन्तं भूमिर्भुज्यते। तेन तत्र निरपेक्षा भुक्तिरेव प्रमाणम्। यच्च याज्ञवल्क्यवचनं पुलहवचनं च, तत्स्वल्पकालभोगाभिप्रायम्। व्यासवचनं प्रतिवादिनोऽसंनिधाने पुरुषैकद्वयंभोगाभिप्रायम्। त्रिपुरुषभोगस्य तत्रापि प्रमाणत्वात्। तथा च कात्यायनः—'आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा। कारणं भुक्तिरेवैका संततं या चिरन्तनी'॥ इत्थमपराण्यपि वचनानि समर्थनीयानीति न किञ्चिदनुपपन्नम्।

इदं तु विचिन्त्यं, किमयं भोगो भूम्यादिषु विंशत्यादिवर्षावच्छिन्नः पूर्वोत्पन्नस्वत्वे प्रमाणं, अभिनवस्वत्वोत्पादको वा? न तावदभिनवस्वत्वे प्रमाणम्। 'अन्यायेनापि यद्भुक्तं पित्रा पूर्वतरैस्त्रिभिः। न तच्छक्यमपाकर्तुं क्रमात्त्रिपुरुषागतम्'॥ इत्यत्र नारदेनान्यायप्रवृत्तत्रिपुरुषभोगस्वत्वसंबन्धस्य प्रतिपादितत्वात्। यदि पूर्वोत्पन्नमेव स्वत्वं तदा कथमन्यायेनेति संगच्छते? न हि स्वम-

न्यायेन भुज्यते। किं च भोगप्रमाणत्वमनुपपन्नं वक्तव्यं लिङ्गरूपेणाधानम(?)प्यनुपपत्तिरूपेण प्रमाणम्। तदा सा किमनुपपत्तिः स्त्रीराजधनगोचरा नास्ति? ततश्च कथं तत्पर्युदासः 'स्त्रीधनं च नरेन्द्राणां न कदाचन जीर्यति' इत्यादिना? किं च यत्रापि भोगः प्रमाणं तत्रापि वैषम्यमनुपपन्नं भूम्यादिभोगादौ विंशतिवर्षाणीतरद्रव्येषु दशवर्षाणीति। अतो भूम्यादेरेव महाफलत्वेनानुपपत्तेः शीघ्रत्वमुचितम्। अतो नानुपपत्तित्वेन भोगः प्रमाणं नापि लिङ्गरूपेण। एवंविधभोगे स्वत्वप्रतिबन्धस्यापरिदृष्टत्वात्। नापि भोगेन स्वत्वमेवोत्पाद्यते। याजनाध्यापनादिव्यतिरिक्तस्यैवंविधभोगस्य स्वत्वोत्पत्तिकारणत्वेनाश्रुतत्वात्। अतः कथं भोगः प्रमाणमिति। उच्यते, भवेदेवं यदि भोगो भोक्तुः पूर्वोत्पन्नस्वत्वे प्रमाणमिति ब्रूमः। किं तर्हि? पूर्वसंबन्धिस्वत्वत्यागे। अत एव याज्ञवल्क्यनारदादिवचनान्यपि न भोक्तुः स्वत्वप्रतिपादकानि, किं तु पूर्वसंबन्धिस्वत्वहानिख्यापकानि 'पश्यतोऽब्रुवतो हानिर्धनस्य दशवार्षिकी। परेण भुज्यमानाया भूमेर्विंशतिवार्षिकी'॥ इत्येवमादीनि। तेन पूर्वसंबन्धिनो विप्रतिपत्तिं विनाऽन्यायेनापि चिरप्रवृत्तभोगोऽनुपपद्यमानः पूर्वसंबन्धिनस्तदुद्देशेन स्वत्वत्यागं कल्पयतीति न विरोधः। प्रमाणमप्यर्थापत्तिरेव। एतेन भोक्तुरेव स्वत्वं सिध्यति। यदुद्देशेन यत्त्यज्यते तस्य तत्स्वं भवतीति सार्वजनीनमेव। नारदेनाप्यनेनैवाभिप्रायेण भुक्तेः स्वत्वहेतुत्वमुक्तम्। यथाह—'भुज्यमानान् परैरर्थान् यस्तान्मोहादुपेक्षते। समक्षं तिष्ठतोऽप्यस्य तान्भुक्तिः कुरुते वशम्'॥ ननु सानुपपत्तिः स्त्रीराजधनयोरप्यस्तीति तत्रापि किमिति स्वत्वत्यागं न कल्पयति? न, स्त्रीणामदेयत्वेनान्योद्देशत्यागेनापि स्वत्वस्यानिवृत्तत्वात्। तथा च नारदः—'अन्वाहितं याचितकमाधिः साधारणं च यत्। निक्षेपः पुत्रदाराश्च सर्वस्वं चान्वये सति॥ आपत्स्वपि हि कष्टासु वर्तमानेन देहिना। अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम्'॥ तथा राज्ञः तस्यापि विस्तरत्वादविवादस्याप्रतिसंबन्धनादप्युपपत्तेः (?) न त्यागकल्पनोपपत्तिमती। कालवैषम्यं च त्यागकल्पनायां ममत्वातिशयादुपपद्यत एव। तथा हि, भूमिः खलु महाफलत्वान्ममत्वातिशयभाजनम्। तेन तत्र चिरकालसाध्येनैव स्वत्वहानिकल्पना भवतीति युक्तम्। तथा आध्यादिषु ममत्वातिशयादेव चिरकालमन्तरेण स्वत्वहानिकल्पना न संभवतीत्यूहनीयम्। तदितरद्रव्याणां स्वतन्त्रकालेनापि स्वत्वहानिकल्पना युक्तिमतीति नानुपपन्नमिति। अस्तु वा स्वत्वोत्पादक एव भोगः। कालवैषम्यादिकं वचनकमेव भविष्यति। एवं हि यथा तदेव जननं हि पुत्रस्य स्वत्वोत्पादकं न सुतायास्तथा सम एव भोगः तत्कालावच्छिन्नो भूम्यादिषु स्वत्वोत्पादको न स्त्रीराजधनयोरिति किमनुपपन्नम्? अस्मिन् पक्षे उक्तं नारदवचनम्— 'तान् भुक्तिः कुरुते वशम्' इति; तदपि मुख्यमेव। भुक्तेरेव स्वत्वहेतुत्वात्। यच्च भोगस्य स्वत्वोत्पादकत्वं निरस्तं, तदप्ययुक्तम्। तदन्यत्र नावगतं तथाप्येतान्येव वचनानि गमयन्तीति नानुपपन्नं किञ्चिदिति।

स्मृसा. १०७-११०

(७) विवादमकुर्वतः समक्षं भूस्वामिनः परेणासपिण्डादिना भुज्यमानाया भूमेर्विंशतिवर्षनिवृत्ता स्वत्वहानिः। अत्र लोकव्यवहारकर्मत्वाद्वर्षगणना सावनेन। तथा च विष्णुधर्मोत्तरम्—'सत्राण्युपास्यान्यथ सावनेन लौक्यं च यत् स्यात् व्यवहारकर्म'। तत्रैव 'सावने च तथा मासि त्रिंशत्सूर्योदयाः स्मृताः' इति। तस्माद् याज्ञवल्क्यादिवचनाद्विंशतिवर्षदशवर्षादिकालैर्भोग एव स्वत्वं जनयति, तथा कालप्रातिबलेन बीजमङ्कुरं जनयति, तरवश्च कुसुममिति। स्वामिना च अपरित्यक्तेऽपि शास्त्रोक्तकालीनभोगात् स्वाम्यमन्यस्य भवति। यथा जयेन राज्ञः परराष्ट्रधने इति। एवमेव श्रीकरबालकयोग्लोकभवदेवभट्टशूलपाणिकुल्लूकभट्टचण्डेश्वरमन्त्रिनव्यवर्धमानोपाध्यायप्रभृतयः। व्यवहारोऽपि तादृगेव। एतद्विरुद्धवचनान्यन्यथा व्याख्येयानि। *व्यत. २२२-२२३

(८) आगमोऽभ्यधिक इत्यनेन सागमत्वम्। विंशतिवार्षिकीत्यादिना दीर्घकालत्वं निश्छिद्रत्वं च, 'अब्रुवत' इत्यनेनाऽन्यरवोज्झितत्वं, 'पश्यत' इत्यनेन प्रत्यर्थिसंनिधानत्वं च दर्शितम्। क्वचित्त्रिपुरुषभोगादौ सागमत्वं नाऽपेक्षितमित्युक्तं, तत्र चिन्त्यते—आगमव्यतिरेकेण भोगप्रामाण्ये स्मृतिविरोधः। तथा च नारदः—'अनागमं तु' इत्यादि। 'आगमेन विशुद्धेन भोगो याति

* सेतु., विच. व्यतवत्।

प्रमाणताम् । अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छति' ॥ इति अत्रैवकारेण सिद्धस्य पुनरभिधानेन च सर्वत्र भोगस्यागमसापेक्षत्वमवगम्यत इति ।मैवम्, आगमव्यतिरेकनिश्चयपरत्वात् नारदवचनस्य । एवं च त्रिपुरुषभोगादेरागमसंदेहेऽपि प्रामाण्यम् । एवं च विंशतिवर्षादिभुक्तिरागमनिश्चयसापेक्षैव प्रमाणमिति व्यवस्थितम् । नन्वेवमपि 'पश्यतोऽब्रुवतो हानिः' इत्यादेः 'अध्यासनात्समारभ्य भुक्तिर्यस्याविघातिनी । त्रिंशद्वर्षाण्यविच्छिन्ना तस्य तां न विचालयेत्' इति वचनविरोधस्तदवस्थ एव । त्रिंशद्वर्षभुक्तेः प्रामाण्याभिधानेनार्थतो विंशतिवर्षभुक्तेः प्रामाण्यनिरासादिति चेत्, न; 'पश्यतोऽब्रुवत' इत्यादेर्नीरवभोगपरत्वात् बृहस्पतिवचनस्य च विघातिनीति शब्देन कलहताडनादिरूपविघाताभावविशिष्टाया रवयुक्ताया अपि भुक्तेः प्रामाण्यबोधकत्वात् । एवं च सर्वेषां वचनानां विषयभेदेन विरोधे परिहृतं दशवर्षादिभोगादीनां स्वत्वजनकत्वं तत्प्रमापकत्वं वा ? नाद्यः, प्रतिग्रहादेरिव भोगस्य स्वत्वहेतुत्वबोधकाभावात् । नान्त्यः, भूयशोऽन्यायकृतभोगे व्यभिचारादिति । हन्तैवं त्रिपुरुषभोगेऽपि दीयतां दृष्टिः । यदि तु वचनबलात्तत्र छलव्यवहारेणैव निर्णयः । यद्वा त्रिपुरुषभोगप्रामाण्यप्रतिपादकवचनमेव तत्र स्वत्वोत्पत्तौ मानं तदा प्रकृतेऽपि तुल्यं, न त्वेवं षण्मासादिभोगोऽपि न्यायतौल्येन प्रमाणं स्यादिति चेत् न, वाचनिकेऽर्थे न्यायानवकाशादिति दिक् । *वीमि. २।२९

(९) [ मिताक्षरागतं– 'भुक्तेः स्वत्वे प्रमाणत्वं, नोत्पादकत्वम्' इतिमतमुपन्यस्य ] अत्राहापरार्कः— व्यवहारस्थितिमाश्रित्येदमुच्यते न धर्मगतिमिति परस्वापहारप्रत्यवायभीरुणा परेण पूर्वस्वामिने तदर्पणीयम् । सभापतिसभ्यादीनां व्यवहाररीत्या तत आच्छिद्य तद्दानेऽपि न क्षतिः । अत एव मनुः— 'अजडश्चेदपौगण्डो विषये चास्य भुज्यते । भग्नं तद्व्यवहारेण भोक्ता तद्धनमर्हति' ॥ व्यवहारेण भोक्तार्हतीति व्यवहारस्थितिमेवोक्तवान् । बृहस्पतिरपि 'सतापि लेख्येन' इत्याह । 'अनागमम्' इत्यादि नारदवचनं तु बहुतरधनभूमिविषयमेकपुरुषनियमाभावनिश्चयविषयं वा । अत एव योगीश्वरः– 'आगमस्तु कृतो येन' इत्युक्तवान् । तस्मात् 'निह्नुते लिखितं' इत्यादिवचनेन यथा यथापेक्षिततर्कसहकृतेनैकदेशसाधनेऽन्यैकदेशदापने निवेदितैकदेशस्य प्रागनिवेदितस्यादापनेऽपि न व्यवहारदर्शिनां दोषस्तथात्रापीति ।

तदयुक्तम् । 'छलं निरस्य' इत्यादिना व्यवहारदर्शिनामप्येतादृशविषये दोषावर्जनीयत्वात् 'निह्नुत' इत्यादिवदत्र सत्तर्काभावाच्च । अस्मदुपपादितरीत्या तत्रापि तथानभ्युपगमाच्च । तच्च प्रपञ्चितं विशेषपरिभाषाप्रस्तावे । एवंविधा हि भुक्तिस्तूर्ष्णीभूतस्य पश्यतः स्वामित्वे सति न घटते, किं तु भोक्तुरेव स्वामित्वे सति युज्यते इति भवति तत्र भुक्तिः प्रमाणमिति पूर्वं स्वयमेव स्वामिस्वत्वहानिपरस्वत्वोत्पत्तिपरत्वव्याख्यानेनास्य विरोधाच्च । न च तदप्येतदनुग्राहकतर्कप्रदर्शनेन व्यवहारस्थितिपरमेव न वस्तुगतिपरम् । व्यवहारहानिश्च भोक्ता यत्रैवमुपन्यस्यति– अजडोऽयमपौगण्डोऽयमेतत्समक्षं मया भुज्यमानं क्षेत्रादि यत्रैतदीयमनेन कुतो विंशतिवर्षावधि न प्रतिषिद्धम् ? अस्मिंश्चार्थे गुणोपेता बहवः साक्षिणः सन्तीति, तथोपन्यस्ते चायं निरुत्तरोऽवश्यं भवतीति वाच्यम् । अस्य सत्तर्कत्वाभावात्, आगमप्रमाणानुपन्यासेन मूलशैथिल्यात् । उपेक्षाहेत्वभावकृतव्यवहारहानावपि वस्त्वनुसरणस्यावश्यकत्वात् । तथा च नारदः उपेक्षालिङ्गाभावकृतामेव व्यवहारहानिमाह न वस्त्वभावकृताम् । 'उपेक्षां कुर्वतस्तस्य तूर्ष्णीभूतस्य तिष्ठतः । काले विपन्ने पूर्वोक्ते व्यवहारो न सिध्यति' ॥ न च निरुत्तरताप्रयुक्तव्यवहारहानिशंकानिरासाय प्रत्यक्षं स्वीये वस्तुनि परेण भुज्यमाने तूर्ष्णीं न स्थेयमित्युपदेशार्थमिदं वचनं हीनादिलक्षणवदिति वाच्यम् । विंशत्यादिग्रहणस्यैवमानर्थक्यप्रसङ्गात् । ततोऽर्वागपि व्यवहारहानिशङ्कायास्तुल्यत्वात् । लेख्यदोषोद्भावनमुत्तरकाले न कार्यं ततोऽर्वाक्तु कार्यमित्येतदर्थं तद्ग्रहणमिति चेत् न, आध्यादिष्वपि विंशत्याद्युत्तरकाले तदनुद्भावनस्य तुल्यतयैतदपवादत्वेनोत्तरवाक्यासंगतेः । तच्च लेख्यप्रस्तावेऽभिहितम् ।

( अत्र मिताक्षराकाराणां 'न वस्तुहानिर्न व्यवहारहानिरनेन' इति मतं प्रदर्श्य ) अत्रेदं वक्तव्यम् । नष्टफलालाभे प्रतिषेधरूपापराध एव बीजं वचनं वा । नाद्यः । विंशत्यादिवर्षोपभोगवत्ततः प्रागपि समक्षभोगे-

* शेषं व्यतगतम् ।

ऽप्रतिषेधापराधस्य तुल्यत्वात् तत्कृतनष्टफलालाभप्रसङ्गे विंशत्यादिग्रहणाऽविवक्षाप्रसङ्गदोषसाम्यात् । तत्परिहाराय वाचनिकत्वं यदि नष्टफलालाभस्य, तर्हि यथाश्रुतभूम्यादिस्वत्वहानिरेव वचनादस्तु, किं नष्टफलपरतया लाक्षणिक्या । अत एव कल्पतरुरत्नाकरस्मृतितत्त्वस्मृतिचन्द्रिकाकारादिभिर्वचनस्वरसायात एष एवार्थोऽभ्युपगतः ।

अत्र ब्रूमः । यावता विना वचनमनुपपन्नं तावदेव वचनमस्तके कल्प्यम् । अत एव यथाश्रुतार्थग्रहणे समक्षभोगोपेक्षायां स्वत्वनाशकत्वमुपभोगस्य परकृतस्य तत्कालीनस्य स्वत्वोत्पादकत्वमलौकिकं वचनान्तरविरुद्धं च कल्प्यम् । अस्मन्मते तु नष्टफले धर्मिनाशात् स्वत्वनाशः क्लृप्त एव परस्वत्वोपभोगे चौरादिवन्निष्क्रयरूपेण तत्प्रत्यर्पणमपि लोकप्रसिद्धत्वात् प्रसक्तं विंशतिवर्षाद्युत्तरमपराधविशेषात् स्वामिनस्तदलाभमुखेन प्रतिषिध्यते स एव चास्य दण्डः । इतरत्सर्वं वचनान्तराविरुद्धमेवेति ।

भवदेवस्तु---किमयं विंशतिवर्षाद्यवच्छिन्नोऽप्रतिरवो भोगो वचनावगतो भोक्तुः स्वत्वं जनयति प्रमापयति वा ? नाद्यः । याजनादिवदस्य स्वत्वजनकत्वस्य लोकशास्त्रयोरप्रतीतत्वात् । नापि द्वितीयः । लिङ्गतया वा प्रमापकत्वमनुपपन्नतया वा ? न द्वयमपि । ईदृशभोगस्य स्वत्वेन सह कुत्रापि व्याप्तेरग्रहीतत्वात् । अत एव न तस्य स्वत्वेन विनाऽनुपपत्तिरपि । तस्या अपि व्याप्तिच्छायोपजीवकत्वात् । किं चानेन प्राचीनस्वत्वस्य सत एव प्रमापणमनुमानद्वारा तन्निरपेक्षतया वा ? न तावत् प्रथमः । स्मार्तकालीनस्यागमाभावनिश्चये तदनुमापकत्वस्य बाधेनासंभवात् । प्रमाणान्तरेणागमनिश्चयेऽस्य सिद्धसाधनेनानुमापकत्वाक्षेपकत्वयोरसंभवात् न द्वितीयः। व्यभिचाराच्च । 'अन्यायेनापि यद्भुक्तम्' इति वचनविरोधाच्च स्वस्यान्यायेन भोगासंभवात् । किं चेयमनुपपन्नता स्त्रीराजादिधनगोचरापि संभवतीति । तत्र न कदाचिदपि भोगः प्रमाणमिति कुतः ? तस्मादेवं वाच्यम् । यदयं यथोक्तो भोगः पूर्वस्वामिनो भोक्त्रुद्देशेन त्यागात् तत्स्वत्वध्वंसमर्थापयति अनुमापयति वा ? न हि संभवति तन्न जहाति, परभोगश्चेदृशे तस्मिन्वस्तुनि क्षम्यत इति । तथा च तदुद्देशेन त्यक्ते तत्परिग्रहणादेव परस्य तत्र स्वत्वमप्युत्पद्यते । यथा सर्वभूतोद्देशेन त्यक्ते तडागतोयारामपुष्पफलादाविति नियमात्तदपि भोक्तुः स्वीभवति । स्त्रीराजधनादौ तु नैवम् । स्त्रीणामज्ञत्वादप्रागल्भ्याद्राजधनस्य बहुलतया जडादेरप्रागल्भ्याच्छ्रोत्रियस्य बहुकालीनाध्यापनादिव्यग्रतया आध्युपनिधिसीमादीनामाधित्वादित एव स्वत्वध्वंसजनकपूर्वस्वामित्यागाऽकल्पकत्वात् । अतो भूम्यादौ विंशतिवार्षिको गवादौ दशवार्षिको भोगः पूर्वस्वामिनः स्वत्वध्वंसे भोक्तुः स्वत्वोत्पत्तौ च प्रमाणम् । यच्च कालवैषम्यं तद्भूम्यादेर्महाफलत्वेन तत्र चिरकालेनैव स्वत्वहानिकल्पनस्योचितत्वात्, द्रव्यान्तराणां चातथात्वादल्पकालेनापि स्वत्वहानिकल्पनाया उचितत्वादौचित्यसिद्धम् । यच्च भूम्यादावेव कालवैषम्येण भोक्तुः स्वत्वजननं तदपि वचनादेव युक्तम् । यथा तदेव जन्म पुत्रस्य पितृधने स्वत्वजनकं न तु पुत्र्या इति ।

अत्र प्रदीपकृतः । यत्र हि मत्कृत्येदानीं नात्र फलसंभावना तदधुना तावत्पर एव भुङ्क्ताम् । पश्चादेतत्सकाशात् सफलोपभोगां भुवं ग्रहीष्यामीत्याद्यभिसंधाय भूम्यादिस्वामी तत्र परोपभोगं क्षमते । तत्रापि विंशत्याद्यवधिको भोगोऽस्ति स्वामिनस्तदुद्देशेन त्यागश्च नास्तीति व्यभिचारान्नेदृशभोगस्य पूर्वस्वामिस्वत्वत्यागे प्रामाण्यम् । न चात्र पूर्वस्वामिना स्वीयत्यागाभावं प्रतिज्ञाय दिव्यं कार्यम्, तत्र च तद्भङ्गे त्यागनिर्णये परिग्रहात्परस्य स्वत्वं निर्बाधमिति वाच्यम् । यतः तस्यापि पूर्वभोगसिद्धस्य पूर्वस्वामिपरिग्रहस्य त्यागानवधारणकालीनत्वेन भोक्तुः स्वत्वाजनकतया तद्वैयर्थ्यात् । किं च भूस्वामी सचेताः किमिति वृथैव तत्र स्वत्वं जह्यात् । न ह्यत्र दृष्टमुद्देश्यं नाप्यदृष्टम्, धर्मशास्त्रोक्तेतिकर्तव्यताविरहात् । महेच्छत्वसुशीलत्वदयालुत्वादिनापि न त्यागसंभवः । स त्यजन्नपि तैरेव हेतुभिः क्षमत इत्यस्यापि संभवात् । नापि यदुद्देशेन यत् त्यज्यते तत्तस्य स्वमिति नियमः । उद्देश्येनागृहीते व्यभिचारात् । अपि च त्यागाद्भोक्तुः स्वत्वं स्वरूपसतो ज्ञानाद्वा । नाद्यः । अदृष्टचरत्वात् । द्वितीये च तज्ज्ञानं भोक्तुः स्वामिवचनात् स्यात् । तथा च तदुद्देशेन मयेदं त्यक्त-

मिति स्वामिनस्तदभिसंधिपूर्वकं वचनं ज्ञापकं दानमेवेति। तत एव स्वामिनः स्वत्वध्वंसे कृतमुपेक्षानुसरणेन। न च यथोक्तक्षमयैव त्यागानुमानम्। अत्यक्तेऽपि सौशील्यादिना क्षमासंभवात्। न चैवं यथोक्तक्षमया भोक्तुः स्वत्वानुमानमपि न स्यात्। पूर्वस्वामिनः स्वत्वसत्वेऽपि सौशील्यादिना तस्य अन्यथा सिद्धत्वादिति वाच्यम्। तावत्कालं सौशील्यादिना क्षमाया असंभवसहकृतो भोगो भोक्तुः स्वत्वप्रमापक इति स्मृतिबलादवगतम्। तच्च स्वत्वं पूर्वागमाद्वोत्पद्यतां स्वामिनो भोक्त्रुद्देशेन तद्वस्तुत्यागाद्वेत्यत्र न नो ग्रह इति।

अत्र वदामः। प्रदीपकृद्भिर्यत्सिद्धान्तितं क्षमायास्तावत्कालीनायाः सौशील्यादिहेतुकत्वासंभवेन सहकृतो भोगो भोक्तुः स्वत्वं प्रमापयति। तच्च भोक्तुः पूर्वागमाद्वोत्पद्यतां भोक्त्रुद्देश्यकस्वामिकृतत्यागाद्वेत्यत्र न नो ग्रह इति। तत्र प्रष्टव्यम्। भोक्तुः स्वत्वोत्पादकौ पूर्वागमस्वामिकृतभोक्त्रुद्देश्यकत्यागौ प्रमाप्य तावत्कालीनो भोगो भोक्तुः स्वत्वमनुमापयत्यप्रमाप्य वा। नाद्यः। भोक्तुः पूर्वागमसिद्धौ संप्रति तत्र स्वामिनः स्वाम्यासंभवेन तदीयाऽप्रतिरवविंशत्यादिवर्षकालीनभोगोपन्यासवैयर्थ्यात्। तेनैव तदनुमानान्न तद्वैयर्थ्यमिति चेत्, न। तत्र व्यभिचारेणानुमानासंभवात्। भोक्त्रुद्देश्यकत्यागप्रमापणेऽपि तद्दूषणानपगमात्। न द्वितीयः। पूर्वस्वत्वध्वंसानवगमे भोगसहस्रेणापि स्मार्तकालीनेन भोक्तुः स्वत्वानुमानं न। अनुमानबाधात्। स्मर्तव्यास्मरणरूपयोग्यानुपलब्धेर्जागरूकत्वात्। यश्चात्र न नो ग्रह इत्यनास्थावादः सोऽप्ययुक्तः। पूर्वागमभोक्त्रुद्देश्यकस्वत्वत्यागयोः फलभेदेन तत्वनिर्णयफलके निर्धारणेऽन्यतरनिर्धारणस्यावश्यकत्वात्। पूर्वागमो हि यदि भोक्तुरेव संप्रति स्वामिमन्यस्याभोक्तुर्मिथ्याभियोगनिबन्धनो दण्डोऽपि स्यान्न केवलं भूधनहानिः। तस्य स्वत्वस्यागमसिद्धौ तदपलापदण्डमात्रं न मिथ्याभियोगित्वनिमित्तो द्विगुणो दण्डः। स्वत्वहानिरुभयपक्षे तुल्या। विंशत्यादिग्रहणाविवक्षाप्रसक्तिश्चोभयपक्षेऽपि कक्षीकरणीया। भोक्तृपूर्वागमपूर्वस्वामिकर्तृकभोक्त्रुद्देश्यकत्यागस्य द्वित्रादिवर्षोपभोगस्थलेऽपि सिद्धौ भोक्तृस्वत्वस्यावारणीयत्वात्। भवदेवमताच्च भवन्मतस्य नातीव भेदः। यथोक्तभोगो भोक्त्रुद्देश्यकपूर्वस्वामिकर्तृकत्यागं कल्पयंस्ततस्तत्स्वत्वध्वंसे सति परिग्रहाद्भोक्तुः स्वत्वोत्पत्तिं निर्बाधामादधातीति तमर्थमिदं वचनं बोधयतीति तन्मतम्। तच्च त्वयाऽप्यभ्युपगतं तावत्कालीनभोगस्य सौशील्यादिहेतुकक्षमाहेतुकत्वासंभवेन पूर्वस्वामिन इदानीन्तनभोगकर्त्रुद्देश्यकत्यागं विना तदीयपूर्वागमं विनाऽसंभवाद्भोक्तुः स्वत्वनिमित्तत्वेन तदुभयान्यतरानास्थावादमभ्युपगच्छता। तथा च यत्तन्मते नैकान्तिकत्वं त्वया दूषणमापादितं तद्भवन्मतेऽपि तुल्यम्। यच्च सौशील्यादिहेतुकत्वं तावत्कालीनक्षमायां न संभवतीत्युक्तं तत् त्वन्मतेऽपि समाधानक्षममेवेति। वस्तुतस्तु तावत्कालीनक्षमायाः सौशील्यादिहेतुकत्वासंभवोऽपि न नियतः। अतिसुशीलतादिस्वभावानामाजन्माप्युपेक्षायाः संभवात्। वचनमस्तकेऽतिगौरवं चोभयमते तुल्यम्। विज्ञानेश्वरमते त्वतिलाघवमुपपादितमेव। किं च स्मार्ते काले स्मर्तव्यास्मरणरूपया योग्यानुपलब्ध्या भोक्तुरागमाभावनिश्चये पूर्वस्वामिनश्च त्यागाभावनिश्चये तदीयपरिग्रहकृतस्वत्वोत्पत्तिपूर्वस्वामिस्वत्वध्वंसावुभावपि कल्पयितुमशक्याविति मतद्वयमपीदमत्ययुक्तम्।

यच्चापरमत्र प्रदीपकृद्भिरुक्तम्। आधेरनुपभोगेन यत्रासिद्धिस्तद्विषयं 'पश्यतोऽब्रुवत' इत्यादि वचनम्। तेन यत्राधिग्रहीत्राधेयं भूम्यादि न भुज्यते, किन्त्वाधात्रा चिरं भुक्त्वान्यत्राधीयते तत्रोत्तरस्याधिग्रहीतुस्तत्र भूम्यादौ प्रभुत्वं न तु प्रथमस्येति 'आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा' इत्येतदपवादार्थमिदमीदृशे विषये वचनम्। तेनात्र द्वितीयस्यैवाधिः सिध्यति। यद्वा हानिपदमुपेक्षितकोटौ विचारकाणामुपेक्षानिमित्ता न्यूनता प्रतिभातीति संशयतादवस्थ्यपरं न तु हानिर्भङ्ग एव। तथा सति 'हीनस्य गृह्यते वाद' इत्यादिवचनसिद्धं दण्डमन्तरेणैव पुनर्व्यवहारदर्शनं न घटत इति पुनर्विचारेणैवात्रापि निर्णयः। अत एव 'उपेक्षिता यथा धेनुः' 'वर्षाणि विंशतिर्यस्या' इत्यादिव्यासवचनयोः पश्यन्तमनादृत्य ये यदीये भूमिधने परैरुपभुज्येते तदीयत्वेन ते हीयेते न निश्चीयेते इति व्याख्यानं रत्नाकरकृतापि कृतम्। किं च यदि विंशतिवार्षिकी भुक्तिः स्वतो भोक्तुः स्वत्वे प्रमाणं तर्हि तत एव साध्यसिध्दौ 'शक्तस्य संनि-

धावर्थे' इत्यादिकात्यायनवचनेन यद्भोगस्य लेख्यादिदोषनिराकरणार्थमुक्तं तदपार्थकं स्यादिति ।

तदपि चिन्त्यम् । तस्यैतादृगाधिविषयत्वं न प्रकरणादर्थतः शब्दतो वाऽवगम्यते । अस्य चाधिविशेषविषयतायामाधिसीमेत्यस्यैतदपवादस्यैतादृगाधिभिन्नाधिविषयताप्यशाब्दी कल्प्या । 'आधौ प्रतिग्रह' इत्यादेरयमपवाद इत्ययुक्तम् । अतिव्यवहितस्य तस्यात्रानुपस्थितेः । विंशत्यादिवर्षात् प्रागपि चैतादृगाधिभोगे परक्रियायाः प्राबल्यस्याप्रतिहतेर्विंशत्यादिग्रहणाविवक्षाप्रसक्तिः । वचनं तावत्कालीनैतादृगाधिभोग एव तथेति यदि, तर्हि श्रुतभूमिधनसामान्यातिक्रमेणैतादृगाधिकृततद्विषयत्वस्याशाब्दस्य कल्पनं जल्पनमेव । उपेक्षानिमित्तकविचारकसंशयतादवस्थ्यात्पुनर्विचारः कर्तव्य इत्येतन्मात्रपरमिदं वचनं न तु सर्वथाभङ्गरूपहानिपरमिति च यदस्य वचनस्य तात्पर्यान्तरवर्णनं, तत्रापि विंशत्यादितः प्रागपि तादृगुपेक्षाहेतुकसंशयतादवस्थ्यापरिहारात् पुनर्व्यवहारप्रवृत्त्यावश्यकत्वे विंशत्यादिपदार्थाविवक्षाप्रसक्तिर्दुर्वारा । प्रत्युत विंशत्यादिवर्षोत्तरं तादृगुपेक्षायाः पुनर्विचारपुरःसरं निर्णयः कर्तव्यः प्राक् नेत्यनौचित्यापत्तिश्च । अतः प्राङ्नोपेक्षककोटिन्यूनताप्रतिभासश्चिरतरोपेक्षायास्तावदेकः स इति न शक्यम् । सत्यां सामग्र्यां प्रागपि तस्य वारयितुमशक्यत्वादसत्यां तूत्तरमपि तदसंभवात् कालविशेषनियमानुपपत्तेः । हानिपदस्यानिश्चयपरता च बहुषु वचनेष्वयुक्ताऽस्मिन् पक्षे प्रसज्यते । यच्चोक्तं तावत्कालीनभोगस्य भोक्तृस्वत्वोत्पत्तिहेतुत्वस्य यथाश्रुतस्याश्रयणे 'शक्तस्य संनिधावर्थे' इत्यादिवचनोक्तं लेख्यादिप्रमाणान्तरस्य स्वत्वसाधकस्य दोषनिराकरणमपार्थकं तावद्भोगादेव स्वत्वसिद्धिरिति तादृग्वचनतात्पर्यबीजम् । तदमूलकम् । विज्ञानयोगिव्याख्याने तदनभ्युपगमात् ।

वाचस्पतिस्तु हानिबोधकस्मृतीनां प्रमाणपरिपालनकर्तव्यताविधिशेषत्वम् । यस्मादुपेक्षायां हानिशङ्का भवति तस्मात्स्वप्रमाणं सर्वथा परिपालनीयं न तु तत्रोदासितव्यमित्यत्र तात्पर्यम् । अत एव कल्पतरौ हानिवचनानि लिखित्वा प्रमाणपरिपालनमुपसंहृतमित्याह ।

तदपि यद्वा तद्वा । विंशत्यादिग्रहणाविवक्षाप्रसक्तितादवस्थ्यात् । ततः प्रागपि प्रमाणपरिपालनस्यावश्यकत्वात् । हानिशङ्काप्रसक्तितौल्यात् । प्रदेशान्तरस्थविधिविशेषत्वानुपपत्तेरत्र च तद्विध्यश्रवणात् । अन्यत्र स्पष्टं तद्विधिसत्वेन तदुन्नयनस्याप्यनुपयोगात् । हानिपदेनातत्फलकप्रमाणापरिपालनलक्षणया तत्प्रतियोगिभूतप्रमाणपरिपालनकर्तव्यतापरत्वेऽत्यन्तक्लिष्टत्वापत्तेश्च । तस्मात् समस्तदोषशून्या विज्ञानयोगिव्याख्यैवास्य वचसो ज्यायसी । *व्यप्र. १५८-१६४

आध्यादिभोगो न स्वत्वहेतुः

**आधिसीमोपनिक्षेपजडबालधनैर्विना ।**
**तथोपनिधिराजस्त्रीश्रोत्रियाणां धनैरपि ॥**

(१) किमुपेक्षया सर्वत्रैव व्यवहारप्रवृत्त्ययोग्यता स्यात्? सत्यम् । आध्यादिषु तु भुक्तिर्नैवापहारकारणमित्यभिप्रायः । आधिस्तावद् भोगायैव क्रियते । सीमा च प्रतिजागर्तृदोषादनेकधा भुज्यते । निक्षेपश्च समर्पितत्वात् । जडबालयोरसामर्थ्यात् । उपनिधिं वक्ष्यति । राजधनमनेकगामित्वात् । स्त्रीधनं चास्वातन्त्र्यात् । श्रोत्रियाणां व्यापारान्तरापेक्षया । तथेति प्रकारार्थः । सर्वथा यत्रैव स्वामित्वादृतेऽपि भुक्तिः संभाव्यते, तत्रैव तत्कृतोपभोगो नापहारकारणमित्यर्थः । विश्व. २।२५

(२) आधिश्च सीमा च उपनिक्षेपश्च आधिसीमोपनिक्षेपाः । जडश्च बालश्च जडबालौ तयोर्धने जडबालधने; आधिसीमोपनिक्षेपाश्च जडबालधने च आधिसीमोपनिक्षेपजडबालधनानि तैर्विना । उपनिक्षेपो नाम रूपसंख्याप्रदर्शनेन रक्षणार्थं परस्य हस्ते निहितं द्रव्यम् । यथाह नारदः— 'स्वं द्रव्यं यत्र विस्रम्भान्निक्षिपत्यविशङ्कितः । निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैः' इति ॥ उपनिधानं उपनिधिः । आध्यादिषु पश्यतोऽब्रुवतोऽपि भूमेर्विंशतेरूर्ध्वं धनस्य दशभ्यो वर्षेभ्य ऊर्ध्वमपि हानिर्न भवति । पुरुषापराधस्य तथाविधस्याभावात् । उपेक्षाकारणस्य तत्र तत्र संभवात् । तथा हि, आधेराधित्वोपाधिक एव भोग इत्युपेक्षायामपि न पुरुषा-

* इदं सर्वं व्याख्यानं मिताक्षरासमर्थनपरम् । मतान्तरप्रदर्शनार्थमेवात्रोद्धृतम् ।

(१) **यास्मृ.** २।२५; **अपु.** २५३।५३-५४; **विश्व.** २।२५; **मिता.**; **अप.**; **पमा.** १४७; **सुबो.** २।२४ पू.; **व्यत.** २२४ रपि (रिह); **सवि.** १२६ (=); **वीमि.**; **व्यप्र.** १६५; **विता.** १५० (=); **सेतु.** ८९; **प्रका.** ४४; **समु.** ४७; **विच.** १३८.

पराधः। सीम्नश्चिरकृततुषाङ्गारादिचिह्नैः सुसाध्यत्वादुपेक्षा संभवति। उपनिक्षेपोपनिध्योर्भुक्तेः प्रतिषिद्धत्वात् प्रतिषेधातिक्रमोपभोगे च सोदयफललाभादुपेक्षोपपत्तिः। जडबालयोर्जडत्वाद्बालत्वादुपेक्षा युक्तैव। राज्ञो बहुकार्यव्याकुलत्वात्। स्त्रीणामज्ञानात् अप्रागल्भ्याच्च। श्रोत्रियस्वाध्ययनाध्यापनतदर्थविचारानुष्ठानव्याकुलत्वादुपेक्षा युक्तैव। तस्मादाध्यादिषु सर्वत्रोपेक्षाकारणसंभवात्। समक्षभोगे निराक्रोशे च न कदाचिदपि फलहानिः। *मिता.

आध्यापहारे दण्डः

**आध्यादीनां विहर्तारं धनिने दापयेद्धनम्।**
**दण्डं च तत्समं राज्ञे शक्त्यपेक्षमथापि वा॥**

(१) यतश्चाध्यादिषु निमित्तान्तराद् भुक्तिः, ततः आध्यादीनामिति। धनिने धनं दत्वाऽनन्तरं राज्ञे तत्समं देयं, अपि वा शक्त्यपेक्षमित्यर्थः। विश्व.२।२६

(२) आध्यादीनां श्रोत्रियद्रव्यपर्यन्तानां चिरकालोपभोगबलेनापहर्तारं विवादास्पदीभूतं धनं स्वामिने दापयेदित्यनुवादः। दण्डं च तत्समं विवादास्पदीभूतद्रव्यसमं राज्ञे दापयेदिति विधिः। यद्यपि गृहक्षेत्रादिषु तत्समो दण्डो न संभवति तथापि मर्यादायाः प्रभेदे च सीमातिक्रमणे तथेत्यादिवक्ष्यमाणो दण्डो द्रष्टव्यः। अथ तत्समदण्डेनापहर्तुर्दमनं न भवति, बहुधनत्वेन; तदा शक्त्यपेक्षं धनं दापयेत्। यावता तस्य दर्पोपशमो भवति तावद्दापयेत्। 'दण्डो दमनादित्याहुस्तेनादान्तान् दमयेदि'ति दण्डग्रहणस्य दमनार्थत्वात्। यस्य तु तत्सममपि द्रव्यं नास्ति सोऽपि यावता पीड्यते तावद्दाप्यः। यस्य पुनः किमपि धनं नास्ति असौ धिग्दण्डादिना दमनीयः। +मिता.

(३) मिता.टीका—विवादास्पदीभूतं द्रव्यं स्वामिने दापयेदित्यनुवाद इति। 'निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम्' (यास्मृ.२।११) इत्यस्यार्थस्य विहितत्वादित्यभिप्रायः। दण्डं च तत्समं विवादास्पदीभूतद्रव्यसमं राज्ञे दापयेदिति। नन्वत्र विधिरनुपपन्नः। राज्ञे च तत्सममित्यत्रैव प्रकृतधनसमदण्डस्यापि विहितत्वात्। उच्यते। राज्ञे च तत्सममित्यत्र ऋणादानमात्रे विधिर्न सर्वत्रविषयेषु। भवतु वा सर्वविषयत्वम्। तथापि न तत्र विधिः। तत्र तत्र विहितस्य राज्ञे च तत्सममित्यनूद्यमानत्वात्। अतो न काचिदनुपपत्तिः। ननु सर्वेष्वपि विवादपदेषु तत्समदण्डविधिर्न युक्तः। गृहादिविवादेषु गृहान्तरादिरूपदण्डदानस्याशक्यत्वादित्याशङ्क्य सत्यमेवं, तादृशि स्थले तत्सममिति च वक्ष्यमाणो दण्डो विधीयत इत्याह। यद्यपि गृहक्षेत्रादिष्विति। ननु तर्ह्यत्र वक्ष्यमाणस्थले चासावेवार्थो विधीयते इत्यन्यतरस्याविधित्वं स्यादिति चेन्न। वक्ष्यमाणस्थले दण्डस्वरूपविधिः। अत्र तु तत्र प्राप्तदण्डानुवादेन दापनविधिरिति। उभयत्र विधेयसंभवान्नान्यतरस्याविधित्वम्। ×सुबो.

(४) चकारेण धनसामान्यशून्यस्य देशनिष्कासनादिसमुच्चयः। 'अथापि वा' इत्यव्ययसमुदायो विकल्पार्थः। +वीमि.

आगमभोगयोस्तारतम्यसहकार्यविचारः

**आगमोऽभ्यधिको भोगाद्विना पूर्वक्रमागतात्।**
**आगमेऽपि बलं नैव भुक्तिः स्तोकाऽपि यत्र नो॥**

(१) यस्माच्च भुक्तिमात्रेण नार्थनाशः, तस्माद् 'आगमोऽभ्यधिको भोगाद्विना पूर्वक्रमागतात्' इति। आगमो

---

* व्यप्र., विता. मितागतम्। + अप. वाक्यार्थो मितावत्।

(१) **यास्मृ**.२।२६; **अपु**.२५३।५४-५५; **विश्व**.२।२६ विह(हि ह); **मिता**.; **अप**. विहर्तारं धनिने दापयेत् (निहन्तारं दापयेद्धनिने); **व्यक**.७४; **व्यचि**.७१; **सवि**.४९०; **वीमि**.; **व्यप्र**.१६५; **समु**.४७.

× बाल. सुबोवत्। + शेषं मितागतम्।

(१) **यास्मृ**.२।२७; **अपु**.२५३।५५-५६ ऽभ्य (ऽप्य) भोगाद् (भुक्तिं); **विश्व**.२।२७ भोगात् (भुक्तेः); **मिता**.; **व्यमा**.३४४ गतात् (गमात्) आ ... बलं (आगमो बलवान्) नो (न); **अप**.भ्यधि (त्यधि); **व्यक**.७० पूर्व (पूर्वं) गतात् (गमात्) पू.: ७२ उत्त.; **स्मृच**.६७ मेऽपि (मोऽपि) उत्त.: ७४ पू.; **स्मृसा**.१०४ पू.: १०६ स्मृचवत्, उत्त.: १११ विश्ववत्; **व्यचि**.६७ मेऽपि (मोऽपि) उत्त.: ७४ पू.; **स्मृचि**.४९; **नृप्र**.८पू.,९ उत्त.; **व्यत**.२२४ भ्यधि (ह्यधि) आ ... नैव (नागमः कारणं तत्र) नो (न); **सवि** १३१-१३२; **मच**.८।२०० भोगात् (भुक्तेः) आ ... बलं (आगमो बलवान्); **चन्द्र**.१५५ भ्यधि (प्यधि) पू.; **व्यसौ**.६६ पू.: ६८ मेऽपि (मोऽपि) उत्त.; **वीमि**.मो (मे); **व्यप्र**.१५४ पू.: १५६ उत्त.: १६७ उत्त.; **व्यउ**.४६; **विता**.१३८ भ्यधि (प्यधि) पू.: १४२ बलं (बले) उत्त.; **सेतु**.९० भ्यधि (ह्यधि) आ ... बलं (आगमो बलवान्) नो (न); **प्रका**.४४; **समु**.४९; **विच**.१३८-१३९.

लेख्यम् । तद्भुक्तेर्बलीयः, निश्चितत्वात् । अन्यथापि भुक्त्युपपत्तेः । पूर्वक्रमे तु सति भुक्तेर्बलीयस्त्वं, लेख्यान्तरनिरस्तस्यापि लेख्यस्य प्रमादतः स्थितिसंभवात् । त्रिपुरुषभुक्तिः पूर्वक्रमः । यतश्च नाशादिव्याजेन लेख्यस्योपगतादिबाधितस्यापि स्थितिसंभवः । तत्र 'आगमेऽपि' इत्यादि न स्याद् यावता विना लेख्यप्रतिष्ठा न स्यादित्यर्थः । विश्व.२।२७

(२) स्वत्वाव्यभिचारित्वेन भोगस्य स्वत्वे प्रामाण्यमुक्तम् । भोगमात्रस्य स्वत्वव्यभिचारित्वात्कीदृशो भोगः प्रमाणमित्यत आह— आगम इति । स्वत्वहेतुः प्रतिग्रहक्रयादिरागमः । स भोगादप्यधिको बलीयान् । स्वत्वबोधने भोगस्यागमसापेक्षत्वात् । यथाह नारदः— 'आगमेन विशुद्धेन भोगो याति प्रमाणताम् । अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छति' इति ॥ न च भोगमात्रात्स्वत्वागमः । परकीयस्याप्यपहारादिनोपभोगप्रसङ्गात् । अत एव 'भोगं केवलतो यस्तु कीर्तयेन्नागमं क्वचित् । भोगच्छलापदेशेन विज्ञेयः स तु तस्करः' ॥ इति स्मर्यते । अतश्च सागमो दीर्घकालो निरन्तरो निराक्रोशः प्रत्यर्थिप्रत्यक्षश्चेति पञ्चविशेषणयुक्तो भोगः प्रमाणमित्युक्तं भवति । तथा च स्मर्यते— 'सागमो दीर्घकालश्चाविच्छेदोऽपरवोज्झितः । प्रत्यर्थिसंनिधानोऽपि परिभोगोऽपि पञ्चधा' इति ॥ क्वचिच्चागमनिरपेक्षस्यापि भोगस्य प्रामाण्यमित्याह— 'विना पूर्वक्रमागतात्' इति । पूर्वेषां पित्रादीनां त्रयाणां क्रमः पूर्वक्रमः तेनागतो यो भोगस्तस्माद्विना आगमोऽभ्यधिक इति संबन्धः । स पुनरागमादभ्यधिकः आगमनिरपेक्षः प्रमाणमित्यर्थः । तत्राप्यागमज्ञाननिरपेक्षो न सत्तानिरपेक्षः । सत्ता तु तेनैवावगम्यत इति बोद्धव्यम् । विना पूर्वक्रमागतादित्येतच्चास्मार्तकालप्रदर्शनार्थम् । आगमोऽभ्यधिको भोगादिति च स्मार्तकालविषयम् । अतश्च स्मरणयोग्ये काले योग्यानुपलब्ध्या आगमाभावनिश्चयसंभवादागमज्ञाननिरपेक्ष एव सन्ततो भोगः प्रमाणम् । एतदेव स्पष्टीकृतं कात्यायनेन— 'स्मार्तकाले क्रिया भूमेः सागमा भुक्तिरिष्यते । अस्मार्तेऽनुगमाभावात्क्रमात्त्रिपुरुषागता' इति ॥ स्मार्तश्च कालो वर्षशतपर्यन्तः 'शतायुर्वै पुरुष' इति श्रुतेः । अनुगमाभावादिति योग्यानुपलब्ध्यभावेनागमाभावनिश्चयाभावादिति । अतश्च वर्षशताधिको भोगः सन्ततोऽप्रतिरवः प्रत्यर्थिप्रत्यक्षश्चागमाभावे वाऽनिश्चिते अव्यभिचारादाक्षिप्तागमः स्वत्वं गमयति । अस्मार्तेऽपि कालेऽनागमस्मृतिपरंपरायां सत्यां न भोगः प्रमाणम् । अत एव— 'अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि । चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः' ॥ इत्युक्तम् । न चानागमं तु यो भुङ्क्ते इत्येकवचननिर्देशाद्बहून्यब्दशतान्यपीति अपिशब्दप्रयोगात् प्रथमस्य पुरुषस्य निरागमे चिरकालोपभोगेऽपि दण्डविधानमिति मन्तव्यम् । द्वितीये तृतीये वा पुरुषे निरागमस्य भोगस्य प्रामाण्यप्रसङ्गान्न चैतदिष्यते । 'आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा' इति नारदस्मरणात् । तस्मात् सर्वत्र निरागमोपभोगे 'अनागमं तु यो भुङ्क्ते' इत्येतत् द्रष्टव्यम् । यदपि, 'अन्यायेनापि यद्भुक्तं पित्रा पूर्वतरैस्त्रिभिः । न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतम्' इति ॥ तदपि पित्रा सह पूर्वतरैस्त्रिभिरिति योज्यम् । तत्रापि क्रमात् त्रिपुरुषागतमित्यस्मार्तकालोपलक्षणम् । त्रिपुरुषविवक्षायामेकवर्षाभ्यन्तरेऽपि पुरुषत्रयातिक्रमसंभवात् । द्वितीये वर्षे निरागमस्य भोगस्य प्रामाण्यप्रसङ्गः । तथा सति 'स्मार्तकाले क्रिया भूमेः सागमा भुक्तिरिष्यते' इति स्मृतिविरोधः । अन्यायेनापि यद्भुक्तमित्येतच्चान्यायेनापि भुक्तमपहर्तुं न शक्यम् । किं पुनरन्यायानिश्चय इति व्याख्येयमपिशब्दश्रवणात् । यच्चोक्तं हारीतेन— 'यद्विनागममत्यन्तं भुक्तं पूर्वैस्त्रिभिर्भवेत् । न तत् शक्यमपाहर्तुं क्रमात्त्रिपुरुषागतम्' इति ॥ तत्राप्यत्यन्तमागमं विनेति अत्यन्तमुपलभ्यमानमागमं विनेति व्याख्येयम् । न पुनरागमस्वरूपं विनेति । आगमस्वरूपाभावे भोगशतेनापि न स्वत्वं भवतीत्युक्तम् । क्रमात्त्रिपुरुषागतमित्येतदुक्तार्थम् । ननु स्मरणयोग्ये काले भोगस्यागमसापेक्षस्य प्रामाण्यमनुपपन्नम् । तथा हि, यद्यागमः प्रमाणान्तरेणावगतस्तदा तेनैव स्वत्वागमान्न भोगस्य स्वत्वे आगमे वा प्रामाण्यम् । अथ प्रमाणान्तरेणागमो नावगतः कथं तद्विशिष्टो भोगः प्रमाणम् ? उच्यते, प्रमाणान्तरेणावगतागमसहित एव निरन्तरो भोगः कालान्तरे स्वत्वं गमयति । अवगतोऽप्यागमो भोगरहितो न कालान्तरे स्वत्वं गम-

यितुमलम् । मध्ये दानविक्रयादिना स्वत्वापगमसंभवादिति सर्वमनवद्यम् ।

आगमसापेक्षो भोगः प्रमाणमित्युक्तम्, । आगमस्तर्हि भोगनिरपेक्ष एव प्रमाणमित्यत आह—आगमेऽपि इति। यस्मिन्नागमे स्वल्पापि भुक्तिर्नो नास्ति तस्मिन्नागमे बलं संपूर्णं नैवास्ति । अयमभिसंधिः । स्वस्वत्वनिवृत्तिः परस्वत्वापादनं च दानम् । परस्वत्वापादनं च परो यदि स्वीकरोति तदा संपद्यते नान्यथा । स्वीकारश्च त्रिविधः मानसो वाचिकः कायिश्चेति । तत्र मानसो ममेदमिति संकल्परूपः । वाचिकस्तु ममेदमित्याद्यभिव्याहारोल्लेखी सविकल्पकः प्रत्ययः । कायिकस्तु पुनरुपादानाभिमर्शनादिरूपोऽनेकविधः। तत्र च नियमः स्मर्यते। 'दद्यात्कृष्णाजिनं पुच्छे गां पुच्छे करिणं करे । केसरेषु तथैवाश्वं दासीं शिरसि दापयेत्' इति ॥ आश्वलायनोऽप्याह– 'अनुमन्त्रयेत्प्राण्यभिमृशेदप्राणिकन्यां चेति' । तत्र हिरण्यवस्त्रादावुदकदानानन्तरमेवोपादानादिसंभवात् । त्रिविधोऽपि स्वीकारः संपद्यते । क्षेत्रादौ पुनः फलोपभोगव्यतिरेकेण कायिकस्वीकारासंभवात् स्वल्पेनाप्युपभोगेन भवितव्यम्। अन्यथा दानक्रयादेः संपूर्णता न भवतीति फलोपभोगलक्षणकायिकस्वीकारविकल आगमो दुर्बलो भवति । तत्सहितादागमात् । एतच्च द्वयोः पूर्वापरकालापरिज्ञाने। पूर्वापरकालपरिज्ञाने तु विगुणोऽपि पूर्वकालागम एव बलीयानिति । अथवा, 'लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधम्' इत्युक्तम्, एतेषां समवाये कुत्र कस्य वा प्राबल्यमित्यत्रेदमुपतिष्ठते 'आगमोऽभ्यधिको भोगाद्विना पूर्वक्रमागतात् । आगमेऽपि बलं नैव भुक्तिः स्तोकाऽपि यत्र नो' इति ॥ अयमर्थः—आद्ये पुरुषे साक्षिभिर्भावित आगमो भोगादप्यधिको बलवान् । पूर्वक्रमागताद्भोगाद्विना । स पुनः पूर्वक्रमागतो भोगश्चतुर्थपुरुषे लिखितेन भावितादागमाद्बलवान् । मध्यमे तु भोगरहितादागमात्स्तोकभोगसहितोऽप्यागमो बलवानिति । एतदेव नारदेन स्पष्टीकृतम्—'आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा । कारणं भुक्तिरेवैका संतता या चिरन्तनी' इति ॥ *मिता.

(३) स्तोकापीति नाल्पकालाभिप्रायम् । वृत्तेरप्यल्पकालभोगं विना स्वत्वहानिसंभवात्, तेनागृहीतक्रीतगृहीतादिभूमेश्चिरानुवर्तने तदेकदेशभोगेऽपीत्यस्यार्थः। व्यमा.३४४

(४) भुक्तेः प्रमाणतयोक्ताया विषयविशेषे सहकार्यन्तरमाह— आगम इति ।

आगमः स्वामिभावप्रतिपादकः क्रयप्रतिग्रहादिकोऽर्थः, सोऽधिकोऽपरो द्वितीयो भोगात् । भोग्यमपेक्ष्य भोगस्य स्वामित्वपरिच्छेदं कुर्वत आगमः सहकारीत्यर्थः । ननु च आगमः साक्ष्यादिप्रमाणपरिच्छिन्नो भोगनिरपेक्ष एव स्वामित्वं साधयतीति किमत्र भोगेन कार्यमित्यत्राह— आगमेऽपि बलमित्यादि । यद्विषया स्तोकाऽपि भुक्तिर्न विद्यते, तद्विषयमागमाश्रितं बलं सामर्थ्यं प्रामाण्यलक्षणं नैवास्ति । अयमभिप्रायः— यद्यपि पूर्वमस्य क्रयः प्रतिग्रहो वाऽत्र क्षेत्रादौ जात इति लिखितादिवशान्निश्चितं तथाऽपीदानीन्तनं स्वामित्वं विना भुक्त्या न सिध्यति । मध्ये दानविक्रयादिसंभवात् । तस्मादिदानीन्तनं स्वामित्वं साधयितुमागमेन वर्तमाना भुक्तिः सहकारितयाऽपेक्षितव्या । *अप.

(५) आगमे लिखितसाक्षिपरिज्ञेयक्रयादावित्यर्थः । अनेनागमलेख्यादेर्दोषशङ्कापनोदकतया स्तोकभुक्तिरनुग्राहिकमात्रमेव न प्रमाणमित्यर्थादुक्तम् । स्मृच.६७

(६) अत्र च पूर्वक्रमागतादिति उपलक्षणम् । विंशतिवर्षादिकमपि प्रत्येतव्यम् । नारदेन तस्या अपि बलीयस्त्वप्रतिपादनात् । स्मृसा.१११

(७) भूम्यादावागमः पूर्वपुरुषक्रमानागतभोगात् बलवान् । अतः क्रमागतभोग आगमाद् बलवान् । +व्यत.२२४

(८) अभ्यधिकः तद्भिन्नस्तदङ्गभूः । अङ्गत्वलाभार्थमभीत्युक्तम् । यद्यप्यागमो न पृथक् प्रमाणत्वेनोपदर्शितः, तथापि चकारसमुच्चितेऽनुमाने तदन्तर्भावः इत्यवधेयम् । ×वीमि.

**आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत् ।**
**न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी ॥**

* सवि., व्यप्र., विता. मितागतम् ।

* शेषं मितागतम्। + सेतु., विच. व्यतवत्।
× सर्वं व्याख्यानं अपगतम्।

(१) यास्मृ.२।२८; अपु.२५३।५७-५८; विश्व.२।२८; मिता.; व्यमा.३४४ तमु (तदु): ३५२ तमु (तदु) स्तत्र

(१) यस्माच्च क्रमभुक्तिरागमाद् बलीयसी, तस्माद् आगमस्त्विति।

लेख्यकर्तुः पुत्रो न लेख्यदोषानपाकुर्यात्, न ह्यसौ पितृवल्लेख्यस्वरूपज्ञो यतः। धनं तु न तत्पुत्रस्य। तस्य तु यः पुत्रः, तस्य धनमपि स्यात्। यस्माद् भुक्तिस्तत्र गरीयसी लेख्यादित्युक्तमेवेत्यभिप्रायः। विश्व.२।२८

(२) पश्यतोऽब्रुवत इत्यत्र विंशतिवर्षोपभोगादूर्ध्वं भूमेर्धनस्यापि दशवर्षोपभोगादूर्ध्वं फलानुसरणं न भवतीत्युक्तम्। तत्र फलानुसरणवद्दण्डानुसरणमपि न भविष्यतीत्याशङ्क्य पुरुषव्यवस्थया प्रामाण्यव्यवस्थया च दण्डव्यवस्थां दर्शयितुमाह— आगमस्त्विति। येन पुरुषेण भूम्यादेरागमः स्वीकारः कृतः, स पुरुषः कुतस्ते क्षेत्रादिकमित्यभियुक्तस्तमागमं प्रतिग्रहादिकं लिखितादिभिरुद्धरेत् भावयेत्। अनेन चाद्यस्य पुरुषस्यागममनुद्धरतो दण्ड इत्युक्तं भवति। तत्सुतो द्वितीयोऽभियुक्तो नागममुद्धरेत्। किं तु अविच्छिन्नाप्रतिरवसमक्षभोगम्। अनेन चागममनुद्धरतो द्वितीयस्य न दण्डोऽपि तु विशिष्टं भोगमनुद्धरतो दण्ड इति प्रतिपादितम्। तत्सुतस्तृतीयो नागमं नापि विशिष्टं भोगमुद्धरेत् अपि तु क्रमागतं भोगमात्रम्। अनेनापि तृतीयस्य क्रमायातभोगानुद्धरणे दण्डो नागमानुद्धरणे न विशिष्टभोगानुद्धरणे चेत्यभिहितम्। तत्र तयोर्द्वितीयतृतीययोर्भुक्तिरेव गरीयसी। तत्रापि द्वितीये गुरुः तृतीये गरीयसीति विवेक्तव्यम्। त्रिष्वप्यागमानुद्धरणेऽर्थहानिः समानैव। दण्डे तु विशेष इति तात्पर्यार्थः। उक्तं च हारीतेन— 'आगमस्तु कृतो येन स दण्ड्यस्तमनुद्धरन्। न तत्सुतस्तत्सुतो वा भोग्यहानिस्तयोरपि' इति॥ *मिता.

(३) ननु चतुर्थ एव पुरुषे भोगप्रामाण्यात् कथं पुत्रपौत्रगोचरायाः भुक्तेर्गरीयस्त्वाभिधानम्? उच्यते। गरीयसीति भुक्तिः प्रधानं प्रमाणं, आगमस्तु सहकारी, तेनागमोपन्यासस्ताभ्यामपि कर्तव्यो न तु शोधनम्। आहर्त्रा शोधनमवश्यं कार्यं, तेन तस्यागमः प्रधानं भुक्तिश्च सहकारिणी। व्यमा.३४४

संदिग्धागमविषयस्त्ववार्चीनो जीवतां त्रयाणां षष्टिवर्षभोगोऽनुपपत्त्या प्रमाणमेव। न चेदमशास्त्रीयम्। तथाह याज्ञवल्क्यः— आगमस्त्विति। व्यमा.३५२

(४) येन आगमः क्रयादिः कृतः सोऽभियुक्तस्तमागमं लिखितादिप्रमाणेनोद्धरेत्साधयेत्। तस्य आगमकर्तुः सुतः पौत्रो वाऽभियुक्तो नागममुद्धरेत्। यतस्तयोर्भुक्तिरेव गरीयसी गुरुतरा। आगमोद्धरणं विनैव प्रमाणत्वं तस्या गरीयस्त्वम्। ननु चाधिभोगस्य स्वामित्वमन्तरेण दर्शनान्न भोगस्यागमनिरपेक्षस्य प्रामाण्यं युज्यते संशयहेतुत्वात्। मैवम्। शास्त्रेषु खलूत्सर्गतो भुक्तेः स्वामिभावं प्रति प्रमाणता कीर्त्यते। अपवादतया पुनराध्यादिभुक्तिः। ततश्च यत्राधिभुक्तिरियमिति साक्षिलिखितादिभिः सिध्यति तत्रैवापवादः। अन्यत्रौत्सर्गिकं स्वस्वामिभाव एव भुक्तेः प्रामाण्यमिति आगमकर्तुः सुतस्यापि भुक्त्यैव स्वाम्यसिद्धिरिहोच्यते। सा स्मार्तकालातिक्रमे सति द्रष्टव्या। स्मार्तश्च कालः पुरुषत्रयभुक्तिकालात्मकः। तथा च स्मृत्यन्तरम्—'स्मार्ते काले क्रिया भूमेः सागमा भुक्तिरिष्यते। अस्मार्तेऽनुगमाभावात्क्रमात्त्रिपुरुषागता' इति॥ पुरुषभोगकालस्य च परिमाणमाह नारदः—'वर्षाणि विंशतिं भुक्त्वा स्वामिना व्याहृता सती। भुक्तिः सा पौरुषी भुक्तिर्द्विगुणा च द्विपौरुषी। त्रिपौरुषी च त्रिगुणा न तत्रान्वेष्य आगमः'॥ कात्यायनः 'मुख्या पैतामही भुक्तिः पैतृकी चापि संमता। त्रिभिरेतैरविच्छिन्ना स्थिरा षष्ट्याब्दिकी मता'॥ ततश्च वर्षषष्टेः पूर्वं स्मार्तः कालः। ऊर्ध्वमस्मार्तः। अथ वा, वर्षाणि पञ्चत्रिंशत्तु पौरुषो भोग उच्यते'। इत्येतत्स्मरणानुसारेण पञ्चोत्तरं (?) वर्षशतं स्मार्तः कालः। ऊर्ध्वमस्मार्तः। अनयोश्च पक्षयोः स्मर्तृपुरुषसद्भावासद्भावकृता व्यवस्था। आहर्तुः स्मार्तकाले व्यतीते पर्यनुयोगे च सत्यागमः साध्यो भवत्येव। अत एवाविशेषेण बृहस्पतिराह— 'आहर्ता शोधयेद्भुक्तिमागमं वाऽपि संसदि' इति। यत्पुनरनन्तरमुक्तम्—'तत्पुत्रो भुक्तिमेवैकां पौत्रादिस्तु

* व्यम., विता. मितागतम्

(रत्न); अप.; व्यक.७१; स्मृच.७२; स्मृसा.१०५ तमु (तदु) तत्सुतो वा (स्वतो वापि) स्तत्र (रेव); व्याचि.६९,७४; स्मृचि.४९ स्तत्र (रेव); नृप्र.८; व्यत.२२४; दात.१८१; व्यसौ.६७; वीमि.; व्यप्र.१५८ प्रथमपादः; व्यम.१४; विता.१५२; सेतु.९०; प्रका.४७; समु.४८ कात्यायनः; बिच.१३९ गरी (बली); विव्य.१७ नारदः.

न किञ्चन' इति । तदाहर्तृपुत्रस्य स्मार्तकालान्तर्गतायां भुक्तौ पौत्रस्य च तदतिरिक्तकालायां वेदितव्यम् । यत्तु कात्यायनवचनम्—'आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा । कारणं भुक्तिरेवैका संतता या त्रिपौरुषी' इति ॥ चतुर्थस्य पुंसो भुक्तिः प्रमाणतयोपन्यसनीयेति गमयति । तत्तस्यापि स्मार्तकालानन्तःपातिभुक्तौ सत्यां वेदितव्यम् ।

यद्यपि वस्तुगत्या मूलपुरुषस्य नास्त्यागमस्तथाऽपि तत्प्रभृतिपुरुषत्रयेण साधिकं वर्षशतं यावद्भुक्तौ भूश्चतुर्थात्पुरुषादन्येनापहर्तुमशक्या निरागमत्वनिश्चयाभावात् । अनागमत्वनिश्चयो हि भुक्तेर्बाधकं तदभावे च प्रमाणमिति । यथोष्णजलज्ञानस्य व्यवहाराबाधात् भ्रान्तत्वेऽपि प्रामाण्यम् । यदा तु चतुर्थस्यापि भुक्तौ वर्तमानायां वर्षशतात्ययेऽपि प्रथमभुक्तेरनागमत्वनिश्चयोऽस्ति तदा ततोऽपहर्तव्यैव भुज्यमाना भूः । प्रथमा हि तत्र भुक्तिर्बाधकप्रत्यययोगादप्रमाणमप्रमाणप्रभवत्वाच्चोत्तरा अपि भुक्तयोऽप्रमाणम् । एतद्विषयाण्येव—'अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि । चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः' ॥ इति नारदादीनां वचनानि । अत्र च प्रथमभोक्तुरेव दण्डो न तु तत्सुतादीनां, तेभ्यस्तु भूरेव ग्राह्या । *अप.

(५) कृतागमेनागमोद्धरणं लेख्यसाक्षिभ्यामेव कार्यम् । भुक्तेः स्मार्तकालीनोपक्रमत्वेनागमोद्भावनेऽक्षमत्वात् । अतः कृतागमस्यागमो भोगात्पृथगेव साध्यः । पुत्रपौत्रयोश्च चिरन्तनभोगे तु भोगसाधनान्तरीयकतया(?)ऽपीत्यवगन्तव्यम् । स्मृच.७२

(६) दण्डव्यवस्थां दर्शयितुमाह—आगमस्तु कृतो येनेति । न चैतदनुपपन्नं, अस्मिन्वचने दण्डव्यवस्थाविधानाभावात् इति चेत् ? मैवम् । आद्येन पुरुषेण प्रतिग्रहादिकमेवोपन्यसनीयम् । द्वितीयेनाविच्छिन्नाप्रतिरवसमक्षत्वादिविशेषेण विशिष्टो भोग एवोपन्यसनीयः । तृतीयेन समक्षत्वादिविशेषणवैशिष्ट्यमन्तरेणापि क्रमागतभोगमात्रमुपन्यसनीयमिति नियमविधेर्नियमातिक्रमे दण्डविधानमप्यर्थसिद्धमेवेति दण्डव्यवस्थाप्रतिपादकत्वमुपपन्नमेवेति सर्वमनवद्यम् । भोग्यहानिस्तयोरपीति । भोग्यहानिरर्थहानिरित्यर्थः । सुबो.

(७) आ सम्यक् गम्यते प्राप्यते स्वीक्रियते येन स आगमः क्रयादिरिति व्यवहारमातृका । आगमः साक्षिपत्रादिकं इति दीपकलिका । आगमो धनोपार्जनोपायः क्रयादिरिति मैथिलाः । व्यत.२२५

(८) वाशब्दोऽनास्थायां, तेन प्रपौत्रादिसंग्रहः । तत्रेति सप्तमी षष्ठ्यर्थे । तुशब्देन भोगं व्यवच्छिनत्ति, तत्रापि कृतस्याऽप्युद्धरणीयत्वात् । *वीमि.

**[१]आगमेन विशुद्धेन भोगो याति प्रमाणताम् ।**
**अविशुद्धागमो भोगः प्रामाण्यं नाधिगच्छति ॥**

लेख्यकृत्पुत्रस्तु किमिति धनभाङ् न भवति ? यस्माद् आगमेनेति । लेख्यस्वरूपाज्ञत्वात् तद्दोषानपाकरणमात्रमेव स्यात् । न तु प्रमाणरहितं स्वामित्वमपीत्यभिप्रायः । प्रामाण्यं च विशुद्धागमस्यैव भोगस्य, न तु भुक्तिमात्रस्येत्यर्थः । विश्व.२।२९

**[२]योऽभियुक्तः परेतः स्यात् तस्य रिक्थी तमुद्धरेत् ।**
**न तत्र कारणं भुक्तिरागमेन विना कृता ॥**

(१) यदि हि लेख्यदोषापाकरणाभियुक्तः परेतो मृतः स्यात्, तदा तदीयधनग्राह्यपाकुर्यात् । एतच्च लेख्यकर्तृविषयम् । इतरस्य द्रव्यापहार एव स्यात् । यस्मान्न तत्र स्वामित्वे भुक्तिरागमशून्या कारणं भवति, कृतापि तु व्यभिचारिणीत्यर्थः । विश्व.२।३०

(२) अस्मार्तकालोपभोगस्यागमज्ञाननिरपेक्षस्य प्रामाण्यमुक्तं विनापूर्वक्रमागतादित्यत्र तस्यापवादमाह—योऽभियुक्त इति । यदा पुनराहर्त्रादिरभियुक्तोऽकृतव्यवहारनिर्णय एव परेतः परलोकं गतो भवेत्तदा तस्य रिक्थी पुत्रादिस्तमागममुद्धरेत्; यस्मात्तत्र तस्मिन् व्यव-

---

* व्यचि. अपगतम् ।

* वाक्यार्थः अपवत् ।

(१) अपु.२५३।५६-५७; विश्व.२।२९; स्मृसा.१०४; व्यचि.६५ नाधि (नैव); चन्द्र.१५६ व्यचिवत्. प्रमाणमूलस्मृतिपुस्तके नोपलभ्यते.

(२) यास्मृ.२।२९; अपु.२५३।५८-५९; विश्व.२।३०; मिता.; व्यमा.३४५ यो (सो) :३५२; अप.; व्यक.७२; स्मृच.७५; पमा.१४५; स्मृसा.१०५ तमु (तदु); व्यचि. ७०; स्मृचि.४९; नृप्र.८; व्यत.२२४; सवि.१३४; वीमि.; व्यम.१४; विता.१५२; सेतु.९०; प्रका.४८; समु.४९; विच.१३९-१४०; विव्य.१८ पू.

हारे भुक्तिरागमरहिता साक्ष्यादिभिः साधितापि न प्रमाणम् । पूर्वाभियोगेन भोगस्य सापवादत्वात् । नारदेनाप्युक्तम्—'नवारूढविवादस्य प्रेतस्य व्यवहारिणः । पुत्रेण सोऽर्थः संशोध्यो न तं भोगो निवर्तयेत्' इति ॥ ×मिता.

(३) एवं विषये भुक्तेरागमेन विना प्रामाण्यनिषेधात् अन्यत्र तदनुजानाति । व्यमा.३५२

(४) तस्य रिक्थी धनग्राही पुत्रादिस्तमभियोगमुद्धरेत् । व्यवहारं समापयेदित्यर्थः । +अप.

(५) तमागमं चतुर्थादिरप्यवश्यं समुद्धरेत् । यस्मात्स्वतन्त्रा भुक्तिः तत्राप्रमाणं, अविगीतत्वाभावादित्यर्थः । स्मृच.७५

(६) तस्य ऋक्थी पुत्रादिः तदर्थमागमेनोद्धरेत् साधयेत् । +व्यचि.७०

(७) एष सविवादभोगः षष्ठ्यब्देतरपरः । तथाविधभोगस्यागमं विनाऽपि प्रामाण्यात् । *व्यत.२२५

## नारदः

साक्षिलेख्यभुक्तीनां प्रामाण्यस्वरूपं प्राबल्यदौर्बल्यविचारश्च

**[१]श्रुत्वोत्तरं क्रियावादे लेख्यं साधनमुद्दिशेत् ।**
**सामन्तलक्षणोपेता भुक्तिर्वा चिरकालिकी ॥**

साधनशब्देनात्र गोबलीवर्दन्यायात् साक्षिण उच्यन्ते । तेनायमर्थः— लिखितं साक्षिणो वा गृहक्षेत्रादिविवादेषु उद्दिशेत् । भुक्तिर्वा कीर्तनीयेति । ÷स्मृच.६७

साध्यभूतक्षेत्रादेः समन्ततो यत्क्षेत्रादि तत्स्वामिनः सामन्ताः । तैर्विज्ञाता सामन्तोपेता । लक्षणोपेता तु पितामहेन दर्शिता— 'सागमा दीर्घकाला चे'त्यादिना । ÷स्मृच.७०

**[२]गृहक्षेत्रादिवादेषु सामन्तेभ्यो विनिर्णयः ।**
**नगरग्रामगणिनो ये च वृद्धतमा नराः ।**
**यद्वदन्ति नियोगस्थाः तद्ग्राह्यं व्यावहारिकम् ॥**

एतदुक्तं भवति । क्षेत्रादिस्थावरविवादे मानुषप्रमाणानामन्यतमं प्रमाणमुद्दिशेत् न जातु दिव्यमिति । स्मृच.६७

**[१]लिखितं स्याद्बहुच्छिद्रं साक्षिणो नाजरामराः ।**
**भुक्तिस्त्वनर्थसंबद्धा संततैवार्थसाधकी ॥**
**लिखितं बलवन्नित्यं जीवन्तस्त्वेव साक्षिणः ।**
**कालातिहरणाद् भुक्तिरिति शास्त्रेषु निश्चयः× ॥**
**त्रिविधस्यास्य दृष्टस्य प्रमाणस्य यथाक्रमम् ।**
**पूर्वं पूर्वं गुरु ज्ञेयं भुक्तिस्तेभ्यो गरीयसी* ॥**

(१) तत्र पूर्वस्य पूर्वस्य गुरुत्वे निर्दिष्टे लिखितप्रमाणस्यैवाधिक्यमुपपद्यते । उत्तरोत्तरं भुक्तेर्मान्द्यगौरवव्याख्यानमागच्छति । पुनश्चास्मिन्नेव श्लोकचतुर्थपादेऽभिहितं 'भुक्तिस्तेभ्यो गरीयसी'ति भुक्तेरेवातिगौरवमापादितम् । तत् कथमेतद् योजनीयम् ? अत्रोच्यते, स्थावरविषये निरागमाया दुर्बलत्वं दृष्टम् । यथोक्तमत्रैव— 'संभोगो दृश्यते यत्र न दृश्येतागमः क्वचित् । आगमः कारणं तत्र न भोगस्तत्र कारणम्' ॥ एवमनागमाया भुक्तेः दुर्बलत्वमात्रं प्रतिष्ठते । तस्याः पूर्वं प्रमाणं साक्षिण उक्ताः । ते च यदि स्थावरस्यागमप्रतिष्ठाकारिणो भवन्ति ततो भुक्तिः प्रतिष्ठते, नान्यथा । एवं भुक्तेः पूर्वस्य साक्षिणः प्रमाणस्य गुरुत्वमापन्नम् । ततश्चागमद्वारेणैव साक्षिभ्यो लिखितं श्रेय इति । एवं चागमप्रतिष्ठिता सती भुक्तिस्तेभ्यः साक्षिलिखितदिव्येभ्यो गरीयसीति योजितमिदम् । अभा.४७-४८

(२) एभ्यः स्वल्पकालभुक्तिसाक्षिलिखितेभ्यो बहुकाला भुक्तिर्बलवती । व्यक.७१

(३) अत्र पूर्वपूर्वशब्देन लिखितसाक्षिभुक्तिषु यदत्यन्तपूर्वं लिखितं तदभिप्रेतम् । तेनायमर्थो भवति, यदैकस्य लिखितं भवत्यन्यस्य साक्षिणः तदा लिखितमेव प्रमाणं भवति । स्वहस्तचिह्नितलिखितस्य बलीयस्त्वात् । यदा त्वेकस्य साक्षी लिखितमुभयमपि समस्ति, अन्यस्य च यथोद्दिष्टकालीना भुक्तिस्तदा भुक्तिरेव प्रमाणम् । न साक्षिलिखने । भुक्त्यनुमितस्वत्वत्यागस्य पूर्वकालीनलिखितसाक्षिबाधकत्वात् । तदुक्तं 'भुक्तिराभ्यां गरीयसी'ति । यत्तु, 'संभोगो दृश्यते

---

× सवि., विता. मितागतम् । + शेषं मितागतम् ।
* पदार्थो मितावत् । ÷ सवि. स्मृचगतम् ।

(१) **स्मृच**.६७:७० उत्त.; **नृप्र**.९; **सवि**.१२३ श्रु (क्रु); **प्रका**.४४ वादे (पादे): ४६ उत्त., हारीतः; **समु**.४६.

(२) **स्मृच**.६७; **प्रका**.४४; **समु**.४६.

× व्याख्यासंग्रहः स्थलादिनिर्देशश्च (पृ.२१८) क्रियाप्रकरणे द्रष्टव्यः । * स्थलादिनिर्देशः क्रियाप्रकरणे (पृ.२१८) द्रष्टव्यः ।

(१) **नास्मृ**.४।७३; **अभा**.४७.

यत्र न दृश्येतागमः क्वचित् । आगमः कारणं तत्र न संभोग इति स्थितिः' ॥ इति नानावचनानि भोगस्यागमाद्दुर्बलत्वप्रतिपादकानि तानि सर्वाणि यथोद्दिष्टकालात् स्वल्पकालीनभोगाभिप्रायाणि कानिचिद् बाह्यप्रत्यक्षभोगाभिप्रायाणीति बोद्धव्यम् । अत एव याज्ञवल्क्येन त्रिपुरुषक्रमागताया भुक्तेरन्यत्रागमस्य बलवत्त्वमुक्तम् । +स्मृसा.१११

(४) पूर्वं पूर्वमिति भुक्तितः साक्षी ततः लिखितं पूर्वमित्यर्थः । भुक्तिरेभ्यः अल्पकालभुक्तिसाक्षिलेख्येभ्यः पञ्चाङ्गसंपन्ना भुक्तिर्गरीयसीत्यर्थः । भुक्तिराभ्यां गरीयसीति भवदेवे पाठः, स तु सुगम एव । व्यचि.७१

(५) त्रिप्रकारस्य प्रसिद्धस्य प्रमाणस्य यथोक्तक्रमेण पूर्वं पूर्वं बलवत् । भुक्तेः साक्षिणः, साक्षिभ्यः पत्रम् । भुक्तेरसान्निध्यबलादिनापि संभवात् साक्षिणस्तु प्रमाणीकृता नान्यथा वदिष्यन्तीति साक्षिषु स्मरणमात्रं,विस्मरणसंशयसंभवाद् धनेनान्यथाकरणाच्च पत्रे स्मरणमुपनिबद्धं चास्तीति पूर्वस्य पूर्वस्य बलवत्त्वम् । दर्शनान्तरमेतत् । 'भुक्तिर्वैभ्य' इति पाठे बहुवचनं दुरागमम् । 'एषामेष्वि'ति पाठे निर्धारणा । ततश्च तेषां त्रयाणां मध्ये निर्धार्यमाणा भुक्तिर्गरीयसी भवति । गरिष्ठेति प्राप्ते एकैकापेक्षः प्रकर्षप्रत्ययः । द्वे चैकीकृत्य । नाभा.२।६७

भुक्तेर्लेख्यसाक्ष्यनुग्राहकत्वम्

[१]विद्यमानेऽपि लिखिते जीवत्स्वपि हि साक्षिषु ।
विशेषतः स्थावराणां यन्न भुक्तं न तत् स्थिरम् ॥

(१) अत्र तु साक्षिलिखितयोरपि प्रमाणयोर्भुक्तिप्रमाणं विना दुर्बलत्वमुपदर्शितम् । अतोऽर्थाद् गम्यते आगमभुक्त्योरितरेतरमाधाराधेयसंबन्धः । एकैकं प्रमाणमप्यप्रमाणम् । यदुभयप्रमाणसंपन्नं वस्तु, तदविचलं प्रमाणमिति । विशेषतः स्थावराणामपि युक्तोऽपि (?) यन्नोपजीव्यते, तदपि भुक्तिं विना न स्थिरं भवति, न तत्प्रतिष्ठितं भवतीत्यर्थः । अभा.४८

(२) विशेषग्रहणं गवाश्वादावभुज्यमानेऽपि नासिद्धिर्यतस्ते नावश्यं भोग्याः । तथा हि भवद्गौर्गर्भं गृह्णाति, कीदृशोऽस्या अतो भोगः भूमिस्तु सर्वदा फलदेति भोगलाभमन्तरेण न बन्धत्वसिद्धिः । मेधा.८।१४८

(३) रथ्यादिव्यतिरिक्तविषयेऽपि भुक्त्यनुग्रहमन्तरेण नेतरयोर्गुरुत्वमित्याह नारदः—'विद्यमानेऽपी'ति । स्मृच.६७

(४) न तत्स्थिरं न तत्स्वत्वसाधकप्रमाणवद्भवतीत्यर्थः । व्यचि.६७

(५) त्रयाणां स्वविषयसंनिधौ पत्रे विद्यमाने जीवत्सु च साक्षिषु यन्न भुक्तं न तत् स्थिरम् । विशेषतः क्षेत्रगृहारामतटाकसेतुषु । कस्यचित् पत्रमस्ति । साक्षिणः कस्यचित् ! कस्यचिदच्छिन्नकालान्तरभोगः । तत्र कालान्तरभोगे सति भोगहीनमुभयमप्यस्थिरम् । तस्माद् भुक्तिर्गुरुतमा । नाभा.२।६८

भुक्तिविशेषः स्वत्वहेतुः

**भुज्यमानान् परैरर्थान् यः स्वान्मौर्ख्यादुपेक्षते ।**
**समक्षं जीवतोऽप्यस्य तान् भुक्तिः कुरुते वशे ॥**

(१) स्वकीयानर्थान् द्विपदचतुष्पदस्थावरादिकान् प्रीतिसमर्पितबलात्कारगृहीतशून्याक्रान्तादिप्रपञ्चैः परैः भुज्यमानान् यो मौर्ख्यादुपेक्षते तस्य जीवतोऽपि चिरकालातिक्रान्ता भुक्तिस्तान् पराणामेव वशीकुरुते ।

---

+ स्मृसा.१०५ व्यकवत् ।

(१) **नासं**.२।६८; **नास्मृ**.४।७७; **अभा**.४८; **मेधा**.८।१४८; **व्यमा**.३४४ (विशेषतः स्थावरादौ भोग एव स्थिरः स्मृतः); **अप**.२।२७ हि (च) यन्न (यत्र); **व्यक**.७२ यन्न भुक्तं न (यत्र भुक्तं च); **स्मृच**.६७; **पमा**.१४६; **दीक**.३४ विशे (अशे); **स्मृसा**.१०६ हि (च); **व्यचि**.६७,७४ हि (च) राणां (रादि); **नृप्र**.९ हि (च); **व्यत**.२२४ हि (च); **सवि**.१२४; **व्यसौ**.६८ जीव (तिष्ठ); **व्यप्र**.१५६; **सेतु**.९१ हि (च); **प्रका**.४४; **समु**.४६; **विच**.१३९ हि (च) व्यासः; **विव्य**.१८.

(१) **नासं**.२।६९ स्वान्मौर्ख्या (स्वमौढ्या) वशे (स्वकान्); **नास्मृ**.४।७८; **अभा**.४८; **व्यमा**.३४६ मौर्ख्या (मोहा) तान् भुक्तिः (भुक्तिं स) अर्थानुरोधेन 'भुक्तिस्त'मिति पाठोऽनुमीयते; **व्यक**.७२ मौर्ख्या (मोहा); **स्मृसा**.१०६,११० मौर्ख्या (मोहा) वशे (वशं); **व्यचि**.६६ स्वान्मौर्ख्या (तान्मोहा) जीवतो (पश्यतो) : ७४ स्वान्मौर्ख्या (तान्मोहा); **व्यत**.२२३ स्वान्मौर्ख्या (तान्मोहा) जीवतो (तिष्ठतो); **व्यप्र**.१५७ मौर्ख्या (मोहा); **सेतु**.८९ व्यतवत्; **समु**.४६ व्यप्रवत्; **विच**.१३७ व्यतवत्.

प्रत्यक्षं प्रापयति । किं पुनर्मृतस्येति । अभा.४८

(२) स्वानर्थानित्यन्वयात् स्वद्रव्योपेक्षकं पुरुषं भुक्तिवशे कुरुते । व्यमा.३४६

(३) तत्र उपेक्षया स्वत्वहानिं भुक्त्या च स्वत्वमाह नारदः—भुज्यमानानिति । *व्यत.२२३

**यत्किंचिद्दश वर्षाणि संनिधौ प्रेक्षते धनी ।**
**भुज्यमानं परैस्तूष्णीं न स तल्लब्धुमर्हति× ॥**

एतद्दशवर्षकालप्रमाणमुपन्यस्तं न तच्छलार्थम्, किं तर्हि ? संव्यवहारस्थितिरक्षणार्थम् । द्रव्यसंबन्धं विनाऽपि कः स्वकीयमर्थं भुज्यमानमियन्तं कालमुपेक्षते । तूष्णीं यत्पुनरुपेक्षितं तदर्थात्प्रतिष्ठितद्रव्यसंबन्धं भवति । अतस्तदुपरिष्टान्मुधिकया प्रार्थयन्नपि न स तल्लब्धुमर्हति । यत् पुनर्देशकालबलापेक्षया तं स्वार्थमु(द्ध)र्तुं न क्षमः, प्रतिवचः प्रतिदिनं प्रतिमासं प्रतिवर्षं च करोति, ततः कालान्तरेऽपि तत्तस्य न प्रणश्यति व्यवहारे उत्तरं लभत इत्यर्थः । अभा.४८

**उपेक्षां कुर्वतस्तस्य तूष्णींभूतस्य तिष्ठतः ।**
**कालेऽतिपन्ने पूर्वोक्तो व्यवहारो न सिध्यति ॥**

(१) नारदेनोपेक्षायां लिङ्गाभावकृता व्यवहारहानिरुक्ता न तु वस्त्वभावकृता । +मिता.२।२४

* सेतु., विच. व्यतवत् ।

× व्याख्यानान्तराणि मनौ (पृ.३८३) द्रष्टव्यानि ।

+ सवि., व्यप्र., विता. मितावत् ।

(१) **नासं**.२।७०; **नास्मृ**.४।७९; **शुनी**.४।७१३-७१४ यत्किं (यं कं) स्तूष्णीं (र्थं) तल्ल (तं ल); **अभा**.४८; **व्यमा**.३४७ मनुनारदौ; **व्यक**.७२ स्तूष्णीं (र्थं) याज्ञवल्क्य; **स्मृसा**.१०६ मनुनारदौ; **व्यत**.२२२ मनुनारदौ; **चन्द्र**.१५३ मनुनारदौ; **व्यसौ**.६८ मनुनारदौ; **व्यप्र**.१५७ यत् किंचित् (यं कश्चित्) स्तूष्णीं (र्थं) तल्ल (तं) मनुनारदौ; **बाल**.२।२४ (=); **सेतु**.४८ मनुनारदौ; **प्रका**.४५ उशना.

(२) **नासं**.२।७१ सिध्यति (विद्यते); Vulg. **नास्मृ**.४।७९ इत्यस्यानन्तरमयं श्लोकः, ऽति (ऽभि); **शुनी**.४।७१८-७१९ क्तो...ति (क्ते तत्फलं नाप्नुते धनी); **मिता**.२।२४ऽति (वि) क्तो (क्ते); **अप**.२।२४; **स्मृच**.६८ तिष्ठतः (निष्ठातः) क्तो (क्ते); **सवि**.१२७ क्तो (क्त); **व्यप्र**.१५९ मितावत्; **विता**.१४५ ऽतिपन्ने (विगते) क्तो (क्ते); **प्रका**.४५ क्तो (क्ते); **समु**.४७ क्तो (क्ते).

(२) तस्योपेक्षकस्य व्यवहारो व्यवहारफलं स्वामित्वं न सिध्यतीत्यर्थः । अप.२।२५

(३) मानुषप्रमाणात्तस्य स्वार्थो न सिध्यतीत्यर्थः । स्मृच.६९

(४) न भूयो व्यवहारो विद्यते । तस्योपेक्षादोषात् हृतं तत् भवति । तस्मान्नोपेक्ष्यः । नाभा.२।७१

**अजडश्चेदपौगण्डो विषये चास्य भुज्यते ।**
**भग्नं तद्व्यवहारेण भोक्ता तद्धनमर्हति ॥**

(१) यदि जडो न भवति, दीर्घतीव्रामयग्रस्तमूकान्धबधिरोऽपि वा । यदि चापोगण्डः अबालः प्रत्यक्षतोऽस्य सक्तं स्थावरादिकमनुपरवं चापरेण तु भुज्यते, ततोऽर्थपतिप्रतिष्ठितं द्रव्यं व्यवहारेण यो भोक्ता स एव तद्धनमर्हति । अभा.४८

(२) जडो मूढः अविभागज्ञः । पोगण्डः पुनातेर्विंचि पौः शुद्धगण्डः, बाल इत्यर्थः । तथा चोक्तं पूर्वम्—'बाल आ षोडशाद् वर्षात् पोगण्डश्चेति शब्द्यते' इति । अप्राप्तव्यवहार इत्यभिधानविदः । पोषयितव्यगण्डो वा । पूरयितव्यगण्ड इत्यन्ये । दुर्गतो दरिद्रः यस्य स्त्री पोगण्डनीति प्रसिद्धा । युक्तं च तस्य ग्रहणम् । स हि परकर्मणा प्राणवृत्तिमन्विच्छन् स्वधनान्वेषणं कर्तुमसमर्थ इति । वररुचिनाऽप्युक्तम्—'शरीरपाणिचरणैर्निसर्गेण शरीरिणः । विकलाः सद्भिरुच्यन्ते पोगण्डकुणिपङ्गवः' इति ॥ अनाथ इत्यर्थः । कारणद्वयोपन्यासः प्रदर्शनार्थोऽन्यस्यापि स्वधनान्वेषणाभावकारणस्य व्याधिसंरोधदीर्घसत्त्रप्रवासादेः । नाभा.२।७२

आध्यादिभोगः न स्वत्वहेतुः

**आधिः सीमा बालधनं निक्षेपोपनिधी स्त्रियः ।**
**राजस्वं श्रोत्रियद्रव्यं न भोगेन प्रणश्यति× ॥**

× मभा.व्याख्यानं 'अजडापोगण्डे'ति गौतमवचने (पृ. ३८१) द्रष्टव्यम् ।

(१) **नासं**.२।७२ पौ (पो) भग्नं (भुक्तं); **नास्मृ**.४।८०; **अभा**.४८. (२) **नासं**.२।७३ धी (धि) द्रव्यं... श्यति (स्वं च नोपभोगेन जीर्यति); **नास्मृ**.४।८१; **शुनी**.४।७१७-७१८ द्रव्यं (स्वं च); **अभा**.४८ धी (धिः); **व्यमा**.३५१ आधिः...बाल (दायसीमादाय) धी (धि) द्रव्यं (स्वं च) मनुनारदौ; **व्यक**.७४ धी (धि) द्रव्यं (स्वं च) न ... ति (नोपभोगेन नश्यति) मनुनारदौ; **मभा**.१२।३४ धी (धिः) उत्तरार्धं नासंवत्; **स्मृसा**.

(१) यत्किञ्चिदाधीकृतं वस्तु तत्सुचिरकालादपि तेन द्रव्येण लभते। न भोगेन प्रणश्यति तथा परसीमा चिराक्रान्ताऽपि स्वस्थीभूते देशे पुनर्लभ्यते, न प्रणश्यति। तथा मातापित्रोः परोक्षे, येन सधनो बालः परिगृहीतस्तद्बालधनं चिरभोगेनापि न प्रणश्यति। तथा निक्षेपो न्यासः, उपनिधिः निक्षेपमध्ये अन्तर्हितसारद्रव्यम्। तथा स्त्री निक्षेपभूता या भुक्ता। तथा राजस्वशब्देन भूमिरुक्ता। श्रोत्रियद्रव्यशब्देन गावोऽभिहिताः। एतेषु सविशेषन्यासाः चिरकालातिक्रमेऽपि न नश्यन्तीति। अभा.४८-४९

(२) 'यत्किंचिद्दशवर्षाणी'त्यस्यापवादः। नाभा.२।७३

**ब्रह्मचारी चरेत्कश्चित् व्रतं षट्त्रिंशदाब्दिकम्।**
**अर्थार्थी चान्यविषये दीर्घकालं वसेन्नरः॥**
**समावृत्तो व्रती कुर्यात् स्वधनान्वेषणं ततः।**
**पञ्चाशदाब्दिको भोगस्तद्धनस्यापहारकः॥**
**प्रतिवेदं द्वादशाब्दः कालो विद्यार्थिनां स्मृतः।**
**शिल्पविद्यार्थिनां चैव ग्रहणान्तः प्रकीर्तितः॥**
**सुहृद्भिर्बन्धुभिश्चैषां यत्संभुक्तमपश्यताम्।**
**नृपापराधिनां चैव न तत्कालेन हीयते॥**

एतच्चापवादजातं भोक्तुरागमाभावे वेदितव्यम्। स्मृच.६९

**प्रत्यक्षपरिभोगात्तु स्वामिनो द्विदशाः समाः।**
**आध्यादीन्यपि जीर्यन्ते स्त्रीनरेन्द्रधनादृते॥**

(१) आध्यादीनां यः स्वामी तस्य प्रत्यक्षमनुपरतवंश्याः द्विदशाः समाः विंशतिवर्षाणि येन भुक्तानि तस्यैव तानि जीर्येरन् परिणतिं यान्तीत्यर्थः। स्त्रीधनं सुप्रतीतम्। नरेन्द्रधनशब्देन पर्यायेण तु भूमिरुक्ता किल। नरेन्द्राणां भूमिरेव धनमित्यतः। स्त्रीनरेन्द्रधने तु विंशतिवर्षैरपि न नश्यत इति। अभा.४९

(२) आध्यादयोऽपि जीर्येरन् किं पुनरन्यत्? तस्मादाध्यादिव्यतिरिक्तस्य यथोक्तया भुक्त्या स्वत्वसिद्धिः। एवं चाधिसीमोपनिक्षेपेत्यादेरविरोधः। ×अप.२।२५

(३) एवं च विंशतिवर्षाद् बालधनं जीर्यत्येव। मभा.१२।३४

(४) आध्यादीन्यपीति प्रौढिवादः। तेषामपि भोगोपेक्षाकारणसंभवेन स्त्रीधननरेन्द्रधनतुल्यत्वादनागममिति वदन्नागमसंभवे जीर्यत एवेति दर्शयति। स्मृच.७०

(५) राजस्वं स्त्रियं च विना आध्यादिरपि विंशतिवर्षभोगेन हीयत एव। चन्द्र.१५४

(६) आध्यादीनामप्यपवादः। आध्यादिन्यायेनातिप्रसक्तस्य निवृत्त्यर्थमाह—ऋते स्त्रीधनान्नरेन्द्रधनाच्च। स्त्री च नरेन्द्रश्च स्त्रीनरेन्द्रौ तयोर्धनं स्त्रीनरेन्द्रधनम्। स्त्री च नरेन्द्रधनं चेति वा। नाभा.२।७४

**स्त्रीधनं च नरेन्द्राणां न कथञ्चन जीर्यति।**
**अनागमं भुज्यमानं वत्सराणां शतैरपि॥**

(१) एवं निरन्तरभोगेन न प्रणश्यति, मुनिवचनसिद्धादेशादिति। अभा.४९

(२) इदमपि वचनं पशुभूमिस्त्रीविषयत्वेन व्याख्या-

---

१०७ व्यकवत्, मनुनारदौ; व्यचि.७५ धी (धिः) द्रव्यं ... ति (स्वं च नोपभोगेन शाम्यति); स्मृचि.५० व्यचिवत्, मनुनारदौ; व्यसौ.६९ आधिः (आधेः) धी (धिः) द्रव्यं ... ति (स्वं च नोपभोगेन सिध्यति) मनुनारदौ; व्यप्र.१६६ द्रव्यं ... ति (स्वं च नोपभोगेन नश्यति) मनुनारदौ; व्यम.१५ धी (धिः) शेषं व्यप्रवत्; विव्य.२० धी (धिः) द्रव्यं (स्वं च).

(१) स्मृच.६९; पमा.१४८ व्रती (ऽव्रती) यत्संभु (यत्स्वं भु) न तत् (भवेत्) कात्यायनः; प्रका.४५; समु.४७.

(२) नासं.२।७४ तु (च्च) र्यन्ते (र्येयुः); नास्मृ.४।८२; अभा.४९; व्यमा.३४९ त्यक्ष (त्यर्थि) द्वि (हि) र्यन्ते (र्यन्ति); अप.२।२५ दीन्यपि (दयोऽपि) र्यन्ते (र्येरन्); व्यक.७२ र्यन्ते (र्यन्ति); मभा.१२।३४ नासंवत्; स्मृच.७० तु (च्च); स्मृसा.१०६ व्यकवत्; व्यचि.६७,७५ व्यकवत्; चन्द्र.

× व्यचि. अपगतम्।

१५४ व्यकवत्; प्रका.४६ तु (च्च); समु.४७ तु (च्च) बृहस्पतिः; विव्य.१९ व्यकवत्.

(१) नासं.२।७५ स्त्रीधनं (स्त्री धनं); नास्मृ.४।८३ र्यति (र्यते); अभा.४९ नास्मृवत्; व्यमा.३५०; मभा.१२।३६ भुज्यमानं (तु यद्भुक्तं) उत्त.; स्मृच.७० र्यति (र्यते) वत्सराणां (वर्षाणां तु); व्यत.२२६ नरे (नृपे) कथं (कदा) वत्सराणां (अपि वर्ष); चन्द्र.१५४ कथं (कदा) वत्सराणां (अपि वर्ष); सेतु.९२ धनं च (धनं तु) शेषं चन्द्रवत्; प्रका.४५ स्मृचवत्; समु.४७ स्मृचवत्; विच.१४२ चन्द्रवत्; विव्य.१९ (=) गमं (गतं).

तमिति । मभा.१२।३६

(३) नरेन्द्राणां च धनमित्यर्थः । स्मृच.७०

(४) व्यभिचारादिना भर्त्रा अनेकाग्रे त्यक्ता स्त्री यदि परेण भुज्यते तदा तत्र यथोक्तो भोगः प्रमाणमेव। अत्रानागमपदस्वरसात् । अत्र स्वामित्यक्ते औपादानिकस्वत्वात् । चन्द्र.१५४

(५) स्त्री परकीया, धनं च राज्ञां न केनचित् प्रकारेण जीर्यति । अनागममप्रमाणकं भुज्यमानं वर्षशतैरपि, किं पुनर्द्विदशैरिति । 'स्त्रीनरेन्द्रधनादि' त्यत्र द्विदशैर्न जीर्यतीत्युक्तम् । कियता कालेन जीर्यति न वा जीर्यतीत्यविशेषितत्वाद् अनेन विशेषितम् ।

नाभा.२।७५

भोगागमयोः सहकार्यप्राबल्यदौर्बल्यविचारः

**[१]संभोगो दृश्यते यत्र न दृश्येतागमः क्वचित् ।**
**आगमः कारणं तत्र न भोगस्तत्र कारणम्* ॥**

(१) एवं तु पुनरत्रागमस्यैव माहात्म्यं दर्शितमिति । अभा.४९

(२) नियतो निश्चितो वा भोगो निर्भोगः, स यस्मिन् व्यवहारे दृश्यते । यत्रेति विषयसप्तमी, यस्येत्यर्थः । आगमश्च न दृश्यते, आगमः पत्रादिर्न दृश्यते, न तद् भोगाद् भवति, यस्मादागमः कारणं न भोगः । 'विद्यमानेऽपि लिखित' इत्यत्र दर्शनान्तरमित्युक्तम् । 'पूर्वे पूर्वे गुरु ज्ञेयम्' 'लिखितं बलवन्नित्यमि'ति पित्रा भुक्तविषये वा । नाभा.२।७६

**[२]आगमेन विशुद्धेन भोगो याति प्रमाणताम् ।**
**अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छति× ॥**

(१) सर्वाण्येतानि आहर्तृगोचराणि । तेनागमशोधनमाहर्त्रा कार्यम् । व्यमा.३४५

(२) एतदत्रिपुरुषागतभोगविषयम् । भोगमात्रविषयत्वे पूर्वोक्तानेकवचनविरोधात् । स्मृच.७४

(३) मिता.टीका—विशुद्धेन कापट्यरहितेनेत्यर्थः ।

बाल.२।२७

**आगमस्याविशुद्धत्वं विरोध्यास्कन्दनं भवेत् ॥**
**[२]भोगं केवलतो यस्तु कीर्तयेन्नागमं क्वचित् ।**
**भोगच्छलापदेशेन विज्ञेयः स तु तस्करः ॥**

(१) तेन सभ्यसंनिधावागमाद्यङ्गमपि कीर्तनीयमित्यभिप्रायः । *स्मृच.७१

(२) इदं चागमस्मरणयोग्ये काले ज्ञेयम् । व्यम.१४

पञ्चाङ्गभोगः स्वत्वप्रमाणम्

**[३]सागमो दीर्घकालश्च निश्छिद्रोऽन्यरवोज्झितः ।**
**प्रत्यर्थिसंनिधानश्च पञ्चाङ्गो भोग इष्यते ॥**

प्रमाणमिति शेषः । आगच्छति स्वीभवत्यनेनेत्यागमः । ...... स्मृत्युक्तकालान्यूनकालं निश्छिद्रो निर-

---

*स्मृसा.व्याख्यानं 'त्रिविधस्यास्ये'ति श्लोके (पृ. ४०२) द्रष्टव्यम् ।

×वीमि.व्याख्यानं 'पश्यतोऽब्रुवत' इति याज्ञवल्क्यश्लोके (पृ. ३९२-३९३) द्रष्टव्यम् ।

(१) **नास.**२।७६ संभो (निर्भो) दृश्यते यत्र (यत्र दृश्यते); **नास्मृ.**४।८४; **अभा.**४७,४९; **मेधा.**८।१४८ दृश्यते यत्र (यत्र दृश्येत) न भोग ...णम् (न संभोग इति स्थितिः); **स्मृसा.** १११ न भो...णम् (न संभोग इति स्थितिः).

(२) **नास्मृ.**४।८५; **मिता.**२।२७; **व्यमा.**३४५ विशुद्धे (तु शुद्धे); **अप.**२।२७ नैव (नाधि); **व्यक.**७२ अपवत्; **स्मृच.**७४; **पमा.**१४०; **स्मृसा.**१०५ अपवत्; **नृप्र.**८; **मच.**८।१४७ विशुद्धेन (प्रमाणेन) प्रमाण (विशुद्ध) कात्यायनः :८।२०० नैव (नाधि); **व्यसौ.**६८ प्रमाण (विशुद्ध) नैव (नाधि); **वीमि.**२।२९ अवि (अपि); **व्यप्र.**१५३; **व्यम.** १४; **विता.**१३७; **प्रका.**४७; **समु.**४९ अपवत्.

* सवि. स्मृचवत् ।

(१) **व्यप्र.**१५३. (२) **नास्मृ.**४।८६ विज्ञेयः स तु (स विज्ञेयस्तु); **शुनी.**४।७१२ (संभोगं कीर्तयेद्यस्तु केवलं नागमं क्वचित्); **मेधा.**८।१४८ भोगं (भोग) लतो (लतां) पू.; **मिता.** २।२७ स्मरणम्; **स्मृच.**७१ भोगं केवलतो (संभोगं केवलं); **पमा.**१४० स्मृचवत्; **स्मृसा.**१०८ भोगं....यस्तु (भोगं तु केवलं यश्च) लाप (लोप) पुलहः; **स्मृचि.**४९ भोगं (भोगः) कीर्तयेत् (कीर्त्यते) देशेन (देशे च); **सवि.**१३० स्मृचवत्; **चन्द्र.**१५६ केवलतो यस्तु (तु केवलं यत्र); **व्यप्र.**१५४ लाप लोप) शेषं स्मृचवत्; **व्यम.**१४ स्मृचवत्; **विता.**१३७ केवलतो (च केवलं); **प्रका.**४६ स्मृचवत्; **समु.**४८ स्मृचवत्.

(३) **पमा.**१४० सा (आ) निश्छि....रवो (विच्छेदोपरमो); **दीक.**३४ सा (आ) कात्यायनः; **व्यचि.**६३ नश्च (नं च) गो (शो); **नृप्र.**८ निश्छिद्रोऽन्य (अविच्छेदोप) पञ्चा....ते (परिभोगोऽपि पञ्चधा); **वीमि.**२।२९ ज्झितः (र्जितः).

न्तरः अन्यरवोज्झितः परविप्रतिपत्तिप्रकाशशून्यः । प्रत्यर्थिनो वादिप्रतिवाद्यन्यतरस्य संनिधानम् । व्यचि.६४

षड्विध आगमः

**लब्धं दानात्क्रयात्प्राप्तं शौर्यं वैवाहिकं तथा ।**
**बान्धवादप्रजाज्जातं षड्विधस्तु धनागमः ॥**

लब्धं जन्मना लब्धं पैतृकादि । अथवा दर्शनेन लब्धं निध्यादि । स्मृच.७०

भोगागमयोः सहकार्यप्राबल्यदौर्बल्यविचारः

**अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि ।**
**चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः × ॥**

(१) यो भुङ्क्ते इत्येकवचननिर्देशात् आहर्तृविषयं वचनं बहून्यब्दशतान्यपीति चैकस्य यावान् भोगकालः संभवति, तावदभिप्रायम् । व्यमा.३४३

(२) इति, तत् बहुबालादिधनविषयम् । पूर्वजभूमिभोक्तृपुरुषविषयं वा । अप.२।२५

अत्र च प्रथमभोक्तुरेव दण्डो न तु तत्सुतादीनां, तेभ्यस्तु भूरेव ग्राह्या । अप.२।२८

(३) इत्यादीनि तु असंनिधिविषयाणि जडादिविषयाणि वा । गौमि.१२।३४

(४) एतच्चेनकेनचित्प्रमाणेन निश्चितानागमभोगविषयम् । अनागममिति सिद्धवन्निर्देशात् निश्चितानागमाश्च भोगास्तेनैव दर्शिताः— 'अन्वाहितं हृतं न्यस्तं बलावष्टब्धयाचिते । अप्रत्यक्षं च यद्भुक्तं षडेतान्यागमं विना' ॥ +स्मृच.७४

(५) (ननु सागमत्वं व्यर्थम् । तद्रहितभोगस्यापि प्रामाण्यात्, इति 'अन्यायेन तु यद्भुक्तम्' इत्यादिनारदादिवचनपुरस्कारेणाशङ्क्य— ) हन्तैवं विरोधात् संशय एवास्त्विति, न विषयभेदात् । तथा हि पूर्वर्षिवचनानामागमसंदेहमुत्तरेषां तु तदभावनिश्चयमालम्ब्य प्रवृत्तेः । तथा त्रिपुरुषभोगस्थले आगमसंशयोपभोगः प्रमाणं, अन्यत्र तु आगमनिश्चयसहित एवेति सिद्धम् । व्यचि.६५

(६) वस्तुतस्तु 'अनागममि'ति दण्डविधायकवचनं स्त्रीधननृपधनपरम् । 'स्त्रीधनं च नृपेन्द्राणां न कदाचन जीर्यति । अनागमं भुज्यमानमपि वर्षशतैरपि' ॥ इति स्वत्वनिषेधकवचनान्तरैकवाक्यत्वात् । व्यत.२२६

**स्मार्ते काले क्रिया भूमेः सागमा भुक्तिरिष्यते ।**
**अस्मार्तेऽनुगमाभावात् क्रमात् त्रिपुरुषागता ॥**

(१) भुक्तिः प्रमाणमिति शेषः । अनुगमः आगमाभावनिश्चयः । कल्पतरुकारस्त्वनुगम आगमानुसंधानमिति व्याचख्यौ । तत्त्वागमाभावनिश्चयस्य बाधत्वेनानुमितिप्रतिबन्धकस्याभाववचनस्यावश्यकत्वादागमानुसंधानस्य च भोगेनैव क्रियमाणत्वेन तदभावासंभवाच्च हेयम् । व्यप्र.१५४

(२) अनुगमाभावात् योग्यानुपलब्ध्या आगमाभावनिश्चयस्यासंभवात् । व्यम.१४

**यद्विनाऽऽगममत्यन्तं भुक्तं पूर्वैस्त्रिभिर्भवेत् ।**
**न तच्छक्यमुपाहर्तुं क्रमात्त्रिपुरुषागतम्* ॥**

---

×मिता.व्याख्यानं 'पश्यतोऽब्रुवत' इति 'आगमोऽभ्यधिक' इति (पृ.३८९,३९८) याज्ञवल्क्यवचने द्रष्टव्यम् ।

(१) **स्मृच**.७० दानात्क्रयात (दानक्रय); **पमा**.१३९; **प्रका**.४६ स्मृचवत्; **समु**.४८ स्मृचवत्.

(२) **नास्मृ**.४।८७; **शुनी**.४।७१५-७१६; **मेधा**.८।१४८; **मिता**.२।२४, २।२७; **व्यमा**.३४३; **अप**.२।२५ तु (च): २।२८; **व्यक**.६,७२; **गौमि**.१२।३४; **स्मृच**.७४; **पमा**.१४३; **दीक**.३३ (=) यो (यद्); **स्मृसा**.१०८ न्यपि (नि च) व्यासः; **व्यचि**.६५ न्यपि (नि तु); **स्मृचि**.४९ स्मृसावत्, बृहस्पतिः; **नृप्र**.८ तु (च); **व्यत**.२२६ गमं (गमः) न्यपि (नि च); **सवि**.१२५, १२९,१३४: १६३ गमं तु (गमेन) स्मृतिः : ४९१ मनुः; **मच**.८।१४७; **चन्द्र**.१५७ गमं तु (गमेन) न्यपि (नि च); **व्यसौ**.६८; **वीमि**.२।२९; **व्यप्र**.१५५; **व्यउ**.४६ मनुः; **व्यम**.१४; **विता**.१३९; **राकौ**.३९६; **सेतु**.९२ न्यपि (नि च) पृथिवी (अवनी); **प्रका**.४७; **समु**.४९; **विच**.१४२ (=); **विव्य**.१७.

+वीमि., व्यप्र., व्यउ. स्मृचवत् ।

*अत्रत्यं विता.व्याख्यानं 'आगमोऽभ्यधिक' इति याज्ञवल्क्यश्लोकीयमिताक्षरायां (पृ.३९८) गतार्थम् ।

(१) **नास्मृ**.४।८९ भूमेः (भुक्तेः) ऽनुगमाभावात् (लिखिताभावे); **अप**.२।२८; **व्यप्र**.१५४ भूमेः (भुक्तेः); **व्यम**.१४.

(२) **नास**.२।८१ पूर्वार्धे (आगमेन विना पूर्वं भुक्तं पूर्वैस्त्रिभिस्तु यत्) मुपाह (मपाक); Vulg. **नास्मृ**.४।९३ इत्यस्यानन्तरमयं श्लोकः, मुपा (मपा); **मेधा**.८।१४८ मुपा (मपा); **स्मृच**.७२; **व्यचि**.६४ गममत्यन्तं (प्यागमं पूर्वं) मुपाह (मपाक); **सवि**.१३३ (=) मुपाह (मपाक); **व्यसौ**.

(१) अस्यायमर्थः– आगमो दानादिः । असति तस्मिन् यद्भुक्तं पितृपितामहप्रपितामहैस्तच्चतुर्थस्य सिध्यति न तु विंशत्या वर्षैः । मेधा.८।१४८

(२) अत्यन्तं विनागमं भुक्त्याऽप्युपलभ्यमानमागमं विनेत्यर्थः । स्मृच.७२

(३) तत्रात्यन्तमागमं सातत्यादिगुणविशेषणविशिष्टमुपलभ्यमानं विनेति व्याख्येयम् । न पुनरागमस्वरूपं विनेति । आगमस्वरूपाभावे भोगशतेनापि न स्वत्वं भवतीत्युक्तं विज्ञानयोगिना । सवि.१३३

(४) विनाप्यागमेन पूर्वैस्त्रिभिर्यद् भुक्तं, ऊर्ध्वं न तच्छक्यं निरसितुम् । क्रमात् त्रिपुरुषागतं प्रमाणमेवेत्यर्थः । पुत्राशोधितमप्यव्याहतं त्रिपुरुषभुक्तं शुद्धं विनापि प्रमाणेनेति । नाभा.२।८१

(५) तदपि अत्यन्तं उपलभ्यमानं, आगमं विना आगमाभावनिश्चयाभाव इति व्याख्येयम् । व्यप्र.१५६

**आहर्तैवाभियुक्तः सन्नर्थानामुद्धरेत्पदम् ।**
**भुक्तिरेव विशुद्धिः स्यात्प्राप्तानां पितृतः क्रमात् ॥**

(१) कश्चित्परकीयार्थानामाहर्ता स एवार्थो धनिना स्वार्थसंचितार्थमारम्भणीयः । स चाहर्तैव तेनाभियुक्तः सन् तमर्थं प्रतिष्ठापदं नयेत् । तस्मिन् पुनरर्थाहर्तरि मृते तदीयसंततेरुपरतपितृक्रमागता भुक्तिरेव प्रतिष्ठाऽतिशुद्धिकारिणी न (?) भवति । अभा.४९

(२) आहर्तैवोद्धरेन्नान्य इति नायमन्वयः । तदा हि तत्पुत्रादीनामागमशोधननिषेधः स्यात् । न च तदुचितं, सति संभवे तेषामप्यागमशोधनेन भुक्तेरेव सुदृढसिद्धेः । न चार्थानां पदं प्रापकं क्रयादिकमेवोद्धरेन्न भुक्तिमित्यर्थः । 'आहर्ता शोधयेद् भुक्तिमागमं चापि संसदि' इति बृहस्पतिविरोधात्, तस्मादाहर्ता शोधयेत् एतैरित्यन्वयः । युक्तं चैतत् । आहर्तुर्हि विदितागमवृत्तान्तस्य तदुपेक्षया भोगं वदतोऽनागमत्वावधारणात् चौरत्वमेव स्यात् । व्यमा.३४३

(३) पदं स्थानं आगममिति यावत् । विशुद्धा सांतत्यादिमत्तया प्रमाणतः सिद्धा । प्राप्तानां चतुर्थादीनाम् । स्मृच.७३

(४) मृते तद्वंश्यभोग्यतां यातीत्युक्तम् । जीवति कथमिति तदुच्यते—आहर्तैव प्रथमपुरुष एव भुञ्जानोऽभियुज्यते कथं त्वया लब्धमिति अर्थतो न्यायात् पत्रसाक्ष्यादिभिर्लाभं शोधयेत् पदं व्यवहारपदं व्यवहारस्थानं वा । यदि शुध्यति तस्यैव तत् । नो चेद्धीयते, यावद्भुक्तं तावद्दाप्यश्च दण्ड्यश्च, प्रमाणेन विना परकीयभोगात् । मृते तस्मिन् भुक्तिरेव विशुद्धिः स्यात् प्रमाणं तत्पुत्राणां भवति पितृतः प्राप्तत्वात्, अविवादेन पित्रा भुक्तं चेत् । अथ सविवादेन, तदा पुत्रैर्व्यवहर्तव्यम् । नाभा.२।७८

**भुज्यतेऽनागमं यत्तु न तद्भोगपदं नयेत् ।**
**प्रेते तु भोक्तरि धनं याति तद्वंश्यभोग्यताम् ॥**

अत्र यावद्भोक्ता जीवति तावदनागमं भुज्यमानं परकीयं भवति यथा, तथाऽस्योद्धरणसंभवो भवति । यदा पुनरनागमभोक्ताऽपि अप्रार्थित एव मृतः तदा तद्वस्तु तद्वंश्यभोग्यतां याति । अतो नोपेक्षणीयमित्यर्थः । *अभा.४९

**अन्यायेनापि यद्भुक्तं पित्रा पूर्वतरैस्त्रिभिः ।**
**न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतम्× ॥**

---

६६ (=) सविवत्; वीमि.२।२९ न्तं (र्थं) शेषं सविवत्; व्यप्र.१५५ मुपा (मपा); विता.१४१ (=) व्यप्रवत्; प्रका.४७ व्यप्रवत्; समु.४९ व्यप्रवत्.

(१) नासं.२।७८ र्थानामुद्ध (र्थतस्तद्ध); नास्मृ.४।९० सन्न (स्यान्ना) प्राप्तानां (प्राप्ता या); अभा.४९; व्यमा.३४३ भुक्ति (भुक्ते) प्राप्तानां (प्राप्तायाः); स्मृच.७३ सन्न (स्याद) शुद्धिः (शुद्धा); प्रका.४७ स्मृचवत्.

* नाभा. अभावद्भावः ।

× मिता.व्याख्यानं ' आगमोऽभ्यधिक ' इति याज्ञवल्क्यश्लोके (पृ.३९८) द्रष्टव्यम् । अप., व्यचि., सवि., व्यप्र., व्यम., विता. मितागतम् ।

(१) नासं.२।७७ भोगपदं नयेत् (भोगोऽतिवर्तते); नास्मृ.४।८८ वंश्य (वंश); अभा.४९; व्यसौ.६८ पूर्वार्धे (अनागमं भुज्यते यत्र तद्भुक्तिर्बलं भवेत्) वंश्यभोग्य (वंशभोग).

(२) नास्मृ.४।९१ पित्रा (पितुः); अभा.४९ नास्मृवत्; मिता.२।२७; व्यमा.३४१ हर्तुं (कर्तुं): ३५० पू.; अप. २।२८; व्यक.६ अन्यायेनापि (अनागमं तु): ७० नापि (न तु); श्लोकार्धौ व्यत्यासेन पठितौ; स्मृच.७३; सुबो.२।२७ (=) पू.; स्मृसा.१०४, १०९ व्यमावत्; व्यचि.६४ व्यकवत्;

(१) यत्किमपि वस्तु वृद्धप्रपितामहेनाहृतं अन्यायेनाऽपि विनागममपि ततश्च प्रपितामहेनापि भुक्तं तदनन्तरं पितामहेनापि । एवमनेन पुरुषपारम्पर्येण पितुः पूर्वतरैस्त्रिभिः यद्भुक्तं तत्पितुः क्रमात्त्रिपुरुषागतं चलस्थिरादिकं वस्तु तत्केनाप्यपहर्तुं न शक्यम् । अत्र भाषाया एवमुत्थानमित्यर्थः । अभा.४९

(२) पित्रा सह पूर्वतरैस्त्रिभिर्यद्भुक्तं तदन्यायेनेति वक्तुमशक्यम् । किं पुनरपाहर्तुमित्यर्थः । स्मृच.७३

(३) पित्रेति पित्रा सहेत्यर्थः । अन्यायेनापि अन्यायनिश्चयेनापि इत्यर्थः । तेन वस्तुतो न्यायेन भोग इत्यायाति इति नान्यायभोगः प्रमाणमिति केचित् । अन्ये तु वचनबलादेवंविधोऽन्यायभोगोऽपि प्रमाणमेवेत्याहुः । चरमः पक्षोऽत्र समीचीनः । चन्द्र.१५४

**[1]ग्रामक्षेत्रं गृहं चैव भुक्तं यस्य क्रमागतम् ।**
**राजप्रसादादन्यत्र तद्भुक्तमपरं नयेत् ॥**

राजप्रसादादन्यायभूतादिति शेषः । स्मृच.७४

**[2]आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा ।**
**कारणं भुक्तिरेवैका संतता या चिरन्तनी* ॥**

(१) आदावनागमकर्तरि दानमागमः कारणं प्रमाणं न च भुक्तिरित्यभिहितम् । व्यमा.३४४

(२) तदाहर्तृनिर्णीताभियोगाभावविषयमिति मन्तव्यम् । स्मृच.७५

(३) मिता.टीका—एतच्चतुर्थपुरुषविषयम् । सुबो.२।२७

(४) अयमर्थः—आद्ये पुरुषे साक्षिलेख्याभ्यां भावित आगमो भोगादप्यधिको बलवान् । पूर्वक्रमागतस्तु भोगो विनाऽपि भावितादागमाच्चतुर्थपुरुषे लिखितेन भाविताद्गमाद्बलवान् । मध्ये तु भोगरहितादागमात् स्तोकभोगसहितोऽप्यागमो बलवानिति । सवि.१३२

**[1]अन्वाहितं हृतं न्यस्तं बलावष्टब्धयाचितम् ।**
**अप्रत्यक्षं च यद्भुक्तं षडेतान्यागमं विना ॥**

(१) अत्र अन्वाहितमिति यत्किमपि (अमारं प्रतिवस्तुसमर्थ ?) परपार्श्वात्सारं वस्तु कार्यार्थं गृहीतम् । तथा हृतं यत्तस्करन्यायेन । तथा यद् विश्वस्य न्यस्तम् । तथा यद्बलात्कारेणावष्टब्धम् । तथा यत्कार्यार्थं याचितम् । तथा यद्देशान्तरगतस्य परोक्षे भुक्तम् । एतैः षड्भिः प्रकारैः प्राप्तं यद्भुक्तं तद्विना आगमं भुक्तमित्युच्यते । तेषु भुक्तिः अप्रमाणमित्यर्थः । अभा.४९

(२) अन्वाहितमन्यस्मै दातुमर्पितम् । याचितं परकीयमलङ्काराद्यर्थमानीतम् । बलावष्टब्धं राजप्रसादादिबलेन भुक्तम् । एवंविधस्य चिरन्तनस्यापि भोगस्य न प्रामाण्यम् । *स्मृच.७४

(३) 'अनागमं च यद्भुक्तमि'त्युक्तं, तद्विशेष्यते—अन्वाहितं पश्चादाहितम् । यथा कश्चिन्माधुरः कान्यकुब्जस्थो मधुरां प्रस्थितस्य हस्ते मम पुत्राय देहीति समर्पितवान्, तत् तेनैव भुज्यते न तु दीयते । हृतं चौर्यादिना ।

---

* मिता. व्याख्यानं 'आगमोऽभ्यधिक' इति याज्ञवल्क्यश्लोके (पृ.३९८) द्रष्टव्यम् । व्यप्र. मितागतम् ।

७० पू.; **व्यत.**२२६ नापि (न तु) तरैः (तनैः) हर्तुं (कर्तुं); **दात.**१८० तरैः (तनैः) हर्तुं (कर्तुं); **सवि.**१३३ (=) हर्तुं (कर्तुं); **चन्द्र.**१५४ सविवत्; **व्यसौ.**६६ नापि (न तु) हर्तुं (कर्तुं); **वीमि.**२।२९ सविवत्; **व्यप्र.**१५४; **व्यम.**१४ अपा (समा); **विता.**१४१ (=); **सेतु.**९२ नापि (न च) हर्तुं (कर्तुं); **प्रका.**४७ अपा (परा); **विच.**१४२ सविवत्, अन्यायेनेत्यत्र अनागममिति शूलपाणिधृतपाठः.

(१) **स्मृच.**७४; **प्रका.**४८; **समु.**४९. (२) **मेधा.**८। १४८ उत्तरार्धे (अन्ते तु भुक्तिरेवैका प्रमाणं स्थावरे भवेत्); **मिता.**२।२६ पू. : २।२७; **व्यमा.**३४४ दौ (धौ) (प्रमाणं भुक्तिरेवैव संमता या चिरन्तनी); **व्यक.**७०; **स्मृच.**७५; **पमा.**१४६; **सुबो.**२।२७ (=) पू.; **नृप्र.**८; **व्यत.**२२५ पू.; **सवि.**१३२पू.; **चन्द्र.**१५७ भुक्तिस्तु (भोगस्तु) गमा (गमः) संतता (सततं) कात्यायनः; **व्यसौ.**६६ (=); **व्यप्र.**१५५; **विता.**१३९ पू.: १४२; **प्रका.**४८ याज्ञवल्क्यः; **समु.**४९; **विच.**१४१ मध्ये (पश्चात्) स्तु (श्च) पू.

* पमा., सवि. स्मृचवत् ।

(१) **नासं.**२।७९ अन्वा...न्यस्तं (अन्वाहितहृतन्यस्त) गमं (गमाद्); **नास्मृ.**४।९२; **अभा.**४९; **मेधा.**८।१४८ अन्वाहितं हृतं (याचितान्वाहितं); **व्यक.**७२; **स्मृच.**७४ चितम् (चिते); **पमा.** १४३ अन्वा (अन्या) चितम् (चिते); **स्मृसा.**१०६; **सवि.**१३४ षडे ... विना (षडागमविवर्जिताः); **व्यसौ.**६८ अन्वा (अर्था) हृतं (कृतं); **व्यप्र.**१६६ स्मृचवत्; **विता.**१५१ चितं (चिते) तान्या (ते ना); **प्रका.**४८ स्मृचवत्; **समु.**४९ स्मृचवत्.

न्यस्तं केनचित् समर्पितं इदं तव हस्ते कंचित्कालं तिष्ठत्विति। बलावष्टब्धं बलेन परिगृहीतम्। याचितं मम देहीत्युद्यतम्। अप्रत्यक्षं स्वामिनः परोक्षं भुक्तम्। एतानि षडागमाद्विना। अत्र भोगोऽप्रमाणम्।

नाभा.२।७९

(४) अन्वाहितं एकत्र आहितं अन्यत्र पुनराहितम्। व्यप्र.१६६

**[१]तथाऽऽरूढविवादस्य प्रेतस्य व्यवहारिणः।**
**पुत्रेण सोऽर्थः संशोध्यो न तं भोगपदं नयेत्॥**

(१) एवमेतेषां प्रकाराणामेकेनाप्यन्यायेन परकीयमर्थं भुञ्जन् यः कश्चिदर्थो धनिना न्यायार्थं प्रारब्धोऽनिष्पन्नव्यवहार एव प्रेतीभूतः। तस्य सक्तः स तदवस्थ एव व्यवहारः पुत्रेण संशोध्यः। सोऽर्थः पितृकामभुक्त्या ततो न भवतीत्यर्थः। अभा.५०

(२) यथा आहर्त्रा लिखितसाक्षिभ्यामेवागमः संसाध्यो भवति तथेत्यर्थः। पुत्रग्रहणं धनग्राहिण उपलक्षणार्थम्। स्मृच.७५

(३) मिता.टीका—नवारूढविवादस्येति। अस्यार्थः, आरूढविवादस्य व्यवहारिणः प्रेतस्य संबन्धिना पुत्रेण। स्वार्थो विवादास्पदीभूतः। संशोध्य आगमेन तमर्थं भोगो न निवर्तयेत् न प्रत्यावर्तयेत्। न तत्र भोगः प्रमाणं भवतीति यावत्। *सुबो.२।२९

(४) तथा तेनैव प्रकारेण। आरूढो विवादो यस्य स आरूढविवादः। तस्यारूढविवादस्य आरब्धाऽपरिसमाप्तव्यवहारस्य प्रेतस्य पुत्रेण सोऽर्थः संशोध्यः। न सोऽर्थो भोगेन लभ्यते। 'प्राप्तानां पितृतः क्रमादि'त्यस्यापवादः। नाभा.२।८०

## बृहस्पतिः

युक्तिसाक्षिलेख्यभुक्तिप्राबल्यदौर्बल्यविचारः

**[१]एतद्विधानमाख्यातं साक्षिणां लिखितस्य च।**
**संप्रति स्थावरे प्राप्ते भुक्तेश्च विधिरुच्यते॥**

(१) संप्रति भुक्तिर्विविच्यते बृहस्पतिसंमतत्वादस्यैव क्रमस्य। यथा—एतदिति। न्यायस्य सर्वेभ्यो बहुतराभ्यर्हितत्वात् प्रथमं साक्षिणस्ततो भुक्तितो बहुविषयत्वात् लिखितस्य, ततः स्वल्पविषयतया भुक्तिनिरूपणम्। स्थावर इति प्रायिकं, प्राप्ते भूम्यादौ। व्यमा.३४१

(२) तत्र क्वचित् सागमाया भुक्तेः प्रामाण्यं मनसि संदधानः सन् स्थावरागमोपायान् प्रदर्शयंस्तत्र भुक्तेः प्रामाण्यमाह—एतदिति। स्थावरग्रहणमत्र भुक्तेरावश्यकत्वसूचनाय न तु तत्रैव भोगस्य प्रामाण्यनियमाय। जङ्गमेऽपि तत्संभवात्। तदेतदुत्तरत्र विवेचयिष्यामः। व्यप्र.१५३

**[२]अनुमानाद्वरः साक्षी साक्षिभ्यो लिखितं गुरु।**
**अव्याहता त्रिपुरुषी भुक्तिरेभ्यो गरीयसी॥**

इति ब्रुवाणः सैव प्रमाणं नान्य इति व्यनक्ति। अव्याहतेति परोक्षविषयस्यापि व्युदस्यति। व्यमा.३५०

**[३]अनुमानं सद्य एव साक्षी चामरणाद्भवेत्।**
**अव्याहतं लेख्यभोगं प्रमाणं तु त्रिपौरुषम्॥**

---

* बाल.२।२९ सुबोवत्।

(१) **नासं.**२।८० तं...नयेत् (तद् भोगोऽतिवर्तते); **नास्मृ.**४।९३; **अभा.**४९-५०; **मिता.**२।२९ तथा (नवा) भोगपदं नयेत् (भोगो निवर्तयेत्); **व्यमा.**३४५ उत्तरार्धं मितावत्: ३५२ भोगपदं नयेत् (भोगान्निवर्तयेत्); **व्यक.**७२ उत्तरार्धं मितावत्; **स्मृच.**७५ (पुत्रेण सोऽर्थः संसाध्यो न तद्भोगान्निवर्तते); **दीक.**३४ व्यकवत्; **स्मृसा.**१०५ न तं (तं न) शेषं व्यकवत्; **व्यचि.**७४ व्यकवत्; **स्मृचि.**४९ तथा (तत्रा) (पुत्रेण सोऽर्थः संसाध्यो न तद्भोगो निवर्तयेत्); **नृप्र.**८ विवा (स्य वा) भोगपदं नयेत् (भोगोऽतिवर्तयेत्); **व्यत.**२२५ तथा (अथा) प्रेतस्य (प्रेतस्या) तं (तु) शेषं व्यकवत्; **सवि.**१३५ व्यमा.३५२वत्; **व्यसौ.**६८ व्यकवत्; **प्रका.**४८ स्मृचवत्; **समु.**४९ स्मृचवत्; **विच.**१४०-१४१ प्रेतस्य (भृतस्य) शेषं व्यकवत्.

(१) **व्यमा.**३४१ स्य च (स्य वा); **व्यक.**६९ नमा (नं वि) संप्रति (सांप्रतं); **पमा.**१३९ रे प्राप्ते (रप्राप्तेः); **व्यसौ.**६५ संप्रति (सांप्रतं); **व्यप्र.**१५३ व्यसौवत्; **प्रका.**४४ व्यसौवत्, कात्यायनः; **समु.**४६ रे प्राप्ते (रप्राप्तौ) शेषं व्यसौवत्.

(२) **व्यमा.**३५०; **व्यक.**७१; **दीक.**३४; **स्मृसा.**१०५ वरः (गुरुः); **स्मृचि.**४८ वरः (वरं) गुरु (वरं) रेभ्यो (रेव); **व्यत.**२२४ वरः (गुरुः) रेभ्यो (स्तेभ्यो); **व्यसौ.**६७ वरः (वरं) गुरु (वरं); **सेतु.**९०; **प्रका.**४४; **समु.**५०; **विच.**१३९; **विव्य.**१९.

(३) **व्यमा.**३५० सद्य एव (वसत्यत्र) ख्य (ख); **व्यक.**७१ भोगं (भोग्यं) पौ (पू); **स्मृसा.**१०५ हतं (हतौ) भोगं

(१) एतदपि त्रिपुरुषभोगमव्याहतमेव प्रमाणमाह । समाहारोपात्तयोर्लेख्यभोगयोरव्याहतमित्यन्वयात् ।

व्यमा.३५१

(२) अनुमानं सद्य एवेति । आकारेङ्गितादिलिङ्गैर्विवादकाल एवानुमानं प्रवर्तते । +व्यक.७१

भोगविशेषः स्वत्वहेतुः

[१]**विद्यया क्रयबन्धेन शौर्यभार्यान्वयान्वितम् ।**
**सपिण्डस्याप्रजस्यांशः स्थावरं सप्तधाऽऽप्यते ॥**

(१) विद्यया प्रतिग्रहादिप्रकारेण । बन्धः आधिः । शौर्यागतं युध्दादिना प्राप्तम् । भार्यया सह लब्धम् । अन्वयागतं पित्रादिक्रमेणोपात्तम् । व्यक.७०

(२) विद्यया प्रतिग्रहादिकप्रयोजकतया स्वत्वोपायः, क्रयः प्रसिद्धः । बन्धो बन्धकं सोपाधिकस्वत्वहेतुर्नष्टाधिविधौ चात्यन्तिकस्वत्वहेतुः । तदप्युत्तरत्र विवेचनीयम् । क्रयबन्धेनेति समाहारद्वन्द्व एकत्वम् । अप्रजस्य सपिण्डस्यांशं रिक्थहरान्तराभावे पिण्डदानाद्यधिकारितया प्राप्तम् । *व्यप्र.१५३

[२]**पित्र्ये लब्धक्रयाधाने ऋक्थशौर्यप्रवेदनात् ।**
**प्राप्ते सप्तविधे भोगः सागमः सिद्धिमाप्नुयात् ॥**

(१) प्रवेदनं विवाहः । पित्र्य इत्यादिना पूर्वोक्तसर्वप्रकारानुवादः । व्यक.७०

(२) पित्र्यं भागप्राप्तं, लब्धं प्रतिग्रहेण, रिक्थमप्रजसपिण्डांशः । विता.१३६

---

\+ स्मृसा. व्यकवत् । * शेषं व्यकगतम् ।

(भोगौ) तु त्रिपौ (तत्त्रिपू); **स्मृचि**.४८-४९ पौ (पू); **प्रका**.४४ पौ (पू); **समु**.५० पौ (पू).

(१) **अप**.२।२७ भार्या (भागा) न्वितम् (गतम्); **व्यक**.६९ न्वितम् (गतम्) शः (शं) धाप्य (धोच्य); **स्मृच**.७० प्रज (प्रजा); **पमा**.१३९ व्यकवत्; **नृप्र**.९; **व्यसौ**.६५ न्वितम् (गतम्) धाऽऽप्य (धोच्य); **व्यप्र**.१५३ न्वितम् (गतम्) शः (शं) ऽऽप्यते (कृतं); **विता**.१३७ बन्धेन (लब्धिभ्यां) भार्या (भावा) न्वितम् (गतम्) रं (रे) सप्त ... ते (सप्तधागमः); **प्रका**.४६ नारदः; **समु**.४८.

(२) **व्यक**.६९; **नृप्र**.९; **व्यसौ**.६५; **व्यप्र**.१५३; **विता**.१३६ त्र्ये (त्र्य) ने (न); **प्रका**.४६ वितावत्, कात्यायनः; **समु**.४८ वितावत्.

[१]**क्रमागतः शासनिकः क्रयाधानागमान्वितः ।**
**एवंविधस्तु यो भोगः स तु सिद्धिमवाप्नुयात् ॥**
[२]**संविभागक्रयप्राप्तं पित्र्यं लब्धं च राजतः ।**
**स्थावरं सिद्धिमाप्नोति भुक्त्या हानिमुपेक्षया ॥**

उपेक्षया क्षमया तत्करणं च स्वामिनः सुशीलत्वमहेच्छत्वदयालुत्वादि । एवं च विंशतिवर्षात् पूर्वं स्वकृतिसाध्यकर्षणपालनाद्यैरुत्पन्नद्रव्य एव स्वत्वम् । एवं दशवर्षात् पूर्वं स्वकृतिसाध्यदोहनपालनाद्यैरुत्पन्नदुग्धादावेव स्वत्वम् । तत्तत्कालपरतस्तु भूमौ गवादिधनेऽपि स्वत्वमिति । पूर्वं तत्तन्नाशकभोगे तु चौर्यदोषो भवत्येव ।

×व्यत.२२३

[३]**प्राप्तमात्रं येन भुक्तं स्वीकृत्यापरिपन्थिनम् ।**
**तस्य तत्सिद्धिमाप्नोति हानिं चोपेक्षया तथा ॥**

अपरिपन्थिनं अविरोधिनम् । *व्यक.७०

[४]**अध्यासनात्समारभ्य भुक्तिर्यस्याविघातिनी ।**
**त्रिंशद्वर्षाण्यविच्छिन्ना तस्य तां न विचालयेत् ॥**

(१) अध्यासनं क्रयणादिरागमः । नन्वनयोरेव परस्परं विरोधः । विंशतिवर्षस्य भुक्तेः प्रमाणत्वे ततः प्रभृति प्रमाणमिति त्रिंशद्ग्रहणमनर्थकम् । अथास्यैव

---

× सेतु., विच. व्यतगतम् । * व्यप्र. व्यकवत् ।

(१) **व्यक**.६९; **नृप्र**.९; **व्यसौ**.६५; **व्यप्र**.१५३; **प्रका**.४६ न्वितः (गतः) कात्यायनः; **समु**.४८ प्रकावत्, स्मृत्यन्तरम्.

(२) **व्यमा**.३४४ भुक्त्या...या (हानिश्चोपेक्षया तथा); **अप**.२।२७; **व्यक**.६९; **नृप्र**.९; **व्यत**.२२३ उत्त.; **दात**.१७९; **व्यसौ**.६५; **व्यप्र**.१५३ त्र्यं (तृ); **विता**.१३७ सं (प्ति) त्र्यं (तृ); **सेतु**.८९ उत्त.; **प्रका**.४६ क्रय (क्रये) त्र्यं (त्रा) कात्यायनः; **समु**.४६ प्रकावत्; **विच**.१०४:१३७उत्त.

(३) **अप**.२।२७ नम् (तम्); **व्यक**.६९; **स्मृसा**.१०३-१०४ नम् (तम्) हा ... तथा (भुक्त्या हानिमुपेक्षया); **स्मृचि**.४९ (तस्य सिद्धिमवाप्नोति भुक्त्या हानिरुपेक्षया); **नृप्र**.९; **दात**.१७९ नम् (तम्); **व्यसौ**.६५ नम् (तम्); **व्यप्र**.१५३ निं (निः); **विता**.१३७ येन भुक्तं (च यो भुङ्क्ते) पन्थिनम् (शङ्कितम्) निं (निः); **विच**.१०४ नम् (तम्); **त्रिव्य**.१९.

(४) **व्यमा**.३४२,३४४; **अप**.२।२७; **व्यक**.६९ नात् (नं); **स्मृच**.७० र्षाण्य (र्षां त्व); **स्मृसा**.१०४ विघा (तिपा); **व्यचि**.६५ (=); **नृप्र**.९ चाल (चार); **व्यसौ**.६५ नृप्रवत्; **वीमि**.२।२९ विघा (पि घा); **व्यप्र**.१५३,१६४; **विता**.१३७ तस्य (भुक्तिः) उत्त.; **प्रका**.४६ स्मृचवत्, नारदः; **समु**.४८; **विव्य**.१७ (=) व्यसौवत्.

वाऽबाधितत्वं तदा विंशतिपदं विरुद्धं त्रिंशद्वर्षात् प्रभृति प्रमाणत्वात्। उच्यते। 'पश्यतोऽब्रुवत' इति निर्देशात् वाङ्मात्रेणाविरोधे विंशतिवचनं बोद्धव्यम्। त्रिंशद्वर्षवचने त्वविघातिनीति श्रुतेः विशिष्टो घातो विघातः कलहकादिरूपः, स यत्र नास्ति, वाचनिकमात्रस्तु विद्यते तद्विषय इत्यविरोधः। तथा विंशतिवर्षाणि क्रमेण बलीयसः पत्रस्य कूटताशङ्कानिवृत्यर्थं, दुर्बलस्य तु साक्षिणः त्रिंशद्वर्षभोगेन शुद्धिरिति प्रयोजनम्।

×व्यमा.३४२

(२) अध्यासनं परिग्रहः। अप.२।२७

(३) अविघातिनी निर्विघ्ना। व्यक.७०

(४) एवं च दीर्घकाला भुक्तिरागमानुगृहीता प्रमाणम्। अदीर्घकाला चेत्तदनुगृहीतागम इत्यनुसंधेयम्। स्मृच.७०

(५) ननु, 'अध्यासनात्' इति बृहस्पतिवचने त्रिंशद्वर्षभुक्तेर्हान्यापादकत्वोक्त्या विंशतिवर्षभुक्तेस्तन्न्यूनवर्षभुक्तेरिव हान्यनापादकत्वमर्थसिद्धमिति योगीश्वरव्यासादिवचनैरस्य विरोधः? मैवम्। योगीश्वरादिवचनेषु 'अब्रुवत'इत्येतावन्मात्राभिधानाद्यत्र विरुद्धं वाङ्मात्रमपि भूमिस्वामिनो नास्ति तत्र विंशतिवर्षभोग एव हानिकारणम्। बृहस्पतिवचने तु अध्यासनात् भूमिपरिग्रहादारभ्य यस्य भुक्तिरविघातिनीत्यविघातिनीपदप्रयोगाद्विघातस्य च कलहताडनादिरूपत्वेन लोके प्रसिद्धेर्वाङ्मात्रविप्रतिपत्तौ सत्यामपि यत्र भोक्त्रा सह पूर्वस्वामिना तद्भोगप्रतिरोधकं कलहताडनादि नाचरितं तत्र त्रिंशद्वर्षभोगस्तादृशो हान्यापादक इति वचनस्वरसेनैव विरोधपरिहारात्। मम तु प्रतिभाति। विंशति वार्षिकीत्यादिहानिविशेषणाद् भूम्याद्युत्पन्ननष्टफलस्य विंशतिवार्षिकादेर्हानिस्तावत्कालीनं तत्फलमुपेक्षालक्षणादपराधान्न प्राप्नोति। विंशतिदशवर्षेभ्यः प्रागुक्तभोगकालगणनया तदुत्पन्नं नष्टमपि फलं निष्क्रयरूपेण लभत एव। विंशत्यादिशब्दोपादानात्। अन्यथा यावत्कालीनपरकृतभोगोपेक्षा तावत्कालीननष्टफलहानिमेव सामान्येन वदेत्। एतावता विंशत्यादिग्रहणस्यार्थवत्त्वे विंशत्याद्यधिकवर्षीयफलहानिर्दण्डापूपिकया सिध्यति, भुक्तिविशेषणताया-मिव विंशत्यादिसंख्यायाः। न चैवं वचनान्तरसंवादायत्तभुक्तिविशेषणत्वव्याख्यातोऽस्य व्याख्यानस्य न फलतो विशेष इति वाच्यम्। यतो विंशत्यादिग्रहणस्य भुक्तिविशेषणत्वे कियत्कालीननष्टफलहानिरिति साकाङ्क्षमेवेति। व्यप्र.१६४-१६५

×व्यचि., वीमि. व्यमागतम्।

स्वत्वहानिकारणानि

[1]ऋक्थिभिर्वा परैर्द्रव्यं समक्षं यस्य दीयते।
अन्यस्य भुञ्जतः पश्चान्न स तल्लब्धुमर्हति॥

समक्षदानेनाप्रतिषिध्यमानेन स्वाम्यनुमतिपूर्वकत्वसूचकेन स्वामिनो यदागमलेख्यं तस्य स्वत्वसाधकत्वे प्रतिहतिर्भवतीत्यर्थः। अनेनार्थाल्लेख्येन स्वार्थसिद्धिमिच्छता स्वामिना समक्षदानं प्रतिषेद्धव्यं यत्नत इत्युक्तं भवति। स्मृच.६८.

[2]पश्यन्नन्यस्य ददतः क्षितिं यो न विचालयेत्।
स्वामी सताऽपि लेख्येन न पुनस्तां समाप्नुयात्॥

(१) यदि तु भोग्यमपि भूम्यादिकमेकस्मिन् विक्रीय तत्समक्षमेवान्यस्मिन् विक्रीणानं पश्यन्नपि पूर्वक्रेता न निवारयति, तदैव पूर्वक्रेतुः स्वामित्वहानिः, न तु तत्रापि यथोक्तकालभोगापेक्षा, तदाह बृहस्पतिः— पश्यन्नन्यस्येत्यादि।

वचनद्वयेऽपि पश्यत एवाविरोधकमात्रेणैव स्वाम्यनिवृत्तिश्रुतेः। एवमाधिप्रतिग्रहादिष्वपि द्रष्टव्यम्।

---

(१) **व्यमा.**३४८ (ऋक्थिभिर्वा परैर्वाऽपि दत्तं तेनैव तद्गुरुः) पू.; **अप.**२।२५; **व्यक.**७३; **स्मृच.**६८; **स्मृसा.**१०६-१०७; **व्यचि.**६८ पश्चा (पश्य) : ७५ वां (श्चा) पश्चा (पश्य); **चन्द्र.**१५५ भुञ्जतः (भुक्तं तत्); **व्यप्र.**१५८; **प्रका.**४४ भुञ्जतः (सुव्रतः) कात्यायनः; **समु.**४६.

(२) **व्यमा.**३४८ विचाल (निवार); **अप.**२।२५ उत्तरार्धे (सताऽपि लेख्येन भुवं न पुनस्तामवाप्नुयात्) शेषं व्यमावत्; **व्यक.**७३ चाल (चार); **गौमि.**१२।३४ विचाल (निवार) (स्वामी सताऽपि लेखेन न स तल्लब्धुमर्हति); **स्मृच.**६८; **स्मृसा.**१०७ व्यमावत्; **व्यचि.**६८ न पुनस्तां (पुनस्तां न) : ७५ विचाल (निवार) शेषं पूर्ववत्; **चन्द्र.**१५६ (=) व्यचि.७५वत्; **व्यप्र.**१५८ (सताऽपि लेख्येन भुवं न पुनस्तां समाप्नुयात्); **प्रका.**४४ कात्यायनः; **समु.**४६; **विव्य.**१८ व्यमावत्.

सताऽपि लेख्येनेति लेख्यादिना प्रमाणेनेति 'पश्यतोऽब्रुवत' इति च परोक्षक्रीतसमक्षभोगविषयं वर्णनीयमिति न विरोधः। व्यमा.३४८

(२) क्रयप्रतिग्रहादिलिखितेनापि तां भूमिं नासाववाप्नुयात्। अप.२।२५

(३) सताऽपि समीचीनेनापीत्यर्थः। क्षितिमिति देयद्रव्योपलक्षणार्थम्। स्मृच.६८

**[१]भूमेरभुक्तिर्लेख्यस्य यथाकालमदर्शनम्।**
**अस्मारणं साक्षिणां च स्वार्थहानिकराणि तु॥**
**[२]तस्माद्यत्नेन कर्तव्यं प्रमाणपरिपालनम्।**
**तेन कार्याणि सिध्यन्ति स्थावराणि चराणि च॥**

तथा च हानिवचनानि प्रमाणपरिपालनपराणीति सारम्। व्यचि.७६

भोगागमयोः सहकार्यं प्राबल्यदौर्बल्ये त्रिपुरुषभुक्तिप्रामाण्यं च

**[३]भुक्त्या केवलया नैव भूमिः सिद्धिमवाप्नुयात्।**
**आगमेनापि शुद्धेन द्वाभ्यां सिध्यति नान्यथा॥**
**[४]यत्राहर्ताऽभियुक्तः स्याल्लेख्यं साक्षी तदा गुरुः।**
**तदभावे तु पुत्राणां भुक्तिरेका गरीयसी॥**

तदभावे आहर्तृपुरुषाभावे। स्मृच.७२

**[५]आहर्ता शोधयेद्भुक्तिमागमं चापि संसदि।**
**तत्सुतो भुक्तिमेवैकां पौत्रादिस्तु न किञ्चन॥**

(१) इति, तदाहर्तृपुत्रस्य स्मार्तकालान्तर्गतायां भुक्तौ पौत्रस्य च तदतिरिक्तकालायां वेदितव्यम्। अप.२।२८

(२) तत्सुतो भुक्तिमेवैकां चिरन्तनीमाद्यपुरुषेण भोक्तुमुपक्रान्तकालादारभ्य विवादात् प्राचीनकालपर्यन्तमपरवराहित्येन प्रतिपक्षतार्हपुरुषसमक्षमनुवर्तमानां साधयेदित्यर्थः। सुतग्रहणं पौत्रस्यापि प्रदर्शनार्थम्। पौत्रादिरित्यतद्गुणो बहुव्रीहिः। तेन पौत्रस्यापि पुत्रवदेव द्रष्टव्यम्। स्मृच.७२

(३) आहर्ता अर्जनकर्ता। व्यचि.६९

**[१]राजान्तरैस्त्रिभिर्भुक्तं प्रमाणेन विनाऽपि यत्।**
**ब्रह्मदेयं न हर्तव्यं राज्ञा तस्य कदाचन॥**

प्रमाणेन आगमप्रकाशकप्रमाणेन। स्मृच.७२

**[२]यस्य त्रिपुरुषा भुक्तिः सम्यग्लेख्यसमन्विता।**
**एवंविधा ब्रह्मदेया हर्तुं तस्य न शक्यते॥**

एतत्स्मार्तकालानतिक्रान्तत्रिपुरुषभोगविषयम्। स्मृच.७४

**[३]यस्य त्रिपुरुषा भुक्तिः पारम्पर्यक्रमागता।**
**न सा चालयितुं शक्या पूर्वकाच्छासनादृते॥**

एवं शासनविरोधे भुक्तस्याप्यसिद्धिर्द्रष्टव्या। स्मृच.७४

**[४]भुक्तिस्त्रैपुरुषी यत्र चतुर्थे संप्रवर्तिता।**
**तद्भोगः स्थिरतां याति न पृच्छेदागमं क्वचित्॥**

(१) उक्तविधभोगे तन्मूलभूतागमं प्रति किमपि प्रमाणं क्वचिदपि न पृच्छेदित्यर्थः। सांतत्यादिविशिष्टां भुक्तिं प्रति प्रमाणं पृच्छेदेव। स्मृच.७३

(२) त्रिपुरुषभोगेन षष्टिसंवत्सरादय उपलक्ष्यन्ते। पमा.१४१

**[५]अविच्छेदेन यद्भुक्तं पुरुषैस्त्रिभिरेव तु।**
**तत्र नैवागमः कार्यो भुक्तिस्तत्र गरीयसी॥**

तत्र चतुर्थादिष्वागमनिश्चयो नावश्यं कार्यः। यतस्तत्र भुक्तिः पूर्वपुरुषत्रयागता सांतत्यादिविशेषणवत्तया साधिता गरीयसी विनाऽप्यागमनिश्चयं स्वतन्त्रैव प्रमाणमित्यर्थः। स्मृच.७३

---

(१) **व्यक.**७३; **स्मृसा.**१०७-१०८; **व्यचि.**६८,७५-७६; **चन्द्र.**१५६ (=) स्मा (स्म) तु (च); **व्यसौ.**६९ तु (च); **समु**.४५ (साक्ष्यस्यास्मारणं चैव स्वार्थहानिकराणि च) स्मृत्यन्तरम्. (२) **व्यक.**७३; **स्मृसा**.१०७-१०८ पालनम् (रक्षणम्); **व्यचि**.६८,७६; **व्यसौ**.६९; **समु**.४५ स्मृत्यन्तरम्. (३) **स्मृच**.७०; **सवि**.१३१:१६३ भूमिः (भूमि) सिध्य...था (सिद्धिमवाप्नुयात्); **प्रका**.४६; **समु**.४८. (४) **स्मृच**.७२; **प्रका**.४७; **समु**.४८. (५) **अप**.२।२८ चा (वा) सुतो (पुत्रो); **व्यक**.७१ दिस्तु (दिषु) किं (कं); **स्मृच**.७२ शो (सा) गमं (गतं); **दीक**.३४ दिस्तु (दिषु); **स्मृसा**.१०५ दीकवत्; **व्यचि**.६९ पौत्रादिस्तु (तत्पुत्रादिः); **व्यत**.२२५ दीकवत्; **दात**.१८१ दीकवत्; **व्यसौ**.६७ व्यचिवत्; **प्रका**.४७ शो (सा); **समु**.४८ शो (सा) सुतो (पुत्रो); **विच**.१४० दीकवत्.

(१) **स्मृच**.७२; **प्रका**.४७ कदा (कथं); **समु**.४९. (२) **स्मृच**.७४; **प्रका**.४७; **समु**.४९. (३) **स्मृच**.७४; **पमा**.१४४; **प्रका**.४८; **समु**.४९. (४) **स्मृच**.७३; **पमा**.१४१; **प्रका**.४७. (५) **स्मृच**.७३; **पमा**.१४१ अविच्छेदेन (अनिषिद्धेन); **प्रका**.४७.

**स्थावरेषु विवादेषु भुक्तिस्त्रिपुरुषा च या ।**
**स्वतन्त्रैव हि सा ज्ञेया प्रमाणं साध्यनिर्णये ॥**

स्वतन्त्रा स्वमूलभूतागमनिश्चयानपेक्षेत्यर्थः । स्मृच.७३

[2]**पिता पितामहो यस्य जीवेच्च प्रपितामहः ।**
**त्रिंशत्समा या तु भुक्ता भूमिरव्याहता परैः ॥**
[3]**भुक्तिः सा पौरुषी ज्ञेया द्विगुणा च द्विपौरुषी ।**
**त्रिपौरुषी च त्रिगुणा परतः स्याच्चिरन्तनी ॥**

(१) त्रिंशत्समा पञ्चोत्तरेति शेषः । 'वर्षाणि पञ्चत्रिंशत्तु पौरुषो भोग उच्यते' । इति स्मृत्यन्तरे उक्तत्वात् । एवं चागमकर्त्रा आगमोद्भावनं लेख्यसाक्षिभ्यामेव कार्यम् । भोगस्यास्मार्तकालीनोपक्रमवतोऽसंभवात् । स्मृच.७२

(२) यदि विंशतिवर्षः पौरुषो भोगः यदि वा त्रिंशद्वर्षः पञ्चत्रिंशद्वर्षो वा सर्वथापि त्रिपुरुषभोगेन स्मरणयोग्यः काल उपलक्ष्यते । पमा.१४२

(३) स्मार्तकालस्वरूपमाह—त्रिंशदिति । सवि.१३४

[4]**भुक्तिर्बलवती शास्त्रे ह्यविच्छिन्ना चिरन्तनी ।**
**विच्छिन्नाऽपि हि सा ज्ञेया या तु पूर्वप्रसाधिता ॥**

या चिरन्तनी पूर्वपुरुषप्रसाधितागमा सा विच्छिन्नाऽपि बलवती ज्ञेयेत्यर्थः । स्मृच.७४

[5]**त्रिवर्षं भुज्यते येन समग्रा भूरवारिता ।**
**तस्य सा नापहर्तव्या क्षमालिङ्गं न चेद्वदेत् ॥**
[6]**चतुष्पाद्धनधान्यादि वर्षाद्धानिमवाप्नुयात् ॥**

एतद्वचनं भुक्तेरादरार्थं यथाश्रुतं न (?) व्याख्येयं, बहुप्रतिपक्षत्वाद् इति वरदराजः । सवि.१३५

**भुक्तिस्त्रिपौरुषी सिध्येत्परेषां नात्र संशयः ।**
**अनिवृत्ते सपिण्डत्वे सकुल्यानां न सिध्यति ॥**

(१) यत्र हेत्वन्तरादेव संनिहितस्याप्युपेक्षा संभवति, न तत्र त्रिपुरुषभुक्तिः प्रमाणमित्याह बृहस्पतिरेव—भुक्तिरिति । व्यमा. ३५१

(२) अनिवृत्ते सपिण्डत्वे इति । सपिण्डत्वे विद्यमाने सत्यामपि त्रिपुरुषभुक्तौ सकुल्यानां तद्भुज्यमानं स्वं न भवतीत्यर्थः । *व्यक.७३

स्त्रीधनादिभोगो न स्वत्वहेतुः

[2]**न स्त्रीणामुपभोगः स्याद्विना लेख्यं कथञ्चन ।**
**राजश्रोत्रियवित्ते च जडबालधने तथा ॥**

स्त्रीणां धन इति शेषः । विना लेख्यं विनागमप्रमाणम् । स्मृच.७०

[3]**अस्वामिना तु यद्भुक्तं गृहक्षेत्रापणादिकम् ।**
**सुहृद्बन्धुसकुल्यस्य न तद्भोगेन हीयते ॥**
[4]**विवाह्य श्रोत्रियैर्भुक्तं राज्ञाऽमात्यैस्तथैव च ।**

---

(१) स्मृच.७३; प्रका.४७. (२) स्मृच.७२; पमा.१४२; सवि.१३४ उत्त., पितामहः; प्रका.४६; समु.४८. (३) स्मृच.७२; पमा.१४२; द्विपौ (द्विपू) त्रिपौ (त्रिपू) तनी (तना); सवि.१३४ च द्वि (तु द्वि) च त्रि (तु त्रि) परतः स्यात् (तत उर्ध्वं) पितामहः; प्रका.४६; समु.४८.

(४) स्मृच.७४; पमा.१४५ पूर्व (पूर्वं); स्मृसा.१०४ बलवती (बलीयसी) शेषं व्यकवत्; स्मृचि.४९ बलवती (बलीयसी) हि (न) तु (च) नारदः; व्यसौ.६६ (=) उत्त.; प्रका.४८; समु.४९. (५) पमा.१४७ त्रिवर्षं (त्रिपुरुषं) ग्रा (क्षं); सवि.१३५; प्रका.४५ पमावत्; समु.४६ ग्रा (क्षं).

(६) सवि.१३५; समु.४६.

* स्मृसा. व्यकवत्।

(१) व्यमा.३५१, (भुक्तिस्त्रिपुरुषिकी सिध्येत्परोक्षान्नात्र संशयः); अप.२।२८; व्यक.७३; स्मृसा.१०७ त्रिपौ (त्रिपु); व्यचि.७० त्रिपौ (त्रिपु) परेषां नात्र (अपरेषां न); स्मृचि.४९ पौरुषी (पुरुषात्) सपिण्डत्वे सकुल्यानां (स्वकुलत्वे सपिण्डानां); व्यत.२२७ त्रिपौ (त्रैपु) ध्येत्प (द्धेरप) नात्र (न); दात.१८० व्यतवत्; चन्द्र.१५५ उत्त.; व्यसौ.६९ व्यचिवत्; व्यप्र.१६६ व्यतवत्; सेतु.९३ व्यचिवत्; प्रका.४५ पौ (पु) कात्यायनः; समु.४७ त्रिपौ (त्रैपु) स्मृत्यन्तरम्; विच.९३ व्यतवत्; विव्य.१९ पौ (पु) निवृ (नुवृ).

(२) स्मृच.६९; प्रका.४५; समु.४७.

(३) अप.२।२८; व्यक.७३; पमा.१४९ अस्वामिना (अनागमं) ल्यस्य (ल्यैश्च); स्मृसा.१०७ त्रापणा (त्रगवा); व्यचि.७०; स्मृचि.४९ तु (च) त्रापणा (त्रगवा); व्यत.२२७ तु (च); दात.१८०; चन्द्र.१५५ (=) त्रापणा (त्रगवा) भोगेन (भोगो न); व्यसौ.६९; व्यप्र.१६६; सेतु.९३ ल्यस्य (ल्यानां); प्रका.४५ कात्यायनः; समु.४७ सुहृ...स्य (सुहृद्भिर्बन्धुभिश्चैव) स्मृत्यन्तरम्; विच.९३ सेतुवत्.

(४) व्यमा.३५१ वाह्य (भाज्य) ज्ञा (जा) सि...न (सिद्धेन तद्धनम्); अप.२।२८ विवा (वैवा) तत्तु न (तन्न तु);

सुदीर्घेणापि कालेन तेषां सिध्यति तत्तु न ॥

विवाह्यो जामाता । व्यक.७३

[1]अशक्तालसरोगार्तबालभीतप्रवासिनाम् ।
शासनारूढमन्येन भुक्तं भुक्त्या न हीयते ॥

शासनारूढं ताम्रपट्टादिलिखितम् । व्यक.७४

आंशिकभोगप्रामाण्यम्

[2]यद्येकशासने ग्रामक्षेत्रारामाश्च लेखिताः ।
एकदेशोपभोगेऽपि सर्वे भुक्ता भवन्ति ते ॥

(१) शासनं पत्रताम्रपट्टादिकम् । एकदेशस्यानुपभोगेऽपि कृत्स्नस्य क्रीतादेर्हानिः । व्यमा.३४४

(२) 'आगमेऽपि बलं नैव भुक्तिः स्तोकाऽपि यत्र नो' इत्यस्यायमपवादः । एकशासनपत्रारूढेषु किञ्चिदुपभोगेऽपि शासनारूढभोगस्यानपेतत्वान्न प्रत्येकभोगापेक्षेत्याशयः । व्यप्र.१६७

विच्छिन्नभोगे निर्णयोपायः

[3]छिन्नभोगे गृहे क्षेत्रे संदिग्धं यत्र जायते ।
लेख्येन भोगविद्भिर्वा साक्षिभिः शुद्धिमाहरेत् ॥

व्यक.७३; दीक.३३-३४ ज्ञा (जा) तेषां...न (न तेषां सिध्यते पुनः); स्मृसा.१०७ ज्ञा (जा); व्यचि.७१; स्मृचि.५० ज्ञा (जा) तत्तु न (तत्पुनः); व्यत.२२७ सि...न (तत्तु न सिध्यति); दात.१८०; चन्द्र.१५५ ज्ञा (जा); व्यसौ.६९ ज्ञा (जा) ध्यति (ध्येत); वीमि.२।२५ ज्ञा (जा) सु (स्व); व्यप्र.१६६ सि...न (सिध्येन्न तद्धनम्); विता.१५१ ज्ञा(जा) शेषं व्यप्रवत्; सेतु.९३; विच.९३; विव्य.१९ ज्ञा(जा).

(१) व्यमा.३५१ शक्त (सक्त); व्यक.७४ व्यमावत्; दीक.३४; स्मृसा.१०७ व्यमावत्; व्यचि.७१; स्मृचि.५०; चन्द्र.१५५ हीयते (सिध्यति); व्यसौ.६९ मनुनारदौ; विव्य.२० चन्द्रवत्.

(२) व्यमा.३४४; अप.२।२७; व्यक.७१; स्मृच.६७ येक (स्यैक) गे (गो); पमा.१४९ ग्राम (ग्रामे) लेखि (लिप्सि); स्मृसा.१०५ ऽपि (न) ते (च); दात.१७९; व्यसौ.६७; व्यप्र.१६६-१६७ ग्राम (ग्रामे); विता.१३७ ग्रा...माश्च (ग्रामाः क्षेत्रभागाश्च); प्रका.४४ स्मृचवत्; समु.४६ स्मृचवत्; विच.१०३ ऽपि (तु).

(३) व्यक.७४ गृहे (गृह); व्यचि.७६ शुद्धिमाहरेत् (तद्विभावयेत्); चन्द्र.१५८ (=) छिन्न...त्रे (विच्छिन्नेषु च भोगेषु) शेषं व्यचिवत्; व्यसौ.६९ चन्द्रवत्; व्यप्र.१६७.

(१) संदिग्धं संदेहः । व्यचि.७६

(२) विच्छिन्नभोगनिर्णयोपायमाह बृहस्पतिः— छिन्नेति । व्यप्र.१६७

[1]नामाघाटागमं संख्यां दिग्भागं कालमेव च ।
भोगच्छेदनिमित्तं च ये विदुस्तेऽत्र साक्षिणः ॥

नाम क्षेत्रादेः, आघाटः सीमा, आगमः स्वत्वहेतुः, संख्या भूमेरेव, दिग्विभागोऽपि तस्या एव, कालः आगमकालः । व्यचि.७६

[2]तदुत्पन्नाश्च सामन्ता ये स्युर्देशान्तरस्थिताः ।
मौलास्ते तु समुद्दिष्टाः प्रष्टव्याः कार्यनिर्णये ॥

[3]अदुष्टास्ते तु यद् ब्रूयुः संदिग्धे समदृष्टयः ।
तत्प्रमाणं प्रकर्तव्यमेवं धर्मो न हीयते ॥

[4]स्थावरस्यैतदाख्यातं लाभभोगप्रसाधनम् ।
प्रमाणहीनवादे तु निर्देश्या दैविकी क्रिया ॥

(१) प्रमाणं दिव्यव्यतिरिक्तं लिखितादि प्रमाणं विवक्षितम् । पमा.१५०

(२) प्रमाणहीनवादे दृष्टप्रमाणहीनवादे । व्यचि.७६

## कात्यायनः

लेख्यसाक्षिभुक्तिप्राबल्यदौर्बल्यविचारः

[5]लिखितं साक्षिणो भुक्तिः प्रमाणत्रयमिष्यते ।
प्रमाणेषु स्मृता भुक्तेः सल्लेख्यसमता नृणाम् ॥

(१) नृणां प्रमाणेष्वित्यन्वयः । मानुषप्रमाणेष्वित्यर्थः । सल्लेख्यं अनवद्यलेख्यम् । स्मृच.६७

(२) कैश्चिद्विशेषणैर्युक्ताया भुक्तेः प्रामाण्यं दर्शयति कात्यायनः— लिखितमिति । ननु लिखितस्य साक्षिणां च शब्दाभिव्यक्तिद्वारेण शब्दान्तर्भावाद्युक्तं प्रामाण्यम् ।

(१) व्यक.७४ दिग्भागं कालं (कालं दिग्भाग); व्यचि.७६; व्यसौ.६९ नामा (नाम); व्यप्र.१६७ स्तेऽत्र (स्तत्र) शेषं व्यकवत्. (२) व्यक.७४ स्युः (ऽन्य) न्तर (न्तरे); व्यचि.७६ स्ते तु (स्तु ते); व्यसौ.६९ स्युः (ऽन्य); व्यप्र.१६७ स्युर्देशान्तर (ऽन्यदेशे व्यव). (३) व्यक.७४-७५; व्यचि.७६ यद् (ये); व्यसौ.६९ ते तु यद् (तेषु ये) प्रकर्तव्यं (तु कुर्वीत); व्यप्र.१६७. (४) व्यक.७५; पमा.१५० स्यैतदा (स्य तथा) हीन (हीने) देश्या (दोषा); व्यचि.७६ नम् (कम्); व्यसौ.६९ नम् (कम्); व्यप्र.१६७ : १६९ पमावत्, उत्त.

(५) स्मृच.६७; नृप्र.९; सवि.१२४ स्मृता भुक्तेः (स्थिरा भुक्तिः) ल्यस (ख्या सं); प्रका.४४; समु.४६.

भुक्तेस्तु कथं प्रामाण्यमिति चेदुच्यते । भुक्तिरपि कैश्चिद्विशेषणैर्युक्ता स्वत्वहेतुभूतक्रयदानादिकमव्यभिचारादनुमापयति । अन्यथाऽनुपपद्यमाना कल्पयतीत्यनुमानेऽर्थापत्तौ वाऽन्तर्भवतीति प्रमाणमेव । सवि.१२४

**[1]रथ्यानिर्गमनद्वारजलवाहादिसंशये ।**
**भुक्तिरेव तु गुर्वी स्यात्प्रमाणेष्विति निश्चयः ॥**

क्वचिद्भुक्तेरेव श्रैष्ठ्यमितराभ्यामाह स एव– रथ्येति । ×स्मृच.६७

**[2]अनुमानाद्गुरुः साक्षी साक्षिभ्यो लिखितं गुरु ।**
**अव्याहता त्रिपुरुषी भुक्तिरेभ्यो गरीयसी ॥**

भोगागमयोः सहकार्यं प्राबल्यदौर्बल्ये त्रिपुरुषादिभुक्तिप्रामाण्यं पञ्चाङ्गभोगश्च

**[3]भुक्तिस्तु द्विविधा प्रोक्ता सागमाऽनागमा तथा ।**
**त्रिपौरुषी या स्वतन्त्राऽनागमाऽन्या तु सागमा ॥**

(१) सागमा निश्चितागमेत्यर्थः । ननु स्वतन्त्रापि निश्चितागमैव । स्वदार्ढ्येनैवागमनिश्चयात् । मैवम् । चिरन्तन्याः भुक्तेरस्मार्तकालीनभोगस्य सांतत्यादिविशेषणवत्तयोद्भावनाभावेन कल्पनाया दार्ढ्याभावात् । न च चतुर्थादीनां तद्भोगस्याप्युद्भावनं कार्यमिति वाच्यम् । 'पौत्रादिस्तु न किञ्चन' इत्यस्मार्तकालीनभोगस्योद्भावननिषेधात् ।

'भुक्तिरेव विशुद्धा स्यात्प्राप्तानां पितृतः क्रमात्' इति स्मार्तकालीनभोगस्यैवोद्भावनविधानाच्च । अतः स्वतन्त्रा भुक्तिरनिश्चितागमा । कथं तर्हि तस्याः स्वत्वे प्रामाण्यम् ? उच्यते— आगमनिश्चयाभावेऽपि एवंविधायाः प्रामाण्यमिष्यते । सागमपक्षस्यात्यन्तासंभावितत्वात् । बाधकस्य चानागमनिश्चयस्याभावात् । यथा साहसादौ मिथ्यावादित्वनिश्चयाभावमात्रात् साक्षिणां प्रामाण्यमिष्टम् । 'सर्वः साक्षी संग्रहणे चौर्यपारुष्यसाहसे' इति, तथेहापीति सर्वं सुस्थम् । अत एव कात्यायनः — 'चिरन्तनमविज्ञातं भोगं लोभान्न चालयेत्' इति । अविज्ञातं अनागमतयेत्यर्थः । एतदुक्तं भवति । यथा छलानुसारेण निर्णीतेऽपि विंशतिवार्षिकभोगस्य पुनर्भूतानुसारेण चालनमिष्टं न तथा चिरन्तनस्येति । स्मृच.७३

(२) पुरुषत्रयानुगता भुक्तिः आगमानुपन्यासेऽपि प्रमाणम् । स्वल्पा तु भुक्तिरागमसहितैव प्रमाणम् । पमा.१४१

**[1]भुक्तिर्बलवती शास्त्रे सन्तता या चिरन्तनी ।**
**विच्छिन्नापि हि सा ज्ञेया या तु पूर्वप्रसाधिता ॥**

संतता अविच्छिन्ना । चिरन्तनी व्यासाद्युक्तकालव्यापिनी । विच्छिन्नापीति । या तु भुक्तिः पितामहादिभिः कृता सा विच्छिन्नापि ज्ञेयेत्यर्थः । व्यचि.६८-६९

**[2]सागमो दीर्घकालश्च निश्छिद्रोऽन्यरवोज्झितः ।**
**प्रत्यर्थिसंनिधानं च पञ्चाङ्गो भोग इष्यते ॥**

**[3]आदानकालादारभ्य भुक्तिर्या तु निरन्तरा ।**
**आदानं प्राप्य तस्यास्तु प्रायः साक्ष्यं प्रवर्तते ॥**

ज्ञेयं दर्शयति आदानेति, यस्यामल्पकालायामेव निरन्तरायां तथा पूर्वोक्तायां सान्तरायामुभयस्यामपि भुक्तौ स्वमूलभूत आगमे प्रत्याख्ये प्रायः साक्ष्यं प्रमाणमित्यर्थः । व्यचि.६९

**[4]स्मार्ते काले क्रिया भूमेः सागमा भुक्तिरिष्यते ।**
**अस्मार्तेऽनुगमाभावात्क्रमात्त्रिपुरुषागता * ॥**

---

× सवि. स्मृचवत् ।

(१) **स्मृच**.६७; **पमा**.१४६ द्वार (द्वारि) संश (संश्र); **नृप्र**.९ द्वार (द्वारे); **सवि**.१२४ निर्गमन (दिनगर); **प्रका**.४४; **समु**.४६. (२) **व्यमा**.३१३; **व्यचि**.३१; **व्यत**.२१८ गुरुः (वरः) अव्याहता (अनिरुद्धा) रेभ्यो (स्तेभ्यो); **चन्द्र**.१५५ गुरुः (वरं); **विव्य**.१० गुरुः (वरः) यमः.

(३) **स्मृच**.७३; **पमा**.१४१ माऽना (मा ना) पौरुषी या (पुरुषीया) ऽनागमाऽन्या (सा चेदल्पा); **प्रका**.४७.

* मिता. व्याख्यानं 'आगमोऽभ्यधिक' इति याज्ञवल्क्यश्लोके (पृ. ३९८) द्रष्टव्यम् । विता. मितागतम् ।

(१) **व्यक**.७० हि (तु); **व्यचि**.६८. (२) **व्यत**.२२५ पञ्चाङ्गो भोग (भोगः पञ्चाङ्ग) व्यासकात्यायनौ; **दात**.१८१ सा (आ); **विच**.१४० सा (आ) व्यासकात्यायनौ. (३) **व्यक**.७०; **व्यचि**.६८; **व्यसौ**.६६ (=) पू.

(४) **मिता**.२।२७ सार्ते (सार्ते); **व्यमा**३४६ मितावत्; **अप**.२।२८ स्मृत्यन्तरम्; **व्यक**.७०; **स्मृच**.७१: ७५ पू.; **पमा**.१४२ मितावत्, पू.; **स्मृसा**.१०४, १०७ ऽनु (त्वा); **व्यचि**.६८ स्मृसावत्; **स्मृचि**.४९ मितावत्; **व्यत**.२२६ सार्ते (सार्ते) ऽनु (त्वा); **सवि**.१३३ मितावत्; **व्यसौ**.६६ (=); **व्यउ**.४६; **विता**.१३९ गता (गतौ); **सेतु**.९२ व्यतवत्; **प्रका**.४६; **समु**.४८; **विच**.१४१ व्यतवत्.

(१) स्मार्तश्च कालः पुरुषत्रयभुक्तिकालात्मकः । तथा च स्मृत्यन्तरम्— स्मार्त इति । अप.२।२८

(२) स्मार्ते स्मरणयोग्यकाले । क्रिया प्रमाणं, आगमः स्वत्वहेतुः क्रयप्रतिग्रहादि, आगमाभावात् आगमस्यानुसंधानाभावादित्यर्थः । व्यक.७०

(३) अनुगमाभावात् योग्यानुपलब्ध्यात्मकबाधाभावादित्यर्थः । एतदुक्तं भवति । स्मरणयोग्ये पञ्चाधिकशतवर्षपर्यन्तातीतकालमध्ये प्रारब्धा भुक्तिः स्वेतरप्रमाणावगता आगममूलैव स्वत्वे प्रमाणमिष्यते । स्वतः स्वमूलावगतेर्योग्यानुपलब्ध्या बाध्यमानत्वात् । स्मरणयोग्ये पुनः पञ्चाधिकशतवर्षपर्यन्तातीतकालात्प्राचीनकाले प्रारब्धा स्वदार्ढ्यावगतागममूलिका विनाऽपि मानान्तरावगतागममूलतां स्वत्वे प्रमाणमिति । क्रमात्रिपुरुषागतेत्यस्य तु व्याख्या संग्रहकारेण कृता— स्वतन्त्रैरित्यादिना । +स्मृच.७१

(४) मिता.टीका— स्मार्ते काले क्रियेति । क्रिया प्रमाणमित्यर्थः । सर्वे गत्यर्था ज्ञानार्था इति । गत्यर्थे गमिर्ज्ञाने वर्तते । अतोऽनुगमो नाम निश्चयज्ञानम् । तदभावेऽनुगमाभावः । सुबो.२।२७

(५) आगमः स्वत्वहेतुदानक्रिया । स्मृसा.१०४

(६) अथ सागमभुक्तेः प्रमाणत्वे व्यर्थविशेषणता, न; 'इदमिदानीं मम स्वमिति' तावत्साध्यं, तत्र हि स्वत्वभोगे आगमस्य तन्त्रता, तस्य त्विदानीं पर्यन्तमनुवृत्तौ भोगस्येति विवेकः । व्यचि.६९

(७) चन्द्रिकाकारेण तु पञ्चाधिकशतवर्षपर्यन्तं स्मार्तकाल इत्युक्तम् । तत्तु प्रायिकाभिप्रायकम् । नवतिवर्षपर्यन्तायास्त्रिपुरुष्याः प्रतिपादितत्वात् । *सवि.१३५

**[१]आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा ।**
**कारणं भुक्तिरेवैका संतता या त्रिपौरुषी ॥**

चतुर्थस्य पुंसो भुक्तिः प्रमाणतयोपन्यसनीयेति गमयति, तत्तस्यापि स्मार्तकालानन्तःपातिभुक्तौ सत्यां वेदितव्यम् । अप.२।२८

**[२]चिरन्तनमविज्ञातं भोगं लोभान्न चालयेत् ॥**

+ पमा. स्मृचवत् । * सवि. (१३३ पृ.) मितागतम् ।
(१) अप.२।२८; स्मृसा.१०९ तता (ततं).
(२) स्मृच.७३; प्रका.४७.

अविज्ञातमनागमतयेत्यर्थः । एतदुक्तं भवति, यथा छलानुसारेण निर्णीतेऽपि विंशतिवार्षिकभोगस्य पुनर्भूतानुसारेण चालनमिष्टं न तथा चिरन्तनस्येति । स्मृच.७३

**[१]त्रिभिरेव तु या भुक्ता पुरुषैर्भूर्यथाविधि ।**
**लेख्याभावेऽपि तां तत्र चतुर्थः समवाप्नुयात् ॥**
**[२]यथा क्षीरं जनयति दधि कालाद्रसान्वितम् ।**
**दानहेतुस्तथा कालात् भोगस्त्रिपुरुषागतः ॥**

स्वद्रव्यसाध्यत्वाद्दानस्य स्वत्वमुत्पादयन् भोगो दानस्य हेतुर्भवति दानं वा हेतुः स्वत्वस्यैवेति दानहेतुः । अत एव नियतकालान्तरभाविना स्वत्वेन व्याप्ता त्रैपुरुषी भुक्तिः स्वत्वे प्रतिग्रहादिवद्भवति प्रमाणम् । एवं लक्षणा हि भुक्तिः एकेन विंशतिवर्षाणि अधिकानि वा भुक्ता न तु न्यूनानि, तस्मिंश्च मृते तत्पुत्रेणापि तावत्कालमेव भुक्ता, तस्मिन्नपि मृते तत्पुत्रेणापि तथैव भुक्ता भूस्वामिना च वक्ष्यमाणदाक्षिण्यस्नेहादिक्षमाकारणाभावे त्रैपुरुषिकभोगस्योपेक्षैव कृता, सेदानीं भोगेऽपि भूम्यादौ पूर्वस्वामिस्वत्वनाशकरी, भोक्तुश्च स्वत्वनिमित्तं भवतीत्यदूरान्तरितं भोगस्यैव कारणत्वमुच्यते । सर्वथा तावद्भोगे कृते पूर्वस्वत्वनाशः परस्वत्वोत्पादश्च जात इति सिद्धम् । व्यमा.३५०

**[३]मुख्या पैतामही भुक्तिः पैतृकी चापि संमता ।**
**त्रिभिरेतैरविच्छिन्ना स्थिरा षष्ट्याब्दिकी मता ॥**

अत्र च सर्ववचनेषु त्रिपुरुषागतत्वं भोगस्य स्मार्तकालीनत्वोपलक्षणं न तु यथाश्रुतम् । स्मरणयोग्येऽपि द्वितीयादिवर्षरूपे काले पुरुषत्रयात्ययसंभवात् । तत्र च बाधेनानुमित्यर्थापत्त्योरनुदयात् । व्यप्र.१५५

**[४]वत्सराणां तु नवतिरथवा स्यात्त्रिपौरुषी ।**
**अतःपरं प्रमाणं स्याद्भुक्तिरेवागमादृते ॥**

(१) व्यमा.३४१ विष्णुकात्यायनौ; व्यक.७० विष्णुकात्यायनौ; दीक.३४; व्यसौ.६६; विव्य.१६. (२) व्यमा. ३५०; प्रका.४४ जनयति (तु नयति) लाद्रसा (लवशा); समु.४९ प्रकावत्; विव्य.१९ कालात् भो...गतः (कालभोगस्त्रिपुरुषतां गतः).

(३) अप.२।२८; व्यक.७०; स्मृसा.१०४ चापि (वापि) त्रिभिरे (वयोपे); व्यसौ.६६ त्रिभिरे (वयोपे); व्यप्र.१५५ ब्दिकी (ब्दिका); प्रका.४६ व्यसौवत्; समु.४९ व्यसौवत्, स्मृत्यन्तरम्. (४) प्रका.४६ पौ (पू); समु.४९ स्मृत्यन्तरम्.

**[1]पित्रा भुक्तं तु यद् द्रव्यं भुक्त्याचारेण धर्मतः।**
**तस्मिन्प्रेते न वाच्योऽसौ भुक्त्या प्राप्तं हि तस्य तत्॥**
**[2]सागमेन तु भोगेन सम्यग्भुक्तं यदा तु यत्।**
**आहर्ता लभते तत्तु नापहार्यं तु तत्कचित्॥**

सम्यगिति विंशतिवर्षपर्यन्तम्। व्यमा.३४५

**[3]प्रणष्टागमलेख्येन भोगारूढेन वादिना।**
**कालः प्रमाणं दानं च कीर्तनीयानि संसदि॥**

दानग्रहणमागमोपलक्षणार्थम्। चशब्दः सांतत्यादिविशेषणसंग्रहणार्थः। एवं चायमर्थः। भोगप्रमाणवादिना भोगाख्यं प्रमाणं तद्विशेषणानि आगमदीर्घकालादीनि च कीर्तनीयानीति। कीर्तितानि च तद्विप्रतिपत्तौ साधनीयानि कीर्तनमात्रेण निश्चयाभावात्। *स्मृच.७१

**आहर्ता भुक्तियुक्तोऽपि लेख्यदोषान् विशोधयेत्।**
**तत्सुतो भुक्तिदोषांस्तु लेख्यदोषांस्तु नाप्नुयात् ÷॥**

(१) आहर्ता ग्रहीता। व्यक.६५

(२) सुतग्रहणं पौत्रस्याप्युपलक्षणार्थम्। स्मृच.७२

(३) लेख्यस्य चाप्रामाण्यशङ्कायां लेख्यग्रहीत्रा तन्निरसनीयं, तत्पुत्रेण तु लेख्यार्थिनो भोग एव उपन्यस्यो न तु लेख्यमुद्धरणीयं तदाह——आहर्तेति। +व्यचि.६३

(४) तदनभियुक्तपितृमरणे वेदितव्यम्। व्यप्र.१५०

**शक्तस्य संनिधौ बन्धो यस्य लेख्येन भुज्यते।**
**वर्षाणि विंशतिं यावत् तत्पत्रं दोषवर्जितम् ×॥**

(१) विंशतिवार्षिकभोगस्य च लेख्यादिप्रमाणशुद्धिकरत्वमाह कात्यायनः——शक्तस्येति। यथोक्तभोगस्य स्वत एव प्रमाणत्वेन साध्यसिद्धौ पत्रदोषनिराकरणार्थत्वम्। व्यमा.३४६

(२) विना द्रव्येणेत्यर्थः। पूर्वत्र तु वाक्ये दुष्टस्य लेख्यस्यानुद्भावितदोषस्य विंशतिवर्षायां भुक्तौ दिव्यसाध्यतोक्ता। इह त्वदुष्टस्याविद्यमानसाक्षिस्वहस्तलिखितादेर्भुक्त्यैवोक्तकालया प्रामाण्यसिद्धिरुच्यत इत्यविरोधः। अप.२।९२

**अथ विंशतिवर्षाणि आधिर्भुक्तः सुनिश्चितः।**
**येन लेख्येन तत्सिद्धिर्लेख्यदोषविवर्जिता *॥**
**सीमाविवादे निर्णीते सीमापत्रं विधीयते।**
**तस्य दोषाः प्रवक्तव्या यावद्वर्षाणि विंशतिः*॥**
**आधानसहितं पत्रमृणलेख्यनिवेशितम्।**
**मृतसाक्षि प्रमाणं तु स्वल्पभोगेऽपि तद्विदुः +॥**
**[1]सनाभिभिर्बान्धवैश्च भक्तं यत् स्वजनैस्तथा।**
**भोगात्तत्र न सिद्धिः स्याद्भोगमन्येषु कल्पयेत्॥**

अन्येषु असंबद्धेषु। सर्वत्रोपभोगे संकुल्यत्वाद्यनुरोधेन शीलादेरुपेक्षाहेतोः संभवान्न भोगस्यान्यथोपपन्नस्य स्वत्वहेतुकल्पनद्वारा स्वत्वसाधकत्वं नाप्युपचयहानिहेतुत्वमिति तात्पर्यम्। व्यप्र.१६६

स्त्रीधनादिभोगः न स्वत्वहेतुः

**[2]न भोगं कल्पयेत्स्त्रीषु देवराजधनेषु च।**
**बालश्रोत्रियवित्ते च प्राप्तेऽपि पितृतः क्रमात्॥**

(१) देवानामनिराकर्तृस्वभावत्वात्तद्धनस्यान्यभोगे न हानिः। श्रोत्रियग्रहणमन्यासक्तोपलक्षणार्थम्। स्मृच.६९

(२) भोगं न कल्पयेत् प्रमात्वेन नाद्रियेतेत्यर्थः। व्यप्र.१६६

**[3]न स्त्रीणामुपभोगः स्याद्विना लेख्यात्कदाचन।**
**शत्रुश्रोत्रियराज्ञां तु तथा बालधने मतः॥**

---

* सवि. स्मृचवत्। ÷ स्थलादिनिर्देशः लेख्यप्रकरणे (पृ. ३७०) द्रष्टव्यः। + सेतु. व्यचिवत्। ×स्थलादिनिर्देशः लेख्यप्रकरणे (पृ. ३७२) द्रष्टव्यः।

(१) व्यसौ.६६; प्रका.४६ (तस्मिन्नतीते भुक्त्या तं भुक्त्या प्राप्तं न तस्य तत्). (२) व्यमा.३४५ भोगे (भुक्ते) विष्णुकात्यायनौ; व्यक.७० तत्तु (यत्र) विष्णुकात्यायनौ; व्यसौ.६५ सम्यग्भुक्तं (भुक्तं सम्यक्) तत्तु (तत्र) विष्णुकात्यायनौ. (३) स्मृच.७१; पमा.१४० प्रण (प्रन); सवि.१३०; प्रका.४६; समु.४८.

*स्थलादिनिर्देशः लेख्यप्रकरणे (पृ.३७२) द्रष्टव्यः।
+व्याख्यानं स्थलादिनिर्देशश्च लेख्यप्रकरणे (पृ. ३७३) द्रष्टव्यः।

(१) व्यमा.३५१ सना...श्च (सनाभैर्बान्धवैर्वापि); अप.२।२८ भुक्तं यत् (यद्भुक्तं) न्येषु (न्यत्र); व्यक.७४; स्मृसा.१०७; स्मृचि.५०; व्यप्र.१६६; प्रका.४५ नाभि (जाति) न्येषु (न्यत्र); विव्य.२० वैश्च (वैर्वा).

(२) व्यमा.३५१ वित्ते (वृद्धे); व्यक.७४; स्मृच.६९ प्राप्तेऽपि (मातृतः); स्मृसा.१०७ ऽपि (च); व्यचि.७१ स्मृसावत्; स्मृचि.५० बृहस्पतिः; व्यसौ.६९ त्ते च (त्तेषु) ऽपि (च); व्यप्र.१६६ देव...च (वित्तापनयनेषु च) ऽपि (च) बृहस्पतिः; प्रका.४५; समु.४७; विव्य.२० त्ते च (त्तेषु).

(३) व्यक.७४; स्मृसा.१०७ पू.; व्यचि.७१ शत्रु (स्वर) स्यात्कदा (स्यं कथं); व्यसौ.६९.

[1]क्रयं शिल्पिषु निक्षिप्तं बन्धान्वाहितयाचितम् ।
प्रसह्याभिहरन् मोहात् हीनो दण्ड्यः स वै भवेत् ॥

क्रयो मूल्यम् । व्यक.७४

[2]नोपभोगे बलं कार्यमाहर्त्रा तत्सुतेन वा ।
पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः ॥

(१) मिता.टीका—उपभोगमात्रबलादेव न स्वत्व-सिद्धिरित्यर्थः । सुबो.२।२४

(२) आदिपदं जङ्गमान्तरपरम् । अत्र चेयं व्यवस्था, यदर्जकस्यापि लेख्यसाक्षिविरहे पञ्चाङ्गो भोगः प्रमाणम् । व्यचि.७०

[3]येनोपात्तं हि यद् द्रव्यं सोऽभियुक्तस्तदुद्धरेत् ।
चिरकालोपभोगेऽपि भुक्तिस्तस्यैव नेष्यते ॥

अर्जकस्य चिरकालभुक्तिरपि स्वागमविभावनं विना न प्रमाणमिष्यत इत्यर्थः । व्यचि.६९

[4]यदाऽऽहर्ताऽभियुक्तः स्याल्लेख्यं साक्षी तदा गुरुः ।
भोक्त्रभावे हि भुक्तिस्तु स्वतस्ताभ्यां गरीयसी ॥

अर्जकः आर्जिते प्रमाणत्वेन लेखादिकं दर्शयेत् । अर्जकाभावे तत्सुतस्य लेखादितो भुक्तिरेव प्रमाण-मित्यर्थः । व्यचि.७०

[5]बलाद्भुक्तस्तु यो ग्रामः शतवर्षोऽपि नश्यति ।
न तत्र पौरुषी भुक्तिर्यस्माच्चैव बलाद्धृता ॥

## पितामहः

पञ्चाङ्गभोगः, भोगागमसहकार्यं, त्रिपुरुषभुक्तिप्रामाण्यं च

[6]सागमा दीर्घकाला चाविच्छिन्नाऽपरवोज्झिता ।
प्रत्यर्थिसंनिधाना च भुक्तिः पञ्चविधा स्मृता ॥

(१) सागमा आगममूलिका । स्मृच.७०

(२) अपरवः आक्रोशः । सवि.१३०

[1]नागमेन विना भुक्तिर्नागमो भुक्तिवर्जितः ।
तयोरन्योन्यसंबन्धात् प्रमाणत्वं व्यवस्थितम् ॥
[2]भुक्तिर्बलवती तत्र भोक्ता यत्र परो भवेत् ।
स्वगोत्रे भोगिनां भुक्तिर्न शक्ता शाश्वती नृणाम् ॥

बलवती स्वप्रतिकूललेख्यादेः वैयर्थ्यकर्त्री । स्वगोत्रे स्वमातृपितृबन्धुष्वित्यर्थः । स्मृच.६९

[3]स्वहस्तकाज्ञानपदं तस्मात्तु नृपशासनम् ।
ततस्त्रिपुरुषो भोगः प्रमाणान्तरमिष्यते ॥

तत् प्रवादपरम्परायातप्रसिद्धानिश्चितागमभोगविषयम् । अन्यथा पूर्वोक्तवचनविरोधात् । एवं पूर्वपुरुषप्रसाधितागमाया अपि भुक्तेः प्रमाणतरत्वमवगन्तव्यम् । स्मृच.७४

## उशना

दशवर्षभूभोगः न प्रमाणम्

[4]दशवर्षाद्देशमनो भोक्तुर्न भूमिः ।

## प्रजापतिः

भुक्तिविशेषः स्वत्वहेतुः

[5]आदानकालादारभ्य भुक्तिर्यस्याऽविघातिनी ।
समा विंशत्यधिका तस्य तां न विचारयेत् ॥
[6]हेत्वन्तरकृते यत्र आरूढो यत्र निह्नुते ।
लेख्यं यस्य भवेद्धस्ते तस्य भोगं विनिर्दिशेत् ॥

निर्णायकत्वेनेति शेषः । भोगग्रहणमुपलक्षणार्थम् । स्मृच.६४

## हारीतः

भोगागमयोः सहकार्यं त्रिपुरुषभुक्तिप्रामाण्यं च

[7]न मूलेन विना शाखा अन्तरिक्षे प्ररोहति ।

---

(१) **व्यक.**७४ लिप (ल्पे); **व्यचि.**७१; **व्यसौ.**६९ वै भवेत् (उच्यते). (२) **मिता.**२।२४; **व्यक.**७२; **स्मृच.**६८; **पमा.**१४७; **स्मृसा.**१०५; **व्यचि.**७० (=); **नृप्र.**८; **सवि.**१२६; **व्यसौ.**६७; **व्यप्र.**१६६ बृहस्पतिः; **व्यम.**१५; **विता.**१४५; **प्रका.**४४; **समु.**४६.

(३) **व्यमा.**३४३; **व्यक.**७१ पात्तं हि यद् (पनिहितं) स्यैव नेष्य (स्य तु लेख्य); **स्मृसा.**१०५ हि (तु) नेष्य (लेख्य); **व्यचि.**६९ तद् (तमु); **स्मृचि.**४९ हि (तु) तद् (तमु) याज्ञवल्क्यः; **व्यसौ.**६७ व्यचिवत्. (४) **व्यक.**७१-७२ भोक्त्र (लेख्या) भुक्तिस्तु स्वत (युक्तिस्तु भुक्ति); **स्मृसा.**१०५ हि (तु) स्वतः (सुते); **व्यचि.**७० हि (ऽपि); **व्यसौ.**६७. (५) **स्मृचि.**२३. (६) **स्मृच.**७०; **सवि.**१३० चाविच्छिन्ना (च विच्छेरो); **प्रका.**४६; **समु.**४७.

(१) **स्मृच.**७०; **सवि.**१३१; **प्रका.**४६ नाग (आग); **समु.**४८ प्रजापतिः. (२) **स्मृच.**६९; **प्रका.**४५; **समु.**४७. (३) **स्मृच.**७४ त्रि (त्रै) णान्त (णत); **पमा.**१४४; **प्रका.**४८ स्मृचवत्; **समु.**४९ तु (च) शेषं स्मृचवत्.

(४) **मभा.**१२।३६; **प्रका.**४५ (दशवर्षाद्देशम भोक्तुः संभवेति बहूनिति ?). (५) **पमा.**१४७; **व्यसौ.**६६ यस्याऽविघातिनी (या तु निरन्तरा) पू.; (६) **स्मृच.**६४; **प्रका.**४२ नारदः; **समु.**४४ (हेत्वन्तरं तु ते पत्रे आरूढे यत्र निह्नुते). (७) **स्मृच.**७०; **पमा.**१४०; **सवि.**१३१; **प्रका.**४६;

**आगमस्तु भवेन्मूलं भुक्तिः शाखा प्रकीर्तिता ॥**
**भटचाटबलाद्भुक्तं हृतं गुप्तमथापि वा ।**
**स्नेहप्रणयदत्तं च प्रदत्तं भाटकेन वा ॥**
**तथा वसनरक्षार्थं याचितं प्रणयेन वा ।**
**एवं बहुविधे भोगे आगमो निर्णयः स्मृतः ॥**

वसनरक्षार्थं गृहरक्षणार्थम् । एवं चोपेक्षाकारणरहिता प्रतिकूला भुक्तिरागमाभावेऽप्युक्तकाला लिखितसाक्षिणो वैयर्थ्यमापादयतीत्यनुसंधेयम् । अतो लिखितसाक्षिणाव-नुकूलभुक्तियुक्तौ प्रतिकूलसमक्षदानादिरहितौ गृहक्षेत्रा-दिविषये प्रमाणतया कीर्तनीयौ । स्मृच.७०

**आगमस्तु कृतो येन स दण्ड्यस्तमनुद्धरन् ।**
**न तत्सुतस्तत्सुतो वा भोगहानिस्तयोरपि ॥**

चिरन्तनभोगेऽपीति शेषः । अनेन चिरन्तनभोगे प्रपौत्रादीनामागमानुद्धरणेऽपि न भोगहानिरित्यर्थादुक्तं भवति । स्मृच.७२

**यद्विनागममत्यन्तं भुक्तं पूर्वैस्त्रिभिर्भवेत् ।**
**न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतम् ×॥**

मिता.टीका— नन्वस्मार्तकालीना भुक्तिरागमज्ञानं नापेक्षते । अपि तु तत्सत्तामपेक्षते इत्युक्तम् । तदसंगतम् । 'यद्विनागममत्यन्तं भुक्तमि'त्यस्मिन् वचने अत्यन्तमिति सर्वात्मना आगमनैरपेक्ष्येण भुक्तेः प्रामाण्यप्रतीतेरित्यत्रा-भिप्रायेणाक्षिपति । यच्चोक्तं 'यद्विनागममि'त्यादिना । परिहरति । तच्चाप्यन्तमिति (तत्राप्यत्यन्तमिति) । अयमभिप्रायः । सर्वात्मना आगमस्यास्मार्तकालीनोपभो-गापेक्षाभावादत्यन्तमागमज्ञानं विनाऽपि अस्मार्तकाली-नोपभोगे सति भुक्तं तद्वस्तु अपाहर्तुं न शक्यत इत्येव । न तु वस्तुत आगमसत्तां विनाऽप्युपभोगात्स्वत्वमस्तीति येन पूर्वोक्तविरोधः स्यादिति । अत्र हेतुमाह । आग-मस्य स्वरूपाभाव इति । अनियत इति शेषः । एत-दुक्तार्थमिति । अस्मार्तकाललक्षकत्वेनोक्तार्थमित्यर्थः । अस्मार्तकालीनोपभोग आगमज्ञाननिरपेक्षः प्रमाणम् । स्मार्तकालीनस्तु आगमज्ञानसापेक्षः प्रमाणमित्युक्तम् । सुबो.२।२७

**अन्यायेनापि यद्भुक्तं पित्रा भ्रात्राऽथवाऽपि च ।**
**न तच्छक्यं पराहर्तुं तृतीयं समुपागतम् ॥**

(१) तृतीयमतिक्रम्य समुपागतमित्यर्थः । स्मृच.७३

(२) एतच्च अन्यायेनापि भुक्तमपहर्तुमशक्यं किं पुनर्न्यायेन भुक्तमिति । पमा.१४४

## व्यासः

लेख्यसाक्षिभुक्तिप्रामाण्यतारतम्यं, पञ्चाङ्गभोगश्च

**शास्त्रेषु लेख्यसाक्षिभ्यां भुक्तिरभ्यधिका मता ॥**
**सागमो दीर्घकालश्चाविच्छेदोऽपरवोज्झितः ।**
**प्रत्यर्थिसंनिधानश्च पञ्चाङ्गो भोग इष्यते ॥**

(१) आगम्यते प्राप्यते स्वं भवति येन क्रयादिना स आगमः । दीर्घकालत्वं यस्मिन् पुरुषे यावान् कालो भोगस्योक्तः । छिद्रो विच्छेदः । तद्रहितो निश्छिद्रः ।

---

× मिता व्याख्यानं ' आगमोऽभ्यधिक ' इति याज्ञवल्क्य-श्लोके (पृ.३९८) द्रष्टव्यम् ।

**समु**.४७ अन्त (ह्रान्त). (१) **स्मृच**.७०; **प्रका**.४६; **समु**.४७.

(२) **मिता**.२।२८ भोग (भोग्य); **अप**.२।२८ मितावत्, स्मृत्यन्तरम्; **स्मृच**.७२ स्मृत्यन्तरम्; **पमा**.१४५ मितावत्, स्मृत्यन्तरम्; **नृप्र**.८ मितावत्; **व्यम**.१४ मितावत्; **विता**.१५२ मितावत्, नारदः; **प्रका**.४७ स्मृत्यन्तरम्; **समु**.४८ स ...ध्दरन् (सोऽभियुक्तस्तमुद्धरेत्). (३) **मिता**.२।२६; **व्यम**.१४.

(१) **स्मृच**.७३; **पमा**.१४४ भ्रात्रा ... च (पूर्वतरैस्त्रिभिः) (न तच्छक्यमपाकर्तुं क्रमात्त्रिपुरुषागतम्); **दीक**.३३ अन्याये-नापि (अनागमं तु) शेषं पमावत्; **प्रका**.४७. (२) **व्यमा**.३१३. (३) **शुनी**.४।७११ पञ्चा...ते (भुक्तो भोगः प्रमाण-वत्); **मिता**.२।२७ (प्रत्यर्थिसंनिधानोऽपि परिभोगोऽपि पञ्चधा) स्मरणम्; **व्यमा**.३४२ अविच्छेदोऽप (निश्छि-द्रोऽन्य) नश्च (नं च); **अप**.२।२७ अवि...तः (छेदोपाधिविवर्जितः); **व्यक**.७१ व्यमावत्; **स्मृच**.७१; **स्मृसा**.१०४ (=) व्यमावत्; **स्मृचि**.४९ अवि-च्छेदो (निश्छिद्रो) इष्य (उच्य); **व्यत**.२२५ पञ्चाङ्गो भोग (भोगः पञ्चाङ्ग) शेषं व्यमावत्, व्यासकात्यायनौ; **सवि**.१३० श्चा (श्च) : १६४ श्चा (श्च) नश्च (नं च); **चन्द्र**.१५७ व्यतवत्; **व्यसौ**.६७ पूर्वार्धे व्यमावत्; **व्यप्र**.१५३-१५४ श्चा (श्च) पञ्चाङ्गो भोग इष्यते (परिभोगोऽपि पञ्चधा); **व्यउ**.४६ (=) उत्तरार्धं व्यप्रवत्; **व्यम**.१४; **विता**.१३८ ऽप (ऽन्य) शेषं व्यउवत्; **प्रका**.४६; **समु**.४८ (आगमः काल-दैर्घ्यं चाविच्छेदोपरवोज्झनम्) अत्रैव बृहस्पतेरप्ययं श्लोको दृश्यते, नश्च (नं च); **विच**.१४० सा (आ) शेषं व्यमावत्, व्यासकात्यायनौ; **विव्य**.१७ विचवत् .

अन्यरवो विप्रतिपत्तिः, तद्रहितः। शक्तस्य स्नेहाद्युपेक्षाकारणरहितस्य प्रत्यर्थिनो द्रव्यस्वामिनः संनिधानं, सोऽयं पञ्चाङ्गो भोगः। व्यमा.३४२

(२) आद्यपुरुषभोगविषयमेतत्। अप.२।२७

(३) पञ्चाङ्ग इति वदन् एकाङ्गवैकल्येऽपि अप्रामाण्यमेव भोगस्येति दर्शयति। *स्मृच.७१

(४) इष्यते प्रमाणत्वेन। सागमः क्रयादियुक्तः। एष च भूमिविषयकविंशतिवर्षधनविषयकदशवर्षान्यूनकालभोगपरः। ×व्यत.२२५

(५) विच्छेदोऽन्तरायः, उपरव आक्रोशः ताभ्यामुज्झितो रहितः। यद्वा छेदो व्यवधानं तद्विगमवान् विच्छेदो निरन्तर इति यावत्। अपरवो वर्जनविषयो रवः। मदीयं क्षेत्रादि त्वया किमिति भुज्यत इति प्रतिषेधः। अपशब्दस्य वर्जनार्थत्वात्। तेनोज्झितः। व्यप्र.१५४

(६) आगमोत्पादकक्रयादिसहितः दीर्घकालो निरन्तरो निराक्रोशः प्रत्यर्थिप्रत्यक्षश्चेति पञ्चरूपाणि। व्यउ.४६

भुक्तिविशेषः स्वत्वहेतुः

**[१]उपेक्षिता यथा धेनुर्विना पालेन नश्यति।**
**पश्यतोऽन्यैस्तथा भूमिर्भुक्ता भोगेन हीयते॥**

पश्यन्तमनादृत्य या यस्य भूः परैर्भुज्यते सा तस्य हीयते तदीयत्वेन न निश्चीयते इति रत्नाकरेऽपि व्याख्यातम्। व्यचि.६६

**[२]वर्षाणि विंशतिं यस्य भुक्ता पृथ्वी परैरिह।**
**सति राज्ञि समर्थस्य तस्य सेह न सिध्यति॥**

(१) सताऽपि लेख्येनेति शेषः। स्मृच.६८

(२) समर्थस्य बालत्वादिदोषरहितस्य। व्यत.२२२

**[३]आहर्त्रा याऽभियुक्तेन प्रमाणेन प्रसाधिता।**
**भूमिः सा तत्सुतात्प्राप्ता न हर्तव्या कदाचन॥**

तत्सुतान्न हर्तव्येत्यन्वयः। स्मृच.७४

स्वजनादिभुक्तिर्न स्वत्वहेतुः

**[२]सनाभिभिर्बान्धवैर्वा भुक्तं यत्स्वजनैस्तथा।**
**भोगे तत्र न सिद्धिः स्याद्भोगमन्यत्र कल्पयेत्॥**

तत्र सनाभ्यादिभोगे संबन्धित्वेनोपेक्षासंभवात् भूम्यादिहानेर्न सिद्धिः स्यादित्यर्थः। स्मृच.६९

**[३]याञ्चाधर्मेण यद्भुक्तं श्रोत्रियै राजपूरुषैः।**
**सुहृद्भिर्बान्धवैर्वाऽपि न तद्भोगेन हीयते॥**

यद् अलङ्करणादीत्यर्थः। स्मृच.६९

**[४]धर्मक्षयः श्रोत्रिये स्याद्भयं स्याद्राजपूरुषे।**
**स्नेहः सुहृद्बान्धवेषु भुक्तमेतैर्न हीयते॥**

भुक्तं पञ्चवर्षादूर्ध्वमपीति शेषः। अनेन सकारणोपेक्षायां न कदाचिद्धानिरित्युक्तम्। तेन दशवार्षिकविंशतिवार्षिकहान्योरपि अपवादः सकारणोपेक्षायां द्रष्टव्यः। स्मृच.६९

त्रिपुरुषभुक्तिप्रामाण्यम्

**[५]पिता पितामहो यस्य जीवेच्च प्रपितामहः।**

---

* सवि. स्मृचवत्। × विच. व्यतवत्।

(१) **अप**.२।२५ भूमि...न (भुक्ता भूमिः कालेन); **व्यक**.७२ अपवत्; **स्मृच**.६८; **स्मृसा**.१०६ अपवत्; **व्यचि**.६६, ७५ अपवत्; **व्यप्र**.१५७ अपवत्; **विता**.१४६ अपवत्; **प्रका**.४४; **समु**.४६ भूमिर्भुक्ता (भुक्ता भूमिः).

(२) **शुनी**.४।७१४-७१५ तिं (तिः) भुक्ता पृथ्वी (भूर्भुक्ता तु); **अप**.२।२५ शतिं (शतिः) भुक्ता पृथ्वी (भूर्भुक्ताऽथ); **व्यक**.७२ भुक्ता पृथ्वी (भूर्भुक्ता तत्); **स्मृच**.६८; **दीक**.३३ यस्य ... रिह (यावद् भूर्भुक्ता तु परैर्यदि); **स्मृसा**.१०६ यस्य ... पृथ्वी (यत्र भूमिर्भुक्ता); **व्यचि**.६६ यस्य ... पृथ्वी (सम्यक् भूमिर्भुक्ता) : ७५ भुक्ता पृथ्वी (भूमिर्भुक्ता); **व्यत**.२२२ शतिं (शतिः) भुक्ता पृथ्वी (भूर्भुक्ता तु); **सवि**.१२९ शतिं (शतिः) भुक्ता पृथ्वी (भूमिर्भुक्ता); **व्यसौ**.६८ सेह (सा हि) शेषं सविवत्; **व्यप्र**.१५७ व्यतवत्; **विता**.१४६ (वर्षाणि विंशतिर्यस्य भुक्ता स्याद्भूर्नरैरिह) तस्य सेह (सा तस्येह); **सेतु**.८८ व्यचि.७५ वत्; **प्रका**.४४; **समु**.४६ भुक्ता पृथ्वी (भूर्भुक्ताऽथ); **विच**.१३६ शतिं (शतिः) भुक्ता पृथ्वी (भूर्भुक्ता च).

(१) **स्मृच**.७४; **प्रका**.४८; **समु**.४९. (२) **मेधा**.८।१४८ (=) (संबन्धिबान्धवैश्चैव भुक्तं यज्जातिभिस्तथा। न तद्भोगो निवर्तेत भोगमन्यत्र कल्पयेत्॥); **स्मृच**.६९; **प्रका**.४५; **समु**.४७. (३) **स्मृच**.६९; **पमा**.१४९ र्वाऽपि (श्चापि); **प्रका**.४५; **समु**.४७.

(४) **स्मृच**.६९; **पमा**.१४९ (धर्मोऽक्षयः श्रोत्रियस्य अभयं राजपुरुषे) बृहस्पतिः; **प्रका**.४५; **समु**.४७. (५) **व्यमा**.३४१ स्त्वेक (स्तत्रि), व्याख्यानात्तु 'त्वेकपूरुषः' इति पाठोऽनुमीयते; **व्यक**.७०-७१; **दीक**.३४ पू (पौ); **स्मृसा**.१०४; **स्मृचि**.४९; **व्यत**.२२४ पू (पु); **दात**.१८१; **व्यसौ**.६७; **व्यप्र**.१५५; **सेतु**.९०; **विच**.१३९; **विव्य**.१६.

**त्रयाणां जीवतां भोगो विज्ञेयस्त्वेकपूरुषः ॥**

युगपज्जीवत्सु त्रिषु षष्टिवर्षभोगेऽपि न त्रैपुरुषिकः। प्रपितामहस्यैव तत्र स्वातन्त्र्यात्तस्यैव भोगः।

व्यमा.३४१

[1]**प्रपितामहेन यद्भुक्तं तत्पुत्रेण विना च तम्।**
**तौ विना यस्य पित्रा च तस्य भोगस्त्रिपूरुषः ॥**

एकेन तावद्भुक्तं तस्मिन्मृते तत्पुत्रेण, तयोश्च मृतयोस्तृतीयेन, तस्मिन्मृते चतुर्थस्य त्रिपौरुषिको भोगो भवति। त्रयाणामेव स्वतन्त्रत्वात्। व्यमा.३४१

[2]**वर्षाणि विंशतिं भुक्ता स्वामिनाऽव्याहृता सती।**
**भुक्तिः सा पौरुषी भूमेर्द्विगुणा तु द्विपौरुषी।**
**त्रिपौरुषी च त्रिगुणा न तत्रान्वेष्य आगमः ॥**

(१) स्वमिनोऽव्याहतताया एव विंशतिवर्षभुक्तेर्द्विगुणत्रिगुणविधानात् त्रैपौरुषिकोऽपि भोगः। संनिहिते एव प्रतिवादिनीत्यवगम्यते। न ह्यसंनिधानादव्याहतेति व्यपदिश्यते। तत्र त्रैपुरुषिकभोगश्चतुर्थे पुरुषे प्रमाणम्।

व्यमा.३४२

(२) तच्चतुर्थादिभुक्तेः षष्ट्याब्दिक्याः प्रारम्भकालीनपुरुषाणां जीवतामभावे चिरन्तनकालीनभोगतुल्यतापत्तौ सत्यां द्रष्टव्यम्। अन्यथा 'स्मार्ते काले क्रिया भूमेः सागमा भुक्तिरिष्यते' इत्यादिवचनविरोधापत्तेः। एवं च पञ्चाधिकशतवर्षपर्यन्तस्य स्मार्तकालत्वाभिधानं प्रायिकाभिप्रायेणेति मन्तव्यम्। स्मृच.७५

(३) एतद्वचनमसमक्षभोगविषयकं इति समक्षविंशतिवर्षाभोगविषयकवचनेनाविरोधः। एतादृक् स्मृत्युक्तकाल एव। +व्यत.२२३

(४) भुक्ता भुक्तिः पाकं पचतीतिवत् प्रत्ययानुग्रहाय धातोरनुवादः। तत्रागमस्तादृशभोगेनैवाक्षिप्यते। आगमाभावनिश्चये तु सर्वत्र भोगो निष्फल एव।

व्यप्र.१५५

[1]**यद्विनागममत्यन्तं भुक्तं पूर्वैस्त्रिभिर्भवेत्।**
**न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतम् ॥**

अत्यर्थमिति संनिहितस्य विरोधं विना यत् त्रिभिर्भुक्तं तद्विनाप्यागमं लभ्यत एव। नापहर्तुं शक्यत इत्यर्थः। लेख्याभावेऽपीत्येकवाक्यत्वात्। व्यमा.३४१

## संवर्तः

भुक्तिविशेषः स्वत्वहेतुः

[2]**भुज्यमाने गृहक्षेत्रे विद्यमाने तु राजनि।**
**भुक्तिर्यस्य भवेत्तस्य न लेख्यं तत्र कारणम् ॥**

तस्य भोक्तुर्भुज्यमानं भवेत्। यतस्तत्रोपेक्षकस्यागमलेख्यं न कारणं न साधनम्। भोगोपेक्षया स्वत्वापत्तिसूचिकया लेख्यसाधकत्वस्य प्रतिहतत्वादित्यर्थः। एतच्च लेख्यवैयर्थ्यकथनार्थमुक्तम्। न पुनर्भोक्तुः स्वामित्वप्रतिपादनार्थं तस्य भोगमात्रेण स्वामित्वासिद्धेः।

*स्मृच.६८

[3]**या राज्ञा क्रोधलोभेन छलन्यायेन वा कृता।**

---

(१) **व्यमा**.३४१ त्रिपू (त्रिपौ); **व्यक**.७१ यद्भुक्तं (भुक्तस्य) त्रिपू (त्रिपौ); **दीक**.३४ यस्य (तस्य) त्रिपू (त्रिपौ); **स्मृसा**.१०४ च तम् (ऽपि तम्); **व्यचि**.६४ विना च तम् (च तं विना); **स्मृचि**.४९ स्मृसावत्; **व्यत**.२२४ त्रिपू (त्रिपु); **दात**.१८१ व्यमावत्; **व्यसौ**.६७ प्रपि (पि); **वीमि**.२१२९ व्यचिवत्; **व्यप्र**.१५५ प्रपि (पि) यद्भुक्तं (भुक्तस्य); **सेतु**.९०; **विच**.१३९ व्यसौवत्.

(२) **व्यमा**.३४१ भुक्ता (भुक्त्वा) तु (च); **अप**.२।२८ ऽव्याहृ (व्याहृ) भूमे (भुक्ति) तु (च) नारदः; **व्यक**.७१ व्यमावत्; **स्मृच**.७५ तत्रा (ततोऽ); **पमा**.१४२ भूमेः (ज्ञेया) तु (च) (त्रिपूरुषी त्रिगुणिता तत्र नान्वेष्य आगमः); **स्मृसा**.१०४ न्वेष्य (पेक्ष्य) शेषं व्यमावत्; **व्यचि**.६४ त्रिपौ (त्रिपू) शेषं स्मृसावत्; **स्मृचि**.४९ शतिं (शतिः) द्विपौ (द्विपू) याज्ञवल्क्यः; **व्यत**.२२५ भुक्ता (भुक्त्वा) ऽव्या (व्या) च त्रिगुणा (तु त्रिगुणः); **दात**.१८१ ऽव्या (व्या) शेषं व्यमावत्; **व्यसौ**.६७ भुक्तिः (भुक्तेः) शेषं व्यमावत्; **वीमि**.२।२९ भुक्ता (भुक्त्वा) सा (त्वा) णा तु (णी च) न्वेष्य (पेक्ष्य); **व्यप्र**.१५५ शतिं (शतिः) ऽव्याहृ (व्याहृ) तु (च); **सेतु**.९२ व्यमावत्; **प्रकां**.४८ स्मृचवत्; **समु**.४९ भूमेः (ज्ञेया) तत्रा (ततोऽ); **विच**.१४१ व्यमावत्; **विव्य**.१६-१७.

+ सेतु., विच. व्यतवत्। * पमा. स्मृचवत्।

(१) **व्यमा**.३४१ त्यन्तं (त्यर्थं) पूर्वै...त् (पूर्वतरैस्त्रिभिः) हर्तुं (कर्तुं); **अप**.२।२८; **व्यचि**.६४ व्यमावत्; **नृप्र**.९; **वीमि**.२।२९ त्यन्तं (त्यर्थं) हर्तुं (कर्तुं); **विव्य**.१६ व्यमावत्.

(२) **स्मृच**.६८; **पमा**.१४६ गृह (गृहे); **प्रका**.४४; **समु**.४६. (३) **स्मृच**.७४; **पमा**.१४४ लन्या (लान्न्या); **सवि**.१३४ भेन (भाभ्यां) ऽन्यस्य (चापि); **प्रका**.४८ छल (छला) कृता (हृता); **समु**.४९ कृता (हृता).

प्रदत्ताऽन्यस्य तुष्टेन न सा सिद्धिमवाप्नुयात् ॥

या खल्वन्यस्य भूः क्रोधादिना राज्ञा परभोग्यतया कृता तुष्ट्या वाऽन्यस्मै दत्ता सा चिरन्तनभोगेनापि न भोक्तुः सिध्यतीत्यर्थः। +स्मृच.७४

## मरीचिः

[1]धेनुवाह्यालङ्करणं याचितं प्रीतिकर्मणा ।
चतुःपञ्चाब्दिकं देयमन्यथा हानिमाप्नुयात् ॥

(१) साक्षिसाध्येष्वपि हानिमाह मरीचिः— धेन्विति । स्मृच.६९

(२) धनस्य दशवार्षिकी हानिरिति यदुक्तं तस्य विषयविशेषे संकोचमाह मरीचिः— धनेति। पमा.१४८

## स्मृत्यन्तरम्

[2]वर्षाणि पञ्चत्रिंशत्तु पौरुषो भोग उच्यते ॥

## अनिर्दिष्टकर्तृकवचनम्

[3]स्नेहप्रत्युपकारेच्छा धर्मापेक्षा तथैव च ।
उपेक्षाहेतवः प्रोक्ता भुक्तमन्यैर्न हीयते ॥

स्नेहादिहेतुनाऽन्यथासिद्धो भोगो न प्रमाणं, भुक्ते त्रिपुरुषभोगात् शब्देन प्रतिग्रहादिवत् स्वत्वहेतुतया बोधितादन्यस्य भोगस्यार्थापत्तिरूपत्वात्। चन्द्र.१५६

[4]आदानं प्राप्य तस्यां तु प्रायः साक्ष्यं प्रवर्तते (?)॥

## शुक्रनीतिः

[5]उपाधिं वा समीक्ष्यैव दैवराजकृतं सदा ।
विनष्टे लिखिते राजा साक्षिभोगैर्विचारयेत् ॥
लेखसाक्षिविनाशे तु सद्भोगादेव चिन्तयेत् ।
सद्भोगाभावतः साक्षिलेखतो विमृशेत्सदा ॥
केवलेन च भोगेन लेखेनापि च साक्षिभिः ।
कार्यं न चिन्तयेद् राजा लोकदेशादिधर्मतः ॥
[6]स्नेहलोभभयक्रोधैः कूटसाक्षित्वशङ्कया ।
केवलैः साक्षिभिर्नैव कार्यं सिध्यति सर्वदा ॥
अस्वामिकं स्वामिकं वा भुङ्क्ते यद्बलदर्पितः ।
इति शङ्कितभोगैर्न कार्यं सिध्यति केवलः ॥
शङ्कितव्यवहारेषु शङ्कयेदन्यथा न हि ।
अन्यथा शङ्कितान्सभ्यान्दण्डयेच्चौरवन्नृपः ॥
अन्यथा शङ्कनान्नित्यमनवस्था प्रजायते ।
लोको विभिद्यते धर्मो व्यवहारश्च हीयते ॥
[1]अनागमापि या भुक्तिर्विच्छेदोपरवोज्झिता ।
षष्टिवर्षात्मिका साऽपहर्तुं शक्या न केनचित् ॥
[2]भोगः संक्षेपतश्चोक्तस्तथा दिव्यमथोच्यते ॥

## संग्रहकारः

भोगनिर्णायकम्

[3]भुक्तिप्रसाधने मुख्याः प्रथमं तु कृषीवलाः ।
ग्रामण्यः क्षेत्रसामन्तास्तत्संधापयतः क्रमात् ॥

तत्संधापयतो दीर्घकालादिविशेषणं भुक्तिं चोद्भावयत इत्यर्थः। स्मृच.७१

लिखितादित्रयप्रमेयम्

[4]लिखितं साक्षिणो भुक्तिः क्रिया क्षेत्रगृहादिषु ।
आगमक्रयदानादौ प्रत्याख्याते चिरन्तने ॥

आगममुद्भावयतस्तु लिखितादित्रयं प्रमाणमित्याह स एव— लिखितमिति ।

उत्सन्नसत्ताप्रवादे क्रयाद्यागमे प्रत्याख्याते प्रतिवादिना निराकृते सति क्षेत्रादिष्वागममुद्भावयतो लिखितसाक्षिभुक्तयः क्रिया प्रमाणमित्यर्थः। ननु कथमागमे भुक्तिः प्रमाणं, अनागममूलाया अपि भुक्तेरपहारादौ दर्शनात्। मैवम्। दीर्घकालादिविशिष्टाया भुक्तेर्मूलान्तरादर्शने सति आगममूलतैवावसीयते, मन्वादिस्मृतेरिव वेदमूलता ।

ननु तथापि स्मरणयोग्ये काले भुक्तावुपक्रान्तायां योग्यानुपलब्ध्या मूलभूतागमाभावनिश्चयात् कथं तत्र भुक्तिबलेनैवागमसिद्धिः ? सत्यं; अत एव तस्मिन् काले उपक्रान्तायां लिखितसाक्षिभ्यामेवागमोऽध्यवसीयते । स्मरणयोग्यकाले तूपक्रान्तायां स्वबलेनापीति

---

+ सवि. स्मृचवत्।

(१) **स्मृच**.६९; **पमा**.१४८ धेनुवा (धनवा); **प्रका**.४५; **समु**.४७. (२) **अप**.२।२८; **स्मृच**.७२; **पमा**.१४२; **प्रका**.४६ बृहस्पतिः; **समु**.४८. (३) **चन्द्र**.१५६.

(४) व्यसौ.६६. (५) **शुनी**.४।७०३-७०५.

(६) **शुनी**.४।७०७-७१०.

(१) **शुनी**.४।७१६-७१७. (२) **शुनी**.४।७१९.

(३) **स्मृच**.७१ तु (तत्); **पमा**.१४१ संधापयतः (सीमापतयः); **प्रका**.४६ स्मृचवत्; **समु**.४८.

(४) **स्मृच**.७१; **पमा**.१४१ गम (गमे) ने (नां); **प्रका**.४६; **समु**.४८.

युक्तमागमे प्रमाणत्रयाभिधानम्। *स्मृच.७१

भोगागमयोः सहकार्ये प्राबल्यदौर्बल्ये त्रिपुरुषभुक्तिप्रामाण्यं च

**[1]अभुक्तिरागमो मोघो भुज्यमाने परैरपि ॥**

आगमशब्देनात्र तत्प्रमाणभूतलिखितसाक्षिणावुक्तौ। स्मृच.६९

**[2]कृतागमस्योक्तकाले भुक्तेः स्यात्प्रभुरागमः।**
**तस्यैवात्मतृतीयस्य प्रभुर्भुक्तिः स्फुटागमा ॥**
**[3]भुक्तिर्या सा चतुर्थस्य प्रमाणं संततागता।**
**परित्यक्तागमा भुक्तिः केवलैव प्रभुर्मता ॥**

* पमा. वाक्यार्थः स्मृचवत्।

(१) **स्मृच.**६९; **प्रका.**४५; **समु.**४७ रपि (रिह). (२) **स्मृच.**७५; **पमा.**१४६ स्यात् (च); **प्रका.**४८; **समु.**४९.

(३) **स्मृच.**७५; **पमा.**१४६ गता (मता); **प्रका.**४८; **समु.**४९.

कृतागमस्य आगमकर्तुः। उक्तकाले त्रिंशद्वर्षात्मक इत्यर्थः। प्रभुः प्रधानम्। स्फुटागमा प्रमाणपरिच्छिन्नागमा। या संततागमा या भुक्तिश्चिरन्तनी चतुर्थादेः प्रमाणं सा परित्यक्तागमनिश्चया प्रभुः सत्वनिर्णयक्षमेति द्वितीयश्लोकार्थः। स्मृच.७९

**[1]स्वतन्त्रैः प्रेतपितृकैर्भुक्ता या पूर्वजैस्त्रिभिः।**
**भुक्तिस्त्रिपुरुषा ज्ञेया यावज्जीवमनुष्ठिता ॥**

इयं च प्रायेणास्मार्तकालोपक्रमभुक्तेरुदाहरणार्थमुदिता। तेन भुक्तेरागमप्रमाणत्वे क्रमात् त्रिपुरुषागतत्वमनुपयोगि, अस्मार्तकालोपक्रमत्वमेवोपयुज्यते। अत एव बृहस्पतिना पुरुषत्रयातिक्रमाभावेऽपि कालत एव भुक्तेस्त्रिपुरुषत्वमुक्तम्। स्मृच.७१-७२

(१) **स्मृच.**७१; **प्रका.**४६; **समु.**४८.

## युक्तिः

### शङ्खलिखितौ

[1] केशाकेशिसंग्रहणात् पारजायिकः, उल्काहस्तोऽग्निदः, शस्त्रपाणिर्घातुकः लोप्त्रहस्तश्चौरः ।

केशाकेशिग्रहणादिति स्त्रीसंग्रहणे वक्ष्यमाणानामन्येषामपि चिह्नानामुपलक्षणम् । लोप्त्रं चौर्यप्राप्तं वस्तु । व्यप्र.१६८

[2] क्षेपेऽष्टशतं यथास्वरूपं वा । रुधिरस्रावे प्रवाहे चाभिव्यक्ते न साक्षिणः । प्रत्यक्षचिह्नाभिव्यक्ते चाष्टशतम् ।

क्षेपे पूर्वोक्तलिङ्गनिश्चितप्रहारापह्नवे अष्टशतं दण्ड इति शेषः । एताश्च युक्तयो दुरवधारणानन्यथासिद्धिमूलकानुमानरूपतया न सर्वसाधारण्यः किन्तु निश्चलस्तेयमात्रविश्रान्ताः, अयमेव हि प्रत्यक्षनिर्णयः सूच्यत इति । व्यचि.७९

### नारदः

[3] असाक्षिप्रत्ययास्त्वन्ये षड्विवादाः प्रकीर्तिताः ।
लक्षणान्येव साक्षित्वे येषामाहुर्मनीषिणः ॥

(१) अत्र विनैव साक्षिभिः लिङ्गादिषु वक्ष्यमाणेषु षट्सु विवादेषु विनयो भवति । अभा.६७

(२) साक्षित्वे साक्षिस्थाने । व्यक.७५

(३) साक्षिस्थानत्वमेतेषां अविनाभावेन । व्यचि.७८

(४) अकृता ग्रामादय उक्ताः, तेऽन्यशब्देनोच्यन्ते । षड्विवादा असाक्षिप्रत्ययाः । तत्र साक्षिणः सन्ति । कथं तर्हि तेऽसाक्षिणः । लक्षणचिह्नैस्ते परिच्छिद्यन्ते, न दर्शनश्रवणानुभवैः । अतो लक्षणान्येव साक्षित्वं साक्षिकार्यं कुर्वन्तीत्यर्थः । नाभा.२।१५१

[1] उल्काहस्तोऽग्निदो ज्ञेयः शस्त्रपाणिश्च घातकः
केशाकेशिगृहीतश्च युगपत्पारदारिकः ॥
[2] कुद्दालपाणिर्विज्ञेयः सेतुभेत्ता समीपगः
तथा कुठारपाणिश्च वनच्छेत्ता प्रकीर्तितः ॥
[3] प्रत्यग्रचिह्नैर्विज्ञेयो दण्डपारुष्यकृन्नरः ।
असाक्षिप्रत्यया ह्येते पारुष्ये तु परीक्षणम् ॥

(१) तत्र आगते सति अग्निदघातकसेतुभेदकानां विषयः । छेत्तुर्वनस्य निषेधातिक्रमे । केशाकेशिग्रहणं च युगपत्पारदारिके । दण्डपारुष्यं घातकविषयम् । वाक्यसंबन्धे चैव हि षड्विवादा इति । प्रत्यक्षचिह्नत्वाच्च

---

(१) व्यक.७६ जायि (दारि) घातु (घात); स्मृच.९५; व्यचि.७८ (सं०) जायि (दारि) घातु (विघात) लोप्त्र (लोष्ट) शङ्खः; व्यत.२२७ (लोप्त्रहस्तश्च चौरः) एतावदेव, शङ्खः; व्यप्र.१६८(सं०) शेषं व्यकवत्; प्रका.६२ लोप्त्र (लोध्र) शङ्खः; समु.३९ घातु ( घात ). (२) व्यक.७६; व्यचि.७८ व्यक्ते न (व्यञ्जन). (३) नासं.२।१५१ क्षित्वे (क्षित्वं); नास्मृ.४।१७२; अभा.६७; व्यक.७५ त्वन्ये ( तुल्ये ); स्मृच.९५ त्वे ये (त्वमे); पमा.११८ विवादाः प्र (वादाः परि) पू.; स्मृसा.११२ स्त्वन्ये ( श्चान्ये ) षड्विवादाः (विवादा ये) साक्षित्वे येषामा (तेषां च एवमा); व्यचि.७८ येषा (तेषा); स्मृचि.५० स्त्वन्ये षट् (श्चान्ये ये); व्यसौ.७० व्यचिवत्; व्यप्र.१६७ व्यचिवत्; प्रका.६१ स्मृचवत्; समु.३९ त्वन्ये (ह्यन्ये) त्वे ये (त्वमे).

(१) नासं.२।१५२ तश्च (तस्तु); नास्मृ.४।१७३ णिश्च (णिस्तु); अभा.६७; व्यक.७५-७६; स्मृच.९५ घात (धातु); पमा.११८; स्मृसा.११२; व्यचि.७८; स्मृचि.५०; व्यत.२२७; सवि.१५९; व्यसौ.७० स्मृचवत्; व्यप्र.१६७; प्रका.६१ स्मृचवत्; समु.३९.

(२) नासं.२।१५३; नास्मृ.४।१७४; अभा.६७ पगः (पतः); व्यक.७६; स्मृच.९५श्च(स्तु); पमा.११८ स्मृचवत्; स्मृसा.११२; व्यचि.७८ पाणि (हस्त); स्मृचि.५० व्यचिवत्; व्यत.२२७ व्यचिवत्; सवि.१६० भेत्ता (च्छेत्ता); व्यसौ.७० तथा ...श्च ( कुठारहस्तो यो दृष्टो ) वन (वने); व्यप्र.१६७ व्यचिवत्; प्रका.६१ स्मृचवत्; समु.३९ स्मृचवत्.

(३) नासं.२।१५४ प्रत्यग्रचिह्नैः (अभ्यग्रचिह्नो); नास्मृ.४।१७५ ग्रचिह्नैः (क्षचिह्नो); अभा.६७ प्रत्य (अत्यु); व्यक.७६ ग्र (क्ष); स्मृच.९५ श्लोकस्तु पतित इति आभाति; पमा.११८ तु ( तत् ); स्मृसा.११२ ग्र (क्ष) तु (च); व्यचि.७८ ग्र (क्ष); स्मृचि.५० ग्र (क्ष); व्यत.२२७ ग्र (क्ष); सवि.१६० ग्र (क्ष); व्यसौ.७० ग्र (क्ष) नरः (नरैः); व्यप्र.१६७-१६८ ग्र (क्ष); प्रका.६१ प्रजापतिः; समु.३९.

विनैव साक्षिभिः प्रत्ययेऽत्र दोष इति। अभा.६८

(२) प्रत्यग्रचिह्नैः नूतनक्षतादिभिः। असाक्षिप्रत्ययाः विनाऽपि साक्षिभिश्चिह्नैरेव विगतसंशयाः। पारुष्ये तु परीक्षणं दण्डपारुष्ये कृत्रिमचिह्नविवेकाय परीक्षणं कर्तव्यमित्यर्थः। स्मृच.९५

(३) प्रत्यक्षचिह्नैः रुधिराक्तखड्गादिभिः। पारुष्ये वाक्पारुष्ये। *व्यचि.७८

(४) उल्काहस्तोऽग्निदो ज्ञेयः। गृहं प्रदीप्तं उल्काहस्तश्च समीपे दृश्यते। उल्काहस्तस्य सशङ्कापरत्वात् तेन प्रदीपितमिति गम्यते। तथैव शस्त्रपाणिर्घातक इति। हतश्च दृश्यते, इतरश्च विकोशितायुधो भयस्थाने धनुर्वा समारोपितज्यं, अन्यश्च न कश्चिद् दृश्यते, शस्त्रं च रुधिरदिग्धं तदीयं, स घातकः। शस्त्रग्रहणं प्रदर्शनार्थम्। मृतश्च दृश्यते, समीपे च मनुष्यः, न च प्रतिरौति, न चान्यं दर्शयति, नाचष्टे वा, स गलागर्त (?) इति गम्यते। केशाकेशिगृहीतः परस्परसंबद्ध इत्यर्थः। असति प्रणये विनापि स्वाम्येन परस्त्रिया संबद्धस्य कः प्रसङ्गः। तस्मात् पारदारिक इति परिच्छिद्यते।

कुरिति भूमेराख्या। भूमिं दारयतीति कर्मोपपदमण्। कपिलादित्वाल्लः। करणसाधनो वा घञ्, बहुलवचनात् सः। कुद्दालः पाणौ यस्य स सेतुभेत्ता। अन्यश्च न दृश्यते, स च तथाभूतः संनिहितः, प्रत्यग्रभिन्नश्च सेतुर्दृश्यते, कोऽन्योऽत्र भविष्यति भेत्ता। 'सेतुं भेत्ते'ति पाठे तृन्। षष्ठी तत्र प्रतिषिध्यते। नास्ति तत्र शब्दचोद्यम्। 'सेतुभेत्ते'ति पाठे तृचि 'कर्तृकर्मणोः कृति' (व्यासू.२।३।६५) इति कर्मणि षष्ठ्या भवितव्यम्। अथवा नेयं कर्मणि षष्ठी, अपि तु संबन्धषष्ठी। ततश्च समासो भवति, मयूरनृत्तमिति यथा। तत्र सामर्थ्यात्संबन्धः क्रियाकारकसंबन्ध एव विज्ञास्यते। तथा कुठारपाणिस्तु वनच्छेत्तेति।

अभ्यग्रचिह्नं यस्य संबन्धि सोऽभ्यग्रचिह्नः अचिरनिर्वृत्तस्य परशरीरे क्षतस्य वस्त्रपाटनकर्णत्रोटनादौ चिह्नस्य कर्ता दण्डपारुष्यं करोतीति दण्डपारुष्यकृत् स नरो विज्ञेयः। असाक्षिप्रत्यया एते। अतिक्रान्ता एते उल्कादयः, उल्कादिलिङ्गादयः। नात्र साक्षिभिः प्रयोजनं, न पूर्वोत्तरवादेन, एतैरेव लिङ्गैर्ग्रहीतव्याः। पारुष्ये तु परीक्षणं कर्तव्यं, न चिह्नमात्रेण ग्रहीतव्यं, व्यभिचारादिति। नाभा.२।१५२-१५४

(५) समीपग इत्यन्यत्रापि संबध्यते। तच्चाविनाभावापादकविशेषणान्तरोपलक्षणम्। परीक्षणं साक्षिगवेषणम्। यद्यपि गालिदानादिश्रवणं प्रत्यक्षचिह्नं संभवति तथापि प्रथमप्रवृत्त्यादिनिश्चयाय साक्ष्याद्यपेक्षेति ध्येयम्। व्यप्र.१६८

**कश्चित्कृत्वात्मनश्चिह्नं द्वेषात्परमुपद्रवेत्।**
**हेत्वर्थगतिसामर्थ्यैस्तत्र युक्तं परीक्षणम्॥**

(१) निगदव्याख्यानश्लोकः। हेतुः कारणं तत्सामर्थ्येन परीक्षा कर्तव्या। अभा.६८

(२) चिह्नं व्रणादि। युक्तिरर्थापत्तिः। हेतुरनुमानम्। अर्थः प्रयोजनम्। संबन्धः संनिधिः पूर्वकलहो वा। परीक्षणं भूतेन व्यवहारनयनार्थम्। स्मृच.२५

तत्र दण्डपारुष्य इत्यर्थः। नन्विदमनर्थकं वचनम्। 'तलवद् दृश्यते व्योम खद्योतो हव्यवाडिव। न तलं विद्यते व्योम्नि न खद्योतो हुताशनः॥ तस्मात्प्रत्यक्षदृष्टेऽपि युक्तमर्थान् परीक्षितुम्। परीक्ष्य ज्ञापयन्नर्थान्न धर्मात्परिहीयते' इति॥ उल्काहस्तादौ सर्वत्र परीक्षणस्य तेनैव विहितत्वात्। सत्यं, तत्रैवोपायविधानार्थं परीक्षणमनूद्यत इत्यदोषः। एवं चौर्यविवादोऽपि कश्चिदसाक्षिप्रत्ययोऽवगन्तव्यः तथा च शङ्खलिखितौ—'केशाकेशीति। स्मृच.९५

(३) परीक्षणे कारणं, व्यभिचारमुपायांश्चाचष्टे—कश्चिदात्मन एव चिह्नं कृत्वा द्वेषाद् दण्ड्यतामयमित्यधिपं गच्छेत् अनेन कृतमिति। एवमपि संभवात् तत्र युक्तं परीक्षणं, न चिह्नमात्रेण ग्रहणम्। कथं परीक्ष्यम्? हेत्वर्थगतिसामर्थ्यैः। हेतुः गद्गदस्वेदमुखशोषादिः, अर्थः क्षतस्याल्पत्वमहत्वादिः, गतिः संभवः, पृष्टे यदि श्वयथुः स्यात् कथमात्मनः संभव इति, सामर्थ्यं बलाबलता,

(१) **नासं**.२।१५५ मुप (मभि); **नास्मृ**.४।१७६; **अभा**.६८; **स्मृच**.२५ द्वेषात (दोषात्) हे...र्थैः (युक्तिहेत्वर्थसंबन्धैः): ९५ हेत्व...र्थैः (युक्तिहेत्वर्थसंबन्धैः); **सवि**.१६० स्मृच.९५वत्, हारीतः; **प्रका**.४०-४१ स्मृच९५वत्: ६१ स्मृच.९५वत्, प्रजापतिः; **समु**.१० स्मृच.९५ वत्.

* व्यत. व्यचिवत्।

कथं दुर्बलो बलवतः शक्नोति क्षतं कर्तुम् ? बलवत्वाद् दुर्बलस्यैवमेव हन्तुं समर्थः, किमर्थं क्षतं करिष्यतीत्येवमादीनि परीक्षेत साक्ष्यभावेन । नाभा.२।१५५

**प्रमादाद्धनिनो यत्र न स्याल्लेख्यं न साक्षिणः ।**
**अर्थं चापह्नुते वादी तत्रोक्तस्त्रिविधो विधिः ×॥**
**चोदना प्रतिकालं च युक्तिलेशस्तथैव च ।**
**तृतीयः शपथः प्रोक्तस्तैरेनं साधयेत्क्रमात् *॥**

(१) तत्र चोदना—साक्षिप्रयुक्ते प्रयोजने साक्षिणामृणिकस्य च प्रतिकालं संस्मरणम् । युक्तिलेशः—पूर्वदत्तस्य द्रव्यस्य पूर्वसंप्रतिपत्तिर्यस्य वा युक्त्युद्देशः । तृतीयः शपथः । दत्तशुद्धकृतनाशतण्डुलकोशादिकैरुपायैरेनमर्थापह्नविनं साधयेदिति । अभा.७२

(२) प्रतिकालं चोदना प्रत्यर्पणकालो यदा यदा प्राप्तस्तदा मदीयं दीयतामिति त्रिचतुःपञ्चकृत्वो वा मध्यस्थजनसमक्षमन्येनाप्रतिहता प्रतिदानप्रेरणा सा प्रथमोपायः । तदसंभवे युक्तिलेशः । अमुष्मिन् देशे अमुष्मिन् कालेऽमुनाऽर्थसंबन्धेन इयत्परिमाणमेतत्कर्मार्थमृणं गृहीतं त्वयेत्यादिर्द्वितीयोपायः । तस्याप्यसंभवे तृतीयोपायः शपथ इत्यर्थः । स्मृच.५२

(३) काले काले महाजनसमक्षं चोदना देहीति, हेतुस्तत्वावगमे । भूयो भूयोऽमुष्यामुष्य च सकाशे चोदितोऽयमिति विभाविते स परिच्छिद्यते धारयतीति । युक्तिलेशः कस्यचिदेकदेशस्य कदाचिदादानं, 'अमुना त्वया प्रेषितेन मत्सकाशाद् गृहीत्वामुत्रामुत्र च व्ययितव्यम्' (इति) । तृतीयः शपथः मानुषो दैवश्च । एतैस्तत्त्वमधिगच्छेत् । नाभा.२।२१२

**अभीक्ष्णं चोद्यमानो यः प्रतिहन्यान्न तद्वचः ।**
**त्रिचतुःपञ्चकृत्वो वा परतोऽर्थं स दापयेत् ॥**

(१) अत्राऽभीक्ष्णं वचनं बहुशः पृच्छ्यमानोऽपि ऋणी यदा तदीयं वचः कथमपि न प्रतिपद्यते तदा चोदनायाः परत अन्यमुपाचरेत् । युक्तिलेशादिकं तथा च वक्ष्यति । अभा.७२

(२) यदा धनिकेनाधमर्णिकस्त्रिचतुःपञ्चकृत्वो वा त्वं मे ऋणं धारयसीति पुनः पुनर्देश्यमानोऽपि न तद्वाक्यं प्रतिहन्ति तदोत्तरकालमनेनाभ्युपगतोऽयमर्थ इत्यवधार्य तमर्थमृणिकाय दापयेदित्यर्थः । *व्यत.२२७

(३) परतः तदूर्ध्वम् । व्यप्र.१६८

**[१]चोदनाप्रतिघाते तु युक्तिलेशैस्तमन्वियात् ।**
**देशकालार्थसंबन्धपरिमाणक्रियादिभिः ॥**

(१) अत्र चोदनाप्रतिघाते सामान्यवचनपृच्छाया असंप्रतिपत्तौ युक्तिलेशैस्तथान्वियात् । अथ कैस्तैः देशकालार्थसंबन्धपरिमाणक्रियाभिः यथाक्रमं स्वयं स्मृतैस्तस्य स्मारितैरिति । अभा.७२

(२) अयमर्थः—यदा नाहं धारयामीति देशनाप्रतिषेधं कृतवान्, तदा अनुमानादिभिर्युक्तिभिर्निर्णयः करणीयः । तद्यथा, यस्मिन् काले यस्मिन् देशे येन वा प्रयोजनसंबन्धेन धनिकेनाधमर्णिकस्य ऋणग्रहणाभियोगः कृतः । तद्यदि तद्देशे तत्काले तेन वा प्रयोजनेन तस्य ऋणग्रहणमसंभावितमेव तदा युक्त्यैव निर्णयः । एवं यस्य शतवित्तसंभावनाऽपि नास्ति स यदि सहस्राभियोगं कुरुते तदा युक्त्यापि निर्णय इति । एवं चाधमर्णिक-

---

× व्याख्यानं स्थलादिनिर्देशश्च क्रियाप्रकरणे (पृ. २२२) द्रष्टव्यः ।

* स्थलादिनिर्देशः क्रियाप्रकरणे (पृ. २२२) द्रष्टव्यः ।

(१) **नासं**.२।२१३ यः(ऽपि) त्रिच (त्रिश्च) स दापयेत् (समाचरेत्); **नास्मृ**.४।२३७त्रिच (त्रिश्च); **शुनी**.४।७२४ यः(ऽपि) पयेत् (प्यते); **अभा**.७२ हन्यात् (पद्येत) र्थं (न्यं) स दापयेत् (समाचरेत्); **व्यक**.७५ नासंवत्; **स्मृच**.५२ नासंवत्; **पमा**.९१ यः (ऽपि) स दापयेत् (समाचरेत्) क्रमेण कात्यायनः; **स्मृसा**.११२ चोद्य (देश्य) यः (ऽपि) स दापयेत् (तमाहरेत्); **व्यचि**.७६ यः (ऽपि) पयेत् (प्यते); **स्मृचि**.५० चोद्य (वेद्य) पयेत् (प्यते); **नृप्र**.८ यः(ऽपि); **व्यत**.२२७ यः (ऽपि) चोद्य (देश्य) स दापयेत् (तमावहेत्); **चन्द्र**.१५८ चोद्य (देश्य) यः (ऽपि) तत् (चेत्) पयेत् (प्यते); **व्यसौ**.७० चोद्य (देश्य) शेषं व्यचिवत्; **व्यप्र**.१६८ व्यचिवत्; **सेतु**.११४ यः (ऽपि) स दापयेत् (तमाहरेत्); **प्रका**.९७ नासंवत्; **समु**.२५-२६ यः(ऽपि) र्थं स दापयेत्(र्थी समाचरेत्).

* नाभा., सेतु. व्यतवत् ।

(१) **नासं**.२।२१४; **नास्मृ**.४।२३८; **अभा**.७२ स्तम (स्तथा); **व्यक**.७५ घाते तु (कालं च); **स्मृच**.५२ तम(सम); **पमा**.९१ शैस्तम (खैः सम) माण (णाम) क्रमेण कात्यायनः; **स्मृसा**.११३ चोदना (देशना) शैस्त (शस्त); **व्यचि**.७७; **स्मृचि**.५० चोदना (देशना) तु (च); **नृप्र**.८ शैस्तम (ख्यैस्तथा); **व्यसौ**.७० चोदना (देशना); **व्यप्र**.१६९ तु (च); **प्रका**.९७ स्मृचवत्; **समु**.२६ स्मृचवत्.

क्रियादयोऽपि । यत्र प्रतिमासं पुराणद्वयकलादानरूपाः क्रियाः प्रतीयन्ते, तत्रापि शतं धारयतीति युक्त्या प्रतीयते । तदुक्तम्—'देशकालार्थसंबन्धपरिमाणक्रियादिभिः' इति ।
×स्मृसा.११३

## बृहस्पतिः

(१)असाक्षिके चिरकृते पृच्छेदुत्तरसाक्षिणः ।
शपथान् वा प्रयुञ्जीत उपधां वा प्रयोजयेत् ॥

(१) उपधां शुद्धिम् । व्यक.७५

(२) उपधा युक्तिरिति कल्पतरौ । व्यप्र.१६८

## कात्यायनः

लिङ्गोद्देशस्तु युक्तिः स्यात् * ।
(२)श्राव्यमाणोऽर्थिना यत्र यो ह्यर्थो न विघातितः ।
दानकालेऽथवा तूष्णीं स्थितः सोऽर्थानुमोदकः ॥
(३)अर्थिनाऽभ्यर्थितो यस्तु विघातं न प्रयोजयेत् ।
त्रिचतुःपञ्चकृत्वो वा परतस्तद्दणी भवेत् ॥
(४)स्वामिना नृपतिर्विप्रं क्रमेणोक्तं प्रदापयेत् ।
ततोऽन्यं दापयेत्पूर्वं सकृदुक्ताभिघातिनम् ॥

स्वामिना उत्तमर्णेन उक्तं, धनं मे देहीति याचितं विप्रं विघातिनं क्रमेण दापयेत् । विप्रान्याधमर्णोऽक्रमेणापि इत्यर्थः । असकृत्प्रार्थितमविहितं धनं विप्रो दाप्यः सकृत्प्रार्थितमप्यविहितमविप्रो दाप्य इत्यन्ये ।
व्यचि.७७

(१)दानं प्रज्ञापनाभेदः संप्रलोभक्रिया च या ।
वित्तापनयनं चैव हेतवो हि विभावकाः ॥

(१) दानं उत्कोचदानम् । प्रज्ञापनाभेदो येन चिह्नेन ज्ञायते तदन्यथाकरणम् । संप्रलोभक्रिया विषयचित्तान्तरे (?) तदधिकलोभोत्पादनम् । एतैः कारणैरभियोज्यभङ्गो ज्ञेयः । स्मृसा.११२

(२) संप्रयोगक्रिया विषयान्तरे तदावरद (?) कोत्पादनम् । +व्यचि७८

(३) चित्तापनयनं चित्तगोपनम् । चन्द्र.१५८

(४) संप्रलोभक्रिया साक्षिसभ्यादिभ्यो लोभप्रदर्शनम् । वित्तापनयनं वित्तगोपनम् । +व्यप्र.१६९

(२)एषामन्यतमो यत्र वादिना भावितो भवेत् ।
मूलक्रिया तु तत्र स्याद्भावितो वादिनिह्नवे ॥

एषामन्यतमो हेतुर्यत्र वादिना प्रतिवादिनाऽधमर्णादेरुपरि भावितः प्रमाणेन साधितो भवेत्तदा, मूलक्रियाऋणापहरणादिरूपा तदुपरि सिद्धैव । एषां तदविनाभावादिति भावः । व्यप्र.१६९

## प्रजापतिः

(३)अन्वयव्यतिरेकाभ्यां यस्य यद्गमकं भवेत् ।
सा तु युक्तिस्तस्य भवेत्तथा सर्वं विशोधयेत् ॥

## शुक्रनीतिः

(४)विशिष्टतर्किता या च शास्त्रशिष्टाऽविरोधिनी ।
योजना स्वार्थसंसिद्ध्यै सा युक्तिस्तु न चान्यथा ॥

---

× व्यचि. स्मृसागतम् ।

* व्याख्यासंग्रहः स्थलादिनिर्देशश्च क्रियाप्रकरणे 'साक्षिणो लिखितं भुक्तिः' इति श्लोके ( पृ. २२७ ) द्रष्टव्यः ।

(१) व्यक.७५; व्यचि.७६; व्यसौ७०; व्यप्र.१६८ थान् (थैः) प्रयु (तु यु); समु.२६ उत्तरार्धे (शपथान् वा प्रयुञ्जीत युक्तिलेशमथापि वा).

(२) व्यक.७५; व्यचि.७७. (३) व्यक.७५; व्यचि. ७७ नाऽभ्यर्थितो यस्तु (नैवार्थितो यत्र); व्यप्र.१६८; विता. १५२ नाभ्य (नैवा). (४) व्यक.७५; व्यचि.७७ उक्ता (युक्ता).

+ शेषं स्मृसागतम् ।

(१) शुनी.४।७२३ वित्ता (चित्ता); व्यक.७५ वित्ता (चिन्ता); स्मृसा.११२ वित्ता (चित्ता); व्यचि.७८ लोभ (योग); स्मृचि.५० च या (यथा) वित्ता (चित्ता); चन्द्र.१५८ वित्ता (चित्ता) चैव (चापि) हि (ऽपि); व्यसौ.७० प्रज्ञा (विज्ञा) वित्ता (चित्ता); व्यप्र.१६९.

(२) व्यक.७५ तो वादि (तैर्वापि); व्यसौ.७०; व्यप्र. १६९. (३) प्रका.६१ तस्य (तत्र); समु.२६ सा तु (सात्र).

(४) शुनी.४।७२२.

# दिव्यम्

## शपथः

### वेदाः

**अद्या मुरीय यदि यातुधानो अस्मि यदि वायुस्ततप पूरुषस्य ।**

यद्यहं वसिष्ठो यातुधानो राक्षसोऽस्मि तर्हि अद्यास्मिन्नेव दिने मुरीय म्रियेय । अपि वा पुरुषस्य मनुष्यस्य आयुर्जीवितं यद्यहं राक्षसो भूत्वा ततप हिंसितवानस्मि, तर्ह्यपि अहमद्य म्रियेय । ऋसा.

**अनेनसमेनसा सोऽभिशस्तादेनस्वतो वाऽपहरादेनः ।**

**एकातिथिमप सायं रुणद्धि बिसानि स्तेनो अप सो जहारेति ॥**

पुरा कदाचित् सप्तर्षीणां संवादप्रसङ्गे कश्चित्पुरुषो बिसस्तैन्यलक्षणमपवादं प्राप्य तत्परिहारार्थमृषीणामग्रे शपथं चकार । तदीयशपथोक्तिरूपेयं गाथा । बिसानि पद्ममूलानि तेषामपहर्ता प्रत्यवायपरम्परां प्राप्नोतु । पापरहिते पुरुषे पापविषयमपवादं कृतवतो यः प्रत्यवायः पापिनः पुरुषस्य संबन्धी पापं स्वीकुर्वतो यः प्रत्यवायः सायंकाले गृहे समागच्छत एवातिथेर्वैदेशिकस्यापरोधने यः प्रत्यवायः सेयं प्रत्यवायपरम्परा बिसस्तैन्ये सति मम भूयादित्येवं शपथः । अक्षरार्थस्तु— अप्रसिद्धो मादृशः पुरुषः स्तेनश्चोरो भूत्वा बिसान्यपजहार चेत् स पुमाननेनसं पापरहितं पुरुषं श्रोत्रियमेनसाऽभिशस्तात्पापेनाभिशंसनमपवादं कुर्यात् । तथैष स बिसापहारी, एनस्वतः पापयुक्तस्य पुरुषस्य यदेनः पापमस्ति तदपहरेत् स्वीकुर्यात् । तथा स बिसापहारी सायंकाले गृहे समागतमेकातिथिमपरुणद्धि भोजनमदत्त्वा निःसारयेत् । ऐब्रासा.

### गौतमः

**शपथेनैके सत्यकर्म ।**

(१) ऋसं.७।१०४।१५. (२) ऐब्रा.२५।५.
(३) गौध.१३।१३; व्यक.५३ के (केन); मभा.;

(१) सत्यकर्म सत्यव्यवस्थानम् । व्यक.५३

(२) यदा तु साक्ष्यादिप्रमाणान्तरप्रत्यस्तमयः तदा शपथेन कोशादिना एके सत्यकर्म सत्यव्यवस्थापनमिच्छन्ति । शपथश्च प्रयुज्यमानस्य, इतरेण व्यवसितत्वात् । सत्यमिति वक्तव्ये कर्मग्रहणं व्यवहारादन्यत्रापि लौकिकव्यवहारसंदेहे शपथस्यानुप्रवेशार्थम् । तथा च श्रुतिः— 'अद्या मुरीय यदि यातुधानो अस्मी'त्यादि । गौतमस्तु न्यायेनैव । तत्र प्रमाणलेशेऽसति शपथं, सति न्याय एवेति द्रष्टव्यम् । मभा.

(३) यत्र साक्षिषु तथा विश्वासो न भवति तत्र शपथेन सत्यकर्म शपथं कारयित्वा सत्यं वाचनीयमित्येके मन्यन्ते । गौमि.

**तद्देवराजब्राह्मणसंसदि स्यादब्राह्मणानाम् ।**

(१) तच्छपथं देवसंसदि देवसंनिधौ । देवशब्देन देवताप्रतिमाः आदित्यादयो वा उच्यन्ते । राजा व्यवहारदर्शी । ब्राह्मणाः सभ्यादयः तद्ग्रहणं लौकिकव्यवहारनिवृत्त्यर्थम् । एवं च व्यवहारे देवतादिसंनिधौ, लौकिके यत्रकुत्रचिदिति द्रष्टव्यम् । अर्थान्तरनिमित्तो व्यवहारः, अपराधनिमित्तो लौकिक इति । अब्राह्मणाः क्षत्रियादयः । स्याद्ग्रहणं क्रमनिवृत्त्यर्थम् । तत्र देवताऽलाभे विप्रसंसदि, तदलाभे राजसंसदि द्रष्टव्यम् । तथा च स्मृत्यन्तरम्—'अब्राह्मणान्नृपः सम्यक्कारयेद्देवसंनिधौ । शपथं तदलाभे च ब्राह्मणस्य समीपतः ॥ तदलाभे नृपस्याथ भगवान् काश्यपोऽब्रवीत्' इति ॥ अलाभोऽपि कार्यान्तरव्यग्रापेक्षया द्रष्टव्यः । अविप्राणामिति वक्तव्ये गुरुसूत्रकरणमश्रोत्रियब्राह्मणस्यापि देवतासंनिधिप्रवेशा-

गौमि.१३।१२; व्यचि.५० व्यकवत्; चन्द्र.१४६ व्यकवत्; व्यसौ.५१; वीमि.२।७५ शपथेनैके (स येनैकेन); प्रका.५५ सत्य (सत्यं); समु.३५. (१) गौध.१३।१४; व्यक.५३; मभा.; गौमि.१३।१३; व्यचि.५० (राज०); चन्द्र.१४६ तद्देव (तदेव); व्यसौ.५१; वीमि.२।७५ तद्देव (तदेव) (राज०); प्रका.५५; समु.३५.

र्थम् । एवं च श्रोत्रियब्राह्मणस्य सत्यशब्दोच्चारणमात्रादेव शपथं भवतीति द्रष्टव्यम् । स्मृत्यन्तरोपसंग्रहार्थं स्याद् ग्रहणमित्येके । यथाह मनुः—'सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः । गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ' इति ॥ देवराजब्राह्मणसमक्षमिति वक्तव्ये संसदिग्रहणं देवतायाः संनिहितस्थानोपसंग्रहार्थम् । सभायाश्च छलादिदोषरहितायाः । मभा.

(२) तच्छपथेन सत्यकर्म देवसंसदि उग्राणां देवतानां संनिधौ ब्राह्मणानां संसदि परिषदि वा भवति । क्षत्रियादीनामर्थगुरुत्वलघुत्वापेक्षो विकल्पः । महत्यर्थे देवतासंनिधौ अल्पीयसि अन्यत्रेति । अब्राह्मणानामिति वचनाद् ब्राह्मणानां शपथकर्म न भवति । अत्र विष्णुः—'पृच्छेद् ब्रूहीति ब्राह्मणम् । सत्यं ब्रूहीति राजन्यम् । गोबीजकाञ्चनैर्वैश्यम् । सर्वपातकैः शूद्रम् । एवं हि साक्षिणः पृच्छेद्वर्णानुक्रमतो नृपः' इति । मनुस्तु—'सत्येन शापयेद् विप्रं क्षत्रियं वाहनायुधैः । गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः' इति॥ गौमि.

(३) एवं च ब्राह्मणव्यतिरिक्तानामपि साक्षिणां एकशपथोक्तौ, 'क्षत्रियं वाहनायुधैरि'त्यादि बहुशपथोक्त्यां विरोध इति न देश्यं गौतमवचनस्य गुणवत्साक्षिविषयतया पारिजाते संकोचनादिति । व्यचि.५०

## विष्णुः

**[1]सर्वेष्वेवार्थजातेषु मूल्यं कनकं कल्पयेत् ।**

अत्र कनकपदं परिमाणसुवर्णपरम् । व्यचि.९०

**[2]तत्र कृष्णलोने शूद्रं दूर्वाकरं शापयेत् ।**

(१) ऊनग्रहणं अधिके शापविधिनिवृत्त्यर्थम् । कृष्णलं तु व्यावहारिकनिष्कस्य विंशतितमो भागः ।

*स्मृच.१००-१०१

(२) सुवर्णदूर्वादि यथाक्रमं करे नियम्य शपथाः कार्याः । व्यचि.९०

(३) कृष्णलः काञ्चनरत्तिका । तन्मूल्यादूने कृष्णलोने । एवमन्यत्र । व्यत.२२८

(४) मतान्तरे तु पञ्चकृष्णलाः पलं, तत्र लौकिकव्यवहारे मानचतुष्टयं कृष्णलमित्युच्यते, तण्डुलपरिमितमानमिति प्रसिद्धम् । मानवयाज्ञवल्क्ययोः शास्त्रयोः काकणिकद्वयन्यूनमानसप्तकं कृष्णलमित्युच्यते । वैष्णवे धर्मशास्त्रे काकणिकत्रयन्यूनं मानवकृष्णलमित्युच्यते । एवं त्रिविधेषु कृष्णलेषु सत्सु वैष्णवधर्मशास्त्रोक्तकृष्णलमेवाश्रयितुमुचितमिति । काकणिकत्रयं न्यूनमानषट्कं कृष्णलमेवात्र स्वत आश्रियते । मानवकृष्णलं तु कर्तृगुणादिभिराश्रियते । तत्र यावताऽपहृतद्रव्येण कृष्णलपूर्तिः । तत्कृष्णलापहारे उपोषितः स्नात आर्द्रपटः शूद्रो देवब्राह्मणसंनिधौ दूर्वाकरः शपथं कुर्यात् ।

×सवि.१७५

**[1]द्विकृष्णलोने तिलकरम् ।**

एवम्भूतं द्वितीयकृष्णलादारभ्य आतृतीयकृष्णलाच्छूद्रः तिलकरः शपथं कुर्यात् । सवि.१७५

**[2]त्रिकृष्णलोने रजतकरम् ।**

तृतीयकृष्णलादारभ्य आचतुर्थाद्रजतपाणिः शपथं कुर्यात् । सवि.१७५

**[3]चतुःकृष्णलोने सुवर्णकरम् ।**

---

(१) **विस्मृ.**९।४; **अप.**२।९९; **व्यक.**७८ ल्यं कनकं (ल्ये स्वर्णं प्र); **स्मृच.**१०० ष्वेवा (ष्व); **पमा.**१५५ ष्वेवा (षु चा); **स्मृसा.**११६ कं+(प्र); **व्यचि.**८९ कनकं (पणं प्र); **नृप्र.**१३ ष्वेवा (षु चा) कनकं (स्वर्णं च); **व्यत.**२२८ स्मृसावत्; **दित.**६१२ (सर्वेष्वर्थविवादेषु मूल्यं स्वर्णं प्रकल्पयेत्); **सवि.**१७४ ष्वेवा (ष्व) कं+(परि); **चन्द्र.**१६२ कं+(तु); **व्यसौ.**७२ ष्वेवा (ष्व) मूल्यं कनकं (कनकं मूल्यं प्र): ८९ ष्वेवा (ष्व); **वीमि.**२।९९; **व्यप्र.**१७४; **प्रका.**६४ स्मृचवत्; **समु.**५३ स्मृचवत्.

(२) **विस्मृ.**९।५; **व्यक.**९८; **स्मृच.**१००; **पमा.**१५५; **व्यचि.**८९; **व्यत.**२२८; **दित.**६१२; **सवि.**१७४ (शूद्रं०); **व्यसौ.**८९; **व्यप्र.**१७४ तत्र+(च); **प्रका.**६४; **समु.**५३.

* व्यप्र. स्मृचगतम् । × शेषं स्मृचवत् ।

(१) **विस्मृ.**९।६; **व्यक.**९८; **स्मृच.**१००; **पमा.**१५५; **व्यचि.**८९; **व्यत.**२२८; **दित.**६१२; **सवि.**१७४ लोने+(तु); **व्यसौ.**८९; **व्यप्र.**१७४; **प्रका.**६४; **समु.**५३.

(२) **विस्मृ.**९।७; **व्यक.**९८; **स्मृच.**१००; **पमा.**१५५; **व्यचि.**८९; **व्यत.**२२८ रजत-(जल); **दित.**६१२ व्यतवत्; **सवि.**१७४; **व्यसौ.**८९; **व्यप्र.**१७४; **प्रका.**६४; **समु.**५३.

(३) **विस्मृ.**९।८; **व्यक.**९८; **स्मृच.**१००; **पमा.**१५५; **व्यचि.**८९ सुवर्ण (कनक); **व्यत.**२२८ सुवर्ण (स्वर्ण); **दित.**६१२; **सवि.**१७४; **व्यसौ.**८९; **व्यप्र.**१७४; **प्रका.**६४; **समु.**५३.

कृष्णलचतुष्टयादारभ्यापञ्चमाच्छूद्रो हिरण्यपाणिः शपथं कुर्यात् । सवि.१७५

[1]पञ्चकृष्णलोने सीरोद्धृतमहीकरम् ।

(१) लाङ्गलोद्धृतलोष्टहस्तमित्यर्थः । स्मृच.१००

(२) कृष्णलपञ्चकादारभ्याषष्ठाच्छूद्रो लाङ्गलोद्धृतलोष्टकरः शपथं कुर्यात् । सवि.१७५

[2]सुवर्णार्द्धोने कोशो देयः शूद्रस्य ।

(१) सुवर्णार्द्धोने उपरिकल्प्यमानकिञ्चिन्न्यूने सुवर्णार्धमूल्ये । व्यक.७८

(२) अशीतिरक्तिकं हिरण्यं सुवर्णः, तदर्द्धे किञ्चिन्न्यूने इत्यर्थः । चन्द्र.१६२

[3]ततः परं यथार्हं धटाग्न्युदकविषाणामन्यतमम् ।

(१) यथार्हं स्तेयसाहसयोः । व्यचि.९०

(२) ततः परं किञ्चिन्न्यूनसुवर्णार्धात्परमित्यर्थः । चन्द्र.१६२

[4]द्विगुणेऽर्थे यथाभिहिता समयक्रिया वैश्यस्य ।

द्विगुणेऽर्थे पूर्वोक्तसुवर्णार्धात् द्विगुणीभूते । एवं त्रिगुणादावपि । यथाभिहिता समयक्रिया कोशपानादिरूपा । *व्यक.७८

* स्मृसा. व्यकवत् ।

(१) **विस्मृ**.९।९ सीरो (सीतो); **व्यक**.९८ विस्मृवत्; **स्मृच**.१००; **पमा**.१५५ सीरो (शिरो); **व्यचि**.८९ विस्मृवत्; **व्यत**.२२८ विस्मृवत्; **दित**.६१२ विस्मृवत्; **सवि**.१७४; **व्यसौ**.८९ विस्मृवत्; **व्यप्र**.१७४; **प्रका**.६४; **समु**.५३.

(२) **विस्मृ**.९।१०; **अप**.२।९९ सुवर्णार्द्धोने (तत्र सुवर्णार्धेन); **व्यक**.७८ देयः (दातव्यः): ९८; **स्मृसा**.११६ सुवर्णा (तत्र सुवर्णा); **व्यचि**.९० सुवर्णार्द्धोने (स्वर्णार्द्धे); **व्यत**.२२८; **दित**.६१२; **सवि**.१७४; **चन्द्र**.१६२ (शूद्रस्य०) शेषं स्मृसावत्; **व्यसौ**.७२; **वीमि**.२।९९; **व्यप्र**.१७५ स्मृसावत्; **समु**.५३.

(३) **विस्मृ**.९।११; **अप**.२।९९; **व्यक**.७८; **स्मृसा**.११६; **व्यचि**.९०; **सवि**.१७४ग्न्युदक(ग्न्यम्बु); **चन्द्र**.१६२; **व्यसौ**.७२; **वीमि**.२।९९; **व्यप्र**.१७५; **समु**.५३ सविवत्.

(४) **विस्मृ**.९।१२; **अप**.२।९९; **व्यक**.७८ णेऽ(णा) यथाभि (वि): ९८; **स्मृच**.१००; **पमा**.१५५; **स्मृसा**.११६ णेऽ (णा); **व्यचि**.९० णेऽर्थे (णार्थेषु) भि (वि) क्रिया +(च); **व्यत**.२२८ (यथासमये विहिता क्रिया तथा द्विगुणेऽर्थे राजन्यस्य); **दित**.६१२ (द्विगुणेऽर्थे०) भि (वि) क्रिया + (तथा द्विगुणेऽर्थे); **सवि**.१७४ णेऽर्थे (णार्धे); **चन्द्र**.१६२ णेऽ(णा) हिता (मत); **व्यसौ**.७२; **वीमि**.२।९९; **व्यप्र**.१७५ णेऽ(णा); **प्रका**.६४; **समु**.५३.

[1]त्रिगुणे राजन्यस्य ।

शूद्रकोशार्हधनात् द्विगुणयोर्वैश्यक्षत्रियाभ्यां कोश एव कार्यः । व्यचि.९०

[2]कोशवर्जं चतुर्गुणे ब्राह्मणस्य । न ब्राह्मणस्य कोशं दद्यात् । अन्यत्र आगामिकालसमयनिबन्धनक्रियातः ।

(१) अस्माभिर्मिलित्वा एवं कर्तव्यमेवेति यत्समयकरणं तस्मादन्यत्र । *व्यक.७८

(२) अस्माभिर्मिलित्वा एवं कर्तव्यमिति यत्र समयः कृतः तस्मादन्यत्र । तत्र तु ब्राह्मणस्यापि कोशो देयः । व्यचि.९०

[3]कोशस्थाने ब्राह्मणं सीतोद्धृतमहीकरमेव ।

* स्मृसा. व्यकवत् ।

(१) **विस्मृ**.९।१३; **अप**.२।९९ णे+(ऽर्थे); **व्यक**.७८, ९८ अपवत्; **स्मृच**.१०० अपवत्; **पमा**.१५६ अपवत्; **स्मृसा**.११६ णे (णार्थे); **व्यचि**.९० अपवत्; **व्यत**.२२८ णे+(ऽर्थे) राजन्य (वैश्य); **दित**.६१२ अपवत्; **सवि**.१७४ स्मृसावत्; **चन्द्र**.१६२ त्रिगुणे (द्विगुणार्थे); **व्यसौ**.७२ त्रिगुणे (द्विगुणा); **वीमि**.२।९९; **व्यप्र**.१७५ अपवत्; **प्रका**.६४ अपवत्; **समु**.५३ अपवत्.

(२) **विस्मृ**.९।१४-१६ आगामि (गामि); **अप**.२।९९ णे +(ऽर्थे) (न ब्राह्मणस्य०) (अन्य ... तः०); **व्यक**.७८ णे+(ऽर्थे) (आगामि०): ९८ (कोशवर्जं०) णे + (ऽर्थे) (न ब्रा... यातः०); **स्मृच**.१०० व्यक.९८वत्; **पमा**.१५६ णे + (ऽर्थे) (न ब्रा... यातः०); **स्मृसा**.११६ र्गुणे (र्गुणार्थे) न्धन (न्ध); **व्यचि**.९० (कोशवर्जं०) णे + (ऽर्थे); **व्यत**.२२८ व्यक.९८वत्; **दित**.६१२ व्यक.९८. वत्; **सवि**.१७५ व्यक. ९८ वत्; **चन्द्र**.१६२ णे (णार्थे) (न ब्राह्मणस्य०); **व्यसौ**.७२ णे (ऽर्थे) आगामि (गामि): ८७ (कोशवर्जं चतुर्गुणे ब्राह्मणस्य०) (काल०); **वीमि**.२।९९ निबन्ध (बन्ध); **व्यप्र**.१७५ णे+(ऽर्थे); **प्रका**.६४ व्यक. ९८ वत्; **समु**.५३ णे+(ऽर्थे) (न ब्रा... अन्यत्र०).

(३) **विस्मृ**.९।१७; **व्यक**.७८ सीतो (सीरो) मेव (मेवं शापयेत्); **स्मृसा**.११६ मव+(शापयेत्); **व्यचि**.९० स्थाने+

सीतोद्धृतमहीकरं हलोत्खातमृत्तिकाहस्तम् ।

स्मृसा.११६

प्राग्दृष्टदोषं स्वल्पेऽप्यर्थे दिव्यानामन्यतममेव कारयेत् ।

स्वल्पेऽप्यर्थे ऋणादौ तु शतसुवर्णाद्यभियोगे ।

व्यचि.९०

सत्सु विदितं सच्चरित्रं न महत्यर्थेऽपि ।

(१) सत्सु विदितं शिष्टेषु प्रसिद्धम् । न महत्यपि धटादीनामन्यतमं कारयेदित्यर्थः । ×व्यक.७८

(२) किन्तु सत्यादिकमेव कारयेत् । +चन्द्र.१६२

## महाभारतम्

बिसाख्यानम्

ततस्ते मुनयः सर्वे पुष्कराणि बिसानि च ।
यथाकाममुपादाय समुत्तस्थुर्मुदान्विताः ॥
श्रमेण महता कृत्वा ते बिसानि कलापशः ।
तीरे निक्षिप्य पद्मिन्यास्तर्पणं चक्रुरम्भसा ॥
अथोत्थाय जलात्तस्मात्सर्वे ते समुपागमन् ।
नापश्यंश्चापि ते तानि बिसानि पुरुषर्षभाः ॥

ऋषय ऊचुः–

केन क्षुधापरीतानामस्माकं पापकर्मणा ।
नृशंसेनापनीतानि बिसान्याहारकाङ्क्षिणाम् ॥
ते शङ्कमानास्त्वन्योन्यं पप्रच्छुर्द्विजसत्तमाः ।
त ऊचुः समयं सर्वे कुर्म इत्यरिकर्षण ॥

त उक्त्वा बाढमित्येवं सर्व एव तदा समम् ।
क्षुधार्ताः सुपरिश्रान्ताः शपथायोपचक्रमुः ॥

अत्रिरुवाच–

स गां स्पृशतु पादेन सूर्यं च प्रतिमेहतु ।
अनध्यायेष्वधीयीत बिसस्तैन्यं करोति यः ॥

वसिष्ठ उवाच–

अनध्याये पठेल्लोके शुनः स परिकर्षतु ।
परिव्राट् कामवृत्तस्तु बिसस्तैन्यं करोति यः ॥
शरणागतं स निहन्तु स्वसुतां चोपजीवतु ।
अर्थान् काङ्क्षतु कीनाशाद्बिसस्तैन्यं करोति यः ॥

कश्यप उवाच–

सर्वत्र सर्वं लपतु न्यासलोपं करोतु च ।
कूटसाक्षित्वमभ्येतु बिसस्तैन्यं करोति यः ॥
वृथा मांसाशनश्चास्तु वृथा दानं करोतु च ।
यातु स्त्रियं दिवा चैव बिसस्तैन्यं करोति यः ॥

भरद्वाज उवाच–

नृशंसस्त्यक्तधर्मास्तु स्त्रीषु ज्ञातिषु गोषु च ।
ब्राह्मणं चापि जयतां बिसस्तैन्यं करोति यः ॥
उपाध्यायमधः कृत्वा ऋचोऽध्येतु यजूंषि च ।
जुहोतु च स कक्षाग्नौ बिस ... ... ॥

जमदग्निरुवाच–

पुरीषमुत्सृजत्वप्सु हन्तु गां चैव दुह्यतु ।
अनृतौ मैथुनं यातु बिस ... ... ... ॥
द्वेष्यो भार्योपजीवी स्यात् दूरबन्धुश्च वैरवान् ।
अन्योऽन्यस्यातिथिश्चास्तु बिस ... ... ॥

गौतम उवाच–

अधीत्य वेदांस्त्यजतु त्रीनग्नीनपविद्ध्यतु ।
विक्रीणातु तथा सोमं बिस ... ... ॥
उदपानप्लवे ग्रामे ब्राह्मणो वृषलीपतिः ।
तस्य सालोक्यतां यातु बिस... ... ... ॥

विश्वामित्र उवाच–

जीवतो वै गुरून् भृत्यान् भरन्त्वस्य परे जनाः ।
अगतिर्बहुपुत्रः स्यात् बिस ... ... ॥
अशुचिर्ब्रह्मकूटोऽस्तु ऋध्या चैवाऽप्यहङ्कृतः ।
कर्षको मत्सरी चास्तु बिस ... ... ॥
वर्षाचरो तु भृतको राज्ञश्चास्तु पुरोहितः ।

---

× स्मृसा. व्यकवत् । + शेषं व्यकवत् ।

(च) शेषं स्मृसावत्; चन्द्र.१६२ स्मृसावत्; व्यसौ.७२; वीमि. २।९९ स्मृसावत्; व्यप्र.१७५ सीतो (सीरो) शेषं स्मृसावत्.

(१) विस्मृ.९।१८; अप.२।९९ दोषं + ( स्वल्पे ); व्यक.७८; स्मृच.१०२; स्मृसा.११६ स्व (त्व); व्यचि. ९०; सवि.१७५ दोषं (दोषब्राह्मणं) (स्वल्पेऽप्यर्थे० ) मेव + (स्वल्पेप्यर्थेऽपि); चन्द्र.१६२ व्या + (दी); व्यसौ.७२;वीमि. २।९९; व्यप्र.१७५; समु.५३.

(२) विस्मृ.९।१९; अप.२।९९ विदितं सच्च (प्रथितं सच्चा); व्यक.७८; स्मृसा.११६ त्रं (तं); व्यचि.९० (संबेदितं तच्चरित्रं न महत्यर्थे); सवि.१७५ सत्सु (सु) तं (त); चन्द्र.१६२; व्यसौ.७२ त्रं (तं); वीमि.२।९९; व्यप्र.१७५ विदि (प्रथि) त्रं (तं); समु.५३ (सद् ०).

(३) भा.१३।९३।१११-१४३.

अयाज्यस्य भवेदृत्विक् बिस ... ...॥

अरुन्धत्युवाच–

नित्यं परिभवेत् श्वश्रूं भर्तुर्भवतु दुर्मनाः ।
एका स्वादु समाश्नातु बिसस्तैन्यं करोति या ॥
ज्ञातीनां गृहमध्यस्था सक्तूनत्तु दिनक्षये ।
अभोग्या वीरसूरस्तु बिसस्तैन्यं करोति या ॥

गण्डोवाच–

अनृतं भाषतु सदा बन्धुभिश्च विरुध्यतु ।
ददातु कन्यां शुल्केन बिसस्तैन्यं करोति या ॥
साधयित्वा स्वयं प्राशेत् दास्ये जीर्यतु चैव ह ।
विकर्मणा प्रमीयेत बिसस्तैन्यं करोति या ॥

पशुसख उवाच–

दास एव प्रजायेतामप्रसूतिरकिञ्चनः ।
दैवतेष्वनमस्कारो बिसस्तैन्यं करोति यः ॥

शुनःसख उवाच–अध्वर्यवे दुहितरं वा ददातु छन्दोगे वा चरितब्रह्मचर्ये । आथर्वणं वेदमधीत्य विप्रः स्नायीत वा यो हरते बिसानि ॥

ऋषय ऊचुः–

इष्टमेतद्‌द्विजातीनां योऽयं ते शपथः कृतः ।
त्वया कृतं बिसस्तैन्यं सर्वेषां नः शुनःसख ॥

शुनःसख उवाच–

न्यस्तमद्यं न पश्यद्भिर्यदुक्तं कृतकर्मभिः ।
सत्यमेतन्न मिथ्यैतद्बिसस्तैन्यं कृतं मया ॥
मया ह्यन्तर्हितानीह बिसानीमानि पश्यत ।
परीक्षार्थं भगवतां कृतमेवं मयाऽनघाः ॥
रक्षणार्थं च सर्वेषां भवतामहमागतः ।
यातुधानी ह्यतिक्रूरा कृत्यैषा वो वधैषिणी ॥
वृषादर्भिप्रयुक्तैषा निहता मे तपोधनाः ।
दुष्टा हिंस्यादियं पापा युष्मान् प्रत्यग्निसंभवा ॥
तस्मादस्म्यागतो विप्रा वासवं मां निबोधत ।
अलोभादक्षया लोकाः प्राप्ता वै सार्वकामिकाः।
उत्तिष्ठध्वमितः क्षिप्रं तानवाप्नुत वै द्विजाः ॥

पुष्कराख्यानम् ।

भीष्म उवाच–[1]

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
यद्‌वृत्तं तीर्थयात्रायां शपथं प्रति तच्छृणु ॥
पुष्करार्थं कृतं स्तैन्यं पुरा भरतसत्तम ।
राजर्षिभिर्महाराज तथैव च द्विजर्षिभिः ॥
ऋषयः समेताः पश्चिमे वै प्रभासे समागता मन्त्रममन्त्रयन्त । चराम सर्वा पृथिवीं पुण्यतीर्थां ततः कामं हन्त गच्छाम सर्वे ॥
शुक्रोऽङ्गिराश्चैव कविश्च विद्वांस्तथा ह्यगस्त्यो नारदपर्वतौ च । भृगुर्वसिष्ठः कश्यपो गौतमश्च विश्वामित्रो जमदग्निश्च राजन् ॥
ऋषिस्तथा गालवोऽथाष्टकश्च भरद्वाजोऽरुन्धती वालखिल्याः । शिबिर्दिलीपो नहुषोऽम्बरीषो राजा ययातिर्धुन्धुमारोऽथ पूरुः ॥
जग्मुः पुरस्कृत्य महानुभावं शतक्रतुं वृत्रहणं नरेन्द्राः । तीर्थानि सर्वाणि परिभ्रमन्तो माघ्यां ययुः कौशिकीं पुण्यतीर्थाम् ॥
सर्वेषु तीर्थेष्ववधूतपापा जग्मुस्ततो ब्रह्मसरः सुपुण्यम् । देवस्य तीर्थे जलमग्निकल्पा विगाह्य ते भुक्तबिसप्रसूनाः ॥
केचित् बिसान्यखनंस्तत्र राजन् अन्ये मृणालान्यखनंस्तत्र विप्राः । अथापश्यन् पुष्करं ते ह्रियन्तं ह्रदादगस्त्येन समुद्धृतं तत् ॥
तानाह सर्वानृषिमुख्यानगस्त्यः केनादत्तं पुष्करं मे सुजातम् । युष्मान् शङ्के पुष्करं दीयतां मे न वै भवन्तो हर्तुमर्हन्ति पद्मम् ॥
शृणोमि कालो हिंसते धर्मवीर्यं सोऽयं प्राप्तो वर्तते धर्मपीडा । पुराऽधर्मो वर्तते नेह यावत्तावद् गच्छामः सुरलोकं चिराय ॥
पुरा वेदान् ब्राह्मणा ग्राममध्ये घुष्टस्वरा वृषलान् श्रावयन्ति । पुरा राजा व्यवहारेण धर्मान् पश्यत्यहं परलोकं व्रजामि ॥
पुरावसन् प्रत्यवरान् गरीयसो यावन्नरा नावमंस्यन्ति सर्वे । तमोत्तरं यावदिदं न वर्तते तावत् व्रजामि परलोकं चिराय ॥
पुरा प्रपश्यामि परेण मर्त्यान् बलीयसा दुर्बलान् भुज्यमानान् । तस्मात् यास्यामि परलोकं चिराय न ह्युत्सहे द्रष्टुमिह जीवलोकम् ॥

---

(१) भा. १३।९४।१–५०.

तमाहुरार्ता ऋषयो महर्षे न ते वयं पुष्करं चोरयामः। मिथ्याऽभिषङ्गो भवता न कार्यः शपाम तीक्ष्णैः शपथैर्महर्षे ॥
ते निश्चितास्तत्र महर्षयस्तु संपश्यन्तो धर्ममेतं नरेन्द्राः। ततोऽशपन्त शपथान् पर्ययेण सहैव ते पार्थिव पुत्रपौत्रैः ॥
भृगुरुवाच—
प्रत्याक्रोशेदिहाक्रुष्टस्ताडितः प्रतिताडयेत्।
खादेच्च पृष्ठमांसानि यस्ते हरति पुष्करम् ॥
वसिष्ठ उवाच—अस्वाध्यायपरो लोके श्वानं च परिकर्षतु। पुरे च भिक्षुर्भवतु यस्ते हरति पुष्करम् ॥
कश्यप उवाच—सर्वत्र सर्वं पणतु न्यासलोपं करोतु च। कूटसाक्षित्वमभ्येतु यस्ते ......... ॥
गौतम उवाच—जीवत्वहङ्कृतो बुद्ध्या विषमेणासमेन सः। कर्षको मत्सरी चास्तु यस्ते... ... ॥
अङ्गिरा उवाच—अशुचिर्ब्रह्मकूटोऽस्तु श्वानं च परिकर्षतु। ब्रह्महाऽनिकृतिश्चास्तु यस्ते... ... ॥
धुन्धुमार उवाच—अकृतज्ञस्तु मित्राणां शूद्रायां च प्रजायतु। एकः संपन्नमश्नातु यस्ते ... ... ॥
पूरुरुवाच—चिकित्सायां प्रचरतु भार्यया चैव पुष्यतु। श्वशुरात्तस्य वृत्तिः स्याद्यस्ते ... ... ॥
दिलीप उवाच—उदपानप्लवे ग्रामे ब्राह्मणो वृषलीपतिः। तस्य लोकान् स व्रजतु यस्ते ... ... ॥
शुक्र उवाच—वृथा मांसं समश्नातु दिवा गच्छतु मैथुनम्। प्रेष्यो भवतु राज्ञश्च यस्ते ... ... ॥
जमदग्निरुवाच—अनध्यायेष्वधीयीत मित्रं श्राद्धे च भोजयेत्। श्राद्धे शूद्रस्य चाश्नीयात् यस्ते...॥
शिबिरुवाच—अनाहिताग्निर्म्रियतां यज्ञे विघ्नं करोतु च। तपस्विभिर्विरुध्येच्च यस्ते... ... ॥
ययातिरुवाच—अनृतौ च व्रती चैव भार्यायां स प्रजायतु। निराकरोतु वेदांश्च यस्ते ... ... ॥
नहुष उवाच—अतिथिर्गृहसंस्थोऽस्तु कामवृत्तस्तु दीक्षितः। विद्यां प्रयच्छतु भृतो यस्ते ... ... ॥
अम्बरीष उवाच—नृशंसस्त्यक्तधर्मोऽस्तु स्त्रीषु ज्ञातिषु गोषु च। निहन्तु ब्राह्मणं चापि यस्ते ...... ॥
नारद उवाच—गूढे ज्ञानी बहिःशास्त्रं पठतां विस्वरं पदम्। गरीयसोऽवजानातु यस्ते ...... ॥
नाभाग उवाच—अनृतं भाषतु सदा सद्भिश्चैव विरुध्यतु। शुल्केन तु ददत् कन्यां यस्ते...... ॥
कविरुवाच—पद्भ्यां स गां ताडयतु सूर्यं च प्रतिमेहतु। शरणागतं संत्यजतु यस्ते ...... ॥
विश्वामित्र उवाच—करोतु भृतकोऽवर्षां राज्ञश्चास्तु पुरोहितः। ऋत्विगस्तु ह्ययाज्यस्य यस्ते ... ॥
पर्वत उवाच—ग्रामे चाधिकृतः सोऽस्तु खरयानेन गच्छतु। शुनः कर्षतु वृत्त्यर्थे यस्ते ... ... ॥
भरद्वाज उवाच—सर्वपापसमादानं नृशंसे चानृते च यत्। तत्तस्यास्तु सदा पापं यस्ते ... ... ॥
अष्टक उवाच—स राजास्त्वकृतप्रज्ञः कामवृत्तश्च पापकृत्। अधर्मेणाभिशास्तूर्वीं यस्ते ... ... ॥
गालव उवाच—पापिष्ठेभ्यो ह्यनर्घार्हः स नरोऽस्तु स्वपापकृत्। दत्वा दानं कीर्तयतु यस्ते ... ... ॥
अरुन्धत्युवाच—श्वश्र्वाऽपवादं वदतु भर्तुर्भवतु दुर्मनाः। एका स्वादु समश्नातु या ते ... ... ॥
वालखिल्या ऊचुः—एकपादेन वृत्त्यर्थं ग्रामद्वारे स तिष्ठतु। धर्मज्ञस्त्यक्तधर्मास्तु यस्ते ... ... ॥
शुनःसख उवाच—अग्निहोत्रमनादृत्य स सुखं स्वपितु द्विजः। परिव्राट् कामवृत्तोऽस्तु यस्ते...... ॥
सुरभ्युवाच—बालजेन निदानेन कांस्यं भवतु दोहनम्। दुह्येत परवत्सेन या ते ...... ॥
भीष्म उवाच—ततस्तु तैः शपथैः शप्यमानैर्नानाविधैर्बहुभिः कौरवेन्द्र। सहस्राक्षो देवराट् संप्रहृष्टः समीक्ष्य तं कोपनं विप्रमुख्यम् ॥
अथाऽब्रवीन्मघवा प्रत्ययं स्वं समाभाष्य तमृषिं जातरोषम्। ब्रह्मर्षिदेवर्षिनृपर्षिमध्ये यं तं निबोधेह ममाद्य राजन् ॥
शुक्र उवाच—अध्वर्यवे दुहितरं ददातु छन्दोगे वा चरितब्रह्मचर्ये। अथर्वणं वेदमधीत्य विप्रः स्नायीत यः पुष्करमाददाति ॥
सर्वान् वेदानधीयीत पुण्यशीलोऽस्तु धार्मिकः। ब्रह्मणः सदनं यातु यस्ते हरति पुष्करम् ॥
अगस्त्य उवाच—आशीर्वादस्त्वया प्रोक्तः शपथो बलसूदन। दीयतां पुष्करं मह्यमेष धर्मः सनातनः ॥

**इन्द्र उवाच— न मया भगवन् लोभाद्धृतं पुष्करमद्य वै। धर्मांस्तु श्रोतुकामेन हृतं न क्रोद्धुमर्हसि ॥
धर्मश्रुतिसमुत्कर्षो धर्मसेतुरनामयः ।
आर्षो वै शाश्वतो नित्यमव्ययोऽयं मया श्रुतः ॥
तदिदं गृह्यतां विद्वन् पुष्करं द्विजसत्तम ।
अतिक्रमं मे भगवन् क्षन्तुमर्हस्यनिन्दित ॥
इत्युक्तः स महेन्द्रेण तपस्वी कोपनो भृशम् ।
जग्राह पुष्करं धीमान् प्रसन्नश्चाभवन् मुनिः ॥**

कलापशः संघशः । समयं शपथम् । अत्र शपथव्याजेन निषिद्धान्युच्यन्ते । शुनः सारमेयान् परिकर्षतु क्रीडार्थं मृगयार्थं वा । जयतां युद्धे वादे वा । कक्षाग्नौ तत्र हि हुतं भस्मीभावमप्राप्य होतुर्दोषकरमित्याशयः । उदपानप्लवे एककूपैकजीवने । ब्रह्मकूटो वेदराशिस्तस्याशुचित्वं दोषः, ऋद्धिमतो गर्वो भवतु । अभोग्या योनिदूषिता । साधयित्वा अन्नं पक्त्वा । विकर्मणा जारजातेन गर्भादिना । पुष्करार्थं इन्द्रेण स्तैन्यं कृतं मुनिभिः शपथाः कृता इत्यर्थः । ह्रियन्तं ह्रियमाणम् । आदत्तं आत्तम् । प्रत्यवरान् मध्यमान् । पृष्ठमांसानि पृष्ठवाहानां हयवृषभोष्ट्रादीनां मांसानि । भिक्षुः संन्यासी । अतिथिः यतिः । गृहसंस्थो गृहवासी । स्वपापकृत् स्वेषु ज्ञातिषु पापकृत् । गराग्निदानादिना वधकृत् । बालजेन नृकेशजेन निदानं दोहनकाले गवां पादबन्धनी रज्जुः तेन । नीटी.

## मनुः

**असाक्षिकेषु त्वर्थेषु मिथो विवदमानयोः ।
अविन्दंस्तत्वतः सत्यं शपथेनाऽपि लम्भयेत् ॥**

(१) अविद्यमानाः साक्षिणो येष्वर्थेषु व्यवहारेषु तेऽसाक्षिकाः । तेषु सत्यमजानानो राजा तत्त्वतो लौकिकेनानुमानेनापीत्यर्थः । तत्र शपथेनापि वक्ष्यमाणेन दैवेनानुमानेन लम्भयेत् जानीयात् । लभिः प्राप्तिवचनोऽपि सामर्थ्याज्ज्ञानात्यर्थः । *मेधा.

(२) असाक्षिकेष्विति सकलदृष्टप्रमाणाभावार्थम् । शपथेनाऽपि इत्यपिशब्देन गत्यन्तराभावात् दिव्यमिति दर्शयति । व्यमा.३१६

* ममु., व्यप्र. मेधागतम् ।

(१) मस्मृ.८।१०९; व्यमा.३१६ मिथो (मिथ्या); अप.२।९५ अविन्दं (विवदं); व्यप्र.१७१; समु.२५.

(३) शपथेनात्मशिरःस्पर्शादिनापि तत्त्वं लम्भयेत् प्रापयेत् वादिनम् । मवि.

(४) लम्भयेत् उत्तरयेत् । मच.

(५) शपथो नाम यदीदं मयोक्तमेतदन्यथा चेत् पातकी स्यामित्यादिवचनम् । यदुक्तमृषिणा—'अद्या मुरीय यदि यातुधान' इति । नन्द.

**महर्षिभिश्च[१] देवैश्च कार्यार्थं शपथाः कृताः ।
वसिष्ठश्चापि शपथं शेपे पैजवने नृपे ॥**

(१) अर्थवादोऽयं पूर्वोक्तस्य शपथविधेः । महर्षिभिः सप्तर्षिप्रभृतिभिः कार्यार्थं संदिग्धकार्यनिर्णयार्थं शपथाः कृताः । अस्मिन्नर्थे च भगवतः कृष्णद्वैपायनस्याख्यानमुदाहर्तव्यम् । विशेषेषु तेष्वपहारितेषु इतरेतरं सप्तर्षयः शेपिरे । यस्ते हरति पुष्करं स इमां पापकृतो गतिं गच्छेदित्यादि । देवैरिन्द्रप्रभृतिभिः । इन्द्रो ह्यहिल्यां प्रत्यभिशस्तः[१] शापभयाद् बहुविधं शपथं चकार । वसिष्ठश्चेति पृथङ् निर्देशः प्राधान्यख्यापनार्थः । शपथं कृतवानित्यर्थः । उपपदादेव विशेषावगतेः शपतिः करोत्यर्थमात्रे वर्तते । यथा यज्ञं यजत इति, स्वपोषं पुष्ट इति, तथा शपथं शेपे इति ज्ञेयम् । 'शप उपलम्भने' इति लिटि प्रथमपुरुषात्मनेपदैकवचने शेपे इति रूपम् । पैजवनो राजा बभूव । तस्मिन् काले विश्वामित्रेणाकुष्टो मण्डलमध्यगतः कामक्रोधाभ्यां संशोध्यचरणो 'ऽद्या[२] मुरीय यदि यातुधानोऽस्मी' ति शपथं गृहीतवान् । विश्वामित्रेणोक्तस्तस्य राज्ञः समक्षमनेनैव तत्पुत्रशतमशितमेष हि रक्ष इति । ततः स उवाच—अद्यैव म्रियेय यदि रक्षः स्यामिति । आत्मन्यनिष्टाशंसनमत्र शपथः पुत्रदारादिशिरःस्पर्शने एतदनिष्टाशंसनं[३] शपथो मन्तव्यः । *मेधा.

(२) महर्षिभिरगस्त्यादिभिर्विशिष्टैरन्यैर्देवैश्चेन्द्रादिभिः संदिग्धकार्यनिर्णयार्थं शपथाः कृताः । वसिष्ठोऽपि अनेन पुत्रशतं भक्षितमित्येवं विश्वामित्राकुष्टः पिजवनापत्ये सुदासे राजनि परिशुद्ध्यर्थं शपथं चकार । न वृथा शपथं चकार । ×गोरा.

* मवि. मेधागतम् । × ममु. गोरावत् ।

(१) मस्मृ.८।११०; व्यक.९७; व्यप्र.२१९ पैज (वै य); बाल.२।११३ व्यप्रवत्.

१ स्तः. २ ऽद्यासुरो यातु. ३ संशनं.

**यस्माद्देवैः प्रयुक्तानि दुष्करेऽर्थे मनीषिभिः ।**
**परस्परविशुध्यर्थं तस्माद्दिव्यानि नामतः ॥**
**न वृथा शपथं कुर्यात् स्वल्पेऽप्यर्थे नरो बुधः ।**
**वृथा हि शपथं कुर्वन् प्रेत्य चेह च नश्यति ॥**

(१) मिथ्याशपथे फलाख्यानमेतत् । वृथाऽन्यथाऽसत्यमिति यावत् । तत्रापह्रियमाणसुवर्णादिद्रव्यजात्यपेक्षोऽनृतशपथदोषोऽन्यथाशपथे स्वल्पे, गरीयसि तु कार्ये गौरवादधिकतरो दोषोऽस्त्येव । प्रेत्य नाशो नरकमिह महदयशः । [1]प्रमाणान्तरे तु ज्ञाते राजदण्डः । +मेधा.

(२) अत्र शपथानामपि दिव्यत्वादुपवासादिसाधारणदिव्यविधिरत्रातिदेष्टव्यः । यत्तु स्मृतितत्त्वव्यवहारचिन्तामणिकाराभ्यां शपथानां दिव्यभेदेऽनुपन्यासाद्धटादिमध्ये परिगणनाभावाच्च न दिव्येतिकर्तव्यताया अतिदेश इत्युक्तं, तदप्यसत् । पूर्वनारदादिवचनैः शपथानामपि दिव्यत्वस्योक्तत्वात्, धटादिपरिगणनवाक्यस्योपलक्षणत्वेन व्याख्यातत्वाच्च । किं च त्वदुक्तदिव्यलक्षणस्यापि सत्वाच्च त्वयापि तेषां दिव्यत्वमङ्गीकर्तव्यम् । अन्यथा तल्लक्षणमव्यासं स्यात् । तस्मात् शपथानामपि दिव्यत्वादस्त्येव दिव्यधर्मातिदेश इत्यलम् ।
व्यप्र.२२१

**[3]कामिनीषु विवाहेषु गवां भक्ष्ये तथेन्धने ।**
**ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकम् ॥**

(१) कामः प्रीतिविशेषो विशिष्टेन्द्रियस्पर्शजन्यः, स यासु भवति पुरुषस्य, ताः कामिन्यो भार्यावेश्यादयः । तत्र यः शपथः कामसिद्ध्यर्थो, यथा —'नाहमन्यां कामये, प्राणेश्वरी मे त्वमित्याद्यः । य[1]त्तु संप्रयुज्यस्व मया, इदं त्वया देयं दास्य ' इति, तत्र भवत्येव दोषो वृथाशपथे । विषयसप्तमी चेयं, न निमित्तसप्तमी । तेन यस्यामेवैकाकिन्यां यथाप्यते, तत्रोक्तरूपशपथे [2]न दोषः। निमित्तसप्तम्यां तु निमित्ते परद्रव्यापहारे दोषः स्यात् । अतश्च 'कामाद्दशगुणं पूर्व[3]म्' इत्यादिकं दण्डविधानं न युज्यते, तथापि स हि निमि[4]त्तान्तरकृते वि[5]वादतो वृथाशपथे दो[5]षः । एवं सर्वत्र । विवाहेषु, न त्वयाऽन्या वोढव्या न वाऽन्यो वोढव्[6]यं इति अन्यस्यापि सुहृदादेर्विवाहार्थमेवंविधमनृतमदोषः । न पुनर्जात्यपह्नवादौ । गवां भक्ष्ये, गवां यवससिद्ध्[7]यर्थं न मयाऽपहृतं न मयाऽपहर्तव्यं, परस्य चातत्संबन्धिभिर्युक्तस्य वृथासाक्ष्ये शपमानस्य न दोषः । एवमिन्धने । ब्राह्मणानामभ्युपपत्तिरनुग्रहः । सर्ववर्णानुग्रहेऽनुज्ञातमेव । किमिह पुनर्वचनेन । केचिदाहुः । शपथो ब्राह्मणेऽनुज्ञायते । शूद्रादिषु त्वनृतमेव । तच्च 'तद्धि सत्याद् विशिष्यते' इति वचनात् नैतदनृतम् । अतो न तत्र [8]प्रतिषेधः । प्रतिषेधो ह्यसौ वृथाश[9][10]पथस्य । पूर्वेण प्रतिषिद्धस्य प्रतिप्रसवशास्त्रमेतत्, सर्ववर्णानुग्रहे शपमानस्य न दोषः । किमर्थं तर्हीदम् । उच्यते । तत्र वधात् परित्राणमुक्तं सर्ववर्णविषयम् अभ्युपपत्तिस्तु ब्राह्मणस्यैव । सा हि धनलाभादिना संभवति । [11]सर्वत्र स्वपरसंबन्धिनीषु क्रियास्वेवंविधासु शपथाभ्यनुज्ञानमुपायान्तरेण तत्सिध्यसंभव एव द्रष्टव्यम् ।
मेधा.

(२) बहुभार्यस्य नान्यामहं कामये, त्वं मे प्राणेश्वरीत्येवं, विवाहविषये — न च त्वयाऽन्या वोढव्या इत्येवंविधे, गवार्थं घासापहारे वा असंभवदुपायान्तरे, एवं शास्त्रिताग्निहोमार्थचर्वपहारे, ब्राह्मणरक्षायां च धनदानादिविषयायां मिथ्याशपथे पातकं न भवति ।
*गोरा.

(३) कामिनीष्विति । रहसि कामिनीसंतोषार्थं, विवाहेषु स्त्रीभिः पत्यर्थं, गोग्रासार्थं, नित्याहुति-

---

+ गोरा., ममु. मेधागतम् ।

(१) शुनी.४।७२५-७२६ रे ...भिः (रार्थे महात्मभिः) नाम (वाप्य); अप.२।९५; व्यप्र.१७१ दुष्क...भिः (पुष्करार्थे महात्मभिः). (२) मस्मृ.८।१११; व्यक.९८; स्मृसा. ११८ शपथं (शपथान्) च न (विन); व्यचि.९२; व्यत. २२९; व्यसौ.९०; वीमि.२।११३ थं(थान्)उत्त.; व्यप्र.२२१; बाल.२।११३; समु.५० कुर्वन् (कृत्वा). (३) मस्मृ.८।११२; व्यक.९८; स्मृसा.११९ भक्ष्ये (भुक्ते) शपथे (शपथैः); व्यचि. ९२ स्मृसावत्; व्यत.२२९; व्यसौ.९० स्मृसावत्; वीमि. २।११३ स्मृसावत्; बाल.२।११३; समु.५० भक्ष्ये (भक्ते).

१ प्रामाण्यान्तरे त्वज्ञा.

* मवि., ममु., व्यचि., मच., भाच. गोरागतम् ।

१ यन्तु. २ (०). ३+(जनम्). ४ त्तानन्त. ५ वादोऽस्त्येव वृथाशपथदोष एव. ६ वोढव्येति. ७ +(मयाऽपहर्तव्यं). ८ न हि. ९ (प्रतिषेधः०). १० पथः पू. ११ सर्वतश्च परसंबन्धिषु क्रियास्वेवंविधौ सुशपथा.

संपादकेन्धनार्थे, ब्राह्मणगवादिप्राणरक्षार्थे च वृथा शपथैरपि न पापं भवतीत्यर्थः। वीमि.२।११३

**सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः।**
**गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः+॥**

(१) 'ननु च यद्यहमेवं कुर्यां तदिदमनिष्टमाप्नुयामी'ति संकीर्तनक्रिया शपथः। तं यः कारयेत् स शापयेदित्युच्यते। न तत्र शब्द एव किन्तु तदर्थप्रतिपादितकरणम्। ननु सत्यस्वरूपप्रधान एवायं सत्यशब्दः। सत्यम्, सत्यशब्देन शापयेत् सत्यशब्दश्चैवं शापनकरणे भवति, यदि यः शाप्यते स एवं वाच्यते — 'सत्येन शपे सत्यादिनिबन्धनोऽयं धर्मो वा मे निष्फलः स्यादि'ति। एवं वाहनायुधानामपि करणत्वम्। क्षत्रियो वाहनायुधैः, एतैरात्मानं शपे एतानि वा मे निष्फलानि स्युरिति। गोबीजकाञ्चनानि वैश्यो हस्तेन स्पर्शयित्वाऽभिशपेदेतानि वा मे निष्फलानि स्युरिति पूर्ववत्। शूद्रं सर्वैस्तु पातकैर्वक्ष्यमाणानि पातकानि मे स्युरिति शूद्रो वाच्यते। मेधा.

(२) ब्राह्मणं वादिनं सत्यशब्दोच्चारणेन शापयेत्। क्षत्रियं च वाहनायुधं निष्फलं स्यादित्येवम्। वैश्यं च गोबीजकाञ्चनादीनि ते निष्फलानि स्युरिति। शूद्रं सर्वाणि ते पातकानि स्युरित्येवम्। *गोरा.

(३) ब्राह्मणं अन्यथा ब्रुवतः सत्यं ते नश्यतीति शापयेत्। ×मिता.२।७३

+ दित. व्याख्यानं अशुद्धिसंदेहान्नोद्धृतम्।
* व्यप्र. (पृ. १२६) गोरागतम्। व्यप्र. (पृ. १७५) स्मृचगतम्। व्यउ. (पृ. ४९) गोरागतं मितागतं च। व्यउ. (पृ.७१) मेधागतम्। × शेषं गोरागतम्।

(१) **मस्मृ.**८।११३; **मिता.**२।७३, २।११३; **व्यक.**९८; **मभा.**१३।१४; **गौमि.**१३।१३; **स्मृच.**१००: २३.१ पू.; **पमा.**१११; **सुबो.**२।७३ (=) चतुर्थपादं विना; **दीक.** ४२; **स्मृसा.**११४; **व्यचि.**९१ (=); **नृप्र.**१०; **व्यत.**२२८; **दित.**६११; **सवि.**१५५-१५६ (=): २१७ पात (भेद) विष्णुः: ३३५ पू.; **चन्द्र.**१४५; **व्यसौ.**८९; **वीमि.**२।११३; **व्यप्र.**१२६, १७५, २२०; **व्यउ.**४९, ७१; **व्यम.**१९, ३८; **विता.**१६९, २७१; **राकौ.**४०३: ४४० क्षत्रियं (क्षितिपं); **समु.**५०.

१ (न ... वाच्यते०). २ वाहनानां च। एतैरात्मानं शपतो न वा निष्फ. ३ (स्युरिति ०).

(४) एतच्च लघुकार्ये। +मवि.

(५) अस्यार्थः — यद्यहमर्थापह्नवी स्यां तदा सत्याभिधानधर्मो मम निष्फलः स्यादिति शपथकारणं ब्राह्मणं वाचयेत्। एवं क्षत्रियादीन्। सत्याभिधानधर्मो मम निष्फलः स्यादित्यस्य स्थाने वाहनायुधानि मम निष्फलानि स्युरिति क्षत्रिये, गोबीजकाञ्चनानि मम निष्फलानि स्युरिति वैश्ये, सर्वाणि पातकानि मम स्युरिति शूद्रे विशेष इति। स्मृच.१००

(६) सत्येन शापयेद् यद्येतन्मया कृतं तदा सत्यातिक्रमजन्यपापभागहं स्यामिति वादयेत्। वाहनायुधैरित्यत्रापि यद्येतन्मया कृतं तदैतानि वाहनान्यायुधानि वा मम निष्फलानि भवन्तु इति वादयेदित्यर्थः। एवमन्यत्रापि। हलायुधस्तु ब्राह्मणेन मया कृतं, न वा कृतमित्युच्चार्य सत्यमिति वक्तव्यम्। क्षत्रियेण तु वाहनमायुधं वा स्प्रष्टव्यम्। वैश्येन तु गोबीजकाञ्चनानामन्यतमं स्प्रष्टव्यम्। शूद्रेण तु सर्वमेतत् कर्तव्यम्। पातकशब्दश्चात्र पूर्वोक्तशपथानामेव विशेषणं तेषां वृथाकृतानां पातकहेतुत्वादिति व्याख्यातवानिति। *व्यचि.९१

(७) सत्येन शापयेद्विप्रमिति अपकृष्टब्राह्मणविषयम्। उत्कृष्टस्य गौतमेन शपथनिषेधात् इति रत्नाकरः। चन्द्र.१४६

(८) ब्रह्मघ्न इत्यादिवाक्योक्तैः पातकैरेतानि पातकानि ते स्युरिति शूद्रं शापयेदित्यनुषज्यते। मच.

**अग्निं वाऽऽहारयेदेनमप्सु चैनं निमज्जयेत्।**
**पुत्रदारस्य वाऽप्येनं शिरांसि स्पर्शयेत्पृथक्॥**

(१) अग्निमाहारयेदेनं हस्तेनाश्वत्थपर्णव्यवहितेन ततो

+ शेषं गोरागतम्। * स्वपक्षः स्मृचवत्। व्यत. व्याख्यानं हलायुधपक्षवत्। वीमि. व्यचिगतम्।

(१) **मस्मृ.**८।११४; **अप.**२।९५ चैनं (वैनं) शिरां (शिर) पृथक् (दृढम्); **व्यक.**९८; **स्मृसा.**११४ प्येनं (प्येवं) उत्त.; **व्यचि.**९१ (=) वा (चा) उत्त.; **व्यत.**२२८ स्मृसावत्, उत्त.; **दित.**६११ उत्त.; **सवि.**१७६ (=) रस्य वाऽप्ये (रानवाप्ये) उत्त.; **व्यसौ.**८९ वा (चा) उत्त.; **वीमि.**२।११३ प्येनं (प्येषां) उत्त.; **व्यप्र.**१७१: २२० उत्त.; **समु.**५० वा (चा) उत्त.: ५४ पू.

१ तयोः.

यो[1] देशान्तरं सप्तपदसंहितमि'त्यादिस्मृत्यन्तरान्निपुणतोऽन्वेष्यम्। पारम्पर्यप्रसिद्धेश्चैतदेवोच्यते। अप्सु जले निमज्जयेत् प्राड्विवाक इत्यर्थः। पुत्रदारशिरांसि स्पर्शयेत् पुत्रस्य दारस्य शिरः स्पर्शयेत्[2], हस्तेन शपथाधिकाराद्वाचा च। शपथस्यैवंरूपत्वादित्युक्तम्। पृथगेकैकस्य। मेधा.

(२) कार्यगुरुत्वापेक्षया च अग्निमिति। अग्निवर्णे सुवर्णादिपिण्डं शूद्रमश्वत्थपत्रावृतहस्तं याज्ञवल्क्याद्युक्त्येतिकर्तव्यतया सप्तपदानि भावयेत्। अप्सु वा गृहीत्वान्तर्जलं विशेदित्येवमादि तदेतद्युक्त्येतिकर्तव्यतयैव निमज्जयेत्। अथवा पुत्राणां दाराणां च एतस्य शपे इत्येवं पृथगेकैकस्य शिरांसि स्पर्शयेत्। *गोरा.

(३) शपथेन द्रव्यालाभे परीक्षणमेवोचितमित्याह— अग्निमिति। एनं अधमर्णत्वेन संभाव्यमानम्। पृथगिति पदं व्यवहारस्य गुरुलघुतया विकल्पसूचनार्थम्। मच.

(४) स्पर्शनं च दक्षिणकरेण कुर्यात्। तथा च कात्यायनः— 'यत्रोपदिश्यते कर्म कर्तुरङ्गं न तूच्यते। दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः'॥ व्यप्र. २२०

(५) शूद्रं सच्छूद्रमसच्छूद्रं प्रत्याह— 'अग्निं वा हारयेदि'ति। वृत्तापेक्षया विकल्पः। नन्द.

**यमिद्धो न दहत्यग्निरापो नोन्मज्जयन्ति च।**
**न चार्तिमृच्छति क्षिप्रं स ज्ञेयः शपथे शुचिः॥**

(१) 'न चार्तिमृच्छति क्षिप्रमि'त्येतत् पूर्वेणादाहादिना समुच्चीयते। चशब्दसामर्थ्याच्च ललाटस्वेदाद्यपि। कुहकादिप्रतिबन्धेनाप्यदाहादिसंभवः, अतो 'न चार्तिमृच्छती'ति द्वितीयव्यञ्जकोपादानमविरुद्धम्। नन्वियं दिव्यस्मृतिरव्यक्तमूलेव लक्ष्यते, यतो न प्रत्यक्षादेरयं विषयः, दिव्याभिधानादेव। अकार्यत्वाच्च नागमस्य। न ह्यनेनेदं भवतीत्यागमस्य विषयः। कथं तर्हि यागात् स्वर्ग इति? स्वर्गकामस्य कर्तव्यतोपदेशात् असाधनत्वे च तद्व्याघाताद् यागादेः साधनत्वमवगम्य यागात् स्वर्ग इत्युच्यते। अत्रापि तर्हि प्रायश्चित्तवत् संशोधनार्थो दिव्योपदेशः स्यात्? सत्यं; यद्यनुष्ठानमात्रोपदेशः स्यात्। इह तु तप्तायःपिण्डेनादग्धस्यापरं निर्दोषत्वज्ञापनमुक्तम्। तदपेशलमिव स्यात्। उच्यते। द्वे ह्येते चोदने। स्तेयादिशङ्कितस्य अभ्युपगच्छतः प्रायश्चित्तराजदण्डादिप्रसङ्गः। अनभ्युपगमे तु धटाद्यनुष्ठानमिति। अत्र चोर्ध्वगमनादौ सत्यदुष्टव्यवहारः कार्य इति। अतश्चार्थादिदमापद्येत—ऊर्ध्वगमनाद् विना न शुद्धिरिति। अत एवोपलभ्यव्यञ्जकाभावेऽपि शपथाद्यनुष्ठानमात्रादेवादुष्टव्यवहारसिद्धिः। तस्य त्वामुष्मिको दोषः स्थित एव। तथा चोक्तम्—'दिव्यानीह विशुद्धये' इति। इहैव नामुत्रेत्यर्थः। कुहकादिप्रतिबन्धेऽपि तर्हि शुद्धिप्रसङ्गः? न, प्रतिषेधात्। यथाह बृहस्पतिः—'त्रिरात्रं पञ्चरात्रं वा पुरुषैः स्वैरधिष्ठितम्। निरुद्धं चारयेत् तत्र कुहकाशङ्कया नृपः' इति॥ अतः कुहकादिरहित एवोर्ध्वगमनादौ शुद्धव्यवहारः, कुहकादिभावाशङ्कायां वा दैवराजकव्यसनानुत्पत्तौ। पारमार्थिक्यौ तु शुद्ध्यशुद्धी क्वोपयुज्येते। अतो वेदमूलत्वमविरुद्धम्। तथा चाम्नायश्छान्दोग्यः—'पुरुषं सोम्योत हस्तगृहीतमानयन्त्यपहार्षीत् स्तेयमकार्षीत्। परशुमस्मै तपतेति। स यदि तस्य कर्ता भवति तत एवात्मानमनृतं कुरुते। सोऽनृताभिसंधोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति। स दह्यते। अथ हन्यते। अथ यद्यकर्ता भवति तत एव सत्यमात्मानं कुरुते। स सत्याभिसन्धः सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति। स न दह्यते। अथ मुच्यते' इति। एवमादीन्यन्यान्यपि तुलादिदिव्यप्रयोगमूलान्यन्विष्योदाहरणीयानि। अत्र च शङ्कितस्य परशुग्रहणेनादग्धस्य मोचनमदुष्टव्यवहारकरणं च विधीयते। अन्यत्तु दाहादिप्राप्तमनूद्यते। अतोऽप्युक्तप्रकारं वेदमूलत्वमविरुद्धम्। अस्तु वा श्रवणानुसार्येव वैदिकत्वम्। स्वरूपेऽप्येवमादौ प्रामाण्यमुपनिषद्वाक्यानामिवाविरुद्धमेव। यथा चैतदेवं तथा वक्ष्यामः। एवं सति व्यासाद्युक्तेतिहासदर्शनानुसारेण अधिष्ठातृत्वेन तुलाद्यन्तर्गतलोक-

* मवि., ममु. गोरागतम्।

(१) मस्मृ. ८।११५; विश्व. २।११७; मिता. २।११३ उत्त.; व्यक. ९८ शङ्खलिखितौ; स्मृच. ११७ थे (थैः) उत्त.; स्मृसा. ११८ यन्ति च (यन्त्यपि) न चा (नैवा); सवि. २१७ थे (थैः) उत्त.; चन्द्र. १६४ मृ (मि); व्यप्र. २२०; व्यउ. ७१; विता. २७१ थे (थैः) उत्त.; राकौ. ४४० उत्त.; प्रका. ७४ थे (थैः) उत्त.; समु. ६५ च (यम्) थे (थैः).

१ प्र. २ र्शय ह.

पालादिजगत्साक्षीभूतदेवताकल्पनमप्यविरुद्धम् । तथा च मान्त्रवर्णिक्यो देवताः—

'त्वमेव सर्वभूतानामन्तश्चरसि पावक' इत्युक्ताः । एवं स्वायम्भुवेऽपि च देवताधिष्ठानमेव सत्यधर्मानुसारि प्रदर्शितम् । यथाह – 'वत्सस्य ह्यभिशस्तस्य पुरा भ्रात्रा यवीयसा । नाग्निर्ददाह रोमापि सत्येन जगतः स्पशः' इति ॥ स्पशश्चरः साक्षीत्यर्थः । अथवा, अनुमानमूलत्वमेवास्तु । निर्दोषस्य दोषतया शङ्कितस्याग्निरदाहकः अभ्रकादेरिव, दाहानुपलम्भनात् । अनादिकालिकाव्यभिचारिव्यवहारप्रवृत्त्यवाप्तान्वयव्यतिरेकशुद्धानुमानं वह्न्यभाव इव निर्धूमतानुमानमप्रतिहतमेव । अतोऽप्युपपन्नं दिव्यस्मृतेः समूलत्वमित्येषा दिक् । नन्वेवं सति भाविन्यर्थे दिव्यानि न स्युः । दौष्ट्यतदभावयोरसिद्धत्वात् । को वाऽन्यथाह ? कथं तर्हि भाविन्यर्थे कोशपानादिव्यवहारः ? सत्यसंकल्पप्रकटीकरणमात्रं तद् व्यभिचारतः शिष्टविगर्हणसिद्ध्यर्थम् । संकल्पितान्यथाकरणात्त्वनृतदोषः स्थित एवेत्यलं प्रसक्त्या । विश्व.२।११७

(२) तप्तायसपिण्डोऽयमनवग्रहीतो[1] न दहति, आपश्च नोर्ध्वं प्लावयन्ति, सत्यशपथे कोशादौ न चार्तिमृच्छति पीडां न प्राप्नोति रोगोऽग्निरित्यत्रोक्ताम्[2] । स शुद्धः शुचिर्निर्दोषः । क्षिप्रं चतुर्दश वाऽहान्यवधिः स्मृत्यन्तरात् । मेधा.

(३) आर्तिरपि 'यस्य नो राजदैविकं व्यसनं जायते घोरमि'त्युक्तैव । कालनियमश्च एकरात्रमारभ्य त्रिरात्रपर्यन्तं, त्रिरात्रमारभ्य पञ्चरात्रपर्यन्तं, एकरात्रप्रभृतित्वं कार्यलाघवगौरवापेक्षया द्रष्टव्यम् । मिता.२।११३

(४) न चार्तिं पुत्रादिशिरःस्पर्शे कृते । मवि.

(५) शपथस्य परीक्षणमाह यमिति । क्षिप्रं त्रिपक्षाभ्यन्तरे । मच.

(६) आर्तिश्च राजदैविकं व्यसनम् । राजव्यसनं राजकृतपीडा । दैविकव्यसनं गृहदाहमनुष्यपश्वादिनाशः । व्यउ.७१

**वत्सस्य ह्यभिशस्तस्य पुरा भ्रात्रा यवीयसा ।**
**नाग्निर्ददाह रोमापि सत्येन जगतः स्पशः ॥**

(१) मस्मृ.८।११६; विश्व.२।११७ .

१ मव. २ क्तम्.

(१) स्पशः चरः साक्षीत्यर्थः । विश्व.२।११७

(२) कथं पुनरिद्धोऽग्निर्न धक्ष्यति । आपश्च[2] नोन्मज्जयिष्यन्ति । न हि महाभूतानि विपरियन्ति स्वभावतोऽचैतन्यादिति पर्यनुयोगमाशङ्क्यार्थवादेनोक्तमर्थं दृढीकरोति । यद्यप्ययमन्वयव्यतिरेकसमधिगम्योऽर्थः प्रत्यक्षवेद्यो वा, तथापि धूर्तकल्पितेन्द्रजालवद्भावितमुग्रविभीषिकासञ्जनमात्रं[3] फलं शपथागोरणमिति मन्यमानो वैदिकं निदर्शनमुपन्यसेत् । भवन्ति प्रतिपत्तारोऽर्थागमेन पूर्ववृत्तदर्शनाद् दृढतां प्रतिपद्यन्ते । वत्सो नाम काण्व ऋषिरभवत् । स च कनीयसा वैमात्रेण भ्रात्राऽभिशस्त[4] आक्रुष्टो न त्वमसि ब्राह्मणः, शूद्रापुत्र इति । स तं प्रत्युवाच— सत्येनाग्निं प्रविशामि यदि न ब्राह्मण इति । तस्येदमुक्तवतः प्रविष्टस्य नाग्निर्ददाह रोमापि । कथम् ? सत्येन हेतुना । कथमग्निः सत्यं जानातीति चेदत आह— जगतः स्पशः गूढात्मा । परकीयकृताकृतज्ञः स्पश उच्यते । यैश्चान्तश्चरः[5] प्रणिधिरिति च प्रसिद्धिः । अग्निर्हि भगवान् सर्वभूतान्तरचारी कृताकृतानां वेदिता । तथा च छान्दोग्ये ताण्डके प्रयोगः— देवासुरसेनयोरभ्यन्तरे[6] योऽग्निरिति, गौतमोऽग्निमुपेत्योवाच— इह नो भवान्[7] स्पशश्चरत्वित्यादि[8] अथवा[9] विशेषनिदर्शनेऽपि पञ्चविंशब्राह्मणमुदाहार्यम्— वत्सश्च ह वै मेधातिथिश्च काण्वावास्ताम्[10] । तं वत्सं मेधातिथिराक्रोशत्— 'अब्राह्मणोऽसि' इत्यादि 'तस्य लोम[11] च नौष'दित्यन्तम्[12] ।

ननु च चौरा अपि न दह्यन्ते । साधवोऽपि दह्यमाना दृश्यन्ते । तत्कथं शपथे आश्वासः ? उच्यते, न दृश्येन व्यभिचारेण व्यवस्थेयमपनेतुं शक्यते । कादाचित्कत्वाद्व्यभिचारस्य । प्रत्यक्षादिष्वपि प्रमाणेषु दृश्यत एव तादृशो व्यभिचारो, न च तानि न प्रमाणम् । अथ व्यभिचारवन्ति नैव प्रत्यक्षादिशब्दवाच्यानि । यद्व्यभिचारि[13] न तत्प्रत्यक्षं, यत्प्रत्यक्षं न तद्व्यभिचरतीति वचनात् । इहापि शक्यते तद्वक्तुम् । व्यभिचरतीत्यसौ न[14] शपथो, यः शपथः स न व्यभिचरतीति । कः पुनः

१ नरग्नि. २ आपो नो.

३ द्भान्तिमहनादत्रमुखवि. ४ भ्रात्रोऽभिशप्त आ. ५ स च चारः प्रणधि. ६ रे गौतममाश्रयन्ति गौतममिन्द्रं द्रढयेत्तत्र चाह इ. ७ भावा. ८ रत्विषेत्या. ९अर्थवाचिरित्विषेद. १० काश्यपावा. ११ हलमेव नौ. १२ दिति. १३ रितप्र. १४ (०).

शपथो यः समस्तेतिकर्तव्यतामात्राद्यपग्रहणनिरूपितकुहकस्तम्भनाभावः[1]। विपरीतोऽशपथः। न तादृशस्य व्यभिचारोऽस्ति। अथापि स्यात्, तत्रापि प्राक्कृतस्य[2] कर्मणः फलविपाको भवति निमित्तत्वात्[3]। अकृतापराधोऽपि पूर्वकृतेन गरीयसाऽशुभेन मुच्यते। अकृतापराधो जन्मान्तरदोषेण निगृह्यते। विचित्रा हि कर्मणां फलपाकाभिव्यक्तिहेतवः। सहस्रादेको मिथ्या गृह्यते। उत्सर्गतस्त्वमिथ्यात्वम्। पुत्रेष्टिकारीर्यादिष्वप्येतत्समानम्। तस्मात्साक्षिवच्छपथेऽपि[4] प्रत्येतव्यं, तेऽपि हि कदाचिन्मिथ्या वदन्ति[5]। न भयप्रदर्शनमात्रमेतत्, यथा[6] स्थानरूढाः शपथा उक्ताः सत्यं प्रतिष्ठन्तैं[7] इति। *मेधा.

(३) एवं वदता ब्राह्मणादीनामप्यग्निकरणादिकं सूचितम्। नन्द.

## नारदः

सत्यादित्यभियुक्तस्य शपथो न यथा मया।
गृहीतो ग्राहितो वाऽपि न च जातेन कस्यचित्॥
यदहं पापकारीति शङ्कादोषवशं गतः।
तद्यथा सर्वमथ तं स ग्राम्येष तथाऽधुना॥
सत्येन येन मां देवा मे मातापितरस्तथा।
रक्षन्तु शपथादस्मात्तन्वौदीन्यमन्यथा (?)॥

अनेन श्लोकत्रयेणाऽपि शपथकरणमार्गोऽसौ दर्शितः। स च सामान्यप्रयोजनशङ्कः। अभा.७३

शपथा[2] अपि देवानामृषीणामपि च स्मृताः।
वसिष्ठः शपथं शेपे यातुधानेति शङ्कितः॥

(१) अत्र शपथा अपि न सामान्या भवन्ति। सत्यश्रावणया तेऽपि अमोघा एव भवन्ति इति ऋषिदेवाचीर्णमार्गदर्शनं माहात्म्यार्थमभिहितम्। तथा हि, यातुधानेन रक्षसाभिशङ्कितो महर्षिर्वसिष्ठः शपथं कृत्वा विशुद्ध इति। अभा.७३

(२) शिष्टाचारः प्रमाणम्। शपथाश्चर्षिदेवानां सृष्टाः ब्रह्मणा। तस्मान्मनुष्याणामपि शपथाः प्रमाणम्। तस्मात् सूक्तं 'तृतीयः शपथ' इति। तत्र प्रदर्शनार्थमेकमुदाहरणं दर्शितं– 'वसिष्ठः शपथं शेप' इति। शपथं कृतवान् यातुधानेति शब्दितः उक्तः 'अद्या मुरीये'त्यादिना। नाभा.२।२१८

सप्तर्षयस्तथेन्द्राद्याः[1] पुष्करार्थे तपोधनाः।
शेपुः शपथमव्यग्राः परस्परविशुद्धये॥

(१) महदिदं पुराणोपाख्यानं किं तेन? अत्रार्यं समुदायार्थः, यत्रैवं महर्षीणामपि ईदृशानि शङ्काप्रयोजनानि शपथप्रत्ययशुद्धिप्रयोजनानि वृत्तपूर्वाणि किं पुनर्मनुष्याणामिति। अभा.७३

(२) तथेति। न केवलं वसिष्ठ एव, सप्तर्षयोऽपि तथा शेपुरिति। सेन्द्राः सहेन्द्रेण। पुष्करार्थे बिसार्थे तपस्विनः शपथं समयं कृतवन्तः समाहितमनसः परस्परविशुद्ध्यर्थं 'यस्ते हरति पुष्करमि'त्येवमादिनागस्त्यादयः। तस्माद् विशिष्टैराचरितत्वाच्च शपथः प्रमाणम्। नाभा.२।२१९

सत्यं[2] वाहनशस्त्राणि गोबीजकनकानि च।
देवतापितृपादांश्च दत्तानि सुकृतानि च॥

---

* मवि., ममु. दृष्टान्तसमर्थनं मेधावत्। मच. मेधावत्, दृष्टान्तं समर्थ्य सर्वं दिव्यविधिमुदाहरत्।

(१) **अभा.**७३. (२) **नासं.**२।२१८ (शपथा ह्यृषिदेवानां पुरा सृष्टाः स्वयम्भुवा) शङ्कि (शब्दि); **नास्मृ.** ४।२४३ अपि (ह्यपि) नेति (नेन); **अभा.**७३ शेपे (चक्रे) शेषं नास्मृवत्; **व्यक.**९७ अपि च स्मृताः (च महात्मनाम्) ति शङ्कि (तु शब्दि); **व्यसौ.**८९ अपि च स्मृताः (च महात्मनाम्) थं (थैः) ति शङ्कि (षु शक्ति); **व्यप्र.** २२० शेपे (लेभे) शेषं व्यकवत्; **बाल.**२।११३ अपि च स्मृताः (च महात्मनाम्) नेति (नेन).

१ कः स्त. २ प्राक्कृत. ३ त्वाकृता. ४ ति प्र. ५ न्तो न. ६ यस्यातो रूढ्या श. ७ त इ.

(१) **नासं.**२।२१९ थेन्द्राद्याः (था सेन्द्राः); **नास्मृ.** ४।२४४ पूर्वार्धे (सप्तर्षयस्तथेन्द्रेण पुष्करार्थेन शङ्किताः); **अभा.**७३ नास्मृवत्; **व्यक.**९८; **स्मृच.**५०; **सवि.**१०६ (=); **व्यसौ.**८९ पूर्वार्धे (महर्षयस्त्वथेन्द्रश्च पुष्करार्थे निबोधिताः); **व्यप्र.**२२० व्यसौवत्; **बाल.**२।११३ पूर्वार्धे (महर्षयस्त्वथेन्द्रेण पुष्करार्थेन शङ्किताः); **प्रका.**९४.

(२) **नास्मृ.**४।२४८ कानि (कादि) दांश्च (दाश्च); **अपु.**२५५। ४९-५० सत्यं (सत्य) पितृ (गुरु) दत्तानि सु (इष्टापूर्त); **अभा.** ७४ नास्मृवत्; **विश्व.**२।९८; **मिता.** २।९६ सत्यं (सत्य); **अप.** २।९५ सत्यं (सत्य) दांश्च (दाश्च); **स्मृच.**५०:९६ सत्यं (सत्य); **दीक.**४२ दांश्च (दाश्च); **स्मृसा.**११४ सत्यं (सत्य) कनका (काञ्चना); **स्मृचि.**५९ स्मृसावत्; **नृप्र.**१२; **दित.** ५७५ दांश्च (दांस्तु); **सवि.**१०५ दांश्च (दाश्च) बृहस्पतिः; **व्यसौ.**८९ दत्तानि सुकृतानि (दारपुत्रशिरांसि) शेषं अपवत्;

(१) एते वर्णानुसारेण पुरुषानुसारेण च शपथप्रकाराः दर्शिताः। अभा.७४

(२) अन्ये पुनः शपथाः अल्पार्थविषयाः 'सत्ये'त्यादिनारदादिस्मरणात्। मिता.२।९६

(३) सुकृतानि चेति चशब्देनाऽन्येऽपि लोकप्रसिद्धाः शपथाः संगृह्यन्ते। स्मृच.९६

**[1]स्पृशेच्छिरांसि पुत्राणां दाराणां सुहृदां तथा।**
**अभियोगेषु सर्वेषु कोशपानमथापि वा॥**
**[2]इत्येते शपथाः प्रोक्ता मनुना स्वल्पकारणे।**
**पातकेष्वभियोगे च विधिर्दिव्यः प्रकीर्तितः॥**

स्वल्पकारिणः स्वल्पापराधे इत्यर्थः। स्मृच.९६

## बृहस्पतिः

**[3]सत्यं वाहनशस्त्राणि गोबीजकनकानि च।**
**देवब्राह्मणपादांश्च पुत्रदारशिरांसि च॥**

अत्र दैविकी द्वेधा शपथदिव्यभेदात्। तदाह बृहस्पतिः – सत्यमिति। व्यचि.२७

**[1]एते तु शपथाः प्रोक्ताः स्वल्पेऽर्थे सुकराः सदा।**
**साहसेष्वभिशापे च दिव्यान्याहुर्विशोधनम्॥**

हलायुधेन तु दिव्यशपथयोरभेद एवोक्तः। व्यचि.२७

अत्र शपथानां दिव्यभिन्नतयोपन्यासात् धटादिषु चापरिगणनात् न दिव्यत्वमतो न दिव्यधर्माणामुपवासार्द्रवासस्त्वादीनामन्वयः। किं तु शौचार्थं स्नानाचमनादिमात्रमस्येति द्रष्टव्यम्। *व्यचि.९२

## कात्यायनः

**[2]यत्रोपदिश्यते कर्म कर्तुरङ्गं न तूच्यते।**
**दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः॥**

स्पर्शनं च दक्षिणकरेण कुर्यात्। तथा च कात्यायनः– यत्रेति। व्यप्र.२२०

**[3]आ चतुर्दशकादह्नो यस्य नो राजदैविकम्।**
**व्यसनं जायते घोरं स ज्ञेयः शपथैः शुचिः॥**

व्यसनं आपत्। घोरं अतिपीडाकरम्। अल्पस्य शरीरधर्मत्वात्। तच्च प्रागुक्तरोगादि। अत्राह्नो दिवसस्य योऽयं चतुर्दशभागः तस्मादर्वाग् व्यसनं न जायते स शपथे शुचिरित्यर्थः। कर्तव्यस्य शपथस्य स्वल्पविषयत्वेन बह्ववधेरनुचितत्वात्। व्यप्र.२२०

---

**व्यप्र.१७०** दांश्च (दाश्च); **व्यउ.**५२-५३ सत्यं (सत्य); **व्यम.**२०; **विता.**२०२ सत्यं (सत्य); **राकौ.**४०७; **प्रका.**९४; **समु.**५० अपवत्.

(१) **मिता.**२।९६; **स्मृचि.**५९; **नृप्र.**१२ पू.; **दित.**५७५; **व्यप्र.**१७०; **व्यउ.**५३; **व्यम.**२०; **विता.**२०२-२०३; **राकौ.**४०७; **समु.**५० तथा (तदा). (२) **नास्मृ.**४।२५० ष्वभि (ष्वाभि); **अपु.**२५५।५० (इत्येते सुकराः प्रोक्ताः शपथाः स्वल्पसंशये) पू.; **अभा.**७४; **विश्व.**२।९८ ष्व (त्व) च (वा); **मिता.**२।९६ पू.; **स्मृच.**९६ रणे (रिणः) पू.; **दीक.**४२ पू.; **स्मृचि.**५९ इत्ये (एते) पू.; **दित.**५७५ रणे (रणात्) पू.; **व्यसौ.**९० स्वल्प (शून्य) उत्तरार्धे (पातकेष्वभिशापेषु विधिर्दिव्यं प्रकीर्तितम् ?); **व्यप्र.**१७० पू.; **व्यउ.**५३ दितवत्, पू.; **व्यम.**२० दितवत्, पू.; **विता.**२०३ पू.; **राकौ.**४०७ णे (णात्) पू.; **समु.**५० पू.

(३) **व्यक.**९८ कनका (रजता); **स्मृच.**९६ त्यं वा (त्यवा); **पमा.**१५१ त्यं (तां); **व्यचि.**२७ कनका (काञ्चना) दांश्च (दांश्चः) ९१ शस्त्राणि (मस्त्रं च) कनका (काञ्चना) दाश्च (दांश्च); **व्यत.**२२८ दाश्च (दांश्च) उत्त.; **दित.**६१२ व्यतवत्; **सवि.**१७६ शस्त्रा (शास्त्रा) दाश्च (दांश्च); **चन्द्र.**१५९ त्यं (त्य) कनका (काञ्चना) उत्तरार्धे (देवता विप्रपादाश्च दत्तानि सुकृतानि च); **वीमि.**२।११३ शस्त्रा (मस्त्रा); **व्यप्र.**१७० दाश्च (दांश्च) : २२० त्यं (त्य); **व्यम.**३८ दाश्च (दांश्च); **समु.**५०.

* व्यत., दित., वीमि. व्यचिगतम्।

(१) **व्यक.**९८ स्वल्पे...दा (मनुना स्वल्पकारणे) उत्तरार्धे (पातकेष्वभिशापे च विधिर्दिव्यः प्रकीर्तितः); **स्मृच.**९६ पू. : १०२ पे च (पेषु); **पमा.**१५१ स्वल्पेऽर्थे (अल्पार्थे) पू.; **व्यचि.**२७ ल्पे (ल्पा) राः सदा (रास्तथा) पे च (पेषु): ९१ स्वल्पे...दा (मनुना स्वल्पकारणे) न्याहुर्वि (नि परि); **व्यत.**२२८ स्वल्पे...दा (मनुना स्वल्पकारणे) न्याहुः (नि तु); **दित.**६१२ एते तु (इत्येते) शापे च (योगेषु); **सवि.**१७६ स्वल्पे (सत्ये) पू.; **वीमि.**२।११३ स्वल्पे...दा (मनुना स्वल्पकारणे) पू.; **व्यप्र.**१७० तु (च) स्वल्पे (स्वल्पा) पू.: २२० तु (च) स्वल्पे...दा (मुनिभिः स्वल्पकारणे) **पू.; व्यम.** ३८ तु (च) पे च (पेषु); **समु.**५०.

(२) **दित.**६१२; **व्यप्र.**२२०. (३) **व्यक.**९८ थैः (थे); **स्मृसा.**११५ : ११८ स...शुचिः (स विशुद्धो भवेन्नरः); **व्यचि.**९३ व्यकवत्; **व्यत.**२२९ व्यकवत्; **दित.**६११ व्यकवत्; **चन्द्र.**१६४ विक (वक) स ज्ञेयः (ज्ञेयः स) थैः (थे); **व्यप्र.**२२० व्यकवत्; **व्यउ.**७१; **व्यम.**३८; **बाल.**२।११३ व्यकवत्; **समु.**६४ व्यकवत्.

**हारीतः**

[1]निष्के तु सत्यवचनं द्विनिष्के पादलम्भनम् ।
ऊनत्रिके तु पुष्पं स्यात् कोशपानमतः परम् ॥
[2]धने प्रमुषिते चोरैः प्रहृतेऽपि धनी स्वयम् ।
परिमाणं स्वरूपं च शपथेन विशोधयेत् ॥

चोरैरपहृते द्रव्ये तद्द्रव्ये गुरुपरिमाणं स्वरूपं च वाऽल्पपरिमाणं वाऽनादृत्य शपथेनैव दण्डपाशिकानां द्रव्यपरिमाणं च द्रव्यवान् साधयेदित्यर्थः । सवि.१८३

[3]चोरैरपहृते स्वामी स्वल्पे द्रव्ये महत्यपि ।
न दृष्टशपथं कुर्याददृष्टेनैव साधयेत् ॥

**यमः**

[4]कृत्वा मृषा तु शपथं कीटस्य वधसंयुतम् ।
अनृतेन च युज्येत वधेन च तथा नरः ॥
[5]तस्मान्न मिथ्या शपथं नरः कुर्याद्यथेप्सितम् ॥

(१) **मिता.**२।११३ ( = ) ऊन...ष्पं (त्रिकादर्वाक् तु पुण्यं); **स्मृच.**१०० स्मृत्यन्तरम्; **पमा.**१५६ स्मृत्यन्तरम्; **नृप्र.**१६ मितावत्; **सवि.**१७४ पान (दान) : २१७ (त्रिकादर्वाक्छिरः पुष्पं कोशदानमतः परम्) विष्णुः; **व्यप्र.**१७५ स्मृत्यन्तरम्; **विता.**२७१ मितावत्, मनुः; **राकौ.**४४० ऊनत्रिके तु पुष्पं (त्रिकादर्वाक्तु पुण्यं); **प्रका.**६४ स्मृत्यन्तरम्; **समु.**५३ स्मृत्यन्तरम्. (२) **सवि.**१८३; **समु.**५१ऽपि (वा) न विशोध (नैव भाव). (३) **समु.**५१.

(४) **व्यक.**९८; **स्मृसा.**११९ क्रमेण मनुः; **व्यचि.**९२ कृत्वा मृषा (मृषा कृत्वा); **व्यत.**२२९ कृत्वा...थं (वृथा तु शपथं कृत्वा); **दित.**६१३; **व्यसौ.**९० मृषा (वृथा) च (तु); **व्यप्र.**२२१; **बाल.**२।११३ च यु (तु यु).

(५) **व्यक.**९८; **स्मृसा.**११९ क्रमेण मनुः; **व्यचि.**९२; **व्यत.**२२९ (तस्मान्न शपथं कुर्यान्नरो मिथ्या वधेप्सितम्);

(१) कीटपदं प्राणिमात्रोपलक्षणम् । तेन यद्येतन्मया कृतं तदा मम ब्राह्मणवध इत्यादौ शपथे मृषाकृते कर्तुर्ब्रह्मवधभागिता भवतीत्यर्थः । व्यचि.९२

(२) कीटस्येति यज्जन्तुवधेऽल्पदोषस्तस्योपलक्षणम् । तेनात्यन्तानुपयुक्तकीटादीनामपि वधसंयुक्तः शपथोऽनर्थहेतुः । तद्वधपापेन मृषाशपथकर्ता युज्यत इत्यर्थः । यत्तु स्मृतितत्त्वे प्राणिमात्रोपलक्षणमित्युक्तं तदयुक्तम् । ब्राह्मणादीनां प्राणित्वेन संग्रहाद् मिथ्याशपथकरणे तद्वधजनितदोषप्रसङ्गात् । व्यप्र.२२१

**माण्डव्यः**

[1]शपथो द्विविधः प्रोक्तः शीत उष्मस्तथापरः ।
सार्धत्रिचन्द्रदिवसैः शीत उष्मस्तत्कालिकः स्मृतः॥
शीते पुत्रकलत्रादिमरणे तु पराजयः ।
तीक्ष्णैर्विस्फोटदंशादि वक्तव्यं भङ्गलक्षणम् ॥

**स्मृत्यन्तरम्**

[2]घटादयो धर्मजान्ता यत्र नोक्ता मनीषिभिः ।
तत्र शोध्यश्च शपथैरभियुक्तस्तु मानवः ॥
[3]अब्राह्मणान्नृपः सम्यक् कारयेद्देवसंनिधौ ।
शपथं तदलाभे च ब्राह्मणस्य समीपतः ।
तदलाभे नृपस्याथ भगवान् काश्यपोऽब्रवीत् ॥

**अनिर्दिष्टकर्तृकवचनम्**

[4]शपथो द्विविधः प्रोक्तो दैवो दिव्यस्तथैव च ।
सद्यः प्रत्ययकृद्दिव्यं दैवस्तूह्याच्चतुर्दश ॥

**दित.**६१३ व्यतवत्; **व्यसौ.**९०; **व्यप्र.**१२१ व्यतवत्; **बाल.**२।११३ यथे (द्वधे).

(१) **स्मृचि.**५९. (२) **समु.**५१. (३) **मभा.**१३।१४. (४) **स्मृचि.**५८.

# दिव्यमातृका

## गौतमः

वर्णविशेषेण दिव्यविशेषः

[1]शूद्रस्य फालं दातव्यम् ।

## विष्णुः

दिव्यविषयः

[2]अथ समयक्रिया ।

(१) समयक्रिया धटादिदिव्यकरणम् । स्मृच.१०२

(२) समयक्रियाऽलौकिकक्रिया । सवि.१७४

[3]**राजद्रोहसाहसेषु यथाकामम् ।**

राजेच्छानुसारेण दिव्यमित्यर्थः । व्यचि.८८

[4]**निक्षेपर्णस्तेयेष्वर्थप्रमाणात् ।**

(१) निक्षेपादिषु तु धनप्रमाणतारतम्यादित्यर्थः । दित.५८०

(२) वस्त्रादिविषयविवादे तु तन्मूल्यद्रव्यपरिमाणं ग्राह्यम् । *व्यप्र.१७३

[5]**अभियोक्ता वर्तयेच्छीर्षम् । अभियुक्तश्च दिव्यं कुर्यात् ।**

[6]**राजद्रोहसाहसेषु विनापि शीर्षवर्तनात् ।** तुलादीनि नियोज्यानीति शेषः । स्मृच.९७

दिव्यविशेषे देशकालजातिविशेषनियमाः

[1]**स्त्रीब्राह्मणविकलासमर्थरोगिणां तुला देया । सा च न वाति वायौ । न कुष्ठ्यसमर्थलोहकाराणामग्निर्देयः । शरद्ग्रीष्मयोश्च । न कुष्ठिपैत्तिकब्राह्मणानां विषं देयम् । प्रावृषि च । न श्लेष्मव्याध्यर्दितानां भीरूणां श्वासकासिनामम्बुजीविनां चोदकम् । हेमन्तशिशिरयोश्च ।**

(१) हेमन्तग्रहणं पुष्यमासस्य प्रतिषेधार्थं न पुनर्मार्गशीर्षस्यापि । तस्य शीतातिशयाभावेनोदकदिव्यविरोधित्वाभावात् । स्मृच.१०४

(२) हेमन्तनिषेधोऽत्र पौषमासविषय एव न तु मार्गशीर्षविषयोऽपि । मार्गशीर्षस्य 'चैत्रो मार्गशिरा' इति पूर्वोदाहृतपितामहवचनेन सकलदिव्यसाधारणत्वाभिधानात् । व्यप्र.१८१

---

* शेषं दितवत् ।

(१) सवि.१७७. (२) **विस्मृ**.९।१; **व्यक**.७७ समय (शपथ); **स्मृच**.१०२; **स्मृसा**.११५; **व्यचि**.८८; **दित**.५८०; **सवि**.१७४ अथ (यथार्हं); **वीमि**.२।९९; **व्यप्र**.१७३ व्यकवत्; **प्रका**.६४; **समु**.५३.

(३) **विस्मृ**.९।२; **व्यक**.७७ काम (क्रम); **स्मृच**.१०२; **स्मृसा**.११५ व्यकवत्; **व्यचि**.८८; **दित**.५८०; **सवि**.१७४; **वीमि**.२।९९; **व्यप्र**.१७३ द्रोहसाहसे (द्रोहादि); **प्रका**.६४; **समु**.५३.

(४) **विस्मृ**.९।३; **व्यक**.७७; **स्मृसा**.११५ (र्णं०); **व्यचि**.८८; **दित**.५८०; **सवि**.१७४ (र्णं०) प्रमा (परिमा); **वीमि**.२।९९ (र्णं०) णात् (णम्); **व्यप्र**.१७३; **समु**.५३ **र्णस्तेये** (सुवर्णस्तेयसाहसे).

(५) **विस्मृ**.९।२०-२१. (६) **विस्मृ**.९।२२;**अप**.२।९६ र्ष+(क); **व्यक**.८१; **स्मृच**.९७ द्रोह (द्रोहे) (पि०) र्ष+(क); **दीक**.४० द्रोह (द्रोहे) षु (च); **व्यचि**.८४ द्रोह (द्रोहे) षु (च) (पि०) र्ष+(प्र); **व्यसौ**.७५ व्यचिवत्; **वीमि**.२।९६ व्यचिवत्; **व्यप्र**.१७२ र्षं (र्षं) शेषं व्यचिवत्; **विता**.२०१ व्यचिवत्; **बाल**.२।९६ द्रोह (द्रोहे) वर्तनात् (कार्पणम्); **प्रका**.६२ स्मृचवत्; **समु**.५० (पि०) र्ष+(क).

(१) **विस्मृ**.९।२३-३०; **व्यक**.८० (स्त्री ... वायौ०) ष्मयोश्च (ष्मयोरपि) श्लेष्म (श्लेष्मिणां) चोदकम् (उदकम्) हेमन्त (हिम); **स्मृच**.१०४ (स्त्री ... वायौ०); **पमा**.१६२ वायौ+(न नास्तिकस्य) कुष्ठ्य (च कुष्ठ्य) शरद् (न शरद्) चोदकम् (न चोदकम्); **व्यचि**.८७ (स्त्री...वायौ०) ष्मयोश्च (ष्मयोः) प्रावृषि च (प्रावृषि) व्याध्य (व्याध्या) (अम्बुजीविनां च०); **व्यप्र**.१७८ (स्त्री ... प्रावृषि च०) श्लेष्म (श्लैष्मिकाणां) चोद (उद): १८१ तुला (न तुला) (सा च ०) श्लेष्म (श्लैष्मिकाणां) चोद (उद); **व्यम**.२१ (स्त्री....प्रावृषि च ०) ष्मव्याध्यर्दि (ष्मिणां व्याधि) (अम्बु ... योश्च ०); **बाल**.२।९९ (न श्लैष्मिकव्याधितानां भीरूणां श्वासकासिनाम् । न लोहशिल्पिनामग्निः सलिलं नाम्बुसेविनाम् ॥) एतावदेव; **समु**.५४-५५ विकला (विकलाङ्गा) (सा च ०).

**[1] न नास्तिकेभ्यः कोशो देयः। न देशे व्याधिमरणोपसृष्टे च।**

**[2] सचैलस्नातमाहूय सूर्योदय उपोषितम्।**
**कारयेत् सर्वदिव्यानि देवब्राह्मणसंनिधौ॥**

### शङ्खः शङ्खलिखितौ च।

दिव्यविषयः दिव्यप्रकाराश्च

**[3] असाक्षिप्रणिहिते दिव्यम्। अथवा मित्रैः सज्जनैरात्मानं वा शोधयेदेव। स चेद्दण्डयोऽर्थिनां चार्थं दापयेत्।**

**[4] असाक्षिप्रणिहिते पुरुषप्रत्ययः शासनं भेदनं ताडनम्। संन्यस्ते वा विवादे वा दैवं वा कोशविषभक्षणशस्त्रजलम्।**

असाक्षिप्रणिहिते साक्षिभिरनिर्णीते पुरुषप्रत्ययः। पुरुषः प्रतीयते येन मिथ्याकारितया, पुरुषप्रत्ययः शासनादि। भेदनं प्रतोदादिः। संन्यस्ते लिखितादिप्रमाणरहिते, दैवं दिव्यं धटादि। व्यक.७६

**[5] तत्र दिव्यं नाम तुलारोहणं विषाशनमप्सु प्रवेशो लोहधारणमिष्टापूर्तप्रदानमन्यांश्च शपथान्कारयेत्।**

### याज्ञवल्क्यः

**[6] तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये।**
**महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि॥**

(१) लिखिताद्यभावे वा परितुष्टयसामर्थ्ये सति तुलाग्न्याप इति। महाभियोगेष्विति वदन्नमहाभियोगेषु शपथप्राप्तिं दर्शयति। महाभियोगे महापातकाद्यभियोगे। स्पष्टमन्यत्। *विश्व.२।९८

(२) लिखितसाक्षिभुक्तिलक्षणं त्रिविधं मानुषप्रमाणमुक्तम्। अथावसरप्राप्तं दिव्यं प्रमाणमभिधास्यन् 'तुलाग्न्याप' इत्यादिभिराद्यैः पञ्चभिः श्लोकैर्दिव्यमातृकां कथयति। तत्र तावद्दिव्यान्युपदिशति — तुलाग्न्यापो विषमिति। तुलादीनि कोशान्तानि पञ्च दिव्यानीह धर्मशास्त्रे विशुद्धये संदिग्धस्यार्थस्य संदेहनिवृत्तये दातव्यानीति।

अन्यत्रान्यान्यपि तण्डुलादीनि दिव्यानि सन्ति। 'धटोऽग्निरुदकं चैव विषं कोशस्तथैव च। तण्डुलाश्चैव दिव्यानि सप्तमस्तप्तमाषकः'॥ इति पितामहस्मरणात्। अतः कथमेतावन्त्येवेत्यत आह —' महाभियोगेष्वेतानि ' एतानि महाभियोगेष्वेव नान्यत्रेति नियम्यते, न पुनरिमान्येव दिव्यानीति। महत्त्वावधिं च वक्ष्यति। नन्वल्पाभियोगेऽपि कोशोऽस्त्येव, 'कोशमल्पेऽपि दापयेत्' इति स्मरणात्। सत्यं, कोशस्य तुलादिषु पाठो न महाभियोगेष्वेवेति नियमार्थः; किन्तु सावष्टम्भाभियोगेऽपि प्राप्त्यर्थः। अन्यथा शङ्काभियोग एव स्यात्। ' अवष्टम्भाभियुक्तानां धटादीनि विनिर्दिशेत्। तण्डुलाश्चैव कोशश्च शङ्कास्वेव न संशयः '॥ इति स्मरणात्। महाभियोगेषु शङ्कितेषु सावष्टम्भेषु चाविशेषेण प्राप्तापवादमाह—शीर्षकस्थेऽभियोक्तरि। एतानि तुलादीन्यभियोक्तरि शीर्षकस्थेऽभियुक्तस्य भवन्ति। शीर्षकं शिरः। व्यवहारस्य चतुर्थः पादो जयपराजयलक्षणस्तेन च दण्डो लक्ष्यते, तत्र तिष्ठतीति शीर्षकस्थः। तत्प्रयुक्तदण्डभागित्यर्थः। ×मिता.

---

(१) **विस्मृ.**९।३१-३२; **व्यक.**८० केभ्यः (काय); **स्मृच.**१०४ (न देशे ०); **पमा.**१६२ (नास्तिकेभ्यः कोशं न देयम्) व्याधिमरणो (व्याधयु); **व्यचि.**८७; **समु.**५५ (न देशे ०).

(२) **विस्मृ.**९।३३ चैल (चैलं); **व्यक.**८२ देव (नृप) विष्णुकात्यायनौ; **व्यचि.**८४ देव (नृप) विष्णुकात्यायनौ; **व्यसौ.**७५ व्यचिवत्.

(३) **अप.**२।२६९. (४) **व्यक.**७६. (५) **अप.**२।९५ (तत्र ०)रण (र)शङ्खः; **व्यक.**९८(तत्र ... धारणम् ०); **स्मृच.**९६ व्यकवत्; **पमा.१५१** रोह (धार) प्सु (ग्नि) शङ्खः, 'इष्टापूर्ते' ति शङ्खलिखितावपि; **व्यचि.**९२ व्यकवत्, शंखः; **वीमि.**२।११३ पूर्त (पूर्तेः) शेषं व्यकवत्, शङ्खः; **व्यप्र.**१७० रोह (धार) शङ्खः; **प्रका.**६२ व्यकवत्, शंखः; **समु.**५० (तत्र०) शेषं पमावत्, शंखः.

(६) **यास्मृ.**२।९५; **अपु.**२५५।२८; **विश्व.**२।९८; **मिता.**; **अप.** ष्वेता (स्वेता); **व्यक.**८१; **स्मृच.**९६:९८ उत्त.; **पमा.**१५१; **स्मृसा.**११४; **व्यचि.**७९ कोशो ( चैव ); **नृप्र.**१२ पू.; **व्यत.**२११; **दित.**५७४; **सवि.**१६७ नीह (नाहुः) चतुर्थपादं विना; **मच.**८।११६; **व्यसौ.**७५ दिव्यानीह (देहानां हि) ष्वेता (देया); **वीमि.**; **व्यप्र.**१७१; **व्यउ.**५२-५३ ग्न्यापो ( ग्न्यम्बु ); **व्यम.**२०; **विता.**१९५ ष्वे (वै); **राकौ.**४०६ नीह (न्याहुः); **प्रका.**६२; **समु.**५०.

* व्यत. मितागतं विश्वगतं च।
× व्यचि., दित., वीमि., विता. मितागतम्।

(३) यानि विशुद्धयेऽभियोगे विहितानि दिव्यानि तानि तुलादीनि वेदितव्यानि । एतानि दिव्यशब्दवाच्यानि एषु दिव्यशब्दप्रयोगात् । एवं च शपथवाच्यान्यपि । उक्तानां तु तुलादिदिव्यानां विषयविशेषमभियोक्तुश्च क्रियाविशेषं विधातुमिदानीमाह—महाभियोग इति । यान्येतानि तुलादीनि कोशान्तानि दिव्यानि विशुद्ध्यर्थमुक्तानि, तानि महाभियोगविषये भवन्ति, नान्यथेत्येकं वाक्यम् । तथा 'शीर्षकस्थेऽभियोक्तरि' इति द्वितीयम् । अनयोश्च वाक्ययोरेतानीति साधारणः शेषः । सहस्रादिपरिमाणद्रव्यविषयो महापातकविषयो वा आक्षेपो महाभियोगः । अभियुक्तस्य दिव्यतो दोषाभावेऽहं दोषवान् दोषानुरूपस्य दण्डस्य दातेत्यभ्युपगम इति (ह) शीर्षम् । तदेव शीर्षकम् । एवं चाभियोक्तरि शीर्षकस्थितिं विदधानेऽर्थादभियुक्तस्य दिव्यकारित्वं नियम्यत इति संभाव्यम् । *अप.

(४) अग्निशब्देन तप्तायःपिण्डस्तप्तमाषस्तप्तफालं च निर्दिश्यते । सामान्येनाभिधानात् । तेन तप्तमाषफाले अप्यस्मादेव वचनात् महाभियोगे शीर्षकस्थे चाभियोक्तरि विहिते इति बोद्धव्यम् । शीर्षकं विवादपराजयनिबन्धनो दण्डः । व्यवहारशिरःस्थानीयत्वात्तत्र तिष्ठतीति शीर्षकस्थः । एतदुक्तं भवति—न महाभियोगमात्रे तुलादीनि भवन्ति । किन्तु यत्रैतस्य जयेऽहमित्थं दण्ड्य इति शरीरदण्डमर्थदण्डं वा मिथ्याभियोगिनो विहितमभियोक्ता स्वकृताभियोगदाढर्यख्यापनायाङ्गीकुरुते तत्रैवेति । ×स्मृच.९६

न च 'तण्डुलाश्चैव कोशश्च शङ्कास्वेतान्नियोजयेत्' इति पितामहवचने तण्डुलसाहचर्याच्छङ्कास्वेव कोश इति शङ्का कार्या । 'शीर्षकस्थ' इत्यादिपूर्वोक्तयाज्ञवल्क्यवचनविरोधापत्तेः । तण्डुलसाहचर्यं त्वल्पाभियोगेऽपि कोशो भवतीति ज्ञापनार्थम् । एवं च 'महाभियोगेष्वेतानि' इति नियमस्तुलादिविषान्तविषय एवेत्यनुसंधेयम् । कोशस्यापि नियमे पूर्वोक्तनारदवचनविरोधः स्यात् । स्मृच.९८

(५) मिता. टीका — यत्राभियोक्ताऽहमस्यापराधं जानामीति शीर्षकस्थो भवति स सावष्टम्भाभियोग इत्युच्यते । सुबो.

* व्यक. अपगतम् । × पमा., व्यप्र. अग्निपदार्थः स्मृचवत्, शेषं मितागतम् ।

दिव्यकर्तारः शिरोवर्तनविषयश्च

**'रुच्या वाऽन्यतरः कुर्यादितरो वर्तयेच्छिरः ।**
**विनाऽपि शीर्षकात्कुर्यान्नृपद्रोहेऽथ पातके ॥**

(१) किमभियोक्त्राऽवश्यं शिरो वर्तनीयम् ? एष तावन्न्यायः—रुच्येति । इच्छयैवाभियोज्याभियोक्त्रोरन्यतरो दिव्यं कुर्यात् । अन्यतरः शिरो वर्तयेत् । यद्यभियुक्तोऽर्थोऽन्यथा स्यात्, ततो ममेदं धनं सर्वस्वं वा यद्वा इदमङ्गं शिरो वा गच्छेदित्येवमवष्टम्भेन दिव्यक्रियाप्रयोक्ता शिरोवर्तीत्युच्यते । राजद्रोहमहापातकाशङ्कायां त्वशीर्षकमपि स्यादेव । स्पष्टमन्यत् । विश्व.२।९९

(२) 'ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्' इति भावप्रतिज्ञावादिन एव क्रियाव्यवस्था दर्शिता, तदपवादार्थमाह—रुच्येति । रुच्याऽभियोक्त्रभियुक्तयोः परस्परसंप्रतिपत्त्याऽन्यतरोऽभियुक्तोऽभियोक्ता वा दिव्यं कुर्यादितरोऽभियुक्तः अभियोक्ता वा शिरः शारीरमर्थदण्डं वा वर्तयेदङ्गीकुर्यात् । अयमभिसंधिः । न मानुषप्रमाणवद्दिव्यं प्रमाणं भावैकगोचरं, अपि तु भावाभाववविशेषेण गोचरयति । अतश्च मिथ्योत्तरे प्रत्यवस्कन्दने प्राङ्न्याये वाऽर्थिप्रत्यर्थिनोरन्यतरस्येच्छया दिव्यं भवतीति । अल्पाभियोगे महाभियोगे शङ्कासावष्टम्भयोरप्यविशेषेण कोशो भवतीत्युक्तम् । तुलादीनि विषान्तानि तु महाभियोगेष्वेव सावष्टम्भेष्वेवेति च नियमो दर्शितः । तत्रावष्टम्भाभियोगेष्वेवेत्यस्यापवादमाह—विनाऽपीति । राजद्रोहाभिशङ्कायां ब्रह्महत्यादिपातकाभिशङ्कायां च

(१) **यास्मृ.**२।९६; **अपु.**२५५।२९ दित (दप); **विश्व.**२।९९ नृप (राज); **मिता.**; **अप.**; **व्यक.**८१ रुच्या (तुला); **स्मृच.**९६-९७; **पमा.**१५२ पू.; **स्मृसा.**११४-११५ रुच्या वा (इच्छया) कात्कुर्यात् (कं देयं) नारदः; **व्यचि.**८३ कात् (कं) ऽथ (च); **स्मृचि.**५१ ऽथ (च); **व्यत.**२११ कात् (कं); **दित.**५७५ कात् (कान्) ऽथ (ति); **सवि.**१६७ पू.; **मच.**८।११६ तरः (तरं) दितरो (दपरो) कात् (कं) नृप (राज) ऽथ (च); **चन्द्र.**१६० स्मृसावत्, उत्त.; **व्यसौ.**७५ ऽथ (च) बृहस्पतिः; **वीमि.** व्यतवत्; **व्यप्र.**१७१-१७२; **व्यउ.**५३ उत्त.; **व्यम.**२० व्यतवत्; **विता.**२०० (=) नृप (राज) कात् (कं); **राकौ.**४०७ व्यतवत्; **प्रका.**६२; **समु.**५०.

शिरःस्थायिना विनाऽपि तुलादीनि कुर्यात् । महाचौर्याभिशङ्कायां च । यथाह 'राजभिः शङ्कितानां च निर्दिष्टानां च दस्युभिः । आत्मशुद्धिपराणां च दिव्यं देयं शिरो विना' इति ॥ तण्डुलाः पुनरल्पचौर्यशङ्कायामेव । 'चौर्ये तु तण्डुला देया नान्यत्रेति विनिश्चयः' इति पितामहवचनात् । तप्तमाषस्तु महाचौर्याभिशङ्कायामेव । 'चौर्यशङ्काभियुक्तानां तप्तमाषो विधीयते' इति स्मरणात् । अन्ये पुनः शपथाः अल्पार्थविषयाः । यद्यपि मानुषप्रमाणानिर्णेयस्य निर्णायकं यत्तद्दिव्यमिति लोकप्रसिद्ध्या शपथानामपि दिव्यत्वं,तथापि कालान्तरनिर्णयनिमित्तत्वेन समनन्तरनिर्णयनिमित्तेभ्यो धटादिभ्यो दिव्येभ्यो भेदत्वव्यपदेशो ब्राह्मणपरिव्राजकवत् । कोशस्य तु शपथत्वेऽपि धटादिषु पाठो महाभियोगविषयत्वेनावष्टम्भाभियोगविषयत्वेन च धटादिसाम्यान्न तु समनन्तरनिर्णयनिमित्तत्वेन । तण्डुलानां तप्तमाषस्य च समनन्तरनिर्णयनिमित्तत्वेऽप्यल्पविषयत्वेन शङ्काविषयत्वेन च धटादिवैलक्षण्यात्तेष्वपाठ इति संतोष्टव्यम् । एतानि च दिव्यानि शपथाश्च यथासंभवमृणादिषु विवादेषु प्रयोक्तव्यानि । *मिता.

(३) इदानीमभियोक्तृकर्तृकशीर्षकावस्थाननियमस्य क्वचिन्निमित्तेऽपवादमाह––रुच्येति । द्रोहो जिघांसा, धनवनितापहारः शत्रुपक्षपातो मन्त्रभेदो वा । ×अप.

(४) शीर्षकात् शीर्षकवर्तनात् इत्यर्थः । स्मृच.९७

(५) मिता.टीका–– ब्राह्मणपरिव्राजकवदिति । अयमर्थः । 'ब्राह्मणानामन्त्रये'त्युक्ते परिव्राजकेऽपि ब्राह्मणत्वस्याविशिष्टत्वात्तन्निमन्त्रणेऽपि प्राप्ते पुनः 'परिव्राजकमामन्त्रये'ति पृथगभिधानं यथा परिव्राजकप्राधान्यप्रतिपादनार्थं तथा तुलादीनां शपथानां च सिद्धेऽपि दिव्यत्वे तुलादिभ्यः शपथानां पृथगभिधानं कालान्तरनिर्णयनिमित्तत्वद्योतनार्थमिति । एतदुक्तं भवति । यथा परिव्राजकस्य पृथगभिधानं प्रयोजनान्तरानुसारेण तथा शपथानामपि प्रयोजनान्तरानुसारेण पृथगभिधानमिति । तच्च प्रयोजनान्तरं पूर्वमेवोक्तम् ।

* व्यचि., सवि., व्यप्र., विता. मितागतम् ।

× शेषं मितागतम् ।

अथवा 'ब्राह्मणपरिव्राजकवत्' इत्यस्यान्योऽर्थः । 'ब्राह्मणानामन्त्रय, परिव्राजकं चामन्त्रये'त्युक्ते ब्राह्मणामन्त्रणनियोगेनैव परिव्राजकेऽप्यामन्त्रणनियोगे सिद्धे पुनः परिव्राजकामन्त्रणनियोगाद्यथा परिव्राजकातिरिक्तविषयो ब्राह्मणशब्दः तथा तुलादीनां शपथानां च दिव्यत्वे सिद्धेऽपि दिव्यशब्दशपथशब्दयोः प्रयोगाद्दिव्यशब्दः शपथव्यतिरिक्ततुलादिविषय इति । सुबो.

(६) प्रत्यर्थीच्छया अर्थिनो दिव्यमाह–– रुच्येति । इतरोऽभियुक्तः । व्यत.२११

(७) एवं तयोः करणे रुचिर्द्वयोरप्यरुचिर्वा तत्र साक्षिषूभयत इत्यादि वाच्यं यथाव्याख्यातं व्यवतिष्ठते । *वीमि.

(८) अयं च विकल्पोऽभियोक्तुरिच्छायामेव । तदनिच्छायां त्वभियोज्यस्यैव दिव्यम् । व्यम.२०

दिव्याङ्गस्नानदेशकालोपवासादीनां विधिः

[१]**सचैलं स्नातमाहूय सूर्योदय उपोषितम् ।**
**कारयेत्सर्वदिव्यानि नृपब्राह्मणसंनिधौ ॥**

(१) किं सद्य एव दिव्यक्रिया ? नेत्याह । किं तर्हि ? सचैलस्नातमाहूयेति । नृपादिसंनिधिवचनं कार्यगौरवप्रतिपत्त्यर्थम् । विश्व.२।१०२

(२) किं च । पूर्वेद्युरुपोषितमुदिते सूर्ये सचैलं स्नातं दिव्यग्राहिणमाहूय नृपस्य सभ्यानां च ब्राह्मणानां संनिधौ सर्वाणि दिव्यानि कारयेत्प्राड्विवाकः । अत्र च यद्यपि 'सूर्योदय' इत्यविशेषेणोक्तं, तथापि शिष्टसमाचाराद्वानुवारे दिव्यानि देयानि । +मिता.

(३) तत्र सूर्योदयपदेन पूर्वाह्ण एव वचोभङ्ग्या विहित इत्यवगन्तव्यम् । स्मृच.१०८

(४) अत्र संक्षेपतो दिव्यसामान्यविधिर्लिख्यते ।

* शेषं मितागतम् । + अप. मितागतम् ।

(१) **यास्मृ**.२।९७; **अपु**.२५५।३२; **विश्व**.२।१०२ चैलं (चेल); **मिता**.; **अप**. लं स्नात (लस्नान); **स्मृच**. १०८ विश्ववत्; **पमा**.१६७; **स्मृसा**.११५ उत्त.; **मच**. ८।११६ स्नात (स्नान) नृप (देव); **चन्द्र**.१६० उत्त.; **वीमि**. चैलं (चेल); **व्यप्र**.१८५; **व्यउ**.५५; **व्यम**. २४ दय (दयं); **विता**.२१२ अपवत्; **राकौ**.४१३ नारदं:; **प्रका**.६८ विश्ववत्; **समु**.५७ विश्ववत्.

शुक्लपक्षे शुभदिने कृतनित्यक्रियः सोपवासो यजमानः प्रथमं ब्राह्मणान् स्वस्तिवाच्य प्राड्विवाकमध्वर्युवद् वृणुयात् । वृतश्च प्राड्विवाकस्तडागोत्सर्गविधिना कृताधिवासनयागः सोपवासः परेद्युः कृतनित्यक्रियो रविवारेण—'एह्येहि भगवन् धर्म दिव्यमेतत्समाविश । सहितो लोकपालैस्त्वं वस्वादित्यमरुद्गणैः' ॥ इति पठेत् । तत्र आर्द्रवासा दिव्यकर्ता यथाविहितं दिव्यं कुर्यात् । त्रिरात्रोपवासश्चात्र शक्तस्य दिव्यकर्तुरिति विशेषः । *वीमि.

जातिविशेषादिभेदेन दिव्यभेदः

**[1]तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम् ।**
**अग्निर्जलं वा शूद्रस्य यवाः सप्त विषस्य वा ॥**

(१) न चाविशेषेण सर्वेषां सर्वदिव्यानि स्युः । किं तर्हि ? तुलेति ।

स्त्र्यादिग्रहणं क्षत्रियाद्यर्थम् । अग्निर्जलं वाऽशूद्रस्येति । अशूद्रस्याग्निर्जलं वा स्यात् । व्यवस्थितविकल्पश्चायम् । क्षत्रियस्याग्निः, वैश्यस्य च जलं, शूद्रस्य तु यवाः सप्त विषस्य वा जलं वा अग्निर्वेत्यर्थः । यद्वा अग्निर्जलं वाऽशूद्रस्य क्षत्रियादिजातस्येत्यर्थः । ततश्च क्षत्रियादीनामग्न्यादिष्विच्छाविकल्पः । स्मृत्यन्तरात्तु देशकालादिव्यवस्थाप्रपञ्चकल्पना ।

विश्व.२।१०३

(२) स्त्री स्त्रीमात्रं जातिवयोऽवस्थाविशेषानादरेण । बाल आ षोडशाद्वर्षाज्जातिविशेषानादरेण । वृद्धोऽशीतिकावरः । अन्धो नेत्रविकलः । पङ्गुः पादविकलः । ब्राह्मणो जातिमात्रम् । रोगी व्याधितः । एतेषां शोधनार्थं तुलैवेति नियम्यते । अग्निः फालस्तप्तमाषश्च क्षत्रियस्य । जलमेव वैश्यस्य । वाशब्दोऽवधारणे । विषस्य यवा उक्तपरिमाणाः । सप्तैव शूद्रस्य शोधनार्थं भवन्ति । ब्राह्मणस्य तुलाविधानात्, शूद्रस्य यवाः सप्त विषस्य वेति विषविधानादग्निर्जलं वेति क्षत्रियवैश्यविषयमुक्तम् । एतदेव स्पष्टीकृतं पितामहेन—'ब्राह्मणस्य घटो देयः क्षत्रियस्य हुताशनः । वैश्यस्य सलिलं प्रोक्तं विषं शूद्रस्य दापयेत्' इति ॥ यत्तु स्त्र्यादीनां दिव्याभावस्मरणम्— 'सव्रतानां भृशार्तानां व्याधितानां तपस्विनाम् । स्त्रीणां च न भवेद्दिव्यं यदि धर्मस्त्वपेक्षितः' इति ॥ तद् 'रुच्या वाऽन्यतरः कुर्यात्' इति विकल्पनिवृत्त्यर्थम् । एतदुक्तं भवति, अवष्टम्भाभियोगेषु स्त्र्यादीनामभियोक्तृत्वेऽभियोज्यानामेव दिव्यमेतेषामभियोज्यत्वेऽप्यभियोक्तॄणामेव दिव्यम् । परस्पराभियोगे तु विकल्प एव । तत्रापि तुलैवेत्यनेन वचनेन नियम्यते । तथा महापातकादिशङ्काभियोगे स्त्र्यादीनां तुलैवेति । एतच्च वचनं सर्वदिव्यसाधारणेषु मार्गशिरश्चैत्रवैशाखेषु स्त्र्यादीनां सर्वदिव्यसमवधाने नियामकतयाऽर्थवत् । न च सर्वकालं स्त्रीणां तुलैवेति । 'स्त्रीणां च न विषं प्रोक्तं न चापि सलिलं स्मृतम् । घटकोशादिभिस्तासामन्तस्तत्त्वं विचारयेत्' ॥ इति विषसलिलव्यतिरिक्तघटकोशाग्न्यादिभिः शुद्धिविधानात् । एवं बालादिष्वपि योजनीयम् । तथा ब्राह्मणादीनामपि न सार्वकालिकस्तुलादिनियमः । 'सर्वेषामेव वर्णानां कोशशुद्धिर्विधीयते । सर्वाण्येतानि सर्वेषां ब्राह्मणस्य विषं विना' ॥ इति पितामहवचनात् । तस्मात्साधारणे काले बहुदिव्यसमवधाने तुलादिनियमार्थमेवेदं वचनम् । कालान्तरे तु तत्तत्कालविहितं सर्वेषाम् । तथा हि, वर्षास्वग्निरेव सर्वेषाम् । हेमन्तशिशिरयोस्तु क्षत्रियादित्रयाणामग्निविषयोर्विकल्पः । ब्राह्मणस्य त्वग्निरेव न कदाचिद्विषम् । 'ब्राह्मणस्य विषं विना' इति प्रतिषेधात् । ग्रीष्मशरदोस्तु सलिलमेव । येषां तु व्याधिविशेषेणाग्न्यादिनिषेधः— 'कुष्ठिनां वर्जयेदग्निं सलिलं श्वासकासिनाम् । पित्तश्लेष्मवतां नित्यं विषं तु परिवर्जयेत्' इति ॥ तेषामग्न्यादिकालेऽपि साधारणं तुलाद्येव दिव्यं भवति । तथा— 'तोयमग्निर्विषं चैव दातव्यं बलिनां नृणाम्' इति । बहुवचनाद्दुर्बलानामपि सर्वथा विधिप्रतिषेधाद्दृतुकालानतिक्रमेण जातिवयोऽवस्थाश्रितानि

---

* शेषं मितागतम् ।

(१) **यास्मृ.**२।९८; **अपु.**२५५।३३; **विश्व.**२।१०३ न्ध (तं); **मिता.**; **अप.**; **व्यक.**७९; **स्मृसा.**११७ न्धपङ्गु (नां नृप) शूद्र (विप्र); **व्यचि.**८६ न्ध (तं); **स्मृचि.**५१ न्ध (नां) वा (च); **दित.**५७७; **सवि.**१७२; **मच.**८।११६; **व्यसौ.**७३; **वीमि.**; **व्यप्र.**१७८ स्य वा (स्य च); **व्यउ.**५३; **व्यम.**२१; **विता.**२०७ व्यप्रवत्; **राकौ.**४११; **समु.**५३; **विव्य.**८.

दिव्यानि देयानि। *मिता.

(३) अत्र तुलासंबन्धित्वेन स्त्रीबालादयो विधीयन्ते। तेन स्त्रीप्रमुखाणामेव तुलेति नियमोपपत्तिः। सर्वत्र हि विधिना विधेयं नियम्यते। न चात्र तुला विधेया, किं त्वनूद्या, प्राथम्यात्। तदुक्तम्—'यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्' इति। अतश्च प्रवातादिकारिते स्त्रीप्रभृतीनां धटासंभवे दिव्यान्तरमपि देयम्। संभवे तु तुलैव। अप.

(४) षोडशवर्षाभ्यन्तरवयस्कस्य, वृद्धस्य, अन्धस्य, पङ्गोः, ब्राह्मणस्य, रोगिणश्च तुला दिव्यम्। शूद्रस्य तु अग्निर्जलं वा विषस्य सप्तयवपरिमिता भागाश्च आदेयाः। वीमि.

**नासहस्राद्धरेत्फालं न विषं न तुलां तथा।**
**नृपार्थेष्वभिशापे च वहेयुः शुचयः सदा॥**

(१) महापातकाद्याशङ्काभावे तु नासहस्रपरमिति। परशब्दोऽर्थवचनः, यथा ब्राह्मणपरमस्य द्रव्यम्। ब्राह्मणार्थमित्यर्थः।सहस्रादर्वाङ् न फालादीनि स्युः सहस्रादर्वागेषामप्रवृत्तिः। नृपार्थेषु त्वल्पाभियोगेष्वपि वहेयुः कुर्युरित्यर्थः। शुचयः सदेति। ये हि नित्यं शुचयो दैवादाशङ्किताः, त एव कुर्युः। न तु संभाविताशुचित्वा अपीत्यर्थः। विश्व.२।१००

(२) महाभियोगेष्वेतानीत्युक्तम्। तत्राभियोगस्य यदपेक्ष्यं महत्त्वं तदिदानीमाह—नासहस्रादिति।

पणसहस्रादर्वाक् फालं विषं तुलां वा न कारयेत्। मध्यवर्ति जलमपि। यथोक्तम्—'तुलादीनि विषान्तानि गुरुष्वर्थेषु दापयेत्' इति। अत्र कोशस्याग्रहणं कोशमल्पेऽपि दापयेत्' इति अल्पाभियोगेऽपि तस्य स्मरणात्। एतानि चत्वारि दिव्यानि पणसहस्रादूर्ध्वमेव भवन्तीति। नार्वागित्यर्थः। नन्वर्वागप्यग्न्यादीनि पितामहेन दर्शितानि—'सहस्रे तु धटं दद्यात् सहस्रार्धे तथायसम्। अर्धस्यार्धे तु सलिलं तस्यार्धे तु विषं स्मृतम्' इति॥ सत्यं; तत्रेत्थं व्यवस्था—यद्द्रव्यापहारे पातित्यं भवति तद्विषयं पितामहवचनमितरद्रव्यविषयं योगीश्वरवचनमिति। एतच्च वचनद्वयं स्तेयसाहसविषयम्। 'नासहस्राद्धरेत्फालम्' इत्यत्र तु ताम्रिकपणसहस्रं बोद्धव्यम्।

ननु नृपद्रोहे पातके चैतानि दिव्यान्युक्तानि। तत्कथं 'नासहस्राद्धरेत्फालम्' इत्यत्राह—नृपार्थेष्विति। नृपद्रोहेषु महापातकाभियोगे च सदा द्रव्यसंख्यामनपेक्ष्यैवैतानि दिव्यानि कुर्युरुपवासादिना शुचयः सन्तः। ×मिता.

(३) अभिशापे ब्राह्मणवधे, शुचयः परमार्थतो निर्दोषाः। +अप.

(४) एतच्चरित्रादितो मध्यमपुरुषा ये भवन्ति तेषां प्रतिषेधार्थं, मध्यमानां सहस्रादर्वागपहारेऽपह्नवे वा महाभियोगाभावात्। एवं चोत्तमानां द्विसहस्रादर्वागल्पाभियोगत्वाद्धटादिप्रतिषेधोऽवगन्तव्यः।

*स्मृच.१०१

(५) इति याज्ञवल्क्यवचनं मध्यमोत्तमविषयत्वेन बृहस्पतिवचनैकवाक्यतयाऽविरुद्धम्।÷दित.५८०-५८१

(६) पणसहस्रादर्वाक् ऋणादौ विवादे न फालं न विषं न तुलां वा हरेत्।

तथापदेनोदकं न हरेदिति समुच्चीयते। चकारेण साहससमुच्चयः। +वीमि.

(७) मिता.टीका—ननु कल्पतरुणा 'नासहस्रादिति वाक्यं' पणसहस्रादूर्ध्वं नैवापह्नवे फालादिक्रियेत्येवमपह्नवविषयतया व्याख्यातमिति तथैव कुतो नोक्तम्? इति चेन्न, उपस्थितपूर्वोक्तसंगतिसंभवेऽनुपस्थितपरतया व्याख्यानस्यानौचित्यात्। बाल.

---

* दित., सवि., व्यप्र. मितागतम्। व्यम. पदार्थो मितावत्।

(१) यास्मृ.२।९९; अपु.२५५।३० विषं (तुलां) तुलां (विषं) शापे च (योगेषु); विश्व.२।१०० स्राद्धरेत् (स्रपरं) विषं (तुला) तुलां (विषं) शापे च (योगेषु); मिता.; अप.; व्यक.७७सदा (तथा); स्मृच.१०१-१०२; स्मृसा.११६; व्यचि.८९ वहे (हरे); दित.५८० फालं (अग्निं) विषं(तुलां) तुलां (विषं) पू.; सवि.१७९ पू.; मच.८।११६ फालं (अग्निं) च (षु); चन्द्र.१६१-१६२ च वहे (षु हरे) सदा (तथा); व्यसौ.७१; वीमि.; व्यप्र.१७४ पू.; व्यउ.५३ पू. : ५५ उत्त.; विता.१९५ तुलां (तुला) पू. : १९७ पार्थेष्व (पद्रोहेऽ) उत्त.; प्रका.६४; समु.५३; विव्य.८ फालं (अग्निं) पू.

× स्मृसा., व्यचि. मितागतम्।

+ शेषं मितागतम्। * स्मृच. (पृ.१०२) मितागतम्।

÷ व्यप्र. दितवत्।

सहस्रार्थे तुलादीनि कोशमल्पेऽपि कारयेत् ।
पञ्चाशदापयेच्छुद्धमशुद्धो दण्डभाग्भवेत् ॥

## नारदः

दिव्यशपथयोर्विषयाः

यदा साक्षी न विद्येत विवादे वदतां नृणाम् ।
तत्र दिव्यैः परीक्षेत शपथैर्वा पृथग्विधैः *॥
युक्तिष्वप्यसमर्थासु शपथैरेनमर्दयेत् ।
देशकालबलापेक्षमग्न्यम्बुसुकृतादिभिः ॥

(१) यदा युक्तिभिरभियुक्ताभिः न संप्रतिपत्तिमागच्छति ऋणी, तदा तमग्न्यम्बुसुकृतादिभिः शपथैरर्दयेत् पीडयेदिति । एतच्च देशकालबलापेक्षं कुर्यात्, यादृशं देशकालयोर्बलं विभाव्यते, तद्बलापेक्षं साधनं कार्यमिति । अभा.७२-७३

(२) अर्थापेक्षं सिषाधयिषितार्थाल्पत्वमहत्वानुरूपमित्यर्थः । स्मृच.९६

(३) अस्यार्थः — यदा युक्तिरप्यसमर्था भवति, तदा शपथैरेव निर्णयः कर्तव्यः । स च निर्णयोऽर्थकालबलापेक्षया करणीयः । एतेनैतदुक्तं भवति, अर्थस्य विवादविषयस्य परिमाणबहुत्वाल्पत्वं कालस्य च पुण्यापुण्यत्वमभियुक्तस्य धर्मानुकूलादिकृतं बलवत्त्वाबलवत्त्वमपेक्ष्यानुरूपं दिव्यं दातव्यम् । न हि संभवत्यल्पवस्तुनिमित्तं पुण्यकाले कुलधर्मार्चादियुक्तोऽसत्यमपि वदति । तेन तस्य तदनुरूपमेव दिव्यम् । एवमन्यत्रापीति । अग्न्यम्बुसुकृतादिभिरिति । अत्राग्निशब्देनाग्निर्मे नोपशाम्यति । जलं समाकर्षिष्यतीत्यग्निजलयोर्हस्तप्रक्षेपः । सुकृतशब्देन सकलं सुकृतं मे नङ्क्ष्यतीति चाभिधानमपेक्षितम् । न त्वग्निजलपरीक्षणम् । तयोर्महाभियोगविषयत्वेन सुकृतसमभिव्याहारासंभवात् । तथा आदिशब्देनान्येऽपि शपथाः परिगृहीताः । *स्मृसा.११३-११४

(४) एनं विचार्यमाणमर्थम् । अर्दयेत् पीडयेत् निर्णयेदित्यर्थः । सुकृतादिभिरित्यादिना दूर्वासत्याभ्युपग्रहः । +व्यत.२२७-२२८

(५) संप्रति तृतीय उपायः शपथ इत्युक्तम् । स विशेष्यते—युक्तिष्वपि युक्तिलेशेष्वप्यसमर्थेषु शपथैरेनमर्दयेत् । शपथो विशेष्यते — देशकालबलापेक्षम् । देशश्च कालश्च बलं च देशकालबलं तदपेक्षमिति देशकालबलापेक्षम् । देशाद्यानुरूप्येणार्दयेदिति संबन्धः । अग्न्यम्बुसुकृतादिभिः ग्रीष्मवर्षहेमन्तेषु । कालापेक्षया च क्वचिदग्निना क्वचिदुदकेन क्वचित् सुकृतहिरण्यपुत्रदारादिभिः । नाभा.२।२१५

(६) अर्दयेत् पीडयेत् पराजयेदिति यावत् । ÷व्यप्र.१६८

तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिणि ।
दैवसाध्ये पौरुषेयीं न लेख्यं वा प्रयोजयेत् ॥
अरण्ये निर्जने रात्रावन्तर्वेश्मनि साहसे ।
न्यासस्यापह्नवे चैव दिव्या संभवति क्रिया ×॥
तारयत्यभिशापान्तं किल्बिषी स्याद्विपर्यये ॥
स्त्रीणां शीलाभियोगे च स्तेयसाहसयोरपि ।
एष एव विधिर्दृष्टः सर्वार्थापह्नवेष्वपि × ॥
उपरिष्टात्तु वक्ष्यामि दिव्यानां च यथाविधि ।
चतुर्णां तु विशेषेण मनुना परिकीर्तितम् ॥
दीप्तो यं न दहत्यग्निरापोऽन्तर्धारयन्ति यम् ।

---

*व्याख्यासंग्रहः स्थलादिनिर्देशश्च क्रियाप्रकरणे(पृ.२१९)द्रष्टव्यः।

(१) अपु.२५५।३१ कार (दाप) पञ्चाशद् (शतार्धं); विश्व.२।१०१. प्रमाणमूलस्मृतिपुस्तके नोपलभ्यते ।

(२) नासं.२।२१५; नास्मृ.४।२३९; शुनी.४।७२५ शपथैरेन (दिव्यैरेनं वि) पू.; अभा.७२; अप.२।९५ र्दये (न्विया) देश ( अर्थ ); व्यक.७६; स्मृच.७२ रेनमर्द (रेव निर्ण) देश (अर्थ) पेक्षम (पेक्षैर): ९६ रेनमर्द (रेव निर्ण) देश (अर्थ); पमा.९२ देश (अर्थ) कात्यायनः : ५७१ (=) रेन (रेव) पू.; स्मृसा.११३ पमावत्; व्यचि.७९ पमावत्; नृप्र.८; व्यत.२२७ समर्था (वसन्ना) देश (अर्थ); दित.५७५ समर्था (वसन्ना) थैरेन (थेनैन) पू.; चन्द्र.१५९ व्यतवत्; व्यसौ.७१ पमावत्; व्यप्र.१६८ पू. : १७० पमावत् :५६४ पू.; प्रका.३३ स्मृच. ५२ वत्; समु.२६ स्मृच.९६ वत्.

* चन्द्र. स्मृसागतम् । + शेषं स्मृसागतम् । ÷ शेषं स्मृचवत् ।
×व्याख्यासंग्रहः स्थलादिनिर्देशश्च क्रियाप्रकरणे (पृ. २१९) द्रष्टव्यः ।

(१) मिता.२।९६; दित.५८० षेयीं (षन्तु) वा (तु); सवि.१७० स्थितो (स्थिरो) तु (च); व्यउ.५३; विता.२०३.

(२) Vulg.नास्मृ.४।२४१ इत्यस्यानन्तरमयं श्लोकः ।

(३) Vulg.नास्मृ.४।२४२ इत्यस्यानन्तरमयं श्लोकः ।

(४) नासं.२।२१६; नास्मृ.४।२४७ (यमन्तर्धारयन्त्यापो दीप्तोऽग्निर्न दहत्येव । शापयत्यभिशापं तं किल्बिषी स्यादतोऽ-

**स तरत्यभिशापं तं किल्बिषी स्याद्विपर्यये ॥**

(१) यं पुरुषमुदकदिव्यविधिनिक्षिप्तमाप अन्तर्धारयन्ति मग्नमेव धारयन्ति पञ्चदिव्याधिश्रावणाय । हस्तगृहीतो दीप्तोऽग्निर्न दहेत् । शपयत्यभिशापं तमन्यथा किल्बिषी पापी भवति । अभा.७३

(२) दीप्तोऽग्निर्यं न दहति प्रविष्टं, तप्तं वा लोहं हरन्तं, यमापोऽन्तर्धारयन्ति न चोन्मज्जयन्ति, उभयत्र लौकिकः क्रियमाणो विधिर्द्रष्टव्यः इह च वक्ष्यति, स तरति तमभिशापमभियोगम् । यो न दग्धो नोन्मग्नश्च, स जयति । यो दह्यते उन्मज्जति च, स हीयते । नाभा.२।२१६

**महापराधे दिव्यानि दापयेत्तु महीपतिः ।**
**अल्पेषु तु नृपश्रेष्ठः शपथैः श्रावयेन्नरम् ॥**

एवमस्मिन् श्लोकद्वयेऽपि (४।२४९-५०) शपथदिव्ययोर्विषयविभागो दर्शितः । अभा.७४

दिव्यप्रकाराः

[2]**संदिग्धेऽर्थेऽभियुक्तानां प्रच्छन्नेषु विशेषतः ।**
**दैवं पञ्चविधं ज्ञेयमित्याह भगवान् मनुः ॥**

येषां महति संदेहार्थेऽभियोगो भवति विशेषतः प्रच्छन्नेऽर्थे तेषां पञ्चप्रकारं दैवमिति दिव्यं विशोधनं ज्ञेयम् । इति भगवान्मनुराह । अभा.७४

[3]**घटोऽग्निरुदकं चैव विषं कोशश्च पञ्चमः ।**
**उक्तान्येतानि दिव्यानि विशुद्ध्यर्थं महात्मभिः ॥**

यदुक्तं पञ्चविधं दैवं तान्येतानि पञ्च दिव्यानि नामतः कीर्तितानीति । अभा.७४

[4]**संदिग्धेऽर्थेऽभियुक्तानां विशुद्ध्यर्थं दुरात्मनाम् ।**
**प्रोक्तानि नारदेनेह सत्यानृतविशुद्धये ॥**

दुरात्मत्वादिविशुद्ध्यर्थं सत्यानृतपरीक्षया तान्येतानि पञ्चापि दिव्यानि नारदमहर्षिणा प्रोक्तानीति । अभा.७४

दिव्यविशेषाणां देशकालजात्याद्यधिकारिविशेषनियमाः

[1]**वर्षासु वह्निरित्युक्तः शिशिरे तु धटः स्मृतः ।**
**ग्रीष्मे सलिलमित्युक्तं विषं काले तु शीतले* ॥**

एतानि दिव्यानि एतेष्वेव कालेषु प्रयोक्तव्यानि । न पुनर्वैपरीत्येनेति । अभा.७४

---

न्यथा ॥); **अभा**. ७३ पूर्वार्धे (यमन्तर्द्धारयन्त्यापो दीप्तोऽग्निर्न दहेच्च माम्) उत्तरार्धं नास्मृवत्. (१) **नास्मृ**.४।२४९; **अभा**. ७४ येत्त (येत). (२) **नास्मृ**.४।२५१; **अभा**.७४; **नृप्र**.१२ दैवं (दिव्यं). (३) **नास्मृ**.४।२५२ भिः (नाम्); **अभा**.७४ भिः (नाम्); **अप**.२।९५; **व्यक**.७६ भिः (नाम्); **व्यचि**.७९ न्ये (नि); **स्मृचि**.५०; **व्यसौ**.७१ शश्च (षस्तु); **व्यप्र**.१७० शश्च (शस्तु).

(४) **नास्मृ**.४।२५३; **अभा**.७४ ऽभि (नि) नाम् (नः); **व्यक**.७६ उत्त.; **व्यचि**.७९ ऽर्थेऽ (ष्व) विशु...नाम् (परीक्षार्थं महात्मनाम्); **स्मृचि**.५० विशु...नाम् (परीक्षार्थं महात्मनाम्); **व्यसौ**.७१ (संदिग्धेऽर्थे विशुद्धानां परीक्षार्थं महात्मनाम्); **व्यप्र**.१७० स्मृचिवत्.

*Vulg. **नास्मृ**.४।२५४-५९ एतेषां स्थाने अधस्तान्निर्दिष्टाः सप्त श्लोका दृश्यन्ते — 'धटादयो ये मुनिभिः समयाः परिकीर्तिताः । वादिनोऽनुमते चैतान् कारयेन्नान्यथा नृपः ॥ अन्यथा क्रियमाणेषु प्राप्तः स्याच्चौरकिल्बिषम् । वर्षासु शपथे वह्निः शिशिरे तु धटः स्मृतः ॥ ग्रीष्मे तु सलिलं प्रोक्तं विषं काले सुशीतले । ब्राह्मणस्य धटो देयः क्षत्रियस्याग्निरुच्यते ॥ वैश्ये तु सलिलं देयं विषं शूद्रे प्रदापयेत् । न ब्राह्मणे विषं दद्यान्न लौहं क्षत्रियो हरेत् ॥ अग्नौ तोये विषे चैव परीक्षेतोर्जितान्नरान् । बालवृद्धातुरांश्चैव परीक्षेत धटे सदा ॥ न शीते जलशुद्धिः स्यान्नोष्णकालेऽग्निशोधनम् । न प्रावृषि विषं दद्यात् न धटं चातिमारुते ॥ कुष्ठिनां वर्जयेदग्निं सलिलं श्वासकासिनाम् । पित्तश्लेष्मवतां चैव विषं तु परिवर्जयेत् ' ॥

(१) **नास्मृ**.४।२५४ : ४।३३४ सलिलमित्यु (तु सलिलं प्रो) तु (सु) उत्त.; **अभा**.७४; **मिता**.२।९७ (=) (अग्नेः शिशिरहेमन्तौ वर्षाश्चैव प्रकीर्तिताः । शरद्ग्रीष्मेषु सलिलं हेमन्ते शिशिरे विषम् ॥); **व्यक**.७९ (वर्षासु समये वह्निर्हेमन्ते शिशिरे तथा); **पमा**.१६२ (अग्निः शिशिरहेमन्तवर्षासु परिकीर्तितः । शरद्ग्रीष्मे तु सलिलं हेमन्ते शिशिरे विषम् ॥); **सुबो**.२।९८ (=) मितावत्; **स्मृसा**.११७ (वर्षासु समये वह्निर्हेमन्तशिशिरे तथा); **स्मृचि**.५१ पूर्वार्धे व्यकवत् , पितामहः; **नृप्र**.१२; **सवि**.१७०-१७१ पूर्वार्धे मितावत्, उत्तरार्धे (शरद्ग्रीष्मे तु सलिलं हेमन्तशिशिरे विषम्) हारीतः; **व्यसौ**.७३ स्मृसावत्; **व्यप्र**.१८१ स्मृसावत्; **व्यउ**.५४ (=) मितावत्; **विता**.२०४ (अग्नेः शिशिरहेमन्तवर्षाश्चैव प्रकीर्तिताः) उत्तरार्धं पमावत्; **बाल**.२।९७ पूर्वार्धं व्यकवत्.

**न शीते तोयशुद्धिः स्यान्नोष्णकालेऽग्निशोधनम् ।**
**न प्रावृषि विषं दद्यात्प्रवाते न तुलां नृपः ॥**

(१) एतेषां तोयादिदिव्यानामेते काला विरुद्धत्वात् निषिद्धाः । अभा.७४

(२) 'न शीते तोयशुद्धिः स्यादि'त्यत्र शीतशब्देन हेमन्तशिशिरवर्षाणां ग्रहणम् । 'नोष्णकालेऽग्निशोधनमि'-त्यत्रोष्णकालशब्देन ग्रीष्मशरदोर्विधानलब्धस्यापि पुनर्निषेध आदरार्थः । ×मिता.२।९७

(३) वर्षासु विषनिषेधः चतुर्यवातिरिक्तविषनिषेधपरः 'वर्षासु चतुरो यवानि'ति वक्ष्यमाणनारदवचनात् । तण्डुलादीनां तु विशेषकालानभिधानात् सार्वकालिकत्वम् । अत्र विषे विशेषतो वर्षानिषेधात्, वक्ष्यमाणवचनेन सिंहस्थरवावेव परीक्षामात्रनिषेधाच्च दिव्यान्तरं सिंहेतरवर्षास्वपि कुर्वीत । अतो—'याम्यायने हरौ सुप्ते सर्वकर्माणि वर्जयेत्' इत्यस्य न विषयः । ज्योतिषे—'सिंहस्थे मकरस्थे च जीवे चास्तमुपागते । मलमासे न कर्तव्या परीक्षा जयकाङ्क्षिणा ॥ रविशुद्धौ गुरौ चैव न शुक्रेऽस्तं गते पुनः । सिंहस्थे च रवौ नैव परीक्षा शस्यते बुधैः ॥ नाष्टम्यां न चतुर्दश्यां प्रायश्चित्तपरीक्षणे । न परीक्षा विवाहश्च शनिभौमदिने भवेत् ' ॥ रविशुद्धौ गुरौ चैवेत्यत्र शस्यत इति शेषः । तथा च दीपकलिकायाम्—'नो शुक्रास्तेऽर्के (?) गुरुसहितरवौ जन्ममासेऽष्टमेन्दौ । विष्टौ मासे मलाख्ये कुजशनिदिवसे जन्मतारासु चाथ ॥ नाडीनक्षत्रहीने गुरुरविरजनीनाथताराविशुद्धौ । प्रातः कार्या परीक्षा द्वितनुचरग्रहांशोदये शस्तलग्ने' ॥ ×दित.५७६-५७७

**कोशस्तु सर्वदा देयस्तुला स्यात्सार्वकालिकी ॥**

(१) कोशग्रहणं तण्डुलप्रभृतीनां प्रदर्शनार्थमित्युक्तं व्याख्यातृभिः । तेनाग्न्यम्बुविषाणामेवर्तुतो व्यवस्था । स्मृच.१०४

(२) कोशः सर्वशपथपरः । विता.२०५

**अदेशकालदत्तानि बहिर्वासकृतानि च ।**
**व्यभिचारं सदाऽर्थेषु कुर्वन्तीह न संशयः ॥**

(१) वासो निवासो ग्राम इत्येकोऽर्थः । अप.२।९७

(२) वासो जननिवासः । तस्माद्बहिर्निर्जने प्रदेश इति यावत् । पमा.१६३

**नार्तानां तोयशुद्धिः स्यान्न विषं पित्तरोगिणाम् ।**
**श्वित्र्यन्धकुनखादीनां नाग्निकर्म विधीयते ॥**

एतेषामेतानि दिव्यान्यपथ्यरूपत्वादसामर्थ्याच्च निषिद्धानि । अभा.७४

**सत्रतानां भृशार्तानां व्याधितानां तपस्विनाम् ।**
**स्त्रीणां च न भवेद्दिव्यं यदि धर्मस्त्ववेक्षते* ॥**

---

× व्यचि., वीमि., विता. पदार्थौ मितावत् ।

(१) नास्मृ.४।२५९ पः(णाम्); अभा.७४ पः (णाम्); मिता.२।९७ (=) शुद्धिः (सिद्धिः) नृपः (तथा); अप.२।९७ तोय ( जल ) पितामहः; व्यक.७९ शुद्धिः ( सिद्धिः ); स्मृच.१०४ व्यकवत्; पमा.१६२ व्यकवत्; स्मृसा.११७; व्यचि.८६; स्मृचि.५१ पितामहः; दित.५७६; सवि.१७१ (=) ते तोय ( ततोये ) नृपः ( तथा ); चन्द्र.१६३ न्नोष्णकाले (न्न ग्रीष्मे चा) प्रवाते न (वाते वाति); वीमि.२।९७; व्यप्र.१८१ मितावत्; व्यउ.५४ (=) तुलां नृपः (तुला तथा); विता.२०५ नृपः (तथा); राकौ.४१२ प्रवातेन तुलां नृपः (न प्रवाते वै तुला यथा); प्रका.६५ पू., पितामहः; समु.५४.

× शेषं मितागतम् ।

* मिताव्याख्यानं 'तुला स्त्रीबाले'ति याज्ञवल्क्यवचने (पृ.४४७) द्रष्टव्यम् । स्मृतिचन्द्रिकादिग्रन्थेषु पितामहस्येदं वचनम् । परंतु सौकर्यार्थं तेषामपि व्याख्यानानि अत्रैवोल्लिखितानि ।

(१) स्मृच.१०४ शः (शं) देयः (देयं) ; व्यम.२२; विता.२०४; राकौ.४१२ स्मृचवत् ; समु.५४.

(२) अप.२।९७ (=); पमा.१६३ काल (काले) न्तीह (न्ति हि); व्यप्र.१८२ रं सदा ( रे सद ); व्यम.२२ र्वास ( र्वादि ); विता.२१६ कुर्व ...यः ( कुर्युर्दिव्यान्यसंशयम् ); बाल.२।९९ व्यमवत्, नारदबृहस्पतिकात्यायनाः.

(३) नास्मृ.४।२५५ खादीनां (स्त्रीनां च) कर्म (शुद्धिः); अभा.७४ नास्मृवत्; व्यक.७९; स्मृसा.११७ क्रमेण कात्यायनः; व्यचि.८६ कर्म (कार्यं); स्मृचि.५१ कात्यायनः; दित.५७९ उत्त., कात्यायनः; चन्द्र.१६३ (=) श्वित्र्य (चित्रा); व्यसौ.७३; वीमि.२।९८; व्यप्र.१७७; व्यम.२१ व्यचिवत् ; विता.२११ कर्म ( शुद्धिः ); बाल.२।९९; समु.५४ कात्यायनः.

(४) नास्मृ.४।२५६; अभा.७४ भृशा (कृशा); मिता.२।९८ (=) वेक्षते (पेक्षितः); व्यक.८० अभावत् ; व्यचि.८७ सव्र ( सद्व्र ) भृशा ( कृशा ); दित.५७७ मितावत् ; व्यसौ.७४ सव्र ...र्तानां (व्रतिनां च कृशाङ्गानां) च (तु);

(१) यद्यपि दिव्यशब्देन सर्वदिव्यमुच्यते, तथाप्यग्नानन्तरोक्तविधिप्रतिषेध इति । सम्मताः दीक्षिताः । तेषामग्निदिव्यमेव निषिद्धम् । अभा.७४

(२) एतदग्न्यम्बुविषयम् । घटकोशादीनामपि प्रतिषेधे पूर्वोक्तवचनविरोधात् । एवं च क्लीबादीनामग्न्यम्बुविषवर्ज्यानि दिव्यानि भवन्तीत्यनुसंधेयम् । +स्मृच.१०३

(३) इति स्त्र्यादीनां दिव्यं निषिद्धं तण्डुलेतरविषयमिति शूलपाणिः । दित.५७७

(४) तुलेतरविषयं तदिति केचित् । तदयुक्तं, 'घटकोशादिभिस्तासामन्तस्तत्वं विचारयेत्' इति पूर्वोदाहृतनारदवचनेन स्त्रीणां कोशादिविधानात् । ×व्यप्र.१७९

**[१]क्लीबातुरान् सत्त्वहीनान् परितापार्दितान्नरान् ।**
**बालवृद्धातुरादींश्च परीक्षेत घटे सदा ॥**

लिङ्गसामर्थ्याभाववयोभ्योऽपि व्यवस्थामाह नारदः—क्लीबातुरानिति । नित्या त्वियं व्यवस्था । सदेत्यभिधानात् । घटग्रहणमग्न्यम्बुविषाणां परिसंख्यानार्थम् । न पुनः कोशादेरपि । यदाह स एव—स्त्रीणामिति । स्मृच.१०३

**[२]स्त्रीणां तु न विषं प्रोक्तं न चापि सलिलं स्मृतम् ।**
**घटकोशादिभिस्तासामन्तस्तत्वं विचारयेत् * ॥**

घटकोशादिभिरिति वदन्नग्नेरपि प्रतिषेधं दर्शयति । स्मृच.१०३

**न मज्जनीयं स्त्रीबालं धर्मशास्त्रविशारदैः ।**
**रोगिणश्चापि वृद्धाश्च पुमांसो ये च दुर्बलाः ॥**
**[२]निरुत्साहान् व्याधिक्लिष्टान्नार्तांस्तोये निमज्जयेत् ।**
**सद्यो म्रियन्ते मज्जन्तः स्वल्पप्राणा हि ते स्मृताः ॥**
**[३]साहसेऽप्यागतानेतान्नैव तोये निमज्जयेत् ।**
**न चापि साधयेदग्निं न विषेण विशोधयेत् ॥**

+ पमा. स्मृचवत् । × व्यउ. व्यप्रवत् ।

* मिताव्याख्यानं 'तुला स्त्रीबाले'ति याज्ञवल्क्यवचने (पृ. ४४७) द्रष्टव्यम् । दित., सवि. मितागतम् ।

**वीमि**.२१९८; **विता**.२०७ मितावत्; **समु**.५४ भृशार्ता (कृशाङ्गा) व्याधितानां (बालवृद्ध) च (तु).

(१) **व्यक**.७९; **स्मृच**.१०३ सत्व (सत्य) तापा (तश्चा) द्धातुरादींश्च (द्धस्त्र्यन्धकांश्च); **पमा**.१५९ तुरान् (न्दीनान्) परितापा (पतितांश्चा) बाल ... श्च (बालवृद्धस्त्रियोऽन्धांश्च); **स्मृसा**.११७ परितापा (पतितांश्चा) दींश्च (न्स्त्रीश्च) कात्यायनः; **व्यचि**.८६; **सवि**.१७३ सत्व (सत्य) तापा (तश्चा) बाल ... श्च (स्त्रीबालवृद्धांश्चान्धांश्च); **व्यसौ**.७३ परितापा (पतितांश्चा) रादींश्च (रस्त्रीश्च); **वीमि**.२१९८; **व्यप्र**.१७७ तापा (तश्चा) रादींश्च (रांस्त्रीश्च); **व्यम**.२१ तुरान् (न्नरान्) तापा (तश्चा) न्नरान् (न्तरान्) दींश्च (न्स्त्रीश्च); **विता**.२०८ पूर्वार्धे (कातरान् स्वबलैर्हीनान् परितश्चार्दितान्तरान्) दींश्च (न्स्त्रीश्च); **बाल**.२१९८ व्यमवत्; **प्रका**.६४ स्मृचवत्; **समु**.५४ स्मृचवत्.

(२) **मिता**.२१९८ तु (च); **स्मृच**.१०३; **पमा**.१५९; **स्मृचि**.५१ चापि (वापि) पितामहः; **दित**.५७८ (=) मन्त (मत); **सवि**.१७२ (=); **व्यप्र**.१७७ स्मृचिवत्: १७९ उत्त.; **व्यउ**.५४ (=); **व्यम**.२१; **विता**.२०८; **प्रका**.६४-६५; **समु**.५४.

(१) **नास्मृ**.४।३१३; **अभा**.७९ श्चापि (श्चाति); **अप**.२१९८ शारदैः (चक्षणैः) रोगि ... श्च (रोगिणो ये च वृद्धाः स्युः); **व्यक**.८० यं (यौ) लं (लौ) शेषं अपवत्; **स्मृच**.१०३ अपवत्; **पमा**.१५९ नीयं (नीया) बालं (बाला) शेषं अपवत्; **स्मृसा**.११७ रोगि ... श्च (रोगिणो ये च वृद्धाः स्युः) क्रमेण कात्यायनः; **व्यचि**.८६-८७ स्मृसावत्; **स्मृचि**.५१ स्मृसावत्, कात्यायनः; **दित**.५७९ नीयं स्त्रीबालं (नं स्त्रीबालयोः) पू., कात्यायनः; **चन्द्र**.१६३ (=) स्मृसावत्; **व्यसौ**.७३ स्मृसावत्; **वीमि**.२१९८ यं (याः) लं (लाः) शेषं स्मृसावत्; **व्यप्र**.१७८ यं (याः) लं (ला) शेषं अपवत्; **व्यम**.२१ व्यप्रवत्; **विता**.२११ व्यप्रवत्; **बाल**.२१९९ व्यप्रवत्; **प्रका**.६५ अपवत्; **समु**.५४ अपवत्.

(२) **नास्मृ**.४।३१४ व्या ... स्तोये (रुजा क्लिष्टानार्तांश्च न); **अभा**.७९ हि ते स्मृताः (हिमात्यये) शेषं नास्मृवत्; **व्यक**.८० क्लिष्टा (कृशा); **स्मृसा**.११७ व्यकवत्, क्रमेण कात्यायनः; **व्यचि**.८७ क्लिष्टा (दुष्टा); **स्मृचि**.५१ कात्यायनः; **दित**.५७९ व्यकवत्, पू., कात्यायनः; **व्यसौ**.७३-७४ व्यचिवत्; **वीमि**.२१९८ क्लिष्टा (जुष्टा) स्मृताः (नराः); **व्यप्र**.१७८; **व्यम**.२१; **विता**.२११ क्लिष्टान् (तांश्च); **बाल**.२१९९ क्लि ... स्तोये (क्लिष्टांस्तांस्तोये न); **समु**.५४ क्लिष्टा (युक्ता): ५४ (स्त्रीबालवृद्धरोगार्तनिरुत्साहातिदुर्बलाः । न मज्जनीयास्तोयेषु स्वल्पप्राणा हि ते स्मृताः ॥).

(३) **नास्मृ**.४।३१५ प्याग (नाग); **अभा**.७९ प्याग (नाग) चापि (वापि); **व्यक**.८० साध (हार); **स्मृच**.१०३ व्यकवत्; **पमा**.१६० व्यकवत्; **स्मृसा**.११७ व्यकवत्, क्रमेण

अनेन श्लोकत्रयेण स्त्रीबालादीनां सहेतुको निषेधः कृतः स्पष्टार्थ एव। अतो धर्मदेवता धर्मश्रावणा भवति। अभा.७९

**[1]ब्राह्मणस्य धटो देयः क्षत्रियस्य हुताशनः।**
**वैश्यस्य सलिलं देयं शूद्रस्य विषमेव तु॥**
**[2]साधारणः समस्तानां कोशः प्रोक्तो मनीषिभिः।**
**विषवर्जं ब्राह्मणस्य सर्वेषां वा तुला स्मृता॥**

अनित्या चेयं व्यवस्था। यदाह कात्यायनः—'सर्वेषु सर्वदिव्यं वा विषवर्जं द्विजोत्तम'। स्मृच.१०३

**[3]न ब्राह्मणे विषं दद्यान्न लोहं क्षत्रियो हरेत्।**
**कोशान्तानि तुलादीनि गुरुष्वर्थेषु दापयेत्।**
**शतार्धं दापयेच्छुद्धावशुद्धो दण्डभाग्भवेत्॥**
**[4]कोशमल्पेऽपि दापयेत्।**

कात्यायनः; व्यचि.८७ चापि साध (वापि हार); स्मृचि.५१ पू., कात्यायनः; व्यसौ.७४' व्यकवत्; वीमि.२१८ साध (हार) षेण वि (षे परि); व्यप्र.१७८ प्याग (नाग) साध (हार); व्यम.२१ व्यकवत्; विता.२११-२१२ व्यकवत्; बाल.२१९ व्यकवत्; प्रका.६५ साध (हार) विशोध (न शोध); समु.५४ व्यकवत्.

(१) नास्मृ.४।३३४ स्य हुताशनः (स्याग्निरुच्यते) पू.: ४।३३५ (वैश्ये तु सलिलं देयं विषं शूद्रे प्रदापयेत्) उत्त.; अप.२१८ (वैश्यस्य सलिलं प्रोक्तं विषं शूद्रस्य दापयेत्); व्यक.७९; स्मृच.१०३; पमा.१५९; दीक.४० तु (च); स्मृसा.११७ कात्यायनः; व्यचि.८६ तु (च); स्मृचि.५१; दित.५७७ तु (च); सवि.१७१ बृहस्पतिः; व्यसौ.७३ तु (च); वीमि.२१८ तु (च); व्यप्र.१७७; राकौ.४१०; प्रका.६४; समु.५३; विव्य.८.

(२) अप.२१८ सर्वे...ता (सर्वाण्येतेषु च त्रिषु) पितामहः; व्यक.७९; स्मृच.१०३ पू.; पमा.१५९ पू.; दीक.४० वा (तु); स्मृसा.११७ कात्यायनः; व्यचि.८६; स्मृचि.५१ विष (विषं) वा (च); दित.५७७ दीकवत्; सवि.१७१ पू., बृहस्पतिः; व्यसौ.७३:८७ पू.; वीमि.२१८ स्तानां (ग्राणां); व्यप्र.१७७ विषवर्जं (विषं विना); विता.२०७ वा (च) शेषं व्यप्रवत्; राकौ.४११ षवर्जं (षं विना) पितामहः; प्रका.६४ पू.; समु.५३ पू.; विव्य.८ णः (णं) स्तानां (ग्राणां). (३) नास्मृ.४।३३५-३३६; अभा.८१. (४) मिता.२१९५ सरणम्; अप.२१९; पमा.१५१ (=); सुबो.२१६ (=); सवि.१६८:२०९ ऽपि (तु) सरणम्; समु.५१ सरणम्.

**[1]महापराधे निर्धर्मे कृतघ्ने क्लीबकुत्सिते।**
**नास्तिकव्रात्यदासेषु कोशपानं विवर्जयेत्॥**

(१) महापराधो महापातकी इत्यादयो दासपर्यन्ताः सर्वावस्थनिर्दैवत्याः कोशयोग्या न भवन्ति। अभा.८०

(२) महापराधे पूर्वसिद्धमहापराधशालिनीत्यर्थः। एवं च क्लीबस्याग्न्यादिवत् कोशोऽपि वर्ज्य इत्यनुसंधेयम्। स्मृच.१०३

दिव्यकर्तारः शीर्षकवर्तनं च

**[2]शिरोवर्ती यदा न स्यात्तदा दिव्यं न दीयते।**
**कारणैः सहितं प्रोक्तं न दिव्यं चार्थिनां नृणाम्॥**

(१) यदेतद्दिव्यं नाम एतदभिशापादिकारणं विना न भवति। अतोऽभिशापाऽभियोगयोर्दाता शिरोपस्थायी यावन्न भूतः तावद्दिव्यं न दीयत इति। अभा.७४

(२) 'शिरोवर्ती यदा न स्यात्' अभियोक्तेति शेषः। स्मृच.९६

**[3]अभियोक्ता शिरःस्थाने सर्वत्रैव प्रकल्पितः।**
**इच्छया त्वितरः कुर्यादितरो वर्तयेच्छिरः॥**

(१) सर्वत्र शिरोवति दिव्यपञ्चक इत्यर्थः। अभियुक्तस्य शिरोवर्तनमनपलापदाढर्यख्यापनार्थम्। अत

(१) नास्मृ.४।३३२; अभा.८०; अप.२१८ (नास्तिके दृष्टदोषे च कोशदानं विवर्जयेत्): २।११२ कृतघ्ने (कितवे); व्यक.८० अपवत्; स्मृच.१०३ अपवत्; स्मृचि.५१ धर्मे (दिष्टे) शेषं अपवत्; सवि.१७३ क्लीब (शील) शेषं अपवत्; व्यसौ.७४ धर्मे (दोषे) शेषं अपवत्; व्यप्र.१७९ अपवत्; विता.२१५ अपवत्; बाल.२१९ अपवत्; प्रका. ६५ अपवत्; समु.५४ अपवत्.

(२) नास्मृ.४।२५७ नृणा (ऋणा); अभा.७४; शुनी.४।७४१ पू.; स्मृच.९६ (कारणे महति प्रोक्तं दिव्यं वादार्थिनां नृणाम्); पमा.१५२ शिरोवर्ती (शीर्षकस्थो) पू.; स्मृसा.११४ वर्ती (वादी) (कारणे महति प्रोक्तं दिव्यं नामार्थिनां नृणाम्); नृप्र.१२ पू.; व्यप्र.१७१ पू.; प्रका.६२ स्मृचवत्; समु.५० स्मृचवत्.

(३) शुनी.४।७४३ उत्त.; स्मृच.९६; पमा.१५३ अभि (परि) त्रैव (त्रैकः) इच्छया त्वि (इतरानि); नृप्र.१२ त्रैव (त्रैकः); व्यत.२२८ रःस्थाने (रोवर्ती) कल्पि (कीर्ति) त्वित (ऽन्यतः); चन्द्र.१५९ (=) व्यतवत्; व्यप्र.१७२ त्रैव (त्रैकः); समु.५० त्वितरः (त्वितरे).

एवैतस्य जयेऽहमित्थं दण्डय इत्यपलापिनो विहित-दण्डाङ्गीकारः। स्मृच.९७

(२) इतरः शपथकर्तृभिन्नः। व्यत.२२९

(३) अर्थिनाऽपि प्रत्यर्थिस्वीकारे दिव्यं कार्यम्। चन्द्र.१५९

[1]**शिरोऽवस्थायिनि नरे अभियोक्तर्युपस्थिते।**
**दिव्यप्रदानं विहितमन्यत्र नृपशासनात्॥**

(१) योऽसावभियोक्ता नरः तस्मिन् शिरोपस्थानस्थिते दिव्यप्रदानं विहितम्। अन्यत्र नृपहिंसनात्। यदा पुनः नृपगृहे काचिद्धिंसा कृता भवति तदा शिरोपस्थानं विनाऽपि दिव्यं दातव्यम्। तत्र राजाज्ञैव शिरोपस्थायिनीति। अभा.७५

(२) नृपशासनं, नृपाज्ञया त्वशिरांस्यपि घटादीनि भवन्ति। स्मृच.९७

[2]**अशिरांसि च दिव्यानि राजा भृत्येषु दापयेत्।**
**अभियोगाभियुक्तानामन्येषां तु यथाक्रमम्॥**

राजाऽभियोगेनाभियुक्तानामशिरांस्यपि दिव्यानि दापयेत्। अन्येषां तु यथा क्रमो विहितस्तथा दापयेत्। अभा.७६

[3]**राजभिः शङ्कितानां च निर्दिष्टानां च दस्युभिः।**
**आत्मशुद्धिपराणां च दिव्यं देयं शिरो विना॥**

दिव्याध्यक्षः

[1]**दिव्येषु सर्वकार्याणि प्राड्विवाकः समाचरेत्।**
**अध्वरेषु यथा धुर्यः सोपवासो नृपाज्ञया॥**
[2]**तत्प्राज्ञेन विनीतेन धार्मिकेण विजानता।**
**उभयानुमते देयं दिव्यं सर्वं प्रयत्नतः॥**

अतः कारणादेवंविधेन राज्ञा प्राड्विवाकेन वा उभयानुमते वादिप्रतिवादिनोः प्रत्यक्षसंमते दिव्यं देयं नान्यथेति। अभा.७४

## नारदीयमनुसंहिता

दिव्यविषयः पञ्च दिव्यप्रकाराश्च

[3]**संशयस्थास्तु ये केचिन्महापातकिनश्च ये।**
**अभिशस्ताः परैश्चापि ते शोध्याः संशयैरिह॥**

संशयस्थाश्चोरा वेति य आत्मानं शोधयितुकामाः, महापातकिनः, संशय्यमाना अन्ये च यस्मिंश्च कस्मिंश्च चौर्यादावभियुक्ता अन्यैः, त एतैर्वक्ष्यमाणैः समयैः शोधनीयाः। नाभा.२०।१

[4]**धटोऽग्निरुदकं चैव विषं कोशश्च पञ्चमः।**
**पञ्चैतान्याह दिव्यानि दूषितानां विशोधने॥**

तुलादीनि पञ्च देवतानिमित्तानि दूषितानां शुद्धिकारणानि। तेषां विधिं वक्ष्यति। नाभा.२०।२

[5]**संदिग्धेऽर्थेऽभिशस्तानां परीक्षार्थं महात्मना।**
**नारदेन पुरा प्रोक्ताः सत्यानृतविभाजिकाः॥**

संदिग्धेऽर्थे चौर्यादौ मिथ्यादूषितानां परीक्षार्थं नारदप्रोक्ताः सत्यानृतविभाजिका वक्ष्यन्त इति शेषः। नाभा.२०।३

## बृहस्पतिः

नव दिव्यप्रकाराः

[6]**धटोऽग्निरुदकं चैव विषं कोशश्च पञ्चमम्।**
**षष्ठं च तण्डुलाः प्रोक्तं सप्तमं तप्तमाषकः॥**

---

(१) **नास्मृ.**४।२६९ वस्था (पस्था) शास (हिंस); **अभा.**७५ नास्मृवत्; **स्मृच.**९७ नं विहित (नमुचित); **व्यचि.**८३ दानं विहित (माणमुदित); **व्यसौ.**७५ नं विहित (नमुदित) उत्त., बृहस्पतिः; **वीमि.**२।९६ व्यसौवत्; **प्रका.**६२ स्मृचवत्, याज्ञवल्क्यः; **समु.**५० व्यसौवत्.

(२) **नास्मृ.**४।२७० सि च (स्यपि); **अभा.**७५ सि च स्यपि) क्रमम् (क्रमः); **व्यक.**८२ राजा भृ (राजकृ); **स्मृच.**९७ पू.; **पमा.**१५३ राजा (राज) पू., कात्यायनः; **व्यचि.**८४ पमावत्, पू.; **स्मृचि.**५२ राजा (राज) योगा (योक्ता); **व्यसौ.**७५ पमावत्; **वीमि.**२।९६ **पू.**; **बाल.**२।९६ योगा (योक्ता) शेषं व्यकवत्; **समु.**५० अभावत्, **पू.**

(३) **स्मृसा.**११५; **नृप्र.**१२ राजभिः (पार्थिवैः); **दित.**५७६; **मच.**८।११६ (=); **चन्द्र.**१६० (=) निर्दि... भिः (दस्युभिर्वा तथा नृणाम्); **व्यसौ.**७५ शिरो विना (विना शिरः) उत्त., विष्णुः; **व्यउ.**५३ (=); **व्यम.**२० दिव्यं देयं (देयं दिव्यं); **विता.**२००; **राकौ.**४०७; **समु.**५१.

(१) **व्यसौ.**७५. (२) **नास्मृ.**४।२५८ प्राज्ञे (प्रज्ञे); **अभा.**७४; **समु.**५१ दिव्यं सर्वं (सर्वदिव्यं) उत्त., कात्यायनः.

(३) **नासं.**२०।१. (४) **नासं.**२०।२. (५) **नासं.**२०।३.

(६) **व्यक.**७६; **स्मृच.**५०:९८ **श**: (शं)कः (कम्); **पमा.**१५० धटो (तुला) मम् (मः) ष्ठं (ष्ठः) लाः (लः) क्तं (क्तः) मं (मः); **दीक.**४० कः (कम्); **व्यचि.**७९ मम् (मः) लाः (लः) क्तं (क्तः); **स्मृचि.**५० व्यचिवत्; **दित.**५७४ मम् (मः) ष्ठं

अष्टमं फालमित्युक्तं नवमं धर्मजं भवेत् ।
दिव्यान्येतानि सर्वाणि निर्दिष्टानि स्वयंभुवा ॥

(१) तस्यायमर्थः — हिंसाधनपातकाद्यभियोगेषु अल्पेषु अभिशस्तानां धर्मजं दिव्यमिति । स्मृच.९८

(२) अथ किं तद् दिव्यम् ? तत्र मानुषप्रमाणानिर्णेयस्यापि निर्णायकं यत्तद्दिव्यमिति लोकप्रसिद्धम् । अपिना मानुषप्रमाणसत्वेऽपि यत्र चैव धटाद्यङ्गीकारस्तत्रापि एतद् भवतीति सूचितम् । अत एव लिखितसाक्षिभुक्तिलक्षणत्रिविधमानुषप्रमाणभिन्नप्रमाणं दिव्यं तच्च प्रमाणं न केवलं भावैकगोचरं किन्तु भावाभावावविशेषेण गोचरयतीति । दित.५७४

दिव्यपदनिरुक्तिः

यस्माद्देवैः प्रयुक्तानि पुष्करार्थे महात्मभिः ।
परस्परविशुद्ध्यर्थं तस्माद्दिव्यानि नामतः ॥

अपराधानुसारेण दिव्यविशेषाः

अहमुद्देशतो वच्मि संदिग्धार्थविशुद्धये ।
देशकालार्थसंज्ञाभिः संयुक्तान्यनुपूर्वशः ॥
अपराधानुरूपेण साध्वसाधुविवक्षया ।
शास्त्रोक्तेनैव विधिना प्रदातव्यानि नान्यथा ॥
विषं सहस्रेऽपहृते पादोने च हुताशनः ।
त्रिभागोने च सलिलमर्द्धे देयो धटः सदा ॥

(१) अत्र महाभियोगे नियतधटस्य पञ्चशतादिकार्षापणापहारेऽभिधानात्तदादिकार्षापणसंबन्ध्यभियोगो महाभियोगः । तदादितो न्यूनकार्षापणसंबन्धी त्वल्पाभियोग इत्यवगन्तव्यम् । स्मृच.१०१

(२) तथा पञ्चाशत्पणादारभ्य सप्ताधिकषष्टिपणादर्वाक् शूद्रस्य तुलाधारणं भवति । सप्ताधिकषष्टिपणादारभ्य पञ्चाधिकसप्ततिपणादर्वाक् शूद्रस्य जलप्रत्ययो भवति । पञ्चाधिकसप्ततिपणादारभ्य शतपणादर्वाक् शूद्रस्य परशुर्भवति । शतपणादारभ्य शूद्रस्य विषभक्षणमेव । तथा च बृहस्पतिः—विषमिति । पणशतात्मकसहस्रमानसुवर्णे शूद्रस्य विषभक्षणं भवति । मानसहस्रचतुर्भागहीने पञ्चसप्ततिपणात्मके शतसप्तमाने शूद्रस्य परशुधारणम् । तथा सहस्रमानसुवर्णस्य तृतीयभागहीने सप्तषष्टिपणे शूद्रस्य जलप्रत्ययो भवति । पञ्चाशत्पणात्मके सहस्रमानार्धे शूद्रस्य तुलाधिरोहणं भवतीत्यर्थः । सवि.१७७-१७८

चतुःशताभियोगे तु दातव्यस्तप्तमाषकः ।
त्रिशते तण्डुला देयाः कोशश्चैव तदर्धके ॥

पञ्चदशपणादारभ्य त्रिंशत्पणादर्वाक् शूद्रस्य कोशदानम् । त्रिंशत्पणादारभ्य चत्वारिंशत्पणादर्वाक् शूद्रस्य तण्डुलभक्षणं भवति । चत्वारिंशत्पणादारभ्य पञ्चाशत्पणादर्वाक् शूद्रस्य तप्तमाषा भवन्ति । तथा च बृहस्पतिः — चतुःशतेति । चतुःशताभियोगे शतचतुष्टयमानसुवर्णविषयाभियोगे इत्यर्थः । तत्र तप्तमाषो दातव्यः । तेषां चत्वारिंशत्पणात्मकत्वात्, चत्वारिंशत्पणाभियोगे शूद्रस्य

---

(ष्ट:) ला: (ल:) मं (म:); **सवि.**१०५ मम् (म:) क: (कम्): १६७ च (तु) शेषं पूर्ववत्; **राकौ.**४०६ मम् (म:) श्च (स्तु) ला: (लं) क: (कम्).

(१) **व्यक.**७६; **स्मृच.**५०,९८; **पमा.**१५० जं भवेत् (कं तथा); **दीक.**४० भवेत् (स्मृतम्) पू.; **व्यचि.**७९ नवमं धर्मजं (धर्मजं नवमं); **स्मृचि.**५०; **दित.**५७४ दीकवत्; **सवि.**१०५, १६८ दीकवत्; **व्यसौ.**७१ भवेत् (तथा); **वीमि.** २१९५ व्यचिवत्; **व्यप्र.**१७० व्यसौवत्; **व्यम.** २० दीकवत्, पू.; **राकौ.**४०६ भवेत् (तथा); **बाल.**२१९५ मित्यु (इत्यु) शेषं दीकवत्; **प्रका.**९४; **समु.**५०; **विव्य.**८ दीकवत्, पू. (२) **पमा.**१५० पु (द्) पू.; **समु.**५०. (३) **व्यक.**७७; **व्यचि.**७९; **समु.**५० संज्ञा (संख्या). (४) **व्यक.**७७; **व्यचि.**७९; **समु.**५०.

(५) **अप.**२१९ भागो (पादो); **व्यक.**७७ स्रेऽपहृ (स्रापहृ) सदा (तथा); **स्मृच.**१०१ अर्द्धे (धर्मे); **पमा.**१५४ च स (तु स); **दीक.**४०; **स्मृसा.**११६; **व्यचि.**८९; **स्मृचि.** ५२ सदा (तथा); **नृप्र.**१२ अपवत्; **दित.**५८०; **सवि.** १७७ च हु (तु हु); **चन्द्र.**१६१ गोने च (गहीने); **व्यसौ.**७१ पमावत्; **वीमि.**२१९९; **व्यप्र.**१७३ अपवत्; **विता.**१९६ स्रे (स्रा) शनः (शनम्); **राकौ.**४०९ गोने च (गे तप्त); **प्रका.**६४; **समु.**५३ च हु (तु हु) च स (तु स); **विव्य.**८.

(१) **अप.**२१९ तु (च) र्ध (र्धि); **व्यक.**७७; **स्मृच.** १०१; **पमा.**१५४ ताभि (तेऽभि) व्यः (व्यं) कः (कम्) ला देयाः (लं देयं); **दीक.**४० तु (च); **स्मृसा.**११६; **व्यचि.** ८९ र्ध (र्धि); **स्मृचि.**५२; **नृप्र.**१२; **दित.**५८०; **सवि.** १७७ ते (तः); **चन्द्र.**१६१; **व्यसौ.**७१ तु (च); **वीमि.** २१९९; **व्यप्र.**१७३; **विता.**१९६; **राकौ.**४०९; **प्रका.** ६४; **समु.**५३.

तप्तमाषो दातव्य इति यावत्। 'त्रिशते तण्डुला देया' इत्यत्रापि शतत्रयमानसुवर्णे त्रिंशत्पणात्मके शूद्रस्य तण्डुला देया इति। तथा 'कोशश्चैव तदर्धके' इति पञ्चदशपणात्मके पञ्चाशदधिकशतमानसुवर्णे शूद्रस्य कोशो देय इति। सवि.१७७

**शते हृतेऽपह्नुते च दातव्यं धर्मशोधनम्।**
**गोचोरस्य प्रदातव्यं सभ्यैः फालं प्रयत्नतः॥**

(१) फालमपि क्वचिल्लघ्वर्थे प्रदातव्यम्। तथा च बृहस्पतिः— गोचोरस्येति। स्मृच.९८

कार्षापणशतप्रभृति निकृष्टस्य, द्विशतप्रभृति मध्यमस्य, चतुःशतप्रभृत्युत्तमस्य, धर्मजं दिव्यं भवतीत्यर्थः। स्मृच.१०१

(२) मानानां शतेऽपह्नुते च शूद्रस्य धर्मशोधनं भवति, मानशतस्य दशपणात्मकत्वात्। पणदशकादारभ्य पणपञ्चदशकादर्वाग्धर्मप्रत्ययो भवतीत्यर्थः। अस्मिन्नेवार्थे गोचारस्य फालं, गोचारस्य कृषीवलस्य शूद्रस्येत्यर्थः। 'शूद्रस्य फालं दातव्यम्' इति गौतमस्मरणात्। सवि.१७६

**एषा संख्या निकृष्टानां मध्यानां द्विगुणा स्मृता।**
**चतुर्गुणोत्तमानां च कल्पनीया परीक्षकैः॥**

(१) सर्वेषां वर्णानामव्यवस्थायां सर्वदिव्यकरणपक्षमाश्रित्य गुणवत्तारतम्येनैषा संख्याव्यवस्थोक्ता वेदितव्या। अप.२।९९

(२) उत्तमस्य पुरुषस्य पञ्चाशन्निष्कप्रभृति विषं, निष्कार्धाधिकसप्तत्रिंशन्निष्कप्रभृत्यग्निः। यवोनसप्तकृष्णलाधिकत्रयस्त्रिंशन्निष्कप्रभृति जलम्। पञ्चविंशतिनिष्कप्रभृति धटः। विंशतिनिष्कप्रभृति तप्तमाषः। पञ्चदशनिष्कप्रभृति तण्डुलाः। निष्कार्धाधिकसप्तनिष्कप्रभृति कोशः। पञ्चनिष्कप्रभृति धर्मजं दिव्यम्। गोव्यक्तिचतुष्टयप्रभृति फालम्।

मध्यमस्य पुरुषस्य पञ्चविंशतिनिष्कप्रभृति विषम्। सपादनिष्कोनविंशतिनिष्कप्रभृत्यग्निः। यवसहितत्रयोदशकृष्णलाधिकषोडशनिष्कप्रभृति जलम्। निष्कार्धाधिकद्वादशनिष्कप्रभृति धटः। दशनिष्कप्रभृति तप्तमाषः। निष्कार्धाधिकसप्तनिष्कप्रभृति तण्डुलाः। निष्कपादोनचतुर्निष्कप्रभृति कोशः। सार्धद्विनिष्कप्रभृति धर्मजं दिव्यम्। गोव्यक्तिद्वयप्रभृति फालम्।

निकृष्टस्य तु पुरुषस्य सार्धद्वादशनिष्कप्रभृति विषम्। सार्धसप्तकृष्णलाधिकनवतिनिष्कप्रभृत्यग्निः। यवोनसप्तकृष्णलाधिकाष्टनिष्कप्रभृति जलम्। सपादषाण्णिष्कप्रभृति धटः। पञ्चनिष्कप्रभृति तप्तमाषः। पादोनचतुर्निष्कप्रभृति तण्डुलाः। पादार्धोनद्विनिष्कप्रभृति कोशः। सपादनिष्कप्रभृति धर्मजं दिव्यम्। एकगोव्यक्तिप्रभृति फालम्।

प्राग्दृष्टदोषाणामुक्तावधिभ्योऽल्पधनेनापि तत्तद् दिव्यं देयम्। नृपद्रोहाभिशापसाहसेषु च तथैव देयम्। सत्यादिपुष्पान्तशपथानां तु व्यवस्थाविशेषस्यात्रादर्शनादपह्नव इव व्यवस्था आस्थेया। विष्णुवचने स्मृत्यन्तरवचनेन चापह्नव इति विशेषास्मरणाच्चेति। स्मृच.१०२

(३) निकृष्टानां जातिगुणकर्मभिः, एवं मध्यमानामुत्तमानां च। व्यचि.८९

---

(१) **अप**.२।९९ व्यं (व्यः) लं (लः); **व्यक**.७७ हृते (कृते); **स्मृच**.९८ उत्त.: १०१; **पमा**.१५४ ऽप (नि) च (वा) मं (न); **दीक** ४० सभ्यैः (तप्तं); **स्मृसा**.११६ प्रयत्नतः (विशुद्धये) शेषं पमावत्; **व्यचि**.८९ फालं प्रयत्नतः (फालावलेहनम्); **स्मृचि**.५२ व्यकवत्; **नृप्र**.१२ उत्त.; **दित**.५८०,६०८ सभ्यै...तः (तप्तफालावलेहनम्) उत्त., स्मृत्यन्तरम्; **सवि**.१७६ चो (चा); **चन्द्र**.१६१ व्यचिवत्; **व्यसौ**.७१ च (वा) शेषं व्यचिवत्: ८९ (=) (गोचोरस्य तु दातव्यं तप्तफालावलेहनम्) उत्त.; **वीमि**.२।९९ चोर (चर) शेषं व्यचिवत्; **व्यप्र**.१७३ सभ्यैः...तः (सद्यः कालावलेहनम्); **विता**.१९६ ऽपह्नुते (चापह्नुते) शेषं व्यप्रवत्; **राकौ**.४०९ हुते (हृते) शोध (साध) पू.; **प्रका**.६३ चो (च) उत्त.: ६४; **समु**.५३.

(२) **शुनी**.४।७४०-७४१ षा (षां); **अप**.२।९९ एषा (एका) कल्प (कल); **व्यक**.७७ परीक्षकैः (प्रयत्नतः); **स्मृच**.१०१ च (तु); **पमा**.१५४ एषा (एवं) च (तु); **स्मृसा**.११६ च (तु) स्मृता (मता); **व्यचि**.८९; **स्मृचि**.५२; **नृप्र**.१३ एषा (एवं) च (तु) परीक्ष (च बीज); **दित**.५८०; **सवि**.१७५ (चतुर्गुणोत्तमानां तु सर्ववर्णेष्वयं विधिः) मनु:: १८० चतु...च (चतुर्गुणा चोत्तमानां); **चन्द्र**.१६१; **व्यसौ**.७१ सवि. १८० वत्; **वीमि**.२।९९; **व्यप्र**.१७४; **विता**.१९६-१९७ णा स्मृता (णाः स्मृताः); **प्रका**.६४ स्मृचवत्; **समु**.५३ स्मृचवत्.

(४) एतच्चूत्तमादर्वाचीनानां मध्यमादुत्कृष्टानां त्रैगुण्यप्रतिपादनस्याप्युपलक्षकं विष्णुवचनानुरोधात्। अनेनैव व्याख्यानेन एषा संख्या निकृष्टानामित्यादि मनुवचनमपि व्याख्यातम्। सवि.१८०

**[१]यथोक्तविधिना देयं दिव्यं दिव्यविशारदैः।**
**अयथोक्तं प्रदत्तं तु न शक्तं साध्यसाधने॥**
**[२]अदेशकालदत्तानि बहिर्वादिकृतानि च।**
**व्यभिचारं सदा त्वेवं कुर्वन्तीह न संशयः॥**

बहिर्वादिकृतमभियोक्तारं विना कृतं तच्च प्रायिकं आत्मशुद्धिपराणामभियोक्तारं विनाऽपि दिव्यविधानात्। व्यचि.८५

**[३]स्नेहात्क्रोधाल्लोभतो वा भेदमायान्ति साक्षिणः।**
**विधिदत्तस्य दिव्यस्य न भेदो जायते क्वचित्॥**

अतो दिव्यं विधिवद्देयमित्यभिप्रायः। स्मृच.१०७

**[४]ऋणादिकेषु कार्येषु विसंवादे परस्परम्।**
**द्रव्यसंख्यान्विता देया पुरुषापेक्षया तथा॥**

**(१) दैविकी क्रिया इत्यनुवृत्तौ बृहस्पतिः– ऋणेति।** व्यक.७०

(२) पुरुषापेक्षया विवादिनोर्जात्याद्यपेक्षयेत्यर्थः। स्मृच.१०२

## भृगुः

दिव्याधिकारिणः

**[५]येषु पापेषु दिव्यानि प्रतिषिद्धानि यत्नतः।**
**कारयेत्सज्जनैस्तानि नाभिशस्तं त्यजेन्मनुः॥**

(१) **व्यक.**८२ बृहस्पतिकात्यायनौ; **व्यचि.**८५; **दित.**५७५; **व्यसौ.**७५ प्रदत्तं (अदत्तं); **बाल.**२।९९ देयं (नेयं) च (तु) शक्तं (दत्तं) नारदबृहस्पतिकात्यायनाः. (२) **व्यक.**८२ बृहस्पतिकात्यायनौ; **व्यचि.**८५; **दित.**५७५; **बाल.**२।९९ सदा त्वेवं (सदार्थेषु) नारदबृहस्पतिकात्यायनाः. (३) **व्यक.**८२; **स्मृच.**१०७; **व्यचि.**८४ दत्तस्य (दृष्टस्य); **स्मृचि.**५२ जायते (दीयते) कात्यायनः; **दित.**५७५ व्यचिवत्; **व्यप्र.**१८३; **प्रका.**६७; **समु.**५६.

(४) **व्यक.**७७ देया (ज्ञेया) तथा (क्रिया); **स्मृच.**१०२; **स्मृसा.**११५; **व्यचि.**८८ दिकेषु (दिषु च); **सवि.**१७१ विसं (संवि); **व्यसौ.**७१ दिकेषु (दिषु तु); **प्रका.**६४; **समु.**५३ ता देया (तं देयं). (५) **अप.**२।९६ षि (शु); **व्यप्र.**१८० का (ता) मनुः (नरः).

तारयेत् शोधयेत्। अभिशस्तं प्रतिनिषिद्धारा शोधनमकारयित्वा न त्यजेदित्यर्थः। व्यप्र.१८०

## कात्यायनः

**[१]न कश्चिदभियोक्तारं दिव्येषु विनियोजयेत्।**
**अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदैः॥**

कश्चित्सभापत्यादिः। दिव्यविशारदाः प्राड्विवाकादयः। अनेनार्थिप्रत्यर्थिनोरन्योन्येच्छया दिव्याङ्गीकारे नायं नियम इत्यर्थादुक्तम्। *स्मृच.९६

**[२]पार्थिवैः शङ्कितानां तु तुलादीनि नियोजयेत्।**

शीर्षकवर्तनाभावः कुत्र

**आत्मशुद्धिविधाने च न शिरस्तत्र कल्पयेत्॥**
**[३]लोकापवाददुष्टानां शङ्कितानां च दस्युभिः।**
**तुलादीनि नियोज्यानि न शिरस्तत्र वै भृगुः॥**

दस्युभिः सहवासेन शङ्कितानामित्यर्थः। स्मृच.९७

**[४]न शङ्कासु शिरः कोशे कल्पयेत्तु कदाचन॥**

तच्छङ्काभियोगे कोशस्य ऋणादावप्यशिरस्त्वनियमार्थम्। कदाचनेत्यभिधानात्। स्मृच.९७

दिव्यविशेषविषयाः

**[५]शङ्काविश्वाससंधाने विभागे रिक्थिनां सदा।**

* सवि. स्मृचवत्।

(१) **शुनी.**४।७४३ पू.; **अप.**२।९५ शुक्ता (शंस्या); **स्मृच.**९६; **पमा.**१५२; **स्मृसा.**११४ उत्त.; **व्यचि.**२८,८३ दिव्येषु वि (पुनर्दिव्ये) पू., पितामहः; **व्यत.**२१०; **नृप्र.**१२; **दित.**५७५; **सवि.**१६७; **चन्द्र.**१५९ उत्त.; **व्यसौ.**७५ दिव्येषु वि (दिव्येष्वेवं); **वीमि.**२।७ व्यचिवत् : २।९६ व्यचिवत्, पू., मनुः; **व्यप्र.**८५ : १७२ पू.; **व्यम.**२०; **विता.**२०० (=) क्ताय (क्तस्य); **बाल.**२।९६ कश्चि (कंचि); **सेतु**११०; **प्रका.**६२; **समु.**५०.

(२) **मिता.**२।९६ (=) (राजभिः शङ्कितानां च निर्दिष्टानां च दस्युभिः। आत्मशुद्धिपराणां च दिव्यं देयं शिरो विना॥); **स्मृच.**९७; **पमा.**१५३ (पार्थिवैः शङ्कितानां च निर्दिष्टानां च दस्युभिः। शङ्काशुद्धिपराणां च दिव्यं देयं शिरो विना॥); **नृप्र.**१२; **व्यप्र.**१७२ पूर्वार्धं पमावत्, उत्तरार्धं मितावत्; **प्रका.**६२; **समु.**५१. (३) **अप.**२।९६ नियोज्यानि (विषान्तानि); **स्मृच.**९७; **पमा.**१५३; **नृप्र.**१२; **प्रका.**६२; **समु.**५१.

(४) **अप.**२।९६ तु (त); **स्मृच.**९७; **पमा.**१५३ तु (च्च); **प्रका.**६२; **समु.**५१.

(५) **अप.**२।९५ (=) रि (ऋ); **व्यक.**८१ रिक्थिनां (साक्षिणां); **स्मृच.**९७; **पमा.**१५४ नां (ना); **व्यचि.**८८

**क्रियासमूहकर्तृत्वे कोशमेव प्रदापयेत् ॥**

क्रियासमूहकर्तृत्वे संभूयैकक्रियाकरणे। व्यचि.८८

**[2] दत्तस्यापह्नवो यत्र प्रमाणं तत्र कल्पयेत्।**
**स्तेयसाहसयोर्दिव्यं स्वल्पेऽप्यर्थे प्रदापयेत् ॥**

(१) प्रमाणं अपहृतद्रव्यानुसारेण दिव्यादिप्रमाणम्। व्यक.७७

(२) स्वल्पेऽपीति। यादृशि स्वल्पे ऋणादौ दिव्याभावस्तादृश्यपि धने स्तेयसाहसयोर्दिव्यमित्यर्थः। वीमि.२।९९

अपराधानुसारेण दिव्यविशेषाः

**सर्वद्रव्यप्रमाणं तु ज्ञात्वा हेम प्रकल्पयेत्।**
**हेमप्रमाणयुक्तं तु तदा दिव्यं नियोजयेत् ॥**
**[3] ज्ञात्वा संख्यां सुवर्णस्य शतनाशे विषं स्मृतम्।**
**अशीतेस्तु विनाशे वै दद्याच्चैव हुताशनम् ॥**

---

विभागे (विवादे) क्रमेण पितामहः; **स्मृचि**.५२; **सवि**.१६८ सदा (तथा); **व्यसौ**.७५; **व्यप्र**.१७३; **राकौ**.४०८; **प्रका**.६२; **समु**.५१. (१) **मिता**.२।९९; **अप**.२।९९; **व्यक**.७७; **स्मृच**.१०० पू.; **स्मृसा**.११५ श्लोकार्धौ व्यत्यासेन पठितौ; **व्यचि**.८८; **दित**.५८१ कल्प(कार); **सवि**.१७९; **चन्द्र**.१६१ दाप (कल्प) उत्त.; **व्यसौ**.७१; **वीमि**.२।९९; **व्यप्र**.१७४; **व्यउ**.५५; **विता**.१९७ दत्त (हृत); **प्रका**.६४ पू.; **समु**.५२.

(२) **मिता**.२।९९; **अप**.२।९९; **व्यक**.७८ नियो (प्रयो); **स्मृच**.१००; **स्मृसा**.११६ व्यकवत्; **व्यचि**.९० नियोज (प्रदाप); **स्मृचि**.५२ पू.; **दित**.५८१ नियोज (प्रकल्प); **सवि**.१७३ हेम प्रकल्प (दिव्येन योज) पू.: १७८ हेम (हेतुं) तदा (तथा) नियो (प्रयो) : १८१ पू.; **व्यसौ**.७२ व्यकवत्; **वीमि**.२।९९ तदा (तत्र) नियो (प्रयो); **व्यप्र**.१७४ व्यकवत्; **व्यउ**.५५; **विता**.१९७ व्यकवत्; **प्रका**.६४; **समु**.५२.

(३) **मिता**.२।९९ र्णस्य (र्णानां) च्चैव (देव); **अप**.२।९९ र्णस्य (र्णानां); **व्यक**.७८ वृद्धः; **स्मृच**.१००; **पमा**.१५५ र्णस्य (र्णानां) नाशे (माने); **व्यचि**.९१ वै (तु) वृद्धमनुः; **स्मृचि**.५२ पमावत्, पू.; **दित**.५८१ र्णस्य (र्णानां) तु (च) वै (तु); **सवि**.१७४ मितावत् : १७८ नाशे (माने) (अशीतेस्तु विनाशे तु हुतभुक्प्रत्ययः स्मृतः) : १७९ सवि.-१७८ वत्, उत्त., वृद्धमनुः; **व्यसौ**.७२ संख्यां (नाशं) स्तु विनाशे वै (श्चैव नाशे च) वृद्धमनुः; **वीमि**.२।९९ वै (तु) वृद्धमनुः; **व्यप्र**.१७४ अपवत्; **व्यउ**.५५ र्णस्य (र्णानां) वै (तु); **विता**.१९७ ख्यां (ख्या) र्णस्य (र्णानां); **बाल**.२।९९ वै (तु) वृद्धकात्यायनः; **प्रका**.६४; **समु**.५२ वै (तु).

**षष्ट्या नाशे जलं देयं चत्वारिंशति वै धटम्।**
**विंशद्दशविनाशे तु कोशपानं विधीयते ॥**
**[2] पञ्चाधिकस्य वा नाशे तदर्धार्धस्य तण्डुलाः।**
**ततोऽर्धार्धविनाशे तु स्पृशेत्पुत्रादिमस्तकम् ॥**
**[3] ततोऽर्धार्धविनाशे तु लौकिक्यश्च क्रियाः स्मृताः।**
**एवं विचारयन् राजा धर्मार्थाभ्यां न हीयते ॥**

(१) 'ज्ञात्वा संख्यां सुवर्णानामि'त्यत्र सुवर्णशब्दः

---

(१) **मिता**.२।९९; **अप**.२।९९ कोश ... यते (स्पृशेत्पुत्रादिमस्तकम्); **व्यक**.७८ चत्वा...टम् (स्याच्चत्वारिंशतो धटः) वृद्धः; **स्मृच**.१०० टम् (टः) : ११७ उत्त.; **पमा**.१५५ विं (त्रिं) तु (वै); **व्यचि**.९१ चत्वा ... टम् (स्याच्चत्वारिंशतो धटः) तु (वा) विधीयते (बृहस्पतिः) वृद्धमनुः; **स्मृचि**.५२; **दित**.५८१; **सवि**.१७४ पानं (दानं) : १७८ चत्वा ... टम् (स्याच्चत्वारिंशके धटः) (त्रिंशद्विनाशे वा कोशदानं तत्र बृहस्पतिः) वृद्धमनुः; **व्यसौ**.७२ वृद्धमनुः; **वीमि**.२।९९ व्यचिवत्, वृद्धमनुः; **व्यप्र**.१७४; **व्यउ**.५५ दशवि (विंशति); **विता**.१९७; **बाल**.२।९९ चत्वा ... वै (स्याच्चत्वारिंशतो) विं (त्रिं) विधीयते (बृहस्पतिः) वृद्धकात्यायनः; **प्रका**.६४; **समु**.५२ टम् (टः).

(२) **मिता**.२।९९ दर्धा (तोऽर्धा) तु (हि) कम् (कान्); **व्यक**.७८ पू.; **स्मृच**.१०८ वा नाशे (नाशे तु) ततोऽ (तद); **पमा**.१५५ ततोऽर्धार्धवि (तदर्धार्धस्य): १९४ द्वितीयपादः; **व्यचि**.९१ (पञ्चार्धैकस्य नाशे वा तदर्धस्य च तण्डुलाः) पू., वृद्धमनुः; **स्मृचि**.५२ दर्धा (तोऽर्धा) तु (हि); **दित**.५८१ तदर्धार्धस्य (ततोऽर्द्धार्धे तु) कम् (कान्); **सवि**.१७४ (तदर्धार्धस्य नाशे तु पुत्रदारशिरांसि च) : १७८ (पञ्चार्धैकस्य वा नाशे तदर्धस्य तु तण्डुलाः) पू., वृद्धमनुः; **व्यसौ**.७३ (पञ्चाधिकस्य वा नाशे तदर्धस्य च तण्डुलाः) पू., वृद्धमनुः; **वीमि**.२।९९ व्यचिवत्, पू., वृद्धमनुः; **व्यप्र**.१७४ तु (हि); **व्यउ**.५५ कम् (कान्); **विता**.१९७ तदर्धार्धस्य (ततो दाप्यश्च) ततोऽर्धार्ध (सार्धार्धस्य) तु (हि) कम् (कान्); **बाल**.२।९९ व्यसौवत्, पू., वृद्धकात्यायनः; **प्रका**.६४ स्मृचवत्; **समु**.५२-५३ ततो (तद).

(३) **मिता**.२।९९; **अप**.२।९९ र्धार्ध (वाऽर्ध) पू.; **स्मृच**.१०० ततो (तद) पू.; **पमा**.१५५ (तदर्धार्धस्य नाशे तु लौकिकाश्च क्रियाः स्मृताः) पू.; **स्मृचि**.५२-५३ क्यः (काः); **दित**.५८१; **सवि**.१७४ ततोऽर्धार्धवि (तदर्धार्धस्य) पू.; **व्यसौ**.७३ (ततोऽर्धार्धनाशे च लौकिकी च क्रिया मता) वृद्धमनुः; **व्यप्र**.१७४; **व्यउ**.५५; **विता**.१९७ पू.; **प्रका**.६४ ततो (तदं); **समु**.५३ प्रकावत्.

'षोडश माषाः सुवर्णं' इत्युक्तपरिमाणवचनः । नाश-शब्दश्चात्रापह्नववचनः । मिता.२।९९

(२) सर्वत्र विनाशशब्दस्य अपह्नवार्थता प्रत्येतव्या । 'दत्तस्यापह्नवो यत्रे'त्युपक्रान्तत्वात् । विंशद्दश-विनाशे त्रिंशद्विनाश इत्यर्थः । अथवा विंशद्विनाशे दशविनाशे वेत्यर्थः । पञ्चभ्योऽधिकं पञ्चाधिकं षट्प्रभृतीति यावत् । तदर्धार्धस्य सार्धसुवर्णप्रभृतेर्विनाशे तण्डुलाः । तदर्धार्धविनाशे त्वष्टमांशोनसुवर्णार्धप्रभृतेर्विनाशे तु पुत्रदारशिरःस्पर्शनम् । तदर्धार्धविनाशे तु सार्धसप्तकृष्णलप्रभृतेर्विनाशे तु द्रव्याष्टगुणवचनादयो लौकिकाः शपथाः । चशब्दः स्मार्तशपथानां संग्रहार्थः । +स्मृच.१००

(३) सुवर्णानां 'पञ्चकृष्णलको माषः ते सुवर्णस्तु षोडश' इत्युक्ताशीतिरक्तिकापरिमितहेम्नां नाशेऽपह्नवे दशाधिकस्य विंशतेर्वा नाशे कोशपानमित्यर्थः। दित.५८१

**[१]शते विषं तु पादोने हुतभुक् तत्र दृश्यते ।**
**आपस्त्रिभागहीने तु शतार्धे तु तुला स्मृता ॥**
**[२]कोशपानं तदर्धे वा दशपञ्चकसप्तसु ।**
**तदर्धे तण्डुला देयास्तदर्धे तप्तमाषकः ॥**

(१) शते सुवर्णस्येति शेषः । व्यक.७८

(२) पादोने पञ्चसप्ततिसुवर्णमिते धने, त्रिभागहीने तृतीयभागहीने सुवर्णशते, तदर्धे शतार्धार्धे दशपञ्चकसप्तस्विति । शतस्य दशमांशे पञ्चमांशे सप्तमांशे वा कोशपानं प्रदातव्यमित्यर्थः । अत्र चाल्पपरिमाणमपकृष्टविषयम् । × व्यचि.९०

जात्यादिविशेषेण दिव्यविशेषः

**राजन्येऽग्निं धटं विप्रे वैश्ये तोयं नियोजयेत् ।**
**सर्वेषु सर्वदिव्यं वा विषवर्जं द्विजोत्तमे ॥**
**[१]गोरक्षकान् वाणिजकांस्तथा कारुकुशीलवान् ।**
**प्रेष्यान् वार्धुषिकांश्चैव ग्राहयेच्छूद्रवद्द्विजान् ॥**
**[२]न लोहशिल्पिनामग्निं सलिलं नाम्बुसेविनाम् ।**
**मन्त्रयोगविदां चैव विषं दद्याच्च न क्वचित् ॥**
**[३]दिव्यं तु वर्जयेन्नित्यमार्तानां तु गदैर्नृणाम् ॥**
**[४]तण्डुलैर्न नियुञ्जीत व्रतिनं मुखरोगिणम् ॥**

व्रतिनं तण्डुलाभक्षणव्रतवन्तम् । व्यचि.८७

दिव्यानधिकारिणः

**[५]मातापितृद्विजगुरुबालस्त्रीराजघातिनाम् ।**
**महापातकयुक्तानां नास्तिकानां विशेषतः ॥**

---

\+ व्यप्र. स्मृचगतम् । ×वीमि. व्यचिगतम् ।

(१) **व्यक.**७८; **स्मृसा.**११७; **व्यचि.**९० र्धे तु (र्धात्तु); **सवि.**१७८ हुत...ते (दत्तभुक्ततृतीयके): **१७९** दृश्य (दीय); **व्यसौ.**७२; **वीमि.**२।९९ शते (शेषे); **बाल.**२।९९ (=); **समु.**५३ दृश्य (दीय) स्मृता (मता) स्मृत्यन्तरम्.

(२) **व्यक.**७८; **स्मृसा.**११७ पञ्चक (पञ्चसु) देया (ज्ञेया); **व्यचि.**९०; **सवि.**१७८ पानं (दानं) देया (ज्ञेया) कः (कम्): १७९ पूर्ववत्, उत्त.; **व्यसौ.**७२ कसप्तसु (च सप्त च); **वीमि.** २।९९ कः (काः); **बाल.**२।९९ (=); **समु.**५३ स्मृत्यन्तरम्.

(३) **अप.**२।९८ वैदि (वै दि); **व्यक.**७९; **स्मृच.**१०३ त्तमे (त्तमः) उत्त.; **पमा.**१५९ विषवर्जं (विषं वर्ज्यं) उत्त.; **स्मृसा.**११७ वैश्ये (शूद्रे); **व्यचि.**८६ ग्निं (ग्निः) टं (टो); **स्मृचि.**५१ विष (विषं); **नृप्र.**१३ उत्त.; **सवि.**१७१ उत्त.; **व्यसौ.**७३; **वीमि.**२।९८; **व्यप्र.**१७७; **प्रका.**६४ मे (मः) उत्त.; **समु.**५३ उत्त.

(१) **अप.**२।९८; **व्यक.**७९; **स्मृसा.**११७; **व्यचि.**८६; **स्मृचि.**५१; **सवि.**१४० तथा कारु ( शिल्पिनश्च ) ग्राह ... जान् (विप्रान् शूद्रवदाचरेत्); **व्यसौ.**७३; **वीमि.**२।९८ प्रे (प्रै); **व्यप्र.**१७९.

(२) **अप.**२।९८ विषं...त् (नाग्निर्दिव्यं विधीयते); **व्यक.** ८०; **स्मृच.**१०३; **पमा.**१६०; **स्मृसा.**११७ पू.; **व्यचि.** ८७ च (तु); **स्मृचि.**५१; **दित.** ५७९ सेवि (जीवि) पू.; **सवि.**१७३ ग्निं (ग्निः); **चन्द्र.**१६३ पू.; **व्यसौ.**७४ ग्निं (ग्निः); **वीमि.**२।९८; **व्यप्र.**१७८ ग्निं (ग्निः) च (तु); **व्यम.**२१ व्यप्रवत्; **विता.**२१४ ग्निं (ग्निः) सेविनाम् (चारिणाम्) च न (न तु); **बाल.**२।९९ च (तु) उत्त., विष्णुः; **प्रका.**६५; **समु.**५४.

(३) **व्यक.**८०; **व्यचि.**८७; **वीमि.**२।९८.

(४) **अप.**२।९८ व्रति (क्षति); **व्यक.**८० नं (नां) णम् (णाम्); **स्मृच.**१०३ ति (णि); **पमा.**१६० व्यकवत्; **स्मृसा.**११८ व्रतिनं (ब्राह्मणं); **व्यचि.**८७; **स्मृचि.**५१; **दित.**५७९ नि (प्र) व्रतिनं (ब्राह्मणं); **सवि.**१७३ ति (णि); **चन्द्र.**१६३ व्रतिनं (ब्राह्मणं) णम् (णाम्); **व्यसौ.**७४; **वीमि.**२।९८ लैर्न (ले न); **व्यप्र.**१७८; **व्यम.**२१; **विता.** २१४; **बाल.**२।९९ न नि (नाभि) विष्णुः; **प्रका.**६५ ति (णि); **समु.**५४.

(५) **व्यक.**८० राज (द्विज); **स्मृच.**१०३; **पमा.**१६० माता (मातृ) बाल (वृद्ध) राज (बाल); **दीक.**४०; **व्यचि.**८७;

[1]लिङ्गिनां प्रशठानां तु मन्त्रयोगक्रियाविदाम् ।
वर्णसंकरजातानां पापाभ्यासप्रवर्तिनाम् ॥
[2]एतेष्वेवाभियोगेषु निन्द्येष्वेव प्रयत्नतः ।
दिव्यं प्रकल्पयेन्नैव राजा धर्मपरायणः ॥

तत्तेषां साक्षाद्दिव्यकर्तृत्वनिषेधार्थं न पुनर्दिव्येन परीक्षायाः । स्मृच.१०३

[3]एतैरेव नियुक्तानां साधूनां दिव्यमर्हति ।
नेच्छन्ति साधवो यत्र तत्र शोध्यः स्वकैर्नरैः ॥

दिव्यमर्हति राजा कल्पयितुमिति शेषः । स्मृच.१०३

[4]महापातकयुक्तेषु नास्तिकेषु विशेषतः ।
न देयं तेषु दिव्यं तु पापाभ्यासरतेषु च ॥

प्रतिनिधिद्वारा एतैर्दिव्यं कारणीयमिति द्रढयितुमाह स एव— महापातकेति । व्यप्र.१८०

दिव्याधिकारिणः

[5]येषु पापेषु दिव्यानि प्रतिषिद्धानि यत्नतः ।
कारयेत्सज्जनैस्तानि नाभिशस्तं त्यजेन्मनुः ॥
[1]अस्पृश्याधमदासानां म्लेच्छानां पापकारिणाम् ।
प्रातिलोम्यप्रसूतानां निश्चयो न तु राजनि ॥
[2]तत्प्रसिद्धानि दिव्यानि संशये तेषु निर्दिशेत् ॥

(१) तत् तैर्नियुक्तस्वजनालाभविषयमित्यवगन्तव्यम् । स्मृच.१०४

(२) तत् तत् प्रसिद्धानि सर्पघटादीनि । दित.५७९

(३) मिता.टीका— अस्पृश्याः चण्डालादयः, अधमाः शूद्रादयः । बाल.२।९९

दिव्यदेशः

[3]इन्द्रस्थानेऽभिशस्तानां महापातकिनां नृणाम् ।
नृपद्रोहप्रवृत्तानां राजद्वारे प्रयोजयेत् ॥
[4]प्रातिलोम्यप्रसूतानां दिव्यं देयं चतुष्पथे ।
अतोऽन्येषु तु कार्येषु सभामध्ये विदुर्बुधाः ॥

---

**दित**.५७९; **व्यसौ**.७४; **व्यप्र**.१७९ बाल (बृद्ध) राज (बाल); **व्यम**.२२ व्यप्रवत्; **बाल**.२।९९; **प्रका**.६५ नारदः; **समु**.५४.

(१) **व्यक**.८० शठा (मदा); **स्मृच**.१०३; **पमा**.१६० शठा (शमा); **व्याचि**.८७ ता (ती) उत्त.; **व्यसौ**.७४ शठा (मदा) तु (च) ता (ती); **व्यप्र**.१७९ व्यसौवत्; **व्यम**.२२ शठा (मदा) च (तु); **बाल**. २।९९ शठा (सवा) ता (ती); **प्रका**.६५ नारदः; **समु**.५४ तु (च).

(२) **व्यक**.८०; **स्मृच**.१०३ प्रय (च य); **पमा**.१६१ निन्द्येष्वेव प्र (निन्दितेष्वेव); **दीक**.४० उत्त.; **व्याचि**.८७-८८ निन्द्येष्वेव (नित्यमेव) न्नैव (देवं); **दित**.५७९ उत्त.; **व्यसौ**. ७४ पमावत्; **व्यप्र**.१८०; **व्यम**.२२; **बाल**.२।९९; **प्रका**. ६५ स्मृचवत्; **समु**.५४ ष्वेव (ष्वपि).

(३) **व्यक**.८०; **स्मृच**.१०३; **पमा**.१६१ नेच्छन्ति (न सान्ति) ध्यः (ध्याः); **दीक**.४० पू.; **व्याचि**.८८ एतैरेव नि (एतेष्वेवाभि) शोध्यः (साध्यं); **दित**.५७९ एतैरेव नि (एभिरेव प्र) पू.; **व्यसौ**.७४ शोध्यः (साध्यः); **व्यप्र**.१८० पमावत्; **व्यम**.२२ पमावत्; **बाल**.२।९९ रेव (रपि) रैः (रः); **प्रका**.६५; **समु**.५४ ध्यः (ध्यं).

(४) **अप**.२।९६; **व्यक**.८१ षु च (भृगुः); **व्याचि**.८८ व्यकवत्; **व्यसौ**.७४ व्यकवत्; **वीमि**.२।९८ व्यकवत्; **व्यप्र**.१८०.

(५) **व्यक**.८१ मनुः (नरः); **स्मृच**.१०४ येषु पापे (एषु वादे) सज्ज (स्वज) शस्तं (शप्तं); **व्याचि**.८८ कार (भाव) मनुः (नृपः); **सवि**.१७३ पापे (वादे) सज्ज (स्वज); **व्यसौ**.७४ मनुः (नरः); **वीमि**.२।९८ कार (भाव) त्यजेन्मनुः (जयेन्नृपः); **विता**. २१६ कार (तार) येषु (एषु) मनुः (नरः); **प्रका**.६५ स्मृचवत्; **समु**. ५४ सविवत्.

(१) **मिता**.२।९९; **स्मृच**.१०४ श्याधम (श्यधन); **पमा**.१६१ अस्पृश्या ... नां (धनदारापहाराणां); **दित**. ५७९ तु (च); **व्यप्र**.१८०; **व्यउ**.५५; **व्यम**.२१; **विता**. २१४ प्रातिलोम्य (प्रतिलोम); **प्रका**.६५ स्मृचवत्; **समु**.५४.

(२) **मिता**.२।९९; **स्मृच**.१०४; **पमा**.१६१; **दित**. ५७९ संशये (समये); **व्यप्र**.१८०; **व्यउ**.५५ ये (यं); **व्यम**.२१ दितवत्; **विता**.२१४ तत्प्र (तत्तत्) तेषु (षु वि); **प्रका**.६५; **समु**.५४ दितवत्.

(३) **मिता**.२।९९ द्रोह (द्रोहे); **व्यक**.८२ नेऽभि (नेषु) रे प्रयो (रेषु यो); **स्मृच**.१०५; **पमा**.१६३ इन्द्र (दण्ड); **व्याचि**.८५; **स्मृचि**.५२; **दित**.५७६ मितावत्; **सवि**. १८३ रे (रि); **व्यसौ**.७५ ने (ना) प्रयोज (प्रवर्त); **व्यप्र**. १८२; **व्यउ**.५५ मितावत्; **व्यम**.२२; **विता**.२१४ मितावत्; **प्रका**.६५; **समु**.५५.

(४) **मिता**.२।९९ तु ... मध्ये (सभामध्ये दिव्यं देयं); **व्यक**. ८२; **स्मृच**.१०५; **पमा**.१६३; **व्याचि**.८५ प्रातिलोम्य (प्रतिलोम) तु (च) मध्ये (स्थाने); **स्मृचि**.५२ तु (च); **दित**. ५७६ तु कार्येषु (कार्येषु च); **सवि**.१८३ अतो (ततो); **व्यसौ**. ७५ तु(च) मध्ये (स्थाने); **व्यप्र**.१८२; **व्यउ**.५५ ऽन्ये ... र्येषु

(१) इन्द्रस्थानं इन्द्रध्वजमुखस्थानम् । व्यक.८२

(२) दिव्यमिति सामान्येनाभिधानान्न धटस्यैवेयं देशव्यवस्था । किन्त्वनुक्तदेशविशेषाणामन्येषामपीत्यवगन्तव्यम् । स्मृच.१०५

(३) इन्द्रस्थाने इन्द्रध्वजस्थाने । दित.५७६

(४) अन्येषु कार्येषु स्वल्पकार्येषु अधिककार्येष्वप्युत्तमानां सत्यादिपुष्पान्ताः शपथा एव । दिव्यं देयमिति दिव्यग्रहणाद्धटादिविषान्तान्यवगन्तव्यानि । इन्द्रस्थानमिति प्रख्यातदेवतायतनमुपलक्षयति । सवि.१८३

(५) इन्द्रस्थाने इन्द्रध्वजपूजास्थाने । व्यप्र.१८२

(६) मिता.टीका— इन्द्रस्थानमिन्द्रप्रतिमा यत्र तत्रेत्यर्थः इति केचित् । इन्द्रस्य परेश्वरस्य स्थानम् । तत्रेति स्वयम् । बाल.२।९९

**[१]देशकालाविरोधेन यथायुक्तं प्रकल्पयेत् ।**
**अन्येन हारयेद्दिव्यं विधिरेष विपर्यये ॥**

(१) अन्येन प्रतिनिधिना, हारयेत् कारयेत्, विपर्यये अभियुक्तस्यासामर्थ्ये । *व्यचि.८७

(२) विपर्यये दिव्यकारिणोऽसामर्थ्ये युक्तं प्रकल्पयेत् । विपर्यये पूर्वं पित्रादिघातो महापापं वा कृतमिति निश्चये । व्यम.२१

**[२]अदेशकालदत्तानि बहिर्वासकृतानि च ।**
**व्यभिचारं सदाऽर्थेषु कुर्वन्तीह न संशयः ॥**

वासो निवासो जनस्थानं तस्माद् बहिर्निर्जनप्रदेश इति यावत् । अनेन जनसमक्षमेव दिव्यानि देयानि इत्यर्थादुक्तम् । स्मृच.१०५

अवैधत्वसंदेहे पुनर्दिव्यं देयम्

**[१]साधयेत्तत्पुनः साध्यं व्याघाते साधनस्य हि ।**
**दत्तान्यपि यथोक्तानि राजा दिव्यानि वर्जयेत् ।**
**मूर्खैर्लुब्धैश्च दुष्टैश्च पुनर्देयानि तानि वै ॥**

(१) साधनस्य हि दिव्यस्य व्याघाते निर्णायकत्वाभावे पुनः साध्यं दिव्येन साधयेत् । अयथाशास्त्रं च दत्तान्यपि दिव्यानि राजा व्यावर्त्य यथोक्तानि दद्यादित्यर्थः । मूर्खादिग्रहणमयथाशास्त्रदानोपलक्षणार्थम् । अप.२।९७

(२) दत्तानीत्यस्य मूर्खैरित्यादिनाऽन्वयः । व्यक.८२

**[२]यथोक्तविधिना देयं दिव्यं दिव्यविशारदैः ।**
**अयथोक्तप्रदत्तं तु न शक्तं तस्य साधने ॥**

दिव्याङ्गस्नानादिविधिः

**[३]सचैलस्नातमाहूय सूर्योदय उपोषितम् ।**
**कारयेत् सर्वदिव्यानि नृपब्राह्मणसंनिधौ ॥**

## पितामहः

दिव्यविषयः

**यस्मिन् यस्मिन् विवादे तु साक्षिणां नास्ति संभवः ।**
**साहसेषु च सर्वेषु तत्र दिव्यानि दापयेत्* ॥**
**[४]महापराधे दिव्यानि दापयेत्पृथिवीपतिः ॥**

तत्तुलादिव्यविषयम् । स्मृच.९६

दिव्यनिरुक्तिः

**[५]यस्माद्देवैः प्रयुक्तानि पुष्करार्थे मनीषिभिः ।**

---

* दित. व्यचिवत् ।

(ऽन्येषां तु सर्वेषु); **व्यम**.२२; **विता**.२१४ प्रातिलोम्य (प्रतिलोम) तु (च); **प्रका**.६५-६६; **समु**.५५.

(१) **व्यक**.८० देशकाला (कालदेशा) प्रकल्प (विशोध) विपर्यये (प्रकीर्तितः); **व्यचि**.८७; **दित**.५७९ यैये (यैयेत्); **व्यसौ**.७४ देशकाला (कालदेश); **वीमि**.२।९८ काला (काल); **व्यप्र**.१८० देशकाला (कालदेशा); **व्यम**.२१; **विता**.२१६ व्यसौवत्; **राकौ**.४११ देश...धेन (कालदेशाविरोधे तु) पितामहः; **बाल**.२।९९ वीमिवत्, विधिरेष विवर्जयेत् इति कल्पतरुपाठः; **समु**.५४ हार (कार).

(२) **अप**.२।९७; **व्यक**.८२ वास (वादि) ऽर्थेषु (त्वेवं) बृहस्पतिकात्यायनौ; **स्मृच**.१०५; **बाल**.२।९९ वास (वादि) नारदबृहस्पतिकात्यायनाः; **प्रका**.६६; **समु**.५५.

* व्याख्यासंग्रहः स्थलादिनिर्देशश्च क्रियाप्रकरणे (पृ.२३३) द्रष्टव्यः ।

(१) **अप**.२।९७; **व्यक**.८२ व्याघाते (व्यावर्ती) तृतीयार्धे (मूर्खैर्लुब्धैर्न देयानि अवनीतैस्तथैव च); **व्यचि**.८५ साधयेत्तत् (साध्यते तु).

(२) **व्यक**.८२ तु (च) तस्य (साध्य) बृहस्पतिकात्यायनौ; **स्मृचि**.५२ (अयथोक्तप्रदातुस्तु न सत्यं सत्यसाधनम्); **व्यसौ**.७५ शक्तं (सत्यं); **बाल**.२।९९ देयं (नेयं) क्तप्र (क्तं प्र) तु (च) शक्तं तस्य (दत्तं साध्य) नारदबृहस्पतिकात्यायनाः; **समु**.५५ क्तप्रदत्तं (क्तं प्रयुक्तं) शक्तं (सत्यं).

(३) **व्यक**.८२ विष्णुकात्यायनौ; **स्मृसा**.११८ चै (चे); **व्यचि**.८४; **स्मृचि**.५२ षितम् (षितः); **व्यसौ**७५.

(४) **स्मृच**.९६; **प्रका**.६२; **समु**.५०.

(५) **स्मृच**.५०; **सवि**.१०६ (=); **प्रका**.३३.

**परस्परविशुद्ध्यर्थं तस्माद्दिव्यानि नामतः ॥**

अत्रोपक्रमसामर्थ्याद्दैविकानि नामत इति लक्ष्यते। देवैः प्रयुक्तानीति निमित्तदर्शनात्। उपसंहारसामर्थ्यात् दिवि संभवनिमित्तानीति गम्यते, दिव्यानि नामत इत्युक्तत्वात्। तेन श्रुत्यर्थाभ्यामनेन वचनेन धटादीनामाजिगमनादाज्यमितिवत् यौगिकं नामद्वयमुक्तम्। स्मृच.५०

नव दिव्यप्रकाराः

[1]**अहमुद्देशतो वच्मि संदिग्धार्थप्रसिद्धये।**
**देशकालार्थसंख्याभिः संयुक्तान्यनुपूर्वशः ॥**
**अपराधानुरूपेण साध्वसाधुविवक्षया।**
**शास्त्रोदितेन विधिना प्रदातव्यानि नान्यथा ॥**
[2]**धटोऽग्निरुदकं चैव विषं कोशस्तथैव च।**
**तण्डुलाश्चैव दिव्यानि सप्तमस्तप्तमाषकः ॥**
[3]**अष्टमं फालमित्युक्तं नवमं धर्मजं भवेत्।**
**दिव्यान्येतानि सर्वाणि निर्दिष्टानि स्वयम्भुवा ॥**

शिर्षकवर्तनं, अपराधशंकानिश्चयाद्यनुसारेण दिव्यविशेषाः

[4]**अभियोक्ता शिरःस्थाने दिव्येषु परिकीर्त्यते।**
**अभियुक्ताय दातव्यं दिव्यं श्रुतिनिदर्शनात् ॥**

(१) ननु चाभियोक्तैव साध्यार्थवक्ता यश्च साध्यनिर्देशकः स एव साधनवादीति तेनैव दिव्यं कार्यमिति न्याय्यम्। अत्रोत्तरम्— 'श्रुतिनिर्देशनात्' इति। अयमर्थः— यथा मानुषं प्रमाणमभियोक्त्रा मिथ्योत्तरे कार्यं तथैव दिव्यस्य प्राप्तिर्न्यायसिद्धा वचनेनान्यथा क्रियत इति। अप.२।९५

(२) दिव्यं धटादिपञ्चकेष्वन्यतमम्। एतानीति याज्ञवल्क्येन विशेषितत्वात्। स्मृच.९६

[1]**अवष्टम्भाभियुक्तानां धटादीनि विनिर्दिशेत्।**
**तण्डुलाश्चैव कोशश्च शङ्कास्वेतौ नियोजयेत्* ॥**

(१) इति, तदल्पाभियोगे शङ्कायां च कोशविधायकम्। महाभियोगेऽवष्टम्भाभियोगे च शीर्षकस्थेऽभियोक्तर्येव कोश इत्यविरोधः। अप.२।९५

(२) अवष्टम्भो निश्चयः। व्यक.८१

(३) अवष्टम्भोऽत्र निश्चयः शिरोवर्तितेति केचित्। दित.५७९

(४) मिता.टीका— तथा च महाभियोगो महाभिशापः। स च द्विविधः। शङ्कितः सावष्टम्भश्च। स्वोपरि दण्डमङ्गीकृत्य लापितः सावष्टम्भः। एवमल्पाभियोगेऽपीति बोध्यम्। बाल.२।९५

[2]**शिरःस्थायिविहीनानि दिव्यानि परिवर्जयेत्।**
**धटादीनि विषान्तानि कोश एकोऽशिराः स्मृतः ॥**

(१) शङ्काभियोगकोशविषयमेतत्। अप.२।९६

(२) शङ्काभियोगादिविषय इति शेषः। महा-

---

(१) **व्यसौ.७१.**

(२) **मिता.२।९५; अप.२।९५** तथैव च (च पञ्चमः); उत्तरार्धे (षष्ठं च तण्डुलः प्रोक्तं सप्तमं तप्तमाषकम्); **नृप्र.१२; सवि.१६७** (=) मः (मं) कः (कम्); **व्यउ.५२** सविवत्; **विता.१९५; राकौ.४०६** तथैव च (च पञ्चमः) तण्डुलाश्चैव दिव्यानि(षष्ठं च तण्डुलं प्रोक्तं)कः (कम्). (३) **अप.२।९५.** (४) **शुनी.४।७४२;अप.२।९५** कीर्त्य(कल्प)दिव्यं...नात् (श्रुतिनिर्देशनादपि); **व्यक.८१** ने(यी)कीर्त्यते (कल्पयेत्) श्रुति (स्मृति); **स्मृच.९६** कीर्त्यते (कल्पितः) : ९७ उत्त.; **पमा.१५२; व्यचि.८३** श्रुति ...नात् (दिव्यविशारदैः); **स्मृचि.५१** व्यकवत्; **नृप्र.१२** त्यते (तयेत्); **व्यप्र.१७२; प्रका.६२** स्मृचवत्, पू.; **समु.५०** स्मृचवत्.

*मिताव्याख्यानं 'तुलाग्न्याप' इति याज्ञल्क्यश्लोके (पृ.४४४) द्रष्टव्यम्। वीमि., विता. मितावत्।

(१) **मिता.२।९५** तौ नियोजयेत् (व न संशयः) स्मरणम्; **अप.२।९५** मितावत्; **व्यक.८१** विनिर्दिशेत् (तु दापयेत्) शङ्कास्वेतौ (कार्ये तौ वि); **स्मृच.९८** तौ (तान्) उत्त.; **पमा.१५२**मितावत्, स्मरणम् : १५३; **सुबो.२।९६**(=)मितावत्, उत्त.; **व्यचि.८८** विनिर्दिशेत् (तु दापयेत्); **नृप्र.१२** तौ नियोजयेत् (व न संशयः); **दित.५७९** मितावत्, स्मृत्यन्तरम्; **सवि.१६८** मितावत्, स्मृत्यन्तरम्; **व्यसौ.७४** व्यचिवत्; **वीमि.२।९५** मितावत्; **व्यप्र.१७१,१७३; व्यउ.५३** भियु (दियु) शेषं मितावत्, स्मृत्यन्तरम्; **व्यम.२०** अव (साव) तौ नियो (तानि यो); **विता.१९६** मितावत्, स्मृत्यन्तरम्; **प्रका.६२** स्मृचवत्, उत्त.; **समु.५१** अव (साव).

(२) **अप.२।९६** कोऽशि (वाशि);**व्यक.८१**नि परि (दीनि वि); **स्मृच.९७** स्मृतः (स्मृताः); **पमा.१५४** व्यकवत्; **व्यचि.८३** रः स्थायि (रोवादि) (चत्वारि तु धटादीनि कोशश्चैवाऽशिराः स्मृतः);**स्मृचि.५२**उत्तरार्धं व्यचिवत्;**नृप्र.१२**व्यानि परि (व्यादीनि वि); **दित.५७५** उत्तरार्धं व्यचिवत्; **सवि.१६८** (=); **वीमि.२।९५** व्यचिवत्; **व्यप्र.१७३** कोऽशि (कः शि); **प्रका.६२** स्मृचवत्; **समु.५१** स्मृचवत्.

तत्त्वाभियोगे कोशोऽपि शिरःस्थायिविहीनो वर्ज्य एव। 'शीर्षकस्थेऽभियोक्तरि' इति पञ्चदिव्यशेषतया याज्ञवल्क्येनोक्तत्वात्। महातत्त्वाभियोगेष्वपि राजप्राड्विवाकेतरसभायां तु न धटादिदिव्यपञ्चके शिरःकल्पनमस्ति। स्मृच.९७

[1]**अथ चेदात्मशुद्ध्यर्थं दिव्यं प्रक्रमते नरः।**
**अशिरस्तस्य दातव्यमिति शास्त्रविनिश्चयः॥**
[2]**राजभिः शङ्कितानां च निर्दिष्टानां च दस्युभिः।**
**आत्मशुद्धिपराणां च दिव्यं देयं शिरो विना॥**

(१) चोरयतामस्माकमेते संघातिन इत्येवं दस्युभिर्निर्दिष्टानां दिव्यमशिरः। अप.२।९६

(२) मिता.टीका—अत्र निर्दिष्टानां च दस्युभिरित्युक्त्या शब्दतश्चौर्याभिशङ्का यद्यपि न प्रतीयते तथापि 'राजभिः शङ्कितानामि'त्युपक्रमबलात् दस्यूनामविश्वसनीयत्वेन तन्निर्दिष्टेऽप्याशङ्कैव जायत इति। *सुबो.२।९६

[3]**चौर्ये तु तण्डुला देया नान्यत्रेति विनिश्चयः॥**

अन्यत्र स्त्रीसंग्रहादौ न तु दत्तापह्नवे। 'तदर्धार्धस्य तण्डुला' इति वक्ष्यमाणकात्यायनवचनेन तण्डुलदिव्यविधानात्। एतदल्पचौर्यशङ्कायां वेदितव्यम्। व्यप्र.१७३

[4]**अल्पचौर्याभिशङ्कायां तप्तमाषकमादिशेत्॥**

तप्तमाषोऽपि लघ्वर्थेषु शङ्कायामेव। स्मृच.९८

[5]**चौर्यशङ्काभियुक्तानां तप्तमाषो विधीयते॥**

(१) तप्तमाषस्तु महाचौर्याभिशङ्कायामेव। +मिता.२।९६

(२) मिता.टीका–'चौर्यशङ्काभियुक्तानामि'ति यद्यप्यविशेषेणोक्तं तथापि तप्तमाषस्य तीक्ष्णत्वेन महादिव्यत्वात् तप्तमाषानुसारेणानिमित्तस्य चौर्यशङ्काया महत्त्वं युक्तमिति भावः। सुबो.२।९६

[1]**सहस्रे तु धटं दद्यात् सहस्रार्धे तथायसम्।**
**अर्धस्यार्धे तु सलिलं तस्यार्धे तु विषं स्मृतम्॥**

(१) यद्द्रव्यापहारे पातित्यं भवति तद्विषयं पितामहवचनं, इतरद्रव्यविषयं योगीश्वरवचनमिति। मिता.२।९९

(२) यदा तु यथावर्णं धटादीनि भवन्ति कर्तारश्च गुणवन्तस्तत्राह पितामहः– सहस्रे त्विति। अप.२।९९

(३) तद् प्रागुद्दिष्टदोषपुरुषविषयम्। स्मृच.१०२

(४) यत्र अल्पापराधे पातित्यं तद्विषयमिति। एतत्सर्वं स्तेयसाहसविषयमिति। +दित.५८१

[2]**महापातकशङ्कायां परशुस्तप्तमाषकः (?)।**
**पञ्चनिष्के तदर्धे च तदर्धे तप्तमाषकः॥**

जातिकर्माद्यधिकारिविशेषणानुसारेण दिव्यविवेकः

[3]**ब्राह्मणस्य धटो देयः क्षत्रियस्य हुताशनः।**
**वैश्यस्य सलिलं प्रोक्तं विषं शूद्रस्य दापयेत्॥**
[4]**सर्वेषामेव वर्णानां कोशशुद्धिर्विधीयते।**
**सर्वाण्येतानि सर्वेषां ब्राह्मणस्य विषं विना॥**

ब्राह्मणादीनामपि न सार्वकालिकस्तुलादिनियमः। ×मिता.२।९८

[5]**कुष्ठिनां वर्जयेदग्निं सलिलं श्वासकासिनाम्।**
**पित्तश्लेष्मवतां नित्यं विषं तु परिवर्जयेत्॥**

---

* बाल.(२।९६) सुबोवत्। + दित., व्यप्र., व्यउ. मितावत्।

(१) **अप**.२।९६. (२) **शुनी**.४।७४४ राजभिः (पार्थिवैः); **मिता**.२।९६ (=); **अप**.२।९६; **व्यक**.८२; **दीक**.४०; **व्यचि**.८४; **वीमि**.२।९६.

(३) **दीक**.४२; **स्मृचि**.५२ त्रे (स्ये); **दित**.५८१ तु (च) :६०६; **व्यप्र**.१७३; **व्यउ**.५३ तु (च); **विता**.२०१, १६४; **राकौ**.४०८. (४) **स्मृच** ९८; **समु**.५१ भि (दि).

(५) **शुनी**.४।७४६ र्यशङ्काभि (र्याभिशङ्का); **मिता**.२।९६ स्मरणम्; **अप**.२।९५ (=); **व्यक**.८१ तप्तमाषो विधीयते (धटादीनि तु दापयेत्); **व्यचि**.८८; **नृप्र**.१२; **दित**.५८१ चौर्यशङ्का (महाचौर्या) स्मृतिः; **व्यसौ**.७४; **व्यप्र**.१७३ र्यशङ्काभि (र्येऽभिशङ्का); **व्यउ**.५३; **विता**.२०१ विधी (ऽभिधी).

+ व्यप्र. दितवत्। × दित. मितावत्। सवि., विता. 'तुला स्त्रीबाले'ति याज्ञवल्क्यवचनस्य (पृ.४४७) मितागतम्।

(१) **मिता**.२।९९; **अप**.२।९९; **स्मृच**.१०२; **दित**.५८१ (=) तथायसम् (हुताशनम्); **व्यप्र**.१७४; **व्यउ**.५५; **विता**.१९६; **प्रका**.६४ याज्ञवल्क्यः; **समु**.५३.

(२) **समु**.५३. (३) **मिता**.२।९८; **व्यप्र**.१७८; **व्यउ**.५३; **विता**.२०७. (४) **मिता**.२।९८; **दित**.५७८ श (शात्); **सवि**.१७२ (=) दितवत्; **व्यउ**.५४; **व्यम**.२१ श (शात्) विषं विना (विना विषं); **विता**.२०८; **समु** ५३.

(५) **मिता**.२।९८; **अप**.२।९८; **स्मृच**.१०३; **पमा**.१६०; **दित**.५७८ (=); **सवि**.१७३ कात्यायनः; **व्यप्र**.१७९; **व्यउ**.५४; **प्रका**.६५; **समु**.५४.

येषां तु व्याधिविशेषेणाग्न्यादिनिषेधः तेषामग्न्यादिकालेऽपि साधारणं तुलाद्येव दिव्यं भवति । +मिता.२।९८

**[१]मद्यपस्त्रीव्यसनिनां कितवानां तथैव च ।**
**कोशः प्राज्ञैर्न दातव्यो ये च नास्तिकवृत्तयः ॥**
**[२]महापराधे निर्धर्मे कृतघ्ने क्लीबकुत्सिते ।**
**नास्तिकव्रात्यदासेषु कोशपानं विवर्जयेत् ॥**

महापराधो महापातकम् । निर्धर्मो वर्णाश्रमधर्मरहितः पाखण्डी । कुत्सितः प्रतिलोमजः । दाशाः कैवर्ताः । इत्यधिकारिनियमः । मिता.२।११२

**[३]तोयमग्निर्विषं चैव दातव्यं बलिनां नृणाम् ।**
**बालवृद्धस्त्रियश्चैव परीक्षेत धटे सदा ॥**

इति वचनाद् दुर्बलानामपि सर्वथा विधिप्रतिषेधाद्दतुकालानतिक्रमेण जातिवयोवस्थाश्रितानि दिव्यानि देयानि । *मिता.२।९८

**[४]संव्रतानां कृशाङ्गानां बालवृद्धतपस्विनाम् ।**
**स्त्रीणां च न भवेद्दिव्यं यदि धर्मस्त्ववेक्ष्यते ×॥**

दिव्यविशेषेषु कालविशेषनियमः

**[५]यो यस्य विहितः कालो विधिर्यस्य च यो यथा ।**
**तं प्रवक्ष्यामि तत्वेन वादिनश्च बलाबलम् ॥**
**[१]चैत्रो मार्गशिरश्चैव वैशाखश्च तथैव च ।**
**एते साधारणा मासा दिव्यानामविरोधिनः ॥**
**[२]धटः सर्वर्तुकः प्रोक्तो वाते वाति विवर्जयेत् ।**
**अग्निः शिशिरहेमन्तवर्षासु परिकीर्तितः ॥**

धटग्रहणं कोशस्यापि प्रदर्शनार्थम् । स्मृच.१०४

**[३]शरद्ग्रीष्मे तु सलिलं हेमन्ते शिशिरे विषम् ॥**
**[४]ग्रीष्मे सलिलमित्युक्तं हिमकाले तु वर्जयेत् ॥**
**[५]कोशस्तु सर्वदा देयस्तुला स्यात् सार्वकालिकी ॥**

कोशग्रहणं सर्वशपथानामुपलक्षणम् । तण्डुलानां पुनर्विशेषानभिधानात् सार्वकालिकत्वम् । मिता.२।९७

**[६]अव्यवस्थितमर्यादं विषं प्रावृषि जायते ॥**

---

+ दित. मितावत् । * दित. मितागतम् ।
×व्याख्यासंग्रहः 'सव्रतानामि' ति नारदश्लोके(पृ.४५१) द्रष्टव्यः ।

(१) **मिता.**२।११२; **अप.**२।९८,२।११३; **व्यक.**८० नारदः; **स्मृच.**१०३ शः (शं) व्यः (व्यं); **पमा.**१६० मद्यपस्त्री (पण्यस्त्रीणां) स्मृत्यन्तरम्; **व्यचि.**८७; **स्मृचि.**५१; **दित.**६०४ तवा(राता)नारदः; **सवि.**१७३ कात्यायनः; **व्यसौ.** ७४; **वीमि.**२।९८; **व्यप्र.**१७९; **व्यउ.**६८; **विता.**२१४; **राकौ.**४११; **बाल.**२।९९; **प्रका.**६५ स्मृचवत्; **समु.**५४.

(२) **मिता.**२।११२; **दित.**६०५ नारदः; **मच.**८।११६ विवर्जयेत् (विगर्हितम्); **व्यउ.**६८ घ्ने (घ्नं) कव्रात्य (के प्रत्यु).

(३) **मिता.**२।९८ पू.; **अप.**२।९८; **दित.**५७८ (=) पू.; **व्यउ.**५४ पू.; **विता.**२१२ (=).

(४) **मिता.**२।९८ कृशा ... वृद्ध (भृशार्तानां व्याधितानां) वेक्ष्यते (पेक्षितः); **अप.**२।९८ सव्रतानां (ब्राह्मणानां); **स्मृच** १०३ च (तु); **पमा.**१६१ स्मृचवत्; **स्मृचि.**५१ पूर्वार्धं मितावत्, वेक्ष्य (पेक्ष्य); **सवि.**१७२ कृशा... वृद्ध (भृशार्तानां याचितानां) मेस्त्ववेक्ष्य (मोनपेक्ष); **व्यप्र.**१७९ पूर्वार्धं मितावत्; **व्यउ.**५३ स्मृचिवत्; **प्रका.**६५ स्मृचवत्.

(५) **व्यक.**७८-७९ तं प्र (तत्र); **व्यचि.**८५; **स्मृचि.** ५१ तं (सं); **व्यसौ.**७३ यस्य च (द्रव्यस्य) तत्वे (दिव्ये) बला (यथा); **व्यप्र.**१८०; **बाल.**२।९७ (=).

(१) **मिता.**२।९७ (=) शिर (शिरा); **अप.**२।९७ शिर (शिरा) व च (व हि); **व्यक.**७९; **स्मृच.**१०४ मितावत्; **पमा.**१६२; **स्मृसा.**११७ अपवत्, बृहस्पतिः; **व्यचि.**८५ अपवत्; **स्मृचि.**५१ व च (व हि); **दित.**५७६ अपवत्; **सवि.**१७१ हारीतः; **चन्द्र.**१६२ मितावत्; **व्यसौ.**७३; **वीमि.**२।९७ स्मृचिवत्; **व्यप्र.**१८१ मितावत्; **व्यउ.**५४ (=); **व्यम.**२२; **विता.**२०४ नारदः; **राकौ.**४११; **समु.**५५ मितावत्.

(२) **अप.**२।९७ (अग्निं शिशिरहेमन्ते वर्षास्वपि च दापयेत्); **व्यक.**७९ न्त (न्ते) परि (च प्र); **स्मृच.**१०४ वर्ज (सर्ज) न्त (न्ते); **पमा.**१६२ अपवत्; **स्मृसा.**११७ कः (क्षु) अग्निः (वह्निः) परि (च प्र) बृहस्पतिः; **व्यचि.**८५; **स्मृचि.**५१ व्यकवत्; **दित.**५७६; **चन्द्र.**१६२ (=) अग्निः (वह्निः); **व्यसौ.**७३ व्यकवत्; **वीमि.**२।९७; **व्यप्र.** १८१; **व्यम.**२२ वाते वाति (वाति वाते); **विता.**२०४, २०७ व्यमवत्, पू.; **राकौ.**४१२ व्यमवत्; **बाल.**२।९७; **प्रका.**६५ स्मृचवत्; **समु.**५४ स्मृचवत्.

(३) **व्यक.**७९; **स्मृच.**१०४; **स्मृसा.**११७ तु (षु) बृहस्पतिः; **व्यचि.**८५ स्मृसावत्; **स्मृचि.**५१ स्मृसावत्; **दित.**५७६; **चन्द्र.**१६३ तु (च); **व्यसौ.**७३ तु (च) विषम् (तथा); **वीमि.**२।९७ स्मृसावत्; **व्यप्र.**१८१ तु (च); **व्यम.**२२; **राकौ.**४१२; **प्रका.**६५; **समु.**५४.

(४) **अप.**२।९७ हिम ... येत् (विषं काले हिमाव्हे); **पमा.** १६२. (५) **मिता.**२।९७ (=); **दित.**५७६; **सवि.**१७१ हारीतः; **व्यउ.**५४ (=). (६) **व्यक.**७९; **बाल.**२।९७.

[1]पूर्वाह्णेऽग्निपरीक्षा स्यात् पूर्वाह्णे च धटो भवेत् ।
मध्याह्ने तु जलं देयं धर्मतत्वमभीप्सता ॥
[2]दिवसस्य तु पूर्वाह्णे कोशशुद्धिर्विधीयते ।
रात्रौ तु पश्चिमे यामे विषं देयं सुशीतलम् ॥

दिव्याध्यक्षः

[3]प्रत्यक्षं दापयेद् दिव्यं राजा वाऽधिकृतोऽपि वा ।
ब्राह्मणानां श्रुतवतां प्रकृतीनां तथैव च ॥

सर्वदिव्येषु देवतावाहनार्घ्यमन्त्रादिविधिः

[4]दिव्येषु सर्वकार्याणि प्राड्विवाकः समाचरेत् ।
अध्वरेषु यथाऽध्वर्युः सोपवासो नृपाज्ञया ॥

सर्वकार्याणि साधारणानि असाधारणानि च । स्मृच.१०७

[5]तत आवाहयेद्देवान् विधिनाऽनेन धर्मवित् ॥

अनेन वक्ष्यमाणेन । स्मृच.१०७

[6]वादित्रतूर्यघोषैश्च गन्धमाल्यानुलेपनैः ।
प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततो वदेत् ॥
[1]एह्येहि भगवन् धर्म अस्मिन्दिव्ये समाविश ।
सहितो लोकपालैश्च वस्वादित्यमरुद्गणैः ॥
[2]आवाह्य तु धटे धर्मं पश्चादङ्गानि विन्यसेत् ॥

धटग्रहणं उपकल्पितदिव्योपलक्षणार्थम् । सर्वेषु दिव्येषु धर्मावाहनस्याङ्गविन्यासस्य च वक्ष्यमाणत्वात् । स्मृच.१०७

[3]इन्द्रं पूर्वे तु संस्थाप्य प्रेतेशं दक्षिणे तथा ।
वरुणं पश्चिमे भागे कुबेरं चोत्तरे तथा ॥
[4]अग्न्यादिलोकपालांश्च कोणभागेषु विन्यसेत् ।

---

(१) अप.२।९७ च ...वेत् (चोद्वहेद्धटम्) धर्म...ता (मध्याह्नात्परतो विषम्) नारदः; पमा.१६३; व्यचि.८४ च (तु) तत्व (सत्य); सवि.१७०; मच.८।११६ पूर्वाह्णे च (अपराह्णे); वीमि.२।९७ च (तु); व्यप्र.१८१; व्यउ.५४; व्यम.२२; विता.२०५; राकौ.४१२; समु.५७ च (तु).

(२) अप.२।९७ स्य तु (स्यैव) लम् (ले) नारदः; पमा. १६३; व्यचि.८५ ह्णे (र्धे) लम् (ले); सवि.१७० सु (स); मच.८।११६; वीमि.२।९७ कोश (काल); व्यप्र.१८१ यामे (भागे) लम् (ले) : २०९ (=) पूर्ववत्, उत्त.; व्यउ. ५४ तु प (च प) सु (तु); व्यम.२२; विता.२०५; राकौ. ४१२; समु.५७ लम् (ले).

(३) व्यक.८२; स्मृच.१०५ जा (ज्ञा) तो (ता); पमा. १६४ वाऽधि (अधि); व्यचि.८४ दिव्यं (दण्डं) प्रकृ (नृप); स्मृचि.५२; दित.५७७; सवि.१८३; व्यसौ.७५; व्यप्र. १८३; प्रका.६६; समु.५५.

(४) मिता.२।९७; अप.२।९७; व्यक.८२; स्मृच. १०७ : ११० पू.; पमा.१६४ पू.; व्यचि.८४; स्मृचि. ५२; दित.५८६; सवि.१८४ समाचरेत् (प्रकाशयेत्) प्रजापतिः; वीमि.२।९७; व्यप्र.१८३; व्यउ.५५; विता.२१२; राकौ.४१३; प्रका.६७:६९ पू., नारदः; समु.५६.

(५) स्मृच.१०७; पमा.१६४; व्यप्र.१८३; व्यउ.५५ धर्म (मन्त्र); व्यम.२२; प्रका.६७; समु.५६.

(६) मिता.२।१०२; अप.२।१०२ गन्ध (धूप); व्यक. ८४ पू.; स्मृच.१०७ उत्त.; पमा.१६४ उत्त. : १७० पू.; स्मृचि.५३ घोषैश्च गन्ध (निर्घोषैर्धूप); दित.५८३; सवि.१८६ उत्त.; व्यसौ.७७ स्मृचिवत्, पू.; व्यप्र.१८३ : १९० घोषैश्च (निर्घोषैः); व्यउ.५५ प्राङ्मुखः प्राञ्जलिः (प्राञ्जलिः प्राङ्मुखो): ५८ व्यप्रवत्, पू.; व्यम.२२ उत्त. : २५ पू.; राकौ.४१५; प्रका.६७ उत्त.; समु.५६ उत्त. : ५७ पू.

(१) मिता.२।१०२ अस्मि (ह्यस्मि); अप.२।१०२ व्यासः; व्यक.८५ श्च (स्त्वं); स्मृच.१०७; पमा.१६४; व्यनि.११ [मयाराम:]; स्मृचि.५३ अस्मिन् दिव्ये (दिव्येऽस्मिंस्त्वं); नृप्र.१३ दिव्ये (देशे) मरुद्गणै (समग्रकैः); दित. ५८४,५९२ अस्मिन् दिव्ये (दिव्ये ह्यस्मिन्) : ५८७ श्च (स्त्वं) शेषं पूर्ववत्; सवि.१८७; मच.८।११६; व्यसौ.७७ अस्मिन्दिव्ये (दिव्यमेतत्); वीमि.२।९७ (=) अस्मिन् दिव्ये (दिव्यमेतत्) श्च (स्त्वं); व्यप्र.१८३ मितावत्; व्यउ. ५५; व्यम.२३; विता.२२० (=); राकौ.४१५; प्रका. ६७; समु.५६.

(२) मिता.२।१०२; स्मृच.१०७; पमा.१६४; स्मृचि. ५३; दित.५८४ तु (च); सवि.१८७; व्यप्र.१८३; व्यउ. ५५; व्यम.२३; राकौ.४१५; प्रका.६७; समु.५७.

(३) मिता.२।१०२; स्मृच.१०७; पमा.१६४ दक्षिणे तथा (चापि दक्षिणे); स्मृचि.५३; दित.५८४ चो (उ); सवि.१८७; वीमि.२।१०२; व्यप्र.१८३ संस्थाप्य (विन्यस्य); व्यउ.५५; व्यम.२३; राकौ.४१५ न्द्रं पूर्वे (न्द्रपीता) तेशं (तं वा); प्रका.६७; समु.५६.

(४) मिता.२।१०२; स्मृच.१०७; पमा.१६४; स्मृचि.५३; दित.५८४ स्फ (स्फा); सवि.१८७; वीमि. २।१०२; व्यप्र.१८३; व्यउ.५५; व्यम.२३; राकौ.४१५; प्रका.६७; समु.५६.

इन्द्रः पीतो यमः श्यामो वरुणः स्फटिकप्रभः ॥
[1]कुबेरस्तु सुवर्णाभो ह्यग्निश्चापि सुवर्णभः ।
तथैव निर्ऋतिः श्यामो वायुर्धूम्रः प्रशस्यते ॥
[2]ईशानस्तु भवेद्रक्त एवं ध्यायेत् क्रमादिमान् ।
इन्द्रस्य दक्षिणे पार्श्वे वसूनावाहयेद् बुधः ॥
[3]धरो ध्रुवस्तथा सोम आपश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभातश्च वसवोऽष्टौ प्रकीर्तिताः ॥
[4]देवेशेशानयोर्मध्ये आदित्यानां तथायनम् ।
धातार्यमा च मित्रश्च वरुणोंऽशो भगस्तथा ॥
[5]इन्द्रो विवस्वान् पूषा च पर्जन्यो दशमः स्मृतः ।
ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः ॥

[1]इत्येते द्वादशादित्या नामभिः परिकीर्तिताः ।
अग्नेः पश्चिमभागे तु रुद्राणामयनं विदुः ॥
[2]वीरभद्रश्च शम्भुश्च गिरिशश्च महायशाः ।
अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः ॥
[3]भुवनाधीश्वरश्चैव कपाली च विशाम्पतिः ।
स्थाणुर्भवश्च भगवान् रुद्रास्त्वेकादश स्मृताः ॥
[4]प्रेतेशरक्षोमध्ये च मातृस्थानं प्रकल्पयेत् ॥
[5]ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही चैव माहेन्द्री चामुण्डा गणसंयुता ॥
[6]निर्ऋतेरुत्तरे भागे गणेशायतनं विदुः ।
वरुणस्योत्तरे भागे मरुतां स्थानमुच्यते ॥

---

(१) मिता.२।१०२ ह्यग्नि (वह्नि); स्मृच.१०७; पमा. १६५ ह्य (ऽप्य); स्मृचि.५४ मितावत्; दित.५८४ मितावत्; सवि.१८७ स्तु (श्च) ह्यग्निश्चापि (अग्निश्चैव); वीमि.२।१०२ मितावत्; व्यप्र.१८३ श्चापि (श्चैव); व्यउ. ५५ ह्य (अ); व्यम.२३ स्तु (श्च) ह्य (अ); राकौ.४१५ भो ह्य (भः अ); प्रका.६७; समु.५६ ह्य (अ).

(२) मिता.२।१०२ वाह (राध); स्मृच.१०७; पमा. १६५; स्मृचि.५४; दित.५८४ पूर्वार्धे (ईशानस्तु भवेत् शुक्लोऽनन्तः शुक्ल एव च । ब्रह्मा चैव भवेद्रक्त एवं ध्यायेत् क्रमादिमान् ॥); सवि.१८७; वीमि.२।१०२ मितावत्; व्यप्र.१८३ वाह (स्थाप); व्यउ.५५; व्यम.२३; राकौ. ४१५ मितावत्; प्रका. ६७; समु.५६.

(३) मिता.२।१०२; स्मृच.१०७ भात (भाव); पमा. १६५ भात (भास); दित.५८४ पमावत्; सवि.१८७ पमावत्; वीमि.२।१०२ पमावत्; व्यप्र.१८४ निलोऽनलः (नलोऽनिलः); व्यउ.५५; व्यम.२३ पमावत्; विता. २२० (=); राकौ.४१५ पमावत्; प्रका.६७ पमावत्; समु. ५६ पमावत् .

(४) मिता.२।१०२ यनम् (गणम्) णोंऽशो (णोंऽशुः); स्मृच.१०७; पमा.१६५ णोंऽशो (णेशौ); दित.५८४ (इन्द्रेशानयोर्मध्ये आदित्यानां च तथायनम्) णोंऽशो (णोंऽशु); सवि.१८७; वीमि.२।१०२; व्यप्र.१८४; व्यउ.५५ पमावत्; व्यम.२३; विता.२२० णोंऽशो (णोंऽशुः) उत्त.; राकौ.४१६ णोंऽशो (णेश); प्रका.६७; समु.५६.

(५) मिता.२।१०२; स्मृच.१०७; पमा.१६५; दित. ५८४; सवि.१८७; वीमि.२।१०२; व्यप्र.१८४; व्यउ. ५५; व्यम.२३ स्मृतः (तथा); विता.२२०; राकौ.४१६ पर्जन्यो (जयन्तो) (ततस्तूषा ततो विघ्नराजश्चान्यो जघन्यजः); प्रका.६७; समु.५६.

(१) मिता.२।१०२; स्मृच.१०७; पमा.१६५; दित. ५८४ नामभिः (मनुना); सवि.१८७ विदुः (स्मृतम्); वीमि.२।१०२; व्यप्र.१८४; व्यउ.५५; व्यम.२३; विता. २२० (=) पू.; राकौ.४१६ त्या ना (त्वना) यनं (प्रि तं); प्रका.६७; समु.५६.

(२) मिता.२।१०२; स्मृच.१०७; पमा.१६५; दित. ५८४; सवि.१८७ गिरि (वाग्मी); वीमि.२।१०२; व्यप्र. १८४; व्यउ.५५; व्यम.२३; विता.२२०(=); राकौ.४१६ र्बुध्न्यः (र्ब्रध्नः) चा (च) तः (ता); प्रका.६७; समु.५६.

(३) मिता.२।१०२; स्मृच.१०७; पमा.१६५ र्भव (र्भग); दित.५८४ स्त्वे (श्चै); सवि.१८७-१८८ र्भव (र्भग) द्रास्त्वे (द्रा ए); वीमि.२।१०२; व्यप्र.१८४; व्यउ. ५५; व्यम.२३; विता.२२१ (=) द्रास्त्वे (द्रा ए); राकौ. ४१६ नाधी (नाभी) द्रास्त्वे (द्रा ए); प्रका.६७; समु.५६.

(४) मिता.२।१०२ च (तु); स्मृच.१०७; पमा.१६५; दित.५८४ क्षोमध्ये च (क्षसोर्मध्ये); सवि.१८८ प्रेते... च (प्रजेशरक्षसोर्मध्ये); वीमि.२।१०२; व्यप्र.१८४; व्यउ. ५५; व्यम.२३; राकौ.४१६; प्रका.६७; समु.५६.

(५) मिता.२।१०२; स्मृच.१०७; पमा.१६५ चैव माहेन्द्री (च महेन्द्राणी); दित.५८४; सवि.१८३ वैष्णवी तथा (चैव वैष्णवी) न्द्री (न्द्रा) यु (वृ); वीमि.२।१०२; व्यप्र.१८४; व्यउ.५५; व्यम.२३; विता.२२१ (=); राकौ.४१६; प्रका.६७; समु.५६ गणसंयुता (सप्त मातरः).

(६) मिता.२।१०२; स्मृच.१०७; पमा.१६५; दित. ५८४-५८५; सवि.१८८; वीमि.२।१०२; व्यप्र.१८४;

[1]पवनः स्पर्शनो वायुरनिलो मारुतस्तथा ।
प्राणः प्राणेशजीवौ च मरुतोऽष्टौ प्रकीर्तिताः ॥
[2]घटस्योत्तरभागे तु दुर्गामावाहयेद् बुधः ।
एतासां देवतानां तु स्वनाम्ना पूजनं विदुः ॥

अत्रापि पूर्ववद्धटग्रहणं उपकल्पितदिव्योपलक्षणार्थम् । एवं यथास्थानमावाहितानां देवानां पूजनं कुर्यात् । स्मृच.१०७

[3]भूषावसानं धर्माय दत्त्वा चार्घ्यादिकं क्रमात् ।
अर्घ्यादि पश्चादङ्गानां भूषान्तमुपकल्पयेत् ।
गन्धादिकां निवेद्यान्तां परिचर्यां प्रकल्पयेत् ॥

(१) अत्र च तुलां पताकाध्वजालङ्कृतां विधाय तस्या'मेह्येही'ति मन्त्रेण धर्ममावाह्य 'धर्मायार्घ्यं कल्पयामि नम' इत्यादिना प्रयोगेणार्घ्यपाद्याचमनीयमधुपर्काचमनीयस्नानवस्त्रयज्ञोपवीताचमनीयमुकुटकटकादिभूषान्तं दत्वा इन्द्रादीनां दुर्गान्तानां प्रणवाद्यैः स्वनामभिश्चतुर्थ्यन्तैरर्घ्यादिभूषान्तं पदार्थानुसमयेन दत्त्वा धर्माय गन्धपुष्पधूपदीपनैवेद्यानि दत्वा इन्द्रादीनां गन्धादीनि पूर्ववद् दद्यात् । *मिता.२।१०२

(२) तेषामर्घ्याद्युपकल्पनं पदार्थानुसमयेन कार्यं न काण्डानुसमयेन । तथात्वे प्रयोगवचनावगतसहत्वबाधापत्तेः । ×स्मृच.१०८

[1]चतुर्दिक्षु तथा होमः कर्तव्यो वेदपारगैः ।
आज्येन हविषा चैव समिद्भिर्होमसाधनैः ।
सावित्र्या प्रणवेनाथ स्वाहान्तेनैव होमयेत् ॥

(१) ऋत्विग्भिश्चतुर्भिश्चतसृषु दिक्षु लौकिकाग्नौ होमः कार्यः । यथाह चतुर्दिक्ष्विति । प्रणवादिकां गायत्रीमुच्चार्य पुनः स्वाहाकारान्तं प्रणवमुच्चार्य समिदाज्यचरून् प्रत्येकमष्टोत्तरशतं जुहुयादित्यर्थः । +मिता.२।१०२

(२) यद्यप्यत्र संख्या नोक्ता तथापि, 'अनुक्तसंख्या यत्र स्याच्छतमष्टोत्तरं स्मृतम्' इति स्मृत्यन्तरात् सिद्धेत्यवधेयम् । एतत्सर्वं पूर्वाह्णे कर्तव्यम् । तस्य प्रधानकालत्वात् । स्मृच.१०८

(३) वस्तुतस्तु गायत्रीहोमे योगियाज्ञवल्क्यः — 'प्रणवव्याहृतिभ्यां च स्वाहान्ते होमकर्मणि' तेन प्रणवादिकां सव्याहृतिकां गायत्रीमुच्चार्य स्वाहाकारान्तं पुनः प्रणवमुच्चार्य आज्यपायससमिधो मिलित्वा अष्टोत्तरशतं जुहुयात् लाघवात् अत एव दैवतैक्ये हि दधिपयसोस्तन्त्रेणानुष्ठानं ऐन्द्रं दध्यमावास्यायामैन्द्रं पयो भवत्यमावास्यायामित्यत्रेति श्राद्धविवेकः । यत्तु पञ्चलाङ्गलमहादाने–'पर्जन्यादित्यरुद्रेभ्यः पायसं निर्वपेच्चरुम् । एकस्मिन्नेव कुण्डे च गुरुर्यस्मै निवेदयेत् । पलाशसमिधस्तद्वदाज्यं कृष्णतिलांस्तथा' ॥ इति मत्स्यपुराणात् चतुर्णां होतॄणां मध्ये यस्मै गुरुः पर्जन्यादिभ्यो होमं कुर्विति आज्ञां करोति स एव पर्जन्यायादित्याय रुद्रेभ्यस्तत्तन्मन्त्रैः पायसं पलाशसमिदाज्यकृष्णतिलांश्च प्रत्येकं जुहुयादिति भूपालप्रभृतिभिरुक्तं तद्युक्तं तद्वदिति तथेत्याभ्यां प्रत्येकद्रव्येण होमविधानात् । अत एव

---

* व्यप्र. मितागतम् ।

व्यउ.५५-५६; व्यम.२३; राकौ.४१६; प्रका.६७; समु.५६.

(१) मिता.२।१०२ पवनः (गगनः); स्मृच.१०७ मितावत्; पमा.१६६ मितावत्; दित.५८५ पवनः (श्वसनः); सवि.१८८ मितावत्; वीमि.२।१०२; व्यप्र.१८४ मारु (मरु) णः (णाः); व्यउ.५६ स्मृचवत्; व्यम.२३ पवनः (गगनः) मरुतोऽष्टौ प्र (मारुतः सप्त); विता.२२१ (=) मितावत्; राकौ.४१६ मितावत्; प्रका.६७-६८ मितावत्; समु.५६ मितावत्.

(२) मिता.२।१०२; स्मृच.१०७; पमा.१६६ घट (धर्म) नां तु (नां च); दित.५८५ नां तु (नां च); सवि.१८८ भागे तु (दिग्भागे); वीमि.२।१०२ दितवत्; व्यप्र.१८४; व्यउ.५६ स्योत्तरभागे तु (स्य उत्तरे भागे); व्यम.२३; राकौ.४१६; प्रका.६८; समु.५६.

(३) मिता.२।१०२ नि (नै); स्मृच.१०७-१०८; पमा.१६६ मितावत्; दित.५८५ मितावत्; सवि.१८८ प्रथमार्धम्; वीमि.२।१०२ उप (परि); व्यप्र.१८४; व्यउ.५६ कां (कं) न्तां (न्ते); व्यम.२३; राकौ.४१७; प्रका.६८; समु.५६.

× शेषं मितागतम् । + पमा. मितावत् स्मृचवच्च । सवि., व्यप्र., व्यउ. मितागतम् ।

(१) मिता.२।१०२; स्मृच.१०८; पमा.१६६; दित.५८५ तथा (ततो) नाथ (नैव); सवि.१८९ होम (भाव) प्रजापतिः; व्यप्र.१८४; व्यउ.५६ चैव (वाज्य); व्यम.२३; राकौ.४१७ पू.; प्रका.६८; समु.५६.

रत्नाकरकृद्भिश्चरुं जुहुयादित्युक्त्वा तद्वदिति पलाशादि जुहुयादित्युक्तम्। अत एव वृषोत्सर्गे वाचस्पतिमिश्रप्रभृतिभिरग्न्यादिहोमशेषपायसपूषहोमशेषपिष्टकाभ्यां मिलिताभ्यां सकृत् स्विष्टिकृद्धोमो विहितः। अशक्तौ तु, 'होमो ग्रहादिपूजायां शतमष्टाधिकं भवेत्। अष्टाविंशतिरष्टौ वा शक्त्यपेक्षमथापि वा' ॥ इति देवीपुराणादिपददर्शनादत्राप्यन्या संख्या उल्लेख्या। एवं मत्स्यपुराणे 'शृणु राजन् महाबाहो तडागादिषु यो विधिः। वेद्यास्तु परितो गर्तारत्निमात्रास्त्रिमेखलाः॥ नव सप्ताथवा पञ्च योनिवक्त्रा नृपात्मज' ॥ इति नवादिकुण्डानुक्त्वा, 'स्वल्पेऽप्येकाग्निमत् कार्या वित्तशाठ्यादृते नृभिः' इति दर्शनादत्राप्यशक्तावेकाग्निविधिरिति वदन्ति अत्र प्राड्विवाकगृह्येनैव होमः। 'दिव्येषु सर्वकार्याणि प्राड्विवाकः समाचरेत्। अध्वरेषु यथाध्वर्युः सोपवासो नृपाज्ञया' ॥ इति मिताक्षराधृतपितामहवचनात् अध्वर्युर्यजमानमात्रं न चात्र भिन्नशाखिनामृत्विजां रथकारवद्विद्याप्रयुक्तिकल्पनेति वाच्यं, ब्राह्मणमात्रस्य नानाशाखापाठविधानेन कल्पनानुपपत्तेः। तथा च मनुः— 'वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्। अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाचरेत्' ॥ इति प्रायश्चित्तहोमस्तु सामगानां महाव्याहृतिभिः। 'यत्र व्याहृतिभिर्होमः प्रायश्चित्तात्मको भवेत्। चतस्रस्तत्र कर्तव्याः स्त्रीपाणिग्रहणे यथा ॥ अपि वा ज्ञातमित्येषा प्राजापत्यादि वाहुतिः। होतव्या त्रिर्विकल्पोऽयं प्रायश्चित्तविधिः स्मृतः'॥ इति छन्दोगपरिशिष्टात् न तु शाठ्यायनहोमः भवदेवभट्टोक्तः त्रिर्विकल्प इत्यनेन तस्य तस्य निरासात्। भट्टनारायणादिभिरप्रमाणीकृतत्वाच्च। दित.५८६-८७

(४) हविश्चरुः। आज्यहविः समिधां संप्रतिपन्नदेवताकत्वात् मिलितानामेव होमः। सान्नाय्ययोरिवेति दिव्यतत्वे गौडमीमांसकाः। तन्न। आज्ये स्रुवेणावद्यतीति स्रुवस्य चरौ सकृदुपस्तृणाति मध्यात्पूर्वार्धाच्च द्विर्हविषोऽवद्यति अभिघारयति 'हविरवत्तं चैषोऽवदानधर्मः' इत्याश्वलायनादिसूत्रात्स्रुवः समित्सुसामर्थ्याद्धस्तस्येति भिन्नसाधनकत्वात्तन्त्रतानुपपत्तेः। 'सान्नाय्यहोमयोस्तु जुह्वा एव साधनत्वाद्युक्ता तन्त्रतेति' स एव यमिति। *व्यम.२३

* बाल. २।१०२ व्यमवत्।

[1]यं चार्थमभियुक्तः स्याल्लिखित्वा तं तु पत्रके।
मन्त्रेणानेन सहितं तत्कार्यं तु शिरोगतम् ॥

(१) एवं हवनान्तां देवपूजां विधायानन्तरमभियुक्तमर्थं वक्ष्यमाणमन्त्रसहितं पत्रे लिखित्वा तत्पत्रं शोध्यशिरोगतं कुर्यात्। यथाह—यमिति। मिता.२।१०२

(२) अनेन वक्ष्यमाणेन। स्मृच.१०८

[2]आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च संध्ये
धर्मश्च जानाति नरस्य वृत्तम् ॥

[3]त्रिरात्रोपोषितायैव एकरात्रोषिताय वा।

(१) मिता.२।१०२ यं चा (यथा); अप.२।१०२ (तस्यार्थमभियुक्तस्य लेखयित्वा तु पत्रके) तत्कार्यं तु (कुर्यात्तस्य) व्यासः; व्यक.८५ के (कम्) शेषं अपवत्; स्मृच.१०८; पमा.१६७; स्मृचि.५३ व्यकवत्; नृप्र.१३ यं चा (यस्या) : १४ (तस्यार्थमतियुक्तैश्च लेखयित्वा तु पत्रके) तत्कार्यं तु (कुर्यात्तस्य); दित.५८७ यं (तं) शेषं अपवत्; सवि.१८९ (=); व्यसौ.७७; व्यप्र.१८५ यं चा (यम) तु शि (च शि); व्यउ.५६ तं तु (तत्तु); व्यम.२३ व्यप्रवत्; प्रका.६८; समु.५६.

(२) मिता.२।१०२; अप.२।१०२व्यासः; व्यक.८५ त्तम् (त्तिम्); स्मृच.१०८; पमा.१६७ (=); व्यनि.११ (=) [मयारामः]; स्मृचि.५३ निलोऽनलश्च (निलानलौ च); नृप्र.१३; दित.५८७ मश्च (र्मो हि); सवि.१९० (=) निलोऽन (नलोऽनि); व्यसौ.७७-७८ ,लोऽनलश्च (लानलौ च) वृत्तम् (तरवम्); वीमि.२।१०२ स्मृचिवत्; व्यप्र.१८५ स्मृचिवत्; व्यउ.५६(=); व्यम.२४; विता.२२१-२२२ (=); प्रका.६८; समु.५६.

(३) मिता.२।९७ यैव (ये स्युः); अप.२।९७; व्यक.८२; पमा.१६७ दिव्यानि देयानि (देयानि दिव्यानि) चा (सा); व्यचि.८४ यैव एकरात्रो (यैवैकरात्रोपो); स्मृचि.५२; दित.५८८ दिव्यानि देयानि (देयानि दिव्यानि) उत्त.; व्यसौ.७५ व्यचिवत्; वीमि.२।९७ मितावत्; व्यप्र.१८५ यैव (ये स्युः) शेषं दितवत्; व्यउ.५५ व्यप्रवत्; व्यम.२४ पूर्वार्धे (एकरात्रोपोषिताय त्रिरात्रोपोषिताय वा) शेषं दितवत्; विता.२१२ यैव (ये स्युः) य वा (अपि); राकौ.४१३ यैव (य स्युः) शेषं दितवत्; समु.५७ मितावत्.

नित्यं दिव्यानि देयानि शुचये चार्द्रवाससे ॥

इत्युपवासविकल्पः पितामहेनोक्तो बलवदबलवन्महाकार्याल्पकार्यविषयत्वेन व्यवस्थितो द्रष्टव्यः । उपवासनियमश्च कारयितुः प्राड्विवाकस्यापि ।

*मिता.२।९७

[1]इमं मन्त्रविधिं कृत्स्नं सर्वदिव्येषु योजयेत् ।
आवाहनं च देवानां तथैव परिकल्पयेत् ॥

एतच्च धर्मावाहनादि शिरसि पत्रारोपणान्तमनुष्ठानकाण्डं सर्वदिव्यसाधारणम् । यथोक्तं —इममिति ।

मिता.२।१०२

## प्रजापतिः

दिव्यकालः

[2]कुजवारे वाऽर्कवारे वा चण्डिकारुद्रसंनिधौ ।
पूर्वाह्णे सर्वदिव्यानां प्रदानमनुकीर्तितम् ॥

## हारीतः

जातिकर्माद्यधिकारिविशेषणानुसारेण दिव्यविवेकः

[3]राजन्येऽग्निं घटं विप्रे वैश्ये तोयं नियोजयेत् ।
न विषं ब्राह्मणे दद्यात् विषं वर्णान्तरे स्मृतम् ॥
[4]कोशतण्डुलधर्मास्तु धर्मसंभवमेव च ।
पुत्रदारादिशपथान् सर्ववर्णे प्रयोजयेत् ॥
[5]कुष्ठिनां वर्जयेदग्निं सलिलं श्वासकासिनाम् ।
पित्तश्लेष्मवतां नित्यं विषं च परिवर्जयेत् ॥

## व्यासः

पञ्च दिव्यप्रकाराः

[1]घटोऽग्निर्विषतोये च प्रमाणं तु चतुर्विधम् ।
दैविकस्य प्रभेदोऽयं कोशः शङ्कासु पञ्चमः ॥

## अत्रिः

दिव्य जयपराजयलिङ्गानि

[2]फालदानस्य काले तु संदेहेन स्पृशेद्यदि ।
करावधूननात्तैले यदि तैलकणः पतेत् ॥
लोहदग्धश्च संयोगाद्यदि स्वाङ्गं विमुञ्चति ।
न तेन दाहो भङ्गाय अत्रिणा समुदीरितः ॥
त्रिपुटी तप्तमाषे तु फाले तु करमध्यकम् ।
विलोक्य भङ्गं तु वदेदित्याह भगवान् यमः ॥

## वृद्धहारीतः

[3]मिथ्यापवादशुद्ध्यर्थं पञ्च दिव्यानि कल्पयेत् ।
ज्ञात्वा शुद्धेषु दिव्येषु शुद्धान् वै मानयेत्तथा ।
तन्मिथ्याशंसिनं दुष्टं जिह्वाच्छेदेन दण्डयेत् ॥

## बृहद्यमः

[4]असाक्षिव्यवहारेषु दिव्यं देयं यथाविधि ॥

## अनिर्दिष्टकर्तृकवचनानि

[5]उभयोरपि संयोगे दिव्यं देयं विशुद्धये ॥
[6]नष्टं पत्रं मृतः साक्षी देशकालविपर्ययः ।
सभाजनविचारेण धनिनो दिव्यमर्हति ॥

दिव्याधिकारविचारः

[7]न दिव्यं प्रतिदिव्येषु न दिव्यं साक्षिभाषणे ।
न दिव्यं चाल्पद्रव्येषु न दिव्यं ब्राह्मणे नृपे ॥
न रुग्णे नैव बालेऽपि न चापि विकलेन्द्रिये ।
कुकर्मणि रते नैव ह्यपुत्रे निर्धने तथा ॥
अभिशस्तं तथा स्तेनं शपथे नैव योजयेत् ।
आहर्तापहार्यौ द्वौ विवदन्तौ स्थितौ यदा ।

---

* पमा., व्यचि., वीमि., व्यउ. मितागतम् ।

(१) **मिता.२।१०२;** **अप.२।१०२** मन्त्र (धर्म) तथैव (अथैनं) व्यासः; **व्यक.८५** योज (कार) च (तु) तथै (अथै) कल्प (कीर्त); **स्मृच.१०८,११२:१०९** न्त्र (न्त्रं;) **पमा.१६७** इमं (एवं) पू.; **स्मृचि.५३;** **नृप्र.१४** योज (कार) पू.; **दित.५८७** न्त्र (न्त्रं) दिव्ये (द्रव्ये); **सवि.१९०** देवा (दिव्या) प्रजापतिः; **व्यसौ.७८** सर्व (पूर्व) योज (वाद) तथैव परि (इत्थं चैव प्र); **व्यप्र.१८३:१८६** कल्पयेत् (कीर्तितम्); **व्यउ.५७** (=) त्स्नं (त्वा) देवा (दिव्या); **विता.२२२;** **प्रका.६८;** **समु.५७.**

(२) **समु.५७.** (३) **पमा.१६१;** **व्यप्र.१८०;** **समु.५३-५४.** (४) **पमा.१६१;** **सवि.२१७** र्मा (र्मां) वर्णे (कालं); **व्यप्र.१८०;** **समु.५४** र्मा (र्मां) र्णे प्र (र्णेषु).

(५) **व्यप्र.१७८;** **विता.२०९** च (तु); **राकौ.४११.**

(१) **अप.२।९५** (=) तोये (मापः) तु (हि) कोशः (कोशा); **स्मृच.९७** ये (यं)तु (च); **प्रका.६२;** **समु.५१.**

(२) **स्मृचि.५९.** (३) **वृहास्मृ.७।१९८-१९९.**

(४) **बृयस्मृ.५।२६.** (५) **चन्द्र.१६०.**

(६) **स्मृचि.१९.** (७) **स्मृचि.५९.**

अपहार्यो धनी ज्ञेयः स स्वकं धनमुद्धरेत् ॥
मूलग्रामात्समुत्पन्नं लघुग्रामान्तरं तु यत् ।
तस्य दिव्यं न देयं स्याद्धनिनो दिव्यमर्हति ॥

## पद्मपुराणम्

स्थावरं जङ्गमं वापि यद्द्रव्यमभियुज्यते ।
क्रियाप्रयोगकाले तु तन्मूल्यं धर्मतोऽर्हति ।
तेनैव कनकीकृत्य तत्र दिव्यं प्रयोजयेत् ॥

## कालिकापुराणम्

दिव्यविषयः शिरोवर्तनं च

[1]परदाराभिशापे च चौर्यागम्यागमेषु च ।
महापातकशस्ते च स्याद्दिव्यं नृप साहसे ॥
[3]विप्रतिपत्तौ विवादेऽवर्णस्य ख्यापने कृते ।
तत्रैव दापयेद्दिव्यं शिरःपूर्वं महीपतिः ॥
[4]परदाराभिमर्शे च बहवो यत्र वादिनः ।
शिरोहीनं भवेद्दिव्यमात्मनः शुद्धिकारणात् ॥

(१) विप्रतिपत्तौ परदाराभिशापविषयायाम् । विवादे ऋणादानादौ । परदाराभिगमनं चौर्यादीनामप्युपलक्षणम् । व्यचि.८३

(२) अगम्याः परदारभिन्नाः साधारणा वेश्याद्याः । शस्तेऽभिशस्ते । साहसं बलादन्यायः । अवर्णो निन्दा । शिरो दण्डः । परदाररूपं विशेषणमविवक्षितमभिशापस्यानुवाद्यत्वात् । एवं बहव इत्याद्यपि । तेन वाद्यभावेऽपि सर्वाभिशापे दिव्यं भवति । शुद्धिकारणादिति

(१) **समु**.५३. (२) **शुनी**.४।७४५ चौर्या...च ( ह्यगम्यागमनेषु च) स्याद्दि ...से ( दिव्यमेव च नान्यथा ); **व्यक**.८१ स्ते च ( स्तेषु ); **व्यचि**.८३ साहसे ( शासने ); **दित**.५७४ व्यकवत्; **वीमि**.२।९६ स्ते च (स्तेषु) शेषं व्यचिवत् ; **व्यप्र**.१७२; **व्यम**.२०; **विता**.२०१ चौर्या (चौर्येऽ); **राकौ**.४०८; **बाल**.२।९६ महा (महत्); **समु**.५१ व्यचिवत्.

(३) **व्यक**.८१ ख्या ( स्था ); **व्यचि**.८३ ऽवर्णस्य ख्या (च पणस्य स्था) दा (स्था); **दित**.५७४ व्यचिवत्; **वीमि**.२।९६ पूर्वार्धं व्यचिवत् ; **व्यप्र**.१७२; **व्यम**.२० ख्या (स्था) दा (स्था); **राकौ**.४०८; **बाल**.२।९६ ऽवर्णस्य ख्या (च अवर्णास्था); **समु**.५१ ख्या (स्था).

(४) **व्यक**.८१; **व्यचि**.८३ मर्शे च(गमने) नः शु (तमसं); **दित**.५७४ मर्शे ( शापे ); **वीमि**.२।९६ व्यचिवत्; **व्यप्र**.१७२; **व्यम**.२० दितवत् ; **बाल**.२।९६; **समु**.५१ दितवत्.

हेतुनिर्देशोऽप्येवं संगच्छते । व्यम.२०

जातिभेदेन दिव्यभेदः

[1]वैश्यस्य हि जलं देयं विषं शूद्रस्य दापयेत् ।
वर्णान्त्यस्य सदा देयं माषकं तप्तहेमजम् ॥

वर्णान्त्यस्य प्रत्यन्तस्य । व्यक.७९

## शुक्रनीतिः

दिव्यकर्तव्यता । दिव्यप्रकाराः । दिव्यस्वरूपविधिः । अपराधानुसारेण दिव्यविशेषाः ।

[2]सप्तर्षिभिश्च भीत्यर्थं स्वीकृतान्यात्मशुद्धये ॥
स्वमहत्वाच्च यो दिव्यं न कुर्यात् ज्ञानदर्पतः ।
वसिष्ठाद्याश्रितं नित्यं स नरो धर्मतस्करः ॥
प्राप्ते दिव्येऽपि न शपेद् ब्राह्मणो ज्ञानदुर्बलः ।
संहरन्ति च धर्मार्धं तस्य देवा न संशयः ॥
यस्तु स्वशुद्धिमन्विच्छन् दिव्यं कुर्यादतन्द्रितः ।
विशुद्धो लभते कीर्तिं स्वर्गं चैवान्यथा न हि ॥
अग्निर्विषं घटस्तोयं धर्माधर्मौ च तण्डुलाः ।
शपथाश्चैव निर्दिष्टा मुनिभिर्दिव्यनिर्णये ॥
पूर्वं पूर्वं गुरुतरं कार्यं दृष्ट्वा नियोजयेत् ।
लोकप्रत्ययतः प्रोक्तं सर्वं दिव्यं गुरु स्मृतम् ॥
तप्तायोगोलकं धृत्वा गच्छेन्नवपदं करे ।
तप्ताङ्गारेषु वा गच्छेत्पद्भ्यां सप्तपदानि हि ॥
तप्ततैलगतं लोहमाषं हस्तेन निर्हरेत् ।
सुतप्तलोहपत्रं वा जिह्वया संलिहेदपि ॥
गरं प्रभक्षयेद्धस्तैः कृष्णसर्पं समुद्धरेत् ।
कृत्वा स्वस्य तुलासाम्यं हीनाधिक्यं विशोधयेत्॥
स्वेष्टदेवस्नपनजमद्यादुदकमुत्तमम् ।
यावन्नियमितः कालस्तावदम्बुनिमज्जनम् ॥
अधर्मधर्ममूर्तीनामदृष्टहरणं तथा ।
कर्षमात्रांस्तण्डुलांश्च चर्वयेच्च विशङ्कितः ॥
स्पर्शयेत्पूज्यपादांश्च पुत्रादीनां शिरांसि च ।
धनानि संस्पृशेद् द्राक् तु सत्येनापि शपेत्तथा॥
दुष्कृतं प्राप्नुयात्सद्यो नश्येत्सर्वं तु सत्कृतम् ।

(१) **व्यक**.७९ हि ( च ) न्त्य ( न्त ); **व्यसौ**.७३ न्त्य (न्त); **व्यप्र**.१७९ उत्त.; **व्यम**.२१ उत्त.; **विता**.२०८ उत्त.; **समु**.५४ उत्त. (२) **शुनी**.४।७२६-७४०.

सहस्रेऽपहृते चाग्निः पादोने च विषं स्मृतम् ॥
त्रिभागोने धटः प्रोक्तो ह्यर्धे च सलिलं तथा ।
धर्माधर्मौ तदर्धे च ह्यष्टमांशे च तण्डुलाः ॥
षोडशांशे च शपथा एवं दिव्यविधिः स्मृतः ॥

### संग्रहकारः

अपराधानुसारेण दिव्यविशेषाः

(१)धटादीनि विषान्तानि गुरुष्वर्थेषु दापयेत् ।
कोशादीनि पुनस्त्रीणि लघ्वर्थेषु यथाक्रमम् ॥

यत्पुनस्तेनोक्तं—'कोशादीनि पुनस्त्रीणि लघ्वर्थेषु यथाक्रमम्' इति तदपहार एव लघ्वर्थनियमकथनार्थम् । न पुनरपह्नवेऽपि कोशतण्डुलतप्तमाषाणां गुर्वर्थापह्नवेऽभिहितत्वेन लघ्वर्थेष्वेवेति नियमासंभवात् । स्मृच.९८

(१)ऋणं वा यदि वा दण्डः प्रायश्चित्तमथापि वा ।
यत्र पञ्चशतादिः स्यात् तत्कार्यं गुरु कीर्त्यते ॥
(२)यत्रारभ्य दशभ्यस्त्वेतान्या सैकचतुःशतात् ।
कार्यं तल्लघु निर्दिष्टं स्मृतितन्त्रविशारदैः ॥

आ सैकचतुःशतादा पञ्चशतादित्यर्थः । ऋणमिति विवादास्पदं धनमनास्थयोक्तम् । अधनाभियोगस्य महत्त्वाल्पत्वे तत्र विहितदण्डधनप्रायश्चित्तप्रत्याम्नानधनयोरन्यतरसंख्यया प्रत्येतव्ये इति तात्पर्यार्थः । स्मृच.१०१

(१) मिता.२।९९ (=) धटा (तुला) पू.; स्मृच.९८; पमा.१५३ रुष्वर्थेषु (र्वर्थेषु च) पू.; व्यप्र.१७२ पू.; प्रका.६३; समु.५१ स्मृत्यन्तरम्.

(१) स्मृच.१०१:३२१र्त्यते (तितम्); प्रका.६४; समु.५१ स्मृत्यन्तरम्. (२) स्मृच.१०१; प्रका.६४; समु.५१ स्मृत्यन्तरम्.

## धटविधिः

### वेदः

(१)अथ हैषैव तुला । यद्दक्षिणो वेद्यन्तः स यत्साधु करोति तदन्तर्वेदि अथ यदसाधु तद्बहिर्वेदि तस्माद्दक्षिणं वेद्यन्तमधिस्पृश्येवासीत तुलाया ँ ह वा अमुष्मिँल्लोक आदधति यतरद्य ँ स्यति तदन्वेष्यति यदि साधु वासाधु वेत्यथ य एवं वेदास्मिन् हैव लोके तुलामारोहत्यमुष्मिँल्लोके तुलाधानं मुच्यते साधुकृत्या हैवास्य यच्छति न पापकृत्या ।

### विष्णुः

(२)अथ धटः । चतुर्हस्तोच्छ्रितो द्विहस्तायतः । तत्र शालवृक्षोद्भवा पञ्चहस्तायतोभयतः शिक्या तुला । (३)तां च सुवर्णकारकांस्यकाराणामन्यतमो बिभृयात् ।

(१)तत्र चैकस्मिन् शिक्ये पुरुषमारोपयेत् द्वितीये प्रतिमानं शिलादि ।

(२)प्रतिमानपुरुषौ समधृतौ सुचिह्नितौ कृत्वा पुरुषमवतारयेत् ।

सुचिह्नितौ समतादशायां येष्ववयवेषु शिक्यरज्जवः संयुक्तास्तत्र पाण्डुरेखाङ्कितावित्यर्थः । स्मृच.१०९

(३)धटं च समयेन गृह्णीयात् । तुलाधारं च ।
(४)ब्रह्मघ्नां ये स्मृता लोका ये लोकाः कूटसाक्षिणाम् ।
तुलाधारस्य ते लोकास्तुलां धारयतो मृषा ॥
(५)समयेन च गृह्णीयात् नियमेन तु योजयेत् ।
उपोषितं तथा स्नातं मृन्मयं प्रथमं तुलाम् ।

(१) शब्रा.११।२।७।३३.

(२) विस्मृ.१०।१-३ शाल (सार); व्यक.८३ शाल (सार); दित.५८२ (शालवृक्षोद्भवा कार्या पञ्चहस्तायता तुला) एतावदेव; व्यसौ.७६ शाल (सार). (३) विस्मृ.१०।४; स्मृच.१०९ तां च+(वणिक्); प्रका.६८ स्मृचवत्; समु.५७ स्मृचवत्.

(१) विस्मृ.१०।५; व्यक.८४ तत्र चै (अत्रै); व्यसौ.७७ शिला (तुला); व्यप्र.१८९ तत्र चैकस्मिन् (अत्रैक).
(२) विस्मृ.१०।६; स्मृच.१०९; प्रका.६९; समु.५७. (३) विस्मृ.१०।७-८; व्यक.८५ (च०); व्यसौ.७८ टं च (टः). (४) विस्मृ.१०।९; अप.२।१०२ घ्नां (घ्ना) णाम् (णः); व्यक.८५ घ्नां (घ्नो) णाम् (णः); पमा.१७२ घ्नां ये (घ्नानां); दित.५८८,५९४ अपवत्; व्यसौ.७८ घ्नां (घ्नी) णाम् (णः); व्यप्र.१९१ व्यसौवत्; व्यउ.५९ व्यसौवत्; व्यम.२६ अपवत्. (५) व्यक.८५.

संतोल्य कारयेदेवमवतार्यानुमन्त्रयेत् ॥
धर्मपर्यायवचनं धट इत्यभिधीयसे ।
त्वमेव धट जानीषे न विदुर्यानि मानुषाः ॥
व्यवहाराभिशस्तोऽयं मानुषस्तोल्यते त्वयि ।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥
ततस्त्वारोपयेच्छिक्ये भूय एवाथ तं नरम् ।
तुलितो यदि वर्धेत ततः स धर्मतः शुचिः ॥
शिक्यच्छेदाक्षभङ्गेषु भूयस्त्वारोपयेन्नरम् ।
एवं निःसंशयं ज्ञानं यतो भवति निर्णयः ॥

**याज्ञवल्क्यः**

तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः ।
प्रतिमानसमीभूतो रेखां कृत्वाऽवतारितः ॥
त्वं तुले! सत्यधामासि पुरा देवैर्विनिर्मिता ।
तत्सत्यं वद कल्याणि! संशयान्मां विमोचय ॥
यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय ।
शुद्धश्चेद्गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत् ॥

(१) अधिकृतश्च प्रागुक्तनियमवान् कृतस्वस्त्ययनमङ्गलः। स्मृत्यन्तरोक्तलक्षणतुलां प्रत्युपस्थितः।

वक्ष्यमाणं कर्म कुर्यादिति शेषः। अभियुक्तो व्यवहारेऽभिशस्तः। स तुलामारूढः प्रतिमानसमत्वेन तुलाधारणविद्वद्भिर्यदा लक्षितः, तदास्यास्मिन् प्रदेशे इदमङ्गमित्येवं चिह्नार्थं लेखाः कृत्वावतारणीयः। तुलाधारणविद्वांसः स्वर्णकारादयः। प्रतिमानं अपरभागस्थितशिक्यस्थं पांसुलोष्टपूर्णं पिटकम्। स्पष्टमन्यत्।

अवतीर्य चोदङ्मुखः स्थित्वा [त्वं तुले इत्यादि गमयोर्ध्वं मामित्यन्तं पठित्वाऽभिमन्त्र्य] स यदि तुलित ऊर्ध्वं गच्छेत्, तदा शुद्धिः। अन्यथा तु विपर्ययः। यत्तु नारदीये — 'तुलितो यदि वर्धेत विशुद्धः स्यान्न संशयः। समो वा हीयमानो वा न विशुद्धो भवेत्ततः'॥ इत्यधोगत्या शुद्धिवचनं, तत् तदुक्ताभिमन्त्रणविषयं द्रष्टव्यम्। विश्व.२।१०४-१०६

(२) एवं सर्वदिव्योपयोगिनीं दिव्यमातृकामभिधायेदानीं धटादिदिव्यानां प्रयोगमाह — तुलेत्यादि।

तुलाया धारणं तोलनं ये विदन्ति सुवर्णकारप्रभृतयः तैः प्रतिमानेन मृदादिना समीभूतः समीकृतः तुलामाश्रितोऽधिरूढोऽभियुक्तोऽभियोक्ता वा दिव्यकारी रेखां कृत्वा येन संनिवेशेन प्रतिमानसमीकरणदशायां शिक्यतलेऽवस्थितस्तस्मिन् पाण्डुलेखेनाङ्कयित्वा अवतारितस्तुलामभिमन्त्रयेत् प्रार्थयेतानेन मन्त्रेण। 'हे तुले, त्वं सत्यस्य स्थानमसि। पुरा आदिसृष्टौ देवैर्हिरण्यगर्भप्रभृतिभिर्विनिर्मितोत्पादिता। तत्तस्मात्सत्यं संदिग्धस्यार्थस्य

---

(१) **विस्मृ.१०।१०** नं (नैः); **अप.२।१०२** मानुषाः (देवताः) उत्त.; **व्यक.८५** विदुर्यानि मानुषाः (च जानन्ति मानवाः); **दित.५८५** यसे (यते) पू. : ५८८ यसे (यते) मानुषाः (मानवाः); **व्यसौ.७८** यसे (यते) यानि मानुषाः (यदि मानवाः). (२) **विस्मृ.१०।११**; **अप.२।१०२**; **व्यक.८५** त्वयि (त्वया); **व्यसौ.७८.** (३) **विस्मृ.१०।१२-१३.**

(४) **यास्मृ.२।१००**; **अपु.२५५।३४**; **विश्व.२।१०४** रेखां (लेखाः); **मिता.**; **अप.** रेखां (रेखाः); **व्यक.८४** तारि (धारि) नारदः; **स्मृच.११०**; **पमा.१७१**; **व्यचि.८०** श्रि (स्थि) रेखां (लेख्यं) तारि (धारि); **स्मृचि.५३**; **नृप्र.१४** कृत्वा (लब्ध्वा); **दित.५८९**; **सवि.१९१** रभि (रवि); **मच.८।११६** रेखां (लेखां); **व्यसौ.७७** रण (रश्च) श्रि (धृ); **वीमि.** श्रि (स्थि) रेखां (लेख्यं); **व्यप्र.१९०**; **व्यउ.५९**; **व्यम.२५**; **प्रका.६९**; **समु.५८.**

(५) **यास्मृ.२।१०१**; **अपु.२५५।३६** तत्सत्यं वद (सत्यं वदस्व); **विश्व.२।१०५**; **मिता.**; **अप.**; **व्यक.८४** क्रमेण नारदः : ८५ वैर्वि (वेन) क्रमेण विष्णुः; **स्मृच.११०**; **पमा.१७१** धामा (धर्मा); **व्यचि.८०**; **व्यनि.११** [मयारामः]; **स्मृचि.५३**; **नृप्र.१४** मिता (मिते); **दित.५८९** : ५९४ विमोचय (समुद्धर); **सवि.१९१**; **मच.८।११६** धामा (नामा); **व्यसौ.७७**; **वीमि.**; **व्यप्र.१९१**; **व्यउ.५९** (=); **व्यम.२५**; **विता.२२३** (=); **प्रका.६९**; सत्यं (सर्वं); **समु.५८.**

(१) **यास्मृ.२।१०२**; **अपु.२५५।३७**; **विश्व.२।१०६**; **मिता.**; **अप.**; **व्यक.८४** नारदः : ८५ विष्णुः; **स्मृच.११०**; **पमा.१७२**; **व्यचि.८०**; **व्यनि.११** [मयारामः]; **स्मृचि.५३**; **नृप्र.१४** पू.; **दित.५८९,५९४** स्मि (स्मिन्); **सवि.१९१** कृन्मातः (कर्माऽहं); **मच.८।११६**; **व्यसौ.७७**; **वीमि.**; **व्यप्र.१९१** शुद्धः (शुद्धं); **व्यउ.५९** (=); **व्यम.५३**; **विता.२२३** (=) स्मि (हं) तुला... त् (इत्युक्त्वा पलपञ्चकम्); **प्रका.६९** दितवत्; **समु.५८** दितवत्.

स्वरूपं वद दर्शय । कल्याणि शोभने अस्मात्संशयान्मां विमोचय । हे मातः यद्यहं पापकृदसत्यवाद्यस्मि ततो मां त्वमधो नय । अथ शुद्धः सत्यवाद्यस्मि ततो मामूर्ध्वं गमयेति' । प्राड्विवाकस्य तुलाभिमन्त्रणमन्त्रः स्मृत्यन्तरोक्तः । अयं तु दिव्यकारिणः । जयपराजयलक्षणं तु मन्त्रलिङ्गादेवावगम्यत इति न पृथगुक्तम् । *मिता.

(३) 'त्वं तुले' इत्यादिना 'ऊर्ध्वं माम्' इत्यन्तेन मन्त्रेण पुनरारोपणात् प्राक् तुलामभिमन्त्रयेत् शोध्य इत्यर्थः । ततस्तं प्राड्विवाकः पुनरारोपयेत् ।

स्मृच.११०

(४) पापकृदसत्यवादी शुद्धश्च सत्यवादी मन्त्रश्चायं स्मार्तः पौराणिकत्वात् शूद्रैरपि पाठ्यः वेदमन्त्रवर्जं शूद्रस्येति छन्दोगाह्निकधृतस्मृतौ वेदेति विशेषणात् श्राद्धविश्वदेवादौ तु विशेषतो नमस्कारमन्त्रविधानात् स्मार्तमन्त्रोऽपि निषिद्धः प्रपञ्चस्तु तिथितत्वेऽनुसंधेयः । स्त्रीपरीक्षायामपि अविकृत एव प्रयोज्यः 'दिव्यानीह विशुद्धये' इत्यनेन संदिग्धार्थसंदेहनिवृत्तिफलतयाऽविशेषेण स्त्रीपुंसकर्तृकदिव्यविधानेन मानुषः शुद्धिमिच्छतीत्यनेन च प्रकृतावूहायोगात् । अत एव 'पत्नीं संनह्याज्यं नो धेही'ति मन्त्रे द्विबहुपत्नीकयजमानकर्तृकप्रयोगेऽपि न द्विबहुवचनोह इत्युक्तम् । दित.५८९

ततः प्राड्विवाकः पूर्वाननं तं पूर्ववत् धटमारोपयेत् । आरोपितं च पलपञ्चककालं तत्र शुद्धाशुद्धिज्ञापनाय स्थापयेत् । ततः प्रतिमानद्रव्यादूर्ध्वावस्थाने शुद्धः अधोऽवस्थानेऽशुद्धः समावस्थानेऽपि अल्पदोषः । कक्षकीलककर्कटशिक्यपादाक्षादीनां दृष्टकारणव्यतिरेकेण छेदे भङ्गे वाप्यशुद्धिमादिशेत् । ततः पुरोहिताचार्यादीन् दक्षिणाभिस्तोषयेत् । दित.५९४

(५) तुलाया धारणं तोलनं ये विदन्ति सुवर्णकारादयस्तैर्लेख्यं नाहं स्तेयमकारिषमित्यादिरूपं शिरसि कृत्वा प्रतिमानेन मृदादिना समीभूतस्तुलास्थितोऽभियुक्तो दिव्यकर्ताऽवतारितः सन् मामित्येतेन तुलामभिमन्त्रयेत् अधिवासनदिने अनेन मन्त्रेण प्रार्थयेत् । वीमि.

* अप., व्यउ. मितागतम् । व्यप्र. पदार्थौ मितावत्, शेषं दित. (पृ.५९४) वत् ।



## नारदः

[1]विचार्य धर्मनिपुणैः सर्वधर्मविशारदैः ।
इदं सर्वर्तुकं प्रोक्तं पण्डितैर्धटधारणम् ॥

एतेषामग्न्यम्बुविषाणां दिव्यानां देशकालयात्रादीनां बहुविरोधान् दृष्ट्वा सर्वधर्मविशारदैः पण्डितैरिदमेव सर्वर्तुकालाऽविरुद्धं धटधारणदिव्यं दृष्टमिति ।

अभा.७५

[2]हस्तद्वयं तु निखेयमुक्तं मुण्डकयोः सदा ।
षड्ढस्तं तु तयोर्दृष्टं प्रमाणं परिणाहतः ॥

तथेति वदन् अन्यदपि किञ्चिद्धटाङ्गभूतं तोरणादिकं कार्यमिति दर्शयति । स्मृच.१०६

[3]चतुर्हस्ता धटतुला पादौ चापि प्रकीर्तितौ ।
पादयोरन्तरं हस्तो भवेदध्यर्धमेव च ॥
[4]ऋज्वी धटतुला कार्या खादिरी तैन्दुकाऽपि वा ।
चतुरस्रा त्रिभिः स्थानैर्धटकर्कटकादिभिः ॥

(१) अनेन श्लोकत्रयेण धटन्यासस्वरूपमुक्तम् । तच्च व्यस्तकमप्युक्तं समं, ततः क्रमो विधीयते । षट्हस्ताः षट्मुण्डकाश्चतुरङ्गुलचतुरस्रा भवन्ति । तेषां भूमिनिवेशक्षेत्रे पूर्वापरतो हस्तचतुष्टयं दक्षिणोत्तरतः सार्धहस्तं तस्मिन्क्षेत्रे ......मेकं तोरणं द्वयोरप्यन्त-

(१) **नास्मृ**.४।२६०; **अभा**.७४-७५; **व्यक**.७९ सर्वधर्म (धर्मशास्त्र) इदं (धर्मं) धारणम् (धारिभिः); **स्मृसा**.११७ इदं (धर्म्यं) प्रोक्तं (चोक्तं) उत्त.; **स्मृचि**.५१ इदं (धर्मं) पण्डितै (मुनिभि) उत्त., पितामहः; **व्यसौ**.७३ (विचार्य निपुणैर्धर्मं धर्मशास्त्रविशारदैः) इदं (धर्मं); **व्यप्र**.१८१ सर्वधर्म (धर्मशास्त्र) इदं (धर्मं); **बाल**.२।९७ व्यप्रवत्.

(२) **नास्मृ**.४।२६१; **अभा**.७५ निखेय (नैखन्य); **व्यक**.८३ (हस्तद्वयं निखेयं तु प्रोक्तं मुण्डकयोर्द्वयोः) णाह (माण); **स्मृच**.१०६ (हस्तद्वयं निखेयं तु पादयोरुभयोस्तथा) पू.; **प्रका**.६६ स्मृचवत्, पू.; **समु**.५५ स्मृचवत्, पू.

(३) **नास्मृ**.४।२६२; **अभा**.७५. (४) ४।२६३ ऋ (र); **अभा**.७५ ऋ...कार्या (कार्या धटतुला लेख्या) स्रा (स्रैः); **अप**.२।१०२ काऽपि वा (की तथा); **व्यक**.८३ काऽपि वा (की तथा) रस्रा (र्हस्ता) र्धट (र्बद्धा); **स्मृच**.१०६ उत्त.; **पमा**.१६९ काऽपि वा (की तथा) र्धट (र्धटः); **व्यप्र**.१८८ अपवत्; **व्यउ**.५७ अपवत्; **प्रका**.६६ त्रिभिः (स्थिति) उत्त.; **समु**.५५ प्रकावत्, उत्त.

योस्तोरणद्वयम् । तेषां च मुण्डकानां च नैखात्य निश्चलार्थं हस्तद्वयमुक्तम् । ततो मध्यमतोरणके चतुर्हस्ता धटतुला । अन्तयोर्लोहमयशिक्यद्वयाधारभूतमुण्डकद्वयसहिता मध्ये च अर्धहस्तविलम्बितलोहशृङ्खलकक्षासहितशीलिका भवन्तीति धटप्रमाणनिवेशः । अभा.७५

(२) धटशब्देनात्र तुलामध्यसंबन्धी पाशो लक्ष्यते । कर्कटशब्देनात्र उपान्त्यकीलकौ साहश्यादुच्येते । तेनायमर्थः—अयोमयैः पाशप्रभृतिभिः स्थितिहेतुभिस्तुलायां भवितव्यमिति । आदिशब्देनाक्षमध्येऽप्येकेन कर्कटेन भवितव्यमिति दर्शयति । स्मृच.१०६

(३) धटो मध्यम् । कर्कटकौ अन्त्यौ । पादस्तम्भादीनां स्थूलता तु विशेषानभिधानात् यावति स्थौल्ये दाढर्ये भवति तावत्येव कार्या । शिष्टाचाराद्विशेषो ज्ञेयः । पादस्तम्भावुदग्दक्षिणसंस्थानौ कृत्वा तुला प्राङ्मुखा कार्या । 'पश्चिमे तोलयेत्कर्तॄनन्यस्मिन्मृत्तिकां शुभाम्' इति पितामहस्मरणात् । पूर्वपश्चिमसंस्थानौ कृत्वा उदङ्मुखा वा कार्या, 'धारयेदुत्तरे पार्श्वे पुरुषं दक्षिणे शिलाम्' इति नारदस्मरणात् । *व्यप्र.१८८

[1]**खादिरं कारयेत्तत्र निर्व्रणं शुक्लवर्जितम् ।**
**शांशपं तदभावे तु शालं वा कोटरैर्विना ॥**

(१) धटस्यैतानि दारूणि । परं मुख्यः प्रधानः खदिरः । ततस्तिन्दुकः टिम्बरूकः । तदभावे शिंशपा । तदभावे शालवृक्षदारु । एतान्यपि शुक्लकोटरवर्जितानि कार्याणि । शुक्लं ग्रन्थिकोटिरन्ध्रम् । अभा.७५

* व्यउ. व्यप्रगतम् ।

(१) **नास्मृ.**४।२६४ त्तत्र (त्तं च) क्ल (ष्क); **अभा.**७५ त्तत्र (त्तं च) शांशपं (शिंशपा); **अप.**२।१०२ रं (रीं) णं (णां) तम् (ताम्) पं (पीं) भावे (लाभे) शालं (सालात्); **व्यक.**८३ (खादिरा कारयेत्तत्र निर्व्रणाऽशोकवर्जिता । शिंशपी तदभावे तु शालाम्राकोचकैर्विना ॥); **स्मृच.**१०५ शांशपं (शिंशपां) भावे (लाभे); **पमा.**१६८ रं (रीं) णं (णां) तम् (ताम्) शांशपं (शिंशिपा) शालं (सालां); **सवि.**१८४ शांशपं (शिंशपां) टरैः (टरं) प्रजापतिः; **व्यसौ.**७६ रं (रीं) णं (णां) तम् (ताम्) शांशपं (शैशपीं) शालं (शालीं); **व्यप्र.**१८६ तु (वा); **व्यम.**२४ तु (वा); **विता.**२१७ शुक्ल (श्वभ्र) तु (वा); **प्रका.**६६ स्मृचवत्; **समु.**५५ स्मृचवत्.

(२) शुक्लो निर्यासः । सवि.१८४

(३) शुक्लखादिरवर्जितमित्यर्थः । व्यम.२४

**अञ्जनं तिन्दुकीसारं तिमिशो रक्तचन्दनम् ।**
**एवंविधानि काष्ठानि धटार्थं परिकल्पयेत् ॥**

एवंविधानीति वदन् पूर्वोक्तानामलाभे यज्ञियवृक्षान्तरमपि भवतीति दर्शयति । *स्मृच.१०५

[2]**सभाराजकुलद्वारे सुरायतनचत्वरे ।**
**निखेयो निश्चलः पूज्यो गन्धमाल्यानुलेपनैः ॥**
[3]**दध्यक्षतहविर्गन्धकृताध्ययनमङ्गलः ।**
**धर्मरक्षार्थमाहूतैर्लोकपालैरधिष्ठितः ॥**
[4]**सर्वदा स तु देयः स्यात्सर्वलोकस्य पश्यतः ॥**

(१) एते प्रदेशा धर्मदेवतावतारयोग्या भवन्तीति । अयं च यदा प्रथमं निखेयः तदा अतिशोभनदिनलग्न-

* व्यप्र., व्यम. स्मृचवत् ।

(१) **नास्मृ.**४।२६५ थं (थें) उत्त.; **अभा.**७५ थं (थें) उत्त.; **अप.**२।१०२ थं (थें) उत्त.; **व्यक.**८३ (अर्जुनं तिन्दुकं सारं तिनिशं रक्तचन्दनम्) काष्ठानि (वृक्षाणि) थं (थें); **स्मृच.**१०५ ञ्जनं (ञ्जनः); **पमा.**१६९ (अर्जुनस्तिलकोऽशोकस्तिमियो रक्तचन्दनः); **सवि.**१८४ उत्त., प्रजापतिः; **व्यसौ.**७६ तिमिशो (तिनिशं); **व्यप्र.**१८६ अञ्ज (अर्जु) तिमिशो (तिनिशं); **व्यम.**२४ व्यसौवत्; **विता.**२१८ (अञ्जनस्तिन्दुकः सारः स्तिलित्थो रक्तचन्दनः); **प्रका.**६६ स्मृचवत्; **समु.**५५ स्मृचवत्. (२) **नास्मृ.**४।२६५-२६६ पूज्यो (कार्यो) पनैः (पनः); **अभा.**७५ द्वारे (द्वार) शेषं नास्मृवत्; **मिता.**२।९९ सुरा (देवा) निखे (निधे) गन्ध (धूप); **अप.**२।१०२ द्वारे (द्वारि) निखे (निश्चे); **व्यक.**८३ अपवत्; **स्मृच.**१०४ द्वारे (द्वार) सुरा (देवा) पू; **पमा.**१६३ स्मृचवत्, पू.; १६८ कुलद्वारे (गृहद्वार) पू.; **सवि.**१८३ स्मृचवत्, पू.; **व्यसौ.**७६ द्वारे (द्वार) चत्वरे (मेव च); **व्यप्र.**१८२ सुरा (देवा) पू.; **व्यउ.**५४ गन्ध (धूप) शेषं स्मृचवत्; **व्यम.**२२ सुरा (देवा) पू.; **विता.**२१३-२१४ निखे (निधे) शेषं व्यउवत्; **राकौ.**४१३ स्मृचवत्, पू.; **प्रका.**६५ स्मृचवत्, पू.; **समु.**५५ वितावत्.

(३) **नास्मृ.**४।२६६-२६७ ताध्यय (तपाव) धर्म...तैः (रक्षार्थमाहूतैर्लोके); **अभा.**७५ ताध्यय (तपाव) धर्म...तैः (रक्षार्थमाहूतैर्लोक); **अप.**२।१०२ धर्म (धर्मो) हूतैः (हूतो); **व्यक.**८३; **स्मृचि.**५३(=) गन्ध (गन्धैः); **व्यसौ.**७६ गन्ध (गन्धैः) लः (लैः). (४) **नास्मृ.**४।२६७; **अभा.**७५.

कृताग्निकार्यद्विजवेदमङ्गलनिर्घोषशब्देन दध्यक्षतहविर्गन्धधूपाक्षतपावनश्चेति । स च यदा शुध्यर्थं कस्यापि देयस्तदा धर्मरक्षणार्थं लोकपालैराहूतैरधिष्ठितः सर्वदा सर्वकालं देयः । सर्वलोकस्य पश्यतः, न पुनरेकान्त इत्यर्थः । अभा.७५

(२) मिता.टीका–सभा च राजगृहद्वारं च देवायतनं च चत्वरश्चेति समाहारद्वन्द्वः । व्यस्तपाठे तत्र द्वन्द्वद्वयम् । कुलं गृहम् । चत्वरः चतुष्पथः । बाल.२।९९

[1]**रक्तैर्गन्धैश्च माल्यैश्च दध्यपूपाक्षतादिभिः ।**
**अर्चयेत्तु धटं पूर्वं ततः शिष्टांश्च पूजयेत् ॥**

(१) गन्धपुष्पाणि च धटपूजायां रक्तानि कार्याणि । यथाह नारदः–रक्तैरिति । इन्द्रादीनां तु विशेषानभिधानाद्यथालाभं रक्तैरन्यैर्वा पूजनमिति पूजाक्रमः । एतच्च सर्वं प्राड्विवाकः कुर्यात् । * मिता.२।१०२

(२) धटं धटाधिष्ठितं धर्मम् । शिष्टानिन्द्रादीन् । स्मृच.१०९

(३) अविशेषात् सर्वत्र रक्तान्वयः । मिताक्षरायां तु धर्मपूजन एव रक्तत्वनियमः । दित.५८५

[2]**प्राड्विवाकस्ततो विप्रो वेदवेदाङ्गपारगः ।**
**श्रुतवृत्तोपसंपन्नः शान्तचित्तो विमत्सरः ॥**
[3]**सत्यसन्धः शुचिर्दक्षः सर्वप्राणिहिते रतः ।**
**उपोषितः शुद्धवासाः कृतदन्तानुधावनः ।**
**सर्वासां देवतानां च पूजां कुर्याद्यथाविधि ॥**

[1]**अहोरात्रोषिते स्नाते आर्द्रवाससि मानवे ।**
**पूर्वाह्णे सर्वदिव्यानां प्रदानमनुकीर्तितम् ॥**

(१) एवं धर्मस्यावतारो भवतीत्यर्थः । अभा.७५

(२) धटकोशादीनां पूर्वाह्णो नियतः । अन्येषां वैकल्पिकः । अप.२।९७

(३) एतत्सर्वं पूर्वाह्णे कर्तव्यं, तस्य प्रधानकालत्वात् । व्यप्र.१८५

[2]**नित्यं दिव्यानि देयानि शुचये चार्द्रवाससे ॥**
[3]**शिक्यद्वयं समासज्य धटकर्कटयोर्दृढम् ।**
**एकत्र शिक्ये पुरुषमन्यत्र तुलयेच्छिलाम् ॥**

(१) विधिवन्निर्मितधटकर्कटकद्वये शिक्यद्वयपाशौ समासज्येत्यर्थः । शिलाग्रहणं मृदादेरुपलक्षणार्थम् । स्मृच.१०८

(२) धटकर्कटयोः कर्कटशृङ्गोपमयोः लोहवलययोरुभयोः कोटिलग्नयोः । सवि.१९१

[4]**मृत्पिण्डमभिशस्तं च तुलायां धारयेत्समम् ॥**

तुलायां धारयेद्वणिगादीनामन्यतम इति इति शेषः । स्मृच. १०९

[5]**धारयेदुत्तरे पार्श्वे पुरुषं दक्षिणे शिलाम् ।**

---

* सवि. मितागतम् ।

(१) **मिता.**२।१०२ ष्टांश्च (ष्टांस्तु); **स्मृच.**१०९ मितावत्; **पमा.**१७१; **दित.**५८५ दध्यपू (धूपदी); **सवि.**१८८-१८९ माल्यै...पूपा (धूपैश्च दद्याद्धूपा) ततः (तथा); **व्यप्र.**१९० मितावत्; **व्यउ.**५६,५८ मितावत्; **व्यम.**२५ मितावत्; **राकौ.**४१७ ष्टांश्च (ष्टान् प्र); **प्रका.**७९ मितावत्; **समु.** ५७-५८ मितावत्.

(२) **मिता.**२।१०२; **दित.**५८५ (=) वृत्तोपसंपन्नः (व्रतोपपन्नश्च); **सवि.**१८९ ङ्ग (न्त) संपन्नः (पन्नश्च) प्रजापतिः; **व्यप्र.**१८५; **व्यउ.**५६; **व्यम.**२४; **विता.**२१७ पू.; **बाल.**२।९७; **समु.**५६.

(३) **मिता.**२।१०२; **दित.**५८५ (=) न्तानु (न्तादि); **सवि.**१८९ प्रजापतिः; **व्यप्र.**१८५ शुद्ध (चार्द्र) र्वासां (र्वेषां) कुर्यात् (कृत्वा); **व्यउ.**५६ कुर्यात् (कृत्वा); **व्यम.**२४ शुद्ध (चार्द्र) कुर्यात् (कृत्वा); **विता.**२१७ शुद्ध (चार्द्र) अन्त्यार्धद्वयम्; **बाल.**२।९७ व्यमवत्; **समु.**५६.

(१) **नास्मृ.**४।२६८; **अभा.**७५ आर्द्र (सार्द्र); **अप.**२।९७ मनु (मुप) शेषं अभावत्; **व्यक.**८२; **स्मृच.**१०८; **पमा.**१६७; **दीक.**४०. प्रदा (विधा); **स्मृ**वा.११८ कीर्तितम् (कीर्त्यते); **व्यचि.**८५ नमनु (नं परि) उत्त.; **दित.**५८९; **सवि.**१८९ उत्त.; **चन्द्र.**१६१ (=) उत्त.; **व्यसौ.**७५; **वीमि.**२।९७ (पूर्वाह्ण एव दिव्यस्य प्रदानं परिकीर्तितम्) उत्त.; **व्यप्र.**१८५; **व्यउ.**५४ दानमनु (माणं परि) उत्त.; **विता.**२०५ व्यचिवत्, उत्त.; **बाल.**२।९७ (=) आर्द्र (त्वार्द्र) पू.; **प्रका.**६८ नवे (नवः); **समु.**५७.

(२) **अप.**२।९७.(३) **नास्मृ.**४।२७१; **अभा.**७६; **व्यक.** ८४; **स्मृच.**१०८; **पमा.**१६९ सज्य (साद्य) धट...म् (पार्श्वयोरुभयोरपि); **दीक.**४१ सज्य (साद्य); **दित.**५८३ दीकवत्; **सवि.**१९१; **व्यसौ.**७७; **व्यप्र.**१८८ त्र शिक्ये (शिक्ये तु); **व्यम.**२५; **प्रका.**६८; **समु.**५७.

(४) **स्मृच.**१०९; **प्रका.**६८; **समु.**५७. (५) **नास्मृ.** ४।२७२; **अभा.**७६ त्तस्मिन्निष्ट (त्तत्र इष्टि); **अप.**२।१०२

**पिटिकां पूरयेत्तस्मिन्निष्टकालोष्टपांसुभिः ॥**

इष्टकाभिर्ग्रावभिः पांसुभिर्वेत्यर्थः । माषैर्वा पिटकं पूरयेत् । 'माषराशिमथापि वा' इति स्मृत्यन्तरवचनात् । एवं च शिलामृत्तिकेष्टकाग्रावपांसुमाषाणां प्रतिमानत्वे विकल्पो वेदितव्यः । उत्तरपार्श्वे इत्येतद्दक्षिणोदगायतत्वेन निर्मिततुलाविषयम् । यद्यपि तथा निर्माणं पूर्वमनुपदिष्टं तथाऽप्यस्मादेव वचनात्पूर्वापरसंस्थानौ पादस्तम्भौ कृत्वोदगग्रा तुला कदाचित्कार्येत्यर्थात्सिद्धं इति न कश्चिद्विरोधः । स्मृच.१०९

**[१] प्रथमारोपणे ग्राह्यं प्रमाणं निपुणैः सह ।**
**तुलाशिलाभ्यां तुल्यं च तोरणं न्यस्तलक्षणम् ॥**
**[२] सुवर्णकारा वणिजः कुशलाः कांस्यकारकाः ।**
**अवेक्षेरन् धटतुलां तुलाधारणकोविदाः ॥**

अत्रानेन श्लोकचतुष्टयेन (नास्मृ.४।२७१-२७४) प्रथमं पुरुषपाषाणपिटिकयोस्तोलनसमानधारणाधरणार्थं विधिरुद्दिष्टः । तत्र च बहूक्त्वाऽपि पुनरिदमुक्तम्—सुवर्णकारा वणिजः कांस्यकारादयस्तुलाधारणसमानप्रमाणज्ञा उभयशिक्ययोः समानतामवेक्षेरन्निति । अभा.७६

**[३] तुलयित्वा नरं पूर्वं चिह्नं कृत्वा धटस्य च ।**
**कक्षास्थाने यदा तुल्यमवतार्य ततो धटात् ॥**

एवमनेन प्रयत्नेन नरं प्रथमं तुलायां पिटकया सम्यक् समानतुलितमुपलक्षयेत् । यदा कक्षास्थाने सलिलप्रक्षेपसमत्वं सिद्धं भवति तदा धटात्पुरुषोऽवतार्यः । अभा.७६

**[१] समयैः परिगृह्याथ पुनरारोपयेन्नरम् ।**
**निर्वाते वृष्टिरहिते शिरस्यारोप्य पत्रकम् ॥**

(१) ततस्तं पुरुषं गृहीतसमयं सुकृतसत्यश्रावणं कृतदेवताह्वानं शिरस्यारोपितयथावृत्तान्ताभियोगसत्याऽनृतविचारपत्रकं पुनरपि तुलामारोपयेत् । वातवृष्ट्युपपातवर्जिते काले । अभा.७६

(२) समयैः परिगृह्य तुलाधारकं शपथैर्नियम्येत्यर्थः । स्मृच.११०

**[२] ब्रह्मघ्नो ये स्मृता लोका ये लोकाः कूटसाक्षिणः ।**
**तुलाधारस्य ते लोकास्तुलां धारयतो मृषा ॥**
**[३] तस्मिन्नेव समारूढे धृत्वा कक्षां द्विजो वदेत् ।**
**धर्मपर्यायवचनैर्धट इत्यभिधीयसे ॥**
**[४] त्वं वेत्सि सर्वभूतानां पापानि सुकृतानि च ।**
**त्वमेव देव जानीषे न विदुर्यानि मानवाः ॥**

---

पू.; **व्यक.**८४ (पिटकं पूरयेत्तस्मिन् इष्टकायां सुलोष्टकैः); **स्मृच.**१०९ (पिटकं पूरयेत्तस्मिन् इष्टकाग्रावपांसुभिः); **पमा.**१७० (पिटकं पूरयेत्तत्र इष्टकायां सुलोष्टकैः); **दीक.**४१ (पिटकं पूरयेत्तस्मिन् इष्टकापांशुलोष्टकैः); **सवि.**१९१ (=) पू.; **व्यसौ.**७७ दीकवत्; **व्यप्र.**१८८ पू.: १८९ दीकवत्; **व्यउ.**५७-५८ दीकवत्; **व्यम.**२५ व्यकवत्; **विता.**२१९ पू.; **प्रका.**६८ स्मृचवत्; **समु.**५७ स्मृचवत्.

(१) **नास्मृ.**४।२७३; **अभा.**७६; **व्यक.**८४ पू.; **स्मृच.**१०९ रोप (रोह) शिला...रणं (शिरोभ्यां तुल्यं तु तोरण); **व्यसौ.**७७ स्मृचवत्; **व्यप्र.**१८९ रोप (रोह) शिला...च (शिरोभ्यां तुल्यं तु); **व्यउ.**५८ स्मृचवत्; **प्रका.**६९ स्मृचवत्; **समु.**५७ ग्राह्यं (कार्यं) शेषं स्मृचवत्.

(२) **नास्मृ.**४।२७४; **अभा.**७६; **स्मृच.**१०९ अवे... तुलां (तां तुलामन्ववेक्षेरन्); **व्यप्र.**१८९ स्मृचवत्; **प्रका.**६८ स्मृचवत्; **समु.**५७ स्मृचवत्.

(३) **नास्मृ.**४।२७५; **अभा.**७६ चिन्हं (कक्षां) ततो धटात् (धटस्ततः); **व्यसौ.**७७ चिन्हं (कक्षं) कक्षा (कक्ष) यदा तुल्यम् (पदा तुल्या).

(१) **नास्मृ.**४।२७६; **अभा.**७६ मयैः (मयं); **अप.**२।१०२ निर्वा. (निवा); **व्यक.**८५; **स्मृच.**११० अपवत्; **पमा.**१७२; **सवि.**१९० (=) अपवत्; **व्यसौ.**७८; **व्यप्र.**१९१; **व्यउ.**५९ पुनरा (धटमा); **व्यम.**२५ पये (ह्ये); **विता.**२२२ समयैः (शपथैः) निर्वाते वृष्टि (विवाते वात); **प्रका.**६९ अपवत्; **समु.**५८ अपवत्.

(२) **स्मृच.**११०; **व्यचि.**८० (=) यतो (यते); **सवि.**१९० (=) ये स्मृता लोका (यस्य लोका ये) णः (णाम्); **विता.**२२२ (=); **प्रका.**६९; **समु.**५८ णः (णाम्).

(३) **नास्मृ.**४।२७७; **अभा.**७६ यसे (यते); **व्यक.**८५ वचनैः (शब्देन) यसे (यते); **स्मृच.**११० समा...क्षां (कृते लक्षे लक्ष्यं कृत्वा) वचनैः (शब्देन); **दित.**५८५ नैः (नं) यसे (यते) उत्त., विष्णुनारदौ; **सवि.**१९० समा...क्षां (कृते लक्ष्ये लक्ष्यं कृत्वा) पू.; **व्यसौ.**५८ (तस्मिन्नेव कृते कक्षे कक्षं कृत्वा द्विजः पतेत्) शेषं व्यकवत्; **प्रका.**६९ समा...क्षां (कृते लक्षे कक्षं कृत्वा) शेषं व्यकवत्; **समु.**५८ वचनैः (शब्देन) शेषं सविवत्.

(४) **नास्मृ.**४।२७८; **अभा.**७६ पू.; **व्यक.**८५; **स्मृच.**११०; **पमा.**१७२; **सवि.**१९० नवाः (नुषाः); **व्यसौ.**७८; **व्यप्र.**१९१; **व्यउ.**५९; **व्यम.**२६; **प्रका.**६९; **समु.**५८.

[1] व्यवहाराभिशस्तोऽयं मानवस्तोल्यते त्वया ।
तदेनं संशयारूढं धर्मतस्त्रातुमर्हसि ॥
[2] देवासुरमनुष्याणां सत्ये त्वमतिरिच्यसे ।
सत्यसन्धोऽसि भगवन् ! शुभाशुभविभावने ॥
[3] आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च संध्ये
धर्मश्च जानाति नरस्य वृत्तम् ॥

शोध्यं शिक्ये यथासंनिवेशं निधाय धर्मेत्यादि वृत्तमित्यन्तं प्राड्विवाको वदेदित्यर्थः । स्मृच.११०

[4] त्वं तुले सत्यधामासि पुरा देवैर्विनिर्मिता ॥
तत्सत्यं वद कल्याणि संशयान्मां विमोचय ।
यद्यहं पापकर्माऽस्मि तदा त्वं मामधो नय ॥
शुद्धं चैव विजानासि तत उर्ध्वं गृहाण माम् ।
तदेनं संशयारूढं धर्मतस्त्रातुमर्हसि ॥
[5] इत्यादि कृतश्रावणं लोकपालैः सुरैश्च वै ।
पुरुषं पुनरारूढं समुद्धृत्य निरीक्षयेत् ॥
[6] तुलितो यदि वर्धेत स शुद्धः स्यान्न संशयः ।
समो वा हीयमानो वा अविशुद्धो भवेन्नरः ॥

(१) प्रकटार्थोऽपि (ऽयं) श्लोकः । किं तु केचिदत्र चोद्यं कुर्वन्ति । यत्किल सुवर्णतुलायां यदेकस्यां दिशि षोडशगद्याणकं फलकदलमारोपितं द्वितीयदिशि गद्याणकाः षोडश । तदुभयमपि समधृततुलास्थितमेव भवति । यदि पुनस्तस्य समतुलाधृतस्य तदवस्थस्यैव सुवर्णस्य मध्ये कुतोऽपि धनिनः पुण्ययोगात्तत्र सप्तदशमो गद्याणकः आकाशात्पतितो भवति; तदा तत्सुवर्णं वर्धते । वृद्धिप्राप्तं सदधोगामि भवति । नोर्ध्वगामीति । यदि षोडशगद्याणका एकगद्याणकेन हीयमानाः पञ्चदश भवन्ति, ततस्तत्सुवर्णं हीयमानं ऊर्ध्वमेव गच्छति । एवमनेनोपमानेन तुलितो यदि वर्धेत धर्ममाहात्म्यात् पुरुषः । ततो धर्मगौरवात् अधो गच्छमानः शुद्धः संभवति । ऊर्ध्वं तु हीयमानो न शुद्ध्यति । लोके अत्र आ निवेशात्प्रतिष्ठित्य (?) प्रसिद्धिरेषा । ऊर्ध्वं गच्छमानः शुद्धो भवति, अधोगतिरविशुद्धो हीयमानश्च भवतीति । तत्कथमेतत् ? इत्यत्र परिहार उच्यते; यथा रौप्यमलसहितस्य सुवर्णस्य षोडश दीनाराः फलकदलसमधृताः सन्तः उत्तार्य, खरतराग्निमध्यात्तताः दग्धमलाः पञ्चदश चतुर्दश वा गद्याणका दाहोत्तीर्णाः सुवर्णस्य भूत्वोर्ध्वं गच्छन्ति । तथा पुरुषोऽपि समतुलाधृत उत्तारितः । आहूतलोकपालसत्यश्रावणाधिवासनावतीर्णवर्णाग्निदग्धशङ्काभियोगारूढकल्मषमलसमूहः दाहोत्तीर्णमिवोर्ध्वमेव गच्छति । एवं विमलपुरुषस्योर्ध्वगमनाद्विशुद्धिरिति सिद्धमिदम् । एष परिहारः । यच्चैतदुक्तम् — 'तुलितो यदि वर्धेत' तदिह यत्किञ्चिद्वस्तु वर्तते तदूर्ध्वं नैव वर्धते । तुलितो यदि तूर्ध्वं वर्धते, ततः शुद्ध इत्यक्षरार्थोऽप्यस्त्येव । अधो गच्छमानस्तु अविशुद्धो भवेन्नरः ।
अभा.७६-७७

---

(१) **नास्मृ.**४।२७८ वस्तो (वस्तु); **अभा.**७६ नास्मृवत् पू.; **व्यक.**८६ नव (नुष); **स्मृच.**११०; **पमा.**१७२; **व्यप्र.**१९१; **व्यउ.**५९ (=); **व्यम.**२६ त्वया (त्वयि); **प्रका.**६९; **समु.**५८.

(२) **नास्मृ.**४।२७९; **अभा.**७६ पू.; **व्यक.**८६; **स्मृच.**११० वने (वनैः); **पमा.**१७२ सि भगवन् (हि भगवान्) वने (वनः); **व्यसौ.**७८ भावने (चारणे); **व्यप्र.**१९१ तिरिच्य (भिषिच्य); **व्यउ.**५९ (=) सत्ये त्व (सत्यस्त्व); **व्यम.**२६ सत्ये त्व (सत्यैस्त्व); **विता.**२२३ (=) सत्ये त्व (सत्यैस्त्व); **प्रका.**६९स्मृचवत्; **समु.**५८.

(३) **अपु.**२५५।३५; **व्यक.**८६; **स्मृच.**११०; **पमा.**१७३; **व्यसौ.**७८-७९ लोऽनलश्च (लानलौ च); **व्यप्र.**१९१; **व्यउ.** ६०; **व्यम.**२६; **समु.**५८.

(४) **नास्मृ.**४।२७९-२८१; **अभा.**७६.

(५) **नास्मृ.**४।२८२; **अभा.**७६ (इत्यादि सलोकपालाङ्क्कानकृतश्रावणम्) धृत्य (धृतमुक्तं).

(६) **नास्मृ.**४।२८३; **अभा.**७६; **विश्व.**२।१०६ स शु (विशु) अवि (न वि) न्नरः (त्ततः); **मिता.**२।१०२ (=) अवि (न स); **अप.**२।१०२ स...यः (शुद्धो भवति धर्मतः) अवि (न वि); **स्मृच.**११० अवि (न वि); **पमा.**१७३ स शु (विशु) अवि (न वि); **व्यचि.**८० पमावत्, क्रमेण याज्ञवल्क्यः; **स्मृचि.**५४ पमावत्; **दित.**५९० स्मृचवत्, पितामहः; **मच.**८।११६ वर्धे...न्न (गच्छेत्स शुद्धः स्यान्न तु); **सवि.**१९२ स्मृचवत्, प्रजापतिः; **व्यप्र.**१९२ पमावत्; **व्यउ.**६० अविशुद्धो (न शुद्धो वा) याज्ञवल्क्यः; **व्यम.**२६ पमावत्; **प्रका.**७० स्मृचवत्; **समु.**५८ पमावत्.

(२) इति अधोगत्या शुद्धिवचनं तदुक्ताभिमन्त्रणविषयं द्रष्टव्यम् । विश्व.२।१०६

(३) तुलितस्तोलितो यदि वर्धेतोर्ध्वं गच्छेद्धर्मतो न तु कुहकतस्तदा शुद्धः सत्यप्रतिज्ञो भवति । यदि समोऽधोगामी वा भवति, तदानीमविशुद्धोऽसत्यप्रतिज्ञः । +अप.२।१०२

**तुलाशिरोभ्यामुद्भ्रान्तं विचलं व्यस्तलक्षणम् ।**
**यदा वायुप्रणुन्नं वा चलत्यूर्ध्वमधोऽपि वा ॥**
**[२]निर्मुक्तः सहसा वाऽपि तदा नैकतरं व्रजेत् ।**
**शिक्यच्छेदेऽक्षभङ्गे वा दद्याच्छुद्धिं पुनर्नृपः ॥**

(१) अयमर्थः— तुलायाः शिरोभ्यामन्ताभ्यामुद्भ्रान्तं चलितं यदा भवति, यदा च तुलासाम्यज्ञानार्थं यज्जलादिलक्षणं न्यस्तं तद्विचलति, यदा च वायुना प्रेरितो धट ऊर्ध्वमधो वा कम्पते, यदा च तुलाधारकेण सहसैव धटो विमुच्यते, तदा जयं पराजयं वा न वदेत्। किं तु पुनस्तोलयेत् । एवं शिक्यच्छेदादावपि । *अप.२।१०२

(२) तुलान्तयोस्तिर्यक् चलने लम्बकयोश्चलने शिरःपत्रनाशे वायुना कम्पे वा शुद्धिमशुद्धिं वा न वदेदित्यर्थः । विता.२३१

**[३]कक्षाछेदे तुलाभङ्गे धटकर्कटयोस्तथा ।**
**रज्जुच्छेदेऽक्षभङ्गे च मूर्छितः शुद्धिमादिशेत् ॥**

(१) अत्र वाचनिका शुद्धिः । अभा.७७

(२) शिक्यादीनां दृष्टकारणमन्तरेण छेदादौ जयोऽवधार्यः । तदाह नारदः— कक्षाछेद इति । कक्षा शिक्यम् । शिक्याधारावयोमयावङ्कुशौ कर्कटौ । तुला प्रसिद्धा । अक्षः स्तम्भद्वयोपरि स्थितं तुलाधारभूतं काष्ठम् । तुलादीनां समुदायो धटः । यदा तु दृष्टादेव हेतोः शिक्यच्छेदादि भवति, तदा पुनः क्रिया । अप.२।१०२

(३) तदपि (अ)दृश्यमानकारणकशिक्यच्छेदादिविषयम् । दैविकस्यैव शिक्यच्छेदादेरशुद्धिकारणत्वात् । स्मृच.१११

## नारदीयमनुसंहिता

**[१]कारयेत चतुर्हस्तां समां लक्षणलक्षिताम् ।**
**तुलां काष्ठमयीं राजा शिक्यप्रान्तावलम्बिनीम् ॥**

धटस्य तावल्लक्षणमुच्यते । चतुर्हस्तां, चत्वारो हस्ताः प्रमाणं यस्याः सा चतुर्हस्ता । प्रमाणप्रत्ययस्य 'प्रमाणे लुक्' इति लोपः । लक्षणयुक्तामेतां सुषिरग्रन्थिवर्जितां प्रशस्तस्य वृक्षस्य काष्ठमयीं तुलां कारयेत् । प्रगतावन्तौ प्रान्तौ प्रान्तयोर्लम्बनशीले अवलम्बिनी शिक्ये यस्यां सा शिक्यप्रान्तावलम्बिनी । उभयोरन्तयोर्बद्धशिक्यामित्यर्थः । नाभा.

**[२]दक्षिणोत्तरसंस्थानावुभावेकत्र संगतौ ।**
**स्तम्भौ कृत्वा समे देशे तयोः संस्थापयेत्तुलाम् ॥**

(१) समायां भूमौ दक्षिणोत्तरभावेन स्थितयोः पादस्तम्भयोः उभावन्तौ एकत्राक्षकाष्ठे संघटितौ कृत्वा तयोरन्तरयोर्धटकाक्षकाष्ठमध्ये तुलां स्थापयेदिति । स्मृच.१०६

(२) दक्षिणा चोत्तरा च दक्षिणोत्तरसंस्थाने च यौ स्तो दक्षिणोत्तरसंस्थानौ । अर्थात् तयोरन्तरं कार्यापेक्षया यावद्धि तद्विभागः । उक्तयोरुच्चैस्त्वमपि मनुष्यः सुखमास्ते यस्मिन् शिक्ये तत् । तत्र नभ्यावलम्बनं यावद् भूमिं न स्पृशति तावदर्थात् कर्तव्यम् । उभौ तौ तस्मिन् काले निबद्धौ तयोरुपरि काष्ठं निबध्येत्यर्थः । समायां भूमौ तयोर्मध्ये तुला कर्तव्या । नाभा.

**[३]आयसेन तु पाशेन मध्ये संगृह्य धर्मवित् ।**

---

\+ व्यप्र., व्यउ., व्यम. अपगतम् ।
* स्मृच., पमा., व्यप्र. अपगतम् ।

(१) **अप**.२।१०२ न्नं (न्नो); **स्मृच**.१११ चलं (चल) णुन्नं (पन्नो) चल (गच्छ); **पमा**.१७४ चलं (वर्गं); **व्यप्र**. १९३ व्यस्त (न्यस्त) चल...वा (तदा नैकतरं वदेत्); **विता**. २३१ व्यप्रवत्; **प्रका**.७० स्मृचवत्; **समु**.५८ मुद्भ्रान्तं (मुद्भूतं) व्यस्त (न्यस्त) णुन्नं वा (णुन्नस्तु).

(२) **अप**.२।१०२; **स्मृच**.१११ पू.; **पमा**.१७४ व्रजे (वदे) पू.; **प्रका**.७० पू.; **समु**.५८ पू. (३) **नास्मृ**.४।२८४ छि (र्ति); **अभा**.७७ नास्मृवत्; **अप**.२।१०२ दिशेत् (प्नुयात्); **स्मृच**.१११ क्षाछे (क्षच्छे) तः (तोऽ) दिशेत् (प्नुयात्); **प्रका**.७० कक्षा (कक्ष) दिशेत् (प्नुयात्); **समु**. ५८ कक्षा (कक्ष्या) मूर्छितः (तथैवा).

(१) **नासं**.२०१४. (२) **नासं**.२०१५; **स्मृच**.१०६ संग (संय) स्तम्भौ (अन्तौ) मे (मौ); **प्रका**.६६ स्मृचवत्, पू.; **समु**. ५५ संग (संय) स्तम्भौ (अन्तौ). (३) **नासं**.२०१६; **स्मृच**.१०६ येत (येत्तु) यत्तां (युक्तां); **सवि**.१८६ स्मृचवत्, पितामहः; **प्रका**.६६; **समु**.५५.

**योजयेत सुसंयत्तां तुलां प्रागपरायताम् ॥**

तयोर्मध्ये तुला कार्येत्युक्तं तद्विशेष्यते । लोहपाशेन तुलां मध्ये गृहीत्वा योजयेदुपरितनस्य काष्ठस्य मध्ये पूर्वपश्चिमदीर्घाम् । 　　　　नाभा.

**वादिनोऽनुमतेनैनां कारयेन्नान्यथा नृपः ।**
**तोलयित्वान्तरं पूर्वं चिह्नं कृत्वा धटस्य तु ॥**[1]

प्रतिवाद्यनुमतेन, इत्थंभूतलक्षणा प्रकृत्यादित्वाद्धेतौ वा तृतीया । प्रतिवादिनि शिरसि स्थिते एवं समयं कारयेत्, नान्यथा स्वयमुत्थाप्य । नृपस्तुलां कृत्वा एकस्मिन् पार्श्वेऽभिशस्तमपरस्मिन् पाषाणादि बध्वा समवस्थितायां चिह्नं कृत्वा तुल्यसमवस्थितमवतार्य धटात् समयान् ज्ञापयित्वा पुनरारोपयेदभिशस्तम् । नाभा.

**तुलितो यदि वर्धेत स विशुद्धो हि धर्मतः ।**[2]
**समो वा हीयमानो वा न विशुद्धो भवेन्नरः ॥**

तुलितो यद्यधो लम्बते गुरुः स्यादित्यर्थः, स शुद्धः । समो वा स्याद्धीयते वा स उपरि गच्छेत्, लघुः स्यादित्यर्थः । यथा चोदकेन च शुद्धः स भाति तथा सत्यशुद्धो भवति । 　　　　नाभा.

**धर्मपर्यायवचनैर्धट इत्यभिधीयते ।**[3]
**त्वं वेत्सि सर्वभूतानां पापानि सुकृतानि च ॥**
**त्वमेव देव ! जानीषे न विदुर्यानि मानवाः ।**[4]
**व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ॥**
**तदेनं संशयारूढं धर्मतस्त्रातुमर्हसि ॥**[5]

अवतार्य श्रावयित्वा पुनरारोपयेत् । ततो वृद्धिह्रासाभ्यां जयपराजयौ । धटस्तुतिरेषा । तदधिष्ठिता स्त्रीदेवता तु सत्यानृते विभजति । 　　　　नाभा.

## बृहस्पतिः

**धटेऽभियुक्तस्तुलितो हीनश्चेद्धानिमाप्नुयात् ।**[6]
**तत्समस्तु पुनस्तोल्यो वर्धितो विजयी भवेत् ॥**

(१) एवं च सति प्रथमतोलने पर्याये समस्य पुनस्तोल्यमानस्य यदि समतैव भवति तदानीमविशुद्धिरवधारणीया, न प्रथम एव पर्याये । 　×अप.२।१०२

(२) शोध्यः स्वल्पदोषाङ्गीकारेऽपि प्रधानदोषनिर्णयार्थं तत्रैव पुनस्तोलनीयः । 　दित.५९०

(३) अयमर्थः— पुनर्देवतावाहनाद्यङ्गसहितं सर्वं कर्म विधाय तोलनीय इति । 　＊व्यप्र.१९२

(४) तस्मिन्नेव प्रयोगे पुनस्तोल्य इति प्राच्याः, तन्न कर्मवैगुण्यसत्वात् । 　विता.२३०

**कक्षच्छेदे तुलाभङ्गे धटकर्कटयोस्तथा ।**[1]
**रज्जुच्छेदेऽक्षभङ्गे च तथैवाशुद्धिमादिशेत् ॥**

(१) यदा चानुपलक्ष्यमाणदृष्टकारण एव कक्षादीनां छेदो भङ्गो वा भवति तदाऽप्यशुद्धिरेव ।
÷मिता.२।१०२

(२) एतदाकस्मिककक्ष्यच्छेदादिविषयम् । कात्यायनवचनं तु दृश्यमानकारणकशिक्यच्छेदादिविषयमिति विज्ञानेश्वराचार्यादयः । 　व्यप्र.१९३

## कात्यायनः

**शिक्यच्छेदे तुलाभङ्गे तथा चाऽपि गुणस्य वा ।**[2]
**शुद्धेस्तु संशये चैव परीक्षेत पुनर्नरम् ॥**

## पितामहः

**प्राङ्मुखो निश्चलः कार्यः शुचौ देशे धटः सदा ।**[3]

---

(१) नासं.२०१७. (२) नासं.२०१८. (३) नासं.२०१९. (४) नासं.२०११०. (५) नासं.२०१११.

(६) अप.२।१०२ तोल्यो (तुल्यो); व्यक.८६; स्मृच.१११; दीक.४१ अपवत्; दित.५९०; सवि.१९२ ऽभि (नि) तोल्यो (तौल्ये); व्यसौ.७९ तोल्यो (तुल्यो) वर्धि (वृद्धि); व्यप्र.१९२ तोल्यो (तौल्यो); व्यम.२६ विजयी (क्तिथी) उत्त.; विता.२३० ल्यो वर्धितो (ल्य ऊर्ध्वगो); प्रका.७०; समु.५८ ऽभियु (नियु).

× स्मृच. अपवत् । ＊ शेषं अपगतम् । ÷ दित. मितावत् ।

(१) मिता.२।१०२ च (वा) स्मृत्यन्तरम्; दीक.४१ कक्ष (पक्ष) च (वा) तथैवाशुद्धिमादिशेत् (दद्याच्छुद्धिं पुनर्नृपः); दित.५९१; सवि.१९२ (=); व्यप्र.१९३ कक्ष (कक्ष्य) मादिशेत् (माप्नुयात्); व्यउ.६० (=) कक्ष (अक्ष) ऽक्ष (कक्ष); व्यम.२६ च (वा) स्मृत्यन्तरम्.

(२) अप.२।१०२; व्यक.८६ चाऽपि (वाऽपि) वा (च) शुद्धेस्तु (विशुद्धि); स्मृच.१११ चाऽपि (पि तु); व्यसौ.७९ (=) चाऽपि (वाऽपि); व्यप्र.१९३ चैव (चैनं); व्यम.२६ द्धेस्तु (द्धेश्च) चैव (चैनं) क्षेत (क्षेत्तु); विता.२३१ चापि (चैव) वा (च) चैव (चैनं) पुनर्नरम् (पुनःपुनः); बाल.२।१०२ चाऽपि (वाऽपि) द्धेस्तु (द्धेश्च) चैव (चैनं); प्रका.७०स्मृचवत्; समु.५८.

(३) मिता.२।१०२ सदा (तथा) पू.; अप.२।१०२ राजद्वारे (धर्मस्थाने); व्यक.८३ नारदः; स्मृच.१०४:१०६

**इन्द्रस्थाने सभायां वा राजद्वारे चतुष्पथे ॥**

(१) इन्द्रस्थानं प्रख्यातदेवायतनम् । स्मृच.१०४

(२) धटग्रहणं दिव्यान्तरस्याप्युपलक्षणम् ।व्यप्र.१८२

[१]**विशालामुच्छ्रितां शुभ्रां धटशालां तु कारयेत् ।**
**यत्रस्था नोपहन्येत श्वभिश्चाण्डालवायसैः ॥**

यदा तूक्तलक्षणं धटं तथैव स्थापयितुमिच्छति तदा वायसाद्युपघातनिरासार्थं कपाटादिसहितां शालां कुर्यात् । *मिता.२।१०२

[२]**कपाटबीजसंयुक्तां परिचारकरक्षिताम् ।**
**पानीयाग्निसमायुक्तामशून्यां कारयेन्नृपः ॥**
[३]**तत्रैव लोकपालादीन् सर्वदिक्षु निवेशयेत् ।**
**त्रिसंध्यं पूजयेन्नित्यं धूपमाल्यानुलेपनैः ॥**

* स्मृच., सवि. मितामतं निर्दिष्टम् ।

पू.; **पमा**.१६३,१६८; **स्मृचि**.५३ (=) मितावत्, पू.; **नृप्र**.१३ पू.; **दित**.५८३ मितावत्, पू.; **सवि**.१८६ पू.; **व्यसौ**.७६; **व्यप्र**.१८२ : १८७ अपवत्; **व्यम**.२२; **राकौ**.४१२:४१४ मितावत्, पू.; **प्रका**.६६ पू.; **समु**.५५.

(१) **मिता**.२।१०२ (=) मुच्छ्रितां (मुन्नतां) स्मरणम्; **अप**.२।१०२ स्था (स्थो); **व्यक**.८३-८४ शुभ्रां (शुद्धां); **स्मृच**.१०६ स्था (स्थो) श्वभि (बहि); **पमा**.१६८ अपवत्, नारदः; **स्मृचि**.५३ स्था (स्थं); **सवि**.१९३ अपवत्; **व्यसौ**.७६ शुभ्रां (शुद्धां) स्था (स्थो); **व्यप्र**.१८६ अपवत्; **व्यउ**.६०; **व्यम**.२४; **विता**.२३३ अपवत्; **प्रका**.६६; **समु**.५५-५६.

(२) **मिता**.२।१०२ पानी ...क्ता (मृत्पानीयाग्निसंयुक्ता) स्मरणम्; **अप**.२।१०२ कपा (कवा); **व्यक**.८४; **स्मृच**.१०६ कपा (कवा) शेषं मितावत्; **पमा**.१६८ कपा (कवा) ग्निस (दिस) नारदः; **स्मृचि**.५३ पाट (पाल); **सवि**.१९३ स्मृचवत्; **व्यसौ**.७७ पाट (पाल) रक्षि (संयु); **व्यप्र**.१८६ ग्निस (दिस); **व्यउ**.६०-६१ चारक (खावार) शेषं मितावत्, क्रमेण याज्ञवल्क्यः; **व्यम**.२४ व्यप्रवत्; **विता**.२३३ मितावत्; **प्रका**.६७ स्मृचवत्; **समु**.५६ स्मृचवत्.

(३) **मिता**.२।१०२ वें (वान्) न्नित्यं धूप (देतान् गन्ध) स्मरणम्; **अप**.२।१०२ लादीन् (लांस्तु) नित्यं (चैनं); **व्यक**.८३ लादीन् (लांश्च); **स्मृच**.१०६ नित्यं धूप (चैतान् गन्ध); **स्मृचि**.५३ व्यकवत्; **सवि**.१९३ नित्यं धूप (चैनां गन्ध); **व्यसौ**.७६ व्यकवत्; **व्यउ**.६० स्मृचवत्, क्रमेण याज्ञवल्क्यः; **विता**.२३३ वें (वान्) नित्यं धूप (चैनं गन्ध); **प्रका**.६६-६७ स्मृचवत्; **समु**.५६ स्मृचवत्.

[१]**लोकपालास्तथादित्या रुद्राश्च वसवस्तथा ।**
**पूज्याः प्रभावयुक्ताश्च सान्निध्यं कल्पयन्ति ते ॥**
[२]**छित्वा तु यज्ञियं वृक्षं यूपवन्मन्त्रपूर्वकम् ।**
**प्रणम्य लोकपालेभ्यस्तुला कार्या मनीषिभिः ॥**
[३]**मन्त्रः सौम्यो वानस्पत्यश्छेदने जप्य एव च ॥**

(१) सौम्यवानस्पत्ययोर्विकल्पः तुल्यकार्यत्वादिति केश्चिदुक्तम् । तुलाग्रहणं तत्परिकरस्यापि प्रदर्शनार्थम् । तेन पादस्तम्भाद्यर्थमपि वृक्षच्छेदनं कार्यम् । स्मृच.१०५

(२) यूपवदिति यूपे छेदनविहितसर्वेतिकर्तव्यतातिदेशः । सा च ॐस्वधिते मैनं हिंसीरिति छेदनमन्त्रविशेषादिरूपेति व्यवहारप्रदीपः । दित.५८१-५८२

(३) यूपवन्मन्त्रपूर्वकमित्यनेन ॐ ओषधे त्रायस्वैनमित्यादिच्छेदनमन्त्रप्रयोगादिकमुक्तम् । वानस्पत्यः वनस्पते शतवल्शो विरोहेति मन्त्रः । छेदने कृते इति शेषः । वानस्पत्यस्य छेदनानन्तरं प्रयोगे यूपवदित्यतिदेशात्सिद्धेऽपि पुनर्विधानं औपदेशिकेन सोमदैवत्येनातिदेशिकस्य तस्य बाधनिवृत्त्यर्थम् । अत्र जप्य एव चेति चशब्दस्य वानस्पत्य इत्यनेनान्वयात् तस्य च समुच्चयद्योतकत्वात् समुच्चय इति केचित् । सौम्यवानस्पत्ययोरेकार्थत्वात् । 'तुल्यार्थास्तु विकल्पेरन्' इत्यनेन न्यायेन व्रीहियववद्विकल्प इत्यपरे । व्यप्र.१८६-१८७

(४) विकल्पलेखस्त्वज्ञानमूलकः । *व्यउ.५७

(५) वानस्पत्यो 'वनस्पते शतवल्शो विरोहेति' अस्य यूपवदित्यतिदेशात्सिद्धस्यैवानुवादः । व्यम.२४

* शेषं व्यप्रवत् ।

(१) **अप**.२।१०२ (लोकपालांस्तथादित्यान् रुद्रांश्चैव वसूंस्तथा); **व्यक**.८३ पूज्याः (पूजां); **व्यसौ**.७२.

(२) **मिता**.२।१०२; **अप**.२।१०२; **व्यक**.८३; **स्मृच**.१०५ यूप (विधि); **पमा**.१६८ यज्ञियं (याज्ञिकं) यूप (हेतु); **स्मृचि**.५३ (=); **दित**.५८१; **सवि**.१८४ तु यज्ञियं वृक्षं (यज्ञियवृक्षं तु) प्रजापतिः; **व्यसौ**.७६; **व्यप्र**.१८६ वृक्षं (काष्ठं); **व्यउ**.५७ याज्ञवल्क्यः; **व्यम**.२४; **विता**.२१८ यूप (पूर्वं); **राकौ**.४१४; **प्रका**.६६ स्मृचवत्; **समु**.५५ स्मृचवत्.

(३) **मिता**.२।१०२; **अप**.२।१०२; **स्मृच**.१०५ च (तु); **स्मृचि**.५३ (=); **दित**.५८२; **व्यप्र**.१८६; **व्यउ**.५७ (=); **व्यम**.२४; **प्रका**.६६ स्मृचवत्; **समु**.५५ स्मृचवत्.

(६) मिता.टीका— यज्ञियं खदिरादिकम् । मन्त्रेति । 'ओषधे त्रायस्वैनं' इत्यादिमन्त्रपूर्वकमित्यर्थः । छेदनक्रियाविशेषणमिदम् । यूपवदित्यस्य तुला कार्येत्यत्रान्वयः । यूपवदित्यतिदेशसिद्धं मन्त्रवदित्युक्तमेवानुवदति । मन्त्र इति । वानस्पत्यच्छेदने इति समस्तम् । तच्छेदनकाले सोमदेवताकः 'सोमो धेनुं सोमो अर्वन्तम्' इत्यादिमन्त्रो जप्य एवेत्यर्थः । व्यस्तपाठे वानस्पत्यो मन्त्रो 'वनस्पते शतवल्शो विरोहेति' । अनयोर्जपमन्त्रत्वेनादृष्टार्थत्वात्समुच्चयः । चो भिन्नक्रमः । छेदने तुलाकाष्ठच्छेदने । स स च जप्य एवेत्यर्थ इत्यन्ये । बाल.२।१०२

**चतुर्हस्ता तुला कार्या पादौ कार्यौ तथाविधौ ।**
**अन्तरं तु तयोर्हस्तौ भवेदध्यर्धमेव वा ॥**

(१) पादौ तुलाधारकाक्षाख्यकाष्ठधारणार्थौ स्तम्भौ तथाविधौ चतुर्हस्तप्रमाणावित्यर्थः । एतच्च पादयोः प्रमाणं निखननीयहस्तद्वयादुपरितनभागस्य वेदितव्यम् । अतो निखननीयभागेन सह षड्ढस्तौ भवतः ।

अक्षस्य प्रमाणं तु पादयोरन्तरालाभिधानेनैवार्थसिद्धमिति न पृथगुक्तम् । तेन पादस्तम्भमस्तकदेशात् बहिरनिःसृतो यथा भवति तथा हस्तद्वयात् सार्धहस्ताद्वाऽभ्यधिकोऽक्षः कार्य इत्यवगन्तव्यम् । स्मृच.१०५

(२) अत्र साधारणत्वेन शारदातिलकोक्तो हस्तो ग्राह्यः । यथा— 'चतुर्विंशत्यङ्गुलाढ्यं हस्तं तन्त्रविदो विदुः । यवानामष्टभिः क्लृप्तं मानाङ्गुलमुदीरितम्' ॥ यवानां तण्डुलीकृतानाम्— 'यवानां तण्डुलैरेकमङ्गुलं चाष्टभिर्भवेत् । अदीर्घयोजितैर्हस्तश्चतुर्विंशतिरङ्गुलैः' ॥ इति कालिकापुराणात्, प्रमाणं तु पार्श्वेन 'यवानां षड्यवाः पार्श्वसंमिताः' इति कात्यायनवचनात् । अनयोर्व्यवस्थामाह कापिलपञ्चरात्रम् । 'अष्टभिस्तैर्भवेज्ज्येष्ठं मध्यमं सप्तभिर्यवैः । कन्यसं षड्भिरुद्दिष्टमङ्गुलं मुनिसत्तम' ॥ कन्यसं कनिष्ठं पादौ स्तम्भौ उपरि मृत्तिकोपरि तत्समौ चतुर्हस्तावित्यर्थः वस्तुतस्तु उपरि तत्समौ । दित.५८२

(३) अन्तरं मध्यम् । अध्यर्धं सार्धहस्तद्वयम् । व्यप्र.१८७

(४) तथाविधौ चतुर्हस्तौ इदं च निखेयहस्तद्वयभागाद्भिन्नम् । 'अन्तरं तु तयोर्हस्तौ भवेदध्यर्धमेव वा' । अध्यर्धं सार्धहस्तद्वयम् । अक्षनामकतुलावलम्बनकाष्ठपरिमाणमन्तरालभूमिसमम् । तस्य चावलम्बनस्तम्भात्किञ्चिदाधिक्यमिति जीर्णाः, साम्यमेवेति चन्द्रिकाकारः । व्यउ.५७

**हस्तद्वयं निखेयं तु पादयोरुभयोरपि ॥**

मिता.टीका— हस्तद्वयमिति । उभयोरपि पादयोर्हस्तद्वयं हस्तचतुष्टयादवशिष्टं भूम्यन्तः प्रवेशनीयमित्यर्थः । बाल.२।१०२

**चतुरस्रा तुला कार्या दृढा ऋज्वी तथैव च ।**
**कटकानि च देयानि त्रिषु स्थानेषु यत्नतः ॥**

कटकानि लोहवलयानि । त्रिषु स्थानेषु उपान्तयोर्मध्ये च । कटकानीत्ययोमयानामन्येषामप्युपलक्षणार्थम् । तेनौपान्त्ययोरायसकीलकौ शिक्यपाशधारणार्थाविषुवद्वक्राग्रौ कर्कटशृङ्गसंनिभौ देयौ । मध्ये त्वायसपाशोऽक्षकाष्ठे तुलायोजनार्थो देयः । स्मृच.१०६

**तोरणे तु तथा कार्ये पार्श्वयोरुभयोरपि ।**

(१) मिता.२।१०२ कार्यौ तथाविधौ (चोपरि तत्समौ) अन्त (प्रान्त); अप.२।१०२ रं (रे) र्धमे (र्ध ए) शेषं मितावत्; व्यक.८३ (चतुर्हस्ता तुला कार्या द्विहस्ता च तथा द्विधा); स्मृच.१०५ र्धमे (र्ध ए); पमा.१६८ स्तौ (स्तो); व्यचि.८०; स्मृचि.५३ वा (च); नृप्र.१३ तु (च) स्तौ (स्तो) दध्य (द्धस्ता); दित.५८२ मितावत्, पू.; सवि.१८४ कार्यौ (चापि) प्रजापतिः; व्यसौ.७५-७६ तु (च); व्यप्र.१८७ वा (च); व्यउ.५७; व्यम.२५ वा (च); राकौ.४१४ मितावत्; प्रका.६६ स्मृचवत्; समु.५३ स्मृचवत्.

(१) मिता.२।१०२; अप.२।१०२ व्यासः; पमा.१६९; स्मृचि.५३ (=); नृप्र.१३; दित.५८२; व्यप्र.१८७; व्यउ.५७; राकौ.४१४.

(२) मिता.२।१०२ दृढा (दृष्टा) यत्नतः (चार्थवत्); अप.२।१०२; स्मृच.१०६; पमा.१६९ कटका (कर्कटा) उत्त.; दित.५८२ यत्नतः (चार्थवत्); सवि.१८५ तुरस्रा (तुर्हस्ता); व्यसौ.७६ तुरस्रा (तुर्हस्ता) षु यत्नतः (विशेषतः); व्यप्र.१८८; व्यउ.५७ तुरस्रा (तुर्हस्ता) ऋज्वी (रज्वी) यत्नतः (चार्थवत्); व्यम.२५; राकौ.४१४ दितवत्; प्रका.६६; समु.५५.

(३) मिता.२।१०२ तु (च); अप.२।१०२ मितावत्; व्यासः; व्यक.८३ धटादुच्चतरे (ते धटादुद्यते) क्रमेण नारदः;

घटादुच्चतरे स्यातां नित्यं दशभिरङ्गुलैः ॥
[1]अवलम्बौ च कर्तव्यौ तोरणाभ्यामधोमुखौ ।
मृन्मयौ सूत्रसंबद्धौ घटमस्तकचुम्बिनौ ॥
[2]शिक्यद्वयं समासज्य पार्श्वयोरुभयोरपि ।
प्रागग्रान् कल्पयेद्दर्भान् तत्र विप्रः समाहितः ॥
[3]पश्चिमे तोलयेत्कर्तॄनन्यस्मिन्मृत्तिकां शुभाम् ।
इष्टकाभस्मपाषाणकपालास्थिविवर्जिताम् ॥

इष्टकापाषाणयोर्मृदा सह समुच्चयो निवार्यते । न तु विकल्पः तयोरपि विहितत्वात् । स्मृच.१०९

[4]पिटकं पूरयेत्तस्मिन् इष्टकाग्रावपांसुभिः ॥

अत्र च मृत्तिकेष्टकाग्रावपांसूनां विकल्पः ।

मिता.२।१०२

स्मृच.१०६; पमा.१६९ तथा (तयोः); स्मृचि.५३ (=); दित.५८३ मितावत्; सवि.१८४ मितावत्, प्रजापतिः; व्यप्र.१८८; व्यउ.५८ मितावत्; व्यम.२५ मितावत्; राकौ.४१४ मितावत्; प्रका.६६; समु.५५.

(१) मिता.२।१०२; अप.२।१०२ म्बिनौ(म्बकौ) व्यासः; व्यक.८३ च (तु) शेषं अपवत्; स्मृच.१०६; पमा.१६९; स्मृचि.५३ (=); दित.५८३ द्धौ (न्धौ) नौ (तौ); सवि.१८५ (=) द्धौ (न्धौ); व्यसौ.७६ अपवत्; व्यप्र.१८८ च (तु); व्यउ.५८; राकौ.४१४; प्रका.६६ द्धौ (न्धौ); समु.५५.

(२) मिता.२।१०२ (प्राङ्मुखान्कल्पयेद्दर्भान् शिक्ययोरुभयोरपि); अप.२।१०२ (प्राङ्मुखान् कल्पयेदन्तान् शिक्ययोरुभयोरपि) व्यासः; व्यक.८४ सज्य (साद्य) कल्प (कार); स्मृच.१०८ (प्रागग्रान् कल्पयेद्दर्भान् शिक्ययोरुभयोरपि); स्मृचि.५३ (=) पू.; दित.५८३ मितावत्, उत्त.; सवि.१८६ रुभयोरपि (रिति निश्चयः); व्यसौ.७७ कल्प (कार); व्यप्र.१८९; व्यउ.५८ स्मृचवत्; व्यम.२५ स्मृचवत्; राकौ.४१४ क्य (खां) गग्रान् (ङ्मुखान्) तत्र ... हितः (शिखयोरुभयोरपि); प्रका.६८ स्मृचवत्; समु.५७ स्मृचवत्.

(३) मिता. २।१०२ पू.; अप.२।१०२ पू.; व्यक.८४ पश्चिमे तो (एकस्मिन् तु); स्मृच.१०९; पमा.१७० पश्चिमे (एकस्मिन्) कर्तॄन् (मर्त्यं); स्मृचि.५३ (=) पू.; दित.५८३ पू.; सवि.१८६ पश्चिमे (एकस्मिन्) पू.; व्यसौ.७७ पमावत्; व्यप्र.१८८ पू. : १८९; व्यउ.५७ पू.; व्यम.२५; विता.२१९; राकौ.४१४ पू.; प्रका.६८; समु.५७.

(४) मिता.२।१०२; अप.२।१०२ (पिढिकां कारयेत्तस्मिन्निष्टकायां सलोष्टकैः) व्यासः; स्मृचि.५३ (=) ग्राव (मिश्र); दित.५८३; सवि.१८६; राकौ.४१४ ट (ष्ट).

परीक्षका नियोक्तव्यास्तुलामानविशारदाः ।
वणिजो हेमकाराश्च कांस्यकारास्तथैव च ॥
[1]कार्यः परीक्षकैर्नित्यमवलम्बसमो धटः ।
उदकं च प्रदातव्यं धटस्योपरि पण्डितैः ॥

तोरणयोर्लम्बमानौ मृण्मयावलम्बौ तयोः संबन्धः कटकद्वयोपरिभागेन समो यस्य सोऽवलम्बसमो धटः ।

स्मृच.१०९

[3]यस्मिन्न प्लवते तोयं स विज्ञेयः समो धटः ॥
[4]तोलयित्वा नरं पूर्वं पश्चात्तमवतार्य तु ।
प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततो वदेत् ॥
धटं तु कारयेन्नित्यं पताकाध्वजशोभितम् ।
तत आवाहयेद्देवान्विधिनानेन मन्त्रवित् ॥
[6]धटमामन्त्रयेच्चैव विधिनानेन शास्त्रवित् ।

(१) मिता.२।१०२; अप.२।१०२ व्यासः; व्यक.८४; स्मृच.१०९; पमा.१७०; स्मृचि. ५३ (=); दित.५८३; सवि.१८६; व्यसौ.७७; व्यप्र.१८९; व्यउ.५८; राकौ.४१४; प्रका.६८; समु.५७.

(२) मिता.२।१०२; अप.२।१०२; व्यक.८४; स्मृच.१०९; पमा.१७०; स्मृचि.५३ पू.; दित.५८३; सवि.१८६; व्यप्र.१८९; व्यउ.५८; व्यम.२५ क्रमेण नारदः; राकौ.४१५; प्रका.६९; समु.५७.

(३) मिता.२।१०२; अप.२।१०२ व्यासः; व्यक.८४; स्मृच.१०९; पमा.१७०; दित.५८३; सवि.१८६; व्यप्र.१८९; व्यउ.५८; व्यम.२५ क्रमेण नारदः; राकौ.४१५; प्रका.६९; समु.५७.

(४) मिता.२।१०२ पू.; अप.२।१०२ तार्य तु (तारयेत्) पू., व्यासः; व्यक.८४ तोल (तुल) पश्चा (तस्मा); स्मृच.१०९ पू.; पमा.१७० पू.; दित.५८३ पू.: ५८७ पश्चा (तस्मा) तु (च); सवि.१८६ पश्चा ... तु (ततस्तमवतारयेत्); व्यसौ.७७ दित. ५८७ वत्; व्यप्र.१९०; व्यउ.५८ अपवत्, पू.; व्यम.२५ पश्चा (तस्मा); राकौ.४१५ अपवत्; प्रका.६९ पू.; समु.५७ पू.

(५) मिता.२।१०२; अप.२।१०२ व्यासः; व्यक.८४; स्मृच.१०६,१०९ पू.; पमा.१७०; स्मृचि.५३ पू.; दित.५८३; सवि.१८६ पू.; व्यसौ.७७ पू.; व्यप्र.१९०; व्यउ.५८; व्यम.२५; राकौ.४१५ नित्यं (वृत्तं) त आ (तश्चा); प्रका.६६:६९ पू.; समु.५५ पू. : ५७.

(६) मिता.२।१०२; अप.२।१०२ त्वं धट (धट त्वं) उत्त., व्यासः; व्यक.८५ अपवत्, उत्त.; स्मृच.११० चैव (चैवं); पमा.१७१; व्यनि.११ [मयारामः] उत्त.; नृप्र.

**त्वं धट ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम् ॥**
**[1]धकाराद्धर्ममूर्तिस्त्वं टकारात्कुटिलं नरम् ।**
**धृतो भावयसे यस्माद्धटस्तेनाभिधीयसे ॥**
**[2]त्वं वेत्सि सर्वजन्तूनां पापानि सुकृतानि च ।**
**त्वमेव देव जानीषे न विदुर्यानि मानवाः ॥**
**[3]व्यवहाराभिशस्तोऽयं मानुषस्तोल्यते त्वया ।**
**तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥**
**[4]ज्योतिर्विद् ब्राह्मणः श्रेष्ठः कुर्यात्कालपरीक्षणम् ।**
**विनाड्यः पञ्च विज्ञेयाः परीक्षाकालकोविदैः ॥**

दशगुर्वक्षरोच्चारणकालः प्राणः । षट्प्राणा विनाडी । उक्तं च–– 'दशगुरुवर्णः प्राणः षट्प्राणाः स्याद्विनाडिका तासाम् । षष्ट्या घटी घटीनां षष्ट्याहोरात्र उक्तश्च' ॥ 'खाग्निभिर्दिवसैर्मास' इति । *मिता.२।१०२

**[1]साक्षिणो ब्राह्मणाः श्रेष्ठा यथादृष्टार्थवादिनः ।**
**ज्ञानिनः शुचयोऽलुब्धा नियोक्तव्या नृपेण तु ॥**
**[2]शंसन्ति साक्षिणः श्रेष्ठाः शुद्ध्यशुद्धी नृपे तदा ॥**

तस्मिंश्च काले शुद्ध्यशुद्धिपरीक्षणार्थं शुचयः पुरुषा राज्ञा नियोक्तव्याः । ते च शुद्ध्यशुद्धी कथयन्ति । यथोक्तं पितामहेन–– साक्षिणामिति । मिता.२।१०२

**[3]तेषां वचनतो गम्यः शुध्यशुद्धिविनिर्णयः ॥**
**[4]तुलितो यदि वर्धेत शुद्धो भवति धर्मतः ।**
**हीयमानो न शुद्धः स्यादेकेषां तु समोऽशुचिः ॥**
**[5]अल्पदोषः समो ज्ञेयो बहुदोषस्तु हीयते ।**
**धर्मगौरवमाहात्म्यादतिरिक्तो विशुध्यति ॥**

(१) तत्र यद्यभियुक्तस्यार्थस्याल्पत्वं बहुत्वं च न दिव्येनावधारयितुं शक्यते तथापि सकृदमतिपूर्वत्वेना-

---

१४ शास्त्र (मन्त्र); **दित**.५८७ चैव (चैवं) शास्त्र (मन्त्र) पू.: ५९३ (=) उत्त.; **सवि**.१९० सृष्टः (दिष्टः) उत्त.; **व्यसौ**.७८ त्वं धट (धट त्वं) तृतीयपादः; **वीमि**.२।१०२ उत्त.; **व्यप्र**.१९०; **व्यउ**.५८ चैव (पश्चात्); **व्यम**.२९ उत्त.; **विता**.२२२ (=) उत्त.; **प्रका**.६९ नारदः; **समु** ५८.

(१) **मिता**.२।१०२; **अप** २।१०२ लं नरम् (लो नृणाम्) धृतो भाव (धटो धार) व्यासः; **व्यक**.८५ भाव (धार) धीयसे (धीयते); **स्मृच**.११०; **पमा**.१७१ वयसे (वयते); **व्यनि**. ११ [ मयारामः ]; **नृप्र**.१४; **दित**.५८७,५९३-५९४ व्यकवत्; **सवि**.१९० नारदः; **व्यसौ**.७८; **वीमि**.२।१०२ (=); **व्यप्र**.१९० भाव (धार); **व्यउ**.५९; **व्यम**.२९ मूर्ति (भूत); **विता**.२२२ (=) व्यमवत्; **प्रका**.६९नारदः; **समु**.५८.

(२) **मिता**.२।१०२; **पमा**.१७१ देव (धट) उत्त.; **व्यचि**. ८० (=) देव (धट) उत्त.; **व्यनि**.११ (=) [मयारामः] जन्तू (भूता); **स्मृचि**.५६ उत्त.; **दित**.५८७,५९४ व्यनिवत्; **वीमि**.१।१०२ व्यनिवत्; **व्यप्र**.१९० व्यनिवत्; **व्यउ**.५९ व्यनिवत्; **व्यम**.२९ जन्तू (भूता) देव (सर्वे); **विता**.२२२ (=) व्यनिवत्; **समु**.५८ उत्त.

(३) **मिता**.२।१०२ तोल्यते त्वया (शुद्धिमिच्छति); **पमा**. १७१ त्वया (त्वयि); **व्यचि**.८० (=) पमावत्; **दित**. ५५७,५९४ मितावत्; **वीमि**.२।१०२ (=) मितावत्; **व्यप्र**.१९० मितावत्, पू.; **व्यउ**.५९ मितावत्; **व्यम**.२९ (=) मितावत्; **विता**.२२२-२२३ मितावत्; **समु**. ५८ पमावत्.

(४) **मिता**.२।१०२ स्मृत्यन्तरम्; **स्मृच**.११० णः (ण) क्षा (क्ष्याः) **पमा**.१७३; **नृप्र**.१४ उत्त.; **दित**.५९० स्मृत्यन्तरम्; **सवि**.१९१ (=) क्षा (क्ष्याः) उत्त.; **व्यप्र**.१९१ णः (ण); **व्यउ**.६० (=); **व्यम**.२६; **विता**.२२३ उत्त.; **प्रका**. ६९ स्मृचवत्; **समु**.५८ स्मृचवत्.

* दित., सवि., व्यप्र. मितागतम् ।

(१) **मिता**.२।१०२ णो (णां): **स्मृच**.११० णाः श्रे (णश्रे); **पमा**.१७३; **दित**.५९०; **सवि**.१९२ बृहस्पतिः; **व्यप्र**.१९१; **व्यउ**.६० स्मृचवत्; **व्यम**.२६ स्मृचवत्; **विता**. २२३ पू.; **प्रका**.६९ स्मृचवत्; **समु**.५८ स्मृचवत्.

(२) **मिता**.२।१०२; **स्मृच**.१११ श्रेष्ठाः (सर्वे); **दित**. ५९० तदा (तथा); **व्यप्र**.१९२; **व्यम**.२६ स्मृचवत्; **विता**. २२३ शंसन्ति ... ष्ठाः (शुध्यन्ति साक्षिणः सर्वे); **प्रका**.७० स्मृचवत्; **समु**.५९ स्मृचवत्.

(३) **स्मृच**.११०; **पमा**.१७३; **सवि**.१९२ बृहस्पतिः; **प्रका**.७०; **समु**.५८.

(४) **व्यक**.८६; **स्मृच**.१११ उत्त.; **दीक**.४१; **नृप्र**. १४; **सवि**.१९२ एके (एते) उत्त.; **व्यसौ**.७९; **व्यप्र**.१९२; **प्रका**.७० उत्त.; **समु**.५८ उत्त.

(५) **मिता**.२।१०२ पू.; **अप**.२।१०२ दोषः (पापः); **व्यक**.८६ अपवत्; **स्मृच**.१११ अपवत्, पू.; **दीक**.४१ अपवत्; **नृप्र**.१४ दोषः (पापे) दोषस्तु (पापस्य) विशु (न शु); **दित**.५९० पू.; **व्यसौ**.७९ दोषः समो (पापस्तु वि) दोषस्तु (पापस्तु); **व्यप्र**.१९२ अपवत्, पू.; **व्यउ**.६०पू.; **व्यम**.२६ अपवत्, पू.; **विता**.२३० अपवत्, पू.; **प्रका**.७० पू.; **समु**.५८ पू.

ल्पत्वमसकृन्मतिपूर्वत्वेन च महत्वमिति दण्डप्रायश्चित्ताल्पत्वमहत्वमवधार्यते। मिता.२।१०२

(२) अल्पत्वं व्यभिचारे समालिङ्गनादिना, चौर्ये तद्देशगमनादिना। तत्र एकेषामिति पूजार्थं न तु स्वमते समस्य शुचित्वद्योतनार्थम्। अल्पपापिनोऽप्यशुचित्वात्। तेन हीयमानसमयोर्न कश्चिद्विशेषः। दण्डे प्रायश्चित्ते परं विशेषस्तयोर्दोषानुसारित्वात्। यत्तु कैश्चित् 'एकेषां तु समोऽशुचिः' इति वचनं, 'अल्पपापः समो ज्ञेय' इति च वचनं साम्ये संशयपरमेवेत्युक्तम्। तत् क्लिष्टकल्पनया वाक्यानार्जवात्तैरुपेक्षणीयम्। व्यप्र.१९२

[१]सद्भिः परिवृतो राजा शुद्धिमेतां प्रपूजयेत्।
ऋत्विक्पुरोहिताचार्यान् दक्षिणाभिश्च तोषयेत्॥
[२]शुद्धं व्यञ्जनहेत्वर्थं पत्रं दद्यात्स्वचिह्नितम्।
अशुद्धं दण्डयित्वा तु स्वराष्ट्राद्विप्रवासयेत्॥
[३]एवं कारयिता राजा भुक्त्वा भोगान्मनोरमान्।
महतीं कीर्तिमाप्नोति ब्रह्मभूयाय कल्पते॥

## व्यासः

[४]हस्तद्वयं निखेयं तु प्रोक्तं मुण्डकयोर्द्वयोः।
षड्ढस्तं तु तयोः प्रोक्तं प्रमाणं परिमाणतः॥

(१) मुण्डकयोः स्तम्भयोः षड्हस्तं निखातहस्तद्वयेन समं अर्थान्मृत्तिकोपरि हस्तचतुष्टयमित्यर्थः। दित.५८२

(२) मुण्डकौ पादस्तम्भौ। व्यप्र.१८७

[१]अधोगतिर्न शुध्येत्तु शुध्येदूर्ध्वगतिस्तथा।
समोऽपि न हि शुद्धः स्यादेषा शुद्धिरुदाहृता॥
[२]शिक्यादिच्छेदभङ्गे च पुनरारोपयेन्नरम्।
एवं निःसंशयज्ञानात्ततो भवति निर्णयः॥
[३]कक्ष्यच्छेदे तुलाभङ्गे धटकर्कटयोस्तथा।
रज्जुच्छेदेऽक्षभङ्गे च दद्याच्छुद्धिं पुनर्नृपः॥

(१) कक्ष्यं शिक्यतलम्। कर्कटौ तुलोपान्तस्थौ शिक्याधारावीषद्वक्रौ कर्कटशृङ्गसंनिभौ लोहकीलकौ। अक्षः पादस्तम्भयोरुपरिनिहितस्तुलाधारपट इति मिताक्षरा। दार्ढ्यप्रयोजकः कीलक इति हलायुधः। व्यप्र.१९३

(२) इदं तु दृष्टकारणभङ्गपरम्। व्यम.२६

## स्मृत्यन्तरम्

[४]पुनरारोपयेत्तस्मिन् स्थित्वाऽवस्थितपत्रकम्॥

## अनिर्दिष्टकर्तृकवचनम्

[५]यद्यधो यात्यशुद्धः स्यात्तुलाभङ्गे च सर्वदा।
न विशीर्यति शिक्यं चेदूर्ध्वं याति विशुध्यति॥

## कालिकापुराणम्

[६]उपोषितं तथा स्नातं मृत्समं प्रथमं तुलाम्।
संतोल्य कारयेद्रेखामवतार्यानुमन्त्रयेत्॥

---

(१) **मिता** २।१०२ उत्त.; **स्मृच.**१०८ उत्त. : १११ शुद्धिमेतां प्र (शुद्धमाहूय); **पमा.**१६८ उत्त. : १७४ शुद्धिमेतां (शुद्धरूढं); **नृप्र.**१४ उत्त.; **दित.**५९१ (=) उत्त.; **सवि.**१९२ च (तु) उत्त.; **व्यप्र.**१८५ च (तु); **व्यउ.** ६० (=) उत्त.; **व्यम.**२४ च (तु); **प्रका.**६८ उत्त. : ७० स्मृचवत्; **समु.**५७ उत्त.: ५९ स्मृचवत्, पू.

(२) **समु.**५९. (३) **मिता.**२।१०२ (=); **स्मृच.** १११; **पमा.**१७४; **नृप्र.**१४; **दित.**५९१ राजा भुक्त्वा (भुक्त्वा राजा) प्न (प्य); **सवि.**१९२; **व्यप्र.**१८५; **व्यउ.** ६० याज्ञवल्क्यः; **व्यम.**२४; **प्रका.**७०; **समु.**५९.

(४) **स्मृच.**१०५; **पमा.**१६९ द्वयोः (तयोः); **दित.** ५८२; **सवि.**१८५ (=) द्वयं (द्वय) मुण्डक (कटक) परि (तु प्र); **व्यसौ.**७६ पमावत्; **व्यप्र.**१८७; **व्यउ.**५७; **व्यम.**२५ प्रोक्तं मुण्डकयोस्तयोः (पादयोरुभयोरपि); **प्रका.** ६६; **समु.**५५.

(१) **व्यक.**७६ त्तु (त) हि (च); **पमा.**१७४ तिर्न (तो न) गति (गत) हि (वि); **दीक.**४१; **व्यचि.**८० शुध्येत्तु (विशुद्धः) तथा (सदा) हि (वि); **स्मृचि.**५४ त्तु (त) ध्येद् (ध्यत्य्); **नृप्र.**१४; **व्यसौ.**७८; **विता.**२३० स्मृचिवत्; **समु.**५८ शुध्येत्तु (वै शुध्येत्) शेषं पमावत्.

(२) **मिता.**२।१०२ च (धु) पू., स्मरणम्; **पमा.**१७४ पूर्वार्धे (शिक्यच्छेदेऽक्षभङ्गे च भूयश्चारोपयेन्नरम्); **सवि.** १९२ स्मृत्यन्तरम्; **समु.**५८ च (तु) बृहस्पतिः.

(३) **व्यक.**८६ क्ष्य (क्षा) च (वा); **व्यचि.**८० क्ष्य (क्षा) नृपः (पुनः); **नृप्र.**१४ पू.; **सवि.**१९२ (शिक्यच्छेदेऽक्षभङ्गे वा दद्याच्छिक्यं पुनर्नृपः) पू., बृहस्पतिः; **व्यसौ.**७९ क्ष्य (क्ष) पू.; **व्यप्र.**१९३ च (वा); **व्यम.**२६ क्ष्य (क्ष) च (वा); **विता.** २३३ क्ष्य (क्ष); **बाल.**२।१०२; **समु.**५८ च (वा).

(४) **मिता.**२।१०२. (५) **मच.**८।११६.

(६) **दित.**५८९; **व्यसौ.**७८ मृत्समं (मृन्मयं) (ततोऽन्यं कारयेदेव अवतीर्यानुमन्त्रयेत्).

## अग्निविधिः

### वेदाः

**[1]वत्सश्च वै मेधातिथिश्च काण्वावास्तां तं वत्सं मेधातिथिराक्रोशदब्राह्मणोऽसि शूद्रापुत्र इति सोऽब्रवीदृतेनाग्निं व्ययाव यतरो नौ ब्रह्मीयानिति वात्सेन वत्सो व्यैन्मैधातिथेन मेधातिथिस्तस्य न (?) लोम च नौषत्तद्वाव स तर्ह्यकामयत कामसनि साम वात्सं काममेवैतेनावरुन्धे ।**

वत्सश्च मेधातिथिश्च इमावृषी काण्वौ कण्वगोत्रौ आस्तां पुरा किलाभवताम् । तं वत्सं ऋषिं मेधातिथिराक्रोशत् अश्लीलया वाचा पर्यवदत्–हे वत्स, त्वं अब्राह्मणो ब्राह्मण्यरहितोऽसि । शूद्रापुत्रः शूद्रायाः पुत्रोऽशूद्रपुत्रोऽपि शूद्रापुत्र इत्याक्रोश्यते'षष्ठ्या आक्रोश' इति विहितस्य लुकः 'पुत्रेऽन्यतरस्याम्' इति विकल्पनादभाव एवमाक्रुश्यमाणः स वत्सोऽब्रवीत्—ऋतेन सत्यभूतेन मन्त्रेणाग्निं व्ययाव आवां विशेषेण गच्छावः प्रविशाव इत्यर्थः । नावावयोर्मध्ये यतरो यो ब्रह्मीयान् ब्रह्मिष्ठ इति निर्णेतुम् । एवमुक्त्वा वत्सो वात्सेनानेन साम्ना व्यैत् व्यगच्छदग्निं प्राविशत् मैधातिथेन साम्ना मेधातिथिः । तस्य वत्सस्य लोम च नौषत् अग्निर्नादहत् । उष दाह इति धातुः । तर्हि तस्मिन् समये तत् अदहनं स खलु ऋषिः अकामयत । तस्माद्वात्सं साम कामप्रदम् । गतमन्यत् । तासा.

**[2]पुरुष सोम्योत हस्तगृहीतमानयन्त्यपहार्षीत्स्तेयमकार्षीत्परशुमस्मै तपतेति स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसंधोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते । अथ यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते स सत्याभिसंधः सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते ।**

यथा सोम्य, पुरुषं चौर्यकर्मणि संदिह्यमानं निग्रहाय परीक्षणाय च उत अपि हस्तगृहीतं बद्धहस्तं आनयन्ति राजपुरुषाः । किं कृतवानयमिति पृष्टाश्च आहुः—अपहार्षीद्धनमस्यायम् । ते च आहुः—किमपहरणमात्रेण बन्धनमर्हति, अन्यथा दत्तेऽपि धने बन्धनप्रसङ्गात् इत्युक्ताः पुनराहुः–स्तेयमकार्षीत् चौर्येण धनमपहार्षीदिति । तेष्वेवं वदत्सु इतरः अपह्नुते– नाहं तत्कर्तेति । ते च आहुः–संदिह्यमानं स्तेयमकार्षीः त्वमस्य धनस्येति । तस्मिंश्च अपह्नुवाने आहुः–परशुमस्मै तपतेति शोधयत्वात्मानमिति । स यदि तस्य स्तैन्यस्य कर्ता भवति बहिश्चापह्नुते, स एवंभूतः तत एवानृतमन्यथाभूतं सन्तमन्यथात्मानं कुरुते । स तथा अनृताभिसंधोऽनृतेनात्मानमन्तर्धाय व्यवहितं कृत्वा परशुं तप्तं मोहात्प्रतिगृह्णाति, स दह्यते, अथ हन्यते राजपुरुषैः स्वकृतेनानृताभिसंधिदोषेण । अथ यदि तस्य कर्मणः अकर्ता भवति, तत एव सत्यमात्मानं कुरुते । स सत्येन तया स्तैन्याकर्तृतया आत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति । स सत्याभिसंधः सन् न दह्यते सत्यव्यवधानात्, अथ मुच्यते च मृषाभियोक्तृभ्यः । तप्तपरशुहस्ततलसंयोगस्य तुल्यत्वेऽपि स्तेयकर्त्रकर्त्रोरनृताभिसंधो दह्यते न तु सत्याभिसंधः ।

छाशांभा.

(१) ताब्रा.१४।६।६. (२) छाउ.६।१६.

### विष्णुः

**[1]अथाग्निः ।**

**[2]षोडशाङ्गुलं तावदन्तरं मण्डलसप्तकं कुर्यात् ।**

इति तत् गन्तव्यमण्डलविषयम् । व्यप्र.१९५

**[3]ततः प्राङ्मुखस्य प्रसारितभुजद्वयस्य सप्ताश्वत्थपत्त्राणि करयोर्दद्यात् ।**

उभयत्रापि ('करौ विमृदिते'ति याज्ञवल्क्यवचने प्रस्तुतविष्णुवचने च) ततःशब्देनेदं ज्ञायते । हस्ताङ्कनपत्रन्यसनयोर्मध्ये यत्स्मृत्यन्तरोक्तं होमादि तदस्मिन् मते न कर्तव्यमिति । स्मृच.११३

(१) **विस्मृ.**११।१. (२) **विस्मृ.**११।२; **व्यसौ.**८० सप्त (सप्तम); **व्यप्र.**१९५ न्तरं (न्तर); **विता.**२३४ व्यप्रवत्.
(३) **विस्मृ.**११।३; **स्मृच.**११३ त्थ (त्थस्य); **प्रका.**७१ स्मृचवत्; **समु.**६० त्थपत्राणि ( त्थस्य पर्णानि ).

[१]तानि च करद्वयसहितानि सूत्रेण वेष्टयेत् ।
[२]ततस्तत्राग्निवर्णं लोहपिण्डं पञ्चाशत्पलिकं समं न्यसेत् ।
[३]तमादाय नातिद्रुतं नातिविलम्बितं मण्डलेषु पदन्यासं कुर्वन् व्रजेत् ।

मण्डलेषु द्वितीयादिष्वष्टमान्तेष्वित्यर्थः । स्मृच.११४

[४]ततः सप्तमं मण्डलमतीत्य भूमौ लोहपिण्डं जह्यात् ।
[५]यो हस्तयोः कचिद्दग्धस्तमशुद्धं विनिर्दिशेत् ।
न दग्धः सर्वथा यस्तु स विशुद्धो भवेन्नरः ॥
[६]भयाद्वा पातयेद्यस्तु दग्धो वा न विभाव्यते ।
पुनस्तं हारयेल्लोहं समयस्याऽविशोधनात् ॥
[७]करौ विमृदितव्रीही तस्यादावेव लक्षयेत् ।
अभिमन्त्र्यास्य करयोर्लोहपिण्डं ततो न्यसेत् ॥

शोध्यस्य प्राड्विवाकस्य च कर्तव्यमाह विष्णुः— कराविति । विमृदिता व्रीहयो याभ्यां तौ विमृदितव्रीही । अनेन कराभ्यां व्रीहिमर्दनं कृत्वा शोध्यः प्रसारितकराङ्गुलिः स्यादित्यर्थादुक्तम् । स्मृच.११३

[८]त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत् ।
त्वमेवाग्ने विजानीषे न विदुर्यानि मानवाः ॥
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥

विष्णुस्तु लोहपिण्डस्याग्न्यभिमन्त्रणे मन्त्रान्तरमाह—त्वमग्ने इति । समुच्चयेनास्य मन्त्रस्याभिमन्त्रेण साधनत्वं न पुनः विकल्पेन प्रार्थनीयार्थस्य शोध्यव्यक्तिविशेषनिष्ठतया प्रकाशकत्वेन भिन्नकार्यत्वात् । स्मृच.११४

## शङ्खः शङ्खलिखितौ च

[१]अथवा सप्ताश्वत्थपर्णान्तरितं षोडशपलमग्निवर्णं लोहपिण्डमञ्जलिनाऽऽदाय सप्तमर्यादां गच्छेत् ।

इति पिण्डस्य षोडशपलत्वमुक्तम् । तदपि वैकल्पिकम् । सप्तमपदमर्यादं सप्तममण्डलं यावत् । अभिविधिपरोऽत्र मर्यादाशब्दः । केचित्तु षोडशपलसंख्या असामर्थ्ये इति प्राहुः । व्यप्र.१९६

## वाल्मीकिरामायणम्

[३]न तथाऽस्मि महाबाहो यथा त्वमवगच्छसि ।
प्रत्यहं गच्छ मे येन चारित्रेणैव ते शपे ॥
पृथक्स्त्रीणां प्रचारेण जातिं तां परिशङ्कसे ।
परित्यजेमां शङ्कां तु यदि तेऽहं परीक्षिता ॥
[४]एवं ब्रुवाणा रुदती बाष्पगद्गदभाषिणी ।
अब्रवील्लक्ष्मणं सीता दीनं ध्यानपरं स्थितम् ॥
चितां मे कुरु सौमित्रे व्यसनस्यास्य भेषजम् ।
मिथ्योपघातोपहता नाहं जीवितुमुत्सहे ॥
अप्रीतस्य गुणैर्भर्तुस्त्यक्ताया जनसंसदि ।
या क्षमा मे गतिर्गन्तुं प्रवेक्ष्ये हव्यवाहनम् ॥
एवमुक्तस्तु वैदेह्या लक्ष्मणः परवीरहा ।
अमर्षवशमापन्नो राघवाननमैक्षत ॥

---

(१) विस्मृ.११।४; स्मृच.११३ ण (णा); प्रका.७१ ण (णा). (२) विस्मृ.११।५; व्यक.८९ पलि (पणि); व्यसौ.८१ न्यसे (दद्या); व्यप्र.२०० व्यसौवत्. (३) विस्मृ.११।६ तमा (यमा) (पदन्यासं०); व्यक.८९ नातिवि (न वि); स्मृच.११४ नातिवि (न च वि); व्यसौ.८१ पद (पाद) शेषं स्मृचवत्; व्यप्र.२०० तमा (तं समा) नातिवि (न च वि); समु.६० स्मृचवत्. (४) विस्मृ.११।७; व्यक.८९ जह्या (पातये); व्यसौ.८१ व्यकवत्; व्यप्र.२०० मं (म) जह्या (पातये). (५) विस्मृ.११।८; व्यक.९० नारदः; स्मृच.११५; व्यचि.८१ उत्त., याज्ञवल्क्यः; व्यसौ.८२ निर्दिशेत् (दुर्बुधाः); व्यप्र.२०१; विता.२४३ स वि (सर्वे) शेषं व्यसौवत्; राकौ.४२२ व्यसौवत्; प्रका.७३; समु.६१. (६) विस्मृ.११।९. (७) विस्मृ.११।१० व्रीही (व्रीहेः); स्मृच.११३ पू.; पमा.१७९ मृदि (मर्दि) पू.; व्यप्र.१९७ पू.; राकौ.४१९ ही त (हेस्त) पू.; प्रका.७१ पमावत्, पू.; समु.५९ पू.

(८) विस्मृ.११।११; स्मृच.११४ नवाः (नुषाः); प्रका.७२ स्मृचवत्; समु.६०.

(१) विस्मृ.११।१२; स्मृच.११४; दित.५८८; प्रका.७२; समु.६०.

(२) व्यक.८९ पर्णा (पिण्डा) पल (पण) सप्त +(पद); स्मृच.११२ अथवा (अथ); व्यसौ.८१ पर्णा (पत्रा) सप्त+(पद); व्यप्र.१९६ पर्णा (पत्रा) पलं+(अपि) सप्तमर्यादां (सप्तमपदमर्यादं); व्यम.३० पर्णा (पत्रा) (लोह०); विता.२३६ (अथ ... रितं०) सप्त+(मपद); समु.५९ शङ्खः. (३) वारा.६।११९।६-७. (४) वारा.६।११९।१७-२१.

स विज्ञाय ततश्छन्दं रामस्याकारसूचितम् ।
चितां चकार सौमित्रिर्मते रामस्य वीर्यवान् ॥
अधोमुखं तदा रामं शनैः कृत्वा प्रदक्षिणम् ।
उपासर्पत वैदेही दीप्यमानं हुताशनम् ॥
प्रणम्य देवताभ्यश्च ब्राह्मणेभ्यश्च मैथिली ।
बद्धाञ्जलिपुटा चेदमुवाचाग्निसमीपतः ॥
यथा मे हृदयं नित्यं नापसर्पति राघवात् ।
तथा लोकस्य साक्षी मां सर्वतः पातु पावकः ॥
यथा मां शुद्धचारित्रां दुष्टां जानाति राघवः ।
तथा लोकस्य साक्षी मां सर्वतः पातु पावकः ॥
कर्मणा मनसा वाचा यथा नातिचराम्यहम् ।
राघवं सर्वधर्मज्ञं तथा मां पातु पावकः ॥
आदित्यो भगवान्वायुर्दिशश्चन्द्रस्तथैव च ।
अहश्चापि तथा संध्ये रात्रिश्च पृथिवी तथा ॥
यथान्येऽपि विजानन्ति तथा चारित्रसंयुताम् ॥
एवमुक्त्वा तु वैदेही परिक्रम्य हुताशनम् ।
विवेश ज्वलनं दीप्तं निःसङ्गेनान्तरात्मना ॥
स विधूय चितां तां तु वैदेहीं हव्यवाहनः ।
उत्तस्थौ मूर्तिमानाशु गृहीत्वा जनकात्मजाम् ॥
तरुणादित्यसंकाशां तप्तकाञ्चनभूषणाम् ।
रक्ताम्बरधरां बालां नीलकुञ्चितमूर्धजाम् ॥
अक्लिष्टमाल्याभरणां तथारूपां मनस्विनीम् ।
ददौ रामाय वैदेहीमङ्के कृत्वा विभावसुः ॥
अब्रवीच्च तदा रामं साक्षी लोकस्य पावकः ।
एषा ते राम वैदेही पापमस्यां न विद्यते ॥
नैव वाचा न मनसा नानुध्यानान्न चक्षुषा ।
सुवृत्ता वृत्तशौण्डीर न त्वामतिचचार ह ॥

**याज्ञवल्क्यः**

[3] करौ विमृदितव्रीहेर्लक्षयित्वा ततो न्यसेत् ।
सप्ताश्वत्थस्य पत्राणि तावत्सूत्रेण वेष्टयेत् + ॥

(१) तप्तायःपिण्डधारणशास्त्रम्—करावितिं । कृतव्रीहिविमर्दनस्य तप्तलोहहारिणो दाहस्पष्टीकरणार्थं हस्तौ कृतव्रणप्रदेशौ लेखाकरणेन च लक्षयित्वा सप्ताश्वत्थस्य पत्राण्यन्तर्धानाय हस्तयोराधाय सप्तकृत्वः सूत्रेण वेष्टयित्वा वक्ष्यमाणलोहपिण्डार्पणनिपुणं लोहकारं गृहीततप्तलोहपिण्डं मण्डलकस्थितस्य समीपे प्राङ्मुखं कुर्यात् । विश्व.२।१०७

(२) दिव्यमातृकोक्तसाधारणधर्मेषु सत्सु तुलाविधानोक्तधर्मावाहनादिशिरःपत्रारोपणान्ते च विध्यन्ते *सत्यमग्निविधौ विशेषः । विमृदितव्रीहिर्विमृदिता विघर्षिता* व्रीहयः कराभ्यां येनासौ विमृदितव्रीहिस्तस्य करौ लक्षयित्वा तिलकालकव्रणकिणादिस्थानेष्वलक्तकरसादिनाऽङ्कयित्वा । यथाह नारदः—'हस्तक्षतेषु सर्वेषु कुर्याद्धंसपदानि तु' इति । अनन्तरं सप्ताश्वत्थस्य पर्णानि हस्तयोः अञ्जलीकृतयोर्न्यसेत् । 'पत्रैरञ्जलिमापूर्य आश्वत्थैः सप्तभिः समैः' इति स्मरणात् । तानि च हस्तसहितानि सूत्रेण तावद्वेष्टयेत् । यावन्त्यश्वत्थपर्णानि सप्तकृत्वो वेष्टयेदित्यर्थः । सूत्राणि च सप्त शुक्लानि भवन्ति । ×मिता.

(३) तावत् तावत्कृत्वः सप्तकृत्वः सूत्रेण वेष्टयेदिति तावदित्यस्य क्रियाविशेषणत्वमङ्गीकृत्योक्तोऽर्थो मिताक्षरायाम् । तावतां सूत्राणां समाहारस्तावत्सूत्रं तेन । सप्तभिः सूत्रैर्वेष्टयेदित्यर्थः । 'सप्तभिः सूत्रतन्तुभिः' इति वक्ष्यमाणनारदादिवचनसंवादी प्रतिभाति । तावच्छब्दः संख्याशब्दस्तेन समाहारे द्विगुः स्त्रीलिङ्गत्वाभावाच्च न ङीप् त्रिभुवनमितिवत् । सप्तकृत्वो वेष्टनं तु वचनालाभेऽपि शिष्टाचारतः कर्तव्यमिति मदनरत्ने । *व्यप्र.१९७-१९८

[1]त्वमग्ने सर्वभूतानामन्तश्चरसि पावक ।
साक्षिवत् पुण्यपापेभ्यो ब्रूहि सत्यं कवे ! मम ॥

---

+स्मृच.व्याख्यानं 'ततः प्राङ्मुखस्य' इत्यादिविष्णुवचने (पृ. ४८५) द्रष्टव्यम् ।

(१) वारा.६।११९।२३-२९. (२) वारा.६।१२१।२-७.

(३) यास्मृ.२।१०३; अपु.२५५।३८; विश्व.२।१०७; मिता.त्रेण (त्राणि); अप.हेः(ही) प्ताश्वत्थस्य(प्त चाश्वत्थ); स्मृच. १।१३ हेः (ही) त्राणि (र्णानि); पमा.१७९स्मृचवत्; व्यचि.८०

× अप., वीमि. मितागतम् । * व्यम., बाल. व्यप्रगतम् । हेः (ही) त्रेण (त्राणि); स्मृचि.५३; दित.५९५; सवि.१९५ मृ (मु) सूत्रेण (शुभ्राणि) शेषं स्मृचवत्; मच.८।११६ विमृ (सुमृ); वीमि.हेः (ही); व्यप्र.१९७; व्यम.३१ लक्ष (रङ्क); राकौ.४१९; प्रका.७१ मृदि (मर्दि) शेषं स्मृचवत्; समु.६० त्राणि (र्णानि).

(१) यास्मृ.२।१०४; अपु.२५५।३९ मग्ने (मेव) वे (रे); विश्व.२।१०८ मग्ने (मेव); मिता.; अप.; व्यक.८९;

(१) इतरोऽपि प्रागुक्तनियमवानुदङ्मुखोऽयःपिण्डमीक्षमाणः कृताञ्जलिर्ब्रूयात्—त्वमेवेति । विश्व.२।१०८

(२) अग्ने, त्वं सर्वभूतानां जरायुजाण्डजस्वेदजोद्भिज्जानामन्तः शरीराभ्यन्तरे चरसि उपयुक्तान्नपानादीनां पाचकत्वेन वर्तसे । पावक शुद्धिहेतो । कवे क्रान्तदर्शिन् । साक्षिवत्पुण्यपापेभ्यः सत्यं ब्रूहि । पुण्यपापेभ्य इति ल्यब्लोपे पञ्चमी । पुण्यपापान्यवेक्ष्य सत्यं ब्रूहि दर्शयेत्यर्थः । अयःपिण्डे त्रिभिस्तापैः संतप्ते संदंशेन पुरत आनीते कर्ता पश्चिममण्डले प्राङ्मुखस्तिष्ठन् अनेन मन्त्रेणाग्निं अभिमन्त्रयेत् । + मिता.

**तस्येत्युक्तवतो लौहं पञ्चाशत्पलिकं समम् ।**
**अग्निवर्णं न्यसेत्पिण्डं हस्तयोरुभयोरपि ॥**

(१) लोहकारोऽपि । विश्व.२।१०९

(२) अपि च । तस्य कर्तुरित्युक्तवतः 'त्वमग्ने सर्वभूतानाम्' इत्यादि अभिमन्त्रणं कृतवतो, लौहं लोहविकारं पिण्डम् । पञ्चाशत्पलिकं पञ्चाशत्पलसंमितं सममस्रहितम् । सर्वतश्च समं वृत्तं श्लक्ष्णं तथाष्टाङ्गुलायामम् । 'अस्रहीनं समं कृत्वा अष्टाङ्गुलमयोमयम् । पिण्डं तु तापयेदग्नौ पञ्चाशत्पलिकं समम्'॥ इति पितामहस्मरणात् । अग्निवर्णमग्निसदृशमुभयोर्हस्तयोरश्वत्थपत्रदधिदूर्वाद्यन्तरितयोर्न्यसेत् निक्षिपेत् प्राड्विवाकः । *मिता.

(३) न्यसेत् राजा प्राड्विवाको वा । दित.५९७

(४) अपिशब्दात् उपरिस्थिताश्वत्थपत्रेषु । ×वीमि.

---

+ दित., सवि., वीमि., व्यप्र. मितागतम् ।
* अप., व्यप्र. मितागतम् । × शेषं मितागतम् ।

**स्मृच**.११४; **व्याचि**.८१ कवे (करे); **स्मृचि**.५३ कवे (करे); **दित**.५९७ कवे (करे); **सवि**.१९८ पेभ्यो (पानां); **वीमि**.; **व्यप्र**.२०० कवे (करे); **व्यम**.३१; **राकौ**.४२१; **प्रका**.७२; **समु**.६०.

(१) **यास्मृ**.२।१०५; **अपु**.२५५।४०; **विश्व**.२।१०९ लौहं (लोहं) पिण्डं (क्षिप्रं); **मिता**.; **अप**.; **व्यक**.८९ लौहं (लोहं); **स्मृच**.११४ लौहं (लोहं) पलि (पल); **व्याचि**.८१ व्यकवत्; **स्मृचि**.५४ व्यकवत्; **दित**.५९७ व्यकवत्; **सवि**.१९७ व्यकवत्; **मच**.८।११६ लौहं (लोहं) पलि (पणि); **वीमि**.; **व्यप्र**.२०० व्यकवत्; **व्यउ**.६१ उत्त.; **व्यम**.३१; **प्रका**.७२ स्मृचवत्; **समु**.६० लौहं (लोहं) पलिकं समम् (पलसंमितम्).

**स तमादाय सप्तैव मण्डलानि शनैर्व्रजेत् ।**
**षोडशाङ्गुलकं ज्ञेयं मण्डलं तावदन्तरम् ॥**

(१) स पुरुषस्तमं लोहपिण्डमञ्जलिना गृहीत्वा सप्तमण्डलानि शनैर्व्रजेत् । एवकारेण मण्डलेष्वेव पदन्यासं मण्डलानतिक्रमणं च दर्शयति । यथाह पितामहः—'न मण्डलमतिक्रामेन्नाप्यर्वाक् स्थापयेत्पदम्' इति। सप्तैव मण्डलानि शनैर्व्रजेत् इत्युक्तं, तत्रैकैकं मण्डलं किंप्रमाणं मण्डलयोरन्तरं च कियत्प्रमाणकमित्यत आह—षोडशाङ्गुलकमिति ।

षोडश अङ्गुलानि यस्य तत् षोडशाङ्गुलकम् ।षोडशाङ्गुलप्रमाणं मण्डलं बोद्धव्यम् । मण्डलयोरन्तरं मध्यं च तावदेव षोडशाङ्गुलकमेव । सप्तमण्डलानि व्रजेदिति वदता प्रथममवस्थानमण्डलमेकमुक्तम् । अतश्चाष्टमण्डलानि षोडशाङ्गुलकानि मण्डलानामन्तराणि मध्यानीत्यर्थः। मण्डलान्तराणि तु सप्त तावत्प्रमाणानि। मिता.

(२) शनैरत्वरमाणः सप्तसु मण्डलेषु सप्त क्रमान्कृत्वा व्रजेत् । अप.

(३) अत्र सप्तमण्डलानामतिक्राम्यत्वात् अवस्थित्यर्थमष्टमं मण्डलं सिद्धं भवति । एवं च षोडशाङ्गुलान्यष्टौ मण्डलानि षोडशाङ्गुलान्तरालानि च भवन्ति । व्यउ.६१

**मुक्त्वाऽग्निं मृदितव्रीहिरदग्धः शुद्धिमाप्नुयात् ।**
**अन्तरा पतिते पिण्डे संदेहे वा पुनर्हरेत् ॥**

---

(१) **यास्मृ**.२।१०६; **अपु**.२५५।४१; **विश्व**.२।११० ङ्गुल (ङ्गुलि); **मिता**.; **अप**.विश्ववत्; **व्यक**.८७ ङ्गुल (ङ्गुलि) लं तावद (लान्मण्डला) उत्त.; **स्मृच**.१११ उत्त.: ११४ पू.; **पमा**.१७६ पू.; **व्याचि**.८१; **स्मृचि**.५४ विश्ववत्; **दित**.५९५ उत्त.: ५९७ पू.; **सवि**.१९४ उत्त., हारीतः : १९८ पू.; **मच**.८।११६; **व्यसौ**.८० उत्त.; **वीमि**.; **व्यप्र**.१९४ उत्त.: १९५,२०० पू.; **व्यउ**.६१ स तमा (तप्तमा); **व्यम**.३० उत्त.; **त्रिता**.२३५ पू.; **राकौ**.४१९ कं ज्ञेयं (वैदूर्य); **प्रका**.७०उत्त.: ७२ पू.; **समु**.५९विश्ववत्,उत्त.:६०विश्ववत्.

(२) **यास्मृ**.२।१०७; **अपु**.२५५।४२; **विश्व**.२।१११ क्त्वाऽग्निं (क्ताग्निः); **मिता**.; **अप**.; **व्यक**.८९ उत्त.; **स्मृच**.११५; **व्याचि**.८१; **स्मृचि**.५४; **दित**.५९७ उत्त.: ५९८ पू.; **सवि**.१९९दग्धः (दण्ड्यः) उत्तरार्धस्तु प्रजापतेरिति; **मच**.८।११६ मुक्त्वा (त्यक्त्वा); **व्यसौ**.८२ (=) उत्त.; **वीमि**.;

(१) कृतलक्षणौ हस्तौ दर्शयित्वा पुनश्च मृदितव्रीहिरप्यलक्षितदाहः पराजयव्यञ्जकललाटस्वेदादिलक्षणहीनः कुहकादिशङ्काविनिर्मुक्तः शुद्धिमाप्नुयात् । दाहसंशयान्तरापिण्डपतनयोस्तु पुनस्त्रिरात्रे सप्तरात्रे वा स्मृत्यन्तरानुसारात् करणमवसेयम् । स्पष्टमन्यत् ।

विश्व.२।१११

(२) सप्त मण्डलानि गत्वा किं कर्तव्यमित्यत आह– मुक्त्वेति । अष्टमे मण्डले स्थित्वा नवमे मण्डले अग्नितप्तमयःपिण्डं त्यक्त्वा कराभ्यां व्रीहीन् मर्दयित्वा अदग्धहस्तश्चेच्छुद्धिमाप्नुयात् । दग्धहस्तश्चेदशुद्ध इत्यर्थसिद्धम् । यस्तु संत्रासात् प्रस्खलन् हस्ताभ्यामन्यत्र दह्यते तथाप्यशुद्धो न भवति । यथाह कात्यायनः––'प्रस्खलन्नभिशस्तश्चेत्स्थानादन्यत्र दह्यते । अदग्धं तं विदुर्देवास्तस्य भूयोऽपि दापयेत्' इति ।। अन्तरेति । यदा गच्छतोऽन्तराऽष्टममण्डलादर्वागेव पिण्डः पतति दग्धादग्धत्वे वा संशयस्तदा पुनर्हरेदित्यर्थप्राप्तमुक्तम् । अत्र चायमनुष्ठानक्रमः–– पूर्वेद्युर्भूतशुद्धिं विधाय परेद्युर्मण्डलानि यथाशास्त्रं निर्माय मण्डलाधिदेवताश्च मन्त्रैस्तत्र तत्र संपूज्याग्निमुपसमाधाय शान्तिहोमं निर्वर्त्य उपोषितस्य स्नातस्यार्द्रवाससः पश्चिमे मण्डले तिष्ठतो व्रीहिमर्दनादिकं करसंस्कारं विधाय प्रतिज्ञापत्रं समन्त्रकं कर्तुः शिरसि बध्वा प्राड्विवाकस्तृतीये तापेऽग्निमभिमन्त्र्य तप्तमयःपिण्डं संदंशेन गृहीत्वा कर्त्रभिमन्त्रितं तस्याञ्जलौ निदध्यात् । सोऽपि मण्डलानि सप्त गत्वा नवमे मण्डले प्रक्षिप्यादग्धः शुद्धो भवतीति । *मिता.

(३) यदुक्तम्––'अन्तरा पतिते'त्यादि तत् व्रीहिमर्दने कृतेऽपि यत्र संदेहो नापैति तद्विषयं, किं सत्यानृतवशाददाहदाहौ उत दृष्टव्यवधानाव्यवधानादिकारणवशादिति यत्र संदेहस्तद्विषयं च । 'अन्तरा पतिते पिण्डे' इत्यत्र 'दग्धश्च नोपलभ्यते' इति शेषोऽवगन्तव्यः । दग्धस्योपलम्भे त्वशुद्धिनिश्चयेन पुनर्हरणानवकाशात् । +स्मृच.११५

(४) संदेहे दग्धत्वादग्धत्वसंदेहे तस्मिन्नेव प्रयोगे पिण्डं पुनरारोप्य शेषं समापयेत् न तु प्रयोगान्तरम् । आरोपणमात्रस्य पुनर्विधानात् तत्प्रयोगस्य विगुणत्वानिश्चयाच्च । दित.५९७-५९८

* अप., वीमि., व्यउ. मितागतम् । +व्यप्र. स्मृचगतम् ।
व्यप्र.२०२-२०३; व्यउ.६२; व्यम.३१ उत्त.; विता.२४४ उत्त.; प्रका.७३ पितामहः, उत्त.; समु.६१.

## नारदः

**[१]अतःपरं प्रवक्ष्यामि विधिमग्नेस्तथोत्तमम् ।**
**द्वात्रिंशदङ्गुलं प्राहुर्मण्डलान्मण्डलान्तरम् ।।**
**[२]अष्टभिर्मण्डलैरेवमङ्गुलानां शतद्वयम् ।**
**षट्पञ्चाशत्समधिकं भूमेस्तु परिकल्पना ।।**

(१) अत्र श्लोकद्वयेन अग्निदिव्यविधानमधिकृत्य गृहीतदिव्यः पुरुषो यावन्मात्रं गच्छति तदुक्तम् । एकं मण्डलकं द्वात्रिंशदङ्गुलप्रमाणं भवति । तेन प्रमाणेनाष्टौ मण्डलानि भवन्ति । तेष्वष्टमण्डलेष्वपि एकत्राङ्के अङ्गुलानां शतद्वयं षट्पञ्चाशदधिकं भवति एतत्क्रमेण भूमिप्रमाणमभिहितम् । अभा.७७

(२) अयमर्थः––अवस्थानमण्डलात् षोडशाङ्गुलान्मण्डलान्तरमन्यन्मण्डलम् । द्वितीयाद्येकमेकं द्वात्रिंशदङ्गुलं सान्तरालं तदेवमवस्थानमण्डलं षोडशाङ्गुलम् । गन्तव्यानि च सप्त मण्डलानि सान्तरालानि द्वात्रिंशदङ्गुलान्येवमष्टाभिर्मण्डलैश्चत्वारिंशदधिकं शतद्वयं भूमेरङ्गुलमानतः अङ्गुलमानमिति सार्वविभक्तिकस्तसिः । अस्मिंस्तु पक्षेऽवस्थानमण्डलं षोडशाङ्गुलं विधाय द्वात्रिंशदङ्गुलप्रमाणानां सप्तानां सान्तरालमण्डलभूभागानामेकमेकं भूभागं द्विधा विभज्यान्तराल-

(१) **नास्मृ**.४।२८५; **अभा**.७७ (द्वात्रिंशन्मण्डलान्याहुर्मण्डलं मण्डलान्तरम्); **मिता**.२।१०६ उत्त.; **अप**.२।१०६ त्तम (त्तर); **व्यक**.८७ अतः (ततः) त्तम (त्तर) दङ्गुलं प्राहु (न्मण्डलानाहु); **सवि**.१९४ र्मण्डलान् (र्मण्डलं) उत्त.; **व्यसौ**.८० थोत्तमम् (था परम्) लं प्राहु (लान्याहु); **व्यप्र**.१९४ स्तथोत्तमम् (र्यथोदितम्); **व्यउ**.६१ न्तरम् (न्तरे) शेषं सविवत्, उत्त.; **समु**.५९ उत्त.

(२) **नास्मृ**.४।२८६; **अभा**.७७ त्समधिकं (तमाख्यातं); **मिता**.२।१०६ अष्ट (अष्टा) उत्तरार्धे (चत्वारिंशत्समधिकं भूमेरङ्गुलमानतः); **अप**.२।१०६ अष्ट (सप्त) षट् ... कं (चतुर्विंशत्समाख्याता); **व्यक**.८७ ङ्गु (ण्ड) उत्तरार्धे (चतुर्विंशतिराख्याता भूमेस्तु परिकल्पना); **सवि**.१९४ मितावत्; **व्यसौ**.८० अष्ट (अष्टा) ङ्गु (ण्ड) उत्तरार्धे अपवत्; **व्यप्र**.१९४ मितावत्; **व्यउ**.६१ मितावत्; **विता**.२३५ मितावत्; **समु**.५९ मितावत्.

भूभागान् षोडशाङ्गुलप्रमाणान् विहाय मण्डलभूभागेषु द्विषोडशाङ्गुलप्रमाणेषु गन्तृपदप्रमाणानि सप्त मण्डलानि कार्याणि। यथा तेनैवोक्तम्— 'मण्डलस्य प्रमाणं तु कुर्यात्तत्पदसंमितम्' इति। *मिता.२।१०६

(३) नवममण्डलस्याऽपरिमिताङ्गुलित्वादगणना। व्यप्र.१९४

मण्डलस्य प्रमाणं तु कुर्यात्तत्पदसंमितम् ॥[1]
लक्षयेत्तस्य चिह्नानि हस्तयोरुभयोरपि।[2]
प्राकृतानि च गूढानि सव्रणान्यव्रणानि च ॥

अग्निधारणात् प्राक्तनान्येतानीति ज्ञानार्थं तस्य शोध्यस्य करद्वयस्थितव्रणादिस्थानेषु अलक्तकादिरसेन हंसपदानि कुर्यादित्यर्थः। ×स्मृच.११३

हस्तक्षतेषु सर्वेषु कुर्याद्धंसपदानि च।[3]
तान्येव पुनरालक्षेद्धस्तौ बिन्दुविचित्रितौ ॥

पुनः पिण्डधारणानन्तरम्। व्यप्र.१९७

कृत्वैवमभिशस्तस्य प्रथमं हस्तलक्षणम्।[4]
शान्त्यर्थं जुहुयान्मन्त्रैर्घृतेनाग्नौ यथाविधि ॥
तर्पितेष्वथ देवेषु लोकपालेषु चैव हि।
आदित्याभिमुखो भूत्वा इमं मन्त्रमुदीरयेत् ॥[5]
त्वमग्ने सर्वभूतानां अन्तश्चरसि साक्षिवत्।[1]
हव्यं वहसि देवानां हुतः शान्तिं प्रयच्छसि ॥
प्रच्छन्नानि मनुष्याणां पापानि सुकृतानि च।[2]
त्वमेव देव जानीषे न विदुर्यानि मानवाः ॥
व्यवहाराभिशस्तोऽहं वह्ने तिष्ठामि संशये।[3]
तस्मान्मां संशयारूढं धर्मतस्त्रातुमर्हसि ॥
एवमुक्तवतस्तस्य प्राङ्मुखस्य सुधीमतः।[4]
पत्रैरञ्जलिमापूर्य आश्वत्थैः सप्तभिः समैः ॥

मन्त्रैः 'आकृष्णेन' इत्यादिभिर्नवभिर्ग्रहप्रकाशकैः देवेषु वस्वादित्यरुद्रेषु लोकपालेषु च तत्तन्नाम्ना हुतघृताहुतिभिः तर्पितेषु सत्स्वित्यर्थः। तदेतत्सर्वं वैकल्पिकमिति मन्तव्यम्। यत्तु पत्रविशेषणमुक्तं समैरिति तन्नित्यमेव। तेन पक्षद्वयेऽपि समपरिमाणैः पत्रैः भवितव्यम्। स्मृच.११३

वेष्टयीत सितैर्हस्तौ सप्तभिः सूत्रतन्तुभिः ॥[5]
सप्ताश्वत्थस्य पत्राणि त्वभियुक्तस्य हस्तयोः।[6]
कृत्वा वेष्टयानि यत्नेन सप्तभिः सूत्रतन्तुभिः ॥

---

* सवि. मितागतम्। × पमा. स्मृचवत्।

(१) **नास्मृ**.४।२९९; **अभा**.७८ कुर्यात् (कर्त्रा); **मिता**.२।१०६; **अप**.२।१०६; **व्यक**.८७ तत्प...म् (पदसमन्वितम्); **व्यसौ**.८०; **व्यप्र**.१९५; **व्यउ**.६१ (=); **विता**.२३४; **राकौ**.४१९; **समु**.५९.

(२) **अप**.२।१०३; **स्मृच**.११३; **पमा**.१७९; **व्यप्र**.१९७ तानि च (तानीव); **प्रका**.७१; **समु**.५९.

(३) **नास्मृ**.४।३०१ हंस (काक) रालक्षे (रवेक्षे); **अभा**.७८ हंस (काक) लक्षे (वेक्ष्ये); **मिता**.२।१०३ च (तु) पू.; **अप**.२।१०३ हंस (बिन्दु); **व्यक**.८८; **स्मृच**.११३ च (तु) पू.; **पमा**.१७९ च (तु) पू.; **दीक**.४१ च (तु); **दित**.५८८: ५९५ च (तु); **सवि**.१९५ पू.; **व्यसौ**.८०; **वीमि**.२।१०७ लक्षे (लक्ष्ये); **व्यप्र**.१९७ च (तु) लक्षे (लक्ष्ये); **व्यम**.३० च (तु); **राकौ**.४२० मितावत्; **प्रका**.७१ च (तु) पू.; **समु**.५९ व्यप्रवत्.

(४) **अप**.२।१०३ शस्त (युक्त) न्मन्त्रैर्घृतेनाग्नौ (त्तत्र घृतमग्नौ); **स्मृच**.११३; **प्रका**.७१; **समु**.५९. (५) **स्मृच**.११३; **पमा**.१७८ खो भूत्वा (खस्तिष्ठन्) उत्त.; **प्रका**.७१; **समु**.५९.

(१) **स्मृच**.११३; **पमा**.१७८; **प्रका**.७१ उत्त.; **समु**.५९. (२) **स्मृच**.११३; **पमा**.१७८ देव (सर्वं) नवाः (नुषाः); **प्रका**.७१; **समु**.५९ त्वमेव (त्वमग्ने). (३) **व्यक**.८८-८९ हं...शये (यं मानुषः सिद्धिमिच्छति) तस्मा...रूढं (तदेनं संशयादस्मात्); **स्मृच**.११३ तस्मा (यस्मा); **पमा**.१७८ हं...शये (यं मानुषः शुद्धिमिच्छति) उत्तरार्धं व्यकवत्; **सवि**.१९१ शस्तो (युक्तो) शेषं पमावत् : १९७ (=) पमावत्; **व्यसौ**.७८ पमावत्; **वीमि**.२।१०७ हं...शये (यं मानवः शुद्धिमिच्छति) उत्तरार्धं व्यकवत्, स्मृतिः; **प्रका**.७१; **समु**.६०.

(४) **मिता**.२।१०३ उत्त., स्मरणम्; **स्मृच**.११३; **पमा**.१७९ उत्त., स्मरणम्; **व्यप्र**.१९८ आश्व (ह्याश्व) उत्त., स्मरणम्; **प्रका**.७१ वत (स्तत); **समु**.६० सुधी (च धी).

(५) **मिता**.२।१०३; **स्मृच**.११३ यीत (येत); **पमा**.१७९; **दित**.५९५; **सवि**.१९५; **वीमि**.२।१०७; **व्यप्र**.१९८; **प्रका**.७१ स्मृचवत्; **समु**.६० स्मृचवत्.

(६) **नास्मृ**.४।२८७ त्वभि (अभि) वेष्टयानि (न्यसेत्तु) यत्नेन (पत्राणि); **अभा**.७७ त्वभि (अभि) वेष्टयानि (न्यस्याति); **अप**.२।१०३ सूत्र (तत्र); **व्यसौ**.८० त्वभि (अभि); **वीमि**.२।१०७ (ततश्च सप्त पत्राणि सप्तसूत्रेण वेष्टयेत्).

**जात्यैव लोहकारो यः कुशलश्चाग्निकर्मणि ।**
**दृष्टप्रयोगश्चान्यत्र तेनायोऽग्नौ प्रतापयेत् ॥**

(१) यः लोहकारः पुरुषः पारम्पर्येकुशलो जातः लोहकर्मणि संततकृताभ्यासः अन्यत्राऽपि दिव्यदानदृष्टकर्मा तेनाऽग्नौ प्रतापयेत् । न पुनरवान्तरशिक्षितः कर्मणैष इति । अभा.७७

(२) दृष्टप्रयोगश्चान्यत्रेत्यनेन यथा लोके लोहशुद्ध्यर्थं सुतप्तं लोहमुदकेन निक्षिप्य पुनः संताप्योदके निक्षिप्य पुनः संतापनं लोहकार्यसिद्ध्यर्थं क्रियते तथाऽत्रापि कर्तव्यमिति दर्शितम् । तत्र तृतीयतापे वर्तमाने धर्मावाहनादिशोध्यशिरःपत्रारोपणान्तं सर्वदिव्यसाधारणं विधिं कुर्यात् । स्मृच.११२

(३) चन्द्रिकाकारस्य मते 'तृतीयतापे तप्यन्तम्' इत्यादिवचनानि न्याससिद्धार्थानुवादीनीति मन्तव्यम् । सवि.१९६

**अग्निवर्णमयःपिण्डं सस्फुलिङ्गं सुरञ्जितम् ।**
**पञ्चाशत्पलिकं भूयः कारयित्वा शुचिर्द्विजः ॥**

(१) अत्र श्लोकद्वये विधिरयम् । अमुं पिण्डं पञ्चाशत्पलिकं अग्निवर्णं वारत्रयतापितं सस्फुलिङ्गं भूयो भूयः सुरक्तिकं कृत्वा शुचिर्द्विजः एवं ब्रूयात् । 'श्रूयतां मानवो धर्मो लोकपालैरधिष्ठितः' । इत्याद्यम् । अभा.७७

(२) अस्यार्थः— लोहशुद्ध्यर्थं सुतप्तं लोहपिण्डमुदके निक्षिप्य पुनः संताप्योदके निक्षिप्य तृतीये तापे संताप्य संदंशेन गृहीत्वा पुरत आनीते सत्यपुरस्कृतं सत्यशब्दयुक्तं 'त्वमग्ने सर्वभूतानाम्' इत्यादिमन्त्रं कर्ता ब्रूयादिति । *मिता.२।१०४

(३) सुरक्षितं चण्डालादिस्पर्शो यथा न संपद्यते तथा रक्षितम् । +व्यप्र.१९६

**तृतीयतापे तप्तं तं ब्रूयात्सत्यपुरस्कृतः ।**
**शृणिवमं मानवं धर्मं लोकपालैरधिष्ठितम् ॥**
**त्वमग्ने सर्वदेवानां पवित्रं परमं मुखम् ।**
**त्वमेव सर्वभूतानां हृदिस्थो वेत्सि चेष्टितम् ॥**
**सत्यानृते च जिह्वायास्त्वत्तः समुपजायते ।**
**वेदादिभिरिदं प्रोक्तं नान्यथा कर्तुमर्हसि ॥**

* पमा., दित., व्यउ. मितागतम् । + शेषं मितागतम् ।

---

(१) **नास्मृ**. ४।२८८ प्रयोगश्चान्यत्र (योगश्चान्यत्रापि); **अभा**.७७; **अप**.२।१०५ प्रताप (तु ताप); **व्यक**.८८ ग्नि (ग्नि); **स्मृच**.११२ अपवत्; **पमा**.१७७ ग्नि (ग्नि) प्रताप (तु ताप); **स्मृचि**.५४ अपवत्; **दित**.५९५; **सवि**.१९६ प्रताप (तु दाप) व्यासः; **व्यसौ**.८०-८१ ग्नि (ग्नि); **व्यप्र**. १९६; **व्यम**.३०; **राकौ**.४२०; **बाल**.२।१०४; **प्रका**. ७० अपवत्; **समु**.५९ अपवत्.

(२) **नास्मृ**.४।२८९ रञ्जित (रक्तिक) कारयित्वा (कृत्वैवं तं); **अभा**.७७ नास्मृवत्; **मिता**.२।१०४ पू.; **अप**.२। १०५ रञ्जि (यन्त्रि); **व्यक**.८७ उत्त., हारीतः : ८८ पू.; **पमा**.१७७ द्विजः (व्रतः); **व्यचि**.८१ पलि (पणि) याज्ञवल्क्यः; **स्मृचि**.५४ मयः (मयं); **दित**.५९५ स्मृचिवत्; **सवि**. १९६ कार (स्नाप) व्यासः; **व्यसौ**.८१ ण्डं स (ण्डम) रञ्जि (रक्षि); **वीमि**.२।१०७ सस्फु (अस्फु) रञ्जि (लक्षि) स्मृतिः; **व्यप्र**.१९६ रञ्जि (रक्षि); **व्यउ**.६१ पू.; **व्यम**.३० रञ्जि (रक्षि) पू.; **राकौ**.४२० पू.; **समु**.६० कार (ताप).

(१) **नास्मृ**.४।२९० तापे (ताप) (श्रूयतां मानवो धर्मो लोकपालैरधिष्ठितः); **अभा**.७७ तापे (ताप) (शृणोतु मानवो धर्मो लोकपालैरधिष्ठितः); **मिता**.२।१०४ (तापे तृतीये संताप्य ब्रूयात्सत्यपुरस्कृतम्) पू.; **अप**.२।१०५; **व्यक**.८७ तप्तं तं (संताप्य) तः (तम्) हारीतः; **स्मृच**.११४ तप्तं तं (संतप्तं) सत्य (सभ्य); **पमा**.१७७ तप्तं तं (ताप्यन्तं) तः (तम्) पू.; **व्यचि**.८१ तप्तं तं (तप्यन्तं); **स्मृचि**.५४-५५ (तापे तृतीये संतप्तं ब्रूयात्सत्यपुरःसरम्) ण्विमं (ण्विदं) रधि (कनि); **दित**.५९६ तप्तं तं (तप्यन्तं) तः (तम्) पू.; **सवि**. १९६ दितवत्, पूर्वार्धे व्यासः, उत्तरार्धे पितामहः; **व्यसौ**. ८१ दितवत्; **वीमि**.२।१०७ व्यचिवत्, स्मृतिः; **व्यप्र**. १९६ तः (तम्) पू. : १९९ तापे (ताप) तः (तम्); **व्यउ**. ६१ मितावत्, पू.; **व्यम**.३० व्यचिवत्, प्रथमपादः; **राकौ**. ४२१ मितावत्, पू.; **प्रका**.७२ तः (तम्) शेषं स्मृचवत्; **समु**. ६० तप्तं तं (संतप्तं).

(२) **नास्मृ**.४।२९१ मेव (मेतत्); **अभा**.७७ नास्मृवत्; **अप**.२।१०५ मेव (मग्ने) उत्त.; **व्यक**.८७ स्थो (स्थं) हारीतः; **स्मृच**.११४; **स्मृचि**.५५ स्मृचवत्; **नृप्र**.१४ मुखम् (परम्) मेव (मग्ने); **सवि**.१९६-१९७ अपवत्, पितामहः; **व्यसौ**.८१ अपवत्; **व्यप्र**.१९९ मेव (मग्ने) स्थो (स्थं); **प्रका**.७२; **समु**.६०.

(३) **नास्मृ**.४।२९२; **अभा**.७७-७८ नृते च जिह्वायाः (हृते च यज्ञासा); **अप**.२।१०५ जायते (लभ्यते); **व्यक**.८७ अपवत्, हारीतः; **स्मृच**.११४ ह्वायाः (ह्वा सा) शेषं अपवत्;

**अनेनायमिदं प्रोक्तो मिथ्या चेदमथाब्रवीत् ।**
**सर्वथा च यथा मिथ्या तथाग्निं धारयाम्यहम् ॥**
**स एष त्वां धारयति सत्येनानेन मानवः ।**
**सत्यवाक्यस्य चास्य त्वं शीतो भव हुताशन ।**
**मृषावाक्यस्य पापस्य दह हस्तौ च पापिनः ॥**

(१) इति सार्धश्लोकचतुष्टयेन धर्मसत्यश्रावणा इत्युक्ते हस्तयोस्तस्य देयोऽयःपिण्डपावकः । अभा.७८

(२) इति नारदोक्ताग्न्यभिमन्त्रणं तद्विष्णुपितामहोक्तेन अग्न्यभिमन्त्रेण विकल्प्यते । एकार्थत्वात् ।

स्मृच.११४

**अमुमर्थं च पत्रस्थमभिलिख्य यथार्थतः ।**
**श्रावितस्यैव तन्मूर्ध्नि न्यस्य देयं यथाक्रमम् ॥**

(१) यथाक्रमशब्देन प्रथमं पत्रपट्टकं मूर्ध्नि दत्त्वा पश्चादयःपिण्डं करयोरिति । अभा.७८

(२) यदा नारदोक्ताग्न्यभिमन्त्रणं क्रियते तदा तस्मिन्कृते कर्तव्यमाह स एव—अमुमिति । पूर्वोक्ताभिमन्त्रणमन्त्रार्थं शिरसि निहितपत्रस्थमन्त्रार्थं च संश्राव्य तत्पत्रं यथास्थानं निधाय लोहपिण्डो देय इत्यर्थः ।

*स्मृच.११४

**इत्युक्त्वा हस्तयोस्तस्य प्रदद्यात्पिण्डपावकम् ।**
**सुप्रतप्तं समं वृत्तं विस्फुलिङ्गार्चिरुद्धतम् ।**
**दृढं गृहीत्वा संदंशैर्विद्युन्मालासमप्रभम् ॥**
**हस्ताभ्यां तं समादाय प्राड्विवाकसमीरितः ।**
**स्थित्वैकस्मिंस्ततोऽन्यानि व्रजेत्सप्त त्वजिह्मगः ॥**
**असंभ्रान्तः शनैर्गच्छेदक्रुद्धः सोऽनलं प्रति ।**
**न पातयेत्तामप्राप्य या भूमिः परिकल्पिता ॥**

अत्र भूमिक्रमणाग्निक्षेपविधिः स्पष्ट एवाभिहितः ।

अभा.७८

**न मण्डलमतिक्रामेन्न चार्वागर्पयेत्पदम् ।**
**मण्डलं चाष्टमं गत्वा ततोऽग्निं विसृजेन्नरः ॥**

---

**स्मृचि.**५५ ह्रायाः (ह्रासा) शेषं अपवत्; **नृप्र.**१४ जिह्वायास्त्वत्तः (जिज्ञासन् यतः); **व्यसौ.**८१; **व्यप्र.**१९९ अपवत्; **प्रका.**७२ स्मृचवत्; **समु.**६० स्मृचवत्.

(१) **नास्मृ.**४।२९३; **अभा.**७८; **अप.**२।१०५ (अनेनादाविदं प्रोक्तं मिथ्या चेदमसौ वदेत्); **व्यक.**८७ हारीतः; **स्मृच.**११४ (अनेनासाविदं प्रोक्तो मिथ्यावादमसौ वदेत्); **नृप्र.**१४ च (न); **व्यसौ.**८१ (अनेनासाविदं प्रोक्तं मिथ्या चैतदसौ वदेत्); **व्यप्र.**१९९ अपवत्; **प्रका.**७२ स्मृचवत्; **समु.**६० स्मृचवत्.

(२) **नास्मृ.**४।२९४ स...यति (एष धारयते च त्वां) सत्य...त्वं (तदस्य सत्यवाक्यस्य) च पापिनः (तु शापितः); **अभा.**७८ नास्मृवत्; **अप.**२।१०५ चास्य त्वं (वाक्यत्वं); **व्यक.**८७ हारीतः; **स्मृच.**११४; **स्मृचि.**५५; **नृप्र.**१४; **सवि.**१९७ पापिनः (मायिनः); **व्यसौ.**८१ अपवत्; **व्यप्र.**१९९ पापस्य (चास्य त्वं); **प्रका.**७२; **समु.**६०.

(३) **नास्मृ.**४।२९५ न्यस्य (तस्य); **अभा.**७८ तन्मू (सन्मू) न्यस्य (तस्य); **अप.**२।१०५ लिख्य (युक्तं) उत्तरार्धे (संश्राव्यमूर्जितस्यैव न्यस्य देयो यथाक्रियम्); **व्यक.**८७ अपवत्, हारीतः; **स्मृच.**११४ लिख्य (युक्तं) उत्तरार्धे (संश्राव्य मूर्ध्नि तस्यैव न्यस्य देयो यथाक्रियम्); **स्मृचि.**५५ (पत्रस्थमर्थसंबन्धमभियुक्तं यथार्थतः । सह श्राव्यो मूर्ध्नि तस्यैव न्यसेदेवं यथाक्रियम् ॥); **दित.**५९० लिख्य (युक्तं) र्थतः (र्हतः) (संश्राव्य मूर्ध्नि तस्यैव न्यस्य देयो यथाक्रमम्); **व्यसौ.**८१ स्मृचवत्; **व्यप्र.**१९९ लिख्य (युक्तं) उत्तरार्धं दितवत्; **प्रका.**७२ स्मृचवत्; **समु.**६० स्मृचवत्.

* व्यप्र. स्मृचगतम् ।

(१) **व्यक.**८९ रुद्धतम् (भिर्वृतम्) दृढं (पिण्डं) न्माला (ज्ज्वाला); **सवि.**१९७ समं वृत्तं (असंभुग्नं) र्चिरुद्ध (ग्न्यनुद्ध) न्माला (ज्जाल) मनुः; **व्यसौ.**८१ हस्तयो (चाभिश) पिण्ड (अपि) समं वृत्तं वि (असंभुक्तम) विद्यु ...म् (बिन्दुज्वालासमन्वितम्); **समु.**६०.

(२) **नास्मृ.**४।२९६ पूर्वार्धे (स्नातश्च मण्डलस्थश्च ततः संगृह्य पावकम्) त्वजिह्मगः (शनैः शनैः); **अभा.**७८ नास्मृवत्; **अप.**२।१०६ उत्त.; **व्यक.**८९; **स्मृच.**११४ विवाक (विवाकः) सप्त (सत्य); **पमा.**१७६; **सवि.**१९८ तं (तु) रितः (पतः) यमः; **व्यसौ.**८१ तं (तत्) रितः (पतः); **व्यप्र.**२००; **व्यम.**३१; **राकौ.**४२२ तं (तत्); **प्रका.**७२; **समु.**६१.

(३) **नास्मृ.**४।२९७ न पातयेत्ताम (पातयेन्न तम) उत्त.; **अभा.**७८ न पातयेत्तामप्राप्य (पातयेन्न तमप्राप्तो) उत्त.; **अप.**२।१०६ शनै (स तै) पातयेत्ता (प्रापयेत्त); **व्यक.**८९; **स्मृच.**११५; **पमा.**१७६; **सवि.**१९८ (=) पू.; **व्यसौ.**८२; **व्यप्र.**२००; **प्रका.**७२; **समु.**६१.

(४) **नास्मृ.**४।२९९ न्न चार्वागर्प (न्नाप्यर्वाक् स्थाप) पू.: ४।२९७ मण्डलं चाष्टमं (अष्टमं मण्डलं) उत्त.; **अभा.**७८ नास्मृवत्; **व्यक.**८९ उत्तरार्धस्तु कालिकापुराणे; **स्मृच.**११५ गर्पयेत् (ग्स्थापयेत्); **पमा.**१७६; **सवि.**१९८ (=)

एकस्मिन्नाद्ये मण्डल इत्यर्थः। ततोऽन्यानि द्वितीयादीनि। अग्निविसर्जनं च नवमे मण्डले कर्तव्यम्। 'अष्टमं मण्डलं गत्वा नवमे निक्षिपेद्बुधः' इति पितामहस्मरणात्। स्मृच.११५

**यस्त्वन्तरा पातयति दग्धश्च न विभाव्यते।**
**पुनस्तं हारयेदग्निं स्थितिरेषा दृढीकृता॥**

त्रासात्पातितदिव्ये दग्धादग्धसंशये च न जयो नापराधः न पराजय इत्यर्थः। अतस्तं नरं पुनर्दिव्यं धारयेन्निःसंशयार्थमिति। अभा.७८

**तस्यैवं मुक्तपिण्डस्य कुर्यात्करनिरीक्षणम्।**
**पूर्वदृष्टेषु चिह्नेषु ततोऽन्यत्रापि लक्षयेत्॥**
**मण्डलं रक्तसंकाशं यत्रान्यद्वाऽग्निसंभवम्।**
**सोऽविशुद्धस्तु विज्ञेयोऽसत्यधर्मव्यवस्थितः॥**

यस्य करतलद्वयमध्ये यत्रकुत्रचित् आहारितं स्फोटकाद्युपलक्ष्यते तमशुद्धं विजानीयादित्यर्थः। यस्य पुनर्नोपलभ्यते स विशुद्धो विज्ञेयः। स्मृच.११५

**यत्पुनर्न विभाव्येते दग्धावेतौ करौ तदा।**
**व्रीहीन्प्रगृह्य यत्नेन सप्तवारांस्तु मर्दयेत्॥**

**मर्दितैर्यदि नो दग्धः सभ्यैरेवं विनिश्चितः।**
**मोच्यः स शुद्धः सत्कृत्य दग्धो दण्डयो यथाक्रमम्॥**
**अनेन विधिना कार्यो हुताशसमयः सदा।**
**ऋते ग्रीष्मादसावुक्तः कालेऽन्यस्मिंस्तु शीतले॥**

## नारदीयमनुसंहिता

**अतः परं प्रवक्ष्यामि लोहस्य विधिमुत्तमम्।**
**द्वात्रिंशदङ्गुलाख्यं तु मण्डलान्मडलान्तरम्॥**

अग्निरिति द्वितीयं दिव्यमुक्तं, तत् प्रस्तूयतेऽनन्तरम्। लोहाधारत्वाल्लोह इत्यग्निरुच्यते, तस्य विधिं वक्ष्यामि। मण्डलान्मण्डलमध्यं द्वात्रिंशदङ्गुलम्। नाभा.

**मण्डलस्य प्रमाणं तु कुर्यात्तत्पदसंमितम्।**
**अष्टाभिर्मण्डलैरेवमङ्गुलानां शतद्वयम्॥**
**चतुर्विंशत्समाख्यातं भूमेस्तु परिकल्पनम्।**
**मण्डलैस्तु ततः क्लृप्तैः सोपवासः शुचिर्नरः॥**

---

उत्त.; **व्यसौ**.८२ स्मृचवत्, पू.; **व्यप्र**.२०१ स्मृचवत्; **प्रका**.७२ स्मृचवत्; **समु**.६१ स्मृचवत्.

(१) **नास्मृ**.४।२९८ (यस्तु पातयते त्रासाद्दग्धो वा न विभाव्यते) हार (धार) रेषा (रेव); **अभा**.७८ नास्मृवत्; **अप**.२।१०७; **स्मृच**.११५; **सवि**.१९८ (=) दग्धश्च न (दण्डयश्च स); **व्यप्र**.२०३; **विता**.२४४; **प्रका**.७३; **समु**.६१ पुनस्तं (पुनः सं).

(२) **अप**.२।१०७; **व्यक**.९०; **स्मृच**.११५ स्यैवं (स्यैव); **पमा**.१८१ उत्त.; **स्मृचि**.५४ स्मृचवत्, क्रमेण पितामहः; **व्यसौ**.८२; **व्यप्र**.२०१; **विता**.२४३; **प्रका**.७३ स्यैवं (स्यैव) लक्षयेत् (लक्षणम्); **समु**.६१.

(३) **अप**.२।१०७; **व्यक**.९०; **स्मृच**.११५ न्यद्वा (न्यच्चा); **पमा**.१८१ न्यद्वाऽ (न्यद) सो...ज्ञेयोऽ (यो निरुद्धस्तु विज्ञेयो); **व्यसौ**.८२ ऽवि (ऽप्य); **व्यप्र**.२०१; **विता**.२४३ विज्ञेयो ऽ (विज्ञेयः); **प्रका**.७३ स्मृचवत्; **समु**.६१ स्मृचवत्.

(४) **नास्मृ**.४।३०२; **अभा**.७८; **अप**.२।१०७ (यदा तु न विभाव्येत दग्धाविति करौ तदा। व्रीहीनतिप्रयत्नेन सप्तवारं तु मर्दयेत्॥); **व्यक**.९० पूर्वार्धं अपवत्, न्प्रगृह्य (नतिप्र); **स्मृच**.११५ पूर्वार्धे(ज्ञानेन न विभाव्यश्चेत् दग्धाविति करौ तदा) न्प्रगृह्य (नतिप्र) मर्द (दाप); **पमा**.१८१ (यदा तु न विभाव्येते दग्धाविति करौ तदा) उत्तरार्धं अपवत्; **दित**.५९८ हीन्प्रगृह्य (हिमतिप्र) रांस्तु (रांश्च) उत्त.; **व्यसौ**.८२ व्यकवत्; **व्यप्र**.२०१ पूर्वार्धं पमावत्, न्प्रगृह्य (नतिप्र); **विता**.२४३ पूर्वार्धं पमावत्, न्प्रगृह्य (नतिप्र); **प्रका**.७३ स्मृचवत्; **समु**.६१ पूर्वार्धं स्मृचवत्, (व्रीहीनतिप्रयत्नेन सप्तवारं तु दापयेत्).

(१) **नास्मृ**.४।३०३; **अभा**.७८ दग्धो दण्डयो (दण्डयो दग्धो); **अप**.२।१०७ यदि (रेव) रेवं (रेव) स शुद्धः सत्कृत्य (शुद्धः स संस्कृत्य); **व्यक**.९० र्दितैः (दिते) मोच्यः ...त्य (वाच्यः शुद्धः समाहृत्य); **स्मृच**.११५ र्दितैः (दितो) रेवं (स्त्वैवं) श्चितः (श्चितम्) स शुद्धः(शुद्धस्तु); **पमा**.१८१ र्दितैः (र्दितो) रेवं (रेव) मोच्यः...त्य (शोध्यः शुद्धः स सत्कृत्यो); **स्मृचि**.५४ र्दितैः (र्दिते) स शुद्धः (शुद्धः स); **व्यसौ**.८२ र्दितैः (र्दिते) उत्तरार्धं पमावत्; **व्यप्र**.२०१ स्मृचिवत्; **विता**.२४३ मोच्य...त्य (अदग्धश्चेत्स शुद्धः स्यात्) उत्त.; **प्रका**.७३ (मर्दितोर्थस्ततोऽदग्धः सभ्यैस्त्वेवं विनिश्चितम्); **समु**.६१ र्दितैः (र्दिते) रेवं (स्त्वेवं) स शुद्धः (शुद्धस्तु).

(२) **नास्मृ**.४।३०० ताश (ताशः) दसावुक्तः (त्सदा युक्तः) न्यस्मिंस्तु (न्यत्र सु); **अभा**.७८ नास्मृवत्; **स्मृच**.११५; **सवि**.१९९ कार्यो (धार्यो) समयः (नसमः) (ऋते ग्रीष्मादहर्व्यक्तकालेऽन्यस्मिन् सुशीतले); **प्रका**.७३; **समु**.६१.

(३) **नासं**.२०।११. (४) **नासं** २०।१२. (५) **नासं**.२०।१३.

द्वात्रिंशदङ्गुलान्यष्टौ मण्डलानि कृत्वा तेषु दूषितस्य पदमात्रं मण्डलानि कुर्यात्। अष्टानां द्वयोर्द्वयोः संधावष्टाभिर्मण्डलैश्चतुर्विंशत्यधिकमङ्गुलानां शतद्वयं भूमेः कल्पितं भवति। सप्त संधयः। द्वात्रिंशत् (अङ्गुलानि) सप्तभिर्गुणिते एतावदङ्गुलप्रमाणं भवति। एवं मण्डलानि कल्पयित्वा कृतोपवासः पूर्वेद्युः शुचिरदूषितः। नाभा.

**सवासा जलमाप्लुत्य त्वार्द्रकेशः समाहितः।**
**सप्ताश्वत्थस्य पत्राणि तथा सौत्राणि तन्तवः(?)॥**

सवासाः स्नात्वार्द्रकेशः अचिरस्नात इत्यर्थः। देवताप्रणामपरः अश्वत्थपत्राणि सप्त हस्ते कृत्वा सूत्रस्य तन्तून् सप्त। नाभा.

**[२]हुताशतप्तं लोहस्य पञ्चाशत्पलिकं समम्।**
**हस्ताभ्यां पिण्डमादाय व्रजेत् सप्त शनैः शनैः॥**

लोहस्य पञ्चाशत्पलप्रमाणमग्निना तप्तं हुताशन इवातप्तमग्निवर्णमित्यर्थः, समं निम्नोन्नतवर्जं पिण्डमुपरि कृत्वा साश्वत्थपर्णसूत्राभ्यां हस्ताभ्यामादाय सप्तसु संधिषु कृतेषु मण्डलेषु पादं निदधदत्वरमाणो गच्छेत्। नाभा.

**[३]न मण्डलमतिक्रामेन्नाप्यर्वाक् स्थापयेत्पदम्।**
**न पातयेत्तामप्राप्तो यावद्भूः परिकल्पिता॥**

मण्डले पदमनिदधन्नातिक्रामेत् मण्डले पदं निदध्यात्। यावच्च भूः परिकल्पिता तस्या अन्तमप्राप्तो न लोहं पातयेत्। नाभा.

**[४]भयात्पातयते यस्तु दग्धो वा न विभाव्यते।**
**पुनस्तं हारयेल्लोहं स्थितिरेवं दृढीकृता॥**

भयाद् अन्तरा त्रस्तः पातयेत्, दग्धो वा न दग्धो वेति न निश्चीयते, तं पुनरेतेन प्रकारेण लोहं हारयेत्। एवं स्फुटं भवति। नाभा.

**[५]तीर्त्वानेन विधानेन मण्डलानि कृतानि तु।**
**न दग्धः सर्वथा यस्तु स विशुद्धो भवेदिह॥**

अनेन विधानेन मण्डलान्यतिक्रम्य न दग्धो यः स शुद्धः। नाभा.

**[६]अनेन विधिना कार्यो हुताशसमयः सदा।**

(१) नासं.२०।१४. (२) नासं.२०।१५. (३) नासं.२०।१६. (४) नासं.२०।१७. (५) नासं.२०।१८. (६) नासं.२०।१९.

**त्वमेव सर्वभूतानामन्तरश्चसि नित्यशः॥**
**प्रच्छन्नानि मनुष्याणां पापानि सुकृतानि च।**
**त्वमेव देव! जानीषे न विदुर्यानि मानवाः॥**
**[२]व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति।**
**तदेनं संशयारूढं धर्मतस्त्रातुमर्हसि॥**

त्वमग्ने सर्वभूतानामिति मन्त्रमुक्त्वा यथोक्तेन विधानेन लोहं हस्ते दद्यात्। गतार्थो मन्त्रः। नाभा.

## कात्यायनः

**[३]प्रस्खलत्यभियुक्तश्चेत्स्थानादन्यत्र दह्यते।**
**न दग्धं तं विदुर्देवास्तस्य भूयोऽपि दापयेत्॥**

दाहस्य स्थानं हस्तौ, ततोऽन्यत्रावयवे दग्धस्य पुनर्दापयेदित्यर्थः। अप.२।१०७

## पितामहः

**[४]अग्नेर्विधिं प्रवक्ष्यामि यथावच्छास्त्रचोदितम्।**
**कारयेन्मण्डलान्यष्टौ पुरस्तान्नवमं तथा॥**

(१) अत्र प्राक्संस्था मण्डलपङ्क्तिरार्जववती कार्या। अप.२।१०६

(२) प्रख्यातदेवायतनादिविहितदेशे भूशुद्धिमुद्धननावोक्षणाभ्यां कृत्वा तत्र नवमण्डलानि प्रागपवर्गाणि प्राड्विवाकः सोपवासो नृपाज्ञया प्रवृत्तः कुर्यादित्यर्थः। स्मृच.१११

(१) नासं.२०।२०. (२) नासं.२०।२१.

(३) **मिता**.२।१०७ त्वभियुक्त (त्वभिशस्त) न द (अद); **अप**.२।१०७; **व्यक**.८९-९०; **स्मृच**.११५; **पमा**.१८१ प्र...क्तः (प्रज्वालेनाभिशस्तः) न द (अद) ऽपि (न); **दीक**.४१ स्मृचवत्; **व्यचि**.८१ न्यत्र दह्यते (न्यत्तु दाहयेत्) याज्ञवल्क्यः; **दित**.५९८ त्वभि (त्वभि); **सवि**.१९९ प्रस्खलत्यभियुक्तः (न स्खलत्यभिशस्तः) न द (अद); **व्यसौ**.८२ दग्धं तं (तं दग्धं); **व्यप्र**.२०३ व्यसौवत्; **व्यउ**.६२ लत्य (लन्न) न दग्धं तं (अदग्धं तु); **व्यम**.३१ दग्धं तं (तद्दग्धं); **विता**.२४४ भियु (भियु) दग्धं तं (तं दग्धं); **प्रका**.७३; **समु**.६१ व्यसौवत्.

(४) **मिता**.२।१०६ उत्त.; **अप**.२।१०६; **व्यक**.८६; **स्मृच**.१११; **पमा**.१७५ प्रजापतिः; **दित**.५९४ चोदितम् (भाषितम्); **सवि**.१९३ (=) वच्छास्त्र (शास्त्रप्र); **व्यसौ**.७९ शास्त्र (वेद); **व्यप्र**.१९३; **व्यउ**.६१ उत्त.; **व्यम**.२९; **राकौ**.४१८; **बाल**.२।१०६; **प्रका**.७०; **समु**.५९.

[1]आग्नेयं मण्डलं त्वाद्यं द्वितीयं वारुणं स्मृतम् ।
तृतीयं वायुदैवत्यं चतुर्थं यमदैवतम् ॥
[2]पञ्चमं त्विन्द्रदैवत्यं षष्ठं कौबेरमुच्यते ।
सप्तमं सोमदैवत्यं सावित्रं त्वष्टमं तथा ॥
[3]नवमं सर्वदैवत्यमिति दिव्यविदो विदुः ॥
[4]गोमयेन कृतानि स्युरद्भिः पर्युक्षितानि च ॥
[5]द्वात्रिंशदङ्गुलं प्राहुर्मण्डलान्मण्डलान्तरम् ।
अष्टाभिर्मण्डलैरेवमङ्गुलानां शतद्वयम् ॥

(१) मिता.२।१०६ त्वा (चा); अप.२।१०६ स्मृतम् (तथा); व्यक.८६ अपवत्; स्मृच.११२ दै (दे); पमा. १७५ त्वा (चा)स्मृतम् (तथा) प्रजापतिः; स्मृचि.५४; दित. ५९४; सवि.१९३ (=); व्यसौ.७९; व्यप्र.१९३ अपवत्; व्यउ.६१; व्यम.२९ पमावत्; राकौ.४१८ पमावत्; प्रका. ७० दै (दे); समु.५९ दै (दे.)

(२) मिता.२।१०६; अप.२।१०६ दै (दे) सा ... तथा (अष्टमं शर्वदैवतम्); व्यक. ८६ सा ... तथा (अष्टमं सर्वदैवतम्); स्मृच.११२ दै (दे); पमा.१७५ व्यकवत्, प्रजापतिः; स्मृचि.५४; दित.५९४ त्व (अ); सवि.१९३ (पञ्चमं त्वैन्द्रदैवत्यं मण्डलं तूच्यते बुधैः । कौबेरमुच्यते षष्ठं सप्तमं सोमदैवतम् ॥ ); व्यसौ.७९ व्यकवत्; व्यप्र.१९३-१९४ अपवत्; व्यउ.६२; व्यम.२९; राकौ.४१८ मं त्वि (ममि) सावि. ... तथा (अष्टमं सर्वदैवतम्); प्रका.७० दै (दे); समु.५९ दै (दे) तथा (स्मृतम्).

(३) मिता.२।१०६; अप.२।१०६ (पुरस्तान्नवमं यत्तु तन्महत् पार्थिवं विदुः); व्यक.८६ अपवत्; स्मृच.११२ दै (दे) दिव्य (वेद); पमा.१७५ (पुरस्तान्नवमं यत्तु तन्महद्दैवतं विदुः) प्रजापतिः; स्मृचि.५४; दित.५९४ पुरस्तान्नवममित्याद्यधिकं पठितम्; सवि.१९३ (=) (आदित्यमष्टमं चैव नवमं सर्वदैवतम् । एतानि मण्डलान्यष्टाविति शास्त्रविदो विदुः ॥); व्यसौ.७९ अपवत्; व्यप्र.१९४ अपवत्; व्यउ.६१; व्यम.२९ दिव्य (वेद); विता.२३५ अपवत्; राकौ.४१८ (पुरस्तान्नवमं यत्तु तन्महत्परमं विदुः); प्रका.७० स्मृचवत्; समु.५९ स्मृचवत्.

(४) अप.२।१०६ क्षिता (षिता); व्यक.८६; स्मृच. १११; पमा.१७५ प्रजापतिः; दित.५९४; व्यसौ.७९; व्यप्र.१९४; व्यम.२९; विता.२३५; राकौ.४१८; समु.५९.

(५) मिता.२।१०६; अप.२।१०६ लं प्रा (लान्या) पू.; व्यक.८६ पू.; पमा.१७५ लं प्रा (लान्या) लानां (लीनां)

[1]षट्पञ्चाशत्समधिकं भूमेस्तु परिकल्पना ।
कर्तुः पदसमं कार्यं मण्डलं तु प्रमाणतः ॥

(१) तन्नवमं सर्वदैवत्यमपरिमिताङ्गुलप्रमाणं मण्डलं विहायाष्टाभिर्मण्डलैश्चान्तरालैः प्रत्येकं षोडशाङ्गुलप्रमाणैरङ्गुलानां षट्पञ्चाशदधिकं शतद्वयं संपद्यते । तत्रापि गन्तव्यानि सप्तैव मण्डलानि । यतः प्रथमे तिष्ठति नवमे क्षिपतीति न विरुध्यते अङ्गुलप्रमाणं च 'तिर्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः । प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुलः ॥ हस्ते वितस्तिद्वितयं दण्डो हस्तचतुष्टयम् । तत्सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयम्' ॥ इति बोद्धव्यम् । मिता.२।१०६

(२) अग्निरत्र पूज्यत इत्याग्नेयं हविष्ट्वेन सूक्तत्वेन वा मण्डलस्याग्नेयत्वासंभवात् । एवं वारुणत्वादिकमपि मण्डलस्य पूजाधिकरणतया द्रष्टव्यम् । तेन 'प्रैतु होतुश्चमस' इत्यादि प्रैषमन्त्रस्थया होतुश्चमस इत्यादिसमाख्यया होत्रादीनां तत्र तत्र चमसे भक्षणप्रतिविदाग्नेयादिसमाख्ययैवाग्न्यादीनां तत्र तत्र मण्डले पूजनं कार्यमित्यस्मादेव वचनात्सिद्धम् । अतो मण्डलानां प्रोक्षणानन्तरं मण्डलाधिदेवतापूजनं कुर्यात् । *स्मृच.११२

[2]मण्डले मण्डले देयाः कुशाः शास्त्रप्रचोदिताः ।
विन्यसेच्च पदं कर्ता तेषु नित्यमिति स्थितिः ॥

* व्यप्र. स्मृचगतम् ।

प्रजापतिः; नृप्र.१४ पमावत्; दित.५९४ पमावत्; सवि. १९४ लानां (लीनां) उत्त., हारीतः :१९४ लान् (लं); व्यसौ. ७९ त्रिंशद (विंशत्य) लं प्रा (लान्या) पू.; व्यप्र.१९४; व्यउ. ६२; व्यम.३०; विता.२३४ पू.; समु.५९.

(१) मिता.२।१०६ धिकं (धिक); अप.२।१०६ उत्त.; व्यक.८७ उत्त.; पमा.१७५ पू., प्रजापतिः; नृप्र.१४ पू.; दित.५९४–५९५ पद (पाद); सवि.१९४ पू., हारीतः : १९४; व्यसौ.७९ उत्त.; व्यप्र.१९४–१९५; व्यउ.६२; व्यम.३० पू.; विता.२३४ उत्त.; समु.५९.

(२) मिता.२।१०६ पू.; अप.२।१०६ च (तु); व्यक. ८७; स्मृच.११२ पू.; पमा.१७५ पू.; दित.५९५ (=) च (तु); व्यसौ.८० शास्त्रप्रचोदिताः (शास्त्रोपदेशिताः); व्यप्र. १९५; व्यउ.६२ पू.; व्यम.३० (=) कर्ता तेषु (तेषु कर्ता); बाल.२।१०६ व्यमवत्, उत्त.; समु.५९ व्यमवत्.

**शान्त्यर्थं जुहुयादग्नौ घृतमष्टोत्तरं शतम् ॥**

होमश्च 'अग्नये पावकाय स्वाहा' इत्यनेन मन्त्रेण कार्य इत्युक्तं व्याख्यातृभिः। स्मृच.११२

[2] **अस्रहीनं समं कृत्वा अष्टाङ्गुलमयोमयम्।**
**पिण्डं तु तापयेदग्नौ पञ्चाशत्पलिकं समम् ॥**

सममस्रिहीनं समन्ततः कोणरहितं समवृत्तमिति यावत्। अष्टाङ्गुलं अष्टाङ्गुलविस्तारं, पञ्चाशत्पलिकं पञ्चाशत्पलपरिमितं समं तापयेदित्यन्वयः। सर्वतस्तापयेदित्यर्थः। व्यप्र.१९६

[3] **तत्र पूजां हुताशस्य कारयेन्मनुजाधिपः।**
**रक्तचन्दनधूपाभ्यां रक्तपुष्पैस्तथैव च ॥**

हुताशनस्य लोहपिण्डाग्नौ आवाहितस्य धर्मस्येति यावत्। रक्तचन्दनं च धूपश्च रक्तचन्दनधूपौ ताभ्याम्। इन्द्राद्याराधनसाधनेषु नायं नियमः। हुताशस्येति विशेषितत्वात्। स्मृच.११२

[4] **पश्चिमे मण्डले तिष्ठेत्प्राङ्मुखः प्राञ्जलिः शुचिः।**
**लक्षयेयुः क्षतादीनि हस्तयोस्तस्य कारिणः ॥**
[5] **करौ प्रमृदितव्रीही तस्यादावेव लक्षयेत् ॥**

**सप्तपिप्पलपत्राणि अक्षतान्सुमनो दधि।**
**हस्तयोर्निक्षिपेत्तत्र सूत्रेणावेष्टनं तथा ॥**

सुमनसः कुसुमानि। सूत्रेणेति जातावेकवचनम्। व्यप्र.१९८

[2] **पिप्पलाज्जायते वह्निः पिप्पलो वृक्षराट् स्मृतः।**
**अतस्तस्य तु पत्राणि हस्तयोर्विन्यसेद्बुधः ॥**

(१) यस्मात्प्रशस्तोऽश्वत्थस्तस्मात्तत्पत्राण्येव सति संभवे ग्राह्याणीत्यर्थः। शमीपत्रादीनि पुनः पूर्वोक्तपत्रैः सह समुच्चीयन्ते। स्मृच.११३

(२) अपरे तु शमीपत्रादीनां अर्कपत्रपक्षेऽनुप्रवेशो नास्तीत्येवम्परमित्याहुः। सवि.१९६

[3] **तापिते तु ततः पश्चात् अग्निमावाहयेच्छुचिः।**
**आवाहनं तु देवानां कृत्वा पूर्वं विधानवत् ॥**
[4] **त्वमग्ने वेदाश्चत्वारस्त्वं च यज्ञेषु हूयसे।**
**त्वं मुखं सर्वदेवानां त्वं मुखं ब्रह्मवादिनाम् ॥**

---

(१) **स्मृच**.११२; **पमा**.१७७ स्मरणम्; **दित**.५९६ (=); **व्यप्र**.१९५ स्मरणम्; **व्यम**.३० स्मरणम्; **प्रका**.७०; **समु**.५९.

(२) **मिता**.२।१०५; **अप**.२।१०५ अस्र (अश्रि); **व्यक**.८८ पलि (पणि); **स्मृच**.११२ अस्र (अश्रि) पलि (पल); **पमा**.१७६ (असंयतं चास्रहीनं पञ्चाशत्पलिकं समम्। पिण्डं तु तापयेदग्नावष्टाङ्गुलमयोमयम् ॥); **दित**.५९६ समं (तथा); **सवि**.१९६ अस्र (अश्रि) कृत्वा (कुर्यात्) समम् (स्मृतम्) प्रजापतिः; **व्यसौ**.८० अस्र (अस्रि); **व्यप्र**.१९६ व्यसौवत्; **व्यउ**.६१ व्यसौवत्; **व्यम**.३० व्यसौवत्; **राकौ**.४२०; **बाल**.२।१०५; **प्रका**.७०; **समु**.५९.

(३) **स्मृच**.११२; **व्यप्र**.१९६-१९७ धूपाभ्यां (माल्यैश्च); **व्यम**.३०; **विता**.२३६; **प्रका**.७१; **समु**.५९.

(४) **अप**.२।१०३:२।१०६ पू.; **व्यक**.८८ येयुः (येत्); **स्मृच**.११२ पू.; **दित**.५९५ (=); **सवि**.१९५ (=) कारि (हारि) उत्त.; **व्यसौ**.८०; **व्यप्र**.१९५ तिष्ठेत् (स्थित्वा) पू.: १९७ पश्चि (प्रथ); **व्यम**.३० पश्चि (प्रथ); **प्रका**.७१ पू.; **समु**.५९ स्तस्य (रथि).

(५) **अप**.२।१०३ प्र (वि); **व्यक**.८८; **व्यसौ**.८०.

(१) **मिता**.२।१०३; **अप**.२।१०३ (सप्त पिप्पलपत्राणि शमीपत्राण्यथाक्षतान्। हस्तयोर्निक्षिपेत्तत्र तन्तून् सूत्रस्य सप्त च ॥); **व्यक**.८८ क्रमेण नारदः; **स्मृच**.११३ पू.; **पमा**.१८० तान् (ताः); **स्मृचि**.५४; **दित**.५९५ तान् (तं) णा (ण); **सवि**.१९५ ष्टनं (ष्टितं); **व्यसौ**.८० अपवत्; **व्यप्र**.१९८ अक्ष (चाक्ष); **व्यम**.३१ णा (ण); **प्रका**.७१ पू.; **समु**.६० तान् (तं) णा (ण) नं त (येत्).

(२) **मिता**.२।१०३; **व्यक**.८८ क्रमेण नारदः; **स्मृच**.११३ विन्यसेत् (निक्षिपेत्); **पमा**.१८० स्मृचवत्; **सवि**.१९६ स्मृचवत्; **व्यसौ**.८० (=) (अतस्तस्य पलाशानि नियोज्यानि मनीषिभिः।); **व्यप्र**.१९८ (=) स्मृचवत्; **प्रका**.७१ स्मृचवत्; **समु**.६० पत्राणि (पर्णानि) शेषं स्मृचवत्.

(३) **अप**.२।१०५ तापिते तु (तापयित्वा) पू.; **व्यक**.८८ अपवत्; **स्मृच**.११३; **व्यसौ**.८१ पू.; **व्यप्र**.१९८ वं (वं) वत् (वित्); **प्रका**.७१-७२; **समु**.६० वत् (वित्).

(४) **मिता**.२।१०४; **अप**.२।१०५; **व्यक**.८८ (त्वं मुखं सर्वयज्ञानां त्वं च यज्ञेषु हूयसे) नारदः; **स्मृच**.११४ वेदाः (देवाः); **पमा**.१७७ त्वं च (पञ्च) नारदः; **स्मृसा**.१२७ त्वं मुखं ब्रह्मवादिनाम् (उदरस्थोऽसि पावक); **व्यनि**.१२ [मयारामः] ब्रह्म (वेद); **नृप्र**.१४ पू.; **दित**.५९६,५९८ (=), ६०८ (=); **व्यसौ**.८१; **व्यप्र**.१९८; **व्यउ**.६२ वेदाः (देवाः) ज्ञेषु (ज्ञेन); **व्यम**.३२ (=); **विता**.२३७ (=); **प्रका**.७२ स्मृचवत्; **समु**.६०.

(१) प्राड्विवाकस्तु मण्डलभूभागाद्दक्षिणप्रदेशे लौकिकमग्निमुपसमाधाय 'अग्नये पावकाय स्वाहा' इति आज्येनाष्टोत्तरशतवारं जुहुयादग्नौ । 'घृतमष्टोत्तरं शतम्' इति स्मरणात् । हुत्वा च तस्मिन्नग्नावयःपिण्डं प्रक्षिप्य तस्मिंस्ताप्यमाने धर्मावाहनादिहवनान्तं पूर्वोक्तविधिं विधाय तृतीये तापे वर्तमाने अयःपिण्डमग्निमेभिरभिमन्त्रयेत् त्वमग्ने इत्यादिभिः । +मिता.२।१०४

(२) देवानां धर्मादीनां आवाहनग्रहणमावाहनादेः शोध्यकरसंस्कारकुसुमविधानान्तस्य कर्मण उपलक्षणार्थम् । स्मृच.११४

(३) विष्णुस्तु 'त्वमग्ने सर्वभूतानाम्' इत्यादि 'धर्मतस्त्रातुमर्हसि' इत्यन्तं पितामहवचनवदेवाभिमन्त्रणे मन्त्रमाह । तदस्य मन्त्रस्य समुच्चयेनाभिमन्त्रणसाधनत्वं न तु विकल्पेन । प्रार्थनीयार्थस्य शोध्यव्यक्तिविशेषनिष्ठतया प्रकाशनेन भिन्नकार्यत्वात् । पितामहेन एकवाक्यतया पठनाच्च । व्यप्र.१९९

**[१]जठरस्थो हि भूतानां ततो वेत्सि शुभाशुभम् ।**
**पापं पुनासि वै यस्मात्तस्मात्पावक उच्यसे ॥**
**[२]पापेषु दर्शयात्मानमर्चिष्मान् भव पावक ।**
**अथवा शुद्धभावेषु शीतो भव हुताशन ॥**

+दित. मितागतम् ।

(१) मिता.२।१०४; अप.२।१०५ जठ (उद) हि (ऽसि); व्यक.८८ जठ (उद) भम् (भे) पं (पात्) नारदः; स्मृच. ११४; पमा.१७७ ततो (तथा) से (ते); स्मृसा.१२७ पूर्वार्धे (भूतानां त्वं ततो वेत्सि गुह्यकर्म शुभाशुभम्) से (ते); व्यनि.१२ [मयारामः]; दित.५९६,५९९,६०९ से (ते); सवि.१९७ उत्त.; व्यसौ.८१ पापं (लोकं) से (ते) शेषं अपवत्; व्यप्र.१९८ पं (पात्); व्यउ.६२ (=) से (ते); व्यम.३२ (=); विता.२३७ (=) से (ते); प्रका.७२; समु.६०.

(२) मिता.२।१०४; अप.२।१०५ हुताशन (महाबल); व्यक.८८ नारदः; स्मृच.११४ हुताशन (महानल); पमा. १७८ नारदः; स्मृसा.१२७ वेषु (वेन); व्यनि.१२ [मयारामः]; दित.५९६:५९९ (=) वेषु (वेन) :६०९ वेषु (वेन); सवि.१९७ (=) वेषु (वेन); व्यसौ.८१ पू.; व्यप्र.१९९ वेषु शीतो (वेन शान्तो); व्यउ.६२-६३ भव पा (तेन पा); व्यम.३२ शीतो (शुद्धो); विता.२३७ (=); प्रका.७२ स्मृचवत्; समु.६० स्मृचवत्.

**[१]त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत् ।**
**त्वमेव देव जानीषे न विदुर्यानि मानवाः ॥**
**[२]त्वमग्ने सर्वभूतानामन्तश्चरसि पावक ।**
**[३]साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं कवे मम ॥**
**व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ।**
**तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥**
**[४]ततस्तं समुपादाय राजा धर्मपरायणः ।**
**संदंशेन नियुक्तो वा हस्तयोस्तस्य निक्षिपेत् ॥**

संदंशेन तं लोहपिण्डं समादायेत्यन्वयः । नियुक्तः प्राड्विवाकः । स्मृच.११४

**[५]त्वरमाणो न गच्छेत स्वस्थो गच्छेच्छनैः शनैः ।**
**न मण्डलमतिक्रामेन्नाप्यर्वाक् स्थापयेत्पदम् ॥**
**[६]अष्टमं मण्डलं गत्वा नवमे निक्षिपेद् बुधः ॥**

(१) मिता.२।१०४ भूता (देवा); व्यक.८८ व देव जा (वाग्ने विजा); पमा.१७८ त्वमग्ने (त्वमेव) मव (मग्ने); व्यचि. ८१ व देव (वाग्ने वि); व्यनि.१२ [मयारामः] नवाः (नुषाः); दित.५९६,५९९; सवि.१९७ नारदः; वीमि.२।१०७ व्यचिवत्, स्मृतिः; व्यप्र.१९९; व्यउ.६३ व्यनिवत्; व्यम. ३२; विता.२३७ व्यनिवत्; प्रका.७१ मेव (मग्ने).

(२) व्यनि.१२ [मयारामः]; दित.५९६,५९९ (=) वे (रे); मच.८।११६; व्यउ.६३ (=); व्यम.३२; विता.२३७-२३८ (=) साक्षिवत् (साक्षी त्वं).

(३) मिता.२।१०४; व्यचि.८१ नुषः (नवः) नं (वं) सि (ति); व्यनि.११ [मयारामः]; स्मृचि.५६ मर्हसि (मिच्छति); व्यप्र.१९९.

(४) व्यक.८१ तं (तत्); स्मृच.११४; पमा.१८० क्तो वा (क्तोऽथ) तस्य (तत्र); नृप्र.१४; दित.५९७ तस्य (ह्यस्य); व्यसौ.८१ दं (दे); व्यप्र.२००; व्यम.३१ दं (दे); प्रका.७२ दं (दे); समु.६०.

(५) मिता.२।१०६उत्त.; अप.२।१०६च्छेत(च्छेत्तु)नाप्यर्वाक्(नान्तरा); व्यक.८९; पमा.१८० नाप्यर्वाक् (नान्तरा); व्यचि.८१ स्वस्थो (सुस्थो) शेषं अपवत्; नृप्र.१४ अपवत्, पू.; दित.५९७ उत्त.; सवि.१९८ उत्त.; वीमि.२।१०७ उत्त.; व्यप्र.२०१ व्यचिवत्; व्यउ.६१ उत्त.; व्यम.३१ लमति (लान्यति) शेषं अपवत्; राकौ.४२२ अपवत्; समु.६१ अपवत्.

(६) अप.२।१०६ मे (मं); व्यक.८९; स्मृच.११५; पमा.१७६ : १८० मे निक्षिपेद् (मं स्थापयेद्); व्यचि.८१ निक्षिपेद् (स्थापयेद्); नृप्र.१४ व्यचिवत्, पू.; दित.५९७

[1]भयार्तः पातयेद्यस्तु व्रणं च न विभाव्यते ।
पुनरारोपयेल्लोहं स्थितिरेषा दृढीकृता ॥
[2]ततस्तद्धस्तयोः प्रास्येद् व्रीहीन्वा यदि वा यवान् ।
निर्विशङ्केन तेषां तु हस्ताभ्यां मर्दने कृते ।
निर्विकारे दिनस्यान्ते शुद्धिं तस्य विनिर्दिशेत् ॥

निर्विकारे करद्वये स्थिते शुद्धमिति तं निर्दिशेत् इत्यर्थः । केचिन्निर्विकारौ यदा हस्ताविति पठन्ति । तन्मते हरणानन्तरमेव मर्दनेन शुद्धिरवधारणीया । ननु 'दिनस्यान्ते शुद्धं तमिति निर्दिशेत्' इति पाठे 'मुक्त्वाऽग्निं मृदितव्रीहिरदग्धः शुद्धिमाप्नुयादि'ति याज्ञवल्क्यवचनविरोधः स्यात् । मैवं वोचः । 'प्रहृत्य परिधीन् जुहोतीति' वदानन्तर्याभावेऽपि क्त्वानिर्देशोपपत्तेः । स्मृच.११५

## हारीतः

[3]प्राङ्मुखस्तु ततस्तिष्ठेत्प्रसारितकराङ्गुलिः ।
आर्द्रवासाः शुचिश्चैव शिरस्यारोप्य पत्रकम् ॥

निक्षिपेद् (क्षेपयेद्); **व्यसौ**.८२ नारदः; **वीमि**.२।१०७; **व्यप्र**.१९५ (=), २०१; **व्यम**.३१; **राकौ**.४२२; **प्रका**.७२; **समु**.६१ निक्षिपे (विसृजे).

(१) **व्यक**.८९; **पमा**.१८०-१८१; **व्यसौ**.८२ (तथानुपातयेद्यस्तु ब्राह्मणो न विभाव्यते); **समु**.६१ रोप (हार).

(२) **अप**.२।१०७; **व्यक**.९०; **स्मृच**.१५५ ततस्तद्धस्तयोः प्रास्येत् (हृते च मर्दयेत्पश्चात्) द्धिं तस्य वि (द्धं तमिति) द्वितीयार्धं विना; **पमा**.१८१ रे (रो); **दीक**.४१; **व्यचि**.८१ वा यदि वा यवान् (अथ यवानपि) शङ्केन ते (शेषेण वै); **दित**.५९८ रे (रो) द्धिं (द्धिः) प्रथमार्धं विना; **सवि**.१९९ यदि (ऽप्यथ) शेषं स्मृचवत्, प्रथमार्द्धम्, प्रजापतिः; **व्यसौ**.८२; **व्यप्र**.२०१-२०२; **व्यम**.३१; **प्रका**.७३ स्मृचवत्, द्वितीयार्धं विना; **समु**.६१.

(३) **अप**.२।१०३; **व्यक**.८७ तु ततस्तिष्ठेत् (तत्र तिष्ठेच्च); **स्मृच**.११२; **पमा**.१७८; **दित**.५९५ (=) राङ्गुलिः (राञ्जलिः); **सवि**.१९६ व्यासः; **व्यसौ**.८० (=); **व्यप्र**.१९७; **व्यम**.३०; **प्रका**.७१; **समु**.५९.

[1]अयस्तप्तं तु पाणिभ्यां अर्कपत्रैस्तु सप्तभिः ।
अन्तर्हितं हरन् शुद्धस्त्वदग्धः सप्तमे पदे ॥

तदश्वत्थपत्रालाभविषयम् । स्मृच.११३

## स्मृत्यन्तरम्

[2]सप्त पिप्पलपत्राणि शमीपत्राण्यथाक्षतान् ।
दूर्वायाः सप्त पत्राणि दध्यक्तांश्चाक्षतान्न्यसेत् ॥
[3]शम्यक्षतं तथा दूर्वां दत्वा पत्रेषु विन्यसेत् ॥

## कालिकापुराणम्

[4]शताधपलिकं वृत्तं द्वादशाङ्गुलमायतम् ।
लोहमग्निमयं ध्मातं देयं राज्ञाऽभिशापिने ॥
[5]मण्डलानि तथा सप्त षोडशाङ्गुलमानतः ।
तावदन्तरतो गच्छेद्गत्वा नवतृणे क्षिपेत् ॥

पिण्डस्तु सतृणे नवममण्डले निक्षेप्यः । व्यम.३१

(१) **मिता**.२।१०३ (=) हरन् शुद्धस्त्व (रहःशुद्धम); **अप**.२।१०३ वृद्धः; **व्यक**.९० वृद्धः; **स्मृच**.११३ स्मृत्यन्तरम्; **पमा**.१८० स्मृत्यन्तरम्; **स्मृचि**.५४ पितामहः; **सवि**.१९५ पत्रै (पर्णै); **व्यसौ**. ८०,८२ वृद्धः; **व्यप्र**.१९८ स्मृत्यन्तरम्; **राकौ**.४२१ द्धस्त्व (द्धं त्वं) पितामहः; **प्रका**.७१ स्मृत्यन्तरम्; **समु**.६० स्मृत्यन्तरम्.

(२) **स्मृच**.११३ थाक्षतान् (थापि च); **पमा**.१८० प्त पत्रा (प्त पर्णा); **दित**.५९५ (=) थाक्षतान् (थ क्रमात्); **सवि**.१९५ क्तां...सेत् (क्तानक्षतांस्तथा) शेषं पमावत्, पितामहः; **व्यप्र**.१९८; **राकौ**.४२१ न्यसेत् (ततः) पितामहः; **प्रका**.७१ स्मृचवत्; **समु**.६० स्मृचवत्.

(३) **व्यचि**.८० शम्य (शाल्य) याज्ञवल्क्यः; **वीमि**.२।१०७.

(४) **व्यप्र**.१९६ ने (नः); **व्यम**.३० ध्मातं (ध्मानं); **विता**.२३६ ध्मातं (ध्मानं) राज्ञाऽभिशापिने (अग्नाभिशापिते); **राकौ**.४२१; **समु**. ५९.

(५) **व्यक**.८९; **दीक**.४१ चतुर्थपादः; **दित**.५९७ ल (लि) र (रि); **व्यसौ**.८२; **व्यप्र**.२०१; **व्यम**.३१; **समु**.६१ गच्छेद्गत्वा नव (गच्छन् नवमे स).

# जलविधिः

## विष्णुः

[1]अथोदकम् ।

(१) **विस्मृ**.१२।१.

[1]पङ्कशैवालदुष्टग्राहमत्स्यजलौकादिवर्जितेऽम्भसि ।

(१) **विस्मृ**.१२।२-३; **व्यक**.९१ (अभिमन्त्रितांम्भः प्रविशेत्) एतावदेव; **दित**.६०० (ऽम्भसि०) तत्रा...शेत्

तत्रानाभिमग्नस्यारागद्वेषिणः पुरुषस्यान्यस्य जानुनी गृहीत्वाभिमन्त्रितमम्भः प्रविशेत् ।
[1]तत्समकालं च नातिक्रूरमृदुना धनुषा पुरुषोऽपरः शरक्षेपं कुर्यात् ।
[2]तं चापरः पुरुषो जवेन शरमानयेत् ।
[3]तन्मध्ये यो न दृश्येत स शुद्धः परिकीर्तितः ।
अन्यथा त्वविशुद्धः स्यादेकाङ्गस्यापि दर्शने ॥
[4]त्वमम्भः सर्वभूतानामन्तश्चरसि साक्षिवत् ।
त्वमेवाम्भो विजानीषे न विदुर्यानि मानवाः ॥
[5]व्यवहाराभिशस्तोऽयं मानुषस्त्वयि मज्जति ।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥

## शङ्खः शङ्खलिखितौ च

[6]नाभिप्रमाणोदकस्थो यज्ञियवृक्षोद्भवां धर्मस्थूणामवष्टभ्य प्राङ्मुखस्तिष्ठेत् ।
[7]सदसच्च त्वमेव वरुण, उभयोः प्रतिष्ठितः, त्वयि सत्यं त्विदं देव, वरुण, त्वमेव तद् ब्रूहि वरेण्य तदादिशस्व ।

## याज्ञवल्क्यः

[8]सत्येन माऽभिरक्ष त्वं वरुणेत्यभिशाप्य कम् ।

---

(तस्य नाभिमात्रजले मग्नस्यारागद्वेषिणः पुरुषस्यान्यस्योरू गृहीत्वा अभिमन्त्रिताम्भः प्रविशेत्); **व्यसौ**.८३ (ऽम्भसि०) तत्रानाभि (नाभिमात्रे जले तस्य) (अन्यस्य०); **व्यप्र**.२०५ वर्जितेऽ (विवर्जिता) (तत्रा ... शेत्०).

(१) **विस्मृ**.१२।४; **व्यक**.९१; **दित**.६०० तत् (ततः) क्षेपं (मोक्षं). (२) **विस्मृ**.१२।५. (३) **विस्मृ**.१२।६.

(४) **विस्मृ**.१२।७ नवाः (नुषाः); **व्यक**.९१; **पमा**. १८४ मम्भः (मन्तः); **स्मृसा**.१२७ मनुः; **व्यचि**.८२ (=); **स्मृचि**.५५; **नृप्र**.१५; **व्यसौ**.८४ (=); **व्यप्र**.२०५; **विता**.२४८-२४९; **समु**.६२.

(५) **विस्मृ**.१२।८; **व्यक**.९१-९२; **पमा**.१८४; **स्मृसा**.१२७ त्वयि मज्जति (शुद्धिमिच्छति); **व्यचि**.८२ (=); **स्मृचि**.५५ र्हसि (र्हति); **नृप्र**.१५; **व्यसौ**.८४; **व्यप्र**.२०६; **विता**.२४९; **समु**.६२.

(६) **सवि**.२०२. (७) **व्यक**.९२; **व्यप्र**.२०६; **विता**. २४९ ष्ठितः + (त्वम्) त्विदं (इदं) रुण त्व (रुणस्त्व) दिशस्व (यशस्व). (८) **यास्मृ**.२।१०८; **अपु**.२५५।४३-४४ त्वं (स्व) शाप्य (शस्त); **विश्व**.२।११२ त्वं (स्व); **मिता**.; **अप**. त्वं

नाभिदघ्नोदकस्थस्य गृहीत्वोरू जलं विशेत् ॥

(१) प्रागुक्तनियमवानेव नृपब्राह्मणाधिष्ठितमुदकं गत्वा ततः — 'सत्येन माऽभिरक्षस्व वरुणे' त्येवमन्त्रेणोदकमभिमन्त्र्य नाभिप्रमाणोदकस्थस्यातिदृढस्य बलिनः पुरुषस्योरू हस्ताभ्यां गृहीत्वोदकं प्रविशेत् । पुनर्जलग्रहणमादरार्थम् । विश्व.२।११२

(२) हे वरुण, सत्येन मामभिरक्ष त्वमित्यनेन मन्त्रेण कमुदकमभिशाप्याभिमन्त्र्य नाभिदघ्नोदकस्थस्य नाभिप्रमाणोदकस्थितस्य पुरुषस्योरू गृहीत्वा शोध्यो जलं प्रविशेत् जले निमज्जेत् । एतच्च वरुणपूजायां सत्याम् । 'गन्धमाल्यैः सुरभिभिर्मधुक्षीरघृतादिभिः । वरुणाय प्रकुर्वीत पूजामादौ समाहितः' ॥ इति नारदस्मरणात् । तथा साधारणधर्मेषु धर्मावाहनादिसकलदेवतापूजाहोमसमन्त्रकप्रतिज्ञापत्रशिरोनिवेशनान्तेषु सत्सु च । तथा— 'तोय त्वं प्राणिनां प्राणः सृष्टेराद्यं तु निर्मितम् । शुद्धेश्च कारणं प्रोक्तं द्रव्याणां देहिनां तथा ॥ अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे' ॥ इति प्राड्विवाकेनोदकाभिमन्त्रणे कृते शोध्यः 'सत्येन माभिरक्ष त्वं वरुणे'त्युदकं प्रार्थयते । नाभिप्रमाणोदकस्थश्च यज्ञियवृक्षोद्भवां धर्मस्थूणामवष्टभ्य प्राङ्मुखस्तिष्ठेत् । 'उदके प्राङ्मुखस्तिष्ठेद्धर्मस्थूणां प्रगृह्य च' इति स्मरणात् । *मिता.

(३) अभिशाप्य शपथं कारयित्वा कं जलं विशेत् । दित.६०१

(४) हे वरुण, सत्येन त्वं मा मामभिरक्ष इति कं अभिप्रगाय अभिमन्त्र्य । क्वचित्तथैव पाठः । ÷वीमि.

[1]समकालमिषुं मुक्तमानीयान्यो जवी नरः ।

---

* अप, व्यप्र. मितागतम् । ÷ शेषं मितागतम् ।

(स्व) शाप्य (शास्य); **व्यक**.९१ त्वं (स्व); **पमा**.१८५; **स्मृसा**.१२७ त्वं (स्व) त्वोरू (त्वोरुं); **व्यचि**.८२ (=) त्वोरू (त्वोरुं) विशे (क्षिपे); **दित**.६००-६०१ त्वं (स्व) दघ्नो (मात्रो); **सवि**.२०१; **मच**.८।११६; **व्यसौ**.८४ वरु...म् (अभिशाप्योदकं ततः) उत्तरार्धे (नाभिदघ्नोदकस्थोरू गृहीत्वा प्रविशेज्जलम्) नारदः; **वीमि**.शाप्य (गाय) त्वोरू (त्वोरुं); **व्यप्र**.२०६; **व्यउ**.६४ (=); **व्यम**.३३ व्यासः; **विता**. २४९ प्रथमपादः; **राकौ**.४२६; **समु**.६२ शाप्य (जाप्य).

(१) **यास्मृ**.२।१०९; **अपु**.२५५।४४-४५ वी (वान्) गते (यदि); **विश्व**.२।११३ नीयान्यो (नयेचो)

**गते तस्मिन्निमग्नाङ्गं पश्येच्चेच्छुद्धिमाप्नुयात् ॥**

(१) मध्यमेन च धानुष्केण धनुषा च मध्यमेन निमज्जतः –– समकालमिति । अनिमग्नस्यैवेषुत्रये क्षिते मध्यमेषुसमीपे जविष्ठं पुरुषमास्थाप्य मज्जनसमकालमेवोदकसमीपादन्यो जविष्ठः तमिषुदेशं प्रधावन् गच्छेत् । गते च तस्मिन् पूर्वोपस्थित इषुमादाय तथैव प्रत्यागतो यद्युदकस्थितं मग्नाङ्गमदेशान्तरस्थं च पश्येत् ततः शुद्धिमाप्नुयादिति कृतव्याख्यानमेवैतत् । विश्व.२।११३

(२) निमज्जनसमकालं गते तस्मिन् जविन्येकस्मिन् पुरुषे अन्यो जवी शरपातस्थानस्थितः पूर्वमुक्तमिषुमानीय जले निमग्नाङ्गं यदि पश्यति तदा स शुद्धो भवति । एतदुक्तं भवति–– त्रिषु शरेषु मुक्तेष्वेको वेगवान् मध्यमशरपातस्थानं गत्वा तमादाय तत्रैव तिष्ठति । अन्यस्तु पुरुषो वेगवान् शरमोक्षस्थाने तोरणमूले तिष्ठति । एवं स्थितयोस्तयोस्तृतीयस्यां करतालिकायां शोध्यो निमज्जति । तत्समकालमेव तोरणमूलस्थितोऽपि द्रुततरं मध्यमशरपातस्थानं गच्छति । शरग्राही च तस्मिन्प्राप्ते द्रुततरं तोरणमूलं प्राप्यान्तर्जलगतं यदि न पश्यति तदा शुद्धो भवतीति । निमग्नाङ्गं पश्येच्चेच्छुद्धिमाप्नुयादिति वदता उन्मज्जिताङ्गस्याशुद्धिर्दर्शिता ।

अयमत्र प्रयोगक्रमः––उक्तलक्षणजलाशयसंनिधावुक्तलक्षणं तोरणं विधाय उक्तप्रमाणे देशे लक्ष्यं निधाय तोरणसंनिधौ सशरं धनुः संपूज्य जलाशये वरुणमावाह्य पूजयित्वा तत्तीरे धर्मादींश्च देवान् हवनान्तमिष्ट्वा शोध्यस्य शिरसि प्रतिज्ञापत्रमाबध्य प्राड्विवाको जलमभिमन्त्रयेत् । 'तोय त्वं प्राणिनां प्राण' इत्यादिना मन्त्रेण । अथ शोध्यः सत्येनेत्यादिना मन्त्रेण जलमभिमन्त्र्य गृहीतस्थूणस्य नाभिमात्रोदकावस्थितस्य बलीयसः पुरुषस्य समीपमुपसर्पति । अथ शरेषु त्रिषु मुक्तेषु मध्यमशरपातस्थाने मध्यमशरं गृहीत्वा जविन्येकस्मिन् पुरुषे स्थिते अन्यस्मिंश्च तोरणमूले स्थिते प्राड्विवाकेन तालत्रये दत्ते युगपद्गमनमज्जनमथशरानयनमिति। *मिता.

(३) इषुमोक्षणसमकालं वेगातिशयवान् इष्वानयनार्थं गतः तस्मिन् गते पुनरन्यस्तथाविधो मज्जनसमकालं मध्यमं शरमादायागत्य यदि दिव्यकारिणं निमग्नाङ्गं पश्यति तदा राजा तस्य शुद्धिं दिशेत् । दीक.४१

(४) जलस्थस्य पुरुषान्तरस्योरुं गृहीत्वा दिव्यकर्ता मज्जतीत्येकः कालः । तत्र बलवानेको वेगशाली प्रथमशरं गृह्णाति तादृशश्चाऽपरो मध्यमशरं गृहीत्वा मग्नमेवं दिव्यकारिणं पश्यतीति । वीमि.

## नारदः

**[१]अतःपरं प्रवक्ष्यामि पानीयविधिमुत्तमम् ।**
**हैमन्तकालादन्यत्र शिशिराच्च यथाक्रमम् ॥**
**[२]नदीषु नातिवेगासु सागरेषु वहेषु च ।**
**ह्रदेषु देवखातेषु तडागेषु सरःसु च ॥**

(१) अत्र वहानि यानि सलिलानि समुद्रनदीप्रभृतीनि तानि निषिद्धानि । यानि पुनरवहानि ह्रददेवखाततडागसरांसि तान्यादृतानि । अभा.७८

(२) नातिवेगासु स्थितिविरोधिवेगशून्यासु ।
दित.६००

**[३]तोरणं तत्र कर्तव्यं लक्ष्यलक्षणसंधये ॥**

लक्ष्यलक्षणयोः संधिरभिसंधिः परिज्ञानमिति यावत् । तत्तोरणं च निमज्जनस्थानसमीपे समदेशे शोध्यकर्मप्रमाणोच्छ्रितं कार्यम् । सवि.२०१

**[४]गत्वा तु तज्जलस्थानं तटे तोरणमुच्छ्रितम् ।**
**कुर्वीत कर्णमात्रं तु भूमिभागे समे शुचिः ॥**

---

* अप., पमा., दित., व्यप्र., व्यउ. मितागतम् ।

तस्मि (ऽन्यस्मि); **मिता.**; **अप.**नीयान्यो(नयेद्यो); **पमा.** १८५; **व्यचि.**८२ (=); **मच.**८।११६ मुक्त (क्षिप्त) च्चेच्छुद्धिमा (च्छुद्धिमवा); **वीमि.**; **व्यप्र.**२०७; **व्यउ.**६४ अपवत्; **समु.**६२ तस्मि (ऽन्यस्मि).

(१) **नास्मृ.**४।३०४; **अभा.**७८.

(२) **नास्मृ.**४।३०५; **अभा.**७८; **मिता.**२।१०८ नाति (तनु); **व्यक.**९१ साग...च ( तडागेषु सरःसु च ) (ह्रदेषु स्थिरतोयेषु कुर्यात् पुंसां निमज्जनम् ); **स्मृसा.**१२६ व्यकवत्; **स्मृचि.**५५ व्यकवत्; **दित.**६०० व्यकवत्; **व्यसौ.**८३ (ह्रदेषु स्थिरतोयेषु कार्यं पुंसां निमज्जनम्) शेषं व्यकवत्; **व्यउ.**६३ नाति (तनु) रेषु वहे (रेष्ववटे) सरःसु (सरित्सु); **विता.**२४६ नाति (तनु) शेषं व्यकवत्; **समु.**६२ नाति (तनु) तडागे (तटाके). (३) **सवि.**२०१.

(४) **मिता.**२।१०९ स्थानं (स्थान) शुचिः (शुचौ); **पमा.** १८३; **दित.**६०१ शुचिः (शुचौ); **सवि.**२०१ दितवत्; **व्यप्र.**२०४; **व्यउ.**६३ शुचिः (पु च); **व्यम.**३३ समे शुचिः (समौ शुचौ); **विता.**२४५ दितवत्; **राकौ.**४२५ दितवत्; **समु.**६२ दितवत्.

गन्धमाल्यैः सुरभिभिर्मधुक्षीरघृतादिभिः ।
वरुणाय प्रकुर्वीत पूजामादौ समाहितः ॥
क्रूरं धनुः सप्तशतं मध्यमं षट्शतं स्मृतम् ।
मन्दं पञ्चशतं ज्ञेयमेष ज्ञेयो धनुर्विधिः ॥

अङ्गुलानां सप्ताधिकं शतं सप्तशतं, क्रूरं धनुः, एवं षट्शतं पञ्चशतं च एवं चैकादशाङ्गुलाधिकं हस्तचतुष्टयं क्रूरस्य धनुषः प्रमाणम् । मध्यमस्य दशाङ्गुलाधिकम् । मन्दस्य नवाङ्गुलाधिकमित्युक्तं भवति । शराश्चानायसाग्रा वैणवाः कार्याः । मिता.२।१०९

मध्यमेन तु चापेन प्रक्षिपेच्च शरत्रयम् ।
हस्तानां तु शते सार्द्धे लक्ष्यं कृत्वा विचक्षणः ॥
न्यूनाधिके तु दोषः स्यात् क्षिपतः सायकांस्तथा ॥
नातिक्रूरेण धनुषा प्रेषयित्वा शरत्रयम् ।
पानीयमज्जनं कार्यं शङ्का यत्र न जायते ॥
ब्राह्मणः क्षत्रियो वैश्यो रागद्वेषविवर्जितः ॥

(१) **मिता**.२।१०८; **पमा**.१८४; **दित**.५९९; **सवि**.२०१; **वीमि**.२।१०९; **व्यप्र**.२०५; **व्यउ**.६४ समाहितः (विधीयते); **व्यम**.३३; **विता**.२४६ वरुणाय ( वरुणस्य ); **राकौ**.४२५; **समु**.६२ वितावत्.

(२) **नास्मृ**.४।३०७; **मिता**.२।१०९; **अप**.२।१०९; **व्यक**.९०; **पमा**.१८२; **स्मृसा**.१२६ क्रमेण पितामहः; **स्मृचि**.५५; **नृप्र**.१५; **दित**.६०० स्मृतम् (मतम्) ज्ञेय (प्रोक्त); **सवि**.२०० ज्ञेय (प्रोक्त); **व्यसौ**.८३; **व्यप्र**.२०४; **व्यउ**.६४; **व्यम**.३२; **विता**.२४५; **राकौ**.४२४; **समु**.६१ धिः (दा).

(३) **मिता**.२।१०९; **पमा**.१८२ पेच्च (पेत्तु); **स्मृसा**.१२६ पमावत्, क्रमेण पितामहः; **स्मृचि**.५५ उत्त.; **नृप्र**.१५ चक्षणः (धानतः); **सवि**.२००; **व्यप्र**.२०४; **व्यउ**.६४ नां तु (र्भ्यां च) विचक्षणः (विचित्रिणः); **व्यम**.३३; **विता**.२४५; **राकौ**.४२४; **समु**.६१.

(४) **मिता**.२।१०९; **पमा**.१८२; **स्मृचि**.५५ तु (च) क्षिप ... था (इति धर्मो व्यवस्थितः); **सवि**.२००; **व्यप्र**.२०४; **व्यउ**.६४ तु (पु); **राकौ**.४२४; **समु**.६१.

(५) **नास्मृ**.४।३०६ शङ्का ... ते (कियत्तच्च विपश्चितः); **अभा**.७८ शङ्का ... ते (कियन्तश्च विपश्चितैः); **अप**.२।१०९ प्रेष (क्षेप); **सवि**.२०१ (=) प्रेष (क्षेप) न जायते (विज्ञायते); **समु**.६१ प्रेष (क्षेप) नीय (नीये) शङ्का यत्र (यत्र शङ्का) पितामहः.

(६) **अप**.२।१०९; **व्यक**.९१; **स्मृसा**.१२७; **स्मृचि**.५५; **नृप्र**.१५; **सवि**.२०१; **व्यसौ**.८४; **व्यप्र**.२०५;

नाभिमात्रे जले स्थाप्यः पुरुषः स्तम्भवद्बली ।
तस्योरू प्रतिसंगृह्य निमज्जेदभिशापवान् ॥
पञ्चाशतो धावकानां यौ स्यातामधिकौ जवे ।
तौ च तत्र नियोक्तव्यौ शरानयनकारणात् ॥
शरप्रक्षेपणस्थानाद्युवा जवसमन्वितः ।
गच्छेत्परमया शक्त्या यत्र स्यान्मध्यमः शरः ॥
मध्यमं शरमादाय पुरुषोऽन्यस्तथाविधः ।
प्रत्यागच्छेत्तु वेगेन यतः स पुरुषो गतः ॥

**व्यम**.३३; **विता**.२४६; **राकौ**.४२५ स्तम्ब (स्थाणु); **बाल**.२।१०८; **समु**.६२.

(१) **नास्मृ**.४।३०८ प्रतिसंगृह्य (संप्रगृह्याथ); **अभा**.७८ (तस्यौरसं प्रगृह्याथ निमज्येदभिशस्तवान्); **अप**.२।१०९; **व्यक**.९१; **स्मृसा**.१२७ प्यः (प्य) रू (रुं); **स्मृचि**.५५ स्तम्भ (स्थाणु) रू (रुं); **नृप्र**.१५ त्रे (त्र) प्यः (प्य) स्तम्भ (स्थाणु) रू (रुं) संगृह्य (गृह्याथ); **सवि**.२०१ मात्रे (मात्र) प्यः पुरुषः (प्य पुरुषं) बली (स्थले); **व्यसौ**.८४ स्तम्भ (स्थाणु); **व्यप्र**.२०५ स्तम्भ ( स्थाणु ) रू (रुं); **व्यम**.३३ पू.; **विता**.२४६ व्यसौवत्, पू.; **बाल**.२।१०८ व्यसौवत्, पू.; **समु**.६२.

(२) **मिता**.२।१०९; **पमा**.१८६; **दित**.६०१ वकानां (रकाणां) कारणात् (कर्मणि); **सवि**.२०३ धाव (याव) जवे (जले) च तत्र (तत्र वि) कारणात् (कर्मणि); **व्यउ**.६४ धिकौ (धिकं); **व्यम**.३४; **राकौ**.४२७ कौ(के); **समु**.६२ धाव(याव).

(३) **नास्मृ**.४।३०९; **अभा**. ७८ पण (पणात्);**अप**.२।१०९ त्र स्यात् (त्रासौ); **व्यक**.९२ अपवत्, पितामहनारदौ; **स्मृसा**.१२७ पू.; **स्मृचि**.५५ शक्त्या (भक्त्या) त्र स्यात् (त्रासौ) नारदपितामहौ; **नृप्र**.१५ त्र स्यात् (त्रासौ); **दित**.६०१ अपवत्; **व्यसौ**.८५ पण (पणात्) त्र स्यात् (त्राऽसौ) शरः (स्मृतः;) **व्यप्र**.२०७ अपवत्; **व्यम**.३३ अपवत्, नारदपितामहौ; **राकौ**.४२८ अपवत्; **बाल**.२।१०९ अपवत्; **समु**.६२अपवत्.

(४) **नास्मृ**.४।३१० शरमादाय (तु शरं गृह्य) त्तु (त); **अभा**.७९ नास्मृवत्; **अप**.२।१०९; **व्यक**.९२ पितामहनारदौ; **व्यचि**.८२ (=) यतः स (नयतः) गतः (धृतः); **स्मृचि**.५५ नारदपितामहौ; **नृप्र**.१५; **दित**.६०१; **व्यसौ**.८५; **व्यप्र**.२०७; **व्यम**.३३ नारदपितामहौ; **राकौ**.४२८; **बाल**.२।१०९ ऽन्य (य); **समु**.६२.

[1]आगतस्तु शरग्राही न पश्यति यदा जले ।
अन्तर्जलगतं सम्यक् तदा शुद्धिं विनिर्दिशेत् ॥
[2]अन्यथा न विशुद्धः स्यादेकाङ्गस्यापि दर्शनात् ।
स्थानाद्वाऽन्यत्र गमनाद्यस्मिन्पूर्वं निवेशितः ॥

(१) अत्र षड्भिः श्लोकैर्जलदिव्यविधिरभिहितः । स्पष्ट एव न किञ्चिद्व्याख्यानसापेक्षं...... । अभा.७९

(२) एकाङ्गस्यापि दर्शनादिति कर्णाद्यभिप्रायेण । दित.६७१

[3]सत्यानृतविभागस्य तोयाग्नी स्पष्टकृत्तमौ ।
अद्भ्यश्चाग्निरभूद्यस्मात्तस्मात्तोये विशेषतः ॥
[4]क्रियते धर्मतत्त्वज्ञैर्दूषितानां विशोधनम् ।
तस्मात्सत्येन भगवन् जलेश त्रातुमर्हसि ॥

अनेन श्लोकद्वयेन जलदेवताधिवासनमुक्तम् । इति ऋणादाने उदकदिव्यविधिभेदः । अभा.७९

## नारदीयमनुसंहिता

[5]अतःपरं प्रवक्ष्यामि पानीयविधिमुत्तमम् ।
नातिक्रूरेण धनुषा प्रेरयित्वा शरत्रयम् ॥

अतःपरमुदकविधिरुच्यते । नातिखरेण नातिमृदुना मध्यमेन च धनुषा शरत्रयं क्षिप्त्वा । नाभा.

[6]पानीये मज्जयेद्यस्तु शङ्कायां प्रतिवर्तते ।

(१) **नास्मृ.**४।३११ तस्तु (तश्च) लगतं (लं यदा); **अभा.**७९ नास्मृवत्; **अप.**२।१०९ द्धिं (द्धं); **व्यक.**९२ नारदपितामहौ; **स्मृचि.**५५ अपवत्, नारदपितामहौ; **दित.**६०१; **व्यसौ.**८४ अपवत्; **व्यम.**३३ यदा (तथा) द्धिं (द्धं) नारदपितामहौ; **राकौ.**४२८ अपवत्; **समु.**६२.

(२) **नास्मृ.**४।३१२; **अभा.**७९; **अप.**२।१०९ द्धः (द्धिः) नात् (ने); **व्यक.**९२ पितामहनारदौ; **स्मृसा.**१२७ नात् (ने) क्रमेण बृहस्पतिः; **नृप्र.**१५; **दित.**६०१ शितः (शयेत्); **व्यसौ.**८४ द्धः (द्धिः) पू.; **व्यप्र.**२०८; **व्यम.**३३ नारदपितामहौ; **राकौ.**४२८.

(३) **नास्मृ.**४।३१६; **अभा.**७९ गस्य (व्येऽर्थे); **व्यक.**९२; **व्यसौ.**८४-८५ (=); **व्यप्र.**२०६; **विता.**२४९ ग्नी (ग्निः) त्तमौ (न्मतः) अद्भ्य ...स्मात् ( अदभ्रोऽग्निरनुष्णः स्यात् ); **राकौ.**४२६.

(४) **नास्मृ.**४।३१७; **अभा.**७९ जले (कुले); **व्यक.**९२; **व्यसौ.**८५ (=); **व्यप्र.**२०६; **विता.**२४९; **राकौ.**४२६.

(५) **नासं.**२०।२२. (६) **नासं.**२०।२३.

मध्यमस्तु शरो यः स्यात् पुरुषेण बलीयसा ॥
[1]प्रत्यानीते तु तेनाथ तस्य शुद्धिर्भविष्यति ॥

पानीये मज्जयेद्, यस्त्वाशङ्कितः पुरुषः ततः पूर्वं शरत्रये प्रेरिते मध्यमो यः नातिदूरे नातिनिकटे पुरुषेण बलीयसा तत्रस्थेन गत्वानीते तस्मिन् तेन तस्य शुद्धिः, तावद् यदि नोन्मज्जेत् । अथोन्मज्जत्यशुद्धः । नाभा.

[2]स्त्रियस्तु न बलात्कार्या न पुमांसोऽतिदुर्बलाः ।
भीरुत्वाद् योषितो मृत्युर्निरुत्साहतया कृशः ॥

स्त्रियोऽनिच्छन्त्यो न बलात्कार्याः, पुरुषश्चातिदुर्बलः । यदि स्वेच्छया कुर्वन्ति तदा न दोषः । भीरुत्वात् स्त्री म्रियते दुर्बलत्वाच्च पुरुषः ।

[3]वारिमध्ये मनुष्यस्य अङ्गं यदि न दृश्यते ।
अतोऽन्यथा न शुद्धः स्यादेकाङ्गमपि दर्शयन् ॥

उदकमध्ये निमग्नस्य यद्येकमप्यङ्गं न दृश्यते ततः शुद्ध इति सामर्थ्यात् । अतोऽन्यथा यत्किञ्चिदप्यङ्गं दर्शयन्नशुद्धः स्यात् । नाभा.

[4]स्थानादन्यत्र वा गच्छन् यस्मिन्पूर्वं निवेशितः ।
तोयमध्ये मनुष्यस्य गृहीत्वोरू सुसंयतः ॥
लग्नस्तु निश्चलस्तिष्ठेद्यावत् प्राप्तस्तु सायकः ।
(प्राप्तं तु सायकं दृष्ट्वा जलादुत्थाय प्राङ्मुखम्?)

यस्मिन् स्थान उदकमध्ये पूर्वं निमज्जितः तस्मादन्यत् स्थानं गच्छन् न शुध्यतीति पूर्वशेषः । तस्य मनुष्यस्य गृहीत्वोरुदेशं तथा निश्चलस्तिष्ठेद् यावच्छर आनीत इति । नाभा.

[5]आनीतं तु शरं दृष्ट्वा जलादुत्थाय प्राङ्मुखः ।
प्रणिपत्य नृपं गच्छेत् सर्वांश्चैव सभासदः ॥

प्रणिपत्य नमस्कृत्य नृपं सभासदश्च शुद्धो गच्छेद् यथेष्टम् । नाभा.

[6]त्वमम्भः ! सर्वभूतानामन्तश्चरसि नित्यशः ।
प्रच्छन्नानि मनुष्याणां पापानि सुकृतानि च ॥
[7]त्वमेव देव ! जानीषे न विदुर्यानि मानवाः ।
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ॥
[8]तदेनं संशयारूढं धर्मतस्त्रातुमर्हसि ॥

(१) **नासं.**२०।२४. (२) **नासं.**२०।२५. (३) **नासं.**२०।२६. (४) **नासं.**२०।२७. (५) **नासं.**२०।२८. (६) **नासं.**२०।२९. (७)**नासं.**२०।३०. (८) २०।३१.

मज्जनकाले इमं मन्त्रं पठित्वा मज्जेत् । गतार्थो मन्त्रः । नाभा.

## बृहस्पतिः

[1]अप्सु प्रवेश्य पुरुषं प्रेषयेत्सायकत्रयम् ॥
[2]आनीते मध्यमे बाणे मग्नाङ्गः शुचितामियात् ॥

## कात्यायनः

[3]शरांश्चानायसाग्रांस्तु प्रकुर्वीत विशुद्धये ।
वेणुकाण्डमयांश्चैव क्षेप्ता तु सुदृढं क्षिपेत् ॥
[4]क्षिप्तेषु मज्जनं कार्यं गमनं समकालिकम् ।
गमने चागमे चान्यः पुमानन्यो जले विशेत् ॥
[5]निमज्योत्प्लवते यस्तु दृष्टश्चेत्प्राणिना नरः ।
पुनस्तत्र निमज्जेत्स देशचिह्नविभावितः ॥

[1]शिरोमात्रं तु दृश्येत न कर्णौ नापि नासिका ।
अप्सु प्रवेशने यस्य शुद्धं तमपि निर्दिशेत् ॥

## पितामहः

[2]तोयस्यातः प्रवक्ष्यामि विधिं धर्म्यं सनातनम् ।
शुभाशुभपरीक्षार्थं ब्रह्मणाभिहितं स्वयम् ।
मण्डलं धूपदीपाभ्यां कारयेच्च विचक्षणः ॥
[3]शरान्संपूजयेद्भक्त्या वैणवं च धनुस्तथा ।
मङ्गलैर्धूपदीपैश्च ततः कर्म समाचरेत् ॥

धूपदीपाभ्यां शरान् संपूजयेदित्यन्वयः । जलसमीपे संस्कृतायां भुवि मण्डलं कृत्वा तत्र शरादिकं संपूज्य प्रयोगारम्भः कार्य इत्यर्थः । व्यप्र.२०३

---

(१) **व्यक**.९१; **स्मृसा**.१२६; **व्यसौ**.८३ अप्सु (आशु); **व्यप्र**.२०६; **व्यम**.३३ अप्सु (आशु) प्रेषयेत् (प्रक्षिपेत्); **राकौ**.४२६ प्रेषयेत् (प्रक्षिपेत्); **बाल**.२।१०९ राकौवत्.

(२) **अप**.२।१०९; **व्यक**.९२; **स्मृसा**.१२७; **व्यचि**.८२ (=) आनी (स्वानी); **नृप्र**.१५ बाणे (चापे); **व्यसौ**.८४ बाणे (वाऽसौ).

(३) **मिता**.२।१०९ (=) सुदृ (सदृ) स्मरणम्; **अप**.२।१०९ चा ... स्तु (तु नाऽऽयसैरग्रैः) तु (च); **व्यक**.९०; **पमा**.१८३ (=) शरां ... स्तु (शरानप्यायसैरग्रैः) तु (च); **स्मृसा**.१२६ पितामहः; **स्मृचि**.५५ (=); **नृप्र**.१५; **दित**.५९९ श्चा (स्त्व) काण्ड (काष्ठ); **सवि**.२०० साग्रांस्तु (सैरग्रैः) मयां (मयै) तु (च) ढं (ढः); **व्यसौ**.८३ साग्रांस्तु (सैरग्रैः) तु (ऽति); **व्यप्र**.२०४; **व्यउ**.६४ प्रकु (यः कु) सु (स) क्रमेण नारदः; **व्यम**.३३ यसा (य सा) स्तु (श्च); **विता**.२४५ व्यमवत्; **राकौ**.४२४; **समु**.६१ नारदः.

(४) **अप**.२।१०९ प्तेषु (प्ते तु) चागमे चान्यः (त्वागमे कार्यः); **व्यक**.९१; **नृप्र**.१५; **व्यसौ**.८३ चागमे चान्यः (त्वागमः कार्यः); **व्यप्र**.२०७ पू.; **व्यम**.३३ पू.; **बाल**.२।१०९ पू.; **समु**.६२ प्तेषु (प्ते तु) पू.

(५) **अप**.२।१०९; **व्यक**.९२; **पमा**.१८६ ना (भिः) ज्जेत्स देशचिह्न (ज्जंस्तु स सचिह्न) तः (तै); **स्मृसा**.१२७ निमज्योत् (निमग्नः) ज्जेत् स (ज्जेत्तु) देशचिह्न (स सचिह्न); **व्यचि**.८२ निमज्जेत्स देश (नियोज्योऽसावक्ष;) **नृप्र**.१५ ज्जेत्स (ज्जेत); **दित**.६०१ (=) दृष्टः (दष्टः) (पुनस्तत्र निमज्जेत् देशचिह्नविचारितः); **व्यसौ**.८४; **समु**.६३ ज्योत् (ज्जन्) ना (भिः) ज्जेत्स (ज्जंस्तु) देश (दंश).

(१) **मिता**.२।१०९ (=); **अप**.२।१०९; **व्यक**.९२; **पमा**.१८६ विशेषस्मरणम्; **स्मृसा**.१२७; **व्यचि**.८२; **नृप्र**.१५ शने य (शेचेद्); **दित**.६०१ (=) र्णौ (र्णे); **सवि**.२०३ नापि (न च) मपि (मभि); **व्यसौ**.८४; **व्यप्र**.२०८; **व्यउ**.६५ (=); **व्यम**.३३; **विता**.२५२ तु (न) नापि (न च); **राकौ**.४२८; **समु**.६२-६३ पितामहः.

(२) **अप**.२।१०९ धूपदी (पुष्पधू) येच्च (येत्); **व्यक**.९० धूप (पुष्प) कारयेच्च (पूजयेच्च); **पमा**.१८२ येच्च (यीत) प्रजापतिः; **दीक**.४१ क्षणः (क्षणैः) शेषं अपवत्, उत्त.; **स्मृसा**.१२६ धूपदी (पुष्पधू) येच्च (येत्तत्); **स्मृचि**.५५ धूपदी (पुष्पधू); **नृप्र**.१५ धूप (पुष्प) च्च (तु); **दित**.५९९ तः (थ) येच्च (येत्तु); **सवि**.२०० तः (थ) सना (पुरा) द्वितीयार्धे (कृतानृत [शुभाशुभ] परीक्षार्थं ब्रह्मणा विहितं स्वयम्) प्रजापतिः; **व्यसौ**.८३ तः (पि) येच्च (येत्तु); **व्यप्र**.२०३; **व्यम**.३२ येच्च (येत); **विता**.२४५ येच्च (येत्तु); **राकौ**.४२४ येच्च (येत्तु); **समु**.६१ तः (थ) येच्च (येत). द्वितीयार्धं सवि. समु. एतद्ग्रन्थद्वयं परित्यज्यान्यत्र न विद्यते.

(३) **मिता**.२।१०९ भक्त्या (पुर्वं) दीपै (पुष्पै); **अप**.२।१०९ मङ्ग ... श्च (मण्डयेत्पुष्पधूपैश्च); **व्यक**.९०; **पमा**.१८२ धूपदी (पुष्पधू) प्रजापतिः; **दीक**.४१ पू.; **स्मृसा**.१२६ मङ्ग... श्च (मण्डयेत्पुष्पधूपैस्तु); **स्मृचि**.५५ रान् सं (रांश्च) शेषं अपवत्; **नृप्र**.१५ तथा (सदा) शेषं अपवत्, नारदः; **दित**.५९९ पू.; **सवि**.२०० सं (वै) वैण (वैष्ण) चरे (रभे) शेषं अपवत्, प्रजापतिः; **व्यसौ**.८३ अपवत्; **व्यप्र**.२०३ पमावत्; **व्यउ**.६३-६४; **व्यम**.३२ पमावत्; **विता**२४५ मङ्ग ... श्च (मण्डलैः पुष्पधूपैश्च); **राकौ**.४२४; **समु**.६१ धूपदीपैः (पुष्पमाल्यैः).

[1]क्षेप्ता च क्षत्रियः कार्यस्तद्वृत्तिर्ब्राह्मणोऽपि वा ।
अक्रूरहृदयः शान्तः सोपवासस्तथा शुचिः ॥
[2]मध्यमेन च चापेन प्रक्षिपेच्च शरत्रयम् ।
हस्तानां तु शते सार्धे लक्ष्यं कृत्वा विचक्षणः ॥
[3]तेषां च प्रेषितानां च शराणां शास्त्रचोदनात् ।
मध्यमस्तु शरो ग्राह्यः पुरुषेण बलीयसा ॥
[4]शरस्य पतनं ग्राह्यं सर्पणं तु विवर्जयेत् ।
सर्पन्सर्पन् शरो यायात् दूराद्दूरतरं यतः ॥

पतनं ग्राह्यमिति शरपतनस्थानपर्यन्तं गच्छेदित्यर्थः । तेन प्रसरणपक्षेऽपि पतनस्थानकशरग्रहणं ततश्च प्रथमतः पुरुषान्तरेण तत्स्थाने शर आनेतव्यः । दित.६००

(१) मिता.२।१०९ कार्य (प्रोक्त) तथा शुचिः (ततः क्षिपेत्); अप.२।१०९ च (तु) तथा शुचिः (शरान् क्षिपेत्); व्यक.९०; पमा.१८३ तथा शुचिः (क्षिपेदिति); दीक.४१ तद्वृत्तिः (सद्वृत्तो); स्मृसा.१२६ अपवत्; स्मृचि.५५ च (तु) तथा शुचिः (यथाविधि); नृप्र.१५; दित.६०० पि वा (थ वा); सवि.२०० च (तु) कार्यस्तद्वृत्तिः (प्रोक्तस्तद्वद्) था शुचिः (तः क्षिपेत्); व्यसौ.८३ च (तु); व्यप्र.२०४ पि वा (थवा); व्यउ.६४ (=) मितावत्; व्यम.३३ व्यसौवत्; राकौ.४२६ व्यसौवत्; समु.६१ च (तु) तथा शुचिः (क्षिपेदिषून्).

(२) अप.२।१०२; व्यक.९१ च चा (तु चा); स्मृचि. ५५ व्यकवत्; दित.६०० च (तु); व्यसौ.८३ च (तु).

(३) मिता.२।१०९; अप.२।१०९ च श (तु श); व्यक. ९१; स्मृसा.१२६ चोद (दर्श); नृप्र.१५ अपवत्; दित. ६०० च श (तु श) चोद (देश); व्यसौ.८३ षि (रि) चोद (देश) पू.; व्यप्र.२०८ स्मृतिः; व्यउ.६५ (=) शराणां शास्त्र (शरेणास्त्रप्र); समु.६१ बली (जवी) नारदः.

(४) मिता.२।१०९; अप.२।१०९ रस्य (राणां) तु वि (परि) शरो यायात् (सदा याति) यतः (तु सः); व्यक.९१ तु वि (परि) यतः (तु सः); पमा.१८३; स्मृसा.१२६ रस्य (राणां) यायात् (याति) यतः (तु सः); स्मृचि.५६ रस्य (राणां) तु वि (परि) यायात् (याति); नृप्र.१५ शरो (सदा) यतः (न सः) शेषं स्मृचिवत्; दित.६०० स्मृचिवत्; व्यसौ.८३ यतः (तु सः) शेषं स्मृचिवत्; व्यप्र.२०८; व्यउ. ६५ तु वि (परि) यायात् (याति); व्यम.३२ तु वि (परि) पू.; विता.२५२ तु वि (परि) यायाद्दूरात् (याति दूरं); राकौ. ४२७ विव(परि); समु.६१-६२.

[1]इषून्न प्रक्षिपेद्विद्वान् मारुते वाति वै भृशम् ।
विषमे भूप्रदेशे च वृक्षस्थाणुसमाकुले ॥
[2]तृणगुल्मलतावल्लीपङ्कपाषाणसंयुते ॥
[3]स्थिरे तोये निमज्जेत्तु न ग्राहिणि न चाल्पके ।
तृणशैवालरहिते जलूकामत्स्यवर्जिते ॥
[4]देवखातेषु यत्तोयं तस्मिन्कुर्याद्विशोधनम् ।
आहार्यं वर्जयेन्नित्यं शीघ्रगासु नदीषु च ॥
[5]नदीषु नातिवेगासु तडागेषु सरःसु च ।
ह्रदेषु स्थिरतोयेषु कुर्यात्पुंसां निमज्जनम् ॥
[6]आविशेत्सलिले नित्यमूर्मिपङ्कविवर्जिते ॥

(१) मिता.२।१०९ षून् (षुं) वाति वै भृशम् (चातिवायति) स्थाणु (स्थान); अप.२।१०९ षून्न (षूंश्च) वै (वा); व्यक.९०; पमा.१८३ वै (वा) भू (वा); स्मृसा.१२६; स्मृचि.५५ स्थाणु (स्थान) समाकुले (समन्विते); नृप्र.१५ वाति वै भृशम् (चातिधावति); दित.६०० विद्वान् (धीमान्) रुते (रुतो) वै (वा); सवि.२०२-२०३; व्यसौ.८३ इषून्न (इत्थं तु) (विषमे तु प्रदेशे च स्थाणुवृक्षसमाशनैः?); व्यप्र.२०७ प्रक्षि (निक्षि) बृहस्पतिः; व्यउ.६५ प्रक्षि (निक्षि) वै भृशम् (वारिणि) भूप्र (शून्य) स्थाणु (स्थान); विता.२५२; राकौ. ४२६ षून् (षं) णु (न); समु.६२.

(२) मिता.२।१०९; पमा.१८३ तृण (तरु); व्यप्र. २०७; व्यउ.६५; समु.६२.

(३) मिता.२।१०८ स्थिरे (स्थिर); अप.२।१०९ लूका (लौको); व्यक.९१; पमा.१८४ मितावत्; स्मृसा.१२६ स्थिरे (स्थिर) ज्जेत्तु (ज्जेत); स्मृचि.५५ ज्जेत्तु(ज्जेत); नृप्र.१५ मितावत्; सवि.२०२ पूर्वार्धे(नाभिमात्रे जले मज्जेन्न चागाधे न चाल्पके) प्रजापतिः; व्यसौ.८३ मितावत्; व्यप्र.२०४; व्यउ.६३ ज्जेत्तु (ज्येत); विता.२४६ स्मृचिवत्; राकौ.४२५ रे तोये (रं तोयं) चाल्प (चात्म) ते जलू (तजलौ); समु.६२ (स्थिरवारिणि मज्जेत्तु गन्धवर्णरसान्विते) (नाभिमात्रे निमज्जेत्तु न चागाधे न चाल्पके) इति पाठद्वयम्.

(४) मिता.२।१०८; अप.२।१०९ गासु (वेगं); व्यक. ९१ अपवत्; पमा.१८४ नित्यं (तोयं); स्मृसा.१२६; स्मृचि.५५; नृप्र.१५ पू.; सवि.२०२ पमावत्, उत्त., प्रजापतिः; व्यसौ.८३ गासु (वेगे); व्यप्र.२०४; व्यउ.६३; विता.२४६ उत्त.; राकौ.४२५ यत्तो (यत्रो) गासु (वेग); समु.६२. (५) अप.२।१०९; व्यप्र.२०५.

(६) मिता.२।१०८; पमा.१८४; सवि.२०२ त्सलिले (दमले) प्रजापतिः; व्यप्र.२०४ सविवत्; व्यउ.६३; समु. ६५ सविवत्.

[१]स्थापयेत्प्रथमं तोये स्तम्भवत्पुरुषं नृपः ।
आश्रित्य यं निमज्जन्ति मानवाः शुद्धिकाङ्क्षिणः॥

स्तम्भवत्पुरुषं स्तम्भसमन्वितं पुरुषम् । व्यप्र.२०५

[२]आगतं प्राङ्मुखं कृत्वा तोयमध्ये तु कारिणम् ।
ततस्त्वावाहयेद्देवान् सलिलं चानुमन्त्रयेत् ॥
[३]तोय त्वं प्राणिनां प्राणः सृष्टेराद्यं तु निर्मितम् ।
शुद्धेश्च कारणं प्रोक्तं द्रव्याणां देहिनां तथा ॥
[४]अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे ॥

इति प्राड्विवाकेनोदकाभिमन्त्रणे कृते शोध्यः 'सत्येन माभिरक्ष त्वं वरुणे'त्युदकं प्रार्थयेत् । मिता.२।१०८

[५]गन्तुश्चापि च कर्तुश्च समं गमनमज्जनम् ।
गच्छेत्तोरणमूलात्तु लक्ष्यस्थानं जवी नरः ॥
[६]शरप्रक्षेपणस्थानाद्युवा जवसमन्वितः ।
गच्छेत्परमया शक्त्या यत्रासौ मध्यमः शरः ॥
तस्मिन् गते द्वितीयोऽपि वेगादादाय सायकम् ।
गच्छेत्तोरणमूलं तु यतः स पुरुषो गतः ॥
[२]मध्यमं शरमादाय पुरुषोऽन्यस्तथाविधः ।
प्रत्यागच्छेत्तु वेगेन यतः स पुरुषो गतः ॥
[३]आगतस्तु शरग्राही न पश्यति यदा जले ।
अन्तर्जलगतं सम्यक् तदा शुद्धिं विनिर्दिशेत् ॥
[४]अन्यथा न विशुद्धः स्यादेकाङ्गस्यापि दर्शनात् ।
स्थानाद्वान्यत्र गमनाद्यस्मिन्पूर्वं निवेशितः ॥

एकाङ्गस्यापीति कर्णाद्यभिप्रायेण । मिता.२।१०९

## उशना

[५]शराणां प्रेषितानां स्यात्समग्राङ्गनिमज्जनम् ॥

## स्मृत्यन्तरम्

[६]उदके प्राङ्मुखस्तिष्ठेत् धर्मस्थूणां प्रगृह्य च ॥

---

(१) **अप.**२।१०९ (स्थापयेत्पुरुषं तोये स्तम्भवत्प्रथमं दृढम् । आश्रित्य तं मज्जयेयुः पुरुषाः शुद्धिकाङ्क्षिणः ॥); **पमा.**१८४ पू.; **सवि.**२०२ (=); **व्यप्र.**२०५ पू.; **व्यम.**३३ पू.; **बाल.**२।१०८ पू.; **समु.**६२.

(२) **पमा.** १८४; **व्यप्र.**२०५; **व्यम.**३३ तु (ऽस्तु); **विता.**२४६ चानुमन्त्रयेत् (मन्त्रयेत्ततः) उत्त., नारदः; **बाल.**२।१०८; **समु.**६२.

(३) **मिता.**२।१०९; **व्यक.**९२ श्च (स्त्वं); **पमा.**१८५ व्यकवत्; **व्यनि.**१२ [मयारामः]; **नृप्र.**१५; **दित.**६००, ६०२,६०६; **सवि.**२०२ (=) निर्मितम् (कारणम्); **व्यसौ.**८४ (=) व्यकवत्; **व्यप्र.**२०६ द्धेश्च (द्धस्त्वं); **व्यउ.**६४ (=) णः (णाः); **व्यम.**३४; **विता.**२४८ व्यकवत्; **राकौ.**४२६ श्च (स्त्वं); **समु.**६२ यं (द्यौ) श्च (स्त्वं).

(४) **मिता.**२।१०८; **व्यक.**९२; **व्यनि.**१२ [मयारामः]; **नृप्र.**१५ त्मानं (स्माकं) णे (णम्); **दित.**६००,६०२,६०६; **सवि.**२०२ णे (णम्); **व्यसौ.**८४ (=) णे (णम्); **व्यप्र.**२०६; **व्यउ.**६४ (=) (अतो निवर्तयात्मानं शुभाशुभपरीक्षणम्); **व्यम.**३४; **विता.**२४८; **राकौ.**४२६; **समु.**६२.

(५) **मिता.**२।१०८; **पमा.**१८५ लक्ष्य (शर); **दित.**६०१ पमावत्; **सवि.**१०३ लात्तु (लं तु) स्थानं (स्थानात्); **व्यप्र.**२०७; **व्यउ.**६५; **समु.**६२.

(६) **व्यक.**९२ पण (पणात्) शक्त्या (भक्त्या) पितामहनारदौ; **स्मृसा.**१२७; **स्मृचि.**५५ शक्त्या (भक्त्या) नारदपितामहौ; **व्यसौ.**८५; **व्यम.**३३ नारदपितामहौ.

(१) **मिता.**२।१०९; **पमा.**१८६; **दित.** ६०१; **सवि.**२०३ तस्मिन् (अस्मिन्) यतः (ततः); **व्यप्र.**२०७; **व्यउ.**६५; **समु.**६२.

(२) **व्यक.**९२ पितामहनारदौ; **दीक.**४१ बृहस्पतिः; **स्मृसा.**१२७; **स्मृचि.**५५ नारदपितामहौ; **व्यसौ.**८६; **व्यम.**३३ नारदपितामहौ.

(३) **मिता.**२।१०९; **व्यक.**९२ पितामहनारदौ; **पमा.**१८६; **दीक.**४१ स्तु (श्च) बृहस्पतिः; **स्मृसा.**१२७; **व्यचि.**८२ (=); **स्मृचि.**५५ द्धिं (द्धं) नारदपितामहौ; **नृप्र.**१५; **दित.**६०१ तदा (ततः); **सवि.**२०३; **व्यप्र.**२०७ द्धिं (द्धं); **व्यउ.**६५; **व्यम.**३३ यदा (तथा) द्धिं (द्धं) नारदपितामहौ; **समु.**६२.

(४) **मिता.**२।१०९ द्धः (द्धिः); **व्यक.**९२ पितामहनारदौ; **पमा.**१८६ द्धः (द्धिः) तः (ते); **दीक.**४१ पू., बृहस्पतिः; **व्यचि.**८२ (=) द्वा (त्व) शितः (शयेत्); **सवि.**२०३ नात् (ने) द्वा (च्चा) र्वं (र्वे); **व्यसौ.**८४ द्धः (द्धिः) पू.; **वीमि.**२।१०९ न (ना) काङ्गस्या (कांशस्या) र्वं (र्वे) शितः (शयेत्); **व्यप्र.**२०८; **व्यउ.**६५ तः (ते); **व्यम.**३३; **समु.**६२. (५) **अप.**२।१०९.

(६) **मिता.**२।१०८; **नृप्र.**१५; **दित.**६००; **सवि.**२०२; **व्यप्र.**२०५; **व्यउ.**६४ च (वा); **विता.**२४६ नारदः; **समु.**६२ पितामहः.

## कालिकापुराणम्

[1] त्राह्येनं वरुण त्वं हि अस्मादेवाभिशापतः ।
शुद्धश्चेदतिकारुण्यादभिमन्त्र्य जले क्षिपेत् ॥

(१) व्यक.९२; व्यसौ.८५; व्यप्र.२०६ त्वं हि (त्वं च) कालिकापुराणे व्यासः; विता.२४९ त्रा (पा) त्वं हि (त्वं च).

त्राह्येनं इत्यादिनाऽतिकारुण्यादित्यन्तेन मन्त्रेणाभिमन्त्र्य जले पुरुषं प्रवेशयेदित्यर्थः । व्यप्र.२०६

[1] नाभिमात्रोदकस्थस्य पुरुषस्योपगृह्य वै ।
प्रणम्य देवतामिष्टां तस्मिन्मग्नो जले भवेत् ॥

(१) व्यक.९२.

# विषविधिः

## विष्णुः

[1] अथ विषम् । विषाणि अदेयानि सर्वाणि ।
ऋते हिमाचलोद्भवाच्छार्ङ्गात् । तस्य च यवसप्तकं घृतप्लुतमभिशस्ताय दद्यात् ।
[2] विषं वेगक्रमापेतं सुखेन यदि जीर्यते ।
विशुद्धं तमिति ज्ञात्वा दिवसान्ते विसर्जयेत् ॥
[3] विषत्वाद् विषमत्वाच्च क्रूरस्त्वं सर्वदेहिनाम् ।
त्वमेव विष जानीषे न विदुर्यानि मानुषाः ॥
[4] व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥

## याज्ञवल्क्यः

[5] त्वं विष! ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः ।
त्रायस्वास्मादभीशापात्सत्येन भव मेऽमृतम् ॥

(१) विस्मृ.१३।१-४. (२) विस्मृ.१३।५; व्यक.९४; व्यप्र.२११ क्रमापे (क्रमाती) तमिति (इति तं).

(३) विस्मृ.१३।६ रस्त्वं (रं त्वं); अप.२।१११ नुषाः (नवाः); व्यक. ९४ स्त्वं (त्वात्); व्यसौ.८६ विदुर्यानि मानुषाः (च जानन्ति मानवाः); व्यप्र.२१० स्त्वं (त्वात्) नुषाः (नवाः); विता.२५४ व्यप्रवत्.

(४) विस्मृ.१३।७; अप.२।१११ शुद्धि (सिद्धि); व्यक. ९४; व्यसौ.८६; व्यप्र.२१०; विता.२५४.

(५) यास्मृ.२।११०; अपु.२५५।४५-४६ त्रः (त्र) तः (त); विश्व.२।११४ त्रः (त्र) मे (मं) तः (त) दभी (न्माभि); मिता.; अप. सत्य (सत्ये); व्यक.९४ त्वं विष (विष त्वं); पमा.१८९; व्यचि.८२ (=) मे (मं); व्यनि.१३ (=) [मयारामः]; नृप्र.१५; दित.६०३ व्यकवत्; सवि.२०६ (=) सत्य (सत्ये) दभी (नभी); मच.८।११६; व्यसौ.८६ मे (मं) शेषं व्यकवत्; वीमि.; व्यप्र.२१० व्यकवत्; व्यउ. ६६; व्यम.३५ व्यकवत्; विता.२५४ (=); समु.६३.

[1] एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजम् ।
यस्य वेगैर्विना जीर्येच्छुद्धिं तस्य विनिर्दिशेत् ॥

(१) प्रागुक्तनियमवानेव शूद्रादिर्नृपब्राह्मणसमीपस्थः कालव्यवस्थया स्मृत्यन्तरोक्तपरिमाणं विषमादायाभिमन्त्रयेत्–त्वं विषेति ।

एवमिति प्रकारार्थे, मन्त्रानधिकृतस्यानभिज्ञस्य वाऽयमेवार्थः पर्यायवचनैर्वाच्यो यथा स्यात् । शार्ङ्गवचनं मन्दवीर्यविषनिवृत्त्यर्थम् । हैमवचनं कालकूटादिव्युदासार्थम् । स्पष्टमन्यत् । विश्व.२।११४–११५

(२) 'त्वं विष' इत्यादिमन्त्रेण विषमभिमन्त्र्य कर्ता विषं हिमशैलजं शृङ्गप्रभवं भक्षयेत् । तच्च भक्षितं यस्य विषं वेगैर्विना जीर्यति स शुद्धो भवति । विषवेगो नाम धातोर्धात्वन्तरप्राप्तिः । 'धातोर्धात्वन्तरप्राप्तिर्विषवेग इति स्मृतः' इति वचनात् । धातवश्च त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणीति सप्त । एवं च सप्तैव विषवेगा भवन्ति । तेषां च लक्षणानि पृथगेव विषतन्त्रे कथितानि । 'वेगो रोमाञ्चमाद्यो रचयति विषजः स्वेदवक्त्रोपशोषौ तस्योर्ध्वस्तत्परौ द्वौ वपुषि जनयतो वर्णभेदप्रवेपौ ॥ यो वेगः पञ्चमोऽसौ नयति विवशतां कण्ठभङ्गं च हिक्काम् । षष्ठो निश्वासमोहौ वितरति च मृतिं सप्तमो भक्षकस्य' इति ॥ प्राड्विवाकः कृतोपवासो

(१) यास्मृ.२।१११; अपु २५५।४६-४७ येत् (णै); विश्व.२।११५ येत् (णै); मिता.; अप. येच्छुद्धिं तस्य (णै तस्य शुद्धिं); व्यक.९४ पू.; पमा.१८९ शुद्धिं तस्य (तस्य शुद्धिं); व्यचि.८३ (=) उत्तरार्धे (यस्य रोगैर्विना जीर्णे विशुद्धिं तस्य निर्दिशेत्); दित.६०३ पू.; सवि.२०७-२०८; मच. ८।११६ शुद्धिं (शुभं); वीमि. येत् (णै); व्यप्र.२११; व्यउ. ६६; विता.२५६ उत्त.; राकौ.४३० पू., पितामहः; समु. ६३ विना जीर्ये (विजानीये).

महादेवं पूजयित्वा तस्य पुरतो विषं व्यवस्थाप्य धर्मादिपूजां हवनान्तां विधाय प्रतिज्ञापत्रं शोध्यस्य शिरसि निधाय विषमभिमन्त्रयेत् । *मिता.

(३) त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः । एतेष्वेकस्मिन्धातौ वर्तमानस्य विषस्य शीघ्रं धात्वन्तरप्राप्तिः । तत्र त्वचि वर्तमानं विषं रोमाञ्चं जनयति, तदेव लोहितं प्राप्य स्वेदं वक्त्रशोषं च, मांसं प्राप्य वैवर्ण्यं, मेदः प्राप्य कम्पं, तदेवास्थिगतं नेत्रपारवश्यं, मज्जागतं तु विषादं मोहं, तदेव शुक्रगतं मरणं जनयति । ×अप.

## नारदः

**[१]अतःपरं प्रवक्ष्यामि विषस्य विधिमुत्तमम् ।**
**यस्मिन्काले यथा प्रोक्तं यादृशं परिकीर्तितम् ॥**

विषदिव्याधिकारमात्रार्थोऽयं श्लोकः । अभा.७९

**[२]यवमात्रा समुद्दिष्टा धर्मतत्त्वार्थदर्शिभिः ।**
**तोलयित्वा शरत्काले देयमेतद्धिमागमे ॥**

अभिशस्तपुरुषस्य सत्यासत्यपरीक्षार्थं यवप्रमाणं विषं देयम् । तच्च शरत्काले अश्वयुक्कार्तिकमासयोः । तथा हिमागमे मार्गशिरपौषयोः । अभा.७९

**[३]नापराह्णे न मध्याह्ने न संध्यायां च धर्मवित् ।**
**शरद्ग्रीष्मवसन्तेषु वर्षासु च विवर्जयेत् ॥**

अत्र पूर्वगृहीतोऽपि शरत्कालः पुनरपवाददर्शनाद्विवर्जितः । शरद्ग्रीष्मवर्षाभिधानवसन्तविवर्जनात् चैत्रादिकं कार्तिकपर्यन्तं मासाष्टकमपि विषस्य वर्जितमिति । अभा.७९

**[१]भग्नं च चारितं चैव धूपितं मिश्रितं तथा ।**
**कालकूटमलाबुं च विषं यत्नेन वर्जयेत् ॥**

(१) अत्र चारितभग्नधूपितमिश्रितानि कृतककारणाद्वर्जितानि । कालकूटालाबुविषे च अतिरौद्रजातिवशाद्वर्जिते । अभा.७९

(२) चारितं चरित्वावशिष्टम् । सवि.२०५

**[२]शार्ङ्गं हैमवतं शस्तं गन्धवर्णरसान्वितम् ।**
**अकृत्रिममसंमूढममन्त्रोपहतं च यत् ॥**
**[३]अभिन्नं तत्प्रदातव्यं क्षत्रविट्शूद्रयोनिषु ॥**

(१) विषदिव्ये शार्ङ्गं विषं मतं नान्यत् । तच्च ब्राह्मणवर्जक्षत्रियादिवर्णत्रयस्य कथितमिति । अभा.७९

---

* दित., वीमि., व्यप्र., व्यउ. मितागतम् ।
× शेषं मितागतम् ।

(१) **नास्मृ.**४।३१८; **अभा.**७९ परिकीर्ति (च प्रकल्पि); **अप.**२।१११ था प्रोक्तं (दा देयं) परि (च प्र); **व्यक.**९२ अपवत्; **स्मृचि.**५६ अपवत्; **व्यसौ.**८५ था प्रोक्तं (दा देयं); **व्यप्र.**२०८ प्रोक्तं (देयं); **राकौ.**४२९ प्रोक्तं (देयं).

(२) **नास्मृ.**४।३१९ यव...ष्टा (यावन्मात्रं समुद्दिष्टं) तोल (तुल); **अभा.**७९ ष्टा धर्म (श्य मात्र) तोल (तुल) गमे (गते); **मिता.**२।१११ त्वा शरत् (त्वेप्सितं) एतत् (तद्धि) उत्त.; **अप.**२।१११ दर्शि (वेदि) तोलयित्वा शरत् (तुलयित्वेच्छतः); **व्यक.**९२-९३ यव (यावत्) शरत् (कृते); **पमा.**१८७ (तोलयित्वेप्सिते काले देयं तद्धि दिनागमे) उत्त.; **स्मृचि.**५६ यव (यावत्) शेषं अपवत्; **व्यसौ.**८५ यव (यावत्) शेषं अपवत्; **वीमि.**२।१११ मितावत्, उत्त.; **व्यप्र.**२०८ (यावन्मात्रं समुद्दिष्टं धर्मतत्त्वानुवेदिभिः) त्वा शरत् (त्वेप्सिते); **राकौ.**४२९ व्यप्रवत्; **समु.**६३ मितावत्, उत्त.

(३) **नास्मृ.**४।३२० मध्याह्ने (संध्यायां) संध्यायां (मध्याह्ने) च ध (तु ध); **अभा.**७९ नास्मृवत्; **मिता.**२।९७ मध्या...वित् (संध्यायां न मध्याह्ने कदाचन) **पू.** : २।१११ च ध (तु ध) पू.; **अप.**२।१११; **व्यक.**९३; **पमा.**१८७ पू.; **स्मृचि.**५६ च वि (तु वि); **सवि.**१७१ मिता.२।९७ वत्, पू.: २०६ (=) च ध (तु ध) पू.; **व्यसौ.**८५; **वीमि.**२।१११ च (तु) पू.; **व्यप्र.**१८१ च धर्मवित् (कदाचन) **पू.**: २०८ न सं...वित् (संध्यायां च विवर्जयेत्) **पू.**; **व्यउ.**५४ मिता. २।९७ वत्, पू., पितामहः; **विता.**२०५ व्यउवत्, पू.; **राकौ.**४१२ मितावत्, पू.: ४२९ न संध्यायां च धर्मवित् (संध्यायां च विसर्जयेत्); **समु.**६३ च (तु) **पू.**

(१) **नास्मृ.**४।३२१; **अभा.**७९; **मिता.**२।१११ भग्नं (भृष्टं); **अप.**२।१११ चारि (धारि); **व्यक.**९३; **पमा.**१८७ भग्नं (भृष्टं) लाबुं चं (थाशुद्धं); **सवि.**२०४-२०५ भग्नं (भ्रष्टं); **व्यसौ.**८५; **व्यप्र.**२०९ भग्नं (भृष्टं); **व्यउ.**६६ भग्नं (सार्पं) धूपितं (कृत्रिमं); **राकौ.**४२९ भग्नं च चा (भ्रष्टं च वा); **समु.**६३ धूपितं (भूयिष्ठं) शेषं पमावत्.

(२) **नास्मृ.**४।३२२ गन्धवर्ण (वर्णगन्ध) पू.; **अभा.**७९ नास्मृवत्, पू.; **मिता.**२।१११; **व्यक.**९३; **स्मृचि.**५६ नास्मृवत्; **दित.**६०३ मसंमूढ (समं गूढ); **सवि.**२०७ हतं च यत् (हितं भवेत्) पितामहः; **व्यसौ.**८६ नास्मृवत्; **व्यप्र.**२०८; **व्यउ.**६५ हतं च यत् (हृते तथा); **राकौ.**४२९ नास्मृवत्; **समु.**६३. (३) **नास्मृ.**४।३२२; **अभा.**७९.

(२) शाङ्गं शृङ्गोद्भवम्। हैमवतं हिमालयोद्भवम्।
व्यप्र.२०८

[1]विषस्य पलषड्भागाद्भागो विंशतिमस्तु यः।
तमष्टभागहीनं तु शोध्ये दद्यात् घृतप्लुतम्॥

(१) अनया भागपरिकल्पनया भागमात्रो भवति। स विषविषये दृष्टयवः न स्थूलयवः। तं च विषं घृतप्लुतं दद्यान्न रूक्षमिति। अभा.७९

(२) पलं चात्र चतुःसुवर्णिकम्। तस्य षष्ठो भागो दश माषाः दश यवाश्च भवन्ति। 'त्रियवं त्वेककृष्णलम्। पञ्चकृष्णलको माष' इत्येको माषः पञ्चदश यवा भवन्ति। एवं दशानां माषाणां यवाः सार्धं शतं भवन्ति। पूर्वे च दश यवा इति षष्ठ्यधिकं शतं यवाः पलस्य षष्ठो भागस्तस्माद्विंशतितमो भागोऽष्टौ यवास्तस्याष्टभागहीनः एकयवहीनो विंशतितमं भागं सप्तयवं घृतप्लुतं दद्यात्। घृतं च विषाद् त्रिंशद्गुणं ग्राह्यम्। *मिता.२।१११

[2]वर्षे चतुर्यवा मात्रा ग्रीष्मे पञ्च यवाः स्मृताः।
हेमन्ते सप्त वाऽष्टौ वा शरद्यल्पास्ततोऽपि हि॥

(१) अत्र यवमात्रप्रमाणबलापेक्षया वर्षाग्रीष्महेमन्तास्त्रयोऽप्येते ऋतवो गृहीता इति। अभा.८०

(२) अल्पेति षड्यवेत्यर्थः। हेमन्तग्रहणेन शिशिरस्यापि ग्रहणम्। हेमन्तशिशिरयोः समासेनेति श्रुतेः। वसन्तस्य सर्वदिव्यसाधारण्यात्तत्रापि सप्त यवाः। *मिता.२।१११

(३) अल्पा त्रियवा। ×व्यम.३५

[1]पूर्वाह्णे शीतले देशे विषं देयं तु देहिनाम्।
घृतेन योजितं श्लक्ष्णं पिष्टं त्रिंशद्गुणान्वितम्॥
[2]दद्याद्विषं सोपवासो देवब्राह्मणसंनिधौ।
धूपोपहारमन्त्रैश्च पूजयित्वा महेश्वरम्॥
[3]द्विजानां संनिधानेन दक्षिणाभिमुखे स्थिते।
उदङ्मुखः प्राङ्मुखो वा दद्याद्विप्रः समाहितः॥
[4]त्वं विष ब्रह्मणः पुत्रः सत्यधर्मव्यवस्थितः।
शोधयैनं नरं पापात्सत्येनास्यामृतीभव॥

विषदेवता सत्वाधिश्रावणा। अभा.८०

---

* पमा., व्यप्र., व्यउ. मिताक्षरैवोद्धृता।

(१) नास्मृ.४।३२३; अभा.७९ भागात् (भागो) स्तु यः (स्तथा) शोध्ये (शोध्य); मिता.२।१११; अप.२।१११ दद्यात् घृत (देयं घृता) कात्यायनः; पमा.१८८; व्यप्र.२०९; व्यउ.६६; समु.६३.

(२) नास्मृ.४।३२४ वर्षे चतुः (वर्षासु षड्) ल्पास्ततोऽपि हि (स्यापि नेष्यते); अभा.८० नास्मृवत्; मिता.२।१११ वाः स्मृताः (वा स्मृता) सप्त वाऽष्टौ वा (सा सप्तयवा) ल्पाः (ल्पा) स्मरणम्; अप. २।१११ वर्षे चतुः (वर्षासु षड्) सप्त वाऽष्टौ वा (च यवाः सप्त); व्यक.९३ वर्षे चतुः (वर्षासु षड्) सप्त वाऽष्टौ वा (सा सप्तयवा); पमा.१८८ मितावत्; स्मृचि.५६ सप्त वाऽष्टौ वा (वै सप्तयवा) ल्पास्ततोऽपि हि (ल्पा प्रकीर्तिता); नृप्र.१५; दित.६०३ सप्त वाऽष्टौ वा (स्युः सप्त यवाः) ल्पाः (ल्पं); सवि.२०५ र्यवा (र्यवं) ग्री (ग्रै) (हैमन्तके सप्त यवाः शरद्यल्पा ततोऽपि च); व्यसौ.८६ पञ्च (सप्त) शेषं अपवत्; वीमि.२।१११ मितावत्; व्यप्र.२०८ मितावत्; व्यउ.६६ मितावत्; व्यम.३५ मितावत्; राकौ.४२९ र्षे चतुर्य (र्षासु षड्य); बाल.२।१११ वर्षे चतुः (वर्षासु षड्) सप्त...ल्पाः (सा सप्तयवा शरद्यात); समु.६३ मितावत्.

* दित., सवि., व्यप्र. मितागतम्।

× शेषं मितागतम्।

(१) व्यसौ.८६ शम्भुनारदौ; व्यप्र.२१०; व्यउ.६६; राकौ.४३० नाम् (नः) णान्वितम् (णेन तु).

(२) मिता.२।१११; अप.२।१११ द्विषं सोपवासो (द्वि सोपवासाय); व्यक.९३ मनुनारदौ; पमा.१८९ दद्या... वासो (प्रदद्यात्सोपवासाय); स्मृचि.५६ अपवत्, शम्भुः; नृप्र.१५; दित.६०३; सवि.२०५ अपवत्, पू.: २०६ दद्या... देव (सोपवासाय देयं स्याद्विषं) धूपो(सूपो) पितामहः; व्यसौ.८६ द्विषं सोपवासो (तु सोपवासाय); व्यप्र.२१०; व्यउ.६६; व्यम.३४; राकौ.४३०; समु.६३.

(३) मिता.२।१११ नेन (वेव) दद्याद्विप्रः (विषं दद्यात्); अप.२।१११ नेन (ने च); व्यक.९३ नेन (वेव) मनुनारदौ; पमा.१८९; स्मृचि.५६ नेन (वेव) मुखे स्थिते (मुखस्थितः) शम्भुः; नृप्र.१५ नेन (वेव); दित.६०३ व्यकवत्; सवि.२०६ द्विजा ...नेन (देवानां संनिधौ चैव) पितामहः; व्यसौ.८६ व्यकवत्; व्यप्र.२१० व्यकवत्; व्यम.३४ व्यकवत्; राकौ.४३० व्यकवत्; समु.६३ व्यकवत्.

(४) नास्मृ.४।३२५ विष (विषं); अभा.८० नरं (परं); व्यक.९४ त्वं विष (विष त्वं); व्यसौ.८६ धर्म(धर्मे) शेषं व्यकवत्; व्यप्र.२१० मृती (मृतं) शेषं व्यसौवत्; राकौ.४३० त्वं विष (विष त्वं) मे (मैं).

पञ्चतालशतं कालं निर्विकारो यदा भवेत् ।
तदा भवति संशुद्धस्ततः कुर्याच्चिकित्सितम् ॥

(१) तथा विषे पीते यावत्करतालिकाशतपञ्चकं तावत्प्रतीक्षणीयोऽनन्तरं चिकित्सनीयः । यथाह नारदः— पञ्चेति । पितामहेन तु दिनान्तोऽवधिरुक्तोऽल्पमात्राविषयः । ×मिता.२।१११

(२) अत्र विज्ञानयोगिनोक्तम्— विषे पीते यावत्करतालशतपञ्चकं तावत्परीक्षणीयः । अनन्तरं चिकित्सनीय इति मुख्यं प्रतीक्षणकालमुक्त्वा 'निर्विकारो दिनस्यान्ते' इत्यादि शुद्धिवचनं स्वल्पमात्रविषयं इति । तन्मन्दम् । 'एवमुक्त्वा विषं शाङ्र्गं भक्षयेद्धिमशैलजम् । यस्य वेगैर्विना जीर्येच्छुद्धिं तस्य विनिर्दिशेत्' ॥ इति याज्ञवल्क्यवचने विषजीरणप्रतिपादनम्; 'तदा भवति संशुद्धस्तदा कुर्याचिकित्सितम्' । इति पितामहवचने चिकित्साप्रतिपादनमपि विरुन्ध्यात् । अतः चिकित्साप्रतिपादकवचनं करतालिकाशतपञ्चकावच्छिन्नकालप्रतीक्षणद्वारेणातिमात्रप्रयुक्तविषयमित्यस्मदुक्तैव विषयव्यवस्था सम्यक् । यच्च विषवेगो नाम धातोः धात्वन्तरप्राप्तिरित्युक्तं विज्ञानयोगिना, तत् प्रायिकाभिप्रायिकमित्यवगन्तव्यम् । आद्यविषवेगस्यैवंरूपत्वासंभवात् । ततश्च विषस्य धातुसंक्रामो वेग इत्येतावद्विवक्षितं विज्ञानयोगिनेत्यवगन्तव्यम् ।

सवि.२०७-२०८

(३) गौडमदनरत्नादयस्तु— 'भक्षिते यदि सत्वस्थो मूर्छाछर्दिविवर्जितः । निर्विकारो दिनस्यान्ते शुद्धं तमिति निर्दिशेत्' ॥ इति पितामहोक्तेः । 'शुद्धं वेगैर्विना ज्ञात्वा दिवसान्ते विवर्जयेत्' । इति विष्णुसूक्तेश्च दिनान्तावधिमाहुः । विता.२५६

[२]छायानिवेशितो रक्ष्यो दिनशेषमभोजनः ।
विषवेगक्रमातीतः शुद्धोऽसौ मनुरब्रवीत् ॥
[१]तं विशुद्धमिति ज्ञात्वा राजा सत्कृत्य मोचयेत् ।
बुधैः प्रकाशयेच्चैनमेष धर्मो व्यवस्थितः ॥

## नारदीयमनुसंहिता

[२]अतः परं प्रवक्ष्यामि विषस्य विधिमुत्तमम् ।
अपराह्णे न मध्याह्ने न संध्यायां तु धर्मवित् ।
शरद्ग्रीष्मवसन्तेषु वर्षासु च विवर्जयेत् ॥

एतेषु कालेषु न दातव्यं विषम् । शेषो गतार्थः । नाभा.

[३]भग्नं च वारितं चैव धूपितं मिश्रितं तथा ।
कालकूटं मलं चैव विषं यत्नेन वर्जयेत् ॥

भग्नं स्वरूपादपेतं, वारितमन्येन, धूपितं द्रव्यान्तरात्, मिश्रमन्येन विषादिना, कालकूटं च न दापयेत् । नाभा.

[४]शार्ङ्गं हैमवतं शस्तं रूपवर्णरसान्वितम् ।
महादोषवते दद्याद् राजा तत्वबुभुत्सया ॥

शृङ्गिविषं, हिमवति जातं, प्रशस्तं, स्वरूपेण स्ववर्णेन स्वरसेन च युक्तं, महादोषवते वधार्हदोषाय च दद्यात् तत्वज्ञानार्थं राजा । नाभा.

[५]न वृद्धातुरबालेषु न च स्वल्पापराधिषु ॥
[६]विषस्य पलषड्भागो भागो विंशतिमस्तु यः ।
तदष्टभागशुद्धं तु शोध्ये दद्याद् घृताप्लुतम् ॥

वृद्धातुरबालाल्पापराधिषु न दद्यात् । पलषड्भागं पलविंशतिभागं च तदष्टभागमपास्याभिशस्तस्य दद्यात् घृतेनाप्लुत्य । नाभा.

[७]यथोक्तेन विधानेन विद्वान् स्पृष्ट्वाऽनुमोदितः ।
सोपवासस्तु खादेत देवब्राह्मणसंनिधौ ॥

यथोक्तेनानेन विधानेन स्नात्वा स्पृष्ट्वा तेनानुमोदितो दद्यात् । देहीत्यनुमोदितः । स पूर्वेद्युरुपोषितो देवब्राह्मणसंनिधौ खादेत । नाभा.

[८]विषवेगक्रमापेतं सुखेन यदि जीवति ।
विशुद्धमिति तं ज्ञात्वा राजा सत्कृत्य मोक्षयेत् ॥

× पमा., व्यप्र. मितागतम् ।

(१) मिता.२।१११ ताल (तालि); पमा.१९०; सवि. २०७ ततः (तदा) तम् (कम्) पितामहः; व्यप्र.२१२; व्यउ.६७; व्यम.३५ यदा भवेत् (भवेद्यदा); विता.२५६; राकौ.४३१ ततः (तदा); समु.६३ त्सितम् (त्सनम्).

(२) नास्मृ.४।३२६; अभा.८० गक्रमा (गः क्रमा); अप.२।१११ तीतः (पेतः); व्यक.९४; व्यप्र.२१२; व्यम. ३५ क्रमा (क्रमा); राकौ.४३१; समु.६३ क्रमा (क्रमा) नः (नम्). (१) व्यसौ.८६.

(२) नासं.२०।३२. (३) नासं.२०।३३. (४) नासं. २०।३४. (५) नासं.२०।३५. (६) नासं.२०।३६. (७) नासं.२०।३७. (८) नासं.२०।३८.

विषवेगग्लानिरहितो यदि सुखेन जीवति तं विशुद्धमिति बुद्धवा पूजयित्वा राजा विसर्जयेत् । 'त्वं विष ! ब्रह्मणः पुत्रः सत्यधर्मव्यवस्थितः । शोधयैनं नरं पापात् सत्येनास्यामृतं भव' ॥ इत्यनेन मन्त्रेण दातव्यम् । नाभा.

### बृहस्पतिः

[1] विधिदत्तं विषं येन जीर्णं मन्त्रौषधं विना ।
स शुद्धः स्यादन्यथा तु दण्ड्यो दाप्यश्च तद्धनम् ॥

### कात्यायनः

[2] अजाशृङ्गनिभं श्यामं सुपीतं शृङ्गसंभवम् ।
भङ्गे च शृङ्गवेराभं ख्यातं तच्छृङ्गिणां विषम् ॥

(१) रक्तमसृक् तथेन संसृष्टं कृष्णं कठिनं च तत्क्षणाद्भवति तच्छृङ्गिविषं ज्ञेयमित्यर्थः । अप.२।१११

(२) शृङ्गवेरमार्द्रकं तदाभं तत्तुल्यम् । रक्तस्थमिति यद्विषं रक्ते स्थापितं सत् तद्रक्तस्थं श्यामं कठिनं करोतीत्यर्थः । दित.६०३

(३) भङ्गे आर्द्रकतुल्यं सुपीतमित्यन्वयः । व्यप्र.२०९

[3] रक्तं तदसितं कुर्यात्कठिनं चैव तत्क्षणात् ।
अनेन विधिना ज्ञेयं विषं दिव्यविशारदैः ॥
[4] वत्सनाभनिभं पीतं वर्णज्ञानेन निश्चितम् ।
शुक्तिशङ्खाकृतिर्भङ्गे विद्यात्तद्वत्सनाभकम् ॥
[5] मधुक्षीरसमायुक्तं स्वच्छं कुर्वीत तत्क्षणात् ।

(१) अप.२।१११; व्यक.९४; स्मृचि.५६ त्तं (त्ते) धं (धैः); नृप्र.१६ धं (धीः); दित.६०४ ण्ड्यो (ण्डो); व्यसौ. ८६ नृप्रवत्; व्यप्र.२११ धं (धैः); राकौ.४३० व्यप्रवत्.

(२) अप.२।१११ पीतं (पीनं); व्यक.९३; दीक.४२ पीतं (शीतं) शृङ्गिणां (शार्ङ्गिणं); दित.६०३ पीतं (शीतं) ख्यातं...णां (तत्ख्यातं शृङ्गिणं); व्यसौ.८५ जा (ज) णां (कं); वीमि.२।१११ (=) सु...वम् (हिमाचलसमुद्भवम्) भङ्गे (शुद्धं) ख्यातं...षम् (सुपीतं तदनुत्तमम्); व्यप्र.२०९ शृङ्गिणां (शार्ङ्गिणं); बाल.२।१११.

(३) अप.२।१११; व्यक.९३ क्तं तद (क्तस्थम); दित. ६०३ व्यकवत्, पू.; व्यसौ.८६ रक्तं ...तं (रक्तस्थमधिकं); व्यप्र.२०९ व्य (व्यं) शेषं व्यकवत्; बाल.२।१११ कठि (काठि) शेषं व्यकवत्.

(४) अप. २।१११ श्चितम् (श्चयः); व्यक.९३; व्यसौ. ८५; व्यप्र.२०९ शङ्खा (शृङ्गा); बाल.२।१११ व्यप्रवत्.

(५) अप.२।१११; व्यक.९३; व्यसौ.८५; व्यप्र. २०९; बाल.२।१११ णं (ण्यं).

बाह्यमेवं समाख्यातं लक्षणं धर्मसाधकैः ॥
[1] पूर्वाह्णे शीतले देशे विषं देयं तु देहिनाम् ।
घृतेन योजितं श्लक्ष्णं पिष्टं त्रिंशद्गुणान्वितम् ॥

### पितामहः

[2] विषस्यापि प्रवक्ष्यामि विधिं लक्षणचोदितम् ।
अभियुक्ताय दातव्यं तावन्मात्रं प्रदीयते ॥
[3] यवाः सप्त प्रदातव्याः शुद्धिहेतोरसंशयम् ।
शृङ्गिणो वत्सनाभस्य हिमजस्य विषस्य वा ॥
[4] चारितानि च जीर्णानि कृत्रिमाणि तथैव च ।
भूमिजानि च सर्वाणि विषाणि परिवर्जयेत् ॥
[5] दीयमानं करे कृत्वा विषं तु परिशापयेत् ॥
[6] त्वं विष ब्रह्मणा सृष्टं परीक्षार्थं दुरात्मनाम् ।

(१) मिता.२।१११ न यो (नियो); अप.२।१११ देयं (दद्यात्) णान्वितम् (णेन तु); व्यक.९३; पमा.१८८ पूर्वाह्णे (पूर्वोक्त) पिष्टं (विष) णान्वितम् (णेन तु); नृप्र.१५उत्त.; दित.६०३ णान्वितम् (णेन च); सवि.२०६ तु (हि) पिष्टं (घृतं); व्यप्र.२१०; व्यम.३५ श्लक्ष्णं (सम्यक्); समु.६३ पिष्टं (विषात्).

(२) पमा.१८७ मुद्रितग्रन्थे प्रजापतिः हस्तलिखिते च पितामहः; सवि.२०४ पि (च) तावन् (यव) प्रजापतिः; समु.६३ पि (थ) लक्ष (भक्ष) तावन् (यव) प्रजापतिः.

(३) मिता.२।१११ उत्त.; अप.२।१११; व्यक.९३; पमा.१८७ शुद्धि...यम् (अथवा षट्कसंख्यया) प्रजापतिः; सवि.२०४ शुद्धि...यम् (अथवा षट् च संख्यया) हिमजस्य (हैमस्य च) वा (च) प्रजापतिः; व्यसौ.८६ यम् (यः) नारदः; व्यप्र.२०९ असंशयम् (न संशयः) वा (च); राकौ.४२९ सप्त (सदा) द्धि (चि) शयम् (शयाः); बाल.२।१११ व्यसौवत्, पू.; समु.६३ पूर्वार्धं सविवत्, प्रजापतिः.

(४) मिता.२।१११; अप.२।१११ (वारिजान्यतिशीर्णानि कृत्रिमाणि तथैव च); व्यक.९३ नि च (न्यति); पमा.१८७ जानि च (जातानि) प्रजापतिः; नृप्र.१५ चारितानि च (वारिजान्यति); सवि.२०४ पमावत्, प्रजापतिः; व्यसौ.८५जी(की) भूमिजानि च सर्वाणि (सर्वाणि शास्त्रतत्त्वज्ञः); व्यप्र.२०९; व्यउ.६५ चारि (ज्ञापि); समु.६३ पमावत्, प्रजापतिः.

(५) अप.२।१११; व्यक.९३; स्मृचि.५६; दित. ६०३; व्यसौ.८६; व्यप्र.२११.

(६) मिता.२।१११ (=) पेषु (पानां); अप.२।१११ त्वं विष (विष त्वं); व्यक.९३-९४; पमा.१८९; व्यनि.

**पापेषु दर्शयात्मानं शुद्धानाममृतं भव ॥**

प्राड्विवाकः कृतोपवासो महादेवं पूजयित्वा तस्य पुरतो विषं व्यवस्थाप्य धर्मादिपूजां हवनान्तां विधाय प्रतिज्ञापत्रं शोध्यस्य शिरसि निधाय विषमभिमन्त्रयते ।

*मिता.२।१११

**[1]मृत्युमूर्ते विष त्वं हि ब्रह्मणा परिनिर्मितम् ।**
**त्रायस्वैनं नरं पापात् सत्येनास्याऽमृतं भव ॥**
**[2]त्रिरात्रं पञ्चरात्रं वा पुरुषैः स्वैरधिष्ठितम् ।**
**कुहकादिभयाद् राजा धारयेद्दिव्यकारिणम् ॥**

* वीमि. मितागतम् ।

१३ [ मयारामः ] मितावत् ; **स्मृचि**.५६ त्वं विष (विष त्वं) ष्टं (ष्टः) पू.; **नृप्र**.१५; **दित**.६०३-६०४ त्वं विष (विष त्वं) पेषु (पिनां); **सवि**.२०६ ( = ) मितावत् ; **व्यसौ**.८६ स्मृच्विवत्; **वीमि**.२।१११ ( = ) पेषु (पिनां); **व्यप्र**.२११ अपवत् ; **व्यउ**.६६ मितावत् ; **विता**.२५४ (=) मितावत् ; **समु**.६३.

(१) **मिता**.२।१११ ( = ); **पमा**.१८९; **व्यनि**.१३ [मयारामः] तें (र्तिः); **दित**.६०३-६०४ ( = ); **सवि**. २०६ तें (र्तिः) निर्मितम् (कीर्तिता); **वीमि**.२।१११ ( = ); **व्यउ**.६६ ( = ); **विता**.२५४ ( = ) तम् (तः); **समु**.६३.

(२) **मिता**.२।१११ धार (रक्ष); **अप**.२।१११ दिभयात् (शङ्कया) कारि (धार); **व्यक**.९४; **पमा**.१९० वा (स्यात्); **स्मृचि**.५६ स्वै (तैं) दिभयात् (शङ्कया); **दित**.६०४ धार (वार); **सवि**.२०७; **व्यसौ**.८६ दिभयात् (शङ्कया); **व्यप्र**.२११; **व्यउ**.६७; **समु**.६३.

**[1]औषधीर्मन्त्रयोगांश्च मणीनथ विषापहान् ।**
**कर्तुः शरीरसंस्थांस्तु गूढोत्पन्नान् परीक्षयेत् ॥**
**[2]भक्षिते तु यदा स्वस्थो मूर्छाछर्दिविवर्जितः ।**
**निर्विकारो दिनस्यान्ते शुद्धं तमिति निर्दिशेत् ॥**

पितामहेन तु दिनान्तोऽवधिरुक्तोऽल्पमात्राविषयः ।

मिता.२।१११

## हारीतः

**[3]पूर्वाह्णे शीतले देशे विषं देयं घृतप्लुतम् ॥**

(१) **मिता**.२।१११; **अप**.२।१११ स्तु गूढोत्पन्नान् (श्च गूढानन्यान्); **व्यक**.९३ अपवत्; **पमा**.१९०; **दित**. ६०४ ( = ) स्तु (श्च); **सवि**.२०५ ( = ) (औषधान्यपि रत्नानि मन्त्रयोगान् विषापहान् । कर्तुः शरीरसंस्थाश्च परीक्षेत महीपतिः ॥ ); **व्यसौ**.८५ अपवत् ; **व्यप्र**.२११ दितवत् ; **व्यउ**.६७ दितवत् ; **समु**.६३ दितवत्.

(२) **मिता**.२।१११ मिति (मपि); **अप**.२।१११ तु यदा (यदि स); **व्यक**.९४ तु यदा स्वस्थो (यदि स सुस्थो); **पमा**. १९० मितावत्; **स्मृचि**.५६ तु यदा स्वस्थो (यदि सत्वस्थो); **नृप्र**.१५ मितावत्; **दित**.६०४ (=) तु (च) स्वस्थो (सुस्थे); **सवि**.२०० ( = ) मिति (मभि); **व्यसौ**.८६ तु यदा स्वस्थो (यदि सुस्थोऽसौ) शुद्धं ...त् (शुद्धोऽसौ मनुरब्रवीत्) नारदः; **व्यप्र**.२११ मिति (मपि) स्वस्थो (सुस्थो); **व्यउ**.६७ दिनस्यान्ते (न नश्येत) मिति (मपि); **विता**.२५६ स्मृचिवत् ; **समु**.६३ मितावत् . (३) **सवि**.२०५.

# कोशविधिः

## विष्णुः

**[1]अथ कोशः ।**
**[2]उग्रान् देवान् समभ्यर्च्य तत्स्नानोदकात् प्रसृतित्रयं पिबेत् ।**
**[3]इदं मया न कृतमिति व्याहरन् देवताभिमुखः ।**

(१) **विस्मृ**.१४।१. (२) १४।२; **व्यक**.९५; **स्मृच**. ११६ समभ्य (अभ्य); **स्मृचि**.५६; **दित**.६०६ दकात् (दक); **सवि**.२११ ग्रान् (ग्र); **व्यसौ**.८७; **व्यप्र**.२१२; **विता**. २५८ दकात् (दकं); **प्रका**.७३ स्मृचवत् ; **समु**.६४ स्मृचवत् .

(३) **विस्मृ**.१४।३; **व्यक**.९५; **स्मृच**.११६ मया (मत्या); **स्मृचि**.५६ व्याह...खः (व्यवहारं देवसंमुखः); **दित**.

**[1]यस्य पश्येद्द्विसप्ताहात्त्रिसप्ताहादथापि वा ।**
**रोगोऽग्निर्ज्ञातिमरणं राजदण्डमथापि वा ॥**

६०६ (भि०); **सवि**.२११ रन् (रेत्) खः (खम्); **व्यसौ**. ८७; **व्यप्र**.२१२; **विता**.२५८ (व्याह ...खः०); **प्रका**.७३ स्मृचवत् ; **समु**.६४ स्मृचवत् .

(१) **विस्मृ**.१४।४ राजदण्ड (राजातङ्क); **अप**.२।११३; **व्यक**.९५ राज ...वा (सैव तस्य विभावना); **स्मृच**.११६; **पमा**.१९३; **व्याचि**.९३ विस्मृवत् ; **व्यत**.२२९ विस्मृवत् , उत्त.; **सवि**.२१० दथापि (त्तथाऽपि); **व्यप्र**.२१४; **विता**. २६२ गोऽग्निः (गाग्नी) शेषं विस्मृवत् ; **राकौ**.४३३ उत्त., याज्ञवल्क्यः; **प्रका**.७४; **समु**.६४ राज...वा (अर्थभ्रंशो धनक्षयः).

**तमशुद्धं विजानीयात् तथा शुद्धं विपर्यये ।**
**दिव्ये च शुद्धं पुरुषं सत्कुर्याद्धार्मिको नृपः ॥**

**याज्ञवल्क्यः**

**[२]देवानुग्रान् समभ्यर्च्य तत्स्नानोदकमाहरेत् ।**
**संश्राव्य पाययेत्तस्माज्जलं तु प्रसृतित्रयम् ॥**

(१) प्रयोजनाल्पत्वे रुच्या वा पूर्वोक्तनियमवानेव नृपब्राह्मणसंनिधौ गत्वा 'देवानुग्रान्' इति । देवानुग्रानादित्यप्रभृतीन् सम्यग्विधानेनाभिमुख्यकरणायार्चयित्वा तदीयं स्नानोदकमादायाभियुक्तं संश्राव्य 'मैवं मंस्थाः यथान्योदकपानमभिप्रेतवैतृष्ण्यादिनिमित्तमिति । एतद्धि मिथ्यावादिनं जन्मान्तरशतैरपि दारिद्र्यकुष्ठाद्युपद्रवैः प्रतिकुर्वाणं दुर्निवारं भविष्यति इत्येवमालोच्य सत्यावष्टम्भमन्तरेण मा कुरु' इत्युक्त्वा प्रसृतित्रयं पाययेत् । विश्व.२।११६

(२) उग्रान् देवान् दुर्गादित्यादीन् समभ्यर्च्य गन्धपुष्पादिभिः पूजयित्वा संस्नाप्य तत्स्नानोदकमाहरेत् । आहृत्य च 'तोय त्वं प्राणिनां प्राण' इत्यादिना तत्तोयं प्राड्विवाकः संश्राव्य शोध्येन च तत्तोयं पात्रान्तरे कृत्वा 'सत्येन माभिरक्ष त्वं वरुणे'-त्यनेनाभिमन्त्रितं पाययेत्प्रसृतित्रयम् । एतच्च साधारणधर्मेषु धर्मावाहनादिसकलदेवतापूजाहोमसमन्त्रकप्रतिज्ञापत्रशिरोनिवेशनान्तेषु सत्सु च । ×मिता.

(३) अथ जलविषयोरुत्सन्नानुष्ठानत्वात् तद्विधिमनाख्याय कोशविधिरुच्यते । *स्मृच.११६

(४) तुशब्देन जलान्तरमिश्रणव्यवच्छेदः । वीमि.

(५) संश्राव्य इदं मया न कृतमिति प्रतिज्ञाय । व्यउ.६७

**अर्वाक् चतुर्दशादह्नो यस्य नो राजदैविकम् ।**
**व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः ॥**

(१) कथमत्र व्यक्तिरित्यत आह— आ चतुर्दशमादिति । तात्कालिकं ललाटस्वेदादि द्विसप्तरात्रेण वा दैवराजकं यद्युग्रं व्यसनं नोत्पद्यते ततो निःसंशयं शुद्धिरवसेया । एतच्च सर्वदिव्यशेषतया श्लोकार्थमवसेयम् । तात्कालिकं यदि दाहादि ललाटस्वेदादि वा न स्यात्, यदि चतुर्दशरात्रादर्वाग् दैवराजकव्यसनानुत्पादः, ततो निःसंशयं शुद्धिः, अन्यथा तु विपर्यय इत्यभिप्रायः । विश्व.२।११७

(२) ननु तुलादिषु विषान्तेषु समनन्तरमेव शुद्ध्यशुद्धिभावना, कोशे तु कथमित्यत आह—अर्वागिति । चतुर्दशादह्नः पूर्वं यस्य राजिकं राजनिमित्तं, दैविकं देवप्रभवं, व्यसनं दुःखं, घोरं महत्, नो नैव जायते अल्पस्य देहिनामपरिहार्यत्वात्स शुद्धो वेदितव्यः । ऊर्ध्वं पुनरवधेर्न दोषः।यथाह नारदः—'ऊर्ध्वं यस्य द्विसप्ताहाद्वैकृतं तु महद्भवेत् । नाभियोज्यः स विदुषा कृतकालव्यतिक्रमात्' ॥ इत्यर्थसिद्धमेवोक्तम् । 'अर्वाक् चतुर्दशादह्न' इत्येतन्महाभियोगविषयम् । महाभियोगेष्वेतानि प्रस्तुत्याभिधानात् । अवध्यन्तराणि पितामहेनोक्तानि अल्पविषयाणि । 'कोशमल्पेऽपि दापयेत्' इति स्मरणात् । तानि च, 'त्रिरात्रात्सप्तरात्राद्वा द्वादशाहाद्द्विसप्तकात् । वैकृतं यस्य दृश्येत पापकृत्स उदाहृतः' इति ॥ महाभियोगोक्तद्रव्यादर्वाचीनं द्रव्यं

× अप., व्यप्र. मितागतम् । * सवि. स्मृचगतम् ।

(१) **विस्मृ.**१४।५; **अप.**२।११३ पू.; **व्यक.**९६ व्ये च (व्येनं) उत्त.; **स्मृच.**११६ पू.; **पमा.**१९३ तथा शुद्धं (विशुद्धिं तु) पू.; **व्यचि.**९३ पू.; **व्यत.**२२९ र्यये (र्ययात्) पू.; **सवि.**२१० व्यतवत्, पू.; **व्यप्र.**२१४; **विता.**२६२ व्यतवत्, पू.; **राकौ.**४३३ पू., याज्ञवल्क्यः; **प्रका.**७४ पू.

(२) **यास्मृ.**२।११२; **अपु.**२५५।४७-४८ लं तु (लात्तु); **विश्व.**२।११६ लं तु (लात्तु); **मिता.**; **अप.** विश्ववत्; **स्मृच.**११६ त्तस्माज्जलं तु (त्तस्माज्जलात्तु); **पमा.**१९१ विश्ववत्; **व्यचि.**८३ (=) विश्ववत्; **स्मृचि.**५६; **सवि.**२०९ लं तु (लाच्च): २११ पू.; **मच.**८।११६ विश्ववत्; **वीमि.** विश्ववत्; **व्यप्र.**२१२ विश्ववत्; **व्यउ.**६७ विश्ववत्; **राकौ.**४३२ विश्ववत्; **प्रका.**७३ स्मृचवत्; **समु.**६४ स्मृचवत्.

(१) **यास्मृ.**२।११३; **अपु.**२५५।४८-४९ अर्वाक् चतुर्दशा (आ चतुर्दशमा) न संशयः (असंशयम्); **विश्व.**२।११७ अर्वाक् चतुर्दशा (आ चतुर्दशमा); **मिता.**; **अप.**; **व्यक.**९५; **व्यचि.**८३ अर्वाक् चतुर्दशा (आ चतुर्दशका); **स्मृचि.**५६, ५८; **सवि.**२०९; **मच.**८।११६; **चन्द्र.**१६४ अर्वाक् चतुर्दशा (आ चतुर्दशका) दैवि (दैव) शुद्ध...यः (ज्ञेयः शपथे शुचिः); **व्यसौ.**८७-८८ विश्ववत्; **वीमि.** अर्वाक् चतुर्दशा (आ चतुर्दशिका); **व्यप्र.**२१४; **व्यउ.**६८; **व्यम.**३८; **राकौ.**४३३; **समु.**६४ अर्वाक् (कुर्यात्).

त्रिधा विभज्य त्रिरात्राद्यपि पक्षत्रयं व्यवस्थापनीयम्।

तुलादीनि कोशान्तानि पञ्च महादिव्यानि यथोद्देशं योगीश्वरेण व्याख्यातानि। स्मृत्यन्तरे त्वल्पाभियोगविषयाण्यन्यान्यपि दिव्यानि कथितानि। *मिता.

## नारदः

[1]अतःपरं प्रवक्ष्यामि कोशस्य विधिमुत्तमम्।
शास्त्रविद्भिर्यथा प्रोक्तं सर्वकालाविरोधिनम्॥

कोशविधिदिव्याधिकारश्लोकोऽयम्। अभा.८०

[2]पूर्वाह्णे सोपवासस्य स्नातस्यार्द्रपटस्य च।
सशूकस्याऽव्यसनिनः कोशपानं विधीयते।
इच्छतः श्रद्दधानस्य देवब्राह्मणसंनिधौ॥

(१) यावेतौ पुरुषौ वर्जितौ तौ द्वावपि सर्वावस्थत्वाद्देवताभिः पूर्वपरिहृतौ। तेन निर्दैवत्यौ तौ कोशदिव्ये वर्जिताविति। शेषं सुबोधम्। अभा.८०

(२) सशूकः आस्तिकः। मिता.२।११२

(३) सशूकस्य असत्येन दिव्यकरणेऽनिष्टशङ्कायुक्तस्य। कोशपानं उग्रदेवतास्नानोदकपानम्। व्यप्र.२१२

[3]तमाहूयाभिशस्तं तु मण्डलाभ्यन्तरे स्थितम्।
आदित्याऽभिमुखं कृत्वा पाययेत्प्रसृतित्रयम्॥

तथा गोमयस्य मण्डलं कृत्वा तत्र शोध्यमादित्याभिमुखं स्थापयित्वा पाययेदिति नारदवचनादवगन्तव्यम्। यथाह—तमिति। मिता.२।११२

[4]यद्भक्तः सोऽभियुक्तः स्यात्तद्दैवत्यं तु पाययेत्।
अभ्यर्च्य देवतां स्नाप्य जलस्य प्रसृतित्रयम्॥

एष पानविधिः। अभा.८०

[5]अर्चयित्वा तु तं देवं प्रक्षाल्य सलिलेन तु।
एनश्च श्रावयित्वा तु पाययेत्प्रसृतित्रयम्॥

[3]स्वेच्छया यः पिबेत्कोशं कश्चिच्चेद्दूषितो नरः।
विसंवदेन्नरो लोभात् शूली भवति दुर्मतिः॥

[4]आत्मनः कामकारेण कोशं पीत्वा विसंवदेत्।
दरिद्रो व्याधितो मूर्खः सप्तजन्मनि जायते॥

[5]बलात्कोशं हि यो दत्वा हितमिच्छेत चात्मनः।
स विनाशी भवेत्तस्य तच्च कार्यं न सिध्यति॥

अत्रान्त्यश्लोकमभियोक्ता श्रावयितव्यः सामर्थ्यात्। शोध्यस्तु श्रावितं श्रुत्वेदं मया न कृतमिति वदन् पिबेत्। स्मृच.११६

[6]सप्ताहाभ्यन्तरे यस्य द्विसप्ताहेन वाऽशुभम्।
रोगोऽग्निर्ज्ञातिमरणमर्थभ्रंशो धनक्षयः।

---

* अप., वीमि. मितागतम्।

(१) **नास्मृ.**४।३२७ नम् (यत्); **अभा.**८० नास्मृवत्; **व्यक.**९४ अतः (ततः); **पमा.**१९१; **व्यसौ.**८६; **व्यप्र.**२१२; **राकौ.**४३२; **समु.**६३.

(२) **नास्मृ.**४।३२८ तृतीयार्धं नास्ति; **अभा.**८० नास्मृवत्; **मिता.**२।११२ नास्मृवत्; **अप.**२।११२; **व्यक.**९४; **पमा.**१९१ पानं (कार्यं); **नृप्र.**१६; **दित.**६०४ सशू (संसूच); **व्यसौ.**८६-८७; **व्यप्र.**२१२; **राकौ.**४३२; **समु.**६३.

(३) **मिता.**२।११२; **अप.**२।११२; **पमा.**१९२ आदि ...त्वा (एनः संश्रावयित्वा तु); **दित.**६०५; **सवि.**२०९ न्तरे (न्तर): २११ पाय...म् (तोयं संश्राव्य पाययेत्) उत्त.; **व्यप्र.**२१३; **व्यउ.**६८; **व्यम.**३५; **विता.**२५९ तमा (समा); **राकौ.**४३३ याज्ञवल्क्यः; **समु.**६४.

(१) **नास्मृ.**४।३२९; **अभा.**८०; **अप.**२।११२ तु पाय (प्रदाप) पू.; **समु.**६४ दैवत्यं (देवस्य) पू.

(२) **व्यक.** ९५ लेन तु (लेन च); **स्मृच.**११६ उत्त.; **स्मृचि.**५६; **सवि.**२११ वयित्वा तु (वयेत्पातुः) उत्त.; **व्यसौ.**८७ लेन तु (लेन च) एनश्च श्राव (एनं च शाप); **व्यप्र.**२१३; **व्यम.**३६; **विता.**२५९; **प्रका.**७३ उत्त.; **समु.**६४.

(३) **स्मृच.**११६; **सवि.**२११ उत्त., विष्णुः; **व्यप्र.**२१३ कश्चिच्चेद् (न कश्चिद्) विसं (न सं) शूली (श्वित्री); **व्यउ.**६८ विसं (न सं) शूली (श्वित्री); **विता.**२५९ (मिथ्यैव यः पिबेत्कोशं श्वित्री भवति दुर्मतिः) एतावदेव; **प्रका.**७३; **समु.**६४ शूली (श्वित्री).

(४) **स्मृच.**११६; **सवि.**२११ खः (ढः) स्मृत्यन्तरम्; **व्यप्र**२१३ आत्म (जाना); **व्यउ.**६८ व्यप्रवत्; **विता.**२५९ न्मनि (न्मसु) उत्त.; **प्रका.**७३; **समु.**६४.

(५) **स्मृच.**११६; **व्यप्र.**२१३; **व्यउ.**६८ चात्म (वात्म); **प्रका.**७३; **समु.**६४. (६) **नास्मृ.**४।३३० तिम (तम) द्वितीयार्धं विना; **अभा.**८० नास्मृवत्; **स्मृच.**११६-११७ ऽशुभम् (पुनः) (प्रत्यात्मिकं भवेद्यस्य विद्यात्तस्य पराजयम्); **पमा.**१९३ ऽशुभम् (पुनः) भ्रंशो धन (नाशो यशः) (प्रत्यात्मिकं भवेत्तस्य विद्यात्तस्य पराजयम्); **सवि.**२१० द्वितीयार्धः; **प्रका.**७४ स्मृचवत्; **समु.**६४ स्मृचवत्, तृतीयार्धः, विष्णुः.

**प्रत्यात्मिकं तु दृश्येत सैव तस्य विभावना ॥**

(१) चतुर्दशदिवसमध्ये यस्य राजदैविकं किञ्चिदशुभं दृश्यते, तस्याशुद्धस्य सैव भावना उपलक्षणमित्यर्थः । अभा.८०

(२) प्रत्यात्मिकं न समुदायप्रयुक्तम् । अर्थोऽत्र पुत्रादिरभिप्रेतः । अन्यथा धनशब्दवैयर्थ्यात् । स्मृच.११७

[1]**ऊर्ध्वं यस्य द्विसप्ताहाद्वैकृतं सुमहद्भवेत् ।**
**नाभियोज्यः स विदुषा कृतकालव्यतिक्रमात् ॥**

(१) कृतकालमध्ये देवरक्षितत्वात् । अभा.८०

(२) द्विसप्ताहादिति पूर्वावधीनामुपलक्षणार्थम् । कृतकालव्यतिक्रमादिति हेतोरवध्यन्तरेऽपि समानत्वात् । स्मृच.११७

(३) एतन्महाभियोगविषयं, 'महाभियोगेष्वेतानि' इति प्रस्तुत्याभिधानात् । सवि.२०९

(४) अत्र द्विसप्ताह इत्यवधिकालमात्रोपलक्षणम् । कृतकालव्यतिक्रमहेतोरभिधानात् । तेनैकविंशतिरात्रस्यावधिकालत्वाश्रयणे चतुर्दशरात्रादूर्ध्वमपि वैकृतोत्पत्तौ पराजयः । एवं त्रिरात्रात्सप्तरात्रात्प्रागपि वैकृतोत्पत्तौ न पराजय इति सिद्धम् । *व्यप्र.२१५

[2]**यथोक्तेन विधानेन पञ्च दिव्यानि धर्मवित् ।**
**दत्वा राजाऽभियुक्तानां प्रेत्य चेह च नन्दति ॥**

(१) ये केचिदभिशस्ताः पुरुषा भवन्ति, तेषां सत्यानृतपरिज्ञाने वराकिनो मानुषस्य सामर्थ्यं (न) भवति । राज्ञां राज्ये धर्मार्थयोर्मूलमिदं, यत् दुष्टनिग्रहः शिष्टप्रतिपालनम् । ( दुष्टशिष्टस्वरूपं च प्रमाणवाक्यम् । तद्विज्ञायते ? ) तत्र प्रकटार्थे मिथ्यावादिदुष्टानां साक्षिलिखितभुक्तयः प्रमाणानि निर्दिष्टानि । ये पुनः प्रच्छन्नपापकारिणः पुरुषाः अथवा शुद्धसमाचारा एव शङ्कामात्रे दोषाऽभिशापदुःखिताः तेषां सत्यासत्यपरीक्षार्थं एतानि दिव्यानि मुनिभिरवतारितानि । उक्तं चैतत्तैः— 'अद्यापि कालसामर्थ्येऽप्यत्र धर्मः स्फुटः स्थितः । सत्यासत्यपरीक्षायां यद्दिव्यं निकषोपमम् ॥ अभूतं शोधयत्यर्थं भूतं चार्थं विलुम्पयन् । दिव्यादिव्येन केनेह साधुभिः साध्यते शठः ॥ दिव्ये भयं न कर्तव्यं धर्मन्यायस्थितैर्नरैः । स्वकीयं तं न कस्यापि परकीयं न कस्यचित्' ॥ इत्यादिकम् । इत्येवैतदुक्तं भवति महर्षिणा—'यथोक्तेन' इत्यादि । इहलोके परलोके चाऽर्थसमृद्धिसंपन्नो भवतीति । अभा.८०–८१

(२) अनेनाभियोक्तृणामेतानि दिव्यानि न भवन्तीत्यर्थादुक्तं भवति । स्मृच.९६

**तस्माद्यथोक्तविधिना दिव्यं देयं विशारदैः ।**
**अयथोक्तप्रयुक्तं तु न शक्यं तस्य साधने ॥**

## नारदीयमनुसंहिता

[3]**अतःपरं प्रवक्ष्यामि कोशस्य विधिमुत्तमम् ।**
**मध्याह्ने सोपवासस्य स्नातस्यार्द्राम्बरस्य च ॥**

गतार्थः । नाभा.

[4]**न शूद्रस्याव्यसनिनः कोशपानं विधीयते ।**
**यद्भक्तः सोऽभियुक्तः स्यात्तद्देवत्यं तु प्राङ्मुखः॥**
**प्रत्युच्चार्य ततोऽध्वास्यं पाययेत्प्रसृतित्रयम् ।**
**द्विसप्ताहान्तरात् तस्य त्रिसप्ताहेन वा शुभः ॥**

प्रत्युक्त्वा तत्कृतं तेनानुमतमूर्ध्वास्यं प्रसृतित्रयं पाययेत् । चतुर्दशाहादेकविंशत्यहाद् वा । नाभा.

---

* विता., बाल. २।११३ व्यप्रगतम् ।

(१) **नास्मृ.**४।३३१ वैकृतं सुमहत् (न्महदप्यशुभं) विदुषा (केनापि); **अभा.**८० नास्मृवत्; **मिता.**२।११३ सुमह (तु मह); **अप.**२।११३ मितावत्; **व्यक.**९५ वैकृतं (दुष्कृतं); **स्मृच.**११७; **पमा.**१९३ सुमह (तु समु); **व्यचि.**९४; **दित.**६०५ द्वि (हि) शेषं मितावत्; **सवि.**२०९ मितावत्; **चन्द्र.**१६४ क्रमात् (क्रमः); **व्यसौ.**८७ मितावत्; **व्यप्र.**२१५ स वि (तु वि) शेषं मितावत्; **व्यउ.**६९ पमावत्; **विता.**२६२; **राकौ.**४३४ मितावत्; **प्रका.**७४; **समु.**६५.

(२) **नास्मृ.**४।३३३ युक्ता (शस्ता); **अभा.**८० नास्मृवत्; **व्यक.**९६ दत्वा (ददत्); **स्मृच.**९६ (यथा विधानेन सदा पञ्च दिव्यानि धर्मतः) दत्वा (ददत्); **सवि.**१६६ (यथा विधानेन सदा पञ्च दिव्यानि सर्वतः । ददद्राजाऽभियुक्ताय प्रेत्य स्वर्गेऽभिनन्दति ॥); **व्यसौ.**८८ व्यकवत्; **प्रका.**६२ स्मृचवत्; **समु.**५० पूर्वार्धं स्मृचवत्, दत्वा (दद्यात्).

(१) **अप.**२।९७; **बाल.**२।९९ (यथोक्तविधिना नेयं दिव्यं दिव्यविशारदैः । अयथोक्तं प्रदत्तं च न दत्तं साध्यसाधने ॥ ) नारदबृहस्पतिकात्यायनाः.

(२) **नासं.**२०।३९. (३) **नासं.**२०।४०. (४) २०।४१.

[1]प्रत्यात्मिकं तु दृश्येत सैव तस्य विभावना ।
ऊर्ध्वं त्रिसप्तदिवसाद् वैकृतं सुमहद्यदि ।
नाभियोज्यः स विदुषा कृतकालव्यतिक्रमात् ॥

एवं प्रत्युच्चार्य पायितः, द्वित्रिसप्ताहादर्वाग् यद्यशुभं पुत्रादिमरणं गृहदाहादि वा स्यात्, अशुभं स्यादित्यभ्युपगम्य दत्तत्वात् प्रत्यात्मिकमसाधारणमशुभं तदन्तरा यदि दृश्येत, विभावितोऽशुद्ध इति । तत ऊर्ध्वं कृतकालातिक्रमान्नाभियोज्यः शुद्ध इत्यर्थः । नाभा.

[2]महापराधे निर्दोषे कृतघ्ने क्लीबकुत्सिते ।
नास्तिकव्रात्यबालेषु कोशपानं विवर्जितम् ॥

ब्रह्महत्यादौ निर्दोषे च कृतघ्नादिषु च न कोशपानं तथाभूताः प्रकुर्युरपि । नाभा.

[3]चराचरस्य जगतो जलेश ! प्राणधारणम् ।
मानुषोऽयं त्वया देव ! धर्मतः शुद्धिमिच्छति ॥
[4]अद्भ्यश्चाग्निरभूद्यस्मादतस्तोये विशेषतः ।
तस्मात्सत्येन भगवञ्जलेश ! त्रातुमर्हसि ॥

कोशपानमन्त्रो गतार्थः । नाभा.

[5]यथोक्तेन विधानेन पञ्च दिव्यानि धर्मवित् ।
ददद् राजाभिशस्तेभ्यः प्रेत्य चेह च नन्दति ॥

गतार्थः श्लोकः । नाभा.

## बृहस्पतिः

[6]यद्भक्तः सोऽभियुक्तः स्यात्तद्देवायुधमण्डलम् ।
प्रक्षाल्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयम् ॥
[7]सप्ताहाद्वा द्विसप्ताहाद्यस्यार्तिर्न प्रजायते ।
पुत्रदारधनानां च स शुद्धः स्यान्न संशयः ॥
[8]त्रिरात्रं पञ्चरात्रं वा पुरुषैः स्वैरधिष्ठितम् ।
निरुद्धं चारयेत्तत्र कुहकाशङ्कया नृपः ॥

(१) नासं.२०।४२. (२) नासं.२०।४३. (३) नासं.२०।४४. (४) नासं.२०।४५. (५) नासं.२०।४६.

(६) अप.२।११२; व्यक.९५; व्यसौ.८७; व्यप्र.२१४ देवा (स्यैवा); व्यम.३५; समु.६४.

(७) व्यक.९६; स्मृच.११७; पमा.१९३ स्यार्तिर्न प्रजा (स्य हानिर्न जा); स्मृचि.५६; चन्द्र.१६५; व्यप्र.२१४; व्यउ.६९; व्यम.३६ प्रजाय (प्रदृश्य); विता.२६१-२६२; प्रका.७४; समु.६४. (८) विश्व.२।११७.

## कात्यायनः

[1]स्वल्पेऽपराधे देवानां स्नापयित्वाऽऽयुधोदकम् ।
पाय्यो विकारे चाशुद्धो नियम्यः शुचिरन्यथा ॥

(१) कात्यायनोक्तविशेषान्महापराधे देवस्नानोदकमिति विषयभेदः । दित.६०६

(२) पाय्यः पाययितव्यः । नियम्यः दण्ड्यः । आयुधग्रहणं ताम्रादिनिर्मितादित्यमण्डलस्याप्युपलक्षणम् । व्यप्र.२१३

[2]शोणितं दृश्यते यत्र हनुवालं च सीदति ।
गात्रं च कम्पते तस्य तमशुद्धं विनिर्दिशेत् ॥
[3]अथ दैवविसंवादस्त्रिसप्ताहात्तु दापयेत् ।
अभियुक्तं प्रयत्नेन तमर्थं दण्डमेव च ॥

(१) अत्र दिनसंख्याल्पत्वमहत्त्वे अभियोगविषयस्याल्पत्वमहत्त्वानुसारेण वेदितव्ये । तत्रात्यन्तमहाभियोगे त्रिसप्ताहो महाभियोगमात्रे तु चतुर्दशाह इत्यादि कल्प्यम् । अप.२।११३

(२) दैवविसंवादः—दैवकृतो रोगज्ञातिमरणादिरूपो विरोधः । 'शोच्यस्य जननी तातः पुत्रो वा तत्सहोदरः । भार्या पुत्रवती धर्म्या ज्ञातयः परिकीर्तिताः' ॥ व्यक.९५

(३) दैवविसंवादो दैविकव्याधीनामाविर्भावः । स्मृच.११६

[4]तस्यैकस्य न सर्वस्य जनस्य यदि तद्भवेत् ।
रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः ॥

(१) अप.२।११२; व्यक. ९५ नारदः; दित.६०५-६०६ ल्पेऽ (ल्पा); व्यसौ.८७ स्वल्पे (अल्पे); व्यप्र.२१३; विता.२५८ पू.; समु.६४ धोदकम् (धानि तु).

(२) व्यसौ.८८ कात्यायनबृहस्पती.

(३) अप.२।११३ प्रय (तु य); व्यक. ९५; स्मृच. ११६; दीक.४२ दस्त्रि (दं त्रि) हात्तु (हं तु); स्मृसा.११९ (एवं देवविसंवादि द्विसप्ताहाद्विकृतं यदि) पू.; व्यचि.९३ तम (तद); दित.६०५ दस्त्रि (दे द्वि) हात्तु (हं तु) तम (तद); व्यप्र.२१४ हात्तु (हं तु); व्यउ.६८-६९ प्रयत्ने (प्रयुक्ते); व्यम.३९ दस्त्रि (दे द्वि); प्रका.७४; समु.६४.

(४) व्यक.९५ दाप्यो (दद्यात्); दीक.४२; स्मृसा.११९ (=) व्यकवत्; व्यचि.९३ व्यकवत्; व्यत.२२९ व्यकवत्; दित.६०५; व्यम.३८.

तस्यैकस्येति, न तु देशव्यापको मरणादिः किन्तु शपथानन्तरजन्मा अभियुक्तस्यासाधारणो रोगादिर्भङ्गलिङ्गमित्यर्थः। व्यचि.९३

[1]ज्वरातिसारविस्फोटाः गूढास्थिपरिपीडनम्।
नेत्ररुग्गलरोगश्च तथोन्मादः प्रजायते॥
[2]शिरोरुग्भुजभङ्गश्च दैविका व्याधयो नृणाम्॥
[3]शतार्धं दापयेच्छुद्धमशुद्धो दण्डभाग्भवेत्॥

एवं दिव्यैर्जयपराजयावधारणे दण्डविशेषोऽपि दर्शितः कात्यायनेन—शतार्धमिति। मिता.२।११३

[4]विषे तोये हुताशे च तुलाकोशे च तण्डुले।
तप्तमाषकदिव्ये च क्रमाद्दण्डं प्रकल्पयेत्॥

[1]सहस्रं षट्शतं चैव तथा पञ्चशतानि च।
चतुस्त्रिद्व्येकमेवं च हीनं हीनेषु कल्पयेत्॥

'निह्नवे भावितो दद्यात्' इत्युक्तदण्डेनायं दिव्यनिबन्धनो दण्डः समुच्चीयते। मिता.२।११३

[2]अवष्टम्भाभियुक्तस्य विशुद्धस्यापि कोशतः।
स दण्डमभियोगं च दापयेदभियोजकम्।
दिव्येन शुद्धं पुरुषं सत्कुर्याद्धार्मिको नृपः॥

अत्र कोशपदं दिव्यपदं चोपलक्षणम्। उत्तीर्णतामात्रेण तात्पर्यं न्यायतौल्यादिति। व्यचि.९४

[3]उभयोर्यदि कल्याणं जायते ह्याचतुर्दशात्।
ग्रहीतुश्च शुभे चैव दातुर्भङ्गो ध्रुवो भवेत्॥
उभयोर्यदि भङ्गः स्याद्दैवराजन्यतस्करैः।
पूर्वं यस्य भवेद्भङ्गो राजा तं दण्डयेत् ध्रुवम्॥
युगपद्भङ्गमापन्ने कर्तव्यं द्रव्यशोधनम्।
बहुव्ययो भवेद्यस्य भङ्गस्तस्यैव च ध्रुवः॥

## पितामहः

[4]कोशस्याथ प्रवक्ष्यामि विधिं धर्मं सनातनम्।
कारणेषु च दातव्यो येषु येषु च तान् शृणु॥
[5]भक्तो यो यस्य देवस्य पाययेत्तस्य तज्जलम्।
समभावे तु देवानां आदित्यस्य तु पाययेत्॥

अत्र च स्नाप्यदेवनियमः कार्यनियमोऽधिकारि-

---

(१) व्यक.९५ गूढा (स्थूला); स्मृच.११६ ज्वरा (क्षया) गूढा (ताल्व); दीक.४२ टाः (टः) गूढा (स्तना) उत्तरार्धे (नेत्ररुक् शूलरोगश्च दैविका व्याधयो नृणाम्); स्मृसा.११९ टाः (टः) क्रमेण मनुः; व्यचि.९३ टाः (टः) गश्च (गस्तु); व्यत.२२९ टाः (ट); दित.६०५ व्यतवत्; सवि.२१० ज्वरा (क्षया) स्फोटाः गूढा (स्फोटवाता) गलरोगश्च (जलरोगाश्च) पितामहः; चन्द्र.१६५ टाः (ट) गूढा (शूला); व्यसौ.८७; गूढा (शूला) गल (भाल) दः प्र (दश्च) क्रमेण पितामहः; व्यप्र.२१४ गूढा (शूला) गल (भाल); व्यउ.६९ (=) गूढा (शूला); व्यम.३८ टाः (ट) श्च (स्तु); विता.२६२ तिसार (पस्मार) गूढा (शूला); प्रका.७४ स्मृचवत्; समु.६४ स्मृचवत्.

(२) व्यक.९५; स्मृच.११६; स्मृसा.११९ क्रमेण मनुः; व्यचि.९३; व्यत.२२९ भुज (गुद); दित.६०५; सवि.२१० दैविका व्याधयो (व्याधयो दैविका) पितामहः; चन्द्र.१६५; व्यसौ.८७ पितामहः; व्यप्र.२१४ रुग् (रु); व्यउ.६९ व्यप्रवत्; व्यम.३८; विता.२६२ रोरुग् (रोंऽस); प्रका.७४; समु.६४.

(३) मिता.२।११३; स्मृच.१२२; पमा.२०४ शतार्धं (न दडं) अशु (न शु); व्यचि.९४; दवि.३५० द्धो (द्धौ); सवि.२१९; व्यसौ.९० मनुकात्यायनौ; विता.८९ द्धम (द्धाव): २७२; राकौ.४४०; प्रका.७७; समु.६७.

(४) मिता.२।११३; स्मृच.१२३; पमा.२०४ तुला (चर्या); व्यचि.९४; दवि.३५० दिव्ये (कल्पे); नृप्र.१६; सवि.२२०; व्यसौ.९० मनुकात्यायनौ; विता.८९,२७२ व्ये च (व्येन); राकौ.४४०; प्रका.७७; समु.६७.

(१) मिता.२।११३; स्मृच.१२३ नि च (नि तु); पमा.२०४ स्मृचवत्; व्यचि.९४ नेषु (ने च); दवि.३५० चैव (द्वे च) वं (कं); सवि.२२० नि च (नि तु) नेषु (ने च); व्यसौ.९० मनुकात्यायनौ; विता.८९:२७२ वं च (कं च); राकौ.४४० स्मृचवत्; प्रका.७७ नि च (नि तु) नेषु (नेन); समु.६७ स्मृचवत्.

(२) व्यक.९६; व्यचि.९४ स्यापि (स्य तु) च (तु); व्यसौ.८८. (३) स्मृचि.५८. (४) समु.५१.

(५) मिता.२।११२; अप.२।११२ तज्जलम् (तन्नरम्); व्यक.९४ अपवत्; स्मृच.११६; पमा.१९२; दीक.४२ तज्जलम् (तं नरम्) समभावे (तदभावे) तु (च); स्मृचि.५६; नृप्र.१६ तज्जलम् (तं नरं) तु (च); दित.६०५ (=); सवि.२१० अपवत्; व्यसौ.८७ अपवत्; वीमि.२।११३; व्यप्र.२१३; व्यउ.६७; व्यम.३५; विता.२५८; राकौ.४३३ तु (च); प्रका.७३; समु.६४.

नियमश्च पितामहादिभिरुक्तः–भक्त इति। मिता.२।१११

[1]**दुर्गायाः पाययेच्चौरान् ये च शस्त्रोपजीविनः।**
**भास्करस्य तु यत्तोयं ब्राह्मणं तन्न पाययेत् ॥**
[2]**दुर्गायाः स्नापयेच्छूलमादित्यस्य तु मण्डलम्।**
**अन्येषामपि देवानां स्नापयेदायुधानि तु ॥**
[3]**विस्रम्भे सर्वशङ्कासु संधिकार्ये तथैव च।**
**एषु कोशः प्रदातव्यो नित्यं चित्तविशुद्धये ॥**

कोशः शिरोरहित इति शेषः। स्मृच.९७

**पूर्वाह्णे सोपवासस्य स्नातस्यार्द्रपटस्य च।**
**सशूकस्याव्यसनिनः कोशपानं विधीयते ॥**
[5]**प्राङ्मुखं कारिणं कृत्वा पाययेत्प्रसृतित्रयम्।**
**पूर्वोक्तेन विधानेन स्नातमार्द्राम्बरं शुचिम् ॥**

कारिणं दिव्यकारिणं शोध्यमिति यावत्। पूर्वोक्तेन सकलदिव्यसाधारणतया प्रागुक्तेनेत्यर्थः। व्यप्र.२१३

[1]**त्रिरात्रात्सप्तरात्राद्वा दशाहाद्वा द्विसप्तकात्।**
**वैकृतं यस्य दृश्येत पापकृत्स तु मानवः ॥**

(१) महाभियोगोक्तद्रव्यादर्वाचीनं द्रव्यं त्रिधा विभज्य त्रिरात्राद्यपि पक्षत्रयं व्यवस्थापनीयम्। *मिता.२।११३

(२) अयं चावधिः स्वल्पकार्यनिर्णायकसत्यादिशपथविषयः। अल्पकालीनायाः शुद्धिभावनायाः तत्रैवोचितत्वात्। सत्यादिशपथान् प्रस्तुत्य अभिहितत्वाच्च त्रिरात्राद्यवधयस्तु कोशविषयाः। कोशमधिकृत्याभिधानात्। तत्रापि त्रिरात्रावधिः तण्डुलविषयद्रव्यादर्वाचीनद्रव्यविषयः। सप्तरात्रावधिस्तु महाभियोगद्रव्यादर्वाचीनद्रव्यविषयः। द्विसप्ताहावधिस्तु महाभियोगविषयः। त्रिसप्ताहावधिस्तु 'विंशद्दशविनाशे तु कोशपानं विधीयते' इति प्रतिपादितकोशविषय इत्यवगन्तव्यम्। औचित्यात् सर्वत्रावधावूर्ध्वमवधेर्वैकृतदर्शनेऽपि न पापकृच्छोध्यः। अविधिसामर्थ्यादूर्ध्वकालीनस्य रोगादेर्निमित्तान्तरकारितत्वात्। स्मृच.११७

(३) एतेषां च त्रिरात्रादीनां पक्षाणां अभियोगाल्पत्वमहत्वाभ्यां व्यवस्था ज्ञातव्या। +व्यप्र.२१५

[2]**तस्यैकस्य न सर्वस्य जनस्य यदि तद्भवेत्।**

---

(१) **मिता**.२।११२; **अप**.२।११२ न (तु); **व्यक**.९४ उत्तरार्धे (भासुरस्य ततोऽन्यांस्तु ब्राह्मणांश्च न पाययेत्); **स्मृच**.११६; **पमा**.१९२ तु (च); **स्मृचि**.५६; **दित**.६०५ (=); **सवि**.२१०; **व्यसौ**.८७; **व्यप्र**.२१३; **व्यउ**.६७; **व्यम**.३५; **विता**.२५८; **राकौ**.४३३; **प्रका**.७३-७४; **समु**.४५.

(२) **मिता**.२।११२; **अप**.२।११२ तु (च) अन्येषामपि (इतरेषां तु) येदा (यित्वा); **व्यक**.९५; **स्मृच**.११६; **पमा**.१९२ अन्येषामपि (इतरेषां तु); **स्मृचि**.५६ स्नापयेदायुधानि तु (आयुधानि स्नाप्य एव च); **दित**.६०५ नि तु (नि च); **सवि**.२१० पमावत्; **व्यसौ**.८७ याः स्ना (याः स्था) शेषं पमावत्; **वीमि**.२।११३; **व्यप्र**.२१४ स्नाप (पाय); **व्यउ**.६७; **विता**.२५८ व्यप्रवत्; **राकौ**.४३३ तु (च); **प्रका**.७४; **समु**.६४.

(३) **मिता**.२।११२; **अप**.२।९५ (=) षु (ष); **व्यक**.८१ अपवत्; **स्मृच**.९७; **पमा**.१५४ नित्यं चित्तवि (विद्धिश्चित्त); **व्यचि**.८८ शङ्का (संज्ञा); **स्मृचि**.५२; **नृप्र**.१२; **व्यसौ**.७५; **व्यप्र**.१७३; **व्यउ**.६७ अपवत्; **राकौ**.४३३; **प्रका**.६२; **समु**.५१.

(४) **मिता**.२।११२; **स्मृचि**.५६; **व्यउ**.६८.

(५) **व्यक**.९५; **पमा**.१९१ शुचिम् (च तम्); **सवि**.२०८-२०९; **व्यसौ**.८७; **व्यप्र**.२१३ मार्द्राम्बरं (मात्रं स्थिरं); **व्यम**.३६ उत्त.; **विता**.२५९ र्द्राम्बरं (र्द्रांशुकं) उत्त.; **समु**.६४ कारिणम् (कार्यिणम्).

* दित., सवि., विता. मितागतम्। + व्यउ. व्यप्रवत्।

(१) **मिता**.२।११३ दशाहाद्वा (द्वादशाहाद्) तु मानवः (उदाहृतः); **अप**.२।११३ दशा...कात् (द्विसप्ताहादथापि वा); **स्मृच**.११७ अपवत्; **पमा**.१९२ पूर्वार्धं अपवत्, यस्य (यत्र); **दीक**.४२ अपवत्; **व्यचि**.९३ अपवत्; **दित**.६०५ मितावत्; **सवि**.२०९ (=) तु मानवः (उदाहृतः); **चन्द्र**.१६५ अपवत्; **व्यसौ**.८७ अपवत्; **वीमि**.२।११३ मितावत्; **व्यप्र**.२१४ अपवत्; **व्यउ**.६९ स तु मानवः (समुदाहृतः); **विता**.२६१ दशा...कात् (द्विसप्ताहात्तथापि वा) : २७१ सविवत्, मनुः; **राकौ**.४३४ व्यउवत्; **प्रका**.७४ अपवत्; **समु**.६४ (त्रिरात्राद्वा सप्तरात्राद्दशरात्राद्द्विसप्तकात्).

(२) **अप**.२।११३; **स्मृच**.११७; **पमा**.१९२ न (तु); **व्यचि**.९३; **सवि**.२१० (न तस्यैकस्य किन्त्वेवं सर्वस्य यदि तद्भवेत्) वना (वनम्); **चन्द्र**.१६५ सैव...ना (दद्यादर्थं दमं च सः); **व्यसौ**.८७; **व्यप्र**.२१४ सैव (नैव); **व्यउ**.६९; **प्रका**.७४; **समु**.६४.

रोगोऽग्निर्ज्ञातिमरणं सैव तस्य विभावना ॥

न केवलं शोध्यस्य स्वस्यैव विकृतत्वापत्तौ पापकृत्त्वं, अपि तु स्वकीयजनस्य विकृतत्वापत्तावपीत्याह स एव तस्यैकस्येति । तद्रोगादिवैकृतं कृतकोशपानस्यैकस्य यदि भवेत्तदैव पापकृत्त्वमिति न । किन्तु तदीयजनस्य सर्वस्य मध्ये यदा यस्यकस्यचिद्भवेत् तदाऽपीत्यर्थः ।

×स्मृच.११७

## हारीतः

[१]गोमयेनानुलिप्तायां भूमौ शोध्यं तु पाययेत् ॥

## शातातपः

[२]सप्ताहाभ्यन्तरे यस्य सप्ताहानन्तरेऽपि वा ।
रोगो वह्निर्ज्ञातिमृतिस्तथा राजिकदैविकम् ॥

× व्यप्र स्मृचगतम् ।

(१) सवि.२०९. (२) समु.६४.

[१]जायते वोग्रमातङ्कपशुधान्यधनक्षयः ।
यस्यैवमादिकोऽनर्थस्तमशुद्धं विनिर्दिशेत् ॥

## स्मृत्यन्तरम्

[२]त्रिपक्षे वा त्रिसप्ताहे सप्ताहाभ्यन्तरेऽपि वा ।
रोगोऽग्निर्ज्ञातिमरणं पशुधान्यधनक्षयः ॥
एवमादीनि दृश्यन्ते यस्य घोराणि सर्वशः ।
तं पापं विनयेद्राजा तस्य सारापराधतः ॥
[३]सप्ताहे वा द्विसप्ताहे न विपद् राजदैविकी ।
बान्धवेषु सपिण्डेषु धनेषु शपथे शुचिः ॥

## अनिर्दिष्टकर्तृकवचनम्

[४]व्यसने तु समुत्पन्ने राजदैविकतस्करैः ।
गृहक्षेत्रादिदाहे वाऽशुद्धिं तस्य विनिर्दिशेत् ॥

(१) समु.६४. (२) समु.६४. (३) समु.६५. (४) स्मृचि.५८.

# तण्डुलविधिः

## नारदः

[१]तण्डुलानां प्रवक्ष्यामि विधिं भक्षणचोदितम् ।
चौर्ये तु तण्डुला देया नान्यत्रेति विनिश्चयः ॥

इति तण्डुलदिव्याधिकारश्लोकः । अभा.८१

[२]तण्डुलान् कारयेच्छुक्लान् शालेर्नान्यस्य कस्यचित् ।
मृन्मये भाजने कृत्वा भास्करस्याग्रतः शुचिः ॥
[३]स्नानोदकेन संपृक्तान् रात्रौ तत्रैव वासयेत् ।
प्रभातायां रजन्यां तु त्रिःकृत्वा प्राङ्मुखाय च ॥
[४]स्नाताय सोपवासाय दद्याद्देवार्चकः स्वयम् ।
स्वयं कार्यं समुद्दिश्य सत्यासत्यपरीक्षणे ॥
[५]तण्डुलान् भक्षयित्वा तु पत्रे निष्ठीवयेत्ततः ।
अश्वत्थपत्राभावे तु भूर्जपत्रे ततः स्मृतम् ॥
[६]दृश्यते शोणितं यस्य दन्तजालं च सीदति ।
गात्रं च कम्पते यस्य तमशुद्धं विनिर्दिशेत् ॥

(१) नास्मृ.४।३३७; अभा.८१. (२) नास्मृ.४।३३८; अभा.८१. (३) नास्मृ.४।३३९; अभा.८१.

(४) नास्मृ.४।३४०; अभा.८१ स्वयं कार्यं स (कार्यस्वरूप). (५) नास्मृ.४।३४१; अभा.८१.

(६) नास्मृ.४।३४२; अभा.८१ तमशुद्धं (अशुद्धं तं).

इति तण्डुलविधिः प्रकटार्थ एव । अभा.८१

## बृहस्पतिः

[१]सोपवासः सूर्यग्रहे तण्डुलान् भक्षयेच्छुचिः ।
शुद्धः स्याच्छुक्लनिष्ठीवे रक्तमिश्रे तु दोषभाक् ॥
[२]शोणितं दृश्यते यस्य हनुस्तालु च शीर्यति ।
गात्रं च कम्पते यस्य तमशुद्धं विनिर्दिशेत् ॥

## कात्यायनः

[३]देवतास्नानपानीयदिग्धतण्डुलभक्षणे ।
शुद्धनिष्ठीवनाच्छुद्धो नियम्योऽशुचिरन्यथा ॥

(१) व्यक.९६; स्मृच.११८ तु (च); पमा.१९५; सवि.२१२ द्धः (द्धिः) भाक् (कृत्); व्यसौ.८८ ग्र (गृ); व्यप्र.२१६ ग्र (गृ) ष्ठीवे (ष्ठीवी); विता.२६४ श्रे तु (श्रेण); राकौ.४३५ पू.; प्रका.७४-७५ तु (च); समु.६५ व्यसौवत्.

(२) व्यक.९६ बृहस्पतिपितामहौ; पमा.१९५ स्य ह (त्र ह) ति (तः); व्यसौ.८८ हनुस्तालु च शीर्यतः (हनुर्वालं च सीदति); राकौ.४३५.

(३) व्यक.९६; दित.६०६-६०७ दिग्ध (स्निग्ध); व्यसौ.८८; व्यप्र.२१५ णे (णम्) पू., २१६ शुद्ध (शुक्ल) उत्त.; व्यम.३६ शुद्ध (शुद्धि); समु.६५ दिग्ध (स्निग्धं) शुद्ध (शुक्ल).

शिरोरोपितपत्रकं तण्डुलान् भक्षयित्वा निष्ठीवयेत् प्राड्विवाक इति । निष्ठीवयेदिति ण्यन्तात् सिद्धं तुलानिरूपितं सर्वदिव्यसाधारणं च धर्मावाहनादिहवनान्तं पूर्ववदिहापि कर्तव्यम् । दित.६०७

## पितामहः

**[1]तण्डुलानां प्रवक्ष्यामि विधिं भक्षणचोदितम् ।**
**चौर्ये तु तण्डुला देया नान्यत्रेति विनिश्चयः ॥**

अन्यस्मिन् स्त्रीसंग्रहणाद्यधनविवाद इत्यर्थः । धनविवादे तु चौर्यादन्यत्रापि तण्डुला देयाः । 'तदर्धार्धस्य तण्डुला' इति कात्यायनेनोक्तत्वात् । न च तद्वचनं चौर्यविषयमेवास्त्विति वाच्यम्, 'दत्तस्यापह्नवो यत्र' इत्युपक्रमविरोधापत्तेः । अतश्चौर्यग्रहणमर्थविवादप्रदर्शनार्थमिति मन्तव्यम् । *स्मृच.११७

**[2]तण्डुलान् कारयेच्छुक्लान् शालेर्नान्यस्य कस्यचित् ।**
**मृन्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः ॥**
**[3]स्नानोदकेन संमिश्रान् रात्रौ तत्रैव वासयेत् ।**
**आवाहनादिपूर्वं तु कृत्वा रात्रौ विधानतः ॥**

---

* पमा., व्यप्र. स्मृचगतम् ।

(१) मिता.२।९६ उत्त.:२।११३ चो (नो) चौर्ये (चौरे) त्रेति (स्येति); अप.२।११३ चोदितम् (वर्जने) त्रेति वि (स्मिन्निति); व्यक.९६ चोदितम् (वर्जने); स्मृच.११७ त्रेति वि (स्मिन्निति); पमा.१९४ भक्ष (लक्ष) निश्च (निर्ण); स्मृचि. ५७ चौर्ये (चौरे) त्रेति (स्येति); नृप्र.१६ चोदितम् (वर्जने) चौर्ये (शूद्रे); सवि.२१२-२१३ स्मृचवत्; व्यसौ.८८ व्यकवत्; वीमि.२।११३ स्मृचिवत्; व्यप्र.२१५; व्यउ.६९ भक्ष (लक्ष) शेषं स्मृचिवत्; व्यम.३६ भक्षणचोदितम् (लक्षणबोधितम्); राकौ.४३५; प्रका.७४ स्मृचवत्; समु.६५ स्मृचवत्.

(२) मिता.२।११३; अप.२।११३ कृत्वा (कुर्यात्); व्यक.९६; स्मृच.११७ कार (क्षाल) लेर्ना (लेया); पमा.१९४; दीक.४२ अपवत्; स्मृचि.५७ शुचिः (स्थितः); नृप्र.१६; दित.६०६; सवि.२१२ क्षा (श्रा) शेषं स्मृचवत्; व्यसौ. ८८; वीमि.२।११३; व्यप्र.२१५; व्यउ.६९; व्यम.३६; विता.२६४ कस्य (केन); राकौ.४३५; प्रका.७४ स्मृचवत्; समु.६५ स्मृचवत्.

(३) मिता.२।११३ पू.; अप.२।११३ पू.; व्यक.९६ पू.; स्मृच.११८; पमा.१९४; दीक.४२ पू.; स्मृचि.५७ पू.; दित.६०६ पू.; सवि.२१२ त्रैव (त्राधि) पू.; व्यसौ. ८८ श्रान् (स्य) पू.; वीमि.२।११३ पू.; व्यप्र.२१५; व्यउ.६९ पू.; व्यम.३६; विता.२६४ व्यसौवत्; राकौ. ४३५; प्रका.७४; समु.६५.

शुचिर्भूत्वा प्राड्विवाको रात्रावादित्यस्य पुरतो नातिदूरे तण्डुलानुपकल्प्य धर्मावाहनादिहोमान्तं सर्वदिव्यसाधारणविधिं विधाय आदित्यस्नानोदकेन यथास्थितान् तण्डुलानाप्लुत्य प्रभातपर्यन्तं तथैव स्थापयेदित्यर्थः । स्मृच.११८

**[1]प्रभाते कारिणो देया आदित्याभिमुखस्य तु ॥**
**[2]प्राङ्मुखोपोषितं स्नातं शिरोरोपितपत्रकम् ।**
**तण्डुलान् भक्षयित्वा तु पत्रे निष्ठीवयेत्ततः ॥**
**[3]पिप्पलस्य तु नान्यस्य अभावे भूर्ज एव तु ॥**

शिरोरोपितपत्रकं तण्डुलान् भक्षयित्वा निष्ठीवयेत् प्राड्विवाकः । भक्षयित्वेति च ण्यन्तात्क्त्वे रूपम् । *मिता.२।११३

---

* सवि., व्यप्र. मितावत् ।

(१) अप.२।११३ तु (च); व्यक.९६; स्मृच.११८ (प्रभाते कार्यिणे देयास्त्रिःकृत्वा प्राङ्मुखाय तु); पमा.१९४ (प्रभाते कारिणो देयास्त्रिःकृत्वः प्राङ्मुखाय तु); दीक.४२; नृप्र.१६; व्यसौ.८८; व्यप्र.२१५ णो (णे) खस्य (खाय); विता.२६४ व्यप्रवत्; राकौ.४३५ व्यप्रवत्; प्रका.७४ स्मृचवत्; समु.६५ स्मृचवत्.

(२) मिता.२।११३; अप.२।११३ तः(दा) उत्त.; व्यक. ९६त्ततः(त्रिधा) उत्त.;स्मृच.११८व्यकवत्;पमा.१९४उत्त.; दीक.४२ व्यकवत्, उत्त.; स्मृचि.५७; नृप्र.१६ उत्त.; दित. ६०६ व्यकवत्; सवि.२१२ खोपोषितं (खं दोषिणं); व्यसौ. ८८ अपवत्, उत्त.; वीमि.२।११३; व्यप्र.२१६; व्यउ. ६९; विता.२६४ तं स्नातं (तः स्नातः) कम् (कः); राकौ. ४३५; प्रका.७४ व्यकवत्; समु.६५ तु (ऽथ) त्ततः (त्तथा).

(३) मिता.२।११३; अप.२।११३ (भूर्जस्यैव तु नान्यस्य अभावे पिप्पलस्य तु); व्यक.९६ अपवत्; स्मृच.११८ अपवत्; पमा.१९५ (भूर्जस्यैव तु नान्यस्य पलाशे पिप्पलस्य तु); स्मृचि.५७; नृप्र.१६ अपवत्; दित.६०६ अपवत्; सवि. २१२ व तु (व यत्); व्यसौ.८८ अपवत्; वीमि.२।११३ एव तु (पत्रकम्); व्यप्र.२१६ अपवत्; व्यउ.६९; विता. २६४ अपवत्; राकौ.४३५ अपवत्; प्रका.७४ अपवत्; समु.६५ अपवत्.

[1]शोणितं दृश्यते यस्य हनुस्तालु च शीर्यते ।
गात्रं च कम्पते यस्य तमशुद्धं विनिर्दिशेत् ॥

(१) मिता.२।११३ शोणि...स्य (लोहितं यस्य दृश्येत) म्पते (म्पयेत्); अप.२।११३ स्य ह (त्र ह) लु (लुः); व्यक. ९६ हनु...ते (हनुजालं च सीदति) बृहस्पतिपितामहौ; स्मृच ११८ र्यते (र्यति); दीक.४२ शीर्यते (सीदति); स्मृचि.५७ शोणि (लोहि) र्यते (र्यति); नृप्र.१६ दीकवत्; दित ६०६; सवि.२१२ शोणि...स्य (लोहितं यदि दृश्येत);

[1]संरक्तास्तण्डुला यस्य यत्र न स्युः सुचर्विताः ।
विकृतं ष्ठीवनं यस्य तमशुद्धं विनिर्दिशेत् ॥
उपजिह्वातालुपाती मुखरोगी तथैव च ।
न तेषां तण्डुला देयाः शङ्कया शोणितस्य च ॥

वीमि.२।११३ शोणि (लोहि); व्यप्र.२१६; व्यउ.६९ शोणि (लोहि) र्यते (र्यति); व्यम.३६ स्य ह (त्र ह); विता. २६४; प्रका.७५ स्मृचवत्; समु.६५ स्मृचवत्.

(१) अप.२।११३.

## तप्तमाषविधिः

### नारदः

[1]अतःपरं प्रवक्ष्यामि तप्तमाषकलक्षणम् ।
शुभाशुभपरीक्षार्थं ब्रह्मणाऽभिहितं स्वयम् ॥
सौवर्णे राजते पात्रे आयसे मृन्मयेऽपि वा ।
क्षिप्रं घृतमुपादाय तदग्नौ स्थापयेच्छुचिः ॥
सौवर्णीं राजसीं ताम्रीमायसीं वा सुशोभिताम् ।
सलिलेनासकृद्धौतां निक्षिपेत्तत्र मुद्रिकाम् ॥
भ्रमत्पतितायामन्तः स नः स्पर्शसुभीषणः ।
ततस्त्वनेन मन्त्रेण घृतं तदभिमन्त्रयेत् ॥
परं पवित्रममृतं घृत त्वं यज्ञकर्मसु ।
दहाग्ने यद्यहं पापो हिमशीतं शुचौ भव ॥
प्रदेशिन्यक्षता यस्य संस्पृष्टायां परीक्षणे ।
यदि विस्फोटका न स्युः शुद्धोऽसावन्यथा न हि ॥

इति माषकविधिः स्पष्ट एव । अभा.८१

### बृहस्पतिः

[2]समुद्धरेत्तैलघृतात्सुतप्तात्तप्तमाषकम् ।
अङ्गुष्ठाङ्गुलियोगेन सत्यमामन्त्र्य वीतभीः ॥

सत्यमामन्त्र्य 'एह्येहि भगवन् धर्म' इत्यादिमन्त्रेण धर्मं संशोध्य । व्यक.९७

[3]कराग्रं यो न धुनुयात् विस्फोटो वा न जायते ।
शुद्धो भवति धर्मेण पितामहवचो यथा ॥

(१) नास्मृ.४।३४३-३४८ घृत त्वं (घृतं त्वं); अभा.८१.

(२) व्यक.९७; व्यप्र.२१७ पू.; राकौ.४३६ त्तप्त (त्तैल) पू. (३) व्यक.९७ पितामहबृहस्पती; व्यसौ.८८ यो...वा (न धुनेद्यस्तु विस्फोटश्च); राकौ.४३७ यो न धुनुयात् (न धुनेद्यस्तु) वा (स्य).

### पितामहः

[1]तप्तमाषस्य वक्ष्यामि विधिमुद्धरणे शुभम् ।
कारयेदायसं पात्रं ताम्रं वा षोडशाङ्गुलम् ॥
[2]चतुरङ्गुलखातं तु मृन्मयं वाऽथ मण्डलम् ॥

(१) मण्डलं वर्तुलमित्यर्थः । मिता.२।११३

(२) एवंविधं पात्रं घृततैलाभ्यां गव्यघृतेनैव वा पूरयित्वा लौकिकमग्निं दिव्यदेशे प्रतिष्ठाप्य तत्र तापयेत् । स्मृच.११८

[3]पूरयेत् घृततैलाभ्यां विंशत्या वै पलैस्तु तत् ॥

(१) मिता.२।११३ कार...त्रं (सौवर्णं राजतं वापि) उत्त.; अप.२।११३ षोडशाङ्गुलम् (ऽथ हिरण्मयम्); व्यक. ९६; स्मृच.११८; पमा.१९५; दीक.४२ पात्रं (भाण्डं) उत्त.; स्मृचि.५७; नृप्र.१६ उत्त.; दित.६०७ उत्त.; सवि. २१३; व्यसौ.८८; वीमि.२।११३ मितावत्, उत्त.; व्यप्र. २१६; व्यउ.६९ उत्त.; व्यम.३६ द्व (द्वा); विता.२६६ उत्त.; राकौ.४३६ व्यमवत्; प्रका.७५; समु.६५.

(२) मिता.२।११३; अप.२।११३ खातं तु (मुत्सेधं) थ मण्ड (पि वर्तु); व्यक.९६ थ (पि); स्मृच.११८; पमा. १९५; दीक.४२ खातं (मात्रं) थ (पि); नृप्र.१६ खातं तु (कं वापि) थ (पि); दित.६०७; सवि.२१३ खातं (मात्रं); व्यसौ.८८ व्यकवत्; वीमि.२।११३; व्यप्र.२१६ व्यकवत्; व्यउ.६९; व्यम.३६ व्यकवत्; विता.२६६ व्यकवत्; राकौ.४३६ व्यकवत्; प्रका.७५; समु.६५.

(३) मिता.२।११३ वै (तु); अप.२।११३ (पूरयेद् घृततैलाभ्यां पलैर्विंशतिभिस्तु तत्); व्यक.९६; स्मृच.११८ वै (वा); पमा.१९५; दीक.४२; स्मृचि.५७ वै (वा)

केचिदत्र वाशब्दाद्यश्रवणात् घृततैलगव्यघृतानां समुच्चयमिच्छन्ति । तदसत् । व्रीहियवयोरिव निरपेक्ष श्रुतिबलेनैव विकल्पावगतेः । अतो विंशतिपलघृततैलं गव्यं वा घृतं पात्रे निक्षिप्य तापयेत् । पक्षद्वयेऽपि तापे वर्तमाने धर्मावाहनादिशोध्यशिरःपत्रारोपणान्तं सर्वदिव्यसाधारणं विधिं विदध्यात् । ततःपरं पक्षद्वये प्रकारभेदः । स्मृच.११८

**[१]सुवर्णमाषकं तस्मिन् सुतप्ते निक्षिपेत्ततः ।**
**अङ्गुष्ठाङ्गुलियोगेन तप्तमाषकमुद्धरेत् ॥**

(१) उद्धरेदिति वचनादुत्क्षेपणमात्रं न प्रक्षेपणमादरणीयम् । *मिता.२।११३

(२) तत्र तावत् घृततैलतापनपक्षे भेदमाह स एव—सुवर्णमाषकमिति । माषकं कर्षषोडशांशप्रमाणं सुवर्णग्रहणमत्र द्विकृष्णलप्रमाणकराजतमाषनिवृत्त्यर्थम् । तस्यात्वेन दुर्ग्रहत्वात् । ततश्च हैमं ताम्रं वा माषकं निक्षिपेदित्यर्थः । तस्मिन् घृततैले अङ्गुष्ठाङ्गुलियोगेन तर्जन्यङ्गुष्ठमध्यमानां समूहेनेत्यर्थः । स्मृच.११८

(३) इदं च तप्तमाषोद्धरणं प्राड्विवाकेन घृततैलयोस्तापे समारब्धे धर्मावाहनादिशोध्यशिरःपत्रारोपणान्तं सर्वसाधारणं कर्म विधाय 'त्वमग्ने वेदाश्चत्वार' इत्यादिना अग्निदिव्यप्रकरणोक्तेन मन्त्रेणाभिमन्त्र्य कारयितव्यम् । शोध्यस्तु याज्ञवल्क्योक्तेन 'त्वमग्ने सर्वभूतानाम्' इत्यादिमन्त्रेणाभिमन्त्र्य तप्तमाषमुद्धरेत् । + व्यप्र.२१७

**[१]कराग्रं यो न धुनुयाद्विस्फोटो वा न जायते ।**
**शुद्धो भवति धर्मेण निर्विकारकराङ्गुलिः ॥**
**[२]सौवर्णे राजते ताम्रे आयसे मृन्मयेऽपि वा ।**
**गव्यं घृतमुपादाय तदग्नौ तापयेच्छुचिः ॥**
**[३]सौवर्णीं राजतीं ताम्रीमायसीं वा सुशोधिताम् ।**
**सलिलेन सकृद्धौतां प्रक्षिपेत्तत्र मुद्रिकाम् ॥**

गव्यघृततापनपक्षेऽपि कृते दिव्यसाधारणविधौ विशेषमाह स एव—सौवर्णीमिति । स्मृच.११९

**[४]भ्रमद्वीचितरङ्गाढ्ये अनखस्पर्शगोचरे ।**
**परीक्षेतार्द्रपर्णेन चुरुकारं सघोषकम् ॥**
**[५]ततश्चानेन मन्त्रेण सकृत्तदभिमन्त्रयेत् ॥**

---

* सवि. मितावत् ।

+ शेषं स्मृचगतम् । विता. व्यप्रगतम् ।

स्तु तत् (स्तथा); **नृप्र.१६; दित.६०७** वै (तु); **सवि.२१३** वै (वा); **व्यसौ.८८; वीमि.२।११३** वै (तु) तत् (तम्); **व्यप्र.२१६** अपवत्; **व्यउ.७०** वै (तु); **व्यम.३६** वै (च); **विता.२६६** त्या वै (त्यर्थ); **राकौ.४३६** व्यमवत्; **प्रका.७५** वै (वा); **समु.६५.**

(१) **अप.२।११३** तप्त...रेत् (चोद्धरेत्तप्तमाषकम्); **व्यक.९७; स्मृच.११८; पमा.१९५** तप्त...रेत् (उद्धरेत्तप्तमाषकम्); **दीक.४२** (सुतप्ते निःक्षिपेत्तत्र सुवर्णस्य तु माषकम्); **स्मृचि.५७** (सुतप्ते निःक्षिपेत्तत्र सुवर्णस्य च माषकम्) पू.; **नृप्र.१६** पमावत्; **दित.६०७** पमावत्; **सवि.२१३** पमावत्; **व्यसौ.८८** पमावत्; **वीमि.२।११३** पमावत्; **व्यप्र.२१६** र्ण (र्णं); **व्यउ.७०; व्यम.३६; विता.२६६; प्रका.७५; समु.६५.**

(१) **मिता.२।११३; अप.२।११३; व्यक.९७** धुनुयात् (धुनेत्) वा (ऽस्य) निर्विकारकराङ्गुलिः (पितामहवचो यथा) पितामहबृहस्पती; **स्मृच.११८; पमा.१९६; दीक.४२** (कराग्रं न धुनेद्यस्तु विस्फोटश्च न जायते) शेषं व्यकवत्; **स्मृचि.५७; नृप्र.१६; दित.६०७** उत्तरार्धं व्यकवत्; **सवि.२१३** वति (वतु;) **व्यसौ.८८** दीकवत्; **वीमि.२।११३; व्यउ.७०;** विस्फो (प्रस्फो); **व्यम.३६; प्रका.७५; समु.६५.**

(२) **मिता.२।११३; पमा.१९५** उत्त.:१९६; **नृप्र.१६** उत्त.; **दित.६०७; सवि.२१३** उत्त. : **२१४** सौ (सु); **व्यप्र.२१७; व्यउ.७०; व्यम.३६** तद (तदा); **राकौ.४३७; प्रका.७५** उत्त.; **समु.४५.**

(३) **मिता.२।११३; स्मृच.११९; पमा.११६** सु (विं); **नृप्र.१६** पमावत्; **दित.६०७** र्णी (र्णां) तीं (तां) वा (च); **सवि.२१४** प्र...काम् (मुद्रिकां तत्र निक्षिपेत्); **व्यप्र.२१७** शोधिताम् (शोभनाम्); **व्यउ.७०** शोधि (शोभि); **व्यम.३६** व्यउवत्; **राकौ.४३७** व्यउवत्; **प्रका.७५; समु.६५.**

(४) **मिता.२।११३** अ (ह्य) चु (च) सघो (सुघो); **स्मृच.११९** चु (चू); **पमा.१९६** क्षेता (क्षेप्ता) रुका (रुल्का) स (सु;) **दित.६०७** अ (न) चुरु (चुचु); **सवि.२१४** अ (न) चु (च); **व्यप्र.२१७** अ (ह्य) ता (दा); **व्यउ.७०** अ (स) चुरु (रुरु); **व्यम.३६; राकौ.४३७** चु (च) सघो (सुघो); **प्रका.७५** स्मृचवत्; **समु.६५** स्मृचवत्.

(५) **मिता.२।११३; स्मृच.११९; दित.६०७; सवि.२१४** दभि (दर्पि); **व्यप्र.२१७; व्यम.३६** दभि (मभि); **राकौ.४३७; प्रका.७५; समु.६५.**

परं पवित्रममृतं घृत त्वं यज्ञकर्मसु ।
दह पावक पापं त्वं हिमशीतं शुचौ भव ॥
उपोषितं ततः स्नातमार्द्रवाससमागतम् ।
ग्राहयेन्मुद्रिकां तां तु घृतमध्यगतां तथा ॥
प्रदेशिनीं च तस्याथ परीक्षेयुः परीक्षकाः ।
यस्य विस्फोटका न स्युः शुद्धोऽसावन्यथाऽशुचिः॥

अत्रापि धर्मावाहनाद्यनुसंधातव्यम् । घृतानुमन्त्रणं प्राड्विवाकस्य । 'त्वमग्ने सर्वभूताना'मिति शोध्यस्याग्न्यभिमन्त्रणमन्त्रः । 'प्रदेशिनीं परीक्षेयु'रिति वचनात् प्रदेशिन्यैव मुद्रिकोद्धरणम् । *मिता.२।११३

(१) मिता.२।११३; स्मृच.११९; पमा.१९६; नृप्र. १६; दित.६०७-६०८; सवि.२१४ चौ (चेः); व्यप्र. २१७ तं शु (तः शु); व्यउ.७० व्यप्रवत्; व्यम.३६ सु (णि); विता.२६७ शीतं (शीतः); राकौ.४३७; प्रका.७५; समु.६५.

(२) मिता.२।११३; स्मृच.११९; पमा.१९६; स्मृसा. ११५ ततः (तथा) पू.; नृप्र.१६ माग(मन्वि); दित.६०७; सवि. २१४ प्रजापतिः; चन्द्र.१६० ततः (तथा) पू.; व्यप्र.२१७; व्यउ.७०; व्यम.३६; राकौ.४३७; प्रका.७५; समु.६५.

(३) मिता.२।११३; स्मृच.११९ क्षेयुः (क्षेरन्); पमा. १९७; नृप्र.१६ उत्त.; दित.६०७; सवि.२१४ प्रजापतिः; व्यप्र.२१७-२१८; व्यउ.८० (=) च तस्याथ (तु तत्स्थाप्य); व्यम.३६; राकौ.४३७; प्रका.७५ स्मृचवत्; समु.६५ स्मृचवत्.

अथवा मृन्मयं पात्रं तत्प्रमाणं तु कारयेत् ।
चतुरङ्गुलमुच्छ्रीयं कर्तव्यं परिमण्डलम् ॥
कटाहमात्रं तत्पात्रं कल्पनीयं तु युक्तितः ।
अङ्गुष्ठाङ्गुलियोगेन सत्यमामन्त्र्य वीतभीः ॥
उत्तार्य भूमौ तत्काले क्षिपेत्स्वर्णस्य माषकम् ।
अभावे तु कटाहस्य क्षिपेत्पात्रान्तरे च तत् ॥
त्रिपुटी ...... दद्यात् त्रिवारं करमध्यके ॥
न वै संतप्तमात्रं तु कर्तव्यं तु सभासदैः ।
मधुपिङ्गलवर्णं तु दृष्टिसंचारयोग्यकम् ॥
रक्तिकाष्टामितं कुर्यात् माषवद्घटना स्मृता ।
यदा फेनोद्गमस्तैले तदा पाको विधीयते ॥
सर्पिषश्च तदा पाकः फेनशान्तिर्यदा भवेत् ।
न चातिगाढं स्नेहं तन्न चक्षुर्विषयं तु यत् ॥
मुखान्न चलति या धारा पिण्डीभूतं च यद्भवेत् ।
तात्वोष्ठकण्ठशोषश्च तमशुद्धं विनिर्दिशेत् ॥

## कालिकापुराणम्

न धुनेद्यः कराग्रं तु यस्य रक्तं न जायते ।
विस्फोटाद्यैस्तथा दोषैः स शुद्धो यस्य चोज्झितम् ॥

* स्मृच. मितागतम् ।

(१) स्मृचि.५७. (२) व्यक.९७; व्यसौ.८८ (विस्फोटाद्यैरुज्झितं तु तस्य शुद्धिं विनिर्दिशेत्); व्यप्र.२१७.

# फालविधिः

## बृहस्पतिः

आयसं द्वादशपलं घटितं फालमुच्यते ।
अष्टाङ्गुलं भवेद्दीर्घं चतुरङ्गुलविस्तृतम् ॥

(१) एवं दिव्यदेशप्रतिष्ठापिताग्नौ निक्षिप्य धर्मावाहनादौ शोध्यशिरसि पत्रारोपणान्तसर्वदिव्यसाधारणविधावनुष्ठिते सुतप्तं कुर्यात् । स्मृच.११९

(१) अप.२।११३ पू.; व्यक.९७ आय (स्वाय); स्मृच. ११९; पमा.१९७ पलं (पल); दीक.४२ स्तृतम् (स्तरम्); स्मृसा.११८; स्मृचि.५७; नृप्र. १६ दीकवत्; दित.६०८ पलं (पल) स्तृतम् (स्तरम्); सवि.२१५ दीकवत्; व्यसौ. ८९; वीमि.२।११३ दीकवत्; व्यप्र.२१८; व्यम.३७; विता.२६८; राकौ.४३८; बाल.२।११३; प्रका.७५; समु.६५.

(२) एवंविधं फालं प्रतिष्ठितेऽग्नौ प्रक्षिप्य प्राड्विवाको धर्मावाहनादिशोध्यशिरःपत्रारोपणान्तं साधारणं कर्म कृत्वा 'त्वमग्ने' इत्यादिना प्रागुक्तमन्त्रेणाभिमन्त्र्य शोध्येन 'त्वमग्ने सर्वभूतानां' इत्यादिना प्रागुक्तमन्त्रेणामन्त्रणं कारयित्वा लेहयेत् । व्यप्र.२१८

अग्निवर्णं तु तच्चोरो जिह्वया लेहयेत्सकृत् ।
न दग्धश्चेच्छुद्धिमियादन्यथा तु स हीयते ॥

(१) अप.२।११३ न द (अद) तु स (त्वप) उत्त.; व्यक. ९७ श्चेत् (श्च); स्मृच.११९; पमा.१९७ हये (लिहे); दीक. ४२ तु तत् (ततः); स्मृसा.११८; स्मृचि.५८ जिह्वया लेहयेत् (लिह्यात्तज्जिह्वया); नृप्र.१६ पमावत्; दित.६०८

(१) चोरग्रहणं शोध्योपलक्षणार्थम् । स्मृच.११९

(२) चोरो गोचोरः । दित.६०८

तु स (स तु) शेषं दीकवत्; सवि.२१५ हये (लिहे) न द (अद) शुद्धिमि (शुचिर्भू); व्यसौ.८९; वीमि.२।११३ लेहये (संलिहे) न द (अद); व्यप्र.२१८ दीकवत्; व्यम.३७

## पितामहः

**³आयसं लेलिहानस्य जिह्वयाऽपि समादिशेत् ॥**

पमावत्; विता.२६९ पमावत्; राकौ.४३८ ह्येत (लिह्न्); बाल.२।११३ लेह्ये (संलिहे); प्रका.७५; समु.६५.

(१) अप.२।१०५; व्यक.८८ नारदः; स्मृसा.१२७; दित.६०८.

# धर्मजविधिः

## बृहस्पतिः

**¹पत्रद्वये लेखनीयौ धर्माधर्मौ सितासितौ ।**
**जीवदानादिकैर्मन्त्रैर्गायत्र्याद्यैश्च सामभिः ॥**
**²आमन्त्र्य पूजयेद्गन्धैः कुसुमैश्च सितासितैः ।**
**अभ्युक्ष्य पञ्चगव्येन मृत्पिण्डान्तरितौ ततः ॥**
**³समौ कृत्वा नवे कुम्भे स्थाप्यौ चानुपलक्षितौ ।**
**ततः कुम्भात्पिण्डमेकं प्रगृण्हीयावविलम्बितः ।**
**धर्मे गृहीते शुद्धः स्यात्संपूज्यश्च परीक्षकैः ॥**
**⁴अधर्मे प्रगृहीते तु दण्डयो निर्वास्य एव वा ॥**

(१) जीवदानादिकैः 'मा प्रगामपथो वयम्' इत्यादिभिः । व्यक.९७

(२) जीवदानमन्त्रस्तु शारदायाम्—'पाशाङ्कुशपुटा शक्तिर्वायुर्बिन्दुविभूषितः । याद्याः सप्त रकारान्ता व्योमसत्येन्दुसंयुतम् ॥ तदन्ते हंसमन्त्रः स्यात् ततोऽमुष्यपदं वदेत् । प्राणा इति वदेत्पश्चादिह प्राणास्ततः परम् ॥ अमुष्य जीव इह स्थितस्ततोऽमुष्यपदं वदेत् । सर्वेन्द्रियाण्यमुष्यान्ते वाङ्मनश्चक्षुरन्ततः ॥ श्रोत्रघ्राणपदे प्राणा इहागत्य सुखं चिरम् । तिष्ठन्त्वभिवधूरन्ते प्राणमन्त्रोऽयमीरितः ॥ प्रत्यमुष्य पदात्पूर्वं पाशाद्यानि प्रयोजयेत् । प्रयोगेषु समाख्यातः प्राणमन्त्रो मनीषिभिः' ॥ पाशाङ्कुशपुटा शक्तिरित्यनेन प्रथमं पाशबीजम् । आं ततः शक्तिबीजं, ह्रीं ततः अङ्कुशबीजं, क्रौं वायुर्यकारो बिन्दुविभूषितः तेन यं याद्याः सप्त रकारान्ता उद्धृतयकारमादाय सप्ताऽङ्कुशवाय्वनलावनिवरुणबीजानीत्यत्रोक्तेः । अत्र वायोरेकस्य पूर्वं पृथगुपन्यासः सप्तानां सबिन्दुत्वार्थः अत एव बीजानीत्युक्तम् । व्योमसत्येन्दुभूषितं व्योम हकारः इन्दुर्बिन्दुः तेनाहोम (?) अमुष्य इति षष्ठ्यन्तदेवतानामोपलक्षणम् । 'अदःपदं हि यद्रूपं यत्र मन्त्रे प्रदृश्यते । साध्याभिधानं तद्रूपं तत्र स्थाने नियोजयेत्' ॥ इति नारायणीयात् । अग्निवधूः स्वाहा गायत्र्यादिसामाम्नाने तु सप्रणवव्याहृतिगायत्रीमात्रं पठितव्यम् । 'जपहोमादि यत्किञ्चित् कृत्स्नोक्तं संभवेन्न चेत् । तत्सर्वं व्याहृतिभिः कुर्याद्गायत्र्या प्रणवेन च' ॥ इति मिताक्षराधृतषट्त्रिंशन्मतवचनदर्शनादत्रापि तथा कल्प्यते । दित.६०९-६१०

(१) अप.२।११३ कै (भि); व्यक.९७ सितासि (हिताहि); दीक.४२ (=); स्मृचि.५८; दित.६०९; सवि.२१६ पत्र (वस्त्र) (जपहोमादिकैर्मन्त्रैः गायत्र्या सहितैस्तथा) प्रजापतिः; व्यसौ.८९; व्यप्र.२१९; व्यउ.७१; व्यम.३७; बाल.२।११३; समु.६६ पत्र (वस्त्र).

(२) अप.२।११३; व्यक.९७; दीक.४२ आमन्त्र्य (स्वयं च) ततः(तथा); स्मृचि.५८; दित.६०९; सवि.२१६ प्रजापतिः; व्यसौ.८९; व्यप्र.२१९; व्यम.३७; बाल.२।११३; समु.६६.

(३) अप.२।११३ नवे (तु तौ) सं (स); व्यक.९७; स्मृच.११९प्रथमार्धम्; दीक.४२ समौ(समे) संपूज्य (संग्राह्य); स्मृचि.५८; दित.६०९ प्रगृह्णीता (गृह्णीयाद); सवि.२१६ नवे कुम्भे (तु मृत्पिण्डौ) प्रजापतिः; व्यसौ.८९ विलम्बितः (विवक्षितः); व्यप्र.२१९ विलम्बितः (नुयाचितः); व्यम.३७ नवे कुम्भे (तु कुम्भे तौ) म्बितः (म्बितम्) ज्यश्च (ज्य च); बाल.२।११३; समु.६६.

(४) सवि.२१६ प्र (तु) वा (च) प्रजापतिः; समु.६६.

## पितामहः

**¹अधुना संप्रवक्ष्यामि धर्माधर्मपरीक्षणम् ।**
**हन्तॄणां याचमानानां प्रायश्चित्तार्थिनां नृणाम् ॥**

(१) मिता.२।११३; स्मृच.९८ (हन्तॄणां याच्यमानानां प्रायश्चित्तार्थिनां नृणाम् । संदिग्धेऽर्थेऽभिशस्तानां धर्माधर्मपरी-

राजतं कारयेद्धर्ममधर्मं सीसकायसम् ॥

(१) हन्तृणामिति साहसाभियोगेषु । याच्यमानानामिति अर्थाभियोगेषु । प्रायश्चित्तार्थिनामिति पातकाभियोगेषु । 'राजतं कारयेद्धर्ममधर्मं सीसकायसम्' इति प्रतिमाविधानम् । सीसकं वा आयसं वेति । *मिता.२।११३

(२) तस्यायमर्थः । हिंसाधनपातकाद्यभियोगेष्वल्पेष्वभिशस्तानां धर्मजं दिव्यमिति । स्मृच.९८

सीसकायसं सीसकमिश्रायसनिर्मितम् । केचित् सीसकनिर्मितमायसनिर्मितं वेति वर्णयन्ति । स्मृच.११९

लिखेद् भूर्जे पटे वाऽपि धर्माऽधर्मौ सिताऽसितौ ।
अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्चयेत् ॥
सितपुष्पस्तु धर्मः स्यादधर्मोऽसितपुष्पधृक् ।
एवं विधायोपलिप्य पिण्डयोस्तौ निधापयेत् ॥

पिण्डयोस्तौ निधापयेत् पिण्डयोरभ्यन्तरे तौ स्थापयेदित्यर्थः । स्मृच.११९

गोमयेन मृदा वापि पिण्डौ कार्या समन्ततः ।
मृद्भाण्डकेऽनुपहते स्थाप्यौ चानुपलक्षितौ ॥
उपलिप्ते शुचौ देशे देवब्राह्मणसंनिधौ ।
आवाहयेत्ततो देवान् लोकपालांश्च पूर्ववत् ॥
धर्मावाहनपूर्वं तु प्रतिज्ञापत्रकं लिखेत् ।
यदि पापविमुक्तोऽहं धर्मस्त्वायातु मे करे ॥
अशुद्धश्चेन्मम करे पापमायातु धर्मतः ॥

इति अभिशस्तोऽभिमन्त्रयते । मिता.२।११३

अभियुक्तस्ततश्चैकं प्रगृह्णीताऽविलम्बितः ।
धर्मे गृहीते शुद्धः स्यादधर्मे तु स हीयते ॥
एवं समासतः प्रोक्तं धर्माधर्मपरीक्षणम् ॥

---

* दित., सवि. मितावत् ।

क्षणम् ॥): ११९ पू.; **पमा**.१९७ पू.; **नृप्र**.१६ पू.; **दित**.६१०; **सवि**.२१९ पूर्वार्धे स्मृचवत्, उत्तरार्धे (संदिग्धेष्वभिशस्तानां धर्म्याधर्म्यपरीक्षणम्): २१५ पू.; **व्यप्र**.२१८; **व्यउ**.७०; **व्यम**.३७; **राकौ**.४३९; **प्रका**.६३ सविवत्: ७५ पू.; **समु**.५१ हन्तृणां (भर्तृणां): ६५ पू.

(१) **मिता**.२।११३; **स्मृच**.११९; **पमा**.१९७; **स्मृचि**.५७; **नृप्र**.१६; **दित**.६१०; **सवि**.२१५; **व्यप्र**.२१८; **व्यउ**.७०; **व्यम**.३७; **राकौ**.४३९; **प्रका**.७५; **समु**.६५.

(२) **मिता**.२।११३; **स्मृच**.११९; **पमा**.१९७; **स्मृचि**.५७; **नृप्र**.१६ र्भूर्जे पटे वापि (त भूर्जपत्रे वा); **दित**.६१०; **सवि**.२१६ र्जे प (र्जपु) बृहस्पतिः; **वीमि**.२।११३; **व्यप्र**.२१८; **व्यउ**.७०; **व्यम**.३७; **राकौ**.४३९; **प्रका**.७५; **समु**.६५-६६.

(३) **मिता**.२।११३ ष्य (ख्य); **स्मृच**.११९; **पमा**.१९७; **स्मृचि**.५७; **नृप्र**.१६ स्तु धर्मः स्यात् (धरो धर्मो); **दित**.६१० धृक् (कः) ष्य (ख्य); **सवि**.२१६ धृक् (धृत) तौ नि (तानि) बृहस्पतिः; **वीमि**.२।११३ मितावत्; **व्यप्र**.२१८; **व्यउ**.७० मितावत्; **व्यम**.३७; **राकौ**.४३९ ष्प (ष्पै) षा धृक् (ष्पकः); **प्रका**.७५; **समु**.६६ धृक् (धृत्).

(१) **मिता**.२।११३; **स्मृच**.११९; **पमा**.१९७ मन्त (मंत); **नृप्र**.१६; **दित**.६१० मन्त (मौ त); **सवि**.२१६ दितवत्, बृहस्पतिः; **वीमि**.२।११३; **व्यप्र**.२१८ ऽनुपहते (उपहते); **व्यउ**.७० चानु (वानु); **व्यम**.३७; **प्रका**.७५; **समु**.६६.

(२) **मिता**.२।११३; **स्मृच**.११९; **पमा**.१९८; **नृप्र**.१६; **दित**.६१०; **सवि**.२१६ आवाह (समर्च) बृहस्पतिः; **वीमि**.२।११३; **व्यप्र**.२१९; **व्यउ**.७१; **व्यम**.३७; **राकौ**.४३९; **प्रका**.७५; **समु**.६६.

(३) **मिता**.२।११३; **स्मृच**.११९; **पमा**.१९८; **स्मृचि**.५७; **नृप्र**.१६; **दित**.६१० (=) मु (यु) स्त्वायातु (स्त्रायाच्च) रे (रम्): ६११ पूर्ववत्, उत्त.; **सवि**.२१६ स्त्वा (श्चा) बृहस्पतिः; **वीमि**.२।११३; **व्यप्र**.२१९; **व्यउ**.७१; **व्यम**.३७: ३८ मुक्तो (शुद्धो) उत्त.; **विता**.२७० (=) व्यमवत्; **राकौ**.४३९; **प्रका**.७५; **समु**.६६. (४) **मिता**.२।११३.

(५) **मिता**.२।११३ स्तत (स्तयो); **स्मृच**.११९; **पमा**.१९८ म्बितः (म्बितम्) द्धः (द्धिः); **स्मृचि**.५७; **नृप्र**.१६ कं (वं) ताऽवि (यात्तु) द्धः (द्धिः); **दित**.६१० तु स (स तु) शेषं मितावत्; **सवि**.२१६ युक्तस्तत (शस्तस्तयो) द्धः (द्धिः) बृहस्पतिः; **वीमि**.२।११३ मितावत्; **व्यउ**.७१ तश्चै (योरे); **व्यम**.३७; **राकौ**.४३९ म्बितः (म्बितम्); **प्रका**.७६ स्मृचवत्; **समु**.६६ श्चै (स्त्वे).

(६) **मिता**.२।११३; **स्मृच**.११९; **पमा**.१९८; **स्मृचि**.५७; **नृप्र**.१६; **दित**.६१०; **व्यउ**.७१; **व्यम**.३७; **राकौ**.४३९; **प्रका**.७६; **समु**.६६.

## संकीर्णदिव्यविधिः

### नारदः

[1]सीमाविवादे संप्राप्ते भारता ... ... ।
सीमां समुद्धरेत्तत्र... स्पृशेच्च ... ॥
हरिवंशाद्वंशनाशो गङ्गया च कुलक्षयः ।
शालग्रामशिला दुर्गा न स्पृश्या च कदाचन ॥
पुराणानां च सर्वस्वं भारतं परिकीर्तितम् ।
भारतस्यापि सर्वस्वं हरिवंश इति स्मृतः ॥
तस्मात्सीमाविवादे त्वं सत्यपक्षे स्थिरो भव ॥
शिरसि पुस्तकं गृहीत्वा सीमाभूमिं प्रदर्शयेत् । स्मृचि.५८

(१) स्मृचि.५८.

[1]ज्येष्ठपुत्रं कलत्रं च ज्येष्ठा ... णांस्तथा ।
आत्मानं लेखयेत्पत्रे तद्धानौ हानिरुच्यते ॥
हरिवंशस्य दुर्गायास्तण्डुलानां कनकस्य च ।
दातुर्महीतुर्हस्ताच्च पतनं यदि जायते ॥
स्वयं वा प्रस्खलेद्भूमौ वाससां स्खलनं भवेत् ।
अन्धत्वं दिग्भ्रमश्चापि सद्यो भङ्गस्य... ॥

### कात्यायनः

[2]हरिवंशः सीमवादे भेदे दुर्गा तु कथ्यते ।
मैत्रीभेदे शिला प्रोक्ता मनःशुद्धिरतोऽन्यथा ॥

(१) स्मृचि.५८. (२) स्मृचि.५२.

# मानसंज्ञाः

## विष्णुः

जालस्थार्कमरीचिगतं रजस्त्रसरेणुसंज्ञकम् । तदष्टकं लिक्षा । तत्त्रयं राजसर्षपः । तत्त्रयं गौरसर्षपः । तत्षट्कं यवः । तत्त्रयं कृष्णलम् । तत्पञ्चकं माषः । तद्द्वादशमक्षार्धम् । अक्षार्धमेव सचतुर्माषकं सुवर्णः । चतुःसुवर्णको निष्कः । द्वे कृष्णले समधृते रूप्यमाषकः । तत्षोडशकं धरणम् । ताम्रकार्षिकः कार्षापणः ।

(१) लिक्षा स्वेदजं यूकाण्डम् । द्वादशं द्वादशानां समुदायः । समधृते तुल्यपरिमाणे । वै.

(२) सचतुर्माषकं माषचतुष्टयसहितं षोडशमाषात्मकमित्यर्थः । अभिधानकोषे तु–'... गुञ्जाः पञ्चाद्यमाषकः । ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम्' ॥ इत्युक्तम् । अन्ये त्वाहुः— स्वक्षेत्रे यथावन्मध्यपाककाले निष्पन्ना धान्यमाषा दश सुवर्णमाषः, पञ्च वा गुञ्जाः, सुवर्णमाषाश्च षोडश सुवर्णः स एव कर्षः, चतुःकर्षः पलं, पलानां शतेन तुला, विंशत्या तुलाभिर्भारः । बालभूषणे चण्डेश्वरः— 'कर्षः पलपादः स्यात् कर्षार्धे तोलकः सोऽपि । उक्तो वसुभिर्माषैर्लोके माषोऽपि गुञ्जाकैर्दशभिः' ॥ पलमत्र वैद्यकप्रसिद्धमष्टतोलकमिति । दवि.२४-२५

## कौटिलीयमर्थशास्त्रम्

तुलामानपौतवम् — पौतवाध्यक्षः पौतवकर्मान्तान् कारयेत् । धान्यमाषा दश सुवर्णमाषकः । पञ्च वा गुञ्जाः । ते षोडश सुवर्णः कर्षो वा । चतुष्कर्षं पलम् । अष्टाशीतिर्गौरसर्षपा रूप्यमाषकः । ते षोडश धरणम् । शैम्ब्यानि वा विंशतिः । विंशतितण्डुलं वज्रधरणम् । अर्धमाषकः, माषकः, द्वौ, चत्वारः, अष्टौ माषकाः, सुवर्णो, द्वौ, चत्वारः, अष्टौ सुवर्णाः, दश, विंशतिः, त्रिंशत्, चत्वारिंशत्, शतमिति । तेन धरणानि व्याख्यातानि । प्रतिमानान्ययोमयानि मागधमेकलशैलमयानि, यानि वा नोदकप्रदेहाभ्यां वृद्धिं गच्छेयुरुष्णेन वा ह्रासम् । षडङ्गुलादूर्ध्वमष्टाङ्गुलोत्तराः दश तुलाः कारयेल्लोहपलादूर्ध्वमेकपलोत्तराः । यन्त्रमुभयतः शिक्यं वा । पञ्चत्रिंशत्पललोहां द्विसप्तत्यङ्गुलायामां समवृत्तां कारयेत् । तस्याः पञ्चपलिकं मण्डलं बद्ध्वा समकरणं कारयेत् । ततः कर्षोत्तरं पलं, पलोत्तरं दशपलं, द्वादश पञ्चदश विंशतिरिति पदानि कारयेत् । तत आ शताद् दशोत्तरं कारयेत् । अक्षेषु नद्ध्रीपिनद्धं कारयेत् । द्विगुणलोहां तुलामतः षण्णवत्यङ्गुलायामां परिमाणीं कारयेत् । तस्याः शतपदादूर्ध्वं विंशतिः, पञ्चाशत्, शतमिति पदानि कारयेत् । विंशतितौलिको भारः । दशधरणिकं पलम् । तत्पलशतमायमानी । पञ्चपलावरा व्यावहारिकी भाजन्यन्तःपुरभाजनी च । तासामर्धधरणावरं पलम् । द्विपलावरमुत्तरलोहम् । षडङ्गुलावराश्चायामाः । पूर्वयोः पञ्चपलिकः प्रयामो मांसलोहलवणमणिवर्जम् । काष्ठतुला अष्टहस्ता पदवती प्रतिमानवती मयूरपदाधिष्ठाना । काष्ठपञ्चविंशतिपलं तण्डुलप्रस्थसाधनम् । एष प्रदेशो बह्वल्पयोः । इति तुलाप्रतिमानं व्याख्यातम् ।

अथ धान्यमाषद्विपलशतं द्रोणमायमानम् । सप्ताशीतिपलशतमर्धपलं च व्यावहारिकम् । पञ्चसप्ततिपलशतं भाजनीयम् । द्विषष्टिपलशतमर्धपलं चान्तःपुरभाजनीयम् । तेषामाढकप्रस्थकुडुबाश्चतुर्भागावराः । षोडशद्रोणा खारी, विंशतिद्रोणिकः कुम्भः, कुम्भैर्दशभिर्वहः । शुष्कसारदारुमयं समं चतुर्भागशिखं मानं कारयेत् । अन्तःशिखं वा । रसस्य तु । सुरायाः पुष्पफलयोः तुषाङ्गाराणां सुधायाश्च शिखामानं द्विगुणोत्तरा वृद्धिः । सपादपणो द्रोणमूल्यम् । आढकस्य पादोनः । षण्माषकाः

(१) विस्मृ.४।१-१३; त्रिर.६६७ (तद् द्वादशमक्षार्धमेव चतुर्माषकं सुवर्णः); दवि.२४ (तद्द्वादशमक्षकमेव सचतुर्माषकं सुवर्णः); नृप्र.१३ (=). (२) कौ.२।१९.

प्रस्थस्य । माषकः कुडुबस्य । द्विगुणं रसादीनां मानमूल्यम् । विंशतिपणाः प्रतिमानस्य । तुलामूल्यं त्रिभागः । चतुर्मासिकं प्रातिवेधनिकं कारयेत् । अप्रतिविद्धस्यात्ययः सपादः सप्तविंशतिपणः । प्रातिवेधनिकं काकणिकमहरहः पौतवाध्यक्षाय दद्युः । द्वात्रिंशद्भागस्तप्तव्याजी सर्पिषश्चतुष्षष्टिभागस्तैलस्य । पञ्चाशद्भागो मानस्रावो द्रवाणाम् । कुडुबार्धचतुरष्टभागानि मानानि कारयेत् ।

कुडुबाश्चतुरशीतिर्वारकः सर्पिषो मतः ।
चतुष्षष्टिस्तु तैलस्य पादश्च घटिकानयोः ॥

अथ देशकालमानम्— मानाध्यक्षो देशकालमानं विद्यात् । अष्टौ परमाणवो रथचक्रविप्रुट् । ता अष्टौ लिक्षा । ता अष्टौ यूकामध्यः । ते अष्टौ यवमध्यः । अष्टौ यवमध्याः अङ्गुलम् । मध्यमस्य पुरुषस्य मध्यमाया अङ्गुल्या मध्यप्रकर्षो वाङ्गुलम् । चतुरङ्गुलो धनुर्ग्रहः । अष्टाङ्गुला धनुर्मुष्टिः । द्वादशाङ्गुला वितस्तिः छायापौरुषं च । चतुर्दशाङ्गुलं शमः शलः परिरयः पदं च । द्विवितस्तिररत्निः प्राजापत्यो हस्तः।सधनुर्ग्रहः पौतवविवीतमानम् । सधनुर्मुष्टिः किष्कुः कंसो वा । द्विचत्वारिंशदङ्गुलस्तक्षणः क्राकचिककिष्कुः स्कन्धावारदुर्गराजपरिग्रहमानम्। चतुष्पञ्चाशदङ्गुलः कुप्यवनहस्तः । चतुरशीत्यङ्गुलो व्यामो रज्जुमानं खातपौरुषं च । चतुररत्निर्दण्डो धनुर्नालिका पौरुषं च । गार्हपत्यमष्टशताङ्गुलं धनुः पथिप्राकारमानम् । पौरुषं च अग्निचित्यानाम् । षट्कंसो दण्डो ब्रह्मदेयातिथ्यमानम् । दशदण्डा रज्जुः । द्विरज्जुकः परिदेशः । त्रिरज्जुकं निवर्तनम् । एकतो द्विदण्डाधिको बाहुः । द्विधनुस्सहस्रं गोरुतम् । चतुर्गोरुतं योजनम् । इति देशमानम् ।

कालमानमत ऊर्ध्वम् । तुटो लवो निमेषः काष्ठा कला नालिका मुहूर्तः पूर्वापरभागौ दिवसो रात्रिः पक्षो मास ऋतुरयनं संवत्सरो युगमिति कालाः ।

निमेषचतुर्भागस्तुटः । द्वौ तुटौ लवः । द्वौ लवौ निमेषः । पञ्च निमेषाः काष्ठा । त्रिंशत्काष्ठाः कला । चत्वारिंशत् कला नाडिका । सुवर्णमाषकाश्चत्वारश्चतुरङ्गुलायामाः कुम्भच्छिद्रमाढकमम्भसो वा नालिका । द्विनालिको मुहूर्तः । पञ्चदशमुहूर्तो दिवसो रात्रिश्च चैत्रे मास्याश्वयुजे च मासि भवतः । ततः परं त्रिभिर्मुहूर्तैरन्यतरः षण्मासं वर्धते ह्रसते चेति । छायायामष्टपौरुष्यामष्टादशभागश्छेदः, षट्पौरुष्यां चतुर्दशभागः, चतुष्पौरुष्यामष्टभागः, द्विपौरुष्यां षड्भागः, पौरुष्यां चतुर्भागः, अष्टाङ्गुलायां त्रयो दशभागाः, चतुरङ्गुलायां अष्टभागाः । अच्छायो मध्याह्न इति । परावृत्ते दिवसे शेषमेवं विद्यात् । आषाढे मासि नष्टच्छायो मध्याह्नो भवति । अतः परं श्रावणादीनां षण्मासानां व्यङ्गुलोत्तरा माघादीनां व्यङ्गुलावरा छाया इति । पञ्चदशाहोरात्राः पक्षः । सोमाप्यायनः शुक्लः । सोमावच्छेदनो बहुलः । द्विपक्षो मासः । त्रिंशदहोरात्रः प्रकर्ममासः । सार्धः सौरः । अर्धन्यूनश्चान्द्रमासः । सप्तविंशतिर्नाक्षत्रमासः । द्वात्रिंशद् मलमासः । पञ्चत्रिंशदश्ववाहायाः । चत्वारिंशद्धस्तिवाहायाः । द्वौ मासावृतुः । श्रावणः प्रोष्ठपदश्च वर्षाः । आश्वायुजः कार्तिकश्च शरत् । मार्गशीर्षः पौषश्च हेमन्तः । माघः फाल्गुनश्च शिशिरः । चैत्रो वैशाखश्च वसन्तः । ज्येष्ठामूलीय आषाढश्च ग्रीष्मः । शिशिराद्युत्तरायणम् । वर्षादि दक्षिणायनम् । द्व्ययनः संवत्सरः । पञ्चसंवत्सरो युगमिति ।

दिवसस्य हरत्यर्कः षष्टिभागमृतौ ततः ।
करोत्येकमहश्छेदं तथैवैकं च चन्द्रमाः ॥
एवमर्धतृतीयानामब्दानामधिमासकम् ।
ग्रीष्मे जनयतः पूर्वं पञ्चाब्दान्ते च पश्चिमम् ॥

## मनुः

[१]लोकसंव्यवहारार्थं याः संज्ञाः प्रथिता भुवि ।
ताम्ररूप्यसुवर्णानां ताः प्रवक्ष्याम्यशेषतः ॥

(१) ताम्रादीनां लिक्षादयः संज्ञा भुवि प्रसिद्धाः । किं

(१) कौ.२।२०.

(१) मस्मृ.८।१३१; स्मृच.९८; विर.६६५ रू (रौ); पमा.१५६ नां ताः (न्ताः) म्यशे (मविशे); स्मृचि.३७; दवि.२३; व्यप्र.१७५; विता.२७३ थं (थैं) प्रथि (कथि); राकौ.४०९ याः संज्ञाः (संज्ञाः स्युः); प्रका.६३; समु.५१.

शास्त्रपरिभाषया तत्र वृद्धव्यवहारो गवादिशब्दवदित्यत आह—लोकसंव्यवहारार्थम् । अर्थशब्दो विषयवचनस्तेन व्यवहारप्रसिद्धिराश्रिता भवति । ततश्च गवादिशब्दतुल्यतया व्यवहारः प्रसिद्धः । किं शास्त्रोपदेशेन ? उच्यते—नियमार्थ उपदेशोऽन्येषामपि परिमेयानामयस्कांस्यसुवर्णादीनामेताः संज्ञाः सन्ति । तन्निवृत्त्यर्थः क्वचिद्देशे परिमाणे भेदोऽप्यस्ति । तन्निवृत्त्यर्थश्च क्वचित् संबन्धतया नियम्यते । तथा च । क्वचिदष्टाचत्वारिंशता माषबन्धं क्वचिच्चतुःषष्ट्या क्वचित् साष्टेन शतेन तदेतत्सर्वं नियम्यते । अथ चैवं संबन्धः क्रियते । याः संज्ञा भुवि प्रथितास्ता लोकसंव्यवहारार्थं वक्ष्यामि । सर्वस्य लोकस्याभिरेव संव्यवहारो यथा स्यात् । दण्डादिनियोगस्याप्यन्यथाऽप्रसिद्धिः । मेधा.

(२) ताम्ररूप्यसुवर्णानां पणादिसंज्ञा क्रयविक्रयलोकव्यवहारार्थं पृथिव्यां विशेषेणाभिधास्याम्युपयोगार्थं दण्डादेः । +गोरा.

(३) संव्यवहारार्थं दृष्टादृष्टव्यवहारसिद्ध्यर्थम् । मवि.

(४) दण्डदिव्यशास्त्रार्थव्यामोहापनुत्तये ताम्रादिद्रव्याणां परिमाणनिबन्धनाः संज्ञाः प्रदर्श्यन्त इत्यर्थः । स्मृच.९८

(५) संज्ञा धर्मशास्त्रपरिभाषाः । मच.

(६) अत्र ताम्ररूप्यसुवर्णानामिति ताम्ररूप्ययोरल्पत्वात् प्राक्प्रयोगो न तु क्रमप्रदर्शनार्थः । व्यप्र.१७६

**[1]जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः ।**
**प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते ॥**

(१) इमं श्लोकं केचिन्नाधीयते त्रसरेणौ विप्रतिपत्त्या । तावद्गवाक्षकुञ्चिकाविवरप्रविष्टे सूर्ये यो रेणुर्दृश्यते स त्रसरेणुः । अन्तरशब्दो विवरपर्यायः । प्रथमं तत्प्रमाणानामिति । मेधा.

(२) गवाक्षविवरप्रविष्टसूर्यरश्मिषु यत्सूक्ष्मं रजो दृश्यते तद्दृश्यमानपरिमाणानां प्रथमं त्रसरेणुं वदन्ति । मसु.

**[1]त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः ।**
**ता राजसर्षपस्तिस्रस्ते त्रयो गौरसर्षपः ॥**

(१) ततः उपचितपरिमाणाः । न पुनरयं लिक्षाशब्दः स्वेदजक्षुद्रजन्तुवचनः । तास्तिस्रो लिक्षा एको राजसर्षपाख्यपरिमाणपदार्थ एवं योजनीयम् । ततश्च व्यभिचारयन्ति न यथोक्तपरिमाणार्थमेते शब्दा वर्तन्त इति । यथा चोपक्रान्तसंज्ञाः प्रवक्ष्यामि परिमाणमिति । त्रसरेणुश्चार्थो नियतपरिमाणस्तेनैतत्सर्वं निश्चेयम् । शक्नुवन्ति च निपुणास्त्रसरेणून् संहर्तुमिति नानारभ्यार्थोपदेशः । एतत्स्वर्णकाराभिमानसंख्यास्मृतिरूपं निर्बाधं भवति । तत एव वस्तु निपुणतोऽशेषतोऽवधारयितव्यम् । मेधा.

(२) लिक्षा यूकाडिम्बम् । राजसर्षपः राजिका । मवि.

**[2]सर्षपाः षट् यवो मध्यस्त्रियवं त्वेककृष्णलम् ।**
**पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश ॥**

(१) मध्यमशब्दोऽभ्रान्तिहेतुः परिमाणपरत्वे नात्यन्तमपचितो नातिस्थूलः सर्षपपरिमाण इति मध्यग्रहणमर्थवत् । संज्ञापरत्वे तु न किञ्चिन्मध्यमशब्देन यवशब्दसंज्ञात्वात् । तदसत् । नायं संदर्भो येन प्रत्यक्षयवं प्रयोजनमुच्यते । पद्यग्रन्थोऽयम् । तत्र संगमनार्थमपि वृत्तानुरोधात्किञ्चिदुच्यते । अस्ति चास्यान्वयः । अन-

---

+ मसु., नन्द. गोरागतम् ।

(१) **मस्मृ.**८।१३२; **व्यक.**७७ जालान्तर (रश्मिमूल) बृह पतिः; **स्मृच.**९८; **विर.**६६५; **पमा.**१५६; **स्मृसा.** ११६; **व्यचि.**८९ क्रमेण बृहस्पतिः; **स्मृचि.**१७ यत्सूक्ष्मं (यत्तु सं); **दात.**५८०; **सवि.**२०५ (=); **व्यप्र.**१७५; **विता.**२७३ णानां (णं तु); **राकौ.**४०९; **प्रका.**६१; **समु.**५१.

१ द्वाराद.

(१) **मस्मृ.**८।१३३; **स्मृच.**९८; **पमा.**१५६; **विर.** ६६६ क्षै (ख्यै) परि (च प्र) त्रयो (तु द्वे); **स्मृचि.**१७ क्षै (ख्यै); **सवि.**२०५ (=); **व्यप्र.**१७५; **विता.**२७३ विज्ञेया (ज्ञेया); **राकौ.**४०९; **प्रका.**६३; **समु.**५१.

(२) **मस्मृ.**८।१३४; **मभा.**१२।१५ तृतीयपादः, स्मृत्यन्तरम्; **स्मृच.**९८:१५९ तृतीयपादः; **विर.**२३५ द्वितीयपादः : ६६६ र्णस्तु (र्णं तु); **पमा.**१५६; **स्मृसा.**८३ त्रि (द्वि) प्रथमपादं विना; **स्मृचि.**३७; **दवि.**२३-२४; **दित.** ५८१ (=) उत्त.:५९६ चतुर्थपादं विना; **सवि.**२०५ (=) स्त्रियवं ... लम् (स्त्रियवाः कृष्णलाः स्मृताः) र्णस्तु (र्णं तु); **व्यप्र.** १७६; **विता.**२७३ पूर्वार्धे (ते षड्यवो मध्यमस्तु त्रियवे तत्तु कृष्णलम्); **राकौ.**४१० यवं त्वेक (यवेन तु); **प्रका.**६३; **समु.**५१.

न्विताभिधानं हि वाक्यार्थविरोधान्न प्रमाणम्। न चावगताभिधानमपि। परिमाणभेदांस्त्रसरेणुशतमानादीनाद्यन्तानपेक्ष्य मध्यपठितत्वान्मध्यो यवाख्यः परिमाणविशेषः। पञ्चकृष्णला अस्मिन्सन्ति 'अत इनि ठनौ' इति ठन् कर्तव्यः। पञ्चकृष्णलिकः। 'पञ्चकृष्णलकः' इति पाठे कबन्तो बहुव्रीहिः। ते कृष्णलाः षोडश एकः सुवर्णः। मेधा.

(२) ते षट् यवो मध्यमः न स्थूलो नापि सूक्ष्मः। * गोरा.

(३) कृष्णलं रक्तिकेति प्रसिद्धम्। षोडश माषाः सुवर्णः स्यात्। पुंलिङ्गश्चायं परिमाणवचनः। ममु.

(४) त्रियवन्त्वेवेति—'गुञ्जा तु स्यात् त्रिभिर्यवैः' इत्यगस्तिप्रोक्तदर्शनात् कृष्णलव्यवहाराणां गुञ्जानां गुरुत्वमनियतमतो यथोक्तमेव कृष्णलं ग्राह्यम्। क्वचिदेकेति पाठः। सेयं कृष्णलसंज्ञा सुवर्णरजतसाधारणी। अगस्तिप्रोक्ते—'अष्टभिर्भवति व्यक्तैस्तण्डुलो गौरसर्षपैः। स वैणवो यवः प्रोक्तो गोधूमं चापरे जगुः'॥ दवि.२३-२४

(५) संव्यवहारेषु सूक्ष्मो मध्यमः स्थूल इति त्रिविधो यव उक्तः। नन्द.

**[1]पलं सुवर्णाश्चत्वारः पलानि धरणं दश।**
**द्वे कृष्णले समधृते विज्ञेयो रौप्यमाषकः॥**

(१) पलमिति संज्ञानिर्देशः। सुवर्णमिति संज्ञी। चत्वार इति विशेषणम्। धरणमिति संज्ञा। दश पलानीति संज्ञी। द्वे कृष्णले इति संज्ञी। रूप्यमाषक इति समुदायं संज्ञां मन्यन्ते। न तु रूप्यविषयमाषकनिर्देशे द्वे कृष्णले प्रतिपत्तव्ये इति प्रतिजानीते, ततश्चानिश्चयः। समधृते तुलासूत्रके उन्मानादिहीने यदि धार्येते प्रयोजनं मध्यशब्दवशतोऽसमयाद्धार्यमाणतया परिमाणानिश्चयः। मेधा.

(२) पलानि दश सुवर्णस्य धरणम्। मवि.

(३) पलानि धरणं दशेत्यन्तं सुवर्णपरिमाणाभिधानम्। चतुःसौवर्णिको निष्क इत्यन्तं रूप्यपरिमाणाभिधानम्। अवशिष्टेन ताम्रपरिमाणाभिधानम्। ×व्यप्र.१७६

**[1]ते षोडश स्याद्धरणं पुराणश्चैव राजतः।**
**कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः *॥**

(१) षोडश रूप्यमाषका रूप्यस्य धरणं भवति। पुराण इति संज्ञान्तरम्। कार्षापणः पण इति च द्वे संज्ञे ताम्रकर्षस्य। कार्षाख्यश्च शब्दो लोकत एव प्रसिद्धार्थ इह गृह्यते, व्यभिचारदर्शनासत्त्ववचनेन न कृष्णलादिवत्परिभाष्यते। ÷मेधा.

(२) कार्षिकः कर्षः ताम्रिकः ताम्रः। कार्षापणः पणश्चोच्यते। अत्र चानुक्ते सुवर्णमानाग्रहणात् कर्षः पलचतुर्थभागः पञ्चकृष्णलकः षोडशमाषात्मको ग्राह्यः। मवि.

(३) कार्षिकः ताम्रमयः कार्षापणः पण इति विज्ञेयः। कार्षिकश्च शास्त्रीयपलचतुर्थभागो बोद्धव्यः। अत एव 'पलं कर्षचतुष्टयम्' इत्याभिधानिकाः। +ममु.

(४) अभिधानकोषे तु—'कार्षापणः कार्षिकः स्यात् कार्षिके ताम्रिके पणः'। इत्युक्तम्। तन्मते सर्व एव कार्षिको मुद्राविशेषः कार्षापणः समाख्यासंवादात्। स एव ताम्रिकः पण इत्युच्यते, इति गम्यते। तथा—'पणोदमानगण्डानां तुर्यांशेऽपि च काकिनी'। इति रभसपालः। 'पणगण्डकयोस्तुर्ये उदमाने च काकिनी'। इति रुद्रः। दवि.२६-२७

(५) कार्षिकः कर्षसंमितः, ताम्रिकस्ताम्रविकारः, कार्षापणो विज्ञेयः। पण इति च संज्ञा अस्यैव विज्ञेये-

* मवि., विर. गोरागतम्।

(१) मस्मृ.८।१३५; स्मृच.९८ रौ (रू); विर.२३५ उत्त.: ६६६ स्मृचवत्; पमा.१५६ स्मृचवत्; स्मृसा.८३ स्मृचवत्; विचि.१०४ स्मृचवत्, उत्त.; स्मृचि.३७; दवि.२४-२५ स्मृचवत्; व्यप्र.१७६; विता.२७३ स्मृचवत्; राकौ.४१० स्मृचवत्; प्रका.६३ स्मृचवत्; समु.५१ स्मृचवत्.

× विता. व्यप्रगतम्। * गोरा. व्याख्यानं अशुद्धिसंदेहान्नोद्धृतम्। ÷ विर. मेधागतम्। + मच. ममुगतम्

(१) मस्मृ.८।१३६ ग.पुस्तके 'पुराणं चैव राजतम्' इति पाठः; स्मृच.९८ णश्चै (णं चै) तः (तम्); विर.६६६ स्तु (श्च) ताम्रिकः (तास्तिस्त्रः); पमा.१५६-१५७; स्मृसा.८३ स्तु (श्च); स्मृचि.३७; दवि.२५-२६ तः (तम्); व्यप्र.१७६ ताम्रिकः कार्षिकः (कार्षिकः ताम्रिकः); विता.२७३ व्यप्रवत्; राकौ.४१० व्यप्रवत्; प्रका.६३ स्मृचवत्; समु.५२ स्मृचवत्.

न्यर्थः । चशब्दोऽध्याहार्यः । व्यप्र.१७६

(६) पुराणमनादिसिद्धम् । ×नन्द.

(७) 'कर्षः स्याद्दशमाषिकः' इति निघण्टुः । पलः चतुर्थांशकः कर्षकयोन्मानितः कार्षिकः, ताम्रस्य विकारः ताम्रिकः, कर्षसंमितताम्रविकारः ढब्बूकस्यार्धः । भाच.

**धरणानि दश ज्ञेयः शतमानस्तु राजतः ।**
**चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः ॥**

(१) शतमान इति संज्ञा दशानां धरणानाम् । रजतशब्देन सुवर्णमप्युच्यते । तेन रूप्यसुवर्णयोरियं संज्ञा । सुवर्णस्य मानं तु शास्त्रान्तरात्परिमातव्यम् । तथा च विशेषयिष्यति शतमानं तु राजतमिति । मेधा.

(२) सुवर्णस्यैव स्थूलयवैः कृष्णलपरिकल्पनायां व्यावहारिकनिष्कस्य षोडशांशः कृष्णलो भवतीति दानप्रकरणादौ व्यावहारिकी विशिष्टसंज्ञा निष्कस्य । मवि.

(३) एतेषां श्लोकानां तात्पर्यार्थः प्रातिलोम्येनोच्यते । निष्कशतमानशब्दावेकपले रूपद्रव्ये वर्तेते । अत एव रूप्यसंज्ञाधिकारे,—'शतमानं तु दशभिर्धरणैः फलमेव तु । निष्कः सुवर्णाश्चत्वारः' । इति याज्ञवल्क्येनोक्तम् । पणकार्षापणशब्दौ पलचतुर्थांशकर्षस्य ताम्रद्रव्यस्य नामधेयम् । पुराणधरणशब्दौ पलदशमांशस्य रूप्यद्रव्यस्य नामनी । कर्षचत्वारिंशत्तमांशस्य रूप्यद्रव्यस्य माषसंज्ञा, दशपलस्य धरणसंज्ञा । सा च रजतेतरद्रव्यविषये वेदितव्या । राजतधरणस्याल्पपरिमाणत्वात् । पलसंज्ञा सर्वद्रव्यविषयेऽवमन्तव्या । विशेषास्मृतेः । सुवर्णशब्दस्तु काञ्चनकर्षवचनः 'सुवर्णबिस्तौ हेम्नोऽक्षे' इत्यमरसिंहेन विशेषितत्वात् । अक्षे कर्ष इत्यर्थः 'ते षोडशाक्षः कर्षोऽस्त्रीति' तेनैवोक्तत्वात् । कर्षषोडशभागस्य माषसंज्ञा । सा च रूप्यद्रव्यादन्यत्र विज्ञेया । रूप्यमाषकस्य कर्षचत्वारिंशत्तमांशत्वात् । कृष्णलशब्दस्तु कर्षाशीतिभागवाची । माषपञ्चमांशत्वात् ।एवं सर्षपलिक्षात्रसरेणुपदार्थेष्वपि द्रव्येयत्ता स्वयमूहनीया । 'यवो मध्य' इत्यत्र मध्यशब्दः श्लोकपूरणार्थ इत्युक्तं तद्भाष्ये । त्रसरेणौ पद्मरजःसंज्ञाऽपि पुराणे दर्शिता—'अष्टानां परमाणूनां समवायो यदा भवेत् । त्रसरेणुः समाख्यातस्तत्पद्मरज उच्यते ॥ इति । स्मृच.९९

## याज्ञवल्क्यः

**जालसूर्यमरीचिस्थं त्रसरेणू रजः स्मृतम् ।**
**तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते ॥**

(१) एवं दण्डपातनविधिरुक्तः । अधुनाऽर्थदण्डस्योक्तं मध्यमाधमसाहसाद्यपेक्षया प्रमाणं वक्तुमाह—जलमिति । सूर्यमरीच्यन्तर्गतं जलमिव यद्रजो दृश्यते, तद् भेदबुद्ध्या गृह्यमाणं त्रसरेणुसंज्ञकं भवति । त्रस्त इव परिभ्रमतीति त्रसरेणुः । तेऽष्टौ रेणव एकीभूता लिक्षा । ताश्च तिस्रो राजसर्षप उच्यते । एवमुत्तरत्रापि योज्यम् । विश्व.१।३५७

(२) तत्र कृष्णलमाषसुवर्णपलादिशब्दैरर्थदण्डा वक्तव्यास्ते च प्रतिदेशं भिन्नपरिमाणार्था इत्येकरूपापराधेऽपि देशभेदेन न्यूनाधिकदण्डो मा भूदिति कृष्णलादिशब्दानां नियतपरिमाणविषयत्वं दण्डव्यवहारे दर्शयितुमाह—जालेति । जालकान्तरप्रविष्टादित्यरश्मिस्थितं यद्रजस्तत् त्रसरेणुरित्युक्तं योगीश्वरादिभिस्तत्वदर्शिभिः । ते च त्रसरेणवोऽष्टौ लिक्षा स्वेदजयूकाण्डम् । ता लिक्षास्तिस्रो राजसर्षपो राजिका । मिता.

[2] **गौरस्तु ते त्रयः षट् ते यवो मध्यस्तु ते त्रयः ।**
**कृष्णलः पञ्च ते माषस्ते सुवर्णस्तु षोडश ॥**

ते राजसर्षपास्त्रयो गौरसर्षपः सिद्धार्थः । गौरसर्षपाः षट् यवो मध्यः । मध्यमो न स्थूलो न सूक्ष्मः । एतेन गौरसर्षपा अपि मध्यमा इति गम्यते । तथा राजसर्षपा अपि मध्यमशब्दादेव सर्षपादिशब्दाः न केवलमुन्मानवचनाः किन्तु तदुन्मितद्रव्यवचना इति गम्यते । यथा

---

× शेषं व्यप्रगतम् ।

(१) **मस्मृ**.८।१३७; **स्मृच**.९८ सौवर्णि (सुवर्ण); **विर**.६६६ सौ (सु); **पमा**.१५७; **स्मृसा**.८३ सौवर्णिको निष्को (सुवर्णो निष्कश्च); **स्मृचि**.३७ स्मृचवत्; **दवि**.२५; **व्यप्र**.१७६; **विता**.२७३; **राकौ**.४१०; **प्रका**.६३ स्मृचवत्; **समु**.५२ स्मृचवत्.

(१) **यास्मृ**.१।३६२; **विश्व**.१।३५७ जाल (जलं); **मिता**.; **अप**.१।३६०-३६१; **वीमि**. क्षा तु (क्षास्तु); **समु**.५२ स्मृत्यन्तरम् .

(२) **यास्मृ**.१।३६३; **विश्व**.१।३५८; **मिता**.; **अप**.१।३६१-३६२ तु ते त्रयः (त्रयस्तु ते); **वीमि**.; **समु**.५२ स्मृत्यन्तरम् .

प्रस्थपरिमिता यवाः प्रस्थ उच्यते। एवं सर्षपाद्युन्मितं द्रव्यं सर्षपादिशब्दैः। सर्षपादिशब्दानां च केवलोन्मानवचनत्वे त्रसरेणूनुपसंहृत्योन्मातुमशक्यत्वात्तद्द्वारेण कृष्णलादिव्यवहारो न स्यात्। तत्र स्थूलस्थूलतरस्थूलतमसूक्ष्मसूक्ष्मतरसूक्ष्मतममध्यसर्षपाद्युन्मानभेदेन प्रतिदेशं व्यवहारभेदे स्थिते दण्डव्यवहारे मध्य इति नियम्यते। ते मध्यमा यवास्त्रय एकः कृष्णलः। ते कृष्णलाः पञ्चैको माषः। ते माषाः षोडशैकः सुवर्णः। मिता.

**पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्तितम् ॥**[१]

(१) उभयथा प्रयोगदर्शनात्। कार्यविशेषापेक्षया च व्यवस्था। विश्व.१।३५९

(२) ते सुवर्णाश्चत्वारः पलमिति संज्ञाः कथिता इति। पञ्च वापि पलं प्रकीर्तितं नारदादिभिः। तत्र स्थूलैस्त्रिभिर्यवैः कृष्णलपरिकल्पनायां व्यावहारिकनिष्कस्य षोडशांशः कृष्णलो भवति। तैः पञ्चभिर्माषः माषैः षोडशभिः सुवर्णः। स च व्यावहारिकैः पञ्चभिर्निष्कैरेकः सुवर्णो भवति। ते चत्वारः पलमिति। निष्काणां विंशतिः पलम्। यदा तु सूक्ष्मैस्त्रिभिर्यवैः कृष्णलः परिकल्प्यते तदा व्यावहारिकनिष्कस्य द्वात्रिंशत्तमो भागः कृष्णलो भवति। तस्मिन्पक्षे सुवर्णः सार्धं निष्कद्वयं भवति। पलं च दशनिष्कम्। यदा तु मध्यमयवैः कृष्णलपरिकल्पना तदा निष्कस्य विंशतितमो भागः कृष्णलः, सुवर्णश्चतुर्निष्कः, षोडशनिष्कं पलम्। एवं पञ्चसुवर्णं पलमिति। पक्षे विंशतिनिष्कं पलम्। एवमन्यदपि निष्कस्य चत्वारिंशो भागः कृष्णलः द्विनिष्कः सुवर्णोऽष्टनिष्कं पलमित्यादिलोकव्यवहारानुसारेणास्मादेव सूत्रादूहनीयम्। मिता.

**द्वे कृष्णले रूप्यमाषो धरणं षोडशैव ते ॥**[२]

(१) यास्मृ.१।३६४; विश्व.१।३५९ तम् (ताः); मिता.; अप.१।३६२; स्मृच.९९; विर.६६७; पमा.१५८; स्मृसा.८३ वापि प्र (वा परि); दवि.२५ स्मृसावत्; वीमि.; व्यप्र.१७७; विता.२७३; राकौ.४१०; प्रका.६३; समु.५२.

(२) यास्मृ.१।३६४; विश्व.१।३५९ द्वे (द्वि) ले (लो) रू (रौ); मिता.; अप.१।३६३ रू (रौ); दवि.२५; वीमि.; समु.५२.

**शतमानं तु दशभिर्धरणैः पलमेव तु।**
**निष्कं सुवर्णाश्चत्वारः कार्षिकस्ताम्रिकः पणः ॥**[१]

(१) एवं तावत् सुवर्णस्य पलपर्यन्तं प्रमाणमुक्तम्। रौप्यस्य तु— द्विकृष्णल इति। कृष्णलद्वयेन रौप्यमाषः। षोडश माषा धरणम्। दश धरणानि शतमानम्। तच्च गण्यमानं चतुःसौवर्णिकं पलमेव पलसंमितं भवति। एवं रौप्यपरिमाणमुक्तम्। सुवर्णस्यैव तु— निष्कमिति। यत्तु चतुःसौवर्णिकं पलमुक्तं, तस्यैव द्वितीया निष्कसंज्ञा। ताम्रकर्षस्तु पणसंज्ञः। अशीतिकृष्णलः षोडशमाषः कर्षः। विश्व.१।३५९-६०.

(२) एवं सुवर्णस्योन्मानं प्रतिपाद्येदानीं रजतस्याह— द्वे कृष्णले इत्यादि। द्वे कृष्णले पूर्वोक्ते रूप्यमाषो रूप्यसंबन्धी माषः। ते रूप्यमाषाः षोडश धरणम्। पुराण इत्यस्यैव संज्ञान्तरम्— 'ते षोडश स्याद्धरणं पुराणश्चैव राजतः' इति मनुस्मरणात्। दशभिर्धरणैः शतमानं पलमिति चाभिधीयते। पूर्वोक्ताश्चत्वारः सुवर्णा एको राजतो निष्को भवति। इदानीं ताम्रस्योन्मानमाह— कार्षिक इति। पलस्य चतुर्थोऽशः कर्ष इति लोकप्रसिद्धः। कर्षेणोन्मितः कार्षिकः। ताम्रस्य विकारस्ताम्रिकः। कर्षसंमितस्ताम्रविकारः पणसंज्ञो भवति कार्षापणसंज्ञकश्च—'कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः' इति मनुवचनात्। पञ्चसुवर्णपलपक्षे विंशतिमाषः पणो भवति। तथा सति— 'माषो विंशतिमो भागः पणस्य परिकीर्तितः' इत्यादि व्यवहारः सिद्धो भवति। चतुःसुवर्णपलपक्षे तु षोडशमाषः पणो भवति। अस्मिंश्च पक्षे सुवर्णकार्षापणपणशब्दानां समानार्थत्वेऽपि पणकार्षापणशब्दौ ताम्रविषयावेव। एवं तावद्धेमरूप्यताम्राणामुन्मानमुक्तम्। दण्डव्यवहारोपयोगित्वात्। कांस्यरीतिकादीनामपि लोकव्यवहाराङ्गभूतानामेवोन्मानं द्रष्टव्यम्। मिता.

(३) दशभिर्धरणैः शतमानं तदेव पलमित्युच्यते।

(१) यास्मृ.१।३६५; विश्व.१।३६० मेव तु (मेव तत्); मिता.; अप.१।३६३-३६४ ष्कं (ष्कः); स्मृच.९९ अपवत्, चतुर्थपादं विना; पमा.१५८ चतुर्थपादं विना; दवि.२५ तु (च) चतुर्थपादं विना; वीमि.; व्यप्र.१७६ पू.; समु.५२ अपवत्.

निष्कमिति रजतप्रकरणे स्वर्णशब्दोपादानं हेमप्रकरणोक्तमानप्राप्त्यर्थं, तेन हेमप्रमाणभूतचतुःसुवर्णमानोन्मितं रजतं निष्कमिति महार्णवाभिधाने निबन्धे व्याख्यातम्। एवं च 'चतुःसुवर्णिको निष्क' इति मनुवचनमप्येवमेवोन्नेयम्। रजतप्रकरणाम्नानाऽविशेषात्। अत एवोक्तं प्रमाणत इति। रजताधिकारे विष्णुगुप्तः—अष्टाशीतिगौरसर्षपा रूप्यमाषकस्ते षोडश धरणं निष्को वा त्रिंशतिर्वा रूप्यपलं तद्दश धरणकम्। स्मृतिः—'पञ्चसौवर्णिको निष्क इति'। तथा—'साष्टं शतं सुवर्णानां निष्कमाहुर्मनीषिणः'। अभिधानकोषे तु—'निष्कमस्त्री साष्टहेमशते दीनारकर्षयोः'। रक्षोऽलङ्करणे हेमपलेऽपि चेत्युक्तम्॥ दवि.२५-२६

## नारदः

**कार्षापणो दक्षिणस्यां दिशि रौप्यः प्रवर्तते।**
**पणैर्निबद्धः पूर्वस्यां षोडशैव पणाः स तु॥**

कार्षापणो दक्षिणस्यां दिशि द्रविलविषयादौ रूढ एक एव लोहैः कृतः रूपमानगणनायाम्। यथेह दीनारकेण व्यवहारः प्रवर्तते। तत्र पणैर्निबद्धः पूर्वस्यां प्राक् षोडशभिः। षोडशपणं कार्षापणः कार्षापणसंव्यवहारे। नाभा.१९।११६

**माषो विंशतिभागस्तु पणस्य परिकीर्तितः॥**
**पणस्तु षोडशो भागो ज्ञेयः कार्षापणस्य तु॥**

**काकिणी तु चतुर्भागो माषस्य च पणस्य च॥**
**पञ्चनद्याः प्रदेशे तु संज्ञेयं व्यावहारिकी।**
**कार्षापणप्रमाणं तु निबद्धमिह वै तया॥**

(१) पञ्चनद्या इत्यादि इह शास्त्रीयसंव्यवहारार्थे कार्षापणप्रमाणं तदेवं निबद्धं, यत्पञ्चनद्याः प्रदेशे प्रसिद्धार्थे, इतरत्तु तत्तद्दिशि लोकव्यवहारार्थमुक्तम्। विर.६६७

(२) पञ्चनदे देशे या संज्ञा तया कार्षाप (णप्रमा)णं निबद्धं इह मध्यमे विनयवाक्यप्रणयनिमित्तम्। नाभा.१९।११७

**कार्षापणोऽण्डिका ज्ञेया ताश्चतस्रस्तु धानकः।**
**तद्द्वादश सुवर्णस्तु दीनाराख्यः स एव च॥**

(१) अत्र रत्नाकरे वृद्धिप्रकरणीयः क्वचित् पलस्येति पाठो लीपिप्रमादः। कामधेनुकल्पतरुकृत्यसारमिताक्षरास्मृतिसारेषु मानप्रकरणे मूर्धन्यपाठदर्शनात् पणकार्षापणादिप्रकरणे सुवर्णमाषस्य पलस्य लक्षणायोगाच्च। पञ्चनद्या इति शास्त्रीयव्यवहारात् कार्षापणप्रमाणं तदेव निबद्धं यत् पञ्चनदीप्रदेशप्रसिद्धम्। इतरत्तु तत्र तत्रैव व्यवहारिकम्। यथा नारदः—'कार्षापणो दक्षिणस्यां दिशि रौप्यः प्रवर्तते। पणैर्निबद्धः पूर्वस्यां षोडशैव पणाः स तु'॥ एवं च सौवर्णिको माषः पञ्चरत्तिकः। राजतो द्विरत्तिकस्तथा पुराणस्य विंशतिभागो माषः। कात्यायनदर्शनात् तथा—पणस्य विंशतितमो भागो माषः। नारदवचनात् तथा—कार्षापणस्य

(१) **नासं**.१९।११६ रौप्यः (रूढः); **नास्मृ**.२१।५७ षोडशैव (विंशतिस्तु); **स्मृच**.९९ पू.; **विर**.६६८; **पमा**. १५८ पू.; **दवि**.२८; **व्यप्र**.१७७ पू.; **प्रका**.६३ पू.; **समु**.५२ पू.

(२) **नास्मृ**.२१।५८ पण ... तः (ज्ञेयः कार्षापणस्य तु); **मिता**.२।१५९ भागस्तु (मो भागः); **व्यक**.१०६ णस्य (लस्य) स्मृत्यन्तरम्; **स्मृच**.१५८ भागस्तु (तमो भागः) स्मृतिः : २११ मितावत्; **विर**.६ व्यकवत्, स्मृतिः : २३४ पण ... तः (ज्ञेयः कार्षापणस्य च) : ६६७ नास्मृवत्; **पमा**. ३८१ मितावत्; **स्मृसा**.८३ व्यकवत्; **विचि**.३ व्यकवत्, बृहस्पतिः; **स्मृचि**.२२ र्तितः (र्त्यते) शेषं मितावत्; **दवि**. २७; **सवि**.१८१ मितावत्, कात्यायनः; **व्यप्र**.३५० पण (पल) शेषं मितावत्; **व्यउ**.९९ मितावत्; **विता**.६७७ मितावत्; **सेतु**.३ व्यकवत्, बृहस्पतिः : १९८ नास्मृवत्; **समु**.५२; **विव्य**.२१ बृहस्पतिः.

(३) **स्मृसा**.८३ णस्तु (लस्तु) तु (च); **दवि**.२७.

(१) **नास्मृ**.२१।५८ काकि (काक) पण (पल); **विर**. ६६७ णी (नी); **स्मृसा**.८३ तु (च) र्भा (र्थं भा); **दवि**.२७.

(२) **नासं**.१९।११७ संज्ञेयं (या संज्ञा); **नास्मृ**.२१।५९ संज्ञेयं (संज्ञा या) वै (नै); **विर**.६६७ व्याव (व्यव) निब... या (तन्निबद्धमिहैव वा); **स्मृसा**.८३ संज्ञे (विज्ञे) व्यावहारिकी (व्यवहारिणाम्) (कार्षापणं प्रमाणं तु तन्निबद्धमिहैव तु); **दवि**.२७ निब ... या (तन्निबद्धमिहैव तु').

(३) **नासं**.१९।११८ (कार्षापणोऽण्डिका ज्ञेयश्चतस्रस्तास्तु धानकः। ते द्वादश सुवर्णं स्याद्दीनारश्चित्रकः स्मृतः॥); **नास्मृ**. २१।६० ज्ञेयाः (गेया); **दवि**.२८ (कार्षापणस्त्रिका ज्ञेयास्ताश्चतस्रस्तु धानिकाः। ते द्वादश सुवर्णं तु दीनारो धानिकः स्मृतः॥).

चतुर्थो भागो माषः माषावरार्द्धं इत्यादिवक्ष्यमाणनारदवचनस्वरसाच्च । तथा — कार्षापणपादः चतुःकाकिनीको माषः, वक्ष्यमाणनारदवचनात् । राजतश्चापरो माषो विष्णुगुप्तदर्शनात् कृष्णलस्य साधारण्यं युक्तमेव । एवं च माषादिशब्दानां नानार्थतया दण्डविधावनध्यवसाये व्यवस्थामाह कात्यायनः— माष इति ।

दवि.२८-२९

(२) कार्षापण उक्तः अण्डिका धानकचतुर्भागः । चतस्रोऽण्डिका धानकः । ते धाना द्वादश सुवर्णम् । दीनारश्च सर्वप्रकारः । नाभा.१९।११८

## बृहस्पतिः

[1]संख्या रश्मिरजोमूला मनुना समुदाहृता ।
कार्षापणान्ता सा दिव्ये नियोज्या विनये तथा ॥

अत्र मनूक्तप्रमाणान्तरमाषादिर्दिव्यदण्डव्यतिरिक्तविषये देशव्यवहारविरोधे न ग्राह्यः । मनूक्तप्रमाणो माषादिर्दिव्यदण्डविषये देशव्यवहारविरोधेऽपि ग्राह्य एव । तथा च बृहस्पतिः—संख्येति । कार्षापणान्तग्रहणं निष्कप्रमाणे तु नायं नियम इति प्रतिपादनार्थम् । तेन निष्कान्तरेण दिव्यं किञ्चिदुत्तरत्रोच्यमानमविरुद्धम् ।

स्मृच.९९

[2]लोके संव्यवहारार्थं संज्ञेयं कथिता भुवि ॥
[3]निष्कं सुवर्णाश्चत्वारः कार्षिकस्ताम्रिकः पणः ।
ताम्रकर्षकृता मुद्रा विज्ञेयः कार्षिकः पणः ॥

कर्षः पलचतुर्थांशः । 'ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम्' इत्यमरसिंहेनाभिधानात् । ते माषाः षोडशाक्षः कर्ष इति च संज्ञेत्यर्थः । तेनाक्षकर्षशब्दयोः सुवर्णपरिमाणवचनमित्यवगम्यते । व्यप्र.१७६

---

(१) अप.२।९९ ये त (येच); व्यक.७७; स्मृच.९९, २११; पमा.१५९; स्मृसा.११६; व्यचि.८९; स्मृचि.५२; दित.५८०; चन्द्र.१६१; व्यसौ.७१; व्यप्र.१७५,३५१; विता.६७७ न्ता (नां); राकौ.४०९; प्रका.६३-६४; समु. ५२ अपवत्. (२) विर.६६७.

(३) स्मृच.९९ उत्त.; विर.६६७ उत्त.; पमा.१५८ उत्त.; स्मृसा.८३ उत्त.; दवि.२७ उत्त.; व्यप्र.१७६; विता.२७४; प्रका.६३ उत्त.; समु.५२ उत्त.

[1]स एव चान्द्रिका प्रोक्ता ताश्चतस्रस्तु धानका ।
ता द्वादश सुवर्णस्तु दीनाराख्यः स एव तु ॥

विष्णुगुप्तः— 'सुवर्णसप्ततितमो भागो रोपक उच्यते । दीनारो रोपकैरष्टाविंशत्या परिकीर्तितः' ॥ दवि.२७

## कात्यायनः

[2]पणो विंशतिमाषस्तु दिव्यादन्यत्र कीर्तितः ॥
[3]माषो विंशतिभागस्तु ज्ञेयः कार्षापणस्य तु ।
काकिणी तु चतुर्भागा माषकस्य पणस्य च ।
पञ्चनद्याः प्रदेशे तु संज्ञेयं व्यावहारिकी ॥
[4]कार्षापणोऽण्डिका ज्ञेया ताश्चतस्रस्तु धानकः ।
ते द्वादश सुवर्णस्तु दीनारश्चित्रकः स्मृतः ॥
[5]षड् यवाः पार्श्वसंमिताः ।

अङ्गुलमिति शेषः । दित.५८२

## उशना

[6]माषो विंशतिमो भागो ज्ञेयः कार्षापणस्य तु ।
काकिणी तु चतुर्भागो माषस्येति प्रकीर्तितः ॥

## व्यासः

[7]पलान्यष्टौ सुवर्णस्य सुवर्णाश्च चतुर्दश ।
एतन्निष्कप्रमाणं तु व्यासेन परिकीर्तितम् ॥

---

(१) स्मृच.९९ न्द्रि (ण्डि); विर.६६७ चा (च) नका (निकाः) व तु (व हि); पमा.१५८; स्मृसा.८३ चान्द्रिका (चाटका) नका (निकाः); दवि.२७ नका (निकाः); व्यप्र. १७६ नका (नकाः); प्रका.६३ स्मृचवत्; समु.५२ स्मृचवत्.

(२) सवि.१८१; समु. ५२ र्तितः (र्त्यते) स्मृत्यन्तरम्.

(३) स्मृच.९९ काकि (काक); दवि.२७ णी (नी) गा (गो) षकस्य (षस्य च) प्रथमार्धद्वयम्, चतुर्वर्गचिन्तामणौ; व्यप्र.१७७ प्रथमार्धद्वयम्; विता.२७४ भागस्तु (मो भागो) णी (नी) गा (गो) च (वा); राकौ.४१० भागस्तु (मो भागो) च (वा) तृतीयार्धं विना; प्रका.६३ स्मृचवत्; समु.५२ स्मृचवत्.

(४) स्मृच.९९; प्रका.६३; समु.५२. (५) दित.५८२.

(६) मभा.१२।१९ मो भागो (भागस्तु) स्येति (स्यैव); गौमि.१२।१९ मो भागो (भागस्तु) स्य तु (स्य हि) किणी (कणी) र्भागो (र्थांशो) स्येति (स्यैष); सवि.१८१.

(७) स्मृच.९९; पमा.१५८ र्णस्य सुवर्णाश्च (र्णं स्यात्सुवर्णानां) एतत् (एवं); नृप्र.१३ पमावत्; व्यप्र.१७७ पूर्वार्धे (पलान्यष्टौ सुवर्णाः स्युस्ते सुवर्णाश्चतुर्दश) एतत् (एवं); प्रका. ६३; समु.५२.

## भारद्वाजः

[1]तथा माषं बुधाः प्राहुः काकिणीनां चतुष्टयम्।
विंशतिः स्यात्पुनस्तेषां स मुख्यः पण उच्यते ॥

## स्मृत्यन्तरम्

[2]तिर्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः।
प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुलः ॥
[3]हस्तो वितस्तिद्वितयं दण्डो हस्तचतुष्टयम्।
तत्सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयम् ॥
[4]अङ्गुल्यग्रत्रयग्राह्या शाणमित्यभिधीयते।
शाणं पाणितलं मुष्टिः प्रसृतिश्च तथाऽञ्जलिः ॥
कुडपश्च तथा प्रस्थ आढको द्रोण एव च।
मानी खारी च विज्ञेयाः संख्यायाश्चतुरुत्तराः ॥

## अनिर्दिष्टकर्तृकवचनानि

[5]सार्धं शतं सुवर्णानां निष्कमाहुर्मनीषिणः ॥
[6]पलद्वयं तु प्रसृतं द्विगुणं कुडवं मतम्।
चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकः ॥
आढकैस्तैश्चतुर्भिश्च द्रोणस्तु कथितो बुधैः।
कुम्भो द्रोणद्वयं शूर्पः खारी द्रोणास्तु षोडश ॥
[7]पलं च कुडवः प्रस्थ आढको द्रोण एव च।
धान्यमानेषु बोध्दव्याः क्रमशोऽमी चतुर्गुणाः ॥
द्रोणैः षोडशभिः खारी विंशत्या कुंभ उच्यते।
कुम्भैस्तु दशभिर्वाहो धान्यसंख्या प्रकीर्तिता ॥
[8]दशद्रोणा भवेत् खारी कुम्भोपि द्रोणविंशतिः ॥

(१) **सवि**.१८१; **समु**.५२ तथा माषं (माषकं तु) स्मृत्यन्तरम्.

(२) **मिता**.२।१०६ (=); **स्मृच**.१०५ लः (ला); **पमा**. १७५ स्मृचवत्; **स्मृचि**.५४; **दित**.५९६ (=); **सवि**. १८५ लः (लम्); **व्यप्र**.१८७ लस्योक्तं (लोक्तं हि); **व्यम**. ३१ वा (त्रा); **विता**.२३४ (=); **प्रका**.६६ स्मृचवत्; **समु**.५५ स्मृचवत्.

(३) **मिता**.२।१०६ (=) स्तो (स्ते); **स्मृचि**.५४ ष्टयम् (गुणम्); **सवि**.१८५ प्रथमपादः; **व्यप्र**.१८७; **व्यम**.३२ स्तो (स्तौ); **प्रका**.६६; **समु**.५५.

(४) **स्मृच**.३१९; **समु**.१५१. (५) **मेधा**.८।२२० (शाब्दं शतं सुवर्णानां निष्कमाहुर्महाधियः); **विचि**.८५.

(६) **अप**.२।२७५. (७) **विचि**.१३७ नेषु (नेन); **सेतु**. २३९; **विव्य**.५२. (८) **सेतु**.२३८.

[1]माषो विंशतिभागस्तु ज्ञेयः कार्षापणस्य हि।
कृष्णलस्तु चतुर्थांशो माषस्यैष प्रकीर्तितः ॥
[2]... ... ... माषकं पञ्चकृष्णलम्।
माषकाणि चतुःषष्टिः पलमेकं विधीयते ॥
द्वात्रिंशत्पलिकं प्रस्थं स्वयमुक्तमथर्वणा।
आढकस्तु चतुःप्रस्थैश्चतुर्भिर्द्रोण आढकैः ॥
[3]पञ्चकृष्णलको माषस्तैश्चतुःषष्टिभिः पलम्।
द्वात्रिंशता पलैः प्रस्थो मागधेषु व्यवस्थितः ॥
आढकस्तैश्चतुर्भिस्तु द्रोणः स्याच्चतुराढकः।
सर्वेषामेव मानानां मागधं श्रेष्ठमुच्यते ॥

तदेतन्मागधमात्र इत्याहुः। तन्न गोपथब्राह्मण-संवादित्वेन साधारण्यौचित्यात् मागधेष्विति व्यवहरण-परम्। दवि.१३६

## अग्निपुराणम्

[4]त्रियवं कृष्णलं विद्धि माषस्तत्पञ्चकं भवेत् ॥
कृष्णलानां तथा षष्ट्या कर्षार्धं राम कीर्तितम्।
सुवर्णश्च विनिर्दिष्टो राम षोडशमाषकः ॥
निष्कः सुवर्णाश्चत्वारो धरणं दशभिस्तु तैः।
ताम्ररूप्यसुवर्णानां मानमेतत्प्रकीर्तितम् ॥
ताम्रिकैः कार्षिको राम प्रोक्तः कार्षापणो बुधैः ॥

## स्कन्दपुराणम्

[5]पलद्वयं हि प्रसृतिस्तद्द्वयं कुडवं स्मृतम्।
चतुर्भिः कुडवैः प्रस्थमाढकैश्च चतुर्गुणैः।
चतुर्गुणो भवेद्द्रोण इत्येतद्द्रव्यमानकम् ॥

## भविष्यपुराणम्

[6]कुम्भो द्रोणद्वयं सूर्यः खारी द्रोणास्तु षोडश ॥
सूर्य इति द्रोणस्य नामान्तरं, केचित्सूर्प इतिपठन्ति। दवि.१३५

## विष्णुधर्मोत्तरम्

[7]द्रोणैः षोडशभिः खारी विंशत्या कुम्भ उच्यते।
कुम्भैस्तु दशभिः खारी धान्यसंज्ञा प्रकीर्तिता ॥

(१) धान्येति यवादीनामपि द्रवद्रव्याणामपि चोप-

(१) **गौमि**.१२।१९. (२) **दवि**.१३४. (३) **दवि**.१३६. (४) **अपु**.२२७।१-४. (५) **दवि**.१३४. (६) **दवि**.१३५. (७) **दवि**.१३५.

लक्षण स्कन्दपुराणीयसामान्याभिधानस्वरसादिति महार्णवकारः। दवि.१३५

लघ्वक्षरसमा मात्रा निमेषः परिकीर्तितः।
अतः सूक्ष्मतरः कालो नोपलभ्यो भृगूत्तम ॥
द्वौ निमेषौ त्रुटिर्ज्ञेया प्राणो दशत्रुटिः स्मृतः।
विनाडिका तु षट् प्राणास्तत्षष्ट्या नाडिका स्मृता॥
अहोरात्रं तु तत्षष्ट्या नित्यमेव प्रकीर्तितम् ॥

## वराहपुराणम्

पलद्वयं तत् प्रसृतिर्मुष्टिरेकपलं स्मृतम् ॥
अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलम्
पुष्कलानि च चत्वारि आढकः परिकीर्तितः।
चतुराढको भवेद्द्रोण इत्येतन्मानलक्षणम् ॥
चतुर्भिः सेरिकाभिश्च प्रस्थ एकः प्रकीर्तितः ॥

तत्र हेमाद्रिः, सेरिका कुडवः। तथा कल्पतरुः, सेरिका कुडवः स च द्वादशप्रसृतिपरिमितः। द्वादशप्रसृतिभिः सेरिका तच्चतुष्टयं प्रस्थ इति समयप्रकाशरत्नाकरस्मृतिसागरेष्वप्युक्तम्। तथा भूपालपद्धतौ प्रमाणस्थपुरुषस्य प्रमाणस्थकरचरणस्य द्वादशप्रसृतिभिः कुडव उत्तरोत्तरं चतुर्गुणाः प्रस्थाढकद्रोणा भवन्ति। ततः चतुःषष्ट्या कुडवैर्द्रोण इत्युक्तम्। एवमेव कल्पतरुकारः।
दवि.१३६

## कालिकापुराणम्

यवानां तण्डुलैरेकमङ्गुलं चाष्टभिर्भवेत्।
अदीर्घयोजितैर्हस्तश्चतुर्विंशतिरङ्गुलैः ॥

## पुराणम्

अष्टानां परमाणूनां समवायो यदा भवेत्।
त्रसरेणुः समाख्यातस्तत्पञ्चरज उच्यते ॥

(१) स्मृचि.५४ पू.; व्यप्र.१९२. (२) स्मृचि.५४; व्यप्र.१९२. (३) स्मृचि.५४; व्यप्र.१९२.

(४) दवि.१३५. (५) गौमि.२२।२२ प्रथमार्धे (अष्टमुष्टि भवेत् किञ्चित् किञ्चिदष्टौ तु पुष्कलम्) नि च (नि तु) त्येतन्मान (ति मानस्य); दवि.१३५; सेतु.२३८. (६) दवि. १३६. (७) दित.५८२; व्यप्र१८७.

(८) स्मृच.९९; पमा.१५८ उत्तरार्धे (त्रसरेणुः स विख्यातस्ततः करक उच्यते); प्रका.६३; समु.५२ पमावत्.

उत्थितस्त्वर्कतापेन त्रसरेणुक उच्यते।
अष्टानां त्रसरेणूनां लिक्षेति परिकीर्त्यते ॥
तास्तिस्रः सर्षपः प्रोक्तः काकिण्या तुलितस्तु सः॥
अष्टकं काकिणीनां तु तण्डुलः परिकीर्तितः।
तण्डुलानां द्वयं धान्यं माषकं परिभण्यते ॥
तद्द्वयं कृष्णलं प्रोक्तमण्डिका कृष्णलद्वयम्।
अण्डिकापणशब्दौ तु पर्यायेण प्रकीर्तितौ ॥

## चरकसंहिता

उत्थितस्त्वर्कजालेन त्रसरेणुक उच्यते।
अष्टकं त्रसरेणूनां लिक्षेति परिकीर्त्यते ॥
तास्तिस्रः सर्षपः प्रोक्तः काकिणी स्यात्तु सा स्मृता।
अष्टकं काकिणीनां तु तण्डुलः परिकीर्तितः ॥
तण्डुलं मानकं प्रोक्तं माषकः परिकीर्त्यते।
तद्द्वयं कृष्णलं प्रोक्तमण्डिका कृष्णलद्वयम् ॥
अण्डिकापणशब्दौ तु पर्यायेण प्रकीर्तितौ ॥

## वैखानससंहिता

मानस्तण्डुलमात्रं स्यात् दशमानः पणः स्मृतः ॥

## कापिलपञ्चरात्रम्

अष्टभिस्तैर्भवेत् ज्येष्ठं मध्यमं सप्तभिर्यवैः।
कन्यसं षड्भिरुद्दिष्टमङ्गुलं मुनिसत्तम ॥

## शुक्रनीतिः

क्वचित्संख्या क्वचिन्मानमुन्मानं परिमाणकम्।
समाहारः क्वचिच्चेष्टो व्यवहाराय तद्विदाम् ॥
अङ्गुलाद्यं स्मृतं मानमुन्मानं च तुला स्मृता।
परिमाणं पात्रमानं संख्यैकद्व्यादिसंज्ञिका ॥
यत्र यादृग्व्यवहारस्तत्र तादृक् प्रकल्पयेत्।
रजतस्वर्णताम्रादि व्यवहारार्थमुद्रितम् ॥
व्यवहार्यं वराटाद्यं रत्नान्तं द्रव्यमीरितम्।
सपशुधान्यवस्त्रादि तृणान्तं धनसंज्ञकम् ॥
गुञ्जा माषस्तथा कर्षः पदार्धप्रस्थ एव हि।
यथोत्तरा दशगुणाः पञ्च प्रस्थस्य चाढकाः ॥

(१) समु.५२. (२) सवि.१८२. (३) सवि.१७९ (=): १८१ आगमः : १८२ दशमानः (अष्टमाषः); समु.५२ मानः (मानं) आगमः. (४) दित.५८२. (५) शुनी.२।३४३-३४६. (६) शुनी.२।३७७-३८३.

ततश्चाष्टाढकः प्रोक्तो ह्यर्मणस्ते नु(?) विंशतिः ।
खारिकास्माद्भिद्यते तद्देशे देशे प्रमाणकम् ॥
पञ्चाङ्गुलावटं पात्रं चतुरङ्गुलविस्तृतम् ।
प्रस्थपादं तु तज्ज्ञेयं परिमाणे सदा बुधैः ॥
ऊर्ध्वाङ्कश्च यथासंज्ञस्तदधस्थाश्च वामगाः ।
क्रमात्स्वदशगुणिताः परार्धान्ताः प्रकीर्तिताः ॥
न कर्तुं शक्यते संख्या संज्ञाकालस्य दुर्गमात् ।
ब्रह्मणो द्विपरार्धं तु आयुरुक्तं मनीषिभिः ॥
एको दश शतं चैव सहस्रं चायुतं क्रमात् ।
नियुतं प्रयुतं कोटिरर्बुदं चाब्जखर्वकौ ॥
निखर्वपद्मशंखाब्धिमध्यमान्तपरार्धकाः ।
कालमानं त्रिधा ज्ञेयं चान्द्रं सौरं च सावनम् ॥

## भास्कराचार्यः

[१]वराटकानां दशकद्वयं यत्सा काकिणी ताश्च पणचतस्रः ।

## ज्योतिःशास्त्रम्

[२]दशगुर्वक्षरः प्राणः षट्प्राणाः स्याद्विनाडिका ।
तासां षष्ट्या च घटिका तत्षष्ट्या अहरुच्यते ॥

(१) व्यम.११०; समु.५२ टका (टिका).

(२) मिता.२।१०२ (=) (दशगुरुवर्णः प्राणः षट्प्राणाः स्याद्विनाडिका तासाम्। षष्ट्या घटी घटीनां षष्ट्याहोरात्र उक्तश्च); स्मृच.११० णाः स्या (णा स्या) पू., स्मृत्यन्तरम्; पमा.१७३ (=) पू.; नृप्र.१४; दित.५९० उत्तरार्धे (तासां षष्ट्यां घटी ज्ञेयाऽहोरात्रं घटिकास्तथा); सवि.१९१ रः प्राणः (राः प्राणाः) प्राणाः (प्राणा); वीमि.२।१०२ (=) पू.; व्यप्र.१९२ पू., स्मृत्यन्तरम्; व्यम.२६ पू., स्मृत्यन्तरम्; विता.२२३ स्मृचवत्, पू., स्मृत्यन्तरम्; प्रका.७० स्मृचवत्, पू., स्मृत्यन्तरम्; समु.५८ (तासां षष्टिर्घटी ज्ञेया घटीषष्टीरहः स्मृतम्) स्मृत्यन्तरम्.

## शारदातिलकम्

[१]चतुर्विंशत्यङ्गुलाढ्यं हस्तं तन्त्रविदो विदुः ।
यवानामष्टभिः क्लृप्तं मानाङ्गुलमुदीरितम् ॥

## बालभूषणम्

[२]कर्षः पलपादः स्यात् कर्षार्द्धं तोलकः सोऽपि ।
उक्तो वसुभिर्माषैर्लोके माषोऽपि गुञ्जाकैर्दशभिः॥

पलमत्र वैद्यकप्रसिद्धमष्टतोलकमिति । दवि.२५

[३]कुडवाद्या वेदगुणा प्रस्थाढद्रोणमानकाः खार्यः ।
कुम्भो विंशतिखार्या दृष्टो लोके यथाक्रमशः ॥

लोके मिथिलादौ । तदेवं द्रोणद्वयेन विंशत्या द्रोणैरिति च द्विविधः कुम्भः । दानविवेके तु पणसहस्रपरिमितः कुम्भ इत्युक्तम् । एवं च नानार्थ एव कुम्भशब्दः । दवि.१३५

(१) वित. ५८२; व्यप्र.१८८ मुद्री (मिती). (२) दवि. २५. (३) दवि.१३५.

# * निर्णयकृत्यम्

## विष्णुः

[1] उत्तमर्णश्चेद्राजानमियात्तद्विभावितोऽधमर्णो राज्ञे धनदशभागसंमितं दण्डं दद्यात् । प्राप्तार्थश्चोत्तमर्णो विंशतितममंशम् ।
सर्वापलाप्येकदेशविभावितोऽपि सर्वं दद्यात् ।
[2] एतैर्दिव्यजयावधारणे शतार्धं दण्ड्यः शुद्धः । अशुद्धो दण्डभाक् ।
[3] सोत्तरे एव व्यवहारेऽशुद्धस्य दण्डः ।

## मनुः

पराजितदण्डः

[4] यो यावन्निह्नुवीतार्थं मिथ्या यावंति वा वदेत् ।
तौ नृपेण ह्यधर्मज्ञौ दाप्यौ तद्द्विगुणं दमम् ॥

(१) येन पञ्चसहस्राणि दत्तानीति प्रमाणान्तरानिश्चितं,लेख्यादौ तु करणे दश[1] समारोपितानि प्रमाणान्तरं संवत्सराख्यमिति निश्चित्येदमपश्यत्केवलेन लेख्यप्रमाणेन सर्वत्र प्रवर्तमानः[2] छलव्यवहारीति द्विगुणं दण्ड्यः[3] । यस्य तु विस्मृत्याऽप्यन्यथाप्रवृत्तिराशङ्क्यते तस्य दशकं शतम् । एवमितरस्यापि । न तु सर्वापह्नवे दशभाग एकदेशापह्नवे द्विगुणमिति । किन्तु शाठ्यादन्यथा प्रतिपद्यमानौ द्विगुणं दण्ड्यौ। विस्मृतिदारिद्र्याभ्यां दण्डमुत्तरम् । यो यावन्तमर्थमपह्नुवीतापजानीतेऽधमर्णो, मिथ्या यावंति[4] विपरीतं धनं वदेदुत्तमर्णः, तावुत्तमर्णाधमर्णावधर्मज्ञौ तद्द्विगुणं दमम् । तदित्यपह्नूयमानधनपरामर्शः । यावदपह्नुतं ततो द्विगुणं दमो दण्डः । अधर्मज्ञग्रहणाच्च लिङ्गान्निश्चितछलविषयोऽयं दण्ड इत्युक्तम् । ×मेधा.

(२) यः प्रत्यर्थी यत्परिमाणं धनं अपजानीते यत्परिमाणं वा धनमर्थी मिथ्या कथयति, अधर्मप्रवृत्तौ तस्मादपह्नुतात् मिथ्योक्ताच्च धनात् द्विगुणं दण्डार्थं दापनीयौ । अधर्मज्ञौ इति वचनाद् इदमत्यन्ताभिनिवेशादिप्रवृत्तविषयम् । +गोरा.

(३) अत्र च समद्विगुणदण्डलेशानामपह्नोतुर्ज्ञातिवयोवित्तसमाचारादिना व्यवस्था कार्या । व्यचि.९६

(४) दण्ड्यस्याऽतिधनत्व इदं द्रष्टव्यम् । विचि.३४

## याज्ञवल्क्यः

प्रमाणाधीनो विजयः

[1] तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा ॥

(१) कस्मात्पुनः प्रतिज्ञातार्थसाधनाभिधानयत्नः, यस्मात्—तत्सिद्धाविति । विश्व.२।८

(२) तस्य साधनस्य प्रमाणस्य वक्ष्यमाणलिखितसाक्ष्यादिलक्षणस्य सिद्धौ निर्वृत्तौ सिद्धिं साध्यस्य जयलक्षणां प्राप्नोति । अतोऽस्मात्प्रकारादन्यथा प्रकारान्तरे साधनासिद्धौ विपरीतं साध्यस्यासिद्धिं पराजयलक्षणामाप्नोतीति संबन्धः । *मिता.

(३) विपरीतमविजयमाप्नोतीत्यर्थः । विपरीतं तु भङ्गमिति मिताक्षरा तच्चिन्त्यम् । वीमि.

---

* अस्माभिः धर्मव्यवहारचरित्रराजशासनादिनिर्णयसाधनविचारः दर्शनविधिप्रकरणे सविस्तरमभिहितः, निबन्धकृद्भिस्त्वस्मिन् प्रकरणे ।

(१) **विस्मृ**.६।२०-२२; **व्यमा**.३११ प्येक ( पे एक).
(२) **सवि**.२१९. (३) **सवि**.२२०.

(४) **मस्मृ**.८।५९; **व्यक**.१२७-१२८; **स्मृच**.१२२; **विर**.७७; **पमा**.२०१; **व्यचि**.९६ ण ह्य (णाप्य) दाप्यौ (दण्ड्यौ); **विचि**.३४; **दवि**.३५१ तद्द्वि (च द्वि) शेषं व्यचिवत्; **वीमि**.२।११ व्यचिवत्; **व्यप्र**.२७८ यावति वा (वा यावति); **सेतु**.३८,३१७ दमम् (धनम्); **प्रका**.७७; **समु**.६६; **विव्य**.३१ वदेत् (भवेत्).

[1] देश. [2] न. [3] ण्ड्यम्. [4] वति.

× व्यप्र. मेधावद्भावः ।
+ मसु., विर., मच., नन्द., भाच. गोरागतम् ।
* अप., व्यनि., व्यप्र., विता. वाक्यार्थो मितावत् ।

(१) **यास्मृ**.२।८; **अपु**.२५३।३७; **विश्व**.२।८; **मिता**.; **व्यमा**.३०६; **अप**.; **व्यक**.३८; **स्मृच**.१३; **व्यचि**.१५,२६; **व्यनि**.; **स्मृचि**.४२; **नृप्र**.७; **व्यसौ**.३६; **वीमि**.; **व्यप्र**.४५,८६,१३५; **व्यम**.९; **विता**.७५; **प्रका**.४; **समु**.२५; **विव्य**.८.

पराजितदण्डादिविचारः

**[1]निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम् ।**
**मिथ्याभियोगी द्विगुणमभियोगाद्धनं वहेत् ॥**

(१) यदा तु न्यायेनान्यतरः कार्यी पराजितः, तदा **निह्नवे** इति । **निह्नवो**ऽपलापः तत्र स्पष्टीकृते यावद् धनिना प्रार्थितं तावद्देयम् । राज्ञे च तत्तुल्यमन्यत् । यदा तु मिथ्यैवाभियुङ्क्ते, तदाभियोक्त्रा प्रार्थिताद् द्विगुणं राज्ञ एव धनं देयमित्यर्थः । विश्व.२।११

(२) अर्थिप्रत्यर्थिनोर्निर्णयकार्ये ससभ्येन सभापतिना प्रतिभूर्ग्राह्य इत्युक्तम् । किं तन्निर्णयकार्ये यस्मिन्प्रतिभूर्गृह्यत इत्यपेक्षित आह— **निह्नवे** इति ।

अर्थिना निवेदितस्याभियोगस्य प्रत्यर्थिनाऽपह्नवे कृते यदाऽर्थिना साक्ष्यादिभिर्भावितोऽङ्गीकारितः प्रत्यर्थी तदा दद्याद्धनं प्रकृतमर्थिने, राज्ञे च तत्सममपलापदण्डम् । अथार्थी भावयितुं न शक्नोति, तदा स एव मिथ्याभियोगी जात इत्यभियोगादभियुक्तधनाद्द्विगुणं धनं दद्याद्राज्ञे । प्राङ्न्याये प्रत्यवस्कन्दने चेदमेव योजनीयम् । तत्राप्यर्थ्यपह्नववादी प्रत्यर्थिना भावितो राज्ञे प्रकृतधनसमं दण्डं दद्यात् । अथ प्रत्यर्थी प्राङ्न्यायं कारणं वा भावयितुं न शक्नोति तदा स एव मिथ्याभियोगीति राज्ञे द्विगुणं धनं दद्यात् । अर्थिने च प्रकृतं धनम् । संप्रतिपत्त्युत्तरे तु दण्डाभाव एव । एतच्च ऋणादानविषयमेव । पदान्तरेषु तत्र तत्र दण्डाभिधानादधनव्यवहारेष्वस्यासंभवाच्च न सर्वविषयत्वम् । 'राज्ञाऽधमर्णिको दाप्य' इत्यस्य ऋणादानविषयत्वेऽपि तत्रैव विशेषं वक्ष्यामः । यद्वा एतदेव सर्वव्यवहारविषयत्वेनापि योजनीयम् । कथं अभियोगस्य निह्नवेऽभियुक्तेन कृते यद्यभियोक्त्रा साक्ष्यादिभिर्भावितोऽभियुक्तस्तदा तत्समं तत्र तत्र प्रतिपदोक्तमेव । चशब्दोऽवधारणे । धनं दण्डं दद्याद्राज्ञ इत्यनुवादः । अथाभियोक्ता अभियोगं वक्तुं न शक्नोति तदा मिथ्याभियोगीति प्रतिपदोक्तं धनं दण्डं द्विगुणं दद्यादिति विधीयते । अत्रापि प्राङ्न्याये प्रत्यवस्कन्दने च पूर्ववदेव योजनीयम् । *मिता.

(३) एतच्च सपणव्यवहारविषयम् । अस्ति च पणरहितोऽपि व्यवहारः । ÷अप.

(४) आशयदोषव्यतिरिक्ते तु दारिद्र्यविस्मरणादिनाऽपह्नवविषये दण्डनं च शक्तित इत्यवगन्तव्यम् । व्यक.१०१

(५) तदुद्वृत्ताधमर्णस्योक्त (द्विगुण) दण्डपर्याप्तधनासंभवविषये वेदितव्यम् । अन्यथा पूर्वोक्तविष्णुमनु (मस्मृ.८।१७६)वचनविरोधस्य दुर्वारत्वात् । मिथ्याभियोगिनस्त्वपर्याप्तधनस्याऽपि न तत्समो दण्डः । यदाह स एव— 'मिथ्याभियोगी द्विगुणमभियोगाद्धनं वहेत्' इति । अभियोगादभियुक्तधनाद्द्विगुणं धनं वहेत्, राज्ञे दद्यादित्यर्थः । तावद्धनाभावे तु 'आनृण्यं कर्मणा गच्छेत्' इत्याद्यनुकल्पोऽवगन्तव्यः । यत्तु नारदेनोक्तम्— 'न च मिथ्याऽभियुञ्जीत दोषो मिथ्याभियोगिनः । यस्तत्र विनयः प्रोक्तः सोऽभियोक्तारमाव्रजेत्' ॥ इति तत्प्रतिपदोक्तदण्डाभावविषयं सामान्यशास्त्रत्वात् । तेन निह्नवेऽसद्वृत्तस्य यो दण्डोऽभिहितो विष्णुना स एव सद्वृत्तस्य मिथ्याभियोगिनो भवतीत्यवगन्तव्यम् । +स्मृच.१२२

(६) भङ्गिनो भ्रमेणान्यथावादे समो दण्डः । ज्ञात्वा निह्नवे द्विगुणः । चन्द्र.१६७

(७) चकारेण वाक्पारुष्यादौ दण्डान्तरं समुच्चिनोति । ×वीमि.

सोत्तरपराजितदण्डः

**[1]सपणश्चेद्विवादः स्यात्तत्र हीनं तु दापयेत् ।**

---

(१) **यास्मृ**.२।११; **अपु**.२५३।४०-४१ गी (गात्) वहे (हरे); **विश्व**.२।११; **मिता**.; **अप**.; **व्यक**.१२८ ह्नवे (ह्नुते) द्धनं (द्धृतं); **स्मृच**.१२२; **पमा**.२०१; **सुबो**.२।२६ **पू**.; **व्यचि**.९६ वहे (हरे); **विचि**.३५ तो (तं) गी (गं) वहे (हरे); **व्यनि**. व्यचिवत्, नारदः; **दवि**.३५० व्यचिवत्; **नृप्र**.१७ उत्त., स्मरणम्; **चन्द्र**.१६७-१६८ व्यचिवत्; **व्यसौ**.९२; **वीमि**.; **व्यप्र**.२७९; **विता**.९६:४९९(=) **पू**.; **सेतु**.३८,३१७ व्यचिवत्; **प्रका**.७७ ह्न (ह्नु); **समु**.६७; **विव्य**.३१ अपुवत्.

* प्रथमकल्पः विश्ववत् । विता. मितागतम् ।
÷ वाक्यार्थो विश्ववत् । + पमा. स्मृचवत् ।
× वाक्यार्थो विश्ववत् ।

(१) **यास्मृ**.२।१८; **अपु**.२५३।४६-४७ च स्वपणं (पूर्णं वसुं); **विश्व**.२।१८; **मिता**.; **अप**.; **व्यक**.१०१; **स्मृच**.

**दण्डं च स्वपणं चैव धनिने धनमेव च ॥**

(१) यदा तु प्रत्यवस्कन्दनमनेन मार्गेण पुनः पूर्ववाद्यधरीकुर्यात्, तदा कथम् ? मैवम्; एवमौत्तराधर्यकरणे सत्यव्यवस्थैव स्यात् । का तर्हि गतिः ? अभ्यधिकपणोपन्यासेन यदि (?) परं व्यवहारपरावृत्तिः । अन्यथाऽनवस्थैव स्यात् । ततश्च—सपण इति । दण्डस्वपणौ राज्ञे देयौ । स्ववतः पणः स्वपणः, यो धनिना व्यवहारं परावर्तयितुं पणः कृत इत्यर्थः । धनं तु धनिन एव राजा दापयेत् । चशब्दो धिग्दण्डादिसमुच्चयार्थः । एवं तावत् साक्षिसङ्करे नियम उक्तः । ललाटस्वेदादिलिङ्गसङ्करे कथम् ? तत्राप्यनुमानमूलत्वाल्लैङ्गिकादिस्मृतीनां सम्यगनुमाननिरूपणाधीन एव व्यवहारनिर्णयः । विश्व.२।१८

(२) अपि च । 'यदि विवादो व्यवहारः । सपणः पणनं पणस्तेन सह वर्तते इति सपणः स्यात्तदा । तत्र तस्मिन्सपणे व्यवहारे । हीनं पराजितं पूर्वोक्तम् । दण्डं स्वकृतं च पणं राज्ञे, अर्थिने च विवादास्पदीभूतं धनं दापयेद्राजा । यत्र पुनरेकः कोपावेशवशाद्यद्यहमत्र पराजितो भवामि तदा पणशतं दास्यामीति प्रतिजानीते, अन्यस्तु न किञ्चित्प्रतिजनीते, तत्रापि व्यवहारः प्रवर्तते । तस्मिंश्च प्रवृत्ते पणप्रतिज्ञावादी यदि हीयते तदा स एव सपणं दण्डं दाप्यः । अन्यस्तु पराजितो दण्डं दाप्यः न पणम् । स्वपणं चेति विशेषोपादानात् । यत्र त्वेकः शतं, अन्यस्तु पञ्चाशतं प्रतिजानीते तत्रापि पराजये स्वकृतमेव पणं दाप्यौ । 'सपणश्चेद्विवादः स्यात्' इति वदता पणरहितोऽपि विवादो दर्शित इति । मिता.

(३) पणं राज्ञे, साधितं च धनं धनिने प्राड्विवाको दापयेत् । प्राड्विवाकाभावे राजा स्वयमेव गृह्णीयात्, जितेन मयैतावद्देयमित्यभ्युपेतं धनं पणः । *अप.

(४) एकदेशविभावनयापि मया सर्वं देयमित्यादिर्यत्र पण इत्यर्थः । व्यचि.६०

(५) तुशब्देनापणविवादे पणदानव्यवच्छेदः । एवकारेण प्रथमेन स्वानभ्युपगतपरोक्तपणदानव्यवच्छेदः । द्वितीयेन च धनिन एवेत्यन्वितेन धनविषयकविवादातिरिक्ते वाक्पारुष्यादौ धनदानव्यवच्छेदः । प्रथमचकारौ दण्डपणयोरदेययोर्निष्पादनसमुच्चयार्थौ । चरमचकारस्त्रयाणां दण्डादीनां मिलितानां दानबोधनार्थः । *वीमि.

एकदेशविभावितविचारः

**[1]निह्नुते लिखितं नैकमेकदेशे विभावितः ।**
**दाप्यः सर्वं नृपेणार्थं न ग्राह्यस्त्वनिवेदितः +॥**

(१) यदि त्वनेकत्रार्थेऽभियुक्तः सर्वमादौ नेत्युक्त्वा पुनः किञ्चित् कथञ्चित् अभ्युपगच्छेत् तत्र तन्मात्रमेव किमसौ दाप्यः? नेत्युच्यते—निह्नुते इति । अनेकार्थापलापकत्वेन लिखितो राज्ञे कथितो यदि निह्नुते, पुनश्चैकदेशे स विभाव्यते, ततो दाप्यः सर्वान् सदण्डकानर्थान् । यदि तु न लिखितः, तदैवंभूतोऽप्यदण्ड्यः । यद्वा, 'न ग्राह्यस्त्वनिवेदित' इत्यस्यान्या व्याख्या—धनिने राज्ञा सर्वमर्थं दाप्यः, न तु दण्ड्यः । तदनभिप्रेतोऽपीत्यर्थः । विश्व.२।२०

(२) 'भूतमप्यनुपन्यस्तं हीयते व्यवहारतः' इत्यत्रोदाहरणमाह—निह्नुते इति । नैकमनेकं सुवर्णरजतवस्त्रादि । लिखितमभियुक्तमर्थिना प्रत्यर्थी यदि सर्वमेव निह्नुते अपजानीते तदाऽर्थिनैकदेशे हिरण्ये

---

* शेषं मितावत् ।

१० पू. : १२३; **पमा.**२०४ तत्र (राजा) च स्व (तस्य); **स्मृसा.**१२१ (=) तु (प्र); **व्यचि.**५९-६०,९७ तु (प्र) स्व (स); **दवि.**३५२ तु (प्र); **सवि.**४९० सप (अप); **व्यसौ.**९२; **वीमि.**; **व्यप्र.**९२; **विता.**१०३; **बाल.** २।२५ (=) पू.; **प्रका.**६; **समु.**६७.

* शेषं मितावत् । + व्यमा.व्याख्यानं अशुद्धिसंदेहान्नोद्धृतम् ।

(१) **यास्मृ.**२।२०; **अपु.**२५३।४८-४९ तं नै (ताने) शे (श) वितः (वितम्) र्वं (र्वो) र्थं (र्थो); **विश्व.**२।२० तं नै (तोऽने) शे (श) र्वं (र्वान्) र्थं (र्थान्); **मिता.**; **व्यमा.**३१० तं नै (ताने) शे (श) र्वं (र्वान्) नृपेणार्थं (रूपणार्थान्); **अप.** ह्नुते (ह्नवे) तं नै (तेऽने) शे (श); **व्यक.**१०१; **स्मृच.**१२० शे (श); **पमा.**२०२ स्मृचवत्; **व्यचि.**९७ विश्ववत्, क्रमेण नारदः; **व्यनि.** ह्नुते (ह्नवे) शे (श); **व्यत.**२१६-२१७ तं नै (ताने) र्वं (र्वान्) र्थं (र्थान्); **चन्द्र.**१२७ लिखितं (निखिलं) ह्यः (ह्यं) दितः (दितम्); **व्यसौ.**३७:९२ स्मृचवत्; **वीमि.**; **व्यप्र.**९८ शे (श) र्थं (र्थो); **विता.**१०७ (=) स्मृचवत्; **सेतु.**१०० व्यतवत्; **प्रका.**७६ शे (श) दितः (दितम्); **समु.**६६ स्मृचवत्.

साक्ष्यादिभिः प्रत्यर्थी भावितोऽङ्गीकारितः सर्वं रजताद्यर्थं पूर्वलिखितं दाप्योऽर्थिने नृपेण । न ग्राह्यस्त्वनिवेदितः । पूर्वं भाषाकाले अनिवेदितः पश्चादर्थिना पूर्वं मया विस्मृत इति निवेद्यमानो, न ग्राह्यो न दापयितव्यो नृपेण । एतच्च न केवलं वाचनिकमेकदेशे प्रत्यर्थिनो मिथ्यावादित्वनिश्चयादेकदेशान्तरेऽपि मिथ्यावादित्वसंभवात् । आर्थिनश्चैकदेशे सत्यवादित्वनिश्चयादेकदेशान्तरेऽपि सत्यवादित्वसंभवात् । एवं तर्कापरनामसंभावनाप्रत्ययानुगृहीतादस्मादेव योगीश्वरवचनात्सर्वं दापनीयं नृपेणेति निर्णयः । एवं च तर्कवाक्यानुसारेण निर्णये क्रियमाणे वस्तुनोऽन्यथात्वेऽपि व्यवहारदर्शिनां न दोषः । तथा च गौतमो — 'न्यायाधिगमे तर्कोऽभ्युपायस्तेनाभ्युपेत्य यथास्थानं गमयेत्' इत्युक्त्वा 'तस्माद्राजाचार्यावनिन्द्यावि'त्युपसंहरति । न चैकदेशभावितोऽनुपादेयवचनः प्रत्यर्थीत्येतावदिह गम्यते । एकदेशविभावितो नृपेण सर्वं दाप्य इति वचनात् । यत्तु कात्यायनेनोक्तम्—'अनेकार्थाभियोगेऽपि यावत्संसाधयेद्धनी । साक्षिभिस्तावदेवासौ लभते साधितं धनम्'॥ इति तत्पुत्राद्यृणविषयम् । तत्र हि बहूनर्थानभियुक्तः पुत्रादिर्न जानामीति प्रतिवदन्निह्नववादी न भवतीत्येकदेशविभावितोऽपि न क्वचिदसत्यवादीति 'निह्नुते लिखितं नैकमि'ति शास्त्रं तत्र न प्रवर्तते । निह्नवाभावादपेक्षिततर्काभावाच्च 'अनेकार्थाभियोगेऽपी'ति कात्यायनवचनं सामान्यविषयम् । विशेषशास्त्रस्य विषयं निह्नवोत्तरं परिहृत्याऽज्ञानोत्तरे प्रवर्तते ।

ननु, 'ऋणादिषु विवादेषु स्थिरप्रायेषु निश्चितम् । ऊने वाऽप्यधिके वार्थे प्रोक्ते साध्यं न सिध्यति' ॥ इति वदता कात्यायनेनानेकार्थाभियोगे साक्षिभिरेकदेशे भाविते‌ऽधिके वा भाविते साध्यं सर्वमेव न सिद्ध्यतीत्युक्तम् । तथा सत्येकदेशे भाविते अभावितैकदेशसिद्धिः कुतस्त्या । उच्यते । लिखितसर्वार्थसाधनतयोपन्यस्तैः साक्षिभिरेकदेशाभिधानेऽधिकाभिधाने वा कृत्स्नमेव साध्यं न सिध्यतीति तस्यार्थः । तत्रापि निश्चितं न सिध्यतीति वचनात्पूर्ववत्संशय एवेति प्रमाणान्तरस्यावसरोऽस्त्येव । छलं निरस्येति नियमात् । साहसादौ तु सकलसाध्यसाधनतयोद्दिष्टैः साक्षिभिरेकदेशेऽपि साधिते कृत्स्नसाध्यसिद्धिर्भवत्येव । तावतैव साहसादेः सिद्धत्वात् कात्यायनवचनाच्च — 'साध्यार्थांशेऽपि गदिते साक्षिभिः सकलं भवेत् । स्त्रीसंगे साहसे चौर्ये यत्साध्यं परिकीर्तितम्' ॥ इति । *मिता.

(३) भूतोऽप्यर्थश्छलव्यवहारेण यथा हीयते तथा दर्शयति—निह्नवे इति । एतत्तु वचनमपह्नववादिनः सावष्टम्भे प्रतिवचने द्रष्टव्यम् । यथैतेषामर्थानां मध्ये यद्येकमप्यर्थमर्थी साधयति तदा सर्वानेतानहं दधामीति । कुत एतत् । छलोदाहरणपरत्वादस्य वाक्यस्य । अन्यथा— 'अनेकार्थाभियोगेऽपि यावत्संसाधयेद्धनी । साक्षिभिस्तावदेवासौ लभते साधितं धनम्' ॥ इति कात्यायनवचनविरोधः स्यात् । तत्र च साक्षिसाधितावशिष्टमर्थं साधयितुं प्रमाणान्तरमर्थिनोपादेयम् । यत्तु नारदेनोक्तम् — 'अनेकार्थाभियुक्तेन सर्वार्थव्यपलापिना । विभावितैकदेशेन देयं यदभियुज्यते' ॥ इति, तदपि सावष्टम्भमिथ्योत्तरविषयम् । ×अप.

(४) एतदुक्तं भवति 'छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः' । इत्युक्तमेवंविधविषये नृपेणादर्तव्यं, दुष्टाशयत्वस्यात्र सिद्धत्वात् इति । न च वाच्यं छलानुसारित्वात्सर्वदापनमपि नृपेणादरणीयमिति । यदाह कात्यायनः —'सर्वापलापं यः कृत्वा मिथोऽल्पमपि संवदेत् । सर्वमेव तु दाप्यः स्यादभियुक्तो बृहस्पतिः'॥ आदरार्थं बृहस्पतिग्रहणम् । नारदोऽपि सर्वदापनमादर्तव्यमिति दर्शयितुमभियुक्तदेयत्वमाह—'अनेकार्थाभियुक्तेन सर्वार्थव्यपलापिना । विभावितैकदेशेन देयं यदभियुज्यते' ॥ ननु प्राचीनवचनानां प्रागुक्तार्थाभिधाने धर्मनिर्णयार्थता न स्याच्छलानुसारेण तेषां व्यवहारनिर्णयाभिधायकत्वात् । सत्यम्; तथापि न दोषः। प्रागुक्तविषये व्यवहारनिर्णयस्य धर्मनिर्णयबाधकत्वात् । अत एव बृहस्पतिः—'केवलं शास्त्रमाश्रित्य क्रियते यत्र निर्णयः । व्यवहारः स विज्ञेयो धर्मस्तेनापि हीयते' इति ॥ यत्र प्रागुक्तविषयादावित्यर्थः । यत्तु कात्यायनेनोक्तम् —'अनेकार्थाभियोगेऽपि यावत्संसाधयेद्धनी । साक्षिभिस्तावदेवासौ लभते साधितं धनम्' इति ॥

---

* व्यनि., विता., सेतु. सितागतम् । व्यक., पमा., व्यत. वाक्यार्थो मितावत् । × वाक्यार्थो मितावत् ।

तद्यत्र दुष्टाशयत्वस्यात्यन्तदाढर्याभावस्तद्विषयम्। प्राचीनवचनेष्विवात्र प्रतिवादिनः सर्वापलापलक्षणदौष्ट्यकथनांशाभावात् केचिदस्य वचनस्य पुत्रादिदेयपित्रादिऋणविषयत्वं वदन्ति तत्रैव नाभिजानामि इत्युत्तरत्रयस्य संभवादिति वदन्तः। तन्न समीचीनम्। स्वकृतऋणविवादेऽपि विस्मरणादिनोत्तरत्रयस्य संभवात् पुत्रादेः पित्रादिकृतऋणविवादे मिथ्यैतदिति उत्तरमुक्तवतो निह्नववादित्वेऽपि साधितमात्रज्ञानप्रसंगाच्च। अथ पुत्रादेर्मिथ्यैतदित्युत्तरं न संभवतीत्युच्यते। मैवं वोचः। ऋणग्रहणकाले प्रबुद्धस्याप्रबुद्धस्यापि मात्रादिवचनतस्तत्संभवात्। अथ नाभिजानामीत्युत्तरमुक्तवति पुत्रादौ साधितमात्रलाभवचनमित्युच्यते। तर्हि नाभिजानामीत्युत्तरत्रयविषयकत्वं तस्य परिकल्प्यतां किं पुत्रादिविषयत्वेन। अथ—'पुत्रपौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम्' (यास्मृ.२।५०) इति स्मरणात् पुत्रादिविषयत्वमित्युच्यते। तर्हि मिथ्यैतदित्युक्तपुत्रादिविषयत्वं न पुनः नाभिजानामीत्युक्तवत्पुत्रादिविषयत्वम्। 'निह्नवे साक्षिभावितम्' इति स्मरणात्। अन्ये त्वन्यथा व्यवस्थापयन्ति। सर्वार्थदापनवचनं 'प्रतिज्ञातार्थानां मध्ये यद्येकमप्यर्थमर्थी साधयति तदा सर्वानेतानर्थानहं ददामि' इत्येवं सावष्टम्भोक्तियुक्तनिह्नवविषयं, तद्रहितविषयं तु साधितमात्रलाभवचनमिति। एतदप्ययुक्तम्, 'निह्नुते लिखितं नैकम्' इत्यविशेषेणाभिधानात्। न च छलोदाहरणपरत्वादस्य वाक्यस्य, तत्सिद्धये सावष्टम्भनिह्नवविषयत्वमास्थीयत इति युक्तम्। सर्वापलापच्छलमादाय व्यवहारसमाप्त्यभिधानात् तावतैव वाक्यस्य छलोदाहरणपरत्वसिद्धेः। भाषाबलेनैवोक्तविषये सर्वदापनात् अनुवादकं च निह्नुत इत्यादिवचनं तत्समानार्थवचनद्वयमपि स्यात्। न च, 'अनेकार्थाभियोगेऽपि यावत्संसाधयेद्धनी' इत्यादि कात्यायनवचनपरिहारायैवमाश्रीयत इति युक्तम्। तद्विरोधस्य ऋजुमार्गेण परिहृतत्वादिति अलमतिविस्तरकारिणा मतान्तरोपन्यासनिरासेन। *स्मृच.१२०-१२१

(५) इदं च भावितस्यैकदेशस्यैकदेशान्तराऽविनाभावे, एकदेशविभावनेऽपि सर्वं दास्यामीति व्यवस्थाविशेषे च। तत्राद्यं भूतार्थसंबद्धम्। द्वितीयं छलसंबद्धमिति। वीमि.

(६) [अपरार्कं खण्डयति] तदनुपपन्नम्। 'सपणश्चेद्विवादः स्यात्' इत्यनेनास्य गतार्थतापत्तेः। ईदृशावष्टम्भस्य पणादनतिरेकात्। न च पणस्य राज्ञा ग्रहणमस्य त्वर्थिनेति भेद इति वाच्यम्। एतादृशभेदस्याप्रयोजकत्वात्। स्वपणं दापयेदित्येतावन्मात्रस्यैव तदर्थत्वात्। प्रतिज्ञानुरोधित्वात् पणत्वस्य। निह्नवमात्रस्यात्र प्रतीतेः सावष्टम्भनिह्नवविषयत्वकल्पनाया अप्रामाणिकत्वाच्च। एवं नारदवाक्येऽपि। न च तत्र 'व्यपलापिना' इति विशब्दोपादानादवष्टम्भसहितनिह्नवप्रतीतिरिति वाच्यम्। अनन्यथासिद्धतात्पर्यग्राहकाभावे सावष्टम्भरूपविशेषपरत्वस्य तत्रानियतत्वात्।

वाचस्पतिचण्डेश्वरौ त्वाहतुः—तत्रैकदेशसिद्धिरेकदेशान्तरसिद्ध्यविनाभूता। तद्विषयं योगीश्वरनारदयोर्वचनं तदतिरिक्तविषयं तु कात्यायनीयमिति।

तदप्यसत्। निह्नवोपादानवैयर्थ्यात्। अनिह्नवेऽपि तस्य युक्तियुक्तत्वात्। प्रत्यवस्कन्दनप्राङ्न्यायोत्तरयोरप्येकदेशे कारणादिसाधने तद्विनाभूतैकदेशान्तरे कारणादिसिद्धेर्दुर्वारत्वात्।

यत्तु वाचस्पतिना अपरार्कोक्तसपणविवादविषयत्वमस्याभ्युपेत्य तदाहेत्यादिना सपणश्चेदित्यादि तत्र योगीश्वरवच एव संवादितम्। तेन स्पष्टमेव गतार्थत्वं प्रदर्शितमिति महान् प्रमादः।

वयं तु 'छलं निरस्य' इत्यस्य विधेर्हेतुरयं 'भूतमप्यनुपन्यस्तं' इत्युपोद्बलकः। यतो भूतं तत्त्वमप्यनुपन्यस्तं व्यवहारतो हीयते वादिप्रतिवादिभ्यामनुपन्यस्तं प्रमाणतोऽसाधितं हीयते हानिमाप्नोति व्यवहारतो व्यवहाररीत्येति तस्यार्थः। तदुपपादनं 'निह्नुते लिखितं नैकम्' इत्यादि। तस्याप्ययमर्थः। वादिनः कतिपयांशे सत्यवादिनोऽन्यांशेऽपि सत्यवादित्वसंभवात् प्रतिवादिनश्च सर्वापह्नववादिनः कतिपयांशे मिथ्यावादित्वनिश्चयादन्यांशेऽपि तत्संभवात् स सर्वमर्थं नृपेणार्थिने दाप्यो दापयितुं योग्यो भवति निरुत्तरत्वात्। एवं प्रागनिवेदितोऽर्थिनार्थो भूतोऽपि प्रामाणिकोऽपि न ग्राह्यः ग्रहणार्हो न। यदि तवायमर्थः सत्यः स्याद्भाषायामेव

* वाक्यार्थो मितावत्।

निवेदितः स्यादित्याक्षेपेऽर्थिनोऽपि निरुत्तरत्वात् । तस्मादुत्तरदानसमये प्रत्यर्थी राजादिभिरेवं बोधनीयो यावत्येवांशे तव मिथ्यात्वनिश्चयस्तावदेवापह्नोतव्यमन्यत्संप्रतिपत्तव्यम् । क्वचिदप्यंशेऽनेन भवदुपरिसाधिते तव निरुत्तरत्वापत्तेः । एवं वाद्यपि भाषासमये सावधानेन त्वया स्वीयं यावदस्ति साध्यमेतदुपरि तत्सर्वं स्मारं स्मारं लेखनीयं, अन्यथा तदंशे निरुत्तरता तवापद्येतेति बोधनीयः । एवं साक्षिणोऽपि प्रमादादिभ्यः प्रच्यावनीयाः । तथा सत्यनायासेन तत्वानुसरणं भवति । तच्चावश्यकं अन्यथा दिव्यादिना तत्वानुसरणं कर्तव्यं स्यादिति सर्वथा तत्त्वानुसरणेनैव व्यवहारपर्यवसानं विधेयमिति छलं निरस्येत्यस्यैव विधेः सर्वोऽयं शेषो न स्वतन्त्रो विधिर्येन दापनं सर्वस्य विधीयेत, अनिवेदितग्रहणं वा प्रतिषिध्येत । नारदवाक्येऽपि देयं दानयोग्यमित्येवार्थः । न चैवं 'दाप्य' इत्यादीनामानर्थक्यमेव स्यादिति वाच्यम् । यतो लौकिकप्रमाणावष्टम्भेनैवमेव प्रतिभाति । तस्मात्तत्त्वानुसरणायान्यतरस्मादीदृशि विषये दिव्यमेव ग्राह्यं इति अत्र तात्पर्यात् । कात्यायनादिवचनानामप्यत्रैव तात्पर्यम् । 'ऋणादिषु विवादेषु' इत्यतोऽप्ययमेवार्थो दृढतामुपैति । यतः प्रमाणप्रतिज्ञाविसंवादे निश्चयाभावस्ततस्तत्वानुसरणाय प्रमाणान्तरादर आवश्यक इति । अत एवाह साहसादौ प्रतिज्ञातार्थैकदेशविभावनेऽपि नैकदेशे प्रमाणान्तरानुसरणम् । साहसिनो हि राजदण्डमात्रं न प्रत्यर्पणं कस्मैचित् । यद्यपि चौर्ये प्रत्यर्पणमस्ति । तथापि कतिपयचौरः सर्वं दाप्यत इति लोके प्रसिद्धतरत्वाद्यदि मद्गृहात्तावदियच्चौर्येण गतमस्य च सविधे प्रमाणप्रमितमियदस्तीति चौराभियोक्ता साधयति तदा तत एव सर्वं लभते । यदि त्वनष्टमपि कियन्नष्टसाधनावष्टम्भेन लब्धुमुपन्यस्यति तर्हि मिथ्यावादित्वान्नाष्टिक एव दण्ड्यो भवति इत्यपि लोके प्रसिद्धतरम् । अनेनैवाभिप्रायेणाह कात्यायनः—'साध्यार्थांशेऽपि गदिते साक्षिभिः सकलं भवेत् । स्त्रीसङ्गे साहसे चौर्ये यत्साध्यं परिकीर्तितम्' इति ॥ तत्त्वानुसरणं स्मृत्योर्विरोधे कथं स्यादित्यपेक्षायामाह—'स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः' इति । व्याख्यातं चैतत्प्रागेव । अर्थशास्त्रधर्मशास्त्रयोर्विरोधे धर्मशास्त्रानुसरणेनैव तत्वानुसरणमित्याह—'अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः' इति । इदमपि प्रपञ्चितं प्राक् । तस्मादस्मन्मते 'छलं निरस्य' इत्याद्येतदन्तप्रघट्टकेन छलनिरासतत्वानुसरणावश्यम्भावप्रतिपादनमेवैकवाक्यतया लभ्यते इति ब्रूमः । व्यप्र.९९,१०१–१०२

## नारदः

एकदेशविभावितन्यायः

**[1]अनेकार्थाभियुक्तेन सर्वार्थव्यपलापिना ।**
**विभावितैकदेशेन देयं यदभियुज्यते * ॥**

(१) तदपि सावष्टम्भमिथ्योत्तरविषयम् । अप.२।२०

(२) इत्यनेकवचनविरोधेन यत्रैकग्रहणमन्यग्रहणाव्यभिचारि तद्विषयं व्याख्येयम् । तद्यथा, सुवर्णाद्यनेकवस्तुसहितं पात्रं चौरेण गृहीतं, तत्रैकदेशस्यापि सुवर्णाद्यन्यतरस्य विभावनेन सर्वमेव देयम् । राजदण्डविषयं वा अपराद्धत्वात् सर्वमेव राज्ञा ग्राह्यं, स्वयं यत्र वादी तथाङ्गीकरोति तद्विषयं वा । तदुक्तम्—'सपणश्चेद्विवादः स्यात्तत्र हीनं तु दापयेत्' । एकदेशविभावनेनापि सर्वं देयमिति यत्र पणः ।

× स्मृसा.१२०-१२१

सोत्तरपराजितदण्डादि

**[2]विवादे सोत्तरपणे द्वयोर्यस्तत्र हीयते ।**
**स पणं स्वकृतं दाप्यो विनयं च पराजये ॥**

---

* स्मृच., व्यप्र. व्याख्यानं 'निन्हुते लिखितं नैकं' इति याज्ञवल्क्यवचने (पृ.५४०-५४१) द्रष्टव्यम् । पमा. स्मृचगतम् ।

× व्यचि. स्मृसावद्भावः ।

(१)**व्यमा**.३११ वार्थव्य (वद्रव्या); **अप**.२।२०; **व्यक**.१०१; **स्मृच**.१२०; **स्मृसा**.१२० क्तेन (क्तेषु) यदभि (तदपि); **पमा**.२०३ ना (नाम्); **व्यचि**.७७ युक्तेन (योगेषु) यदभि (तदपि) : ९७ युक्तेन (योगे तु) व्यप (श्च प्र) यदभि (तदपि); **व्यनि**.; **नृप्र**.१७ व्यपलापिना (मपलापिनम्); **व्यसौ**.९२; **व्यप्र**.९९ युक्तेन (योगे तु); **प्रका**.७६; **समु**.६६; **विव्य**.९ व्यप्रवत्.

(२) **नासं**.१।५; **नास्मृ**.१।५ पणं स्वकृतं (एव हि पणं); **अभा**.५ नास्मृवत्; **व्यमा**.२८४ नयं (नेयः); **स्मृच**.१२३ ये (यः); **पमा**.२०४ स प (स्वप); **व्यचि**.७ व्यमावत्; **दवि**.३५३णे (दे) नयं च पराजये (नेयश्चापराजितः); **नृप्र**.१७

(१) इदानीं सोत्तरनिर्णय उच्यते। अत्र तावत्पणोपन्यास एव निरूप्यते येन धनिकेनर्णिकपार्श्वे द्रव्यं लभ्यं तेन द्रव्यप्रार्थनमात्रैव भाषा करणीया। तं चोपन्यस्यति वादी (?)। तदा भाषायामधिकप्रार्थनादोषः अतो यदा प्रतिवादी सत्यार्थेऽपि तस्य मिथ्योत्तरं ददाति। तदा धनी स्वसत्यावष्टम्भखरीकरणार्थं ऋणिकस्यामर्षादधिकद्रव्यवाहनार्थं च तृतीयपादे स्थितः पणमुपन्यस्य क्रियोपन्यासमपि करोति तदा एष वादिनः क्रियोपन्यासकालः। प्रतिवाद्यपि यदा असन्तमेवाभियोगं दत्तमात्मनो जानाति तदा भाषानन्तरमेव मिथ्योत्तरं दत्वा तस्यैवोत्तरस्यावष्टम्भनिश्चयार्थं वादिनः स्वामर्षात् साकोटनद्रव्यवाहनार्थं पणोपन्यासं करोति एष प्रतिवादिनः पणोपन्यासकालः। अत्र च यः पणो वादिप्रतिवादिनोरेकतरेणापि रोषामर्षादुपन्यस्तः स सोत्तरशब्देनोच्यते। तेन सह यो वादः स सोत्तरपणः। तस्मिन् विवादे सोत्तरपणे य एव कश्चिद्धीयते अवसायं प्राप्नोति स एव हि पराजयेण मिथ्यावादित्वात् द्विगुणं दण्डं च राज्ञात्मने दाप्य इति। अत्र श्लोके केचिदेवं पाठान्तरं पठन्ति यथा 'स पणं स्वकृतं दाप्य' इति। एवमप्यत्र न किंचिद्दुष्यत इति। यतो द्यूतेन द्यूतकारयोर्द्वयोरपि परस्परं दीव्यतोर्य एव पराजयं प्राप्नोति स एव पणं ददातीत्येव न किंचिद्भ्रान्तम्। अभा.५

(२) सोत्तरस्य विशेष उच्यते। विवादे सोत्तरपणे। विरुद्धो वादो विवादः, अन्योऽन्यथा ब्रवीति अन्यश्चान्यथा। द्वयोः सोत्तरपणयोर्यस्तत्र हीयते पराजीयते स पणं स्वकृतं दाप्यः येन दश कृतं स दश, येन विंशतिः स विंशतिमिति। किं च विनयं च पराजये। तस्मिन् व्यवहारे पराजये यः शास्त्रोक्तो दण्डः तं च। एकस्य सोत्तरपणत्वेऽप्यनेनैव गतार्थत्वान्नोक्तम्। नाभा.१।५

जयपत्रदानं, छलपराजयविषयः, त्रिविधपराजयनिर्णयक्रमः

**मध्ये यत्स्थापितं द्रव्यं चलं वा यदि वा स्थिरम्।**
**पश्चात्तत्सोदयं दाप्यं जयिने पत्रसंयुतम्॥**

**बिन** (निर्ण); **चन्द्र.**१०३ च पराजये (चैव राजनि); **प्रका**.७७; **समु.**६७ पणं (धनं); **विव्य.**२ क्रमेण कात्यायनः.

(१) **अप.**२।८४ चलं (चरं) पत्रसंयुतम् (जयपत्रकम्); **स्मृच.**१२० प्यं (प्यो); **पमा.**२००; **स्मृचि.**५९ (=) पत्रसंयुतम् (जयपत्रकम्); **नृप्र.**१७ ध्ये यत् (ध्यस्थं) त्रसंयुतम् (त्रमुत्तरम्); **विता.**८३ जयि ... तम् (जेत्रे सजयपत्रकम्); **प्रका.**७६ स्मृचवत्; **समु.**६६.

**सर्वेष्वर्थविवादेषु वाक्छले नावसीदति।**
**पशुस्त्रीभूम्यृणादाने शास्योऽप्यर्थान्न हीयते×॥**
**स्वयमभ्युपपन्नोऽपि स्वचर्यावसितोऽपि सन्।**
**क्रियावसन्नोऽप्यर्हेत परं सभ्यावधारणम्॥**

(१) अत्रावसन्नास्त्रयोभिहिताः। एकः स्वयमभ्युपपन्नः स्वमुखेन प्राप्तावसायः। द्वितीयः स्वचर्यावसन्नः कूटलिखितसाक्षिप्रपञ्चन प्रप्रञ्चकरणेन स्वकीयदुष्टचर्यया दुश्चरित्रेणावसन्नः। तृतीय उद्दिष्टसाक्षिभिरेवावसायं प्रापितः। अयं त्रिविधोऽप्यवसन्नो राज्ञा स्वेच्छया विधूत्य दण्डनीयः? किं तर्हि? परं सभ्यावधारणं सोऽप्यर्हेत। किमुक्तं भवति? यावत्सभ्यैर्दण्डावधारणं न निगदितं तावन्न धारणीयोऽसाविति। अभा.२७

(२) स्वयमभ्युपपन्नः स्वयमङ्गीकृतपराजयः। स्वचर्यावसितः स्वचेष्टया वैवर्ण्यस्वेदकम्पादिकया पराजितत्वेन ज्ञातः। क्रियावसन्नः क्रियया साक्षिदिव्यादिकया प्राप्तावसादः। *व्यक.१०१

**सभ्यैरेव जितः पश्चाद्राज्ञा शास्यः स्वशास्त्रतः।**
**जयिने चापि देयं स्याद्यथावज्जयपत्रकम्॥**

तत्र व्यवहारे यः कश्चित्प्राप्तावसायो भवति स सभ्यैः प्रकटितदण्डो निगदितदण्ड इत्यर्थः। राज्ञा शास्त्रानुसारवच्छास्यः। यश्च प्राप्तजयो भवति तस्मै जयपत्रं दातव्यमिति। अभा.२७

× व्याख्यासंग्रहः स्थलादिनिर्देशश्च वादहानिप्रकरणे (पृ.२०३) द्रष्टव्यः।

* व्यचि., व्यत., चन्द्र., सेतु. व्यकगतम्।

(१) **नास्मृ.**२।४१; **अभा.**२७; **व्यक.**१०१; **व्यचि.**९५; **व्यत.**२९९; **चन्द्र.**१६७; **व्यसौ.**९१ त (तु); **सेतु.**११५ व्यसौवत्.

(२) **नास्मृ.**२।४३; **अभा.**२७ जितः (दमः) त्रकम् (त्रवत्); **व्यक.**१०१ पू.; **व्यचि.**९५ रेव जितः (रवधृतः) पू.; **व्यत.**२२९ (सभ्यैरवधृतः पश्चात् स शास्यः शास्त्रमार्गतः) पू.; **सेतु.**११५ व्यचिवत्, पू.

व्यवहारमातृकाप्रशंसा

**व्यवहारमुखं चैतत्पूर्वमुक्तं स्वयंभुवा ।**
**मुखशुद्धा हि शुद्धिः स्याद्व्यवहारस्य नान्यथा ॥**

योऽयं व्यवहारमातृका नामाध्याय उपलक्षित एतत्सर्वं व्यवहाराणां मुखम् । सर्वव्यवहारार्थव्यापित्वात् । स्वयंभुवा ब्रह्मणाऽभिहितमनया प्रत्यग्रीकृतव्यवहारमुखशुद्धिः स्यात् । मुखशुद्धौ तु शुद्धिर्व्यवहारस्य स्वयंभुवा कीर्तितेति । अभा.२८

[2]**एवं पश्यन् सदा राजा व्यवहारान् समाहितः ।**
**वितत्येह यशो दीप्तं प्रेत्याप्नोति त्रिविष्टपम् ॥**

एवमनेन प्रोक्तक्रमेण सह नित्यमेव यथार्थाधिकरणे तात्पर्यतोऽर्थान् तथा धर्माधिकरणे अधिकतरतात्पर्यतः एकचित्तो राजा व्यवहारान् पश्येत् । इह लोके यशो दीप्तमिति । भुवनं प्रकाशं वितत्य विस्तार्य अनेन महता पुण्यसंचयेनोपार्जितं परलोकत्रिविष्टपं स्वर्गं स्थानं शाश्वतं प्राप्नोति । अभा.१९-२०

## बृहस्पतिः

सम्यङ्निर्णयपर्यवसानं जयपत्रदानं दण्डश्च

[3]**राज्ञा यत्नेन कर्तव्यं संदिग्धार्थविचारणम् ।**
**त्रयस्तत्रोपचीयन्ते हानिरेकस्य जायते ॥**
[4]**जेताप्नोति धनं पूजां जितो विनयनिग्रहम् ।**
**जयं दानं दमं राजा सभ्याः पुण्यमवाप्नुयुः ॥**
[5]**प्रतिज्ञाभावनाद्वादी प्राड्विवाकादिपूजनात् ।**
**जयपत्रस्य चादानाज्जयी लोके निगद्यते ॥**
**पूर्वोत्तरक्रियावादनिर्णयान्ते यदा नृपः ।**
**प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते * ॥**
[6]**साधयेत्साध्यमर्थं यच्चतुष्पादान्वितं च यत् ।**
**राजमुद्रान्वितं चैव जयपत्रकमिष्यते + ॥**
**यद्वृत्तं व्यवहारे तु पूर्वपक्षोत्तरादिकम् ।**
**क्रियावधारणोपेतं जयपत्रेऽखिलं भवेत् + ॥**
**अपराधानुरूपं तु दण्डं च परिकल्पयेत् × ॥**
[1]**एवं शास्त्रोदितं राजा कुर्वन्निर्णयपालनम् ।**
**वितत्येह यशो लोके महेन्द्रसदृशो भवेत् ॥**
[2]**साक्षिलेख्यानुमानेन प्रकुर्वन् कार्यनिर्णयम् ।**
**वितत्येह यशो राजा ब्रध्नस्याप्नोति विष्टपम् ॥**
[3]**सर्वापलापं यः कृत्वा मिथोऽल्पमपि संवदेत् ।**
**सर्वमेव तु दाप्यः स्यादभियुक्तो बृहस्पतिः ॥**

## कात्यायनः

[4]**अनेकार्थाभियोगेऽपि यावत्संसाधयेद्धनी ।**

---

(१) **नास्मृ**.२।४४; **अभा**.१८.

(२) **नासं**.१।६५ प्रेत्याप्नोति त्रि (ब्रध्नस्याप्नोति); **नास्मृ**.१।७४; **अभा**.१९; **अप**.२।१ सदा (स्वयं) प्रेत्या...पम् (शक्रस्यैति सलोकताम्); **स्मृच**.१२३ प्रेत्या...पम् (शक्रस्यैति सलोकताम्); **सवि**.५०२ प्तं (प्तः) प्रेत्या...पम् (इन्द्रस्यैति सलोकताम्); **व्यप्र**.९३ श्यन् (श्येत्) दीप्तं (लोके); **प्रका**.७७ स्मृचवत्; **समु**.६७ स्मृचवत्.

(३) **स्मृच**.१२३; **प्रका**.७७; **समु**.६७. (४) **स्मृच**.१२३; **समु**.६७.

(५) **शुनी**.४।७७३-७७४; **व्यक**.१०२; **व्यचि**.९७; **स्मृचि**.६०; **व्यत**.२३०; **व्यसौ**.९२; **व्यप्र**.९२ के (कैः); **सेतु**.१२५ चा (वा).

* व्याख्यासंग्रहः स्थलादिनिर्देशश्च लेख्यप्रकरणे (पृ.३६५) द्रष्टव्यः ।

\+ स्थलादिनिर्देशः लेख्यप्रकरणे (पृ.३६५,३६६) द्रष्टव्यः।

× स्थलादिनिर्देशः दर्शनविधौ (पृ.९८) द्रष्टव्यः ।

(१) **व्यक**.७ दृशो (चिवो); **स्मृच**.१२३ व्यकवत्; **पमा**.२१९; **स्मृचि**.७ न्द्रसदृशो (न्द्रः सोऽचिरात्); **नृप्र**.१७; **सवि**.५०२ शास्त्रोदितं (सभ्यैर्दिवा) वं (र्यां) शेषं व्यकवत्; **व्यप्र**.९३ व्यकवत्; **प्रका**.७७ व्यकवत्; **समु**.६७ निर्ण (विन) शेषं व्यकवत्.

(२) **स्मृच**.१२३; **पमा**.२१९; **सवि**.५०३ र्वन् (र्यात्); **विता**.९४ राजा ब्रध्न (राज्यं वृद्ध) : ८३१ कार्य (न्याय) ब्रध्न (वृत्र); **प्रका**.७७; **समु**.६७.

(३) **व्यमा**.३११ थो (थ्या) प्यः (प्यं) दभि (दिति); **स्मृच**.१२०; **प्रका**.७६ लापं (लम्भं); **समु**.६६; **विव्य**.१० थो (थ्या).

(४) **मिता**.२।२०; **व्यमा**.३१२ गे (गो) साधितं (नाधिकं); **अप**.२।२०; **व्यक**.११८ नी (नम्); **स्मृच**.१२१; **विर**.४८ ऽपि (च); **पमा**.२०३ ऽपि (तु) संसाधयेद्धनी (साधयते धनम्) तं (ता); **व्यचि**.२७ ऽपि (तु); **व्यनि**. व्यचिवत्; **नृप्र**.१७ पूर्वार्धं पमावत्; **व्यत**.२१८ व्यचिवत्; **चन्द्र**.२१ : १२७,१२८ व्यचिवत्; **व्यसौ**.३७ व्यचिवत्; **व्यप्र**.९८; **विता**.१०७; **सेतु**.१११ नम् (ने); **प्रका**.७६; **समु**.६६ साधितं (नाधिकं); **विव्य**.१० ऽपि (च) साधितं (नाधिकं).

साक्षिभिस्तावदेवासौ लभते साधितं धनम् *॥
एवं धर्मासनस्थेन समेनैवाऽविवादिना ।
कार्याणां निर्णयो दृश्यो ब्राह्मणैः सह नान्यथा×॥
[1]व्यवहारान् स्वयं दृष्ट्वा श्रुत्वा वा प्राड्विवाकतः।
जयपत्रं ततो दद्यात् परिज्ञानाय पार्थिवः ॥
सिद्धेनार्थेन संयोज्यो वादी सत्कारपूर्वकम् ।
लेख्यं स्वहस्तसंयुक्तं तस्मै दद्यात्तु पार्थिवः + ॥
[2]निरस्तं लिखितं यत्तु तच्च सभ्यो विनाशयेत् ।
पश्चात्कारक्रिया वाऽपि निरस्येत न संशयः ॥
निरस्ता तु क्रिया यत्र प्रमाणेनैव वादिना ।
पश्चात्कारो भवेत्तत्र न सर्वासु विधीयते ÷ ॥
[3]दासस्त्रीभूगृहारामलेखकानां पराजये ।
एतेष्वेव सदा देयः पश्चात्कारस्तु पार्थिवैः ॥

पश्चात्कारो निर्णयान्तरक्रिया जयपत्रादिका, प्रमाणं साक्ष्यादि । एतेष्वेवेत्युपलक्षणं, अन्यत्रापि शिष्टैस्तद्दानात् । व्यचि.९८

## व्यासः

[4]निह्नुते तु यदा वादी स्वयं तत्प्रतिपद्यते ।
ज्ञेया सा प्रतिपत्तिस्तु तस्यार्धो विनयः स्मृतः ॥

इति यो दण्डोऽभिहितः स एव मिथ्याभियोगेऽपि स्वयं तत्प्रतिपद्यमानस्य भवतीत्यवगन्तव्यम्। स्मृच.१२२

[1]तीर्णप्रतिज्ञो विजयी मिथ्यावादी विहीयते ॥
जितः स विनयं दाप्यः शास्त्रदृष्टेन कर्मणा ।
यदि वादी निराकाङ्क्षः साक्षिसत्ये व्यवस्थितः*॥
[2]जितं तु दण्डयेद्राजा जेतुः पूजां प्रवर्तयेत् ।
अजिता अपि दण्ड्याः स्युर्वेदशास्त्रविरोधिनः ॥
[3]जेतुः प्रवर्तते पूजा गन्धमाल्याम्बरादिना ॥

## संग्रहकारः

[4]उक्तप्रकाररूपेण स्वमतस्थापिताऽपि वा ।
राजा परीक्ष्य साक्ष्यैश्च स्थाप्यौ जयपराजयौ ॥
[5]यो यथोक्तान्यतमया क्रियया‌ऽर्थं प्रसाधयेत् ।
भाषाक्षरसमं साध्यं स जयी परिकीर्तितः ॥
[6]असाधयन्साधयित्वा विपरीतार्थमात्मनः ।
दृष्टकारणदोषो वा यः पुनः स पराजयी ॥

---

*अस्य व्याख्यानं 'निह्नुते लिखितम्' इति याज्ञवल्क्यवचनव्याख्यासु (पृ.५३९) द्रष्टव्यम्। ×स्थलादिनिर्देशः दर्शनविधौ (पृ.१०५) द्रष्टव्यः। + स्थलादिनिर्देशः लेख्यप्रकरणे (पृ.३६८) द्रष्टव्यः। ÷ व्याख्यासंग्रहः स्थलादिनिर्देशश्च लेख्यप्रकरणे (पृ.३६९) द्रष्टव्यः ।

(१) **व्यसौ.९३.** (२) **व्यक.१०२** तच्च सभ्यो (तत्तु सभ्यो) वाऽपि (कार्या); **व्यचि.९७.**

(३) **व्यक.१०२** एतेष्वे (तत्तथै); **व्यचि.९८; व्यसौ.९३.**

(४) **व्यक.१०१; स्मृच.१२२** ह्नुते (ह्नवे) यदा (यथा) स्तु (श्च); **पमा.२०२** र्धो (र्धं); **दीक.३२** तु यदा (च स्वयं) सा (सं) विनयः (नियमः); **व्यचि.९६** ह्नुते (ह्नवे) र्धो (र्धं); **नृप्र.१७** तत्प्र (तु प्र) र्धो (र्धं) स्मरणम्; **व्यसौ.९२** स्यार्धो विनयः (त्रार्धं नियमः); **प्रका.७७** ह्नुते (ह्नवे); **समु.६७.**

* व्याख्यासंग्रहः स्थलादिनिर्देशश्च साक्षिप्रकरणे (पृ.३४६) द्रष्टव्यः ।

(१) **व्यमा३३३.** (२) **स्मृच.१२०; पमा.१९९; स्मृचि.५९पू.; नृप्र.१६** जितं तु (विजितं) पू.; **सवि.२१९ पू.; विता.८३ पू.; राकौ.४४१** वर्तं (कल्प) पू.; **प्रका.७६; समु.६६.**

(३) **स्मृच.१२०; स्मृचि.५९; नृप्र.१८; सवि.२१९** ते (येत्) जा (जां) ना (भिः) स्मृतिः; **प्रका.७६; समु.६६.**

(४) **स्मृच.१२०** पि वा (क्रिया) साक्ष्यै (सभ्यै); **पमा.१९९; नृप्र.१६** स्मृचवत्; **सवि.२१९** तापि वा (ताः क्रियाः) साक्ष्यै (सत्यै); **प्रका.७६; समु.६६.**

(५) **स्मृच.१२०; पमा.१९९; नृप्र.१६; सवि.२१९; प्रका.७६; समु.६६.** (६) **स्मृच.१२०** द्व (द्व); **पमा.१९९** यित्वा (यन्वा) जयी (जितः); **नृप्र.१६; सवि.२१९; प्रका.२३४; समु.६६** यित्वा (यन्वा).

## मनुः

अनिवर्तनीयं कार्यम्

[1]तीरितं चानुशिष्टं च यत्र क्वचन यद्भवेत् ।
कृतं तद्धर्मतो विद्यान्न तद्भूयो निवर्तयेत् ॥

(१) यत्र क्वचन राजाधिकरणे व्यवहारपदं तीरितम् 'पार तीर कर्मसमाप्तौ' निश्चितम् । असौ यत्र प्रयुञ्जीतेति न केवलं वाचा सत्योक्तम् । यावद् अनुशिष्टं, दण्डप्रणयनं कृतम् । तद्राजा कृतमेव विद्यान्न पुनर्निवर्तयेदन्तरेण द्विगुणं दण्डम् । यथाह—'द्विगुणं दण्डमास्थाय तत्कार्यं पुनरुद्धरेत्' इति । *मेधा.

(२) यत्पुनर्मनुवचनं 'तीरितमि'त्यादि तद् अर्थिप्रत्यर्थिनोरन्यतरवचनाद् व्यवहारस्याधर्मतो वृत्तत्वाशङ्कायां पुनर्द्विगुणदण्डप्रतिज्ञापूर्वकं व्यवहारं प्रवर्तयेत्, न पुनर्धर्मतो वृत्तत्वनिश्चयेऽपि राज्ञा लोभादिना प्रवर्तनीयः इत्येवंपरम् । यत्पुनर्नृपान्तरेणापि न्यायापेतं कार्यं निवर्तितं तदपि सम्यक् परीक्षणेन धर्म्ये पथि स्थापनीयम् । 'न्यायापेतं यदन्येन राज्ञाऽज्ञानकृतं भवेत् । तदप्यन्यायविहितं पुनर्न्याये निवेशयेत्'॥ इति स्मरणात् । मिता.२।३०६

(३) 'पार तीर कर्मसमाप्तौ' इति निष्ठाप्रत्यये रूपम् । तेन निर्णीय परिसमापितमित्यर्थः । अनुशिष्टं साक्षिभिरुक्तम् । यत्र क्वचन ग्रामादिसभायाम् । +व्यक.१०२

(४) तत्स्त्रीकृतत्वादिनिवृत्तिहेत्वभावविषय एवोत्सर्गमात्रमिति मन्तव्यम् । ÷स्मृच.१२९

(५) यत्र क्वचित् ऋणादानादिव्यवहारे यत्कार्यं धर्मतस्तीरितम् । 'पार तीर कर्मसमाप्तौ' इति चुरादौ पठ्यते । शास्त्रव्यवस्थानिर्णीतम् । अनुशिष्टं दण्डपर्यन्ततां च नीतं स्यात् तत्कृतमङ्गीकुर्यान्न पुनर्निवर्तयेत् एतच्चाकारणात् । अतः कारणकृतं निवर्तयेदेव । ×ममु.

निवर्तनीयं कार्यम्

[1]अमात्याः प्राड्विवाको वा यत्कुर्युः कार्यमन्यथा ।
तत्स्वयं नृपतिः कुर्यात्तान् सहस्रं च दण्डयेत् ॥

(१) धनग्रहणसंबन्धेन पूर्वं निःस्वीकरणं, अयं तु निमित्तान्तरेणाज्ञानादिना । अमात्यो राजस्थानीयादिः । तं सहस्रं च दण्डयेत् । गर्गशतदण्डनवत्समुदायेन वाक्यपरिसमाप्तिः । मेधा.

(२) अमात्यः सेनापत्यादिः । अन्यथा कुर्युरुत्कोचादिना । कुर्याद् व्यवस्थापयेत् । सहस्रमित्यल्पविषये सहस्रपणविवादे । अधिके त्वधिकम् । मवि.

(३) राजामात्याः प्राड्विवाको वा व्यवहारेक्षणे नियुक्तो यदसम्यग्व्यवहारनिर्णयं कुर्युस्तत्स्वयं राजा कुर्यात् पणसहस्रं तान् दण्डयेत् । इदं च उत्कोचधनग्रहणेतरविषयम् । उत्कोचग्रहणे 'ये नियुक्तास्तु' इत्युक्तत्वात् । ममु.

(४) सहस्रं पणान् । दण्डव्यवहारेऽनुक्तसंख्येयायाः संख्यायाः पणगतत्वेन परिभाषितत्वात् । व्यप्र.९१

## याज्ञवल्क्यः

पुनर्न्यायस्थानानि, पुनर्न्यायविषयश्च

नृपेणाधिकृताः पूगाः श्रेणयोऽथ कुलानि च ।

---

* मवि. मेधागतम् । + व्यचि.,व्यत.,नन्द. व्यकवत् । ÷ पमा. स्मृचवत् ।

(१) मस्मृ.९।२३३; मिता.२।३०६ यद्भवेत् (विद्यते) विद्यान्न तद्भूयो (ज्ञेयं न तत्प्राज्ञो); अप.२।३०५ (=) मितावत्; व्यक.१०२; स्मृच.१२९ ती (ति); पमा.२१४; व्यचि.९८ येत् (ते); व्यत.२३१ यद्भ (संभ); सवि.५००; व्यप्र.९०; विता.८३० चा (वा) शेषं मितावत्; सेतु.१२६ द्या (द्वा); प्रका.८१ स्मृचवत्; समु.७१.

१ कार. २ सत्यैरुक्त.

× मच., भाच. ममुगतम् ।

(१) मस्मृ.९।२३४; शुनी.४।७७१-७७२; व्यक.१०३ यत् (ये) च (तु); स्मृच.१३० त्याः (त्यः) यत्कुर्युः (यः कुर्यात्) त्तान् (त्तं); पमा.२१२ त्याः (त्यः) शेषं व्यकवत्; व्यचि.१०० व्यकवत्; दवि.३५२ अमा (स्वामा) को वा (कश्च) शेषं व्यकवत्; सवि.५०१ यत्कुर्युः (यः कुर्यात्); व्यसौ.९३ व्यकवत्; व्यप्र.९१ व्यकवत्; विता.९२ व्यकवत्; प्रका.४४ स्मृचवत्; समु.७१ स्मृचवत्.

१ अर्थतस्तु. २ णाप्रज्ञा.

**पूर्वं पूर्वं गुरु ज्ञेयं व्यवहारविधौ नृणाम् * ॥**
**दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु ।**
**सभ्याः सजयिनो दण्ड्या विवादाद्द्विगुणं दमम् ॥**

(१) यश्चायं व्यवहारमार्ग उक्तः तत्र सर्वस्मिन्नेवायं राजाश्रयः साधारणो विधिः— दुर्दृष्टमिति । प्रागस्योक्तत्वात् पुनरारम्भो राज्ञः स्वयं द्रष्टृत्वेन प्रयत्नातिरेकार्थः । विश्व.२।३०८

(२) रागलोभादिना अन्यथा व्यवहारदर्शने दण्डमाह—दुर्दृष्टांस्तु इति । दुर्दृष्टान् स्मृत्याचारप्राप्तधर्मोल्लङ्घनेन रागलोभादिभिरसम्यग्विचारितत्वेनाशङ्क्यमानान् व्यवहारान् पुनः स्वयं राजा सम्यग् विचार्य निश्चितदोषाः पूर्वसभ्याः सजयिनः प्रत्येकं विवादपदे यो दमः पराजितस्य तद्द्विगुणं दाप्याः । अप्राप्तजेतृदण्डविधिपरत्वाद्वचनस्य 'रागाल्लोभादि'त्यादिना श्लोकेनापौनरुक्त्यम् । यदा पुनः साक्षिदोषेण व्यवहारस्य दुर्दृष्टत्वं ज्ञातं तदा साक्षिण एव दण्ड्या न जयी नापि सभ्याः । यदा तु राजानुमत्या व्यवहारस्य दुर्दृष्टत्वं ज्ञातं तदा सर्व एव राजसहिताः सभ्यादयो दण्डनीयाः । 'पादो गच्छति कर्तारं पादः साक्षिणमृच्छति । पादः सभासदः सर्वान्पादो राजानमृच्छति' ॥ इति वचनात् । एतच्च प्रत्येकं राजादीनां दोषप्रतिपादनपरं न पुनरेकैकस्यैव पापपूर्वस्य विभागाय । यथोक्तम्—'कर्तृसमवायिफलजननस्वभावत्वादपूर्वस्य' इति । ×मिता.

(३) 'सभ्याः पृथक् पृथग्दण्ड्याः विवादाद्द्विगुणं दमम्' इत्युक्तं तद्धनविवादविषयम् । इदं तु तद्व्यतिरिक्तविषयमिति न पौनरुक्त्यम् । +अप.

(४) एवमसंतोषमात्रेण पुनर्न्यायः प्रकृतस्य निर्णयस्य न्यायाभासत्वे सति विधातव्यः । स्मृच.१२९

(५) यत्तु लोभप्रमादादिना दुष्टसाक्षिसभ्यैर्निर्णीतं, तत्र दूषणे प्रमाणसिद्धे पुनर्विचारणीयमेव । यदाह याज्ञवल्क्यः—दुर्दृष्टांस्त्विति । व्यचि.९९

(६) आद्यतुशब्देन प्रामाणिकतयाऽवधारितैः सभ्यैर्दृष्टे पुनर्दर्शनसभ्यदण्डयोर्व्यवच्छेदः । द्वितीयतुशब्देन कपटपराजितस्य दण्डो व्यवच्छिद्यते । *वीमि.

न्याय्यनिर्णये हठात्पुनर्न्यायवादिनो दण्डः

**[1]यो मन्येताजितोऽस्मीति न्यायेनापि पराजितः ।**
**तमायान्तं पुनर्जित्वा दापयेद् द्विगुणं दमम् ॥**

(१) यथा विजितो दण्ड्यो मिथ्याभिधानात्, तथैव, यो मन्येतेति । स्पष्टार्थः श्लोकः । विश्व.२।३०९

(२) न्यायतो निर्णीतव्यवहारस्य प्रत्यावर्तयितुर्दण्डमाह—यो मन्येतेति । यः पुनर्न्यायमार्गेण पराजितोऽपि औद्धत्यान्नाहं पराजितोऽस्मीति मन्यते तमायान्तं कूटलेख्याद्युपन्यासेन पुनर्धर्माधिकारिणमधितिष्ठन्तं धर्मेण पुनः पराजयं नीत्वा द्विगुणं दण्डं दापयेत् । मिता.

(३) द्विगुणदमाङ्गीकारे सत्येव तदीयो व्यवहारः पुनर्द्रष्टव्यो नान्यथेति तात्पर्यार्थः । *अप.

(४) अत्र व्यवहारसमाप्तेरन्यथात्वासंभवात् पुनर्न्यायान्तरमपि प्राङ्न्यायपराजित एव अङ्गीकृतदण्डेन दण्ड्य इत्याह याज्ञवल्क्यः—यो मन्येतेति । एवं सदण्डः पुनर्न्यायः । सनृपोत्तरसभायामेव नृपस्यैव दण्डनेऽधिकारान्नृपरहितायां तूत्तरसभायां दण्डरहितः पुनर्न्यायः कार्यः । दण्डांशस्य नृपैककार्यत्वात् । उत्तरसभया च पूर्वसभातो ज्यायस्या भवितव्यम् । सभ्यानां ज्यायस्त्वतारतम्यं निर्णेतृनिर्णयप्रकरणे दर्शितम् । नृपसभादृष्टस्य कुदृष्टत्वशङ्कायां तु प्रकृष्टनृपान्तरसभायां पुनर्न्यायः । तथा च

---

* व्याख्यासंग्रहः स्थलादिनिर्देशश्च सभाप्रकरणे(पृ.४०)द्रष्टव्यः ।

× पमा. मितागतम् । + शेषं मितागतम् ।

(१) **यास्मृ**.२।३०५; **विश्व**.२।३०८ ष्टांस्तु (ष्टं तु) रान् (रं) दाद्द्वि (दद्वि) दमम् (पृथक्); **मिता**.; **अप**.२।३०४ (सम्यग्दृष्ट्वा तु दुर्दृष्टान्व्यवहारान्नृपेण तु) दमम् (पृथक्); **व्यक**.१०३; **स्मृच**.१२९; **पमा**.२१३; **व्यचि**.९९ वादाद् (धाय); **दवि**.३५१; **व्यत**.२३१; **सवि**.५३ दाद्द्वि (दद्वि): ४९९ दृष्ट्वा (दृष्टैः) दाद्द्वि (दद्वि); **व्यसौ**.९३ स्तु (श्च); **वीमि**. दमम् (पृथक्); **व्यप्र**.९०; **व्यउ**.१६५; **व्यम**.११०; **विता**.२७ सजयिनो (संजपिनो) दमम् (पृथक्) उत्त.; **राकौ**.४९५; **सेतु**.१२७ दाद् (दे); **प्रका**.८१; **समु**.७१.

* शेषं मितागतम् ।

(१) **यास्मृ**.२।३०६; **अपु**.२२७।६५:२५९।८१; **विश्व**.२।३०९ यान्तं (गतं); **मेधा**.८।२ पू.; **मिता**.; **अप**.२।३०५; **स्मृच**.१२९; **पमा**.२१३ वसिष्ठः; **व्यचि**.१०० तमायान्तं (सभायां तु); **दवि**.३५२ दाप ...णं (द्विगुणं दापयेत्) तमायान्तं (सभायां तं); **सवि**.५००; **व्यसौ**.९३ दाप ...दमम् (द्विगुणं दापयेद्धनम्); **वीमि**.तमायान्तं (तं सभायां); **व्यप्र**.९० तमायान्तं (सभायां तं); **व्यउ**.१६५; **व्यम**.११० येनापि (यतोऽपि) यान्तं (यातं); **विता**.८३०; **राकौ**.४९५; **प्रका**.८२; **समु**.७१.

स्मृत्यन्तरम्—'न्यायापेतं यदन्येन राज्ञाऽज्ञानकृतं भवेत् । तदप्यन्यायविहितं पुनर्न्याये निवेशयेत्' ॥ यत् पुनः पितामहोक्तम्—'ग्रामे दृष्टे पुरं यायात् पुरे दृष्टस्तु राजनि । राज्ञा दृष्टः कुदृष्टो वा नास्ति तस्य पुनर्भवः' ॥ इति तत्पूर्वसभातः प्रकृष्टसभान्तरालाभविषयम् । स्मृच.१२९

(५) तत्त्वतः पराजितोऽपि तात्त्विकसाक्ष्यादिदोषमाशङ्क्य विचारस्यासम्यक्त्वं मन्वानस्तद्दोषं निरूपाख्यत्वेनावधार्य विवादपदाद्धनात् द्विगुणं दण्डो दाप्यः । व्यचि.१००

(६) पूर्वविचारकस्य प्रामाणिकत्वसंशयेनाऽजितोऽस्मीति यो न्यायेन पराजितोऽपि सन् मन्येत, तं परो वादी पुनर्जित्वा विवादपदाद् द्विगुणं दमं दापयेदित्यर्थः । वीमि.

## नारदः

न्याय्यनिर्णयेऽपि पुनर्न्यायवादिनः पणः

**[1]तीरितं चानुशिष्टं च यो मन्येत विधर्मतः ।**
**द्विगुणं दण्डमास्थाय तत्कार्यं पुनरुद्धरेत् ॥**

(१) अत्र तीरितानुशिष्टशब्दौ द्वावप्येतौ स्मृतितन्त्रसामयिकौ । उपदेशात्प्रक्रमाच्च तयोः सार्थकत्वमिदम् । यत् तीरितमित्युक्तं, तद्व्यवहारस्य चतुर्थपादनिर्णयावसरे वादिप्रतिवादिनोः सभ्यैरेकवाक्यतयोच्चरितजयपराजयशब्दमात्रप्रकटीकृतनिर्णयं, एतत्तीरितमित्युक्तम् । अनुशिष्टं पुनरुच्यते, यत्सभ्यैरेव तदनन्तरमपराधसारासारपर्यालोचनया निष्टङ्कितं निगदितदण्डं तदनुशिष्टम् । तथा हि, 'उद्दिष्टजयशब्दं यत्तत्तीरितमिहोच्यते । उद्दिष्टाद्दत्तदण्डं च अनुशिष्टं कुदृष्टके' ॥ एतन्निर्णयस्य स्वरूपमास्थानद्वयं, अस्मिन्निगदस्थानद्वयं, अस्मिन्निगदस्थानद्वये एकतमप्रदेशेऽपि स्थित्वा य एवात्मानं विधर्मेणा कुन्यायेन पराजितं मन्येत, स एव तत्र स्थित एव । राजकुले द्विगुणं दण्डं स्वमास्थाय उत्तरकरणं चोद्दिश्य तत्पुरतः तत्कार्यं पुनरुद्धरेदिति । *अभा.१७-१८

(२) तीरितं साक्षिलेख्यादिनिर्णीतमनुद्धृतदण्डम् । अनुशिष्टमुद्धृतदण्डं दण्डपर्यन्तं नीतमिति यावत् । मिता.२।३०६

(३) यत्तस्य पराजयहेतुलिखितं तीरितम् । यच्च तस्य दण्डनं तदनुशिष्टम् । अप.२।३०६

(४) विधर्मतः धर्मशास्त्रविरोधतो जातमिति यो विवादी सम्यङ्निर्णीतमप्यौद्धत्यान्मन्यत इत्यर्थः । स्मृच.१२९

(५) तीरितं निर्णीतम् । अनुशिष्टं परेषु प्रतिपादितम् । +स्मृसा.८४

(६) तीरितं समापितम् । निर्णयपर्यन्तं प्रापितमिति यावत् । 'पार तीर कर्मसमाप्तौ' इत्यस्य निष्ठान्तं रूपम् । अनुशिष्टं अर्थिप्रत्यर्थिनौ प्रति कथितं जयपत्रे चारोपितम् । विधर्मतो धर्मविपरीतम् । कुदृष्टमिति यावत् । योऽर्थिप्रत्यर्थिनोरन्यतरो मन्येत स पराजयनिमित्तं दण्डं द्विगुणमादायाङ्गीकृत्य तत्कार्यं पुनरुद्धरेत् चतुष्पाद्व्यवहारप्रवर्तनेन निर्णाययेत् । व्यप्र.९०

कुनिर्णयिनां दण्डः

**[1]दुर्दृष्टे व्यवहारे तु सभ्यास्तं दण्डमाप्नुयुः ।**
**न हि जातु विना दण्डं कश्चिन्मार्गेऽवतिष्ठते ॥**

(१) दुर्दृष्टे व्यवहारे अन्तःकरणेन पुनर्विचारिते कृते वादिप्रतिवादिनोर्यस्यैवावसायो भवति स एव द्विगुणं दण्डं प्राप्नुयादिति । तद्दण्डहेतुश्चात्रैवायमुक्तः—न हि जातु इत्यादि । ×अभा.१८

(२) तत्र कुकृतत्वे सिद्धे प्राङ्न्यायद्रष्टृणां दण्डमाह नारदः— दुर्दृष्ट इति । अयं च सभ्यानामेव दण्डो जेतुर्दुर्दर्शनाप्रयोजकत्वे वेदितव्यः । प्रयोजकत्वे तत्र तस्यापि दण्डः । स्मृच.१२९

---

(१) **नासं**.१।५६ तः (णा); **नास्मृ**.१।६५; **शुनी**.४।७६९-७७० (द्विगुणं दण्डमादाय पुनस्तत्कार्यमुद्धरेत्); **अभा**.१७ नासंवत्; **मेधा**.८।२(=)उत्त.:९।२३३ उत्त.; **मिता**.२।३०६ च (वा); **अप**.२।८० स्मृत्यन्तरम्:२।३०५; **व्यक**.१०२; **स्मृच**.१२९ ती (ति); **स्मृसा**.८४:१२२ चानु (चार्थ); **पमा**.२१३ नासंवत्; **दीक**.५६ मन्येत वि (न मन्येत); **व्यचि**.१०,९८; **दवि**.३५३ तत्कार्यं पुनरु (तयैतत्कार्यमु); **व्यत**.२३१ स्था (दा); **चन्द्र**.१०३ तत्का...रेत (पुनर्वादे नियोजयेत्); **व्यसौ**.९३ विधर्मतः (न कर्मवित्) स्था (दा) तत्कार्यं पुनरु (पुनस्तत्कार्यमु); **विता**.९१ चा (वा); सेतु.१२६ स्था (दा); **प्रका**.८१ ती (ति); **समु**.७१.

* व्यचि. अभागतम् । + चन्द्र. स्मृसागतम् । × नाभा. अभावत् ।

(१) **नासं**.१।५७ स्तं (स्तत्) ण्डं (ण्डात्); **नास्मृ**.१।६६; **शुनी**.४।७७२ उत्त.; **अभा**.१८; **व्यक**.१०३; **स्मृच**.१२९ स्तं (स्ते) ण्डं (ण्डात्); **व्यचि**.१००; **व्यसौ**.९३; **व्यप्र**.९१; **प्रका**.८१ स्मृचवत्; **समु**.७१ स्मृचवत्.

पुनर्न्यायार्हो व्यवहारः

**[1]असाक्षिकं तु यद् दृष्टं विमार्गेण च तीरितम् ।**
**असंमतमतैर्दृष्टं पुनर्दर्शनमर्हति ॥**

(१) यदा पूर्वविजयस्य यथार्थत्वे प्रमाणं नास्ति तदा व्यवहारान्तरमपि करोत्येव । यदाह नारदः— असाक्षिकमिति । स्मृसा.८४

(२) पूर्वजये चेत्प्रमाणं न स्यात्, तदा विनापि द्विगुणं दण्डं पुनर्विचारः । चन्द्र.१०३

**[2]साक्षिसभ्यावसन्नानां दूषणे दर्शनं पुनः ।**
**स्वचर्यावसितानां तु नास्ति पौनर्भवो विधिः ॥**

(१) ये साक्षिभिर्वा स्वसाक्ष्येणावसायं प्राप्ताः । ये च सभ्यैर्वावसायं प्रापिताः । विधर्मिणो मन्यन्ते । तेषां तीरितानुशिष्टन्यायेन राजोत्तरकरणस्याधिष्ठितो भूत्वा पुनर्व्यवहारदर्शनं कुर्यादिति । ये पुनः स्वचर्यावसिता भवन्ति, कूटसाक्षिप्रपञ्चकरणेन वा कूटीभूताः स्वयमेव स्वकीयसंबन्धाः प्रपश्यन्ते (न्ति) । तेषां नास्ति पौनर्भवो विधिः । पुनर्व्यवहारदर्शनं च नास्तीति । अभा.२७

(२) स्वचर्यावसितस्य स्ववचनैः पराजितस्य पौनर्भवो विधिः पुनर्न्यायकरणं नास्तीत्यर्थः । उपन्यस्तस्य तु बलवत्प्रमाणस्यासंनिधानेन दुर्बलप्रमाणग्रहणात् । पराजितसाक्षिदोषसंबद्धत्वात् अस्ति प्रमाणावसरः । व्यमा.३३६

(३) साक्षिसभ्यावसन्नानां साक्षिसभ्यद्वारेण प्राप्तावसादानां, दूषणे साक्षिषु सभ्येषु चेत्यर्थः । दर्शनं पुनः पुनर्व्यवहारदर्शनं कर्तव्यम् । स्वचर्यावसितः स्वव्यापारेण परस्परविरुद्धभाषणादिना पराजितः । *व्यक.१०२

(४) साक्षिवाक्यात्सभ्यैरेव कृताद्वा निर्णयात्पराजितानां व्यवहारस्य पुनर्दर्शनं पूर्वदर्शनस्य दूषणे सतीत्यर्थः । सभ्यग्रहणममात्यादेरुपलक्षणार्थम् । स्मृच.१३०

**न्यायापेतं यदन्येन राज्ञाऽज्ञानकृतं भवेत् ।**
**तदप्यन्यायविहितं पुनर्न्याये निवेशयेत् + ॥**

* स्मृसा., व्यचि., व्यत., व्यप्र. व्यकगतम् । + व्याख्यासंग्रहः स्थलादिनिर्देशश्च कात्यायने दर्शनविधौ(पृ.१०४)द्रष्टव्यः।

(१) **स्मृसा**.८४; **व्यचि**.१०,९९; **व्यत**.२३१; **चन्द्र**.१०३ तु (च) विमा (विस); **सेतु**.१२६-१२७ दृष्टं (दुष्टं).

(२) **नास्मृ**.२।४०; **शुनी**.४।७७०-७७१; **अभा**.२७; **व्यमा**.३१० स्वचर्या (स चार्ता) नास्ति (नोक्तः): ३३६ तु नास्ति (च नोक्तः); **व्यक**.१०२-१०३ स्वच (सुच) नास्ति (नोक्तः); **स्मृच**.१३० (स्ववाचैव जितानान्तु नोक्तः पौनर्भवो विधिः); **स्मृसा**.१२२-१२३ स्वच (सुच) तु नास्ति (च नोक्तः); **पमा**.२१५ स्मृचवत्; **दीक**.५६ नास्ति (नोक्तः); **व्यचि**.६२ पू.:९८ तु (च); **व्यत**.२३१ स्वच (सुच) याज्ञवल्क्यः; **सवि**.५४, ५०१ भ्याव (भ्यार्थ) बृहस्पतिः; **व्यसौ**.९३ तु नास्ति (च नोक्तः); **व्यप्र**.९० दीकवत्; **विता**.९० सन्ना (साना) (स्ववाक्येन जितानां तु नोक्तः पौनर्भवो विधिः); **सेतु**.१२७; **प्रका**.८२ स्मृचवत्; **समु**.७१ स्मृचवत्.

**राज्ञा प्रत्यक्षदृष्टानि सुहृत्संबन्धिबान्धवैः ।**
**प्राप्तद्विगुणदण्डानि कार्याणि पुनरुद्धरेत् ॥**

अयं श्लोकः अत्राप्रस्तुतोऽपि मूलग्रन्थं दृष्ट्वा लिखितः। यानि कार्याणि राज्ञा स्वयं प्रत्यक्षदृष्टानि कृतानि, यानि च सुहृत्संबन्धिबान्धवैर्दृष्टानि, परं यानि द्विगुणदण्डप्राप्तानि, द्विगुणपणेन द्वितीयवारं दृष्टानि, तानि पुनरुद्धरेत् । न पुनः पुनरपि तान्येवापदिशेदिति । अभा.१४

## बृहस्पतिः

**[2]पलायनानुत्तरत्वादन्यपक्षाश्रयेण च ।**
**हीनस्य गृह्यते वादो न स्ववाक्यजितस्य तु ॥**
**[3]कुलादिभिर्निश्चितेऽपि न संतोषं गतस्तु यः ।**
**विचार्य तत्कृतं राजा कुकृतं पुनरुद्धरेत् ॥**
**[4]निश्चित्य बहुभिः सार्धं ब्राह्मणैः शास्त्रपारगैः ।**
**दण्डयेज्जयिना साकं पूर्वसभ्यांस्तु दोषिणः ॥**

## कात्यायनः

**[5]कुलादिभिर्निश्चितेऽपि न संतोषं गतस्तु यः ।**
**विचार्य तत्कृतं राजा कुकृतं पुनरुद्धरेत् ॥**

## स्मृत्यन्तरम्

**[6]यस्मिन् विवादे विजयः कूटसाक्षिकृतो भवेत् ।**
**तत्तत्कार्यं निवर्तेत कृतं चाप्यकृतं भवेत् ॥**

(१) **नास्मृ**.१।५० शा (ज); **अभा**.१४. (२) **व्यमा**.३१०; **व्यक**.१०२; **दीक**.५६ तु (च); **व्यचि**.९९; **व्यत**.२३१ दीकवत्; **व्यप्र**.९१ च (वा); **विता**.७८ त्वाद (योर) नस्य (नश्च); **प्रका**.३१ उत्त.; **विव्य**.९ येण च (यात्तथा).

(३) **व्यक**.१०२-१०३ बृहस्पतिकात्यायनौ; **स्मृच**.१२९; **व्यसौ**.९३ बृहस्पतिकात्यायनौ; **व्यप्र**.९१ न संतोषं (संतोषं न) बृहस्पतिकात्यायनौ; **प्रका**.८१; **समु**.७१.

(४) **व्यक**१०३; **स्मृचि**.१२९; **पमा**.२१३; **व्यचि**.९९ क्रमेण नारदः; **व्यसौ**.९३; **व्यप्र**.९१ कं (र्धं); **प्रका**.८१; **समु**.७१. (५) **व्यक**.१०२-१०३ बृहस्पतिकात्यायनौ; **व्यसौ**.९३ बृहस्पतिकात्यायनौ; **व्यप्र**.९१ बृहस्पतिकात्यायनौ.

(६) **समु**.७०-७१.

### आपस्तम्बः

व्यवहारे स्वतन्त्राः

[1]**कुटुम्बिनौ धनस्येशाते ।**

कुटुम्बिनौ दम्पती। तौ धनस्य परिग्रहे विनियोगे च ईशाते। यद्यप्येवं, तथापि भर्तुरनुज्ञया विना स्त्री न विनियोक्तुं प्रभवति । भर्ता तु प्रभवति । तदेतेन वेदितव्यं, 'न हि भर्तुर्विप्रवासे नैमित्तिके दाने स्तेयमुपदिशन्ती'ति । उ.

[2]**तयोरनुमतेऽन्येऽपि तद्धितेषु वर्तेरन् ।**

तयोर्दम्पत्योरनुमतेऽनुमतौ सत्यामन्येऽपि पुत्रादयः तयोरैहिकेष्वामुष्मिकेषु च हितेषु वर्तेरन् द्रव्यविनियोगेनाऽपि । उ.

### शङ्खलिखितौ

व्यवहारेऽस्वतन्त्राः

[3]**अस्वतन्त्राः पितृमन्तः ।**

पितृग्रहणं मातुरपि प्रदर्शनार्थम्। स्मृच.१०३

### कौटिलीयमर्थशास्त्रम् ।

सिद्धाः कीदृशा व्यवहाराः, असिद्धाश्च कीदृशाः

[4]**तिरोहितान्तरगारनक्तारण्योपध्युपह्वरकृतांश्च व्यवहारान् प्रतिषेधयेयुः । कर्तुः कारयितुश्च पूर्वः साहसदण्डः । श्रोतॄणामेकैकं प्रत्यर्धदण्डाः। श्रद्धेयानां तु द्रव्यव्यपनयः ।**

अग्राह्यव्यवहारानाह—तिरोहितेत्यादि । तिरोहितादीन् षड् व्यवहारान् आरप्स्यमानान् आरब्धांश्च, प्रतिषेधयेयुः । तत्र तिरोहितः प्रच्छन्नदत्तविषयः प्रच्छन्नात्तविषयश्च । स च स्वामिदेशकालक्रियाद्रव्यादिभेदेन बहुविधः । तत्र स्वामितिरोहितः स्वाम्यनुज्ञां विनैवान्येन तद्धनं यद् विनियुज्यते, देशतिरोहितः परोक्षसाक्षिकः, कालतिरोहितः शतवर्षोपेक्षितऋणादिविषयः, क्रियातिरोहितः देशान्तरस्थे प्रमाणलेख्ये ऋणार्थनाविषयः, द्रव्यतिरोहितः द्विपाच्चतुष्पात्स्थावरेषु दृष्ट्यगोचरेषु तद्विक्रयः । अन्तरगारकृतः गर्भागारकृतः, नक्तकृतः रात्रिकृतः, अरण्यकृतः, उपधिकृतः छद्मकृतः, उपह्वरकृतः रहस्यकृतो दातृप्रतिग्रहीतृमात्रविदितः । कर्तुः प्रतिषिद्धव्यवहारप्रयोक्तुः, कारयितुस्तत्प्रयोजकस्य च, पूर्वः साहसदण्डः । श्रोतॄणां धर्मस्थानं, एककं प्रति प्रत्येकं, अर्धदण्डाः पूर्वसाहसस्यार्धानि । श्रद्धेयानां तु निष्कपटानां तु प्रतिषिद्धव्यवहारस्पर्शिनां, द्रव्यव्यपनयः साध्यद्रव्यहानिः, न तु दण्ड इत्यर्थः । श्रीमू.

**परोक्षेणाधिकर्णग्रहणमवक्तव्यकरा वा तिरोहिताः सिध्येयुः ।**

प्रतिषिद्धापवादमाह—परोक्षेणेति । परोक्षेण आधिकर्णग्रहणं अप्रत्यक्षं गृहारामादिकमाधिं कृत्वा ऋणग्रहणं, सिध्येत् तिरोहितमपि । अवक्तव्यकरा वा अमुकधनममुकेन व्यवह्रियमाणं न दुष्यतीति लोकसंप्रतिपन्ना व्यवहारा वा, तिरोहिताः स्वामितिरोहिता अपि, सिध्येयुः । श्रीमू.

**दायनिक्षेपोपनिधिविवाहसंयुक्ताः स्त्रीणामनिष्कासिनीनां व्याधितानां चामूढसंज्ञानामन्तरगारकृताः सिध्येयुः ।**

अन्तरगारकृतानुपादेयानाह—दायेत्यादि । दायो दायविभागस्तत्संबद्धः, निक्षेपः आभरणाद्यर्थे स्वर्णाद्यर्पणं अथवा अन्तःस्थद्रव्यरूपसंख्याप्रदर्शनपूर्वं वासनस्यार्पणं तत्संबद्धः, उपनिधिः अनाख्यातवस्तुगर्भसमुद्रवासनोपनिधानसंबद्धः, विवाहसंयुक्तः स्त्रीधनविषयः इत्येतेऽन्तरगारकृताः, स्त्रीणां, अनिष्कासिनीनां गृहबहिरनिर्गत्वरीणां, व्याधितानां चामूढसंज्ञानां रोगिणां चानष्टचेतनानां, अन्तरगारकृताः सिध्येयुः । श्रीमू.

**साहसानुप्रवेशकलहविवाहराजनियोगयुक्ताः पूर्वरात्रव्यवहारिणां च रात्रिकृताः सिध्येयुः ।**

रात्रिकृतव्यवहारेष्वदुष्टानाह—साहसेत्यादि । साहस-

(१) आध. २।२९।३; हिध.२।२०.

(२) आध.२।२९।४; हिध.२।२० (अन्येऽपि०).

(३) स्मृच.१३०; स्मृसा.१२५; व्यचि.१०४; समु. ७१ शंखः; विच.२७. (४) कौ.३।१ अयमेव स्थलनिर्देशः सर्वत्र बोध्यः ।

युक्तः परधनप्रसभलुण्टनसंबद्धः अनुप्रवेशयुक्तः परधनस्वगृहानुप्रवेशनविषयः कलहयुक्तः वाक्पारुष्यादिसंबद्धः विवाहयुक्तः प्रसिद्धः राजनियोगयुक्तः राजनियोगो राजाज्ञाप्रयुक्तो नगररक्षाधिकृतव्यापारः तद्युक्तस्तत्संबद्धः इति पञ्चैते व्यवहाराः, पूर्वरात्रव्यवहारिणां च वेश्याशौण्डिकादीनां च व्यवहाराः, रात्रिकृताः सिध्येयुः। श्रीमू.

**सार्थव्रजाश्रमव्याधचारणमध्येष्वरण्यचराणामरण्यकृताः सिध्येयुः ।**

अरण्यकृतव्यवहारेष्वदुष्टानाह—सार्थेत्यादि । सार्थो वणिक्सङ्घः व्रजा गोष्ठवृत्तयो गोपालाः आश्रमो वनकुटुम्बिनः व्याधाः किराताः चारणाः लङ्घनप्लवनादिजीविनः इत्येषां मध्येषु, अरण्यचराणां वनचराणां, व्यवहाराः, अरण्यकृताः सिध्येयुः । श्रीमू.

**गूढाजीविषु चोपधिकृताः सिध्येयुः ।**

उपधिकृतव्यवहारानुपादेयानाह — गूढाजीविषु चेति । कूटहिरण्यादिव्यवहारिषु च, उपधिकृताः छलकृता व्यवहाराः सिध्येयुः । श्रीमू.

**मिथःसमवाये चोपह्वरकृताः सिध्येयुः ।**

उपह्वरकृतव्यवहारान् उपादेयानाह—मिथःसमवाये चेति । रहःसंप्रयोगे स्त्रीपुंसयोर्गान्धर्वविवाहनिमित्ते, उपह्वरकृताः सिध्येयुः । श्रीमू.

**अतोऽन्यथा न सिध्येयुः । अपाश्रयवद्भिश्च कृताः, पितृमता पुत्रेण, पित्रा पुत्रवता, निष्कुलेन भ्रात्रा, कनिष्ठेनाविभक्तांशेन, पतिमत्या पुत्रवत्या च स्त्रिया, दासाहितकाभ्याम्, अप्राप्तातीतव्यवहाराभ्याम्, अभिशस्तप्रव्रजितव्यङ्गव्यसनिभिश्चान्यत्र निसृष्टव्यवहारेभ्यः ।**

अतोऽन्यथा न सिध्येयुरिति । उक्तातिरिक्तप्रकारास्तिरोहितादयो नोपादेयाः । अपाश्रयवद्भिश्चेति । अपाश्रयवन्तः परतन्त्राः तैश्च, कृताः व्यवहाराः, न सिध्येयुः। परतन्त्रान् प्रपञ्चयति–पितृमता पुत्रेण पितरि व्यवहारनिपुणे विद्यमाने पुत्रेण कृताः, पित्रा पुत्रवता पुत्रे कुटुम्बभरणक्षमे विद्यमाने पित्रा निवृत्तव्यवहारेण कृताः निष्कुलेन भ्रात्रा कुलनिष्पतितेन भ्रात्रा कृताः, कनिष्ठेनाविभक्तांशेन कनिष्ठेन दायभागात् प्राक् कृताः, पतिमत्या पुत्रवत्या च स्त्रिया भर्तरि पुत्रे च कुटुम्बभरणक्षमे विद्यमाने स्त्रिया कृताः, दासाहितकाभ्यां दासेन स्वाम्यधीनेन आहितकेन आधीकृतेन चाधिग्राहकाधीनेन कृताः, अप्राप्तातीतव्यवहाराभ्यां अप्राप्तव्यवहारेण ऊनषोडशवयस्केन अतीतव्यवहारेण अतिक्रान्तसप्ततिवयस्केन च कृताः, अभिशस्तादिभिश्चतुर्भिश्च अभिशस्तैर्महापातकदूषितैः प्रव्रजितैः संन्यासिभिः व्यङ्गैः मूकबधिरादिभिः व्यसनिभिः स्त्रीद्यूतपानासक्तैश्च कृताः। तत्रापवादमाह– अन्यत्र निसृष्टव्यवहारेभ्य इति । निसृष्टव्यवहारव्यतिरेकेण, ते चेत् पितृमत्पुत्रपुत्रवत्पित्रादयः प्रधानैरर्पितव्यवहाराधिकारास्तदा तत्कृता व्यवहाराः सिध्येयुरेवेत्यर्थः । श्रीमू.

**तत्रापि क्रुद्धेनार्तेन मत्तेनोन्मत्तनावगृहीतेन वा कृता व्यवहारा न सिध्येयुः । कर्तृकारयितृश्रोतॄणां पृथक् यथोक्ता दण्डाः ।**

निसृष्टव्यवहारेष्वपि तेषु विशेषमाह–तत्रापीति । निसृष्टव्यवहारेष्वपि मध्ये, क्रुद्धेन जिघांसुना, आर्तेन दुःखिना, मत्तेन हर्षवता, उन्मत्तेन विभ्रान्तचित्तेन, अवगृहीतेन वा दण्डितेन वा, कृताः व्यवहाराः न सिध्येयुः । कर्तृकारयितृश्रोतॄणां पृथक् यथोक्ता दण्डा इति । ये प्रतिषिद्धान् व्यवहारान् कुर्वन्ति कारयन्ति शृण्वन्तश्च साक्षीभवन्ति, तेषां प्रत्येकं यथाविहिताः दण्डा भवन्ति । श्रीमू.

**स्वे स्वे तु वर्गे देशे काले च स्वकरणकृताः संपूर्णचाराः शुद्धदेशा दृष्टरूपलक्षणप्रमाणगुणाः सर्वव्यवहाराः सिध्येयुः ।**

सर्वापवादमाह–स्वे स्वे इति । स्वे स्वे वर्गे स्वकरणकृताः स्वस्वजातौ स्वक्रियाक्रमकृताः, स्वे स्वे देशे अरण्यादौ अरण्यादिचरैः स्वकरणकृताः, स्वे स्वे काले च रात्रौ रात्रिव्यवहारिभिः दिवा दिवाव्यवहारिभिश्च स्वकरणकृताश्च, सर्वव्यवहाराः सिध्येयुः । संपूर्णचाराः राजमार्गो दिवा अर्थिप्रत्यर्थिसान्निध्यमित्येवमाद्यपेक्षितदेशकालादिसमुदाचारश्चारः, क्वचिदाचार इत्येव पाठः। स संपूर्णः अविकलनिर्वृत्तः येषु ते तथाभूताः, व्यवहाराः, शुद्धदेशाः दिशन्ति उपदिशन्ति स्वोपलब्धमर्थं प्राड्विवाकाय ज्ञापयन्तीति देशाः साक्षिणः ते शुद्धाः परोक्षत्वादिदोषरहिताः येषु ते तथाभूताः दृष्टरूपलक्षणप्रमाणगुणाः

दृष्टं साक्षात्कृतं रूपमाकृतिः लक्षणं व्यावृत्तिचिह्नं प्रमाणं माषगुञ्जादि आढकद्रोणादि वितस्तिहस्तादि च गुणः शुक्लनीलभ्राजिष्णुत्वादिश्च येषु ते तथाविधाः, सर्वे-व्यवहाराः, सिध्येयुः । श्रीमू.

**पश्चिमं चैषां करणमादेशाधिवर्जं श्रद्धेयम् ।**

त एते व्यवहारा उपादेया लेख्यप्रमाणकाः प्रवर्तन्ते। तच्च लेख्यं पूर्वकालकृतमेकमुत्तरकालकृतं चापरमित्येवं द्वयोरेकार्थगोचरयोर्लेख्यकरणयोः पूर्वोत्तरकालजन्मनोर्यदि कदाचिदुपलब्धिस्तदा किं प्रतिपत्तव्यमित्याह—पश्चिमं चैषां करणमिति। एतत्संबन्धि उत्तरकालकृतं लेख्यकरणं, श्रद्धेयं विश्वसनीयं पूर्वकरणपरीक्षापुरःसरप्रवृत्तिकत्वादुत्तरकरणस्येत्यभिप्रायः आदेशाधिवर्जमित्यपवादः। आदेशं बन्धं च वर्जयित्वा, आदेशः आदानं अर्थस्य स्वत्वेन स्वीकरणं क्रयः प्रतिग्रहो वेति यावत् आधिस्तु बन्धो भोग्यरूपः। आदेशाध्योस्तु विषये पूर्वकरणमेव श्रद्धेयं, यतोऽर्थस्य परसंस्थत्वेन तद्धत्त्युपोद्बलितस्य पूर्वलेख्यस्य प्राधान्यं न हीयते। तथा च याज्ञवल्क्यः—'सर्वेष्वेव विवादेषु बलवत्युत्तरा क्रिया। आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा' ॥ इति।

## मनुः

निवर्तनीयो व्यवहारः

**मत्तोन्मत्तार्ताध्यधीनैर्बालेन स्थविरेण वा ।**
**असंबद्धकृतश्चैव व्यवहारो न सिध्यति ॥**

(१) कार्यपर्यायो व्यवहारशब्दः। यत्किञ्चिद्दानाधानविक्रयादिकार्यं लेख्यादि च प्रमाणमेतैः कृतं तन्न सिध्यति कृतमप्यकृतं भवति। मत्तोन्मत्तौ विख्यातौ। आर्तो धनबन्धुनाशादिपीडितः प्रत्युपस्थितभयश्च । यौगिकत्वान्मत्तादिशब्दानां यावन्मदादियुक्तास्तावत्तत्प्रमाणमावस्थिकोऽयं प्रतिषेधः। प्रदर्शनार्थं चैतदप्रकृतिस्थत्वमात्रस्य। यथोक्तम्—'कुर्यादप्रकृतिं गतः[६]। तदप्यकृतमेवाहुरस्वतन्त्रः स हेतुतः'। इति अप्रकृतिस्थश्चोच्यते उपप्लुतबुद्धिः स्वकार्यविवेचने असमर्थः । उक्तं च—'कामक्रोधाभियुक्तार्त[१]भयव्यसनपीडिताः । रागद्वेष[२]परीताश्च ज्ञेयास्त्वप्रकृतिं गताः' ॥ इति कामादीनां द्वन्द्वं कृत्वा पीडितशब्देन तैः पीडिता इति साधनं कृतेति तृतीयासमासः। तेन पीडितस्य प्रतिषेधः। स चायं संप्रति मन्मथाधिष्ठः स्त्रीपरिरम्भणादि परीप्समानो भवति। अभियुक्ता द्यूतादिक्रियान्तरे दत्तावधानाः। एते हि तत्र संसजन्तः स्वामिनोऽपि स्व इत्यस्य प्रातिभाव्यादिक्रियानिश्चयस्यानवधानान्न प्रमाणम् । यतः क्रियान्तरावहिततया परेण पृच्छ्यमाना इदमस्मै दीयतामङ्गीकृतं वा प्रातिभाव्यमियति वस्तुनीदृशोऽनेन च प्रकारेणोच्यत इत्येवमादि निपुणतो नावधारयन्ति। प्रकृतक्रियाविघ्नो वा मा भूदस्मिन्निहस्थ (?) इत्यभिप्रायमभ्युपगच्छन्ति। गच्छ त्वं यद्ब्रवीषि तत्सर्वमनुष्ठीयत इति पारतन्त्र्यं वाऽङ्गीकुर्वन्ति। तदुक्तम्—'अस्वतन्त्रः स हेतुत' इति। येन हेतुनाऽस्वतन्त्रोऽप्रमाणं सोऽस्य स्वतन्त्रस्यापि हेतुर्विद्यते। यथाऽस्वतन्त्रः स्वमपि न विनियुङ्क्ते एवमयमपि कामादिवशीकृतः अर्थविवेकं कार्याणां च गुणदोषौ क्रियमाणावनधिगच्छन्नस्वतन्त्रेण तुल्यो भवति।

आर्तो व्याख्यातः। अभियुक्तार्त[३]शब्दौ च धर्मिवचनौ लक्षणया धर्मपरौ विज्ञेयौ। अभियोगोऽभियुक्त आतुरता[४] आर्ति[५] इति। व्यसनानि कामक्रोधसमुत्थितानि मृगयादीनि। अभियुक्तो व्यसन्यपि काञ्चित्क्रियां तात्पर्येण कुर्वन्नुच्यते। अव्यसन्यप्रवृत्तोऽपि तद्व्याख्यानरतः (?)। अथवा कामक्रोधशब्दौ कामिनि क्रोधवति वर्तेते। अत्र च पक्षे भयव्यसनशब्दौ कृतद्वन्द्वौ तृतीयान्तौ पीडितशब्देन संबध्येते। अन्ये तु स्वतन्त्रा एव। रागद्वेषाभ्यां परीता व्याप्ताः। रागः क्वचिदात्मीयेष्वभिषङ्ग आत्मीयतया परिगृहीतस्[६]य क्वचित्संबन्धिनापि ध्यायतो वाऽभिप्रेतसिद्धौ मनसः परितोषो रागः तद्विपरीतो द्वेषविषयः। परिपन्थिन्यनात्मीयतया परिगृहीते तदस्वास्थ्यतद्विपर्ययापरितुष्टिवृत्तिरित्येवमादिरूपौ रागद्वेषौ । सर्वथाऽस्य

(१) **मस्मृ**.८।१६३; **व्यक**.१०३; **स्मृच**.१२८ बद्ध (बन्ध); **स्मृसा**.१२३ र्ताध्यधीनैः (ध्यधीनैर्वा); **पमा**.२१५; **व्यचि**.१०१ र्ताध्यधीनैः (ध्यधीनैश्च); **सवि**.५०० र्ताध्यधीनैः (तिभीतैश्च); **चन्द्र**.१७० र्ताध्यधीनैः (ध्यधीनैर्वा) बद्ध (बन्ध); **व्यसौ**.९४; **व्यप्र**.९४ याज्ञवल्क्यः; **प्रका**.८१ स्मृचवत्; **समु**.१९ स्मृचवत्.

१ तदा प्रकृतमस्याहुरस्वतन्त्रे स.

१ क्तार्था भ. २ पराश्चेति ज्ञे. ३ क्तविश. ४ (०). ५ (०). ६ स्य चित्.

भावबुद्धिश्चलिता क्षणमपि विवक्षिते कार्ये नावतिष्ठते। अन्यद्वदन्तोऽन्यदाचरन्ति। एवंरूपोऽप्रकृतिस्थः। अन्यथा सर्व एव पुरुषाः कामादियुक्ताः जराजीर्णाक्षिशिरोरोगार्तिमन्तोऽप्रकृतिस्थाः स्युर्न चैवमध्यधीनो गर्भदासः पुत्रशिष्यौ भार्या च। यदापि रूढ्या गर्भदास एव अध्यधीनस्तथाऽप्यस्वतन्त्रोपलक्षणार्थत्वात् सर्व एव ते गृह्यन्ते। स्वधनदानादि स्वामिनमनुज्ञाप्य यत्कुर्वन्ति तत् सिध्यति। तथा च नारदः—'यद्बालः कुरुते कार्यमस्वतन्त्रकृतं च यत्। अकृतं तदिति प्राहुः' इति। 'अस्वतन्त्रः स्मृतः शिष्यः आचार्ये तु स्वतन्त्रता। अस्वतन्त्राः स्त्रियः पुत्रा दासाद्यश्च परिग्रहः॥ स्वतन्त्रस्तत्र तु गृही यस्य यत्स्यात्क्रमागतम्'॥ ननु यदि न स्वातन्त्र्यं स्त्रीणामुच्यते पुंसश्च स्वातन्त्र्यमेतदनुपपन्नम्। यतः साधारणं धनं कथमेकाकी मनुष्यो भार्ययाऽननुज्ञातो दानविक्रयादिभ्यः प्रभवेदत इत्युक्तम्— 'स्त्रीकृतान्यप्रमाणानि कार्याण्याहुरनापदि' इति। तथा 'कुले ज्येष्ठ' इत्युपक्रम्य तत् कृतं तस्य कृतं नास्वतन्त्रकृतमिति च। धनसाधारण्ये हि पुरुषोऽपि स्त्रीवदस्वतन्त्रः। यच्छब्दे स्वाम्यं पारतन्त्र्यं चेति तद्विरुद्धमिव, स्वामित्वमत्र एषा च व्यवस्था इति योज्यं भवति। पारतन्त्र्यं परविधेयतया तदिच्छानुवर्तित्वं, यदि च परतन्त्रः परेच्छामन्तरेण विनियोक्तुं न लभते, कीदृशमस्य स्वाम्यम्? अथ दानाधानविक्रये यत्र प्रकृतत्वादनीशः, स्वशरीरे परिभोगादौ यावदिच्छं स्वधर्मे विनियोज्यते परतन्त्रः महाधनानां शास्त्रनिगृहीतात्मनां द्विजानां येनात्मोपभोगो भवेत् (?) बालस्य स्वाम्यपारतन्त्र्ये उपपन्ने। यदा प्राप्तव्यवहारास्तदेशिष्यन्ते एव पुत्रादयः। स्त्रियास्तु न कदाचिदपारतन्त्र्यम्। 'बालया वा युवत्या वा वृद्धया वाऽपि योषिता। न स्वतन्त्रेण कर्तव्यं कार्यं किञ्चिदिति स्थितिः'॥ स्वाम्ये पारतन्त्र्ये च स्त्रीणां समावेश उच्यते। न पारतन्त्र्यवचनेन स्त्रीणां स्वधनविनियोगनिषेधः क्रियते। किं तर्हि? अस्थाने दानाधानविक्रयादि वार्यते। परतन्त्रास्तासां स्थानं निरूपणीयं, न हि ताः स्वयं विवेक्तुमलमेष पात्रं अर्हति भूमिहिरण्यादिप्रतिग्रहमनेन कन्यासंबन्धं कुर्याद् इदं द्रव्यमस्मात् क्रेतुं विक्रेतुं वार्हसीत्येवमादितया ज्ञातव्यम्। अतो लेख्यादिकाले भर्त्राद्यनुमतिरुपयुज्यते। केवलाकृते कार्ये चाहं किञ्चिदविज्ञाते त्वया विप्रलब्धाऽस्मीति वचनस्यावसरत्वात्। भर्त्राद्यनुमतौ तु किं वक्ष्यति? तदुक्तम्—'एतान्यपि प्रमाणानि भर्ता यद्यनुमन्यते। पुत्रः पत्युरभावे वा राजा च पतिपुत्रयोः'॥ अतिस्वातन्त्र्यमपि नियमितम्। 'अनुशिष्टौ विसर्गे च विक्रये चेश्वरा मताः'। अपि अबुद्धिपूर्वे बालस्खलिते स्वामिना पत्न्यादयो नियोज्या अनुबन्धादिना। न तु तैः स्वाम्यविसर्गेऽपि, 'सा सद्यः संनिरोद्धव्या त्यजेद्वा कुलसंनिधौ' इति स्त्रीणामेव न पुंसः पारतन्त्र्यं पतितस्याप्या प्रायश्चित्तसमाप्तेः प्रतीक्षणोपदेशोऽतो विक्रयोऽपि दासादीनां गरीयस्यामापदि कुत्रचिदस्ति। तेषु स्वामिन इत्येतदपेक्ष्य। भार्याशिष्यदासीनां यथास्वं पारतन्त्र्यं, धनसाधारण्यात्तु न भर्तुरननुज्ञाप्य भार्याया यागादौ क्वचिदधिकार इति स्थितम्। यच्चेदम्—'पुत्राणां भर्तरि प्रेते वशे तिष्ठति सा तथा। जीवतोरस्वतन्त्रः स्याज्जरयापि समन्वितः'॥ 'तयोरपि पिता श्रेयान्' 'अभावे बीजिनो माता' इति। अनेन पुत्राणां पारतन्त्र्यम्। ननु चान्योन्यव्याहतमिति? नास्ति व्याघातः। अनधिकारिणि पुत्रे बाले मातृपरतन्त्रता। मातुस्तु पुत्रे पारतन्त्र्यम्। मातृधनरक्षणं चोरादिदोषेभ्यः। पुत्रस्यापि यत् पितरि पारतन्त्र्यं तदपृथक् कृतस्य तद्गृहे निवसतः, यदा तु पितृविभक्तो धनं स्वयमर्जितवांस्तदा 'ऊर्ध्वं तु षोडशाद्वर्षात्पुत्रं मित्रवदाचरेत्' इति स्वातन्त्र्यमेव। बालः अप्राप्तव्यवहारः षोडशवर्षात् प्राक्। स्थविरो लुप्तस्मृतिः जराभिभूतोऽतीतव्यवहारः। यद्यप्ययं कस्याञ्चिद्वेलायां प्रकृतिस्थोऽपि भवति, तथापि न प्रमाणं, अप्रत्ययात्। यस्य तु भर्तुः स्त्री जनानां कार्यप्रतिबन्धेन वर्तते तयाऽनुज्ञातमेतद्भवति (?)। असंबन्धकृतः, परार्थमनियुक्तो यो व्यवहारयति, न भ्राता न पिता, देवदत्ताय शतं धारयतीत्येवमादि वक्तुं न लभते। ये तु भ्रातरः समानकार्याः सर्वे च तुल्यव्यवहारिणस्तेषामन्यतरेणापि गोपश्वादिविक्रयो गृहादिबन्धनप्रयोगादि च क्रियमाणं सिध्यति। संबन्धित्वाय व्यवहारशब्दः सर्वव्यवहारग्रहणार्थः। प्रकरणाद्दणव्यवहार एव स्यात्। मेधा.

(२) क्षीबोन्मत्तव्याध्याद्युपहतचित्तगर्भदासबालातिवृद्धैः असंबद्धेन पितृभ्रातृनियुक्तादिव्यतिरेकेण यो

व्यवहारः ऋणादानादिः कृतः स न सिध्यति। ×गोरा.

(३) आर्तः शोकादिना। अध्यधीनो भृत्यः। अधिपदमीश्वरे वर्तते। बालेन षोडशवर्षेण। स्थविरेण लुप्तस्मृत्यादिना। कृत इत्यनुषङ्गः। असंबद्धेन स्वाम्यप्रहितेन परेण। व्यवहार ऋणादानादिः। न सिध्यति न लभ्यो धनिकस्य। मवि.

(४) असंबद्धः अर्थिप्रत्यर्थिसंबन्धरहितः। स्मृच.१२८

(५) असंबद्धोऽनधिकारी। व्यचि.१०१

**सत्या न भाषा भवति यद्यपि स्यात् प्रतिष्ठिता।**
**बहिश्चेद्भाष्यते धर्मान् नियताद्व्यावहारिकात्॥**

(१) कस्यचिदनुष्ठेयस्यार्थस्य प्रतिपादकः शब्दो भाषा। सामान्येन भवति योऽर्थस्तथा प्रतिपाद्यते सोऽनुष्ठेयः। किं सर्वापि भाषा न सत्या? नेत्याह— बहिश्चेद् धर्माद् धर्मबाह्यं यदुच्यते शास्त्राचारविरुद्धं पञ्चकादधिका वृद्धिः, भार्यापत्यविक्रयादिरन्वयिनः सर्वस्वदानमित्येवमादि। यद्यपि स्यात् प्रतिष्ठिता पत्रलिखिता प्रतिभुवो वा दत्तास्तथापि न सिध्यति। व्यावहारिको धर्म आचारनिरूढो नियतोऽनादिर्नेदानीन्तनः। पूर्वशेषं चैतत्। अस्वतन्त्राप्रकृतिस्थैः कृतं दानाद्यनिश्चितमिति न प्रमाणम्। मेधा.

(२) इदं मया तवानुष्ठेयमित्यादिका परिभाषा लेख्याद्युपनिबन्धेन यद्यपि स्थिरीकृता भवति तथापि यद्यनादिपारम्पर्यायातलोकशास्त्रव्यवहारवार्तिनो धर्माद् बहिर्भाष्यते तद्विरुद्धा निरूप्यते तदा सत्या न भवति न तदीयोऽर्थोऽनुष्ठेयः। *गोरा.

(३) सर्वदोषरहिताऽपि भाषा व्यावहारिकधर्मविरुद्धा चेत् सभासद्भिर्न ग्राह्येत्यर्थः। स्मृच.४०

(४) प्रतिष्ठिता अप्रसिद्धत्वादिदोषनिर्मुक्ता। भाषा प्रतिज्ञा। सत्या ग्राह्या। *व्यप्र.५२

**[१]योगाधमनविक्रीतं योगदानप्रतिग्रहम्।**
**यत्र वाऽप्युपधिं पश्येत् तत्सर्वं विनिवर्तयेत्॥**

(१) योगः छद्म। तेन य[१]द् बन्धकार्पणं कृ[२]तमेतच्च ज्ञायते असत्यकार्यं कृ[३]तमिति। तद्राजा विनिवर्तयेत्। कश्चिद्धनिकेनोपरुध्यमान आह न किञ्चिदस्तीति[४]। ननु क्षेत्रे स्थण्डिले वा दत्तमिति तदर्पयेत्यनया शङ्कया गृहं स्वजनाय कस्मैचिदसावाधानीकरोति। तत आह, तदन्यस्य मया बन्धकीकृतमिति। एतच्च ज्ञायते सत्यपि प्रकाशलेख्ये तस्य आधातृता योगात्। यदि हि परमार्थतया आधित्वेन कृतं कथमाधातै[६]व भुङ्क्त इति। एवंविधं योगावापनमप्रमाणीकृत्य धनिने क्षेत्रादि दापयितव्योऽधमर्णः। यस्य चान्येनागमेन स्वाम्यं धनदानकाल आगमान्तरेण करणं करोति तदपि योगावापनम्। तत्राधमर्णो यस्य वानेनागमेन स्वाम्यं दण्डितः सत्यमागमं कारयितव्यः। एवं विक्रयादि। ग्रन्थान्तरपाठवम् (?)। योऽल्पेन मूल्येन महार्घमर्थज्ञो विक्रीणीते यो वा नैव मूल्यं क्रेतुरादत्ते यच्चात्र ते[७] इह विक्रीतं मया, तवेदमिति, स उत्तरकालं विक्रीतं त्वया, ममेदमिति, गृहाण मूल्यमिति न लभते वक्तुम्। न चायं विक्रयानुशयो दशाहात्परेणापि निवर्तयेदिति। यो वाऽऽत्तेन क्राययति पूर्वोक्ते पञ्चम्याङ्ग(?)निमित्ते सति निमित्तान्तरे वा सति विक्रीणीते न च रूपकादिभिः क्रयोऽपहर्तव्यव्यवहारे दृश्यते न च रूपकादिसंचयशील इत्यादिना योगविक्रयाधिगमः। योगदानप्रतिग्रहम्। यदुभयस्वामिक-

---

× ममु. गोरावत्। * मवि., ममु. गोरागतम्।

(१) **मस्मृ.**८।१६४; **गोरा.** सत्या न भाषा (भाषा न सत्या); **व्यक.**१०३ मनुनारदौ; **स्मृच.**४० सत्या न भाषा (सभ्या भाषा न) ष्ठिता (ष्ठितम्) कात् (कान्); **स्मृसा.**१२३ मनुनारदौ; **व्यसौ.**९३; **व्यप्र.**५२:९३ मनुनारदौ; **व्यउ.**३६; **प्रका.**२४ सत्या न भाषा (सभ्या भाषा न); **समु.**१८ प्रकावत्.

१ सर्वा विभा.

* वाक्यार्थः स्मृचवत्।

(१) **मस्मृ.**८।१६५; **मिता.**२।१७६ यत्र (यस्य) वा (चा); **अप.**२।१७६ धम (धाप) योग (योगे) यत्र (यस्य) कात्यायनः; **व्यक.**१०३; **स्मृच.**१३०,३२०; **पमा.**२.१६:३२० यत्र (यस्य); **व्यचि.**१०१ सर्वं (कार्यं); **स्मृचि.**२०; **सवि.**२८७ नप्रतिग्रहम् (नप्रतिश्रुतम्) वा (चा) नारदः; **व्यसौ.**९३; **वीमि.**२।३२ वा (चा) सर्वं (कार्यं); **व्यप्र.**९३:३११ पमावत्: ५४२ वा (चा); **व्यउ.**८६ पमावत्; **व्यम.**९० मितावत्; **विता.**६११ मितावत्; **प्रका.**८२; **समु.**७१.

१ यदा. २ तमिति। एत. ३ तम्. ४ ति+मे. ५ गुह्यद स्व. ६ नैव. ७ तेह.

मन्यतरेण प्रतिग्रहीत्रा सह संविदं कृत्वा दीयते एवमादि योगदानप्रतिग्रहम् । दानं च प्रतिग्रहश्चेति विगृह्य द्वन्द्वैकवद्भावः । यद्यपि, दानप्रतिग्रहक्रिययोरन्यतरोपादानेनैवेतराक्षेपोऽन्यथा स्वरूपासिद्धेः;तथापि क्रियाद्वयोपादानं वृत्तपूरणार्थम् । अथवैकक्रियोपादाने तत्कारिण एव दण्डः स्यात् न द्वितीयस्य । सत्यपि तत्साधनत्वे शब्देनानुपादानात् अतो दातुः प्रतिग्रहीतुर्द्वयोर्दण्डार्थं भेदेनोपादानम् । तथा सति योगाधमनविक्रीतमित्यत्रापि क्रयादिद्वितीयोपादानं कर्तव्यम् । स्मृत्यन्तराद्वा सामान्यशास्त्राद्वाऽनुपादाने दण्डो न स्यात् । यत्र वाऽप्युपधिं पश्येदिति । उपधिः छद्म एवमन्यत्राप्येताभ्यः क्रियाभ्यः उपधिर्निवर्त्यः । यथा कश्चिद्धनिना उक्तः, यावदियद्धिरहोभिर्दातव्यमिति प्रतिभुवं न स्थापयसि तावत्त्वां न त्यक्ष्यामीति । तस्मिंस्तूष्णींभूते कश्चिदुत्तमर्णेन सह संविदं करोति, मामस्य प्रतिभुवं गृहाण यावदेनमुपपीडयामि बहुनेन ममापकृतं अहमस्य पीडार्थं एव प्रतिभूर्न मया किञ्चिद्दातव्यमिति; तत्रोत्तमर्णः प्रकाशमाह — यद्यन्यस्ते प्रतिभूर्नास्ति कर्मादिकं न प्रार्थयसे, नूनं जिहीर्षितं ते धनम् । स पीडितः प्रत्याह — नैतेन सह ममेदृशो व्यवहारः प्रवृत्तपूर्व इति । प्रतिभूः पुनराह— भवानि तवाहं प्रतिभूः । सोऽनिच्छन् पीडोपरोधादाह— यथेच्छसि तथा कुरु । नास्य पूर्वक्रियास्वन्तर्भावः । एवं कृषिवाणिज्यशिल्पारम्भादिक्रियाः एतद्व्यतिरेकिण्यः प्रतिदर्शनीयाः । उदाहरणमात्रं दानाधमनविक्रयाः । तदेतद्योगकृतं कार्यं यावत्किञ्चन तत्सर्वं राजा निवर्तयेद् राजा कृतमप्यकृतमादिशेन्न प्रमाणीकुर्यात् । कर्तारं कारयितारं च दण्डयेत् । मेधा.

(२) उपधिना ये बन्धविक्रयदानप्रतिग्रहाः क्रियन्ते तान् राजा विनिवर्तयेत् कृतानकृतान् कुर्यात् । तथाऽन्यत्रापि निक्षेपादौ यत्र छद्मार्थकरणं जानीयान्न वस्तुतो निक्षेपादिकृतं तत्सर्वं विनिवर्तयेत् । *गोरा.

(३) योगः परकीयधनस्य आत्मीयत्वापादकहेत्वभावेऽपि याचितकादिना हस्तगतत्वादिसंबन्धः । आधमनं बन्धकरणम् । योगेनाधमनम् । एवं योगविक्रीतावपि विग्रहः । स्मृच.१३०

(४) योगो विस्रम्भघाती तत्कृतं विक्रयादि निवर्तयेदित्यर्थ इति हलायुधः । व्यचि.१०१

(५) यद्वा साध्यव्यापकत्वे सति साधनाव्यापकः उपाधिः, यथा ममेदं हिरण्यं हिरण्यत्वात् मद्धस्तगतहिरण्यवदिति तत्र त्वक्रीतत्वाद्युपाधिरूपं, पश्येत्तदपि निवर्तयेन्मिथ्येति कृत्वा । +मच.

(६) आधमनविक्रयादिप्रयोजनेभ्यो लोकसिद्धेभ्यः प्रयोजनान्तरसंबन्धो योगः । +नन्द.

उक्तनिवर्तनापवादः

**कुटुम्बार्थेऽध्यधीनोऽपि व्यवहारं यमाचरेत् ।**
**स्वदेशे वा विदेशे वा तं ज्यायान्न विचालयेत्×॥**

(१) तिष्ठन्तु तावद् भ्रात्रादयः । कुटुम्बार्थेऽध्यधीनोऽपि तु गृहकर्मभृत्योऽपि व्यवहारं गोपश्वादिविक्रयं क्षेत्रस्थण्डिलादिप्रयोगकर्षणाय ऋणं व्यवहारं वा यमाचरेत् स्वदेशे विदेशे वा संनिहितस्य प्रोषितस्य वा तं ज्यायान् गृहस्वामी न विचालयेत् अविचार्यैव साधु कृतमित्यनुमन्येत । अन्ये तु पूर्वशेषोऽयमर्थवादो न विधिरित्याहुः । तदयुक्तम् । न ह्यर्थवादताबीजं किञ्चिदस्ति । विभज्यमानं साकाङ्क्षमृणमत्र यत्तच्छब्दाभिसंबन्धात् । अथ मत्तोन्मत्तार्ताध्यधीनैरित्यस्वातन्त्र्यादध्यधीनस्य, तत्कृतमप्रमाणमिति । कुटुम्बार्थेऽसंनिहिते च

* मवि., ममु. गोरागतम् ।

१ (०). २ कव्यवहारः. ३ दंण्डः स्यां. ४ द्मनैव अन्य. ५ नोतत्वोया. ६ ध्वन्त.

\+ शेषं गोरागतम् ।

× गोविन्दराजीयग्रन्थः अशुद्धिसन्देहान्नोद्धृतः ।

(१) **मस्मृ.**८।१६७; **व्यक.**१२१; **स्मृच.**१३१ ऽध्यधी (त्वधी) यमा (समा) : १७५ ऽध्यधी (त्वधी); **विर.**५५ चाल (चार); **स्मृसा.**१२५; **पमा.**२१८ ध्यधी ( नधी ) यमा(समा) ज्यायान् (न्यायं) चाल (चार);**व्यचि.**१०४यमा (समा);**विचि.** २७ यमा (य आ);**स्मृचि.**१४ ऽपि (हि) शेषं व्यचिवत्; **व्यत.** २३२ ध्यधी (भ्यधी); **दात.**१७८; **व्यसौ.**९५ यमा (समा) चाल (चार); **वीमि.**२।३२ नारदः; **व्यप्र.**९५ ज्यायान् (स्वामी) : २७२ यमा (समा) ज्याया (विद्वा); **प्रका.**८३ स्मृचवत् ;**समु.**७२ स्मृचवत्; **विच.**५४ विरवत् ; **विव्य.**२९ चरे (श्रये) चाल (चार).

१ तदुक्तम्. २ प्यधी. ३ तप्र.

स्वामिनि न युक्तं कल्पयितुम्। अन्यथा कुटुम्बावसादः स्यात्। अतस्तद्भरणात्मके व्यापारे प्रमाणीभवति [1]दैवादध्यधीनः। मेधा.

(२) एवमापत्प्रतीकारार्थेऽपि द्रष्टव्यम्। स्मृच.१३१

(३) तद्देशस्थे देशान्तरस्थे वा स्वामिनि स्वामिसंबन्धिकुटुम्बव्ययनिमित्तं दासोऽपि यद्दणादानादि कुर्यात्स्वामी तत्तथाप्यनुमन्येत। ममु.

(४) ज्यायान् ज्येष्ठः स्वतन्त्र इति यावत्। स्मृसा.१२६

(५) अध्यधीनः पुत्रभ्रातृदासादिः। व्यप्र.९६

बलात्कृतं निवर्तनीयम्

**[1]बलाद्दत्तं बलाद्भुक्तं बलाद्यच्चापि लेखितम्।**
**सर्वान् बलकृतानर्थानकृतान्मनुरब्रवीत्॥**

(१) यथा न बालास्वतन्त्राप्रकृतिस्थोपधिकृतं प्रमाणं तद्वद् बलकृतमपि, सर्वान् बलकृतानर्थान्निवर्तयेदित्येव विधिः। भुक्तं दत्तं लेखितमित्युदाहरणमात्रम्। तत्र बलाद्दत्तं यदनुपयुज्यमानं क्षेत्रारामादि वाहनाय दीयते, वृद्धिकामो वा यद्धनं दैवादारोपयति, भारवाहनमनिच्छतां गृहेषु मूलार्पणं पण्यमश्नुते (?) लेखितं पत्रकरणम्। सर्वानिति अन्यानप्येवंविधानर्थान् कार्याणि इत्यर्थः। योगाधमनविक्रीतमित्यत्र निपुणं दर्शितमत्रापि श्लोके समस्य योगबले शक्ये प्रक्षेप्तुं, पृथक् श्लोकद्वयकरणं, विचित्रा श्लोकस्य कृतिर्मनोः। 'मत्तोन्मत्तार्ताध्यधीन[3]बालवृद्धबलात्कृतिः। असंबन्धेन योगाच्च व्यवहारो न सिध्यति'॥ इति, न सिध्यत्येव न मानवद् भवति। मेधा.

(२) बलाद् दत्तं कुत्सितकन्यादि, बलाद् भुक्तं क्षेत्रादि, बलाच्च लेखितं चक्रवृद्धिपत्रादि, इत्येवमादीन् सर्वान् बलकृतानर्थान् निवर्तनीयान् मनुराह। × गोरा.

(३) बलाद् बन्धनताडनादिना तद्भयेन वा। सर्वान् क्रयादीन्। अकृतान् निवर्तनीयान्। मवि.

(४) बलादवश्यकर्तव्यतातिरेकात्। मत्ताद्यतिरिक्तविषयम्। तदसिद्धस्योक्तत्वात्। मच.

**[1]त्रयः परार्थे क्लिश्यन्ति साक्षिणः प्रतिभूः कुलम्।**
**चत्वारस्तूपचीयन्ते विप्र आढ्यो वणिङ्नृपः+॥**

(१) परेणार्थ्यमाने साक्ष्यं प्रातिभाव्यं व्यवहारेक्षणं च कर्तव्यं कुलादिभिः, न स्वयमुपेत्य हठात्। अतः स्वयं कुर्वन्तो न प्रमाणीभवन्ति। अथवा परस्यार्थं कुर्वन्तः क्लेशमाप्नुवन्ति। न ह्येषां स्वार्थगन्धोऽस्ति। अतो बलान्न कारयितव्याः। कुलं वृद्ध[2]पुरुषाः। परेण वाऽर्थ्यमाना विप्रादय उपचीयन्ते। अतो न हठाद् अनिच्छन् विप्र[3]ः प्रतिग्रहीतव्य[4]ः। अथवा परसंबन्धिनोऽर्थायोपचयो विप्रस्य, अतः स्वार्था प्रवृत्तिर्न परार्थैव। तेन विप्रेण न बलात् त[5]द्दानादाने प्रवर्तनीयम्। ह[6]ठबलसाध्यं दानमिति लोकप्रवादो न दापयन्तं निषेधति, तदिच्छन्तं दापयेत्। याञ्चया तु न[7] बलम्। एवमाढ्यः कुसीदवृत्तिर्धनवानिव न प्रयोजनीयः। किमिति कुसीदं व्यवहारेऽन्यस्मै ददाति न मह्यमिति। अथवा तेन ब[8]लतोऽन्यस्मिन्नेच्छ[9]ति तद्वयं कु[10]र्वीति न धनमारोपयितव्यम्। यतः परेणार्थ्यमान उपचीयते, न बलात् प्रयुञ्जानः। शास्त्रनिषेधात्। एवं वणिक् कुसीदीव धनवृद्धिकाम एव व्यवहारयति। वणिक् पण्यजीवी। नृपः राजापि प्रयुक्तराजदण्डमाददानः उपचीयते, न तु बलादिप्रोत्साहनेन व्यवहारयन्। तदुक्तम्—'नोत्पादयेत्स्वयं कार्यमि'ति। विप्रादीनां विधिः, अनुवादो राज्ञो दृष्टान्तार्थः। अथवा स[11]र्वोऽसावुदाहरणप्रपञ्चः, तथाऽग्रेतनोऽपि। मेधा.

(२) कुलमविभक्ता ज्ञातयो मृतस्य ज्ञातेरस्वस्याप्यृणं शोधयन्तः। अतः साक्षित्वप्रतिभूत्वानङ्गीकारेण कुलत्वं च विभागे निवर्तनीयमित्यर्थः। व्यवहारेण तद्दर्शनेन। चत्वारः उपचीयन्ते परधनं लभन्ते, विप्रः प्राड्विवाकः राज्ञः सकाशाद्धनप्राप्त्या। आढ्यो धनिको वृद्ध्या

× ममु. गोरावत्।

(१) मस्मृ.८।१६८; व्यक.१०३; स्मृसा.१२३ बला... त्तं (बलाद्भुक्तं बलाद्दत्तं); व्यचि.१०१; व्यत.२३१ बलाद्य... तम् (बलाद्वा लिखितं च यत्); चन्द्र.१७०; व्यसौ.९३; वीमि.२।३२ (=); व्यप्र.९३:१४३ स्मृसावत्; सेतु.३१८.

१ दैवाद्यधीनः. २ वापनमि. ३ नैर्बालवृद्धिर्बलात्कृतिः.

+ गोविन्दराजीयग्रन्थः अशुद्धिसंदेहान्नोद्धृतः।

(१) मस्मृ.८।१६९.

१ हारेण क्ष. २ पुषाः. ३ प्रं. ४ व्याः. ५ दना. ६ त. ७ (०). ८ बलवतो. ९ च्छन्ति त. १० कुर्वद् ष. ११ र्वस्योदा.

जीवनेन । वणिक वाणिज्येन । नृपो राजा दण्डादिप्राप्त्या । मवि.

(३) साक्षिणः प्रतिभूः कुलं च धर्मार्थव्यवहारद्रष्टारस्त्रय एते परार्थे क्लेशमनुभवन्ति तस्माद् बलेन साक्ष्यं प्रातिभाव्यं व्यवहारेक्षणं च नाङ्गीकारयितव्याः । चत्वारः पुनः ब्राह्मणोत्तमवर्णवणिग्राजानः परार्थे दानफलोपादानऋणद्रव्यार्पणविक्रयव्यवहारेक्षणरूपं कुर्वाणा धनोपचयं प्राप्नुवन्ति । तस्माद् विप्रो दातारं, आढ्योऽधमर्णं, वणिक् क्रेतारं, राजा व्यवहर्तारं बलेन न प्रवर्तयेत् । पूर्वश्लोकाभिहितबलनिषेधस्यैवायं प्रपञ्चः । ममु.

(४) बान्धवानपि दापयेदिति प्रसङ्गेन सप्तानां परतः यथासंभवं क्लेशवृद्धीराह—त्रय इति । तत्र साक्षिप्रतिभूकुलानि क्लेशभाञ्जि । तत्र साक्षिणां सत्योक्तौ न किञ्चिद् अनृतोक्तौ कुलनाशाद्युक्तम् । प्रतिभुवः प्रातिभाव्यदर्शनादौ न किञ्चित् तददर्शनादौ स्वधनव्ययः । एवं कुलस्य कुपुत्रेण नाशः तस्मात् परतः क्लेशभाजस्तेन बलान्न प्रवर्तनीया इति भावः । प्रतिभूपदं निक्षेपाध्याद्युपलक्षकम् । सोऽपि परार्थ एव क्लिश्यति । निक्षेपधारणेन किञ्चित् तन्नाशे चाप्रतिष्ठा तद्दानमिति । परेभ्यो विप्रादीनां चतुर्णां प्रतिग्रहाणां दानानर्घविक्रयकरादिग्रहैरुपचय इति । तस्मात् विप्रेण दाता, आढ्येनाधमर्णः, वणिजा क्रेता, नृपेण कार्यार्थी च न बलात्प्रेरणीय इति भावः । मच.

(५) कुलशब्देन कुलीनोऽभिप्रेतः तस्योपन्यासो दृष्टान्तार्थः । यथा कुलीनः परार्थे यतमानः क्लिश्यति एवं साक्षिप्रतिभुवाविति तस्मान्नात्र बलात्कारः कर्तव्य इत्यभिप्रायः । नन्द.

(६) कुलं अविभक्ता ज्ञातयः । भाच.

## याज्ञवल्क्यः

निवर्तनीया व्यवहाराः

**बलोपाधिविनिर्वृत्तान् व्यवहारान् निवर्तयेत् ।**
**स्त्रीनक्तमन्तरागारबहिःशत्रुकृतांस्तथा ॥**

(१) यास्मृ.२।३१; अपु.२५३।५९-६०; विश्व.२।३२ पा (प); मिता.; अप.; स्मृच.१२८ पू.; स्मृसा.८४; पमा.२१४; व्यचि.९९ पू.:१०१ वर्त (रूप) स्त्री...गार (स्त्रीकृतमन्तरागेहं); नृप्र.८; व्यत.२३१ शत्रु (ग्राम); सवि. ५०० पू.; चन्द्र.१०३ निर्वृत्तान् (निर्मुक्त) रान् (रं) शत्रुकृतांस्त (शूद्रकृतं य); वीमि.विश्ववत्; विता.१८ विश्ववत्; सेतु.३१८; प्रका.८१ पू.; समु.७० गार (गारं).

(१) प्रभुत्वादेव च राजा तदर्थाधिकृतो वा प्राड्विवाकादिः—बलोपाधिविनिर्वृत्तान् इत्यादि । स्पष्टार्थः श्लोकः । विश्व.२।३२

(२) दुर्बलैर्व्यवहारदर्शिभिर्दृष्टो व्यवहारः परावर्तते, प्रबलदृष्टस्तु न निवर्तेत इत्युक्तम् । इदानीं प्रबलदृष्टोऽपि व्यवहारः कश्चिन्निवर्तेत इत्याह— बलोपाधीति । बलेन बलात्कारेण । उपाधिना भयादिना । विनिर्वृत्तान्निष्पन्नान् व्यवहारान् निवर्तयेत् । तथा स्त्रीभिः । नक्तं रात्रावस्त्रीभिरपि । अन्तरागारे गृहाभ्यन्तरे । बहिर्ग्रामादिभ्यः । शत्रुभिश्च कृतान् व्यवहारान् निवर्तयेदिति संबन्धः । *मिता.

(३) ततश्च व्यवहारांस्तानेव पुनः प्रवर्तयेदिति तात्पर्यार्थः । बलं हठः । उपाधिर्लोभद्वेषादिः । स्त्रीणां कर्तृत्वं द्रष्टृतयाऽर्थिप्रत्यर्थितया वा । नक्तंकृता रात्रिकृताः । अन्तरागारकृता वेश्ममध्यकृताः । बहिर्ग्रामाद्बहिस्तत्र कृताः । शत्रुकृताः शत्रुदृष्टाः । नक्तान्तरागारबहिर्ग्रहणेन रहःकारणमुपलक्ष्यते । +अप.

(४) उपाधिः छलम् । दीक.

(५) उपाधिश्छलं इति शूलपाणिः । उपाधिर्भयादिरिति विज्ञानेश्वरः । तन्मते 'भीतादियोजित' इत्युक्तवचनेन पौनरुक्त्यम् । व्यत.२३२

**मत्तोन्मत्तार्तव्यसनिबालभीतादियोजितः ।**
**असंबद्धकृतश्चैव व्यवहारो न सिध्यति ॥**

(१) मत्तोऽतिहर्षितः, अहङ्कृतो वा । उन्मत्तो ग्रहगृहीतादिः । स्पष्टमन्यत् । विश्व.२।३३

* वीमि. मितागतम् । + स्मृच. अपगतम् ।

(१) यास्मृ.२।३२; अपु.२५३।६०-६१ तादि (तप्र); विश्व.२।३३ तादि (तप्र) बद्ध (बन्ध); मिता.; अप.; स्मृच. १२८ बद्ध (बन्ध); स्मृसा.८४ विश्ववत्; पमा.२१५; व्यनि. अपुवत्, ऋष्यशृंगः; नृप्र.८; व्यत.२३१–२३२ स्मृचवत्; चन्द्र.१०३ विश्ववत्; वीमि.; व्यप्र.३२; व्यउ.२०; विता.१८; सेतु.३१८ स्मृचवत्; प्रका.२४ स्मृचवत्, ऋष्यशृंगः; समु.१८-१९ स्मृचवत्.

(२) असिद्धव्यवहारिण आह—मत्तोन्मत्तेति। अपि च। मत्तो मदनीयद्रव्येण। उन्मत्त उन्मादेन पञ्चविधेन वातपित्तश्लेष्मसंनिपातग्रहसंभवेनोपसृष्टः। आर्तो व्याध्यादिना। व्यसनमिष्टवियोगाऽनिष्टप्राप्तिजनितं दुःखं तद्वान् व्यसनी। बालो व्यवहारायोग्यः। भीतोऽरातिभ्यः। आदिग्रहणात्पुरराष्ट्रादिविरुद्धः। 'पुरराष्ट्रविरुद्धश्च यश्च राज्ञा विसर्जितः। अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः' ॥ इति मनुस्मरणात्। एतैर्योजितः कृतो व्यवहारो न सिध्यतीति। अनियुक्तासंबद्धकृतोऽपि व्यवहारो न सिध्यतीति संबन्धः। मिता.

(३) मत्तादिकृतो व्यवहारो न सिध्यति व्यावर्तेत इत्यर्थः। व्यसनी, कितवादिः पुत्रवियोगादिमान्वा। अर्थिना प्रत्यर्थिना वा यो व्यवहारकरणाय न प्रहितः सोऽसंबद्धः। *अप.

(४) व्यवहर्तृवैगुण्येऽपि एवं कार्यमित्याह स एव—मत्तोन्मत्तेति। आदिशब्देन वृद्धयोजितादयो व्यवहारा गृह्यन्ते। ×स्मृच.१२८

(५) आदिना दासवृद्धादेर्ग्रहणम्। असंबद्धः पितृनियुक्तान्यः। +दीक.

(६) व्यसनी द्यूताद्यासक्तः। आदिपदादस्वतन्त्रदासपुत्रादेर्ग्रहणम्। व्यत.२३२

(७) बालः षोडशवर्षाभ्यन्तरवयस्कः। भीतो भयवान्। आदिपदेन कामक्रोधाद्याक्रान्तपरिग्रहः। एतैर्योजितः कृतोऽसंबन्धेन भ्रातृत्वादिसंबन्धरहितेनाऽनियुक्तेन कृतश्च व्यवहारो न सिध्यति न फलपर्याप्तो भवति। तथा च पुनस्तत्र विचारयेदिति तात्पर्यम्। चकारेण दासादिकृतसमुच्चयः। एवकारो न सिध्यतीत्यत्राऽन्वेति, तेन कुलादिकृतस्य क्वचित्सिद्धावपि नैतादृशस्य क्वचिदपि सिद्धिरित्युक्तं भवति। अत्र व्यवहारो न न्यायमात्रं किन्तु दानविक्रयाधमनादिरूपाः सर्वाः क्रियाः। वीमि.

(८) आदिग्रहणं चित्तविक्षेपकारणानामन्येषामप्युपसंग्रहार्थम्। एतैः योजितः कृतो निर्णीत इति यावत्। एतैः सह योजित इति वा। एते यत्रार्थिप्रत्यर्थिभावमापन्ना इत्यर्थः। तथा असंबद्धकृतोऽपि अर्थिप्रत्यर्थिसंबन्धरहितैस्तदीयचेष्टितानभिज्ञैः कृतो निर्णीतस्तैः सह कृतो वा। व्यवहारो न सिध्यति कृतोऽपि निवर्तते। प्रवृत्तश्च तादृशैः सह निर्णयत्वेन नोपादेय इत्यर्थः। न च असंबद्धत्वमुदासीनत्वं सभ्यानां गुण एव। अनुदासीनेषु उपाधिसंभवात्। अत एव 'रिपौ मित्रे च ये समाः' इत्युक्तं इति वाच्यम्। असंबद्धपदस्य देशादिसंबन्धराहित्यपरत्वात्। व्यवहारनिर्णयस्य च देशाचाराद्यनुरोधित्वात्। तथा च तदनभिज्ञनिर्णीतस्तदनभिज्ञार्थिप्रत्यर्थिको वेत्यर्थः पर्यवस्यति। द्वितीयव्याख्याने तु संबन्धाभावनिश्चये संशयाभावेन तादृशव्यवहारस्यानुपादेयत्वौचित्यात्। *व्यप्र.३३

* शेषपदार्थो मितागतः। × पमा. स्मृचवत्।

\+ पदार्थो मितावत्।

## नारदः

[१]स्त्रीषु रात्रौ बहिर्ग्रामादन्तर्वेश्मन्यरातिषु।
व्यवहारः कृतोऽप्येषु पुनः कर्तव्यतामियात् ॥

(१) स्त्रीष्विति पत्नीदुहितृस्त्रीकृतः। अथवा स्त्रीभिरेव व्यवहारो दृष्टः। रात्राविति रात्रिः शयनाय न तु व्यवहाराय। तस्यां साक्षादेव प्रमाणव्यवहारासंभवः। बहिर्ग्रामात् अरण्य इति। अन्तर्वेश्मनि गृहमध्ये। अरातिषु शत्रुषु। एतेषु प्रदेशेषु व्यवहारः कृतोऽपि न प्रतिष्ठते। तेन पुनः कर्तव्यतां प्राप्नोतीत्यर्थः।

अभा.१३

(२) यावत्स्त्रीभिः शत्रुभिर्वा रहसि वा निर्णीतो व्यवहारोऽज्ञानपक्षपातयोः संभवात् पुनर्विचारणीय इत्यर्थः। स्मृच.१२८

(३) स्त्रीषु स्त्रीमध्ये। कृत इति प्रत्येकमभिसंबध्यते। तासामव्यवस्थितचित्तत्वात्। रात्रावप्रकाशत्वात् वञ्चना भवतीति। बहिर्ग्रामाद् येषां ग्रामे बहिश्च संभवः। शून्यत्वात् बहिः। अन्तर्वेश्मनि, स्वगृहे श्रोतॄणामभावादसाक्षित्वप्रसङ्गात्। अरातिषु वैरिमध्ये, ते हि द्वेषादन्यथा

* व्यउ. व्यप्रगतम्।

(१) **नासं**.१।३७; **नास्मृ**.१।४३; **अभा**.१३; **अप**.२।३१ न्यराति (नि रात्रि) प्येषु (प्येष); **व्यक**.१०३ प्येषु (प्येष); **स्मृच**.१२८ व्यकवत्; **स्मृसा**.१२३ व्यकवत्; **पमा**.२१४ न्य (स्व); **व्याचि**.१०१ व्यकवत्; **सवि**.५००; **व्यसौ**.९३ प्येषु (न्येभ्यः); **व्यप्र**.९३; **विता**.९० ऽप्ये (ये); **प्रका**.८१ व्यकवत्; **समु**.७०.

ब्रूयुः । एषु कृतोऽपि पुनः सम्यक्कर्तव्यो भवतीति नैषु कर्तव्य इति प्रतिषेध एवोच्यते ।                    नाभा.१।३७

**सत्या न भाषा भवति यद्यपि स्यात्प्रतिष्ठिता ।**
**बहिश्चेद्भाष्यते धर्मान्नियताद्व्यावहारिकात्+ ॥**
**[१]स्त्रीकृतान्यप्रमाणानि कार्याण्याहुरनापदि ।**
**विशेषतो गृहक्षेत्रदानाधमनविक्रयाः ॥**

(१) पत्नीदुहितृवधूप्रभृतिसर्वस्त्रीकृतानि सर्वाण्यपि कार्याणि अप्रमाणानि । अतस्ताभिः कृतान्यप्यकृतानीव द्रष्टव्यानि विशेषतो गृहक्षेत्रदानविक्रयाः । प्रमाणकृतानि बलवन्तीत्यर्थः (?) ।                    अभा.४१

(२) स्त्रीग्रहणमस्वतन्त्रोपलक्षणार्थम् । एवं चापद्यस्वतन्त्रकृतान्यपि प्रमाणानीत्यार्थिकोऽर्थः प्रत्येतव्यः । अत्रापवादप्रदर्शनार्थमाह स एव—'विशेषतो गृहक्षेत्रदानाधमनविक्रयाः' इति । गृहक्षेत्रयोः दानाधमनविक्रयास्त्वापद्यप्यस्वतन्त्रकृता न सिध्यन्तीत्यर्थः । एवं तद्भाष्ये व्याख्यातम् ।                    स्मृच.१३१-१३२

(३) अनापदीत्यनेनापदि भर्त्राद्यनुमतिमन्तरेणापि प्रमाणमेव स्त्रीकृतमिति दर्शितम् ।                    ×स्मृसा.१२४

(४) विशेषत इति वचनादापद्यप्यप्रमाणमित्यवेक्षते । दासाभरणसुवर्णगवाद्यनापद्यप्रमाणम् । आपद्यपि गृहक्षेत्रं न प्रमाणम् ।                    *नाभा.२।२२

उक्तनिवर्तनापवादः

**[२]एतान्येव प्रमाणानि भर्ता यद्यनुमन्यते ।**
**पुत्रः पत्युरभावे वा राजा वा पतिपुत्रयोः ॥**

(१) अत्र या स्त्री गृहनायिका कुटुम्बभरणपालनक्षमा प्रौढा, पतिर्मन्दप्रभावोऽप्रौढः अनुमतिमात्रदानयोग्यः, स च यद्यनुमन्यते, ततः कृतान्यपि कार्याणि प्रमाणानि । पत्युरभावे पुत्रो वा यद्यनुमन्यते । पतिपुत्रयोरभावे राजा वा यद्यनुमन्यते ।                    अभा.४१

(२) अस्वतन्त्रकृतनिवर्तनं स्वतन्त्रानुमत्यभावविषये कार्यमित्यर्थः ।                    ×स्मृच.१३१

(३) सपत्नीपुत्रादेरनुमतिं विना स्त्रीकृतं निवर्त्यमेव । पुत्रपदेन सपत्नीपुत्रादयोऽपि विवक्षिता इति रत्नाकरात् ।                    चन्द्र.१६९

(४) एतत्प्रतिपादितं भवति अस्वतन्त्रा सर्वदा स्त्रीति ।                    नाभा.२।२३

**भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत् ।**
**सा यथाकाममश्नीयाद् दद्याद्वा स्थावरादृते * ॥**

निवर्तनीया व्यवहाराः

**तथा दासकृतं कार्यमकृतं परिचक्षते ।**
**अन्यत्र स्वामिसंदेशान्न दासः प्रभुरात्मनः ॥**

यथा स्त्रीकृतं तथा दासकृतमपि कार्यमकृतमेव परिचक्षते ब्रुवते गुरवः । यदि पुनः स एव स्वामिसमादेशात्करोति । ततः सर्वं तत्कृतमपि प्रमाणमेवेति ।

+अभा.४१-४२

**[१]पुत्रेण च कृतं कार्यं यत्स्यादच्छन्दतः पितुः ।**
**तदप्यकृतमेवाहुर्दासः पुत्रश्च तौ समौ ॥**

---

+ व्याख्यानं स्थलादिनिर्देशश्च प्रतिज्ञाप्रकरणे (पृ.१४२) द्रष्टव्यः । × चन्द्र. स्मृसावत् । * सर्वं स्मृचगतम् ।

(१) **नासं.** २।२२; **नास्मृ.** ४।२६ रनापदि (र्मनीषिणः); **अभा.** ४१ नास्मृवत्; **मेधा.** ८।१६३पू.; **मभा.** १८।१; **गौमि.** १८।१ याः (यात्); **स्मृच.** १३१; **स्मृसा.** १२४; **व्यचि.** १०२; **सवि.** ५०२ स्त्रीकृतान्य (कृतान्यप्य) त्र (त्रे); **चन्द्र.** १६९; **व्यसौ.** ९४ क (क्रि); **वीमि.** २।३२; **प्रका.** ८३; **समु.** ७२. (२) **नासं.** २।२३; **नास्मृ.** ४।२७; **अभा.** ४१; **मेधा.** ८।१६३ (=) न्येव (न्यपि) वा प (थिप); **व्यक.** १०४ वा प (च प); **मभा.** १८।१ पू.; **गौमि.** १८।१ पू.; **स्मृच.** १३१ राजा (जाया); **स्मृसा.** १२४ पत्यु (भर्तु); **पमा.** २१७; **व्यचि.** १०२; **चन्द्र.** १६९ एतान्येव (तान्येव तु) यद्य (यान्य) त्रः (त्राः) वा (तु); **व्यसौ.** ९४ एतान्येव (तान्येव तु); **वीमि.** २।३२; **प्रका.** ८२ स्मृचवत्; **समु.** ७१ स्मृचवत्.

× पमा. स्मृचगतम् ।
* व्याख्यासंग्रहः स्थलादिनिर्देशश्च दायभागप्रकरणे द्रष्टव्यः ।
+ नाभा. अभावद्भावः ।

(१) **नासं.** २।२५; **नास्मृ.** ४।२९; **अभा.** ४१; **व्यमा.** २८८ तथा दास (दासेन च) कौण्डिण्यः; **व्यक.** १०४; **स्मृच.** १३१; **स्मृसा.** १२३; **पमा.** २१७ तथा (तत्र) अकृ (न कृ) शात् (शं); **व्यचि.** १०२; **व्यत.** २३२ शा (द्दा); **व्यसौ.** ९४ तथा (तदा); **वीमि.** २।३२ (तदा तु तत्कृतं कार्यमतन्त्रं परिचक्षते); **व्यप्र.** ९४; **प्रका.** ८२; **समु.** ७१.

(२) **नासं.** २।३२; **नास्मृ.** ४।३० ण च (णापि) तौ (तत्); **अभा.** ४२ नास्मृवत्; **व्यमा.** २८८ कार्यं (कर्म) दच्छ (त्स्वच्छ) कौण्डिण्यः; **व्यक.** १०४ ण च (णापि); **स्मृच.** १३१; **स्मृपा.** १२३-१२४ मेवा (मित्या) सः पुत्रः (स-

पितुरसंमतात् पुत्रणापि यत्कृतं कार्यं तदप्यकृतमेव द्रष्टव्यम् । यतो यथा दासः अस्वतन्त्रस्तथा पुत्रोऽपि पितरि जीवति अविभक्तभाग अस्वतन्त्र एवेति ।

+अभा.४२

**अप्राप्तव्यवहारश्चेत्स्वतन्त्रोऽपि हि नर्णभाक् ।**
**स्वातन्त्र्यं हि स्मृतं ज्येष्ठे ज्यैष्ठ्यं गुणवयःकृतम्*॥**
**यद्बालः कुरुते कार्यमस्वतन्त्रस्तथैव च ।**
**अकृतं तदिति प्राहुः शास्त्रे शास्त्रविदो जनाः ॥**

(१) अत्र स्वतन्त्रोऽपि बालः शिशुर्यत्कार्यं कुरुते । तथा प्रौढोऽपि दासादिरस्वतन्त्रो यत्कुरुते । तत्कृतमपि अकृतमाहुर्धर्मशास्त्रज्ञा इति । अभा.४३

(२) अस्वतन्त्रग्रहणाल्लब्धेऽपि बाले पुनर्बालग्रहणं पित्रोरभावेऽपि बालस्यास्वातन्त्र्यप्रतिपादनार्थम् । एतच्च कुटुम्बभरणातिरिक्तपरं 'कुटुम्बार्थेऽध्यधीनोऽपि' इत्यग्रिमवाक्यात् । व्यचि.१०२

**स्वतन्त्रोऽपि हि यत्कार्यं कुर्यादप्रकृतिं गतः ।**
**तदप्यकृतमेवाहुरस्वतन्त्रः स हेतुतः ॥**

---

+ नाभा. अभावद्भावः ।

* व्याख्यासंग्रहः स्थलादिनिर्देशश्च ऋणादानप्रकरणे द्रष्टव्यः ।

पुत्रौ); **पमा**.२१७; **व्यचि**.१०२; **व्यत**.२३२ सः पुत्रः (सपुत्रौ); **व्यसौ**.९४ च (तु); **वीमि**.२।३२ तौ (तत्); **व्यप्र**.९४; **प्रका**.८२-८३; **समु**.७२.

(१) **नासं**.२।३५; **नास्मृ**.४।३९ शास्त्रे (धर्म); **अभा**.४३ नास्मृवत्; **मेधा**.८।१६३ तथैव च (कृतं च यत्); **व्यमा**.२८८ कौण्डिण्यः; **व्यक**.१०३-१०४; **स्मृच**.१३०; **पमा**.२१६ दिति (दपि); **व्यचि**.१०१ पमावत्; **व्यनि**.पू.; **चन्द्र**.१७० पमावत्; **व्यसौ**.९४ पमावत्; **वीमि**.२।३२ पमावत्; **व्यप्र**.९४ पमावत्; **विता**.९२ दिति (दभि); **प्रका**.६९,८२; **समु**.७१; **विव्य**.४ कौण्डिण्यः.

(२) **नासं**.२।३६; **नास्मृ**.४।४० (अकृतं तदपि प्राहुरस्वातन्त्र्यस्य हेतुतः); **अभा**.४३ (अकृतं तदपि प्राहुरस्वतन्त्रः सहेतुकः); **मेधा**.८।१६३; **व्यमा**.२८८ कौण्डिण्यः; **व्यक**.१०४; **स्मृच**.१३२ न्त्रः स (न्त्रत्व); **स्मृसा**.१२३ मेवा (मित्या); **व्यचि**.१०२ तुतः (तुभिः); **व्यत**.२३२ दप्र (च्चाप्र) न्त्रः स (न्त्रस्य); **चन्द्र**.१७० (अकृतं तदपि प्राहुरस्वतन्त्रः स हेतुभिः); **व्यसौ**.९४ हि यत् (यदा) तुतः (तुभिः); **वीमि**.२।३२ व्यचिवत्; **व्यप्र**.९४; **सेतु**.३१९ तद (यद) न्त्रः स हेतुतः (न्त्रस्य हेतुभिः); **प्रका**.८३ स्मृचवत्; **समु**.७२ स्मृचवत्; **विव्य**.४ उत्त., कौण्डिण्यः.

अत्र किल पितुः परोक्ष्ये ज्येष्ठपुत्रः कार्यकरणे प्रमाणम् । यावताऽत्राप्ययं हेतुरप्रमाणे दृष्टः । यदि असावप्रकृतिं गतः कुर्यात्तत्कृतमप्यकृतमाहुः । अप्रकृतिं गत इति । भूतगृहीतो वा द्यूतादिव्यसनगृहीतो वा स्वभावप्रकृतिपरित्यक्तः । अनेन हेतुना स्वतन्त्रोप्यऽस्वतन्त्रः सहेतुकः । तेनापि दानाधमनविक्रयादिकार्यं कृतमप्यकृतमेव द्रष्टव्यं इति । अभा.४३

**कामक्रोधाभिभूतार्तभयव्यसनपीडिताः ।**
**रागद्वेषपरीताश्च ज्ञेयास्त्वप्रकृतिं गताः ॥**

(१) अप्रकृतिगतलक्षणमिदमुक्तं सप्ताकारमिति ।

अभा.४३

(२) कामश्च क्रोधश्चाभियुक्तश्चार्तश्च भयं च व्यसनं चेति द्वन्द्वः । एतैः पीडिताः । आर्ताभियुक्तौ सामर्थ्याद् वर्जयित्वा एतैः प्रत्येकं पीडितशब्दोऽभिसंबध्यते । अथवा आर्ताभियुक्तावपि भावसाधनौ । ततः सर्वैः प्रत्येकं पीडितशब्दोऽभिसंबध्यते । अथवा कामयतेः कर्तरि पचाद्यच् । क्रुधेरपि तथैव । कामयमानश्च क्रुद्धश्चाभियुक्तश्चार्तश्च कामक्रोधाभियुक्तार्ताः । भयं च व्यसनं च भयव्यसने भयव्यसनाभ्यां पीडिताः भयव्यसनपीडिताः, कामक्रोधाभियुक्तार्ताश्च भयव्यसनपीडिताश्च कामक्रोधाभियुक्तार्तभयव्यसनपीडिताः । अथवा भयशब्दोऽपि पचादिकाजन्तः । व्यसनशब्दो 'कृत्यल्युटो बहुलम्' इति वचनात् ल्युट् कर्तरि । अतः कामश्च क्रोधश्चाभियुक्तश्चार्तश्च भयव्यसनपीडिताश्चेति द्वन्द्वः । नाभा.२।३७

**कुले ज्येष्ठस्तथा श्रेष्ठः प्रकृतिस्थश्च यो भवेत् ।**
**तत्कृतं स्यात्कृतं कार्यं नास्वतन्त्रकृतं कृतम् ॥**

---

(१) **नासं**.२।३७ भूता (युक्ता); **नास्मृ**.४।४१; **अभा**.४३; **मेधा**.८।१६३ भूतार्त (युक्तार्था) रीताश्च (राश्चेति); **व्यक**.१०४; **स्मृच**.१३२ र्तभ (र्ता भ); **स्मृसा**.१२३ र्ते(श्च); **व्यचि**.१०२ तार्त (ता ये); **व्यत**.२३२ तार्त (ता वा); **चन्द्र**.१७०तार्त (तास्तु) रागद्वेष (लोभमोह); **व्यसौ**.९४ तार्त (तार्ता); **वीमि**.२।३२; **व्यप्र**.९४; **सेतु**.१२७; **प्रका**.८३ व्यसौवत्; **समु**.७२ व्यसौवत्.

(२) **नासं**.२।३८ श्च (स्तु); **नास्मृ**.४।४२ स्यात् (तु) कार्यं (प्राहुः); **अभा**.४३ नास्मृवत्; **व्यक**.१०४ ले ज्ये

अत्र श्लोके समस्तकृताकृतोपसंहार उक्तः । यः कुले ज्येष्ठो वयसा गुणैश्च । तथा श्रेष्ठः संव्यवहारप्रतिष्ठायुक्तः । प्रकृतिस्थश्चाविप्लुतचित्तः पुरुषो यो भवेत्, तत्कृतं तु कृतं ज्ञेयम् । तेन कृतं कृतमिति प्रतिष्ठते । यत्पुनरस्वतन्त्रकृतं कार्यं तन्न कृतमिति द्रष्टव्यम् । पश्चाद्बलतीत्यर्थः इति कृताकृतभेदः । *अभा.४३

स्वतन्त्रास्वतन्त्रविचारः

**[१]त्रयः स्वतन्त्रा लोकेऽस्मिन् राजाचार्यस्तथैव च ।**
**प्रतिवर्णं च सर्वेषां वर्णानां स्वे गृहे गृही ॥**

(१) अस्मिन् लोके एते यथोक्तास्त्रयोऽपि स्वतन्त्रा उत्तराधरविशेषापेक्षया । तद्यथा, राजा स्वतन्त्र उत्तरगुरुनिरपेक्षत्वात्, प्रजावरत्वापेक्षया । आचार्योऽपि शिष्याधरापेक्षया । तथा सर्वेषां वर्णानामपि स्वकीये स्वकीये गृहे गृही अधरपरिग्रहापेक्षया स्वतन्त्र इत्युक्तम् । अभा.४२

(२) गृहीति वदन् गृहिण्याः स्वतन्त्रता नास्तीति दर्शयति । तेन यद्यपि मातृमतोऽस्वतन्त्रतोक्ता तथापि न मातुः स्वतन्त्रताऽवगन्तव्या । अत एवाभर्तृकया कृतस्य कार्यस्य पुत्राद्यनुमत्यैव सिद्धिरुक्ता । स्मृच.१३२

**[२]अस्वतन्त्राः प्रजाः सर्वाः स्वतन्त्रः पृथिवीपतिः ।**
**अस्वतन्त्रः स्मृतः शिष्य आचार्ये तु स्वतन्त्रता ॥**

---

* नाभा. अभावद्भावः ।

(लश्रे) था श्रे (था ज्ये); **स्मृच**.१३२; **स्मृसा**.१२४; **पमा**. २१८ ले (ल) ना (न); **व्यचि**.१०२ स्थश्च यो (श्च तयोः); **चन्द्र**.१६९ ले (ल) कृतिस्थ (ज्ञाभीष्ट); **व्यसौ**.९४ प्रकृ ... वेत् (स्यात्प्रकृष्टश्च यो यतः); **वीमि**.२।३२ न्त्रकृतं कृतम् (न्यकृतं तथा); **प्रका**.८३; **समु**.७२.

(१) **नासं**.२।२८ वर्णे (प्रति) स्वे (स्व); **नास्मृ**.४।३२; **अभा**.४२; **स्मृच**.१३२ प्रतिवर्णं च (प्रकृतिस्थश्च) स्वे (स्व); **प्रका**.८३ स्मृचवत्; **समु**.७२ स्मृचवत्.

(२) **नासं**.२।२९ तु (च); **नास्मृ**.४।३३; **शुनी**. ४।७८०-७८१; **अभा**.४२; **मेधा**.८।१६३ उत्त.; **व्यक**. १०४ **पू**.; **स्मृच**.१३१; **स्मृसा**.१२४; **पमा**.२१७; **व्यचि**. १०३ न्त्रः स्मृतः शिष्य (न्त्राः स्मृताः शिष्याः); **व्यत**.२३२ र्ये तु (र्यस्य); **सवि**.२८६-२८७ र्ये तु (र्येषु) शेषं व्यचिवत्; **चन्द्र**.१७१; **व्यसौ**.९४; **व्यप्र**.९५; **प्रका**.८२; **समु**.७१.

**[१]अस्वतन्त्राः स्त्रियः पुत्रा दासादिश्च परिग्रहः ।**
**स्वतन्त्रस्तत्र तु गृही यस्य यत्स्यात्क्रमागतम् ॥**

(१) अत्र श्लोकद्वयेऽपि इतरेतरापेक्षया स्वतन्त्रत्वमस्वतत्रत्वं च प्रदर्शितमिति । अभा.४२

(२) अत्र स्वतन्त्रनिरूपणमस्वतन्त्रकृतं कार्यं तेनैव निवर्तनीयमिति दर्शयितुम् । परिग्रहा उपजीविनः । स्मृच.१३०-१३१

**[२]गर्भस्थैः सदृशो ज्ञेय आष्टमाद्वत्सराच्छिशुः ।**
**बाल आषोडशाद्वर्षात्पोगण्डश्चापि शब्यते ॥**

---

(१) **नासं**.२।३० दिश्च (श्च स) यत्स्यात् (स्यात्तत्); **नास्मृ**.४।३४; **अभा**.४२; **मेधा**.८।१६३ दिश्च (यश्च) (स्वतन्त्रस्तु गृही यस्य तस्य तत्स्यात्क्रमागतम् ); **व्यमा**.२८८ दिश्च (श्च स) गृही (स्वामी) यत्स्यात् (ते स्युः) तम् (ताः) कौण्डिण्यः; **व्यक**.१०४ दिश्च (वाश्च) हः (हाः); **स्मृच**. १०३ (अस्वतन्त्राः स्त्रियः सर्वाः पुत्रा दासाः परिग्रहाः) यत् (तत्); **व्यत**.२३२ व्यचिवत्; **सवि**.२८७ सादि (सो य): ५०१ दिश्च (वाश्च) हः (हाः) **पू**.; **चन्द्र**.१७१ दिश्च (श्च स) तत्र (तस्य) यत्स्यात् (स्यात्तत्) पू.; **व्यसौ**.९४ दिश्च (यश्च) तत्र (तस्य) यत् (तत्); **व्यप्र**.९५ दिश्च (वाश्च) पू.; **विता**. ९२ (अस्वतन्त्राः स्त्रियः शिष्याः पुत्रा दासाः परिग्रहाः) पू.; **प्रका**.८२ स्मृचवत्, पू.; **समु**.७१ पूर्वार्धं स्मृचवत् (अस्वतन्त्रः स तु गृही तस्य स्यात् यत्क्रमागतम् ); **विव्य**.४ दासादिश्च (बालाश्च स) पू., कौडिण्यः.

(२) **नासं**.२।३१ स्थैः (स्थ) श्चापि (श्चेति); **नास्मृ**.४।३५ स्थैः (स्थ) आष्ट (अष्ट) श्चापि शब्यते (इति शस्यते); **अभा**. ४२ स्थैः (स्थ) आष्ट (अष्ट) शब्यते (शस्यते); **मिता**.२।५० श्चापि (श्चेति); **व्यमा**.३४६ ण्डश्चा (ण्डो वा) उत्त.; **अप**.२। २५ द्वर्षात् (ज्ञेयः); **व्यक**.१०४ आष्ट (अष्ट) ल आ (लश्चा) श्चापि (श्चेति); **स्मृच**.१३०; **ममु**.८।१४८ ब्यते (भिद्यतः) उत्त.; **स्मृसा**.१२४ शब्यते (गद्यते); **पमा**.२१६ श्चापि शब्यते (इति कथ्यते); **व्यचि**.६७ (=) (बालस्त्वाषोडशाज्ज्ञेयः पोगण्डश्चेति कथ्यते) उत्त.:१०३ स्मृसावत्; **स्मृचि**.१३ मितावत्:२१ श्चापि शब्यते (श्चेति कीर्त्यते); **नृप्र**.२० श्चापि शब्यते (श्चेति शस्यते); **व्यत**.२२३ उत्त.:२३२ आष्ट (अष्ट) ण्डश्चापि शब्यते (ण्डोऽपि निगद्यते); **सवि**.२८७ आष्ट (अष्ट) श्चापि (श्चेति); **मच**.८।१४८ ममुवत्, उत्त.; **चन्द्र**.१७१ श्चापि शब्यते (श्चेति कथ्यते); **व्यसौ**.९४ श्चापि शब्यते (श्चेति कीर्तितः); **व्यप्र**.९५:२६३-२६४ मितावत्; **सेतु**.८८ उत्त.; **विभ**.७९ उत्त.; **प्रका**.८२; **समु**.७१; **विच**.१३७ उत्त.

कार्यकारणयोग्यत्वापेक्षया एतदुच्यते । अष्टमाद्वत्सरा-दर्वाक् गर्भस्थसदृशः शौचाद्यक्षमः । अष्टभ्यः परतः शौचाध्ययनक्षमः बाल इत्युच्यते । पोगण्डश्च व्यवहारे अक्षमः आ षोडशाद्वत्सरादिति । अभा.४२

**परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते ।**
**जीवतोरस्वतन्त्रः स्याज्जरयापि समन्वितः ॥**

(१) तावत्पुत्रोऽपि वृद्धत्वमपि प्राप्त अविभक्तभाग अस्वतन्त्र एवेति । अभा.४२

(२) इत्येतदपि पारतन्त्र्यं मातापित्रर्जितद्रव्यविषयम् । मिता.२।१२१

**तयोरपि पिता श्रेयान् बीजप्राधान्यदर्शनात् ।**
**अभावे बीजिनो माता तदभावे तु पूर्वजः ॥**

(१) अत्र मातापित्रोः समानं गौरवमुक्त्वा विशेषं दर्शयति । तयोरपि मातापित्रोः पिता श्रेयान् । बीजप्राधान्यात् । बीजिनस्तु अभावे माता, मातुरभावे तत्पूर्वजः श्रेयान् । उत्तरोत्तरापेक्षया चाधरस्यास्वतन्त्रत्वं तदनुदर्शितम् । अभा.४२

(२) अनेन ज्येष्ठवानप्यस्वतन्त्र इत्युक्तम् । स्मृच.१३०

(३) एवं च बालस्यापितृकस्य मात्रा कृतो व्यवहारः सिध्यत्येव स्वतन्त्रकृतत्वात् । चन्द्र.१७१

(१) **नासं**.२।३२ तोर (तोर्ध्व); **नास्मृ**.४।३६ रावृते (रौ विना); **शुनी**.४।७७७ उत्त.; **मेधा**.८।१६३ (=) उत्त.; **मिता**.२।१२१ उत्त.; **अप**.२।२५ पू.; **व्यक**.१०४; **स्मृच**.१३० रावृते (रं विना) तोर (तोर्न); **स्मृसा**.१२४; **पमा**.२१६ तोर (तोर्न); **व्यचि**.१०३; **व्यनि**.रस्व (श्चस्व) उत्त.,मनुः; **स्मृचि**.२१ पमावत्, उत्त.; **नृप्र**.३५ व्यनिवत्, उत्त.; **व्यत**.२३२ पमावत्; **सवि**.२८७ व्यनिवत्, उत्त.:३७४; **चन्द्र**.१७१ पमावत्; **व्यसौ**.९४पमावत्; **व्यप्र**.९५:४५३ उत्त., व्यनिवत्; **व्यउ**.७८ पू.; **विता**.३२० व्यनिवत्, उत्त.; **राकौ**.४५१ समन्वि (परिप्लु) उत्त.; **विभ**.६५ उत्त.: ७९ पू.; **प्रका**.८२ स्मृचवत्; **समु**.७१ रावृते (रौ विना) तोर (तोर्न).

(२) **नासं**.२।३३; **नास्मृ**.४।३७; **शुनी**.४।७७८; **अभा**.४२; **मेधा**.८।१६३ (=) (तयोरपि पिता श्रेयो न भावे बीजिनो मतः) पू.; **व्यक**.१०४; **स्मृच**.१३०:२९७ (=) पू.; **स्मृसा**.१२४; **पमा**.२१७; **व्यचि**.१०३; **स्मृचि**.२१ मनुः; **व्यत**.२३२; **सवि**.२८७; **चन्द्र**.१७१; **व्यसौ**.९४; **व्यप्र**.९५:५२४ पू., स्मरणम्; **प्रका**.८२; **समु**.७१.

**स्वतन्त्राः सर्व एवैते परतन्त्रेषु सर्वदा ।**
**अनुशिष्टौ विसर्गे च विक्रये चेश्वरा मताः ॥**

(१) एते पश्चादुक्ताः स्वतन्त्राः राजाचार्यगृहपतयः ते सर्वेऽपि स्वकीयपरतन्त्रेष्वेव सर्वदा । तद्यथा, राजा स्वतन्त्रः प्रजासु । परतन्त्रेष्वेतेषु स्वतन्त्रता । अनुशिष्टौ आक्रोटने ताडने विसर्गे परित्यागे विक्रयेऽपि यावदीश्वराः प्रभव इत्यर्थः । अभा.४२-४३

(२) एते पूर्वोक्ता राजादयः । एतच्च स्वातन्त्र्या-स्वातन्त्र्यप्रतिपादनं स्वतन्त्रानुमतिं विना परतन्त्रेण कृतमपि राज्ञा निवर्तनीयमिति प्रतिपादयितुं, न त्वदृष्टार्थं, कृतनिवृत्त्यङ्ग एवास्य नारदेनापि लिखनात् । 'विक्रये चेश्वरा मता' इत्युपसंहाराच्च । स्मृसा.१२४-१२५

(३) अनुशिष्टौ अनुशासनमनुशिष्टिः । अदादिषु द्रष्टव्यः, लिङ्गं च 'शासु अनुशिष्टौ' इति । कर्तव्यताकर्तव्यतयोः प्रवृत्तिनिवृत्त्योरित्यर्थः । निसर्गे च दाने च तैर्दत्तं दत्तं भवति । विसर्ग इति पाठान्तरम् । परित्यागः । तेषां शासने अनवस्थाने द्रव्याणां च यथेष्टं विक्रये च स्वतन्त्राः । नान्यत्र मरणादौ । नाभा.२।३४

## बृहस्पतिः

उक्तनिवर्तनापवादः

**यः स्वामिना नियुक्तस्तु धनायव्ययपालने ।**
**कुसीदकृषिवाणिज्ये निसृष्टार्थस्तु स स्मृतः ॥**
**प्रमाणं तत्कृतं सर्वं लाभालाभव्ययोदयम् ।**

(१) **नासं**.२।३४ विस (निस); **नास्मृ**.४।३८; **शुनी**.४।७८२-७८३ सर्वदा (नित्यशः)' च विक्रये (वा विसर्गे); **अभा**.४२; **मेधा**.८।१६३ ष्टौ (ष्टा) चेश्व (विस्व) उत्त.; **व्यक**.१०५ सर्वदा (नित्यशः); **स्मृसा**.१२४ व्यकवत्; **व्यचि**.१०३ व्यकवत्; **व्यप्र**.९६ व्यकवत्.

(२) **व्यक**.१०५; **स्मृच**.१३१; **स्मृसा**.१२५ पाल (साध) तु स स्मृतः (स उच्यते); **पमा**.२१८ व्ययपालने (स्यापलापने); **व्यचि**.१०४; **व्यत**.२३३ क्तस्तु (क्तोऽपि); **सवि**.५०२ नियु (ऽभियु); **चन्द्र**.१७२; **व्यसौ**.९५ र्थस्तु स (र्थे तु यः); **व्यप्र**.९५; **विता**.९३; **प्रका**.८३; **समु**.७२.

(३) **व्यक**.१०५ प्रमाणं तत् (तत्र प्रमाणं); **स्मृच**.१३१; **स्मृसा**.१२५ दयम् (दयौ) संवदेत् (चालयेत्); **व्यचि**.१०४; **व्यत**.२३३; **सवि**.५०२; **चन्द्र**.१७२ सर्वं (कार्यं); **व्यसौ**.९५ तत्र वि (सर्वं तु); **व्यप्र**.९५; **प्रका**.८३; **समु**.७२.

स्वदेशे वा विदेशे वा स्वामी तत्र विसंवदेत् ॥
पितृव्यभ्रातृपुत्रस्त्रीदासशिष्यानुजीविभिः ।
यद् गृहीतं कुटुम्बार्थे तद् गृही दातुमर्हति* ॥

## कात्यायनः

निवर्तनीया व्यवहाराः

[1]उन्मत्तेनैव मत्तेन तथा भावान्तरेण वा ।
यद्दत्तं यत्कृतं वाऽथ प्रमाणं नैव तद्भवेत् ॥
[2]अस्वतन्त्रकृतं कार्यं तस्य स्वामी निवर्तयेत् ।
न भर्ता विवदेतान्यो भीतोन्मत्तकृतादृते ॥

भीतोन्मत्तकृतनिवर्तने राज्ञ एवाधिकारात् भीतोन्मत्तादिस्वामिना कृतनिवर्तकेन सहान्यस्य विवादो नात्यन्तानुचित इत्यभिप्रायः । स्मृच.१३१

[3]पिताऽस्वतन्त्रः पितृमान् भ्राता भ्रातृव्य एव वा ।
कनिष्ठो वाऽविभक्तस्वो दासः कर्मकरस्तथा ॥
[4]न क्षेत्रगृहदासानां दानाधमनविक्रयाः ।
अस्वतन्त्रकृताः सिद्धिं प्राप्नुयुर्नानुवर्णिताः ॥

नानुवर्णिताः स्वतन्त्रेण पित्रादिना नानुमताः । अनुमताः सिध्येयुरेवेत्यर्थादुक्तं भवति । व्यप्र.९४

उक्तनिवर्तनापवादः

[5]प्रमाणं सर्व एवैते पण्यानां क्रयविक्रये ।
यदि संव्यवहारं ते कुर्वन्तो ह्यनुमोदिताः ॥

[1]क्षेत्रादीनां तथैव स्युर्भ्राता भ्रातृसुतः सुतः ।
निसृष्टाः कृत्यकरणे गुरुणा यदि गच्छता ॥
[2]निसृष्टार्थस्तु यो यस्मिंस्तस्मिन्नर्थे प्रभुस्तु सः ।
तद्भर्ता तत्कृतं कार्यं नान्यथा कर्तुमर्हति ॥

स्वतन्त्रकृतोऽपि कश्चिद् व्यवहारो निवर्तनीयः

[3]सुतस्य सुतदाराणां वशित्वं त्वनुशासने ।
विक्रये चैव दाने च वशित्वं न सुते पितुः ॥

(१) स्वतन्त्रप्रकृतिस्थकृतमपि पुत्रविक्रयादिकार्यं न सिध्यति । तत्र तस्यास्वातन्त्र्यादित्याह कात्यायनः — सुतस्येति । अतः सुतविक्रयादिकार्यं स्वतन्त्रप्रकृतिस्थकृतमपि निवर्तनीयमित्यभिप्रायः । एकपितृविषयमेतदिति तद्दत्ताप्रदानिकाख्यपदे वक्ष्यामः । स्मृच.१३२

(२) एतद्दर्शनान्नारदेन 'विक्रये चेश्वरा मताः' इति दानविक्रययोः प्रभुत्वप्रतिपादनं तत्पशुक्षेत्रादिविषयं, न तु पुत्रादिदानविक्रययोरपि पितुः प्रभुत्वं इति मन्तव्यम् । स्मृसा.१२५-१२६

(३) एतेन, 'अनुशिष्टौ विसर्गे च विक्रये चेश्वरा मताः' इति नारदीयं दानविक्रययोः प्रभुत्वप्रतिपादनार्थं पुत्रत्वेन दानविक्रयपरमतो न विरोध इत्यर्थः । पुत्रस्यानुमतौ पितुस्तद्दानादौ प्रभुत्वमननुमतौ त्वप्रभुत्वमिति संप्रदायः । व्यचि.१०४-१०५

(४) एतदप्यनापदीति वक्ष्यते । व्यप्र.९६

---

* व्याख्यासंग्रहः स्थलादिनिर्देशश्च ऋणादानप्रकरणे द्रष्टव्यः।

(१) **स्मृच**.१३०; **पमा**.२१६ भावा (वाचा); **प्रका**.८२ यमः; **समु**.७१ वाऽथ (वाऽपि).

(२) **स्मृच**.१३१; **सवि**.५०१-५०२ भर्ता विव (वार्तादिव); **प्रका**.८२; **समु**.७१ र्ता (र्त्रा).

(३) **व्यक**.१०४; **स्मृसा**.१२५ स्वो दा (त्वादा); **व्यचि**.१०४; **स्मृचि**.२१ स्वो (स्थो) कर्म (परि); **चन्द्र**.१७१; **व्यसौ**.९४; **व्यप्र**.९५ स्वो (स्थो); **विता**.९३ स्मृचिवत्.

(४) **व्यक**.१०४; **स्मृच**.१३१; **स्मृसा**.१२४; **पमा**.२१७ कृताः (कृतः) युर्ना (यान्ना) र्णिताः (र्णिताम्); **व्यचि**.१०२; **सवि**.५०१ र्णिताः (र्णितम्); **व्यसौ**.९४ वर्णि (मोदि); **वीमि**.२।३२ नारदः; **व्यप्र**.९४ क्र (क्रि); **प्रका**.८३; **समु**.७२ नानु (नं तु).

(५) **व्यक**.१०५ ते कु (प्राकु); **स्मृच**.१३१; **स्मृसा**.१३५ व्यकवत्; **पमा**.२१८ सं (स्वं); **व्यचि**.१०४ व्यकवत्; **चन्द्र**.१७१-१७२ व्यकवत्; **व्यप्र**.९४ रं (रात्); **विता**.९३र्व ए (र्वमे) ते कु (प्राकु) ह्य (ऽप्य); **प्रका**.८३; **समु**.७२ ते कु (प्रकु).

(१) **व्यक**.१०५; **स्मृच**.१३१; **स्मृसा**.१२५; **पमा**.२१८ नां (नि) च्छता (च्छतः); **व्यचि**.१०४; **चन्द्र**.१७२; **व्यप्र**.९४ कृत्य (कार्य); **प्रका**.८३; **समु**.७२ स्युः (स्यात्).

(२) **व्यक**.१०५; **स्मृच**.१३१; **स्मृसा**.१२५ यस्मिंस्त (यस्य त); **व्यचि**.१०४; **व्यप्र**.९४; **विता**.९३ भुस्तु (भुश्च); **प्रका**.८३; **समु**.७२.

(३) **शुनी**.४।७८१-७८२; **व्यक**.१०५; **स्मृच**.१३२: १९१ स्मृत्यन्तरम्; **स्मृसा**.१२५ सुतस्य (अस्वतन्त्र) त्व (ह्य); **पमा**.२१९:३१५ सुतस्य (अतश्च); **व्यचि**.१०४ त्वनु (त्वथ); **स्मृचि**.१९ (=); **नृप्र**.२७; **व्यसौ**.९५ त्वनु (अनु); **व्यप्र**.९६ व्यसौवत्: ३०६; **प्रका**.८३; **समु**.९४.

## हारीतः

निवर्तनीया व्यवहाराः

[1]राज्ञा विवर्जितो यश्च स्वयं पौरविरोधकृत् ।
राष्ट्रस्य वा समस्तस्य प्रकृतीनां तथैव च ॥
[2]अन्ये वा ये पुरे ग्रामे महाजनविरोधकाः ।
अनादेयास्तु ते सर्वे व्यवहाराः प्रकीर्तिताः ॥

एवं चैवंविधव्यवहारं तीरितमप्यनुशिष्टमपि निवर्त्य व्यवहारान्तरं कर्तव्यमिति तात्पर्यार्थोऽनुसंधेयः ।

स्मृच. १२८

(१) मिता. २।६ (=) स्वयं (यश्च); **स्मृच. १२८** यश्च (यस्तु); **पमा. २१५** स्मृचवत्; **व्यचि. ८** यश्च (यस्तु) स्वयं (यस्तु) नारदः; **चन्द्र. १०४** स्वयं (यश्च) स्तस्य (ग्रस्य); **व्यम. ७** श्च स्वयं (स्तु यश्च) स्मृत्यन्तरम्; **विता. ५९** (=) तो यश्च स्वयं (तं यच्च यच्च); **प्रका. ७०.**

(२) **स्मृच. १२८; पमा. २१५** रे ग्रामे (नग्रांम); **व्यचि. ८** वा (ऽपि) रे ग्रामे (रग्राम) धकाः (धिनः); **चन्द्र. १०४** वा (यां) पुरे ग्रामे (परग्रास) धकाः (धिनः); **व्यम. ७** रे ग्रामे (रग्राम) स्मरणम्; **विता. ५९** वा (ऽपि); **प्रका. ७०.**

[1]दानार्थे वा धनार्थे वा धर्मार्थे वा विशेषतः ।
आदाने वा विसर्गे वा न स्त्री स्वातन्त्र्यमर्हति ॥

## यमः

श्रुतिस्मृतिविरुद्धं च भूतानामहितं च यत् ।
न तत्प्रवर्तयेद्राजा प्रवृत्तं च निवर्तयेत् *॥
[2]बलाद्दत्तं बलाद्भुक्तं बलाद्यच्चापि लेखितम् ।
सर्वान्बलकृतानर्थान् निवर्त्यानाह वै मनुः ॥

## स्मृत्यन्तरम्

अनिवर्तनीयौ दानविक्रयौ

[3]गोभूहिरण्यरत्नानामात्मीयानां स्त्रियं विना ।
विक्रयाधिप्रदानं तु कृतं सिध्येन्नृभिः सदा ॥

* स्थलादिनिर्देशः दर्शनविधौ (पृ. १०६) द्रष्टव्यः ।

(१) **व्यक. १०५** सर्गे (शुद्धे); **स्मृच. १३०; स्मृसा. १२५; पमा. २१७** दाना ... वा (दाने वाऽऽधमने वाऽपि); **व्यचि. १०४; व्यसौ. ९४; व्यप्र. ९५; प्रका. ८२; समु. ७१.**

(२) **स्मृच. १३०; पमा. २१६** द्यच्चापि (च्चापि वि); **प्रका. ८३; समु. ७१** दत्तं (दृत्तं). (३) **समु. ७१.**

# दण्डमातृका

## वेदाः

दण्ड्यदमनं साधुपालनं च राज्ञः कर्तव्यम्

**[1]शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः । एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान् ॥**

अयमिन्द्रो वीरो वीर्यवानिति शृण्वे । श्रूयते । किं कुर्वन् । उग्रमुग्रमुद्गूर्णमुद्गूर्णं बलिनं शत्रुं प्रति दमायन् । दमः दमनम् । बाधनमिच्छन् । अन्यमन्यं प्रथमं नेतव्यमन्यं पश्चान्नेतव्यं चान्यं पूर्वमपरं परस्परव्यतिहारेण स्तोतॄनतिनेनीयमानोऽत्यन्तं पुनः पुनर्नयन् । अपि चैधमानद्विट् एधमानानां वर्धमानानामसुन्वतां द्वेष्टोभयस्य दिव्यस्य पार्थिवस्य च धनस्य राजेश्वरोऽयमिन्द्रो विशो निवेशयितॄन् स्वस्य परिचारकान्मनुष्यान् चोष्कूयते । रक्षणार्थं पुनः पुनराह्वयति । ऋसा.

**[2]हन्ति रक्षो हन्त्यासद्वदन्तम् ।**

हन्ति असत् असत्यं वदन्तम् । सोमो देवः हन्ति । ऋसा.

**[3]जहा को अस्मदीषते ।**

अपापकं जघान कमहं जातु । कोऽस्मद्भीतः पलायते । नि.४।२

[ दुर्गाचार्यकृतव्याख्यानम्—'अपापकं' 'कं' 'अहं' 'जातु'इति सर्वमेतत् अध्याहृतं भाष्यकारेण,जहाशब्दस्य निराकाङ्क्षीकरणार्थमधस्ताच्चोपरिष्टाच्च।एवं हि जहाशब्दः परिसमाप्त्यर्थो भवति । न कदाचिदपि कश्चिदपापको मया हतपूर्व इति,पापकारिणं तु हन्मीत्यभिप्रायः। ते यूयम पापा एवाजस्रं भूयास्थ, न वो हनिष्यामि । यत्पुनरेतदुक्तं भवद्भिः 'भूरिष्वप्यागस्सु मास्मान् वधीः' इति, कथमागस्कारी न हन्यते ? 'श्वा पुरोडाशमवलिह्यात्' न च कस्यचित् कस्मिंश्चिदपि स्वता स्यात्, सर्वं वा असमञ्जसमेव स्यात्, यदि पापकारिणो न हन्येरन्, अथ मनुष्यानपापानपि त्वं हन्त्येवेति । अत्र ब्रूमः 'कः' 'अस्मत्' अस्मत्तः अपापकारी सन् 'भीतः ईषते 'पलायते' इत्यर्थः । ]

(१) ऋसं.६।४७।१६. (२) ऋसं.७।१०४।१३.
(३) ऋसं.८।४५।३७.

अब्राह्मणेन विरोधे ब्राह्मणोऽदण्ड्यः

**[1]यद्ब्राह्मणश्चाब्राह्मणश्च प्रश्नमेयातां ब्राह्मणायाधि ब्रूयाद्यद्ब्राह्मणायाध्याहाऽऽत्मनेऽध्याह यद्ब्राह्मणं पराहाऽऽत्मानं पराऽऽह तस्माद्ब्राह्मणो न परोच्यः ॥**

यदि लोके ब्राह्मणाब्राह्मणौ विवदमानावहमेवाधिक इति अधिविषयं प्रश्नं कर्तुं कंचिदभिज्ञं प्रत्यागच्छेतां, तदानीं सोऽभिज्ञो ब्राह्मणस्यैवाधिक्यं ब्रूयात्तेन वक्तुः स्वस्यैवाधिक्यं संपादितं भवति । ब्राह्मणस्य पराभववचने स्वस्यैव पराभव उक्तो भवति । तस्मात्कदाचिदपि ब्राह्मणः पराभवविषयो न कर्तव्यः। सोऽयं प्रासङ्गिकः पुरुषार्थो विधिर्द्रष्टव्यः । तैसा.

ब्राह्मणोऽवध्यः

**[2]देवा वै यज्ञस्य स्वगाकर्तारं नाविन्दन्ते शंयुं बार्हस्पत्यमब्रुवन् इमं नो यज्ञँ स्वगा कुर्विति । सोऽब्रवीत् वरं वृणै । किं मे प्रजाया इति । योऽपगुरातै शतेन यातयाद्यो निहनत् सहस्रेण यातयाद् यो लोहितं करवद्यावतः प्रस्कद्य पाँसून्त्संगृण्हात्तावतः संवत्सरान् पितृलोकं न प्रजानादिति तस्माद्ब्राह्मणाय नाऽप गुरेत न निहन्यान्न लोहितं कुर्यात् ।**

दण्डाध्यक्षो राजन्यः

**[3]देवा वै मित्रमब्रुवन्वृत्रं हनामेति, नेत्यब्रवीन्मित्रोऽहमस्मि न हिंनस्मीति, हनामैवेत्यब्रुवन्सोऽब्रवीद्वार्यं वृणै पयसा मे सोमं श्रीणानिति, तस्मात्पयसा मैत्रावरुणं श्रीणन्ति, वार्यवृतं ह्यस्य ततो वृत्रमघ्नंस्तस्माद्राजन्येनाध्यक्षेण वैश्यं घ्नन्ति ।**

(१) तैसं.२।५।११।९. (२) तैसं.२।६।१०।१-२.
(३) कासं.२७।४.

ब्राह्मणोऽवध्यः

[1]य एनं हन्ति मृदुं मन्यमानो देवपीयुर्धनकामो न चित्तात् ।
स तस्येन्द्रो हृदयेग्निमिन्ध उभे एनं द्विष्टो नभसी चरन्तम् ॥
न ब्राह्मणो हिंसितव्योऽग्निः प्रियतनोरिव ।
सोमो ह्यस्य दायाद इन्द्रो अस्याभिशस्तिपाः ॥
[2]एकशतं ता जनता या भूमिर्व्यधूनुत ।
प्रजां हिंसित्वा ब्राह्मणीमसंभव्यं पराभवन् ॥
देवपीयुश्चरति मर्त्येषु गरगीर्णो भवत्यस्थिभूयान् ।
यो ब्राह्मणं देवबन्धुं हिनस्ति न स पितृयाणमप्येति लोकम् ॥
[3]अतिमात्रमवर्धन्त नोदिव दिवमस्पृशन् ।
भृगुं हिंसित्वा सृञ्जया वैतहव्याः पराभवन् ॥
[4]तद्वै राष्ट्रमा स्रवति नावं भिन्नामिवोदकम् ।
ब्रह्माणं यत्र हिंसन्ति तद् राष्ट्रं हन्ति दुच्छुना ॥
[5]नवैव ता नवतयो या भूमिर्व्यधूनुत ।
प्रजां हिंसित्वा ब्राह्मणीमसंभव्यं पराभवन् ॥

पापकारी सर्वः शूद्रवद्दण्ड्यः

[6]स होवाच शुनःशेपो यः सकृत्पापकं कुर्यात्कुर्यादेनत्ततोऽपरम् । नापागाः शौद्रान्न्यायादसंधेयं त्वया कृतमिति ।

यः पुमान्धर्मशास्त्रभीतिरहितः सकृत्पापकं कुर्यात्स पुमांस्ततः पापादन्यदेनत्पापं तदभ्यासवशात् कुर्यादेव । त्वं तु शौद्रान्न्यायान्नीचजातिसम्बन्धिनः क्रूरादाचरणान्नापागा अपगतो न भवसि । ऐब्रासा.

पापी दण्ड्यः

[7]तद्यथाऽभ्यागारमभिनिनर्त पुनः पुनः पाप्मानं निर्हन्यादेवमेव ।

ब्राह्मणो राज्ञाऽदण्ड्यः

[8]सोमोऽस्माकं ब्राह्मणानाꣳ राजेति, तदस्माऽइदꣳ सर्वमाद्यं करोति, ब्राह्मणमेवापोद्धरति, तस्माद् ब्राह्मणोऽनाद्यः सोमराजा हि भवति ।

(१) असं.५।१८।५-६. (२) असं.५।१८।१२-१३. (३) असं.५।१९।१. (४) असं.५।१९।८. (५) असं.५।१९।१०. (६) ऐब्रा.३३।५. (७) शांब्रा.१७।८.(८) शब्रा.५।४।२।३.

राजाऽदण्ड्यः

[1]अथैनं पृष्ठतस्तूष्णीमेव दण्डैर्घ्नन्ति । तं दण्डैर्घ्नन्तो दण्डवधमतिनयन्ति तस्माद्राजाऽदण्ड्यो यदेनं दण्डवधमतिनयन्ति ।

श्रोत्रियब्राह्मणोऽदण्ड्यः

[2]प्रज्ञा वर्धमाना चतुरो धर्मान्ब्राह्मणमभिनिष्पादयति, ब्राह्मण्यं प्रतिरूपचर्यां यशो लोकपक्तिं, लोकः पच्यमानश्चतुर्भिर्धर्मैर्ब्राह्मणं भुनक्त्यर्चया च दानेन चाज्येयतया चावध्यतया च ।

[3]यत्त्रिवृतमभिषेचनीये कुर्युर्ब्रह्म क्षत्रायापि दध्युर्यत्त्रिवृतमुद्धरन्ति ब्रह्म तत्क्षत्रादुद्धरन्ति तस्माद्भरतां प्रति दण्डा ब्राह्मणा न हि त्रिवृतमभिषेचनीये कुर्वन्ति ।

भरतां भरणं कुर्वतां क्षत्रियाणाम् । तासा.

सर्वदेवतारूपो राजा दण्डधारकः, राज्ञः सर्वो दण्ड्यः

[4]सह वा इदमभवत् । देवाश्च मनुष्याश्च ते यदोपकारैर्न शेकुर्मनुष्यानात्मीकर्तुं अथ देवास्तिरोबभूवुः, तान् प्रजापतिरब्रवीत् । कः प्रजाः पालयिता भुवि सर्वेऽन्तर्हिताः स्थ । असंरक्ष्यमाणाः प्रजा अधर्मार्दितास्त्यक्ष्यन्तीतः प्रदानमुपजीवनमस्माकमिति । ते देवाः प्रजापतिमब्रुवन् । पुरुषमूर्तिं राजानं करवाम सोमाद् रूपमादायादित्यात् तेजो विक्रममथेन्द्राद् विष्णोर्विजयं वैश्रवणात् त्यागं यमात् संयमनम् ... ... । सोऽब्रवीत् धर्ममेव मे सखायं कुरुध्वं ततोऽहं प्रजाः पालयामीति । ततस्तस्मै धर्मं द्वितीयमकुर्वन् स एष धर्मो निदानेन यद् दण्डः तस्मादेवंविद् राजा दण्डं पितर्यपि पातयेत् । धर्मेणैनं संस्करवाम्याधिपत्यायेन्द्रत्वाय ब्रह्मलोकायेति । ईश्वरोऽहं तथा कर्त्रोः ।

(१) शब्रा.५।४।४।७. (२) शब्रा.११।५।७।१. (३) ताब्रा.१८।१०।८.

(४) विश्व.१।३५०. 'आम्नायश्च' इत्युक्त्वा इदं वचनं पठितम् ।

## गौतमः

दण्डोपदेशयोः प्रयोजनम्

**[१]दण्डो दमनादित्याहुस्तेनादान्तान् दमयेत् ।**

दमयत्यदान्तान् दम्यन्ते वाऽस्मिन्निति दण्डः । यतश्च दमनयोगाद्दण्ड इत्येवं मन्वादय आहुः । अतो यो यथा दम्यते वाचा धनादिना वा । *मभा.

**[२]तानाचार्योपदेशो दण्डश्च पालयते ।**

तान्विपरीतान्यथोक्तमकुर्वतो वर्णानाश्रमांश्च आचार्योपदेशस्तावत्पालयते । तत्राप्यतिष्ठतो राजदण्डः । ×गौमि.

**[३]तस्माद्राजाचार्यावनिन्द्यौ ।**

ततश्च रक्षणहेतुत्वात् कारणे सति पारुष्याद्यपि वक्तव्यम् । अतः परुषमप्युपदिशन्नाचार्यः, उग्रमपि दण्डं धारयन् राजा च, अत्यन्तोपकारित्वादकुत्सनीयौ । *मभा.

दण्ड्याः

**[४]राजा सर्वस्येष्टे ब्राह्मणवर्जम् ।**

राजा पूर्वमुक्तः, सर्वस्य विषयवासिनो जनस्य, निग्रहानुग्रहाचारभोगनियोगेषु प्रभुः, निग्रहे अपराधिनां, अनुग्रहेऽनुग्राह्याणां, आचारे मर्यादाऽवस्थाने, भोगे करग्रहणे, नियोगे पुरुषाणां शिष्टकरणे । अस्यापवादः— ब्राह्मणवर्जं ब्राह्मणान्मुक्त्वेत्यर्थः । अपचारेऽपि सतः सान्त्वपूर्वमेनान् स्वधर्मे स्थापयेत्, न त्वितरवर्णवन्निग्रहेणेति द्रष्टव्यम् । आरम्भप्रयोजनं सर्वक्रियासु स्वतन्त्रताख्यापनार्थम् । तथा च नारदः —'अस्वतन्त्राः प्रजाः सर्वाः स्वतन्त्रः पृथिवीपतिः' इति । *मभा.

---

* गौमि. मभावत् । × मभा. गौमिवत् ।

(१) **गौध.**११।३०; **मिता.**१।३५४; **अप.**२।२६; **मभा.**; **गौमि.**११।२८; **स्मृच.**१२७; **व्यम.**११० आपस्तम्बः; **प्रका.**८०; **समु.**६९.

(२) **गौध.**११।३३; **मभा.**; **गौमि.**११।३१.

(३) **गौध.**११।३४; **मिता.**२।२०; **मभा.**; **गौमि.**११।३२; **विता.**१०७; **समु.**१०.

(४) **गौध.**११।१; **मिता.**२।४ वर्जम् (वर्ज्यम्); **मभा.**; **गौमि.**११।१; **विर.**६३३; **दवि.**४४; **विता.**२८; **बाल.**२।२६; **समु.**६९.

श्रोत्रियोऽदण्ड्यः

**[१]षड्भिः परिहार्यो राज्ञा अवध्यश्चाबन्ध्यश्चादण्ड्यश्चाबहिष्कार्यश्चापरिवाद्यश्चापरिहार्यश्चेति ।**

(१) षड्भिर्वक्ष्यमाणैर्वधादिभिः परिहार्यो राज्ञा भवति । परिहारो वर्जनम् । तान्वधादीनाह — अवध्यश्चेति । वधस्ताडनं, बन्धो निगडनं, दण्डोऽर्थापहारः । बहिष्कारो ग्रामादिभ्यो निरसनं, परिवादो दोषसंकीर्तनं, परिहारस्त्यागः । षडेते वधादय एवंभूते बहुश्रुते ब्राह्मणे सत्यबुद्धिपूर्वापराधे राज्ञा वर्ज्याः । बुद्धिपूर्वस्य तु प्रसङ्गाभावात् । इतिशब्दः प्रकारवचने । यच्चान्यदेवंरूपसंभाषादि तदपि वर्ज्यमिति । गौमि.

(२) अनुमन्ता प्रयोजयिता च न स्यादित्येवमर्थः चकारः । इतिकरणं प्रकारवाचि । ततश्च संभाषणादि न कर्तव्यम् । *मभा.

ब्राह्मणस्य वधातिरिक्तो दण्डः

**[२]न शारीरो ब्राह्मणदण्डः ।**

(१) स्वयमुपस्थितस्यापि यः शारीरो दण्डः वधः स ब्राह्मणस्य नास्ति । तस्मान्न कर्तव्यः । ननु च कर्मवियोगादिदण्डान्तरविधानादेव शरीरस्य निवृत्तिर्भवत्येवेति । उच्यते — सत्यम् । एवमारम्भस्तु अन्यत्रापराधे ब्राह्मणस्य शारीरदण्डप्रतिषेधार्थ इति । मभा.

(२) तपस्विब्राह्मणविषयमिदम् । अन्यस्य तु यथापराधं दण्डमाह—'कर्मवियोगे'त्यादि । गौमि.

(३) तद्वधरूपस्याङ्गभङ्गात्मकस्य निषेधार्थं न पुनरङ्गनिग्रहात्मकस्यापि । स्मृच.१२४

---

* शेषं गौमिवत् ।

(१) **गौध.**८।१२; **मभा.**; **गौमि.**८।१२-१३; **स्मृच.**१२६ वाद्यश्चापरिहार्य (हार्यश्चापरिवाद्य); **विर.**६३२ (बन्ध्यश्चा०); **पमा.**२०७ षड्भिः (षण्ढः)(बन्ध्यश्चा०)(इति०); **दवि.**४४ बन्ध्य (वेध्य); **विता.**२८; **बाल.**२।२६ (बन्ध्यश्चा०) वाद्य (वाह्य); **प्रका.**७९; **समु.**६९.

(२) **गौध.**१२।४३; **मेधा.**८।३१६; **मिता.**२।२६ ब्राह्मण (ब्राह्मणे); **अप.**२।२६,२।२७० ब्राह्मण (ब्राह्मणस्य); **मभा.**; **गौमि.**१२।४३; **उ.**२।२७।१७ स्मरणात्; **स्मृच.**१२४; **विर.**३३० अपवत्; **पमा.**२०८ अपवत्; **विचि.**१४२ (ब्राह्मणस्य न शारीरो दण्डः); **दवि.**१५१; **नृप्र.**१७; **विता.**८६; **बाल.**२।८१,२।२७० अपवत्; **सेतु.**२४४ विचिवत्; **प्रका.**७८; **समु.**६८.

**कर्मवियोगविख्यापनविवासनाङ्ककरणानि ।**
**अवृत्तौ प्रायश्चित्ती सः ।**

(१) ब्राह्मणस्य पुनर्द्रव्याभावे कर्मवियोगादीनि प्रयोज्यानि । मिता.२।२६

(२) अन्यस्य तु यथापराधं दण्डमाह— कर्मवियोगेत्यादि । यथा पुनस्तत्कर्म न करोति तथा करणं कर्मवियोगः । सर्वस्वहरणं प्रतिभूग्रहणमित्यादि । विख्यापनं चौर्यचिह्नेन ग्रामनगरादिष्वाघोषणम् । विवासनं निर्वासनं यथापराधं ग्रामनगराद्राष्ट्राद्वा । अङ्ककरणं चिह्नकरणं । एषां कर्मवियोगादीनामेनःसु गुरुषु गुरूणि लघुषु लघूनीति न्यायेनापराधानुरूपा व्यवस्था । एतन्महापातकविषयम् । अङ्ककरणं तु तपस्विब्राह्मणस्यापि भवत्येव । यस्तु राजा चोरविषयेष्वेवंदण्डको न वर्तते तस्यामप्रवृत्तौ स्वयं प्रायश्चित्ती भवति । गौमि.

(३) तर्हि कथमसौ शास्य इत्यत आह कर्मवियोगेत्यादि । अचौरे एवं कृते स राजा प्रायश्चित्ती भवति । ×मभा.

(४) अवृत्तौ निर्धने । एतदुत्तमसाहसविषयम् । स्मृच.१२४

निमित्तभेदेन दण्डतारतम्यविचारः

**[२]पुरुषशक्त्यपराधानुबन्धविज्ञानाद्दण्डनियोगः ।**

पुरुषो ब्राह्मणादिजातिः । शक्तिरर्थदण्डे बह्वर्थोऽल्पार्थ इति । शरीरदण्डे दुर्बलः प्रबलो वेति चिन्ता । अपराधः साक्षात्कर्तृत्वं साचिव्यकर्तृत्वं वेति । अनुबन्धोऽभ्यासः । एतान्पुरुषादीन्विज्ञाय तदनुरूपो दण्डो नियोक्तव्य इति । +गौमि.

दण्डयोत्सर्गः

**[३]अनुज्ञानं वा वेदवित्समवायवचनात् ।**

वेदविदां सङ्घवचनान्मोक्षो वा कर्तव्यः । सङ्घस्समवायः चतुर्णां त्रयाणां वा । वक्ष्यमाणदशावरपरिषदनुज्ञया वा । एवं च स्वयंकरणे दोषो द्रष्टव्यः । *मभा.

## हारीतः

परिषद्राजा च दण्डधरः

**[२]निग्रहानुग्रहपालनेषु च पर्षत्सर्वेषामुन्मर्यादिनां परदारपरद्रव्यापहारिणां राजा शास्ता भवत्येवं ह्याह ।**

**[३]गुरुरात्मवतां शास्ता राजा शास्ता दुरात्मनाम् ।**
**अथ प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥**
**[४]गुरुभिर्ये न शास्यन्ते राज्ञा वा गूढकिल्बिषाः ।**
**ते नरा यमदण्डेन शास्ता यान्त्यधमां गतिम् ॥**

पर्षत्प्रधानमिति शेषः, मर्यादाभेदनस्यैव परद्रव्याद्यपहरणप्रपञ्चः । आत्मवान् कृतान्यायाचरणे सानुशयः, गुरुरत्र प्रतिकाराधिकृतः । विर.६२६

ब्राह्मणोऽवध्यः

**[५]न त्वङ्गभेदं विप्रस्य प्रवदन्ति मनीषिणः ।**
**तपसा चेज्यया चैव ब्राह्मणः पूयते सदा ॥**

## आपस्तम्बः

संस्कृतानां द्विजानामपराधे प्रायश्चित्तमेव न दण्डः, इतरेषां दण्डः

**[६]शास्त्रैरधिगतानामिन्द्रियदौर्बल्याद्विप्रतिपन्नानां शास्ता निर्वेषमुपदिशेद्यथाकर्म यथोक्तम् ।**

---

× शेषं गौमिवत् । + मभा. गौमिवत् ।

(१) **गौध.**१२।४४-४५; **मिता.**२।२६ विवासनाङ्ककरणानि (निर्वासनाङ्ककरणादीनि) (प्रायश्चित्ती स:०); **अप.**२।२६ वियो (नियो) (प्रायश्चित्ती स:०) :२।२७०विवासनाङ्क (निर्वासनाद्यङ्क) (अवृ ... स:०); **मभा.**; **गौमि.**१२।४४-४५ अवृ (अप्रवृ); **स्मृच.**१२४ (प्रायश्चित्ती स:०); **विर.**३३७ नाङ्क (नाङ्ग) त्ती + (यते हि); **पमा.**२०८ स्मृचवत्; **विचि.**१४२ अवृ (स्ववृ) त्ती + (तु); **दवि.**१५१ करणानि (नानि):४०,२४२ (कर्म ... णानि०); **सेतु.**२४४ अवृ (आवृ) त्ती + (तु); **प्रका.**७८ स्मृचवत्; **समु.**६८ कर्म (धर्म) शेषं स्मृचवत्. (२) **गौध.**१२।४८; **मभा.**; **गौमि**१२।४८.

* गौमि. मभावत् ।

(१) **गौध.**१२।४९; **मभा.**; **गौमि.**१२।४९; **स्मृच.**१२७; **प्रका.**८०; **समु.**६९.

(२) **विर.**६२६. (३) **विर.**६२६; **समु.**७०.

(४) **विर.**६२६; **दवि.**११नारदः; **समु.**७० भिः (र्णा).

(५) **स्मृच.**१२४-१२५; **विर.**६३१-६३२ भे (च्छे) ज्य (ष्ट); **पमा.**२०८ पू.; **नृप्र.**१७ पू.; **विता.**८७ पू.; **बाल.**२।२६; **प्रका.**७८; **समु.**६८ दं (दो).

(६) **आध.**२।१०।१३; **हिध.**२।९; **विर.**६२७ गता (कृता) त्स्यात् (द्ये) निर्वेषमुपदिशे (निर्देशमादिशे); **दवि.**२३१ (शास्ता निर्देशमादिशेत्) एतावदेव.

(१) यथाशास्त्रं गर्भाधानादिभिः संस्कारैः संस्कृताः शास्त्रैरधिगताः तेषामिन्द्रियदौर्बल्यात् अजितेन्द्रियतया विप्रतिपन्नानां स्वकर्मतश्च्युतानां निषिद्धेषु च प्रवृत्तानाम्। शास्ता शासिता आचार्यादिः। निर्वेषं प्रायश्चित्तमुपदिशेत्। यथाकर्म कर्मानुरूपम्। यथोक्तं धर्मशास्त्रेषु। उ.

(२) शास्ता समावर्तनात्प्रागाचार्यः, ऊर्ध्वं पिता पुत्रस्य, यस्य तु शुश्रूषां करोति स शास्ता। निर्देशं प्रायश्चित्तं, यथाकर्म कर्मानुरूपं, महत्यपराधे महान्तमल्पे चाल्पम्। विर.६२७

**[1]तस्य चेच्छास्त्रमतिप्रवर्तेरन् राजानं गमयेत्।**

तस्य चेच्छासितुः शास्त्रं शासनं अतिप्रवर्तेरन् न तत्र तिष्ठेयुः राजानं गमयेत् एवमसौ करोतीति। उ.

**[2]राजा पुरोहितं धर्मार्थकुशलम्।**

स राजा धर्मशास्त्रेष्वर्थशास्त्रेषु कुशलं च पुरोहितं गमयेत्। विनीयतामसाविति। उ.

**[3]स ब्राह्मणान्नियुञ्ज्यात्।**

स पुरोहितः ब्राह्मणाश्चेदतिक्रमणकारिणः प्रापिताः तान्नियुञ्ज्यात् अनुरूपेषु प्रायश्चित्तेषु नियुञ्जीत। उ.

**[4]बलविशेषेण वधदास्यवर्जं नियमैरुपशोषयेत्।**

अथ यदि ते तत्रापि न तिष्ठेयुः, तदा किं कर्तव्यमित्यत आह—बलेति। ततस्तान्नियमैरुपवासादिभिरुपशोषयेत्। बलविशेषेण बलानुरूपम्। वधदास्यवर्जं वधस्ताडनादि, वधं दास्यं च वर्जयित्वा सर्वमन्यत् बन्धनादिकं बलानुरूपं कारयेत् यावत्ते मन्येरन् चरेम प्रायश्चित्तमिति। उ.

**[5]इतरेषां वर्णानामा प्राणविप्रयोगात्समवेक्ष्य तेषां कर्माणि राजा दण्डं प्रणयेत्।**

इतरेषां ब्राह्मणव्यतिरिक्तानां वर्णानां राजा पुरोहितोक्तं दण्डं स्वयमेव प्रणयेत्, तेषां कर्माणि समवेक्ष्य तदनुरूपमा प्राणविप्रयोगात्। अभिविधावाकारः। उ.

(१) आध.२।१०।१४; हिध.२।९; विर.६२७ प्रवर्तें (वर्तें) (२) आध.२।१०।१५; हिध.२।९; विर.६२७ राजा (राज). (३) आध.२।१०।१६; हिध.२।९ युञ्ज्यात् (यच्छेत्); विर.६२७ स ब्राह्मणान् (सुब्राह्मणं). (४) आध.२।१०।१७; हिध.२।९; विर.६२७ वध (पर) शोष (सान्त्व). (५) आध.२।११।१; हिध.२।९; विर.६२७ विप्रयो (वियो).



निमित्तं निर्णीयैव दण्डः कर्तव्यः

**[1]न च संदेहे दण्डं कुर्यात्।**

अपराधसंदेहे राजा दण्डं न कुर्यात्। उ.

**[2]सुविचितं विचित्या दैवप्रश्नेभ्यो राजा दण्डाय प्रतिपद्येत।**

आ दैवप्रश्नेभ्यः साक्षिप्रश्नादिभिः शपथान्तैः सुविचितं यथा भवति तथा विचित्य निरूप्य। राजा दण्डाय प्रतिपद्येत उपक्रमेत। उ.

**[3]एवंवृत्तो राजोभौ लोकावभिजयति।**

एवं कुर्वतः फलमाह—एवमिति। एवंभूतं वृत्तं यस्य स एवंवृत्तः। उ.

प्रथममतिक्रमिणं वचनबद्धं वरिष्ठबद्धं वा कारयेत्

**[4]नियमातिक्रमिणमन्यं वा रहसि बन्धयेत्। आसमापत्तेः। असमापत्तौ नाश्यः।**

(१) यो वर्णाश्रमप्रयुक्तान्नियमानतिक्रामति तं नियमातिक्रमिणमन्यं वा प्रतिषिद्धानां कर्तारं रहसि बन्धयेत् निगलितं निरुन्ध्यात्। यावदसौ नियमान् प्रतिपत्स्ये प्रतिषिद्धेभ्यो निवर्तिष्य इति ब्रूयात्। यद्यसौ दीर्घकालं निरुद्धोऽपि न समापद्येत, ततो नाश्यः निर्वास्यः। उ.

(२) नियमातिक्रमिणं ब्राह्मणनियमस्यातिक्रमेण विहितस्याकर्तारमन्यमकृत्यकारिणं ब्राह्मणं रहस्यस्थाने बन्धयेदासमापत्तेः। यावदेवं न करिष्यामीति तस्य संप्रतिपत्तिर्भवति असमापत्तौ असंप्रतिपत्तौ। विर.६३७

**[5]आचार्य ऋत्विक्स्नातको राजेति त्राणं स्युरन्यत्र वध्यात्।**

(१) यदि दण्डे प्रवृत्तं राजानमाचार्यो ब्रूयात्—अहमेनमतःपरं वारयिष्यामि मुच्यतामयमिति। अतोऽङ्गदण्डे प्राप्तेऽर्थदण्डं, अर्थदण्डे प्राप्ते ताडनं, ताडने

(१) आध.२।११।२; हिध.२।९.
(२) आध.२।११।३; हिध.२।९ विचित्या(कृत्वा).
(३) आध.२।११।४; हिध.२।९ वृत्तो (वर्तमानो).
(४) आध.२।२७।१८-२०; हिध.२।१९; विर.६३७ क्रमिणं+ (ब्राह्मणं); दवि.२६० विरवत्; सेतु.३२६ बन्ध (चार) शेषं विरवत्, विष्णुः. (५) आध.२।२७।२१; हिध.२।२९ तकः + (च शूरो); विर.६३७; दवि.३८.

प्राप्ते धिग्दण्डमिति कृत्वा तद्वशे विसृजेत् । एवमृत्विजि । ऋत्विगाचार्यौ राज्ञस्स्वभूतौ न दण्ड्यस्य । स्नातको विद्याव्रताभ्याम् । राजा अनन्तरादिः । सर्व एते राज्ञः संमान्याः । अतस्ते दण्ड्यस्य त्राणं स्युः । उक्तेन प्रकारेण रक्षका भवेयुः । नान्यः कश्चित् । तेऽप्यन्यत्र वध्यात् यस्य वधानुगुणोऽपराधः न तस्याचार्यादयोऽपि त्राणं, हन्तव्य एव स इति । उ.

(२) राजा अवान्तरनरपतीनामिति प्रतिभाति। दवि.३८

## बौधायनः

ब्राह्मणस्य वधातिरिक्तो दण्डः

[1] **अवध्यो वै ब्राह्मणः सर्वापराधेषु ।**

वैशब्दः श्रुतिसंसूचनार्थः । सर्वापराधेषु ब्रह्महत्यादिष्वपि । बौवि.

[2] **ब्राह्मणस्य ब्रह्महत्यागुरुतल्पगमनसुवर्णस्तेयसुरापानेषु कुसिन्धभगशृगालसुराध्वजांस्तप्तेनाऽयसा ललाटेऽङ्कयित्वा विषयान्निर्धमनम् ।**

कृत्वा प्रवासयेदिति शेषः । कुसिन्धः कबन्धः । भगः स्त्रीव्यञ्जनम् । शृगालो गोमायुः । स च शुनोऽपि प्रदर्शनार्थः । सुराध्वजः सुराभाण्डम् । कबन्धाद्याकृतिकेन कृष्णायसेन ललाटेऽङ्कयति । उत्तरीयवाससां चौर्ये विषयान्तरं निर्वासयेत् । यः स्वयमेव प्रायश्चित्तं न करोति तस्यायं दण्डः । बौवि.

## वसिष्ठः

दण्डनिमित्तं, निमित्तविशेषेण दण्डविशेषः, दण्डविध्यतिक्रमे राजपुरोहितप्रायश्चित्तम्

[3] **देशधर्मजातिकुलधर्मान्सर्वानेवैताननुप्रविश्य राजा चतुरो वर्णान् स्वधर्मे स्थापयेत् । तेष्वपचरत्सु दण्डं धारयेत् । दण्डस्तु देशकालधर्मवयोविद्यास्थानविशेषैर्हिंसाक्रोशयोः कल्प्य आगमात् दृष्टान्ताच्च ।**

[1] **दण्डयोत्सर्गे राजैकरात्रमुपवसेत्त्रिरात्रं पुरोहितः। कृच्छ्रमदण्ड्यदण्डने पुरोहितस्त्रिरात्रं राजा ।**

अदण्डने दण्ड्यादण्डने । तेनानुपदेशनिमित्तं त्रिरात्रं चरेत् पुरोहितः विपरीतोपदेशनिमित्तं च कृच्छ्रम्। राजा तु दण्डोत्सर्गे एकरात्रोपवासं कुर्यात्, अदण्ड्यदण्डने त्रिरात्रमुपवसेत् । चकारात्सभ्याश्चेति द्रष्टव्यम् । क्वचित् पुनरदण्ड्यदण्डने इत्येव पठितम् । विर.६५०

[2] **अथाप्युदाहरन्ति ।**

**अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्याऽपचारिणी ।
गुरौ शिष्यश्च याज्यश्च स्तेनो राजनि किल्बिषम्॥
राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा॥
एनो राजानमृच्छति उत्सृजन्तं सकिल्बिषम् ।
तं चेद्घातयते राजा हन्ति धर्मेण दुष्कृतम्॥
इति ।**

## विष्णुः

दण्डसंज्ञाः, निमित्तविशेषेण दण्डतारतम्यं च

[3] **पणानां द्वे शते सार्धे प्रथमः साहसः स्मृतः ।
मध्यमः पञ्च विज्ञेयः सहस्रं त्वेव चोत्तमः ॥**

---

(१) **बौध.**१।१०।१८.(२) **बौध.**१।१०।१९; **स्मृच.**१२५ (तप्तेनायसेन ललाटे ऽङ्कयित्वा विषयान्निर्वासनम्); **विर.**६३६ ब्रह्म (भ्रूण) (गमन०) कुसि ... र्धमनम् (कबन्धभगश्वपदध्वजांस्तप्तेनायसेन ललाटेऽङ्कयित्वा स्वविषयान्ते निर्वासनम्); **दवि.**४७ विरवत्; **बाल.**२।२६ णस्य+ (च) (गमन०) कुसि ... र्धमनम् (कबन्धभगश्वपादध्वजांस्तप्तेनायसेन ललाटेऽङ्कयित्वा विषयान्ते निर्वासनम्); **प्रका.**७९ स्मृचवत्; **समु.**६८ ब्रह्म (भ्रूण) (गमन०) कुसिन्ध ... यसेन (कबन्धभगश्वापदध्वजांस्तप्तेनायसेन) र्धम (र्वास).

(३) **वस्मृ.**१९।५-७ (ख) नेवै (न् वै) तेष्व ... रयेत् (तेष्वधर्मपरेषु) दण्डस्तु (दण्डं तु) कालधर्म + (अधर्म) हिंसाक्रो... न्ताच्च (दिशेत् आगमादुष्टाभावात्).

(१) **वस्मृ.**१९।२६-२७ (ख) दण्ड्यो (दण्डो) त्रं राजा(त्रं वा); **मिता.**१।३५९ ण्ड्यो (ण्डो); **मभा.**१२।४५ त्रं राजा+(च); **गौमि.**१२।४५ त्रिरात्रं राजा(एकरात्रं त्रिरात्रं राजा);**विर.** ६५० ण्ड्यो (ण्डो) (दण्ड्य०) त्रं राजा+(च); **दवि.**६ विरवत्; **सवि.**१६ ण्ड्यो (ण्डो ) त्रं राजा (त्रं च); **व्यप्र.**२८; **व्यउ.**१७ दण्ड्यो (दण्डनीयो) दण्ड्य (दण्डनीय) त्रिरात्रं राजा (त्रिरात्रमेकरात्रं राजा); **प्रका.**१८ दण्ड्य (दण्ड); **समु.**२२.

(२) **वस्मृ.**१९।२८-३१ (ख) शिष्यश्च (शिष्यस्तु) च्छति (च्छत्यप्यु) तं चेद्घातयते ... दुष्कृतम् (तं चेन्न घातयेद्राजा राजधर्मेण दुष्यति).

(३) **विस्मृ.**४।१४; **विर.**६६५; **स्मृसा.**८२; **दवि.** २३ मनुविष्णू.

[1] अपराधानुरूपं च दण्डं दण्ड्येषु दापयेत् ।
सम्यग्दण्डप्रणयनं कुर्यात् ।
[2] द्वितीयमपराधं न स कस्यचित्क्षमेत ।
स्वधर्ममपालयन्नादण्ड्यो नामास्ति राज्ञः ।
[3] अदण्ड्यौ मातापितरौ स्नातकश्च पुरोहितः ।
परिव्राजकवानप्रस्थश्च ।
[4] अपराधेषु चान्येषु ज्ञात्वा जातिं धनं वयः ।
दण्डं प्रकल्पयेद्राजा संमन्त्र्य ब्राह्मणैः सह ॥
दण्ड्यं प्रमोचयन्दण्ड्याद्द्विगुणं दण्डमावहेत् ।
नियुक्तश्चाप्यदण्ड्यानां दण्डकारी नराधमः ॥
[5] यत्र श्यामो लोहिताक्षो दण्डश्चरति निर्भयः ।
प्रजास्तत्र विवर्धन्ते नेता चेत्साधु पश्यति ॥
स्वराष्ट्रे न्यायदण्डः स्याद्भृशदण्डश्च शत्रुषु ।
सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः ॥
एवं वृत्तस्य नृपतेः शीलोञ्छेनापि जीवतः ।
विस्तीर्यते यशो लोके तैलबिन्दुरिवाम्भसि ॥
प्रजासुखे सुखी राजा तद्दुःखे यश्च दुःखितः ।
स कीर्तियुक्तो लोकेऽस्मिन्प्रेत्य स्वर्गे महीयते ॥

ब्राह्मणस्य वधातिरिक्तो दण्डः

[6] अथ महापातकिनो ब्राह्मणवर्जं सर्वे वध्याः ।
न शारीरो ब्राह्मणस्य दण्डः ।
स्वदेशाद् ब्राह्मणं कृताङ्कं विवासयेत् ।
[7] तस्य च ब्रह्महत्यायामशिरस्कं पुरुषं ललाटे कुर्यात् । सुराध्वजं सुरापाने । श्वपदं स्तेये । भगं गुरुतल्पगमने ।
[8] अन्यत्रापि वध्यकर्मणि तिष्ठन्तं समग्रधनमक्षतं विवासयेत् ।
[9] उद्देशतस्ते कथितो धरे दण्डविधिर्मया ।
सर्वेषामपराधानां विस्तरादतिविस्तरः ॥
[10] यस्य चौरः पुरे नास्ति नान्यस्त्रीगो न दुष्टवाक् ।
न साहसिकदण्डघ्नौ स राजा शक्रलोकभाक् ॥

## शङ्खः शङ्खलिखितौ च

दण्डसंज्ञाः

[1] चतुर्विंशतिरेकनवतिः प्रथमसाहसः, द्विशतं पञ्चशतं चैव मध्यमसाहसः, षट्शतं सहस्रं चोत्तमः । यथासारापकारम् ।

सर्वेषामाचतुर्विंशत्यादिरेकनवतिपर्यन्तः प्रथमसाहसाख्यो दण्डः । एवमुत्तरत्रापि, द्विशतादिः पञ्चशतान्तो मध्यमः, षट्शतादिः सहस्रान्त उत्तमः । यथासारापकारमर्थापराधानुसारेण, अत एव वित्तापराधलाघवगौरवाभ्यां विकल्पः । विर.६६४

अदण्ड्याः

[2] अदण्ड्यौ मातापितरौ स्नातकपुरोहितौ परिव्राजकवानप्रस्थौ जन्मकर्मश्रुतशीलशौचाचारवन्तश्च, एते हि धर्मप्रतिकरा राज्ञः स्त्रीबालवृद्धास्तपस्विनस्तेभ्यः क्रोधं नियच्छेत् ।

(१) तच्छारीरार्थदण्डयोर्निषेधार्थं न पुनर्दण्डमात्रस्य । स्मृच.१२६

(२) जन्म शुद्धकुलता, कर्म अग्निहोत्रादि, श्रुतं वेदवेदाङ्गगोचरं ज्ञानं, शौचं बाह्यमाभ्यन्तरं च, एतद्युक्ता एतेऽप्यदण्ड्याः । यतस्ते राज्ञो धर्मप्रतिकराः षड्भागरूपधर्मार्जनेनोपकुर्वन्ति । स्त्रीबालवृद्धा इत्यनेन स्त्र्यादीनामप्यबालानामदण्ड्यत्वमुक्तम् । विर.६२८

---

(१) **विस्मृ**.३।६५-६६. (२) **विस्मृ**.३।६७; **विर**.६२८ यमपराधं (येऽपराधे) (स्वध ... राज्ञः०). (३) **सवि**.४७.

(४) **विस्मृ**.५।१९०-१९१; **समु**.६९ अपराधेषु चा (आगःसु च तथा) संमन्त्र्य (सामन्त).

(५) **विस्मृ**.३।६७-७०. (६) **विस्मृ**.५।१-३. (७) **विस्मृ**.५।४-७; **विर**.६३६.

(८) **विस्मृ**.५।८; **समु**.६७ (वध्ये कर्मणि तिष्ठन्तं समग्रधनमक्षतं प्रवासयेत्). (९) **विस्मृ**.५।१८९. (१०) **विस्मृ**.५।१९२.

(१) **विर**.६६४; **स्मृचि**.३७ (चतुर्विंशतिरेकनवतिः प्रथमः साहसः द्विशतः पञ्चशतेतिमध्यमः षट्शतैः साहस्रश्चेत्युत्तमः); **दवि**.२२ नवतिः+(चेति) द्विशतं (द्विशतः) तं चैव मध्यमसाहसः (तश्चेति मध्यमः) षट्शतं (षट्शतः) सहस्रं च (साहस्रश्चेति) कारं +(सर्वेषामानुपूर्वेण); **समु**.७० चैव (चेति) मध्यमसाहसः (मध्यमः) स्रं चोत्तमः (स्रं चेत्युत्तमः) (यथासारापकारम्०) शंखः.

(२) **मिता**.१।३५८ एते हि धर्मप्रतिकराः (ते हि धर्माधिकारिणः) (राज्ञः ... च्छेत्०); **स्मृच**.१२६ दण्ड्यौ (दण्डेयौ) शीलशौचा (शीला) (एते हि ... च्छेत्०) शंखः; **विर**.६२८; **पमा**.२०६ (एते हि ... च्छेत्०) शंखः; **दवि**.५७ वन्तश्च एते (वन्तः ते); **सेतु**.३२५ स्तेभ्यः (श्च तेभ्यः); **प्रका**.७९ परिव्राजक (व्राजक) शीलशौचा (शीला) (एते हि ... च्छेत्०) शंखः; **समु**.६९ कर्म (कर्मसु) एते हि (ते च) शंखः.

क्षत्रियादीनां दण्ड्यत्वम् । ब्राह्मणस्य प्रायश्चित्तीयत्वम् ।

**सर्वत्र त्रयाणां वर्णानां धनहारकारावधबन्धाः क्रियासु चोपरोधो महत्स्वपि पातकेषु विवासोऽङ्ककरणं ब्राह्मणस्य प्रायश्चित्तानि वा शोधनमपीड्यो हि ब्राह्मणः ।**

(१) तद्दरिद्रब्राह्मणविषयम् । स्मृच.१२४

(२) धनहारो दण्डः, कारा बन्धनगृहं, उपरोधो धारणम् । प्रायश्चित्तपक्षे अङ्काकरणता अपीड्यता च । विर.६३४

ब्राह्मणस्य विशेषार्हतास्थानानि

**इन्धनोदकाग्निकाष्ठतृणोपलपुष्पफलपर्णादानेष्वपचयं दैवतीर्थाभिगमनं गृहकोष्ठप्रवेशनं पथि शस्त्रधारणमसंबद्धमासनं प्रस्तुतेष्वनिवारणं असद्वासश्चेति शिलोञ्छपदयोर्धान्यराशिग्रहणमग्रोत्सर्गप्रसववृद्धिकर्षापणशुल्कनदीतरेष्वनुपरोधनं परस्त्रीसंभाषणं राजस्त्रीदर्शनं राज्ञा समासनं व्यतिक्रमणं च कोपात्सर्वमर्हति ब्राह्मणः ।**

इन्धनेत्यादि । आरण्यकेन्धनादिविषयं, देवोऽत्रान्यपरिगृहीतो देवालयः । एवं तीर्थमपि । गृहकोष्ठप्रवेशनं परस्येति शेषः । पथि देशान्तरगमने । असंबद्धमासनं प्रयोजनं विना यत्रक्वचनावस्थानम् । प्रस्तुतेषु स्वकार्यार्थचेष्टितेषु अनिवारणं तन्मध्यगमनानिवारणम् । असद्वासः कार्यवशादसद्भिः सह वासः । चच्छेदोऽव्ययानामनेकार्थत्वात्समुच्चये । शिलोञ्छपदयोः शिलोञ्छ इत्यात्मकवृत्तिभ्यां वर्तमानयोः शेषीभूतधान्यराशेर्ग्रहणम् । अग्रोत्सर्गमग्रत्यागपूर्वकमश्वस्तनविधिना ग्रहणम् । नान्यथेति पारिजाते अधिकम् । प्रसवः स्फुट एव, वृद्धिः कुसीदं, कर्षः कर्षणं, आपणः क्रयविक्रयव्यवहारः, नदीतरः नदीतरणार्थं देयं, एतेषु यद्देयं तदप्रयच्छतोऽनुपरोधनमनाक्रमणं व्यतिक्रमणमाज्ञालङ्घनं च । लक्ष्मीधरेण तु नारदवाक्यानन्तरं प्रकरणभेदः कृतः । ब्राह्मणस्य परीहार इति वाक्यं पठितम् । विर.६६१

दण्डप्रसङ्गे शिल्पिकारुशूद्राणां वृत्तिसाधनानि नाहार्याणि

**[1]शिल्पिनः कारवः शूद्रास्तेषां व्यभिचारेष्वपि शिल्पोपकरणानि रक्षेत् । तुलामानप्रतिमानसमुत्थानि वणिक्पथानां, क्षेत्रबीजभक्तगोशकटकर्षणद्रव्याणि कर्षकाणां, वाद्यभाण्डालङ्कारवासांसि रङ्गोपजीविनां, गृहशयनालङ्कारवासांसि वेश्यानां, शस्त्राणि चायुधोपजीविनां सर्वेषां कारणद्रव्याणि नाहार्याणि राज्ञा धार्मिकेण, अस्वा हि पुरुषाः पापबहुलाश्चाविधेयाश्च भवन्ति तेभ्यः पापांशभाग्राजा, तस्मान्नाधनान्नानुपकरणान् कुर्यात्तन्मूला हि वृत्तिर्भवति, वृत्तिमूलो निवासः, तैर्निवसद्भिः स्फीतं राष्ट्रमित्युच्यते ।**

शिल्पिनश्चित्रलेखादिकर्त्तारः व्यभिचारेषु सर्वस्वापहारयोग्येषु अपराधेषु, तुलामानमूर्द्ध्वं मानं, प्रतिमानं सुवर्णादितुलनोपकरणं प्रस्थादि, भक्तं कृषिसिद्ध्यर्थमन्नं, कर्षणद्रव्यं हलादि, वाद्यभाण्डं पटहादि, रङ्गोपजीविनां नृत्यवृत्तीनाम् । विर.६५६

## महाभारतम्

दण्डप्रशंसा

**[2]राज्यस्य दण्डमेवाङ्गं दण्डः प्रभव एव च ।**
**ईश्वरेण प्रयत्नेन कारणात्क्षत्रियस्य च ॥**
**दण्डो दत्तः समानात्मा दण्डो हीदं सनातनम् ।**
**राज्ञां पूज्यतमो नान्यो यथा धर्मः प्रदर्शितः ।**

(१) **मिता**.२।८१ (त्रयाणां वर्णानां धनापहारवधबन्धनक्रिया विवासनाङ्ककरणं ब्राह्मणस्य) शंखः; **स्मृच**.१२४ (त्रयाणामपि वर्णानां धनापहारवधबन्धक्रियाविवासनाङ्ककरणे ब्राह्मणस्य) शंखः; **विर**.६३४; **पमा**.२०८ (त्रयाणामपि वर्णानामपहारवधबन्धक्रिया विवासनं धिक्करणं ब्राह्मणस्य) शंखः; **दवि**.४८ (सर्व ...रोधो०) सोऽङ्ककरणं (सनमङ्कनं); **विता**.८६ (त्रयाणां वर्णानां धनापहारवधबन्धक्रियानिर्वासाङ्ककरणे ब्राह्मणस्य) शंखः : १८७ (त्रयाणां वर्णानां धनापहारवधबन्धनं क्रियाः विवासनाङ्ककरणं ब्राह्मणस्य) शंखः; **बाल**.२।२६ कारा ...रोधो (को वधबन्धक्रियारूपयोगो) सोऽङ्क (स); **प्रका**.७८ स्मृचवत्, शंखः; **समु**.६८ स्मृचवत्, शंखः.

(२) **विर**.६६०; **दवि**.४३ दकाग्निकाष्ठ (दककाष्ठाग्नि) पचयं दैव (ग्रावचयं देव) प्रस्तुतेष्व (प्रसृतेषु) श्चेति (श्चेत्) त्सर्ग (त्सर्गं) कर्षा (कार्षा) (राज्ञा समासनं०).

(१) **विर** ६५६; **दवि**.६० ष्वपि (षु) मानसमुत्थानि (मानानि) कारणद्रव्याणि (कारुद्रव्याण्य) (भवति०) त्युच्यते (ह्योच्यते); **सेतु**.३१२ चायुधो (वायुधो) (भवति०).

(२) **भा**.१२।१२१।४७-४९.

ब्रह्मणा लोकरक्षार्थं स्वधर्मस्थापनाय च ॥

सम्यग्विचार्य दण्डः कल्प्यः

[1]अपराधानुरूपं च दण्डं पापेषु धारयेत् ।
वियोजयेद्धनैर्ऋद्धानधनानयबन्धनैः ॥
विनयेच्चापि दुर्वृत्तान्प्रहारैरपि पार्थिवः ।
सान्त्वेनोपप्रदानेन शिष्टांश्च परिपालयेत् ॥
[2]सम्यक्प्रणयतो दण्डं भूमिपस्य विशांपते ।
युक्तस्य वा नास्त्यधर्मो धर्म एव हि शाश्वतः॥
कामकारेण दण्डं तु यः कुर्यादविचक्षणः ।
स इहाकीर्तिसंयुक्तो मृतो नरकमृच्छति ॥
न परस्य प्रवादेन परेषां दण्डमर्पयेत् ।
आगमानुगमं कृत्वा बध्नीयान्मोक्षयीत वा ॥

राज्ञः सर्वो दण्ड्यः

[3]यः स्वयं प्रतिहन्ति स्म शासनं विषये रतः ।
स बाहुभ्यां विनिग्राह्यो लोकयात्राविघातकः ॥
प्रमाणमप्रमाणं यः कुर्यान्मोहवशं गतः ।
भृत्यो वा यदि वा पुत्रस्तपस्वी वाऽथ कश्चन ॥
पापान्सर्वैरुपायैस्तान्नियच्छेच्छातयीत वा ।
अतोऽन्यथा वर्तमानो राजा प्राप्नोति किल्बिषम्॥
धर्मं विनश्यमानं हि यो न रक्षेत्स धर्महा ॥
[4]माता पिता च भ्राता च भार्या चैव पुरोहितः।
नादण्ड्यो विद्यते राज्ञो यः स्वधर्मेण तिष्ठति ॥
[5]सप्ताङ्गस्य च राज्यस्य विपरीतं य आचरेत् ।
गुरुर्वा यदि वा मित्रं प्रतिहन्तव्य एव सः॥
[6]गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य दण्डो भवति शाश्वतः ॥

ब्राह्मणस्य वधातिरिक्तो दण्डः

[7]एवं चैव नरश्रेष्ठ रक्ष्या एव द्विजातयः ।
सापराधानपि हितान्विषयान्ते समुत्सृजेत् ॥
अभिशस्तमपि ह्येषां कृपायीत विशाम्पते ।
ब्रह्मघ्ने गुरुतल्पे च भ्रूणहत्ये तथैव च ॥
राजद्विष्टे च विप्रस्य विषयान्ते विसर्जनम् ।

(१) भा.१२।८५।२०-२१. (२) भा.१२।८५।२३-२५.
(३) भा.१२।३२।५-८. (४) भा.१२।१२१।६०.
(५) भा.१२।५७।५. (६) भा.१२।५७।७. (७) भा. १२।५६।३१-३३.

विधीयते न शारीरं दण्डमेषां कदाचन ॥
[1]अदण्ड्याश्चैव ते पुत्र विप्राश्च ददतां वर ।
भूतमेतत्परं लोके ब्राह्मणो नाम पाण्डव ॥
[2]अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥
अयो हन्ति यदाश्मानमग्निना वारि हन्यते ।
ब्रह्म च क्षत्रियो द्वेष्टि तदा सीदन्ति ते त्रयः ॥

दण्ड्योत्सर्गे राजपुरोहितयोः प्रायश्चित्तम्

[3]उपवासमेकरात्रं दण्ड्योत्सर्गे नराधिपः ।
विशुध्येदात्मशुद्ध्यर्थं त्रिरात्रं तु पुरोहितः ॥

## कौटिलीयमर्थशास्त्रम्

दण्डप्रयोजनम्

[4]कृषिपाशुपाल्ये वणिज्या च वार्त्ता धान्यपशुहिरण्यकुप्यविष्टिप्रदानादौपकारिकी । तया स्वपक्षं परपक्षं च वशीकरोति कोशदण्डाभ्याम् । आन्वीक्षिकीत्रयीवार्त्तानां योगक्षेमसाधनो दण्डः, तस्य नीतिर्दण्डनीतिः अलब्धलाभार्था, लब्धपरिरक्षणी, रक्षितविवर्धनी, वृद्धस्य तीर्थेषु प्रतिपादनी च । तस्यामायत्ता लोकयात्रा । तस्माल्लोकयात्रार्थी नित्यमुद्यतदण्डः स्यात् । नह्येवंविधं वशोपनयनमस्ति भूतानां यथा दण्ड इत्याचार्याः । नेति कौटिल्यः । तीक्ष्णदण्डो हि भूतानामुद्वेजनीयः । मृदुदण्डः परिभूयते । यथार्हदण्डः पूज्यः । सुविज्ञातप्रणीतो हि दण्डः प्रजा धर्मार्थकामैर्योजयति । दुष्प्रणीतः कामक्रोधाभ्यामज्ञानाद् वानप्रस्थपरिव्राजकानपि कोपयति, किमङ्ग पुनर्गृहस्थान् । अप्रणीतो हि मात्स्यन्यायमुद्भावयति । बलीयानबलं हि ग्रसते दण्डधराभावे । तेन गुप्तः प्रभवतीति ।

चतुर्वर्णाश्रमो लोको राज्ञा दण्डेन पालितः ।
स्वधर्मकर्माभिरतो वर्तते स्वेषु वेश्मसु ॥

दण्डप्रकाराः

[5]वधः परिक्लेशोऽर्थहरणं दण्ड इति ।

(१) भा.१२।५६।२२. (२) भा.१२।५६।२४-२५.
(३) भा.१२।३६।१७. (४) कौ.१।४. (५) कौ.२।१०.

अनुग्राह्याः, निमित्तविशेषेण दण्डविशेषतारतम्यं, अदण्ड्यदण्डने राजदण्डः ।

[1]पुरुषापराधविशेषेण दण्डविशेषः कार्यः । तीर्थकरस्तपस्वी व्याधितः क्षुत्पिपासाध्वक्लान्तस्तिरोजनपदो दण्डखेदी निष्किंचनश्चानुग्राह्याः ।

[2]पुरुषं चापराधं च कारणं गुरुलाघवम् ।
अनुबन्धं तदात्वं च देशकालौ समीक्ष्य च ॥
उत्तमावरमध्यत्वं प्रदेष्टा दण्डकर्मणि ।
राज्ञश्च प्रकृतीनां च कल्पयेदन्तरास्थितः ॥
[3]अदण्ड्यदण्डने राज्ञो दण्डस्त्रिंशद्गुणोऽम्भसि ।
वरुणाय प्रदातव्यो ब्राह्मणेभ्यस्ततः परम् ॥
तेन तत् पूयते पापं राज्ञो दण्डापचारजम् ।
शास्ता हि वरुणो राज्ञां मिथ्या व्याचरतां नृषु ॥

[4]तस्मात् समाप्तकरणं नियमयेत् । मन्दापराधं बालं वृद्धं व्याधितं मत्तमुन्मत्तं क्षुत्पिपासाध्वक्लान्तमत्याशितमामकाशितं दुर्बलं वा न कर्म कारयेत् । आप्तदोषं कर्म कारयेत् । न त्वेव स्त्रियं गर्भिणीं सूतिकां वा मासावरप्रजाताम् । स्त्रियास्त्वर्धकर्म । वाक्यानुयोगो वा ।

दण्डकर्मभेदाः

व्यावहारिकं कर्मचतुष्कं--षड् दण्डाः, सप्त कशाः, द्वावुपरिनिबन्धौ, उदकनालिका च । परं पापकर्मणां नववेत्रलताद्वादशकं, द्वावूरुवेष्टौ, विंशतिर्नक्तमाललताः, द्वात्रिंशत् तलाः, द्वौ वृश्चिकबन्धौ, उल्लम्बने च द्वे, सूची हस्तस्य, यवागूपीतस्य, एकपर्वदहनमङ्गुल्याः, स्नेहपीतस्य प्रतापनमेकमहः, शिशिररात्रौ बल्वजाग्रशय्या चेत्यष्टादशकं कर्म । तस्योपकरणं प्रमाणं प्रहरणं प्रधारणमवधारणं च खरपट्टादागमयेत् । दिवसान्तरमेकैकं च कर्म कारयेत् ।

ब्राह्मणस्य वधातिरिक्तो दण्डः

[5]सर्वापराधेष्वपीडनीयो ब्राह्मणः । तस्याभिशस्ताङ्को ललाटे स्याद् व्यवहारपतनाय । स्तेये श्वा, मनुष्यवधे कबन्धः, गुरुतल्पे भगं, सुरापाने मद्यध्वजः ।

ब्राह्मणं पापकर्माणमुद्घुष्याङ्कृतव्रणम् ।
कुर्यान्निर्विषयं राजा वासयेदाकरेषु वा ॥
एवं कार्याणि धर्मस्थाः कुर्युरच्छलदर्शिनः ।
समाः सर्वेषु भावेषु विश्वास्या लोकसंप्रियाः ॥

## मनुः

रक्षणार्थं सर्वदेवमयो राजा निर्मितः

[2]*राजधर्मान्प्रवक्ष्यामि यथावृत्तो भवेन्नृपः ।
संभवश्च यथा तस्य सिद्धिश्च परमा यथा ॥
ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि ।
सर्वस्यास्य यथान्यायं कर्तव्यं परिरक्षणम् ॥
अराजके हि लोकेऽस्मिन्सर्वतो विद्रुते भयात् ।
रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुः ॥
इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च ।
चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ॥
यस्मादेषां सुरेन्द्राणां मात्राभ्यो निर्मितो नृपः ।
तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥
तपत्यादित्यवच्चैष चक्षूंषि च मनांसि च ।
न चैनं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम् ॥
सोऽग्निर्भवति वायुश्च सोऽर्कः सोमः स धर्मराट् ।
स कुबेरः स वरुणः स महेन्द्रः प्रभावतः ॥
बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥
एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम् ।
कुलं दहति राजाग्निः सपशुद्रव्यसंचयम् ॥
कार्यं सोऽवेक्ष्य शक्तिं च देशकालौ च तत्त्वतः ।
कुरुते धर्मसिद्ध्यर्थं विश्वरूपं पुनः पुनः ॥
यस्य प्रसादे पद्मा श्रीर्विजयश्च पराक्रमे ।
मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥
तं यस्तु द्वेष्टि संमोहात्स विनश्यत्यसंशयम् ।
तस्य ह्याशु विनाशाय राजा प्रकुरुते मनः ॥
तस्माद्धर्मं यमिष्टेषु स व्यवस्येन्नराधिपः ।

(१) कौ.३।२०. (२) कौ.४।१०. (३) कौ.४।१३. (४) कौ.४।८. (५) कौ.४।८.

* इत आरभ्य 'स्वे स्वे धर्मे' इत्यन्तं (मस्मृ.७।१-३५) व्याख्यानसंग्रहो न कृतः स राजनीतिकाण्डे द्रष्टव्यः ।

(१) कौ.३।२०. (२) मस्मृ.७।१-१३.

अनिष्टं चाप्यनिष्टेषु तं धर्मं न विचालयेत् ॥

दण्डोत्पत्तिः, दण्डप्रयोजनं, दण्डप्रयोगाधिकारश्च

[1]तदर्थं सर्वभूतानां गोप्तारं धर्ममात्मजम् ।
ब्रह्मतेजोमयं दण्डमसृजत्पूर्वमीश्वरः ॥
[2]तस्य सर्वाणि भूतानि स्थावराणि चराणि च ।
भयाद्भोगाय कल्पन्ते स्वधर्मान्न चलन्ति च ॥
[3]तं देशकालौ शक्तिं च विद्यां चावेक्ष्य तत्त्वतः ।
यथार्हतः संप्रणयेन्नरेष्वन्यायवर्तिषु ॥
[4]स राजा पुरुषो दण्डः स नेता शासिता च सः ।
चतुर्णामाश्रमाणां च धर्मस्य प्रतिभूः स्मृतः ॥
[5]दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥
[6]समीक्ष्य स धृतः सम्यक्सर्वा रञ्जयति प्रजाः ।
असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः ॥
[7]यदि न प्रणयेद्राजा दण्डं दण्ड्येष्वतन्द्रितः ।
शूले मत्स्यानिवापक्ष्यन्दुर्बलान्बलवत्तराः ॥
[8]अद्यात्काकः पुरोडाशं श्वावलिह्याद्धविस्तथा ।
स्वाम्यं च न स्यात्कस्मिंश्चित्प्रवर्तेताधरोत्तरम् ॥
[9]सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः ।
दण्डस्य हि भयात्सर्वं जगद्भोगाय कल्पते ॥

(१) मस्मृ.७।१४ क.ग.घ. पुस्तकेषु तदर्थं (तस्यार्थे); विर. ६४६; विचि.२६१; दवि.३.

(२) मस्मृ.७।१५; विर.६४६; विचि.२६१; दवि.३ स्वधर्मान्न (धर्मान्न वि); सेतु.३२८. (३) मस्मृ.७।१६; विचि. २६१ तं देश (तद्देश) वर्ति (वृत्ति).

(४) मस्मृ.७।१७; विर.६४६ स्मृतः (कृतः); विचि. २६१; दवि.३; सेतु.२९८. (५) मस्मृ.७।१८; विर. ६४६; विचि.२६१ एवाभि (एव हि); दवि.३; सेतु.२९८ दण्डं (दण्डे) शेषं विचिवत्.

(६) मस्मृ.७।१९; विर.६४७ स धृतः (स्वधृतः); विचि. २६२ स धृतः (सुधृतः); दवि.८ पू. (७) मस्मृ.७।२०; विर.६४८; विचि.२६३ पक्ष्यन् (हन्युः); दवि.४; सेतु.२९९ पू. (८) मस्मृ.७।२१ घ. पुस्तके श्वाव (श्वा च); विर.६४८ श्वाव (श्वा च); विचि.२६३; दवि.४ उत्त.; सेतु.२९९ लि (ले) पू.

(९) मस्मृ.७।२२; विचि.२६३ शुचिर्नरः (नरः शुचिः).

[1]देवदानवगंधर्वा रक्षांसि पतगोरगाः ।
तेऽपि भोगाय कल्पन्ते दण्डेनैव निपीडिताः ॥
[2]दुष्येयुः सर्ववर्णाश्च भिद्येरन्सर्वसेतवः ।
सर्वलोकप्रकोपश्च भवेद्दण्डस्य विभ्रमात् ॥
[3]यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा ।
प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥
[4]तस्याहुः संप्रणेतारं राजानं सत्यवादिनम् ।
समीक्ष्यकारिणं प्राज्ञं धर्मकामार्थकोविदम् ॥
[5]तं राजा प्रणयन्सम्यक् त्रिवर्गेणाभिवर्धते ।
कामात्मा विषमः क्षुद्रो दण्डेनैव निहन्यते ॥
[6]दण्डो हि सुमहत्तेजो दुर्धरश्चाकृतात्मभिः ।
धर्माद्विचलितं हन्ति नृपमेव सबान्धवम् ॥
[7]ततो दुर्गं च राष्ट्रं च लोकं च सचराचरम् ।
अन्तरिक्षगतांश्चैव मुनीन्देवांश्च पीडयेत् ॥
[8]सोऽसहायेन मूढेन लुब्धेनाकृतबुद्धिना ।
न शक्यो न्यायतो नेतुं सक्तेन विषयेषु च ॥
[9]शुचिना सत्यसंधेन यथाशास्त्रानुसारिणा ।
प्रणेतुं शक्यते दण्डः सुसहायेन धीमता ॥
[10]स्वराष्ट्रे न्यायवृत्तः स्याद् भृशदण्डश्च शत्रुषु ।

(१) मस्मृ.७।२३; मभा.११।३०; गौमि.११।१८ (=) ल्पन्ते (ल्प्यन्ते); विचि. २६३ र्वा (र्वे).

(२) मस्मृ.७।२४; विचि.२६३ प्रकोप (प्रलोभ).

(३) मस्मृ.७।२५; विर.६४६ दण्ड (धर्म) न मुह्यन्ति (विवर्धन्ते); विचि.२६१; सेतु.२९८ न मुह्यन्ति (विवर्धन्ते).

(४) मस्मृ.७।२६; विर.६४७; विचि.२६२; सेतु.२९९.

(५) मस्मृ.७।२७ ख. पुस्तके कामात्मा (कामान्धो); विर. ६४७; विचि.२६२; दवि.८पू. (६) मस्मृ.७।२८; विर. ६४७; विचि.२६२; दवि.५; सेतु.२९९. (७) मस्मृ. ७।२९; विर.६४७ रिक्ष (रीक्ष); विचि.२६२ मुनीन् (ऋषीन्); दवि.५ (ततो दुर्गश्च राष्ट्रञ्च मुनीन् देवांश्च पीडयेत्); सेतु. २९९ विचिवत्.

(८) मस्मृ.७।३०; विर.६४७ सोऽ (अ) सक्तेन (ऋक्थेषु); विचि.२६२ सोऽ (अ); सेतु.२९९ मूढेन (मूर्खेण) नेतुं सक्तेन (वक्तुं व्यक्तेषु).

(९) मस्मृ.७।३१; विर.६४७ प्रणे...सुः (दण्डः प्रणयितुं शक्यः स); विचि.२६२ प्रणे...ण्डः (दण्डः प्रणयितुं शक्यः); दवि.१२ सारिणा (संधिना) शेषं विचिवत्; सेतु. २९९ विरवत्. (१०) मस्मृ.७।३२-३५.

**सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः ॥**
**एवंवृत्तस्य नृपतेः शिलोञ्छेनापि जीवतः ।**
**विस्तीर्यते यशो लोके तैलबिन्दुरिवाम्भसि ॥**
**अतस्तु विपरीतस्य नृपतेरजितात्मनः ।**
**संक्षिप्यते यशो लोके घृतबिन्दुरिवाम्भसि ॥**
**स्वे स्वे धर्मे निविष्टानां सर्वेषामनुपूर्वशः ।**
**वर्णानामाश्रमाणां च राजा सृष्टोऽभिरक्षिता ॥**

निमित्तविशेषेण दण्डतारतम्यं, दण्ड्यादण्ड्यविवेककर्तव्यता च

**अनुबन्धं परिज्ञाय देशकालौ च तत्त्वतः ।**
**सारापराधौ चालोक्य दण्डं दण्ड्येषु पातयेत् ॥**

(१) उक्तानुक्तदण्ड्येष्वपराधेषु मातृकाश्लोकोऽयम्। एतदर्थानुसारेण सर्वत्र दण्डक्लृप्तिः कर्तव्या। तत्र पौनःपुन्येन प्रवृत्तिरनुबन्धः प्रवृत्तिकारणं वा । अनुबध्यते प्रयुज्यते येन तस्मिन्कर्मणि तं परिज्ञाय, किमयमात्मकुटुम्बक्षुदवसायेन धर्मतन्त्रसङ्गेन वा, अथ मद्यद्यूतादिशौण्डतया, तथा प्रमादाद्बुद्धिपूर्वं वा; परप्रयुक्तः स्वेच्छया वेत्यादिरनुबन्धः । देशो ग्रामारण्यगृहजलजन्मप्रसवभूम्यादिः । कालो नक्तं दिवादिः सुभिक्षदुर्भिक्षबाल्ययौवनादिः । सारः शक्त्यशक्ती आढ्यत्वदारिद्र्ये । अपराधोऽष्टादशानां पदानामन्यतमः । एतत्सर्वं पौर्वापर्येण निरूप्य तथा दण्डं पातयेत्कुर्याद्यथा स्थितिः सांसारिकी न भ्रश्यतीति । ×मेधा.

(२) अपराधं न्यूनाधिकम् । मवि.

**अधर्मदण्डनं लोके यशोघ्नं कीर्तिनाशनम् ।**
**अस्वर्ग्यं च परत्रापि तस्मात्तत्परिवर्जयेत् ॥**

(१) अधर्मप्रधानदण्डनं च पूर्वोक्तमनपेक्ष्य दण्डशास्त्रपाठमात्रेण राजेच्छया रागद्वेषादिभिर्वा, तद्यशोनाशकं कीर्तेश्च विच्छेदकं, स्वदेशे गुणख्यातिर्यशः, देशान्तरे कीर्तिः, जीवतो वा अर्वाक्कालिकं यशः उत्तरकालिकी कीर्तिः निर्दोषगुणवती वा कीर्तियशसी । पुण्यशब्दो यशः । अन्यो वा भेद उन्नेयः अर्थवादत्वात् । अस्वर्ग्यं स्वर्गप्राप्तौ कर्मान्तरजन्यायां प्रतिबन्धकं, परत्रापीति श्लोकपूरणार्थं, स्वर्गस्यामुष्मिकत्वात् । ×मेधा.

(२) यशो बहुभिः परैर्गुणानां ज्ञानम् । कीर्तिस्तत्कथनम् । मवि.

**अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकं चैव गच्छति ॥**

पूर्वश्लोकोऽनुबन्धादिनिरूपणविधेः शेषः । अनेन त्वनपराधानां दण्डनं प्रतिषिध्यते सापराधानां च विधीयते । वृथात्वं दण्डस्य मन्यमानोऽनुग्रहेण माहासीदिति । मेधा.

**वाग्दण्डं प्रथमं कुर्याद्धिग्दण्डं तदनन्तरम् ।**
**तृतीयं धनदण्डं तु वधदण्डमतःपरम् ॥**

यो गुणवानीषत्प्रथममेवापराद्धः स वाचा निर्भर्त्स्यते 'न साधु कृतवानसि मा पुनरेवं कार्षीरिति' । तथा विनीयमाने यदि न निवर्तते, कोऽत्रदोष इति वा प्रतिजानीयात्तदा धिग्धिगादिशब्दैः परुषवचनैः कुत्सार्थैः क्षिप्यते । ततोऽप्यनिवर्तमानो यथाशास्त्रं धनेन दण्डनीयः। तदप्यगणयन्नैश्वर्यादिना हन्तव्यः । वधदण्डश्च ताडनाङ्गच्छेदादि न मरणमेव । यत आह — 'वधेनापी'त्यादि। *मेधा.

---

× गोरा., ममु. मेधावत् ।

(१) मस्मृ.८।१२६; स्मृच.१२७ लोक्य (लोच्य); विर. ६२७ देशकालौ (कालदेशौ); दवि.६५; प्रका.८० स्मृचवत्; समु.६९ स्मृचवत्.

(२) मस्मृ.८।१२७; विर.६४९; दवि.५ पू.; समु. ६९ अधर्म (अदण्ड्य).

१ करणं. २ क्त. ३ मह. ४ भूमादिः. ५ क्ष्येदं शा.

× गोरा., ममु., मच., भाच. मेधावत् ।

* गोरा., मवि., ममु. मेधावत् ।

(१) मस्मृ.८।१२८; मिता.२।१ चैव (चाधि); उ.२। ११।४ नरकं चैव गच्छति (प्रेत्य स्वर्गाच्च हीयते); स्मृच.१५; विर.६४९ दण्ड्यान् (दण्ड्यं); पमा.३२; दवि.६; नृप्र. २,५; सवि.१६; व्यप्र.२६; व्यउ.१२ (=); प्रका.१९; समु.३०.

(२) मस्मृ.२।१२९; मिता.२।२६ वाग् (धिग्) धिग् (वाग्); मभा.११।३० ण्डमतः (ण्डं त्वतः) शेषं मितावत्; गौमि.११।२८ (=) ण्डमतः (ण्डं ततः) शेषं मितावत्; स्मृच. १२६; विर.६३० तु (च); पमा.२०६ विरवत्; दवि. ६३ मतःपरम् (मनन्तरम्); सवि.४५४ मितावत्; प्रका. ७९; समु.६८.

१ श्लोके. २ न्धादीनि निरूपणविधिविशेषः.

**[1]वधेनापि यदा त्वेतान्निग्रहीतुं न शक्नुयात् ।**
**तदैषु सर्वमप्येतत्प्रयुञ्जीत चतुष्टयम् ॥**

(१) मारणं चेद्वधः किं तदन्यद्येन शक्यते । कथंचनैनं पापं निगृह्णीतेत्यादिपरुषवाक्यपूर्वं दुर्विनीतेषु धनदण्डवधौ समुच्चेतव्यौ । कृतेऽपि शरीरदण्डे यदि नावतिष्ठते ततो न 'कृतनिग्रह' इत्युत्सृजेदपि तु स वधदण्डः कर्तव्यः । धनवधदण्डयोश्च पुनःप्रवृत्त्यर्थोऽयमारम्भः वाग्दण्डधिग्दण्डौ मृदुत्वात्कः पृच्छति । धनेन च निगृहीतस्य पुनर्वधो दृष्टो 'ऽङ्गुलीर्ग्रन्थिभेदस्येति' । मेधा.

(२) सर्वमेवैतद्दशविधं दण्डं प्रागुक्तं वाग्दण्डादित्रयं च । मवि.

**[2]अधार्मिकं त्रिभिर्न्यायैर्निगृह्णीयात्प्रयत्नतः ।**
**निरोधनेन बन्धेन विविधेन वधेन च ॥**

अर्थवादैर्दृढीकृत्य निग्रहविधिमिदानीं प्रस्तौति । अधार्मिकं प्रकरणाच्चौरः तं त्रिभिर्नियमनप्रकारैर्निगृह्णीयान्नियच्छेत् । न्यायो नियामकः । निरोधनं राजदुर्गे बन्धनागारे बन्धः चरणबन्धस्तत्रैव रज्जुनिगडादिभिरस्वातन्त्र्योत्पादनं विविधो वधस्ताडनादारभ्य शरीरनाशनात् प्राणत्यागपर्यन्तः निर्देशादेव त्रित्वे लब्धे त्रिभिरिति वचनमन्येषामपि नियमनप्रकाराणां परिग्रहणार्थम् । तेन तप्ततैलसेकादयोऽपि परिगृहीता भवन्ति । मेधा.

**[3]बन्धनानि च सर्वाणि राजमार्गे निवेशयेत् ।**
**दुःखिता यत्र दृश्येरन्विकृताः पापकारिणः ॥**

(१) प्रसिद्धे राजरथ्याप्रदेशे बन्धगृहाणि संनिवेशयेत् कुर्यात् । दुःखिता यत्र दृश्येरन्नित्यन्यत्रापि संनिवेशनं तत्प्रदेशभ्रमणं दर्शयति । एतेनान्या अपि बन्धसंस्थानां पीडाः कर्तव्या इत्याह । शरीरात्यन्तकार्श्याद्यवस्थान्तरापत्त्या विकृता अभोजनेनेषद्भोजनादिना । शेषं स्पष्टम् । मेधा.

(२) अन्यैरकार्यकारिभिरकार्यनिवृत्त्यर्थं दृश्येरन् । ममु.

**[1]निग्रहेण च पापानां साधूनां संग्रहेण च ।**
**द्विजातय इवेज्याभिः पूयन्ते सततं नृपाः ॥**

पापयुक्ताः पुरुषाः पापाः तेषां निग्रहः पूर्वोक्तः । यथाशास्त्रवद्वर्तिनः साधवः । तेषां संग्रहोऽनुग्रहो यथाशक्त्युपकारः । तेन पूयन्ते विपाप्मानो भवन्ति प्रायश्चित्तेनेवेत्यर्थवादः । अथवा पापानुत्पत्तिरेव पूतत्वं ब्राह्मणा इव[2] सततमिज्याभिः नित्यैर्महायज्ञादिभिः । मेधा.

दण्डस्थानानि धनदण्डसंज्ञाश्च

**[2]दश स्थानानि दण्डस्य मनुः स्वायंभुवोऽब्रवीत् ।**
**त्रिषु वर्णेषु यानि स्युरक्षतो ब्राह्मणो व्रजेत् ॥**

(१) स्थानशब्दो विषयपर्यायः । एतैः प्रदेशैः पीडयितव्यः । प्रत्यपराधशब्देन ब्राह्मणस्य धनदण्डविधानादक्षतत्वोपदेशः शरीरपीडापरिहारार्थः कल्पते, सत्यपि धनस्य दशसंख्यान्तर्भावे । वयं तु ब्रूमः समग्रधनमक्षतमित्यत्र धनपीडाऽपि निषिद्धैव ब्राह्मणस्य । तस्माद्यः सकृत्कथंचिदपराद्धः श्रुतशीलाभिजनयुक्तस्तस्य धनदण्डोऽपि नास्ति । तथा च गौतमस्तादृशमेव ब्राह्मणमधिकृत्य 'द्वौ लोके धृतव्रतौ' इत्युपक्रम्य 'षड्भिः परिहार्यश्चे'त्यादि । मेधा.

(२) हैरण्यगर्भो मनुर्दश दण्डस्याश्रयानुक्तवान् ये क्षत्रियादिवर्णत्रयविषये भवन्ति । ब्राह्मणं पुनर्महत्यपि अपराधे अक्षतशरीरं देशान्निर्वासयेत् । गोरा.

(३) अक्षतो ब्राह्मणः पूर्वोक्तदण्डस्थानेषु अदण्डितो

---

(१) **मस्मृ.**८।३२०; **अप.**२।२६ वधे (धने) यदा (यथा) त्वेता (स्तेना) तदैषु (तदैष); **स्मृच.**१२५; **विर.**६३० त्वेतान् (त्वेनं) दैषु (दैव) मप्ये (मेवै); **दवि.**६३ शक्नुयात् (शक्यते) दैषु (देषु) शेषं विरवत्; **बाल.**२।२६; **प्रका.**७९; **समु.**६८.

(२) **मस्मृ.**८।३१०; **विर.**६३० यात् (त); **स्मृचि.** २५ निरोधनेन (रोधनेन च); **समु.**६९ कं (कान्).

(३) **मस्मृ.**९।२८८ राज (राजा); **विर.**६३० राजमार्गे (वामाङ्कि वि) ; **समु.**६९ दृश्येरन् ( दृश्यन्ते ).

१ गृहीतस्य. २ (बन्धः०).

(१) **मस्मृ.**८।३११ च पापानां (हि पापानां); **स्मृच.** २६ नारदः; **विर.**६४८ ज्याभिः (ज्यातः); **स्मृचि.**२५; **सेतु.**३००; **प्रका.**४३ नारदः; **समु.**४५ नारदः.

(२) **मस्मृ.**८।१२४; **मिता.**२।२६; **अप.**२।२६ यानि (तानि); **गौमि.**१२।४३ यानि (तानि) उत्त.; **स्मृच.**१२३ पू. : १२४ अपवत्, उत्त.; **विर.**६३०; **पमा.**२०५ पू.; **सवि.** ४९४ पू.; **विता.**८५ वर्णेषु (दण्डेषु); **प्रका.**७८ अपवत्; **समु.**६७ अपवत्.

१ क्त. २ एव.

ब्राह्मण इत्यर्थः। व्रजेदिति वदन् यो निर्वासितो देशान्तरं गच्छति तस्यैवोक्तदशस्थानेष्वदण्डो न पुनर्ब्राह्मणमात्रस्येति दर्शयति। अत एव निर्वासनविधिशेषतयाऽपि तेनोक्तम् 'न जातु ब्राह्मणमि'ति। स्मृच.१२४

**[1]उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम्।**
**चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च॥**

(१) उपस्थं [1]प्रजननधर्मः स्त्रीपुंसयोः। उद्देशमात्रमिदं विनियोगस्तूत्तरत्र भविष्यति। यत्र च दण्डविशेषो नाम्नातस्तत्र यो येनैवाङ्गेनापराद्धः स तत्रैव पीडयितव्यः। तत्रागम्यागमन उपस्थनिग्रहः, चौर्य उदरत आहारनिवृत्त्यादिना, वाग्दण्डपारुष्ये जिह्वाहस्तयोः, पादबलेन व्यतिक्रामन्पादयोः, विवृत्य विश्रब्धं राजदारान्वीक्ष्यमाणश्चक्षुषोः, [2]तदनुलेपनगन्धमाजिघ्रन्नासिकायां, रहसि राजानं मन्त्रयमाणं कुड्यपटान्तरित उपशृण्वन्कर्णयोः, धने प्रसिद्धो दण्डः, देहे मारणं महापातकिनः। *मेधा.

(२) एतेषां यन्निमित्तापराधस्तत्रैवोपस्थादौ निग्रहः कार्य इति द्रष्टव्यम्। कर्म वा कारयितव्यो बन्धनागारं वा प्रवेशयितव्यः। मिता.२।२६

(३) उपस्थादीनां छेदनादिदण्डविषयत्वम्। धनस्य तु ग्रहं दण्डः। देहः कृत्स्नस्ताडनवधादिदण्डविषयः। मवि.

(४) उत्कोचप्रदानादौ व्ययप्रतिबन्धादिना धनस्य महापातकादौ देहस्य। अयं चोपस्थादीनां निग्रहो यत्रागम्यागमनचौर्यादौ क्षत्रविट्शूद्राणां दण्डविशेषो नाम्नातस्तत्र कार्यः। ×स्मृच.१२३

**[2]पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः।**
**मध्यमः पञ्च विज्ञेयः सहस्रं त्वेव चोत्तमः॥**

(१) मध्यम उत्तम इत्यत्र साहसपदानुषङ्गः कर्तव्यो मध्यमोत्तमशब्दावत्र केवलावपि शास्त्रान्तरदृष्टावाभ्यां दण्डः। उत्तम इति तत्र शास्त्रसिद्धया साहचर्यात्साहसं प्रतीयते। अवयवाः स्पष्टाः। मेधा.

(२) इयं परिभाषा प्रथमापराधविषयेऽनुसर्तव्या। पुनः पुनरपराधविषये त्वाह याज्ञवल्क्यः—'साशीतिपणसाहस्रो दण्ड'इति। स्मृच.१२७

पित्रादयोऽप्यपराधिनो दण्ड्या एव

**[1]पिताऽऽचार्यः सुहृन्माता भार्या पुत्रः पुरोहितः।**
**नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्मे न तिष्ठति॥**

भार्या पुत्रः स्वका तनुरात्मीयं शरीरं, कः पुनरात्मनो दण्डः प्रायश्चित्ततपोधनदानादिः, विचलितो [1]धर्मात् [2]स्वकाद्यो यः स्वधर्मा[3]न्नानुतिष्ठति स सर्वो दण्ड[4]्यः। मेधा.

धनद्वारा राज्ञो दण्ड्यत्वम्

**[2]कार्षापणं भवेद्दण्ड्यो यत्रान्यः प्राकृतो जनः।**
**तत्र राजा भवेद्दण्ड्यः सहस्रमिति धारणा॥**

प्राकृतो जनः सामान्यपुरुषो यो नातिगुणसंयुक्तस्तस्य यत्र यस्मिन्नपराधे यावान् दण्डस्तत्[5]सहस्रगुणो राज्ञः, कार्षापणग्रहणस्य दण्डपरिमाणोपलक्षणार्थत्वात् [6]दृष्टार्थत्वात् दण्डस्य तस्य चात्मानमनियम्य परो नियन्तुं न शक्यत इति युक्तं प्रत्यपराधे राज्ञो दण्डार्हत्वम्। महाधनत्वादल्पं दण्डं न विगणयेत्। राजाधिकृतानां मन्त्रिपुरोहितादीनामनयैव कल्पनया न्यूनाधिकभावः, धनदण्डश्च

---

* गोरा., ममु. मेधावत्। × शेषं मेधावत्।

(१) मस्मृ.८।१२५; मिता.२।२६; अप.२।२६; स्मृच.१२३ स्थमु (स्थ उ); विर.६३१; पमा.२०५; दवि.२१, ७३; सवि.४९४; विता.८५ धनं (धर्मो); प्रका.७८; समु.६७.

(२) मस्मृ.८।१३८; स्मृच.१२७ त्वेव (चैव); विर.६६५; स्मृसा.८२ मनुविष्णू; पमा.२१२ चो (मु); विचि.१९२; स्मृचि.३७ पञ्च (स च) सहस्रं (साहसः); दवि.२३ मनुविष्णू; नृप्र.१७ द्वे (द्वि) शेषं स्मृचवत्; बाल.२।२४९; प्रका.८ स्मृचवत्; समु.७० त्वेव चो (चैव तु); विव्य.५६.

१ प्रजनधर्मः. २ अनुलेपन.

(१) मस्मृ.८।३३५; स्मृच.१२६ यः स्व... ष्ठति (धर्माद्विचलितः स्वकात्); विर.६२८; पमा.२०७ स्मृचवत्; विचि.१९० यः स्व (यस्तु); दवि.५७; प्रका.७९ यः स्व... ष्ठति (तथा विचलितः स्वकात्); समु.६९ माता (भ्राता) शेषं स्मृचवत्; विव्य.५६.

(२) मस्मृ.८।३३६; अप.२।२७५ राजा (विप्रो); स्मृच.१२७ राजा (राज्ञा); विर.६५४ राजा भवेद्दण्ड्यः (राज्ञां भवेद्दण्डः); विचि.१९०; दवि.५४ विरवत्; सेतु.३११ विरवत्; प्रका.८० स्मृचवत्; समु.६९ स्मृचवत्; विव्य.५६ दण्ड्यो (दण्डो) राजा (राज्ञा).

१ धर्मः. २ स्वकान्यो. ३ न्न तु ति. ४ दण्डः. ५ त्सहगुणो. ६ (दृष्टार्थत्वात्०)

ब्राह्मणेभ्योऽप्सु प्रवेशनेन वरुणाय वा। यतो वक्ष्यति 'राज्ञां दण्डधरो हि सः'। ×मेधा.

ब्राह्मणस्य वधातिरिक्तो दण्डः

[1]मौण्ड्यं प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते।
इतरेषां तु वर्णानां दण्डः प्राणान्तको भवेत् +॥

यत्र क्षत्रियादीनां वध उक्तस्तत्र ब्राह्मणस्य मौण्ड्यं, यथाऽब्राह्मणः संग्रहणात्प्राणान्तं दण्डमर्हति, तथा तु पुमांसं दाहयेदिति। प्राणानामन्तं गच्छति प्राणान्तं वा करोति प्राणान्तकः। 'अन्येष्वपि दृश्यते' इति दण्डः। अन्ये तु प्राणान्तिक इति पाठान्तरं प्राणान्ते भवः प्राणान्तिकः अध्यात्मादित्वाट्ठञ् इतरेषां ब्राह्मणादन्येषां क्षत्रियादीनां वर्णानां प्राणान्तिक एव, श्रुतं मारणादि पूर्वमेव, तदनन्तरमिदमुच्यते, उच्यमानं मौण्ड्यं,तच्छेषतया सहस्रं दण्डो विधीयत इति मन्यन्ते। अन्यथा ब्राह्मणस्य प्राणान्तदण्डविधानात्कः प्रसङ्गो ब्राह्मणस्य, येनैवमुच्यते मौण्ड्यं प्राणान्तिक इति, पुमांसं दाहयेदिति सामान्यविधानप्रसक्तमिति चेत्तत्रैव कर्तव्यं स्यात्तथा हि स्फुटं तद्विषयत्वं प्रतीयते। *मेधा.

[2]ब्राह्मणस्य वधो मौण्ड्यं पुरान्निर्वासनाङ्कने।
ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेन तु॥
[3]न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम्।
राष्ट्रादेनं बहिः कुर्यात्समग्रधनमक्षतम्॥

× मनु. मेधावत्। + स्थलादिनिर्देशः स्त्रीसंग्रहणप्रकरणे द्रष्टव्यः।

* गोरा., मवि., ममु., मच., भाच., नन्द. मेधावत्।

(१) **मस्मृ**.८।३७९. (२) **मिता**.२।३०२; **अप**.२।८३ सनाङ्कने (सनं तथा)भिशस्ताङ्कः(ङ्ककरणं) तु (च) स्मृत्यन्तरम्: २।२७० सनाङ्कने (सनं तथा) भिशस्ताङ्कः (ङ्ककरणं ) तु (वा) नारदः; **स्मृच**.१२५ स्य वधो (स्यावधो) सनाङ्कने (सनं तथा) तु (च) याज्ञवल्क्यः; **पमा**.५८१; **व्यप्र**.१३९ अप.२।८३ वत्, स्मृत्यन्तरम्; **व्यउ**.१६५; **विता**.८२८ (=) चा (वा); **प्रका**. ७८ सनाङ्कने (सनं तथा) पू., याज्ञवल्क्यः; **समु**.६८ प्रकावत्, याज्ञवल्क्यः.

(३) **मस्मृ**.८।३८०; **विश्व**.२।८३,२।१९१ ष्वपि (ष्वव) देनं(त्वेनं); **मिता**.२।८१; **अप**.२।२१ (=) पू.: २।८३ (=): २।२७०; **स्मृच**.१२४ ष्वपि (ष्वव); **ममु**.८।१२३ स्मृचवत्; **विर**.६३२; **पमा**.२०८ ष्वपि (ष्वव) देनं (चैनं) कात्यायनः;

(१) सर्वपापेष्विति प्रकरणविधौ न केवलं संग्रहणे ब्राह्मणो न हन्यते यावदन्येष्वप्यपराधेषु। अपिशब्दो युगपत्सर्वपापकार्यपि ब्राह्मणो न जातु कदाचिद्धन्तव्यः। किं तर्हि तस्य पापकारिणः कर्तव्यं, राष्ट्रादेनं विषयाद् ब्राह्मणं बहिः कुर्यान्निर्वासयेत् समग्रधनं सर्वस्वसहितं अक्षतमक्षतशरीरं धनमप्यस्य नापहर्तव्यम्। कथं तर्हि दण्डो ब्राह्मणस्य, केचिदाहुर्निर्वासने त्वाधीयमानं सधनं निर्वास्य धनदण्डं प्रतिषेधति। अन्ये तु समग्रधनं हृतसर्वस्वं कृत्वा निर्वास्यत इति मन्यन्ते। +मेधा.

(२) तत्प्रथमकृतसाहसविषयं न सर्वविषयम्। शारीरस्तु ब्राह्मणस्य न कदाचिद्भवति। 'न जातु ब्राह्मणमि'ति। मिता.२।८१

[1]न ब्राह्मणवधाद्भूयानधर्मो विद्यते भुवि।
तस्मादस्य वधं राजा मनसाऽपि न चिन्तयेत्॥

पूर्वशेषोऽयमर्थवादः। न ब्राह्मणवधादन्यो बहुतरोऽधर्मो दुःखफलोऽस्ति अन्यशब्दाध्याहारेण पञ्चमी। तस्माद्धेतोरस्य ब्राह्मणस्य राजा मारणमङ्गच्छेदं वा मनसाऽपि नेच्छेत्। मेधा.

अशक्तानां मृदुदण्डः

[2]क्षत्रविट्शूद्रयोनिस्तु दण्डं दातुमशक्नुवन्।
आनृण्यं कर्मणा गच्छेद्विप्रो दद्याच्छनैः शनैः॥

+ गोरा., ममु., मच. मेधावत्।

**दीक**.३९; **विचि**.१८१ स्मृचवत्; **सवि**.१५१ स्मृचवत्; **व्यप्र**.१३७ पू.: १३८; **विता**.८५ ष्वपि (ष्वव) मग्र (मस्त) नारदः: १८८ देनं (देव): ८१७ स्मृचवत्, पू.; **बाल**. २।२६ स्मृचवत्; **सेतु**.२२० (=) पू.; **प्रका**.७८ स्मृचवत्; **समु**.६७ ष्वपि (ष्वव) राष्ट्रा (राज्या).

(१) **मस्मृ**. ८।३८१; **मिता**.२।८१; **अप**.२।८३ (=) भुवि (क्वचित्); **स्मृच**.१२५ द्भूयान (त्पापाद) भुवि (क्वचित्) दस्य (त्तस्य); **विर**.६३२ विद्यते भुवि (भुवि विद्यते); **पमा**. २०९; **विचि**.१८१; **नृप्र**.१७ उत्त.; **सवि**.१५२ न ब्राह्मण (ब्राह्मणस्य) नध (न्नाध); **व्यप्र**.१३८-१३९ अपवत्; **विता**. १८८; **बाल**.२।२६; **प्रका**.७९ स्मृचवत्; **समु**.६८ स्मृचवत्.

(२) **मस्मृ**.९।२२९; **स्मृच**.१२२ तृतीयपादः: १२४ दद्या (गच्छे); **विर**.६५८; **पमा**.२०९; **दवि**.६७ कात्यायनः; **नृप्र**.१७ तृतीयपादः; **बाल**.२।२०३; **सेतु**.३१४; **प्रका**.७८ स्मृचवत्; **समु**.६७.

(१) क्षत्रियादयो निर्धना न बन्धनेनावसादयितव्याः। किं तर्हि ? कर्मणा यद्यस्योचितं कर्म राजोपयोगि तेन दण्डधनं संशोधयितव्याः। ब्राह्मणस्तु कुटुम्बानामविरोधेन शनैर्दाप्यो, बन्धताडनकर्मणी तस्य निषिध्येते। धनिकविषयः प्रागुक्तः श्लोकः। दण्डविषयोऽयमपौनरुक्त्यम्। मेधा.

(२) आनृण्यं दण्डापक्रियाम्। मवि.

(३) ब्राह्मणः पुनः यथालाभं क्रमेण दद्यान्न कर्म कारयितव्यः। ममु.

**स्त्रीबालोन्मत्तवृद्धानां दरिद्राणां च रोगिणाम्।**
**शिफाविदलरज्ज्वाद्यैर्विदध्यान्नृपतिर्दमम्॥**

(१) कर्मकरणेऽप्यसमर्था दरिद्रा एव गृह्यन्ते। महापातकिनां साम्यात्तच्छिफादिभिस्ताडनम्। शिफा लता। विदलं वृक्षत्वक्। मेधा.

(२) स्त्रीबालादीनां पुनः शिफावेणुदलप्रहाररज्जुबन्धनादिभिर्दमनं राजा कुर्यात्। ममु.

ब्राह्मणविरोधिनस्तीव्रदण्डः

**ब्राह्मणान्बाधमानं तु कामादवरवर्णजम्।**
**हन्याच्चित्रैर्वधोपायैरुद्वेजनकरैर्नृपः॥**

अवरवर्णजः शूद्रः। बाधनं धनाद्याहरणं शरीरोपपीडनं च। चित्रा विविधोपायाः शूलारोपणं रक्तच्छेदः अङ्गकल्पनं खड्गप्रहारकर्तृका इत्याद्याः। उद्वेजनकरैर्दीर्घकालपीडाकरैः। मेधा.

महापातकिदण्डविचारः

**ब्रह्महा च सुरापश्च तस्करो गुरुतल्पगः।**
**एते सर्वे पृथक् ज्ञेया महापातकिनो नराः॥**

(१) **मस्मृ.**९।२३०; **स्मृच.**१२४ शिफा (शिफां); **विर.**६५८; **पमा.**२०९; **दवि.**६०; **नृप्र.**१७ पू.; **बाल.**२।२०३ णां च (णाम); **सेतु.**३१४; **प्रका.**७८; **समु.**६७ णां च (नाथ).

(२) **मस्मृ.**९।२४८; **विर.**६५४ णान् बाधमानं तु (णं बाधमानस्तु) जनकरै (गजनकै); **पमा.**५८२ रुद्वेजन (स्तमुद्वेग); **दवि.**६२ जनकरै (गजनकै); **सेतु.**२९७ दविवत्; **समु.**१५९ चित्रैः (चित्र).

(३) **मस्मृ.**९।२३५ तस्करो (स्तेयी च); **स्मृच.**३२४ ज्ञेया (वध्या); **विर.**६३४; **दवि.**४६; **सवि.**४७४ स्मृचवत्;

१ संबन्धेना. २ दमः कर्मकरणे.

सुरापो ब्राह्मण एव महापातकी। तस्करो ब्राह्मणसुवर्णापहारी। न यः कश्चित्। उक्तार्थकथनमुत्तरार्थम्। मेधा.

**चतुर्णामपि चैतेषां प्रायश्चित्तमकुर्वताम्।**
**शारीरं धनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत्॥**

ननु च सुरापो ब्राह्मण एव पातकी। तस्य च शारीरसंयुक्तो दण्डो नास्ति 'न शारीरो ब्राह्मणो दण्ड' इति। तत्र चतुर्णामपीति कथं ? केचिदाहुः। पतितः संप्रयुक्तो गृह्यते पूर्वमनुपात्तोऽपि, चतुःसंख्यासामर्थ्यात्। अन्ये त्वङ्कनं शारीरसंयुक्तमित्याहुः तच्च ब्राह्मणस्याप्यस्ति। अन्ये त्वपिशब्दात्पञ्चानामयं दण्ड इत्याहुः। चतुर्णामपि। अपिशब्दात्पञ्चमस्यापि तत्संसर्गिणः, ब्राह्मणस्य वधे पूर्वत्र शारीरदण्ड उक्त एव, स्त्रीबालब्राह्मणघ्नांश्च हन्यादिति। अनेनान्तःशरीरयुक्तमङ्कनमेवोच्यते। धर्म्यमित्यपराधानुरूपेण गुरुतरलाघवं कार्यमित्यर्थः। मेधा.

**गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः।**
**स्तेये च श्वपदं कार्यं ब्रह्महण्यशिराः पुमान्॥**

ललाटाङ्कनमप्रतिषेधविधौ, 'नाङ्क्या राज्ञा ललाटेषु' इति तच्छ्रवणात्। मेधा.

**बाल.**२।२६,२।८१ मस्मृवत्; **सेतु.**३२६ पश्च (पी च); **समु.**१५७ स्मृचवत्.

(१) **मस्मृ.**९।२३६; **मिता.**२।८१ चैतेषां (वर्णानां); **अप.**२।२७० शारीरं (शरीर) कल्पयेत् (कल्पितं); **स्मृच.**१२४ धर्म्यं (धर्मं) शेषं मितावत्; **विर.**६३४ शारीरं (शरीर) दण्डं धर्म्यं (धर्म्यं दण्डं); **पमा.**२०८ चैतेषां (वर्णानां) शारीरं (शारीर) कात्यायनः; **दवि.**२७० मितावत्, स्मृतिः; **नृप्र.**१७ दण्डं धर्म्यं ( धर्म्यं दण्डं ) शेषं मितावत्; **सवि.**१५१ मितावत्, स्मरणात्; **विता.**८७ (=),१८७ मितावत्; **बाल.**२।२६,२।८१; **प्रका.**७८ मितावत्; **समु.**६८ नृप्रवत्.

(२) **मस्मृ.**९।२३७; **मिता.**२।२७०; **अप.**२।२७० च (तु); **मभा.**१२।४४ च (तु) कार्यं (कार्यो) ब्रह्महण्य (ब्रह्मघ्नस्त्व); **गौमि.**१२।४४ तु (च); **मवि.** ब्रह्महण्यशिराः (अब्रह्मण्येऽशिराः); **विर.**६३५ अपवत्; **पमा.**४४५; **विचि.**१८३ श्वपदं (श्वापदं); **नृप्र.**४२; **सवि.**४६७; **व्यप्र.**३९०; **व्यउ.**१२८; **विता.**७९२-७९३ अपवत्; **सेतु.**३२६अपवत्.

१ मुत्तरार्धम्. २ च कर्तनं.

**असंभोज्या ह्यसंयाज्या असंपाठ्याविवाहिनः ।**
**चरेयुः पृथिवीं दीनाः सर्वधर्मबहिष्कृताः ॥**

सर्वधर्मग्रहणादेवासंभोजनादीनां सिद्धे प्रतिषेधे दोषगुरुत्वख्यापनार्थमेषामुपादानम् । संभोग एकत्र ग्रसनं गीतादिश्रवणं च । संयोजनं[1] तेषामेव याजनं[2] तैः सह याजनं वा । एवं संपाठोऽपि द्रष्टव्यः । असंपाठ्याविवाहिन इति । असंपाठ्याश्च अविवाहिनश्चेति द्वन्द्वः । दीना इति । सत्यपि स्ववत्वे तत्संबन्धनिषेधः भिक्षादिभोजनेन परयाऽवज्ञया च वस्त्रखण्डादिवर्जनम् । मेधा.

**ज्ञातिसंबन्धिभिस्त्वेते त्यक्तव्याः कृतलक्षणाः ।**
**निर्दया निर्नमस्कारास्तन्मनोरनुशासनम् ॥**

कृतलक्षणा इति निश्चिते कार्यकारणत्वे इत्यर्थः । व्याध्यादियोगेऽप्येषु दया न कर्तव्या । ज्यैष्ठ्यादिगुणयोगेऽपि च नैते नमस्कार्याः प्रत्युत्थानादिभिः । एष एव वचनसामर्थ्याद्धर्मो विज्ञेयः । मेधा.

वर्णविशेषेण महापातकिदण्डविचारः

**प्रायश्चित्तं तु कुर्वाणाः पूर्वे वर्णा यथोदितम् ।**
**नाङ्क्या राज्ञा ललाटे स्युर्दाप्यास्तूत्तमसाहसम् ॥**

शूद्रादन्ये पूर्ववर्णास्तेषां प्रायश्चित्तं कुर्वतामङ्कनं नास्ति दण्डस्तूत्तमसाहसं पणसहस्रं दाप्याः । मेधा.

**आगस्सु ब्राह्मणस्यैव कार्यो मध्यमसाहसः ।**
**विवास्यो वा भवेद्राष्ट्रात्सद्रव्यः सपरिच्छदः ॥**

प्रायश्चित्तं तु कुर्वाणा इत्येतदत्र नापेक्षते । एतेषु ब्रह्महत्यादिष्वपराधेषु ब्राह्मणो मध्यमसाहसं दण्ड्यः । अकामत इत्युत्तरश्लोकादपकृष्यते । दण्डयित्वा प्रायश्चित्तं कारयितव्यः । सपरिच्छदः । गुणवतो ब्राह्मणस्यानुग्राह्यस्यैतत् । अकामं वाऽनिर्वास्यः । मेधा.

**इतरे कृतवन्तस्तु पापान्येतान्यकामतः ।**
**सर्वस्वहारमर्हन्ति कामतस्तु प्रवासनम् ॥**

इतरे क्षत्रियादयो वर्णा एतानि पापानि महापातकान्यकामतोऽनिच्छया कृतवन्तः सर्वस्वहरणाः कार्याः । केचित्प्रायश्चित्तमपि कुर्वतामेतद्दण्डं पूर्वेण वैकल्पिकमिच्छन्ति । कामतस्तेषां वध उक्तः । शूद्रस्याकामतोऽङ्कनसर्वस्वहरणे कामतो वधः । मेधा.

महापातकिदण्डधनं राज्ञा न ग्राह्यम्

**नाददीत नृपः साधुर्महापातकिनो धनम् ।**
**आददानस्तु तल्लोभात्तेन दोषेण लिप्यते ॥**

(१) ननु धनेन दण्डनं राज्ञो वृत्तिरिति स्थापितम् । कथमिह तद्धनस्याग्रहणं उक्तं 'राजभिः कृतदण्डा'[1] इत्यत्रान्तरे । मेधा.

(२) धनं दण्डरूपमपि । मवि.

**अप्सु प्रवेश्य तं दण्डं वरुणायोपपादयेत् ।**
**श्रुतवृत्तोपपन्ने वा ब्राह्मणे प्रतिपादयेत् ॥**

---

(१) मस्मृ.९।२३८; अप.२।२७० ज्या ह्य (ज्यास्त्व) हिनः (हिकाः); स्मृच.३२४; विर.६३५ ह्य (अ) दीनाः ...ताः (सर्वा दाप्यास्तूत्तमसाहसम्); दवि.४५ पू.; सवि. ४७४ दीनाः सर्वधर्म (सर्वा सर्वकर्म); बाल.२।२६; समु. १५७ असंपाठ्या (अपाठ्याश्चा) दीनाः (सर्वा); भाच. भोज्या (पङ्क्त्या).

(२) मस्मृ.९।२३९; स्मृच.३२४ स्त्वे (श्चै) त्यक्त (कर्त) निर्दया (निर्वाच्या); विर.६३५; दवि.४५; सवि.४७४ निर्दया (निर्वाचा); बाल.२।२६; समु.१५७ स्मृचवत्.

(३) मस्मृ.९।२४० क.घ.पुस्तकयोः पूर्वे (सर्व), ख.पुस्तके पूर्वे (पूर्व); मिता.२।२७० पूर्वे (सर्वे) स्युः (तु); अप. २।२७० पूर्वे (त्रयो) दितम् (चितम्); स्मृच.३२५ स्युः (तु); विर.६३५ स्युः (षु); पमा.४४६ पूर्वे (सर्वे); दवि.४७ विरवत्; व्यप्र.३९० स्युर्दाप्यास्तू (तु दाप्यम्); व्यउ.१२८ त्तं तु (त्तं च) शेषं स्मृचवत्; व्यम.१०२ व्यउवत्; विता. ७९३ पमावत्; बाल.२।२६ पमावत्; सेतु.३२६ नाङ्क्या (अङ्क्या) स्युः (षु) उत्त.; समु.१५७ स्मृचवत्.

१ संयोजनं, २ योजनं.

(१) मस्मृ.९।२४१; स्मृच.३२४; विर.६३५ स्यैव (स्यैष); दवि.४७ आगःसु (आपत्सु) स्यैव (स्यैषु); बाल.२।२६; समु.१५७.

(२) मस्मृ.९।२४२; स्मृच.३२५ वासनम् (मापणम्); विर.६३५ न्यकामतः (नि धर्मतः) हार (हानि); दवि.४८; बाल.२।२६; समु.१५७ स्मृचवत्.

(३) मस्मृ.९।२४३; विर. ६३७ न दोषेण (नाधर्मेण); दवि.४९ दोषेण (पापेन); बाल.२।३०७; सेतु.३२७ विरवत्; समु.१५७ किनो (किनां).

(४) मस्मृ.९।२४४; विर.६३७-६३८ प्रवे (प्रवि) पपाद (पकल्प) वृत्तोपपन्ने वा (विद्योपसंपन्ने); दवि.४९ पपाद (पकल्प); बाल.२।३०७; सेतु.३२७ दविवत्; समु.१५७ तं दण्डं (तद्दण्डं).

१ राजनिर्धूतदण्डा.

वरुणायेदमिति मनसा ध्यायन्नप्सु दद्यादप्सु निक्षिपेत् । ब्राह्मणाय वा विद्याशीलसंपन्नाय दद्यात् । मेधा.

[1]ईशो दण्डस्य वरुणो राज्ञां दण्डधरो हि सः ।
ईशः सर्वस्य जगतो ब्राह्मणो वेदपारगः ॥

पूर्वस्य प्रतिपत्तिविधेरर्थवादोऽयम् । महापातकिनां[1] दण्डस्य वरुण ईष्टे । यतो राज्ञां स दण्डधरो नेता ईशितेति यावत् । एवं ब्राह्मणोऽपि तद्धनस्येशोऽनेन ग्राह्यः । मेधा.

[2]यत्र वर्जयते राजा पापकृद्भ्यो धनागमम् ।
तत्र कालेन जायन्ते मानवा दीर्घजीविनः ॥

[3]निष्पद्यन्ते च सस्यानि यथोप्तानि विशां पृथक् ।
बालाश्च न प्रमीयन्ते विकृतं न च जायते ॥

प्रसिद्धाविमावप्यर्थवादश्लोकौ । कालेन जायन्ते इति वर्तमानजन्म न विवक्षितं जाता जनिष्यमाणाश्च । विकृतिः करचरणाक्षिविहिनम् । मेधा.

युक्तदण्डप्रशंसा

[4]यावानवध्यस्य वधे तावान्वध्यस्य मोक्षणे ।
अधर्मो नृपतेर्दृष्टो धर्मस्तु विनियच्छतः ॥

अवध्यवधे यो दोषस्तत्तुल्यो वध्यमोक्षणे राज्ञ उपर्युक्तस्य षड्भागहरस्य स्वकर्माकुर्वतः प्रत्यवायेन अवश्यमेव भवितव्यम् । कुर्वतस्तु न कदाचिददृष्टासिद्धिः । यस्त्वयं धर्मस्तु विनियच्छत इति एवमादिधर्मप्रवादः सर्वोऽसौ स्वकर्मानुष्ठानप्रशंसार्थोऽर्थवादः । राज्यनिग्राह्यसंस्कारार्थस्त्वयं वधोपदेशः । अतो यथाश्रुतिचित्रवधोपायैः कर्तव्यः । दृष्टार्थेषु राज्यतन्त्रसिध्यर्थंवधश्रवणं यथा हि साधनश्च (?) हन्यादित्युक्तम् । तत्र दृष्टप्रयोजनत्वादुपदेशस्य न नियतो वधः । एवं च सत्युपायान्तरेणापि बन्धनादिना नियच्छतो न दोषः । मेधा.

## वाल्मीकिरामायणम्

दण्डप्रयोजनम्

[1]न हि धर्मविरुद्धस्य लोकवृत्तादपेयुषः ।
दण्डादन्यत्र पश्यामि निग्रहं हरियूथप ॥

[2]दण्डये यः पातयेद्दण्डं दण्ड्यो यश्चापि दण्डयते ।
कार्यकारणसिद्धार्थौ उभौ तौ नावसीदतः ॥

## याज्ञवल्क्यः

राजा दण्डधरः

[3]स्वाम्यमात्या जनो दुर्गं कोशो दण्डस्तथैव च ।
मित्राण्येताः प्रकृतयो राज्यं सप्ताङ्गमुच्यते * ॥

[4]तदवाप्य नृपो दण्डं दुर्वृत्तेषु निपातयेत् ।
धर्मो हि दण्डरूपेण ब्रह्मणा निर्मितः पुरा ॥

(१) एवं यद् दैवपुरुषकाराभ्यां कथमपि प्राप्तुं शक्यं राज्यं प्राक्तनानेकविधपुण्यसमुदायादैहिकविचित्रगुणसंपद्योगाच्च, धीमान् कृतविद्यः सत्यसंधश्च— 'तदवाप्य नृपो दण्डं दुर्वृत्तेषु निपातयेत्' । कस्मात् । यस्मात्—धर्मो हि दण्डरूपेण ब्रह्मणा निर्मितः पुरा । तद् राज्यं राजा सुदुर्लभं लब्ध्वा निर्व्याजप्रसाधितसमग्रदण्डपातैश्चतुर्वर्गप्राप्तिलम्पटः प्रयत्नाद् दुर्विनीयमानानालोच्याविनीतेषु यथार्हं दण्डं पातयेत् । न चातिमृदुहृदयतया हृद्विलेखः । धर्म एवायं दण्डाभिधानो ब्रह्माण्डान्तर्वर्त्यखिलप्राणिसङ्घोपकारार्थं ब्रह्मणा वेदेन निर्मितो विहितः । पुरेत्यनादित्वेन निर्विचिकित्सानुष्ठानप्ररोचनार्थम् । तथा च गौतमः—'ततः शेषेण विशिष्टदेशजाती'त्युपक्रम्य 'विष्वञ्चो विपरीता नश्यन्ति । तानाचार्योपदेशो दण्डश्च पालयते । तस्माद् राजाचार्यावनिन्द्यावि'त्यादि । +आम्नायश्च—'सह वा इदमभवत्' ।

---

(१) मस्मृ.९।२४५; विर.६३८ धरो (धनो) राज्ञां (राज्ञो); विचि.१९० प्रथमपादः, गौतमः; दवि.४९; बाल.२।३०७; सेतु.३२७ ईशो दण्डस्य (ईशः सर्वस्य); समु.१५८.

(२) मस्मृ.९।२४६; विर.६३८ पापकृद्भ्यो (ब्राह्मणेभ्यो); बाल.२।३०७; सेतु.३२७.

(३) मस्मृ.९।२४७ ख.पुस्तके कृतं (कृतिः); विर.६३८ प्तानि विशां पृथक् (क्तानि विशाम्पते) न च जायते (जायते न च); बाल.२।३०७ प्तानि (क्तानि); सेतु.३२७ प्तानि विशां पृथक् (क्तानि कृषीवलैः).

(४) मस्मृ.९।२४९; विर.६४९ वधे ता (वधे या) स्तु वि (श्चैव); दवि.६ स्तु वि (श्चैव); विव्य.२ (अवध्यस्य वधे यावान् तावान् वध्यस्य रक्षणे) पू.

१ पातकिनं.

* व्याख्यासंग्रहः राजनीतिकाण्डे द्रष्टव्यः ।

\+ अयमाम्नायः (पृ.५६६) इत्यत्र द्रष्टव्यः ।

(१) वारा.४।१८।२१. (२) वारा.४।१८।६५.

(३) यास्मृ.१।३५३; विश्व.१।३४९ त्या (त्यो); मिता.; अप.१।३५१ त्या (त्यौ) र्गं ( र्गः ); सवि.४६ त्या जनो (त्यजना); वीमि.

(४) यास्मृ.१।३५४; विश्व.१।३५०; मिता.; अप.१।३५२; सवि.४६ धर्मो हि दण्ड (दण्डो हि धर्म); वीमि.

इत्यादि । ×विश्व.१।३५०

(२) तदेवंविधं राज्यं प्राप्य दुर्वृत्तेषु वञ्चकशठधूर्तपरदारपरद्रव्यापहारिहिंसकादिषु नृपो दण्डं पातयेत्प्रयोजयेत् । हि यस्माद्धर्म एव दण्डरूपेण पूर्वं ब्रह्मणा निर्मितः । तस्य च दण्ड इति यौगिकी संज्ञा—'दण्डो दमनादित्याहुस्तेनादान्तान्दमयेत्' इत्यादिगौतमस्मरणात् । मिता.

(३) अलुब्धेन न्यायधनव्ययकारिणा कृतबुद्धिना वृद्धसेवाविद्यागमाभ्यां लब्धप्रज्ञेन सत्यसंधेन सत्यसंकल्पेन शुचिना शुद्धोपधेन बाह्याभ्यन्तरशौचवता च सुसहायेन शास्त्रोक्तगुणगणयुक्तमन्त्रिप्रभृतिसहायवता धीमताऽधिगतार्थानुचिन्तनवता स दण्डो न्यायतो यथाशास्त्रं नेतुं प्रणेतुं शक्यो भवति न पुनरन्येन । *अप.

कीदृशो राजा दण्डधारणार्हः

**स नेतुं न्यायतोऽशक्यो लुब्धेनाकृतबुद्धिना ।**
**सत्यसंधेन शुचिना सुसहायेन धीमता ॥**

(१) यतश्चैवंरूपो दण्डः — न स नेतुमित्यादि । केन तर्हि शक्यः—सत्यसंधेनेत्यादि । विश्व.१।३५१

(२) स पूर्वोक्तो दण्डो लुब्धेन कृपणेनाकृतबुद्धिना चञ्चलबुद्धिना न्यायतो न्यायानुसारेण नेतुं प्रयोक्तुं शक्यो न भवति । कीदृशेन तर्हि शक्य इत्याह—सत्यसंधेनाप्रतारकेण । शुचिना जितारिषड्वर्गेण । सुसहायेन पूर्वोक्तसहायसहितेन । धीमता नयानयकुशलेन स दण्डो न्यायतो धर्मानुसारेण नेतुं शक्यः । मिता.

यथाशास्त्रदण्डप्रयोगफलम्

**यथाशास्त्रं प्रयुक्तः सन् सदेवासुरमानवम् ।**
**जगदानन्दयेत्सर्वमन्यथा तत्प्रकोपयेत् ॥**

(१) कस्मात् पुनरयं प्रयत्नः । यस्मात्— यथाशास्त्रमित्यादि । यस्माद् दण्डाधीनौ जगतः कृत्स्नस्यानन्दप्रकोपौ, तस्माद् यत्नो दण्डप्रणीतौ कार्य इत्यभिप्रायः । विश्व.१।३५२

(२) स दण्डः शास्त्रोक्तमार्गेण प्रयुज्यमानः सन् देवासुरमानवैः सहितं इदं सर्वं जगदानन्दयेत् हर्षयेत् । अन्यथा शास्त्रातिक्रमेण प्रयुक्तश्चेज्जगत्प्रकोपयेत् । मिता.

**अधर्मदण्डनं स्वर्गकीर्तिलोकविनाशनम् ।**
**सम्यक् तु दण्डनं राज्ञः स्वर्गकीर्तिजयावहम् ॥**

(१) यतश्चैतदेवं, अतः—अधर्मदण्डनमिति । लोकः परराष्ट्रप्राप्तिः स्वराष्ट्रस्थैर्यं च । स्पष्टमन्यत् । विश्व.१।३५३

(२) न केवलमधर्मदण्डेन जगत्प्रकोपः अपि तु प्रयोक्तुर्दृष्टादृष्टहानिरपीत्याह —अधर्मदण्डनमिति । यः पुनः शास्त्रातिक्रमेण लोभादिना दण्डः कृतः स पापहेतुत्वात्स्वर्गं कीर्तिं लोकांश्च विनाशयति । शास्त्रोक्तमार्गेण तु कृतो धर्महेतुत्वात्स्वर्गकीर्तिजयानां हेतुर्भवति । मिता.

**यो दण्ड्यान् दण्डयेद्राजा सम्यग्वध्यांश्च घातयेत् ।**
**इष्टं स्यात्क्रतुभिस्तेन सहस्रशतदक्षिणैः ॥**

(१) एवं चालोच्य—यो दण्ड्यान्दण्डयेदित्यादि । क्रत्वर्थहिंसावच्चोरादिहिंसापि धर्म्यैवेत्यभिप्रायः । सहस्रशतदक्षिणो राजसूयः । क्रतुबहुत्वाद् बहुवचनम् । यद्वा शतदक्षिणा अग्निष्टोमादयः । सहस्रदक्षिणा अभिजिदादयः । स्पष्टमन्यत् । विश्व.१।३५५

---

× अप. विश्ववत् । * वीमि. अपवत्पाठमादृत्य व्याख्यानम् ।

(१) **यास्मृ**.१।३५५; **विश्व**.१।३५१ स नेतुं न्यायतो (न स नेतुमेतः); **मिता**.; **अप**.१।३५३ तोऽशक्यो लुब्धेना (तः शक्योऽलुब्धेन); **वीमि**. अपवत्.

(२) **यास्मृ**.१।३५६; **विश्व**.१।३५२ सर्वं (कृत्स्नं) तत् (तु); **मिता**.; **अप**.१।३५४ तत् (तु); **स्मृच**.१२८; **सवि**.४७; **वीमि**. नवम् (नुषम्); **प्रका**.८१; **समु**.७०.

(१) **यास्मृ**.१।३५७; **विश्व**.१।३५३ (अधर्मदण्डनं लोकस्वर्गकीर्तिविनाशनम्); **मिता**.; **अप**.१।३५५ (अधर्मदण्डनं स्वर्गकीर्तिलोकविनाशनम्); **स्मृच**.१२८ कविनाशनम् (कांश्च नाशयेत्); **विर**.६४९ (अधर्मदण्डनं लोके धर्मकीर्तिविनाशनम्) तु (च); **दवि**.८ तु दण्डनं (दण्डयनं) उत्त.; **वीमि**. अपवत्; **सेतु**.३०० (=) (अधर्मदण्डनं लोभकरं कीर्तिविनाशनम्) तु (च); **प्रका**.८१ स्मृचवत्; **समु**.७० स्मृचवत्.

(२) **यास्मृ**.१।३५९; **विश्व**.१।३५५; **मिता**. सहस्रशत (समाप्तवर); **व्यमा**.२७८ वध्यांश्च (दण्ड्यांश्च); **अप**.१।३५७ मितावत्; **स्मृच**.२६; **विर**.६४९ वध्यांश्च घात (भव्यांश्च पाल); **व्यचि**.१; **दवि**.८ दण्ड्यान् (दण्ड्यं); **सवि**.१५ वध्यांश्च घात (दण्ड्यांश्च पाल) शेषं मितावत्; **वीमि**.; **सेतु**.३०० दण्ड्यान् (दण्ड्यं) वध्यांश्च घात (साधूंश्च पाल); **प्रका**.१४ सह (साह); **समु**.४५; **विव्य**.२ व्यमावत्, क्रमेण बृहस्पतिः.

(२) किं च । यस्तु दण्ड्यान्स्वधर्मचलनादिना दण्डयोग्यान्सम्यक् शास्त्रदृष्टेन मार्गेण धिग्धनदण्डादिना दण्डयति, वध्यान्वधार्हान्घातयति तेन राज्ञा भूरिदक्षिणैः क्रतुभिरिष्टं भवति । बहुदक्षिणक्रतुफलं प्राप्नोतीत्यर्थः । न च फलश्रवणाद्दण्डप्रणयनं काम्यमिति मन्तव्यम् । अकरणे प्रायश्चित्तस्मरणात् । यथाह वसिष्ठः—'दण्डोत्सर्गे' इत्यादि । ×मिता.

**इति संचिन्त्य नृपतिः क्रतुतुल्यफलं पृथक् ।**
**व्यवहारान्स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहम् ॥**

(१) दण्ड्यादण्ड्यवध्यावध्यविवेकक्लृप्त्यर्थम् — इति संचिन्त्येत्यादि । पृथक् विविक्तानित्यर्थः । यद्वा क्रतुतुल्यफलं पृथगिति संबन्धः । एकैकदण्डने क्रतुफलप्राप्तिरित्यर्थः । विश्व.१।३५६

(२) दुष्टे सम्यग्दण्डः प्रयोक्तव्य इत्युक्तं, दुष्टपरिज्ञानं च व्यवहारदर्शनमन्तरेण न भवतीति तत्परिज्ञानाय व्यवहारदर्शनमहरहः स्वयं कर्तव्यमित्याह— इति संचिन्त्येत्यादि । इत्येवमुक्तप्रकारेण क्रतुतुल्यं फलं दण्ड्यदण्डेन, स्वर्गादिनाशं चादण्ड्यदण्डेन सम्यग्विचिन्त्य पृथक् पृथग्वर्णादिक्रमेण सभ्यैर्वक्ष्यमाणलक्षणैः परिवृतः प्रतिदिनं व्यवहारान्वक्ष्यमाणमार्गेण दुष्टादुष्टपरिज्ञानार्थं राजा स्वयं पश्येत् । मिता.

(३) पृथक् कार्यान्तरासंकरेण । +अप.

राज्ञः सर्वो दण्ड्यः

**अपि भ्राता सुतोऽर्घ्यो वा श्वशुरो मातुलोऽपि वा ।**
**नादण्ड्यो नाम राज्ञोऽस्ति धर्माद्विचलितः स्वकात् ॥**

(१) यस्माच्च सम्यग् दण्डनात् स्वर्गादिप्राप्तिः । तस्मात् — अपीत्यादि । विश्व.१।३५४

(२) अर्घ्योऽर्घार्हः आचार्यादिः । शेषः प्रसिद्धः । एते भ्रातृसुतादयोऽपि स्वधर्माच्चलिता दण्ड्याः किमुतान्ये । यतः स्वधर्माच्चलितः अदण्ड्यो नाम राज्ञः कोऽपि नास्ति । एतच्च मातापित्रादिव्यतिरेकेण । तथा च स्मृत्यन्तरम् — 'अदण्ड्यौ मातापितरौ स्नातकपुरोहितपरिव्राजकवानप्रस्थाः श्रुतशीलशौचाचारवन्तस्ते हि धर्माधिकारिणः' इति । मिता.

(३) यत्तु स्मृत्यन्तरम्—'अदण्ड्यौ' इत्यादि । तत्स्वल्पापराधविषयम् । न सर्वात्मना दण्डाभावाभिप्रायम् । अत एव दक्षः— 'पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति । श्वपदेनाङ्कयित्वा तं क्षिप्रं राजा विवासयेत्' ॥ अप.

उद्वृत्तसंघा दण्ड्याः

**कुलानि जातीः श्रेणीश्च गणान् जानपदानपि ।**
**स्वधर्माच्चलितान्राजा विनीय स्थापयेत्पथि ॥**

(१) कुलानि कुटुम्बानि । जातयो ब्राह्मणाद्या वर्णाः । श्रेणयः कारुकसमुदायः । गणा ब्राह्मणादिसमूहाः । जनपदो दुर्गाश्रयोऽत्र जनोऽभिप्रेतः । सोऽपि राज्ञा स्वधर्माच्चलितो दण्ड्य इत्यभिप्रायः । सर्वश्रेतरजनो वा जनपदः । सर्वथा सर्वः स्वधर्माच्चलितो राज्ञा दण्ड्य इत्यभिप्रायः । विश्व.२।३४

(२) कुलानि ब्राह्मणादीनाम् । जातयो मूर्धावसिक्तप्रभृतयः । श्रेणयस्ताम्बूलिकादीनाम् । गणा हेलाबुक्कादीनाम् । जानपदाः कारुकादयः । एतान्स्वधर्माच्चलितान्प्रच्युतान् राजा यथापराधं विनीय दण्डयित्वा पथि स्वधर्मे स्थापयेत् । दण्डं दुर्वृत्तेषु निपातयेदित्युक्तं स च दण्डो द्विविधः शारीरोऽर्थदण्डश्चेति । द्विविधोऽप्यपराधानुसारेणानेकधा भवति । *मिता.

(३) गणान् मठब्राह्मणादीन् । जनपदान् राष्ट्राणि । पूर्वं पूर्वत्रैकैकस्य दण्डो विहितोऽत्र तु बहूनामित्यपुनरुक्तता । +अप.

---

× अप. मितावत् । + शेषं मितावत् ।

(१) **यास्मृ.**१।३६०; **विश्व.**१।३५६; **मिता.**; **व्यमा.** २७८; **अप.**१।३५८; **स्मृच.**२६; **विर.**६४९; **व्यचि.**१; **सवि.**१६ लं (लान्) : ७२ (=) उत्त.; **वीमि.**; **व्यप्र.**१० उत्त.; **व्यउ.**६; **सेतु.**३००; **प्रका.**६; **समु.**११.

(२) **यास्मृ.**१।३५८; **अभा.**३ र्घ्यो वा (वापि); **विश्व.** १।३५४; **मिता.**; **अप.**१।३५६; **सवि.**४७; **वीमि.**; **व्यप्र.**२६; **व्यउ.**१३.

* विर. मितावत् । + शेषं विश्ववत् ।

(१) **यास्मृ.**१।३६१; **विश्व.**२।३४ (कुलानि जातयः श्रेण्यो गणान् जानपदानपि ); **मिता.**; **अप.**१।३५९ जान (जन); **स्मृच.**२९ (कुलानि प्रकृतीश्चैव श्रेणिजानपदानपि); **विर.**६२३; **पमा.**४६ (कुलानि प्रकृतीश्चैव श्रेणिर्जानपदानपि); **दवि.**२६३ णान् (णं); **सवि.**१७ नपि (नि च); **वीमि.** अपवत्; **प्रका.**१८ स्मृचवत्; **समु.**१३.

दण्डसंज्ञाः

**साशीतिपणसाहस्रो दण्ड उत्तमसाहसः।**
**तदर्धं मध्यमः प्रोक्तस्तदर्धमधमः स्मृतः॥**

(१) ताम्रकर्षस्तु पणसंज्ञः। अशीतिकृष्णलः षोडशमाषः कर्षः। तद् दर्शयति—साशीतिः पणसाहस्री दण्ड उत्तमसाहसः। सैषा पणशब्दवाच्या कृष्णलाशीतिः। ताम्रग्रहणमुपलक्षणं सुवर्णरूप्ययोरपि। कार्षिकपणो दण्डविशेषापेक्षया योज्यः। सहस्रगुणित उत्तमसाहसो दण्डः। यद्वा सहाशीत्या वर्तत इति साशीतिः। अशीत्यधिकसाहस्र इत्यर्थः। तदर्धं मध्यमसाहसः। स्मृत इति, शास्त्रादियं व्यवस्था न प्रमाणान्तरादित्यर्थः। संज्ञाकरणं स्वशास्त्रसंव्यवहारार्थम्। उत्तमसाहसादिदण्डवचनेष्वेत एव यथा स्युः। *विश्व.१।३६१

(२) स्वशास्त्रपरिभाषामाह—साशीतीति। पणानां सहस्रं पणसहस्रं तत्परिमाणमस्येति पणसाहस्रः। अशीत्या सह वर्तत इति साशीतिः। अशीत्यधिकपणसहस्रपरिमितो यो दण्डः स उत्तमसाहससंज्ञो वेदितव्यः। तदर्धं मध्यमः तस्य साशीतिपणसहस्रस्यार्धं चत्वारिंशदधिकपणपञ्चशतपरिमितो दण्डो मध्यमसाहससंज्ञः। तदर्धमधमः तस्य चत्वारिंशदधिकपञ्चशतपणस्यार्धं सप्तत्यधिकपणशतद्वयपरिमितो दण्डोऽधमसाहससंज्ञः स्मृत उक्तो मन्वादिभिः। यत्तु 'पणानामि'ति मनुनोक्तं तत्पक्षान्तरममतिपूर्वापराधविषयं द्रष्टव्यम्। +मिता.

(३) अतो यत्र यत्रोत्तमसाहसादिशब्दैर्दण्डो निगद्यते तत्र तत्रैतत्संख्याकाः कार्षापणास्तन्मूल्यनिष्कादयो वा ग्रहीतव्याः। स्मृच.१२८

दण्डप्रकाराः, अपराधानुरूपव्यवस्था च

**धिग्दण्डस्त्वथ वाग्दण्डो धनदण्डो वधस्तथा।**
**योज्या व्यस्ताः समस्ता वा ह्यपराधवशादिमे॥**

(१) अथ किं सर्वापराधेषूत्तमसाहसाद्यपेक्षया दण्डः प्रयोज्यः। नेत्युच्यते—वाग्दण्डस्त्वथेति। वाग्दण्डः स्वरूपाभिधानमात्रम्। धिग्दण्डः कुत्सनम्। धनदण्ड उक्तः। वधदण्डः शारीरः। तथाशब्द उच्चाटनाद्यर्थः। स्पष्टमन्यत्। विश्व.१।३६२

(२) दण्डभेदानाह—धिग्दण्डस्त्वथेति। धिग्दण्डो धिग्धिगिति कुत्सनम्। वाग्दण्डस्तु परुषशापवचनात्मकः। धनदण्डो धनापहारात्मकः। वधदण्डः शारीरोऽवरोधादिजीवितान्तः। एते चतुर्विधा दण्डाः व्यस्ता एकैकशः, समस्ताः द्वित्राः त्रिचतुरो वाऽपराधानुसारेण प्रयोक्तव्याः। उक्तक्रमेण पूर्वपूर्वासाध्ये उत्तर उत्तरः प्रयोक्तव्यः। यथाह मनुः—'धिग्दण्डमि'त्यादि। मिता.

**ज्ञात्वाऽपराधं देशं च कालं बलमथापि वा।**
**वयः कर्म च वित्तं च दण्डं दण्ड्येषु पातयेत्॥**

(१) अयं चात्र व्यवहारनीतिसंक्षेपः—ज्ञात्वाऽपराधमिति। अपराधपुनर्वचनं दृष्टान्तार्थम्। यथैवापराधं ज्ञात्वा तदपेक्षया दण्डप्रकल्पनं, तथैव च देशकालाद्यपेक्षयापीत्यभिप्रायः। ज्ञात्वेति पुनर्वचनं निर्णीतेऽपि व्यवहारे धर्मानुसारेण पुनर्व्यवहारोद्धरणार्थम्। स्पष्टमन्यत्। विश्व.१।३६३

(२) दण्डव्यवस्थानिमित्तान्याह—ज्ञात्वाऽपराधमिति। यथापराधं ज्ञात्वा तदनुसारेण दण्डप्रणयनमेवं देशकालवयःकर्मवित्तानि ज्ञात्वा तदनुसारेण दण्ड्येषु दण्डार्हेषु दण्डप्रणयनं कुर्यात्। तथा बुद्धिपूर्वाबुद्धिपूर्वसकृदावृत्त्यनुसारेण च। यद्यपि राजानमधिकृत्यायं राजधर्मकलाप उक्तस्तथापि वर्णान्तरस्यापि विषयमण्ड-

---

* दवि. विश्ववत् मितावच्च। + अप. मितावत्।

(१) **यास्मृ.**१।३६६; **विश्व.**१।३६१ तिप (तिः प) स्रो (स्री); **मिता.**; **अप.**१।३६४ तिप (तिः प); **स्मृच.**१२७; **विर.**६६५; **पमा.**२१२; **स्मृसा.**८३ अपवत्; **स्मृचि.**३७; **दवि.**२३; **नृप्र.**१७; **सवि.**४५३; **वीमि.** अपवत्; **व्यम.** ११० (=); **विता.**२७६ अपवत्; **प्रका.**८१; **समु.**७० स्रो (स्रं); **भाच.**८।१२० अपवत्.

(२) **यास्मृ.**१।३६७; **विश्व.**१।३६२ धिग् (वाग्) वाग् (धिग्) ह्य (ऽप्य) वशा (वला); **मिता.**; **अप.**१।३६५ ह्य (ऽप्य); **स्मृच.**१२५ विश्ववत्; **पमा.**२०५ धिग् (वाग्) वाग् (धिग्) ह्य (अ); **सवि.**४५४ मे (ह); **वीमि.**; **विता.**८९ विश्ववत्; **प्रका.**७९ विश्ववत्; **समु.**६८ विश्ववत्.

(१) **यास्मृ.**१।३६८; **विश्व.**१।३६३ वा (च) दण्डं दण्ड्येषु पात (ज्ञात्वा दण्डं प्रकल्प); **मिता.**; **अप.**१।३६६; **स्मृच.**१२७; **विर.**६२७ पात (कल्प); **व्यचि.**९६ (वयश्च कर्म चरितं दण्डं दण्ड्येषु दापयेत्); **दवि.**६४ विरवत्; **व्यत.** २३१ पात (दाप); **सवि.**४५४-४५५ वा (च); **वीमि.**; **प्रका.**८०; **समु.**६९.

लादिपरिपालनाधिकृतस्यायं धर्मो वेदितव्यः। 'राजधर्मान्प्रवक्ष्यामि यथावृत्तो भवेन्नृपः' इत्यत्र पृथङ्नृपग्रहणात्करग्रहणस्य रक्षार्थत्वाच्च रक्षणस्य दण्डप्रणयनायत्तत्वादिति। मिता.

(३) अपराधादि ज्ञात्वा दण्डं दण्ड्येषु पातयेत्प्रयुञ्जीत। अत्र च पूर्ववाक्यप्राप्तत्वादपराधज्ञानमनूद्यते। देशादिज्ञानं तु विधीयते। क्वचिद्धि देशे स्वल्पेनैव शीतेन आतपेन वा स्वल्पकालीनेन भोजननिवारणेनाधिका पीडा भवति। क्वचित्तु महताऽपि न तावती। तथा काले शरदादौ। तथा दण्डनीयबलं विदित्वा ताडनादिदण्डो विधेयः। तथा वयःकर्मवित्तानि। अन्यथा तत्स्वरूपनाशोऽग्निहोत्रादिकर्मलोपो वित्ताप्राप्तिश्च स्यात्। देशादि विदित्वा तु दण्डप्रणयने योगक्षेमावुपपद्येते इति। एतत्सर्वं क्षत्रियस्य राज्यं कुर्वतः प्रविहितम्। यदा पुनरक्षत्रियः क्षत्रियकार्यं कुर्यात्तदाऽनेनाप्येतत्सर्वमनुष्ठेयम्। 'तत्कार्यापत्त्या तद्धर्मलाभः' इति न्यायात्। करादानप्रयुक्तत्वाच्च प्रजापालनस्य। सर्वो हि धनं प्रयच्छन्नात्मसमवायि प्रयोजनमुद्दिशति। न च करदानस्य स्वगुप्तेरन्यत्प्रयोजनमस्ति। तस्मात्करमाददानेन प्रजापालनं विधेयमिति सिद्धम्। अप.

अधर्म्यदण्डने राजानं प्रति दण्डः

**[१]राज्ञाऽन्यायेन यो दण्डो गृहीतो वरुणाय तम्।**
**निवेद्य दद्याद्विप्रेभ्यः स्वयं त्रिंशद्गुणीकृतम्॥**

(१) ऋणादानाद्यखिलव्यवहारसंबन्धितया यथास्थानं युक्त्यागमानुसारेण प्राप्तोऽपि हि— राज्ञा न्यायेन इत्यादि। राज्ञा न्यायेन प्राप्तोऽपि हि यो दण्डः स्नेहादिना कथंचिदगृहीतः, तं स्वयमेव त्रिंशद्गुणीकृत्य उदकसंनिधौ वरुणाय निवेद्य वरुणमुद्दिश्येत्यर्थः। ततो विप्रेभ्यः प्रागुक्तदानविध्यनुसारेण (देयम्? दद्यात्)। चोदनामूलत्वाच्चास्याः स्मृतेरकरणेऽन्यथाकरणे वा प्रत्यवाय इत्येवं व्याख्येयम्। अन्यायेन वा यो दण्डो राज्ञा गृहीतः, तं स्वयमेवान्येनाशक्योऽपि कारयितुं त्रिंशद्गुणं वरुणाय निवेद्य विप्रेभ्यो दद्यादिति। यद्वा न्यायेनैव राज्ञा यो दण्डो गृहीतः, तमेव च सामर्थ्यात् *स्वयमेव त्रिंशद्गुणीकृतं विप्रेभ्यो दद्यादिति*। सर्वं चैतत् श्रुतिस्मृत्यनुसारान्न्याय्यमेवेत्यवसेयमिति। विश्व.२।३१०

(२) अन्यायगृहीतदण्डधनस्य गतिमाह — राज्ञाऽन्यायेनेत्यादि। अन्यायेन यो दण्डो राज्ञा लोभाद् गृहीतस्तं त्रिंशद्गुणीकृतं वरुणायेदमिति संकल्प्य ब्राह्मणेभ्यः स्वयं दद्यात्। यस्माद्दण्डरूपेण यावद्गृहीतमन्यायेन तावत्तस्मै प्रतिदेयमितरथाऽपहारदोषप्रसङ्गात्। अन्यायदण्डग्रहणे पूर्वस्वामिनः स्वत्वविच्छेदाभावाच्चेति। मिता.

## नारदः

दण्डप्रयोजनम्। धर्म्यदण्डः राज्ञा कर्तव्यः।

**[१]राजा त्ववहितः सर्वानाश्रमान् परिपालयेत्।**
**उपायैः शास्त्रविहितैश्चतुर्भिः प्रकृतीस्तथा॥**
**[२]यो यो वर्णोऽवहीयेत यश्चोद्रेकमनुव्रजेत्।**
**तं तं दृष्ट्वा स्वतो मार्गात्प्रच्युतं स्थापयेत्पथि॥**
**[३]वर्णाश्रमाणां संस्थानमानुपूर्व्यानुपूर्वशः।**
**तेषां हेतुरवस्थाने राजा सुप्रस्थितो यदि॥**
**राजमूलमिदं राष्ट्रं ब्रह्मक्षत्रपुरोगमम्।**
**स्थिते राजनि तद्धर्मे दुराचारान्न कुर्वते॥**
**[४]अशास्त्रोक्तेषु चान्येषु पापयुक्तेषु कर्मसु।**
**प्रसमीक्ष्यात्मना राजा दण्डं दण्ड्येषु पातयेत्॥**
**श्रुतिस्मृतिविरुद्धं च जनानामहितं च यत्।**
**न तत् प्रवर्तयेद् राजा प्रवृत्तं च निवर्तयेत्*॥**
**न्यायापेतं यदन्येन राज्ञाज्ञानकृतं च यत्।**
**तदप्यन्यायविहितं पुनर्न्याये निवेशयेत्*॥**

न्यायापेतं करपातनादि यदन्येन राज्ञा कृतमपि। निवर्त-

(१) **यास्मृ.**२।३०७; **अपु.**२५८।८२; **विश्व.**२।३१० ज्ञाऽन्या (ज्ञा न्या) ण्डो गृ (ण्डोऽगृ) **मिता.**; **अप.**२।३०६; **विर.**६६३; **पमा.**५८२ (=); **दवि.**७; **सवि.**५०० द्यात् (त्वा); **वीमि.**; **व्यउ.**१६५; **व्यम.**११०; **विता.**३०:८३० राज्ञाऽन्यायेन (अन्यायेन तु); **राकौ.**४९५; **समु.**७०.

* स्थलादिनिर्देशः दर्शनविधौ (पृ.९०) द्रष्टव्यः। व्याख्यानान्तराणि दर्शनविधौ कात्यायने (पृ.१०४) द्रष्टव्यानि।

(१) **नासं.**१९।५ कृती (कृतै); **नास्मृ.**२०।५; **विर.** ६२३-६२४.

(२) **नासं.**१९।६ ऽव (ऽप) यश्चो (यो वो); **नास्मृ.** २०।६ ऽव (ऽप) यश्चो ... व्रजेत् (यो य उद्रेकमाप्नुयात्); **विर.** ६२४; **दवि.**२६०. (३) **विर.**६२४. (४) **नासं.**१९।७; **नास्मृ.**२०।७ त्मना (त्मनो).

येत् । आत्मनाप्यज्ञानकृतं न्याये स्थापयेत् । नाभा.२०।८

[1] **राज्ञा प्रवर्तितान् धर्मान् यो नरो नानुपालयेत् ।**
**दण्ड्यः स पापो वध्यश्च लोपयन् राजशासनम् ॥**

[2] **अनादिश्चाप्यनन्तश्च द्विपदां पृथिवीपतिः ।**
**दीप्तिमत्त्वाच्छुचित्वाच्च यदि स्यान्न पथश्च्युतः ॥**

अविद्यमानाद्यन्तः । न चास्यादिरन्तो वा विद्यते । तस्मादविद्यमानाद्यन्तकार्योऽयम् । स करोति धर्मम् । न स इदानीन्तन इति (न?) परिभवितव्यः । अनादिरेव सः । न च तस्यान्तोऽस्ति । कालान्तरेऽपि प्रमाणं भवति धर्मः । अनाद्यन्तः द्विपदां मध्ये राजा । दीप्तिमत्त्वादीश्वरत्वाच्च तस्यानादित्वम् । शुचित्वात्, सर्वकालं हितत्वात् । ततश्चानन्तत्वम् । यदि स्वधर्मान्न च्युतः । च्युतश्चेद् न कश्चिदपि, 'संभूय निहन्तव्यश्चेत-सोन्माद आतुर' इत्युक्तः । नाभा.१९।१३

[3] **यदि राजा न सर्वेषां नियतं दण्डधारणम् ।**
**कुर्यात्पथो व्यपेतानां विनश्येयुरिमाः प्रजाः ॥**

[4] **ब्राह्मण्यं ब्राह्मणो हन्यात् क्षत्रियः क्षात्रमुत्सृजेत् ।**
**स्वकर्म जह्याद् वैश्यश्च शूद्रः सर्वान् विशेषयेत् ॥**

[5] **राजानश्चेन्नाभविष्यन् पृथिव्यां दण्डधारणे ।**
**शूले मत्स्यानिवापक्ष्यन् दुर्बलान् बलवत्तराः ॥**

[6] **सतामनुग्रहो नित्यमसतां निग्रहस्तथा ।**
**एष धर्मः स्मृतो राज्ञामर्थश्चापीडयन् प्रजाः ॥**

सदसतोरनुग्रहनिग्रहनिमित्तो धर्मो राज्ञामर्थश्च भवति प्रजा अपीडयन् दण्डेन । इतरोऽर्थः प्रजाः पीडयित्वा वर्जनीयः स्यात् । नाभा.१९।१७

[7] **न लिप्यते यथा वह्निर्दहञ्छश्वदिमाः प्रजाः ।**
**तथा न लिप्यते राजा दण्डं दण्ड्येषु पातयन् ॥**

दुष्टान् शासद् दोषेण न लिप्यते राजा । स्वधर्म-करणादिति हेतुः । वह्निर्दृष्टान्तः । नाभा.१९।१८

राजशासनप्रामाण्यम्

[1] **आज्ञा तेजः पार्थिवानां सा च वाचि प्रतिष्ठिता ।**
**ते यद् ब्रूयुरसत् सद्वा स धर्मो व्यवहारिणाम् ॥**

तेजोनिमित्तत्वात् तेज आज्ञा राज्ञाम् । सा च वाचि प्रतिष्ठिता वाङ्मात्रे प्रतिष्ठिता । तेज आज्ञारूपेण वाचि स्थितं यस्मात्, तस्मात् ते यद् ब्रूयुरसाधु साधु वा, स धर्मो मनुष्याणां, तेजसो माहात्म्यात् । नाभा.१९।१९

[2] **राजा नाम चरत्येष भूमौ साक्षात् सहस्रदृक् ।**
**न तस्याज्ञां व्यतिक्रम्य संतिष्ठेरन् प्रजाः क्वचित् ॥**

राजा नाम साक्षादिन्द्रः । तस्याज्ञामतिक्रम्यावस्थानं प्रजानां नास्ति । तस्मादनुवर्त्यते । नाभा.१९।२०

[3] **रक्षाधिकारादीशत्वाद् भूतानुग्रहदर्शनात् ।**
**यदेव कुरुते राजा तत् प्रमाणमिति स्थितिः ॥**

अहं रक्षिताऽस्मीति रक्षायामधिकृतो यः सोऽहितं कथं करिष्यति । न हि भोजनेऽधिकृतः कश्चित् तद्विप-रीतं करिष्यति । ऐश्वर्याद् बलादपि शक्तो व्यवस्था-पयितुम् । ईष्टे च सर्वस्य । नान्यः कश्चिद् बलात् प्रतिज्ञा-विपरीतस्य कारयितास्ति । दृश्यते चानुग्रहं कुर्वन् । तस्मात् तद्वचःप्रमाणेन स हितं प्रजानां करोति यथै-तैर्धर्मैर्युक्ता माता पुत्रस्य । नाभा.१९।२१

[4] **विगुणोऽपि यथा स्त्रीणां पूज्य एव पतिः सदा ।**
**प्रजानां विगुणोऽप्येवं पूज्य एव नराधिपः ॥**

[5] **राज्ञामाज्ञाभयाद्यस्मान्न च्यवेरन्पथः प्रजाः ।**
**व्यवहारादतो ज्ञेयं संवृत्तं राजशासनम् ॥**
**स्थित्यर्थं पृथिवीपालैश्चरित्रविषयाः कृताः ।**
**चरित्रेभ्योऽस्य तत्प्राहुर्गरीयो राजशासनम् ॥**

[6] **तपःक्रीताः प्रजा राज्ञा प्रभुरासीत् ततो नृपः ।**
**तस्मात् तद्वचसि स्थेयं वार्ता चासां तदाश्रया ॥**

---

(१) **नासं.**१९।१० दण्ड्यः (नद्यः); **नास्मृ.**२०।१३.
(२) **नासं.**१९।१३; **नास्मृ.**२०।१२ पूर्वार्धे (अनिर्दे-श्यावनिन्द्यौ च राजा ब्राह्मण एव च) स्यान्न (न स्यात्).
(३) **नासं.**१९।१४; **नास्मृ.**२०।१४ नियतं (वर्णानां).
(४) **नासं.**१९।१५; **नास्मृ.**२०।१५-१६ हन्यात् (जह्यात्) र्वान् (र्वं). (५) **नासं.**१९।१६; **नास्मृ.**२०।१५-१६ (राजानश्चेन्नाकरिष्यन्प्रजानां दण्डधारणम्) पक्ष्यन् (श्रीयुः).
(६) **नासं.**१९।१७; **नास्मृ.**२०।१७ पीडयन् प्रजाः (मित्रपीडनात्). (७) **नासं.**१९।१८; **नास्मृ.**२०।१८ दिमाः (दपि) तथा न लिप्यते (न लिप्यते तथा).

(१) **नासं.**१९।१९; **नास्मृ.**२०।१९ आ (प्र).
(२) **नासं.**१९।२०; **नास्मृ.**२०।२० जा नाम (जेति सं) व्य (अ).
(३) **नासं.**१९।२१; **नास्मृ.**२०।२१. (४) **नासं.**१९।२२; **नास्मृ.**२०।२२ विगुणो (निर्बलो) नराधिपः (प्रजापतिः).
(५) **नास्मृ.**२०।२३-२४. (६) **नासं.**१९।२३; **नास्मृ.**२०।२५. सीत् (सां) स्मात् त (तस्त).

पूर्वकृतेन तपसा साधिता राज्ञा प्रजाः । तस्मात् प्रभुत्वात् तद्वचसि स्थेयं पितृवचसीव । वार्ता जीवनं च तदाश्रया पितरीव । अन्यथा मात्स्यन्यायाद् विनाशः स्यात् । नाभा.१९।२३

कार्यविशेषेण देवताविशेषरूपत्वं राज्ञः

[1]पञ्च रूपाणि राजानो धारयन्त्यमितौजसः ।
अग्नेरिन्द्रस्य सोमस्य यमस्य धनदस्य च ॥
[2]कारणान्निर्निमित्तं वा यदा क्रोधवशं गतः ।
प्रजा दहति भूपालस्तदाग्निरभिधीयते ॥
[3]यदा तेजः समालम्ब्य विजिगीषुरुदायुधः ।
अभियाति परान् राजा तदेन्द्रः समुदाहृतः ॥
[4]विगतक्रोधसंतापो हृष्टरूपो यदा नृपः ।
प्रजानां दर्शनं याति सोम इत्युच्यते तदा ॥
[5]धर्मासनगतः श्रीमान् दण्डं धत्ते यदा नृपः ।
समः सर्वेषु भूतेषु तदा वैवस्वतो यमः ॥
[6]यदातिथिगुरुप्राज्ञान् भृत्यादीनवनीपतिः ।
अनुगृह्णाति दानेन तदा स धनदः स्मृतः ॥
[7]तस्मात् तं नावजानीयान्नाक्रोशेच्च विशेषतः ।
आज्ञायां चास्य तिष्ठेत मृत्युः स्यात् तद्व्यतिक्रमे ॥

गतार्थाः श्लोकाः । पञ्चानां रूपाणि धारयन्तीत्युक्त्या पञ्चापि स इत्युक्तम् । अतस्तद्भाव इत्युक्ते तद्रूपकारणमुक्तमेव भवतीति तद्रूपकारणप्रकर्ष उक्तो भेदेन । नाभा.१९।२५-३०

[8]तस्य वृत्तिः प्रजारक्षा वृद्धप्राज्ञोपसेवनम् ।
दर्शनं व्यवहाराणामात्मनश्चाभिरक्षणम् ॥

तस्य कर्तव्यं प्रजानां रक्षणम् । वृद्धाः शास्त्रकृतबुद्धयः । प्राज्ञो विना शास्त्रेण स्वाभाविकविनयः । शेषो गतार्थः । नाभा.१९।३१

ब्रह्मक्षत्रसहकार्यम्

[1]ब्राह्मणानुपसेवेत नित्यं राजा समाहितः ।
संयुक्तं ब्राह्मणैः क्षत्रं मूलं लोकाभिरक्षणे ॥

कृतकस्वाभाविकविनयानामासेवनस्योक्तत्वात् ब्राह्मणग्रहणं जातिमात्रोपसेवनार्थम् । ब्राह्मणैः संयुक्तं हि क्षत्रमविघ्नेन प्रजा रक्षति । अन्यथा कुपिता ब्राह्मणाः समूलं क्षत्रं दहेयुः अग्निवत् । नाभा.१९।३२

[2]ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ ।
नैतयोरन्तरं किंचित् प्रजाधर्माभिरक्षणात् ॥

दण्डसंज्ञाः

[3]शारीरश्चार्थदण्डश्च दण्डस्तु द्विविधः स्मृतः ।
शारीरो दशधा प्रोक्तो ह्यर्थदण्डस्त्वनेकधा ॥

अत्र शारीरो दण्डभेदः परिगणयितुं शक्यो नार्थदण्डभेद इत्याह स एव 'शारीरो दशधा प्रोक्तो ह्यर्थदण्डस्त्वनेकधा' इति । दशधेति न संख्यानियमार्थम् । यतो बहुविधस्य शारीरदण्डस्य वक्ष्यमाणत्वात् । स्मृच.१२३

[4]काकण्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव च ।
शारीरस्त्ववरोधादिर्जीवितान्तस्तथा स्मृतः ॥

(१) नासं.१९।२४; नास्मृ.२०।२६; प्रका.१३.

(२) नासं.१९।२५; नास्मृ.२०।२७ न्निर्नि (दनि); प्रका.१३ कारणान्निर्निमित्तं (अकारणान्निमित्तात्).

(३) नासं.१९।२६; नास्मृ.२०।२८ समु (स उ); प्रका.१३. (४) नासं.१९।२७; नास्मृ.२०।२९; प्रका.१३ ष्टरूपो (ष्टः पुष्टो) तदा (तथा).

(५) नासं.१९।२८; नास्मृ.२०।३० तो यमः (तः स्मृतः); प्रका.१३. (६) नासं.१९।२९; नास्मृ.२०।३१ तिथि (त्वर्थि) ज्ञान् (ज्ञ) अवनी (पृथिवी); प्रका.१३ ज्ञान् भृ (ज्ञा).

(७) नासं.१९।३० च्च (त्र) तः (येत्); नास्मृ.२०।३२ मे (मात्); प्रका.१३-१४ क्रोशेच्च (तिक्रामेत्) स्य (व).

(८) नासं.१९।३१; नास्मृ.२०।३३ वृत्तिः (धर्मः) (दर्शनं व्यवहाराणां उत्थानं च स्वकर्मसु); प्रका.१३.

(१) नासं.१९।३२; नास्मृ.२०।३४ क्ष (क्षे) रक्षणे (वृद्धये).

(२) नासं.१९।४०; नास्मृ.२०।४२ धृत (दृढ) (नानयोरन्तरं किञ्चित्प्रजा धर्मेण रक्षतोः).

(३) नासं.१९।१११ दशधा (द्विविधः); नास्मृ.२१।५३ रो (रं) क्तो ह्य (क्तम); मिता.१।३६१ ण्डस्तु (ण्डो हि) प्रथमार्धोत्तरं 'काकिण्यादि' इति श्लोकं पठित्वा द्वितीयार्धः पठितः; स्मृच.१२३ श्लोकार्धक्रमस्तु मितावत्; विर.६५३ दशधा (द्विविधः) ण्डस्त्व (ण्डोऽप्य); पमा.२०४ श्लोकार्धक्रमस्तु मितावत्; नृप्र.१७ द्वि (वि); सवि.४९४ (=) क्तो ह्य (क्त अ); विता.८४ पू.; बाल.२।२६; सेतु.३११ विरवत्; प्रका.७८; समु.६७.

(४) नासं.१९।११२ दिर्जी (दिजी); नास्मृ.२१।५४ स्त्व (संनि) था स्मृतः (थैव च); मिता.१।३६१; स्मृच.१२३ (शारीरस्ताडनादिस्तु मरणान्तः प्रकीर्तितः) श्लोकार्धौ व्यत्यासेन पठितौ; विर.६५३ (काकिन्यादिस्तु यो दण्डः स तु माषपरः स्मृतः) न्तस्तथा स्मृतः (न्तकरस्तथा); पमा.२०४ तथैव च (प्रकीर्तितः) शेषं स्मृचवत्; दवि.५४ था स्मृतः (थैव च) शङ्खः : ५६ था स्मृतः (थैव च) उत्त., कात्यायनः; नृप्र.१७;

द्विविधो दण्डः अर्थदण्डः शारीरश्च । शारीरो दशधा 'अर्थदण्डस्त्वनेकधे'त्युक्तम् । तद् विशेष्यते । संक्षेपेण तावदुभयमुच्यते । अर्थदण्डः काकण्या आरभ्य यावत् सर्वस्वं, शारीरोऽवरोधाद्यारभ्य यावन्मरणम् ।

नाभा.१९।१११-११२

[1]**काकिण्यादिस्तु यो दण्डः स तु माषपरः स्मृतः ।**
**माषावरार्धो यः प्रोक्तः कार्षापणपरस्तु सः ॥**

काकिन्यादिः काकिन्यवरः, माषपरो माषान्तः । तेन यत्रापराधे काकिन्यात्मको दण्ड उक्तस्तत्रानुबन्धगौरवात्पापातिशये माषपर्यन्त एव दण्डः कार्यः । विर.६५३

[2]**कार्षापणावराद्यस्तु चतुःकार्षापणोत्तरः ।**
**द्व्यवरोऽष्टपरश्चान्यस्त्र्यवरो द्वादशोत्तरः ॥**

अर्थदण्डो विशेष्यते । काकण्यादिर्य उक्तः स तु यावन्माषम् । माषजघन्यादारभ्य यः स तु कार्षापणपरः । कार्षापणादारभ्य यावच्चतुष्कार्षापणम् । द्विकार्षापणादारभ्य यावदष्टौ । त्रिकार्षापणप्रभृति यावद् द्वादश ।

नाभा.१९।११३-११४

[3]**कार्षापणाद्या ये प्रोक्ताः सर्वे ते स्युश्चतुर्गुणाः ।**
**एवमन्येऽपि बोद्धव्याः प्राक् च ते पूर्वसाहसात् ॥**

---

**सवि.**४९४ (=) तथैव च (उदाहृतः) शेषं स्मृचवत्; **विता.**८४ स्मृचवत्; **बाल.**२।२६ स्मृचवत्; **सेतु.**३११ दिर्जी (दिजी) न्तस्तथा स्मृतः (न्तकरस्तथा) उत्त.; **प्रका.**७८ स्मृचवत्; **समु.**६७.

(१) **नासं.**१९।११३ काकि (काक) वरा (परा); **नास्मृ.**२१। ५५ षपरः (षावरः) र्धो यः (र्धो ऽयं) सः (यः); **स्मृच.**१२७ षपरः (षावरः) र्धो (र्ध्यो) णप (णव); **विर.**६५३-६५४; **दवि.**५३ पू.; **सेतु.**३११ यः प्रो (यत्रो); **प्रका.**८० र्धो (र्ध्यो); **समु.**७० प्रकावत्. (२) **नासं.**१९।११४ वराद्य (परार्ध); **नास्मृ.**२१।५६ णोत्तरः (णावरः) ष्टप (ष्टाप); **स्मृच.**१२७ द्व (र्ध्य) शोत्तरः (शान्तकः); **विर.**६५४ परश्चा (पणस्त्व) उत्त.; **दवि.**५४ णोत्तरः (णावरः) परश्चान्यः (पलान्तश्च); **सेतु.**३११ परश्चा (पणस्त्व) उत्त.; **प्रका.**८० द्व (र्ध्य) णोत्तरः (णः परः) शोत्तरः (शान्ततः); **समु.**७० द्व (र्ध्य) श्चान्य (श्चोक्त).

(३) **मासं.**१९।११५; **स्मृच.**१२७ द्या (स्तु) पू.; **विर.** ६५४ बोद्धव्याः (विज्ञेयाः) च ते (चैते); **दवि.**५४ बोद्धव्याः (विज्ञेयाः) क् च ते (गेते); **सेतु.**३११ विरवत्; **प्रका.**८० स्मृचवत्, पू.; **समु.**७० पू.

(१) पूर्वसाहसः पणसहस्रद्वयं सार्द्धं, तस्मात्प्राग्ये दण्डविशेषास्ते अनुबन्धगौरवात्पापातिशये चतुर्गुणा ग्राह्याः । पूर्वसाहसादौ तु पापातिशये चातुर्गुण्यं नास्तीत्यर्थः । ×विर.६५४

(२) कार्षापणद्विकार्षापणत्रिकार्षापणाः चतुर्गुणपरमास्ते प्रोक्ताः । एवमन्येऽपि बोद्धव्याः । चतुष्कार्षापणादिः षोडशपरः । पञ्चादिर्विंशतिपरः । एवं प्राक् पूर्वसाहसात् पञ्चाशदादिद्विशतान्तम् । एवमेतद् दश संभवति । दोषोत्तर इति यत्रोच्यते तत्रापराधानुरूपेणैव काकण्यादयो द्रष्टव्याः । यत्र कार्षापणपर इत्युच्यते 'दमः कार्षापणपर' इत्यादौ, चतुर्माषादि यावत् कार्षापणम् । कार्षापणादारभ्य यावच्चत्वारि । अष्टोत्तरमिति यत्र, द्वावारभ्य यावदष्टौ । द्वादशोत्तरमिति यत्र, त्रिभ्य आरभ्य यावद् द्वादश । पूर्वसाहसपरमिति यत्र, पञ्चाशत आरभ्य यावत् पूर्वसाहसमिति अपराधानुरूपो विभागो द्रष्टव्यः । नाभा.१९।११५

[1]**चतुर्विंशावरः पूर्वः परः षण्णवतिर्भवेत् ।**
**शतानि पञ्च तु परो मध्यमो द्विशतावरः ॥**
[2]**सहस्रं तूत्तमो ज्ञेयः परः पञ्चशतावरः ।**
**त्रिविधः साहसेष्वेवं दण्ड उक्तः स्वयम्भुवा ॥**

चतुर्विंशतेरारभ्य षण्णवतिपर्यन्तः प्रथमः । द्विशतादारभ्य पञ्चशतपर्यन्तो मध्यमः । पञ्चशतादारभ्य सहस्रपर्यन्त उत्तम इत्यर्थः । विर.६६४

दश दण्डस्थानानि । अपराधाद्यनुसारेण दण्डतारतम्यम् ।

[3]**दश स्थानानि दण्डस्य मनुः स्वायम्भुवोऽब्रवीत् ।**
**त्रिषु वर्णेषु तानि स्युरक्षतो ब्राह्मणो व्रजेत् ॥**

---

× दवि. विरवत्।

(१) **नासं.**१९।८८-८९; **नास्मृ.**२१।३० उत्तरार्धे (चतुःशतपरो यश्च मध्यमो द्विशतावरः); **विर.**६६४; **स्मृसा.**८२ (=) तुर्विं (त्वारिं) तु प (ह्यव); **स्मृचि.**३७; **दवि.**२२ तुर्विं (त्वारिं) चतुर्विंशावर इति क्वचित्पाठः.

(२) **नासं.**१९।८९-९०; **नास्मृ.**२१।३१ वं दण्ड उ (व दण्डः प्रो); **विर.**६६४ स्रं (स्रः) परः (स तु); **स्मृसा.** ८२ (=) परः (चतुः); **स्मृचि.**३७ सहस्रं तु (साहसश्चो) परः (स तु) ष्वेवं (ष्वेव); **दवि.**२२ सह (साह) शेषं विरवत्, पू.

(३) **नासं.**१९।९४; **नास्मृ.**२१।३६ (त्रिषु वर्णेषु यानि स्युर्ब्राह्मण अक्षतः सदा).

[1]उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम् ।
चक्षुर्नासा च कर्णौ च स्तनौ देहस्तथैव च ॥
[2]अपराधं परिज्ञाय देशकालौ च तत्त्वतः ।
सारानुबन्धावालोच्य दण्डं दण्ड्येषु पातयेत् ॥

अपराधस्याल्पत्वमहत्वे ज्ञात्वा देशं स्वस्थं विपरीतं च । यथा स्वस्थे (न) तथा विपरीते । कालं यथा सुभिक्षे (न) तथा दुर्भिक्षे प्राणातिपातावस्थायाम् । सारं यथा ब्राह्मणस्य न तथेतरेषां, यथा वा क्षत्रियस्य न तथेतरयोः, यथा ब्राह्मणस्वं हरतो गरीयान् न तथेतरस्वम् । अनुबन्धं आजीवं गुरुकलत्रद्यूतदासीपानाद्यर्थम् । यस्मिन् दण्डिते महानधर्मः यथा लिखितस्य हस्तच्छेदे, यास्मंश्च शासिते भूयान् धर्मः यथा जम्बुकस्य, एतत्सर्वमनुरूपं दण्ड्येषु कुर्यात् । न यथोक्तमेवेति सर्वशेषः ।　　　　नाभा.१९।९६

[3]न मित्रकारणाद् राज्ञो विपुलाद् वा धनागमात् ।
उत्स्रष्टव्याः साहसिकास्तस्करा लोकवञ्चकाः ॥
[4]यावानवध्यस्य वधे तावान् वध्यस्य मोक्षणे ।
भवत्यधर्मो नृपतेर्धर्मस्तु विनियच्छतः ॥

ब्राह्मणस्य वधभिन्नो दण्डः

[5]न जातु ब्राह्मणं हन्यात् सर्वपापेष्वपि स्थितम् ।
निर्वासं कारयेत् कामं समग्रधनमक्षतम् ॥
[6]सर्वं वापि हरेद् राजा चतुर्थं वाऽवशेषयेत् ।
विप्रेभ्योऽनुस्मरन् धर्मं प्राजापत्यमिति स्थितिः ॥
[7]ब्राह्मणस्यापराधेषु चतुर्वङ्को विधीयते ।
गुरुतल्पे सुरापाने स्तेये ब्राह्मणहिंसने ॥

स्तेय इत्यविशेषवचनान्न शारीर इत्यादिप्रतिषेधान्महापातकसाहचर्याद् ब्राह्मणसुवर्णस्तेये ।　नाभा.१९।१०१

[1]गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः ।
स्तेये तु श्वपदं कृत्वा शिखिपित्तेन पूरयेत् ॥

(१) मयूरपित्तेन पूरिते न क्रीडन् तिरोभवति । उत्तरत्र ललाट इति वचनादिह देशावचनेऽपि ललाट एवेति गम्यते ।　　　नाभा.१९।१०२

(२) टङ्केन ललाटमुत्खाय मयूरपित्तेन पूरणमित्येतत् प्रकारान्तरं हरितिकेति प्रसिद्धम् ।　　दवि.४७

[2]अशिराः पुरुषः कार्यो ललाटे ब्रह्मघातिनः ।
असंभाष्यश्च कर्तव्यस्तन्मनोरनुशासनम् ॥

ब्राह्मणस्य ब्रह्मघातिनः ललाटादौ कबन्धवत् पुरुषोऽङ्कयः, असंभाष्यश्च कर्तव्यः निर्वास्य इत्यर्थः ।
　　　　नाभा.१९।१०३

कारुशिल्पिप्रभृतीनां वृत्तिसाधनानि न हरणीयानि

[3]आयुधान्यायुधीयानां वाद्यादीन् वाद्यजीविनाम् ।
वेश्यास्त्रीणामलङ्कारान् वाद्यातोद्यादि तद्विदाम् ॥
[4]यच्च यस्योपकरणं येन जीवन्ति कारुकाः ।
सर्वस्वहरणेऽप्येतत् न राजा हर्तुमर्हति ॥

---

(१) **नासं**.१९।९५; **नास्मृ**.२१।३७ स्तनौ (धनं).

(२) **नासं**.१९।९६; **नास्मृ**.२१।३८ (सारानुबन्धावालोक्य दण्डानेतान्प्रकल्पयेत्). (३) **नासं**.१९।९७; **नास्मृ**.२१।३९ ज्ञो (ज्ञा) (उत्स्रष्टव्यः साहसिकस्त्यक्तात्मा मनुरब्रवीत्).

(४) **नासं**.१९।९८; **नास्मृ**.२१।४०.

(५) **नासं**.१९।९९; **नास्मृ**.२१।४१ (निर्वास्यं कारयेत् काममिति धर्मो व्यवस्थितः).

(६) **नासं**.१९।१००; **नास्मृ**.२१।४२ वं वाऽपि (वैस्वं वा) विप्रे (एते). (७) **नासं**.१९।१०१; **नास्मृ**.२१।४३; **विर**.६३६; **बाल**.२।२६.

(१) **नासं**.१९।१०२; **नास्मृ**.२१।४४ सुराध्वजः (ध्वजः स्मृतः) चतुर्थपादं विना; **मिता**.२।२६ (स्तेये तु श्वपदं कार्यं ब्रह्महण्यशिराः पुमान्); **अप**.२।२६ मितावत्; **स्मृच**.१२५ मितावत्; **विर**.६३६ तु (च) पित्ते (नन्ते); **पमा**.२१० तु (च) शेषं मितावत्; **दवि**.४७; **विता**.८९ मितावत्; **बाल**.२।२६ पित्तेन (ग्रीवेण); **प्रका**.७९ मितावत्; **समु**.१५७ मितावत्.

(२) **नासं**.१९।१०३ अशि (विशि); **नास्मृ**.२१।४५; **विर**.६३७ ब्रह्म (द्विज) श्च (स्तु); **दवि**.४७ विरवत्, पू.; **बाल**.२।२६ अशि (विशि) शेषं विरवत्.

(३) **नासं**.१९।११ श्या (शा) दि(नि); **नास्मृ**.२०।१०(आयुधान्यायुधीयानां शिल्पद्रव्याणि शिल्पिनाम्) रान् (रं); **मिता**.२।३०२ वाद्या (वाद्य); **अप**.२।३०१ श्या (शा) वाद्यातोद्यादि (आतोद्यादीनि); **पमा**.५८१ (आयुधान्यायुधीयानां बीजानि कृषिजीविनाम्) दि (नि); **सवि**.४९३ वाद्यातोद्यादि तद्विदाम् (ह्यमातोद्यजीविनाम्); **व्यउ**.१६५ द्या (द्य) द्य (द्य) तो (न्या); **व्यम**.११०; **विता**.८२७ वाद्यातोद्यादि (आतोद्यानि च); **समु**.७० रान् (रं) दि (नि).

(४) **नासं**.१९।१२ तत् (तान्); **नास्मृ**.२०।११ रुकाः (रवः) तत् (तान्); **मिता**.२।३०२; **अप**.२।३०१ नास्मृवत्; **पमा**.५८१; **दवि**.६१ नास्मृवत्; **सवि**.४९३ च्च (स्य); **व्यउ**.१६५ हर्तुं (वक्तु); **व्यम**.११०; **विता**.८२८; **समु**.७०.

(१) सर्वस्वापहारेऽपि यद्यस्य जीवनोपकरणं तन्नापहर्तव्यं चौर्योपकरणं विना। मिता.२।३०२

(२) आयुधजीविनामायुधानि, वाह्यादीन् हस्त्यश्वरथगवादींस्तज्जीविनां, वेश्यानामाभरणानि, वाद्यातोद्यानि वीणामुरवादीनि तज्जीविनां, येन जीवन्त्युपकरणेन शिल्पिनः तेषां यद् यस्योपकरणं कुम्भकारस्य चक्रादि, तक्ष्णो वास्यादि, एवमादीन्यन्यान्यन्येषां सर्वस्वहरणेऽपि प्राप्ते न राजा हरेत्। किं पुनरन्यस्मिन्नपराधे। एतैर्विना न जीवन्ति, तस्माद् वधादर्वाङ् न हर्तव्यानि। नाभा.१९।११-१२

ब्राह्मणस्य विशेषार्हतास्थानानि

**ब्राह्मणस्यापरीहारोऽजघन्यासनमग्रतः।**
**प्रथमं दर्शनं प्रातः सर्वेषां चाभिवादनम्॥**

(१) अपरीहारोऽदण्डः, राज्ञोऽग्रत आसनमुपवेशनं, राज्ञे प्रातरात्मदर्शनम्। विर.६५९

(२) सर्वावस्थायां दर्शनं प्रति ब्राह्मणस्यापरीहारः। अजघन्यासनमुत्तमासनमग्रतः। जघन्यासनमित्यन्ये, आत्मासनान्निकृष्टमिति। प्रातस्तु सर्वेभ्यः प्रथमं दर्शनं, पुण्यत्वात् तेषां दर्शनस्य। बालवृद्धानां यूनां चाभिवादनम्। नाभा.१९।३३

**अग्रं नवेभ्यः सस्येभ्यो मार्गदानं च गच्छतः।**
**भैक्षहेतोः परागारे प्रवेशश्चानिवारितः॥**

नवसस्यानामग्रग्रहणं, गच्छतो ब्राह्मणस्य अग्रे मार्गदानं, भैक्षहेतोः परागारेष्वनिवारितः प्रवेशश्च, निवारणे त्वपराध एव। विर.६५९

**समित्पुष्पोदकादानेष्वस्तेयं सपरिग्रहात्।**
**अनाक्षेपः परेभ्यश्च संभाषश्च परस्त्रिया॥**

अस्तेयमचौर्यमतएवानपराधः स्वपरिग्रहात् परिग्रहविषयसमिदादीनामप्यादानात्। अनाधृष्यः परेभ्यश्च शत्रुभ्योऽप्यन्यतो ब्राह्मणो न दण्ड्यः। संभाषश्च परस्त्रिया इति भावादोषमात्राभिप्रायम्। विर.६५९-६०

**नदीष्ववेतनस्तारः पूर्वमुत्तारणं तथा।**
**तरेष्वशुल्कदानं च न चेद् वाणिज्यमस्य तत्॥**

अवेतनो भृतिशून्यः, तारः पारगमनम्। पूर्वमब्राह्मणेभ्यः, तरेषु पारं प्रापणीयेषु वस्त्रादिषु, अशुल्कदानं राजग्राह्यादानम्। यदि तस्य ब्राह्मणस्य न वस्त्रादि वाणिज्यार्थं स्यात्। विर.६६०

**वर्तमानोऽध्वनि श्रान्तो गृह्णन्नेकाशनः स्वयम्।**
**ब्राह्मणो नापराध्नोति द्वाविक्षू पञ्च मूलिकान्॥**

अध्वनि श्रान्तोऽननुज्ञाप्य स्वामिनं स्वयमेवात्मार्थं गृह्णन् निस्स्वो ब्राह्मणो नापराध्यति इक्षुद्वयं पञ्च मूलिकानिति। नाभा.१९।३७

## बृहस्पतिः

राज्ञः सर्वे दण्ड्याः

**ऋत्विक्पुरोहितामात्याः पुत्राः संबन्धिबान्धवाः।**
**धर्माद्विचलिता दण्ड्या निर्वास्या राजहिंसकाः॥**

दण्डसंज्ञाः

**कार्षापणसहस्रं तु दण्ड उत्तमसाहसः।**
**तदर्धं मध्यमः प्रोक्तस्तदर्धमधमः स्मृतः॥**

तत्र कार्षापणः पण एव द्वयोः पर्यायत्वात्। अत्र चतुर्विंशतिरित्यादौ सर्वत्र संख्येयाकाङ्क्षायां पणो

---

(१) **नासं**.१९।३३; **नास्मृ**.२०।३५ ऽजघ (राज) षां (भ्यः); **विर**.६५९ स्या (स्य) ऽजघन्या (राज्ञश्चा) षां (भ्यः); **दवि**.४३ प्रथमपादः.

(२) **नासं**.१९।३४; **नास्मृ**.२०।३६ नवे (नव) स्ये (स्त) श्चा (स्त्व); **विर**.६५९; **दवि**.४३ क्ष (क्ष्य) प्रथमपादं विना; **सेतु**.३१४ क्ष (क्ष्य) उत्त.

(३) **नासं**.१९।३५; **नास्मृ**.२०।३७ दानेष्व (दीनां ह्य) हात् (हम्) नाक्षेपः (नपेक्षः); **विर**.६५९ ष्पोदका (ष्पकुशा) सप (स्वप) क्षेपः (धृष्यः) या (याः); **दवि**.४३ ष्पोदका (ष्पकुशा) नाक्षेपः (नध्यक्षः) या (याः); **सेतु**.३१४ ष्पोदका (ष्पकुशा) उत्त.

(१) **नासं**.१९।३६ तार (तर) तरे (करे); **नास्मृ**.२०।३८ (तरेष्वशुल्कदानं च वणिज्यायां भवेत्स्थितिः); **विर**.६५९ स्ता (न्ता); **दवि**.९६ तरे (पण्ये); **सेतु**.३१४.

(२) **नासं**.१९।३७; **नास्मृ**.२०।३९ न्नेका (न्नन) ध्नोति (धी स्यात्) पञ्च मूलिकान् (द्वे च मूलके); **समु**.१५२ न्नेका (न्नन) पञ्च मूलिकान् (द्वे च मूलके).

(३) **स्मृच**.१२६; **विर**.६२८ त्याः पुत्राः (त्यपुत्र) याज्ञवल्क्यः; **पमा**.२०७ हिंसकाः (भिः पुरात्) मनुबृहस्पती; **दवि**.५७ विरवत्, याज्ञवल्क्यः; **सेतु**.३२५ विरवत्, याज्ञवल्क्यः; **प्रका**.७९; **समु**.६९.

(४) **पमा**.१५९; **स्मृसा**.८३ स्रं (स्रः) ण्ड उ (ण्डस्तू); **स्मृचि**.३७; **दवि**.२३ पू.; **समु**.७०.

द्रष्टव्यः, पणानामिति विष्णुवचनात् । कल्पतरुकारादयश्च मनुवचनानुसारेणैव तत्र तत्र साहसान् वक्ष्यन्ति । दवि.२३

अपराधजात्यादिनिमित्ततारतम्येन दण्डतारतम्यम्

**[1]वाग्धिग्धनं वधं चैव चतुर्धा कल्पितं दमम् ।**
**पुरुषं दोषविभवं ज्ञात्वा संपरिकल्पयेत् ॥**

तत्र वाग्दण्डो न त्वयेदं सम्यक् कृतमित्यादि निन्दा। ताडयैनमिति वाङ्मात्रमिति नारायणः । धिग्दण्डो धिक् त्वां पापीयांसमकार्यकारिणमित्यादिभर्त्सनम्। धनं द्विविधं व्यवस्थितमव्यवस्थितं च । तत्र व्यवस्थितं नियतसंख्यं साहसरूपं, तत् त्रिविधं प्रथमं मध्यममुत्तममिति । यत्रापराधानुबन्धादिना संख्याधिक्यं कल्प्यते तदव्यवस्थितं, तत्सामान्यतो द्विविधं पणादिरूपं माषादिरूपं च सर्वमिदमनुपदं वक्ष्यते । वधस्त्रिविधः, पीडनमङ्गच्छेदः प्रमापणं च । तेषु पीडनं चतुर्विधं, ताडनमवरोधनं बन्धनं विडम्बनं च । तत्र ताडनं कशाद्यभिघातः, अवरोधनं कारावासादिना कर्मनिरोधः, बन्धनं निगडादिभिरस्वातन्त्र्योत्पादनं, विडम्बनमनेकप्रकारं यथा—मुण्डनं गर्दभारोहणं चौर्यादिचिह्नाचरणं डिण्डिमादिना तत्तदपराधख्यापनं पुरनगरभ्रामणमित्यादि । दवि.२०

**[2]स्वल्पेऽपराधे वाग्दण्डो धिग्दण्डः पूर्वसाहसे ।**
**मध्योत्तमेऽर्थदण्डस्तु राजद्रोहे च बन्धनम् ॥**
**[3]निर्वासनं वधो वाऽपि कार्यमात्महितैषिणा ।**
**व्यस्ताः समस्ता एकस्य महापातककारिणः ॥**
**वाग्दण्डश्चैव धिग्दण्डो विप्रायत्तावुभौ स्मृतौ ।**
**अर्थदण्डवधावुक्तौ राजायत्तावुभावपि * ॥**
**[1]मित्रादिषु प्रयुञ्जीत वाग्दमं धिक् तपस्विनाम् ।**
**विवादिनो नरांश्चान्यान्दोषिणोऽर्थेन दण्डयेत् ॥**

पुरुषापेक्षया व्यवस्था दर्शिता । आदिग्रहणेन मान्या जना गृह्यन्ते । स्मृच.१२६

**[2]गुरून्पुरोहितान्पूज्यान्वाग्दण्डेनैव दण्डयेत् ।**
**विवादिनो नरांश्चान्यान्धिग्धनाभ्यां च दण्डयेत् ॥**
**[3]महापराधयुक्तांश्च वधदण्डेन शासयेत् ॥**
**[4]प्रतिलोमास्तथा चान्त्याः पुरुषाणां मलाः स्मृताः ।**
**ब्राह्मणातिक्रमे वध्या न दातव्या दमं क्वचित् ॥**

दातव्या दापयितव्याः । दवि.५८

चतुर्दश दण्डस्थानानि, ब्राह्मणस्य वधभिन्नो दण्डः

**[5]हस्ताङ्घ्रिलिङ्गनयनं जिह्वाकर्णौ च नासिका ।**
**ग्रीवापादार्धसंदंशललाटोष्ठगुदं कटिः ॥**
**[6]स्थानान्येतानि दण्डस्य निर्दिष्टानि चतुर्दश ।**
**ललाटेऽङ्को ब्राह्मणस्य नान्यो दण्डो विधीयते ॥**

अङ्गच्छेदश्च छेद्याङ्गभेदाच्चतुर्दशविध इति बृहस्पतिः। तान्याह—हस्ताङ्घ्रीत्यादि । अर्धपदं जिह्वायामप्यन्वेति द्वन्द्वोत्तरश्रुतत्वात्, अन्यथा जिह्वेति पुनरभिधानानर्थक्यात्। संदंशस्तर्जन्यङ्गुष्ठौ मिलितौ, अत्र पादार्धस्यापि दर्शनात् । 'उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम् । चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च' ॥ इति मनुवचने हस्तादौ द्वित्वमविवक्षितं पक्षप्राप्तानुवादो वा, एवञ्चास्य दशविधत्वाभिधानमपि न्यूनसंख्याव्यवच्छेदपरम्। देहग्रहणञ्चात्र प्रमापणपरं यदाह।

---

(१) **विर.**६२९ धनं (दण्डं); **दवि.**२० धं (धः) तं दमम् (तो दमः) दोषविभवं (विभवं दोषं) सं (तं); **समु.**६८ दविवत्.

(२) **स्मृच.**१२६ ल्पे (ल्पा) ध्योत्तमे (ध्यमे त्व) हे च (हेषु); **विर.**६२९ ण्डः (ण्डं) मध्योत्तमेऽर्थदण्डस्तु (मध्ये तु रोधनं दण्डं); **पमा.**२०६; **दवि.**६३ ण्डः (ण्डं) मेऽर्थदण्डस्तु (रे धनं दण्डं); **प्रका.**७९ स्मृचवत्; **समु.**६८ ल्पे (ल्पा) ध्योत्तमेऽर्थ (ध्यमोत्तम) च (षु).

(३) **स्मृच.**१२६; **विर.**६२९ वधो वा (विरोधे) व्यस्ताः (योज्याः) स्ता ए (स्ताश्चै); **पमा.**२०६ णः (णे); **दवि.**६३ वधो वा (निरोधो) व्यस्ताः (योज्यः) स्ता ए (स्त ए); **प्रका.**७९ पमावत्; **समु.**६८.

* व्याख्यानं स्थलादिनिर्देशश्च सभाप्रकरणे (पृ.५१) द्रष्टव्यः।

(१) **स्मृच.**१२६; **पमा.**२०६ दमं (दण्डं) रांश्चान्यान् (रांश्चापि); **प्रका.**७९; **समु.**६९ दमं (दण्डं).

(२) **स्मृच.**१२६; **विर.**६२९ धिग्धनाभ्यां च (दोषिणोऽर्थेन); **पमा.**२०६; **दवि.**५७ पू.; **नृप्र.**१७ पू., स्मृतिः; **सेतु.**३२५; **प्रका.**७९; **समु.**६९.

(३) **स्मृच.**१२५; **विर.**६२९; **सेतु.**३२५; **प्रका.**७९; **समु.**६८ पराध (पातक). (४) **दवि.**५८.

(५) **विर.**६३१; **दवि.**२१ ग्रीवा (जिह्वा); **बाल.**२।२६ श (शं) ष्ठ (ष्ठं); **समु.**६७ स्मृत्यन्तरम्.

(६) **विर.**६३१ टे (टो); **पमा.**२१० टेऽङ्को (टाङ्कं) उत्त.; **बाल.**२।२६; **समु.**६७ पू., स्मृत्यन्तरम्.

कुल्लूकभट्टः—देहदण्डो मारणमिति । प्रमापणं द्विविधं शुद्धं मिश्रं च । तयोः शुद्धं द्विविधमविचित्रं विचित्रं च, तत्राविचित्रं खड्गपातादिकृतं, विचित्रं शूलारोपणादिविचित्रोपायप्रयुक्तं; मिश्रं अङ्गच्छेदादिपूर्वकं मिश्रणं च दण्डान्तराणामपि यथायथमूहनीयम् । दवि.२१

**[१]महापातकयुक्तोऽपि न विप्रो वधमर्हति ।**
**निर्वासनाङ्कने मौण्ड्यं तस्य कुर्यान्नराधिपः ॥**

कामकृतविषयमेतत् । निर्वासनादिदण्डे कृतेऽप्यत्र दोषो नापैति उत्तमसाहसकल्पापराधत्वात् । स्मृच.३२४

शारीरदण्डप्रत्याम्नायद्रव्यम् । दासस्य नार्थदण्डः ।
धनदण्डादाने निर्वासनदण्डः ।

**[२]वधार्हः सुवर्णशतं दमं दाप्यस्तु पूरुषः ।**
**अङ्गच्छेदार्हकस्त्वर्धं संदंशार्हस्तदर्धकम् ॥**
**[३]ताडनं बन्धनं चैव तथैव च विडम्बनम् ।**
**एष दण्डो हि दासस्य नार्थदण्डो बृहस्पतिः ॥**
**[४]साक्षिलेख्यानुमानेन सम्यग् दिव्येन वा जितः ।**
**यो न दद्याद्देयदमं स निर्वास्यस्ततः पुरात् ॥**

जित इति निर्णीतदोषपुरुषमात्रपरं न्यायसाम्यात् । एवं च साक्षिलेख्येत्यादिकमपि प्रमाणमात्रपरम् । वाकारोऽनास्थायां, देयं विवादविषयीभूतं दममपराधमूलकं दण्डम् । दवि.६९

## कात्यायनः

दण्ड्यस्यादण्डने अदण्ड्यस्य दण्डने च दोषः

**[५]राजानो मन्त्रिणश्चैव विशेषादेनमाप्नुयुः ।**
**अशासनात्तु पापानां नतानां दण्डधारणात् ॥**

एनमिति छान्दसप्रयोगस्तेन पापमित्यर्थः । अथवा प्रक्रान्तमधर्ममित्यर्थः । क्वचिदेन इति ऋजुरेव पाठः । नतानां विनीतानां अदण्ड्यानामिति यावत् । दवि.६

(१) **स्मृच.**१२४ पू. : १२५, ३२४; **विर.**६३४ ने (नं); **पमा.**२१० ने मौण्डयं तस्य (करणे मौण्ड्यं); **दवि.**४६; **सवि.**४७४ (=) स्य (च्च); **विता.**८८; **बाल.**२।२६; **सेतु.**३२६; **प्रका.**७८; **समु.**१५७.

(२) **स्मृच.**१२७; **विर.**६५६ कस्त्वर्धं (स्तदर्धं); **पमा.**२१२ र्हः सुव (र्हकः स्व); **दवि.**६४ र्हः सुव (र्हस्तु स्व) शेषं विरवत्; **सेतु.**३१३; **प्रका.**८०.

(३) **स्मृच.**१२७; **पमा.**२१२ म्बनम् (न्नकम्) दास (शूद्र); **प्रका.**८०; **समु.**७०. (४) **विर.**६६३; **दवि.**६८.

(५) **विर.**६५०; **दवि.**६.

आचार्यादिदण्ड्यविचारः

**[१]आचार्यस्य पितुर्मातुर्बान्धवानां तथैव च ।**
**एतेषामपराधे तु दण्डो नैव विधीयते ॥**

तच्छारीरार्थदण्डयोर्निषेधार्थं न पुनर्दण्डमात्रस्य । स्मृच.१२६

**[२]मित्रादिषु प्रयुञ्जीत वाग्दण्डं धिक् तपस्विनि ।**
**यथोक्तं तस्य तत्कुर्यादनुक्तं साधु कल्पितम् ॥**

दण्डप्रायश्चित्तयोर्विकल्पः

**[३]शुद्धिस्तु शास्त्रतत्त्वज्ञैश्चिकित्सा समुदाहृता ।**
**प्रायश्चित्तं च दण्डश्च ताभ्यां सा द्विविधा स्मृता ॥**

दण्डसंज्ञाः

**[४]कल्पितो यस्य यो दण्डस्त्वपराधस्य यत्नतः ।**
**पणानां ग्रहणं तु स्यात्तन्मूल्यं वाऽथ राजनि ॥**

(१) ('अपराधेषु नियतमाहुर्गार्गीयमानवाः' इति वक्ष्यमाणश्लोकार्धमन्तर्भाव्य व्याचष्टे) यस्यापराधस्य संख्याविशेषवान् दण्डः प्रकल्पितः, तत्र संख्याया आकाङ्क्षायां पणो ग्राह्यः, पणमूल्यं वेति गार्गीयमानवा आहुः । पारिजाते तु आहुराग्नीयमानवा इति पठितम् । अग्निर्नाम मुनिः तन्मानवास्तस्य शिष्या इति व्याख्यातम् । विर.६५२

(२) अपराधेष्वित्यादि तृतीयमर्धं रत्नाकरे पठितं तच्चिन्त्यं, तदर्थविसंवादात् तस्योत्तरार्धेन चैकवाक्यतया वक्ष्यमाणत्वात् । दवि.३०

**[५]माषः पादो द्विपादो वा दण्डो यत्र प्रकल्पितः ।**
**अनिर्दिष्टं तु सौवर्णं माषकं तत्र कल्पयेत् ॥**

(१) **स्मृच.**१२६ धे तु (धेषु); **विर.**६२९; **पमा.**२०६; **दवि.**५८ स्मृचवत्; **सेतु.**३२५ न्धवा (ल्का); **प्रका.**७९; **समु.**६९.

(२) **विर.**६२९; **दवि.**५७ मि (पि) नि (नाम्) पू.; **सेतु.**३२६ नि (नां); **समु.**६२ नि (नाम्).

(३) **स्मृच.**१२८; **प्रका.**८१; **समु.**७०.

(४) **स्मृच.**३४,१२७; **विर.**६५२ तु (तत्); **दवि.**३० यत्न (तत्व) तु (तत्); **सवि.**८२ण्डस्त्व (ण्ड अ) यत्न (शक्ति); **प्रका.**२१,८०; **समु.**७० यत्न (तत्व).

(५) **स्मृच.**१२७ षः पा (षपा) कल्पि (वर्ति) सौवर्णं (विज्ञेयं) तत्र (तु प्र); **मनु.**८।३१९ उत्त.; **विर.**६६८; **स्मृसा.**८३ तत्र (तु प्र); **दवि.**२९; **प्रका.**२४८ स्मृचवत्; **समु.**७०.

**¹यत्रोक्तो माषको दण्डो राजतं तत्र निर्दिशेत् ।**
**कृष्णलैश्चोक्तमेव स्यादुक्तं दण्डविनिश्चये ॥**

यत्र माषको दण्ड इत्युक्त तत्र राजतो ग्राह्यः, यत्र कृष्णलो दण्डस्तत्र सौवर्णो ग्राह्य इत्यर्थः । विर.६६८

दण्डकर्तारं पापहेतुं च विचार्यैव दण्डः कल्प्यः

**²सचिह्नमपि पापं तु पृच्छेत् पापस्य कारणम् ।**
**तदा दण्डं प्रकल्पेत दोषमारोप्य यत्नतः ॥**
**³प्राणात्यये तु यत्र स्यादकार्यकरणं कृतम् ।**
**दण्डस्तत्र तु नैव स्यादेष धर्मः स्मृतो भृगुः ॥**

कल्पेतेति अन्तर्भावितणिजर्थम् । दोषं चौर्यादि आरोप्य सर्वरूपेणारोपयित्वा स्थिरीकृत्य निर्णीयेति यावत् । प्राणात्यये पापकरणं विना संभाव्यमाने इति शेषः । तेन चिह्नादविनाभूताल्लोप्त्रादिरूपात् प्रमाणान्तराद्वा चौर्यादौ निश्चितेऽपि तत् कारणं यदि यथोक्तः प्राणात्ययहेतुरवधार्यते तदा तस्य न दोषः, 'आत्मानं गोपायीत' इति विधिदर्शनात् नित्यस्यास्य विधेरतिक्रमायोगात् । एतद्वचनस्वरसादेव पापस्यानुत्पत्तेः । उत्पत्तौ वा प्रायश्चित्तेनापनोदसंभवात्, अतो न तन्मूलको दण्डः । तत्र हि तदभाव एव धर्म इति स्मृतः, भृगुराहेति समुदायार्थः । यच्च चौर्याधिकारे ब्राह्मणमुपक्रम्य गौतमवचनम् 'अवृत्तौ प्रायश्चित्ती स' इति तदप्येतत्समानविषयम् । तथा हि तदयमर्थः—अन्येन प्रकारेण जीवनानुपपत्तौ ब्राह्मणो न दण्ड्यः किन्तु प्रायश्चित्तं कार्यमिति । एवञ्चाततायिवधैनैकमूलकमेवेदम् । एतन्मूलकमेव वचनं पारदारिकेऽधिकरणे वात्स्यायनीयाः पठन्ति । 'आयुर्यशोरिपुरधर्मसुहृत् स चायम् । कार्यो दशाविपरिणामवशान्न कामात्' । इति । दवि.३९-४०

**⁴सद्वृत्तानां तु सर्वेषामपराधो यदा भवेत् ।**
**अवशेनैव दैवात्तु तत्र दण्डं न कल्पयेत् ॥**

(१) स्मृच.१२७ कौ द (कैर्द) ये (यः); विर.६६८; स्मृसा.८३; दवि.२९ लै (ल) श्च (र्ण); प्रका.८० स्मृचवत्; समु.७०. (२) विर.६५०; दवि.३९.

(३) स्मृच.१२६ स्मृतो भृगुः (भृगुः स्मृतः); विर.६५१; पमा.२११ ण्डस्त (ण्डं त) शेषं स्मृचवत्; दवि.३९; सेतु.३१० कृ (स्मृ); प्रका.८०; समु.६९.

(४) विर.६५१; दवि.४१; सेतु.३१० दा (था).

अवशेन भयादिवशतया दैवात्प्रमादात् । अतःपरमतोऽन्येष्वपि प्रदुष्टेषु दण्डं नैव प्रकल्पयेदिति खण्डं पारिजातपठितं तच्च कामधेनौ कल्पतरौ चादर्शनान्न पुरस्कृतम् । विर.६५१

**¹सम्यग्दण्डप्रणेतारो नृपाः पूज्याः सुरैरपि ॥**

अपराधोपक्रममध्यसमाप्त्यादिकं विचार्य दण्डतारतम्यम्

**²आरम्भे प्रथमं दद्यात्प्रवृत्ते मध्यमः स्मृतः ।**
**यस्य यो विहितो दण्डः पर्याप्तस्य स वै भवेत् ॥**

आरम्भे तत्फलावच्छिन्नकर्मैकदम्बान्तर्भूतार्थएककर्मफलकत्यामित्यर्थः । प्रथमः कथितः संपूर्णदण्डचतुर्थभागात्मा । प्रवृत्ते तथाविधानेककर्मफलककृत्यां मध्यमो दण्डार्धः । पर्याप्तस्य स वै भवेत्पर्याप्तिस्तत्पापफलकस्वकर्मजनककृतिः । तद्वतः पुरुषस्य स वै भवेत्संपूर्णो दण्डो भवेत् । एकपापफलावच्छिन्नानेककर्माभिप्रायमेवैतत् । विर.६५२

**³अपराधेषु नियतमाहुर्गार्गीयमानवाः ।**
**दण्डनीयः स शैथिल्यात्प्रथमं नेति गोतमः ×॥**

(१) शैथिल्याद्दण्डहेतुकर्मनिश्चयशैथिल्यात्तदनिश्चयादिति यावत् । विर.६५२

(२) यत्तु रत्नाकरे—शैथिल्याद्दण्डहेतुकर्मनिश्चयशैथिल्यात् तदनिश्चयादिति पूर्वार्द्धे व्याख्यातम् । तच्चिन्त्यम् । अपराधासिद्धौ दण्डस्य प्राप्त्यभावेन प्रतिषेधायोगात् । विषयभेदेन मतभेदोपन्यासायोगाच्च । तथा हि पूर्वश्लोकार्थः । तेषु तेष्वपराधेषु मन्वाद्युक्तत्तद्दण्डनियमं गार्गीयमानवा गर्गशिष्या वदन्ति । गौतमस्तु नियमं न मन्यते । दण्डस्य दुर्वृत्तनिवर्तकतया दृष्टार्थत्वेन यावता तन्निवृत्तिस्तावत एव शास्त्रार्थत्वात् । तन्निवृत्तौ तस्य तस्यौत्सर्गिकत्वेन मन्वादिभिस्तथातथाभिधानादिति । एतन्न्यायमूलकमेव संग्रहप्रकरणीयं बृहस्पतिवचनम्—'त्रयाणामपि चैतेषां प्रथमोत्तममध्यमः ।

× पूर्वार्धव्याख्यानं 'कल्पितो यस्य' इति श्लोके (पृ.५९३) द्रष्टव्यम् ।

(१) विर.६५१. (२) विर.६५१ वृत्ते (वृत्तौ); दवि.५० मं दद्यात् (मो दण्डः) विहि (ऽभिहि); सेतु.३१०.

(३) विर.६५२; दवि.५१ यत (यम) नेति (वेत्ति); सेतु.३१० उक्त.

विनयः कल्पनीयः स्यादधिको द्रविणाधिकः' इति । तथा 'कार्षापणं भवेद्दण्ड्य' इत्यादि मनुवचनं तन्न्यायमूलकमेव । यच्चाधिकृतगुरुविप्राणामाक्रोशे निर्भर्त्सनं ताडनं गोमयालेपनं खरारोहणं दर्पहरो दण्डो वेति शङ्खलिखिताभ्यामुक्तं तस्याप्युक्त एवार्थे तात्पर्यम् । कात्यायनीयेनैकमूलकत्वे लाघवात् । दवि.५१-५२

[1]अर्थवन्तो यतः सन्तो यथोक्तानपि ते दमान् ।
दद्युर्नैवोपशाम्येयुस्तस्मात्तत्र विनिश्चयः ॥
[2]तस्माद्दण्डाहताः पापा येन येनाशुभं पुनः ।
न कुर्युस्तत्तदेवैषां कर्तव्यमिति निश्चयः ॥

न निश्चयो न विहितदण्डसंख्यानियमः, इति निश्चय इति सिद्धान्तः । दवि.५१

संहत्याऽपराधे दण्डः

[3]समूहस्थाः प्रवृत्ताश्च पापेषु पुरुषाधमाः ।
यथोक्ताद्द्विगुणं दण्डमेकैकस्य प्रकल्पयेत् ॥

समूहस्थाः मिलिताः । यथोक्तादेकाकिनः पुरुषस्य पापे प्रवृत्तस्य यो दण्ड उक्तस्तस्मात् । विर.६५३

वर्णादिभेदेन दण्डभेदः । दासादिदण्डः । ब्राह्मणस्य वधातिरिक्तो दण्डः ।

[4]येन दोषेण शूद्रस्य दण्डो भवति धर्मतः ।
तेन चेत्क्षत्रविप्राणां द्विगुणो द्विगुणो भवेत् ॥
[5]प्रव्रज्यावसितं शूद्रं जपहोमपरायणम् ।
वधेन शासयेत्पापं दण्डयो वा द्विगुणं दमम् ॥

प्रव्रज्या उत्तराश्रमपरिग्रहरूपा, सा च यद्यपि श्रुतिस्मृतिभ्यां शूद्रस्य नोक्ता, तथापि शैवागमोक्तामपि तां गृहीत्वा यस्त्यजेत्स शूद्रः प्रव्रज्यावसितः । श्रुतिस्मृत्यनुक्ता अपि शैवादिधर्मा राज्ञा परिपाल्या एव । द्विगुणो वधार्हस्य पाक्षिको यो दण्डस्तदपेक्षया बोध्यः ।
+विर.६५५

[1]यः शूद्रो वैदिकं कर्म स्मार्तं वा भाषते यदि ।
तस्य दण्डं द्वे सहस्रे सृक्किर्णी चैव भेदयेत् ॥
अस्पृश्यधूर्तदासानां नराणां पापकारिणाम् ।
प्रतिलोमप्रसूतानां ताडनं नार्थतो दमः ×॥
[2]परतन्त्राश्च ये केचिद्दासत्वं ये च संस्थिताः ।
अनाथास्ते तु निर्दिष्टास्तेषां दण्डस्तु ताडनम् ॥

परतन्त्रा भार्यापुत्रादयः, संस्थिताः प्राप्ताः, अनाथा अनीश्वराः, निर्दिष्टा निर्धनाः । विर.६५५

[3]ताडनं बन्धनं चैव तथैव च विडम्बनम् ।
एष दण्डो हि दासस्य नार्थदण्डो विधीयते ॥

ताडनं कशाद्यभिघातः विडम्बनं मुण्डनगर्धभारोहणादि । विर.६५५

[4]सुवर्णशतमेकं तु वधार्हो दण्डमर्हति ।
अङ्गच्छेदे तदर्धं तु विवासे पञ्चविंशतिम् ॥

(१) अङ्गच्छेदे अर्हे विवासे अर्हे, क्वचित्पाठो विनाशे इति तत्रापि तद्देशवासविनाशे अर्हे इत्येक एवार्थः । विर.६५७

(२) वधार्हे अपराधे प्रसक्तवधो ब्राह्मणः शतं सुवर्णान् दण्ड्यः । विचि.१६०

[5]कुलीनार्यविशिष्टेषु निकृष्टेष्वनुसारतः ।
सर्वस्वं वा निगृह्यैतान् पुराच्छीघ्रं प्रवासयेत् ॥
[6]निर्धना बन्धने स्थाप्या वधं नैव प्रवर्तयेत् ।
सर्वेषां [illegible]
कुली[illegible]

---

(१) विर.६५३;दवि.५१ युस्त (रन् त) त्तत्र वि (त्तेषु न).

(२) विर.६५३; दवि.५१ द्दण्डा (दव्या).

(३) विर.६५३; दवि.५३ श्च (श्चेत्) कस्य प्रकल्प (कं तान् प्रदाप) व्यासः; सेतु.३११ कस्य प्रकल्प (कं च प्रदाप).

(४) स्मृच.१२७; पमा.२११ तेन चेत् (न चैतत्) पितामहः; दवि.३७ चेत् (विट्); नृप्र.१७ पमावत्; प्रका.८०; समु.६९.

(५) स्मृच.१२७; विर.६५४ रायणम् (रं तथा) दण्डयो (दाप्यो); पमा.२१२ शास (गम) वा (ऽपि) : ५८२ रायणम् (रं तथा); दवि.३२२ रायणम् (रं तथा) शास (शाम) पं (दं); नृप्र.१७; सेतु.२९८ विरवत्; प्रका.८०; समु.१६५.

+ [illegible] 'शैवादिधर्मा' इत्यत्र 'बौद्धादिधर्मा' इति [illegible]

× व्याख्यासंग्रहः स्थलादिनिर्देशश्च दण्ड[illegible]प्रकरणे द्रष्टव्यः ।

(१) [illegible] ३१२; समु.६९. (२) [illegible] (ण्डन्तु) (४) [illegible] ६४; सेतु.३१३; समु.६९. (५) [illegible] सेतु.३१३. (६) विर.६५७; दवि.६४ स्थाप्या (धार्या).

गुणवान्, एतेषु निकृष्टेषु अल्पधनेषु वधार्हेषु अनुसारतः सुवर्णशतासंभवेऽपीदं, तस्याप्यसंभवे सर्वस्वम् । विर.६५७

[1]विप्रो वधाङ्गच्छेदार्हो निःसङ्गे बन्धने विशेत् ।
तदा कर्मवियुक्तोऽसौ वृत्तस्थस्य दमो हि सः ॥
[2]कूटसाक्ष्यपि निर्वास्यो विख्याप्योऽसत्प्रतिग्रही ।
अङ्गच्छेदी वियोज्यः स्यात्स्वधर्मे बन्धनेन तु ॥

वधाङ्गच्छेदार्हो यस्मिन्नपराधे वधोऽङ्गच्छेदो वा इति तद्वान्, विप्रः अत्र सदाचारनिष्ठः, निःसङ्गे क्रियायोगशून्ये, यत्र बद्धः सन् स्वधर्मं कर्तुं न पारयति, स एव सदाचारस्य दमः यत् स्वधर्मवियोजनं नाम, विख्याप्यस्तेन रूपेण लोके प्रकाशनीयः । अङ्गच्छेदी परस्याङ्गच्छेत्ता । विर.६५७-६५८

कर्णौष्ठघ्राणपादाक्षिजिह्वाशिश्नकरस्य च ।
छेदने चोत्तमं दद्याद्भेदने मध्यमं भृगुः * ॥
[3]एतैः समापराधानां तत्राप्येवं प्रकल्पयेत् ।
बालवृद्धातुरस्त्रीणां न दण्डस्ताडनं दमः ॥

समापराधानामङ्गान्तरच्छेदभेदकर्तॄणाम् । प्रमादकृतापराधविषयमेतत् । विर.६५८

[4]स्त्रीधनं दापयेद्दण्डं धार्मिकः पृथिवीपतिः ।
निर्धना प्राप्तदोषा स्त्री ताडनं दण्डमर्हति ॥

यदि धनवती स्त्री, तदा दोषे धनं दण्डः, अधनायास्तु ताडनमेवेत्यर्थः । विर.६५९

अन्यायार्जितं वित्तं वर्ज्यम् । दण्डधनं विप्रेभ्यो दद्यात् ।

[5]अन्यायोपार्जितं न्यस्तं कोषे कोषं निवेशयेत् ।
कार्यार्थे कार्यनाशः स्याद्बुद्धिमान्नोपपातयेत् ॥
दत्वा धनं तद्विप्रेभ्यः सर्वं दण्डसमुत्थितम् ।
पुत्रे राज्यं समासज्य कुर्वीत प्रायणं वने ॥
एवं चरेत्सदा युक्तो राजा धर्मेषु पार्थिवः ।
हितेषु चैव लोकस्य सर्वान् भृत्यान्नियोजयेत् ॥

## उशना

महापापेषु ब्राह्मणदण्डः

[1]ब्राह्मणस्यापराधेषु चतुर्ष्वङ्को विधीयते ।
गुरुतल्पे सुरापाने स्तेये ब्राह्मणहिंसने ।
इतरेषां तु वर्णानामङ्कनं नात्र कारयेत् ॥

## व्यासः

अल्पदण्डविषयः

[2]व्याधिना पीडितो यस्तु यः कश्चिदपि ताम्यति ।
नैतन्मया पुनः कार्यं ब्रूयात्तस्यार्धको दमः ॥

## यमः

राज्ञः सर्वे दण्ड्याः

[3]सर्वेषामेव वर्णानामन्योन्यस्यापराधिनाम् ।
शारीरं धनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत् ॥

ब्राह्मणस्य वधातिरिक्तो दण्डः । महापापेषु ब्राह्मणदण्डः । पतितदण्डः परिषदि देयः । सर्वस्वदण्डे जीवनमवशेषणीयम् ।

[4]जगत्सर्वमिदं हन्याद्ब्राह्मणस्य न तत्समम् ।
तस्मात्तस्य वधं राजा मनसाऽपि न चिन्तयेत् ॥
[5]अवध्यान् ब्राह्मणान्प्राहुः सर्वपापेष्ववस्थितान् ।
यद्यद्विप्रेषु कुशलं तत्तद्राजा समाचरेत् ॥
[6]ब्राह्मणस्यापराधेषु चतुर्ष्वेव विधीयते ।
शिरसो मुण्डनं दण्डं पुरान्निर्वासनं तथा ॥
[7]प्रख्यापनार्थं पापस्य प्रयाणं गर्दभेन तु ।
ललाटे चाङ्करणं कुर्याद्राजा यथाविधि ॥

*व्याख्यासंग्रहः स्थलादिनिर्देशश्च दण्डपारुष्यप्रकरणे द्रष्टव्यः ।

(१) **विर.६५७** विप्रो वधाङ्गच्छेदार्हो (वधाङ्गच्छेदार्हविप्रो) तदा (तद) वृत्तस्थ (वृत्तस्त); **दवि.६६** विप्रो ...र्हो (वधाङ्गच्छेदार्हो विप्रो) यु (मु); **सेतु.३१३** वृत्तस्थ (धृतस्त).

(२) **विर.६५७; दवि.६६** क्ष्य (क्ष्येऽ). (३) **विर.६५८; दवि.५९** उत्त. : २५६ पू.

(४) **विर.६५९; दवि.५९; सेतु.३१४** स्त्री (स्त्रीं).

(५) **विर.६६३.**

(१) **स्मृच.१२५; पमा.२१०** (=) धेषु (धे तु) र्ष्व (र्ष्वा); **प्रका.७९** धेषु (धे तु); **समु.६८.**

(२) **स्मृच.१२६; पमा.२११** पि ताम्य (ति नाम्य) पुनः (कृतं); **प्रका.८०; समु.६९.**

(३) **विर.६३१** शा (श) दण्डं धर्म्यं (धर्म्यं दण्डं) मनुः; **बाल.२।२६ : २८१ पू.** (४) **विर.६३१** मनुः; **बाल.२।२६; समु.६८.**

(५) **विर.६३१** प्रा (आ) वस्थितान् (यं विधिः) पू., मनुः; **बाल.२।२६; समु.६८** प्रा (आ).

(६) **विर.६३६** व (वं); **दवि.४७; बाल.२।२६; समु.६८** व (वं) दण्डं (दण्डः).

(७) **विर.६३६** चाङ्क (वाङ्क); **दवि.४७; बाल.२।२६** तु (च); **समु.६८** तु (च) चाङ्क (चिह्न).

पतितस्य धनं हृत्वा राजा पर्षदि दापयेत् ॥
[2]सर्वस्वं तु हरन् राजा चतुर्थं चावशेषयेत् ।
भृत्येभ्योऽन्नं स्मरन् धर्मं प्राजापत्यमिति स्थितिः ॥
एवं धर्मप्रवृत्तस्य राज्ञो दण्डधरस्य च ।
यशोऽस्मिन् प्रथते लोके स्वर्गे वासस्तथाऽक्षयः ॥

## अङ्गिराः

दण्डधराः । आत्महन्तृदण्डः ।

[4]राजा गुरुर्यमश्चैव शासन् धर्मेषु युज्यते ।
कर्ता च मुच्यते पापान्न स पापेन लिप्यते ॥
[5]आत्मानं घातयेद्यस्तु रज्वादिभिरुपद्रवैः ।
मृतोऽमेध्येन लेप्तव्यो जीवेच्चेद् द्विगुणो दमः ॥

## वृद्धवसिष्ठः

महापापेषु ब्राह्मणदण्डः

[6]सुरापाने ध्वजाङ्कनं स्तेये च श्वपदाङ्कनम् ।
ब्रह्महत्यायां गर्दभाङ्कनं गुरुतल्पगमने भगाङ्कनम् ।

## स्मृत्यन्तरम्

निमित्तभेदेन दण्डतारतम्यविचारः

[7]अशास्त्रोक्तेषु मार्गेषु पापयुक्तेषु कर्मसु ।
समीक्ष्य दण्डं दण्ड्येषु पातयेदविचारयन् ॥
[8]आद्ये तु दण्डपादः स्याद्द्वितीयेऽर्धं तृतीयके ।
पादन्यूनं चतुर्थे च पादे संपूर्णदण्डभाक् ॥
तद्विगीतत्वादप्रमाणमिति प्रपञ्चितं विश्वरूपाचार्येण ।
स्मृच.१२२

ब्राह्मणोऽवध्यः

[9]वधादृते ब्राह्मणस्य दण्डो भवति कर्हिचित् ।
अवध्या ब्राह्मणा गावो लोकेऽस्मिन् वैदिकी श्रुतिः ॥

महापापेषु ब्राह्मणदण्डः

[10]गुरुतल्पे सुरापाने स्तेये ब्राह्मणहिंसने ।
यथाक्रमं प्रवक्ष्यामि चिह्नान्याह यथा मनुः ॥
गुरुतल्पे भगः कार्यः कृतघ्नस्य द्विजन्मनः ।
सुराध्वजं सुरापाने सुरापस्यापि कारयेत् ॥
स्तेये तु श्वपदं कृत्वा शिखिपिच्छेन कुट्टयेत् ।
अशिराः पुरुषः कार्यो ललाटे ब्रह्मघातिनः ॥
य एतैः पतितैः सार्धं संयोगं कुरुते नरः ।
सोऽसंभोज्यश्च कर्तव्यो मनुः स्वायम्भुवोऽब्रवीत् ॥
एते त्याज्याः कृताङ्काः स्युर्ज्ञातिसंबन्धिबान्धवैः ॥

## अग्निपुराणम्

[1]पणानां द्वे शते सार्धे प्रथमः साहसः स्मृतः ।
मध्यमः पञ्च विज्ञेयः सहस्रमपि चोत्तमः ॥

## शुक्रनीतिः

दण्डप्रयोजनम् । दण्डप्रयोगविवेकः । दण्डप्रकाराः । कालविशेषेण दण्डविशेषः । राज्ञा साम्यबुद्ध्या दण्डः प्रणेयः ।

[2]कालस्य कारणं राजा सदसत्कर्मणस्त्वतः ।
स्वक्रौर्योद्यतदण्डाभ्यां स्वधर्मे स्थापयेत्प्रजाः ॥
[3]स्वप्रजानां न भेदेन नैव दण्डेन पालनम् ।
कुर्वीत सामदानाभ्यां सर्वदा यत्नमास्थितः ॥
स्वप्रजादण्डभेदैश्च भवेद्राज्यविनाशनम् ।
हीनाधिका यथा न स्युः सदा रक्ष्यास्तथा प्रजाः ॥
निवृत्तिरसदाचाराद्दमनं दण्डतश्च तत् ।
येन संदम्यते जन्तुरुपायो दण्ड एव सः ॥
स उपायो नृपाधीनः स सर्वेषां प्रभुर्यतः ।
निर्भर्त्सनं चापमानो नाशनं बन्धनं तथा ॥
ताडनं द्रव्यहरणं पुरान्निर्वासनाङ्कने ।
व्यस्तक्षौरमसद्यानमङ्गच्छेदो वधस्तथा ॥
युद्धमेते ह्युपायाः स्युर्दण्डस्यैव प्रभेदकाः ।
जायते धर्मनिरता प्रजा दण्डभयेन च ॥
करोत्याधर्षणं नैव तथा चासत्यभाषणम् ।
क्रूराश्च मार्दवं यान्ति दुष्टा दौष्ट्यं त्यजन्ति च ॥
पशवोऽपि वशं यान्ति विद्रवन्ति च दस्यवः ।
पिशुना मूकतां यान्ति भयं यान्त्याततायिनः ॥
करदाश्च भवन्त्यन्ये वित्रासं यान्ति चापरे ।
अतो दण्डधरो नित्यं स्यान्नृपो धर्मरक्षणे ॥

---

(१) विर.६३८; दवि.५०; समु.७०.
(२) विर.६३८ स्थि (श्रु) उत्त.; दवि.६१; समु.७० रन् (रेत्) चाव (वाव). (३) पमा.५८३; समु.१६५.
(४) विर.६४८; दवि.११; सेतु.२९९ लिप्य (युज्य).
(५) विर.६६३; दवि.३१९. (६) सवि.४६७.
(७) समु.६९. (८) स्मृच.१२२; प्रका.७७; समु.६७ ण्डपादः (ण्डःपादः). (९) बाल.२।२६. (१०) समु.६८.

(१) अपु.२२७।४-५. (२) शुनी.१।६०. (३) शुनी. ४।३८-६९.

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य कार्यं भवति शासनम् ॥
राज्ञां सदण्डनीत्या हि सर्वे सिध्यन्त्युपक्रमाः ।
दण्ड एव हि धर्माणां शरणं परमं स्मृतम् ॥
अहिंसैवासाधुहिंसा पशुवच्छ्रुतिचोदनात् ।
दण्ड्यस्यादण्डनान्नित्यमदण्ड्यस्य च दण्डनात् ॥
अतिदण्डाच्च गुणिभिस्त्यज्यते पातकी भवेत् ।
अल्पदानान्महत्पुण्यं दण्डप्रणयनात्फलम् ॥
शास्त्रेषूक्ता मुनिवरैः प्रवृत्त्यर्थं भयाय च ।
अश्वमेधादिभिः पुण्यं तत्किं स्यात्स्तोत्रपाठतः ॥
क्षमया यत्तु पुण्यं स्यात्तत्किं दण्डनिपातनात् ।
स्वप्रजादण्डनाच्छ्रेयः कथं राज्ञो भविष्यति ॥
तद्दण्डाज्जायतेऽकीर्तिर्धनपुण्यविनाशनम् ।
नृपस्य धर्मपूर्णत्वाद्दण्डः कृतयुगे न हि ॥
त्रेतायुगे पूर्णदण्डः पादाधर्माप्रजायतः ।
द्वापरे चार्धधर्मत्वात्त्रिपाद्दण्डो विधीयते ॥
प्रजा निस्वा राजदौष्ट्याद्दण्डार्धं तु कलौ युगे ।
युगप्रवर्तको राजा धर्माधर्मप्रशिक्षणात् ॥
युगानां न प्रजानां न दोषः किं तु नृपस्य हि ।
प्रसन्नो येन नृपतिस्तदाचरति वै जनः ॥
लोभाद्भयाच्च किं तेन शिक्षितं नाचरेत्कथम् ।
सुपुण्यो यत्र नृपतिर्धर्मिष्ठास्तत्र हि प्रजाः ॥
महापापी यत्र राजा तत्राधर्मपरो जनः ।
न कालवर्षी पर्जन्यस्तत्र भूर्न महाफला ॥
जायते राष्ट्रह्रासश्च शत्रुवृद्धिर्धनक्षयः ।
सुराप्यपि वरो राजा न स्त्रैणो नातिकोपवान् ॥
लोकान् चण्डस्तापयति स्त्रैणो वर्णान् विलुम्पति ।
मद्यप्येकश्च भ्रष्टः स्याद्बुध्या च व्यवहारतः ॥
कामक्रोधौ मद्यतमौ सर्वमद्याधिकौ यतः ।
धनप्राणहरो राजा प्रजायाश्चातिलोभतः ॥
तस्मादेतत्त्रयं त्यक्त्वा दण्डधारी भवेन्नृपः ।
अन्तर्मृदुर्बहिः क्रूरो भूत्वा स्वां दण्डयेत्प्रजाम् ॥
अत्युग्रदण्डकल्पः स्यात्स्वभावाहितकारिणः ।
राष्ट्रं कर्णेजपैर्नित्यं हन्यते च स्वभावतः ॥
अतो नृपः सूचितोऽपि विमृशेत्कार्यमादरात् ।
आत्मनश्च प्रजायाश्च दोषदर्श्युत्तमो नृपः ॥
विनियच्छति चात्मानमादौ भृत्यांस्ततः प्रजाः ॥

अपराधप्रकाराः । तत्तारतम्येन दण्डविधिः । प्राणहरण-
दण्डस्य सर्वथा निषेधः ।

कायिको वाचिको मानसिकः सांसर्गिकस्तथा ॥
चतुर्विधोऽपराधः स बुध्यबुद्धिकृतो द्विधा ।
पुनर्द्विधा कारितश्च तथा ज्ञेयोऽनुमोदितः ॥
सकृदसकृदभ्यस्तः स्वभावैः स चतुर्विधः ।
नेत्रवक्त्रविकाराद्यैर्भावैर्मानसिकं तथा ॥
क्रियया कायिकं वीक्ष्य वाचिकं क्रूरशब्दतः ।
सांसर्गिकं साहचर्यैर्ज्ञात्वा गौरवलाघवम् ॥
उत्पन्नोत्पत्स्यमानानां कार्याणां दण्डमावहेत् ॥
[1]नीचकर्मकरं कुर्याद्बन्धयित्वा तु पापिनम् ।
माससमात्रं त्रिमासं वा षण्मासं वाऽपि वत्सरम् ॥
यावज्जीवन्तु वा कश्चिन्न कश्चिद्वधमर्हति ।
न निहन्याच्च भूतानि त्विति जागर्ति वै श्रुतिः ॥
तस्मात्सर्वप्रयत्नेन वधदण्डं त्यजेन्नृपः ।
अवरोधाद्बन्धनेन ताडनेन च कर्षयेत् ॥
लोभान्न कर्षयेद्राजा धनदण्डेन वै प्रजाम् ।
नासहायास्तु पित्राद्या दण्ड्याः स्युरपराधिनः ॥
क्षमाशीलस्य वै राज्ञो दण्डग्रहणमीदृशम् ।
नापराधं तु क्षमते प्रचण्डो धनहारकः ॥
नृपो यदा तदा लोकः क्षुभ्यते भिद्यते परैः ।
अतः सुभागदण्डी स्यात्क्षमावान् रंजको नृपः ॥

## संग्रहः

दण्डप्रकरणव्यवस्था

[2]बाधाऽपकर्षसाम्यानामुत्कर्षपरिनिष्ठयोः ।
भेदेन दण्डभेदानां व्यवस्था पञ्चलक्षणा ॥

(१) शुनी.४।८७-९२. (२) दवि.३८.

# परिशिष्टानि

## सभा

### वेदाः

सभासभ्यसभाभाषणलिङ्गानि राजव्यवहारसभा च

[1] **सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति । सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै ॥**

यो यजमानो ददाशत् सोमाय हविर्लक्षणान्यन्नानि दद्यात् तस्मै यजमानाय सोमो धेनुं सवत्सां दोग्ध्रीं गां ददाति । तथाशुं शीघ्रगामिनमर्वन्तमश्वं ददाति । प्रयच्छति । तथा वीरं पुत्रमस्मै यजमानाय ददाति । कीदृशं पुत्रम् । कर्मण्यं लौकिककर्मसु कुशलं सदन्यम् । सदनं गृहम् । तदर्हम् । गृहकार्यकुशलमित्यर्थः । विदथ्यम् । विदन्त्येषु देवानिति विदथा यज्ञाः । तदर्हम् । दर्शपूर्णमासादियागानुष्ठानपरमित्यर्थः । सभेयं सभायां साधुम् । सकलशास्त्राभिज्ञमित्यर्थः । पितृश्रवणं पिता श्रूयते प्रख्यायते येन पुत्रेण तादृशम् । ऋसा.

[2] **कविर्बुध्नं परि मर्मृज्यते धीः सा देवताता समितिर्बभूव ।**

कविः क्रान्तदर्शी धीः सर्वेषां धारकः सोऽग्निर्बुध्नं सर्वस्योदकस्य मूलभूतमन्तरिक्षं परि मर्मृज्यते । परितो मार्ष्टि । स्वतेजसाच्छादयति । तस्याग्नेः सा देवताता देवेन देवनशीलेनाग्निना तता विस्तारिता दीप्तिरस्माभिः स्तुता सती समितिर्बभूव । तेजसां संहतिर्भवति । ऋसा.

[3] **गुहा चरन्ती मनुषो न योषा सभावती विदथ्येव सं वाक् ।**

मेघपङ्क्तिर्विद्युचोभे दृष्टान्तेन विशेष्येते । गुहा निगूढा गुहायां वान्तरिक्षे चरन्ती । तत्र दृष्टान्तः । मनुषो न योषा मनुष्यस्य परिवृढादेर्महिषीवत् । सा यथा सुवेषान्तःपुर एव मध्ये चरति तद्वत् । किं सर्वदैवमिति नेत्याह । सभावती । सभा जनसंघः । तद्वती । वर्षकाल आविर्भवन्तीत्यर्थः । तत्र दृष्टान्तः । विदथ्या वागिव । विदथो यज्ञः । तदर्हतीति विदथ्या प्रैषस्तोत्रादिरूपा वाक् । सा यथा यज्ञसभां प्राप्याविर्भवति तद्वत् । यद्वा । विदथ्या वेदनार्हा विवदमानयोर्वाक् । सा यथा सभावती तद्वत् । सैवंरूपा येषु मिम्यक्ष ते मरुतो देवयजनमागच्छन्त्वित्यर्थः । ऋसा.

[1] **सभेयो विप्रो भरते मती धना ।**

सभेयः सभायां साधुः, विप्रो मेधावी, मती मत्या, धना हविर्लक्षणानि धनानि, भरते बिभर्ति संपादयतीति यावत् । ऋसा.

[2] **स रेवान्याति प्रथमो रथेन वसुदावा विदथेषु प्रशस्तः×।**

स यजमानो रेवान् धनवान् प्रथमः प्रथितः प्रख्यातः वसुदावा वसूनां धनानां दाता सन् प्रशस्तः सर्वैः प्रशस्यमानो विदथेषु वेद्येषु लब्धव्येषु गृहेषु रथेन वाहनेन याति । गच्छति । ऋसा.

[3] **गोमाँ अग्नेऽविमाँ अश्वी यज्ञो नृवत्सखा सदमिदप्रमृष्यः । इळावाँ एषो असुर प्रजावान्दीर्घो रयिः पृथुबुध्नः सभावान् ॥**

हे असुर बलवन् हे अग्ने एष मदीयोऽयं यज्ञो नृवत्सखा । नरः कर्मणां नेतारोऽध्वर्य्वादयस्तद्वन्तः सखायोऽनुष्ठातारो यजमाना यस्य स तथोक्तः । सदमित्सदैवा-

(१) ऋसं.१।९१।२०; शुमा.३४।२१; मैसं.४।१४।१; तैब्रा.२।८।३।१; आश्रौ.२।१९।२२; शाश्रौ.३।१६।४, ६।१०।३; माश्रौ.५।२।१०।४.

(२) ऋसं.१।९५।८. (३) ऋसं.१।१६७।३.

× विदथशब्दः सभावाची इति झिमर आह ।

(१) ऋसं.२।२४।१३. (२) ऋसं.२।२७।१२.

(३) ऋसं.४।२।५; तैसं.१।६।६।४, ३।१।११।१; मैसं.१।४।३, १।४।८; कासं.५।६,३२।६; माश्रौ.१।४।३।१९; शाश्रौ.४।१२।१०; आपश्रौ.४।१६।१३.

प्रमृष्योऽप्रधृष्यश्चास्तु । पृथुबुध्नः । पृथूनि बहुलानि बुध्नानि धनादीनि कारणानि यस्य स तथोक्तः । सभावानुपद्रष्टृरूपसभायुक्तश्चास्तु । नृवत्सखा । ऋसा.

**बृहद्वो वय उच्यते सभासु ।**[१]

सभासु यागपरिषत्सु हे गावो युष्माकं बृहन्महद्वयो अन्नं उच्यते । सर्वैर्दीयत इत्यर्थः । ऋसा.

**अश्वी रथी सुरूप इद्गोमाँ इदिन्द्र ते सखा ।**[२]
**श्वात्रभाजा वयसा सचते सदा चन्द्रो याति सभामुप ॥**

हे इन्द्र ते तव सखा मित्रभूतः पुरुषोऽश्व्यादिगुणविशिष्ट एव भवति । चन्द्रः सर्वेषामाह्लादकः सन् सभां जनसंसदमुप याति । उपगच्छति । ऋसा.

**राजा न सत्यः समितीरियानः ।**[३]

राजा न यथा राजा सत्यः सत्यकर्मा सन् समितीः संग्रामान् इयानः गच्छन् । ऋसा.

**यदग्न एषा समितिर्भवाति देवी देवेषु यजता यजत्र । रत्ना च यद्विभजासि स्वधावो भागं नो अत्र वसुमन्तं वीतात्* ॥**[४]

**सर्वे नन्दन्ति यशसागतेन सभासाहेन सख्या सखायः ।**[५]

सखायः समानख्यानाः समानज्ञानाः सर्वे सभ्या मनुष्याः सभासहेन सभां सोढुं शक्नुवता सख्यर्त्विजां प्रतिभूतेन यज्ञं प्रत्यागतेन यशसा यशस्विना सोमेन हेतुना नन्दन्ति हृष्टा भवन्ति । ऋसा.

**यत्रौषधीः समग्मत राजानः समिताविव ।**[६]

* सभाविषयोऽयं मन्त्रः सायणेनान्यथा व्याख्यात इति न व्याख्या गृहीता ।

(१) ऋसं.६।२८।६; असं.४।२१।६; तैब्रा.२।८।८।१२.

(२) ऋसं.८।४।९; सासं.१।२७७.

(३) ऋसं.९।९२।६.

(४) ऋसं.१०।११।८; असं.१८।१।२६; मैसं.४।१४।१५; ऐआ.५।१।१.

(५) ऋसं.१०।७१।१०; ऐब्रा.१।१३।७; आश्रौ.४।४।४.

(६) ऋसं.१०।९७।६; शुमा.१२।८०; तैसं.४।२।६।२; कासं.१६।१३; मैसं.२।७।१३,४।१४।६.

यत्र यस्मिन्देश ओषधीरोषधयः समग्मत संगच्छन्ते राजानः समिताविव संग्रामे यथा संगता भवन्ति तद्वत् । ऋसा.

**इन्द्रवायू बृहस्पतिं सुहवेह हवामहे ।**[१]
**यथा नः सर्व इज्जनः संगत्यां सुमना असत्* ॥**

**अभिभूरहमागमं विश्वकर्मेण धाम्ना ।**[२]
**आ वश्चित्तमा वो व्रतमा वोऽहं समितिं ददे ॥**

**समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम् । समानं मन्त्रमभि मन्त्रये वः समानेन वो हविषा जुहोमि* ॥**[३]

**यत्पात्नीवतं घृतेन श्रीणातीन्द्रियेण वा एतत्पत्नी व्यर्धयति तस्मान्निरिन्द्रिया स्त्री पुमानिन्द्रियवाꣳस्तस्मात्पुमाꣳसः सभाꣳ यन्ति न स्त्रियो यदितरान्त्सोमाञ्छ्रीणीयुर्न पात्नीवतꣳ स्त्रियः सभामीयुर्न पुमाꣳसः ।**[४]

ग्राम्यवादी । गणाध्यक्षः । सभासदः । विश्पतिः । सभा । आमन्त्रणसभा ।

**धर्मधृत्या जुहोति । धर्मधृतमेवैनं करोति सवितारं धारयितारम् । गां घ्नन्ति । तां विदीव्यन्ति । तां सभासद्भ्य उपहरन्ति । तेनास्य सोऽभीष्टः प्रीतो भवति ।**[५]

**प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् ।**
**यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकाँसि चक्रिरे ॥**

* सभाविषयोऽयं मन्त्रः सायणेनान्यथा व्याख्यात इति न व्याख्या गृहीता ।

(१) ऋसं.१।१४।३,१०।१४१।४; कासं.१०।१३, १४।२ बृहस्पतिं (सुसंदृशा); मैसं.१।११।४, २।२।६ कासंवत्; शुमा.३३।८६कासंवत्; असं.३।२०।६ बृहस्पतिं (उभाविद्).

(२) ऋसं.१०।१६६।४; तैब्रा.२।५।७।१; पागृ.३।१३।४.

(३) ऋसं.१०।१९१।३; मैसं.२।२।६; असं.६।६४।२; तैब्रा.२।४।४।५; शागृ.५।९।४.

(४) मैसं.४।७।४.

(५) कसं.७।४. एतत्सदृशं वचनं-कासं.८।७.

इत्यामन्त्रणे जुहोति मन्त्रवत्या वैश्वदेव्या। मन्त्रमेवास्मै गृह्णाति। तमभिसमेत्य मन्त्रयन्ते। सह वै देवाश्च मनुष्याश्चौदनपचन आसन्। ते मनुष्या देवानत्यचरन्। तेभ्यो देवा अन्नं प्रत्युह्य गार्हपत्यमभ्युदक्रामन्। तांस्तस्मिन्नन्वागच्छन्। ते मनुष्या एव देवानत्यचरन्। [तेभ्यो देवाः] पशून् प्रत्युह्याहवनीयमभ्युदक्रामन्। तांस्तस्मिन्नन्वागच्छन्। ते मनुष्या एव देवानत्यचरन्। तेभ्यो देवा यज्ञं प्रत्युह्य सभामभ्युदक्रामन्। तांस्तस्यामन्वागच्छन्। ते मनुष्या एव देवानत्यचरन्। तेभ्यो देवा विराजं प्रत्युह्यामन्त्रणमभ्युदक्रामन्। तांस्ततो नानुप्राच्यवन्त। एते वै देवानाᳪं संक्रामाः। श्रेयांसं श्रेयांसं लोकमभ्युत्क्रामति य एवं वेद। एतद्वै देवानां सत्यमनभिजितं यदामन्त्रणम्। तस्मात्सुप्रातरामन्त्रणं गच्छेत्। सत्यमेव गच्छति। तस्मादामन्त्रणं नाहूत यायात्। तस्मादामन्त्रणे नानृतं वदेत्। वह्निर्वै नामौदनपचनः। आस्य वह्निर्जायते य एवं वेद। गृहा गार्हपत्यः। गृहवान्भवति य एवं वेद। धिष्ण्या आहवनीयः। उपैनं यज्ञो नमति य एवं वेद। सप्रथा मध्याधिदेवनम्। प्रथते प्रजया च पशुभिश्च य एवं वेद। अनाप्त आमन्त्रणम्। नैनमाप्नोति य ईप्सति य एवं वेद।[1]

मारुती[1] वै विड्ज्येष्ठो विश्पतिर्विशैवैनᳪं राष्ट्रेण समर्धयति यः परस्ताद्ग्राम्यवादी स्यात्तस्य गृहाद्व्रीहीना हरेच्छुक्लाᳪंश्च कृष्णाᳪंश्च वि चिनुयात्।

गणवती[2] याज्यानुवाक्ये भवतः सजातैरेवैनं गणिनं करोति।

यः[3] परस्ताद्ग्राम्यवादी स्यात्तस्य गृहाद्व्रीहीनाहरेयुस्ताञ्छुक्लाँश्च कृष्णाँश्च विचिनुयुः।

[4]त्रिर्वा इदᳪं विराड् व्यक्रमत गार्हपत्यमाहवनीयᳪं सभ्यं तद्विराजमापदन्नᳪं वै विराडन्नᳪं वावैतदाप्नन्मध्याधिदेवने राजन्यस्य जुहुयाद्वारुण्य

(१) तैसं.२।३।१।३. (२) कासं.११।४.

(३) कासं.११।६. (४) मैसं.१।६।११.

ऋचा वरुणो वै देवानाᳪं राजा राज्यमस्मा अवरुन्धे हिरण्यं निधाय जुहोत्यग्निमत्येव जुहोत्यायतनवत्यन्धोऽध्वर्युः स्याद्यदनायतने जुहुयाञ्शतमस्मा अक्षान्प्रयच्छेत्तान्विचिनुयाञ्शतायुर्वै पुरुषः शतवीर्या आयुरेव वीर्यमाप्नोति गामस्य तदहः सभायां दीव्येयुस्तस्याः परूᳪंषि न हिᳪंस्युस्ताᳪं सभासद्भ्य उपहरेत्तया यद्गृह्णीयात्तद्ब्राह्मणेभ्यो देयं तत्सभ्यमन्नमवरुन्धे।

तद्यः[1] पुरस्ताद्ग्राम्यवादीव स्यात्तस्य सभाया अभिवातं परीत्य विध्वᳪंसयेयुः।

प्रेत[2] मरुतः स्वतवस एना विश्पत्यामुᳪं राजानमभि। इति तस्य गृहाद्व्रीहीनाहरेयुस्ताᳪंस्त्रेधा विचिनुयात्।

छन्दोभिर्बृहस्पतिर्गणी[3] स्वाᳪं वा एतद्देवतां भूयिष्ठेनार्पयति सजातैरेनं गणिनं करोति।

सभेयो[3] युवा।

वादी प्रतिवादी प्राड्विवाकश्च। राज्ञः सभा।

आशिक्षायै[4] प्रश्निनमुपशिक्षाया अभिप्रश्निनं मर्यादायै प्रश्नविवाकम्।

प्रकामोद्यायोपसदम्[5]।

प्रकामोद्याय प्रकामं स्वेच्छानुसारेणैव वदतीति प्रकामो यो बहुप्रलापी तदभिमानिन उपसदं प्रयोजनमन्तरेणैव बहुभाषिणं सभायामुपविष्टम्। आशिक्षायै वेदशास्त्रेष्वल्पपरिचय आशिक्षा तदभिमानिन्यै प्रश्निनं शास्त्रार्थेषु संदेहेन प्रश्नकर्तारम्। उपशिक्षायै वेदशास्त्रविषयपरिचय उपशिक्षा तदभिमानिन्या अभिप्रश्निनं पृष्टस्योपरि पुनः प्रश्नोऽभिप्रश्नस्तद्युक्तं पूर्वप्रश्ननिराकर्तारमित्यर्थः। मर्यादायै शास्त्रार्थव्यवस्थाभिमानिन्यै प्रश्नविवाकं परकीयप्रश्नं सम्यग्विविच्योत्तरस्य वक्तारम्।

तैब्रासा.

(१) मैसं.२।२।१. (२) मैसं.२।२।३.

(३) शुसं.२२।२२; तैसं.७।५।१८।१; मैसं.३।१२।६; तैब्रा.३।८।१३।३; शब्रा.१३।१।९।८.

(४) शुसं.३०।१०; तैब्रा.३।४।६।१०.

(५) शुसं.३०।९; तैब्रा.३।४।६।१०.

[1]यद् राजानो विभजन्त इष्टापूर्तस्य षोडशं यमस्यामी सभासदः। अविस्तस्मात् प्र मुञ्चति दत्तः शितिपात् स्वधा॥

यमस्य धर्मराजस्य अमी दक्षिणस्यां दिशि द्युलोके परिदृश्यमानाः सभासदः सभायां उपविष्टा दुष्टनिग्रहे शिष्टपरिपालने च नियुक्ता राजानः राजमानाः ईश्वरा वा देवाः इष्टापूर्तस्य। इष्टं श्रुतिविहितं यागादि कर्म। पूर्तं स्मृतिविहितं वापीकूपतटाकादिनिर्माणलक्षणं कर्म। तस्य उभयविधस्य कर्मणः षोडशं षोडशसंख्यापूरकं यत् पापं विभजन्ते पुण्यराशेर्विभक्तं कुर्वन्ति। अयमर्थः। श्रुतिस्मृतिविहितकर्मसु अनुष्ठीयमानेषु प्रमादालस्यादिना कियानपि पापस्य षोडश्या कलया अंशः समुपजायत एव तद् यमस्य सभ्याः परिशोधयन्तीति।

असा.

[2]न वर्षं मैत्रावरुणं ब्रह्मज्यमभि वर्षति।
नास्मै समितिः कल्पते न मित्रं नयते वशम्॥

[3]ध्रुवोच्युतः प्र मृणीहि शत्रून्छत्रूयतोधरान् पादयस्व। सर्वा दिशः संमनसः सध्रीचीर्ध्रुवाय ते समितिः कल्पतामिह॥

[4]अहं वदामि नेत् त्वं सभायामह त्वं वद।

हे पते अहं वदामि त्वं नेत् नैव वदेः। अहशब्दो विनिग्रहार्थीयः। त्वं तु सभायां विद्वत्समाजे वद। अयमर्थः। हे पते यदा मत्समीपं आगच्छसि तदा अहमेव वदामि त्वं तु मदुक्तमेव अनुवद कदापि प्रतिकूलं मा वादीः। मद्यतिरिक्तस्थानेऽपि सभायामेव यथेच्छं वद मान्यत्रेति।

असा.

[5]इमौ युनज्मि ते वह्नी असुनीताय वोढवे।
ताभ्यां यमस्य सादनं समितीश्चाव गच्छतात्॥

हे मृतपुरुष वह्नी वोढारौ इमौ अनड्वाहौ ते तव वहनाय युनज्मि। सुष्ठु नेतव्यः सुनीतः न सुनीतः असुनीतः। दुर्वह इत्यर्थः। तादृशं शवं वोढुम्। ताभ्यां अनडुद्भ्यां यमस्य संबन्धि सदनं गृहं इति अनेन प्रकारेण सम् अव गच्छतात् सम्यग्जानीहि।

असा.

(१) असं.३।२९।१.
(२) असं.५।१९।१५. (३) असं.६।८८।३.
(४) असं.७।३९।४. (५) असं.१८।२।५६.

राजव्यवहारसभा, सभ्याग्निः, सभापालः, सभासदः, धर्मपतिः

[1]सभ्यः सभां मे पाहि ये च सभ्याः सभासदः।

[2]अजस्रं त्वाꣳ सभापालाः। विजयभागꣳ समिन्धताम्। अग्ने दीदाय मे सभ्य। विजित्यै शरदः शतम्।

यत्राक्षैर्दीव्यन्ति विजयन्ते सा सभा तस्यां सभायां साधुः सोऽग्निः सभ्यः। हे सभ्य त्वामस्मदीयाः सभापालकाः समिन्धतां सम्यग्दीप्यन्ताम्। कीदृशं त्वामजस्रमनवरतं, विजयभागं विजयेन लभ्यो भागो यस्य तादृशम्। हे सभ्याग्ने मे मम शतं शरदः शतसंख्याकान् संवत्सरान्विजित्यै विजयाय त्वं दीदाय दीप्यस्व। तैब्रासा.

[3]अथ वाचयति। भद्रो मेऽसि प्रच्यवस्व भुवस्पतऽइति भद्रो ह्यस्यैष भवति तस्मान्नान्यमाद्रियतेऽप्यस्य राजानः सभागा आगच्छन्ति पूर्वो राज्ञोऽभिवदति भद्रो हि भवति तस्मादाह भद्रो मेऽसीति।

[4]अथ वरुणाय धर्मपतये। वारुणं यवमयं चरुं निर्वपति तदेनं वरुण एव धर्मपतिर्धर्मस्य पतिं करोति परमता वै सा यो धर्मस्य पतिरसद्यो हि परमतां गच्छति तꣳहि धर्मऽउपयन्ति तस्माद्वरुणाय धर्मपतये।

[5]स ह गौतमो राज्ञोऽर्धमेयाय तस्मै ह प्राप्तायार्हां चकार स ह प्रातः सभाग उदेयाय।

लोकसभा

[6]श्वेतकेतुर्हारुणेयः पञ्चालानाꣳ समितिमेयाय।

[7]श्वेतकेतुर्ह वा आरुणेयः पञ्चालानां परिषदमाजगाम।

[8]अस्याः पर्षद ईशानः सहसा सुदुष्टरो जनः।

(१) असं.१९।५५।५.
(२) तैब्रा.१।७।४।६. (३) शब्रा.१।३।४।१४.
(४) शब्रा.५।३।३।९.
(५) छाउ.५।३।६. (६) छाउ.५।३।१.
(७) बृउ.६।२।१. (८) पागृ.३।१३।४.

# मानसंज्ञाः

## *वेदाः

निष्कः, शतमानं हिरण्यं, कृष्णलं, सुवर्णं, अष्टापृट् हिरण्यं, हिरण्यमना, हिरण्यशुल्कः, हिरण्यपिण्डः

**[1] शतं राज्ञो नाधमानस्य निष्काञ्छतमश्वान्प्रयतान्त्सद्य आदम् ।**

नाधमानस्य स्वीकर्तव्यमित्युच्चैर्याचमानस्यासुरस्य धनानां निरसितुर्दानशीलस्य राज्ञः स्वतेजसा दीप्यमानस्य स्वनयस्य निष्कानाभरणविशेषान् इयत्ताविशेषविशिष्टानि वा सुवर्णानि शतसंख्याकानि । शतं सहस्रमित्यपरिमितवचनः । अपरिमितान् सद्यः प्रार्थनानन्तरमेव कक्षीवानहमादम् । आत्तवानस्मि । स्वीकृतवानस्मीत्यर्थः । तथा प्रयतान् शुद्धान् लक्षणोपेतानश्वानध्वगमनसमर्थान् हयानादम् । आत्तवान् । ऋसा.

**[2] दशो हिरण्यपिण्डान्दिवोदासादसानिषम् ।**

दशो दश च दशसंख्याकांश्च हिरण्यपिण्डान् सुवर्णपिण्डानेतान् सर्वान्दिवोदासात्प्रस्तोकादहमसानिषम् । समभजम् । लब्धवानस्मि । ऋसा.

**[3] सहस्रे पृषतीनामधि श्चन्द्रं बृहत्पृथु ।**
**शुक्रं हिरण्यमा ददे ॥**

अहं पृषतीनां गवां सहस्रेऽध्युपरि धारितं बृहन्महत्पृथु विस्तृतं चन्द्रमाह्लादकं शुक्रं निर्मलं हिरण्यमा ददे । स्वीकरोमीन्द्रेणानीतम् । ऋसा.

**[4] नपातो दुर्गहस्य मे सहस्रेण सुराधसः ।**
**श्रवो देवेष्वक्रत ॥**

नपातोऽरक्षितस्य दुर्गहस्य दुःखं गाहमानस्य मे संबन्धिनो जनाः सहस्रेणापरिमितेनेन्द्रदत्तेन गवादिधनेन सुराधसः सुधनाः सन्तो देवेषु प्रीतेषु । इन्द्रे प्रीत इत्यर्थः । श्रवोऽन्नं यशो वाक्रत । अलभन्तेत्यर्थः । ऋसा.

**[1] आ नो भर व्यञ्जनं गामश्वमभ्यञ्जनम् ।**
**सचा मना हिरण्यया ॥**

हे इन्द्र त्वं नोऽस्मभ्यं व्यञ्जनं गामश्वमभ्यञ्जनं तैलं चा भर । मना मननीयानि हिरण्यया हिरण्मयान्युपकरणानि सचा सहाभरेति । ऋसा.

**[2] इषुर्न श्रिय इषुधेरसना गोषाः शतसा न रंहिः ।**

अनया पुरूरवाः स्वस्य विरहजनितं वैक्लव्यं तां प्रति ब्रूते । इषुधेः । इषवो धीयन्तेऽत्रेतीषुधिर्निषंगः । ततः सकाशादिषुरसनासनायै प्रक्षेप्तुं न भवति श्रिये विजयार्थम् । त्वद्विरहाद्युद्धस्य बुद्धावप्यनिधानात् । तथा रंहिर्वेगवानहं शत्रुसकाशात्गोषास्तेषां शत्रूणां गवां संभक्ता नाभवम् । तथा शतसाः शतानामपरिमितानां शत्रुधनानां संभक्ता नाभवम् । ऋसा.

**[3] देवा वै मृत्योरबिभयुस्ते प्रजापतिमुपाधावन्तेभ्य एतां प्राजापत्याँ शतकृष्णलां निरवपत्तयैवैष्वमृतमदधाद्यो मृत्योर्बिभीयात्तस्मा एतां प्राजापत्याँ शतकृष्णलां निर्वपेत्प्रजापतिमेव स्वेन भागधेयेनोप धावति स एवास्मिन्नायुर्दधाति सर्वमायुरेति शतकृष्णला भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठति घृते भवत्यायुर्वै घृतममृतँ हिरण्यमायुश्चैवास्मा अमृतं च समीची दधाति चत्वारि चत्वारि कृष्णलान्यव द्यति ।**

**[4] हिरण्याद्घृतं निष्पिबत्यायुर्वै घृतममृतँ हिरण्यममृतादेवाऽऽयुर्निष्पिबति ।**

---

* श्रौतः देशकालमानविषयकवचनसंग्रहः विस्तरभयान्नात्र कृतः, कालविवेकादिप्रकरणे संग्रहीष्यते ।

(१) ऋसं.१।१२६।२. (२) ऋसं.६।४७।२३.
(३) ऋसं.८।६५।११. (४) ऋसं.८।६५।१२.

(१) ऋसं.८।७८।२. (२) ऋसं.१०।९५।३.
(३) तैसं.२।३।२।१,२. (४) तैसं.२।३।११।५.

[1] **शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रतितिष्ठत्यथो खलु यावतीः समा एष्यन्मन्येत तावन्मानꣳ स्यात्समृद्ध्यै ।**

शतमानं पञ्चपणपरिमितमित्यसकृदुक्तम् । अथवा रुग्णो यजमानो यावतो भाविनः संवत्सरान्प्राप्नोत्वित्यध्वर्युर्मन्येत तावद्भिर्मानैः परिमितं कर्तव्यम् । मानशब्दो गुञ्जाबीजं ब्रूते । रुग्णस्यातीतमायुः परित्यज्याऽऽगामिन आयुषो यावन्तः संवत्सरा एतस्य मनसि निश्चितास्तावद्भिर्गुञ्जाबीजैः परिमितमित्यर्थः । तैसा.

[2] **हिरण्यमवधाय गृह्णात्यमृतं वै हिरण्यं प्राणः पृषदाज्यममृतमेवास्य प्राणे दधाति शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठति ।**

[3] **अष्टाप्रूड्ढिरण्यं दक्षिणाऽष्टापदी ह्येषाऽऽत्मा नवमः पशोराप्त्यै ।**

अष्टाभिर्बिन्दुभिर्लाञ्छितमष्टाप्रूट् । तादृशं हिरण्यं दद्याद्यस्मादियं वशा सगर्भा साऽष्टाभिः पादैर्युक्ता । आत्मा पशोर्देहो यस्मादतिरिक्तो नवमस्तस्मादष्टाभिर्बिन्दुभिर्युक्तं हिरण्यमष्टाभिः पादैर्युक्तेन पशुना च सदृशं भवतीति पशुप्राप्त्यै संपद्यते । तैसा.

[4] **हिरण्यं देयं सतेजस्त्वाय शतमानं, वीरं वा एष जनयति योऽग्निमाधत्ते शतदायो वीरस्त्रिंशन्माने पूर्वयोर्हविषोर्देये चत्वारिंशन्मानमुत्तमेऽभिक्रान्त्या अभिक्रान्तेन हि यज्ञस्यर्ध्नोति ।**

**अमृतं वै हिरण्यममृतेनैवास्मिन्नमृतं दधाति शतकृष्णलो भवति । चत्वारि चत्वारि कृष्णलान्यवदानं भवति समृद्ध्यै । प्रयाजेषु पञ्च हिरण्यकृष्णलानि जुहुयात्तेजो वै हिरण्यं तेजसैवैनं संसृजति स इमाः पञ्च दिशोऽनु तेजस्वी भवति ।**

**अष्टापृडं हिरण्यं दक्षिणाष्टापदी वा एषात्मा नवमोऽष्टापृडमेतन्नेमिर्नवमः पशोराप्त्यै ।**

**यद्धिरण्यशल्कैः प्रत्यस्यति मेध्यमेवैनद्यज्ञियं करोति ।**

[2] **हिरण्यपात्रं मधोः पूर्णं ब्रह्मणे ददाति मधव्यो भवति शतमानम् ।**

[3] **सौर्यं घृते चरुं निर्वपेञ्शुल्कानाꣳ व्रीहीणां ब्रह्मवर्चसकामः शतमानो रुक्मो रजतोऽधस्तात्स्याञ्शतमानो रुक्मो हरित उपरिष्टात् । पञ्च कृष्णलान्यपि प्रयाजेषु जुहुयात् । प्राजापत्यं घृते चरुं निर्वपेञ्शतकृष्णलमायुष्कामो । शतकृष्णलो भवति । चत्वारि चत्वारि कृष्णलान्यवद्याति समृद्ध्यै ।**

[4] **एष इषाय मामहे शतं निष्कान् दश स्रजः ।**
**त्रीणि शतान्यर्वतां सहस्रा दश गोनाम् ॥**

[5] **कृष्णलं कृष्णलं वाजसृद्भ्यः प्रयच्छति । यमेव ते वाजं लोकमुज्जयन्ति । तं परिक्रीयावरुन्धे ।**

यवत्रयपरिमितं सुवर्णं कृष्णलम् । वाजमन्नमुद्दिश्य सरन्ति धावन्तीति वाजसृतो रथान्तरवर्तिनः । अत एवाऽऽपस्तम्बः—'यजुर्युक्तं यजमान आरोहति वाजसृत इतरान् रथान्' इति । एकैकस्मै वाजसृत एकैकं कृष्णलं दद्यात्तेन तैः संपादितमन्नं निवासस्थानं च परिक्रीय स्वाधीनं करोति । तैब्रासा.

[6] **हिरण्यमध्यवरोहति । अमृतं वै हिरण्यम् । अमृतꣳ सुवर्गो लोकः । अमृत एव सुवर्गे लोके प्रतितिष्ठति । शतमानं भवति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति ।**

मानशब्देन पणस्य विंशो भागोऽभिधीयते । ततः पञ्चपणपरिमितमित्युक्तं भवति । शतसंख्याकाः संवत्सराः पुरुषस्यायुः । दशानां ज्ञानकर्मेन्द्रियाणां मध्ये चक्षुरादीन्द्रियस्यैकैकस्य दशसु नाडीषु वृत्तिभेदेन शतेन्द्रियत्वम् । तैब्रासा.

---

(१) तैसं.२।३।११।५.
(२) तैसं.३।२।६।३. (३) तैसं.३।४।१।४.
(४) कासं.८।५; कसं.७।१; मैसं.१।६।४.
(५) कासं.११।४. (६) कासं.१३।१०,

(१) कासं.२०।८. (२) कासं.२२।८; कसं.३५।२.
(३) मैसं.२।२।२. (४) अस.२०।१२७।३; शाश्रौ.१२।१४।१।३.
(५) तैब्रा.१।३।६।७. (६) तैब्रा.१।३।७।७.

[1]युवोः श्रियं परि योषा वृणीत । सूरो दुहिता परितक्मियायाम् । यद्देवयन्तमवथः शचीभिः । परिघ्रंस वां मना वां वयो गाम् ।

[2]उत्तरेणाहवनीयं पूर्वाग्निरुद्धृतो भवति । स रथवाहनस्य दक्षिणमन्वनुष्यन्दं शतमानौ प्रवृत्तावाबध्नाति ।

[3]तस्यै त्रीणि शतमानानि हिरण्यानि दक्षिणा । तानि ब्रह्मणे ददाति न वै ब्रह्मा प्रचरति न स्तुतेन शंसत्यथ स यशो न वै हिरण्येन किंचन कुर्वन्त्यथ तद्यशस्तस्मात्त्रीणि शतमानानि ब्रह्मणे ददाति ।

[4]यो गायत्रीं हरिणीम् । ज्योतिष्पक्षां यजमानं स्वर्गं लोकमभिवहन्तीं विद्यादिति तस्मै ह निष्कं प्रददावनूचानः स्वैदायनासि सुवर्णं वाव सुवर्णविदे ददतीति ।

[5]सुवर्णं हिरण्यं भवति रूपस्यैवावरुद्ध्यै शतमानं भवति शतायुर्वै पुरुषः शतेन्द्रिय आयुरेवेन्द्रियं वीर्यमात्मन्धत्ते ।

[6]आयुर्हिरण्यं तच्छतमानं भवति तस्माच्छतायुः पुरुषः ।

[7]ब्रह्मौदने सुवर्णं हिरण्यं ददाति रेतो वा ओदनो रेतो हिरण्यं रेतस्यैवास्मिंस्तद्रेतो दधाति शतमानं भवति शतायुर्वै पुरुषः शतेन्द्रिय आयुरेवेन्द्रियं वीर्यमात्मन्धत्ते ।

[8]हिरण्यं दक्षिणा सुवर्णं शतमानं तस्योक्तं ब्राह्मणम् ।

[9]अथातो दक्षिणानां । सुवर्णं हिरण्यं शतमानं ब्रह्मणे ददात्यासीनो वै ब्रह्मा यशः शयानं हिरण्यं तस्मात्सुवर्णं हिरण्यं शतमानं ब्रह्मणे ददाति ।

[1]रजतो निष्कस्तद्गृहपतेः ।

[2]तस्य ह निष्क उपाहितो बभूव ।

## मयमतम्

देशमानसाधनम्

[3]सर्वेषामपि वस्तूनां मानेनैव विनिश्चयः ।
तस्मान्मानोपकरणं वक्ष्ये संक्षेपतः क्रमात् ॥
परमाणुक्रमाद् वृद्धं मानाङ्गुलमिति स्मृतम् ।
परमाणुरिति प्रोक्तं योगिनां दृष्टिगोचरम् ॥
परमाणुभिरष्टाभी रथरेणुरुदाहृतः ॥
रथरेणुश्च बालाग्रं लिक्षायूकायवास्तथा ॥
क्रमशोऽष्टगुणैः प्रोक्तो यवाष्टगुणितोऽङ्गुलम् ।
अङ्गुलं तु भवेन्मात्रं वितस्तिर्द्वादशाङ्गुलम् ॥
तद्द्वयं हस्तमुद्दिष्टं तत् किष्किवति मतं वरैः ।
पञ्चविंशतिमात्रं तु प्राजापत्यमिति स्मृतम् ॥
षड्विंशतिर्धनुर्मुष्टिः सप्तविंशद्धनुर्ग्रहः ।
याने च शयने किष्कुः प्राजापत्यं विमानके ॥
वस्तूनां तु धनुर्मुष्टिर्ग्रामादीनां धनुर्ग्रहः ।
सर्वेषामपि वस्तूनां किष्कुरेवाथवा मतः ॥
रत्निश्चैवमरत्निश्च भुजो बाहुः करः स्मृतः ।
हस्ताश्चतुर्धनुर्दण्डो यष्टिश्चैव प्रकीर्तितः ॥
दण्डेनाष्टगुणा रज्जुर्दण्डैर्ग्रामं च पत्तनम् ।
नगरं निगमं खेटं वेश्मादीन्यपि मानयेत् ॥
गृहादीनां तु हस्तेन याने च शयने बुधैः ।
वितस्तिना विधातव्यं क्षुद्राणामङ्गुलेन तु ॥
यवेनाल्पीयसां मानमेवं मानक्रमं विदुः ।
मध्यमाङ्गुलिमध्यस्थपर्वमात्रायतं तु यत् ॥
कर्तुर्मात्राङ्गुलं प्रोक्तं यागादीनां प्रशस्यते ।
देहलब्धाङ्गुलं यत्तदुपरिष्टाद् विधीयते ॥
एवमेवं विदित्वा तु स्थपतिर्मानयेद् दृढम् ॥

## शिल्परत्नम्

[4]परमाणुरिति प्रोक्तो योगिनां दृष्टिगोचरः ।
त्रसरेणुरष्टभिः स्यात्तैरेव परमाणुभिः ॥

---

(१) तैब्रा.२।८।७।८.
(२) शब्रा.५।४।३।२४. (३) शब्रा.५।५।५।१६.
(४) शब्रा.११।४।१।८. (५) शब्रा.१२।७।२।१३.
(६) शब्रा.१२।९।१।४. (७) शब्रा.१३।१।१।४.
(८) शब्रा.१३।२।३।२, १३।४।१।१३.
(९) शब्रा.१४।३।१।३२.

(१) ताब्रा.१७।१।१४. (२) गोब्रा.१।३।६.
(३) मय.५।१-१३. (४) शिल्प.२।१-२५.

तदष्टभिस्तु बालाग्रं लीक्षा बालाग्रकाष्टभिः ।
लीक्षाष्टभिस्तु जूका स्याज्जूकाष्टगुणितो यवः ॥
यवोदरैः षड्गुणर्वा सप्तभिर्वाधमादिकम् ।
क्रमादष्टगुणैर्वाथ मानाङ्गुलमिति स्मृतम् ॥
श्वेतशाली महाशाली रक्तशाली तथव च ।
सौगन्धिशेमराली च शाली पञ्चविधा स्मृता ॥
क्षुण्णे सिता स्मृता शाली रक्तो व्रीहिरुदाहृतः ।
तासामुदरविस्तारैरपि मानाङ्गुलं स्मृतम् ॥
शाल्यायतैस्त्रिभिस्तैश्च सार्धैस्तैर्वेदसंमितैः ।
मानाङ्गुलो न चाप्येव कनिष्ठादीनि कल्पयेत् ॥
र (त्न ? क्त) शाल्यायतं तेषु द्विगुणं वा त्रिमात्रकम् । चतुस्त्रिंशद्विधं दुष्टमेवं मानाङ्गुलं बुधैः ॥
तद्भर्तुर्दक्षिणकरमध्यमामध्यपर्वणः (?) ।
दैर्घ्यं मात्राङ्गुलं श्रेष्ठं नीचं तद्व्याससंमितम् ॥
इत्थं मात्राङ्गुलं शिल्पशास्त्रज्ञैरीरितं द्विधा ।
अङ्गुलत्रितया मुष्टिर्वितस्तिर्द्वादशाङ्गुलिः ॥
तद्द्वयं हस्तमुद्दिष्टं तच्च किष्कुरिति स्मृतम् ।
एकैकाङ्गुलवृध्यातो भवन्त्यष्टौ कराः स्फुटम् ॥
प्राजापत्यं धनुर्मुष्टिश्चापग्रहमतः परम् ।
प्राच्यां वैदेहकं नाम्ना वैपुल्यं च प्रकीर्तितम् ॥
इत्थमेकोत्तरत्रिंशदङ्गुलान्ताः कराः स्मृताः ।
एवं त्वशीतिसंयुक्तद्विशतं करभेदकम् ॥
हस्तैश्चतुर्भिर्भवतीह दण्डो नीचोत्तमः पञ्चभिरेव हस्तैः । सार्धाब्धिहस्तैरथ मध्यमोऽयं क्रोशः सहस्रद्वितयेन तेषाम् ॥
स्याद् योजनं क्रोशचतुष्टयेन तथा कराणां दशकेन वंशः । निवर्तनं विंशतिसंख्यवंशैस्तथैव रज्जुर्गजदण्डदीर्घः ॥
आ संघेबेद्धमुष्टिस्तु करोऽर (ती ? त्नि) रुदाहृतः । स एवारत्निरुद्दिष्टास्याष्टौ चेदाकनिष्ठिका ॥
प्रादेशतालगोकर्णवितस्त्यः स्युर्यथाक्रमम् ।
तर्जन्यादिकनिष्ठान्तमङ्गुष्ठाग्रात् प्रसारिताः ॥
मानाङ्गुलैः केवलमेव कुर्याद्देवालयादीनि गृहाणि वा नृणाम् । कुण्डादिकानामथ मण्डलानां सर्वत्र मात्राङ्गुलमिष्यते बुधैः ॥
याने च शयने किष्कुः प्राजापत्यं विमानके ।
आरामोद्यानकादौ तु प्राजापत्यकरं स्मृतम् ॥
वास्तूनां च धनुर्मुष्टिर्ग्रामादीनामियं तु वा ।
वापीकूपादिमार्गादौ ग्रामादीनां धनुर्ग्रहम् ॥
विप्रादीनां करौ द्वौ द्वौ प्रकीर्णकधनुर्ग्रहौ ॥
वैपुल्यचापमुष्ट्याख्यौ स्यातां भवनमापने ॥
प्राजापत्याख्यवैदेहौ किष्कुप्राच्यौ च तत्क्रमात् ।
सर्वेषां सर्ववस्तूनां किष्कुरेवाथवा मतः ॥
धनुर्ग्रहप्रकीर्णाद्या द्विजानां गृहमापने ।
वैपुल्यं च धनुर्मुष्टिः क्षत्रियाणां विशेषतः ॥
प्राजापत्यं च वैदेहं वैश्यजात्यार्हकं स्मृतम् ।
किष्कुप्राच्यककूचैव शूद्राणामिति केचन (?) ॥
दण्डेन तद्ग्रामनिवेशनाद्यं पुराणि खेटं निगमं च कुर्यात् । हस्तेन वेद्यादिषु मानमुक्तं स्वल्पेषु चेदङ्गुलकैर्यवैर्वा ॥
मुष्टिः स्याद्यज्ञपात्रादौ वितस्तिर्वस्त्रकादिषु ।
तालं बिम्बादिके माने भवत्तद्धर्मि (?) तद्विधौ ॥

# दण्डसंज्ञाः

## वेदाः

सभायां दण्डः

[1]अथाकामयत भारद्वाज ओजिष्ठा मे बलिष्ठा प्रजा स्यादिति । स एतं पञ्चदशं स्तोममपश्यत्, तमाहरत्, तेनायजतौजो वै बलं पञ्चदशस्तोमानाम् । ततो वै तस्यौजिष्ठा बलिष्ठा प्रजाऽभवत् । अपि ह स्म तेन पथा पुरा कुरवो न यन्ति येन भारद्वाजा ययुः । अथो ह स्मोत्क्रोशन्ति भारद्वाजबलमिति । तस्मादु भारद्वाज एवानुज्ञातः सभायां दण्ड्यं प्रहरेत् । ओजिष्ठो बलिष्ठो भवति य एवं वेद ।

## निरुक्तम्

दण्डपदनिरुक्तिः

[2]दण्ड्यः पुरुषो दण्डमर्हतीति वा दण्डेन संपद्यत इति वा । दण्डो ददतेर्धारयति कर्मणः 'अक्रूरो ददते मणिम्' इत्यभिभाषन्ते । दमनादित्यौपमन्यवः । दण्डमस्याकर्षतेति गर्हायाम् ।

## हारीतः

ब्राह्मणदण्डविचारः

[3]द्विजातीनामवध्यत्वान्मुडनं वध इष्यते ॥

## विष्णुः

[4]यः समर्थो विसंवादे सर्वस्वहरणं दण्डस्तस्य पुरान्निर्वासः ।

## महाभारतम्

दण्डस्वरूपम् । दण्डपदनिरुक्तिः । दण्डप्रयोजनम् ।

हिंसात्मकत्वादिदण्डाक्षेपपरिहारः ।

[5]अर्जुन उवाच—

दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥
दण्डः संरक्षते धर्मं तथैवार्थं जनाधिप ।
कामं संरक्षते दण्डस्त्रिवर्गो दण्ड उच्यते ॥
दण्डेन रक्ष्यते धान्यं धनं दण्डेन रक्ष्यते ।
एवं विद्वन्नुपाधत्स्व भावं पश्यस्व लौकिकम् ॥
राजदण्डभयादेके पापाः पापं न कुर्वते ।
यमदण्डभयादेके परलोकभयादपि ॥
परस्परभयादेके पापाः पापं न कुर्वते ।
एवं सांसिद्धिके लोके सर्वं दण्डे प्रतिष्ठितम् ॥
दण्डस्यैव भयादेके न खादन्ति परस्परम् ।
अन्धे तमसि मज्जेयुर्यदि दण्डो न पालयेत् ॥
यस्माददान्तान् दमयत्यशिष्टान् दण्डयत्यपि ।
दमनाद्दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः ॥
वाचा दण्डो ब्राह्मणानां क्षत्रियाणां भुजार्पणम् ।
दानदण्डाः स्मृता वैश्या निर्दण्डः शूद्र उच्यते ॥
असंमोहाय मर्त्यानामर्थसंरक्षणाय च ।
मर्यादा स्थापिता लोके दण्डसंज्ञा विशांपते ॥
यत्र श्यामो लोहिताक्षो दण्डश्चरति सूद्यतः ।
प्रजास्तत्र न मुह्यन्ते नेता चेत्साधु पश्यति ॥
ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः ।
दण्डस्यैव भयादेते मनुष्या वर्त्मनि स्थिताः ॥
नाभीतो यजते राजन्नाभीतो दातुमिच्छति ।
नाभीतः पुरुषः कश्चित्समये स्थातुमिच्छति ॥
नाच्छित्वा परमर्माणि नाकृत्वा कर्म दुष्करम् ।
नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम् ॥
नाघ्नतः कीर्तिरस्तीह न वित्तं न पुनः प्रजाः ।
इन्द्रो वृत्रवधेनैव महेन्द्रः समपद्यत ॥
य एव देवा हन्तारस्ताँल्लोकोऽर्चयते भृशम् ।
हन्ता रुद्रस्तथा स्कन्दः शक्रोऽग्निर्वरुणो यमः ॥
हन्ता कालस्तथा वायुर्मृत्युर्वैश्रवणो रविः ।
वसवो मरुतः साध्या विश्वेदेवाश्च भारत ॥
एतान् देवान्नमस्यन्ति प्रतापप्रणता जनाः ।
न ब्रह्माणं न धातारं न पूषाणं कथंचन ॥

---

(१) जैब्रा. १४५. (२) नि.२।२. (३) सवि.४६३.
(४) सवि.४९१. (५) भा.१२।१५।२-५२.

मध्यस्थान् सर्वभूतेषु दान्तान् शमपरायणान् ।
यजन्ते मानवाः केचित्प्रशान्तान् सर्वकर्मसु ॥
न हि पश्यामि जीवन्तं लोके कश्चिदहिंसया ।
सत्वैः सत्वा हि जीवन्ति दुर्बलैर्बलवत्तराः ॥
नकुलो मूषिकानत्ति बिडालो नकुलं तथा ।
बिडालमत्ति श्वा राजन् श्वानं व्यालमृगस्तथा ॥
तानत्ति पुरुषः सर्वान् पश्य कालो यथागतः ।
प्राणस्यान्नमिदं सर्वं जङ्गमं स्थावरं च यत् ॥
विधानं दैवविहितं तत्र विद्वान्न मुह्यति ।
यथा सृष्टोऽसि राजेन्द्र तथा भवितुमर्हसि ॥
विनीतक्रोधहर्षा हि मन्दा वनमुपाश्रिताः ।
विना वधं न कुर्वन्ति तापसाः प्राणयापनम् ॥
उदके बहवः प्राणाः पृथिव्यां च फलेषु च ।
न च कश्चिन्न तान् हन्ति किमन्यत् प्राणयापनात् ॥
सूक्ष्मयोनीनि भूतानि तर्कगम्यानि कानिचित् ।
पक्ष्मणोऽपि निपातेन येषां स्यात्स्कन्धपर्ययः ॥
ग्रामान्निष्क्रम्य मुनयो विगतक्रोधमत्सराः ।
वने कुटुम्बधर्माणो दृश्यन्ते परिमोहिताः ॥
भूमिं भित्वौषधीश्छित्वा वृक्षादीनण्डजान् पशून् ।
मनुष्यास्तन्वते यज्ञांस्ते स्वर्गं प्राप्नुवन्ति च ॥
दण्डनीत्यां प्रणीतायां सर्वे सिद्ध्यन्त्युपक्रमाः ।
कौन्तेय सर्वभूतानां तत्र मे नास्ति संशयः ॥
दण्डश्चेन्न भवेल्लोके विनश्येयुरिमाः प्रजाः ।
जले मत्स्यानिवाभक्ष्यन् दुर्बलान् बलवत्तराः ॥
सत्यं चेदं ब्रह्मणा पूर्वमुक्तं दण्डः प्रजा रक्षति साधु नीतः । पश्याग्नयश्च प्रतिशाम्य भीताः संतर्जिता दण्डभयाज्ज्वलन्ति ॥
अन्धं तम इवेदं स्यान्न प्राज्ञायत किञ्चन ।
दण्डश्चेन्न भवेल्लोके विभजन् साध्वसाधुनी ॥
येऽपि संभिन्नमर्यादा नास्तिका वेदनिन्दकाः ।
तेऽपि भोगाय कल्पन्ते दण्डेनाशु निपीडिताः ॥
सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्जनः ।
दण्डस्य हि भयाद्भीतो भोगायैव प्रवर्तते ॥
चातुर्वर्ण्यप्रमोदाय सुनीतिनयनाय च ।
दण्डो विधात्रा विहितो धर्मार्थौ भुवि रक्षितुम् ॥
यदि दण्डान्न बिभ्येयुर्वयांसि श्वापदानि च ।
अद्युः पशून् मनुष्यांश्च यज्ञार्थानि हवींषि च ॥
न ब्रह्मचार्यधीयीत कल्याणीं न दुह्येत गाम् ।
न कन्योद्वहनं गच्छेद्यदि दण्डो न पालयेत् ॥
विष्वग्लोपः प्रवर्तेत भिद्येरन् सर्वसेतवः ।
ममत्वं न प्रजानीयुर्यदि दण्डो न पालयेत् ॥
न संवत्सरसत्राणि तिष्ठेयुरकुतोभयाः ।
विधिवद्दक्षिणावन्ति यदि दण्डो न पालयेत् ॥
चरेयुर्नाश्रमे धर्मं यथोक्तं विधिमाश्रिताः ।
न विद्यां प्राप्नुयात्कश्चिद्यदि दण्डो न पालयेत् ॥
न चोष्ट्रा न बलीवर्दा नाश्वाश्वतरगर्दभाः ।
युक्ता वहेयुर्यानानि यदि दण्डो न पालयेत् ॥
न प्रेष्या वचनं कुर्युर्न बाला जातु कर्हिचित् ।
न तिष्ठेद्युवती धर्मे यदि दण्डो न पालयेत् ॥
दण्डे स्थिताः प्रजाः सर्वा भयं दण्डे विदुर्बुधाः ।
दण्डे स्वर्गो मनुष्याणां लोकोऽयं सुप्रतिष्ठितः ॥
न तत्र कूटं पापं वा वञ्चना वाऽपि दृश्यते ।
यत्र दण्डः सुविहितश्चरत्यरिविनाशनः ॥
हविः श्वा प्रलिहेद्दृष्ट्वा दण्डश्चेन्नोद्यतो भवेत् ।
हरेत्काकः पुरोडाशं यदि दण्डो न पालयेत् ॥
यदिदं धर्मतो राज्यं विहितं यद्यधर्मतः ।
कार्यस्तत्र न शोको वै भुङ्क्ष्व भोगान् यजस्व च ॥
सुखेन धर्मं श्रीमन्तश्चरन्ति शुचिवाससः ।
संवर्षन्तः फलैर्दानैर्भुञ्जानाश्चान्नमुत्तमम् ॥
अर्थे सर्वे समारम्भाः समायत्ता न संशयः ।
स च दण्डे समायत्तः पश्य दण्डस्य गौरवम् ॥
लोकयात्रार्थमेवेह धर्मप्रवचनं कृतम् ।
अहिंसाऽसाधुहिंसेति श्रेयान् धर्मपरिग्रहः ॥
नात्यन्तं गुणवत्किञ्चिन्न चाप्यत्यन्तनिर्गुणम् ।
उभयं सर्वकार्येषु दृश्यते साध्वसाधु वा ॥
पशूनां वृषणं छित्वा ततो भिन्दन्ति मस्तकम् ।
वहन्ति बहवो भारान् बध्नन्ति दमयन्ति च ॥
एवं पर्याकुले लोके वितथैर्जर्जरीकृते ।
तैस्तैर्न्यायैर्महाराज पुराणं धर्ममाचर ॥

## वृद्धहारीतः

न्यायदण्डः

[1]न्यायेन दण्डनं राज्ञः स्वर्गकीर्तिकरं भवेत् ।
अन्यायदण्डनं राज्ञः स्वर्गकीर्तिविनाशनम् ॥
अदण्ड्यान् दण्डयन् राजा तथा दण्ड्यानदण्डयन् ।
अयशो महदाप्नोति नरकं चाधिगच्छति ॥

दण्डप्रकाराः । दण्डविवेकः ।

[2]धिग्दण्डस्त्वथ वाग्दण्डो धनदण्डो वधस्तथा ।
ज्ञात्वाऽपराधं देशं च जनं कालमथापि वा ॥
वयः कर्म च वित्तं च दण्डं न्यायेन पातयेत् ।
निश्चित्य शास्त्रमार्गेण विद्वद्भिः सह पार्थिवः ॥
गुरूणां तु गुरुं दण्डं पापानां च लघोर्लघुम् ।
व्यवहारान् स्वयं पश्यन् कुर्यात् सद्भिर्वृतोऽन्वहम् ॥

(१) वृहास्मृ.७।१९३,१९४.
(२) वृहास्मृ.७।१९५-१९७.

ब्राह्मणदण्डविचारः

[1]येषु केषु च पापेषु शारीरं दण्डनं स्मृतम् ।
तेषु तेष्वङ्कनेनैव अक्षतो ब्राह्मणो व्रजेत् ॥
पापानेवाङ्कयित्वाऽस्य मुण्डयित्वा शिरोरुहान् ।
सर्वस्वहरणं कृत्वा राष्ट्रात् सम्यक् प्रवासयेत् ॥
अवैष्णवं विकर्मस्थं हरिवासरभोजिनम् ।
ब्राह्मणं गार्दभं यानमारोप्यैव विवासयेत् ॥

(१) वृहास्मृ.७।२०९-२११; उ.२।२७।१७ (अक्षतो ब्राह्मणो व्रजेत् ).

# व्यवहारस्वरूपम्

## वेदाः

व्यवहारशास्त्रोत्पत्तिः

मा नः पथः पित्र्यान्मानवादधि दूरं नैष्ट परावतः।[1]

हे देवाः मानवात्। मनुः सर्वेषां पिता। तत आगतात्पित्र्यात् पिता मनुर्यं मार्गं चक्रे तस्मात्पथो मार्गान्नोऽस्मान् मा नैष्ट। मा नयत। अपनयनं मा कुरुतेत्यर्थः। सर्वदा ब्रह्मचर्याग्निहोत्रादिकर्माणि येन मार्गेण भवन्ति तमेवास्मान्नयत। किंतु दूरं य एतद्व्यतिरिक्तो विप्रकृष्टमार्गोऽस्ति तस्मादधि। अधिकमित्यर्थः। अस्मानपनयत। ऋसा.

## महाभारतम्

भीष्म उवाच—[2]

नियतस्त्वं नरव्याघ्र शृणु सर्वमशेषतः।
यथा राज्यं समुत्पन्नमादौ कृतयुगेऽभवत्॥
न वै राज्यं न राजाऽऽसीत् न च दण्डो न दाण्डिकः।
धर्मेणैव प्रजाः सर्वा रक्षन्ति स्म परस्परम्॥
पाल्यमानास्तथाऽन्योऽन्यं नरा धर्मेण भारत।
खेदं परमुपाजग्मुस्ततस्तान् मोह आविशत्॥
ते मोहवशमापन्ना मनुजा मनुजर्षभ।
प्रतिपत्तिविमोहाच्च धर्मस्तेषामनीनशत्॥
नष्टायां प्रतिपत्तौ च मोहवश्या नरास्तदा।
लोभस्य वशमापन्नाः सर्वे भरतसत्तम॥
अप्राप्तस्याभिमर्शन्तु कुर्वन्तो मनुजास्ततः।
कामो नामापरस्तत्र प्रत्यपद्यत वै प्रभो॥
तांस्तु कामवशं प्राप्तान् रागो नामाभिसंस्पृशत्।
रक्ताश्च नाभ्यजानन्त कार्याकार्ये युधिष्ठिर॥
अगम्यागमनं चैव वाच्यावाच्यं तथैव च।
भक्ष्याभक्ष्यं च राजेन्द्र दोषादोषं च नात्यजन्॥

(१) ऋसं.८।३०।३. (२) भा.१२।५९।१३-८६.

विप्लुते नरलोके वै ब्रह्म चैव ननाश ह।
नाशाच्च ब्रह्मणो राजन् धर्मो नाशमथागमत्॥
नष्टे ब्रह्मणि धर्मे च देवांस्त्रासः समाविशत्।
ते त्रस्ता नरशार्दूल ब्रह्माणं शरणं ययुः॥
प्रसाद्य भगवन्तं ते देवं लोकपितामहम्।
ऊचुः प्राञ्जलयः सर्वे दुःखवेगसमाहताः॥
भगवन्नरलोकस्थं ग्रस्तं ब्रह्म सनातनम्।
लोभमोहादिभिर्भावैस्ततो नो भयमाविशत्॥
ब्रह्मणश्च प्रणाशेन धर्मो व्यनशदीश्वर।
ततः स्म समतां याता मर्त्यैस्त्रिभुवनेश्वर॥
अधो हि वर्षमस्माकं नरास्तूर्ध्वप्रवर्षिणः।
क्रियाव्युपरमात्तेषां ततो गच्छाम संशयम्॥
अत्र निःश्रेयसं यन्नस्तद् ध्यायस्व पितामह।
त्वत्प्रभावसमुत्थोऽसौ स्वभावो नो विनश्यति॥
तानुवाच सुरान् सर्वान् स्वयम्भूर्भगवांस्ततः।
श्रेयोऽहं चिन्तयिष्यामि व्येतु वो भीः सुरर्षभाः॥
ततोऽध्यायसहस्राणां शतं चक्रे स्वबुद्धिजम्।
यत्र धर्मस्तथैवार्थः कामश्चैवाभिवर्णितः॥
त्रिवर्ग इति विख्यातो गण एष स्वयम्भुवा।
चतुर्थो मोक्ष इत्येव पृथगर्थः पृथग्गुणः॥
मोक्षस्यास्ति त्रिवर्गोऽन्यः प्रोक्तः सत्वं रजस्तमः।
स्थानं वृद्धिः क्षयश्चैव त्रिवर्गश्चैव दण्डजः॥
आत्मा देशश्च कालश्चाप्युपायाः कृत्यमेव च।
सहायाः कारणं चैव षड्वर्गो नीतिजः स्मृतः॥
त्रयी चान्वीक्षिकी चैव वार्ता च भरतर्षभ।
दण्डनीतिश्च विपुला विद्यास्तत्र निदर्शिताः॥
अमात्यरक्षा प्रणिधी राजपुत्रस्य लक्षणम्।
चारश्च विविधोपायः प्रणिधेयः पृथग्विधः॥
साम भेदः प्रदानं च ततो दण्डश्च पार्थिव।
उपेक्षा पञ्चमी चात्र कार्त्स्न्येन समुदाहृता॥
मन्त्रश्च वर्णितः कृत्स्नस्तथा भेदार्थ एव च।

विभ्रमश्चैव मन्त्रस्य सिध्यसिध्योश्च यत्फलम् ।।
संधिश्च त्रिविधाभिख्यो हीनो मध्यस्तथोत्तमः ।
भयसत्कारवित्ताख्यं कार्त्स्न्येन परिवर्णितम् ।।
यात्राकालाश्च चत्वारस्त्रिवर्गस्य च विस्तरः ।
विजयो धर्मयुक्तश्च तथार्थविजयश्च ह ।।
आसुरश्चैव विजयस्तथा कार्त्स्न्येन वर्णितः ।
लक्षणं पञ्चवर्गस्य त्रिविधं चात्र वर्णितम् ।।
प्रकाशश्चाप्रकाशश्च दण्डोऽथ परिशब्दितः ।
प्रकाशोऽष्टविधस्तत्र गुह्यश्च बहुविस्तरः ।।
रथा नागा हयाश्चैव पादाताश्चैव पाण्डव ।
विष्टिर्नावश्चराश्चैव देशिका इति चाष्टमम् ।।
अङ्गान्येतानि कौरव्य प्रकाशानि बलस्य तु ।
जङ्गमाजङ्गमाश्चोक्ताश्चूर्णयोगा विषादयः ।।
स्पर्शे चाभ्यवहार्ये चाप्युपांशुर्विविधः स्मृतः ।
अरिर्मित्र उदासीन इत्येतेऽप्यनुवर्णिताः ।।
कृत्स्ना मार्गगुणाश्चैव तथा भूमिगुणाश्च ह ।
आत्मरक्षणमाश्वासः सर्गाणां चान्ववेक्षणम् ।।
कल्पना विविधाश्चापि नृनागरथवाजिनाम् ।
व्यूहाश्च विविधाभिख्या विचित्रं युद्धकौशलम् ।।
उत्पाताश्च निपाताश्च सुयुद्धं सुपलायितम् ।
शस्त्राणां पालनं ज्ञानं तथैव भरतर्षभ ।।
बलव्यसनयुक्तं च तथैव बलहर्षणम् ।
पीडा चापदकालश्च पत्तिज्ञानं च पाण्डव ।।
तथाख्यातविधानं च योगः संचार एव च ।
चोरैराटविकैश्चोग्रैः परराष्ट्रस्य पीडनम् ।।
अग्निदैर्गरदैश्चैव प्रतिरूपककारकैः ।
श्रेणिमुख्योपजापेन वीरुधश्छेदनेन च ।।
दूषणेन च नागानामातङ्कजननेन च ।
आराधनेन भक्तस्य प्रत्ययोपार्जनेन च ।।
सप्ताङ्गस्य च राज्यस्य ह्रासवृद्धिसमञ्जसम् ।
दूतसामर्थ्यसंयोगात्स्वराष्ट्रस्य विवर्धनम् ।।
अरिमध्यस्थमित्राणां सम्यक् चोक्तं प्रपञ्चनम् ।
अवमर्दः प्रतीघातस्तथैव च बलीयसाम् ।।
व्यवहारः सुसूक्ष्मश्च तथा कण्टकशोधनम् ।
श्रमो व्यायामयोगश्च त्यागो द्रव्यस्य संग्रहः ।।
अभृतानां च भरणं भृतानां चान्ववेक्षणम् ।

अर्थस्य काले दानं च व्यसने चाप्रसङ्गिता ।।
तथा राजगुणाश्चैव सेनापतिगुणाश्च ह ।
कारणं च त्रिवर्गस्य गुणदोषास्तथैव च ।।
दुश्चेष्टितं च विविधं वृत्तिश्चैवानुवर्तिनाम् ।
शङ्कितत्वं च सर्वस्य प्रमादस्य च वर्जनम् ।।
अलब्धलाभो लब्धस्य तथैव च विवर्धनम् ।
प्रदानं च विवृद्धस्य पात्रेभ्यो विधिवत्ततः ।।
विसर्गोऽर्थस्य धर्मार्थं कामहेतुकमुच्यते ।
चतुर्थं व्यसनाघाते तथैवात्रानुवर्णितम् ।।
क्रोधजानि तथोग्राणि कामजानि तथैव च ।
दशोक्तानि कुरुश्रेष्ठ व्यसनान्यत्र चैव ह ।।
मृगयाक्षास्तथा पानं स्त्रियश्च भरतर्षभ ।
कामजान्याहुराचार्याः प्रोक्तानीह स्वयम्भुवा ।।
वाक्पारुष्यं तथोग्रत्वं दण्डपारुष्यमेव च ।
आत्मनो निग्रहस्त्यागो ह्यर्थदूषणमेव च ।।
यन्त्राणि विविधान्येव क्रियास्तेषां च वर्णिताः ।
अवमर्दः प्रतीघातः केतनानां च भञ्जनम् ।।
चैत्यद्रुमावमर्दश्च रोधः कर्मानुशासनम् ।
अपस्करोऽथ वसनं तथोपायाश्च वर्णिताः ।।
पणवानकशंखानां भेरीणां च युधिष्ठिर ।
उपार्जनं च द्रव्याणां परिमर्दश्च तानि षट् ।।
लब्धस्य च प्रशमनं सतां चैवाभिपूजनम् ।
विद्वद्भिरेकीभावश्च दानहोमविधिज्ञता ।।
मङ्गलालम्भनं चैव शरीरस्य प्रतिक्रिया ।
आहारयोजनं चैव नित्यमास्तिक्यमेव च ।।
एकेन च यथोत्थेयं सत्यत्वं मधुरा गिरः ।
उत्सवानां समाजानां क्रियाः केतनजास्तथा ।।
प्रत्यक्षाश्च परोक्षाश्च सर्वाधिकरणेष्वथ ।
वृत्तेर्भरतशार्दूल नित्यं चैवान्ववेक्षणम् ।।
अदण्डयत्वं च विप्राणां युक्त्या दण्डनिपातनम् ।
अनुजीवी स्वजातिभ्यो गुणेभ्यश्च समुद्भवः ।।
रक्षणं चैव पौराणां राष्ट्रस्य च विवर्धनम् ।
मण्डलस्था च या चिन्ता राजन् द्वादशराजिका ।।
द्वासप्ततिविधा चैव शरीरस्य प्रतिक्रिया ।
देशजातिकुलानां च धर्माः समनुवर्णिताः ।।
धर्मश्चार्थश्च कामश्च मोक्षश्चात्रानुवर्णिताः ।

उपायाश्चार्थलिप्सा च विविधा भूरिदक्षिण ॥
मूलकर्मक्रिया चात्र मायायोगश्च वर्णितः ।
दूषणं स्रोतसां चैव वर्णितं चास्थिराम्भसाम् ॥
यैर्यैरुपायैर्लोकस्तु न चलेदार्यवर्त्मनः ।
तत्सर्वं राजशार्दूल नीतिशास्त्रेऽभिवर्णितम् ॥
एतत्कृत्वा शुभं शास्त्रं ततः स भगवान् प्रभुः ।
देवानुवाच संहृष्टः सर्वान् शक्रपुरोगमान् ॥
उपकाराय लोकस्य त्रिवर्गस्थापनाय च ।
नवनीतं सरस्वत्या बुद्धिरेषा प्रभाविता ॥
दण्डेन सहिता ह्येषा लोकरक्षणकारिका ।
निग्रहानुग्रहरता लोकाननुचरिष्यति ॥
दण्डेन नीयते चेदं दण्डं नयति वा पुनः ।
दण्डनीतिरिति ख्याता त्रीन् लोकानभिवर्तते ॥
षाड्गुण्यगुणसारैषा स्थास्यत्यग्रे महात्मसु ।
धर्मार्थकाममोक्षाश्च सकला ह्यत्र शब्दिताः ॥
ततस्तां भगवान् नीतिं पूर्वं जग्राह शंकरः ।
बहुरूपो विशालाक्षः शिवः स्थाणुरुमापतिः ॥
प्रजानामायुषोह्रासं विज्ञाय भगवान् शिवः ।
संचिक्षेप ततः शास्त्रं महाशास्त्रं ब्रह्मणा कृतम् ॥
वैशालाक्षमिति प्रोक्तं तदिन्द्रः प्रत्यपद्यत ।
दशाध्यायसहस्राणि सुब्रह्मण्यो महातपाः ॥
भगवानपि तच्छास्त्रं संचिक्षेप पुरन्दरः ।
सहस्रैः पञ्चभिस्तात यदुक्तं बाहुदन्तकम् ॥
अध्यायानां सहस्रैस्तु त्रिभिरेव बृहस्पतिः ।
संचिक्षेपेश्वरो बुद्ध्या बार्हस्पत्यं तदुच्यते ॥
अध्यायानां सहस्रेण काव्यः संक्षेपमब्रवीत् ।
तच्छास्त्रममितप्रज्ञो योगाचार्यो महायशाः ॥
एवं लोकानुरोधेन शास्त्रमेतन्महर्षिभिः ।
संक्षिप्तमायुर्विज्ञाय मर्त्यानां ह्रासमेव च ॥
महत्त्वात्तस्य दण्डस्य नीतिर्विस्पष्टलक्षणा ।
नयचारश्च विपुलो येन सर्वमिदं ततम् ॥
आगमश्च पुराणानां महर्षीणां च संभवः ।
तीर्थवंशश्च वंशश्च नक्षत्राणां युधिष्ठिर ॥
सकलं चातुराश्रम्यं चातुर्होत्रं तथैव च ।
चातुर्वर्ण्यं तथैवात्र चातुर्विद्यं च कीर्तितम् ॥
इतिहासाश्च वेदाश्च न्यायः कृत्स्नश्च वर्णितः ।
तपो ज्ञानमहिंसा च सत्यासत्येन यः परः ॥
वृद्धोपसेवा दानं च शौचमुत्थानमेव च ।
सर्वभूतानुकम्पा च सर्वमत्रोपवर्णितम् ॥
भुवि चाधोगतं यच्च तच्च सर्वं समर्पितम् ।
तस्मिन् पैतामहे शास्त्रे पाण्डवैतन्न संशयः ॥
(१)तस्य प्रशासतो राज्यं धर्मेणामित्रघातिनः ।
नानृता वाक् समभवन् मनो दुष्टं न चाभवत् ॥
न च कायेन कृतवान् स पापं परमण्वपि ।
ये हि ते ऋषयः ख्याताः सप्त चित्रशिखण्डिनः ॥
तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमम् ।
वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ ॥
आस्यैः सप्तभिरुद्गीर्णं लोकधर्ममनुत्तमम् ।
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ॥
वसिष्ठश्च महातेजास्ते हि चित्रशिखण्डिनः ।
सप्त प्रकृतयो ह्येतास्तथा स्वायम्भुवोष्टमः ॥
एताभिर्धार्यते लोकस्ताभ्यः शास्त्रं विनिस्सृतम् ।
एकाग्रमनसो दान्ता मुनयः संयमे रताः ॥
भूतभव्यभविष्यज्ञाः सत्यधर्मपरायणाः ।
इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम् ॥
लोकान् संचिन्त्य मनसा ततः शास्त्रं प्रचक्रिरे ।
तत्र धर्मार्थकामा हि मोक्षः पश्चाच्च कीर्तितः ॥
मर्यादा विविधाश्चैव दिवि भूमौ च संस्थिताः ।
आराध्य तपसा देवं हरिं नारायणं प्रभुम् ॥
दिव्यं वर्षसहस्रं वै सर्वे ते ऋषिभिः सह ।
नारायणानुशास्ता हि तदा देवी सरस्वती ॥
विवेश तानृषीन् सर्वान् लोकानां हितकाम्यया ।
ततः प्रवर्तिता सम्यक् तपोविद्भिर्द्विजातिभिः ॥
शब्दे चार्थे च हेतौ च एषा प्रथमसर्गजा ।
आदावेव हि तच्छास्त्रमोंकारस्वरपूजितम् ॥
ऋषिभिः श्रावितं यत्र तत्र कारणिको ह्यसौ ।
ततः प्रसन्नो भगवाननिर्दिष्टशरीरगः ।
ऋषीनुवाच तान् सर्वान् अदृश्यः पुरुषोत्तमः ॥

(१) भा.१२।५९।१३८-१४३.

(१) भा.१२।३३५।२६-५५.

